# आयुर्वेदीय महाकोशः

अर्थात्

# आयुर्वेदीय शब्दकोशः

संस्कृत - संस्कृत - प्रथमः खण्डः

संपादकौ

आयुर्वेदाचार्य वेणीमाधवशास्त्री जोशी

आयुर्वेदविशारद नारायण हरि जोशी




१९६८

महाराष्ट्र राज्य साहित्य आणि संस्कृति मंडळ

मुंबई



आयुर्वेदीय-महाकोशः अर्थात्

# आयुर्वेदीय-शब्दकोशः

संस्कृत-संस्कृत प्रथमः खण्डः

# आयुर्वेदीय महाकोशः

अर्थात्

# आयुर्वेदीय शब्दकोशः

## संस्कृत–संस्कृत प्रथमः खण्डः

संपादकौ

आयुर्वेदाचार्य वेणीमाधवशास्त्री जोशी

आयुर्वेदविशारद नारायण हरी जोशी

D Wujastyk
Bangalore 1995




१९६८

महाराष्ट्र राज्य साहित्य आणि संस्कृति मंडळ

मुंबई

# निवेदनम् ।

महाराष्ट्रराज्याङ्गभूतेन साहित्यसंस्कृतिमण्डलेन सम्पाद्य निर्मितः 'आयुर्वेदीयशब्दकोशः' अधुना प्रकाश्यते । बहूनां विज्ञानानां शास्त्राणां च निर्मितिः प्रसारश्च प्राचीनभारतीयसंस्कृत्यामभवत् । आयुर्वेद-ज्योतिर्गणित – धातुविद्या – वास्तुविद्यादिभौतिकविज्ञानान्तर्गतः आयुर्वेदोऽपि अतिप्राचीना विद्या स्मृता । प्रामुख्येणाथर्ववेदप्रभवैषा विद्या । तदनन्तरं नैकमहर्षिभिर्मानवजीवनं साकल्येनाधीत्य तथा च मानव-जीवन-भौतिकविश्वयोः परस्पराघातप्रत्याघातानां प्रत्यक्षावलोकनं कृत्वा मानवजीवनविज्ञानं सामग्र्येणायुर्वेदे संकलितम् । रोगपरिहारे वनस्पतीनां प्रयोग इत्येवायुर्वेदविषयः सामान्यजनानां मते । किन्तु नैतत् पूर्णं सत्यम् । मानवस्य शरीरस्वास्थ्यं मनःस्वास्थ्यं चावलोक्य मानवजीवनस्य तच्छरीरव्यापाराणां मनःप्रवृत्तीनां च विचारः आयुर्वेदशास्त्रान्तर्भूतः महर्षिभिः तत्त्वज्ञानेऽधिष्ठापितः । रोगाणां स्वास्थ्यस्य च कार्यकारणभावमालिका निश्चयेन व्याख्याता । शारीरेन्द्रियमानसिकस्वास्थ्यास्वास्थ्यानां कार्यकारणभावमालिकाऽपि दृढं निश्चिता । कार्यकारणभावमालिकाद्वयमिदं सानुभवं सप्रयोगं च निश्चित्य नैकमहत्त्वपूर्णप्रमेयाण्यत्र पुरस्कृतानि । आधुनिकविज्ञानान्तर्गतसमीक्षापद्धत्याऽऽयुर्वेदान्तर्भूताभ्युपगमानां याथार्थ्यायाथार्थ्ये नाद्यावधि निश्चिते । तन्निश्चयार्थेऽयं कोश उपकरिष्यतीति विश्वसिमः ।

आयुर्वेदाङ्गभूतस्त्रिदोषविचारः सप्तधातुविचारः मनःशरीरपरस्परावलम्बित्वविचारश्चायुर्वेदान्तर्भूताभ्युपगमेषु समाविष्टाः । आधुनिकदेहेन्द्रियमनोविज्ञानानुसारेणाभ्युपगमानामेतेषां समीक्षाऽद्यापि भवितव्यैव । आयुर्वेदान्तर्गतस्वास्थ्योपायरोगोपपत्तिरोगपरिहारोपपत्त्यादिविषयप्रमेयाणामाधुनिकविज्ञाननिकषेणैव सत्यासत्यपरीक्षाऽद्यापि करणीया ।

एतादृशसमीक्षाङ्गभूतार्थे सम्पूर्णायुर्वेदाध्ययनार्थे कोशोऽयं सर्वत उपकारको भविष्यतीत्यत्र निःसंदेहा वयम् । अतिरिच्यैतन्न काऽपि जागतीया भाषैतादृशसर्वव्यापककोशेनाद्यप्यलङ्कारिता इत्यपि शक्यते वक्तुम् । आधुनिकवैद्यविद्यानिपुणानामायुर्वेदाध्यापकाध्येतॄणामत्युपकारिणमेतं कोशं तद्धस्तयोः प्रददतां मोदतेतरां नश्चेतः । "आयुर्वेद–शब्दकोश" इति सविनयामभिहितोऽयं कोशः तत्त्वतः "आयुर्वेदज्ञानकोशः" "विश्वकोशः" एव वा ।

महाराष्ट्रराज्यस्य साहित्यसंस्कृतिमण्डलेन मराठीभाषां विद्यापीठीयमाध्यमप्रतिष्ठां प्रापयितुं बहुविधः व्यापकश्च वाङ्मयीनः कार्यक्रमः आरेखितः । कोशोऽयं तस्यैव कार्यक्रमस्य निश्चितं दृश्यफलम् । आयुर्वेदाचार्य–वेणीमाधवशास्त्री–जोशी, पंडित वैद्य श्री. ना. ह. जोशी–इत्येताभ्यां संपादकाभ्यां पं. वै. दत्तात्रेयशास्त्री जळूकर, पं. वै. एकनाथशास्त्री काशीकर आदिभिरेतेषां सहकारिभिश्च गतषड्वर्षपर्यंतं परिश्रमपूर्वकं कोशगतसंस्कृतविभागः पुनःसंपादितः मराठीभाषायां भाषान्तरितश्चेति मण्डलस्य कृते तेभ्यो कृतज्ञतां विनिवेदयामः ।

**लक्ष्मणशास्त्री जोशी**

अध्यक्षः

महाराष्ट्रराज्यसाहित्यसंस्कृतिमण्डलस्य

# आयुर्वेदीयशब्दकोशस्येतिहासः

आयुर्वेदशास्त्रपठनपाठनं तावत् अनादिकालादारभ्य प्रचलितमिति तु सुविदितमेव सर्वेषाम्। गुरुकुल-पद्धत्यैव परंपरया ज्ञानमधिगच्छन्ति तदा शिष्याः सर्वे। परं षष्ट्यधिकसंवत्सरकालात् विद्यालयपद्धतिः अस्तित्वमलभत् भारतेऽस्मिन्। पाठ्यक्रमेऽस्मिन् तत्तद् ग्रंथागतानां पारिभाषिक शब्दानां अर्थावबोधने नासीत् शब्दकोशस्य सौलभ्यं अतःपूर्वम्। प्रत्यभाच्चावश्य-कता तेन हि सर्वेषां छात्राणामध्यापकानां च शास्त्रपरि-शीलने कोशस्य। न्यूनता एषा आयुर्वेदकोविद्भिः उद्घोषिता स्वीयपरिषत्सु सभासु च। शासकीयायुर्वेद-समितिभिरपि प्रबलतराऽभ्यर्थना कृता शासनं प्रति। सुबहोः कालात् फलोन्मुखाः समभवन् प्रयत्ना एते। 'वैद्यकशब्दसिंधु' नाम्ना एकः कोशः प्रसिद्धिमलभत् अस्मिन्नेव समये कलकत्ता क्षेत्रे। परं न तदन्तर्गताः शब्दाः केवलं मानवायुर्वेदग्रंथाधारेण निहिताः। अपि च नोपयोजिता केवला आयुर्वेदीया परिभाषा शब्दार्थ-विवरणे।

समस्यामिमामधिगम्य मुंबई शासननियुक्तेन आयु-र्वेदसंशोधनमंडलेन आयुर्वेदीयशब्दकोशं संस्कृत-भाषायां निर्मातुं निश्चयः कृतः। तदर्थं तेषां तेषामायु-र्वेदशास्त्रविषयाणां शब्द–संकलनाय अधो लिखितानां आयुर्वेदीयग्रंथानां साहाय्यं सुनिश्चितम्। तद्यथा—

| क्रमांक | ग्रंथनाम | ग्रंथलेखकः | टीकाकारः | प्रकाशकः | ग्रंथ–प्रकाशन वर्षम् |
|---|---|---|---|---|---|
| १ | चरकसंहिता | वै. यादवजी त्रिकमजी आचार्यः | चक्रदत्तः | निर्णयसागरमुद्रणालयः मुंबई | १९४१ |
| २ | सुश्रुतसंहिता | ,, नारायण राम आचार्यः | डल्हणः | ,, | १९३८ |
| ३ | अष्टांगसंग्रहः | | | वैद्य तर्टे, नासिक | |
| ४ | अष्टांगहृदयम् | भिषगाचार्य हरिशास्त्री पराडकर-अकोला | अरुणदत्तः हेमाद्रिः | निर्णयसागरमुद्रणालयः मुंबई | १९३९ |
| ५ | काश्यपसंहिता ( कौमार भृत्यप्रकरणम् ) | सं. पं. हेमराज शर्मा, नेपाळ | पं. सत्यपाल-शर्मा भिषगा-चार्यः | | १९५३ |
| ६ | माधवनिदानम् | वै. यादवजी त्रिकमजी | १ मधुकोश २ आतंकदर्पण | निर्णयसागर मुद्रणालयः मुंबई | १९५५ |
| ७ | रसरत्नसमुच्चयः | | पं. हजारी-लाल शुक्लः | पं. हजारीलाल शुक्लः | १९३८ |
| ८ | धन्वंतरी निघंटुः राजनिघंटुसहितः | | | आनंदाश्रम मुद्रणालयः पुणे | |

कार्यमिदं वैद्य श्री कै. यादवजी त्रिकमजी आचार्यः, कै. वै. गणेशशास्त्री जोशी, हकीम दलजित सिंह चुनार—मिर्झापूर (उ. प्र.), वै. जीवराम कालिदास—गोंडल, डॉ. प्राणजीवनदास मेहता–जामनगर (सौराष्ट्र), डॉ. घाणेकर–(वाराणसी), प्रभृतीनां आयुर्वेदशास्त्र-पारंगतानां विमर्शेण समारब्धम्। सर्वेषामप्येतेषां मार्गदर्शनेनैवैतत् कार्यं सुकरमभवत्।

स्वरूपं चाप्यस्य कोशस्य सर्वक्षेत्रीयजनानां हित-

काम्यया निर्धारितमासीत्।

कोशांकितानां शब्दानां ग्रहणपद्धतिरीदृशी निश्चिता—

| आयुर्वेदीय—शब्दकोशः | |
|---|---|
| पदम् | अर्थः |
| उद्धरणम् | |
| दिनम् | ग्रन्थस्थानम् |
| लेखकः | परीक्षकः |

शब्दार्थनिश्चिताविमे संकेताश्चासन् । तद्यथा

१ ) कोशेऽस्मिन् त एव शब्दाः अन्तर्भवितुमर्हन्ति ये आयुर्वेदशास्त्रसंदर्भे विशिष्टमर्थं बोधयन्ति आयुर्वेदपरिभाषिता वा भवन्ति। साधारणाः शब्दा अग्राह्या एव।

२ ) यावन्ति पत्राणि एकस्य शब्दस्य शब्दसंग्रहकाले कृतानि तेषां सर्वेषामपि क्रमः प्रथमत एव विधेयः।

३ ) संपादकीयं संस्करणं सर्वेषु पत्रेषु रक्तवर्णाक्षरैः कार्यम्।

४ ) यच्च पत्रं सर्वथा त्याज्यं भवेत् तस्मिन् सव्यकोणे गुणकं चिन्हं ( × ) कर्तव्यम्।

५ ) पत्रांतर्गतो योंऽशः मुद्रणार्थं ग्राह्यो भवेत् सोऽधोरेखयांकनीयः त्याज्यांशश्चोर्ध्वरेखयेति।

६ ) कोशे व्याख्येयो मूलशब्दः प्रातिपदिकस्वरूपेण ग्राह्यः न विभक्त्यन्तः। अग्रे च तस्य लिंगनिर्देशः कर्तव्यः ( पु. स्त्री. न. )।

७ ) अर्थवैशिष्ट्यपूर्णः शब्दः सोद्धरणो विधेयः ( ससंदर्भः ) अधोरेखया स चांकनीयः।

८ ) शब्दस्यैकस्य भवन्ति यदा अनेकार्थास्तदा तत्तदर्थवाचकमुद्धरणमवश्यं विधेयम्।

९ ) वनस्पतिवाचकानां शब्दानां तत्तद्देशियानि नामानि देयानि यावदुपलब्धानि देवनागरी लिप्याम्। नाम्नामनुक्रमः भाषामनुसृत्य संक्षेपश्चापि विधेयो यथा—

| | | |
|---|---|---|
| १ ) म. | मराठी. | ( देवनागरी लिपि. ) |
| २ ) हिं. | हिंदी. | ( ,, ) |
| ३ ) गु. | गुजराथी. | ( ,, ) |
| ४ ) बं. | बंगाली. | ( ,, ) |
| ५ ) ता. | तामिळ. | ( ,, ) |
| ६ ) फा. | फारसी. | ( ,, ) |

१० ) संपादकीय पर्याप्त—संस्करणादनन्तरं शब्दस्य व्युत्पत्तिः यावत्शक्या विधेया। मा भवतु तत्र कृत्रिमः प्रयत्नः अव्युत्पन्नशब्दव्युत्पादने।

११ ) समासान्तर्गतं मुख्यं पदं सव्युत्पत्तिकं पूर्वं प्रदर्शितं चेत् तर्हि सामासिकपदे व्युत्पत्तेः पुनरुक्तिर्न कर्तव्या।

१२) कोशस्थशब्दविवेचनक्रमः पद्धत्याऽनया भवेत्-
१ शब्दः २ लिंगम्, ३ व्युत्पत्तिः ४ संस्कृतः अर्थः, ५ उपोद्बलकमुद्धरणम्, ६ अर्थान्तरं, ७ ( यथासंभवम् ) वनस्पतिवाचकशब्दस्य नामान्तराणि तदनुसृत्य स्वरूपवर्णनं च।

१३ ) मुद्रणार्हं यद् हस्तलिखितं भवति तस्मिन् टंकनसुलभानि चिन्हानि कर्तव्यानि।

१४ ) सामासिकशब्दस्य प्रधानोऽवयवः वर्तुले विधेयः अपूर्णता सूचिकां लघुरेखां ( हायफन् ) कृत्वा शेषावयवः संयोजनीयः। अवयवश्च अधोरक्तया रेखया अंकनीयः।

१५ ) स एव शब्दः पत्रे लेख्यः यश्च प्रत्यक्षतया ग्रंथस्थितो भवति। अन्यः कोऽपि नूतनः सामासिकः शब्दः कृत्रिमः नैव लेख्यः।

आयुर्वेदसंशोधनमंडलेन अनया रीत्या सविमर्शं एते नियमोपनियमाः कृताः। पुण्यपत्तनस्थेन वैदिकसंशोधनमंडलेन साकं चर्चां कृत्वा कोशकार्यसिद्ध्यर्थं आयुर्वेदसंशोधनमंडलं करोतु आधीनं शब्दकोशविभागमिमं इति अवधारितम्। अपि च एतत्कोशकार्यं वैदिकसंशोधनमंडलस्य कार्यालये भवतु इत्यपि निश्चितम्। तदर्थं कर्मचारिणः लेखनसाहित्यं, मुद्रणसाहित्यम्, काष्ठासनकपाटादि, ग्रंथानामुपलब्धिः तंत्रज्ञानां च मार्गदर्शनं इत्येतेषां आयोजनमपि निर्धारितम्। अपि च तस्य आर्थिकव्ययोऽपि शासनद्वारा देयो निर्धारितः। वैदिकसंशोधनमंडलस्य कार्यालये आयुर्वेदसंशोधनमण्डलेन सम्पादितमेतत्कार्यम्। पंचत्रिंशत्सहस्र (३५०००) शब्दानां कृते चतुःषष्ठि सहस्राणि ( ६४००० ) पत्राणि सुलिखितानि।

प्रकारेणानेन संस्कृतभाषायां लिखितस्यास्य कोशस्य आयुर्वेदसंशोधनमंडलप्रयुक्तवाङ्मयसंशोधन-

विभागद्वारा निरीक्षणं संजातम्। परं निरीक्षणान्ते तु उपलब्धं ' तत्कार्यं बव्हंशेन अपूर्णमिति '। तत्पूर्त्यै कार्यं तत् पुण्यपत्तनतः मुंबय्यां आयुर्वेदसंशोधनमंडलस्य कार्यालये समानीतम्। तत्र च संशोधनमंडलसदस्याः आयुर्वेदाचार्याः वेणीमाधवशास्त्रिणः वैद्य श्री. ना. ह. जोशी महोदयाश्च कार्येऽस्मिन् नियुक्ताः। नियुक्तौ च द्वौ सहायकौ तेषाम्। सर्वैश्च तैः समारब्धं तत्कोशस्य पुनर्निरीक्षणं संशोधनं चापि यथावश्यकमिति। कार्यमेतत् सुचारुरूपेण दि. १।५।१९६१ यावत् प्रचलितमासीत्। परं अतःपरं आयुर्वेदसंशोधनमंडलस्यैव विसर्जनं समभवत्। येन कोशकार्यमप्येतत् स्थगितमेव।

परं भाग्यवशात् कार्यस्यास्य पुनः संचालने कृतप्रयत्नाः आचार्यश्रीः वेणीमाधवशास्त्रिणः वैद्य श्रीः ना. ह. जोशी महादेयाश्च कृतार्थाः संबभूव। एतयोरेव उभयोः नेतृत्वे पुनः संचलनं शासनस्य प्रस्तावमनुसृत्य (GOVT. RESOLUTION NO AVD 1161/36687/H16th FEB. 1962) समारब्धम्। परं नैतत्कार्यं यथावश्यकीं गतिं समाप्नुवत् यतः नोपलब्धः कर्मचारीवर्गः सुयोग्यः।

अंतर्हितत्वाद्धि संशोधनमंडलस्य प्रागारब्धानां सर्वेषामपि कार्याणां सर्वनाशः संपत्स्येत्, नावशिष्टं च स्यात् संपादितस्य प्राकृतनीयस्य कार्यस्य नामापि, चिंतयाऽनया मंडलस्य भूतपूर्वाध्यक्षैः श्री. वै. गं. वि. पुराणिकमहोदयैः प्रेषितं पत्रमेकं तत्कालिनं आरोग्यमंत्रिणं श्री. मधुकररावचौधरीमहोदयं प्रति। आवेदिताश्च ते सर्वमेव उत्तरदायित्वं महाराष्ट्र शासनेन स्वीकर्तव्यमिति। येन केनापि मार्गेण महत्तमं इदं कार्यं संपादनीयमेव।

विचारविमर्शान्ते नियममनुसृत्य साहित्यसंस्कृतिमंडलेन कार्यमेतत् विधातुं शक्यते न वा इति संशोधने निश्चयो जातः। साहित्यसंस्कृतिमंडलाध्यक्षैः श्रीमत् तर्कतीर्थ लक्ष्मणशास्त्री जोशी महोदयैः सह कृतवन्तस्ते आरोग्यामंत्रिमहोदयाः विमर्शम्। फलतः "केवलं संस्कृतभाषायां लिखितस्य अस्य आयुर्वेदीयशब्दकोशस्य यदि महाराष्ट्रभाषायामपि अनुवादस्तर्हि तेन अनुवादेन सह कोशस्यास्य प्रसिद्धीकरणं कर्तुं युज्यते एव, नियमं अनुसृत्य " इति आश्वासिताः मंत्रिमहोदयाः अध्यक्षमहोदयैः। अभिप्रायमेनमनुसृत्य च दि. ६।५।१९६३ दिने शब्दकोशस्य इदं कार्यं साहित्यसंस्कृतिमंडलेन अंगीकर्तव्यं इति आदेशं दत्तवन्तश्च मंत्रिमहोदयाः।

शासनाज्ञामिमां स्वीकृत्य अध्यक्षमहोदयैः प्राक्तनीयौ उभौ कार्यकर्तारौ ( आचार्य श्री वेणीमाधव शास्त्री, वै. श्री. ना. ह. जोशी ) एव पुनः कार्यसंपादने नियुक्तौ।

साहित्यसंस्कृतिमंडलनिर्देशमनुसृत्य उभाभ्यामपि जोशीमहोदयाभ्यां स्वीकृतमिदं कार्यम्। अपि च प्राकृतनीयं कोशस्य हस्तलिखितं निरीक्ष्य बहवो हि दोषा निरस्तास्तैः। ग्रंथाधारान् शोधयित्वा प्रयुक्तास्ते तत्तच्छब्दस्थाने यत्र च ते नासन् इतः पूर्वम्। ये च संदर्भा अनुचिता आसन् तेऽपि सम्यक् विवेच्य तत्तत्स्थानान्निष्कासिताः प्रस्थापिताश्च उचिते स्थाने न्यूनसार्थस्य उचिता संपूर्तिरपि कृता, अपि च ' अ ' कारादिक्रमेण यत्र कुत्रापि स्खलनं आसीत् तदपि निरस्तम्। यत्र च नासीत् व्युत्पत्तिः वैद्यकशास्त्रदृष्ट्या सापि सुष्ठु कृता। साहित्यसंस्कृतिमंडलेन तदर्थं कर्मचारिवर्गश्चापि नियोजितः। अंततो गत्वा उभाभ्यामपि संपादकाभ्यां महाराष्ट्रभाषानुवादेन सहितं हस्तलिखितं विरचितम्। साहित्यसंस्कृतिमंडलेनापि तत् स्वीकृतम्।

साहित्यसंस्कृतिमण्डलसदस्यस्य मुद्रणतंत्रज्ञस्य श्रीबापूराव नाइकस्य साहाय्येन अनंतरं च मुद्रणविषयकः विमर्शः संजातः। मुंबय्यामेव निर्णयसागरमुद्रणालये ग्रंथस्यास्य मुद्रणकार्यं भवतु इति। केवलसंस्कृतभाषायां च पुस्तकसहस्रत्रयमितं सानुवादं संस्कृतभाषायां पुस्तकसहस्रद्वयमितं प्रकाशनं कर्तव्यमित्यपि सुनिश्चितम्। तदनुसृत्य च निर्णयसागरमुद्रणालये कोशस्यास्य मुद्रणं संजातम्। परिपूर्तिं च गतोऽयं कोशग्रंथः।

---

विभागद्वारा निरीक्षणं संजातम् । परं निरीक्षणान्ते तु उपलब्धं ' तत्कार्यं बव्हंशेन अपूर्णमिति ' । तत्पूर्त्यै कार्यं तत् पुण्यपत्तनतः मुंबय्यां आयुर्वेदसंशोधनमंडलस्य कार्यालये समानीतम् । तत्र च संशोधनमंडलसदस्याः आयुर्वेदाचार्याः वेणीमाधवशास्त्रिणः वैद्य श्री. ना. ह. जोशी महोदयाश्च कार्येऽस्मिन् नियुक्ताः । नियुक्तौ च द्वौ सहायकौ तेषाम् । सर्वैश्च तैः समारब्धं तत्कोशस्य पुनर्निरीक्षणं संशोधनं चापि यथावश्यकमिति । कार्य-मेतत् सुचारुरूपेण दि. १।५।१९६१ यावत् प्रचलित-मासीत् । परं अतःपरं आयुर्वेदसंशोधनमंडलस्यैव विसर्जनं समभवत् । येन कोशकार्यमप्येतत् स्थगितमेव ।

परं भाग्यवशात् कार्यस्यास्य पुनः संचालने कृत-प्रयत्नाः आचार्यश्रीः वेणीमाधवशास्त्रिणः वैद्य श्रीः ना. ह. जोशी महादेयाश्च कृतार्थाः संबभूव । एतयोरेव उभयोः नेतृत्वे पुनः संचलनं शासनस्य प्रस्तावमनुसृत्य (GOVT. RESOLUTION NO AVD 1161/36687/H16th FEB. 1962) समारब्धम् । परं नैतत्कार्यं यथावश्यकीं गतिं समाप्नुवत् यतः नोपलब्धः कर्मचारीवर्गः सुयोग्यः ।

अंतर्हितत्वाद्धि संशोधनमंडलस्य प्रागारब्धानां सर्वेषामपि कार्याणां सर्वनाशः संपत्स्येत्, नावशिष्टं च स्यात् संपादितस्य प्राक्तनीयस्य कार्यस्य नामापि, चिंतयाऽनया मंडलस्य भूतपूर्वाध्यक्षैः श्री. वै. गं. वि. पुराणिकमहोदयैः प्रेषितं पत्रमेकं तत्कालिनं आरोग्य-मंत्रिणं श्री. मधुकररावचौधरीमहोदयं प्रति । आवेदिताश्च ते सर्वमेव उत्तरदायित्वं महाराष्ट्र शासनेन स्वीकर्तव्यमिति । येन केनापि मार्गेण महत्तमं इदं कार्यं संपादनीयमेव ।

विचारविमर्शान्ते नियममनुसृत्य साहित्यसंस्कृति-मंडलेन कार्यमेतत् विधातुं शक्यते न वा इति संशोधने निश्चयो जातः । साहित्यसंस्कृतिमंडलाध्यक्षैः श्रीमत् तर्कतीर्थ लक्ष्मणशास्त्री जोशी महोदयैः सह कृतवन्तस्ते आरोग्यामंत्रिमहोदयाः विमर्शम् । फलतः "केवलं संस्कृत-भाषायां लिखितस्य अस्य आयुर्वेदीयशब्दकोशस्य स्यादि महाराष्ट्रभाषायामपि अनुवादस्तर्हि तेन अनुवा-देन सह कोशस्यास्य प्रसिद्धीकरणं कर्तुं [illegible] एव, नियमं अनुसृत्य " इति आश्वासिताः मंत्रिमहोदयाः अध्यक्षमहोदयैः । अभिप्रायमेनमनुसृत्य च दि. ६।५।१९६२ दिने शब्दकोशस्य इदं कार्यं साहित्य-संस्कृतिमंडलेन अंगीकर्तव्यं इति आदेशं [illegible] मंत्रिमहोदयाः ।

शासनाज्ञामिमां स्वीकृत्य अध्यक्षमहोदयैः प्राक्-तनीयौ उभौ कार्यकर्तारौ ( आचार्य श्री [illegible] शास्त्री, वै. श्री. ना. ह. जोशी ) एव पुनः [illegible] नियुक्तौ ।

साहित्यसंस्कृतिमंडलनिर्देशमनुसृत्य [illegible] जोशीमहोदयाभ्यां स्वीकृतमिदं कार्यम् । [illegible] च प्राक्तनीयं कोशस्य हस्तलिखितं निरीक्ष्य [illegible] हि दोषा निरस्तास्तैः । ग्रंथाधारान् शोधयित्वा [illegible] क्तास्ते तत्तच्छब्दस्थाने यत्र च ते नासन् इतः पूर्वम् । ये च संदर्भा अनुचिता आसन् तेऽपि [illegible] विवेच्य तत्तत्स्थानान्निष्कासिताः प्रस्थापिता[illegible] उचिते स्थाने न्यूनस्यार्थस्य उचिता संपूर्तिरपि कृता, [illegible] च 'अ' कारादिक्रमेण यत्र कुत्रापि [illegible] आसीत् तदपि निरस्तम् । यत्र च नासीत् व्युत्पत्तिः [illegible] दृष्ट्या सापि सुष्ठु कृता । साहित्यसं[illegible] तदर्थं कर्मचारिवर्गश्चापि नियोजितः । [illegible] उभाभ्यामपि संपादकाभ्यां महाराष्ट्रभाषानु[illegible] हस्तलिखितं विरचितम् । साहित्यसं[illegible] तत् स्वीकृतम् ।

साहित्यसंस्कृतिमण्डलसदस्यस्य [illegible] श्रीबापूराव नाइकस्य साहाय्येन अनंतरं [illegible] मुद्रण-विषयकः विमर्शः संजातः । मुंबय्यामेव निर्णयसागर-मुद्रणालये ग्रंथस्यास्य मुद्रणकार्यं भवतु इति । केवल-संस्कृतभाषायां च पुस्तकसहस्रत्रयमितं [illegible] संस्कृतभाषायां पुस्तकसहस्रद्वयमितं प्रकाश[illegible] कर्तव्य-मित्यपि सुनिश्चितम् । तदनुसृत्य च निर्णयसागर-मुद्रणालये कोशस्यास्य मुद्रणं संजातम् । [illegible] च गतोऽयं कोशग्रंथः ।

---

# आयुर्वेदीयशब्दकोशस्यास्य स्वरूपं प्रयोजनं च।

अस्मिन् आयुर्वेदीयशब्दकोशे आयुर्वेदीयपारिभाषिकशब्दानां तेषामर्थस्यैवान्तर्भावो भवितुमर्हतीति कल्पना संभावनीया कोशपठनात् पूर्वम् प्रायो पाठकानामिति वयं मन्यामहे। यदा च ते कोशं उद्घाट्य द्रक्ष्यंति तदा 'अपूर्वोऽयं वैशिष्टयपूर्णः कोशोऽस्ति' इति प्रदर्शयिष्यंति ते स्वीयं मतमित्यपि विश्वसिमः। यतो हि कोशेऽस्मिन् नांतर्हिताः केवला आयुर्वेदशास्त्रपरिभाषायाः शब्दाः सार्थाः प्रत्युत शब्दमात्रमनुसृत्य आयुर्वेदीयशास्त्रोक्तानां कल्पनानां परिपोषः पृथक् पृथक् ग्रंथाधारेण कृतोऽस्ति इति पाठका द्रक्ष्यन्त्येव।

कोशस्यास्य 'आयुर्वेदीय शब्दकोश' इति नामधेयं यत् अस्माभिः कृतम् तदेव अंततो गत्वा समुद्दिष्टं भवति। अथापि च यदा चायं कोशः सम्पूर्णतां गतस्तदा विस्तारं च दृष्ट्वा कोशस्यास्य 'आयुर्वेदीय महाकोशः' इति नामकरणं यथार्थं भवितुमर्हतीति प्रत्यभादस्मानिति तदेव पश्चात्समुल्लिखितमिति ज्ञायते एव पाठकैः। नामकरणमिदं तेषामपि संमतं भवेदिति भावयामः। कांश्चन वैशिष्टयान् दर्शयामो वयं येन हि पाठकानां विशेषतया संमतिर्लभेम इति।

**समाविष्टाः प्रधानविषयाः**

(१) स्वास्थ्यम् (२) अस्वास्थ्यम् (३) स्वास्थ्यरक्षणे अस्वास्थ्यनिवारणाय च द्रव्याणाम् विहारस्य च उपयोगः (४) अन्नं, मानवी वर्तनम् विहारश्च (५) शारीरघटकास्तेषां व्यापाराश्च (६) रोगनाशका उपचाराः विषयाः षडेते प्रामुख्येन कोशस्यास्य विषयीभूताः सन्ति। ये चान्ये उपबृंहका विषया एतेषां स्युस्तेषामपि शब्दाः सोपपत्तिका अस्मिन् समाविष्टा भवंति। तद्यथा—

**स्वास्थ्यम्**— विभागेऽस्मिन् 'स्वस्थ' शब्दस्य अर्थः, स्वस्थपुरुषलक्षणानि, संभाव्याः पृथक् प्रकाराः निवृत्त्यनंतरं च विकाराणां प्राप्यं स्वास्थ्यम् कथं संभवति इत्येतद्वर्णनं कृतमस्ति।

**अस्वास्थ्यम्**— सन्ति रोगविवेचनविषयकाः शब्दा अंतर्भूताः अस्मिन् विभागे। विवेचनं हि विकार नामाभिधानम् तत्पर्यायवाचकाः शब्दाः दोषादीननुसृत्य संभाव्याः प्रकाराः, रोगोत्पत्तेः कारणानि, पूर्वरूपाणि, व्यक्तलक्षणानि, उपशयानुपशयविचारः, साध्यासाध्यत्वं, संभाव्या उपद्रवाः, रिष्टलक्षणानि, तात्त्विकी चिकित्सा, अपुनरावर्तने च रोगाणां उपचाराः, संपूर्णरोगनिवृत्तेर्लक्षणानि च। एतत् प्रकारकं ग्रंथोक्तं विवेचनं तत्तद्वाचीशब्दस्याग्रे दत्तमस्ति।

**औषधान्नविहारश्च**—विभागेऽस्मिन् औषधवाचकशब्दाः, तत्पर्यायाः गुणधर्माः, उपयोगे तेषां विधिनिषेधौ, द्रव्याणां शुद्धिकार्यं संस्कारश्च एतादृग् विवेचनं यावच्छक्यं कृतं अस्ति।

**अन्नम्**—अन्नम् हि धान्यरूपं मत्स्यमांसफलादिरूपात्मकं च भवति तेन हि तद्वाचकानां शब्दानां पुरस्तात् पर्याया गुणधर्माश्च विवेचिता भवन्ति।

**विहारः**— स्वास्थ्यास्वास्थ्ये संलक्ष्य तदर्थं अपरिहार्यत्वेन आचरणीयानां नियमानां दर्शकाः पारिभाषिकाः शब्दाः सविमर्शं संगृहीताः सन्ति।

**वनस्पति विभागः**— विभागेऽस्मिन् वनस्पतीनां पर्यायवाचीनि नामानि निर्दिश्य तदनुसारं वनस्पतेः स्वरूपवर्णनं कृतमस्ति। तथैव पृथक् पृथक् भाषासु प्रचलितानामभिधेयानामपि उल्लेखो विद्यते।

**रोगनाशकोपचाराः**—ये शब्दा रोगनाशनोपचारविषयकाः स्युः तेषां विवेचनं उपचारप्रक्रियया सह कृतमस्ति।

**वर्णानुक्रमः**

कोशसंनिविष्टाः सर्वेऽपि शब्दाः वर्णानुक्रममनुसृत्यैव दीयन्ते। परं कोशेऽस्मिन् वर्णानुक्रमविषयका नूतना पद्धतिः अंगीकृता वर्तते। तद्यथा—शब्दानां प्रारंभः 'अ' 'आ' आदिक्रमं विहाय 'अंश' शब्देन कृतो भवति। तथैव च 'क्ष' आद्यवर्णेनारब्धाः शब्दाः 'क'

वर्णीयशब्दानंतरं अपि च 'ञ' वर्णीयानां क्रमः 'ज' वर्णीयशब्दानां पश्चात् विहितः इति पाठका अवगमिष्यन्ति।

**कोशप्रयोजनम्**

१) आयुर्वेदीयछात्रा अवगच्छन्तु ग्रंथसंदर्भेण स्वीयं विषयम्।

२) अध्यापकमहोदया अपि अध्याप्यविषयस्य एकस्यैव प्रतिपादनं अन्येषु ग्रंथेषु कीदृग् वर्तते इत्यवगम्य स्वीयाध्याप्यविषयटिप्पणीं कुर्वन्तु च सौलभ्येनाध्यापनम्।

३) अन्यशास्त्रसंशोधका अपि आयुर्वेदीयशास्त्रतत्वानि अवगच्छन्तु स्वीयविषयपरिपुष्ट्यर्थम्।

४) ये चान्ये विद्वांसः न कुर्वन्ति आयुर्वेदव्यवसायं वा नास्ति येषां कस्यापि शास्त्रस्य अभ्यासः परं च ये केवलं ज्ञानजिज्ञासया आयुर्वेदपरिशीलनं कर्तुमुत्सहन्ते तेऽपि अनुभवन्तु ज्ञानानन्दं कोशपरिशीलनेन इति।

---

## आयुर्वेदशब्दस्य निरुक्तिः

'आयुषो वेदः आयुर्वेदः' निरुक्तिरेषा आयुर्वेदशब्दस्य साकल्यार्थं सूचयति। हितं आयुस्तथा अहितंचायुः एवं सुखं तथा दुःखंच आयुः तन्मानं तथा तस्य च आयुषः हितं किं किं चाहितं इति दर्शयित्वा हितं कथं संपादनीयं रक्षयितव्यं वा एवमेव अहितनिवारणमपि कथं भवितुमर्हति इति यस्मिन् शास्त्रे निर्दिष्टं तदेव शास्त्रं 'आयुर्वेदशास्त्र' शब्देन व्यवहर्तुमुच्यते।

"हिताहितं सुखं दुःखं आयुस्तस्य हिताहितम्।
मानं च तस्य यत्रोक्तमायुर्वेदः स उच्यते ॥"

अस्त्यैवैतत् शास्त्रवचनम् अर्थप्रतिपादकम्। किं नाम आयुः ?—

'शरीरेन्द्रियसत्त्वात्मसंयोगः आयुः'

सूत्रेणानेन शरीरम् कर्मेन्द्रियाणि, ज्ञानेन्द्रियाणि, मनः आत्मा च सर्वेषामेतेषां संयोगः येन विशिष्टेन कालावधिना धार्यते स कालावधिरेव आयुः शब्देन गृहीतो भवति। धारि जीवितं च द्वाविमौ शब्दौ तस्य पर्यायवाचकौ स्तः।

आयुर्वेदीयतत्त्वमनुसृत्य चिकित्साधिष्ठानः पुरुषः चतुर्विंशतितत्त्वात्मकः भवितुमर्हति। तदिदं शरीरं हि पंचमहाभूतविकारात्मकं भवति। शरीरे संभाव्यानां सुखदुःखादि द्वंद्वात्मकानां संवेदनानां भोक्ता साक्षी च आत्मा एव भण्यते।

विश्वं हि अखिलं व्याप्य यद्धि आत्मरूपं सुमहत् संपूर्णं च भवति तस्यैव अत्यल्पः अंशः मानवस्य देहे आत्मस्वरूपेण अवतीर्णो विद्यते। यस्माच ब्रह्माण्डात् स आत्मा अस्मिन् शरीरे प्रविष्टः तस्मिन्नेव अनन्तपारे ब्रह्माण्डे देहनाशादनंतरं स आत्मा विलीनो भविष्यत्येव शरीरस्याप्यस्य सर्वेऽशाः पंचमहाभूतेषु भविष्यन्ति विलीनाः। या ह्येषा अवतीर्णावस्था तां जन्मशब्देन विलीनावस्थां च मृत्युशब्देन बुधाः प्रोच्यन्ते। एतयोर्जन्ममृत्योरुभयोरवस्थयोर्मध्ये यच्च कालात्मकमंतरं तदेव आयुरिति ज्ञेयम्।

किं नाम निरामयं दीर्घायुः ? आमयो हि रोगो दुःखं वा। दुःखस्य आत्मसंनिविष्टेण शरीरेण सह यः संबंधः स एव रोगः इति उच्यते। 'तद्दुःखसंयोगो व्याधिः' इयमेव भवति व्याधेर्व्याख्या। रोगः पाप्मा शब्दावेतौ व्याधेरेव पर्यायवाचकौ भवतः। शरीरस्य दुःखेन संयोगो हि यावद्दीर्घकालं न भवेत् तावदेव यदायुः तत् निरामयमायुर्भवितुमर्हति।

परंतु मानवोऽयं पूर्वजन्मकृतेन कर्मणा सहैव लभते जन्म। इत्येव जन्म एव दुःखमाहुः पंडिताः प्रतिक्षणं शीर्यते क्षिणोति वा शारीरं कर्मभिर्विनश्यति यो देहः स एव 'शरीर' संज्ञां लभते। 'शीर्यते इति शरीरम्' सूत्रमिदं दर्शयत्येतदेव।

आयुषः परमोच्चमुद्दिष्टम्—

केवलं दीर्घायुसंपादनमेव आयुषः इतिकर्तव्यतां न मन्यंते आयुर्वेदीयवेत्तारः। अपि तु धर्मादिमोक्षान्तं पुरुषार्थचतुष्टयसाधनमेव आयुष अंतिममुद्दिष्टं उपदिशंति ते

'मोक्षे निवृत्तिर्निःशेषा योगो मोक्षप्रवर्तकः'

श्रीमतां पुनर्वसुमहर्षीणां वचनमप्येतदेव सूचयति।

मोक्षसाधनमेव भवति अंतिमोद्दिष्टं मानवस्य। दुःखमयाज्जन्मात् मरणाच्च या मुक्तिः स एव मोक्षः दुःखस्य आत्यंतिको नाश एव मोक्षः इति मोक्षशब्दस्य व्याख्या एतदर्थमेव क्रियते।

पुरुषार्थचतुष्टयसंपादनमेव आरोग्यहेतुः। विनाऽरोग्यं नैकमपि पुरुषार्थं साधयितुं शक्यं भवेदेषैव घोषणा क्रियते आयुर्वेदेन तत्सूचकं 'धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम्' सूत्रमिदं उद्घोषितं भवति पूर्वाचार्यैः।

**कालनिर्णयः**

प्राचीनानां संहिताग्रंथानां कालनिर्णयं कर्तुं अशक्यप्रायमेव प्रतिभाति। न दृश्यते तस्मिन् प्राचीने काले प्रथा प्रवृत्तिर्वा ग्रंथकाराणां स्वीयनामोल्लेखनस्य ग्रंथनिर्माणकालनिर्देशस्य वा प्रायः। पश्यामो वयं यत्र कुत्रापि ग्रंथकर्ता करोति समुल्लेखं गुरोः पितुर्नामधेयस्य वा। परं समाननामधारकाः बहवो महर्षयः विभिन्नेषु कालेषु ख्यातिं प्राप्ता आसन्, तथैव च एकेनैव नाम्ना आयुर्वेदशास्त्रीयग्रंथानां इतरेषां चापि शास्त्राणां ग्रंथकर्तृत्वं, श्रुतिपथं, दृष्टिपथं वा समायाति। तेन ग्रन्थकर्तृत्वविषये नामाभिधानं कर्तुं नैव शक्यते निश्चयेन। ग्रंथकाराः केचन गोत्रं वा सांप्रदायिकं नाम स्वीकृत्य ग्रंथरचनामकुर्वन्, अथापि च तद् गोत्रस्य संप्रदायस्य कः कतमोऽयं पुरुषः इत्यपि न निश्चेतुं शक्यते। तथैव जिज्ञासुभिः संशोधकैः दूरान्वयेन कानिचित् अनुमानानि कृत्वा तेषां संकलने कश्चित् निर्णयः कृतो दृश्यते। अस्मदीयमेतदेव विधानं नातिविस्तरं सोदाहरणं विवृणुमः। तद्यथा—

चरकनाम्ना एकः संप्रदाय आसीदिति प्रतीयते। चरकानुयायिनोऽपि 'चरक' नाम एव धारितवन्तः दृश्यन्ते। अनेनैव चरकस्य आधारभूतत्वेन नामप्रतिपादकाः ग्रंथकर्तारः 'इति चरकः' इति उल्लेखयंति अंततो गत्वा अग्निवेशसंहितायाः संस्कर्ता लेखकः कोऽपि एकः चरकः आसीत् इत्येव निश्चेतुं शक्यते। तस्य कालनिर्णयस्तु संशोधनविषय एव भवितुमर्हति। कारणेनानेन तत्तत्समये संशोधकैः प्रकटिता ये चाभिप्रायाः तानवलंब्यैव संहिताग्रंथानां कालनिर्णयं विवशतया कर्तुं युज्यते।

यद्यपि अर्वाचीन ग्रंथविषयेऽपि न किंचित् निश्चयेन वक्तुं शक्यते तथापि तेषां ग्रंथकाराणां कालः ऐशवीयं शकं अनुसृत्य कथयितुं शक्यते। पाठकमहोदयैरपि अनयैव दृष्ट्या प्रश्नोऽयं निरीक्षणीयः।

चरकसुश्रुतसंहिताग्रंथयोः प्रास्ताविके निवेदने कै. वैद्य श्री यादवाचार्यमहोदयानामेव मतं अस्माभिः प्रमाणीकृतं भवति।

१) अग्निवेशसंहिताकालः— सुविख्याताः ज्योतिःशास्त्रसंशोधकाः कै. शंकर बाळकृष्ण दीक्षित महोदयाः सुबहुभिः आधारप्रमाणैः अग्निवेशकालं ऐशवीय शकपूर्वसहस्त्रत्रयवर्षात्मकं उक्तवन्तः। पाश्चात्य संशोधकेनैकेन तु कालोऽयं ऐशवीय शकात् प्राक् अष्टशतवर्षात्मकः प्रदर्शितः इयमेव अग्निवेशसंहिता पश्चात् चरकेण प्रतिसंस्कृता आसीत् तदनंतरं चिकित्सायाः सप्तदशाध्यायान् तथैव कल्पस्थानं सिद्धिस्थानं च संयोज्य पूर्णतां नीतेयं संहिता दृढबलेन।

२) सुश्रुतसंहिताकालः— एतैरेव ज्योतिःशास्त्रसंशोधकैः श्री शं. बा. दीक्षितमहोदयैः सुश्रुतकालविषयकं मतं इत्थं प्रदर्शितं भवति। तैरुद्घोषितं यत् भारतवर्षे वारगणनापद्धतिः शकारंभात् प्राक् सहस्रवर्षात् प्रचलिता। अपि च तस्मिन्नेव काले सुश्रुतसंहिता विरचिता संभाव्यते।

हेसलर नामकोऽन्यः संशोधकोऽपि दीक्षितमहोदयानामेव मतं अनुमोदते। हार्ले नामकोऽन्यः कोऽपि संशोधकस्तु कालोऽयं सुश्रुतस्य विक्रमीय शकात् प्राक् षष्ठं शतकं भवतु इत्यवोचत्।

३) वाग्भटकालः—वाग्भटनाम्ना द्वौ संहिताकारौ आस्तामिति सुविख्याताः आयुर्वेदग्रंथमाला प्रका-

शकाः कै. यादवजी त्रिकमजी आचार्यमहोदयाः साधारं प्रतिपादयंति स्म । अष्टांगसंग्रहसंहिताकारः वृद्धवाग्भटः समभवत् । वाहट इत्यपि तस्य आसीत् नामांतरम् । ऐशवीये ६२५ तमे वर्षे तस्य अस्तित्वं आसीदिति प्रतीयते ।

अष्टांगहृदयसंहिताकारो वाग्भटो ह्यपरो ऐशवीये अष्टमे शतके संजात इति वक्तुं युज्यते एव । वैद्य श्री यादवजीमहोदया वाग्भटस्य कालं षष्ठं शतकमनुमन्यन्ते । ज्ञानकोशकाराः कैं. श्री. व्यं. केतकरमहोदयाः कालं इममेव अष्टमशतकीयं प्रतिपादयंति स्म।

४ ) काश्यपसंहिताकालः— कृतयुगस्यान्ते प्रारंभे च त्रेतायुगे अधर्मप्रवृद्धिः संजाता । तेन हि रोगाणां प्रादुर्भावः समभवत् रोगाक्रान्तान् जनान् दृष्ट्वा करुणार्द्रः भगवान् कश्यपः ब्रह्मणः अनुज्ञया स्वीय ज्ञानदृष्ट्या च कृतवान् संहिताम्। काश्यपसंहिता सैव आद्या संहिता भवतीति अनुमन्यन्ते ग्रंथकाराः सर्वे । अग्रे जीवकनाम्ना पंचवर्षीय बालकेन तस्याः संहितायाः संशोधनं कृत्वा ऋषीणां पुरस्तात् प्रस्थापिता । परं ऋषयस्ते नान्वमन्यंत बालस्येमां संहिताम् इति । तदा स जीवकः कनखलगंगान्हदे न्यमज्जत् पुनरागतश्च तस्मात् न्हदात् वृद्धो भूत्वा । चमत्कारं इमं दृष्ट्वा ते सर्वेऽपि ऋषयः वृद्धजीवकस्य इयं संहिता इति तां सहर्षं स्वीचक्रुः। तत् तंत्रं वृद्धजीवकीयनाम्ना प्रसिद्धिमगच्छत्। अग्रे कलिप्रभावात् तदपि तंत्रं विलुप्तं भवेदिति विचार्य अनायसनामा यक्षः तत् गृहीतवान्। यक्षाच्च तस्मात् वृद्धजीवकवंशजेन वात्स्येन गृहीतम् प्रचारितं च वृद्धजीवकीयतंत्रनाम्ना ।

अथापि च तंत्रस्यास्य आद्यः प्रणेता भगवान् कश्यपः इति लक्षयित्वा ' काश्यपसंहिता- ' वृद्धजीवकीय तंत्रम्—इत्यस्याः संहितायाः नामकरणं संजातम्।

# संहितावैशिष्ट्यम्

**चरक** ( अग्निवेशमहर्षिविरचिता ) **वैशिष्ट्यम्**.

उपलब्धेषु आयुर्वेदीयसंहिताग्रंथेषु अग्निवेशविरचिता संहिता प्राचीनतरा भवतीत्यत्र नास्ति संदेहलेशोऽपि । तदनंतरं बहुभिः ऋषिभिः कृताः संहितारचनाः इत्यपि ज्ञायते । तत्तत् संहिताकारस्य भवत्येव किमपि वैशिष्ट्यम् । तदस्माभिरवगन्तुं युज्यते एव । प्रथमतस्तावत् अग्निवेशसंहितायाः वैशिष्ट्यम् द्रक्ष्यामो वयम् । यत इयमेव संहिता अग्रे चरकसंहितेति नाम्ना प्रसिद्धिं गता ।

१ ) अस्यां चरकसंहितायां आयुर्वेदीय शास्त्रतत्वप्रतिपादनं दर्शनसिद्धांतानुरोधेन कृतमस्तीति दृश्यते। तद्यथा—सांख्याः पंचविंशतितत्वात्मकं पुरुषं प्रतिपादयन्ति । प्रत्युत पुरुषस्तु संहिताकारय पुनर्वसुपरंपरया चतुर्विंशतितत्त्वात्मकः षड्धातुकश्च भवति ।

२ ) द्विविधं हि मानवी जीवनम् शारीरं मानसं चापि । तदुभयमपि आरोग्यसंपन्नं भवत्विति आयुर्वेदशास्त्रस्य अंतिमोद्दिष्टं वर्तते । उभावपि जीवनप्रकारौ परस्परावलंबिनौ स्तः । इयं एव आयुर्वेदस्य विचारप्रणालिः भवति । इत्यतः जन्म एव दुःखं तस्य दुःखस्य नाश एव मोक्षसाधनम्। तत्त्वमेतत् चिकित्सा प्रतिपादने संहितामस्यामंगीकृतम् विद्यते । चिकित्सायाः प्रकारचतुष्टयं अस्यां विवेचितं भवति । तद्यथा—
(१) रोगनाशिनी चिकित्सा (२) प्रकृतिस्थापनी चिकित्सा (३) रासायनी चिकित्सा (४) नैष्ठिकी चिकित्सा चेति। चतुर्णामपि एतासां चिकित्सानां प्रभावः देहधातुमनसोः समत्वप्रस्थापने यथोत्तरं श्रेष्ठो भवति । अनया दृशा उच्चतरं समत्वप्रस्थापनार्थं उपचाराणामपि दिग्दर्शनं कृतं भवति संहितायामस्याम् ।

३) आद्यसंहिताकारैः अग्निवेशमहर्षिभिः अतत्वाभिनिवेशनामा विकारः प्रतिपादितः; स च नैष्ठिकीचिकित्सासहायेन रोगनाशिन्या शोधनशमनचिकित्सया च नश्यति; इति प्रतिपादितम् ।

४ ) मनसः सप्तधातूनां च परस्परसंबंधः सारासारत्वदर्शकः निगूढो विचारोऽपि एतैरेवाचार्यैः प्रतिपादितो भवति सविस्तरं सर्वप्रथमम् ।

५ ) मानसिकानां तथैव च इतरेषाम् केषां केषां अमूर्तभावानां श्रेष्ठत्वं कनिष्ठत्वं धातूनामेव सारासारत्वे निर्भरं भवति इत्यपि दिग्दर्शनं यथायोग्यं कृतं आचार्यैः।

६ ) आशयापकर्षत्वात् समा अपि दोषा विकारान् जनयंति इति प्रतिपाद्य तत्र करणीयानां उपचाराणामपि दिग्दर्शनं कृतमस्ति ।

७ ) हेतुविपरीत, व्याधिविपरीत, हेतुव्याधिविपरीत, हेतुविपरीतार्थकारी, व्याधिविपरीतार्थकारी, हेतुव्याधिविपरीतार्थकारी च इत्येता मूलगामिनः चिकित्साप्रकाराः आचार्यैः सन्ति प्रतिपादिताः । प्रकारेष्वेतेषु उत्तरास्त्रयः उपचाराः दृश्यन्ते यद्यपि व्याधिसमानाःस्थापि ते व्याधिं परिहर्तुं समर्था भवन्ति इति चिकित्सावैशिष्ट्यमपि आचार्यैः प्रतिपादितं भवति ।

८ ) मंडूरलोहशिलाजतुसुवर्णवैडूर्य (रत्न) मणि पारदानां चिकित्साकार्योपयोगः प्रथममेवाचार्यैः प्रतिपादितः ।

९) वनस्पति समद्भूतः गुडः तथा मधुधृतं च प्राणिजं तथैव गुड-शर्करा-मधुभिस्त्रिभिर्द्रव्यैः सिद्धाऽसवा यावन्तः पुराणास्युस्तावन्तो गुणावहाः श्रेष्ठाश्च भवन्तीति कल्पनापि एतेषामेवाचार्याणाम् विद्यते ।

१० ) नान्तर्हितो हि दृष्टेराचार्याणां सामूहिकस्वास्थ्यप्रश्नोऽपि । विकृतेभ्योहि पृथिव्यादि पंचमहाभूतेभ्योऽपि जनपदोध्वंसका रोगाः संभवन्ति । ये च तदुत्पादकानि कारणानि स्युस्तेषु भूतानि नाम जंतवोऽपि अवगण्यन्ते इति तेषां जंतूनां भूतशब्देनोल्लेखः कृतः । तथैव सहजाः अविकारकारिणः अपि क्रमयः प्रतिपादिता भवन्त्यत्र

११ ) ओजो हि श्रेष्ठतमो धातुः शरीरे भवति नराणाम् । तं धातुमपि अश्नंति केचन भूताः (जंतवः) ते ओजोशना एवान्येभ्यः जंतुभ्यः पृथक्त्वेन वर्तन्ते इति आचार्यमहोदयैः निवेदितम् ।

१२ ) ' आहारसंभवं वस्तु रोगाश्चाहारसंभवाः, सूत्रमेतत्पुरस्कृतं आचार्यैः । यतो हि सर्वेषां रोगाणां भवत्युद्भवः आहारादेव तस्मात् मिथ्याहारः सर्वथा त्याज्यः इति । सिद्धान्तोऽयं लवणादि रसानां अत्युपयोगात् रोगाणां उद्भवः कथं भवतीति दर्शितं अपि च रोगप्रतीकारापेक्षया येन रोगोत्पत्तिरेव न स्यात् तथा कर्तव्यमस्माकमिति सुचितं वैशिष्ट्यपूर्णम् ।

१३ ) संहिताकारैः न केवला औषधिचिकित्सा एव प्रोक्ता अपि तु मानसिकी चिकित्सा अपि लक्षीकृता भवति । तेन हि अग्निवायुविष्णुइंद्रशंकरप्रभृतीनां देवतानां पूजनार्चनप्रार्थनादयः उपचारा निगदिताः सन्ति । उपचारैरेतैः नराणां मानसिकं बलं श्रद्धाभक्तिसमन्वितेन मनसा वर्धते । रोगनाशने भवति च साधनीभूतं तत् इत्यपि आचार्यैः तर्कितं दृश्यते ।

१४) चरकप्रतिपादिता विषमज्वराः संतर्पणजन्याः एवं दोषाणां गुरुत्वेन संभवंतीत्यपि वैशिष्ट्यं प्रतीयते ।

१५) शिष्योपनयनीयाध्याये गुणविशेषान् दृष्ट्वैव शिष्यः अध्यापनाय ग्राह्यः न च तस्य वर्णो विचारणीय इति उक्तं भवति । तेन वर्णो हि अध्ययनेन कर्मणा च भवति न तु जन्मना इत्यासीत्तेषां मतमिति दृश्यते ।

१६) अनधीतः अनधिकृतश्च शासनेन यः वैद्यः न स चिकित्साव्यवसायं कर्तुमर्हतीति संदिष्टमाचार्यैः । एतादृशं चिकित्सकं ' छद्मचर ' ' सिद्धसाधक ' आदि उपाधिना धिक् कुर्वन्ति ते इत्यपि वैशिष्टम् ।

चिकित्साव्यवसायिनां कृते नीतिनियमानामपि आवश्यकता भवतीति संकल्प्य आचार्यैरुक्ता भवन्ति नीतिनियमाः ।

१७ ) पुरातनसंहिताभ्यः अन्याभ्यः विकाराणां वातावृतवातविकारवर्णनं वैशिष्ट्येन प्रदर्शितं विद्यते । इति संहिताया अस्याः प्रतिसंस्कर्त्रा दृढबलेन प्रतिपादितं भवति अस्याम् ।

## सुश्रुतवैशिष्ट्यम्

सुश्रुतसंहिता अपि भवति आयुर्वेदक्षेत्रे सुविख्याता । सुश्रुताचार्यैः इयं स्वीयां संहिता वैशिष्ट्यपूर्णतया एव ग्रथिता भवति इति प्रतीयते अन्याभ्यः संहिताभ्यः भवन्ति कानिचित् वैशिष्ट्यानि अस्याः संहितायाः तेषु कानिचित् वयं द्रक्ष्याम इदानीम् ।

१ ) सर्वेऽपि संहिताकाराः मन्यन्ते दोषाः त्रय एव वातपित्तश्लेष्माण इति । परं सुश्रुताचार्याः रक्तमपि

दोषं चतुर्थं मन्यन्ते। यतो हि शस्त्रक्रियाप्रधाना इयं सुश्रुतसंहिता भवति । शस्त्रकर्मणि रक्तेनैव संबंधो भवतीति वातपित्तश्लेष्मवत् रक्तेनापि दोषेण भाव्य-मिति आचार्याणां मतं संभाव्यते।

२ ) सुश्रुताचार्यैर्यद्यपि शल्यतंत्रप्रधानोऽयं ग्रंथः विरचितो भवति तथापि यावच्छक्यं शस्त्रक्रियां विनैव कथं चिकित्साकार्यं फलप्रदं भवेत् विचारमिममेव पुरस्कृत्य चिकित्सा निर्दिष्टा भवति इति दृश्यते सुस्पष्टं सर्वत्र। शल्यशब्देन न केवलं बाह्यवस्तुनः शरीरान्तः प्रवेशं मन्यंते सुश्रुताचार्याः। संकुचितामेनां व्याख्यां समुल्लंघ्य मनसः विकृतिकारणौ रजस्तमश्च द्वावपि दोषौ शल्यभूतौ भवतः तथैव वातपित्तश्लेष्माणस्त्रयोपि दोषाः शारीरशल्य-भूता भवन्तीति सुश्रुताचार्याणां मतम्। अत एव तैराचार्यैः युद्धकाले शत्रुपक्षीयाणां अंतःप्रविष्टानां शराग्राणां निष्कासने यथा प्रदर्शिता युक्तयः तथैव रजस्तमोभ्यां समुद्भूतानां उन्मादापस्मारग्रहबाधाप्रभृतीनां मानसविकृतीनां तथैव वातपित्तश्लेष्मणां शल्यभूतानां निर्हरणे बह्वो ह्युपायाः संदिष्टा भवन्ति। अतः परं कर्णनासागलादिगतानां रोगाणां निर्हरणाय शलाकानां उपयोगः शालाक्य-तंत्रनाम्ना समुद्दिष्टो वर्तते । स्त्रीणां प्रसूतितंत्रमपि सविस्तरं निवेदितं विद्यते।

३ ) बहुभिः संहिताकारैः रोगनिर्हरणे अस्त्रविसृति-चिकित्सा तथैव क्षाराग्निशस्त्रचिकित्सानां वर्णनं दृश्यते कृतमिति। परं सुश्रुतोदिता ये शस्त्रप्रयोगाः सन्ति तेषु केषांचन प्रयोगाणां शारीरशास्त्रदृष्ट्या संगतिः कीदृशी स्यादिति नावगम्यते। अथापि च यदा हि तेषां शस्त्र-प्रयोगाणां साफल्यं दृष्टिपथमायाति तदा रोगस्थान-चिकित्सास्थानयोः परस्परसंबंधेनावश्यं भाव्यमिति मन्तुं आवश्यकमेव भवति।

४ ) छिन्नानां भिन्नानां चावयवानां यथापूर्वं स्थिति-स्थापने स्थानांतरस्थितां त्वचं संकृत्य विकृते स्थाने तत्स्थापनं कार्यम्। एतादृशः प्रकारोऽपि शल्यतंत्रे सुश्रुताचार्यैः विहितो भवति। आधुनिकशस्त्रचिकित्सा-कोविदैरपि क्रियते इयं चिकित्सा प्लास्टिक सर्जरी नाम्ना। कौशल्यं तस्मिन् कालीनमेतत् वैशिष्ट्यपूर्णमेवासीदिति को नाम नानुमन्येत ?

५ ) शारीरशास्त्राभ्यासार्थं शवच्छेदनपद्धतिः सुश्रुताचार्यैः या प्रदर्शिता साऽपि वैशिष्ट्यपूर्णा।

६ ) आयुर्वेदीया भूतचिकित्सा साकल्येन जंतु-चिकित्सा एव भवितुमर्हति। चिकित्साया अस्या निवेदने सुश्रुताचार्यैः भूतानां वैशिष्ट्यं, तेषां स्वभावाः, स्थानानि, तदुद्भवा रोगाः तेषां नरान्नरसंक्रमण-पद्धत्या संभाव्या सांक्रामिका रोगाः सर्वमेतत् सुश्रुता-चार्यैः सविस्तरं सोपपत्तिकं च निवेदितं भवति। वर्णन-मेतदाधुनिकजन्तुवर्णनसदृशमेव वर्तते।

७ ) 'विपाक कल्पना' इदमपि आयुर्वेदशास्त्रस्य वैशिष्ट्यमेकं धारयति। परं तत्रापि सुश्रुताचार्यैः स्वीयं वैशिष्ट्यं दर्शितं विद्यते। अन्ये ग्रंथकारा रसविपाक-कल्पनां पुरस्कुर्वन्ति परं सुश्रुताचार्यास्तु द्रव्याविपाकमेव प्रतिपादयन्ति। भवति इदमपि तेषां वैशिष्ट्यम्।

८ ) चरकप्रतिपादितात् विषमज्वरात् सुश्रुतप्रति-पादितो ज्वरः अन्य एव भवति। न ह्ययं विषमज्वरः सुश्रुताचार्यप्रतिपादितः गुरुदोषात्मकः चरकवत् अपि तु स स्वल्पदोषकृत एव भवति। इत्यतोऽपि कफ स्थानस्थित विषमज्वर संज्ञयाऽपि अन्ये केचन प्रकारा वर्णिताः सन्ति।

९ ) व्रणातुराणां कृते भवतु व्रणितागारं पृथगेव इति सुश्रुताचार्यैः स्वीयं मतं संदर्श्य तस्य व्रणितागारस्य रचनायाः अपि कृतमस्ति दिग्दर्शनं। तथैव च व्रणस्य एकस्य एव विकारस्य अवस्थामनुसृत्य षष्टि-प्रकाराः सोपचाराः उपदिष्टा भवन्ति संहितायाम्।

१० ) सूतिकाभ्यः सूतिकागारं कुमाराणां कृते कुमारागारं च संसूचितं रचनाऽपि निर्दिष्टा भवति तेषां आगाराणाम्।

११ ) विषचिकित्सायाः विवेचनं सविस्तृतं विद्यते सुश्रुतसंहितायाम् कंदमूलफलपत्रपुष्प रसनिर्यासादीनां स्थावरविषाणां तत्तदंगमुद्दिश्य वर्णनं कृतं भवति। तथैव खनिजानां विषद्रव्याणां सर्पवृश्चिकगोधामक्षिका-दीनां कीटयोन्युद्भवानां व्याघ्रसिंहश्वानादीनां पशूनामपि दंशविषस्य वर्णनं सोपद्रवं सोपचारं सविस्तरं जंगमविष-संज्ञया कृतं भवति।

१२ ) शल्यतंत्रोपयोगानां यंत्राणां शस्त्राणां च धारा, तीक्ष्णत्वं तेषां पायनाविधिप्रकाराः, यंत्रवारंगं यंत्रपरिचायकानि अन्वर्थकानि नामानि, तेषां गुणकर्म च इति सर्वमपि सुश्रुताचार्यैः संहितायां स्वीयां सुविवेचितं भवति ।

१३ ) रोगाभिव्यक्तिः पूर्वरूपरूपैरेव न केवलं ज्ञातुमर्हति । प्रत्युत पूर्वरूपात् प्रागपि प्रसरावस्थायाः प्रकोपावस्थासंचयावस्थयोश्च संक्रमणं भवत्येवावश्यम् इत्युक्त्वा सुश्रुताचार्यैः तदनुसारी चिकित्साऽपि प्रोक्ता भवति ।

**वाग्भटः**

चरकसुश्रुतयोः सममेवाभ्यसनीया आयुर्वेदीया संहिता भवति वाग्भटस्यापि संहिता इति जानन्त्येव आयुर्वेदवेत्तारः । वाग्भटकृतं संहिताद्वयं प्रसिद्धमेव । एका अष्टांगसंग्रहसंहिता अष्टांगहृदयसंहिता चापरा । एकनामत्वेऽपि द्वयोरपि संहितयोः कर्तारौ भिन्नौ वाग्भटौ आस्तामिति प्रतीयते । अष्टांगसंग्रहकारः वाग्भटः वृद्धवाग्भटनाम्ना प्रसिद्धः स च अष्टांगहृदयकारात् वाग्भटात् प्राक् जातः इति ज्ञायते । नैतत् स्थानं एतद्विषये विवरणार्थं प्रस्तुतमिति। अथापि च वृद्धवाग्भटस्यैव लघुत्वं अष्टांगहृदयमिति हृदयकार एव वाग्भट उक्तवान् । सांप्रतम् पठनपाठने प्रायो हि अष्टांगहृदयमेव प्रचलति सर्वत्रेति तमेव ग्रंथकारमुद्दिश्य तस्यापि किंचिद्वैशिष्ट्यमुल्लिखामोऽत्र ।

१ ) पठनपाठने शास्त्रीयविवेचनदृष्ट्याापि वाग्भटसंहिताग्रंथः सर्वोत्तम एव भवतीत्यत्र नास्ति अवसरो मतांतराय इति प्रतिभाति । ग्रंथस्यास्य सूत्रस्थानंतु आयुर्वेदतत्वज्ञानेन परिपूर्णमेव विद्यते । ग्रंथस्यास्य प्रथमे एव अध्याये ग्रंथकारेण सर्वेषामपि विवेच्यविषयाणां सूतोवाचं कृतं भवति । तदनुसृत्यैव सर्वेषां विषयाणां विस्तृतं विवेचनं पृथक् पृथक् स्थानमधिकृत्य कृतं वर्तते । निदानचिकित्सादीनां स्थानानां भूमिका तावत् सूत्रस्थाने एवासादयति ।

२ ) वाग्भटस्य संहिता नातिसंक्षेपविस्तरा वर्तते । बह्वर्थसूचकानां लघुसूत्राणां ननु मालैव ग्रंथकारेण विरचितेति वक्तुं न कोऽपि प्रत्यवायः ।

३ ) ग्रंथरचनायाः संकेतान् निश्चित्य हित्वा च द्विरुक्ति सविस्तरं कृतं विषयविवेचनकौशलं अपूर्वमेव ग्रंथकारस्य अनुभूयते ।

४ ) रोगस्य पूर्वरूपादारभ्य अग्रे संभाव्यानां अवस्थानां दिग्दर्शनं क्रमशः कृतमस्ति अपि च तदनुसारी चिकित्साऽपि प्रदिष्टा भवतीत्यपि ग्रंथकारस्य वैशिष्ट्यमेव वर्तते ।

अष्टांगसंग्रहकार—वाग्भटस्य वैशिष्ट्यं इतःपूर्वं वर्णिताभ्यः चरक–सुश्रुत–अष्टांगहृदय–संहिताभ्योऽपि सुमहत् वर्तते । यतः संग्रहकारेणानेन विविधानां नाविन्यपूर्णविषयाणां संग्रहः संहितायां स्वीयां कृतो भवति । यश्च नासादयति पूर्वोक्तासु संहितासु ।

४ ) वृद्धो वाग्भटः प्रासादिकः कविरपि आसीत् इति तत् तत् प्रसंगमनुसृत्य कृतं यद्वर्णनं पठामो वयं तदा प्रसन्नेन मनसा वक्तुं युज्यते । अनेनैव कारणेन ग्रंथोऽयं पठनसुलभोऽपि संजात इति सुमहद्वैशिष्ट्यं वर्तते ग्रंथस्यास्य ।

५ ) वाग्भटो नासीत् कस्यापिधर्मस्याभिनिवेशी स्वरूपमेतत् स्वीयं 'सर्वधर्मेषु मध्यमाम् वृत्तिमास्थाय' इत्युपदेशादेव व्यक्तं भवति। यद्धि यस्य इष्टं दैवतं तदेवार्चनीयं इत्यप्यादिशति वाग्भटः। देवतानामपि विभिन्नानां आराधनार्थं हिंदुजैनबौद्धप्रभृतिभ्यः शिव, शिवसुत, तारा आदिनामभिः निवेदितं कुष्ठसदृशेषु रोगेषु रोगनिवृत्त्यै। अनेन च वाग्भटोऽयं धर्माग्रही नासीदिति स्पष्टं प्रतीयते ।

**काश्यपसंहितायाः वैशिष्ट्यम्**

काश्यपसंहिता ( वृद्धजीवकीयतंत्रम् ) नाम्ना यश्चाधुना उपलब्धः ग्रंथः स च नातिसंपूर्णः त्रुटितश्च भवति । नेपालीयराजगुरुः पं. वैद्यश्री हेमराजशर्मभिः महद्भिः सायासैः ताडपत्रलिखिता संशोध्य प्रकाशीकृता इयं संहिता । घुणैः कीटैश्च भक्षितानि विशीर्णानि ताडपत्राणि संगृह्य संशोध्य च सूत्राणि तदंकितानि एव ग्रंथेऽस्मिन् विद्यन्ते । सन्ति तेषु सुबहूनि सूत्राणि अपूर्णानि विनिष्टान्यपि कानिचित् । अथ तस्य पठनेनावगम्यते ग्रंथो ह्येषः वालकानामारोग्यमुद्दिश्य

विरचितो भवति ग्रंथकारेणेति । अनुसृत्य च बालकस्य मातुः गर्भधारणा, तस्यां संभाव्या उपद्रवाः उपचाराश्च तेषां तथैव प्रसूतेरनन्तरमपि करणीयानामुपचाराणां वर्णनं कृतं विद्यते । अग्रे च बालकानामारोग्यपरीक्षणं संवर्धनं तथैव तेषां रोगापहरणमप्युद्दिश्य भवति सविस्तरं वर्णनम् ग्रन्थेऽस्मिन् ।

१ ) प्राप्ते हि प्रसूतीकाले यदा च आवीनां स्तंभो भवति विलंबेन वा स्थित्वा स्थित्वा प्रभवंति ताः तदा गार्भिण्या मुसलादिभिः शाल्यादीनां कंडनं अन्यद्वा जृम्भाऽनयनं संचलनादि करणीयमिति बहुभिः ग्रन्थकारैः यदुपदिष्टं तत् नानुमतं काश्यपेन । तदर्थं वदति जीवकः यथा— 'केचिदस्यामवस्थायां व्यायामं मुसलादिकम् । जृम्भा चंक्रमणाद्यं च भिषजो ब्रुवते हितम् । वर्जनीयं तु तत् सर्वं भगवानाह कश्यपः ॥' उपदिष्टंच तेन महात्मना "नार्याःप्रसवकाले हि शरीरमुपमृद्यते । त्रयो दोषाः प्रकुप्यन्ति विचाल्यंन्तेच धातवः । गर्भिणी तदवस्था हि यत्नधार्या विशेषतः ।" इति । सूक्ष्मावलोकनपूर्वमेव कश्यपानामेतत् प्रतिपादनं संदृश्यते वैशिष्ट्यं चापि दर्शयति तेषाम् ।

२ ) बालकानां क्षयसदृशचिन्हैर्युक्ता बालशोष, फक्कादिभिर्नामभिः ये रोगा ज्ञायंते तेषामपि सोपचारं यन्मर्मग्राहिवर्णनं काश्यपैः कृतं न तत् कुत्राप्यासादयति ।

३ ) रसाद्रक्तं ततो मांसं आदि शारीरधातुनिर्मितौ अनुलोमपद्धतिस्तु सर्वैरेवायुर्वेदग्रंथकारैं र्निवेदिता भवति परं गर्भस्थो मानवीजीवः प्रतिलोमगत्या वर्धते इति प्रतिपादितं शुक्रादनन्तरं मज्जा ततोऽस्थि आदि रसधातोर्यावत् वर्धनक्रमः वर्णितः कश्यपेन नान्यस्मिन् कस्मिन्नपि आयुर्वेदीयग्रंथे स्पष्टतया दृश्यतेऽयं विचारः।

## माधवनिदानं

ऐशवीये सप्तमे शतके 'माधवकरः' नामा पंडितः निदानविषयक एव 'माधवनिदान' नाम्ना संग्रहग्रंथरचनामकरोत् । पाठ्यक्रमे सुबहुषु आयुर्वेदविद्यालयेषु पाठ्यपुस्तकत्वेन ग्रंथोऽयं अध्याप्यते । 'निदाने माधवः श्रेष्ठः' इत्येतावतीं ख्यातिं आप्नुवदयं ग्रंथः । सन्ति अस्यापि वैशिष्ट्यानि कानिचित् । तानि यथा—

१ ) ग्रंथेऽस्मिन् चरक, सुश्रुत, वाग्भट, विदेहादिभ्यः संहिताग्रंथेभ्यः वचनानि संकलितानि सन्ति ।

२ ) पद्यरचनाऽपि ग्रंथस्यास्य सुबोधा सरला संस्कृता च विद्यते ।

३ ) मधुकोशटीका अन्या च आतंकदर्पणाख्या टीका एवं द्वाभ्यामपि सुविस्तृताभ्यां टीकाभ्यामलंकृतोऽयं ग्रंथः वर्तते । शार्ङ्गधरसंहितासदृशैः स्वल्पैरेव संहिताग्रंथैर्लब्धमेतावद् भाग्यम् । ग्रंथस्यास्य सर्वव्यापिनी सुलभा रचना एव हेतुः भवति इत्यत्र न कापि शंकास्थानम् ।

४ ) पृथक् वातादिनिर्दिष्टहेतुलिंगसमागमे । त्रिदोषे निर्दिशेदेवं तेषां वक्ष्यामि भेषजम् ॥ इत्यस्मिन् श्लोके 'तेषां वक्ष्यामि भेषजम्' वाक्यं संपूर्णतया अनावश्यकं अनुचितं च अंकितं भवति । नास्त्यस्य चिकित्सादर्शकस्य वाक्यस्य सुतराम् संबंधः निदानविषये ग्रंथे अस्मिन् । अयं एक एव दोषः वर्तते परं स च गुणसंन्निपाते संनिमज्जत्येव ।

## शार्ङ्गधर संहिता

ऐशवीय शकस्य १३६३ समये शार्ङ्गधरः समभवदिति हिस्टरी ऑफ इंडियन फार्मसी नाम्नः ग्रंथस्य लेखकाः श्रीवास्तव महोदयाः कथयंति ।

शार्ङ्गधरसंहिताग्रंथस्यालोचकैः श्री परशुरामशास्त्रिभिः संहितायाः अस्याः कानिचित् वैशिष्ट्यानि लिखितानि सन्ति । यथा—

१ ) लघुत्रयीनाम्ना प्रसिद्धेषु ग्रंथेषु भवत्यंतर्भावो शार्ङ्गधरसंहितायाः ।

२ ) संहितायामस्यां शारीरविषयः अत्यल्पो भवति । सोऽपि प्रायः चरकसंहितायाः स्वीकृतो भवति ।

३ ) नेत्र–मुख–मूत्र–नाडीनां प्रयोजनं परीक्षणं चापि अत्र विद्यते ।

४ ) रोगाणां संख्या एव केवला दर्शिता भवति ।

५ ) निघंटुविषयो नास्ति विवेचितः न वा गृहीतः ।

६ ) क्काथ–अवलेह–चूर्ण–गुटि–रस–आसव–अरिष्टाणां अनुभूता प्रयोगाः सलक्षणाः समाविष्टाः सन्ति ।

७ ) दीपिका, गुढार्थदीपिका, आयुर्वेददीपिका च एताः तिस्रः टीकाः ग्रंथे विद्यते ।

### भावप्रकाशः

भावप्रकाशग्रंथोऽपि शार्ङ्गधरवत् लघुत्रयी ग्रन्थेष्वेवान्तर्भवति । आयुर्वेदपाठ्यक्रमे भवति प्रयुक्तोऽयं ग्रन्थः । तृतीयः ग्रंथः योगरत्नाकरः । त्रिभिर्मिलित्वैव भवति लघुत्रयी । चरक सुश्रुत वाग्भट ग्रन्थानां सुबहोः कालादनन्तरमेव एषा लघुत्रयी प्रकाशमलभत् ।

त्रिषु अपि एषु लघुत्रयी ग्रन्थेषु बृहत्त्रयीग्रन्थेभ्यः चरकसुश्रुत वाग्भटेभ्यः एव आधाराः संगृहीता भवन्ति । कालः— भावप्रकाशग्रंथरचनाकारः श्री लटकन मिश्राणां पुत्रः भावमिश्रनामा समभवत् । संशोधकानां अनुमानतः ऐशवीये १५५० संवत्सरो संभाव्यते भावप्रकाशकालः । ग्रंथस्यास्य रचना अतीव सुलभा भवति । अपि च ग्रंथेऽस्मिन् कालं प्रचलितं अनुसृत्य आहारद्रव्याणां तथा रोगाणामपि सोपपत्तिकः सोपचारः अंतर्भावः कृतो विद्यते । अस्ति वैशिष्ट्यं ग्रंथस्यापि अस्य । तद्यथा—

१ ) यावच्छक्यं सर्वेषामप्यौषधिद्रव्याणां गुणधर्मविवेचने ' हरितक्यादिनिघंटुः ' नाम्ना स्वतंत्र एव विभागः ग्रंथेऽस्मिन् ग्रंथकर्तृणा भावमिश्रेण कृतः इति दृश्यते । सर्वोपरि एव वैशिष्ट्यम् अस्य ग्रंथस्य एतत् ।

२) यानि द्रव्याणि नांतर्भूतानि संहिताग्रंथेषु प्राचीनेषु अपि च यानि ऋषिकालादनंतरं व्यवहारे समागतानि तेषांमपि सुबहूनां द्रव्याणां आयुर्वेदीय शास्त्र पद्धतिमनुसृत्य नामकरणं कृत्वा गुणधर्मविवेचनं चिकित्साकार्योपयोगश्चापि ग्रंथेऽस्मिन् संदिष्टो वर्तते । अहिफेन–कर्पूर–खर्जूर–सुलेमानीलवण–खुरासनीयवान्यादीनां द्रव्याणां उदाहरणानां उल्लेखं कर्तुं युज्यते एव ।

३ ) यस्मात्कालात् पोर्तुगीजाः भारते समागताः तस्मादेव कालात् तैः सहैव 'गरमी' 'उपदंश' नाम्ना रोगः समायातः। पोर्तुगीजा हि फिरंगीति नाम्ना व्यवहृताःसन्त्यस्मिन् देशे । अतएव उपदंशस्य उग्रस्वरूपेण समायातस्य अस्य रोगस्यापि फिरंगोपदंश इति अभिधानं कृत्वा तस्य निरासार्थं चिकित्सापि संदिष्टा भवति ।

### योगरत्नाकरः

योगरत्नाकरोऽयं ग्रंथः ऐशवीय १६५० संवत्सरादनंतरं अपि च सप्तदशशतके एव विरचितः इति प्रो० प. कृ. गोडे संशोधकमहोदयैः ' योगगरत्नाकराचा कालनिर्णय ' विषयमधिकृत्य भारतेतिहाससंशोधनमंडलस्य पुरस्तात् पठिते प्रबंधे निवेदितं भवति । प्रबंधेऽस्मिन् स्वमतपुष्ट्यर्थं महाभागैरेतैः प्रमाणमेकं प्रदर्शितं भवति तद्यथा—"योगरत्नाकर " ग्रंथे तमाखु वनस्पतिवर्णनं विद्यते । द्रव्यमेतत् ऐशवीय १६५० संवत्सरात् प्रचलितम् । अनन्तरमेव नातिदीर्घकालात् प्रसिद्धिमलभदेष ग्रंथ इति सिद्ध्यत्येव ।

**वैशिष्ट्यम्**— अस्मिन् योगरत्नाकर ग्रंथे आयुर्वेदीय शास्त्रपद्धत्या आर्तानामष्टविधा परीक्षा संदिष्टा भवति । तथैव च कालज्ञानं, धान्य–फल–कंद–शाखादीनां गुणधर्मवर्णनं संदिष्टं भवति । सिद्धान्नादीनां मांसपदार्थानां चापि भवति वर्णनं कृतम् गुणधर्मात्मकम् । धात्वादीनां शोधनमारणे रत्नादीनां चापि प्रदर्शिते भवतः । ग्रन्थेऽस्मिन् ज्वरादि रोगाणां विवरणक्रमस्तावद् माधवनिदानमनुसृत्यैव विहितो दृश्यते। अथापि च निदान विस्तारस्तु प्रभूतः कृतः । ज्वरादीनामनेकप्रकाराणां,दोषोल्बणानां संनिपातादीनां तथैव च संधिकान्तकादीनां त्रयोदश संनिपातज्वराणां तदवस्थानुसारी चिकित्साऽपि च सम्यकृतया सविस्तरा च निवेदिता । चिकित्सायां चूर्ण–गुटि–आसवारिष्ट–स्नेह–सिद्धौषधि–रस—भस्मादीनां विविधानां कल्पानां अन्तर्भावः सविस्तरं कृत्वा वैशिष्ट्यपूर्ण एव विरचितोऽयं ग्रंथ इति कथयितुं युज्यत एव ।

# उपसंहारः

महाकोशस्य सामान्यस्वरूपज्ञानाय कृतं ह्येतत् विवेचनं भवति पर्याप्तमिति वयं मन्यामहे । अथाप्यवशिष्टमेकं कथनं यच्च कोशेनानेन सहैव संलग्ना भवति कोशे पूरणिकाऽपि मुद्रिता अस्माभिरिति । पूरणिकायामस्यां बहवो हि नूतनाः शब्दाः सन्ति समाविष्टाः । ये च प्रधाने कोशे नान्तर्भूताः इति द्रक्ष्यन्ति पाठकमहोदयाः । शब्दाश्चैते समासादिता अस्माभिः "वैद्यकशब्दसिन्धुः" नाम्नः कोशग्रंथात् । कोशश्चासौ वैद्यकशब्दसिन्धुर्नामा बहोः कालादर्वाग् प्रसिद्धः आसीत् । नासाविदानीमुपलभ्यते । सुमहत् सहायं संजातमस्य कोशस्य पूरणिकारचनायाम् । अस्मिन वैद्यकशब्दसिन्धुकोशग्रन्थे मानुषवैद्यक पारिभाषिक शब्दैः सह गजाश्वादि पशुवैद्यकविषयसंबंधिनामपि पारिभाषिक शब्दानां भवति कृतोऽन्तर्भाव इत्यपि वैशिष्ट्यमेव भवति ।

आस्तां तावत् । अंततो गत्वा भवत्वयं आयुर्वेदीय शब्दकोशः महाकोशः विज्ञानकोशो वा विदुषां आदरस्थानमिति विश्वसिमः । अपि च सत्कृतिरियं आयुर्वेदगंगावतरणे कृतपरिश्रमाणां भगीरथानां सर्वलोकहितैषिणां अस्मत् पूर्वजानां भरद्वाज पुनर्वसुः आत्रेय प्रभृति महर्षीणां चरणेषु साञ्जलिबद्धं निरूप्य विरमामः ।

॥ इति शम् ॥

---

# आयुर्वेदीय शब्द कोशः अर्थात् आयुर्वेदीय महाकोशः

| आधारग्रंथाः | तेषां स्थानानि | संकेताश्च |
|---|---|---|
| चरक संहिता | चरक सूत्रस्थानम् | च. सू. |
| | चरक निदानम् | च. नि. |
| | चरक विमानस्थानम् | च. वि. |
| | चरक शारीरम् | च. शा. |
| | चरक इन्द्रियस्थानम् | च. इं.; च. इ. |
| | चरक चिकित्सास्थानम् | च. चि |
| | चरक कल्पस्थानम् | च. क. |
| | चरक सिद्धिस्थानम् | च. सि. |
| सुश्रुत संहिता | सुश्रुत सूत्र | सु. सू. |
| | सुश्रुत निदानम् | सु. नि. |
| | सुश्रुत शारीरम् | सु. शा. |
| | सुश्रुत चिकित्सा | सु. चि. |
| | सुश्रुत कल्पम् | सु. क. |
| | सुश्रुत उत्तरस्थानम् | सु. उ. |
| अष्टांगहृदयम् | अष्टांगहृदय सूत्रम् | अहसू. |
| | अष्टांगहृदय शारीरम् | अहशा. |
| | अष्टांगहृदय निदानम् | अहनि. |
| | अष्टांगहृदय चिकित्सा | अहचि. |
| | अष्टांगहृदय कल्पम् | अहक. |
| | अष्टांगहृदय उत्तरस्थानम् | अहउ. |
| अष्टांगसंग्रह | अष्टांगसंग्रह सूत्रम् | असंसू. |
| | अष्टांगसंग्रह शारीरम् | असंशा. |
| | अष्टांगसंग्रह निदानम् | असंनि. |
| | अष्टांगसंग्रह चिकित्सा | असंचि. |
| | अष्टांगसंग्रह कल्पम् | असंक. |
| | अष्टांगसंग्रह उत्तरस्थानम् | असंउ. |
| | संग्रह पृष्ठांकाः तर्टेमहोदयै संशोधिताः | तर्टे प्रत. |

| आधार ग्रंथाः | तेषां स्थानानि | संकेताश्च |
|---|---|---|
| काश्यपसंहिता | काश्यप सूत्रम् | का. सू. |
| | काश्यप विमान | का. वि. |
| | काश्यप शारीरम् | का. शा. |
| | काश्यप इंद्रियस्थानम् | का. इ. |
| | काश्यप चिकित्सा | का. चि. |
| | काश्यप सिद्धिस्थानम् | का. सि. |
| | काश्यप कल्पस्थानम् | का. क. |
| | काश्यप खिलस्थानम् | का. खि. |
| काश्यपः धूम कल्पाध्याय | | का. धूमकल्प. |
| -,,-रेवती कल्पाध्यायः | | का. रेवती कल्प. |
| हारित संहिता | | हा, हारित. |
| अश्विनी संहिता | | अश्विनी संहिता |
| शार्ङ्गधर संहिता | | शा. |
| ,, | मध्यम खण्डः | शा. म. |
| माधव निदानम् | | मा. |
| भावप्रकाशः | | भा. प्र. मिश्र. |
| योगरत्नाकरः | | यो. र. |
| रसरत्नसमुच्चयः | | र.; रस.; ररस. |
| हजारीलाल रसरत्नसमुचयः | | ह. र.; हजारी र. |
| चक्रदत्तः | | चक्र. |
| हाराणचंद्रः | | हाराणचंद्र |
| विज्ञानेश्वरः | | बिज्ञानेश्वर |
| राजनिघण्टुः | | रा. |
| राजनिघण्टुः परिशिष्टम् | | रा. परि. |
| धन्वंतरीय निघण्टुः | | ध.; ध. नि. |
| धन्वंतरीय परिशिष्टम् पृष्ठ | | ध. परि. पृ. |

| आधार ग्रंथाः | | संकेताश्च |
|---|---|---|
| अष्टांग हृदय कोशः | | अहको. |
| शालिग्राम निघण्टुः | | शा. नि. |
| मदनपाल निघण्टुः | | म. पा. |
| हलायुधः | | हलायुधः |
| वैद्यक शब्दसिन्धुः | | वैशसि. |
| शब्द कल्पद्रुमः | | शकद्रु; श. क. द्रु. |
| मेदिनी कोशः | | मेदिनी |
| अमरकोशः | | अमरः |
| तिथितत्वम् | | तिथितत्व |
| तिथिनिर्णयः | | तिथिनिर्णय |
| नावनीतकम् | | नावनीतक |
| गर्भोपनिषद् | | गर्भोपनिषद् |
| गीर्वाण लघुकोशः | | गी. ल. कोशः |
| शिवकोशः | | शिवकोश |
| न्यायतंत्र अनुप्रकरणम् | | न्याय. अनुप्र. |
| गौतम न्याससूत्रम् | | गौ. न्या. सू. |
| तर्कसंग्रहः | | तर्कसंग्रह |
| परमलघुमंजुषा | | परमलघुमंजुषा |
| आश्वलायन गृह्यसूत्रम् | | आश्व. गृह्य. सू. |
| पारस्कर गृह्यसूत्रम् | | पा. गृ. सू. |
| चूडामणिः | | चूडामणि |
| पुल्लिंगम् | | |
| स्त्रीलिंगम् | | स्त्री. |
| नपुंसकलिंगम् | | न. |
| विशेषणम् | | वि. |
| विशेषः | | ० |
| परिवर्तितम् | | परिव०; |

# आयुर्वेदीय-शब्दकोशः



–अ–

**अंश**–पु., चतुर्थो भागः ( सुसू. ४४.१७ ), भागः ( अहृसू. १९.३९, )
**अंशु**–पु., सूक्ष्मतंतुः ( चशा. १.९६ )
**अंशुक**–न., तमालपत्रम् ( रा. २.५२ )
**अंशुमत्**–पु., सोमविशेषः ( सुचि. २९.५ )
**अंशुमती**–स्त्री., शालपर्णी ( चचि. २९.८० )
**–द्वय**–न., शालपर्णी पृश्निपर्णी च ( अहृसू. ६.१६८ )
**अंस**–पु., शारीर०, पृष्ठोपरिस्कन्धसंलग्नः बाहुशिरःसंनिहितो भागः ( चवि. ८.११९ ) स्कन्धः ( चशा. ७.६ ) मर्मविशेषः ( सुशा. ६.६ ) बाहुशिरः ( सुनि. १.८२ )
**–कूट**–पु., शारीर०, अंसस्य शिखरम् ( असंशा. ७ )
**–ताप**–पु., रोगलक्षण० ( असंशा. ११ )
**–दाह**–पु., रोगलक्षण० अंसभागे दाहः(चसू.२०.१४) चत्वारिंशत् पित्तविकारेष्वेकः ( परिव० ) राजयक्ष्मलक्षणेष्वेकलक्षणभूतः ( अहृनि. ५.१७ )
**–देश**–पु., अंससमीपोपलक्षितो देशः (सुचि. १५.१२) अंसो बाहुशिरः ( सुनि. १,८२ )
**–पिण्ड**–पु., बाहुशिरः ( सुशा. ५.११ )
**–पिण्डिका**–स्त्री., अंसस्योन्नतभागः ( सुचि. १५.१८)
**–पीठ**–पु., बाहुशिरः ( सुसू. ३५.१२ )
**–फलक**–न., अस्थिविशेषः, पृष्ठोपरिभागयोः अस्थिनी, पृष्ठवंशमुभयतः द्वे ( सुशा. ५.१९ चशा. ७.६ ) अस्थिमयवैकल्यकरमर्म. (सुशा. ६.६)
**–बन्धन**–न., अंसगतश्लेष्मा ( सुनि. १.८२ )
**–बन्धनशोष**–पु., ( परिव० ) वातरोग.० अंसदेशस्थितो वायुः अंसबन्धनं श्लेष्माणं शोषयित्वा अंसशोषं करोति ( ड. सुनि. १.८२ )
**–रोग**–पु., अंसगतरोगः ( चसि. २.२२ )
**–सन्धि**–पु., शारीर० बाहुशिरसः अंसफलकस्य अंसोलूखलगतः सन्धिः, बाहुशिरःसन्धिः (सुचि. ३.३१)
**अंसाभिताप**–पु., राजयक्ष्मण एकादशलक्षणेषु लक्षणत्रये वा एकं लक्षणम् ( चचि. ८.३०-५२ )
**अंसावमर्द**–पु., रोगलक्षण०, अंसपीडनम् ( चनि. ६.६ )
**अकण्ठ्य**–वि., कण्ठाय अहितम् ( अहृसू. ६.१२८ )
**अकफ**–वि., कफहरणम् ( र. २.३ )
**अकराल**–वि., अदन्तुरः ( सुसू. ९.८ )
**अकर्मशीलता**–स्त्री., तामसगुण० कर्मणि अनुत्साहः ( सुशा. १.१८ )
**अकला**–स्त्री., गुणविरुद्धो दोषः, सूक्ष्मो भागः (चसू.१२.१)
**अकष्टशब्द**–वि., अकृच्छ्रोच्चार्यशब्दं, प्रसिद्धाभिधेयशब्दं वा ( चवि. ८.३ )
**अकाण्ड**–पु., अकालः ( असंउ. २८ पृ. २०४ )
**अकामा**–वि., मैथुनानभिलाषिणी ( सुचि. २४.११४ )
**अकारण**–वि., न विद्यते कारणं यस्य ( सुशा. १.३ )
**अकारुण्य**–न., राजसगुण०, निर्दयत्वम् ( सुशा. १.१८ )
**अकाल**–पु., अयोग्यः कालः ( चवि. ८.१२८ ) अप्राप्तः अतीतो वा कालः ( सुसू. ४६.५०८ )
**–ज**–वि., अनुचितकाले जातम् ( चसू. २७.३१७ )
**–प्रवाहण**–न., अप्राप्तावीकालप्रवाहणम् (सुशा.१०.९)
**–मरण**–न., अकालमृत्युः ( असंसू.९.१२६ )
**–मृत्यु**–पु., अप्राप्तकाले मरणम् ( चवि. ८.४३ )
**–विरोहिन्**–वि., अकालजम् ( सुसू. ४६.२९७ )
**–शयन**–न., अकाले निद्रा ( अहृसू. ७.६१ )
**अकुलक**–वि., अनस्थिकम्, बीजरहितम् (चचि. ११.७५)
**अकृत**–वि., कृतघ्नः ( सुचि. २५.३७ )
**–यूष**–पु., स्नेहलवणाद्यसंस्कृतो यूषः ( चसि. १.११ )
**–संज्ञ**–वि., कृतेऽपि मलत्यागे मलो विसृष्टव्य इति संजानानः ( चचि. ९.७ ) अतीसारपीडितस्यैतद् लक्षणम्, तेन कृतेऽपि मलत्यागे मलत्यागो न कृत इति मन्यमानः, मुहुर्मुहुर्मलत्यागे प्रवृत्त इत्यर्थः।
**–संज्ञता**–स्त्री., रोगलक्षण०, कृतवर्चोविसर्गादिकार्येऽपि तत्तद् वेगसंज्ञाया अस्तित्वम् ( अहृसू. ११.१३ ), मूत्रवृद्धेर्लक्षणमेतत्, अनेन प्रचुरमूत्रनिर्गमनं, मुहुर्मुहुर्मूत्रप्रवृत्तिर्बस्तेराध्मानमित्येतानि लक्षणानि सूचितानि।
**अकृतकत्व**–न., अकृत्रिमत्वम् ( चवि. ८.३१ )
**अकृतात्मन्**–वि., जन्मान्तरीयैरशुभैः कर्मभिरिह विपच्यमानैरसंस्कृतः ( अनाहितशुभसंस्कारः ) आत्मा यस्य सः ( चचि ३०.१८९, १९० )
**अकृत्य**–वि., चिकित्सारूपक्रियानर्हम्, असाध्यम् ( सुसू. २३.१ )
**अक्त**–वि., अभ्यक्तम् ( चचि. ३०.४८ )

**अक्रम**–पु., क्रमविरोधः, अनाचारः ( सुनि. १४.३ )
**अक्रुद्धभीरु**–वि., असति क्रोधे भीरुः ( चशा. ४.३८ (४ )
**अक्रोधव्रत**–न., विना क्रोधं चर्यते यत् तत् ,(चचि.३.१५)
**अक्लिन्न**–वि., शुष्कम् ( सुसू. ४६.४३९ )
**–वर्त्मन्**–न., नेत्रवर्त्मगतरोग०, अस्मिन् रोगे वर्त्मानि असकृत् प्रक्षालितान्यपि पुनः पुनः संबद्धानि भवन्ति तथा च अपरिपक्वानि भवन्ति (सुउ.३.२२)
**अक्ष**–पु., वनस्पति०, बिभीतकः ( रा. १.२१२ )
देवसर्षपकः ( रा परि.९.४२ )
शकटवहनोपयोगी चक्राधारः काष्ठविशेषः, ( चवि. ३.३८ )
**–चक्रनाभिः** ( असंशा. ५.३८ )
पु., न., मान०, कर्षः, द्वौ द्रंक्षणौ कर्षम्, 'विद्याद् द्वौ द्रंक्षणौ कर्षं सुवर्णं चाक्षमेव च ।' ( चक. १२.९० )
न., लवण०, सौवर्चलम् ( ध.२.३० )
न., इन्द्रियम् ( अहसू. ११.२ )
न., शारीर०, कोष्ठकास्थि, अक्षकम् ( सुसू. ३५.७ )
**–ग्लानि**–स्त्री., इन्द्रियशैथिल्यम् ( अहसू. ११.१८
**–तण्डुला**–स्त्री., बला ( रा. ४.४३२ )
**–तर्पण**–न., इन्द्रियतृप्तिकरम् ( अहसू. १२.१७ ) )
**–तैल**–न., स्नेहविशेषः, बिभीतकमज्जातैलम्, गुणाः– शीतं गुरु केश्यं कफकृत् वातपित्तघ्नं च (ध. ६.१४१)
**–त्वच्**–स्त्री., बिभीतकस्य त्वक् ( असंसू. ८.११२ )
**–नाशन**–वि., इन्द्रियविघाति ( अहसू. १.३३ )
**–पीड**–पु., यवतिक्ता ( सुचि. ९.४८ )
**–( पीडा )**–स्त्री., वनस्पति०, यवतिक्ता (ध. १.२५६)
**–प्रसादन**–वि., इन्द्रियाणां प्रसन्नत्वकृत्, इन्द्रियवैमल्यकरः, ( हे., अहसू. १०.२ )
**–बीज**–न., बिभीतकमज्जा ( सुउ. ५८.४५ )
**–युग**–न., बिभीतको रुद्राक्षश्च ( र. १७.५२–५३ )
**–शल्य**–न., चक्षुरादिगतशल्यम् ( सुसू. २७.५ )
**–सम**–वि., कर्षप्रमाणम् ( सुचि. ४.२७ )
**–सस्य**–पु., कपित्थः ( ध. २.१०२ )
**अक्षक**–पु., शारीर० जत्रुसन्धेः अर्वाक् कीलकवदस्थिविशेषः द्वौ अक्षकौ ( चशा. ७.६ )
**–भग्न**–न., ( परिव. ) रोग०, अक्षकास्थ्नो भङ्गः ( सुचि. ३.५० )
**–सन्धि**–पु., शारीर०, ग्रीवाग्रकसन्धिः, ग्रीवाधःसन्धिः ( सुनि. ११.१० ), अंससन्धेः उपरिष्टात् सन्धिः ( सुचि. ३.३६ )

**अक्षणित्व**–न., पृच्छार्थमनुयुक्तस्य सम्प्रति वक्तुं क्षणो नास्तीति भाषणम् ( चसू. ३०.८२ )
**अक्षत**–पु., यवाः; अखण्डिततण्डुला इत्यन्ये ( अहशा. ६.३० )
धान्यमेवमखण्डितमक्षतशब्दवाच्यमित्यपरे, वि., क्षतरहितम् ( सुचि. ३.४७ )
**–पात्र**–न., तण्डुलभृतशरावः ( सुसू. २९.२९ )
**–रोग**–पु., नखरोग०, पर्यायाः–चिप्पं, उपनखम्, अंगुलिवेष्टकम् ( सुनि. १३.२२ )
**–शिरस्**–स्त्री., ग्रहमातृविशेषः (असंउ. ४ [पृ.४२])
**अक्षय**–पु., क्षेत्रज्ञः (सुशा.३.४)
**अक्षर**–न., न क्षरतीत्यक्षरम्, आत्मा; अकारादिवर्णः, ( असंउ. १ ), ( च. शा. ४.८ )
**अक्षि**–न., शारीर० चक्षु ( चशा. ७.७ )
चक्षुरिन्द्रियस्याधिष्ठानम् ( चसू. ८.१० )
**–कनीनिका**–स्त्री., नासायाः समीपवर्ती अक्षिसन्धिः, द्वे अक्षिकनीनिके ( चशा. ७.११ )
**–कूट**–न., अक्षिगोलकम् ( च. शा. ७.११ )
अक्षिकोटरस्य अधः ऊर्ध्वं च स्थितौ उन्नतौ भागौ; नेत्रशिबिरम्., नेत्रगुहा ( सुउ. २५.७ )
**–कोशसन्धिस्रोतस्**–न., ( परिव० ) शारीर० कनीनिकासन्धेः नासान्तर्गामी मार्गः ( अहसु. २३.७ )
**–कोशालेपन**–न., अक्षिकोशस्योपरि लेपः ( असंसू. ३२.३. )
**–कोष**–पु., शारीर०, अक्ष्णः बहिःपटलम्, वर्त्मपटलम्; बहिराच्छादनम् ( सुशा. ५.२० )
**–गौरव**–न., चक्षुषोः गुरुत्वम्, ( अहसू. ४.१२ )
**–तर्पण**–न., अक्ष्णोः तृप्तिकरं बलकरं च ( चसू. १३.२५ )
**–निमेष**–पु., कालविशेषः; लघ्वक्षरोच्चारणमात्रः ( सुसू. ६.५ )
**–पाक**–पु., नेत्ररोग०, अक्षिपाकात्ययः; चत्वारिंशत्पित्तविकारेष्वेकः ( चसू. २०.१४ )
**–पाकात्यय**–पु., नेत्ररोग०, अस्मिन् रोगे सर्वं कृष्णमण्डलं श्वेतनिभेन दोषेण संच्छादितं तथा तीव्ररुक् भवति ( सुउ. ५.१० ); तथा च शोफः, संरम्भः, कलुषाश्रुता, असितं मण्डलं कफोपदिग्धं, सितं मण्डलं प्रक्लेदरागवच्च भवति । दाहः, दर्शनसंरोधः,अनवस्थिताः चलाचलस्वरूपाः वेदनाश्च भवन्ति; अयमसाध्यः ( असंउ. १८, पृ. १३२ )

**–पीडक**–पु., वनस्पति० शङ्खिनी ( चक. ११.३ ) श्वेतपीतशिम्बीभेदः ( चचि. २३.२१५ )

**–पुट**–पु., शारीर० अक्षिवर्त्म ( सुसू. ५.१३ )

**–भेद**–पु., अक्ष्णोः भेदः, अशीतिवातविकारेष्वेकः ( चसू. २०.११ )

**–भेषज**–पु., वनस्पति०, शाबररोध्रः, लोध्रविशेषः ( रा. ६. २४० )

**–मध्य**–न., दृष्ट्यन्तरम्, चतुरङ्गुलं प्रमाणतः ( चवि. ८.११७ )

**–राग**–पु., रोगलक्षण०, नेत्ररक्तिमा, शोणिताश्रयः ( चसू. २४.११ )

**–राजि**–स्त्री., रोगलक्षण० चक्षुषि रेखाकाराः सिराः ( अहसू. २०.४ )

**–राजी**–स्त्री., नेत्रराजी ( चसि. २.२२ ) डोळ्याचा रोग, ज्यात लाल शिरा दिसतात.

**–रोग**–पु., नेत्रामयः (चचि. २६.२४६)

**–लघुता**–स्त्री., नेत्रलाघवम् ( अहसू. २०.२५ )

**–वर्त्मन्**–न., शारीर० नेत्रस्य बाह्याच्छादनम्, ऊर्ध्वाधरभेदेन द्वे ( चशा. ७.११ )

**–विभ्रम**–पु., रोगलक्षण०, नेत्रविभ्रमः (चसि. ६.७२)

**–वैराग्य**–न., रोगलक्षण०, रूपग्रहणेऽलसत्वम्, नेत्ररागापगमः ( सुक. १.३० )

**–व्युदास**–पु., अशीतिवातविकारेषु एकः, अक्ष्णः अक्ष्णोर्वा विशेषेण ऊर्ध्वं बहिर्वा आगमनम् ( चसू. २०.११ )

**–शल्य**–न., नेत्रगतं शल्यम् ( असंसू. ३७.२४ )

**–शूल**–न., रोग० अशीतिवातविकारेषु एकः ( चसू. २०.११ )

**–सङ्कोच**–पु., रोगलक्षण०, ( असंसू. २९.६ )

**–सेचन**–न., उपक्रम०, ( अहसू. २३.५ )

**–स्तब्धता**–स्त्री., रोगलक्षण० ( अहसू. २०.२४ )

**–स्पंदन**–न., रोगलक्षण०, नेत्रस्पन्दः ( असंसू. २९.५ )

**अक्षी**–स्त्री., भैषज्यद्रव्यविशेषः, रक्तस्फटिका (र.१०.११)

**अक्षीर**–पु., महानिम्बः ( ध. १.३१ )

**अक्षीरा**–वि., स्तन्यरहिता ( कासू. लेहाध्यायः पृ. ३ )

**अक्षीव**–पु., वनस्पति०, क्षीवः, क्षीवो नीपः (चचि. ३.२६७) शोभाञ्जनः ( चसू. ४.११–१५) महानिम्बः ( सुक. ८.१२० ) रक्तशिग्रुः ( र.१०.९१ )

**अक्षुद्रकर्मिणी**–वि., क्षुद्रं कर्म या न करोति ( चशा. ८.५२ )

**अक्षोट**–पु., वनस्पति० गुणाः—स्वादुः, उष्णः, रूक्षः, स्निग्धो वा, गुरुः, मधुरपाकः, पुष्टिकरः, बृंहणः, बल्यः, पित्तश्लेष्मघ्नः, वातघ्नश्च ( रा. ११.८२ ) अक्षोटफलम् औत्तरापथिकं, गुरूष्णस्निग्धमधुरं, बलप्रदं, वातघ्नं, बृंहणं, वृष्यं, कफपित्तवर्धनं च, ( चसू. २७.१५७ )

**अक्षोड**–पु., वनस्पति० अक्षोटवृक्षः, मदनफलाकारफलः, मध्ये किञ्चिदुन्नतरेखान्वितः, पर्वतपीलुः, मधुरफलः ( सुसू. ४६.१८७ )

**–तैल**–न., स्नेह० तत् शीतं, गुरु, केश्यं, कफकृत्, वातपित्तघ्नं च ( ध. ६.१४१ )

**अक्ष्यञ्जन**–न., अक्षिभेषज० ( चसू. ५.१४ )

**अक्ष्युपरोध**–पु., रोगलक्षण० दृष्टेः प्रतिबन्धः ( चचि. २३.६९ )

**अगण्य**–वि., अगणनीयम् ( चशा. ४.२४ ) गर्भिण्या अष्टमो मासो न गणनीयः, यदि हि गर्भिणी गण्यमानमष्टमं मासं गर्भजन्मव्यापत्तिकरं शृणुयात् ततो भीता स्यात् तद्भयाच्च गर्भस्य वातक्षोभाद् व्यापद् भवेत्.

**अगद**–पु., न., औषधम् ( चचि. ३.३०९–३१० ) अगदत्वं च युक्तस्य गदानामपुनर्भवात् ( काखि. ३ ) विषहरमौषधम् ( चचि. ९.७१ ) वनस्पति०, कुष्ठम् ( ध.३.४९ ) वि; अरोगम् ( चचि. १[१].४० )

**–क्रम**–पु; अगदस्य उपक्रमः ( सुक. ५.१३ )

**–तन्त्र**–न; विषतन्त्रम्, सर्पकीटलूता–मूषिकादिदुष्टविषव्यञ्जनार्थं विविधविषसंयोगोपशमार्थं शास्त्रम् ( सुसू. १.७ ) आयुर्वेदस्य अष्टसु अङ्गेषु एकम्

**–प्रलिप्त**–वि; विषहरभेषजलेपयुक्तम् ( असंसू.८.९ )

**–लेप**–पु., महागदादिलेपः, रक्तसेचनावशिष्टविषप्रशमाय महागदादिभिः लेपः कर्तव्यः ( सुक. ५.१६ )

**–वेद**–पु., अगदार्थः आरोग्यार्थः वेदः नाम आयुर्वेदः ( चचि. १२.४ )

**अगदङ्कर**–वि., रोगनाशने स्वास्थ्यकरः (सुशा. १०.३९)

**अगम्या**–वि., स्वसृदुहितृप्रभृतिः मैथुनायोग्या ( स्त्री ) ( सुचि. २४.११४–११६ )

**अगरु**–न., वनस्पति० सुगन्धिद्रव्य० ( चसू. २५.४०., ध. ३.२५ ) तद्गुणाः—कटु, तिक्तं, उष्णं, स्निग्धं, वातकफघ्नं, श्रुतिनेत्रकुष्ठादिरोगघ्नं च ( असंसू. १२.७७ )

**-सार**-पु., अगरुनिर्यासः ( रा. १२.३९ )
**-सारतैल**-न., अगरुनिर्याससिद्धतैलम् ( असंसू. ६.१०६ )
**अगर्भा**-वि.. गर्भरहिता ( चनि. ३.१४ )
**अगस्ति**-पु., महर्षिविशेषः, हिमालये इन्द्रादेशात् रसायनप्रयोगं कृतवान् ( चचि. १ [४].३ )
वनस्पति०, अगस्त्यः ( रा. परि.१०.१३ )
**अगस्तिक**-पु., अगस्त्यः ( र. १२.१२१ ).
**अगस्त्य**-पु., वनस्पति० ( रा. परि. १०.१३ )
पर्यायाः-कुम्भयोनिः, मुनिद्रुमः, वक्रपुष्पः, सित-पीत-नील-लोहित-कुसुमभेदात् चतुर्विधः.
गुणाः-मधुरः, शिशिरः, त्रिदोषघ्नः, बलासकासभूत-वैवर्ण्यश्रमापहः ( रा. परि. १०.१४ )
विशेषगुणाः-नक्तान्ध्यनाशनः ( सुसू. ४६.२८२ )
चातुर्थिकनाशनः ( असंसू. १२.८९ )
**-ऋषिविशेषः**-रोगापहरणचिन्तनार्थं हिमवतः पार्श्वे समेतेषु महर्षिषु एकः ( चसू. १.९ )
**-तारकाविशेषः**, अगस्त्योदये विषं मंदवीर्यं जलं च निर्विषं भवति ( चचि. २३.८ )
**-रसायन**-न., रसायनः ( असंचि. ५० पृ०, २९ )
**-हरीतकी**-स्त्री., योग० ( चचि. १८.५७-६१ )
**अगस्त्यावलेह**-पु., योग० कासराजयक्ष्माद्यनेकव्याधि-हन्ता ( ड. सुउ. ५२.४१-४५ )
**अगारधूम**-पु., न., गृहधूमः ( चचि.७.२५ )
**अगुण**-वि., गुणरहितः निर्गुणः ( सुशा. १.९ )
**अगुरु**-न; सुगन्धिद्रव्य०, धूपविशेषः अगुरु श्रेष्ठं लेपन-द्रव्यम् "रास्नागुरुणी शीताऽपनयनप्रलेपनानाम्" ( चसू.२५.४० )
कृष्णागुरु, ( सुसू. ५.१८ )
वनस्पति०, कालेयकम् (रा.१२.४०)
**-ज**-वि; अगुरुजन्यधूपादि ( चचि. ३.२६९ )
**-तैल**-न; सारतैलविशेषः, तद्गुणाः—तिक्तं कटु कषायं दुष्टव्रणशोधनं कृमिकुष्ठहरं च ( सुसू. ४५.१२३ )
**अगुर्वादितैल**-न; सिद्धयोग० शीतज्वरप्रशमार्थम् अगुर्वादिशतद्रव्यजन्यम् उष्णवीर्यं तैलम् (चचि.३.२६७)
**अगूढगन्ध**-न., निर्यास०, हिङ्गु ( ध. २.३६ )
**अगोचरभूत**-वि., गोचरो देशः, यस्य यो देशस्तत्र न पुष्टं, विपरीतगुणे देशे पुष्टम् ( चसू. २७.३११ )
**अग्नि**-पु., शारीरभाव० जाठराग्निः ( चचि. १५.३ )
दोषधातुमलसन्निपातजनितोऽन्तरूष्मा, यथा-निर्दिष्टाधिष्ठानकर्मा ( असंशा. ६.५६. ) स चतुर्विधः, समः, विषमः, तीक्ष्णः, मन्दश्चेति ( सुसू. ३५.२४. अहृसू. १.८ ) अग्निपित्तयोरभेदं कृत्वा पाचक-रञ्जकालोचकभ्राजकसाधकभेदात्पञ्चविधोऽग्निः ।
( सुसू. २१.१० ) अग्नेः स्थानानि पाचकोऽग्निराम-पक्वाशयमध्यगः, रञ्जकः आमाशयाश्रयः, आलोचकः दृक्स्थः, भ्राजकः त्वक्स्थः, साधकः हृदिस्थः, रसादीनां सप्तधातूनामाश्रयभूताः सप्त अग्नयः ( चचि. १५.१५ )
प्राणविशेषः ( सुशा.४.३ ) देवता० (चचि.३.८२ )
वाचोऽधिदैवतम् ( सुशा.१.७ )
सत्त्वरजोबहुलं महाभूतं तेजः ( सुशा. १.२० )
भूत०, लौकिकोऽग्निः ( चसू. २५.४० )
अनुशस्त्र० ( सुसू. ८.१५ )
खनिज०, सुवर्णम् ( रा. १३.१ )
वनस्पति०, चित्रकः ( सुउ. ४४.३३. )
रक्तचित्रकः, (रा. ६.१२७) भल्लातकः (र. १३.६३)
**-कर्णिका**-स्त्री., वनस्पति०, अग्निमन्थः (र.,११.५४)
**-कर्मन्**-न., पचनक्रिया ( सुसू.२१.१० )
दाहचिकित्सा (सुसू.१२.१०)
दहनकर्म ( सुचि. १.८ )
परिणामभेदात् द्विविधं; त्वग्दग्धं, मांसदग्धं च ( सुसू. १२.७ )
तत्र त्वग्दग्धे शब्दप्रादुर्भावः; दुर्गन्धता, त्वक्संकोचश्च; मांसदग्धे कपोतवर्णता अल्पश्वयथुवेदना शुष्कसंकुचितव्रणता च; सिरास्नायुसंध्यस्थिष्वपि न प्रतिषिद्धोऽग्निः ( सुसू. १२.७ )
**-कर्मविधि**-वि., अध्याय०, ( सुसू. १२.१ )
अग्निना कृत्वा यत्कर्म, अग्नेः सम्बन्धि वा यत्कर्म तदग्निकर्म, तस्य विधेर्विधानम्, तद् विद्यते यस्मिन् सः ।
**-कीट**-पु., प्राणनाशनः कीटविशेषः, तेन दष्टस्य वेगज्ञानं सर्पदंशवद् भवति, सान्निपातिकाः रोगाश्च भवन्ति; दंशस्तु रक्तपीतसितारुणः क्षाराग्निदग्धवर्णश्च भवति ( सुक. ८.१७; असंउ. ४३ पृ. ३५२ )
**-कुमार**-पु., ताम्रगन्धकपारदत्रिफलात्रिकटुयुक्तः पारदयोग०कृतरेचनस्य गुल्मं यकृत्पाण्डुविबन्धशूल-मग्निमान्द्यं ज्वरं जलोदरं च हन्ति ( र. १८.७५. )
अन्यो योगविशेषः ( र. १८. १६६-१७३. )
**-क्कथन**-न., अग्निना शृतम् ( सुसू. ४५.१२. )
**-गन्धक**-पु., वनस्पति० चम्पकः ( रा. १०.२३९. )
**-गर्भ**-पु., जाङ्गमद्रव्य० अग्निजारः ( ध. ६.२१. )

–(गर्भा)–स्त्री., वनस्पति० तेजोवती (रा. ३.३९२.)

गर्भाशय–पु., जाङ्गमद्रव्य०, अग्निजारः (र. १६.१६७.)

–गृह–न., अग्निना युक्तं गृहम् (चसू. २०.१६.)

–ज,–जार–पु., प्राणिजद्रव्य०, 'अंबर' इति लोके, समुद्रेण बहिस्त्यक्तः सूर्यतापेन संशुष्कः, अग्निनक्रस्य जरायुः, रक्तवर्णोऽग्निजारः सर्वोत्तम इति वृद्धाः (र. ३.१५०)

–जिह्वा–स्त्री., वनस्पति०, कलिकारी (असंशा. १.६१)

–ज्वाला–स्त्री;. वनस्पति०, धातकी (रा. ६.१५१) महाराष्ट्री, मराठी (रा. परि. ४.१३)

–तुण्ड–पु., योगविशेषः (र. २०.२३३)

–तुण्डीरस–पु., योग०, शुद्धसूतं विषं गन्धमजमोदां त्रिफलां सर्जिक्षारं यवक्षारं चित्रकसैन्धवजीरकं सौवर्चलं सामुद्रं त्र्यूषणं विडङ्गानि च सर्वाणि जम्बीराम्लेन मर्दयेत् । गुटिकां च कुर्यात्, अयमग्निमान्द्यप्रशमनः (वै. श. सि.)

–दग्ध–न., अग्निना दाहः, तच्चतुर्विधम् प्लुष्टं, दुर्दग्धं, सम्यग्दग्धमतिदग्धं च (सुसू. १२.१६) अग्निदग्धजातव्रणोऽबन्ध्यः (सुसू. १८.३२–३३)

–दमनी–स्त्री., वनस्पति० (रा. परि. ४.३.) गुणाः–रूक्षा, कटुः, उष्णा, रुचिकृत्, दीपनी, हृद्या, वातकफघ्नी गुल्मप्लीहापहा च।

–दाह–पु., उपक्रम०, अग्निकृतो दाहः (असंउ. ३३.)

–दीपन–न., (परिव०,) औषधकर्मविशेषः (चसू. २७.२५१.)

–दीप्ता–स्त्री., वनस्पति०, तेजोवती (सुचि. ३३.२७.)

–दीप्ति–स्त्री., अग्नेर्दीपनम् (सुचि. ३३.२७.)

–दोष–पु., अग्निदुष्टिः, अग्निविकृतिः (असंशा. ६.)

–धमन–पु., वनस्पति०, निम्बः (रा.९.४४.) कडुनिंब.

–नक्र–पु., जलचर०, अग्न्याख्यो नक्रः (र. ३.१५०.)

–नामन्–पु., वायव्यकीटविशेषः तद्गुणाः–वातकोपनः वातजान् रोगान् करोति (सुक. ८.५) (असंउ. ४३. पृ. ३५१)

–नाश–पु., रोग० रसप्रदोषजरोग० (चसू. २८.१०)

–निर्यास–पु., प्राणिजद्रव्य०, अग्निजारः (ध. ६.२१)

–परीक्षा–स्त्री., अग्नौ परीक्षणम् (अहृसू. ७.१३)

–पर्णी–स्त्री., वनस्पति०, अग्निमन्थः (र. १४.७१)

–प्रतपन–न., उपक्रम०, स्वेदनम् (सुसू. १२.२०)

–प्रताप–पु., उपक्रम०, अग्निना प्रतापनम्, वातामयेषु वातकफामयेषु च प्रयुज्यते (सुउ. ५६.१२.)

–प्रभा–स्त्री., कीट०, शतपदीभेदः; एतस्या दंशोऽसाध्यः (सुक. ८.३०)

–फला–स्त्री., वनस्पति०, तेजोवती (रा. ३.३९२)

–बन्ध–पु., पारदबन्ध० (र. ११.८९)

–बल–न., अग्नेर्जरणशक्तिः (चसू. १३.७०)

–भासा–स्त्री., वनस्पति०, ज्योतिष्मती (ध. १.२६७)

–भेद–पु., रोग०, अग्निवैषम्यम्, रेवतीरोषसम्भूतरोगेष्वेकः (का. बालग्रह चि.)

–मथन–पु., वनस्पति०, अग्निमन्थः (ध. १.११०)

–मन्थ–पु., तेजोवृक्षः, पूर्वदेशे 'आगथ' इति प्रसिद्धः (सुसू. ३८.१०.,) 'अङ्गेशूर' इति लोके (ड. सुसू. ३८.१२.) 'अग्निवधूः' इति पूर्वदेशे (ड. सुसू. ३९.७) अस्य क्षुद्राग्निमन्थ इत्यपरो भेदः, उभावपि तुल्यगुणौ, गुणाः–कटुस्तिक्त उष्णो वात–कफघ्नः पाण्डुशोफाग्निमान्द्यामविड्विबन्धाध्मानार्शोघ्नश्च (ध. १.१११)

–मन्थन–पु., वनस्पति०, अग्निमन्थः (ध.१.१११)

–मन्थरस–पु., अग्निमन्थस्य स्वरसः (अहृसू. १४.२३)

–मन्थवटी–स्त्री., रसकल्प०, अग्निमान्द्यघ्नी (र. १६.१६९)

–मन्दता–स्त्री.. रोगलक्षण०, अग्निमान्द्यम् (अहृसू. ७.६१)

–मान्द्य–न., रोग०, जाठराग्नेर्मान्द्यम्, मन्दतीक्ष्णविषमभेदेन त्रिविधम्, (मा०–मधुकोश) वातज–अग्निमान्द्यलक्षणानि-अशिता मात्रा कदाचित् सम्यक् पच्यते कदाचिन्न विपच्यते, वातजान् विकारान् करोति; पित्तजअग्निमान्द्यलक्षणानि–मात्रातिमात्राप्यशिता सुखं विपच्यते, पित्तनिमित्तजान् रोगान् करोति; कफजअग्निमान्द्यलक्षणानि–स्वल्पापि मात्रा अशिता नैव पच्यते, कफसम्भवान् विकारान् करोति; वातेन विषमः, पित्तेन तीक्ष्णः, कफेन मन्दः अग्निर्भवति (अहृशा. ३.७४)

–मुख–पु., वनस्पति०, भल्लातकः (ध. ३.१४३) रसकल्प० (र. १८.१०६; र. १८.१३९)

–मुखी–स्त्री., वनस्पति०, कलिकारी (चसू. ४.९(४) आग्नेयलूताविशेषः, इयं स्वेदजा पित्तविकारकर्त्री च भवति । दंशलक्षणानि–अग्निदग्धवत् अतिरूक्ष स्फोटाः सम्भवन्ति; अग्निज्वालसमानेन विषोष्मणा

प्रस्वेदनम्, तृड्दाहकम्पमूर्च्छाः पित्तास्रमतिसारश्च (असंउ. ४४. पृ. ३६२) अग्निमुख्या (असंउ. ४५. पृ. ३७०)

–**यान**–न., अग्निशकटिका (असंसू. ४.४७)

–**युग्म**–न., चित्रकं, भल्लातकश्च (र. १५.६९)

–**योजन**–न., अग्निकर्म (अहसू. २५.२.)

–**रस**–पु., रसकल्प० (र.१३.४५.)

–**रोहिणी**–स्त्री., रोग०, क्षुद्ररोगः, तन्त्रान्तरे 'वह्निरोहिणीति–' तल्लक्षणम् पित्तोल्बणैः मलैः कक्षाभागेषु अन्तर्दाहज्वरकराः दीप्तपावकसन्निभाः मांसदारणाः स्फोटाः जायन्ते, ते वाताधिकैः दोषैः पंचाहात्, पित्ताधिकैः सप्ताहात्, कफाधिकैश्च पक्षात् मानवं घ्नन्ति (सुनि. १३.२०; असंउ. पृ. २७१)

–**वक्त्रा**–स्त्री., लूता० दंशलक्षणानि–दंशदेशे अत्यर्थो दाहः, स्रावः, ज्वरः, चोषकण्डूरोमहर्षाः दंशस्तु दाहविस्फोटयुतश्च (सुक. ८.११८)

–**वध**–पु.,रोगलक्षण० अग्निमान्द्यम् (अहसू. १९.६६)

–**वल्लभ**–पु., रालः, सर्जकः (ध. ३.१२१.)

–**वि(वी)सर्प**–पु., रोग० वातपित्तजः विसर्पः, सम्प्राप्तिः–स्वहेतुभिः अतिमात्रं प्रकुपितं वातपित्तं परस्परं लब्धबलं सत् गात्रं दहत् विसर्पति। तल्लक्षणम्–तदुपतापादातुरः सर्वशरीरमङ्गारैरिव आकीर्यमाणं मन्यते, छर्दतीसारमूर्च्छादाहमोहज्वरतमकारोचकास्थिसन्धिभेदतृष्णाविपाकाङ्गभेदादिभिश्चाभिभूयते, यं यमवकाशं विसर्पोऽनुसर्पति सोऽवकाशः शान्ताङ्गारप्रकाशोऽतिरक्तो वा भवति अग्निदग्धप्रकारैश्च स्फोटैरुपचीयते, स शीघ्रगत्वादाश्वेव मर्मानुसारी भवति, मर्मणि चोपतप्ते पवनोऽतिबलोऽङ्गान्यतिमात्रं भिनत्ति, संज्ञां प्रमोहयति, हिक्काश्वासौ जनयति, निद्रां नाशयति। स नष्टनिद्रः प्रमूढसंज्ञो, व्यथितचेता न क्वचन सुखमुपलभते, अरतिपरीतः स्थानादासनाच्छय्यां क्रान्तुमिच्छति, क्लिष्टभूयिष्ठश्चाशु निद्रां भजति, दुर्बलो दुःखप्रबोधश्च भवति, तमेवंविधमग्निविसर्पपरीतमचिकित्स्यं विद्यात्। (चचि. २१.३६; असंनि. १३.)

–**वीर्य**–न., सुवर्णम् (रा. १३.१)

–**वेश**–पु., वैद्य०, पुनर्वसोः आत्रेयस्य शिष्यः अग्निवेशतन्त्रस्य कर्ता. (चसू. १.३९, अहसू. १.४)

–**वैषम्य**–न., व्याधिलक्षण०, विषममग्नित्वम् (चनि. ३.१५)

–**शिख**–न., सुवर्णम् (रा. १३.३)

–**शेखर**–न., वनस्पति०, कुङ्कुमम् (रा. १२.२१)

–**षङ्ग**–पु., रोगलक्षण०, अग्निसङ्गः (सुचि. ४.३२)

–**ष्टोम**–पु., वनस्पति०, सोमप्रकारः (सुचि. २९.७)

–**सङ्ग**–पु., रोगलक्षण०, अग्निमान्द्यम्, अग्निः यस्मात् सज्यते लीयते सः तेन वातश्लैष्मिकग्रहणीविसूचिकालसकविलम्बिकादिविकारा गृह्यन्ते. (सुसू. ११.८)

–**सदन**–न., रोग०, अग्निमान्द्यम् (अहसू. ११.७)

–**सन्ताप**–पु., अग्निस्वेदः (सुचि. ४.२६)

–**समता**–स्त्री., अग्निसाम्यम् (सुनि. १.१०)

–**सम्भव**–पु., अग्निजारः, कुसुम्भम्, कौसुम्भम् (ध. ६.२१; रा. ४. १८९)

–**सम्भ्रम**–पु., उत्पातप्रदीप्तिः (सुचि. २४.९१)

–**सह**–वि., अग्निसहनसमर्थः (र. ३०.११.)

–**सहन**–पु., ज्वलनस्वभावनिर्मुक्तः (र. २.१५६)

–**साद**–पु., रोगलक्षण०, अग्निमान्द्यम् (सुनि.१.१७)

–**सादन**–न., अग्निसादः (सुउ. ४०.११६)

–**सार**–न., रसाञ्जनम् (रा. १३.२२२)

–**स्कन्द**–पु., देवता० (असंउ. १ पृ. ९)

–**स्कन्ध**–पु., महान् अग्निराशिः (अहसू.२.३४)

–**स्वेद**–पु., स्वेद०, तापोपनाहद्रवोष्मभेदेन चतुर्विधः (असंसू. २६.३) द्र० 'स्वेद'

**अग्न्यधिष्ठान**–न., शारीर०, ग्रहणी, जाठराग्नि–स्थानम् (चचि. १५.५६)

**अग्निक**–पु., वनस्पति०, चित्रकः (सुउ. २३.१०)
अजमोद (सुउ. ९.१९) मोरटः (सुक. २.४४)
कलिकारिका (सुसू. ३७. १०)
भल्लातकः (ध. ३.१४३)

–**बभ्रु**–पु., सर्प०, मण्डली (सुक. ४.३४ (२)

**अग्नीषोमसंयोग**–पु., आर्तवस्य शुक्रस्य च मिथः संयोगः (सुशा. ३.४)

**अग्र**–न., परिमाण०, पलम् (चवि. ६.४)

–**ग्रहण**–पु., प्रथमतः ग्रहणम् (अहसू. ९.१५)

–**च्छद**–पु., तरुणपत्रम् (चचि. २९.१४१)

–**ज**–वि., पूर्वजम् (चचि.७.१२)

–**पत्रक**–पु., वनस्पति०, नीली, नीलिनी (ध. १.२३३)

–**प्ररोह**–पु., अग्रिमभागः (सुशा. ५.११)

–**रूप**–न., पूर्वरूपम् (असंसू. २.२८)

–**वक्त्र**–न., यन्त्र०, सर्पफणसदृशं यन्त्रम् (असंचि. १३ पृ. ८१)

–वर्ति–स्त्री., सूत्रमयी घनवर्तितावर्तिः ( सुचि. ८.३० )

–वेदना–स्त्री., पूर्वरूपम् ( कासू. २५.१४ )

अग्रह–पु., अप्रशस्तस्थानस्थितक्रूरग्रहानधिष्ठितः कालः ( चइं. १२.६८ )

अग्राहिन्–वि., विकृतमुखम्, यन्त्रदोष० ( सुसू. ७.१९ )

अग्रोपहरणीय–वि., अध्याय०, कर्मणामग्रे उपहरणं येषां यन्त्रशस्त्रादीनां तानि अग्रोपहरणानि तान्यधिकृत्य कृतोऽध्यायः ( सुसू. ५.१ )

अग्र्य–वि., श्रेष्ठम् ( सुचि. ९.१८ )

पु., एककार्यकराणामौषधानां योऽत्यर्थं कार्यकरः सोऽग्र्यः ( चसू. २५.४१ )

–चन्दन–न., वृक्ष०, धवलचन्दनम् ( चवि. ६.१७ )

–मति–वि., कुशाग्रीयमतिः ( सुचि. १०.३ )

–लवण–न., सैन्धवम् ( चचि. २३.९६ ) सैंधव.

–संग्रह–वि., अध्याय० ( असंसू. १३.१ )

अग्र्याणां नाम हिताहिततमानामाहारविकाराणां संग्रहः ( चसू. २५.४० ) ( असंसू. १३ )

स यथा–अन्नं वृत्तिकराणां श्रेष्ठम्, उदकमाश्वासकराणां, (सुरा श्रमहराणां), क्षीरं जीवनीयानां, मांसं बृंहणीयानां, रसस्तर्पणीयानां, लवणमन्नद्रव्यरुचिकराणामम्लं हृद्यानां, कुक्कुटो बल्यानां, नक्ररेतो वृष्याणां, मधु श्लेष्मपित्तप्रशमनानां, सर्पिर्वातपित्तप्रशमनानां, तैलं वातश्लेष्मप्रशमनानां, वमनं श्लेष्महराणां, विरेचनं पित्तहराणां, बस्तिर्वातहराणां, स्वेदो मार्दवकराणां, व्यायामः स्थैर्यकराणां, क्षारः पुंस्त्वोपघातिनां,(तिन्दुकमन्नद्रव्यरुचिकराणां),आमं कपित्थमकण्ठ्यानामाविकं सर्पिरहृद्यानामजाक्षीरं शोषघ्नस्तन्यसात्म्यरक्तसांग्राहिकरक्तपित्त–प्रशमनानामविक्षीरं श्लेष्मपित्तजननानां, महिषीक्षीरं स्वप्नजननानां, मन्दकं दध्यभिष्यन्दकराणां, गवेधुकान्नं कर्शनीयानामुद्दालकान्नं विरूक्षणीयानामिक्षुर्मूत्रजननानां, यवाः पुरीषजननानां, जाम्बवं वातजननानां, शष्कुल्यः श्लेष्मपित्तजननानां, कुलत्था अम्लपित्तजननानां, माषाः श्लेष्मपित्तजननानां, मदनफलं वमनास्थापनानुवासनोपयोगिनां, त्रिवृत्सुखविरेचनानां, चतुरङ्गुलो मृदुविरेचनानां,स्नुक्पयस्तीक्ष्णविरेचनानां, प्रत्यक्पुष्पा शिरोविरेचनानां, विडङ्गं क्रिमिघ्नानां, शिरीषो विषघ्नानां, खदिरः कुष्ठघ्नानां, रास्ना वातहराणामामलकं वयःस्थापनानां, हरीतकी पथ्यानामेरण्डमूलं वृष्यवातहराणां, पिप्पलीमूलं दीपनीयपाचनीयानाहप्रशमनानां, चित्रकमूलं दीपनीयपाचनीयगुदशोथार्शःशूलहराणां, पुष्करमूलं हिक्काश्वासकासपार्श्वशूलहराणां, मुस्तं सांग्राहिकदीपनीयपाचनीयानामुदीच्यं निर्वापणदीपनीयपाचनीयच्छर्द्यतीसारहराणां, कट्वङ्गं सांग्राहिकपाचनीयदीपनीयानामनन्ता सांग्राहिकरक्त–पित्तप्रशमनानाममृता सांग्राहिकवातहरदीपनीयश्लेष्मशोणितविबन्धप्रशमनानां, बिल्वं सांग्राहिकदीपनीयवातकफप्रशमनानामतिविषा दीपनीयपाचनीयसांग्राहिकसर्वदोषहराणामुत्पलकुमुदपद्मकिञ्जल्कः सांग्राहिकरक्तपित्तप्रशमनानां, दुरालभा पित्तश्लेष्मप्रशमनानां, गन्धप्रियङ्गुः शोणितपित्तातियोगप्रशमनानां, कुटजत्वक् श्लेष्मपित्तरक्तसांग्राहिकोपशोषणानां, काश्मर्यफलं रक्तसांग्राहिकरक्तपित्तप्रशमनानां, पृश्निपर्णी सांग्राहिकवातहरदीपनीयवृष्याणां, विदारिगन्धा वृष्यसर्वदोषहराणां, बला सांग्राहिकबल्यवातहराणां, गोक्षुरको मूत्रकृच्छ्रानिलहराणां,हिङ्गुनिर्यासश्छेदनीयदीपनीयानुलोमिकवातकफप्रशमनानामम्लवेतसो भेदनीयदीपनीयानुलोमिकवातश्लेष्महराणां, यावशूकः स्रंसनीयपाचनीयार्शोघ्नानां, तक्राभ्यासो ग्रहणीदोषशोफाशौघृतव्यापत्प्रशमनानां,क्रव्यान्मांसरसाभ्यासो ग्रहणीदोषशोषार्शोघ्नानां, क्षीरघृताभ्यासो रसायनानां, समघृतसक्तुप्राशाभ्यासो वृष्योदावर्तहराणां, तैलगण्डूषाभ्यासो दन्तबलरुचिकराणां, चन्दनं दुर्गन्धहरदाहनिर्वापणलेपनानां, रास्नागुरुणी शीतापनयनप्रलेपनानां, लामज्जकोशीरं दाहत्वग्दोषस्वेदापनयनप्रलेपनानां, कुष्ठं वातहराभ्यङ्गोपनाहोपयोगिनां, मधुकं चक्षुष्यवृष्यकेश्यकण्ठ्यवर्ण्यविरजनीयरोपणीयानां, वायुः प्राणसंज्ञाप्रदानहेतूनामग्निरामस्तम्भशीतशूलोद्वेपनप्रशमनानां, जलं स्तम्भनीयानां, मृद्भृष्टलोष्ट्रनिर्वापितमुदकं तृष्णाच्छर्द्यतियोगप्रशमनानामतिमात्राशनमामप्रदोषहेतूनां, यथाग्न्यभ्यवहारोऽग्निसंधुक्षणानां, यथासात्म्यं चेष्टाभ्यवहारो सेव्यानां, कालभोजनमारोग्यकराणां, तृप्तिराहारगुणानां, वेगसंधारणमनारोग्यकराणां, मद्यं सौमनस्यजननानां, मद्याक्षेपो धीधृतिस्मृतिहराणां, गुरुभोजनं दुर्विपाककराणामेकाशनभोजनं सुखपरिणामकराणां, स्त्रीष्वतिप्रसङ्गः शोषकराणां, शुक्रवेगनिग्रहः षाण्ड्यकराणां, पराघातनमन्नाश्रद्धाजननानामनशनमायुषो ह्रासकराणां, प्रमिताशनं कर्शनीयानामजीर्णाध्यशनं ग्रहणीदूषणानां,

विषमाशनमग्निवैषम्यकराणां, विरुद्धवीर्याशनं निन्दितव्याधिकराणां, प्रशमः पथ्यानामायासः सर्वापथ्यानां, मिथ्यायोगो व्याधिकराणां, रजस्वलाभिगमनमलक्ष्मीमुखानां, ब्रह्मचर्यमायुष्याणां, परदाराभिगमनमनायुष्याणां, संकल्पो वृष्याणां, दौर्मनस्यमवृष्याणामयथाबलमारम्भः प्राणोपरोधिनां, विषादो रोगवर्धनानां, स्नानं श्रमहराणां, हर्षः प्रीणनानां, शोकः शोषणानां, निवृत्तिः पुष्टिकराणां, पुष्टिः स्वप्नकराणामतिस्वप्नस्तन्द्राकराणां, सर्वरसाभ्यासः बलकराणां, एकरसाभ्यासः दौर्बल्यकराणां, गर्भशल्यमाहार्याणामजीर्णमुद्धार्याणां, बालो मृदुभेषजीयानां, वृद्धो याप्यानां, गर्भिणी तीक्ष्णौषधव्यवायव्यायामवर्जनीयानां, सौमनस्यं गर्भधारणानां संनिपातो दुश्चिकित्स्यानामामो विषमचिकित्स्यानां, ज्वरो रोगाणां, कुष्ठं दीर्घरोगाणां, राजयक्ष्मा रोगसमूहानां, प्रमेहोऽनुषङ्गिणां, जलौकसोऽनुशस्त्राणां, बस्तिस्तन्त्राणां, हिमवानौषधिभूमीनां, सोम ओषधीनां, मरुभूमिरारोग्यदेशानामनूपोऽहितदेशानां, निर्देशकारित्वमातुरगुणानां, भिषक्चिकित्साङ्गानां, नास्तिको वर्ज्यानां, लौल्यं क्लेशकराणामनिर्देशकारित्वमरिष्टानामनिर्वेदो वार्तलक्षणानां, वैद्यसमूहो निःसंशयकराणां, योगो वैद्यगुणानां, विज्ञानमौषधीनां, शास्त्रसहितस्तर्कः साधनानां, संप्रतिपत्तिः कालज्ञानप्रयोजनानामव्यवसायः कालातिपत्तिहेतूनां, दृष्टकर्मता निःसंशयकराणामसमर्थता भयकराणां, तद्विद्यसंभाषा बुद्धिवर्धनानां; आचार्यः शास्त्राधिगमहेतूनामायुर्वेदोऽमृतानां, सद्वचनमनुष्ठेयानामसद्ग्रहणं सर्वाहितानां, सर्वसंन्यासः सुखानामिति ।

**अग्र्या**—स्त्री., प्राणिद्रव्य० घनीभूतं गव्यं पित्तम् गोरोचना ( ध. ३.२८ पृ. ९८ )

**अग्लानि**—स्त्री., रोगलक्षण०, ईषद्ग्लानिः ( सुउ. ३९.११८ )

**—कर**—वि., हर्षक्षयं न करोतीत्यर्थः ( सुसू. ३४.२३ )

**अघोरमन्त्र**—पु., मन्त्रविशेषः,

अघोरमन्त्रो यथा— 'ॐ ह्रीं ह्रीं हुं अघोरतर प्रस्फुट प्रस्फुट प्रकट प्रकट कह कह शमय शमय जात जात दह दह पातय पातय ओं ह्रौं हैं ह्रौं हं अघोराय फट्, इति । (र. ६.२१ टीका)

**अङ्क**—पु., रेखा ( र. ७.२९ )

**—पाद**—पु., चर्मचटकः ( चसि. ३.१२ )

**—लोड्य**—न., शाक०, ह्रस्वोत्पलकन्दः । शाकमस्य गुरुविष्टंभि शीतलं च ( चसू. २७.११७ )

**—वृक्ष**—पु., कदम्बः ( ध. ५.१०४ )

**अङ्कुर**—पु., मृदुनालम्, एषणार्थप्रयुक्तमेकमनुशस्त्रम् ( सुसू. ८.१९ )

अग्रपल्लवः ( सुचि. ३८.८५ )

**अङ्कुरित**—वि., विरूढः ( चवि. २ [ ४ ].१५ )

**अङ्कुश**—पु., न., हस्तिचालनार्थं शस्त्रम् ( सुसू. ७.१० )

**—वदन**—न., शलाकायन्त्र०, अङ्कुशतुल्याकृतिमुखं वदनं यस्य तत् ( सुसू. ७.१४ )

**अङ्कुशिका**—स्त्री., वातवेदना०, अङ्कुशनिपाताकर्षणसदृशी वेदना. ( सुसू. २२.११ )

**अङ्कोट**—पु., अङ्कोलः ( सुक. १.७२ ) ( असंसू. ३९.१२ )

**—पुष्प**—न., अङ्कोलपुष्पम्, तद् विषहरं भवति. ( सुक. १.७२ )

**अङ्कोठ**—पु., वृक्ष०, अङ्कोलः ( सुक. ७.३४ )

'अङ्कोल्ल' इति लोके ( ड. सुसू. ३७.१२ )

**अङ्कोल**—पु., वनस्पति०, ( चचि. २३.२४४ )

चीरितस्वल्पपत्रः दीर्घपर्णः कण्टकी तैलफलो वृक्षविशेषः ( र. १०.३२ )

" अङ्कोटोऽङ्कोलको रेची निर्दिष्टो दीर्घकीलकः, पीतसारस्ताम्रफलो गन्धपुष्पो निकोचकः । " ( ध. १.२५८ )

गुणाः—कटुक उष्णस्तीक्ष्णः स्निग्धो रेचनः सूतशुद्धिकृद्वातकफघ्नः कुक्कुराखुविषघ्नः ग्रहजन्तुविषभूतविषलूताविषकण्ठशूलघ्नः ( ध. १.२५८ )

अङ्कोलस्य पुष्पं विषहरम् ( सुक. १.७२ )

अस्य फलं श्लेष्मलं, गुरु, विष्टम्भि, अग्निजिच्च; ( चसू. २७.१५९ ) मूलं सर्वमूषिकविषघ्नम् ( असंउ. ४६ ) एतद्बीजसंभूतं तैलं श्वित्रनाशनार्थमुपयुज्यते ( र. ५.२४१ )

**—तण्डुल**—पु., अङ्कोलबीजम् ( र. १८.२१ )

**अङ्कोलक**—पु., अङ्कोलः ( ध. १.२५८ )

**अङ्कोल्ल**—पु., अङ्कोलः ( अहृसू. ६.१२० )

**अङ्ग**—न., सकलं शरीरम् ( असंशा. ५.३ )

शरीरस्य षडङ्गानि अन्तराधि—सक्थि—बाहु—शिरांसि च । ( सुसू. ३५.१२ )

विभागः, आयुर्वेदस्य अष्टावङ्गानि ( अहृसू. १.६ )

शरीरस्य अवयवाः ( सुशा. ५.३ )

षट्संख्यावाचकं पदं, यथा 'वेदेन्दुनेत्राङ्गरसाङ्गभागाः' ( र. २६.५४–५५ )

पु., उन्मार्गगमनम्, अङ्गेर्गत्यर्थत्वात्
( अहृसू. १२.५० )

–क्षय ( च्छाय )–पु., (यो) पोगरस्य नामत्रयाणाम-न्यतमम्. ( र. ५.८४. )

–गन्ध–पु., अङ्गस्य गन्धः, चत्वारिंशत्पित्तविकारेष्वेकः
( चसू. २०.१४ )

–ग्रह–पु., रोगलक्षण०, अङ्गमर्दः ( चचि. २९.९६ )

–ग्लानि–स्त्री., रोगलक्षण०, अङ्गशोषः, देहजाड्यम्
( चचि. २९.३८ )

–तुदन–न., रोगलक्षण०, सूचीवेधवदङ्गवेदना
( र. १६.७७ )

–द–पु., अङ्गरागः, बाहुभूषणम् ( चक्र. चशा. ८.९ )

–दौर्बल्य–न., रोगलक्षण०, बलहानिः (चसू. १४.१४)

–प्रग्रह–पु., रोगलक्षण० अङ्गग्रहः ( चसि. २.१२ )

–प्रत्यङ्गविभाग– पु., अङ्गानां प्रत्यङ्गानां पृथक्त्वम्
( असंशा. २.२२ )

–प्रदूषण–न., अङ्गदुष्टिः ( चसू. ११.३९ )

–प्रदेश–पु., अङ्गप्रत्यङ्गानि, तदुपरितनभागाश्च
( सुनि. ५.४ )

–भङ्ग–पु., रोगलक्षण०, अङ्गानां स्फोटनमिव वेदना, अङ्गानां जङ्घोरुप्रभृतीनां भङ्ग इव भङ्गः चूर्णनमिव
( अहृसू. १२.५०. )

–भेद–पु., रोगलक्षण०, अङ्गानां भेदः ( चनि. ५.११ )

–मर्द–पु., रोगलक्षण० ( चसू. ४.१७ ( ४४ ) अङ्गोद्वेष्टनमिव वेदना, स्फुटनिका इत्यन्ये
( सुउ. ५५.१६ )
अङ्गानि विमृद्यन्ते इव ( सु. उ. २४.५ )
रसदोषजविकारेष्वेकः ( चसू. २८.९ )
रक्तदोषजविकारेष्वेकः (सुसू.२४.९,चसू.१४.२२)

–मर्दप्रशमन–वि., शामकगण०, अङ्गमर्दघ्नः
( चसू. ४.८ )

–राग–पु., गात्ररञ्जनं, विलेपनं ( सुचि. २५.४३ ) शरीरस्य रक्तिमा ( सु.उ.४२.११ )

–रुह–पु., शारीर०, केशः ( सुचि. ३०.१५ )

–वर्धन–वि., बृंहणकरम् ( चचि. १.[१].७० )

–वादन–न., चेष्टा० ( असंसू. ३.९६ )

–विनिश्चय–पु., अङ्गानां निर्णयः ( सुशा. ५.४६. ) अंगविनिश्चयार्थं मृतशरीरस्य कोथनपूर्वकं छेदनं सुश्रुतेन वर्णितं तद्यथा–मृतं समस्तगात्रमविषोपहतमदीर्घव्याधिपीडितमवर्षशतिकं, निःसृष्टान्त्रपुरीषं, अ(आ)वहन्त्यामापगायां निबद्धं, पञ्जरस्थं, मुञ्जवल्कलकुशशणादीनामन्यतमेनावेष्टिताङ्गप्रत्यङ्गमप्रकाशे देशे कोथयेत् । सम्यक् प्रकुथितं चोद्धृत्य ततो देहं सप्तरात्रादुशीरबालवेणुवल्कलकूर्चानामन्यतमेन शनैः शनैरवघर्षयंस्त्वगादीन्सर्वानेव बाह्याभ्यन्तरानङ्गप्रत्यङ्गविशेषान् यथोक्तान् लक्षयेच्चक्षुषा ( सु. शा. ५. ४९ )

–विवर्णता–स्त्री., स्वाभाविकवर्णस्य अन्यथा भावः
( चचि. १२.११ )

–वेदना–स्त्री., रोगलक्षण०, अङ्गमर्दः ( चनि. २.६ )

–व्यसनिन्–वि., छिन्ननासादिः एवंप्रकारः दूतः मरणसूचकः ( च. इं. १२.१७ )

–शीर ( र्य ) ण–न., रोगलक्षण०, शरीरावयवानां विगलनम्, चत्वारिंशत् पित्तविकारेष्वेकः
( कासू. २७.३५ )

–शूल–पु., रोगलक्षण०, अङ्गमर्दः ( चचि. ३.२४४ )

–संशोष–पु., रोगलक्षण०, कार्श्यम् (चचि. २८.७३)

–सदन–न., रोगलक्षण०, अङ्गसादः (अहृसू.१७.१६) अवयवानां ग्लानिः, अङ्गानामनुत्साहः, रसदोषजविकारेष्वेकः

–साद–पु., रोगलक्षण०, अङ्गसदनम् (सुउ. २४.२३)
( अहृसू. ४.१० )

–सावर्ण्य–न., अङ्गसमानवर्णता ( सुचि. ९.३८ )

अङ्गावदरण–न., रोग०, अङ्गस्यावदरणं स्फुटनं विदारणं च, चत्वारिंशत्पित्तविकारेष्वेकः ( चसू. २०.१४ )

अङ्गावसादन–न., रोगलक्षण०, अङ्गानां दौर्बल्यम्
( चचि. १.३३ )

अङ्गार–पु., अग्निः ( चसू. १४.२८ )
अभस्मसात्कृतो दग्धकाष्ठखण्डः ( सुसू. २९.११ )
कोकिलः ( र. ७.१६ )

–कोष्ठकस्तम्भ–पु., अग्निकुण्डस्तम्भः
( असंसू. २६.१५ )

–कोष्ठी–स्त्री., साग्निमृण्मयकोश०, खराणां द्रव्याणां सत्त्वपातनी कोष्ठी ( र. १०.३४–३८ )

–ग्रन्थिक–वनस्पति० हिमावली ( रा. परि. १५.१८ )

–चूडक–पु., प्रतुदपक्षि० ( चसू. २७.५२ )

–यान–न., अङ्गारपूर्णशकटिका ( सुउ. ६४.२५ ) अग्नियानम् ( असंसू. ४.१८ )

–वल्लरी–स्त्री., वनस्पति०, भार्गी ( ध. १.६८ )
( रा. ६.९५ )

–वल्लिका–वल्ली–स्त्री., वनस्पति०, भार्गी ( ध. १.६८ ) महाकरञ्जः ( ध. ५.११० )

**–शूल्य**–वि., शूलस्थं कृत्वा अङ्गारे भर्जितम् ( चसू. २६.८४ )

**अङ्गारकमणि**–पु., जाङ्गमद्रव्य०, प्रवालम् ( रा. १३.७३ )

**अङ्गिरस**–पु., महर्षि०, हिमालये इन्द्रादेशाद् रसायनप्रयोगं कृतवान्. ( चचि. १ [४] ३ )

**अङ्गुल**–न., मान० ( असंशा. ७.३३ )

**–मित**–न., अङ्गुलमानम् ( सुशा. ६.२८ )

**–राजि**–पु., राजिमान् सर्पविशेषः ( सुक. ४.३४ (३)

**अङ्गुलास्थि**–पु., अङ्गुलगतमस्थि ( का. शारीरविचय )

**अङ्गुलि**–स्त्री., हस्तपादशाखासु प्रत्यङ्ग०, प्रतिशाखायां पञ्च, मिलित्वा विंशतिः ( सुशा. ५.४ ) अङ्गुष्ठः, प्रदेशिनी, मध्यमा, अनामिका, कनिष्ठिका चेतिक्रमेण पञ्चाङ्गुलयः ( सुसू. ३५.१२ )

**–त्राणक**–न., यन्त्र०, ( असंसू. ३४.१२. )

**–दाह**–पु., रोगलक्षण०, सविषान्नपानरसस्पर्शेन कराङ्गुलीनां ज्वलनम् ( चचि. २३.११२ )

**–पर्वन्**–न., मान०, अङ्गुलस्य विशेषतः करमध्यमाङ्गुलस्य ( आढमल्ल ) मध्यभागः सन्धिस्वरूपः, अयं शरीरमानार्थमुपयुज्यते ( सुसू. ३५.१२ ) ( चवि. ८.११७ )

अवयव०., अंगुलिग्रंथिः ( सुसू. ३५.४ )

अवयव०., अङ्गुलिशलाका ( सुसू. १८.१८ )

**–प्रमाण**–न., प्रमाण०, अङ्गुलिः, करशाखा, तया मानम् ( चवि. ८.११७ )

**–फला**–स्त्री., वनस्पति०, निष्पावी (रा.परि. ७.१००)

**–शस्त्र**–न., शस्त्र०, तच्च द्विविधम् (१) अन्तर्मुखसंज्ञितं कृशतरशशधरकानुकारिणाऽर्धद्वयसंहितमध्यकीलितेन मध्यमाङ्गुल्यङ्गुष्ठप्रविष्टलोहकटकनियमितं शस्त्रम् (२) एकावयवं मध्यमाङ्गुलीप्रविष्टकण्टकं शस्त्रम् ( सुचि. १५.१२ )

**–शस्त्रक**–न., अङ्गुलिशस्त्रम् ( अहृसू. २६.१३ ) ( असंसू. ३४-२६ )

**–शूल**–पु., रोगलक्षण० ( चसि. २.१६ )

**–शोष**–पु., रोगलक्षण०, ( चसि. २.१६ )

**–सन्धि**–पु., शारीर०, अङ्गुलीनां सन्धिः ( चचि. २९.२६ )

**–स्तम्भ**–पु., रोगलक्षण०, अङ्गुलेर्निश्चलत्वम् ( चसि. २.१६ )

**अङ्गुलिका**–स्त्री., कीट० तन्नामकपिपीलिकाभेदः; तया दष्टे श्वयथुरग्निस्पर्शवद्दाहशोफौ भवतः ( सुक. ८.३४ )

**अङ्गुली**–स्त्री., शारीर०, अङ्गुलिः ( सुचि. ३.२४ )

**अङ्गुल्यन्तर**–न., स्थानविशेषः ( सुनि. १३.३२ )

**अङ्गुष्ठ**–पु., अङ्गुलिः सार्धत्र्यङ्गुलप्रमाणः ( सुसू. ३५.१२)

**–मूल**–न., अङ्गुष्ठस्य मूलभागः ( सुसू. ३५.१२ )

**–संमित**– वि., अंगुष्ठपरिणाहा ( वर्त्तिः ) ( चसू. ५.२४ )

**अङ्गुष्ठोदरप्रमाण**–न., प्रमाण० विंशतितमभागोनषड्यवप्रमाणम्=५$\frac{१९}{२०}$ यवाः ( सु. शा. ४.४ )

**अङ्घ्रि**–पु., शारीर०, पादः ( अहृसू. २.३१ )

**–मूलम्**–( वृक्षादेः ) ( र. १४.९४ )

**–बला**–स्त्री. वनस्पति० पृश्निपर्णी ( ध. १.९० )

**अचक्षुष्य**–वि., चक्षुषेऽहितम् ( अहृसू. ५.५५ )

**अचङ्क्रमणशील**–वि., आस्यासुखी, चङ्क्रमणं गमनागमनं यो न करोति ( च. चि. २९.८ )

**अचरणा**–स्त्री., योनिरोग०, अधावनाचरणादचरणा ( चसू. १९.४ (९) अधावनाज्जाता जन्तवः योन्यां कण्डूं कुर्वन्ति, तया कण्ड्वा स्त्री अतिनरकाङ्क्षिणी भवति ( चचि. ३०.१८ )

श्लेष्मजा–यस्यां स्त्री ग्राम्यधर्मे पुरुषादधिका भवति, तेन बीजं न गृह्णाति ( सुउ. ३८.१६ ) ( विप्लुता ) ( अहृउ. ३३.४९ )

**अचला**–स्त्री., पार्थिवद्रव्य०, मनःशिला ( र. १२.१०४ )

**अचिकित्स्य**–वि.. चिकित्सितुमशक्यः, असाध्यः (रोगः) बलमांसक्षये सति अष्टौ व्याधयः चिकित्सार्थमनर्हा भवन्ति, वातव्याधिः, अपस्मारः, कुष्ठम्, शोफः, उदरम्, गुल्मः, मधुमेहः, राजयक्ष्मा च । ( चइ. ९.८-९ )

**अचिन्त्य**–वि., चिन्तनशक्तिबाह्यम्, चिन्तनशक्त्यतीतः, रसवीर्यविपाकादिनियमैरचिन्तनीयप्रभावयुक्तत्वादचिन्त्यः ( सु. शा. ३.४ )

**अचिरजात**–वि., असंपूर्णकाले जातः, विच्युतः ( च. शा. ४.२९ )

**अचिरप्रजाता**–वि., अचिरप्रसूता ( चनि. ३.१३ )

**अचेतन**–वि., जडः, प्रकृतिः तत्कार्याणि च अचेतनवर्गः ( सु. शा. १.८ )

हतौजो ज्वरलक्षण० जाग्रदवस्थायां स्वप्नावस्थायां च चेतनारहितो भवति; हतौजो ज्वररोगी ( सुउ. ३९.४३.).

निरिन्द्रियम् ( चसू. २६.१० )

**अचेतस**–वि., रोगलक्षण०, नष्टसंज्ञः ( सु.चि.३४.१९ )

**अचोक्ष**–वि., अपवित्रम्, मलिनम् ( सुसू. ४६.४७६ )

**अचौक्ष**–वि., अचोक्षम् (सुउ.६०.५४)

**अच्छ**–वि., अघनम् ( चचि. १५.१० )

केवलम् ( सुशा.१०.२२ ) तनु ( सुसू.४५.१९९ )

निर्मलम् ( चशा.८.४८ ) केवलम् ( चसू. १३.७ )
–पान–न., केवलस्नेहपानम् ( सुचि. ३१.२१ )
–पेय–पु., केवलस्नेहपानम्, अच्छश्च पेयश्च ( चक्र० चसू. १३.२६ )
तत्पानविधिः ( अहसू. १६.२९–३० )
–वारुणी–स्त्री., स्वच्छसुरा ( असंचि. ९ पृ. ५९ )
–सुरा–स्त्री., विशदं मद्यम् ( अहसू. ३.१२ )
–स्नेह–पु., केवलस्नेहः ( सुचि. ३१.२१ )

**अच्छिद्र**–वि. निबिडम् ( चशा. ६.२८ )

**अच्युतावास**–पु., वनस्पति० पिप्पलः, अश्वत्थः ( रा. ११.११८ )

**अज**–पु., प्राणि०, अयं वातप्रकृतिः ( सुशा. ४.६७ )
अजचर्म धूमार्थमुपयुक्तम् ( सुउ. ६०.३८ )
अजपुरीषस्य क्षारो विसूचिकामुदावर्तं वाताष्ठीलां च नाशयेत् ( चचि. १३.१६२ )
अजबस्तिर्नामाजस्य मूत्राशयः, बस्त्याख्योपक्रमार्थमुपयुज्यते ( चसि. ९.५२ )
अजमांसगुणाः–अदोषलं, नातिशीतगुरुस्निग्धं शरीरधातुसामान्यादनभिष्यन्दि बृंहणं च ( चसू. २७.६१–६३ )
अजमांसरसो राजयक्ष्मणि प्रशस्यते ( चचि. ८.६७ )
अजमेदो नेत्ररोगेषु रसाञ्जनार्थमुपयुज्यते ( असंउ. १९ पृ. २४७ )
इदं शाखादमेदसामग्र्यम् ( चसू. २५.३८ )
अजयकृत्प्लीहानावुभावपि नक्तान्ध्ये नेत्ररोगे शूल्यपक्वौ भक्षणार्थमुपयुज्येते ( सुउ. १७.२६ )
तथा च नेत्ररोगेषु तर्पणाद्युपक्रमेषूपयुज्यतेऽस्य यकृत् ( असंउ. १९ ( पृ. २४९ )
नक्तान्ध्येऽजयकृत्प्लीहानावञ्जनार्थमुपयुज्येते ( सुउ. १७.२६ )
अजरोमाणि ग्रहचिकित्सायां धूमार्थमुपयुज्यन्ते ( सुसू. ६०.३८ ).

**अजा**–स्त्री., पशु०, छागी ( चसू. १.९३ )
बर्करी ( सुउ. ४१.५६ ) ( सुसू. ४५.५२ )
अजाघृतगुणाः–दीपनीयं, चक्षुष्यं, बलवर्धनं, कासे, श्वासे, क्षये, चापि पथ्यं, पाके लघु ( सुसू. ४५.९८ )
अजादधिगुणाः–कफपित्तघ्नं, लघु, वातक्षयापहं, दुर्नामश्वासकासेषु हितमग्नेश्च दीपनम् ( सुसू. ४५.६८ )
मधुरं कषायमुष्णं मधुरपाकं रुच्यं पाचनं नेत्रदोषघ्नम् ( ध. ६. १९१; रा. १५.२४७ )
अजादुग्धगुणाः–शोषिणां हितं, दीपनं, लघु, संग्राहि, श्वासकासरक्तपित्तनुत्, सर्वव्याधिहरं, गोदुग्धतुल्यगुणं च, "अजानामल्पकायत्वात्कटुतिक्तनिषेवणात् । नात्यम्बुपानाद्व्यायामात्सर्वव्याधिहरं पयः ॥ " ( सुसू. ४५.५१ )
'अजाक्षीरं शोषघ्नस्तन्यसात्म्यसंग्राहिकरक्तपित्तप्रशमनानां श्रेष्ठम्' ( चसू. २५. ४०. )
अजामांसगुणाः–मधुरं, नातिशीतं, स्निग्धं, लघु, रुच्यं, बल्यं, पुष्टिकरं, वातपित्तघ्नं च ( ध. ६.३८५ रा. १७.४०५ )
अजामूत्रं भेषजत्वेनोपयुज्यते, तत्तु कषायमधुरं, पथ्यं दोषहरणं च ( चसू. १.१०० )
इदं लवणानुरसं कटु, रूक्षं, तीक्ष्णोष्णं, लघु, पित्तलं च भवति, "कृमिशोफोदरानाहशूलपाण्डुकफानिलान् । गुल्मारुचिविषश्वित्रकुष्ठार्शांसि जयेल्लघु" ( अहसू. ५.८३ )
आघ्राणेन हिक्काशमनं भवति ( सुउ. ५०.२२ )
अजामेदो मूढवाते उपयुक्तम् ( चचि. ११.२७ )
अजालेण्डं शोषे उद्वर्तनेनोपयुक्तम् ( का राजयक्ष्माचि ) अजाशकृत्कषायतिक्तं हिध्माश्वासहरम् ( असंसू. ६.१४५ )
अजालयो बर्करीगृहम्, तत्सेवनेन शोषनाशो भवति यथाहि–अजाशकृन्मूत्रपयोघृतासृङ्मांसालयानि प्रतिसेवमानः । स्नानादि नानाविधिना जहाति मासादशेषं नियमेन शोषम् ॥ ( सुउ. ४१.५६ )
–करीष–पु. न., अजपुरीषम् ( चचि. १३.१६२ )
–कर्ण–( पु., वृक्ष० शालभेदः ( चवि. ८.१४४ )
पत्रमस्य छागकर्णवत्; 'पियाल साल' 'साल' इति लोके ( सुचि. १९.३३ ड. )
सर्जः ( सुसू. ३८.१२ )
'गन्धमुण्ड' इत्येके ( ड.सुचि. ९.१४ )
असनः गीलकोऽश्वकर्णः पूर्वदेशे प्रसिद्धः ( ड. सुचि. ३४.१७ )
–कर्णक–पु., वनस्पति० सर्जकः ( रा. ९.२०४ )
वनस्पति०, अजशृङ्गी ( चचि. १ ( ४ ) ७ )
अजगन्धा, 'बोबई' इति लोके ( ड. सुचि. १७.१४ )
सोमसमवीर्या महौषधिः ( सुचि. ३०.५ )
हस्तिपर्णपलाशस्य तुल्यपर्णा द्विपर्णिनी । अजस्तनाभकन्दा तु सक्षीरा क्षुपरूपिणी । अजा महौषधिर्ज्ञेया शङ्खकुन्देन्दुपाण्डुरा ॥ (सुचि. ३०.१७–१८)
–गन्धा–स्त्री., वनस्पति०, अजमोदा, 'फोफान्धी' इति केचित् ( च. सू. २.४–५ )

'फोफान्धा' इति ख्याता ( चचि. २३.२१३ )
अरण्यतुलसी ( सुसू. ३७.१३-१५ )
वनयवानी ( चसू. २७.१७३ )
वनयवानी गुणाः—सुगन्धा, रोचनी, नातिकटुका दोषोत्क्लेशिनी च ( चसू. २७.१७३ )
'जवानिका', 'बोथई' इत्यन्ये (ड. सुसू. ४४.१६)
बोथयिका, लतौषधी इत्यन्ये ( ड. सुसू. ३७.६ )
बोवयिका ( ड. सुचि. ५.२८ )
'बोवयिका' ( बोविका ) ( सुचि. १८.४८ )
अजगन्धाया गुणाः—कटुः, उष्णा, वह्निकृत्, वातकफघ्नी, ज्वरगुल्माष्ठीलानाहशूलोदरकर्णरोगघ्नी च ( ध. २.१०१ )

**—गर**—पु., बिलेशय महासर्प० स निर्विषः, असौ ग्रसनात् शरीरप्राणहरो भवति ( सुक, ४.३८ )
सोऽर्शसां हितः । ( सुसू. ४६.७८ )

**—गरी**—स्त्री., वनस्पति०, सोमसमवीर्या महौषधिः ( सुचि. ३०.५ )
कपिलैः चित्रैः मण्डलैः सर्पाभा, पंचपर्णिनी, पंचारत्निप्रमाणा च भवति ( सुचि.३०.१० )
उत्पत्तिस्थानमस्याः सिंधुनददेवसुंदहृदयोश्च जलान्तः ( सुचि. ३०.३०-३२ )

**—गल्लि ( ल्ली )**—स्त्री., अजगल्लिका ( र. २५.१., सुशा. ४.४ )

**—गल्लिका**—स्त्री., क्षुद्र रोग० तस्याः अधिष्ठानं तृतीया त्वक् श्वेता नाम ( सुनि. १३.४ ) कफवाताभ्यां स्निग्धा, सवर्णा, नीरुजा, मुद्गनिभा पिटिका जायते; एषा बालानां भवति ( असंउ. ३६ ( पृ. ३१४ )

**—दण्डी**—स्त्री., वनस्पति०, ब्रह्मदण्डी ( रा. परि. ५.४७ )

**—भक्षा**—स्त्री., वनस्पति०, धन्वयासः ( रा. ३.२२ )

**—मुदा**—स्त्री., वनस्पति०, अजमोदा ( र. २७.१२६ )

**—मोदक**—पु., वनस्पति०, अजमोदा ( चसू. २३.१८)

**—मोदा**—स्त्री., वनस्पति० ( चसू. ४.९. [ ६ ]
यवनिका ( सुसू. ३८.२२ )
दीप्यकः ( असंसू. १६. ४० ) ( अहसू. १५.३३ )
गुणाः— तिक्ता, कटुः, उष्णा, रूक्षा, वह्निदीपनी, रुचिकरी, कफवातघ्नी, हिक्का-आध्मान-अरुचि-कृमिजठरामयघ्नी ( ध. २.९९ )

**—मोदाद्वय**—न., अजमोदा, यवानी च ( र. १६.५८ )

**—रुहा**—स्त्री., कन्द०, अगद०, " कन्दः श्वेतः सपिंडको भेदे चाञ्जनसन्निभः । गन्धलेपनपानैस्तु विषं जरयते नृणाम् । दष्टानां विषपीतानां ये चान्ये विषमोहिताः । विषं जरयते तेषां तस्मादजरुहा स्मृता ।" ( सुक. १.७८ )

**—लोमी**—स्त्री., वनस्पति०, सोमसमवीर्यमहौषधि० ( सुचि. ३०.५ )
" गोलोमी चाजलोमी च रोमशे कन्दसम्भवे " ( सुचि. ३०.२३ )
उत्पत्तिस्थानं काश्मीरस्थं क्षुद्रकमानसं सरः ( सुचि. ३०.३३ )
श्वेतदूर्वा ( सुउ.६०.४७ )

**—शृङ्गी**—स्त्री., वनस्पति०, कर्कटशृङ्गी, विषाणिका ( चक. ११.१३ )
मेढिकः, वल्लिपञ्चमूलेष्वेकम्. ( सुसू. ३८.७२ )
मेषशृङ्गी ( सुसू. ३७.१३-१५ )

**अजका**—स्त्री., नेत्ररोग०, पर्यायः अजकाजातम्, नेत्रकृष्णगतो रोगः ( सुउ. ५.३ )

**—जात**—पु., न., नेत्ररोग० ( सुउ. १. ३६. )
अस्मिन् रोगे नेत्रकृष्णभागे अजापुरीषप्रतिमः रुजावान्, सलोहितः, लोहितपिच्छिलाश्रुः, कृष्णभागं विदार्य एकोच्छ्रायो भवति ( सुउ. ५.१० )
चिकित्सा—अजकां पार्श्वतो विद्ध्वा सूच्या चोदकं विस्राव्य व्रणं च सर्पिषा सह गोमांसचूर्णेन पूरयेत्; यदि अजकाजातस्य वर्त्म उच्चतां गच्छेत् तदा बहुशोऽवलिखेत् ( सुउ. १३.३६-३७ )

**अजटा-अजटी**—स्त्री., वनस्पति०, भूधात्री, भूम्यामलकी ( काचि. बालग्रह. पृ. १०१ )

**अजडा**—स्त्री., धान्य०, वनस्पति०, शूकशिम्बी ( चचि. २ [ २ ] १८-१९ )

**अजर**—न., सुवर्णम् ( रा. १३.३ )
वि., जरारहितम् (चचि. ३.१४)

**अजरक**—न., अजीर्णम् ( असंचि.१८ (पृ.१०२ )

**अजरण**—न., रोगलक्षण०, अजीर्णम् ( र. २१.११५ )

**अजरा**—स्त्री., वनस्पति०, जीर्णदारुः, वृद्धदारुभेदः ( रा. १५७ )

**अजस्र**—वि., संततम् ( असंउ. २३ (पृ. १६८)

**—आहार**—वि., अनवरताहारशीलः ( सुशा. ४.९० )

**अजाक्षी**—स्त्री., काकोदुम्बरिका ( रा. ११.१४३ )

**अजाजिक**—पु., जीरकम् ( रा. ६.१०० )

**अजाजी**—स्त्री., जीरकम् ( चसू. २.४ ) कृष्णजीरकम् (र.२३. ३६-३७) यवानी (र.१६.५८) शुक्लजीरकम् ( रा. ६.१०२ )

**अजातव्यञ्जन**–वि., स्त्रीपुरुषभेदानुमापकलिङ्गं श्मश्र्वादिकं यस्य न संजातम् ( चवि. ८.१२२ )

**अजातसार**–वि., गर्भोत्पत्तिप्रारम्भाच्चतुर्थमासपर्यन्तं गर्भः प्रशस्तगुणरहितो मृदुधातुः साररहितश्च भवति सोऽजातसार इत्युच्यते ( चशा. ८.२३ )

**अजादनी**–स्त्री., धन्वयासः ( रा. ३.२२ )

**अजान्त्री**–स्त्री., वृद्धदारुकः ( ध. ४.१०७, रा. ३.१५६ ) बस्तान्त्री ( रा. ३.२ )

**–अजिघ्रत्व**–न., गन्धाज्ञता (सुचि. ३९.३०)

**अजित**–पु., अगद०, स्थावरजङ्गमानां विषाणां जेता ( सुक. ५.६३–६५ ) (वि.,) न जितं (सुक.२.४९) प्राणि०, अजितनामकः मूषिकविशेषः तस्य दंश-लक्षणम् अंगकृष्णत्वं, छर्दिः, मूर्च्छा, हृद्ग्रहश्च, ( सुक. ७.२१ ) सर्पिर्विशेषः ( सुउ. ३९.२६४. )

**अजिता**–स्त्री., खनिज०, सौराष्ट्री (ध. ३.१०५)

**अजितात्मा**–वि., अजितेन्द्रियः ( सुउ. ५६.५ )

**अजिन**–न., जाङ्गमद्रव्य०, व्याघ्रादिचर्म ( चसू. ६.१५ ) सुखस्पर्शरोमचर्म ( अहृसू. ३.१३ ) पु., प्राणि०, मूषिकभेदः ( असंउ. ४६ )

**अजिर**–पु., मूषकविशेषः ( असंउ. ४६ )

**अजीर्ण**–न., रोग०, आहारस्य अपचनम् ( चसू. १.९२ ) सामान्यलक्षणम्– "तस्य लिङ्गमजीर्णस्य विष्टम्भः सदनं तथा । शिरसो रुक् च मूर्च्छा च भ्रमः पृष्ठक-टिग्रहः ॥ जृम्भाङ्गमर्दस्तृष्णा च ज्वरश्छर्दिप्रवाहणम्। अरोचकोऽविपाकश्च घोरमन्नविषं च तत् ॥" ( चचि. १५.४५) अजीर्णम्–आमं विदग्धं विष्टब्धम् इति कफपित्तानिलैः त्रिविधम् । केचित् रसशेषाजीर्णं चतुर्थमिच्छन्ति । ( सुसू. ४६.४९८–५०१ ) आमा-जीर्णलक्षणम्– अजीर्णमन्नं माधुर्यं गतमामसंज्ञम् । ( सुसू. ४६.४९९ ) "तत्रामे गुरुतोत्क्लेदः शोफो गण्डाक्षिकूटयोः । उद्गारश्च यथाभुक्तमविदग्धः प्रवर्तते ॥ " ( असंउ. ११.५५ ) विदग्धाजीर्णलक्ष-णम्– "विदग्धे भ्रमतृण्मूर्च्छाः पित्ताच्च विविधा रुजः। उद्गारश्च सधूमाम्लः स्वेदो दाहश्च जायते" ॥ (मा.) विष्टब्धाजीर्णलक्षणम्– "विष्टब्धे शूलमा-ध्मानं विविधा वातवेदनाः । मलवाताप्रवृत्तिश्च स्तम्भो मोहाङ्गपीडनम् ॥" (मा.) रसशेषाजीर्णल-क्षणम्– आहारस्य एव पक्वस्य उर्वरितो रसो रस शेषः, तद् भवमजीर्णम्। तत्र उद्गारशुद्धावपि भक्त-कांक्षा न जायते, हृद्गुरुता लालास्रावश्च भवति। ( सुसू. ४६.४९८–५०३ ) "रसशेषेन्नऽविद्वेषो हृदयाशुद्धिगौरवे । यावत् संतिष्ठते ह्यस्य दुष्टोऽन्नस्य रसो हृदि । तावन्मर्माणि भिद्यन्ते विषं पीतवतो यथा ।" (मा.) अजीर्णहेतुः– अत्यम्बुपान–विषमा-शन–वेगविधारण–स्वप्नविपर्ययैः (सुसू. ४६.५००) चिन्ता–शोक–भय– क्रोध– दुःखशय्या– प्रजागरैश्च मात्राभ्यवहृतं पथ्यमप्यन्नं न जीर्यति । अजीर्णोप-द्रवाः– मूर्च्छा–प्रलाप–वमथु–प्रसेक–सदन–भ्रमा-दयः कदाचित् मरणमपि। ( सुसू. ४६.५०४ ) अजीर्णचिकित्सा– "लंघनं कार्यमामे तु विष्टब्धे स्वेदनं भृशम् । विदग्धे वमनं यद्वा यथावस्थं हितं भवेत् ॥" ( असंसू. ११.५८ )

**–कण्टक**–पु., सिद्धयोग० ( र. १६.११३–१५ )

**–शीलिन्**–वि., अजीर्णाशनशीली ( अहृसू. ८.१३ )

**अजीर्णाध्यशन**–न., अजीर्णाशनम् अध्यशनं च ( चसि. १२.१४ (५ ) एतद् ग्रहणीदूषणानां श्रेष्ठं ( चसू. २५.४० ) मुखशोषाध्मानशूलनिस्तोदपिपासागात्रसादच्छर्द्य-तीसारमूर्च्छाज्वरप्रवाहणामविषकरं च ।

**अजीर्णाशन**–न., व्युष्टाजीर्णे चतुर्विधे भोजनम् ( काखि. ६.६१ ) ग्रहणीदूषणानां श्रेष्ठम् ( असंसू. १३.३ )

**–शीलिन्**–अजीर्णस्यापक्वस्याशनमजीर्णाशनम्, तत् शीलितुं शीलं यस्य सः। ( चवि. २.१२ )

**अजीर्णाहार**–वि., अजीर्णे आहारो यस्य ( असंसू. १० )

**अजेय**–वि., सिद्धघृतस्य नाम ( सुक. २.४७–४९ ) इदं घृतं सर्वविषहरं दूषीविषापहं विशेषेण ।

**–आख्य**–वि., अजेयं नाम यस्य, तत् ( सुक.१–८० )

**अज्वर**–वि., ज्वरमुक्तः "विगतक्लमसंतापमव्यथं विमलेन्द्रियम् । युक्तं प्रकृतिसत्त्वेन विद्यात् पुरुषमज्वरम् ॥" ( चचि. ३.३२९ )

**अञ्जन**–न., पार्थिवद्रव्य०, सौवीरमञ्जनम् ( चसू. ३.५ ) स्रोतोजमञ्जनम् ( चसू. ५.३९ ) रसाञ्जनम् ( सुउ. ४५.३२ ) कज्जलम् ( सुसू. १३.११ ) अञ्जनप्रकाराः– गुटिकारसचूर्णानि त्रिविधानि अञ्जनानि। महाब-लानां रोगाणां–गुटिकाञ्जनम्, मध्यानां रसक्रिया-ञ्जनं, हीनानां चूर्णाञ्जनं ( नेत्ररोगेषु ) योजयेत् ( सुउ. १८.५८, असंसू. ३२.९ ) पुनश्च लेखनं रोपणं दृष्टिप्रसादनमिति त्रिविधमञ्जनम् ( अहृसू. २३.१०–१२ )

स्नेहनम् इति चतुर्थम् ( असंसू. ३२.७ )
अञ्जनगुणाः–सुखं लघुनिरीक्षणं, चक्षुषा दृढं दर्शनं, नेत्ररोगेभ्यः संरक्षा च ( सुचि. २४.१७–१९ )
सौवीराणि सर्वाणि अञ्जनानि भृङ्गराजपत्ररसैः विशुध्यन्ति ( र. ३.११४ )
अञ्जनसत्त्वपातनविधिः–
मनःशिलासत्त्वपातनविधिवत् अञ्जनानां सत्त्वपातनं कार्यम् । ( र. ३.११५ )
अञ्जनायोग्याः–श्रम–उदावर्त–रुदित–मद्य–क्रोध–भय–ज्वर–वेगाघात–शिरोदोषैरार्तानाम् अञ्जनं नेष्यते; रागरुक्तिमिरास्रावशूलसंरम्भाद्युत्पत्तिभयात् । ( सुउ. १८.६८–६९ )
व्यजनं लक्षणमिति यावत् (सुउ.६०.२३)

**अञ्जनकी**–स्त्री., वनस्पति० नीलाञ्जनिका, शारदं फलं, श्रीफलिकेति लोके. श्रीफलिका, नीली, महानीली इति यावत् (ध. १.२३२–३४ रा. ४.३५३ पृ. ५५)
पित्तार्बुदे अस्या रसेषु घृतपानं प्रशस्तम् ( सुचि. १८.३४ )

**अञ्जना**–स्त्री., नेत्ररोग०, अञ्जननामिका ( सुउ. १.३७ )
**–नामिका**–स्त्री., नेत्ररोग०, नेत्रवर्त्मनि जातः पिडकास्वरूपः ( सुउ. ३.१५ ) ( असंउ. ११. पृ. ८८ )
लक्षणानि–"दाहतोदवती ताम्रा पिडका वर्त्मसंभवा।
मृद्वी मंदरुजा सूक्ष्मा ज्ञेया साऽञ्जननामिका ॥" ( सुउ. ३.१५ )
वर्त्ममध्ये वर्त्मान्ते वा रक्तेन ताम्रा मुद्गमात्रा कण्डू–ऊषा–रुग्वती स्थिरा पिटिका । ( असंउ. ११ पृ. ८८ )
**–पत्रिका**–स्त्री., वनस्पति०, 'काजळी' इति लोके, कार्पासीभेदः कृष्णकार्पासी, ( र. ३०.८१ )
**–पात्र**–न., उपकरण० अञ्जनार्थं पात्रम्; पात्रे तु कुर्यात् सौवर्णे मधुरम्, राजते अम्लम्, मेषशृङ्गमये लवणम्, कांस्ये तिक्तम्, वैदूर्यमये अश्ममये वा कटुकम्, ताम्रमये आयसे वा कषायम्, नलप्लक्षपद्मकस्फटिकशंखान्यतमे शीतम्, एवमव्यापन्नगुणं भवत्यञ्जनम् ( असंसू. ३२.१० )
**–युग्म**–न., स्रोतोञ्जनं रसाञ्जनं च ( अहृसू. १५.३७ )
**–वर्ति**–स्त्री., नेत्राञ्जनविधावौषधिद्रव्याणि जले पिष्ट्वा कृता वर्तिः ( सुउ. ११.६–७ )
**–विधि**–पु., अञ्जनप्रयोगः ( अहृसू. २३.१ )
**–व्यापद्**–स्त्री., अञ्जनदोषः ( सुउ. १८.६९–७३ )

**अञ्जनाभ**–वि., अञ्जनवर्णं, कृष्णवर्णम् ( सुचि. २५.३६ )

**अञ्जनाभक**–न., कन्दविष० (असंउ ४०)

**अञ्जनादिगण**–पु., अञ्जनादिवनस्पतीनां वर्गः
"अञ्जनादिर्गणो ह्येष रक्तपित्तनिबर्हणः ।
विषोपशमनो दाहं निहन्त्याभ्यन्तरं तथा ॥" ( सुसू. ३८.४१–४२ )

**अञ्जनिका**–स्त्री., नेत्ररोग० अञ्जनवाटी, अञ्जनपेटिका इत्यर्थः ( असंसू. ८.९६ )

**अञ्जनी**–स्त्री., वनस्पति०, कालाञ्जनी ( रा. परि. ४.४३ ) कटुका ( रा. ६.५६ )

**अञ्जलि**–पु., मान० ( चक. १२.९३ )
चतुर्गुणं पलम् अञ्जलिः 'कुडव' इति पर्यायः; प्रसृतिद्वयम् कुडवप्रमाणम् ( ड. सुचि. २९.१० )
पलद्वयं तु प्रसृतं तद् द्वयं कुडवोऽञ्जलिः (र. ११.७)
सादरं करद्वययोजनम् ( सुउ. ३७.१५ )

**अञ्जलिका**–स्त्री., शलाका० अञ्जल्याकारदर्वीविशेषः ( असंसू. ३४.१७ )

**अञ्जलिकारिका**–स्त्री., वनस्पति० लज्जालुः ( ध. ४.१०९ )

**अञ्जलिमुख**–न., स्वस्तिकयन्त्र०, जलकुक्कुटमुखसदृशं यन्त्रम् ( सुसू. ७.१० )

**अटजी**–स्त्री., वनस्पति०, तुलसी, आश्चोतनार्थमुपयुक्ता ( काखि. १३.४१ )

**अटरूषक**–पु., वनस्पति०, वासा ( ध. १.२३ )

**अटालत्व**–न., विस्तृतत्वम् ( चनि. ३.१४ )
विवृतत्वम् ( चशा. ४.१६ )

**अट्टहासक**–पु., वनस्पति०, कुन्दः ( रा. १०.२५६ )

**अणिमन्**–पु., सूक्ष्मत्वम्, अणुभावत्वम्, अष्टसिद्धिपु एका ( र. १.५३ )

**अणिमोक्ष**–पु., कीलमोक्षः ( चवि. ३.३८ )

**अणु**–पु., तृणधान्य०, चीनः, अयं गुणैः श्यामाकसदृशः कषायमधुरलघुवातलः ( चसू. २७.१७ )
वनस्पति०, अश्मन्तकः ( सुउ. १९.१३ )
धान्य०, व्रीहिः ( रा. १६.७९ )
मान०, आरम्भकमानम्, सूक्ष्मं, लघु ( र. ११.१ )
अतिसूक्ष्मम् ( चवि. ७.१० )
अल्पम् ( सुशा. ३.३ )
**–ज्योतिस्**–वि., अरिष्टलक्षण०, स्तोकदृक्, अल्पतेजाः ( असंशा. १०.२९ )
स्वल्पप्रकाशः, ज्योतिः, सकलशरीरान्तर्गतं तेजः, मन्दप्रभः ( चइ. ११.३ )
**–ज्योतीय**–वि., अध्याय० ( चइ. ११.१ )
**–ता**–स्त्री., अल्पता, व्याध्यादीनां मार्दवम् ( चसू. १६.५ )

**–तैल**–न., योग०, अणूनां स्रोतसां हितम्, अणूनीन्द्रियस्रोतांसि प्रविशति ( चसू. ५.५६ ) तस्योत्पादनविधिः ( चचि. २६.१४१ अहृसू. २०.३७ ) तिलपरिपीडनोपकरणकाष्ठान्याहृत्यानल्पकालं तैलपरिपीतान्यणूनि खण्डशः कल्पयित्वा अवक्षुद्य महति कटाहे पानीयेनाभिप्लाव्य क्वाथयेत्, ततः स्नेहमम्बुपृष्ठाद्यदुदेति तत् सरकपाण्योरन्यतरेणादाय वातघ्नौषधप्रतीवापं स्नेहपाककल्पेन विपचेत्, एतदणुतैलमुपदिशन्ति वातरोगिषु; अणुभ्यस्तैलद्रव्येभ्यो निष्पाद्यत इत्यणुतैलम्। ( सुचि. ४.२८ )

अथ महापञ्चमूलकाष्ठैर्बहुभिरवदह्यावनिप्रदेशमसितमुषितमेकरात्रमुपशान्तेऽग्नावपोह्य भस्मनिवृत्तां भूमिं विदारिगन्धादिसिद्धेन तैलघटशतेन तुल्यपयसाऽभिषिच्यैकरात्रमवस्थाप्य ततो यावती मृत्तिका स्निग्धा स्यात्तामादायोष्णोदकेन महति कटाहेऽभ्यासिञ्चेत्, तत्र यत्तैलमुत्तिष्ठेत्तत् पाणिभ्यां पर्यादाय स्वनुगुप्तं निदध्यात्; ततस्तैलं वातहरौषधक्काथ-मांसरस-क्षीराम्लभागसहस्रेण सहस्रपाकं विपचेद्यावता कालेन शक्नुयात् पक्तुं, प्रतिवापश्चात्र हैमवता दक्षिणापथगाश्च गन्धा वातघ्नानि च; तस्मिन् सिध्यति शङ्खानाध्मापयेद्दुन्दुभीनाघातयेच्छत्रं धारयेद्वालव्यजनैश्च वीजयेद्ब्राह्मणसहस्रं भोजयेत्, तत् साधु सिद्धमवतार्य सौवर्णे राजते मृण्मये वा पात्रे स्वनुगुप्तं निदध्यात्, तदेतत् सहस्रपाकमप्रतिवारवीर्यं राजार्हं तैलम्; एवं भागशतविपक्वं शतपाकम्। ( सुचि. ४.२९ )

**–त्व**–न., सूक्ष्मत्वम्, मनसो गुणः ( चशा. ( १.१९ )

**–द्वारा**–वि., सूचीमुखी ( चचि. ३०.३२ ) ( सुचि. १.४६ )

**–बहुविदारित**–न., पाटितास्थिभङ्गलक्षणम्, अणूनि बहूनि विदारणानि यस्य तत् ( सुनि. १५.१० )

**–मुख**–वि., अणु सूक्ष्मं मुखं यस्य सः ( सुचि. १.५४ )

**–मुष्टिक**–पु., वनस्पति० विषमुष्टिः ( रा. परि. ४.३९ )

**–रेवती**–स्त्री., वनस्पति० दन्ती ( रा. ६.३३९ )

**–स्रोतस**–न., सूक्ष्मस्रोतः ( चक. १.५ ) वि.. अत्यल्पाग्रच्छिद्रम् ( सुचि. ३६.९ )

**अण्वस्थि**–न., अल्पास्थि ( सुशा. ४.१२ )

**अण्ड**–न., जाङ्गमद्रव्य०, प्राण्याधारं वर्तुलम् ( सुचि. २६.२६ चचि. २ ( १ ) ४९ ) मुष्कः ( सुचि. २६.२५ चचि. २ ( १ ) ४२ )

**–गज**–पु., वनस्पति०, चक्रमर्दः ( ध. ४.५ )

**–घ्नी**–स्त्री., रेवतीग्रहजुष्टयोनि०, यस्मिन् स्त्रिया अण्डं प्रपतति ( कारेवतीक. ३६.३७ )

**–ज**–वि., एका जंगमयोनिः, अण्डाज्जातः अण्डजः, 'खगसर्पसरीसृपप्रभृतीन्यण्डजानि' ( सुसू. १.३० ) पु., पक्षी ( चनि. ४.५० )

**–लौहित्य**–पु., शूकधान्य० ( असंसू. ७.१६ )

**–हस्तिन्**–पु., वनस्पति० चक्रमर्दः ( रा. ४.८ )

**अण्डिका**–स्त्री., मान० चत्वारो यवाः, चत्वारो माषा इत्यन्ये ( चक. १२.८८ )

**अतत्त्वाभिनिवेश**–पु., मानसरोग० हेतुलक्षणादिरजोमोहावृतात्मनः तस्य रोगिणो दोषाः हृदयं समुपाश्रित्य, मनोबुद्धिवहाः सिराः संदूष्य तिष्ठन्ति। वृद्धाभ्यां रजस्तमोभ्यां बुद्धौ मनसि च आवृते व्याकुले हृदये अल्पचेतनो मूढो दोषैः नित्यानित्ये हिताहिते बुद्धिं विषमां कुरुते ( चचि. १०.५७–६२ )

**अतन्द्रित**–वि., अनलसम् ( सुचि. २.६१ )

**अतर्पण**–वि., पुष्टिक्षयकरम्, मेदोहानिकरम् ( चसू. २१.२० )

**अतसी**–स्त्री., तैलधान्य० ( चसू. ३.१८ )
उपनाहोपयोगि ( चसू. १४.३६ )
उमा ( चसू. १३.१० )
उष्णातसी स्वादुरसाऽनिलघ्नी पित्तोल्बणा कटुविपाका ( सुसू. ४६.४९ )
अतसीलेपः शूलघ्नः ( चचि. २९.१४० )
शोथपाचनी ( सुसू. ३७.९ )
अतसीगुणाः–मधुरा तिक्ता उष्णा गुरुः कटुविपाका बल्या शुक्रघ्नी रक्तघ्नी पित्तकफघ्नी कुष्ठघ्नी च ( ध. ६.११५ )

**–तैल**–न., उमाबीजतैलम् प्रमेहे शाकसिद्धार्थमुपयुज्यते ( सुचि. ११.६ )
तद्गुणाः–उष्णं त्वग्दोषकृत् कफपित्तकृत् ( सुसू. ४५.११५ )
मधुरं, कषायं, पिच्छिलं, बलासकृत्, वातघ्नं, कफकासघ्नं च ( रा. ५.१९६ )

**अतिकथन**–न., बहुभाषणम् ( सुशा. १.२५ )

**अतिकन्दक**–पु., वनस्पति० हस्तिकंदः ( रा. परि. ७.३५ )

**अतिकल्य**–वि., अतिनीरोगः ( चचि. १. ( ४ ). ३ )

**अतिकामा**–वि., निवृत्तेच्छेऽपि पुरुषे मैथुनमिच्छन्ती ( चशा. ८.६ )

**अतिकाय**–वि., बृहच्छरीरो मनुष्यः, प्रवृद्धलिङ्गः ( सुउ. ३८.१८ )

**अतिकार्श्य**–न., अपचयलक्षण० बलाभावः
( सुसू. १५.३३ )

**अतिकेसर-रा**–पु. स्त्री., वनस्पति०, कुब्जकः
( रा. १०.२४८., ध. ५.१४६ )

**अतिक्रम**–पु., प्रमादः ( अहृसू. १८.३८ )

**अतिक्रान्त**–वि., तन्त्रयुक्ति० पूर्वं भूतम्
( सुउ. ६५.१६ )

**अतिक्रान्तता**–स्त्री., दूरगमनम् ( सुनि. १५.७ )

**अतिक्रान्तमद्य**–न., व्यापन्नमद्यम् ( चचि. १४.९ )

**अतिक्रान्तावेक्षण**–न., तन्त्रयुक्ति०, यत् पूर्वमुक्तं तददतिक्रान्तं नाम अतीतं तस्य अवेक्षणम्
( सुउ. ६५.३१ )

**अतिक्लीब**–वि., अतिविलम्बितोच्चारणम् ( चसू. ८.२४ )

**अतिक्षिप्त**–न., अस्थिभग्न०, अतिप्रेरितं भग्नम्; द्वयोः सन्ध्यस्थ्नोः दूरगमनम् ( सुचि. ३.१८ )
यस्मिन् सन्धिमुक्ते लक्षणम्–अतिक्षिप्ते द्वयोः संध्यस्थ्नोः अतिक्रान्तता वेदना च भवति
( सुनि. १५.७ )
चिकित्सासूत्रम्–अतिक्षिप्तमधोगतं चोपरि वर्तयेत्
( सुचि. ३.१८ )

**अतिगति**–स्त्री., दूरप्रवेशः ( चसि. ५.५ )

**अतिगन्ध**–पु., खनिज०, गन्धकः (रा. १३.१६६)
वनस्पति०, भूतृणः ( रा. ८.७३ )
वनस्पति०, मुद्गरः ( रा. १०.२१ )

**अतिगन्धालु**–स्त्री., वनस्पति०, पुत्रदात्री
( रा. परि. ३. ४७ )

**अतिगन्धिका**–स्त्री., वनस्पति० ( ध. २.९ )

**अतिगुहा**–स्त्री., शालिपर्णी ( चचि. २३.२१३ )
पृश्निपर्णी ( सुसू. १९.२९ )

**अतिचङ्क्रमण**–न., अत्यधिकं संचरणम्
( चसि. १२. ( ३ ) १४ )

**अतिचरण**–न., मैथुनम् ( सुउं. ३८.१६ )

**( अतिचरणा )**–स्त्री., रोग० योनिरोग०, अतिव्यवायेन कुपितः पवनः स्त्रियाः योनौ शोफसुसिरुजः करोति
( चचि. ३०.१९ )
श्लेष्मजयोनिरोग०, या अतिव्यवायाद् बीजं न विन्दति, गर्भधारणं न करोति ( ड. सुउ. ३८.१६ )

**अतिचरा**–स्त्री., वनस्पति०, पद्मा ( ध. ४.९० )

**अतिचर्या**–स्त्री., अत्यटनम् ( सुसू. २१.१९ )

**अतिच्छत्रक**–पु., भूतृणः ( रा. ८.७२ )

**अतिच्छत्रा**–स्त्री., वनस्पति०, शतपुष्पा (चचि. ९.४६)
अरुणकोकिलाक्षः ( च.वि. ८.१३९ )
मधुरिका ( चचि.१ ( ४ ).६ )
द्रोणपुष्पीभेदः ( सुसू. १९.२९ )
सोमसमवीर्यमहौषधि० उत्पत्तिस्थानम् काश्मीरस्थं क्षुद्रकमानसं सरः ( सुचि. ३०.३२–३३ )
"एकपत्रा महावीर्या भिन्नाञ्जनसमप्रभा। छत्राऽतिच्छत्रके विद्याद्रक्षोघ्ने कन्दसंभवे" ॥ (सुचि.३०.१४)
महौषधि० ( सुचि. ३०.५ )
गौतमा ( असंउ. ९ ( पृ. ७६ )
विषाणिका ( अरुण. अहृसू. २९.३१ )

**अतिजाड्य**–न., रोगलक्षण०, अतिशयक्लेदः
( सुचि. ३६.२२ )

**अतितन्द्रा**–स्त्री., रोगलक्षण०, तन्द्राऽऽधिक्यम्
( चसू. ५.३१ )

**अतितर्पण**–न., अतिबृंहणम् ( सुशा. ३.१६ )

**अतितीक्ष्णा**–स्त्री., वनस्पति०, राजिका ( ध. ४.६० )

**अतितीव्रा**–स्त्री., गण्डदूर्वा ( रा. ८.२३४ )

**अतितृप्ति**–स्त्री., रोगलक्षण० रक्तस्यास्रुतिहेतुः
( अहृसू. २७.३५ )

**अतितेजस**–न., विद्युत्सदृशं तीक्ष्णं तेजः
वज्राग्निः ( सुसू. १२.३९ )

**अतिथि**–पु., खनिजद्रव्य० शिलाजतु ( ध. ३.१६५ )
**–व्रत**–वि., अतिथौ यथोचितम् अर्घ्यादियुक्तं व्रतमाचरतीति अतिथिव्रतः ( चशा. ४ ( २ ).३७ )

**अतिदग्ध**–न., रोग०, चतुर्विधेष्वग्निदग्धेषु एकम्, 'अतिदग्धे मांसावलम्बनं गात्रविश्लेषः सिरास्नायुसन्ध्यस्थिव्यापादनमतिमात्रं, ज्वरदाहपिपासामूर्च्छाश्चोपद्रवा भवन्ति, व्रणश्च अस्य चिरेण रोहति, रूढश्च विवर्णो भवति ( सुसू. १२.१६ )

**अतिदाह**–पु., रोग०, अतिदग्धता ( अहृसू. ३०.४८ )

**अतिदीप्ति**–स्त्री., अतितीक्ष्णता, अतिदीपनम्
( अहृसू. ११.३४ )

**अतिदीप्य**–पु., वनस्पति०, चित्रकभेदः ( रा. ६.१२७ )
( द्र० 'चित्रक' )

**अतिदृष्टिप्रेरण**–न., शलाकाभ्रमणे दोषविशेषः, तस्माद् रक्तस्रवणं रक्ताभरूपदर्शनं च भवति
( असंउ. १७ पृ. १२८ )

**अतिदेश**–पु., तन्त्रयुक्ति० यत्किंचिदेव प्रकाश्यार्थमनुक्तार्थसाधनाय एव 'एवं अन्यदपि प्रत्येतव्यमिति परिभाष्यते' ( चसि. १२.४२ )
प्रकृतेन अनागतस्य साधनमतिदेशः
( सुउ. ६५.१७ )

**अतिदेह**–पु., महाभोगशरीरः ( असंसू. ६.६४ )
**अतिद्रव**–वि., द्रवभूयिष्ठम् ( असंसू. १०.७९ )
**अतिद्रवाशन**–न., अतिद्रवद्रव्याणामाहारः
गुणाः–बहुमूत्रता, प्रतिश्यायः, विक्लेदः, पार्श्वभेदः, उत्क्लेशश्च ( काखि. ५.३५ )
**अतिनिद्रता**–स्त्री., रोगलक्षण० ( चसू. ५.३१ )
"अपच्यमानो बाहुल्यात् स्रोतांस्यावृणुते कफः । ततः स्रोतःसु रुद्धेषु जायते गात्रगौरवम् । गुरुगात्रस्य चालस्यमालस्यादतिनिद्रता"
( असंसू. ९.५२–५३ )
**अतिनिरूढ**–वि., बस्तिव्यापद्०, अतिविरेचनवल्लक्षणानि अस्य ( सुचि. ३८.१० )
**अतिपतित**–वि., विगतः व्यतीतः ( चवि. ५.१२८ )
**अतिपत्र**–पु., वनस्पति०, हस्तिकन्दः ( रा. परि. ७.३५ )
**अतिपत्रक**–पु., वनस्पति०, सागः ( रा. ९.६ )
**अतिपातित**–वि., रोगलक्षण०, अस्थिभङ्गस्य प्रकारः, यत्र अस्थि निःशेषतः छिन्नं वर्तते, भग्नम्
( सुनि. १५.१० )
स्थानाच्युतम्, अवलम्बमानम्, भग्नम्
( सुसू. १८.३० )
**अतिपातिन्**–वि., आशुकारि ( सुसू. ५,४१ )
**अतिपिञ्जर**–वि., रोगलक्षण०, बहुपिञ्जरवान् ( व्रणः )
( चचि. २५.२४ )
**अतिपिडक**–वि., रोगलक्षण०, बहुपिडकायुक्तः ( व्रणः ) दुष्टव्रणभेदः ( चचि. २५.२४ )
**अतिपूतिक**–वि., रोगलक्षण०, बहुपूययुक्तः ( व्रणः )
( चचि. २५.२४ )
**अतिप्रताम्यत्**–वि., अत्यर्थं ताम्यन् तमः प्रपश्यन्
( सुनि. १६.६१ )
**अतिप्रलाप**–पु., रोग०, अशीतिवातविकारेष्वेकः; अतिजल्पनम्, असंबद्धबहुभाषित्वम् ( चसू. २०.११ )
**अतिप्रवयस**–वि., अतिप्रवरं वयो यस्य
( चचि. ३०.१७७ )
**अतिप्रवृत्त**–वि., अतिनिर्गतम् ( सुसू. १४.३० )
**अतिप्रवृत्तिः**–स्त्री.. अतियोगः ( चवि. ५.२४ )
**अतिप्रसङ्ग**–पु., अतिमैथुनम् ( सुउ. ५८.५१ )
अतिप्राचुर्यम्, दीर्घकालानुबन्धो वा (सुशा. २.१८)
अत्यभिधानदोषः ( चनि. ५.४ )
**अतिबला**–स्त्री., वनस्पति०, बला, बलाभेदः
( चसू १५.४४ )
पीतबला, बलाभेदः; ( सुचि. ४.१० )

कङ्कतिका ( सुक. ८.५१ )
काकतिक्ता.( चचि. ३.२६७ )
गुणाः—तिक्ता, कटुः, वातघ्नी, कृमिदाहतृष्णाविषच्छर्दिक्लेदघ्नी च ( ध. १.२८६ )
**अतिबाल**–वि., असंपूर्णसर्वधातुः ( चचि., २(४).४१ )
**अतिबृंहित**–वि., अतिशयेन बृंहणं, अनपेक्षितमात्रया सेवनं येन कृतं सः; अतिबृंहणम् 'अतिस्थौल्यापचीमेहज्वरोदरभगंदरान् । काससंन्यासकृच्छ्रामकुष्ठादीनतिदारुणान्' करोति ( अहसू. १४.१९ )
**अतिभाष्य**–न., अत्यधिकभाषणम् ( चसि. १२.१३(१)
**अतिमहायोनि**–स्त्री., अतिविवृता योनिः, सान्निपातिकी योनिव्यापत्, महायोनिपर्यायः
**अतिमात्र**–वि., मात्रयाऽधिकम् ( अहसू. ८.४ )
**अतिमात्रक**–वि., संयोगात् स्वरूपात् प्रवृत्तेः वा आधिक्यम् ( अहसू. १.१९ )
**अतिमात्रप्रणीत**–वि., पुनः पुनः अतिशयेन वा प्रणिहितं ( नेत्रम् )
**अतिमात्राशन**–न., कर्म०, मात्रामतिक्रम्य आहारग्रहणम् ( चसू. २५.४० )
**अतिमुक्त**–पु., वनस्पति०, तिन्दुकः ( सुचि. ३१.५ )
आवन्तकः ( सुउ. ४५.१६ )
गुणाः—कषायः, शिशिरः, सुगन्धिः, श्रमहरः, हृद्यः, पित्तघ्नः, पित्तदाहज्वरोन्मादहिक्काच्छर्दिघ्नश्च
( रा. १०.२६१ )
**अतिमुक्तक**–पु., वनस्पति०, अतिमुक्तः (रा. १०.२६०)
माधवीलता, 'अचेतक' इति लोके
( ड, सुउ. ६०.३४ )
**–तैल**–न., तैल०, आवन्तकतैलम् (सुसू. ४५.१२०)
**अतिमुक्ता**–स्त्री., वनस्पति०, अतिमुक्तकः
( असंउ २ पृ. २७ )
**–तैल**–न., स्नेह०, ( ध. ६.१४१ )
तद्गुणाः—शीतं, गुरु, श्लेष्मलं, केश्यं, वातपित्तघ्नम्
**अतिमुस्तक**–पु., वनस्पति०, मुस्तकभेदः ( असंचि. २३ )
**अतिमोदा**–स्त्री., वनस्पति०, वनमल्लिका
( रा. १०.२३६ )
गणिकारी ( रा. परि. १०.३१ )
**अतियव**–पु., वनस्पति०, धान्य०, निःशूकः कृष्णारुणयवः ( सुसू. ४६.४३. )
**अतियोग**–पु., वाङ्मनःशरीराणामतिप्रवृत्तिः
( चसू. ११.३९ )

अतिप्रयोगः ( सुचि. ३४.२२ )
अतिमात्रस्वलक्षणता ( चसू. ११.४२ )
अतिमात्रं संयोगः ( चसू. ११.३७ )

**अतिरसा**–स्त्री., वनस्पति०, शतावरी ( चसू. ४.१० )
ऋद्धिः (चसू.४.१०) जलजं यष्टिमधु (चचि.१०.३५)
क्लीतनकं यष्टिमधुविशेषः ( रा. ६.१८४ )
रास्ना ( ध.१.२७० ) मूर्वा ( असंउ. १० पृ. ८४ )

**अतिरुहा**–स्त्री., वनस्पति०, मांसरोहिणी ( ध. ४.९४ )

**अतिरूढ**–वि., अतिवृद्धम् ( सुउ. ७.१६–१७ )

**अतिरोप्य**–पु., ये शालयः एकवारमुत्पाद्य द्विस्त्रिर्वा अन्यत्र रोप्यन्ते ते.
"रोप्यातिरोप्या लघवः शीघ्रपाका गुणोत्तराः ।
अदाहिनो दोषहरा बल्या मूत्रविवर्धनाः ॥"
( सुसू. ४६.१८ )

**अतिलङ्घन**–न., लङ्घनव्यापत्, अतिमात्रं लङ्घनम् अत्यपतर्पणम् । अतिलङ्घनाद् बलहानिः, पिपासा, मुखशोषः, तंद्रा, निद्रा, अनिद्रा वा भ्रमः क्लमः श्वासाद्युपद्रवाः कास–स्वरक्षय–च्छर्दि–हिक्कादयो भवन्ति ( सुउ., ३९.१०० )

**अतिलवण**–वि., लवणभूयिष्ठम् ( असंसू. १० )

**अतिलोल**–वि., अतिचपलः, अतिलोलुपः (सुउ.६०.१५)

**अतिवर्तन**–न., अतिप्रवृत्तिः, बहिर्गमनम्
( चसू. १७.७७ )
( परिव० ) कठिनीकरणम् 'पुरीषं चातिवर्तयेत्' उष्ट्रादिपुरीषवत् कठिनं कुर्यात् इति
( ड, सुउ. ५५.३८ )
( परिव० ) परित्यागः, 'लिङ्गानि कदाचिन्नातिवर्तते' न परित्यज्य याति इत्यर्थः
( ड. सुउ. ३९.८२ )

**अतिवाक्करण**–(वि.) अतिभाषमाणः ( चचि. ९.२१ )

**अतिविष**–न., वनस्पति०, अतिविषा ( चचि. ६.३८ )

**अतिविषम**–वि., एकं संवृतमपरं विस्तृतम् ( चइ. ३.६ )

**अतिविषा**–स्त्री., वनस्पति० ( चसू. २५.४० )
गुणाः—तिक्ता, कटुः, उष्णा, कटुपाका, पाचनी, दीपनी, कफपित्तघ्नी, ज्वरामाऽतिसारकासविषच्छर्दिघ्नी ( ध. १.१० )
श्यामाभेदः ( सुउ. ४०.३५ )
भङ्गुरा (अहसू.१५.३५)

**अतिवृत्तपुरीषता**–स्त्री., गुल्मपूर्वरूपलक्षण०, उदावर्तः
( चनि. ३.१५ )

**अतिवृत्ति**–स्त्री., अतिप्रवृत्तिः ( सुशा. २.१९ )

**अतिशयोपवर्णन**–न., अतिरिक्तस्याऽर्थस्य ख्यापनम्
( सुउ. ६५.३३ )

**अतिशीताशिन्**–वि., अतिशीतान्नभोजी (काखि. ५.३०)
दोषाः—शूलं, कफवाताभिवृद्धिः, ग्रहणीमार्दवं, कासो हिक्का च.

**अतिशुष्काशन**–न., शुष्कद्रव्यभूयिष्ठं भोजनम्
( काखि. ५.३६ )
दोषाः—विष्टम्भो मूत्रशकृद्विबन्धोऽतृप्तिश्च

**अतिश्लिष्ट**–वि., नेत्रप्रत्यासन्नम् ( चशा. १.१२३ )

**अतिसमय**–पु., बहुभिः मिलित्वा कृतो नियमः
( चसू. ८.२५ )

**अतिसरण**–न., रोगलक्षण०, अतीसारः ( र. १६.४१ )

**अतिसार**–पु., ( अतीसार ) रोग०,
निरुक्तिः—अतिसरणात् अतिसारः
( असंनि. ८.१७ )
अत्यन्तसरणात् अतीसारः ( सुउ. ४०.१ )
संप्राप्तिः—अब् धातुः अन्तरग्निं मन्दीकृत्य वातप्रेरितः सन् पुरीषयुक्तः अतीव अधःसरति ।
( सुउ ४०.६ )
उत्पत्तिकथा—आदिकाले खलु यज्ञेषु पशवः समालभनीया बभूवुः; नालम्भाय प्रक्रियन्तेस्म । ततो दक्षयज्ञं प्रत्यवरकालं मनोः पुत्राणां नरिष्यन्नाभागेक्ष्वाकुनृगशर्यात्यादीनां क्रतुषु पशूनामेवाभ्यनुज्ञानात् पशवः प्रोक्षणमवापुः । अतश्च प्रत्यवरकालं पृषध्रेण दीर्घसत्रेण यजता पशूनामलाभाद्गवामालम्भः प्रवर्तितः । तं दृष्ट्वा प्रव्यथिता भूतगणाः तेषां चोपयोगादुपाकृतानां गवां गौरवादौष्ण्यादसात्म्यत्वादशस्तोपयोगाच्चोपहताग्नीनामुपहतमनसां चातीसारः पूर्वमुत्पन्नः पृषध्रयज्ञे । ( चचि.१९.४ )
तथा चान्यत्र—
"दीर्घसत्रेण यजतः पृषध्रस्य महात्मनः । आलभ्याः पशवः क्षीणास्ततो गावः प्रकल्पिताः ॥
तासामुपकृतानां च गवामत्यर्थसेवनात् । असात्म्यत्वादथौष्ण्यत्वाद् गौरवाच्च विशेषतः ॥ अतिस्नेहाच्च संक्षीणो जाठराग्निस्तदा किल । अतीसारः पुरोत्पन्नो दोषधातुमलाश्रयः ॥ अथ तेनैव कल्पेन सम्प्रलेप महागदः" । संख्या–षड् अतीसाराः, वातज–पित्तज–कफज–संनिपातज–शोकज–आमजाः इति । पुनः द्विविधः सामः निरामश्च तथा सासृक् निरस्रश्च ।
( असंनि. ८.१४ )
पूर्वरूपाणि हृदय–नाभि–गुद–उदर–कुक्षीणां कुक्षि-

पु वा पीडा, गात्राणां ग्लानिः वैकल्यं वा वातस्य संनिरोधः, वर्चसः अप्रवृत्तिः, आध्मानम्, अन्नाविपाकश्च। ( सुउ. ४०.७-९ )

१ ) वातजः अतिसारः—पक्वं वा विबद्धम् अल्पाल्पं सशब्दं सशूलफेनपिच्छापरिकर्तिकं हृष्टरोमा विनिःश्वसन् शुष्कमुखः कट्यूरुत्रिकजानुपृष्ठपार्श्वशूली, भ्रष्टगुदः मुहुर्मुहुः विग्रथितम् उपवेश्यते पुरीषं वातात्। ( चचि. १९.५ )

२ ) पित्तजः अतिसारः—हारिद्रं हरितं नीलं कृष्णं रक्तपित्तोपहितमतिदुर्गन्धमतिसार्यते पुरीषं, तृष्णादाहस्वेदमूर्च्छाशूलब्रध्नसंतापपाकपरीत इति।
( चचि. १९.६ )

३ ) कफजः अतिसारः—स्निग्धं, श्वेतं, पिच्छिलं, तन्तुमदामं, गुरु, दुर्गन्धं, श्लेष्मोपहितम्, अनुबद्धशूलं, अल्पाल्पम्, अभीक्ष्णम् अतिसार्यते सप्रवाहिकं, गुरूदरगुदबस्तिवङ्क्षणदेशः, कृतेऽप्यकृतसंज्ञः, सलोमहर्षः, सोत्क्लेशः, निद्रालस्यपरीतः सदनोऽन्नद्वेषी चेति। ( चचि. १९.७ )

४ ) संनिपातजः अतिसारः—अस्मिन् पुरीषं वराहस्नेहमांसाम्बुसदृशं भवति। वाताद्यतीसारत्रयलक्षणयुक्तोऽयम् अतीसारः कृच्छ्रसाध्यो भवति। ( मा )

५ ) शोकजः अतिसारः—शोकजातिसारः वातपित्तातिसारसमलिङ्गः। ( असंनि. ८.१४ )

संप्राप्तिः—
तैस्तैर्भावैः शोचतोऽल्पाशनस्य जन्तोर्बाष्पोष्मा कोष्ठं गत्वा वह्निमाविश्य तस्य रक्तं क्षोभयेत्, तच्च रक्तमधस्तात्काकणन्तीप्रकाशं ( गुञ्जाफलसंकाशं ) विड्विमिश्रं ह्यविड्वा निर्गन्धं गन्धवद्वा निर्गच्छेत्, अयं शोकोत्पन्नोऽतिसारो दुश्चिकित्स्यो वैद्यैः कष्टसाध्य इति प्रदिष्टः। ( सुउ. ४०.९३-९४ मा. )

भयजः अतिसारः—भयेन क्षोभिते चित्ते सपित्ते द्रावयेच्छकृत्। वायुस्ततोऽतिसार्येत क्षिप्रमुष्णं द्रवं प्लवम्। वातपित्तसमं लिङ्गैराहुः। ( असं. ८.१३ )

६ ) आमजः अतिसारः—आमाजीर्णोपद्रुताः संप्रदुष्टा दोषाः कोष्ठं क्षोभयन्तः सन्तः कृच्छ्रात् नानावर्णं न एकशः, बहुशः, सभक्तं ससिक्थं सारयन्ति
( सुउ. ४०.१६ )

अतीसारे शकृद्वर्णाः—
हारिद्रः, हरितः, नीलः, मांजिष्ठः, मांसधावनाभः, रक्तः, कृष्णः, श्वेतः, वराहमेदःसदृशः इत्येवमादयः।
( चचि. १९.९ )

अतीसारोपद्रवाः—श्वासः, शूलं, पिपासा, क्षीणत्वं, ज्वरनिपीडितत्वम्। ( सुसू. ३३.१९ )
शोफ—शूल—ज्वर—तृष्णा—श्वास—कास—अरोचक—च्छर्दि—हिक्का—मूर्च्छादयः अतीसारोपसर्गाः
( सुउ. ४०.२०-२१ )

असाध्यलक्षणानि—यस्य पुरीषं घृत—मेदो—वेसवाराम्बु तैलादिवत्, मज्जासदृशं, क्षीरतुल्यं, मधुतुल्यं, मञ्जिष्ठोपमं, मस्तुलुंगसदृशम्, आमगंधिकं, शीतम्, उष्णं, कुणपगन्धिकं, सौवीराञ्जनसदृशं, नीलादिरेखायुतं, मयूरपिच्छासदृशैः संव्याप्तम्, पूयतुल्यं, पङ्काभं च अस्ति।
उत्साहादिरहितः असंवृतगुदः पक्वगुदत्वे सति बहिर्निर्गतोष्मकः शोफाद्युपद्रवैर्युक्तः अजितेन्द्रियश्च न चिकित्स्यः। ( सुउ. ४०.१९ )

**अतिसारघ्नी**—स्त्री., वनस्पति० अतिविषा ( ध. १.११ )
**अतिसारिकी**—वि., अतिसारविकारशमनी ( चवि. ५.२८ )
**अतिसृति**—स्त्री., रोग०, अतीसारः ( र. १६.६१ )
**अतिसौरभ**—पु., आम्रः ( ध. ५.३ )
**अतिसौहित्य**—न., अतितृप्तिः, तृप्त्यतिक्रमः
( असंसू. ११.७ ) ( चसू. ५.७ )
**अतिसंवृता**—स्त्री., योनिव्यापत्०, अतिसंकुचितमुखी, सूचीवक्त्रा ( सुउ. ३८.१९ )
**अतिस्थौल्य**—न., विंशतिश्लेष्मविकारेषु एकः
( चसू. २०.१७ )
अतिस्थूलता, अयं मेदोदोषजः ( सुसू. २४.९ )
**अतिस्वप्न**—पु., निद्राधिक्यम् ( चसू. २६.४३ (१)
**अतिस्वेद**—पु., रोगलक्षण०, अतिशयेन स्वेदः, चत्वारिंशत्पित्तविकारेषु एकः ( चसू. २०.१४ )
**अतिस्वेदन**—न., रोगलक्षण०, स्वेदस्य अत्यधिकत्वम्
( चनि. ५.७ )

**अतीत**—वि., पतित ( सुशा. १०.५७ )
**अतीतकाल**—न., निग्रहस्थानविशेषः, अतीतकालं नाम यत् पूर्वं वाच्यं तत् पश्चाद् उच्यते।
( चवि. ८.५८ )
व्यतिक्रान्तकालम् ( सुचि. २४.९८ )
**अतीतवासस्**—न., जीर्णवस्त्रम् ( सुचि. २४.१०१ )
**अतीतागमन**—न., गतकाले जातस्य पुनरागमनम्
( चशा. १.८८ )
**अतीतावेक्षण**—न., तन्त्रयुक्तिविशेषः, अतीतावेक्षणं नाम यत् अतीतमेव उच्यते। ( चसि. १२.४४ )
**अतीन्द्रिय**—न., चक्षुरादिभ्यः इन्द्रियेभ्यः सूक्ष्मतरं, दुरवबोधम्, अतिक्रान्तम् इन्द्रियम् अतीन्द्रियम्.

इन्द्रियं चक्षुरादिकम् अतिक्रम्य वर्तते इति वा। ( चसू. ८.४ )

**अतीसार**–पु., अतिसारः (सुउ. ४०.६)

**अतुल्यगोत्र**–वि., असगोत्रः ( चशा. २.३ )

**अतुल्यगोत्रीय**–पु., अध्याय० ( चशा. २.१ )

**अतुल्यवीर्य**–वि., विषमवीर्यः ( चक. १२.५६ )

**अतृप्ति**–स्त्री., रोग० चत्वारिंशत्पित्तविकारेषु एकः ( चसू.२०.१४ )

रोगलक्षण० ( असंसू. २०.१४ )

**अतैल**–न., सर्षपस्नेहादि ( चवि. ८.१५० )

**अत्यग्नि**–पु., रोग०, अतिप्रदीप्तः अग्निः, तीक्ष्णाग्निः ( चसू. २७.२१९ )

**अत्यन्तशोणित**–न., खनिजद्रव्य०, सुवर्णगैरिकम् ( ध. ३.१७० )

**अत्यम्ल**–न., वनस्पति०, वृक्षाम्लम् ( रा. ६.१४४ )

**–पर्णी**–स्त्री., वनस्पति०, गुणाः–अम्ला, तीक्ष्णा, दीपनी, रुच्या, वातश्लेष्मघ्नी, प्लीह–शूल–गुल्मघ्नी च ( रा. परिशिष्ट पृ. ३३२ )

**अत्यम्ला**–स्त्री., वनस्पति०, वनबीजपूरकः ( रा. ११.३३ )

**अत्यय**–पु., व्यापत्, विनाशः ( सुचि. ३७.८० ) ( सुचि. ३३.४५ )

**अत्यर्क**–पु., वनस्पति०, राजार्कः, अर्कभेदः, शुक्लार्कः ( रा. १०.२९ )

**अत्यर्थ**–वि., अत्यधिकम् ( चइ. ७.३० )

**–रसिक**–वि., अतिस्वादुरसयुक्तः ( चइ. २.२२ )

**–विवृत**–वि., अतिशयेन निर्गता ( चइ. ८.११ )

**–संवृत**–वि., अत्यधिकान्तःप्रविष्टा ( चइ. ८.११ )

**अत्यादान**–न., अतिप्रमाणेन ग्रहणम् ( चशा. १.१२४ )

अतिच्छेदनम् ( सुचि. २२.५१ )

**अत्यानन्दा**–स्त्री., योनिरोग०, अतिविषयसेवनेनापि तृप्तिं न गच्छति इति स्वरूपम् ( सुउ. ३८.१५ )

**अत्यासन**–न., अतिमात्रम् आसनम् ( चसि. १२.१४(४)

**अत्युग्र**–न., वनस्पति०, हिङ्गु ( ध. २.३६ )

वि.,–कर्णकर्कशः, श्रुतिपरुषः ( चशा. १.११८ )

**–गन्धा**–स्त्री., वनस्पति०, गिरिकर्णी ( ध. ४.८५ )

**अत्युत्पिण्डित**–वि., अत्यर्थनिर्गतम् ( चइं. ३.६ )

**अत्युल्बणानिल**–वि., अतिप्रबलवाता ( चसू. १३.६८ )

**अत्युष्णगात्र**–वि., रोगलक्षण०, अत्युष्णावयवः ( सुउ. ३९.२४ )

**अत्यूह**–पु., प्रतुदपक्षिविशेषः, डाहुकः, दात्यूहः इति पाठान्तरम्। ( चसू. २७.५० )

**अत्रि**–पु., आयुर्वेदज्ञः महर्षि० ( चचि. १ ( ४ ) ३ )

**–ज**–पु., अत्रिपुत्रः ( चचि. १२.४ )

**–पुत्र**–पु., आत्रेयः पुनर्वसुः ( अहृसू. १.३ )

**अत्र्यात्मज**–पु., अत्रिपुत्रः ( चचि· १२.३ )

**अथ**–अ., च, समुच्चये ( चचि. १२.११ )

**अथर्वन्**–पु., अथर्ववेदः ( चसू. ३०.२० )

अथर्ववेदविद् ( सुसू. ३४,६ )

**अथर्वणकृत**–वि., अथर्ववेदप्रणीताभिचारिक–मन्त्रैः कृतो मारणात्मको रोगविशेषः । 'दैवबलप्रवृत्ता ये देवद्रोहादभिशस्तका अथर्वणकृता उपसर्गजाश्च; तेऽपि द्विविधाः—विद्युदशनिकृताः पिशाचादिकृताश्च, पुनश्च द्विविधाः-संसर्गजा आकस्मिकाश्च' ( सुसू. २४.७ )

**अथर्ववेद**–पु., ऋग्वेदादिचतुर्षु वेदेषु एकः ( सुसू. १.६ ) 'इह खलु आयुर्वेदो नाम उपाङ्गम् अथर्ववेदस्य'

**अदभ्र**–पु., श्लेष्मप्रकोपणः सौम्यकीटविशेषः ( असंउ. ४३ पृ. ३५१ )

**अदिति**–स्त्री., देवता०, सूर्यमाता ( असंशा. १२.८ )

**अदृढसौहृद**–वि., शिथिलस्नेहः ( सुशा. ४.६५ )

**अदृढस्नेहकोष्ठ**–वि., निर्बलस्निग्धकोष्ठः; स्नेहनं स्नेहः, दृढः स्नेहकोष्ठो यस्य स दृढस्नेहकोष्ठः । न दृढस्नेहकोष्ठोऽदृढस्नेहकोष्ठः इति (अरुण. अहृसू. १९.३७)

**अदृष्ट**–न., सर्वजनसामान्याधर्मः; विदृष्टम् ( सुसू. ६.१६ ) ( सुशा. ८.३ )

**–कारित**–वि., अदृष्टेन सर्वजनसामान्येनाधर्मेण कारितं, कर्तुं प्रयोजितम् ( ड. सुसू. ६.१६ )

**–शोणिता**–वि., रोगलक्षण, शोणितदर्शनं विनाऽपि शूलं भवति यस्याः सा ( असंशा. ४.५ )

**–सूर्य**–वि., ईषद् दृष्टः सूर्यो यस्मिन तत् ( अहृसू. ३.२४ )

**–हेतु**–पु., प्राक्तनकर्महेतुः, अनाकलित–हेतुः ( सुसू. २१.१० )

**अदृष्टार्तवा**–वि., ऋतुकालेऽदृष्टमार्तवं यस्याः सा ( सुशा. ३.६ )

**अदृष्टार्थ**–वि., प्रमाणान्तरेण यस्य अर्थस्योपलब्धिः न भवति सः ( चवि. ८.३८ )

**अदृष्टिपूतना** ( अन्धपूतना )–स्त्री., स्त्रीशरीरधारी ग्रहविशेषः ( असंउ. ३ )

**अदेशिक** ( अदैष्टिक )–वि., वैदेशिकः, अनुत्तमस्थाननिवासी; दुर्दैवयुक्तः ( र. ७.३० )

**अद्धा**–अ., अवितथम् ( चइ. ४.४ )

अद्भुतरूप–न,. न कदापि यद्भवति तदद्भुतम्, आश्चर्यम्, आश्चर्यकारिरूपम् ( च. शा. ६.२७ )
अद्य–न., भक्ताद्यन्नम् ( सुसू. ४६.४९४ )
अद्यतन–न., वधस्थानम् ( सुसू. २.१० )
अद्रि–पु., पर्वतः (ध. ३.३४) (रा. २.३५)
–कर्णिका–स्त्री. वनस्पति०, गिरिकर्णिका (र. २९.३४)
–कर्णी–स्त्री., वनस्पति०, गिरिकर्णी ( रा. ३.१२३ )
–ज–न., महारसविशेषः शिलाजतु ( र. २.१ )
–( जा )–स्त्री., सैंहली पिप्पली ( रा. ६.१२० )
–जतु–न., शिलाजतु ( चचि. १६.१८ )
अधरगुद–न., शारीर०, येन पुरीषं निष्क्रामति तत्, पञ्चदशकोष्ठाङ्गेष्वेकम् ( चशा. ७.१० )
अधरवासस्–न., शरीरस्याधो नाभेर्धारितं वस्त्रम् ( असंसू. ३.९३ )
अधरौष्ठ–पु., अधस्तनः ओष्ठः ( सुसू. ३१.५ )
अधर्म–पु., पापम् ( सुशा. १.१६ )
कायवाङ्मनसां दुश्चरितम् ( सुसू. ६.१९ )
पूर्वजन्मकृतं पापम् ( सुशा. ३.३६ )
ऐहिकः अधर्मः ( चवि. ३.२० )
अधस्–अव्य., अधस्तात् ( सुउ. ३९.२११ )
अल्पम्, अर्वाक् ( सूचि. ३७.१०२ )
( अधः ) काय–पु., न., शरीरस्याधोभागः ( सुशा. ६.२६ )
–कायशोष–पु., लक्षण०, सक्थिशाखावयवस्य शोषः, शुष्कत्वम्,–नितम्बमर्मविद्धस्य लक्षणम् ( सुशा. ६.२६ )
–पात–पु., पारदसंस्कार०, अधःपातनम् ( र. ९.९ )
–पातन–न., पारद संस्कार० ( र. २.३४ )
–पातनकोष्ठी–स्त्री., यन्त्र,० अङ्गारकोष्ठीभेदः ( र. २.३४ )
–पुष्पी–स्त्री., वनस्पति० गोजिह्वा ( रा. ६.१८० )
–शय–वि., अधोमुखशायी ( सुउ. २७.१३ ङ )
–शल्य–पु., वनस्पति० अपामार्गः ( ध. १.२६० )
–शोधन–परिव० न., अधःशोधनं नाम विरेचना-स्थापनम् ( सुचि. २.८६ )
–स्रंसिन्–वि., विष्यन्दनशीलम् ( चसू. २६.४३.(३)
( अधो ) गतिस्वभाव–वि., अर्वाग्गमनशीलम् ( सुसू. ४१.४ (१ )
–गुडा–स्त्री., वनस्पति०, वृद्धादारक ( चसू. १.७७ )
–भक्त–वि., भैषज्यकाल० भक्तस्यानन्तरम् ( सुउ. ६४.७० ) ( काखिल. ३.४७. )
व्यानाख्ये विगुणे प्रातराशस्यान्ते, उदानाख्ये विगुणे सायमाशस्यान्ते, तत् पूर्वकायस्य बलाधानार्थं तद्गतेषु व्याधिषु श्लैष्मिकेषु च प्रशमाय स्थूलीकरणार्थं च । ( असंसू. २३. )
–भाग–वि., अधो गुदेन दोषनिर्हरणं भजत इति ( चक. १.४ )
–भागहर–वि., विरेचनम् ( सुसू. ३९.४ )
–भागिक–वि., विरेचनद्रव्यम् ( सुचि. ३४.६ )
–भाज–वि., निम्नगतिमत् ( चसू. २६.४१ )
–मुखा–स्त्री., वनस्पति० गोजिह्वा ( रा. ६.१८० )
अधारणत्व–न., धारणाशक्तेरभावः ( चवि. ८.१८ )
अधिक–न. वि., वाक्यदोषप्रकारः अधिकं नाम यन्न्यून-विपरीतम्, यद्वाऽऽयुर्वेदे भाष्यमाणे बार्हस्पत्यमौ-शनसमन्यद्वा यत्किंचिदप्रतिसंबद्धार्थमुच्यते यद्वा पुनः प्रतिसंबद्धार्थमपि द्विरभिधीयते तत्पुनरुक्त-दोषत्वादधिकम् ( चवि. ८.५४ )
वि., अतिरिक्तः ( सुनि. १६.२४ )
–दन्त–पु., दन्तमूलगतरोग० ( सुचि. २२.२३ )
'अधिदन्त' द्रष्टव्यः
–दन्तता–स्त्री., दन्तानां संख्याधिक्यम् ( कासू. २०.६ )
–मांसज–अर्मन्–न., नेत्रशुक्लगतरोग०, अधिमांसार्म ( सुउ. ४.६ )
अधिकण्टक–पु., वनस्पति०, धन्वयासः ( ध. १.२२ )
अधिकरण–न., आधारः ( सुसू. ३५.३५ ) आधार.
तन्त्रयुक्ति०, यमर्थमधिकृत्योच्यते तदधिकरणम् ( चसि. १२.४१ ) ( सुउ. ६२.८ )
स्थानम्, अंगम्, आशयो वा द्रव्याणि यत्र कर्म कुर्वन्ति तदधिकरणम् (चसू. २६.१३; सुसू. ४१.५)
सिद्धान्त–पु., यस्मिन्नधिकरणे प्रस्तूयमानेऽन्यान्य-प्यधिकरणानि सिद्धानि भवन्ति ( चवि. ८.३७ )
अधिकाङ्ग–वि., प्राकृतापेक्षयाऽधिकेनाङ्गेन युक्तः ( असंशा. २.५४ )
अधिकार–पु., अधिकरणम्, विषयः ( चवि. ७.८ )
योग्यत्वम् ( सुसू. २६.७ )
अधिजिह्व–पु., जिह्वागतरोग० जिह्वायाः प्रबन्धनेऽधस्ता-ज्जिह्वाङ्ग (ग्र) तुल्यः शोफः सहाङ्कुरः कफपित्त-रक्तैर्लालोषास्तम्भयुतः खरस्पर्शयुतो रुक्कण्डूभ्यां युतः वाक्याहारविघातं करोति ( असंउ २५ )
कण्ठगतरोग० ( सुनि. १६.५२ )
अधिजिह्विका–स्त्री., रोग०, अधिजिह्वसंज्ञः ( चचि. १२.७७ )

**अधिदन्त**–पु., अस्थिप्रदोषजदन्तमूलगतरोग० ( चसू. २८.१६ ) ( सुनि. १६.२४ )
अधिको दन्तः सोऽधिदन्ताख्यो रोगः तस्यैव वर्धनः, वर्धनकः, खलिवर्धनः, खलवर्द्धन इति पर्यायाः ।
तत्र अधिदन्ते जायमाने रुग् जायते जातमात्रे सा प्रशाम्यति । ( मानि. असंउ. २५ )

**अधिदैवत**–न., अधिष्ठात्री देवता, यथा–बुद्धेर्ब्रह्मा, अहंकारस्य ईश्वरः, मनसश्चन्द्रमाः, दिशः श्रोत्रस्य, त्वचो वायुः, सूर्यश्चक्षुषः, रसनस्यापः, पृथिवी घ्राणस्य, वाचोऽग्निः, हस्तयोरिन्द्रः, पादयोर्विष्णुः, पायोर्मित्रः, प्रजापतिरुपस्थस्येति । ( सुशा. १.७ )

**अधिपति**–पु., ग्रीवां प्रत्यूर्ध्वं सद्यःप्राणहरं संधिमर्म । ( सुशा. ६.६, ७, ९ )
मस्तकाभ्यन्तरोपरिष्टात् सिरासन्धिः; संनिपातो रोमावर्तोऽधिपतिः; तत्रापि सद्योमरणम् । संख्याया एकमर्धाङ्गुलप्रमाणं च तत् ( सुशा. ६.२७ )

**अधिभूत**–न., बुध्द्यहंकारमनःश्रोत्रादिज्ञानेन्द्रियपञ्चक-वागादिकर्मेन्द्रियपञ्चकानां विषयाः ( सुशा. १.७ )

**अधिमन्थ**–पु., नेत्ररोग० ( सुसू. १४.३० )
अभिष्यन्दस्यैव अचिकित्सितस्य तीव्रं स्वरूपमधिमन्थः ( सुउ. ६.११ )
ऊर्ध्वजत्रुगानामङ्गानां चातिमन्थनादधिमन्थः ( असंउ. १९ )
सामान्यलक्षणम्–नेत्रमुत्पाट्यत इव, अत्यर्थं निर्मथ्यत इव, शिरसोऽर्धं च निर्मथ्यत इव वेदना ( सुउ. ६.११ )
सर्वेऽधिमन्था यथास्वमभिष्यन्देभ्योऽधिकवेदना भवन्ति, शङ्खदन्तकपालेषु अतिरुकराश्च ( असंउ. १८ )
अधिमन्थाश्चत्वारः वात–पित्त–कफ–रक्तभेदेन ( सुउ. ६.३ )
वातजाधिमन्थलक्षणम्–नेत्रस्योत्पाटनं, मन्थनं, संघर्ष–तोद–निर्भेद–मांससंरब्धाविलाकुञ्चनं–आस्फोटन–आध्मान–वेपथु–व्यधनेत्यादिलक्षणानि शिरसोऽर्धभागे भवन्ति ( सुउ. ६.१२–१३ )
कर्णयोर्नादनं भ्रमः ललाटाक्षिभ्रुवादयः अरण्या मथ्यन्त इव ( असंउ. १८ )
पित्तजाधिमन्थ लक्षणम्–नेत्रं रक्तराजिचितं, स्रावि, वह्निनेवावदह्यते, दाहि, यकृत्पिण्डोपमं, क्षारेणाक्तं यथा क्षतं तद्वत्, प्रपक्वोच्छूनवर्त्मान्तं, सस्वेदं, पीतदर्शनं, मूर्च्छाशिरोदाहयुतं च भवति ( सुउ. ६.१४–१५ ) ( असंउ. १८ )
कफजाधिमन्थलक्षणम्–नातिसंरब्धं ( नातिक्षुब्धं ) नेत्रं, स्रावः, कण्डूः, शैत्यं, गौरवं, पैच्छिल्यं, दूषिका, हर्षणं, भवति दुःखरूपं च पश्यति पांशुपूर्णमिवाविलं नासाध्मानं, शिरोदुःखं च जायते ( सुउ. ६.१६–१७ )
कृष्णमण्डलं नतं शुक्लमण्डलमुन्नतम् ( असंउ. १८ )
रक्तजाधिमन्थलक्षणम्–बन्धुजीवप्रतीकाशं, स्पर्शनाक्षमं, ताम्यति, रक्तास्रावः, निस्तोदो भवति, अग्निनिभा दिशः पश्यति, कृष्णभागो रक्तमग्नोऽरिष्टवच्च लक्ष्यते, दीप्तरक्तपर्यन्तमक्षि इति ( सुउ. ६.१८–१९ )

**अधिमांस**–न., रोग०, अधिरूढं मांसम्, बहिर्मार्गे त्वङ्मांसस्थितो मांसप्रदोषजोऽयं रोगः ( चसू. ११.४९ ) ( सुसू. २४.९ )
पु., दन्तमूलगतरोगः, अधिमांसकपर्यायः ( सुनि., १६.१३ ) ( विशेषार्थेऽधिमांसको द्र० )
**–विकार**–पु., अधिमांसविशेषः, अर्शोरोगः ( चचि. १४.५ )
शिश्नापत्यपथगलतालुमुखनासिकाकर्णाक्षिवर्त्मत्वचादिगतानामधिमांसानां 'अर्शांसि' इति संज्ञा तन्त्रान्तरे । ( चचि. ५.६ )

**अधिमांसक**–पु., दन्तमूलगतरोगः ( अहृउ. २१.२७ ) ( सुनि. १६.२६ )
कफदोषेण हानव्ये पश्चिमदन्तमूलमांसे उत्पन्नोऽयं व्याधिर्महाशोथयुक्तो महारुजो लालास्रावी कीलवद्धनुकर्णरुजाकरो भवति, भोजनं च प्रतिहन्ति । छेद्योऽयं रोगः ( सुचि. २२.२४ ) ( सुसू. २५.५ )

**अधिमांसार्मन्**–न., नेत्रशुक्लगतरोग०, ( सुउ. ४.६ )
शुष्कासृक्पिण्डवच्छ्यावं बहलं पृथु यन्मांसं सिते नेत्रभागे जायते तत् ( असंउ. १३ )

**अधिष्ठान**–न., स्थानम् ( चशा. ७.७ ) आश्रयः ( सुसू. १.२२ ) दूष्यम् ( चचि. १४.६ )

**अधृति**–स्त्री., असंतोषः ( सुउ. ४५.९ )

**अधृष्य**–वि., आक्रमितुमशक्यम् ( काधूपकल्प., )

**अधौत**–वि., अशुद्धम्, अक्रियमाणशौचम् ( सुनि. १३.५७ )

**अध्यण्डा**–स्त्री.,वनस्पति०, शूकशिम्बी, कपिकच्छुः, सौरपाका ( चचि. ३.२६७ )

**अध्यमाता**–स्त्री., वनस्पति०, त्रिवृच्छ्यामा ( रा. ६.३६९ )

**अध्यर्ध**–वि., अधिकार्धम् ( सुचि. ९.१८ )

–धार–न., शस्त्र०, तद् ह्रस्ववक्त्रं छेदने भेदने च योज्यम् ( अहसू. २६.७ )

–मास–पु., पक्षत्रयम्, सार्धमासः ( सुशा. १०.१६ )

**अध्यर्बुद**–न., रोग०, अर्बुदभेदः, अर्बुदोपरिजातमर्बुदम् ( सुनि. ११.२० )

**अध्यवसान**–न., निश्चयः ( चवि. ४.५ )

**अध्यवसाय**–पु., बुद्धेर्व्यापारः ( सुशा. १.१७ )

**अध्यशन**–न., अशनप्रकार० पूर्वभक्तेऽपरिणते भोजनम् ( काखि. ६.५९ चचि. १५.२३६ )

अजीर्णे भोजनम् ( सुसू. ४६.५०९ )

ग्रहणीदूषणानामग्र्यम् ( चसू. २५.४० )

**अध्यस्थि**–न., रोग०, अस्थनि यदधिकमस्थि तत्, अस्थिवृद्धिदोषेण जायमानो रोगः ( चसू. २८.१६ ) ( सुसू. २४.९ )

**अध्यात्म**–वि., आत्मानमधिकृत्य प्रवर्तमानम् ( चसू. ८.१३ )

आत्मन्यधि अध्यात्मम्, आत्मशब्दोऽत्र स्वशरीरवचनः ( सुशा. १.७ )

तत्त्वम्–न., ( चसू. २५.२८ ) तत्व.

–लोक–पु., सर्वप्राणिजनः ( चसू. २६.४४ ) चेतनलोकः ( चचि. २६.२९२ )

**अध्याय**–पु., प्रकरणम्, अधिकृत्यार्थमध्यायनामसंज्ञा प्रतिष्ठिता ( चसू. ३०.७० )

**अध्रुष**–पु., तालुगतरोग०, तालुदेशे लोहितः स्तब्धः रुग्ज्वराढ्यः शोफः ( सुनि. १६.४२ )

**अध्वन्**–पु., मार्गः, मार्गाक्रमणम्, प्रभूतं पर्यटनम् ( सुउ. ५८.२२ )

दीर्घमार्गाटनम् ( सुउ. ४१.१६ )

**( अध्व– ) कर्शित**–वि., अध्वगमनेन कर्शितः ( चसू. १३.४७ )

–गमन–न., पादाभ्यां प्रदीर्घमार्गगमनम् ( सुनि. ८.३ )

–प्रशोष–पु.,रोग०, शोषभेदः, अध्वा दीर्घमार्गाटनं, तेन जातो धातुक्षयः ( सुउ. ४१.२१ ) तेन स्रस्ताङ्गता संसृष्टपरुषच्छविः प्रसुप्तगात्रावयवत्वं शुष्कक्लोमगलाननत्वं भवति। ( सुउ. ४१.२१ )

–हत–वि., अध्वना हतः, श्रान्तः ( चसि. २.८ )

**अध्वर**–पु., यागः ( सुचि. २९.१० )

**अनक्ष**–वि., इंद्रियरहितम् ( सुशा. ३.१८ )

**अनङ्ग**–पु., कामः.

न, मैथुनायोग्यमङ्गम्.

अङ्ग–जघनं, नाङ्गं–अनङ्गमङ्गसदृशं जघनकार्यनिर्वर्तनयोग्यं मुखादिकमुच्यते। केचिन्मुखेन तत् कुर्वन्ति, तन्निषिध्यते। ( अहसू. ७.७१ अरुण )

अध्यात्माधिभूताधिदैवतवर्णनम्–हा अध्यात्म अधिभूत व अधिदैवताचा तक्ता.

| अध्यात्मम् | अतधिभूम् | अधिदैवतम्। |
|---|---|---|
| | | ब्रह्मा |
| १ ) बुद्धिः | बोद्धव्यम् | ईश्वरः, रुद्रः |
| २ ) अहंकारः | अहंकर्तव्यम् | चन्द्रमाः |
| ३ ) मनः | मन्तव्यम् | दिशः |
| ४ ) श्रोत्रम् | श्रोतव्यम् | वायुः |
| ५ ) त्वचा ( त्वक् ) | स्पर्शनीयम् | सूर्यः |
| ६ ) चक्षुः | दृश्यम् | आपः, वरुणः |
| ७ ) रसनम् | रसनीयम् | पृथिवी, भूमिः. |
| ८ ) घ्राणम् | घ्रातव्यम् | अग्निः |
| ९ ) वाचा ( वाक् ) | वक्तव्यम् | इन्द्रः |
| १० ) हस्तौ | आदातव्यम् | विष्णुः |
| ११ ) पादौ | गन्तव्यम् | मित्रः |
| १२ ) पायुः | विसर्जनीयम् | प्रजापतिः। |
| १३ ) उपस्थम् | आनन्दनीयम् | |

**अनङ्गदीपन**–वि., कामोत्तेजकम् ( सुसू. ६.२६ )
**अनध्यक्ष**–वि., यस्याः पालनकर्ता समीपस्थो नास्ति सा स्त्री ( चवि. ८.१३ )
**अननुयोग**–पु., अनुयोगाभावः, 'अनुयोज्यस्याननुयोगः' इति निग्रहस्थानविशेषः, इदं गौतमनये पर्यनुयोज्योपेक्षणं नाम निग्रहस्थानम् ( चवि. ८.६५ )
**अननुयोज्य**–न., वादे निग्रहस्थानविशेषः अनुयोज्यस्य विपर्ययः ( चवि. ८.५१ )
**अनन्त**–वि., अविनाशी ( सुशा. १.९ )
पु., वनस्पति०, धन्वयासः ( ध. १.२२ पृ. ११ )
दिव्यसर्प०, ( असंउ. ४१ पृ. ३३० )
न., खनिज० अभ्रकम् ( रा. १३,२ )
खनिज०, सुवर्णम् ( सुशा. १०.१३ )
**–चूर्ण**–न., सुवर्णचूर्णम् ( सुशा. १०.१३ )
**–वात**–पु., शिरोरोग०, त्रिदोषात्मको रोगः अस्मिन्मन्याघाटयोरतितीव्रा रुजः अक्षिभ्रुवशङ्खदेशेषु दोषाणामवस्थितिः गण्डपार्श्वेषु कम्पः हनुग्रहः, नयनामयाश्च भवन्ति ( चसि. ९.८६ ) ( सुउ. २५.१३,१४ )
**अनन्ता**–स्त्री., वनस्पति०, उत्पलसारिवा, दुग्धगर्भावल्ली ( सुचि. ३.६१ )
दूर्वा ( सुशा. १०.६० )
अनन्तमूलम् ( चसू. ४.१५ )
धन्वयासः ( सुउ. ३९.२०८ )
तृण०, श्वेतदूर्वा ( ध. ४.१४४ )
अग्निमन्थः ( रा. ९.१३६ )
नागवल्ली ( ध. ३.१ )
**अनन्न**–न., निरन्नम्, औषधसेवनकालः ( अहृसू. १३.३७ )
अनन्नं नाम केवलमौषधं ह्यस्तनेऽन्ने जीर्णे प्रातः उपयुज्यते, तस्मिंश्च जीर्णे पुनराहारः। निरन्नोपयोगात्तदतिवीर्यं भवति। तस्माद् बलवत्सु रोगिषु कफोद्रेके च तत् प्रशस्तम्। बालवृद्धवनितासुकुमारेषु तद्ग्लानिकरं भवति। ( सुउ.६४.६७ असंसू. २३ ) अभक्तम् इति पर्यायः।
**अनन्नाभिलाष**–पु., रोगलक्षण० अनन्नाभिनन्दनम् ( चनि. १.३३ )
कफजविकार०, मधुररसातियोगोद्भवो विकारः। ( चसू. २६.४३ ( १ )
**अनपत्य**–वि., क्षीणशुक्रः ( र. १२.७ )
**अनपर**–वि., अनन्यः, अपरशब्दः परवाचकः, ' ( प्रकृतिपुरुषौ ) 'उभावपि नित्यौ उभावप्यनपरौ' न विद्यतेऽपरो याभ्यां तावनपरौ यतस्तावेव प्रकृतिपुरुषौ महदादिभ्यः परौ। ( सुशा. १.९ )
**अनपवादप्रति ( ती ) कार**–वि., योऽपवादस्य नाम निन्दायाः प्रतिकारं न करोति ( चवि. ८.१३ )
**अनभिषङ्ग**–पु., फलनिरपेक्षया बुद्ध्या श्रेयःकर्मकरणम्, सात्त्विकगुणविशेषः ( सुशा. १.१८ )
**अनभिष्यन्दि**–वि., व्याधीनामनुत्पादकम्, सद्यो व्याधिकरणीयामवस्थां स्यन्दयत्यापादयति यद् द्रव्यं तदभिष्यन्दि, स्रोतसामुपलेपकारि वा, तद् विपरीतमनभिष्यन्दि ( सुचि. ३२.२९ ( ड. )
दोषान् व्याधीन् झटिति यदभिष्यन्दते उत्पादयति तदभिष्यन्दि, विपर्ययेणानभिष्यन्दि। ( सुसू. ४५.२५ ( ड. )
**अनर्थ**–वि., अर्थरहितम् ( चशा. ३.१५ )
**अनर्थक**–न., वाक्यदोष० अर्थहीनमक्षरग्राममात्रम् ( चवि. ८.५४ )
**अनर्थान्तर**–न., एकार्थः, समानार्थः ( चवि. ६.४ )
**अनल**–पु., तेजः, अग्निः ( सुशा. १.४ )
खनिज०, स्वर्णम् ( र. ८.१७ )
वनस्पति० चित्रकः ( ध. २.८१ )
वनस्पति०, भल्लातकः ( रा. ११.२० )
**–दल**–न., रसभस्मना बद्धरसेनान्येन वा लोहेन किमपि मृतं लोहं पीतवर्णं प्रजायते तत्, स्वर्णदलमित्यपरपर्यायः ( र. ८.१७ )
**–प्रभा**–स्त्री., वनस्पति०, ज्योतिष्मती. ( रा. ३.३९५ )
**–भ्रंश**–पु., रोगलक्षण० अग्निमान्द्यम् ( र. १२.१२७ )
**–साद**–पु., लक्षण०, अग्निमान्द्यम् ( सुसू. ४६.२४५ )
**अनलङ्कारिक**–वि., शरीरविभूषणार्थे यन्न प्रयुज्यते ( चवि. ७.७ )
**अनवद्य**–वि., अगर्ह्यः, निर्दोषः ( अहृउ. ४०.४१ )
**अनवपतितशब्द**–वि., अग्राम्यशब्दम् ( चवि., ८.३ )
**अनवबद्ध**–वि., त्वङ्मांसादिधातुषु अनासक्तम्, शल्यप्रकारः ( सुसू. २७.३ )
**अनवस्थान**–न., रोगलक्षण० चाञ्चल्यम्, अस्थिरत्वम् चलचित्तत्वम् ( चनि. १.२१ )
**अनवस्थायी**–वि., चञ्चलचित्तः, अस्थिरमतिः ( सुशा. ४.९० )
**अनवस्थित**–वि., स्थानान्तरप्राप्तम् ( सुउ. ३९.१०३ )
**–चित्तत्व**–न., चित्तस्यानवस्थितिः ( चसू. २०.११ )
**–सत्त्व**–वि., चञ्चलचित्तः ( असंसू. ८.१९ )

**अनवस्थितात्मन्**–वि., चञ्चलचित्तः ( सुशा. ४.६५ )
**अनवहितत्व**–न., अन्यमनस्कत्वम्, अवधानरहितत्वम् ( चवि. ८.१८ )
**अनवाप्ति**–स्त्री., अनुपलब्धिः ( सुचि. ३४.४ )
**अनशन**–न., लङ्घनम् ( चनि., १.२८ )
'आयुषो ह्रासकराणां श्रेष्ठम्' ( चसू. २५.४० )
अल्पभोजनम् तद्वातप्रकोपकारणम् (सुसू. २१.१९)
**अनस्थि**–वि., अल्पकोमलास्थि ( सुशा. २.४७ )
बीजरहितं ( फलादि ) ( चचि. १.५८ )
**अनहङ्कृत**– वि., अहंकारहीनः, अनुद्धतः ( चवि. ८.८ )
**अनागत**–वि., ईषदागतः ( सुचि. २४.१ )
भविष्यत् ( चशा. १.९१ )
भविष्यकालः ( रा. परि० २१.१८ )
**–विज्ञान**–न., ग्रहलक्षण०, भविष्यद्विज्ञानम् ( सुउ. ६०.४ )
**अनागताबाधाप्रतिषेधनीय**–पु., अध्याय०, ( सुचि. २४.१ )
**अनागतावी**–वि., अप्राप्तप्रसववेदना ( चशा. ८.४० )
**अनागतावेक्षण**–न., तन्त्रयुक्ति०, यदनागतं विधिं प्रमाणीकृत्यार्थसाधनम् ( चसि. १२.४४ )
अनागतस्य भविष्यतोऽवेक्षणमवलोकनं कार्यार्थम् ( सुउ. ६५.३० )
**अनातपशुष्क**–वि., आतपे यन्न शुष्कम्; छायाशुष्कम् ( चचि. १.५८ )
**अनातुर**–वि., स्वस्थः, रोगरहितः ( चइ. ८.८ )
**अनात्मवत्**–वि., अजितेन्द्रियः, अपथ्यसेवी ( सुचि. ३.३ )
आत्मा, प्रयत्नः इति पर्यायौ, स्वास्थ्यानुवृत्त्यनुकूल-प्रयत्नशून्यः ( हाराणचंद्र सुनि. २.४ )
मूढबुद्धिः ( सुचि. ३०.४ )
**अनादरोपक्रान्त**–वि., असम्यगुपक्रान्तः ( चचि. २१.४२ )
**अनादिः**–वि., न विद्यते आदिः कारणं ( उत्पत्तिः ) यस्य, उत्पत्तिरहितः ( सुशा. १.९ )
**अनादिनिधन**–वि., जन्ममृत्युरहितम्; आद्यन्तरहितम् ( असंसू. ४.३ )
**अनादिमध्यनिधन**–वि., आदिरुत्पत्तिः आद्यन्तयोरन्तरा मध्यं, निधनं विनाशः एतैर्वर्जितः ( कालादिः ) ( सुसू. ६.३ )
**अनानुपूर्व्य**–न., यथोक्तक्रमत्यागः यथा–उष्णं निषेव्य सहसा शीतसेवा, तद्विपर्ययश्च; अनुचिते काले शीतोष्णसेवा च । ( चनि. ५.६ )

**अनाप्यायमान**–वि., अतृप्यन्, न वर्धमानः ( चनि. ६.१० )
**अनामक**–पु., बालरोग०, मातृकादोषः, गुदकुट्टः ( असंउ. २ )
**अनामन्**–पु., बालरोग०, गुदकुट्टः ( असंउ. २ )
**अनामय**–न., रोगाभावः, आरोग्यम्,
**अनामा**–स्त्री., अनामिका ( र. ७.२९ )
**अनामिका**–स्त्री., शारीर०, अङ्गुष्ठाच्चतुर्थाङ्गुलिः, ( सुसू. ३५.१२ )
**अनामी**–स्त्री., अनामिका ( अहृसू. २५.३८ )
**अनायत्तत्व**–न., अनधीनत्वम् ( सुचि. ३०.४ )
**अनायास**–पु., यक्षनाम०, येन नष्टं काश्यपतन्त्रं कलियुगे धारितम् ( काकल्प. २४ )
**अनायुष्य**–वि., आयुषो ह्रासकरम् ( चवि. २.७ )
**अनार्तव**–वि., अयोग्यर्तुषूत्पन्नः ( चशा. १.१२६ ) ( चसू. २७.३१६ ) ( अहृसू. ५.७ )
**अनार्तवस्तना**–वि., अरजस्का, अल्पस्तनी च ( सुउ. ३८.१८ )
**अनार्य**–वि., आराद् दूरात् पापेभ्यो यातः इति आर्यः, तद्विपरीतोऽनार्यः ( चक्र. चसू. ८.१९ )
**अनार्यक**–न., वनस्पति०, काष्ठागरु, अगरु ( ध. ३.२५ ) ( रा. १२.४२ )
**अनार्यतिक्त**–पु., वनस्पति०, किराततिक्तः ( ध. १.३३ )
**अनाविल**–वि., प्रसन्नम् ( सुचि. १२.२० )
**–दर्शन**–न., वि., अकलुषिता दृष्टिः, निर्मलदृष्टि-युक्तम् ( सुउ. १९.७ )
**अनास्थाप्य**–वि., आस्थापनबस्तावयोग्यः ( चसि. २.१४ )
**अनिग्रह**–पु., यन्त्र०, अनिबन्धनः संदंशयन्त्रभेदः ( सुसू. ७.११ )
**अनिज**–वि., आगन्तुः ( चचि. १२.४ )
**अनित्यता**–स्त्री. मरणम् ( चसू. ३०.२५ )
**अनिमित्त**–वि., तदात्वेऽनुपलभ्यमाननिमित्ता ( चइं. १.७ )
**अनिमिषाक्ष**–वि., रोगलक्षण०, स्तब्धाक्षः ( सुनि. १.७३ )
**अनिर्देशकारित्व**–न., रोगिदोषः, वैद्योपदिष्टानाम-कर्तृत्वम्, अनिर्देशकारित्वमरिष्टानां अग्र्यम् ( चसू. २५.४० )
**अनिर्देश्यरस**–वि., अव्यक्तरसम् ( सुसू. ४५.३ )
**अनिर्वेद**–पु., दौर्मनस्याभावः, उत्साहः, 'अनिर्वेदो वार्तलक्षणानां श्रेष्ठम्' ( चसू. २५.४० )

**अनिल**–पु., देवता०, वायुः (सुसू. २१.८)
वातदोषः ( अहृसू. १.११ )
**–ग्रह**–पु., रोग० वातावरोधः अशीतिवातरोगेष्वेकः ( कासू. २७.१९–२० )
**–घ्नक**–पु., वनस्पति० बिभीतकः ।
**–ज्वर**–पु., रोग० वातज्वरः ( र. १२.२१ )
**–मूढता**–स्त्री., रोगलक्षण० वायोः सम्यगसंचारः ( अहृसू. १३.२३ )
**–रक्त**–न., रोग० वातरक्तसंज्ञकः; वातादिमिश्रं रक्तम् ( असंशा. ६.२२ )
**–सूदन**–वि., वातनाशकम् ( चचि. १७.९० )
**अनिलान्तक**–पु., वनस्पति० इङ्गुदी ( रापरि. ८.१७ )
**अनिलापह**–पु., वनस्पति० कुलित्थः ( ध. ६.१०५ )
वि., वातघ्नं ( सुचि. २२.३६ )
**अनिलायन**–न., वायुमार्गः ( सुनि. १६.६१ )
**अनिलारि**–पु., योग० 'वातारि' इति प्रसिद्धः ( र. २१.५० )
**अनिष्टदिष्ट**–वि., अहितकरत्वेन उक्तम्, अनिष्टकारकं दैवम् ( असंउ. ३३ )
**–पाक**–पु., अनिष्टपूर्वकर्मभिः उत्पन्नः पाकः ( असंउ. ३३ )
**अनुकण्ठन**–न., स्तोकपानम् ( असंउ. २४. )
**अनुकरण**–न., अनुकृतिः ( चनि. ७.७ ( १ )
**अनुकर्ण**–न., कर्णसमीपदेशः ( असंशा. ७.२३ )
**अनुकूला**–स्त्री., वनस्पति० दन्ती ( रा. ६.३३८ )
**अनुकेसरा**–स्त्री., वनस्पति० मुस्ता ( रा. ६.६२ )
**अनुक्रोश**–परिव० पु., दया, अनुकम्पा ( चशा.४.३८ ( १ )
**अनुग**–वि., व्याप्तम् ( सुउ. ४७.६७ )
**अनुगत**–वि., एकीभूतम् ( सुचि. ५.२२ )
**अनुगामिन्**–वि., रोगानुगामी ( असंसू. २२ )
**अनुगुण**–वि., अनुकूलः ( सुनि. ३.१४ )
**अनुगुप्त**–वि., कृतरक्षं, वाताद्यननुगमनीयम् ( चवि. ७.२२ )
**अनुग्रथित**–वि., विग्रथितम् ( चचि. १९.५ )
**अनुचित**–वि., अनभ्यस्तम् ( सुचि. २४.९७ )
**अनुज**–न., वनस्पति० प्रपौण्डरीकम् ( ध. ३.९२ रा. १२.१५४ )
**अनुतर्ष**–न., अनुपानम्, मुहुर्मुहुः दीयमानं पानम् ( चचि २४.१४.८ )
**अनुत्तम**–वि., अत्युत्कृष्टः ( सुनि. ३.१४ )
**अनुत्थित**–वि., नोन्नमिता ( असंसू. ३६.८ )
**अनुत्सेक**–पु.,वि., क्रोधस्य गर्वस्य च अभावः, क्रोधरहितः, अनुद्धतो वा ( चवि. ८.१३ )
**अनुदक्षिण**–अ., सव्यम् ( असंसू. ३ )
**अनुद्वृत्त**–वि., अनुच्छलितम्, अवमितम्, कर्षणकृत-परावृत्त्या हि दंष्ट्राणामधोमुखत्वम् ( सुक. ३.२९ )
**अनुधूप**–पु., धूपप्रकार०, धूपस्य अनु-पश्चात् दीयते यः सः ( काक धूप० )
**अनुनय**–पु., सान्त्वनापूर्वकं वचनादि ( सुउ. ४६.२३ )
**अनुन्नत**–वि., ईषदुन्नतः, तनुः ( सुनि., १०.३ )
**अनुपक्रम**–वि., न विद्यते उपक्रमः प्रतीकारः यस्य सः, असाध्यस्यैकः प्रकारः, प्रत्याख्येय इति यावत् ( चसू. १०.९ ) ( असंसू. २ )
लक्षणानि–त्रिदोषजः क्रियापथमतिक्रान्तः, सर्वमार्गानुसारी, औत्सुक्यारतिसंमोहकरः, इन्द्रियनाशनः, सारिष्टो, दुर्बले सुसंवृद्धो व्याधिः प्रत्याख्येयो भवति । ( चसू. १०.१९–२० )
**अनुपक्व**–वि., अपक्वो हीनपक्वो वा ( र. १८.२९ )
**अनुपचारवचन**–न., अननुकूलवचनम्, प्रतिकूलवाक्यम् ( चसू. ११.३९ )
**अनुपत्यक**–वि., यद्विदूरम् अन्यस्य महतो गृहस्य तत् ( गृहम् ) ( चसू. १५.६ )
**अनुपद्रव**–वि., उपद्रवरहितम् ( चचि. ३.५० )
**अनुपशय**–पु., असात्म्यम्, दुःखकारकम् ( चसू. ११.३८ )
व्याध्यसात्म्यम् ( अहृनि. १.८ )
औषधान्नविहाराणामसुखकर उपयोगो रोगेषु, अयमुपक्रमो गूढलिङ्गव्याधीनां परीक्षायामुपशयेन साकं प्रयुज्यते ( चनि. १.१० ) ( चवि. ४.८ )
**अनुपस्कृतविद्य**–वि., शास्त्रान्तरज्ञानेन नास्त्येवोपस्कृता विद्या यस्य सः; आयुर्वेदज्ञः सन् शास्त्रान्तरेणापि असंस्कृतः ( चवि. ८.४ )
**अनुपहतरेतस्**–वि., शुद्धशुक्रः, सुप्रजाजननक्षमः ( चशा. ३.३ )
**अनुपातिन्**–वि., सम्बन्धि ( चशा. १.८१ )
**अनुपान**–नि., अन्नादनु पश्चात्पीयते तत् ( सुसू, ४६.४१९ )
गुणाः–अनुपानं तर्पयति प्रीणयति ऊर्जयति बृंहयति पर्याप्तिं अभिनिर्वर्तयति, भुक्तमवसादयति, अन्न-संघातं भिनत्ति, मार्दवमापादयति, क्लेदयति, जरयति आहारस्य सुखपरिणामितां आशुव्यवा-

यितां चोपजनयति, आयुषे बलाय च भवति
( चसू. २७.३२५ )

तदादौ कर्शयेत्पीतम्, स्थापयेन्मध्यसेवितम्। पश्चात्पीतं बृंहयति तस्माद्वीक्ष्य प्रयोजयेत्।
( सुसू. ४६.४३८ )

'अनुपाने तु सलिलमेव श्रेष्ठम् सर्वरसयोनित्वात्सर्वभूतसात्म्यत्वात् जीवनादिगुणयोगाच्च'
( असंसू. १०.४२ )

दोषभेदेनानुपानम्–
'स्निग्धोष्णं मारुते पथ्यं कफे रूक्षोष्णमिष्यते।
अनुपानं हितं चापि पित्ते मधुरशीतलम्॥
हितं शोणितपित्तिभ्यः क्षीरमिक्षुरसस्तथा।
अर्कश्लेलुशिरीषाणामासवास्तु विषार्तिषु॥'
( सुसू. ४६,४२९ )

सर्वद्रव्याणामनुपानानि ( सुसू. ४६ ) इत्यत्र द्रष्टव्यानि
अनुपाने वर्ज्याः–
ऊर्ध्वजत्रुगदश्वासकासप्रसेकहिध्मास्वरभेदोरःक्षतिनः गीतभाष्यप्रसक्ताश्च
( असंसू. १०.५५–५६ )

**अनुपाश्रित**–वि., आसनरहितम् ( सुचि. २४.९८ )

**अनुपीत**–वि., भावितम् ( सुउ.११.११ )

**अनुपूर्ववृत्त**–वि., यदनुपूर्वशः वृत्तं नाम वर्तुलं तत्
( असंशा. ८.३२ )

**अनुपूर्वशः**–अ., पूर्वसदृशः; अनुशब्दः सदृशार्थोऽत्र
( सुचि. २.३४ )

**अनुप्रणिधान**–न., प्रयत्नः, कर्तव्यम् ( चवि. ६.१४ )

**अनुप्रविष्ट**–वि., अनन्तरप्रविष्टम्, यथा पृथिव्यादिभूतस्य उत्पत्त्यनन्तरमन्यस्य जलादेस्तत्र प्रवेशः तद्विशिष्टमनुप्रविष्टम् ( सुशा. १.२१ )

**अनुप्राप्त**–वि., आश्रितः ( सुनि. ८.३ )

**अनुबद्धशूल**–वि., रोगलक्षण० पश्चात्सातत्येन शूलयुतम्
( चचि. १९.७ )

**अनुबन्ध**–पु., सम्बन्धः ( चवि. ६.९ )
उत्तरकालः अन्यकालो वा ( चवि. ३.४६ )
पुनरुद्भवः ( सुउ. ३९.१६४ )
पश्चाद्भाविफलम् 'अनुबन्धः खलु स यः कर्तारमवश्यमनुबध्नाति, कार्यादुत्तरकालं कार्यनिमित्तः शुभो वाऽप्यशुभो वा भावः' ( चवि. ८.७४ )
कार्यस्य आयतीयं ( उत्तरकालिकं ) फलम्
( चवि. ८.३ )
कारणम् ( सुउ. ३९.५६ )
आयुः अनुबन्धाति आयुरपरापरशरीरादिसंयोगरूपतया ( चसू. १.४२ )
परतन्त्रः—व्याधिर्दोषो वा ( चवि. ६.११ )
अनुबध्नाति अनुबध्यते इति अनुबन्धः, अनुगामित्वम्, गौणत्वेन स्थितिः ( अहचि. ३.७० )
–**कोप**–वि., दीर्घकालकुद्धम् ( चशा. ४.३८ ( २ )

**अनुबन्ध्य**–पु., स्वतन्त्रः स्पष्टाकृतिः यथास्वं समुत्थानोपशयश्च ( असंसू. २२ )

**अनुबल**–वि., अनुबन्धरूपः ( चचि. ३.४४ )

**अनुबाधन**–वि., दीर्घकालावस्थायि विकारकारि
( चचि. १.५ )
कालान्तरेण प्राणहरणम् ( असंसू. १२ )

**अनुमत**–न., तन्त्रयुक्ति० परमतमप्रतिषिद्धमनुमतम्
( सुउ. ६५.२८ )
यथा "गर्भशल्यस्य जरायुप्रपातनं कर्म संशमन मिलेके" इत्यादि एकीयमतं प्रतिपाद्य अप्रतिषेधादनुमन्यते ( चसि. १२.४३ )

**अनुमान**–न., प्रमाण० अनुमीयते अनेन वस्तुस्वरूपमिति
( चसू. ११.७ )
युक्त्यपेक्षः तर्कः ( चवि. ८.४० )
तर्कः; अप्रत्यक्षज्ञानम् ( सुसू. १४.३ )

**अनुमार्जन**–( परिव० ) न., अनुमर्दनम् ( सुचि. ३.३२ )
प्रच्युतस्य सन्ध्यस्थ्नो मार्गोपलम्भार्थम् अनुमार्जनं विधेयम्।

**अनुयन्त्र**–न., स्वल्पयन्त्रकार्यकरम्
( अहसू. २५.३९–४० )
पर्यायः—उपयन्त्रम् ( सुसू. ७.१५ )
अनुयन्त्राणि—अयस्कान्तरज्जुचर्मान्तवस्त्राश्मसुद्गरपाणिपादतलाङ्गुलिजिह्वादन्तनखमुखशाखावालचलोष्मकालपाकहर्षभयानि ( असंसू. ३४ )

**अनुयव**–पु., वनस्पति०, शूकधान्य० निःशूको यवः तद्गुणाः यवात्त्वयूनाः ( अहसू. ६.१५ )

**अनुयोग**–पु., प्रश्नः, तद्विद्यानां तद्विद्यैः सार्धं तन्त्रे तन्त्रैकदेशे वा प्रश्नः प्रश्नैकदेशो वा ( चवि. ८.५२ )

**अनुयोज्य**–न., तन्त्रयुक्ति०, अनुयोज्यं नाम यद्वाक्यं वाक्यदोषयुक्तं तत्, सामान्यतो व्याहृतेष्वर्थेषु विशेषग्रहणार्थं यद् वाक्यं तदप्यनुयोज्यम्
( चवि. ८.५० )

**अनुरस**–पु., पश्चादुपलभ्यते यो रसः ( चसू. २६.२३ )

**अनुलेप**–पु., लेपनम् ( सुउ. ११.६ )

**अनुलेपन**–न., उपक्रम०, स्नानाद्यनन्तरं गन्धद्रव्यैः शरीरस्य लेपः ( चनि. १.३६ )
गुणाः–'सौभाग्यदं वर्णकरं प्रीत्योजोबलवर्धनम्। स्वेददौर्गन्ध्यवैवर्ण्यश्रमघ्नमनुलेपनम् ॥'
( सुचि. २४.६३ )
अनुलेपने अयोग्याः– येषां स्नानं निषिद्धं तेषामनुलेपनमपि निषिद्धम्। ( सुचि. २४.६४ )
–परिक्लेशन–न.,रोगलक्षण०, गन्धचन्दनादिलेपने क्लेशः ( चनि. १.३३ )

**अनुलोम**–वि., अधोमार्गगामि, विरेचनमिति यावत् ( चसि, ६.३ )
लोमानुकूलम्–येनैवावर्तेन लोमानि सन्ति तेनैवावर्तेन शस्त्रावचारणम् ( सुसू. ५.७ )
शल्यतन्त्रे प्रवेशमार्गेणैव शल्यस्याहरणं प्रतिलोमं, तद्विपरीतमनुलोमम् ( सुसू. २७.६ )
**–ग**–वि., अधोगम् ( चिनि. २.१७ )
–अधोमार्गगतः–व्याध्यादिः ( चइ. ७.२० )
**–विशोधन**–न., उपक्रम०, अधोमार्गेण शोधनं विरेचनं बस्तिश्च ( काखील. ७.३ )
**–संभाषा**–स्त्री., वादप्रकार०, सन्धायसंभाषा ( चवि., ८.१७ )
**–हरण**–न., उपक्रम०, रेचनम्, अधोमार्गेण मलनिस्सरणम् ( चवि., ७.२७ )

**अनुलोमता**–स्त्री., अधोमार्गेण सुखेनैव निःसरणम् ( चसू., १६.६ )

**अनुलोमन**–न., उपक्रम०, संशोधनं–तस्य साधनं विरेचनं बस्तिश्च ( सुचि., १४.९ )
अनुलोमगत्या मूढगर्भादिशल्याहरणम् ( सुशा. १०.१० )
वि., वातादीनामधःप्रवर्तनम् ( सुसू. ४६.३१९ )

**अनुलोमनी**–वि., अनुलोमकारिणी ( अहसू. ८.१६ )

**अनुल्बण**–वि., अनुद्धतः ( अहसू. २.३१ )

**अनुवक्रग**–वि., ग्रहः समाक्रान्तं राशिं मुक्त्वा पुनः भुक्तराशिं नक्षत्रं वा याति स वक्रगः, पुनश्चानुगत एवोत्तरस्थानेऽनुवक्रगः। ( सुसू. ३२.४ )

**अनुवर्ण**–न., रसक्रियायां निर्दिष्टभागादधिकद्रव्यप्रक्षेपणम् ( र. ८.४९ )

**अनुवर्तन**–न., यथापूर्ववर्तनम् ( चसू. १६.६ )
अनुविधानं, स्वीकरणम् ( चसू. १३.१३ )
( परिव. ) अनुकूलवर्तनम् ( सुशा. १०.४६ )

**अनुवर्तमान**–वि., ज्वरादीनां विकाराणां बलवत्त्वेन दीर्घकालमनुवर्तनम्, परस्परबलमभिवर्धयन्, एककालं वर्तमानो वा ( चवि. ६.८ )

**अनुवासन**–न., उपक्रम०, स्नेहः ( चवि. ८.१५० )
स्नेहबस्तिः ( चसू. १.९० )
तैलप्रधानो बस्तिः ( चसू. २.१४ )
'अनुवसन्नपि न दूषयति अनुदिवसमपि वा दीयते इत्यनुवासनम्' ( सुचि. ३५.१८. )
अनुवासनं यथार्हौषधसिद्धः स्नेहनार्थं स्नेहः स्नेहविधौ, स चतुर्धा अभिहितः। ( असंसू. २८.७ )
अनुवासनप्रकारा द्रव्याणि च–
"अनुवासनं तु स्नेह एव। स्नेहस्तु द्विविधः स्थावरात्मको जङ्गमात्मकश्च। तत्र स्थावरात्मकः स्नेहस्तैलमतैलं च। तद्द्वयं तैलमेव कृत्वोपदेक्ष्यामः, सर्वस्तैलप्राधान्यात्। जङ्गमात्मकस्तु वसा मज्जा सर्पिरिति। तेषां तैलवसामज्जासर्पिषां यथापूर्वं श्रेष्ठं वातश्लेष्मविकारेषु अनुवासनीयेषु, यथोत्तरं तु पित्तविकारिषु, सर्व एव वा सर्वविकारेष्वपि योगमुपयान्ति संस्कारविधिविशेषादिति।"
( चवि. ८.१५० )
मात्राबस्तिरपि अनुवासनस्य भेद एव ( असंसू. २८ )
उत्तरबस्तिरपि स्नेहनेऽनुवासनवत्। ( असंसू. २८ )
अनुवास्याः—य एव आस्थाप्यास्त एवानुवास्याः। रूक्षातिदीप्ताग्नयः केवलानिलार्ताः च विशेषेण ( चसि. २.१९ )
अननुवास्याः—य एव अनास्थाप्यास्त एवाननुवास्याः तथा निरन्नपाण्डुरोगकामलाप्रमेहप्रतिश्याय-प्लीहकफोदराढ्यवातवर्चोभेदार्तपीतविषगरपित्तक-फाभिष्यन्दगुरुकोष्ठातिस्थूलश्लीपदगलगण्डापचीकृ-मिणकोष्ठाः। ( असंसू. २८ )
अनुवासनमात्रा—मध्यवयस्कमाश्रित्य अनुवासनस्योत्तमादिमात्राभेदेन त्रैविध्यमुक्तम् यथा–षट्पली तु भवेच्छ्रेष्ठा मध्यमा त्रिपली भवेत्। कनीयस्यर्धपला त्रिधा मात्राऽनुवासने। गयी तु यथा प्रमाणविहिताच्च बस्तेः पादांशः स्नेहबस्तिः स्नेहविकल्पोऽर्धमात्रापकृष्टोऽनुवासनं, तस्यापि विकल्पः अर्धमात्रा प्रकृष्टोऽपरिहार्यो मात्राबस्तिरिति।
एतेन तन्मते षट्पलप्रमाणः स्नेहबस्तिः तदर्धेन पलत्रयप्रमाणमनुवासनम्। तस्यार्धेन सार्धपलप्रमाणः मात्राबस्तिरिति ( सुचि. ३५.१८ )
अनुवासनस्य विधिः कालश्च—

'विरेचनात्सप्तरात्रे गते जातबलाय वै ।
कृतान्नायानुवास्याय सम्यग्देयोऽनुवासनः ॥
( सुचि. ३७.३ )

यः अनुवासनार्हः तस्य साधुतया अभ्यङ्गस्तथोष्णाम्बुना शनैः स्वेदनं करणीयम् । अनन्तरं शास्त्रानुसारेण भोजनं कृत्वा चङ्क्रमणं कार्यम् । शकृन्मूत्रविसर्जनानन्तरं तस्मै अनुवासनं ( अनुवासनबस्तिः ) देयम्; अनुवासनस्य निरूहोक्तविधिना प्रणिधानं कार्यम् । ( सुचि. ३७.५८–५९ )

अनुवासनबस्तिप्रदानानन्तरं वाक्शतपर्यन्तं हस्तपादाद्यङ्गानि प्रसार्य उत्तानावस्थायामेव तिष्ठेत् । गात्रप्रसरणात् स्नेहवीर्यं सर्वशरीरे विसर्पति । अनन्तरं तस्य हस्तपादतलयोः स्फिचोश्च ( स्नेहस्य शीघ्रागमननिषेधार्थम् ) शनैः शनैस्त्रीन् त्रीन् वारान् ताडयेत् । तदनन्तरमातुरेण सह शय्यां त्रीन् वारानुत्क्षिपेत् । एवं दत्तबस्तौ तेन पुरुषेण मन्दायासं मितभाषणं च कर्तव्यम् । स्वास्तीर्णायां शय्यायां यथेच्छम् आसीत । स्नेहाचारिके तेन मग्नेन भाव्यम् । ( सुचि. ३७.६०–६२ )

सम्यगनुवासितस्य लक्षणम्–
सम्यगनुवासितस्य पुरुषस्य दत्तोऽनुवासनबस्तिः अनिलेन पुरीषेण च सह शीघ्रं त्रिचतुरादियामात् प्रत्यागच्छति । अत्र ओषचोषादिवेदना न भवन्ति । ( सुचि. ३७.६७ )

अनुवासनोपगानि द्रव्याणि यानि अनुवासनक्रियायां साहाय्ये नोपगच्छन्ति । ( चसू. ४.८ )

अनुवासनोपग-गणः 'रास्नासुरदारुबिल्वमदनशतपुष्पावृश्चीरपुनर्नवाश्वदंष्ट्राऽग्निमन्थश्योनाका इति दशेमान्यनुवासनोपगानि भवन्ति ।'
( चसू. ४.१३ )

**अनुवासित**–वि., दत्तानुवासनः ( असंसू. २८.४६ ) ( सुचि. ३८.३ )

**अनुवास्य**–वि., अनुवासनयोग्यः ( चसि. २.१९ )

**अनुविद्ध**–वि., मिश्रितम् ( सुनि. ६.१० )

**अनुवृत्ति**–स्त्री., सातत्यम् ( चसू. १२.८ )

**अनुवेल्लित**–न., व्रणबन्ध०, अनुवेल्लितं शाखासु ( सुसू. १८.१७ )

**अनुशय**–पु., अनुबन्धः, अनुसृत्य सम्बन्धः, सततसम्बन्धः, प्राप्तिः ( चसू. २१.१२ )
कोपः ( चचि., ६.३ ) उपाधिः ( काखिल. १.२२)

**अनुशयी**–स्त्री., क्षुद्ररोग०, कफान्मस्तके जायमाना सवर्णा अल्पसंरम्भा अन्तःप्रपाका गम्भीरपिटिका ( सुनि. १३.२३ )

**अनुशस्त्र**–न., हीनशस्त्रं शस्त्रसदृशं वा, शस्त्रकर्मसाधकद्रव्यान्तरम् ( सुसू. ८.१५ )
अनुशस्त्राणि तु जलौकःक्षाराग्निसूर्यकान्तकाचस्फटिककुरुविन्दनखशाकशेफालिकादिखरपत्रसमुद्रफेनशुष्कगोमयादीनि ( असंसू. ३४.३२ ) ( अहसू. २६.२७ )

**अनुशासन**–न., उपदेशः ( कावि ) शिष्योपक्रमणीय०

**अनुशिष्टिप्रतिकार**–वि., आज्ञाधारकः ( चवि. ८.८ )

**अनुषङ्गिन्**–वि., पुनर्भावि ( चसू. २५.४० )
चिरकालस्थायी ( चचि. २१.३४ )

**अनुष्ण**–वि., अल्पोष्मा ( चचि. ३,२८१ )
**–वल्लिका**–स्त्री., वनस्पति० नीलदूर्वा ( रा. ८.२२६ )
**–वृक्ष**–पु., वनस्पति० शीतवीर्ययुक्तो वृक्षः यथा–क्षीरिवृक्षः ( सुसू. ३७.२३ )

**अनुसन्दिग्ध**–वि., सन्देहयोग्यो विषयः ( चवि.८.४३ )

**अनुसमाधि**–पु., अनुष्ठानम् ( चशा. ४.४१ )

**अनुसुख**–अ., यथासुखम् ( सुशा. १०.९ )

**अनूक**–न., सादृश्यम् ( चशा. ४.३६ )
प्राक्तनी अव्यवहिता जातिः ( चशा. २.२७ )
शीलम् ( सुशा. ४.६७ ) स्वभावः, स्वरूपचेष्टानुकरणम् ( अहशा. ३.८९ )

**अनून**–अ., निरवशेषेण साकल्येन ( काखिल., ५.२६ )

**अनूप**–वि., अम्बुप्रायदेशविशेषः, 'प्रचुरोदकवृक्षः निवातः दुर्लभातपः बहुदोषश्च अनूपः' ( चवि.३.४८ )
सोऽहितदेशानामग्र्यः, ( चसू. २५.४० )
अनुगता आपो यस्मिन् सोऽनूपः ( चसू. १९.१६ )
**–ज**–न., वनस्पति०, आर्द्रकम् ( ध. २.८४ ) ( रा. ६.१३२ )

**अनूपालु**–पु., वनस्पति०, पानीयालुः, गुणाः–पानीयालुस्त्रिदोषघ्नः संतर्पणकरः परः, ( रा. ७.३१ )

**अनृजु**–न., वनस्पति०, तगरम् ( ध. ३.५३ )

**अनृतु**–पु., रजःस्रावेतरकालः ( सुशा. २.१८ )

**अनेकशफ**–वि., विभक्तखुरः छागादिपशुः ( सुसू. ४६.४३३ )

**अनेकाग्र**–वि., व्याकुलचित्तः ( असंशा. १०.२१ ) ( चइ. ११.३ )

**अनेकान्त**–पु., तन्त्रयुक्ति०, 'क्वचित्तथा क्वचिदन्यथा

इति यः, सः अनेकान्तः' यथा—केचिदाचार्या ब्रुवते द्रव्यं प्रधानं केचिद्रसं केचिद्वीर्यं केचिद्विपाकमिति । ( सुउ. ६५.२४ )

**अनौषध**—न., दोषकोपनद्रव्यम् तद् द्विप्रकारम्, बाधनम् अनुबाधनं च; तत्र सद्यःप्राणहरं बाधनं, कालान्तरेण प्राणहरम् अनुबाधनम् ( असंसू. १२ ) वि., अचिकित्सितम्, चिकित्सायामौषधिरूपेणानुपयुक्तम् ( अहसू. ९.१० )

**अनौषधिभूत**—वि., व्याधिनिवारणेऽनुपयुक्तम् ( सुसू. ४१.५ )

**अन्त**—पु., मरणम् ( चइ. १.२२ )
समाप्तिः, निर्णयः, "वादान्सप्रतिवादान् हि वदन्तो निश्चितानिव । पक्षान्तं नैव गच्छन्ति तिलपीडकवद्गतौ ॥ ( चसू. २५.२७ )
उत्तरकालः ( चइ. ६.१८ )
हस्तपादाद्यन्तिममङ्गम् ( चइ. ९.६ सुउ. ४४.३९ )
कनीनिकापाङ्गम् ( सुउ. १८.६६ )

**अन्तक**—पु., रोग०, संनिपातज्वरभेदः, तल्लक्षणम्—दाहं परितापनं च करोति, मोहं ददाति, शिरःप्रकम्पं विदधाति, हिक्कां तनोति, कसनं च करोति। असाध्योऽयम्, मर्यादा त्वस्य दश दिनानि। ( मा ज्वरः )

**अन्तर्**—अ., मध्ये ( सुसू. ३२.४ )
**—गल**—पु., शारीर०, गलस्यान्तर्भागः ( चसू. १८.२२ )
**—गृह**—न., मध्यगृहम् ( सुचि. २७.८ )
**—ज**—वि., अन्तर्मार्गाश्रितः ( चचि. २१.२७ )
**—दाह**—पु., चत्वारिंशत्पित्तविकारेष्वेकः ( चसू. २०.१४ )
लक्षण०, शरीरस्यान्तोऽन्त्रादावुष्णस्पर्शरूपो दाहः ( चचि. ३.३९ ) कोष्ठे दाहः ( असंसू. २० )
**—धूम**—वि., संस्कार०, शरावे प्रस्थापितस्यौषधिद्रव्यस्य पिधानान्याच्छायाधस्तादग्नौ तथा पचनं यथा धूमो न बहिर्गच्छति ( चचि. १५.१७५ ) ( र. २८.३२ )
**—नखमुष्टि**—पु., स्त्री., अन्तरीकृतनखमुष्टिपरिमाणम् ( चक. १.१४ )
अन्तर्नखा मुष्टिः, यस्मिमुन्ष्टौ नखानि न दृश्यन्त इत्यर्थः ( असंक. १ )
**—महानाद**—पु., भैषज्य०, शङ्खः ( रा. १३.२४३ )
**—मुख**—वि., मुखान्तर्गतम् ( सुशा. ८.८ )
न., शस्त्र०, अध्यर्धमङ्गुलफलं केशप्रमाणधारमष्टाङ्गुलप्रमाणदीर्घं जिह्वाधारमर्धचन्द्राननं मध्यमुखं विस्रावणोपयोगि शस्त्रम् ( सुसू. ८.३ )
**—मुखमुष्टि**—स्त्री., अन्तर्नखमुष्टिः ( असंक. १ )
**—मुखी**—स्त्री., योनिव्यापद्०, विंशतियोनिरोगेष्वेकः ( चचि. ३०. ३०–३१ )
तल्लक्षणम्—अत्याशितायाः सुरते विषमं स्थितायाः वायुरन्नेनोत्पीडितः सन् योनेः स्रोतसि स्थितश्च सन् सास्थिमांसं तीव्ररुजं योनेर्मुखं वक्रयेत् साऽन्तर्मुखी, वक्रमुखी वा ( असंउ. ३८ )
**—मृत**—वि., गर्भकुक्षौ मृतः ( सुनि. ८.१२ )
**—लोहित**—वि., लक्षण०, कोष्ठमध्यपतितं रुधिरम् ( सुचि. २.५१ )
यस्य कोष्ठमध्ये रक्तस्य स्रावः, बहिरनिःसृतरक्तम् ( मा. १७ )
**—वक्त्रदाह**—पु., अन्तर्मुखे दाहः ( असंसू. ८ )
**—वत्नी**—स्त्री., गर्भिणी ( चशा. ८. १६ )
**—विद्रधि**—स्त्री., शरीरस्यान्तरङ्गेषूत्पन्नो विद्रधिः ( सुसू. ४३.३ ) ( सुशा. ८.१७ )
**—वेग**—वि., अन्तःकोष्ठादौ वेगो नाम गतिर्यस्य सः ( चचि. ३.३३ )

**अन्तर**—न., अवकाशः, छिद्रम् ( सुशा. ९. १३ )
अवसरः, कालः ( सुउ. ३९. ३२० )
मध्यम् ( सुसू. ३५.१२ )
कारणम् ( चसू. २७.३४७ )
**—पान**—न., पाचनम् ( औषधम् ) ( चसि.८.२३ )
**—पानक**—न., क्वाथः, पानम् ( असंउ. २. ) काढा.
**—भक्त**—न., औषधकाल०, यत्पूर्वाह्णभक्ते जीर्णे मध्याह्ने भेषजमुपयुज्यते, तास्मिंश्च जीर्णे पुनरपराह्ने भोजनम् ( असंसू. २३ )

**अन्तरग्नि**—पु., जठराग्निः ( चचि. १५.२१४ ) ( सुचि. ३१.५६ )

**अन्तरा**—अ. मध्ये ( सुचि. ३७.७० )
**—भक्त**—न. औषधकाल०, यत्पूर्वापरयोर्भक्तयोः प्रातःसायन्तनयोर्भोजनयोः अन्तरा—मध्ये पीयते ( सुउ. ६४.७३ )

**अन्तरात्मन्**—पु., जीवः, आत्मा ( चशा. ४.८ )

**अन्तराधि**—पु., शिरोबाहुसक्थिवर्ज्यः, सर्वो मध्यमः भागः, अन्तरा धीयन्ते शिरःप्रभृतयः पञ्चावयवा यस्मिन् ( चशा. ७.५ ) ( सुसू. ३५.१२ )

**अन्तरायाम**—पु., वातरोग०, तल्लक्षणम्—अन्तरायम्यते

ग्रीवा, मन्या च स्तभ्यते, भृशं दन्तानां दशनं, लाला, पृष्ठायामः, शिरोग्रहो, जृम्भा, वदनसङ्गश्च ( चचि. २८.४३–४४ ) तत्संप्राप्तिः–यदा वातो मन्ये संस्तभ्यान्तर्धमनीरुपेत्य सकलं देहं व्याप्नोति तदा जत्रुरायम्यतेऽङ्गमन्तर्धनुरिव भवति, नेत्रयोः स्तम्भं कफोद्गमं च करोति ( असंनि.१५ )

**अन्तराशय**–पु., महास्रोतः ( चक. १२.५२ )

**अन्तराश्रय**–पु., कोष्ठम् ( चचि. २५.२६ )

**अन्तरिक्ष**–न., खनिज., अभ्रकम् ( रा. १३.२ ) अभ्रक.

**–जल**–न., दिव्योदकम् ( रा. १४.३२० )

**अन्तरिक्षानुकारिन्**–वि., आन्तरिक्षं जलं यदनुकरोति ( अहृसू. ५.५ )

**अन्तरूष्मन्**–पु., दोषधातुमलसन्निपातजनितोऽग्निः ( असंशा. ६ )

**अन्तः–कुक्षि**–पु., गर्भाशयान्तर्भागः ( चशा. ६.२२ )

**–कोटरपुष्पी**–स्त्री. वनस्पति०, नीलबुध्ना ( चसू. १.८२ )

**–कोष्ठ**–पु., आभ्यन्तरमार्गः ( चसि. २.९ )

**–परिमार्जन**–न., भेषज०, यदन्तःशरीरमनुप्रविश्य व्याधीन्प्रमार्ष्टि तद्भेषजम् ( चसू. ११.५५)

**–प्रविष्ट**–वि. अन्तराकृष्टं जिह्वादि ( चसि. ६.५४ )

**–शल्य**–वि., अन्तर्गतं शल्यं यस्मिंस्तत् ( अहृसू. २८.२ )

**अन्त्य**–वि., मरणस्वरूपम् ( चइ. १२.४४ )

**अन्त्यावसायिनी**–स्त्री., चण्डाला स्त्री ( चशा. ८.५२ )

**अन्त्र**–न., शारीर., कोष्ठाङ्ग. ( सुशा. ५.९ )

तदुत्पत्तिः–रक्तश्लेष्मप्रसादाज्ञवति ( सुशा. ४.२६–२७ )

रक्तमांसप्रसादादन्त्राणि ( असंशा. ५.४८ )

द्विकान्यन्त्राणि स्थूलक्षुद्रभेदेन बृहल्लघुभेदेन वा ( सुशा. ५.६ )

आयामः–सार्धत्रिव्यामान्यन्त्राणि पुंसाम्, स्त्रीणामर्धव्यामहीनानि ( सुशा. ५.९ )

शुष्कान्त्रम्, उपयन्त्रेष्वेकम् ( अहृसू. २५.४० ) शस्त्रच्छेदानन्तरं सिरादिबन्धनार्थमस्य प्रयोगः।

**–कूज**–पु., रोगलक्षण, अव्यक्तशब्दः गुडगुडादिशब्दो वा पक्वाशयस्थकुपितवातकृतः ( सुनि. १.२३ )

**–कूजन**–न. रोगलक्षण०, अन्त्रकूजः ( सुक. ३.८ ) पहा 'अन्त्रकूज'.

**–पाचक**–न. स्थावरविषभेदः, सप्तसु त्वक्सारनिर्यासविषेषु एकम् ( सुक. २.५ )

**–पूरण**–न. रोगलक्षण०, अन्त्राशयेऽभिन्नेऽपि सूक्ष्मैः खैः अन्त्रस्य रक्तेन पूरणम्, तेन अन्त्राशयस्य गौरवं भवति ( सुचि. २.१८ )

**–भेदन**–न., रोगलक्षण०, अन्त्रे भेदनवद् वेदना भवति ( चचि. १३.१४ )

**–वर्धमन्**–रोग०, अन्त्रवृद्धिः ( अहसू. २५.३६ )

**–वल्लिका**–स्त्री., वनस्पति०, सौम्या ( रापरि. ३.३१ )

**–वृद्धि**–स्त्री., रोग०, तत्संप्राप्तिर्लक्षणं च–भारहरणाव्यायासविशेषैः प्रकुपितो वायुः स्थूलान्त्रस्यैतरस्य चैकदेशं क्षुद्रान्त्रावयवं वा विगुणमादाय स्वनिवेशादधो गत्वा वङ्क्षणसंधिमुपेत्य तत्र ग्रन्थ्याभं श्वयथुं करोति, तदुपेक्षणेन कालान्तरेण फलकोशं प्रविश्य मुष्कवृद्धिं करोति, आध्मातो बस्तिरिवाततः प्रदीर्घो भवति, अवपीडितश्च सशब्दमूर्ध्वमुपैति, विमुक्तश्च पुनराध्मायते।

( सुनि., १२.६ ) ( अहृनि. ११.२९ )

अन्त्रवृद्धिर्द्विविधा–यदा तु स्वनिवेशादधोगतमन्त्रं फलकोशं प्रविश्य मुष्कवृद्धिं करोति तदा सा 'कोशप्राप्ता' इति कथ्यते ( सुचि. १९.२२ ) यदा तु स्वनिवेशादधोगतमन्त्रं फलकोशमप्राप्तमन्तरैव तिष्ठति तदा 'अप्राप्तफलकोशा' इति कथ्यते ( सुचि. १९.२१ )

**–संमूर्च्छन**–न., रोगलक्षण०, अन्त्रपरिवर्तनम्, बद्धगुदोदरस्य हेतुष्वेकः ( चचि. १३.३९ )

**–स्फुटन**–न., रोगलक्षण०, अंत्रे स्फुटनवद्वेदना (चचि. १३.१४)

**अन्त्राद**–पु., कृमि०, असौ कफजोऽन्त्राण्यत्तीत्यन्त्रादः ( चसू. १९.४ ) ( ९ )

**अन्त्रालजी**–स्त्री., क्षुद्ररोग०, कफवातजा घनाऽवक्रोन्नता परिमण्डलाऽल्पपूया पिटिका

**अन्ध**–वि., दृष्टिहीनः ( सुशा. २.२५ )

**–कारी**–स्त्री., पारददोष०, कृष्णत्वकरः कञ्चुकाख्यो दोषः ( र., ११.२२ )

**–पूतना**–स्त्री. रोग०, बालानां ग्रहरोगेष्वेकः, तल्लक्षणम्–एतज्जुष्टोऽर्भकः स्तनद्वेषातिसारकासहिक्काच्छर्दि–ज्वरादिभिः पीड्यमानो दुष्टवर्णतनुरधोमुखशयानो काञ्जिकायम्लगन्धिकश्च भवति ( सुउ. २७.१३ ) दृष्टिसादोऽक्षिरुक्कण्डूः पोथकीजन्म शूनता स्वरक्षीणता वेपथुर्मत्स्यगन्धित्वं च भवति ( असंउ. ३ ) स्त्रीविग्रहवान्ग्रहः, तच्चिकित्सा–

'अक्षिरोगचिकित्साभिः शमयेदन्धपूतनाम्'
( का. बालग्रहचिकित्सा )

**–पूतनाप्रतिषेध**–पु. अध्याय० ( सुउ. ३३. )

**–मूषा**–स्त्री., यन्त्र०, मूषाभेदः, मूका मूषा, संपुटिता मूषा ( र. २.१३७ )

**–यन्त्र**–न., अन्धमूषा ( र. ५.४३ ) पहा–'अंधमूषा'.

**–वडवाग्नि**–पु., यन्त्र० यद् गन्धकादिजारणार्थमुपयुज्यते ( र. २७.७८ )

**अन्धालजी**–स्त्री. क्षुद्ररोग०, दुष्टौ श्लेष्मानिलौ स्नायुश्रिता अवक्त्रामल्पपूयामकण्डुरामामोदुम्बरसंकाशां परिमण्डलामन्तर्मुखीं पिडिकां जनयतः, साऽन्धालजी ( सुनि. १३.६ ); 'अलजी'. नाम्ना वाग्भटे, आन्त्रालजी–नाम्ना माधवनिदानेऽस्य निर्देशः । 'अंत्रालजी' पहा

**अन्धाहिक**–पु., सर्प० जलबिलशायीति प्रसिद्धस्तस्य दंशोऽन्धत्वकरः ( सुक. ४.३८ )
निर्विषसर्प०,–( सुक. ४.३४ ) ( ४ )

**अन्ध्रण**–न., बन्धनम् ( र. १०.५. )

**अन्न**–न., अद्यते इत्यन्नम् ( सुक. १.१ )
आहारः ( सुसू. ४६.४६४ )
ओदनम् ( सुउ. ३९.३१८ )
अन्नपानम् ( सुउ. ६४.५ )
"अन्नं वृत्तिकराणां श्रेष्ठम्" ( चसू. २५.४० )

**–काल**–पु. अन्नग्रहणयोग्यः कालः ( चचि. १९.२३ )
( अहृसू. १८.२९ )

**–क्लम**–पु. भोजनजनितः श्रमः ( सुसू. ४६.४८७ )

**–गति**–स्त्री., अन्नगमनमार्गः, अन्नवहस्रोतः
( सुनि. १६.५३ )

**–गृद्धि**–स्त्री., रोगलक्षण०, अन्नाभिलाषा ( चसि. २.१८ )

**–जा**–वि., हिक्काभेदः ( सुउ. ५०.१० ) भक्तोद्भवेत्यस्य पर्यायः (अहृनि. ४.१९) त्वरयाऽयुक्तिसेवितैः रूक्षतीक्ष्णासात्म्यान्नपानैर्या भवति, सात्म्यान्नपानेन च या शमं याति सा ( अहृनि. ४.१९–२१ )

**–जात**–न., आहार्याणि द्रव्याणि ( चनि. २.४ )

**–त्रिक**–न., त्रिविधमन्नम् वातपित्तकफकरमिति
( चचि. २४.६९ )

**–द्विष्**–वि., अन्नं द्वेष्टीति अन्नद्विट् ( चसू. १३.५५ )

**–द्वेष**–पु. रोगलक्षण० अन्नस्य द्वेषः, पित्तज्वरलक्षणेषु एकम् ( चनि. १.२४ )

**–पक्तृ**–पु. जाठराग्निः (चचि. १५.३८. )

**–परिवर्त**–पु. अन्नस्य परिवर्तः देशादिहेतुकोऽन्न-विनिमयः ( चनि. १.२८. )
सहसैवाक्रमेण कृतान्नाभ्यासः ( अहृनि. १.२१ )

**–परिवर्तन**–न. असात्म्यभोजनम्, क्रीतान्नभोजनम्
( अहृनि. १.२१ )

**–पान**–( न. ) आहारः, अन्नपानं च
( असंसू. १०.७ )

**–पानक्रम**–पु., आहारविधानम् ( चचि. ३.१९ )

**–पानरक्षाकल्प**–पु., अध्याय० ( सुक. १.१ )

**–पानरस**–पु., अन्नपानस्य सारः सर्वधातूनां पोषकः स्थायी रसः, ( सुसू. १४.११ )

**–पानविधि**–पु., अध्याय० ( सुसू. ४६.१ )

**–प्रवेश**–पु., मुखद्वारा अन्नस्य कोष्ठे प्रापणम्
( अहृसू. १२. )

**–प्राशन**–न., संस्कार० बालेभ्यः प्रथमतः अन्नप्रदानम् ( असंउ. १ ) तच्च षष्ठे मासि कुर्यात् ( सुशा. १०.४९ ) जातदन्तस्य दशमे मासि कारयेत् ( काखिल. १२.१५–५८ )

**–मद**–पु., रोगलक्षण० अन्नेन भुक्तेन हर्षक्षयः ( सुक. २.३० )

**–मय**–वि., अन्नेन युक्तः, 'देहेऽन्नमयाः सर्वे भावाः' ( असंशा. ६ )

**–रक्षा**–स्त्री., अध्याय० ( अहृसू. ७ )

**–रस**–पु., भक्तमण्डः ( असंशा. ६ )
निःशेषपरिपक्वस्य अन्नस्य रसः ( सुचि. ३७.४८ )

**–रसखेद** पु., रोगलक्षण०, अन्नरसे खेदः, अवसादः, सर्वरसेषु अनिच्छा ( चनि. १.२१ )

**–वहस्रोतस्**–न., शारीर० अन्नवहमार्गः ( असंशा. ६ ) तस्य मूलम्–आमाशयः वामं च पार्श्वम् ( चवि. ५.८ ) आमाशयः अन्नवाहिन्यश्च ( धमन्यः ) ( सुशा. ९.१२ ) दुष्टिलक्षणानि–अनन्नाभिलषणम् अरोचकाविपाकौ छर्दिश्च ( चवि. ५. ) दुष्टिकारणानि–अतिमात्रस्य अकाले अहितस्य च भोजनात् पावकस्य च वैगुण्यात् अन्नवाहीनि स्रोतांसि दुष्यन्ति ( चवि. ५.१२ ) विद्धलक्षणानि–आध्मानं, शूलान्नद्वेषौ, छर्दिः, पिपासा, आन्ध्यं, मरणं च । ( सुशा. ९.१२. )

**–वहनाडी**–स्त्री., अन्नवहस्रोतः ( र. १३. )

**–वाहिनी**–धमनी स्त्री., शारीर० सा च अन्नवहस्रोतसोः मूलम् "अन्नवहे द्वे तयोर्मूलम् आमाशयोऽन्नवाहिन्यश्च धमन्यः ( सुशा. ९.१२ )

–विष–न., अजीर्णविषमाशनादिकारणैर्दुष्टेनाग्निनाऽपच्यमानं शुक्तत्वं प्राप्तं विषवत् परिणामकरमन्नम् ( चचि. १५.४६ )

–वीर्य–न., अन्नप्रभावः ( अहसू. १२.१५ )

–शल्य–न., शल्यभूतमन्नम् ( सुसू. २७.५ )

–श्रद्धा–स्त्री., भक्ताकाङ्क्षा ( सुउ. ६४.८४ )

–संयोग–पु., अन्नोपयोगः ( अहसू. २९.१५ )

**अन्नाद्**–वि. अन्नमत्तीति अन्नादः, केवलान्नभक्षको बालस्तृतीयादिसंवत्सरादूर्ध्वं भवति ( सुसू. ३५.२९ )

**अन्नादि**–पु., अन्नस्य भक्तस्य आदिः आरम्भः ( अहसू. १३.३७–३८ )
यस्मिन् भुक्ते पश्चात् तत्कालमेव भुक्तं भुज्यते। तदपानाख्ये वायौ विगुणे सति दीयते। सुखपरिणामकरत्वादग्लानिकरत्वाच्च वृद्धशिशुभीरुकृशाङ्गनासु तत् प्रशस्तं भवति। प्राग्भक्तं, भक्तादौ इत्यस्य पर्यायौ। ( सुउ. ६४.६९ )

**अन्नानुपान** न., अन्नस्य अनुपानम् ( चसू. २७.३१९ )

**अन्नावग्रह**–वि., अन्नेन अवग्रहः सहसोर्ध्वकायप्रतिबन्धोऽवष्टम्भो यस्येति अन्नावग्रहम्, अन्नमध्यप्रयुक्तम् अन्नात् पूर्वं वा, "काठिन्याद्यः पुरीषं तु कृच्छ्रान्मुञ्चति मानवः। स घृतं लवणैर्युक्तं नरोऽन्नावग्रहं पिबेत् ( चचि. १५.२०५ ) ( अहचि. १०.७२ अरुण ) ( असंचि. १२ )

**अन्नाश्रद्धा**–स्त्री., रोग० अन्नविद्वेषः रसदोषजविकारेषु एकः ( सुसू. २४.९ )

–अन्य–न., अपरम् ( सुचि. १४.८ ) दुसरे.

–धान्य–न., विजातीय–धान्यम् ( अहसू., ६.१४१ )

–परिवार–वि., अन्यव्याधिपरिवाराः परतंत्रस्वरूपाः ( असंसू. २१ )

–प्रकृति–वि., विजातीयप्रकृतिः ( चशा. ६.११ )

–भाव–( परिव. ) पु., स्वरूपाच्च्युतस्य विपरीतगुणावाप्तिः, यथा कृष्णानां शुक्लता ( सुसू. ३२.३ ) मरणम् ( सुचि. १४.८ )

–योनि–स्त्री., असवर्णा ( चसू. ८.२२ )
अजामहिष्यादिः (अहसू. ७.७०)
विपरीत–कारणम् ( सुसू. ४२.८ )

–लक्षण–वि., यः भविष्यद्व्याधिख्यापकः पूर्वरूपसंज्ञकः ( सुसू. ३५.१८ )

–शास्त्र–न., आयुर्वेदेतराणि व्याकरणसांख्यज्योतिःशास्त्रादीनि; कायचिकित्सादीनि इत्यन्ये। ( सुसू.४.६ )

**अन्यतरनिष्ठा**–स्त्री., अन्यतररूपाऽवस्था (चवि. ८.१३४)



**अन्यतस्**–अव्य., पृष्ठतः ( सुउ. ६.२७ )

**( अन्यतो ) वात**–पु., नेत्ररोग०, योऽवटुकर्णशिरोहनुस्थो मन्यागतो वा अन्यतो गतो वा वातः भ्रुवि लोचने वा रुजां करोति, सोऽन्यतोवातः। अन्यतः स्थितः वायुः अन्यतो वेदनां करोति इत्यतः अन्यतोवातः ( सुउ., ६.२७; ) वायुः मन्याक्षिशङ्खतः अन्यतो वा तीव्रां व्यथां करोति, नेत्रञ्च पैच्छिल्यरागशोफादिरहितं पर्यश्रुसङ्कुचितं विदधाति। ( असंउ १८ )

**अन्यथा**–अ., प्रकारान्तरेण, अतथात्वे वा ( चचि. ३.६५ ) ( चशा. ८.५५ )

–काम–पु., अगम्यागमनम् ( अहसू. २.२१ )

–कार–वि., भिन्नरूपम् (अहसू.१२.६९)

–क्रिया–स्त्री., अन्यथाकरणम्, संस्काराधानम् ( चसू. १६.३३ )

–चर–वि., विमार्गगः ( सुउ. २०.६ )

–दर्शिन्–वि., अन्यप्रकारदर्शी ( सुसू. २.७ )

–भाव–पु., विपरिणामः, स्वरूपाच्चलनम् ( सुशा. ४.७८ )

**अन्या**–स्त्री., वनस्पति०, हरीतकी ( र. २२.८१ )

**अन्यादोडी**–स्त्री., वनस्पति०, जीवन्तीभेदः
तद्गुणाः–कटु, तिक्ता, उष्णा, दीपनी, रुच्या, कफवातघ्नी, कण्ठामयरक्तपित्तदाहघ्नी च।
"अन्यादोडी तु जीवन्ती शाकश्रेष्ठा सुखालुका। बहुपर्णी दीर्घपत्रा सूक्ष्मपत्रा च जीवनी" ( रा. परि. ४.४१–४२ )

**अन्यान्यता**–स्त्री., भेदः ( चशा. १.४९ )

**अन्येद्यु**–पु., रोग०, अन्येद्युष्कः ( चचि. ३.३४ )

**अन्येद्युष्क**–पु., रोग०, विषमज्वरभेदः, अहोरात्रे यः एककालं प्रवर्तते ( चशा. १.११३ ) ( सुउ. ३९.७० ) ( चचि. ३.३५३ )

**अन्योन्य**–वि., परस्परम् ( सुशा. १.२१ ) ( चशा. १.३७ )

–मूर्च्छन–न., परस्परमिश्रीभावः ( अहसू. १३.२६ )

**अन्योन्यानुप्रविष्ट**–वि., परस्परानुप्रविष्टम्। आकाशवायुतेजजलपृथ्वीनां परस्परानुप्रवेशेन पाञ्चभौतिकद्रव्यनिष्पत्तिः, एवं तानि अन्योन्यानुप्रविष्टानि। ( सुशा. १.२१ )

**अन्योन्यावरण**–न., परस्परावरणम्, यथा एकदोषेण अन्यदोषस्य मार्गावरोधः ( चचि. २८.१९९ )

**अन्वक्षम्**–अ., तत्क्षणमेव, न क्षणान्तरे; अक्षस्य यन्त्रस्य अनु–पश्चात् अन्वक्षम् ( सुशा. ३.४ ) ( सुचि. ३७.६४ )

**अन्वय**–पु., अनुबन्धः, संबन्धः ( चनि. ८.१८ )
संभूतिः ( चचि. ३.१७६–१७७ )
कुलं, वंशो वा ( सुसू. २.३ )

**अन्वास**–पु., अनुवासनम् ( असंसू. २९ )

**अन्वासन**–न., अनुवासनम् ( अहृसू. १९.२ )

**अप्**–स्त्री., महाभूत०, जलम् ( चसू. ८.९ )
इदं सत्त्वतमोबहुलम् । ( सुशा. १.२० )
देवता०, रसनस्य अधिदैवतम् आपः । (सुशा. १.७)
**–चर**–पु., जलचरः ( अहृसू. ६.५० )
**–पान**–न., जलपानम् (अहृसू.२८.३९)
**–( अब् )–धातु**–पु., कायद्रवः श्लेष्मपित्तरसादिकः ( सुउ.४०.६ )
स्वेदः ( सुउ. ३९.२४ )
शरीरधातुगतः उदकभागः ( चचि. २२.१९ )

**अपकर्षण**–न., तन्त्रयुक्ति०, पृथक्करणम्, अपवादेन कथनम् । ( सुउ. ६५.१८ )
ह्रासः ( सुचि., ६.१७ )
दुर्बलीभवनम् ( सुउ. ६२.६ )
ऊर्ध्वगतस्याधःकर्षणम् ( सुचि., १५.३ )
चिकित्सोपक्रमः, निर्हरणम् । तच्च द्विविधम् बाह्यान्तर–भेदेन। तत्र बाह्यमपकर्षणं ग्रन्थ्यर्बुदोप-पक्ष्मकृमिशल्यादिषु शस्त्रहस्तयन्त्रादिभिः । अभ्य-न्तरं पुनर्वमनविरेचनादिभिः । ( असंसू. १२.६ )

**अपक्ति**–स्त्री., रोग०, विंशतिश्लेष्मविकारेषु एकः ( चसू. २०.१७ ) ( अहृसू. १२.५३ )

**अपक्षेपण**–न., अङ्गस्याऽधोनयनम् ( अहृसू. १२.७ )

**अपगम**–पु., निर्गमनम् ( असंनि. २ )

**अपगमन**–न., देहान्तरगमनम् ( चशा. ३.१३ )

**अपचय**–पु., रोगलक्षण०, कृशत्वम् ( सुसू. १०.५ )

**अपचार**–पु., अपथ्याचरणम् ( चचि. ३.२५ )
दुष्टाहाराचारौ ( सुसू. २४.५ ) ( सुउ. २७.६ )

**अपचारिन्**–वि., अयथार्थकारी ( सुचि. ५.४ )

**अपचित**–वि., नष्टम्, अप्राप्तम् ( सुउ. ५७.१६ )

**अपचिति**–स्त्री., पूजा ( चनि., ७.२३ )

**अपची**–स्त्री., रोग० बहिर्मार्गजः ( चसू. ११.४९ असंउ. ३४ )
अयं ग्रन्थिरूपः व्याधिः चिरकारी च । ( सुनि. ११.११, ) स्थानमस्य रोहिणी नाम त्वक् ( सुशा. ४.४, ) ( चचि. २८.१३५., )
निरुक्तिः–चयप्रकर्षात् अपची ।
संप्राप्तिः–हन्वस्थिकक्षाक्षकबाहुसन्धिमन्यागलेषु उपचितं मेदः कफश्च ग्रन्थिं कुरुतः । लक्षणम्–स्थिरा वृत्ता आयता स्निग्धा अल्परुजा ग्रन्थिर्भवति । आम-लकास्थिमात्रैः मत्स्याण्डजालप्रतिमैः अनन्यवर्णैः ग्रन्थिभिः सा उपचीयमाना भवति । ताः कण्डुयुताः प्रभिन्नाः स्रवन्ति, नश्यन्ति, भवन्ति च अन्याः । अयं रोगः सुदुस्तरः । ( सुनि. ११.१० ) अस्य 'गण्डमाला' इत्यपरं नाम ( असंउ. ३४. )
अस्मिन् शस्त्रकर्मापि क्रियते । ( सुचि. १८.२७. )

**अपतंसन**–न., रोगलक्षण०, पतनम् ( चचि. २८.१८ )

**अपतन्त्रक**–( पु., ) वातरोग० ( सुनि. १.६६; )
सम्प्राप्तिः लक्षणानि च–अधःप्रतिहतो वातः कफा-न्वितः सन्नूर्ध्वं व्रजन् हृदाश्रिता नाडीः प्रविश्य हृदयं शिरः शङ्खौ च पीडयन् गात्रं परितः आक्षिपेत्, धनुर्वच्च नामयेत्, तदा कृच्छ्रादुच्छ्व-सिति, कपोत इव कूजति, स्तब्धस्रस्तमीलितदृक् निःसंज्ञश्च भवति । (चसि. २.२२) (चसि. ९.१२–१४ असंनि. १५. )

**अपतर्पण**–( न., ) लङ्घनम्, अनशनादि ( चवि. २.१३ )
तत् त्रिप्रकारम्–लङ्घनम्, लङ्घनपाचनम्, दोषाव-सेचनं च ( च. ३.४० )
चिकित्सोपक्रमः ( असंसू. २४; अहृसू. १४.१ )
कर्शनम् ( चसू. २३.२९ )
व्रणस्य षष्ट्युपक्रमेषु एकः ( सुचि.१.८ )
ऊर्ध्वमारुततृष्णाक्षुन्मुखशोषश्रमान्वितगर्भिणी-वृद्धबालभीरवश्चैतेऽपतर्पणे निषिद्धाः ( सुचि. १.१२ )
अपतर्पणद्रव्यं नाम लङ्घनद्रव्यं तच्च अग्निवाय्वा-काशात्मकम् ( अहृसू. १४.३ )
यथा–कुलत्थादीनि ( अहृसू. २४.२१,२२.३६ )

**अपतर्पित**–वि., कर्शितः ( सुचि. २३.४ ) अपतर्पितस्य रूपाणि–शूलम्, अरतिः, आध्मानम्, गुदप्रकोपः, ज्वरः, अङ्गदाहः, श्रमः, मोहः, तृष्णा, शय्यासन-स्त्रीविषयेष्वभक्तिः ( का. भोजनकल्प. १७.१८ )

**अपतानक**–पु., वातरोग०, ( चसि. २.२२ ) अयं मध्यममार्गजः ( चसू. ११.४९ ) आक्षेपकभेदः ( सुनि. १.५२ ) यः आक्षेपकः अन्तराऽन्तरा

पातयति, सः अपतानकः, स त्रिविधः दण्डापतानकः अन्तरायामः बहिरायामः च। संप्राप्तिः लक्षणं च–अधःप्रतिहतो वायुः ऊर्ध्वं व्रजन् हृदाश्रिताः नाडीः प्रविश्य हृदयं शिरः शङ्खौ च पीडयन् परितः गात्रमाक्षिपति धनुर्वच्च नामयति, तत्र कृच्छ्रादुच्छ्वासः, स्तब्धस्रस्तमीलितदृक्त्वम्, कपोत इव कूजनम् निःसंज्ञता च। किंच वायुना हृदि मुक्ते स्वास्थ्यं, हृदि चावृते अस्वास्थ्यं। ( चनि. ९.१४ ) द्रष्टव्यं–'अपतंत्रक' ( असंनि. १५ ) ( अपतान–पाठः ) ( अहृनि. १५.१९–२० ) तस्य रिष्टलक्षणानि–स्रस्ताक्षत्वं भ्रुवि वक्रता स्वेदो वेपथुः प्रलापित्वं खट्वापातित्वं ( खट्वापादकल्पैः हस्तपादैः प्रसृतैः पतनशीलत्वम् ) बहिरायामित्वं च ( सुचि. ५.१८ )

अभिघातनिमित्तः–आघातजन्यः अपतानकः स च असाध्यः ( सुनि., १.५९ )

गर्भपातनिमित्तः–गर्भपतनकारणाज्जातः अपतानकः, स धातुक्षयात्प्रकुपितेन केवलवातेन भवति; सोऽप्यसाध्यः ( सुनि., १.५९ )

शोणितातिस्रावजः धातुक्षयात्प्रकुपित; केवलवातजः, सोऽपि असाध्यः ( सुनि. १.५९ )

**अपत्य**–न., संततिः ( सुचि. २६.३९ )

**–जीव**–पु., वनस्पति०, पुत्रजीवः ( रा. परिशिष्ट ९.३१ )

**–जीवक**–पु., वनस्पति०, पुत्रजीवः। ( रा. परि. ९.३१ ) ( 'पहा–पुत्रजीव'. )

**–दा**–स्त्री., वनस्पति०, पुत्रदा ( रा. परि. ४ पृ. ३३७ )

**–पथ**–पु., शारीर०, अपत्यमार्गः, कुक्षिस्थः गर्भः येन पथा निष्क्रामति, स गर्भस्य मार्गः। ( चशा. ६.२४ ) ( चचि. १४.६ ) योनिः ( सुनि. ८.३ ) ( असंशा. ४.२९ )

**–मार्ग**–पु., शारीर०, योनिमार्गः ( चचि. ३०.२२३ )

**–संतान**–न., अपत्यपरम्परा, पुत्रपौत्रादिवंशसातत्यम् ( चचि १.९ )

**अपत्रवल्लिका**–स्त्री., वनस्पति०, सौम्या ( रा. परि. ३.३१ )

**अपथ्य**–वि., अहितम् ( अहृसू. २.७ )

**अपदंश**–पु., रोग०, उपदंशः ( असंउ. ३८ )

**अपदेश**–पु., तन्त्रयुक्ति०, अनेन कारणेन इति कार्यं प्रति हेतुकथनम्; यथा मधुरः श्लेष्माणमभिवर्धयति, ( सुउ. ६५.१५ ) अपदेशो नाम यत्प्रतिज्ञानार्थसाधनाय हेतुवचनम्। यथा–"वाताज्जलं जलाद् देशं देशात्कालं विद्यादुष्परिहार्यत्वात् गरीयस्तरम्–"। ( चसि. १२.४२. )

**अपद्वार**–न., अमार्गः ( सुक. १.२२ )

**अपनयन**–न., दूरीकरणम् ( सुचि. ३८.५, ) यथा बालस्य स्तनादपनयनम्, स्तनपानाद् दूरीकरणम्. ( असंउ. )।

**अपप्रजाता**–स्त्री. अकाले पतितगर्भा ( सुनि. ९.२६ ) असम्यक् प्रजाता नाम अयथाकालप्रसूता ( सुउ. ३९.२२ )

**अपप्रसूता**–स्त्री., असम्यक् प्रसूता ( अहृसू. १६.८ )

**अपबाध्यमान**–वि. मर्मपीडाकरम् ( सुसू. २७.१३ )

**अपबाहुक**–पु., रोग०, अवबाहुकः ( असंनि. १५ ) ( सुनि. १.८२ )

**अपमार्जन**–न., मृजा, स्वच्छीकरणम् ( चशा. ८.२७ ) शातनम् ( केशनखरोमादेः ) ( सुचि. २४.७३. )

**अपरा**–स्त्री. शारीर०, गर्भिण्या गर्भाशये गर्भस्य पोषणार्थं जातः, गर्भनाभिनाडीसंबद्धः अवयवविशेषः 'अमरा' इति लोके ख्यातः ( चशा. ६.२३, ) गर्भिण्याः आर्तवं गर्भेण अधः प्रतिहतम् अपरं अपरं चोपचीयमानम् 'अपरा' इत्याहुः। ( असंशा. २, ) ( सुशा. ४.४, ) गर्भावरणं जरायुसंज्ञम्। ( सुचि. १५.१७. ) गर्भावरणविशेषः। 'उलब' इति लोके ( सुचि. ३७.१२५ ) अपतिता अपरा आनाहाध्मानौ कुरुते। ( सुशा. १०.२१ )

**–मुख**–न., जरायुमुखम् ( काशा. जातिसूत्रीय पृ. ५७ )

**अपराजित**–पु., सविषकीट०, कणभः। ( सुक. ८.२६ ) योग०, ग्रह–कृत–मानसोन्मादादिविकारघ्नः ( सुउ. ६०.४७ )

**अपराजिता**–स्त्री., वर्ति०, तिमिरकुकूणकादिनेत्रामयघ्नी ( असंउ. १९ )

वनस्पति०, विष्णुकान्ता, शमी, हपुषा, गिरिकर्णी, शेफालिः ( निर्गुण्डीभेदः ) ( ध. ५.१७३ ) ( रा. ८.१५५ )

**अपरान्त**–पु., देश०, कोङ्कणः ( अहृसू. ५.११ )

**अपराह्न**–पु., दिनभाग०, दिनस्य तृतीयः प्रहरः ( सुशा. २.२८ )

पञ्चधा विभक्तेऽहनि चतुर्थो भागः, द्विधा विभक्तेऽहनि द्वितीयो भागः ( सुचि. २८.३ )

**अपरिज्ञान**–न., वादे निग्रहस्थान० ( चवि. ८.३५ )

( अविज्ञातार्थम् इति न्यायसू० ( ५.२.९ )
**अपरिनिष्ठित**–वि., अनुभवहीनः ( सुसू. ३.४८ ) ( असंसू. २.१० )
**अपरिपक्व**–वि., आमम् ( सुनि. ६.४ )
**अपरिम्लान**–पु., वनस्पति०, कुर( रु )बकः, रक्तसैरेयकः कुरुबकः स्मृतः ( ध. १. २७८, ) ( रा. १०.४१२ )
**अपरु**–पु., वनस्पति०, खदिरः ( ताम्रकंटकः रा. ८.३६ पृ. १२ )
**अपर्यागत**–वि., अपक्वम् ( सुसू. ४६.२१० )
**अपर्युषित**–वि., तद्दिनसिद्धम् अन्नादि ( सुसू. ४६.३३९ )
**अपर्वदण्ड**–पु., वनस्पति०, रामकाण्डः, रामशरः
तद्गुणाः–अम्लः कषायः ईषदुष्णः रुचिप्रदः पित्तकृत् कफवातघ्नः च ( रा. परि. ८.३६ )
**अपलाप**–पु., मर्म०, वक्षोमर्म ( सुशा. ६.६ )
अंसकूटयोः अधस्तात् पार्श्वोपरिभागयोः ( सुशा. ६.२५ ) एष सिराममर्म ( सुशा. ६.७ ) कालान्तरप्राणहरः ( सुशा. ६.११ ) संख्यया द्वौ ( वामदक्षिणभेदेन ) मानम् अर्धाऽङ्गुलम् ( सुशा. ६.२५ )
तत्र विद्धे रक्तेन पूयभावगतेन मरणम्
**अपवर्ग**–पु., तन्त्रयुक्ती०, साकल्येनोद्दिष्टस्य एकदेशापकर्षणम् ( चसि. १२.४३ )
अभिव्याप्य अपकर्षणम्, यथा अस्वेद्या विषोपसृष्टाः अन्यत्र कीटविषात् ( सुउ. ६५.१८ )
मोक्षः ( चसू. २७.३५०–३५१ )
निवृत्तिः ( चशा. ५.११ )
**अपवाद**–पु., यत्र कश्चिन्नियमो न संगच्छते तद् उदाहरणम् ( चवि. ८.१३४ ) ( असंसू. २३.८ )
**अपवृत्त**–वि., विपरीतानुष्ठानपरः ( सुउ. ६०.२६ )
वलितम् ( सुचि. १५.९. )
स्थानात् स्रस्तम् ( सुसू. ११.२८., चचि. ३०.४५. )
**अपशोक**–पु., वनस्पति०, अशोकः ( रा. १०.२-७०., )
**अपसव्य**–वि., अपसव्यम्; दक्षिणमित्यर्थः ( असंसू. ३.४७., )
**–वस्त्र**– अपसव्योपवीतः ( सुउ. ६०.१२., )
**–वासस्**–( परिव., वि., ) दक्षिणाङ्गाश्रितमुत्तरीयवासः यस्य सः ( सुसू. २९.८. )
**अपस्तन**–वि., त्यक्तस्तनपानः ( कासं. खिल., ८.१०५. ) अ., स्तनाद्विदूरम् ( असंउ. १,.७१. )
**अपस्तन्य**–वि., त्यक्तस्तन्यः ( अहृउ. १.३९., )

**अपस्तम्भ**–पु., वक्षःस्थानगतं मर्म ( सुशा. ६.१० )
स्थानम्–उरसःपार्श्वद्वयं वामदक्षिणभेदेन एतत् सिराममर्म, तत्र व्यधे सति शोणितपूर्णकोष्ठतया वातपूर्णकोष्ठतया कासश्वासाभ्यां कालान्तरेण मरणम्, संख्यया द्वौ, मानम् अर्धाङ्गुलम् ( असंशा. ६.६., )
**अपस्मार**–पु., रोग०, निरुक्तिः–स्मारः ( स्मृतिः ) नाम भूतार्थविज्ञानम् तद् भूतार्थविज्ञानं यस्मिन्नपगतं भवति स व्याधिरपस्मारः ( सुउ. ६१.३ )
तत्र तमः प्रवेशः बीभत्सचेष्टाश्च स्मृतिबुद्धिसत्त्वसंप्लवाद् भवन्ति ( चचि. १०.३. चनि. ८.५ )
अस्मिंश्च विकारे किञ्चित्कालावस्थिता विगतसंज्ञता भवति ।
संप्राप्तिः– रजस्तमोभ्यामुपहतचेतसां प्रकुपिता दोषाः अन्तरात्मनः श्रेष्ठतममायतनं हृदयं तथा इन्द्रियायतनानि च उपसृत्य पर्यवतिष्ठन्ते । तत्रावस्थिताः सन्तः कामक्रोधभयलोभमोहहर्षशोकचिन्तोद्वेगादिभिश्च ईरिता हृदयमिन्द्रियायतनानि सहसाभिपूरयन्ति तेन च जन्तुरपस्मरति ( चनि. ८.४ )
अपस्मारव्याधौ कुपिता मलाः द्वादशाहात्, पक्षाद् मासाद्वा स्तोककालान्तरं वेगं कुर्वन्ति ( चचि. १०.१३ )
"देवे वर्षत्यपि यथा भूमौ बीजानि कानिचित् ।
शरदि प्रतिरोहन्ति तथा व्याधिसमुद्भवः ॥" ( सुउ. ६१.२० )
प्रथमा उत्पत्तिः– दक्षाध्वरध्वंसे विविधभूताशुचिस्पर्शात् देहिनामपस्माराणामुत्पत्तिः अभूत् ( चनि. ८.११ )
संख्या–चतुर्विधोऽपस्मारः वातजः पित्तजः कफजः संनिपातजः ( सुउ ६१.१०.११; चनि. ( १०.८. चनि. ८.३ )
पूर्वरूपम्–भ्रूव्युदासः, सततमक्ष्णोः वैकृतम्, अशब्दश्रवणं, लालासिङ्घाणकप्रस्रवणम्, अनन्नाभिलाषा, अरोचकाविपाकौ, हृदयग्रहः, कुक्षेराटोपः, दौर्बल्यम्, अस्थिभेदः, अङ्गमर्दः, मोहः, तमसो दर्शनम्, मूर्च्छा, अभीक्ष्णं भ्रमः, स्वप्ने मदनर्तनव्यथनवेपनपतनादीनि ( चनि. ८.६ )
"हृत्कम्पः शून्यता स्वेदः ध्यानं मूर्च्छा प्रमूढता ।
निद्रानाशश्च तस्मिँस्तु भविष्यति भवत्यथ ।" ( सुउ. ६१.७ )

रूपम्–अविद्यमानानि रूपाणि पश्यति, पतति, जिह्वाक्षिभ्रुवः प्रस्फुरन्ति । स्रवल्लालः हस्तौ पादौ विक्षिपन् दोषवेगे विगते सुप्तवत्प्रतिबुध्यते । ( चचि. १०.७,८ )

वातजोऽपस्मारः– अभीक्ष्णमपस्मरणम्, उत्पिण्डिताक्षित्वम्, असाम्ना विलपनं, फेनोद्वमनम्। अतीवग्रीवाध्मानं, पूरितस्तब्धग्रीवत्वम्, आविद्धशिरस्त्वं, विषमविनताङ्गुलित्वं, पाणिपादानवस्थितत्वम्, नखनयनवदनत्वचाम् अरुणपरुषश्यावत्वम्, अनवस्थितचपलपरुषरूक्षरूपदर्शनं, वातलानुपशयत्वं, विपरीतोपशयत्वं च क्षणेन ससंज्ञत्वं चेति लक्षणानि । ( चनि. ८.८ ) ( १ )

'कम्पते प्रदशेद्दन्तान् फेनोद्वामी श्वसित्यपि ।
परुषारुणकृष्णानि पश्येद् रूपाणि चानिलात् ॥' ( चचि. १०.९ )

''वेपमानो दशन् दन्तान् श्वसन् फेनं वमन्नपि ।
यो ब्रूयाद् विकृतं सत्त्वं कृष्णं मामनुधावति ॥''
ततो मे चित्तनाशः स्यात् सोऽपस्मारोऽनिलात्मकः।' ( सुउ. ६१.११,१२ )

वातापस्मारे 'हृदि तोदः' इति विशेषलक्षणम् ( सुउ. ६१.१६ )

पित्तजोऽपस्मारः– अभीक्ष्णमपस्मरणं, क्षणेन ससंज्ञत्वम्, अवकूजनं, भूम्यास्फालनं, नखनयनवदनत्वचां हरितहारिद्रताम्रत्वं, रुधिरोक्षितोग्रभैरवादीप्तरूषितरूपदर्शनं, पित्तलानुपशयत्वं, विपरीतोपशयत्वं चेति लक्षणानि । ( चनि. ८.८ ) ( २ )

' पीतफेनाङ्गवक्त्राक्षः पीतासृग्रूपदर्शनः ।
सतृष्णोष्णानलव्याप्तलोकदर्शी च पैत्तिकः ॥ ' ( चचि. १०.१० )

' तृड्तापस्वेदमूर्च्छार्तो धुन्वन्नङ्गानि विह्वलः ।
यो ब्रूयाद् विकृतं सत्वं पीतं मामनुधावति ॥
ततो मे चित्तनाशः स्यात्स पित्तभव उच्यते । ' ( सुउ. ६१.१३,१४ )

कफजोऽपस्मारः–चिरादपस्मरणं, चिराच्च संज्ञाप्राप्तिः, पतनं, नातिविकृतचेष्टत्वं, लालोद्वमनं, नखनयनत्वचां शुक्लत्वं, शुक्लगुरुस्निग्धरूपदर्शनं, श्लेष्मलानुपशयत्वं, विपरीतोपशयत्वं चेति लक्षणानि ( चनि. ८.८ ( ३ )

' शुक्लफेनाङ्गवक्त्राक्षः शीतोहृष्टाङ्गजो गुरुः ।
पश्यन् शुक्लानि रूपाणि श्लैष्मिको मुच्यते चिरात् ॥ ( चचि. १०.११ )

'' शीतहृल्लासनिद्रार्तः पतन्भूमौ वमन्कफम् ।
यो ब्रूयाद्विकृतं सत्त्वं शुक्लं मामनुधावति ॥''
ततो मे चित्तनाशः स्यात्सोऽपस्मारः कफात्मकः ( सुउ. ६१.१४,१५ )

संनिपातजोऽपस्मारः–समवेतसर्वलिङ्गम् अपस्मारं सांनिपातिकं विद्यात् । असौ असाध्यः ( चनि. ८.८ ( ४ )

त्रिषु अपि वातजादिषु अपस्मारेषु प्रलापः, कूजनं, क्लेशः इति प्रत्येकं लक्षणानि भवन्ति ( सुउ. ६१.१६ )

अपस्मारो व्याधिः न दोषजः इति केषांचिन्मतम् । आगन्तुरपस्मारः नास्ति इति सुश्रुतमतम् ( सुउ. ६१.१७,१९ )

अपस्मारोपद्रवाः–बहुशः अपस्मरणं, प्रक्षीणता, भ्रूचलितत्वं, नेत्रद्वयविकृतियुक्तत्वम् ( सुसू. ३३.२६ )

अपस्मारस्य अरिष्टलक्षणम्–
मत्तं नृत्यन्तमाविध्य प्रेतो हरति यं नरम् ।
स्वप्ने हरति तं मृत्युरपस्मारपुरःसरः ॥
असत्तमः पश्यति यो यःश्रुणोत्यसतः स्वनान् ।
बहून् बहुविधान् जाग्रत्सोऽपस्मारेण वध्यते ॥
( चइ. ५.२२,२३, असंउ. १०, अहउ. ७. )

**–चिकित्सित**–( न.,) अध्याय० ( चचि. १० )

**–नाशन**–पु., योग० ( र. २३.८–१६ )

**–निदान**–न., अध्याय० ( चनि. ८. )

**–प्रतिषेध**–पु., अध्याय०, ( सुउ. ६१. )

**अपस्मृति**–स्त्री., रोग०, अपस्मारः ( अहसू. २७.१२. )

**अपस्वर**–क्रि. वि., अव्य., विकृतस्वरं यथा भवति तथा ( चइ. ९.१४., असंशा. ९. )

**अपाक**– वि., अविद्यमानपाकः, ईषत्पाको वा. ( सुचि. १.३३. )

**अपाकिन्**–वि.. जठरानलेन पक्तुमशक्यम् ( सुक. २.२० )

**अपाङ्ग**–पु., शारीर०, भ्रूपुच्छान्तः ( सुसू. २३.६. )
नेत्रसंधिविशेषः ( असंशा. ५. )
शङ्खसंधिः, शङ्खः ( ड. सुउ. ६२.३३. )
( अपाङ्गी )–स्त्री., शारीर०, सिराविशेषः, भ्रूपुच्छान्तस्थ सिरा ( सुशा. ८.१७. ) अक्ष्यामयेषु अस्याः व्यधनमुक्तम्.
देश–पु., शारीर०, कर्णपुत्रिकाया अधस्तिर्यग्देशः ( सुसू. १६.२३. )

**–मर्मन्**–न., भ्रूपुच्छान्तयोरधः अक्ष्णोः बाह्यतः अपाङ्गौ नाम मर्मणी तयोर्व्यधात् आन्ध्यं, दृष्ट्युपघातो वा भवति ( सुशा. ६.२७. ) एतदपाङ्गमर्म, शिरोमर्म, सिरामर्म च. विद्धं च सद् वैकल्यकरं, संख्यया द्वे ( सुशा. ७.२२. ) मानतोऽर्धाङ्गुलञ्च। ( सुशा. ६.२७. )

**अपांधातु**–पु., अब्धातुः, कायद्रवः ( सुउ. ४०.६ )

**अपान**–पु., शारीरवायुविशेषः ( सुनि. १.१९ ) तन्निरुक्तिः–अपानिति अधोदेशान्निःसरति, इत्यपानः, कर्म चास्य मूत्रपुरीषादेरधः अपनयनम्। न., गुदस्थानम् ( अहृसू. १२.९., ) निश्वासः ( चशा. १.७० )

**अपामार्ग**–वनस्पति०, ( चसू. २.३, ) श्वेतापामार्गः रक्तापामार्गः तोयापामार्गश्चेति त्रिविधः; अस्य मूलं व्रणेषु मांसवर्धनार्थमुपयुज्यते। ( सुसू. ३७.३०; ) बीजानि च शीर्षविरेचनार्थमुपयुज्यन्ते। ( चसू. २.३–५; ) अपामार्गक्षारोऽपि उपयुज्यते। ( सुसू. ११.११; ) 'अन्धडक' इति लोके ( सुसू. ३९.६ ) अपामार्गगुणाः–तिक्तः कटुः, उष्णः, ग्राही, वान्तिकृत्, कफघ्नः, अर्शः कण्डूदरामय–रक्तविकार–व्रणसिध्मापची–मेहघ्नः ( ध. १.२६०, रा. ४.२६४.२६५ ) 'अपामार्गः सरस्तीक्ष्णः दीपनस्तिक्तकः कटुः। पाचनो रोचनश्छर्दिकफमेदोऽनिलापहः॥ निहन्ति हृद्रुजाध्मानकण्डूशूलोदरापचीः।' ( भा प्र० )

**–तण्डुल**–पु., अपामार्गस्य निस्तुषं बीजम् ( चसू. २०.१ )

**–तण्डुलीय**–पु., अध्याय ( चसू. २ )

**अपाय**– पु., अभावः ( चचि. २२.८१ ) व्याध्यपगमनम् हानिः ( चइ. १.३ )

**अपार्थ–(क)**–वि., प्राकृतार्थरहितं, निरर्थकम्, व्यर्थम् ( सुक. १.२० ) न; वाक्यदोषविशेषः, अर्थयुक्तपदानि परस्परमसंबद्धानि यत्र प्रयुक्तानि तत्र तद् वचनमपार्थकम्। यथा चक्रनक्रवंशाः। अपार्थकं नाम यद् अर्थवच्च परस्परेण चायुज्यमानार्थकम् ( चवि. ८.५४ )

**अपालाप**–न., मर्मविशेषः, अपलापः ( असंशा. ७ )

**अपांवाहिस्रोतस्**–न., उदकवहस्रोतः ( सुउ. ४८.५ )

**अपाश्रय**–पु., प्रतिवाहकः, उपधानम् ( सुशा. १०.३ ) प्राङ्गणावरणम्, मत्तवारणः ( हलायुधकोशः )

**अपिधान**–न., कपाटम्, आच्छादनम् ( चशा. ८.३३ )

**अपीनस्**–पु., रोग०, नासारोग०, दुष्टप्रतिश्याय०, पीनसः ( चचि. २६.११४ सुउ. २२.६ )

**अपुनर्भव**–पु., पुनरुत्पादाभावः ( असंसू. २.१२ ) पुनः पूर्वरूपग्रहणे पूर्वप्रकृतेः अङ्गीकारे वाऽसमर्थः ( लोहादीनाम् ) ( र. ८.२८ )

**–कर**–वि., नष्टस्य पुनरुत्पत्तिनिवारकम् (असंसू. १२.३)

**अपुनर्भाव**–पु., अपुनर्भवः (अहृसू. ७.–५०.र. १०.४९)

**अपुष्प**–पु., वनस्पति०, उदुम्बरः ( र. २२.१५५ )

**–फलद**–पु., पनसः ( रा. परि. ११.१० )

**–फलसंबन्ध**–पु., उदुम्बरः ( ध. ५.८६ )

**अपुंस्**–पु., लक्षण०, क्लीबः ( चचि. ३०.१८९-१९० )

**अपूप**–पु., कृतान्न०, ( चसू. २७.२६५ ) मण्डकः ( असंउ. ४ ) पिष्टकृतास्तनवो विस्तृता अपूपाः ( अहृसू. ६.४२ ) धान्य०, गोधूमः ( रा. १६. १५१ )

**अपूर्व**–( परिव. वि. ) प्रथमम्। ( सुचि.२६.१९ )

**–वैद्य**–पु., अपूर्वः, आश्चर्यभूतः वैद्यः (अहृसू. १.१)

**–संभव**–पु., अभूतपूर्वस्योत्पत्तिः ( असंशा. १२.३ )

**अपेतराक्षसी**–स्त्री., तुलसी, सुरसा ( चचि. १०.३९ )

**अपेलव**–वि., उद्धृतस्नेहम् ( चचि. १३.१०१ )

**अपेहिवाता**–स्त्री., वनस्पति०, प्रसारणी ( सुचि. १८.४ )

**अपोह्य**–वि., अपसारणीयम्, त्याज्यम् ( सुउ. ६०.२१ )

**अप्रकम्प्य**–वि., स्थिरः, अपरिवर्तनीयः ( अहृसू. ७.५० )

**अप्रकृतक**–वि., प्रकरणसम्बद्धार्थरहितम् ( चवि. ८.६० )

**अप्रगुण**–वि., विचलितम्, विकृतम्, यत्स्वकार्यं न करोति ( चसू. १३.५७ )

**अप्रचेतन**–वि., स्पर्शज्ञानरहितम् ( सुचि. ५.३२ )

**अप्रजस्**–वि., अपत्यरहितम् ( असंसू. ९.६९ )

**अप्रजा**–स्त्री., योनिरोग०, लब्धगर्भायाः असृक्स्रावेण गर्भो न तिष्ठति ( चचि. ३०.१६ )

**अप्रतान्त**–वि., अबुभुक्षितः ( चचि. १५.२३३ )

**अप्रतिकारसेविन्**–वि., चिकित्सामकुर्वाणः ( सुउ. २०.८ )

**अप्रतिवार**–वि., दुर्निवार्यम् ( सुचि. ४.२९ )

**–वीर्य**–वि., दुर्निवारशक्तिः ( सुनि. १६.५३ ) ( सुचि. ४.२९ )

**अप्रतिषिद्ध**–वि., अनिषिद्धम्। ( सुउ. ६५.२८ )

**अप्रतिसम्बद्धार्थ**–वि., वाक्यदोष०, असंबद्धम्, असङ्गतम् ( वाक्यादि ) ( चवि. ८.५४ )

**अप्रतीघात**–पु., अस्पर्शत्वम्, आकाशस्य स्पर्शनेन्द्रियगोचरं लक्षणम् ( चशा. १.२९ ) 'येनेन्द्रियेण

यस्य भावो गृह्यते तेनैवेन्द्रियेण तस्याभावोऽपि गृह्यते' इति नियमात्।
अप्रतिहननम्–( सुशा. ७.८ )
अप्रमत्त–वि., सावधानः ( सुचि. ९.४१ )
अप्रमेय–वि., प्रमातुमशक्यम् ( सुसू. ४६.३३१ )
अप्रयत–वि., अपवित्रम् ( चइ. १२.१० )
–भाव–पु., अशुचित्वम् ( असंउ. ७ )
अप्रवात–पु., अप्रवेगो वायुः ( असंसू. १२ )
अप्रहर्ष–पु., लक्षण०, स्त्रीविषयेऽनभिलाषः, लिङ्गशैथिल्यम् ( सुसू. २४.९ )
अप्राप्तफलकोशा–( वि., ) वृषणग्रन्थिकोशमप्राप्ता, ( अन्त्रवृद्धिप्रकारः, ) ( सुचि. १९.२१ )
आप्राप्तातीतकाल–( वि., ) कालपूर्वं, कालातीतं वा ( सुसू. ) ( ४६.४७१ )
अप्राप्तावी–( वि., ) अनागतप्रसववेदना( सुशा. १०.९ )
अप्राप्तोदीरण–( न., ) लक्षण०, वेगाभावेऽपि वेगोदीरणम् ( चचि. ३०. २३३ )
अफल–पु., व्रीहिः ( रा.१६.११७ )
अफूक–न., निर्यास० खसखसफलस्य निर्यासः, उपविषभेदः, तद्गुणाः–शोधनं शोषणं, ग्राहि, वृष्यं, बल्यं, वातपित्तकरं, कफघ्नं संनिपातघ्नं च ( ध. ६.१२१. )
अफेन–न., अफूकम् ( रा. ६.१९१ )
अफेनक–न., अफूकम् ( ध. ६.१२१ )
अबद्धमांसहर–( वि., ) लक्षण०, अनिबिडमांसहरः ( चचि. १ पा. २.३ )
अबन्ध्य–वि., बन्धनायोग्यम् ( सुसू. १८.३२ )
अबलश्रोत्र–वि., लक्षण०, रुद्धश्रवणमार्गः, शब्दश्रवणासमर्थः ( अहृसू. २०.२७ )
अबला–स्त्री. स्त्री ( सुशा. ३.१२ )
–क्षीर–न., स्त्रीस्तन्यम् ( सुउ. १२.४३ )
अबात्मक–वि., आप्यम्, जलीयम् ( सुशा. ४.१२ )
अबीज–वि., प्रजोत्पादनेऽसमर्थम् ( सुशा. २.५ )
अबुद्धित्व– न., अबोधः, मन्दबुध्दित्वम् ( चसू. १६.१५ )
अब्ज–न., कुमुदम् ( ध. ४.१५४ )
अब्जिनी–स्त्री., पद्मिनी ( ध. १.४० )
अब्द–पु., मुस्ता ( सुचि. ३८.५१ )
वालकम् ( र. १८.४८ )
–ध्वनि–पु., वनस्पति०, तण्डुलीयकः ( र. १०.२२ )
अब्धि–पुं., समुद्रः ( रा. ३.४ )
–डिण्डीर–न., समुद्रफेनः ( र. २४.१४ ) ( अहृसू. १५.२५ )
अब्रह्मचर्य–न., स्त्रीसमागमः ( अहृसू. ७.५२ )
अभक्त–न., अभोजनं, विगुणं भोजनम् ( चचि. १२.५ )
औषधकालविशेषः, यत् केवलमन्नरहितमौषधम् उपयुज्यते तत्, अनन्नमिति पर्यायोऽप्यन्नावधेयः। ( सुउ. ६४.६६, असंसू. २३.१३ )
–च्छन्द–पु., रोगलक्षण०, भक्तारुचिः(सुउ.४१.१३)
भोजनानभिलाषः ( ड. सुचि. २.१४ )
वि., अन्नश्रध्दाविहीनः, 'यस्य नान्ने भवेच्छ्रध्दा सोऽभक्तच्छंद उच्यते। कुपितस्य भयार्तस्य यश्च भक्तनिरोधजः। ( मा. नि. अरोचक–मधु )
–रुज्–स्त्री., अन्नारुचिः ( सुउ. ४९.११ )
अभङ्गुर–वि., राजिरहितम् ( सुसू. ३६.३ )
अभय–न., वनस्पति०, हरीतकी ( चसू. ५.६४ )
उशीरम् ( चसू. ३.२९ )
अभया–स्त्री., वनस्पति०, हरीतकी ( चसू. २६.५१ )
–गुड–पु., पाण्डुरोगघ्नो योग० ( सुउ. ४४.१६ )
–प्रयोग–पु., अभयायाः प्रयोगः संतर्पणव्यापत्तिनाशकोऽयम् ( चसू. २३.१७ )
–प्राश–पु., योग०, हरीतकीप्राशोऽगस्त्यहरीतक्यादिप्राशो वा ( चसू. २३.९ )
अभयामलकीय–पु., अध्यायपाद० ( चचि. १ पा. १ )
अभयारिष्ट–पु., मद्य०, ग्रहणीपाण्डुहृद्रोगादिहरः, विशेषेण अर्शोघ्नः ( चचि. १४.१३८–१४३ )
अभाव–पु., विनाशः ( चचि. १३.५१ )
अभिकाम–वि., अभिलाषुकः ( सुउ. ६०.१२ )
स्त्रीसंजिगमिषुः ( सुचि. २४.१३१ )
अभिकामा–वि., पुरुषसंजिगमिषुः ( सुचि. २४.१३१ )
अभिखिन्न–वि., लक्षण०, आक्रान्तम् ( चक. १२.८ )
अभिग्राहक–वि., अधिष्ठातृ ( चशा. ३.१३ )
अभिघात–पु., आघातः ( चचि. ३.१११–११२ )
–काल–पु., शरीरप्रवेशकालः ( चनि. ७.१७ )
अभिघार–पु., न., क्षीरविकार०, घृतम् ( ध. ६.१४४ )
अभिघारित–वि., ईषद् घृताक्तं ( सुचि. ३०.५ )
अभिचार–पु., प्रयोग०, हिंसार्थोऽथर्वमन्त्रहोमादिः, आगन्तुज्वरस्य हेतु०, ( चचि. ३.१११–११२ )
मन्त्रादिभिर्मारणप्रयोगः ( सुउ. ३९.७९ )
अभिजन– पु., विशुद्धकुलम् ( चसू. ८.१८, )
अभिजित्– पु., ऋषि०, रोगापहरणचिन्तार्थं हिमवतः पार्श्वे समेतेष्वेकः ( चसू. १.१० )

**अभिज्ञान**–न., चिह्नम् ( चशा. ८.४४ )
**अभिताप**–पु., रोगलक्षण०, तापः रोग०, अश्वज्वर० ( असंनि. १.५ )
**अभितापन**–वि., सर्वतः तापयतीति (सुउ. २०.१२)
**अभितापन**–वि., रोगलक्षण०, अभितो द्रवणं नाम पलायनम्, यथा पित्तोन्मादे ( चनि. ७.७ ( २ )
**अभिद्रुत**–वि., लक्षण०, पीडितम् ( सुउ. ५५.१८ )
**अभिद्रोह**–पु., परपीडार्थो प्रवृत्तिः ( चवि. ४.८ ) शत्रुभावः, वैरम् ( चनि. १.१५ )
**अभिधर्षण**–न., धृष्टता, अनादरः पूज्येषु ( चशा. १.१०४ )
आवेशः ( चचि. ९.१६ )
**अभिधारण**–न., यन्त्र०, अग्निधारणयन्त्रम् ( र. १६.६० )
**अभिध्या**–स्त्री., मनसा पराभिद्रोहचिन्तनम् ( चसू. ७.२७ )
परगुणाद्यसहिष्णुता ) अहृसू. २.२२ )
**अभिध्यातृ**–वि., मनसा द्रोहणशीलः ( चशा. ८.२१ )
**अभिध्यायिन्**–वि., ध्यानशीलः, चिन्तनशीलः ( असंशा. २ )
**अभिनव**–वि., अनतिक्रान्तसंवत्सरम् ( सुसू. ३६.७ )
**अभिनिर्वृत्ति**–स्त्री., उत्पत्तिः ( चवि. ८.७२ ) व्यक्तता ( चशा. ३.१२ )
**अभिनिवेश**–( परिव. ) पु., निश्चयः ( चसि. २.२५ )
**अभिन्नचक्षुस्**–वि., अभिन्नतारकः, अभिन्नदृष्टिः ( चचि. २६.२५६ )
**अभिन्यास**–पु., रोग० सन्निपातज्वरभेदः,
संप्राप्तिः–उरःस्रोतोनुगामिन आमाभिवृद्धया प्रकुपितास्त्रयो दोषा बुद्धीन्द्रियमनोगताः सन्तो महाघोरमभिन्यासं जनयन्ति । अस्य मर्यादा पञ्चदिनानि ।
तेनास्य रुग्णस्य श्रुतौ नेत्रे च प्रसुप्तिः, न कस्यांचित् चेष्टायामीहा, तथा च गन्धस्पर्शशब्दानां नैव बोधः। अनेन रुग्णेन शिरोऽभीक्ष्णं लुठ्यते, आहारो नाभिनन्द्यते, कूज्यते, तुद्यते, परिवर्तनमीह्यते, अल्पमल्पं किञ्चित् प्रभाष्यते च। अयम् अभिन्यासो ज्वरोऽसाध्यः ( मानि. २३ )
**अभिपन्न**–वि., आक्रान्तः ( सुउ. ४२.८९ )
**अभिप्रपन्न**–वि., अभिमुखं प्राप्तम् ( सुशा. ९.७ )
**अभिप्राय**–पु., अभ्यर्थनम्, भोजनादीच्छा, 'श्रद्धामभिप्रायेण परीक्षेत' ( चवि. ४.८ )
**अभिप्रेत**–वि., निर्णीतं स्वीकृतं च यत्तत् ( अहृसू. १२.१३ )
**अभिप्रेर्यमाण**–वि., गतिमान्, प्रेरितः ( सुशा. ३.४ )
**अभिप्लावन**–( परिव. ) न., प्रक्षेपणम्, मिश्रीकरणम् ( सुचि. ४.२८ )
**अभिभव**–पु., पराभवः ( सुनि. ५.६ )
**अभिभवन**–( परिव. ) न., अभिभवः, कुट्टनम् ( सुचि.२८.१९ )
**अभिमान**–पु., अहंकारः ( अहृसू. १२.१३ )
**अभिमुख**–वि., संमुखः ( सुशा. ५.४५ )
**अभिमृष्ट**–वि., मर्दितम् ( सुक. ४.१३ )
**अभियात्**–वि., गच्छत् ( चनि. ६.६ )
**अभियुक्त**–वि., अनुष्ठानपरम् ( अहृसू. १२.७३ )
**अभियोग**–पु., सोत्साहः दीर्घः प्रयत्नः ( चवि. ८.१४ )
**अभिलाष**–पुं., इच्छा ( चनि. ७.७( २ )
**अभिवाहिन्**–वि., अभिवहनशीलम् ( सुशा. ९.१३ )
**अभिविधान**–न., आनुगुण्येन अवस्थानम् ( चवि. ८.७८ )
**अभिवृद्धि**–स्त्री., विशेषरूपेण वृध्दिः ( चनि. १.२१ )
**अभिव्यञ्जक**–पु., ज्ञापकः ( सुसू. ४१.३ )
**अभिशङ्का**–स्त्री., अभिषङ्गः, मनोभिषङ्गः, कामाद्यभिषङ्गः ( सुउ. ३९.२१ )
**अभिशप्तक**–पु., मिथ्याभिशंसजन्यरोग०, ऋषीणामाऽऽक्रोशाज्जातो रोगः ( सुसू. २४.७ )
**अभिशस्तक**–पु., अभिशप्तकः ( सुसू. २४.७ )
**अभिशाप**–पु., देवद्विजसिध्दादीनामभिशपनम्। ( सुउ. ३९.२१ )
शापः, ( चचि. ३.१११–११२ ) आगन्तुज्वरनिदान०, ( चनि. १.३० ) मन्त्रविशेषः ( सुसू. ६.१९ )
**–जज्वर**–परिव. पु., रोग०, आगंतुज्वर० ( चनि. १.३० )
**अभिषङ्ग**–पु., भूतादिसंसर्गः ( चचि. ३.१११–११२, ( चसू. २०४ )
**–ज-ज्वर**–परिव. पु., आगंतुज्वर० ( चनि. १.३० ) ग्रहाभिषंगाद् अकस्माद् हसितरुदिते भवतः। ( असंनि. २.३७ )
**अभिषव**–पु., आसुतकल्प०, मद्यम् ( काखि. ३.३५ )
**अभिषवण**–न., मिश्रणम् ( चशा. ८.१७ )
**अभिषुक**–पु., फल०, उत्तरापथिकं फलम्, ( चचि.२९.६६ ) 'पिस्ता' इति केचित्, (अहको.)

" वातामाभिषुकाक्षोटमुकूलकनिकोचकः ।
गुरूष्णस्निग्धमधुराः सोरुमाणा बलप्रदाः ॥
वातघ्ना बृंहणा वृष्याः कफपित्ताभिवर्धनाः ।"
( चसू. २७.१५७,१५८ )
काबुलादौ प्रसिद्धः फलविशेषः, अभिषुरिति लोके।
(सुसू.४६.१८६, उ;) स्नेहयोनिफलम्–( १३.१०,)
अङ्कुर इति हाराणचंद्रः ।

**अभिषुत**–वि., निषिक्तम्, मिश्रितम् ( चशा.८.१७ )
ऋत्विग्भिः स्नापितं पीडितम् ( सुचि.२९.१० )

**अभिषूक**–पु., अभिषुकः ( अहृसू.६.१२० )

**अभिषेक**–पु., संस्कार०, अग्नौ विद्रुते लोहे निमेषाष्टकानन्तरं परिक्षिप्तं जलम् । द्रुते वह्निस्थिते लोहे विरम्याष्टनिमेषकम् । सलिलस्य परिक्षेपः सोऽभिषेक इति स्मृतः ॥" ( र.८.५५ )

**अभिष्टुति**–स्त्री., स्तुतिः अभीष्टः स्तोत्रपाठः
( चइ. १२.७८ )

**अभिष्यण्ण**–त्र. वि., अभिष्यन्दयुक्तम्, मेदःकफाभिव्याप्तम् ( सुचि. ४०.४४ )
द्रवप्रधानश्लेष्मविकारयुक्तम् ( चसू. १३.५४ )

**–गुद**–वि., गुदात्स्रावोऽभिष्यन्दते यस्य सः, अतिसारविकारयुक्तो वा । ( चसू.१३.५४ )

**अभिष्यण्णानन**–वि., मुखात् स्रावोऽभिष्यन्दते यस्य सः अत्यधिकलालास्रावी वा अन्यश्लेष्मविकारी वा
( चसू.१३.५४ )

**अभिष्यन्द**–पु., दोषधातुमलस्रोतःसु क्लेदः
( सुसू. ४६.५१ )
मूत्रनिस्यन्दः ( सुचि. १२.१९ )
नेत्ररोग०, 'प्रायेण सर्वे नयनामयास्तु भवन्त्यभिष्यन्दनिमित्तमूलाः' । ( सुउ. ६.५ )
संख्यासंप्राप्तिः–वातजः, पित्तजः, कफजः, रक्तज इति चतुर्विधः । ( मा )
वातजः–निस्तोद-स्तम्भ-रोमहर्ष-संघर्ष-पारुष्य-शिरोभिताप-विशुष्कत्वादिवातजलक्षणानि नेत्रे भवन्ति।
( सुउ. ६.६ )
नासानाहोऽल्पशोफता, शङ्खाक्षिभ्रूललाटास्थानां तोदस्फुरणभेदनानि, शुष्काल्पा दूषिका, अच्छं शीतमश्रु, चला रुजः कृच्छ्रान्निमेषोन्मेषणम्, जन्तूनां सर्पणमिव वेदना । अक्षि आध्मातमिव सूक्ष्मशल्यैः आचितमिव चाभाति । स्निग्धोष्णैश्च उपशमनम् । ( असंउ. १८ )
पित्तजः–दाहः प्रपाकः शिशिराभिनन्दः धूमायनं बाष्पसमुच्छ्रयः इति पित्तजलक्षणानि भवन्ति ।
( सुउ. ६.७ )
शोफो, वर्त्मनः बहिःश्यावता, अन्तःक्लेदः पीतोष्णमश्रु,रागपीताभदर्शनमक्ष्णः क्षारोक्षितत्वं क्षतत्वं च।
( असंउ. १८ )
कफजः–उष्णाभिलाषः नेत्रगुरुता, अक्षिशोफः, उपदेहः, श्वैत्यमतिशैत्यम्, मुहुः पिच्छिलः स्रावः ।
( सुउ. ६.८ )
महान् कण्डुः, निद्रा, अन्नानभिनंदनं, सान्द्रस्निग्धबहुश्वेतपिच्छावद्दूषिकाश्रुता भवति ।
( असंउ. १८ )
रक्तजः–" ताम्राश्रुता लोहितनेत्रता च । राज्यः समन्तादतिलोहिताश्च । पित्तस्य लिङ्गानि च यानि तानि रक्ताभिपन्ने नयने भवन्ति ।" ( सुउ. ६.९ )
अश्रुराजिदूषिका, शुक्लमण्डलदर्शनानां रक्तत्वं तथा च पित्ताभिष्यन्दलक्षणानि । ( असंउ. १८ )
अयं साध्यो नेत्ररोगः ।

**–नाशिनी**–स्त्री., सिध्दौषधि०, नेत्राभिष्यन्दनाशिनी वर्तिः ( र. २३.३२ )

**अभिष्यन्दन**–वि., अभिष्यन्दकरं दध्यादि
( अहृसू. १३.१८ )

**अभिष्यन्दमान**–वि., आपूर्यमाणम् ( चनि. ५.९ )

**अभिष्यन्दिन्**–वि., दोषधातुमलस्रोतसां क्लेदप्राप्तिजनकम् ( सुसू. ४६.५० )
गुण०, उपलेपकारी ( सुचि. ४०.३१ )
आभिमुख्येन स्यन्दयति मालिन्यात् स्रोतसां स्रुतिरूपं श्लेष्माणं करोति ( अहृसू. ६.२५ )

**अभिष्वङ्ग**–पु., आसक्तिः ( असंशा. ५.१९ )

**अभिसन्न**–वि., अभितः सर्वथा अवसन्नम्
( चचि. ८.५७ )

**अभिसंप्लव**–पु., आत्मनोऽभिमतः अनात्मन्यभिसंप्लवः । आत्मनोऽनात्मगोचरतया आत्मबुद्धिरित्यर्थः ( चशा. ५.१० )

**अभिसर**–वि., आनेता, प्राणानामभिसरः प्राणानामानेता ( चसू. २९.५ )

**अभिहत**–न., अभिघातः ( सुसू. ४२.९८ ) ( २ )

**अभिहनन**–न., शस्त्रादिभिस्ताडनम् ( चनि. ७.७ (२)

**अभिहुत**–वि.,ऋत्विग्भिरग्नौ प्रक्षिप्तम् ( सुचि. २९.१० )

**अभीराजि**–पु., कीट०, अनेन दष्टे सति वातप्रकोपः वातरोगाश्च भवन्ति । ( सुक. ८.५–८ )

**अभीरु**–स्त्री., वनस्पति०, शतावरी ( सुउ. ४२.७० )

**अभीक्ष्ण**–अ., पुनः पुनः, अनवरतम् ( चसू. ८.६ )
**अभीष्ट**–पु., तिलकः ( रा. १०. २६७ )
**अभेद्य**–न., हीरकम् ( ध. ६.५६. )
**अभेषज**–न., यदौषधाद् विपरीतं तत्। विपरीतं नाम रोगजननलक्षणार्थकारि। 'अभेषजमिति ज्ञेयं विपरीतं यदौषधात्। ( चचि. १.१५ ) अभेषजं द्विविधं– बाधनं सानुबाधनं च ( चचि. २.५ )
**अभ्यक्त**–वि., लिप्तम् ( सुचि. ३४.१२ )
**–सन्निभ**–वि., तैलस्निग्धकल्पः, ( चइ. ८.९ )
**अभ्यङ्ग**–पु., उपक्रम०, शरीरे तैलविमर्दनम्। 'तथा शरीरमभ्यङ्गाद् दृढं सुत्वक्च जायते।' ( चसू. ५.८६ )
गुणाः–अभ्यङ्गो मार्दवकरः कफवातनिरोधनः।
धातूनां पुष्टिजननो मृजावर्णबलप्रदः।
( सुचि. २४.३०. ) स्नेहस्य सिरामुखादिभिः शरीरसन्तर्पणकालं केचिदत्र पठन्ति।
"रोमान्तेष्वनुदेहस्य स्थित्वा मात्राशतत्रयम्।
ततः प्रविशति स्नेहश्चतुर्भिर्गच्छति त्वचम् ॥
रक्तं गच्छति मात्राणां शतैः पञ्चभिरेव तु।
षड्भिर्मांसं प्रपद्येत मेदः सप्तभिरेव च ॥
शतैरष्टाभिरस्थीनि मज्जानं नवभिर्व्रजेत्।
तत्रस्थान् शमयेद्रोगान् वातपित्तकफात्मकान् ॥"
( सुचि. २४.३०–३४ ड. )
अभ्यङ्गनिषेधः–
'केवलं सामदोषेषु न कथंचन योजयेत्।
तरुणज्वर्यजीर्णी च नाभ्यक्तव्यौ कथंचन ॥
"तथा विरिक्तो वान्तश्च निरूढो यश्च मानवः।
पूर्वयोः कृच्छ्रता व्याधेरसाध्यत्वमथापि वा ॥
शेषाणां तदहः प्रोक्ता अग्निमान्द्यादयो गदाः।
सन्तर्पणसमुत्थानां रोगाणां नैव कारयेत् ॥"
( सुचि.२४,३५–३७ )
**अभ्यञ्जन**–न., अभ्यङ्गः ( चसू. १.८७, ) तैलम् ( ध. ६.१२५ ) अञ्जनप्रकार० ( असंउ. १४ ) ( प्रत्यंजन' पाठः इंदु. )
**–यन्त्र**–न., यन्त्र०, अभ्यञ्जनयन्त्रं षडङ्गुलं बस्तियन्त्राकारं मुखतोऽकर्णिकं मूलमुखयोरङ्गुष्ठकलायप्रवेशस्रोतस्कम् ( असंसू. ३४.१३. )
**अभ्यनुज्ञा**–स्त्री., निग्रहस्थान०, 'अभ्यनुज्ञा नाम सा यः इष्टानिष्टाभ्युपगमः' ( चवि. ८.६२, ) मतानुज्ञा च "स्वपक्षदोषाभ्युपगमात् परपक्षदोषप्रसङ्गः ( गौ. न्या. सू. ५.२.२१ )
**अभ्यन्तरयातनेत्र**–वि., रोगलक्षण०, कोटरान्तःप्रविष्टाक्षिगोलकः ( सुउ. ५६.११ ) )
**अभ्यन्तरायाम**–पु., वातरोग०, अन्तरायामः ( चचि.२८.३५ )
" अभ्यन्तरं धनुरिव यदा नमति मानवः।
तदास्याऽभ्यन्तरायामं कुरुते मारुतो बली"
( सुनि. १.५६ )
**अभ्यर्दित**–वि., पीडितम् ( सुउ. ४९.९ )
**अभ्यवपात**–पु., परमार्थतो नात्मनि ममता ( चशा. ५.१० )
**अभ्यवहरण**–परिव. न., भोजनम् ( सुचि. २३.४ )
**अभ्यवहार**–पु., आहारः ( चसू. २५.४०. )
**अभ्यवहार्य**–वि., अभ्यवहर्तुं भोक्तुं योग्यम्, भक्षणीयम् ( चनि. ४.५० )
**अभ्यवहृत**–वि., भक्षितम् ( असंसू. १० )
**अभ्यसूया**–स्त्री., छिद्रान्वेषितया परगुणेषु दोषारोपणम् ( सुसू. १.२५-३ )
**अभ्यागमन**–अभिव्यक्तिः ( चनि.१.२१ )
**अभ्यास**–पु., सततक्रिया, भावाभ्यसनम् शीलनम्, ( चसू. २६.३० अहसू. १२.५५ ) सामीप्यम् ( सुनि.४.५ )
**अभ्युग्र**–वि., अभ्युद्गतम् ( चइ. १२.४३ )
**अभ्युदय**–पु., स्वर्गः ( चसू. ११.२७. ) सुखस्य हेतुः, सुखागमः ( सुसू. ३५.३७ )
**अभ्युदीरण**–परिव.- न., प्रकोपनम्, वर्धनम् ( सुसू. १२.१७ )
**अभ्युपगम**–पु., गुरुवाक्यादीनामङ्गीकारः ( सुसू. ६.२० )
**–सिद्धान्त**–पु., अभ्युपगमसिद्धान्तो नाम सः, यमर्थमसिद्धमपरीक्षितमनुपदिष्टमहेतुकं वा वादकालेऽभ्युपगच्छन्ति भिषजः। ( चवि. ८.३७,) अपरीक्षिताभ्युपगमात् तद्विशेषपरीक्षणम् अभ्युपगमसिद्धान्तः। ( गौ. न्या. सू. १.१.३१ )
**अभ्युपपत्ति**–पु., अकम्पानुकम्पया अनुग्रहीता ( चसू. ८.१८ )
**अभ्युपाय**–पु., अमोघः उपायः, सुष्ठु साधनम् ( असंसू. २२.१६ )
**अभ्र**–न., वनस्पति०, मुस्ता ( सुउ. १०.४ ) मेघः ( सुक. ७.४१ ) अभ्रकम्, महारसेष्वेकम्। ( र. २.१ )
**–कदली**–स्त्री., वनस्पति० वन्यकदली, वर्षगात्

प्रागेव मेघानां गर्जनाशब्देनापीयमङ्कुरिता भवति, कोंकणे प्रसिद्धा ( र. १९.३९ )
–काल–पु., वर्षाऋतुः, श्रावणभाद्रपदौ ( चशा. २.४५ )
–ग्रास–पु., पारदसंस्कार० ( र. १.३१ )
–पटव–न., अभ्रकम् ( ध. परि. ६.३–४ )
–संप्लव–पु., मेघानां सर्वतोगमनम् (सुउ. ७.२१)
–सार–पु., वनस्पति० कर्पूरः ( रा. १२.५६ )
अंभ्रक–न., महारस० तद्गुणाः–स्निग्धं, प्रज्ञाकरं, जरानाशनं, वृष्यम्, आयुष्यं, बल्यं, रुच्यं, दीपनं, पाचनं, वातपित्तघ्नं, क्षयघ्नं, सकलगदघ्नं च । ( ध. परि. ६.३–४. )
अभ्रङ्कष–वि., अत्युच्चम् ( अहृसू. ३.३३ )
अभ्योष–पु., काण्डस्थः अपक्वो भृष्टो यवः ( असंसू. १० )
अमत्र–न., शरावस्थाल्यादिपात्रम् ( चइ. १२.३९., ) ( असंनि. ५–९. )
अमत्रक–न., अमत्रम् ( कासि. १ )
अमर–पु., देवः ( सुचि. २८.२६ )
खनिज०, पारदः ( रा. १३.४२ )
वनस्पति०, देवदारुः ( सुचि. ३७.११ )
–कण्टिका–स्त्री., वनस्पति०, शतावरी ( रा. ४.४३७ )
–काष्ठ–न., देवदारुः ( सुउ. ११.८ )
–गुरु–पु., धन्वन्तरिः ( सुनि. ९.३ )
–तरु–पु., देवदारुः ( असंचि. २.३ )
–दारु–न., देवदारुः ( ध. १.७७ )
–प्रभु–पु., इन्द्रः ( चसू. १.२२ )
–वर–पु., देवश्रेष्ठः ( सुसू. १.३ )
–वरायुधसाह्वय–पु., वनस्पति०, वज्रकन्दः ( सुचि. १७.४१ )
अमरा–स्त्री., वनस्पति०, निर्गुण्डी ( असंउ. ८ )
इन्द्रवारुणी ( रा. ३.३७ )
मूर्वा ( रा. ३.१० )
नदीवटः ( रा. ११.११६ )
अपरा, गर्भस्य नाभिनाडीप्रतिबध्दा 'अमरा' इति लोके । चक्र०, ( चशा. ६.२३ ) ( 'अपरा' द्रष्टव्या ) 'अपरा' पहा.
अमराजरा–स्त्री., कुमारी ( रापरि. ५.१० )
अमरार्त–वि., देवगृहीतम् ( चचि. ९.६८ )
अमराह्व–पु., वनस्पति०, देवदारुः ( सुउ. ५२.१४ )
अमरी–स्त्री., मूर्वा ( रा. ३.१० )
कृष्णपुष्पा, निर्गुण्डी (र. २३.१९)
नीलदूर्वा ( र. २३.१९ )
आकाशवल्ली, तन्तुमयीयं निष्पत्रा वृक्षोपर्येवोत्पद्य तिष्ठति, 'अमरवेल' इति लोके ( र. २३.१९ )
अमर्त्य–वि., अमानुषम् ( चचि. ९.१७ )
अमर्ष–पु., अक्षान्तिः, असहिष्णुता ( चचि. ९.१२ ) ( चनि. ७.८ )
अमर्षण–वि., असहिष्णुः, अक्षमी ( सुशा. ४.९० )
अमलभास्कर–पु., यस्मिन् दिनभागे अमलः प्रबलरश्मिर्भास्करः स मध्याह्नः ( चसू. १३.१९ )
अमला–स्त्री., सातला ( ध. १.२३८ )
अमात्रा–स्त्री., मात्राया हीनत्वमाधिक्यं वा (असंसू. ११.१० )
अमात्रावत्त्व–न., मात्राया हीनत्वमधिकत्वं वा (चवि. २.७ )
अमात्राशन–न., अशनस्य हीनताऽऽधिक्यं वा ( असंसू. १०.३४ )
अमानुषोपसर्गप्रतिषेध–पु., अध्याय० (सुउ. ६०.१)
अमिलातक–पु., वनस्पति०, राजतरणी (रा. १०.२४६)
अमूर्तत्व–न., अदृश्यत्वम् ( चसू. २०.१२ )
अमृणाल–न., उशीरम् ( चसू. ३.२६ )
लामज्जकम् ( ध. ३.८६. )
अमृत–न., समुद्रमन्थनोद्धृतमृत्युंहरद्रव्य० (सुचि. १५.६ )
जरादिहरम् ( चचि. १.७८ )
वि., अमृतमिव दोषप्रकोपस्याकरणात् ( सुसू. ड ४५.३ )
–कन्दा–स्त्री., गुडूची ( ध. १.५ )
–घृत–न., सिद्धघृत०, तद्गुणाः–परं विषसंशमनम्, मृतं संजीवयेत् ( चचि. २३.२४२–२४९ ) ( सुक. ६.१२.१३ )
घृतम्–( ध. ६.१४४. रा. १५.२०२)
वनस्पति०, गुडूची ( र. १८.२१४ )
पारदः ( रा. १३.४१ )
विषम्, वत्सनागाख्यम् ( र. १२.६९ )
पु., वाराहीकन्दः ( रा. ७.१३५ )
मकुष्ठकः ( रा. १६.१४५ )
–प्राशघृत–न., सिद्धघृत० ( चचि. ११.३५–४३ )
–फल–न., वनस्पति०, आमलकम् (चचि. ७.१४७)
पु., वनस्पति०, पटोलम् ( ध. १.५० )

**–फला**–स्त्री., द्राक्षा ( रा. ११.७४ )
**–फलाख्य**–न., पारे(ले)वतम् (रा. ११.८८)
**–रसपाक**–पु., योग० भल्लातकघृतप्राशः ( असंउ. ४९ )
**–रसा**–स्त्री., द्राक्षा ( रा. ११.७६ )
**–लता**–स्त्री., गुडूची ( ध. १.१ )
**–वटी**–स्त्री., सिद्धौषधि०, इयमजीर्णश्लेष्मवातघ्नी ( र. १६.१६०–१६१ )
**–वल्ली**–स्त्री., गुडूची ( चचि. १.७७ )
**–संभवा**–स्त्री., गुडूची ( ध. १.३ )
**–स्रवा**–स्त्री., वनस्पति०
"ज्ञेयाऽमृतस्रवा वृक्षरुहाख्या तोयवल्लिका। घनवल्लीसितलतानामभिः शरसंमिता ॥"
गुणाः–ईषत्तिक्ता पथ्या–रसायनी विषघ्नी व्रण–कुष्ठ–आम–कामला–श्वयथुघ्नी, इयं चित्रकूटप्रदेशे प्रसिद्धा ( रा. परि. ३.४५. )
स्त्री., रुदन्ती. ( रा. परि. ५.१५ )
**–हस्त**–वि., पताकादिचिह्नांकितपाणिकः, अनामिकाधःस्थरेखाङ्कः ( र. ७.२९. )
**अमृतक**–पु., वनस्पति०, आम्रातकः ( असंसू. २६.६ )
**अमृतका**–स्त्री., गुडूची ( चसू. १४.३१ )
**अमृता**–स्त्री., वनस्पति०, गुडूची ( सुसू. १२.२३. ) ( चसू. २५.४० )
हरीतकी, ( ध. १.२०५ )
आमलकम् ( रा. ११.३२५ )
इंद्रवारुणी ( रा. ३.३७३ )
तांबूली ( ध. परि. ३.१ )
दूर्वा ( रा. ८.२२७ )
द्रष्टव्या दूर्वा, दूर्वाभेदः, नीलदूर्वा ( रा. ८.२२६ )
आसुत०, सुरा ( रा. १४.३०२ )
खनिज०, तुवरी, सौराष्ट्री ( ध. ३.१०५ )
अमृतासङ्गः खर्परिकातुत्थकम् ( ड. सुक. १.५४ )
**–कन्द**–पु., वनस्पति०, गुडूचीकन्दः ( र. ११.५७ )
**–क्षार**–पु., गुडूचीक्षारः ( सुउ. ४१.३८ )
**–द्वय**–न., गुडूची हरीतकी च ( सुचि. ३७.२० )
**–फल**–पु., पटोलः ( ध. १.५० )
**–सङ्ग**–न., तुत्थम् ( चसू. ३.१० )
मयूरतुत्थम् ( चचि. १४.५५ )
कर्परिका अमृता गुडूची आसङ्गो रसाञ्जनम् ( असंउ. ३० )
**–संज्ञ**–पु., खर्परिकातुत्थम् ( चचि. ७.११४ )

**अमृताख्यघृत**–न., सिद्धघृत०, इदं विषबाधायां हृदयरक्षाकरम् ( सुक. १.७९–८०. )
**अमृतागम**–पु., अमृतं गुणः, तदुत्पत्तिः ( चचिं. १. ३.११. )
**अमृताद्यतैल**–न., सिद्धतैल०, इदमुन्मादादिहरं वातरक्तादिहरं च ( चचि. २८.१५७ ) ( चचि. २९.१०३–१०९ )
**अमृतार्णव**–पु., सिद्धौषधि०, ( र. १८.१८५–८८. )
**अमृतोद्भव**–वि., अमृतेन सहोद्भवो यस्य ( सुनि. १.३ ) न., तुत्थम् ( रा. १३.२०५ )
**( अमृतोद्भवा )** स्त्री. ताम्बूली ( ध. ३.१. )
**अमोघा**–स्त्री., वनस्पति०, पाटला ( चसू. ४.१८ )
विडङ्गम् ( ध. २.११ )
आमलकी ( चसू. ४.१८ )
लक्ष्मणा ( चसू. ४.१८ )
**अमोह**–पु., मोहाभावः, निश्चिन्तमनस्कता ( सुसू. ३४.१४ )
**अम्बर**–न., वस्त्रम् ( सुचि. ३०.७ )
आकाशम् ( सुचि. ३५.२७ )
अभ्रकम् ( रा. १३.२ )
**–धारण**–न., वस्त्रधारणम् ( चसू. ५.९५ )
**–पीयूष**–न., विष्णुपदामृतम् ( शा. १.५.४९ )
**अम्बष्ठका**–स्त्री., वनस्पति०, अम्बष्ठा ( ध. ३.११६ )
**अम्बष्ठकी**–स्त्री., वनस्पति०, पाठा ( ध. १.७० )
अकर्णविद्धा ( चक. चसू. ४.९ )
**अम्बष्ठा**–स्त्री., वनस्पति०, पाठा ( चचि. १५.११३ )
पाठा मयूरशिखाख्या ( अहृसू. १५.४० )
यूथिका ( रा. १०.२५० )
क्षुद्राम्लिका ( रा. ५.४४ )
महाकरञ्जः ( ध. ५.११० )
माचिका, 'साकुर' इति लोके ( उ. सुचि. ११.१० )
'मोहवा' इति लोके, 'सूक्ष्मपत्रा' चाङ्गेरी, 'अम्बाडा 'अम्बिका' ( र. १०.८०–८१ )
'साकुरडा' ( सुउ. २१.४८ ) अम्बिका–माचिका
अम्बष्ठागुणाः–
'अम्बिका तु रसे तिक्ता तथोष्णा कफनाशनी।
अर्शोघ्नी श्वयथूत्थानपरिपन्थितया स्मृता ॥'
'माचिका तु कषाया च कण्ठ्या वातबलासजित्।
पित्तप्रकोपशमनी व्रणशोधनरोपणी ॥'
"अम्बष्ठा सा कषायाम्ला कफकण्ठरुजापहा।

वातामयबलासघ्नी रुचिकृद्दीपनी परा ।"
( ध. ३.११६ )

अम्बष्ठादिगण–पु., वर्ग० ( सुसू. ३८.४६ )
तद्गुणाः–पक्वाऽतीसारनाशनः, संधानीयः पित्ते हितः व्रणरोपणः ( असंसू. १६.३२. )

**अम्बष्ठिका**–स्त्री., अम्बष्ठा ( रा. ४.१७० )

**अम्बा**–स्त्री., अम्बष्ठा ( ध. ३.११६ )

**अम्बाला**–स्त्री., अम्बष्ठा ( रा. ४.१७० )

**अम्बालिका**–स्त्री., अम्बष्ठा ( ध. ३.११६ )

**अम्बिका**–स्त्री., अम्बष्ठा ( ध. ३.११६ )
श्वेताम्ली ( रा. परि. ४.३७ )

**अम्बु**–न., जलम् ( सुशा. २.३३ )
जलमहाभूतम् ( चचि. १५.२९ )
वनस्पति०, वालकम्, सुगन्धितृणविशेषः, 'वाळा' 'खस' इति लोके ( र. १२.६८ )
आहारपाकजो व्यापी रसधातुः ( सुशा. २.३३ )
स्वरसः ( र. २.८६ )

**–कर्मन्**–न., क्लेदसंश्लेषादिकं जलकर्म ( अहसू. १२.१५ )

**–कामित्व**–न., रोगलक्षण०, तृष्णास्वलक्षणम् ( चचि. २२.८ )

**–कुक्कुट**–पु., जलचरपक्षिविशेषः ( असंसू. ७ )

**–कुक्कुटिका**–स्त्री., जलकुक्कुटी कृष्णवर्णा,'बुडियाक' इति लोके ( सुसू. ४६.१०५ )

**–कुक्कुटी**–स्त्री., वारिचरपक्षि०, जलकुक्कुटी ( चसू. २७.४३ )

**–चर**– पु., हंसादिप्राणि० ( चसि. १२.१८ ) ( ४ )

**–ज–जन्म**–न., वनस्पति०, कुमुदम् ( रा. १०.२४३ )
सैन्धवम् , लवण०, उशीरविशेषः
वत्सनाभो वा ( र. ११.४७ )
पु., शङ्खः ( सुक., ४.२६ )

**–द**–पु., मेघः ( र. ४.२९ )
मुस्ता ( सुउ. ६१.३१ )
अश्मन्तकः ( रा. ९.२९० )

**–द–क्षय**–पु., शरदृतुः ( सुचि. ३०.२५ )

**–दागम**–पु., वर्षाऋतुः ( सुचि. ३०.३२ )

**–दानीक**–न., मेघघटा ( सुचि. ३०.३८ )

**–धर**–पु., मुस्ता ( ध. १.४० )

**–धिस्रवा**–स्त्री., कुमारी ( रा.परि. ५.११ )

**–पान**–न., जलपानम् ( अहसू. ५.१३ )

**–पूर्ण**–पु., रोग०, उल्बकः ( असंउ. २ )

**–प्रसाद**–पु., वनस्पति०, कतकम् ( रा. ११.२३५ )

**–प्रसादनफल**–न., कतकम् ( ध. ३.१७२ )

**–योनि**–वि., जलोत्पन्नम् ( अहसू. ९.२ )

**–रुह**–न., कुमुदम्, पुण्डरीकरक्तोत्पलादिकम् ( सुउ. ४७.६३ )

**–रुहा**–स्त्री., पद्मा ( रा. ५.१३१ )

**–लम्ब**–वि., अम्बुना लम्बमानः, अतिनिर्भरत्वात् । ( अहसू. ३.४२ )

**–वल्लिका**–स्त्री., कारवल्ली ( रा.७.२७८ )

**–वह**–वि., उदकवहम् ( चचि. २०.१६. )

**–वासा**–स्त्री., पाटला ( ध.१. १२० )

**–वासिनी**–स्त्री., ( ध. १२० )

**–वाहिन्**–वि., उदकवहम् ( चवि., ६.११ )

**–संभव**–वि., समुद्रोत्पन्नम्, अम्बुसंभवत्वेन विषस्य वर्षाप्रकोपित्वम् ( चचि. २३.६;७ )

**अम्भस्**–न., जलम् ( ध. ६.३०२ )
( अम्भः ) श्यामाका–स्त्री., वनस्पति०, जलजा ओडिका ( चसू. २७.१७ )

**–ज**–न., कुमुदम् ( रा. १०.२४३ )

**–जपत्र**–न., कमलपत्रम् ( अहसू. २४.१८ )
एतत् पुटपाके उपयुज्यते.

**–द**–पु., मुस्ता ( सुउ. ३९.२२४ )

**–धर**–पु., वनस्पति०, मुस्तम् ( सुउ. ५२.३१ )

**–धि**–पु., समुद्रफेनः ( र. ३०.५७ )

**–धिपल्लव**–पु., प्रवालम् ( रा. १३.७३ )

**–रुह**–न., कुमुदम् ( रा. १०.२४३ )

**–सार**–न., मौक्तिकम् ( रा. १३.६६ )

**अम्ल**–पु., रस०, तद्गुणकर्माणि—अम्लरसः भुक्तं रोचयति, अग्निं दीपयति, देहं बृंहयति, ऊर्जयति, मनो बोधयति, इन्द्रियाणि दृढीकरोति, बलं वर्धयति, वातमनुलोमयति, हृदयं तर्पयति, आस्यम् आस्रावयति, भुक्तमपकर्षयति, क्लेदयति; जरयति, प्रीणयति, लघुः, उष्णः, स्निग्धश्च । स एवंगुणोऽपि एक एव अत्यर्थम् उपयुज्यमानः दन्तान् हर्षयति, तर्षयति, संमीलयति अक्षिणी, संवेजयति लोमानि, कफं विलापयति, पित्तमभिवर्धयति, रक्तं दूषयति, मांसं विदहति, कायं शिथिलीकरोति क्षीणक्षतकृशदुर्बलानां श्वयथुमापादयति अपि क्षताभिहतदष्टदग्धभग्नशूनप्रच्युतावमूत्रितपरिसर्पितमर्दितच्छिन्नभिन्नविदिलष्टोद्विद्धोत्पिष्टादीनि पाचयति आग्नेयस्वभावात्, परि-

**अलिङ्ग**–वि., यस्य लिङ्गं न विद्यते सः ( सुशा. १.९ )
**अलिञ्जर**–पु., बहुजलधरपात्रम् ( असंचि. ९. )
**अलोचन**–वि., निर्जालका ( कुटिः ) ( चसू. १४.५२ )
**अलोड्य**–वि., अक्षोभ्यम् (अक्षरम् ) ( चशा. ३.८ )
**अल्प**–वि., यथोचितप्रमाणहीनम् ( सुचि.३६.११ )
 **–कायत्व**–न., शरीरस्य अल्पप्रमाणत्वम् ( सुसू. ४५.५६ )
 **–क्षीरा**–वि., अल्पं क्षीरं यस्याः सा (काश्यपसू. लेहाध्याय)
 **–दोषेन्धन**–वि., अल्पं दोषस्वरूपमिन्धनं यस्य सः ( सुउ. ३९.६५ )
 **–निद्रता**–स्त्री., रोगलक्षण० निद्राल्पत्वम् ( अहृसू. ११.७ )
 **–पत्रिका**–स्त्री., अपामार्गभेदः क्षुद्रापामार्गः ( रा. ४.३९ )
 **–प्राण**–वि., कायवाङ्मानसीषु क्रियास्वल्पशक्तिः अल्पबलः ( सुसू. १५.३३ )
 **–प्राणता**–स्त्री., लक्षण० मानसबलहानिः मांसापचयः क्रियास्वशक्तिः ( चनि. १.३३ )
 **–प्राणत्व**–न., लक्षण० अल्पशक्तित्वम् ( सुसू. १५.३३ )
 **–वलत्व**–न., लक्षण० उत्साहहानिः ( सुसू. १५.३३ )
 **–वस्तित्व**–न., आयामे बस्तेरल्पत्वम् (सुनि. ३.११)
 **–मेदस्क**–वि., लक्षण० क्षीणमेदस्कः ( चचि. १६.६ )
 **–रक्त**–वि., लक्षण०, क्षीणरक्तः ( चचि.१६.६ )
 **–रेतस्**–वि., लक्षण० अल्पशुक्रः क्षीणवीर्यः ( सुचि. २६.४ )
 ( परिव० ) प्रकृत्यैव स्तोकरेताः ( सुसू. १.८ [८] )
 **–वह्नि**–वि., लक्षण० अल्पाग्निः ( अहृसू. ८.१० )
 **–वेगता**–स्त्री., लक्षण० मंदगतित्वम् यथा पक्वशोफे ( अहृसू. २९.५ )
 **–शुक्रता**–स्त्री., लक्षण० शुक्रहीनता ( सुशा. ६.२४ )
 **–सत्त्व**–वि., लक्षण० अल्पमनोबलः ( चचि. ९.५) ( असंसू. २३ )
 **–साधन**–वि., अल्पभेषजः ( चचि. ८.११८ )
**अल्पाभिष्यन्दिन्**–वि., गुण० दोषधातुमलस्रोतसां मंदक्लेदप्राप्तिजनकम् ( सुसू. ४५.५० )
**अल्पायुस्**–वि., अदीर्घायुः ( सुसू. ३५.४ )
 लक्षणानि–पर्वाणि ह्रस्वानि मेहनं सुमहद् उरसि अनुलोमप्रतिलोमावर्त–मनायतं पृष्ठं श्रवणौ स्थानात् ऊर्ध्वौ नासिका उच्चा, हसतो जल्पतो च दन्तमांसप्रदर्शनं भ्रान्तवद्दर्शनं पञ्चविंशतिवर्षाणि जीवति ( सुसू. ३५.४ ९–११ ).
**अल्पक**–पु., वनस्पति०, धन्वयासः (रा. ३.२५)
**अल्पास्थि**–न., परूषकम् ( रा. ११.८४ )
**अल्पीयःखा**–वि., लक्षण०, अल्पतरयोनिद्वारा, अल्पतरं खं योनिमुखं यस्याः सा ( सुनि. १३.५० )
 कन्या ह्यनार्तवाऽल्पीयःखा भवति, ( मधुकोशः )
**अल्लुका**–स्त्री., वनस्पति०, धान्यकम् (ध. २.६३)
**अवकर**–पु., विष्किरपक्षि० ( चसू. २७.४९ )
**अवकाशकर**–वि., स्रोतोविकासी ( चसू. २६.४३ (३)
**अवकुश**–पु., पर्णमृग०, गोलाङ्गूलः वानरः ( सुसू. ४६.७६
 जलजप्राणि० ( काखिल. २४.५३ )
**अवकूलन**–( परिव० )न., पाचनम्, अग्नावुष्णीकरणम् ( सुउ. ४०.८२ )
**अवक्रान्ति**–स्त्री., अवतरणम्, उत्पत्तिः संप्राप्तिः स्वरूपलाभः ( सुशा. ३.१ ) ( चशा. ३.१ )( अहृशा. ) ( १.१ ) ( असंशा. २.१ )
**अवक्षिप्त**–न., संधिमुक्तप्रकारः, सन्धिविश्लेषस्तीव्रा च रुक् ( असंउ. ३२ ) ( सुनि. १५.७ )
**अवक्षिप्त–त्व**–न., तिर्यक्क्षिप्तत्वम् ( सुसू. ३२.४)
**अवक्षुत**–न., छिक्का ( चइ. १२.२६. )
**अवक्षोदन**–( परिव० ) न., सुष्ठु चूर्णीकरणम् (सुचि. ४.२८)
**अवगाढ**–वि., अभ्यन्तराश्रयम् ( सुशा. ८.२६) गम्भीरम् ( सुचि. १. १३१. ) अभ्यन्तरमूलम् ( सुनि. १०.६ )
 **–दोष**–वि., रोगलक्षण० अभ्यन्तरपूयम् ( सुसू. १७.१४ )
 **–पद**–अ., बहुप्रविष्टशस्त्रपदम् ( असंउ. २८ )
**अवगाह** –पु., चिरं जलावस्थानम् ( चसू. ६.४७ )
 स्नानम् ( चसू. १.११२ )
 द्रवपूर्णभाजने निमज्जनम् ( सुउ. ३९.२७४ )
 द्रवस्वेदप्रकारः, अवगाहस्वेदः ( असंसू. २६ )
 यथा क्षीरतैलघृतपिशितरसोष्णसलिलकोष्ठावगाहः ( चसू. १४.४५ )
 **–स्वेद**–पु., उपक्रम० अवगाहनेन स्वेदः ( अहृसू. १७.११ )

**अवगाहन**–न., मज्जनम् ( सुचि. २४.३३ )
उपक्रम० तैलघृतपयःक्वाथपूरितद्रोण्यां शरीराव-यवस्य मज्जनम् ( चचि. २८.१०९ )
**अवगुण्ठन**–न., उपक्रम०, अक्षणश्चूर्णवस्त्रादिभिराच्छाद-नम् ( असंउ. १९ )
**अवगुत्थ**–न., शाक० वेगनामा, काकादनीत्यर्थः ( सुसू. ४६.२२१ )
**अवघट्टन**–न., ताडनम् ( सुशा. ८.१९ )
**अवघातक**–पु., आरग्वधः ( चक. ८.३ )
**अवचारण**–( परिव० ) न., योजना, उपयोगः ( सुचि. २९.१२ )
**अवचूर्णन**–न., चूर्णस्य विकिरणम् ( चचि. ७.१०४ )
व्रणोपक्रमः ( सुचि. १.८ )
व्रणोपरि चूर्णप्रक्षेपः ( सुचि. २१.३ )
स च शोधनरोपणभेदेन द्विविधः ( सुचि. १.७४ )
( सुसू. ३८.१९, २७–२८ )
**अवचेष्टित**–न., कर्म० उत्थानचङ्क्रमणादि ( सुउ. ३९.१६३ )
**अवच्छादन**–न., लेपनमुद्वर्तनं वा ( चचि. २३.१७४ )
**अवजृम्भण**–न., रोगलक्षण०, आकुञ्चनं प्रसारणं वा ( चशा. ८.२७ )
गात्रप्रसारणम् (चक्रः) (परिव०) ( चशा.८.३८ )
**अवट**–पु., गर्तः ( सुउ. २९.८ )
**अवटु**–पु., शारीर०, ग्रीवायाः पश्चिमो भागः ( सुउ. ६.२७ )
कृकाटिकाभागसन्धौ गर्तः ( सुचि.३ .३८ )
पु., गर्तः ( सुसू. ३५.१२ )
**अवडीन**–न., पक्षिणोऽवक्षेपणम् ( काइ. १९ )
**अवतत**–वि., व्याप्तम् ( सुउ. ५७.३ )
**अवतरण**–न., प्रवेशः ( सुचि. २४.९१ )
**अवतारगवेषिन्**–वि., छिद्रान्वेषी ( असंउ. ७ )
**अवदंश**–पु., पानरुचिजननार्थं यद् व्यञ्जनं भक्ष्यते तत् ( चचि. २४.१८ )
**–क्षम**–वि., रुचिजनने समर्थः ( चसू. २७.१४५ )
शिग्रुः पु., ( ध. ४.३९ )
**अवदरण**–न., रोगलक्षण०, विदरणम् ( सुनि. ६.१३ )
**अवदात**–पु., गौरः ( चशा. ८.९ )
**–वर्ण**–वि. गौरवर्णः, पीतवर्णः ( चशा. ८.१५ )
**अवदानवचन**–न., प्रशस्तवचनम् ( कासू. २८.५ )
**अवद्य**–वि., निन्द्यम् ( असंनि. ६ )
**अवधूनन**–न., उरिक्षप्य चालनम् ( सुचि. ३६.१३ )

**अवनतशिरस्क**–वि., अवनतं शिरो यस्मिँस्तत् ( चशा. ८.२४ )
**अवनद्ध**–वि., वेष्टितम् ( चचि. १.७५ )
**अवनाम**–पु., अवनमनम् ( असंशा. ८ )
**अवनामित**–वि., अधोगतम् ( सुचि. ३.१६ )
**अवनिप्रदेश**–पु., भूमिप्रदेशः ( सुचि. ४.२९ )
**अवनी**–स्त्री., वनस्पति०, त्रायमाणा ( रा. ५.३७९ )
**अवनुन्नत्व**–न., प्रेरितत्वम् ( चनि. १.२१ )
**अवन्ति**–स्त्री., मालवप्रदेशः, मालवाः ( अहृसू. ५.११ )
**–सोम**– न., काञ्जिकम् ( चचि. १९.२६ )
**अवन्ध्य**–वि., सफलम् ( अहृशा. १.२८ )
**अवन्ध्या**–स्त्री., कर्कोटकी ( ध. १.१८७ )
**अवपतित**–वि., ( परिव० ) ग्राम्यम् ( चवि. ८.३ )
**अवपाटन**–न., शस्त्रकर्म० ( र. २५.१२ )
विदारणम् ( सुनि. १३.५० )
**अवपाटिका**–स्त्री., क्षुद्ररोग० मेढ्रचर्मावपाटनजन्यविकारः लक्षणम्–यदा नरोऽल्पीयःखां कन्यां स्त्रियं वा हर्षाद्बलाद्वा गच्छेत् हस्ताभिघाताद्वा बलेन चर्मोद्वर्तयति तदाऽस्य मेढ्रचर्मावपाट्यते । इयमेवावपाटिका ( सुनि., १३.५०–५२ )
**अवपाटित**–वि., एकदेशोत्पाटितम् ( चनि. १.२१ )
**अवपीड**–पु., उपक्रम० ( चसू. २४.४६ )
अवपीड्य दीयत इति ( सुउ. २३.४ )
नासया प्रणीयमानः कल्कोऽवपीडसंज्ञः (असंसू. २९)
स द्विविधः–शोधनस्स्तम्भनश्च 'स्यादवपीडो द्विधा मतः' शिरोविरेचनार्थं शोधनप्रकारः ( चसि. ९.९० )
घ्राणप्रवृत्ते रुधिरे स्तम्भनः ( चचि. ४.९७ )
उन्मादे उपक्रम० ( चनि.७.८ )
कृमिदन्तरोगे हितकरः श्लेष्माभिष्यन्देऽपि उपयुक्तः ( सुउ. ११.३ )
संज्ञाप्रबोधनार्थं विविधरोगेषूपयोगः–
"विषाभिघातसंन्याससमूर्च्छामोहापतन्त्रके ।
मदापस्मारकामार्तिचिन्ताक्रोधभयादिषु ॥
मानसेषु च रोगेषु मूढव्याकुलचेतसाम् ।
संज्ञाप्रबोधहेत्वर्थमवपीडं प्रयोजयेत्" ॥
( सुचि. (ड. विदेह. ) ४०.४४, ४५ )
अपतानकविकारे सद्यःसंज्ञाप्रबोधनार्थं तीक्ष्णोऽव-पीडः ( नस्यं ) दीयते ( सुचि. ५.५.१८ )
स च तीक्ष्णैः शुण्ठ्यादिभिः कल्कक्वाथरसादिभिः

कृतोऽवतिष्ठते यस्याष्टौ बिन्दव उत्तमा मात्रा, षण्मध्यमा, चत्वारः कनिष्ठा ( अहृसू. २०.७ )

**अवपीडक**–न., स्नेहयोजना ( चसू. ७.७ )
तस्य योजनाद्वयं यथा–'मूत्रजेषु तु पाने च प्राग्भक्तं शस्यते घृतम् । जीर्णान्तिकं चोत्तमया मात्रया योजनाद्वयम्' । ( अहृसू. ४.६, ७ )

**अवबद्ध**–वि., विशेषेणाऽसक्तम् ( सुसू. २७.३ )
शल्यप्रकारः–

**अवबद्धदोष**–वि., अतिबद्धदोषम् ( ८.१२७ )

**अव ( प ) बाहुक**–पु., वातरोग, सम्प्राप्तिर्लक्षणं च–अंसदेशस्थितो वायुरंसबन्धनं सिराश्चाकुञ्च्यावबाहुकं जनयेत् ( सुनि. १.८२ )
अस्यैकः प्रकारः कफवातनिमित्तजः ( मधुकोशः )
अन्यो धातुक्षयनिमित्तजवातकोपजनितः ( सुचि. ५.२३ )
चिकित्सासूत्रम्–धातुक्षयनिमित्तजे सिराव्यधो निषिद्धः ( सुचि. ५.२३ )
अत्र बृंहणं नस्यं हितम् ( अहृसू. २०.४ )

**अवभञ्जन**–न., वेदना० संचूर्णनवद् वेदना ( सुसू. २२.११ )

**अवभासिनी**–स्त्री., शरीर० सप्तत्वक्षु प्रथमा, सर्ववर्णान् अवभासयति, पञ्चविधां छायां च प्रकाशयति व्रीहेरष्टादशभागप्रमाणा सिध्मपद्मकण्टकाधिष्ठाना ( सुशा. ४.४ )
चरके 'उदकधरा' अष्टांगसंग्रहे 'भासिनी' नाम्ना निर्दिष्टा ( चशा. ७.४ ) ( असंशा. ५ )

**अवमन्थ–क**–पु., शूकदोषनिमित्तरोग० ( सुनि. १४.८ )
ग्रथितशोफवान् गुह्यस्थानगतः कफवातासृग्भिर्जायते ( सुनि. १४.८ )
संप्राप्तिर्लक्षणं च–गुह्यस्थाने बह्वो दीर्घा मध्यतो दीर्यमाणा वेदनारोमहर्षवत्यः पिटिका भवन्ति ( असंउ. ३८ )
'अधिमन्थ' इति माधवे, भेद्यरोगोऽयम् ( सुसू. २५.६ )
कर्णव्यधे उपद्रव०, कर्णपाल्या असम्यग्व्यधेन जायमान उपद्रवः, कण्डूकरोऽयम् ( सुसू. १६.२६ [७] )

**अवमन्थन**–न., ( परिव० ) रक्तस्रावणोपक्रम०, उत्कृत्य चालनम्, आरया चर्मकारशस्त्रेणावमथ्य रक्तं स्रावयेदित्यर्थः ( सुचि. ३.२३ )

**अवमर्शन**–न., घर्षणम्; स्पर्शनम् ( सुक. ८.३९ )

**अवमानित**–वि., उपेक्षितम् ( सुशा.२.५१ )

**अवमार्जन**–न., मार्जनम्, यथा विषस्य प्रतिलोमेन मार्जनं मन्त्रैरेव कार्यमिति ( चचि. ३३.६१ )

**अवमूत्रित**–न., मूत्रविषैर्जन्तुभिर्मूत्रितम् ( चसू. २६.४३ [२] )

**अवम्य**–वि., वमनायोग्यः ( चसि. २,८ )

**अवयव**–पु., शरीरस्य अङ्गम् ( सुसू. १४.३ ) तदवयवाः प्रत्यङ्गानीति ( सुसू. ३५.१२ ) ( चवि. ८.११७; चसू. २७.३३४ )
परमाणुरूपाऽवयवांशाः ( चशा. ७.१७ )
घटकात्मकद्रव्यम् । ( चवि. १.१० )
**–प्रभाव**–पु., अवयवात्मकद्रव्यस्य गुणविशेषः ( चवि. १.१० ).
**–सदन**–न., रोगलक्षण० गात्रसादः ( असंसू. २० )
**–समुत्थ**–वि., एकदेशोत्थितः ( सुचि., २३.३ )

**अवयवावसाद**–पु., रोगलक्षण० अवयवस्य स्वकर्मण्यसामर्थ्यम् ( सुसू. २५.३६–३७ )

**अवर**–वि., कनिष्ठम् ( चसि., १.१२ )
निकृष्टम् ( असंसू. १० )
**–काल**–पु., हीनकालः अयोगकालः ( चचि. १९.५ )
**–सत्त्व**–वि., हीनसत्त्व ( चवि. ८.११९. )

**अवरान्न**–न., वैदलाऽन्नं माषादि ( सुसू. ४६.४९ )

**अवरुद्ध**–वि., संग्रहीतम् ( सुसू. २२.८ )

**अवरोध**–पु., संग्रहः ( सुसू. २४.४ ) समावेशः ( सुसू. ४.६ ) अन्तर्भावः, संकलनम् ( चचि. १३.३८ )
स्कन्धदेशः ( सुसू. २९.१० )
**–रत**–वि., परिजनावृतः अन्तःपुरस्थो वा ( सुशा. १०.५० )

**अवरोधन**–न., निग्रहः, नियमनम् ( चनि. ७.८ )

**अवरोहिन्**–पु., वनस्पति० वटः ( रा. ११.११३ )

**अवलम्बक**–पु., कफदोष०, अवलम्बनादवलम्बकः कफः ( असंसू. २० )

**अवलम्बन**–न., अवलम्बककफस्य स्थैर्यबलदानधारणादि कर्म ( अहृसू. १२.१६ )

**अवलम्बिन्**–वि., लम्बनशीलः ( सुनि. १६.६२ )

**अवलिका**–स्त्री., वनस्पति०, धान्यकम् ( रा. ६.९७ )

**अवलेखन**–न., शस्त्रकर्म० घर्षणेनोन्नतभागस्य निम्नताकरणम् ( सुचि.९.१० )
कङ्कतिकादिना केशप्रसाधनम् ( सुक. १.२५ )

**अवलेपन**–न., लेपनम् ( सुचि. ४.३० )
**अवलेहिका**–स्त्री., लेह्यमौषधम् ( सुसू. ४६.४१२ )
**अवल्गुज**–पु., वनस्पति०, बाकुची ( चसू. २७.३३ ) ( ध. १.१६५ )
( अवल्गुजा ) स्त्री., अवल्गुजः ( चसू. २७.३३ ) ( ध. १. १६५ )
**–फल**–न., बाकुचीबीजम्, एतत्कफवातप्रणुत् (सुसू. ४२.११) ( असंसू. १२.९१ )
**–रसायन**–न., बाकुचीरसायनम् ( सुचि. २८.३ )
**अवशातन**–न., मांसस्य शटितत्वाद्गलनम् (सुक. ४.३७)
**अवश्यकार्य**–वि., अवश्यं करणीयम् ( मूत्रोत्सर्गादिकम्) ( अहृसू. ३.९ )
**अवश्यंभाविन्**–वि., यन्निश्चयेन भवति ( असंनि. १.४ )
**अवश्याय**–पु., हिमम् ( चसि. ९.७४ ) मेघं विना सूक्ष्मजलनिपातः ( सुउ. ६४.११ )
**अवष्टब्ध**–वि., कृतावष्टम्भः धारितः ( असंनि. ५ )
**अवष्टम्भ**–पु., धारणम्, देहधारणशक्तिः ( अहृसू. ११.५ ) धैर्यम् ( चशा. ५.१२ )
**–कर**–वि., आधारदायकम्, अवलम्बनप्रदम् ( चसू. २४.७८० )
**अवष्टम्भन**–वि., बलप्रदम् ( चसू. ५.१०२ )
**अवसन्न**–वि., अवसादहेतोः अन्तःप्रविष्टम् (सुउ. १९.६ )
**–वर्त्मन्**–वि., अवसन्नानि प्रान्तभूतानि वर्त्मानि यस्य सः ( चचि. २५.२४ )
**अवसर्पण**–न., ह्रासः ( काशा. पृ. ४४ )
**अवसर्पिणी**– स्त्री., अशुभः कालः, अवनतिकालः ( काशा. पृ. ४४ )
**अवसाद्**–पु., चित्तदेहयोर्ग्लानिः ( सुसू.१५.१३ )
**अवसादक**–पु., ग्लानिः मनोऽवसादः ( चसू. १६.१४ )
**अवसादन**–न., रोगलक्षण० अप्रवृत्तिः वैकल्यं, ग्लानिः ( सुसू. ३२.३, सुचि. ३७.९१ )
व्रणोपक्रमः, उन्नतव्रणस्य उत्सन्नमांसस्य वा निम्नत्वकरणम् ( सुचि. १.८., चचि. २५.४२ )
**–गण**–पु., अवसादनार्थे प्रयुक्तानां द्रव्याणां वर्गः ( सुउ. १२.१५ )

कासीसं सैन्धवं किण्वं कुरुविन्दो मनःशिला ।
कुक्कुटाण्डकपालानि सुमनोमुकुलानि च ।
फले शैरीषकारञ्जे धातुचूर्णानि यानि च ।
व्रणेषूत्सन्नमांसेषु प्रशस्तान्यवसादने ।
( सुसू. ३७. ३१ )

**अवसादनी**–स्त्री., वनस्पति०, शिंशपा ( ध. ५.१२१ )
**अवसादिन्**–वि., भूमौ पतितं लीनं भवति ( चचि. १९.५ )
**अवसान**–न., विनाशः ( चवि. ३.३८ )
**अवसेक**–पु., परिषेकः ( सुउ. ४७.३६ ) क्षरणम् ( सुचि. ३६.७ )
**अवसेचन**–न., विस्रावणम् ( असंसू. ३६० ) व्रणोपक्रमवर्गः, अवसेचनशब्दोऽत्र वमनविरेकशोणितविस्रावणाद्यन्तर्बहिःप्रमार्जने वर्तते, न तु केवल एव विस्रावणे ( सुसू. १७.१७ )
**अवस्तीर्ण**–वि., आच्छादितम् ( सुउ. ५०.९ )
**अवस्था**–स्त्री., कालविभागः दशा (चवि. ८.१३२ ) ( सुसू. ३५.३० ) ( सुउ. ४७.११ )
**अवस्थान**–न., स्थैर्यम् स्थिरमतित्वम् ( चवि. ४.१० ) ( परिव० ) अन्तर्भावः ( सुचि. २.९७. )
**अवस्थान्तरबाहुल्य**–न., अवस्थाविशेषाणां प्राचुर्यम् ( सुसू. २०.१० )
**अवस्थित**–वि., अल्पस्थानाश्रितम् ( सुचि. ४.११ )
**–सत्त्व**–वि., स्थिरसत्त्वम् ( चवि. ८.१२४ )
**अवस्रंसमान**–वि., अधःपतमानः ( सुनि. ८.३ )
**अवस्रस्तत्व**– न., स्थानादधःप्रलम्बनम् ( सुसू. ३२.४ )
**अवाक्पुष्पी**–स्त्री., वनस्पति०, शतपुष्पा ( ध. २.१ ) मिश्रेया ( रा. ४.५ )
अपामार्गः ( चचि. ७.११४ )
अधःपुष्पी ( चचि. २९.६२ )
**अवाक्शिरस्**–वि., नतमस्तकः ( चवि. ८.१३ ) निम्नशिराः ( चशा. ६.२४ )
**अवाक्शिरसीय**–पु., अध्याय० ( चइ. ८.१ )
**अवाङ्मुख**–वि., अधोमुखः ( सुचि. ८.२७ )
**अवाप्ति**–( परिव० ) स्त्री., प्राप्तिः ( सुचि. ३४.४ ) (चवि. ८,९०)
**अवारणीय**–वि., न विद्यते वारणं येषां तानधिकृत्य कृतः ( सुसू. ३३.१ )
**अवार्यता**–स्त्री., असाध्यता ( सुसू. ३३.३ )
**अवार्यवीर्य**–वि., अप्रतिहतवीर्यः ( सुक. ५.६३ )
**अवालुक**–पु., वनस्पति०, पानीयालुः ( रापरि. ७.३१ )
**अवि**–स्त्री., पशू०, उरभ्रः मेषः अविदुग्धम्–मधुरं, स्निग्धं, गुरु पित्तकफावहं–केवलवातेषु पथ्यम्, वातकासे हितम् (सुसू. ४५.५४–५५) हिक्का–श्वासकरमुष्णम् ( चसू. २७. २२३ )
' श्लेष्मपित्तजननानां श्रेष्ठम् ' ( चसू. २५.४० )
' क्षीराणामहिततमम् ' ( चसू. २५.३९ )

आविकं दधि – मधुरं मधुरपाकमत्यभिष्यंदि दोषलं कफवातप्रकोपकम् दुर्नामकोपनम्
(सुसू. ४५.७१-७२)
तद्घृतम् – लघुपाकं न च पित्तलम् कफवातघ्नं योनिरोगशोषकंपेषु हितम् (सुसू. ४५.१०१)
अहृद्यानाम् अग्र्यम् (असंसू. १३)
अविमूत्रम्–तिक्तकटुकं, सक्षारमुष्णं वातघ्नं कास-श्वासप्लीहोदरशोषवर्चोग्रहेषु हितम्
(सुसू. ४५.२२४) आघ्राणेन हिक्काघ्नम् (सुउ. ५०.२२) अविमांसम्–मधुरं शीतं गुरु बृंहणम् (चसू. २७.६२) अतिशीतं, स्निग्धं, त्रिदोषकरम-भिष्यंदि (अहसू. ६,६४) औरभ्रं मधुरं शीतं गुरु विष्टम्भि बृंहणम्। आविकं मधुरं मांसं किंचिद्गुरु बलप्रदम्॥ (रा. १७.४०८)
–प्रिय–पु., वनस्पति०, श्यामाकः (रा. १६.१४०)
–प्रिया–स्त्री., वनस्पति०, श्वेता (रा. ५.४६)
**अविकल्पक**–वि., न शरीरस्य कृत्रिमतापादिगुणेन भेदकः तथौषधस्य च न प्रमाणोत्कर्षापकर्षभेदकारकः
(चवि. ८.१२८)
**अविकारिन्**–वि., गुणव्यापत्तौ अपि अल्पविकारं निर्विकारं वा (सुसू. ३४.२३)
**अविक्लवकर**–वि., अग्लानिकरम्, अहर्षकरं च
(सुसू. ३५.३७)
**अविक्रिति**–स्त्री., केवलप्रयोगः (चवि. ८.१३६)
**अविघात**–पु., विघातकराभिघातादिविरहः
(चशा, ६.१२)
**अविचेष्टन**–न., लक्षण०, निष्क्रियत्वम् (चचि. १८.१७)
**अविदग्ध**–वि., असंयुक्त (सुउ. ६३.४)
**अविधेय**–वि., आज्ञापितोऽपि यः यथानिर्देशं कर्म न करोति (चसि. २.६ असंसू. २.२०)
**अविपाक**–पु., लक्षण०, अजीर्णम् (चसू. १६.१३)
**अविपाकता**–स्त्री., लक्षण०, अजीर्णावस्था
(सुसू. ४५.१५)
**अविभाग**–पु., अपृथक्त्वम् (सुशा. ९.३)
**अविभ्रम**–वि., अग्लानिकरः (चवि. ८.९४)
**अविमुक्त**–पु., वनस्पति०, अतिमुक्तकः (ध. ५.१५३)
**अविवर्ण**–वि., ईषद्विविधवर्णम्
यत् वस्त्रादिलग्नं सत् प्रक्षाल्यमानमपि न विवर्णतां याति तत् (सुसू. १४.२२)
ईषद्विवर्णः (सुनि. ११.६)
अविशिष्टवर्णम् (सुउ. २२.१६)

**अविशारद**–पु., अदृष्टसमः (चवि. ८.२१)
**अविशुद्ध**–वि., वमनविरेचनाभ्यामविशुद्धदेहः
(सुचि. ३७.९३)
**अविशेष**–पु., ज्ञाज्ञयोः प्रकृतिविकारयोः प्रवृत्ति-निवृत्त्योश्च सामान्यदर्शनम् (चशा. ५.१०)
–ग्राहिन्–वि., ज्ञाज्ञद्वन्द्वेषु सामान्यदर्शी
(चशा. ५.१०)
**अविशोषित**–वि., अलंघितम्, असम्यग् लंघितम्
(का. विशेषकल्प० पृ. २१९)
**अविषादकर**–वि., शरीरमनसोरग्लानिकरम्
(चवि. ८.९४)
**अविसरण**–न., अप्रसरणम् (सुनि. १०.१६)
**अविसर्गिन्**–वि., अविसर्जनशीलः (सुउ. ३९.६९)
**अवीनस**–पु., नासागतरोग०, तस्य लक्षणानि–सघुर्घुर-श्वासः, पीनसाधिकवेदना, अवेरिव नासिका प्रक्लिन्ना सती अविच्छिन्नं पिच्छिलं शीतं पक्वं घनं सिंघाणकं स्रवति, अष्टांगहृदयेऽयं रोगः 'अपीनस' नाम्ना निर्दिष्टः (असंउ. २३)
**अवृत्ति**–वि., न विद्यते वृत्तिर्जीविका यस्य
(अहसू. २.२२)
**अवेक्षण**–न., अवेक्षा, परीक्षणम् (चचि. ३०.२९६)
**अवेक्ष्यावेक्ष्यकारिन्**–वि., समीक्ष्यकारी (चवि. ८.१३)
**अव्यक्त**–वि., न व्यक्तम्, अदृश्यमूर्तिकम्, सूक्ष्मम्
(सुनि. १.७)
न., प्रकृतिः मूलप्रकृतिः सांख्ये (सुशा. १.३)
–विग्रह–वि., विद्यमानाविद्यमानांगप्रत्यंगः अंगानां च बीजरूपतया स्थितत्वेन सत्त्वम् अव्यक्तभावाचासत्त्वम् (चशा. ४.९)
**अव्यथा**–स्त्री., वनस्पति० कदली, गुडूची, हरीतकी वा
(चसू. ४.१८ (चक्र०)
**अव्यध्य**–वि., वेधनायोग्या (सुशा. ७.२२)
**अव्यय**–वि., निर्विकारः (सुशा. ३.४)
पु., आत्मा (चशा. ४.८)
**अव्यवसाय**–पु., अनिश्चयः, संशयः (चसू. २५.४०)
**अव्यवस्था**–स्त्री., अनियमः (असंनि. २.२२)
**अव्यवस्थितमति**–वि., अनवस्थितबुद्धिनिश्चयः
(सुशा., ४.६६)
**अव्यापक**–वि., अव्याप्तिदोषग्रस्तम् (चवि. ८.६७)
**अव्यापत्ति**–स्त्री., रोगराहित्यम्, आरोग्यम्
(चवि, ८.८९)

**अव्यापन्न**–वि., प्रकृतिस्थम्, अविकृतम् ( सुसू. २१.३ )

**–ऋतुकृत**–वि., कालस्वभावकृतः, पित्तादिचयकृतः ( सुसू. २४.७ )

**अव्याहत-गति**–वि., अपरित्यक्तस्वमार्गः, अनवरुद्धमार्गः ( चचि. २८.४ )

**अशक्य**–वि., असाध्यम् ( चचि. १७.१४९)

**–प्रातिलोम्यत्व**–न., यस्य प्रातिलोम्यं नाम अनुलोमवैपरीत्येन नयनम् अशक्यं, तत् अशक्यप्रातिलोम्यं, तस्य भावः, यथा उभयमार्गगे रक्तपित्ते वमनम् अपथ्यम् ऊर्ध्वप्रवृत्तत्वात्, विरेचनमपथ्यम् अधःप्रवृत्तत्वात् ( असंनि. ३ )

**अशन**–पु., वनस्पति०, बीजकः ( सुउ. ४५. ३४ )

न., भोजनम्, अन्नम् ( सुचि. ३७.५५ )

अयुक्ताशनप्रकाराः—समशनं, विषमाशनम्, अध्यशनं, विरुद्धाशनं विरुद्धवीर्याशनं वा, अमात्राशनं, अजीर्णाशनम्, अत्यशनं, प्रमिताशनं, प्रमृताशनम्, अतिरूक्षाशनमित्येवमादयः । एते प्रकारा आमयोत्पत्तौ मूलहेतुभूताः सन्ति, केचित्तु घोरव्याधिजनका मृत्युकारका वा भवन्ति ( चचि. १५.२३५; चसू. २५.४०; चसू. २६.१०३; सुसू. ४६.५०८; सुसू. २०.१९; काखि. ५.६०–६२ ) अपथ्यकराणामेतेषामशनानां विवरणं तत्तत्स्थाने द्रष्टव्यम् ।

**–प्रविचार**–पु., स्वस्थावस्थानां वयःप्रकृतिसात्म्यासात्म्यरोगादीनवेक्ष्य कृताः शीतोष्णस्निग्धरूक्षद्रवशुष्कैककालिका द्विकालिकौषधयुक्तमात्राहीनदोषप्रशमनवृत्त्यर्था द्वादशविधा अशन–प्रविभागाः ( सुउ. ६४.५६ )

**अशनायित**–वि., बुभुक्षितः ( सुचि. २९.१२ )

**अशनि**–पु., मुशलवदधःपतनशीलो मारणात्मकः पदार्थविशेषः ( सुसू. २४.७ )

वज्रम् ( सुक. ४.३६ )

खनिजद्रव्य०, हीरकम् ( ध. ६.५५ )

**अशब्द**–पु., शब्दाभावः ( चइ. ४.१९ )

**–श्रवण**–न., लक्षण० शब्दाभावेऽपि शब्दश्रवणम् ( चचि. ८.६ )

रोग० अशीतिवातविकारेषु एकः ( चसू. २०.११ )

**–श्रुति**–स्त्री., लक्षण० अशब्दश्रवणम् ( असंसू. २० )

**अशस्त**–वि., अमंगलम् अप्रशस्तम् ( असंसू. ३ )

**–स्वप्नदर्शन**–न., अप्रशस्तानाममङ्गलानां वा स्वप्नानां दर्शनम् ( चसू. १६.१५ )

**अशस्त्रकृत्य**–वि., शस्त्रकर्मण्ययोग्या ( सुशा. ७.२२ )

**अशाखा**–स्त्री., वनस्पति०, शूली ( रापरि. ८.६८ )

**अशित**–न., ( चसू. २८.३ ) चतुर्विधान्नस्यैकः प्रकारः ( सुशा. ४.१९ ) भक्तादि ( सुसू. ४६.४९४ )

भोज्यम् अद्यम् इत्यस्य पर्यायौ ( सुसू. १४.३ )

पेयलेह्याद्यभक्ष्याणां गुरु विद्याद्यथोत्तरम् ( सुसू.४६.४९४ )

वि[illegible]कृतभोजनः ( सुसू. ४६.४८२ )

**–जफल**–पु., वनस्पति०, मधुनारिकेरः ( रा. ११.११० )

**अशिर**–न., खनिजद्रव्य०, हीरकम् ( ध. ६.५६ )

**अशुक्लचंदन**–न., रक्तचंदनम् ( सुउ. ५०.१७ )

**अशुचिदर्शन**–न., अमेध्यवस्तुदर्शनम्, बीभत्सादिदर्शनम् ( सुउ. ५७.६ )

**अशुद्ध**–वि., अकृतस्नेहस्वेदवमनविरेचनः ( सुचि. ३७.४३ )

कलुषितम् ( सुचि. २४.११७ )

**अशुभोदय**–वि., मरणकारणम् ( चइ. ४.६ )

**अशोक**–पु., वृक्ष० लोहितकुसुमः ( सुसू. ३८.१४ (ड)

अयं वसंते पुष्पितो भवति ( सुसू. ६.२७.२९ )

अस्य त्वक्पुष्पबीजपल्लवादयो भैषज्यार्थमुपयुज्यन्ते । पुष्पमंजनार्थमुपयुज्यते ( सुउ. १७.८ ) बीजं कासशमनार्थमुपदिष्टम् ( काचि. ) वेदनास्थापनगणे एकं द्रव्यम् ( चसू. ४.१८ )

अशोकगुणाः—मधुरः ( रा ), तिक्तः कषायश्च ( भाप्र. ), शीतो, हृद्यः सन्धानीयः, कृमिहारकः ( रा. ) ग्राही, वर्ण्यः ( भाप्र. ), पित्तघ्नः, अर्शः कृम्यापचिव्रणदाहश्रमगुल्मशूलोदराध्माननाशनः ( रा. ) तृषाशोषविषास्रजित् ( भाप्र. ) ( ध.५.१५९ )

**–रोहिणी**–स्त्री., वनस्पति०, कटुका. संज्ञास्थापनगणे. ( चसू. ४.१८; चक. १.२३ )

अशोकसदृशपत्रा लता ( चक. १.२३ )

**अशोचा**–स्त्री., वनस्पति० व्रीहिः (रा. १६.१००)

**अशौण्ड**–पु,, अमद्यपः, शुण्डा मद्यशाला, तत्प्रचारी शौण्डः, न शौण्डः अशौण्डः, मद्यनिवृत्तः इति ( चवि. ८.१३ )

**अश्मन्**–पु., पाषाणः ( असंउ. १ पृ. १ )

खनिजद्रव्य०, मनःशिला (र. ३०.५६ )

स्वर्णमाक्षिकम् ( र. ३०.५६ )

रोग०, अश्मरी ( असंसू. ५.२३ )

अनुयत्र०, ( अहसू. २५.३९ )

सुश्रुतेऽष्ठीलाश्मनाम्ना एतदनुयत्रं पठितम् ( सुसू. ७.१५)

(अश्म)–कदली–स्त्री., वनस्पति०, काष्ठकदली (रा. ११.११०)

–केतु स्त्री., क्षुद्रपाषाणभेदा (रा. ५.२१५)

–गर्दभ–पु., रोग०, पाषाणगर्दभः (र. २५.२)

–गर्भ वि., अश्मा गर्भेऽभ्यन्तरे यस्य तत् मणिविशेषः, मरकतम् (असंसू. २१.४)

–गर्भज न., मणिविशेषः (ध. ६.४९)

–घनस्वेद पु., त्रयोदशस्वेदेष्वेकः (चसू. १४.३९) घनाश्मस्वेदः, अस्य पर्यायः (असंसू. २६) स्वेदनविधिः–पुरुषायाममात्रमधिकं वा घनं समं च शिलातलं वातहरदारुदीसेनाग्निना सर्वतस्तापयित्वाऽग्निमपोह्योष्णोदकेन प्रोक्ष्य तं कौषेयाविकसंस्तरं कृत्वा तस्मिन् स्वभ्यक्तसर्वाङ्गः कौरवाजिनकौषेयप्रावाराद्यैः सुसंवृतः स्वापं कुर्यात्। (चसू. १४.४७.५०)

–घ्न–पु, वनस्पति०, पाषाणभेदः (ध. १.१५७)

–ज–न., खनिजद्रव्य०, शिलाजतु (ध. ३.१६५) मुंडलोहम्, लोह० (रा. १३.२९)

–जतु–न., शिलाजतु (चचि. १६.८१)

–जतुक–न., खनिजद्रव्य०, शिलाजतु. (रा. १३.२२९)

–ज-जतु–(परिव.) न., शिलाजतु (सुउ. ४१.५७)

–जित्–वनस्पति०, पाषाणभेदः (ध. १.१५७)

–भिद्–पु., वनस्पति०, पाषाणभेदः, (चचि. २६.४६)

–भेद–पु., वनस्पति०, पाषाणभेदः (सुउ. ५८.४७)

–भेदक–पु., वनस्पति०, (चसू. २३.१५) (ध. १.१५७)

–मलचूडा–स्त्री., वनस्पति०, गुंजा (रा. ३.४७)

–लाक्षा–स्त्री., खनिजद्रव्य०, शिलाजतु (रा. १३.२२९)

–सार–पु., शिलाजतु (सुउ. ५९.२४.२५) पु., न., लौहम् (र. ५.१)

–स्वेद–पु., अश्मघनस्वेद०, (चचि. ३.४८.४९)

अश्मक–पु., जानपद०, अवन्तिजनपदस्य दक्षिणपश्चिमस्यां दिशि स्थितो गोदातटवर्ती जनपदः यस्य राजधानीं प्रतिष्ठानं, पौंडन्यं वा मन्यन्त ऐतिह्यविदः; तत्रस्थो जनो वा (चचि. ३०.३१७)

अश्मन्त–न., वनस्पति०, अश्मन्तकः (असंसू. १५)

अश्मन्तक–पु., वृक्ष० मालुयासदृशपत्रो वृक्षः (चसू. १.११४)

अम्लोटसदृशो यमलपत्रकः (सुसू. ४६.१७०) युग्मपत्रकः, (सुचि. २५.१९) अम्लोटकसदृशो वृक्षः, तस्य वल्कलं सीवनार्थमुपयुज्यते (सुसू. २५.२०) मालुकपर्णः (असंउ. ४४) (इंदु पृ. ३६५.६६) अश्मन्तकगुणाः–कषायो, मधुरः शीतः, संग्राही पित्तकफघ्नः रक्तदोषप्रमेहविदाहतृष्णाविषमज्वरविषच्छर्दिप्रभृतिरोगघ्नः (ध. १.१९४) मूत्रसंग्रहणीयगणे उपदिष्टम् एकं द्रव्यम् (चसू. ४.१५) अश्मन्तकफलगुणाः–कषायं हिमं स्वादु वातकफजित् च (सुसू. ४६.१७०)

वनस्पति०, पाषाणभेदी, पाषाणभेदः, अम्लस्कन्धे द्रव्य० (चवि. ८.१४०)

अम्लपत्रः (सुशा. १०.५९)

गर्भस्रावपरिहारार्थं गर्भिण्या द्वितीयमासे उपयुज्यते। (सुशा. १०.६२)

पतिष्यति गर्भे शोणितस्यादर्शने वेदनायां च सत्यामश्मन्तकशतावरीपयस्या सिद्धं पयः पाययेत (सुशा. १०.५७)

मणिविशेषः (सुउ. १५.२६.२८)

अश्मरी–स्त्री., रोग०, मार्गे स्रोतसि वा विशेषतो मूत्रमार्गे संभूतः पाषाणविशेषः। हेतुः संप्राप्तिश्च सुश्रुते–तत्र असंशोधनशीलस्यापथ्यकारिणः प्रकुपितः श्लेष्मा मूत्रसंपृक्तोऽनुप्रविश्य बस्तिमश्मरीं जनयति (सुनि. ३.४) संप्राप्तिश्च चरके–पवनो बस्तिगतं सशुक्रं मूत्रं सपित्तं कफं वा यदा विशोषयेत्तदाऽश्मरी उपजायते, यथा गोः पित्तेषु रोचना भवति (चचि. २६.३६)

अप्सु स्वच्छा (स्था) स्वपि यथा निषिक्तासु नवे घटे; कालान्तरेण पङ्कः स्यादश्मरी–संभवस्तथा। संहन्त्यापो यथा दिव्या मारुतोऽग्निश्च वैद्युतः। तद्वद्बलासं बस्तिस्थमूष्मा संहन्ति सानिलः (सुनि. ३.२४.२७)

अश्मरीपूर्वरूपम्–सुश्रुते–

ज्वरो बस्तिपीडारोचकौ मूत्रकृच्छ्रं बस्तिशिरोमुष्कशेफसां वेदना कृच्छ्रावसादो बस्तगंधत्वं मूत्रस्येति। यथास्ववेदनावर्णं दुष्टं सान्द्रमथाविलम्। पूर्वरूपेऽश्मनः कृच्छ्रान्मूत्रं सृजति मानवः॥ (सुनि., ३.५.६)

अश्मरीसामान्यलक्षणम्–सुश्रुते–
'अथ जातासु ( अश्मरीषु ) नाभिबस्तिसेवनी-मेहनेष्वन्यतमस्मिन् महती वेदना मूत्रधारासंगः सरुधिरमूत्रता मूत्रविकिरणं गोमेदप्रकाशमत्या-विलं ससिकतं विसृजति धावनलङ्घनप्लवनपृष्ठ-यानोष्णाध्वगमनैश्चास्य वेदना भवन्ति
( सुनि. ३.८ )

अश्मरीसंख्या–चतस्रोऽश्मर्यो भवन्ति श्लेष्मा-धिष्ठानाः तद्यथा–श्लेष्मणा, वातेन, पित्तेन, शुक्रेण च. ( सुनि., ३.३ )

वाताश्मरीलक्षणम्–तस्य ( वाताश्मरीपीडितस्य ) मूत्रप्रतिघातात्तीव्रवेदना भवति, तदाऽत्यर्थं पीड्य-मानो दन्तान् खादति, नाभिं पीडयति मेढ्रं प्रमृद्नाति, पायुं स्पृशति, विशर्धते, विदहति-वातमूत्रपुरीषाणि कृच्छ्रेणास्य च मेहतो निःसरन्ति।

वातिका–अश्मरीरूपम्–
अश्मरी चात्र श्यावा परुषा विषमा खरा कदम्बपुष्पवत्कण्टकाचिता भवति, तां वातिकीमिति विद्यात् ( सुनि. ३.१० )

अश्मरी ( पित्तजा )–
तस्य मूत्रप्रतिघाताद् ऊष्यते चूष्यते दह्यते पच्यत इव बस्तिरुष्णवातश्च भवति। अश्मरी चात्र सरक्तपीतावभासा कृष्णा भल्लातकास्थि-प्रतिमा मधुवर्णा वा भवति ( सुनि. ३.९ )

अश्मरी ( कफजा )–
तस्य मूत्रप्रतिघाताद्दाल्यते भिद्यते निस्तुद्यत इव च बस्तिः गुरुः शीतश्च भवति। अश्मरी चात्र श्वेता स्निग्धा महती कुक्कुटाण्डप्रतीकाशा मधूकपुष्पवर्णा वा भवति ( सुनि. ३.८ )

शुक्राश्मरीलक्षणम्–
'सा मूत्रमार्गमावृणोति मूत्रकृच्छ्रं बस्तिवेदनां वृषणयोश्च श्वयथुमापादयति, पीडितमात्रे च तस्मि-न्नेव प्रदेशे प्रविलयमापद्यते। ( सुनि. ३.१२ )
शर्करा सिकतामेहो भस्माख्यश्चेत्यश्मरीविकाराः
( सुनि. ३.१३ )

मूत्रमार्गगताया अश्मर्या लक्षणम्–
दौर्बल्यं सदनं कार्श्यं कुक्षिशूलमरोचकः। पाण्डु-त्वमुष्णवातश्च तृष्णा हृत्पीडनं वमिश्चेति। ( सुनि. ३.१७ ) प्रायेण वातजादयस्तिस्रोऽश्मर्यो बालानां जायन्ते। ( सुनि. ३. ११ )

–**व्रण**–पु., बस्तेरश्मरीहरणशस्त्रकर्मजन्यव्रणः
( सुशा. ६.३४ )

**अश्मोत्थ**–न., खनिजद्रव्य०, शिलाजतु ( रा. १३.२२९ )

**अश्रद्धा**–स्त्री. रोगलक्षण०, अश्रद्धायां मुखप्रविष्टस्याऽ-हारस्याभ्यवहरणं भवत्येव परंत्वनिच्छा. रस-प्रदोषजरोगेष्वेकः ( चसू. २८.९ )

**अश्रु**–न., नेत्रोदकम् ( सुउ. ५५.४ )

–**जोदावर्त**–पु., उदावर्तव्याधिविशेषः हर्षशोकाभ्यां समुद्भूतान्यश्रूणि तेभ्यः समुत्पन्न उदावर्तः। आनंदजं शोकसमुद्भवं वा अश्रुप्रवृत्त्युन्मुखं यः निग्रहान्न मुंचति तस्य शिरोगुरुत्वं तीव्रा नयनामयाः पीनसप्रतिश्यायादयश्च भवन्ति। ( सुउ.५५.१२ ड )

–**पात**–पु., लक्षण० रोदनम् ( सुशा. २.२५ )

–**मार्ग**–पु., अश्रुस्रोतः ( सुउ. १. ११.१२ )

–**मोक्ष**–पु., लक्षण० अश्रुनिःसारणम्
( सुउ. ५५.२८ )

–**सिरा**–अश्रुवहा सिरा ( ड सुउ. २.५ )

**अश्वागमन**–न., रोगलक्षण० अश्रूणाम् आगमनम् ( चनि. १.३३ )

**अश्व**–पु., पशु० घोटक ( च.सू. २७.३५ )
कफप्रकृतिकोऽयम् ( सुशा. ४.७६ )
अश्वमांसगुणाः–उष्णं, लघु, बल्यं, पित्तकरं, दाहकरं, वातघ्नं. प्राणि० श्वेताश्वस्य खुरमषीनव-नीतेन युक्ता व्यङ्गेष्वञ्जनार्थमुपयुज्यते
( असंउ. ३७ पृ. २७९ )

अश्वजद्रव्याणाम् उपयोगाः–
दन्तः–एडगजादियोगे कुष्ठप्रशमनार्थम् उपयुक्तः
( चचि. ७.१६० )
पित्तम्–शिरःस्थितविषप्रशमनार्थम् उपदिष्टम्
( चचि. २३.७२. )
मांसम्–शोषिणे हितम् ( सुउ. ४१.३७ )
मूत्रम्–दीपनं कटुतीक्ष्णोष्णं वातचेतोविकारनुत् वातहरं कृमिदद्रुषु शस्तं च ( सुसू. ४५.२२५ )
कुष्ठविषव्रणापहम् ( सुसू. १.१०४ )
शकृद्रसः– रक्तपित्तशमनः ( चचि. ४.६९ )
अश्वास्थिक्षारः–हस्तिमेहे पानार्थमुपयुज्यते
( सुचि. ११.९ )

–**कटक**–पु., घोटककविकाचूडकम् ( सुसू. ७.१५ )

–**कर्ण**–पु., वनस्पति० शालवृक्षः सर्जरसभेदः जांगलदेशे विशेषेण जायते ( चक. १.८ ) सर्ज-भेदः ( सुक. ६.२२ ) ह्रस्वशालाः गन्धमुण्डः अश्वत्थसदृशो वृक्षः पूर्वदेशे प्रसिद्धः
( सुसू. ३८. ८.९ )

हिमालयोत्तरे पार्श्वे अश्वकर्णो महाद्रुमः
(र. २.१४२)

अश्वकर्णः गर्दभाण्डः (सुउ. ३१.५)
जरणद्रुमः (रापरि. ९.३)
कुशिकः (अहसू. १५.१९)
जरणद्रुमोऽश्वकर्णस्तार्क्ष्यप्रसवश्च सस्यसंवरणो धन्यश्च
दीर्घपर्णः कुशिकस्तरुः कौशिकश्चापि (रा.परि.९.३)
अश्वकर्णगुणाः—अश्वकर्णः कटुस्तिक्तः स्निग्धः पित्तास्रनाशनः। ज्वरविस्फोटकण्डुघ्नः शिरोदोषार्तिकृन्तनः॥ (रापरि. ९.३)
उदर्दप्रशमनगणे (चसू. ४.१७)
अश्वकर्णत्वक्चूर्णं व्रणरोपणार्थमुपयुक्तम्
(सुसू. ३७.२७)

उपदंशे लेपनार्थम् (सु. उ. ३१.५)
अस्य पुष्पं महासुगंधिनामागदे उपयुक्तम्।
(सुक. ६.२२)

अश्वकर्णस्य फलं कषायरसप्राये क्षीरिवृक्षफलादिवर्गे वर्णितम् (सुसू. ४६.१६३)
फलगुणाः—कषायं, मधुरं, रूक्षं, गुरु, शीतलं, लेखनं, विबन्धाध्मानजननं, स्तम्भनं, वातकोपनं, कफपित्तजित् (असंसू. ७.१८१.८४)
अश्वकर्णः मधुस्रवा इति नाम्ना पूर्वदेशे प्रसिद्धः चतुष्पादादिनखदन्तपरिक्षते अयं लेपार्थम् उपयुज्यते। (असंउ. ४६)

N. O.—Dipterocar paceae
L.—Shorea Robusta Gaertu
Eng.—Sal Tree
हिं.—साल
म.—साल
गु.—साळ
बं.—साल, राल, धूना
त.—तळरा Taloora

अस्थिभग्न० काण्डभङ्गस्य प्रकारः अश्वकर्णवद् विपुलास्थिनिर्गमादश्वकर्णम् (सुनि. १५.१०)

**–कर्णक**–न., अस्थिभग्न० अश्वकर्णम्
(सुनि. १५.१०)

**–क्षुर**–पु., वनस्पति० गिरिकर्णिका (ध. ४.८४)

**–खरज**–पु., पशु० अश्वतरः (ध. ३८४.२६७)

**–खुरक**–पु., वनस्पति० स्यंदन–कोकिलाक्षः (चक.)
स्वेतस्पंदः (चचि. २३.२४५)

स्यंदन
कोकिलाक्षः

**–खुरा**–स्त्री., वनस्पति०, गिरिकर्णी
(असंउ. ४ पृ. ३९)

**–गन्ध**– पशु० गवयः (धपरि. ६.३४)

**–गन्धा**–स्त्री., वनस्पति० (चसू. ४.१०)
इयं मदगंधिका कषायतिक्तरसा, कटुः
(रा. ४. ४०३; ध. १.२७२)

"अश्वगन्धाऽनिलश्लेष्मश्वित्रशोथक्षयापहा।
बल्या रसायनी तिक्ता कषायोष्णातिशुक्रला॥"
(भा. प्र. ५.४.१९०)

बल्यगणे (चसू. ४.१०)
बृंहणीयगणे (चसू. ४.९)
मूलम् ऊर्ध्वभागदोषहरम् (सुसू. ३९.३)
रसायनविधिनोपयुज्यते (असंउ. ४९ पृ. ४४५)
कृशानां पुष्टिं कुरुते (रा. १८.१८७)
कर्णपालिरोगेऽभ्यंगतैले उपयुक्तम् (सुचि. २५.२६)
व्रणरोपणवर्तिषूपयुज्यते (सुसू. ३७.२३)
श्लेष्मजशोफप्रलेपे उपयुक्तम् (सुसू. ३७.६)
कण्ड्वादिहरमुद्वर्तनार्थम् (चसू. ६.८)
अश्वगंधाक्षारं श्वासे मधुसर्पिषा सह लिह्यात्
(चचि. १७.१७०)

अश्वगंधासवः प्रसहमांसाशने अनुपानार्थं उपदिष्टः (सुसू. ४६.४३३)
वनस्पति० अश्वगन्धा (र. २०.१३५)

**–घ्न**–पु., वनस्पति० करवीर (ध. ४.१)

**–घ्नी**–स्त्री. वनस्पति० तेजोवती (ध. १.२६६)

**–जल**–न., अश्वमूत्रम् (र. ५.२२३)

**–तर**–पु., पशु० वेगसरः स च–
अश्वायां खराज्जातः (च. सू. २७.३५)
प्रसहवर्गीयः प्राणी.

**अश्वत्थ**–पु., वनस्पति०, पिप्पलः (चक. १.८;
सुसू. ३८.४८)

**(अश्वत्था)**–स्त्री., वनस्पति० श्रीवल्ली.
(रापरि. ८.३३)

**(अश्वत्थी)**–स्त्री., वनस्पति० पिप्पलीभेदः
(रा. ११.१२२)

**–फलम्**–न., पिप्पलस्य फलम् (चसू. २७.१६४)

**–फला**–स्त्री., हपुषा. (ध. २.९) (रा.४.१४)

**–बला**–स्त्री., शाक०
शाकं आश्वबलं रूक्षं बद्धविण्मूत्रमारुतम्
(सुसू. ४६.२६१) अर्शःसु क्षारपातनानंतरं

पथ्यम्; शाकार्थमुपयुज्यते (सुचि. ६-८)
**—मार**—पु., वनस्पति० करवीरः, श्वेतकरवीरः, स्थावरमूलविषविशेषः (सुक. २.५)
**—मारक**—पु., करवीरः (घ. ४-१; रा. १०.१)
**—मूत्री**—स्त्री., वनस्पति० सल्लकी.
(ध. ३.१३५; सुउ. ४२.९४.९५)
**—मोहक**—पु., वनस्पति० करवीरः (ध. ४.१.)
**—युज्**—पु., नक्षत्र० अश्विनी. (चक. ९.१३)
**—रोधक**—पु., वनस्पति० करवीरः (रा. १०.१.)
**—लिण्ड**—न., अश्वशकृत् (असंउ. २ पृ. २६)
**—संनिभा**—स्त्री., वनस्पति० पिप्पलीविशेषः
(रा. ११.१२२)
**—हन्**—पु., करवीरः (चसू. ३.१७; ध. ४.१.)

**अश्वा**—स्त्री., तुरगी. अश्वादुग्धम् अम्लं, लवणं, लघु, वृष्यं, दीपनं, देहस्थैर्यकरं, बल्यं, गौरवकांतिकृत्, सरं, रुचिकरं, श्वासवातहरम् (ध. ६.१७२) अश्वायाः शकृद्रस-क्षीर-मांसरस-रुधिरैर्द्राक्षाऽश्वगन्धा-मगधा-सिताभिः सिद्धम् घृतं शोषघ्नम्।
(सुउ. ४१.४९)
स्त्री., वनस्पति० अश्वगन्धा. (अहचि. २३)

**अश्वाऽपान** न., वडवायोनिः (सुसू. २३.१२)

**अश्वान्तक**—पु., वनस्पति० करवीरः (रा. १०.२)

**अश्वावरोहक**—पु., वनस्पति० अश्वगन्धा (ध. १.२७२)
अश्वकर्णः इक्षुरको वा. (चसि. १०.३७)

**अश्वावरोहिका**—स्त्री., अश्वगंधा. (चसि. १०.३७)

**अश्विन्**—पु., देवता० (नित्यं द्विवचनान्तः) अश्विनौ
अश्विनौ देवभिषजौ यज्ञवाहाविति स्मृतौ।
प्रजापतेरायुर्वेदमधीत्येन्द्राय दत्तवन्तौ॥
(चसू. १.४.५)

यज्ञस्य च्छिन्नं शिरस्ताभ्यां पुनः समाहितं; पूष्णः प्रशीर्णाः दशनाः भगस्य नष्टे नेत्रे वज्रिणो भुजस्तम्भश्च ताभ्यामेव चिकित्सितः पुनः सुखीकृतः सोमाभिपतितश्चंद्रो राजयक्ष्मणा गृहीतश्च चिकित्सितः पुनः सुखीकृतः।

वीतवर्णस्वरोपेतो विकृतिं गतः कामी भार्गवश्च्यवनो वृद्धः सन् ताभ्यां पुनर्युवा कृतः। एतैरन्यैश्च बहुभिः कर्मभिर्भिषगुत्तमौ इन्द्रादीनां महात्मनां भृशं पूज्यौ बभूवतुः। द्विजातिभिः ग्रहाः स्तोत्राणि मन्त्राः धूम्राः पशवस्तथा नाना हवींषि च ताभ्यां प्रकल्प्यन्ते। शक्रोऽश्विभ्यां सह स्तवने सोममश्नुते भगवान् सौत्रामण्यामश्विभ्यां सह मोदते। वेदवाक्येषु इन्द्राग्नी अश्विनौ च द्विजैर्यथा स्तूयन्ते। न तथाऽन्या देवताः। अजरैरमरैर्विबुधैरधिपैर्ध्रुवैर्भिषजावश्विनौ पूज्येते।
(चचि. १.४ ४० तः ४९)

**अष्टन्**—वि., संख्या० (चसू. १९.१)
**—कट्वर**—न., योग० गृध्रस्यूरुग्रहादिषूपयुज्यते
(चचि. २७.४७)
**—धातुकी**—वि., अष्टतत्त्वसमुदायात्मिका खादिपञ्चकबुद्ध्यव्यक्ताहंकाररूपा (चशा. १.६३)
(चशा. ११.७)
**—पदी**—स्त्री., वनस्पति० मल्लिका (ध. ५.१३४)
**—मान**—न., मान० प्रसृतम् द्वे पले प्रसृतं विदुः अष्टमानं तु विज्ञेयं। (चक. १२.९३)
**—मासिकरसायनम्**—न., सिद्धौषधि०
(र. २६.१७.२२)
**—रात्र**—न., अष्टमी रात्रिः अष्टरात्रमन्तरं कृत्वा अष्टानां रात्रीणां समाहारः (चसू. ५.१५)
**—रूप**—वि., अष्टौ रूपाणि यस्य तत्; यथा अष्टरूपम् अव्यक्तम् (सुशा. १.३)
**—वर्ग**—पु., गणविशेषः
द्वे मेदे द्वे च काकोल्यौ जीवकर्षभकौ तथा।
ऋद्धिर्वृद्धिश्च तैः सर्वैरष्टवर्ग उदाहृतः॥
(शार्ङ्गधर मअ. १९)
**—विधशस्त्रकर्मीय**—पु., अष्टविधशस्त्रकर्माधिकृत्य कृतोऽध्यायः सुश्रुते सूत्रस्थानस्य पंचविंशतितमः अध्यायः। (सुसू. २५.१)
**—शतो (ता) रिष्ट**—पु., योग० काश्मर्य धात्रीत्यादीनां सप्तफलानां जीर्णगुडस्य च प्रत्येकं शतमस्मिन् अरिष्टे उपयुक्तम्। एतदरिष्टं शोथशामकम्।
(चचि. १२.३२, ३३. असंचि. १९)
**—(अष्टा) कपाल**—वि., अष्टसु कपालेषु पाचितः हविर्द्रव्य० (काशा. जातिसूत्रीय० ८)
**—पद**—न., खनिज० सुवर्णम् (रा. १३.२.)
पु., चतुरंगक्रीडनार्थं पटः (सुसू. ३०.१९)
अष्टपदेन लेखाभिः कोष्ठसंतानं चतुरंगक्रीडनार्थमुच्यते (ड.सुसू. ३०.१९)

**अष्टांग**—वि., अष्टावंगानि यस्य (सुसू. १.९) शल्यं, शालाक्यं, कायचिकित्सा, भूतविद्या, कौमारभृत्यम्, अगदतन्त्रं, रसायनतन्त्रम्, वाजीकरणतन्त्रमिति अष्टावङ्गान्यायुर्वेदस्य एवमयमायुर्वेदोऽष्टाङ्ग उपदिश्यते। (सुसू. १.७.९)

**–पूरण**–वि., अष्टाङ्गानां पूरयिता. ( असंसू. १ )

**–लवण**–न., भैषज्य०
सौवर्चलमजाजी च वृक्षाम्लं साम्लवेतसम् । त्वगेला-मरिचार्धांशं शर्कराभागयोजितम् ॥ एतल्लवण-मष्टांगमुच्यते । तत् परमग्निसंदीपनं स्रोतोविशोधनं कफप्राये मदात्यये उपयुज्यते ।
( चचि. २४.१७७, १७८ )

**–संग्रह**–पु., अष्टाङ्गानि संहृत्य कृतः संग्रहः
( असंसू. १ )

**–हृदय**–न., वाग्भटकृत आयुर्वेदीयो ग्रन्थः
( अहृसू. १.५ )

**अष्टोदरीय**–पु., चरकसूत्रस्थानस्य एकोनविंशोऽध्यायः
( चसू. १९.१ )

**अष्टौनिन्दितीय**–पु., चरकसूत्रस्थानस्यैकविंशोध्यायः
( चसू. २१.१ )

**–अष्टामिका**–स्त्री., मान० द्वे सुवर्णे.
( चक. १२.९१ )
कर्षद्वयम् ( असंक. ८ )

**अष्ठील ( ला )**–स्त्री., पु., उत्तरापथे प्रसिद्धो वर्तुल-पाषाणः चर्मकाराणां वर्तुलदीर्घालौहिभाण्डिः
( ड सुनि. १.९० )
दीर्घो लोहमयो ग्रन्थिर्लोहकारेषु प्रसिद्धः. ( चक्र )
( चचि. १३.३७ )
शारीर० नरशरीरे ग्रन्थिसदृशो बस्तिद्वारस्थितोऽव-यवः पौरुषमित्यपरं नाम.
( सुनि. ३.१९ )
रोग० त्रयोदशबस्तिविकारेष्वेकः तत्संप्राप्तिलक्षणे–वायुर्बस्तिगुदमाध्मापयन्रुध्वा चोन्नतां चलां तीव्रार्ति-मष्ठीलां करोति, तया मूत्रविण्मार्गाणामवरोधो भवति । ( चसि. ९.३६ )
सुश्रुतेऽयं रोगो वातविकारेषु " वाताष्ठीला " इति नाम्ना वर्णितः । ( सुनि. १.९० )
अष्ठीलिकाऽस्य पर्यायः ( शारं. १.७.१०९ )

**अष्ठीलाश्मन्**–पु., दीर्घवर्तुलपाषाणः उपयंत्रम्
( सुसू. ७.१५ )
अस्थिदेशोत्तुण्डितस्य शल्यस्याहरणार्थं हस्ततल-भग्नस्य चिकित्सार्थमस्योपयोगः
( सुचि. ३.३५; सुसू. १७.११ )

**अष्ठीलिका**–स्त्री., वातरोगः, वाताष्ठीला अष्ठीला वा ।
( र. १९.१८७ )
गुह्यरोगः, विषमा कठिना भुग्ना वातकृता पिटका ।
( अहृउ. ३३.१६ )

सुश्रुतेऽयं रोगः शूकदोषेषु लिखितः
( सुनि. १४.५ )

**असंकीर्ण**–वि., असंकटम्, असंकुलम् ( सुसू. ४६.४४६ )

**असंकुलप्रकरण**–वि., अनाकीर्णप्रकरणम् अमिश्रीकृतप्रकरणं वा । ( चवि. ८.३ )

**असंजातसारत्व**–न., काठिन्याभावः ( असंशा. ४ )

**असंवृतगुद**–रोगलक्षण० असंकुचितगुदः विवृतगुदः ।
( सुउ. ४०.२१ )

**असंसर्ग**–वि., असक्तवेगः ( चक्र. चसि. १२.९ )

**–अमैथुनम्**–पु., ( सुसू. १९.१५ )

**असंहत**–वि., नात्यच्छं नातिघनम् ( सुसू. १४.२२ ) द्रवम् ( अहृसू. २७.१ )

**असत्**–वि., अनाचारः पुरुषः ( सुचि. २४.१३३ )

**–पक्ष**–पु., अनागमपक्षसिद्धः पक्षः ( चसू. ३०.८२ )

**–प्रदर्शिन्**–पु., रोगलक्षण० अयथार्थं पश्यति
( सुउ. १९. ६.७ )

**–वादिन्**–प्रतिरसपाकवादी, पाकत्रयवादी, गुणकर्तृत्व-वादी वा सुश्रुतमतानुसारेणासद्वाद्यस्ति.
( सुउ. ६५.५ )

**( असद् ) ग्रहणम्**–न., अयथार्थज्ञानम्
( चसू. २५.४० )

**असन**–पु., वनस्पति० उदर्दप्रशमनगणोक्तमेकं द्रव्यम्
( चसू. ४.१७ )
दन्तकाष्ठोपयोगि द्रव्यम् । ( चसू. ५.७३ )
बीजकः पूर्वदेशे प्रसिद्धः छागकर्णसदृशपत्रः पीतशालः ( सुसू. ३८. ८ )
शृङ्गाटकादिवर्गोक्तं प्रमेहघ्नमेकं द्रव्यम्
( सुचि. ११.१० )
बीजकसारः ( ड. सुचि. ९.३० )
विजयसारः ( र. २०.९८ )
अशनस्तु महासर्जः सौरिर्बन्धूकपुष्पकः ।
प्रियको बीजकः श्यामः सुनीलः प्रियशालकः ॥
असनगुणाः–कटुकषायस्तिक्तः उष्णः सारकः कफ-वातघ्नः पित्तास्रवातार्तिगलदोषरक्तमण्डलादिरोगघ्नः
( ध. ५.१२५ )

**–पर्णी**–स्त्री., वनस्पति० अपराजिता ( चवि. ८.१३९ ) दारुपर्णी ( चचि. २६.७० ) गोकर्णी.

**–पुष्पक** पु., षष्टिकभेदः कृष्णषष्टिकः ( सुसू. ४६.८ )

**असनादि**–पु., द्रव्यगणः असनः आदिः यस्मिन् । तस्य द्रव्याणि–असनतिनिशभूर्जश्वेतवाहप्रकीर्याः खदिर–कदरभण्डी शिंशपामेषशृङ्ग्यः त्रिहिमतलपलाशा-

जोङ्कः शाकशालैरुमुक्तधवकुलिङ्गच्छागकर्णा-श्वकर्णाश्च ।
( अहसू. १५.१९.२० )

गुणाः—श्वित्रकुष्ठकफकृमिपांडुरोगप्रमेहमेदोदोष-निबर्हणः

**असन्धिभग्न**—न., रोग०, भग्नप्रकारः संधिं त्यक्त्वाऽन्य-स्थाने भग्नम् ( असं. उ.२२ )

सुश्रुतेऽस्य "काण्डभग्न" इति निर्देशः
( सुनि. १५.४ )

एतद् भग्नं द्वादशविधम्—कर्कटकम्, अश्वकर्णं, चूर्णितं, पिच्चितम्, अस्थिच्छलितं, काण्डभग्नं, मज्जानुगतम्, अतिपातितं, वक्रं, छिन्नं, पाटितं, स्फुटितमिति । ( सुनि. १५.८ )

**असम्पातिन्**—वि., सुनिर्गतम् ( चशा. ८.५१ )

**असात्म्य**—न., शरीरेण सह यदात्मतामविकृतरूपतां न याति तत्। एतेन यदुपयुक्तं प्राकृतरूपोपघातकं भवति तत् असात्म्यम् ( चशा. १.१२७ )

**—अभ्याससात्म्याभावः** ( सुशा. १०.२८ )

**—ज**—वि., सहसा पूर्वाभ्यासत्यागादपराभ्याससेवना-जातः । ( अहसू. ३०.५९ )

**—भोजन**—न., अनभ्यस्तद्रव्याणां सेवनम् ।
( चचि. १५.४२ )

**—सेवन**—अनभ्यस्तानां वाङ्मनःकर्मणां सेवनम्
( काखि. ६.५८ )

**असात्म्यार्थसंयोगः**—पु., असात्म्यविषयेणेन्द्रियस्य संयोगः स त्रिविधः अयोगातियोगमिथ्या-योगरूपः । ( चशा. १.१२७ )

**असात्म्यार्थागम**—पु., विषयाणां हीनमिथ्यातियोगाः असात्म्या भवन्ति, तथाविधविषयैः सह इंद्रियाणां संयोगः । ( चशा. १.९८ )

**असात्म्येन्द्रियार्थसंयोग**—पु., असात्म्यार्थैः सहेन्द्रि-याणां संयोगः ( चनि. १.३ )

## असात्म्येन्द्रियार्थसंयोगसारणी

| इन्द्रियं | अयोगः | अतियोगः | मिथ्यायोगः |
|---|---|---|---|
| १ श्रवणम् | अश्रवणम् | अतिश्रवणम् | उच्चपरुषभीषणादिश्रवणम् |
| २ स्पर्शनम् | अस्पर्शनम् | अतिस्पर्शनम् | अभिघातविषवातादिस्पर्शनम् |
| ३ दर्शनम् | अदर्शनम् | अतिदर्शनम् | सूक्ष्मातिदूरभास्वद्दर्शनम् |
| ४ घ्राणम् | अनाघ्राणम् | अत्याघ्राणम् | पूत्यमेध्यातितीक्ष्णोग्राघ्राणम् |
| ५ रसनम् | अरसग्रहणम् | अतिरसग्रहणम् | अपथ्यविषमरसग्रहणम् |

सर्वव्याधिसाधारणं त्रिविधं निदानम् असात्म्येन्द्रियार्थ-
संयोगस्तस्मिन्नेकं निदानम्, प्रज्ञापराधः परिणामश्चान्यौ द्वौ ।
( चशा. १.११८ तः १२६ ) ( चवि. १.३ )

**असाधक**—वि., अपरिणामकरम्, अकार्यकरम्
( चवि. ८.९५ )

यद्वाक्येन हेतुरहितेन वाक्यविषयस्य सिद्धिर्न भवति तत् । ( चवि. ८.६७ )

**असाध्य**—वि., न विद्यते साधनं यस्य ( चसू. १.६३ ) न., अनुपक्रमम्, तद्याप्यमनुपक्रममिति कृत्वा द्विविधम् । ( असंसू. २ चसू. १०.९ )

"प्रत्याख्येय" इत्यस्य पर्यायः स च विशेषेणा-नुपक्रमे व्याधौ प्रयुज्यते । ( चसू. १०.१९ )

**असाध्वीक्षित**—न., अमंगलदृष्टिः ( कासू. १९ )

**असामन्**—न., विस्वरः, उच्चस्वरः ( चनि. ८.८ )
( चइं. ८.१९ )

**असार**—वि., अभ्यन्तरसारवर्जितम् ( सुसू. २९.१२ ) विशुद्धतरधातुविहीनः, सारशब्देन विशुद्धतरो धातुरुच्यते ( चवि. ८.११४ )

यंत्रदोष० अशुद्धलोहादिघटितं, तनु दुर्बलम्० ( सुसू. ७.१९ )

न., वनस्पति० काष्ठागरु, अगरुविशेषः ( रा. १२.४२ )

**असित**–वि., ईषत् कृष्णम् । ( सुउ. ४१.२५ )

कृष्णवर्णम् ( सुनि. १०.४ )

पु., मूषिकः अस्य विषेण रक्तच्छर्दिः जायते ।

( अष्टांगसंउ. ४.४६ पृ. ३७४ )

पु., वनस्पति०, मुद्गः ( ध. ६.८१ )

ऋषि० रोगापहरणचिंतनार्थं हिमवतः पार्श्वे समेतेषु महर्षिष्वेकः ( चसू. १.८ )

**असिता**–स्त्री., वनस्पति० पिप्पली. ( चचि. १९.१०७ )

आग्नेयलूतविशेषः, इयं स्वेदजा तथा पित्तविकारकारिणी, तस्याः दंशो विड्गन्धिः कृष्णक्लेदशोफयुक्तो भवति तथा कृष्णः दुष्टरक्तस्रावश्च ।

( असंउ. ४४,४५ पृ. ३६२,३७१ )

**–घन**–न., खनिजधातु०, कृष्णाभ्रकम् ( र. २७.३७ )

राजीसिरासंततं, वि. असिता नाम कृष्णा राज्यः सिराश्च ताभिः संततं व्याप्तम् । ( चचि. १३.२५ )

**–सर्षप**–पु., धान्य० रक्तसर्षपः

सिद्धार्थकवत् अस्य गुणाः

"पाके रसे चापि कटुः प्रदिष्टः ।
सिद्धार्थकः शोणितपित्तकोपि ॥
तीक्ष्णोष्णरूक्षः कफमारुतघ्न-
स्तथा गुणश्चासितसर्षपोऽपि ॥"

( सुसू. ४६.४९ )

**–सोम**–पु., वनस्पति० सोमलता. ( र. ३०.४८ )

–( असित–असिता )–असितांजनी, स्त्री., वनस्पति. कालाञ्जनी ( रा. परि. ४.४३ )

**असितानन**–पु., वनस्पति० बिल्व. ( ध. १.१०७ )

**असितालु**–पु., वनस्पति० नीलालुः ( रा. ७.३२ )

**असितोत्पल**–न., वनस्पति० नीलोत्पलं कृष्णोत्पलमित्यर्थः । ( चशा. ८.२४ रा. १०.२४८ )

**असिपत्र**–पु., वनस्पति० इक्षु. ( रा. १४.१८० )

**असिशिंबि ( बी )**–स्त्री., वनस्पति० तद्गुणाः । मधुरा, कषाया, शीतला, रुचिदायिनी, श्लेष्मपित्तजित्, व्रणदोषघ्नी । ( रा. ७.९७ )

**असु**–पु., प्राणाः ( चइ. ११.२४ )

जीवितम् ( अहृसू. ७.४२ )

**–क्षय**–लक्षण० प्राणक्षयः ( चइं. ११.२४ )

मृत्युः ( सुसू. १.४१ )



**असुर**–पु., भूताधिपति. ( असंउ. ७ पृष्ठ ५९ )

भैषज्य० बिडलवण, अर्क ( र. ११.९१ )

**असूयक**–वि., परोत्कर्षासहिष्णुः परगुणमत्सरी असुरकायस्य लक्षणमेतत् ( सुशा. ४.८८ )

**असूयन**–न., द्वेषबुद्धिः अपरिपूर्णता इति इंदुः ( असंनि. ५.२७ )

**असूया**–स्त्री.,– गुणेषु दोषारोपणम् । ( सुशा. ४.९१ )

नागकेसरम् ( र. १७.६६ )

**( असृक् )–क्षय** पु., लक्षण० रक्तक्षयः । ( चचि. १६.३३ )

**–पित्त**–न., रोग० रक्तपित्तम् । ( अहृसू. ५.३३ )

**–प्रक्लेद**–पु., लक्षण० अस्रावस्रवणम् । ( असंचि. २० )

**–संपद्**–स्त्री., आर्तवस्य सुष्टुभावः शुद्धार्तवमित्यर्थः ( चशा. २.६ )

**–स्रावण**–वि., रक्तस्रावकरः ( सुनि. १.१८ )

न., पंचकर्म० रक्तविस्रावणं, रक्तमोक्षणम् ( असंसू. २४–४६ )

**( असृग् )–दर**–पु., स्त्रीरोग० असृग् रजः दीर्यते अस्मिन् इति असृग्दरः–प्रदरः–रक्तप्रदरः ( चचि. ३०–८७ ) ( सुशा. २.१८ )

**–धरा**–स्त्री., षट्त्वक्षु द्वितीया ( चशा. ७.४ ) सुश्रुते लोहिता नाम्नाऽस्या निर्देशः ( सुशा. ४.४ )

**असृगर्बुद**–न., गुह्यरोगः ( अहृउ ३३.२४ )

लक्षणम्–अस्मिन् रोगे शिश्ने सरागासितस्फोटानां पिटिकानां चोत्पत्तिर्भवति तीव्रा च वेदना । सुश्रुतेऽयं रोगो रक्तार्बुदनाम्ना शूकदोषेषु लिखितः ( सुनि. १४.१३ )

**असृगामय**–पु., लक्षणम् रक्तष्ठीवनम् ( सुउ. ४१.१५ )

**असृग्वहा**–वि., समा, गूढा, स्निग्धा, शुद्धरक्तवहा सिरा ( असंशा. ६ )

सिराप्रकारः ( सुशा. ७.१८ )

**असृज्**–न., शारीरधातु० रक्तधातुः ( चसू १.६८ )

स्त्रीशोणितम्, आर्तवमित्यर्थः ( सुनि. ९.२७ )

वनस्पति० कुंकुमम्. ( ध. ३.१२ )

स्त्री., वनस्पति० स्पृक्का. ( ध. ३.६२ )

**अस्कन्दमान**–वि., अस्त्यानम् ( सुसू. १४.४१ )

**अस्कन्दिन्**–वि., स्त्यानत्वरहितम् ( सुसू. १४.२१ )

**अस्कन्न**–वि., अस्त्यानम् ( अहृउ. ३६.५२ )

**अस्त**–न., रहितम्, गतम् ( सुसू. ४४.५ )

**–दोष**–वि., दोषरहितम् ( सुसू. ४४.५ )

**–पलित**–वि., लक्षण० पलितरोगवर्जितः । ( अहृसू. २०.३९ )

**अस्थानहासिन्**–वि., लक्षण० कालेऽप्रसङ्गे हसतीत्यस्थान-हासिन् । ( असंसू. ८ )

**अस्थायित्व**–न., अस्थिरत्वम्, अनवस्थितत्वम् ( सुसू. १५.३७ )

**अस्थि**–न., शारीरधातु० रसादिसप्तधातुष्वेकः । ( अहसू. १.१३ )

देहे शरीरधारकः कठिनतमः सारो धातुः ( सुसू. ४.५ ( सुशा. ५.१८ )

अस्थ्नो जनिः ( उत्पत्तिः ) स्वोष्मणः कृतः पृथिव्यग्न्यनिलादीनां संघातः खरत्वं प्रकरोति । ततोऽस्य नृणामस्थि जायते । अस्थ्नां मध्ये समीरणः सौषिर्यं करोति । ( चचि. १५.३०.३१ )

अस्थ्यपि द्रवरूपमस्त्येव स्रोतोवाह्यमिति कृत्वा ( चक्र. चवि. ५.८ ) उत्पत्तिकालः सुश्रुतमतेन रसोत्पत्त्यनन्तरं विंशतितमे दिनेऽस्थिधातुर्भवति। ( डसुसू. १४.१४ )

पराशरमते–षष्ठे दिनेऽस्थि जायते. ( चक्र. चचि. १५.३१ )

अस्थीनि देहधारणं मज्ज्ञः पुष्टिं च कुर्वन्ति ( सुसू. १५.४ ( १ )

तत्स्वरूपम्–कठिनं स्थिरम् ( अहशा. ३.५ )

मज्जपूर्णं सुषिरम् ( का. शा. )

अस्थिसाराणां लक्षणम्–पार्ष्णिगुल्फजान्वरत्निजत्रुचिबुकशिरःपर्वस्थूलाः स्थूलास्थिनखदन्ताश्च अस्थिसाराः । ते महोत्साहाः क्रियावन्तः क्लेशसहाः सारस्थिरशरीरा आयुष्मन्तश्च भवन्ति ( चवि. ८.१०९ )

महाशिरःस्कन्धदृढदंतहन्वस्थिनखास्थिभिरन्विताः । ( सुसू. ३५.१६ )

दोषसंबन्धः–तत्रास्थनि स्थितो वायुः ( अहसू. ११.२६ )

अस्थिमानं निर्दिष्टमागमे । स्वनामविशेषात् पञ्चप्रकाराण्यस्थीनि । तद्यथा–कपालरुचकतरुण–वलयनलकानि । ( सुशा. ५.२० )

देहोर्ध्वताधारणं मज्ज्ञः पोषणं च तस्य कर्म ( असंसू. १९ )

शरीरिणां त्वङ्मांसेषु तस्माच्चिरविनष्टेष्वस्थीनि न विनश्यन्ति यत एतानि देहिनां साराणि। अत्र सिराभिः स्नायुभिश्च निबद्धानि, मांसान्यस्थीन्यालम्बनं कृत्वा न शीर्यन्ते न पतन्ति च। ( सुशा. ५.२१ )

तस्योपधातुः–दन्ताः ( शार्ङ्ग ) नखरोमाण्यस्थ्नां मलः 'स्यात् किट्टं केशलोमास्थ्नाम्' ( चचि. १५.१९)

क्षीणमस्थिदन्तनखरोमकेशशातनरौक्ष्यपारुष्य-संधिशैथिल्यास्थितोदास्थिबद्धमांसाभिलाषैर्देहं पीडयति । ( असंसू. १९ )

वृद्धमस्थि अध्यस्थिभिरधिदन्तैश्च देहं पीडयति ( असंसू. १९ )

चिकित्सा–अस्थिसमानगुणः समानगुणभूयिष्ठो वाऽऽहारः ( चशा. ६.९ )

यथा–मज्जास्थिस्नेहसंयुतानि मांसानि ( डसुसू. १५.२९ )

अस्थिबद्धमांसाशनम् ( असं सू. १९ )

तरुणास्थीनि ( चशा. ६.१० )

क्षीरबस्तयश्च ( असंसू. १९ )

अस्थिसंख्याः–त्रीणि सषष्टीन्यस्थिशतानि वेदवादिनो भाषन्ते

शल्यतन्त्रेषु तु त्रीण्येव शतानि । तेषां सविंशमस्थिशतं शाखासु सप्तदशोत्तरं शतं श्रोणिपार्श्वपृष्ठोरःसु ग्रीवां प्रत्यूर्ध्वं त्रिषष्टिः एवमस्थ्नां त्रीणि शतानि पूर्यन्ते। एकैकस्यां तु पादाङ्गुल्यां त्रीणि त्रीणि तानि पञ्चदश, तलकूर्चगुल्फसंश्रितानि दश, पार्ष्ण्यामेकं, जङ्घायां द्वे, जानुन्येकम्, एकमूराविति त्रिंशदेवमेकस्मिन् सक्थ्नि भवन्ति, एतेनेतरसक्थिबाहू च व्याख्यातौ, श्रोण्यां पञ्च; तेषां गुदभगनितम्बेषु चत्वारि, त्रिकसंश्रितमेकं, पार्श्वे षट्त्रिंशदेकस्मिन्, द्वितीयेऽप्येवं पृष्ठे त्रिंशत्, अष्टावुरसि द्वे अंसफलके ग्रीवायां नव, कण्ठनाड्यां चत्वारि, द्वे हन्वोः, दन्ता द्वात्रिंशत्, नासायां त्रीणि, एकं तालुनि, गण्डकर्णशङ्खेष्वेकैकं, षट् शिरसीति । एतानि पञ्चविधानि भवन्ति; तद्यथा, कपालरुचकतरुणवलयनलकसंज्ञानि । तेषां जानुनितम्बांसगण्डतालुशङ्खशिरःसु कपालानि, दशनास्तु रुचकानि घ्राणकर्णग्रीवाक्षिकोषेषु तरुणानि पार्श्वपृष्ठोरःसु वलयानि, शेषाणि नलकसंज्ञानि(सुशा. ५.१८–२०)

फलबीजम्, कुलकम् ( चचि. १ ( १.४७ )

इदमाहारौषधार्थे प्रयुक्तं द्रव्यम् ( चसू. १.६९ )

शिखिबर्हिबलाकास्थ्नां धूमो विषनुत् ( चचि. २३.९८ )

**–क्षत**–न., लक्षण० अस्थनि जातं क्षतम् । ( सुसू. २३.८ )

## अस्थिसंख्यातुलनाकोष्टकम्

| अस्थिनाम | चरक | सुश्रुत | अ. संग्रह | काश्यप. |
|---|---|---|---|---|
| नखाः | २० | – | २० | |
| पाणिपादशलाकाः | २० | पाणिपादतला-स्थीनि १६ | २० | |
| पाणिपादाङ्गुल्यस्थीनि | ६० | ६० | ६० | |
| पाणिपादशलाकाधिष्ठानानि | ४ | — | शलाकाबंधनम् ४ | |
| पादगुल्फाः | ४ | २ | २ | |
| पादकूर्चास्थीनि | — | १० | ४ | |
| हस्तकूर्चास्थि | — | मणिबन्धास्थि | — | |
| पार्ष्ण्यस्थिनी | २ | २ | २ | |
| मणिकौ | २ | — | — | |
| अरत्न्यस्थीनि | ४ | प्रकोष्टास्थीनि ४ | ४ | |
| जङ्घास्थीनि | ४ | ४ | ४ | |
| जान्वस्थिनी | २ | २ | २ | |
| जानुकपालिके | २ | — | — | |
| ऊरुनलके ( ऊर्वस्थि कूर्परम् ) | २ | २ | २ | |
| बाहुनलके ( बाह्वस्थि ) | २ | २ | २ | |
| श्रोणिफलके | २ | — | — | |
| भगास्थि | १ | १ | १ | |
| नितम्बास्थिनी | — | २ | २ | |
| गुदास्थि | — | १ | — | |
| त्रिकसंश्रितम् | — | १ | १ | |
| पर्शुकाः | २४ | पार्श्वास्थीनि ७४ | २४ | |
| स्थालकास्थीनि | २४ | | २४ | |
| स्थालकार्बुदानि | २४ | | २४ | |
| अंसौ | २ | — | २ | |
| अंसफलके | २ | २ | २ | |
| अक्षकास्थिनी | २ | २ | २ | |
| जत्रु | १ | — | २ | |
| उरोस्थीनि | १४ | ६ | ८ | |
| पृष्ठगतास्थीनि | ४५ | ३० | ३० | |
| ग्रीवागतास्थीनि | १५ | ९ | १३ | |
| कण्ठनाडीगतास्थीनि | — | ४ | ४ | |
| हन्वस्थि | १ | २ | २ | |
| हनुमूलबन्धनास्थिनी | २ | | | |

## अस्थिसंख्यातुलनाकोष्टकम्

| अस्थिनाम | चरक | सुश्रुत | अ. संग्रह | काश्यप. |
|---|---|---|---|---|
| नासिकागण्डकूटललाटास्थि | १ | — | — | |
| नासास्थीनि | — | ३ | ३ | |
| गण्डास्थिनी | — | २ | २ | |
| कर्णास्थिनी | — | २ | २ | |
| शङ्खास्थिनी | २ | २ | २ | |
| तालुकास्थिनी | २ | १ | २ | |
| दंताः | ३२ | ३२ | ३२ | |
| दन्तोलूखलाः | ३२ | — | ३२ | |
| शिरःकपालास्थीनि | ४ | ६ | ६ | |
| सम्पूर्णसंख्या | ३६० | २८६ | ३४८ | |

**–गत**–वि., अस्थिमध्यान्तराले प्रविष्टम् ( सुसू. २६.१० )

**–ग्रन्थि**–पु., रोग० अस्थिजो ग्रन्थिः, अस्थिभङ्गाभिघाताभ्यामुन्नतावनतं तु यत् अस्थि सोऽस्थिग्रन्थिः ( असंउ. ३४ )

**–च्छलित**–न., रोग० अस्थिच्छल्लमिव विद्यते यस्मिँस्तत् । अस्थिकाण्डभग्नस्य प्रकारः

लक्षणम्–यत्पार्श्वयोरस्थिहीनोद्गतं तद् । ( डसुनि. १५.१० )

पार्श्वगतस्तोकाऽस्थिविश्लेषाद्भवति (मा) ।

**–च्छल्लिक**–न., रोग० अस्थिच्छलिम् ( डसुनि. १५.१० ) द्र० 'च्छलित'

**–( च्छल्लिका )**–स्त्री., रोग० अस्थिच्छलितम् ( असंउ. ३२ पृ. २३६ ) द्र० 'च्छलित'

**–च्छल्लित**–न., रोग० अस्थिच्छलितम् । ( सुनि. १५.८ ) द्र० 'च्छलित'

**–जाल**–न., शरीरस्थरचना० अस्थिकृतजालम् अस्थिजालानि चत्वारि, एकैकस्मिन्मणिबन्धे गुल्फे च । ( सुशा. ५.१२ )

**–तोद**–पु., लक्षण० अस्थनि सूचिविद्धवद्वेदना ( सुसू. २४.९ अहसू. ११.१९ )

**–दोषज**–वि., अस्थिदोषोद्भवम् । ( सुसू. २४.९ )

**–दोषजव्याधि**–पु., रोग० अस्थिदोषेण जनितो व्याधिः स च अध्यस्थिः, अधिदन्तः, दन्तभेदः, अस्थिभेदः, अस्थिशूलम्, विवर्णता, केशलोमनखश्मश्रुदोषाश्च । ( चसू. २८.१६ )

कुनखप्रभृतयः अस्थिदोषजाः ( सुसू. २४.९ )

**–नेत्र**–न., यन्त्र० अस्थ्नां कृतं बस्तिनेत्रम् ( चसि. ३.७ )

**–पञ्जर**–पु., कङ्कालः ( काफक्रचि. )

**–पर्व**–न., अस्थिसंधिः ( सुनि. १.३९ )

**–प्रदोषजव्याधि**–पु., रोग० अस्थिदोषजव्याधिः ( चसू. २८.१६ )

**–भङ्ग**–पु., रोग० अस्थिसन्धानभग्नता, अस्थ्नां भङ्गः, भग्नं वा; तद्विविधं; सन्धिमुक्तं, काण्डभग्नं च । ( सुनि. १५.३–४ )

**–भेद**–पु., व्याधिलक्षण० अस्थीनि भिद्यन्ते इव यस्यां सा वेदना । ( चनि. ८.६ )

अस्थ्नः भेदः अस्थिभङ्गः । ( चचि. २५.३२ )

**–मध्यमज्जन्**–पु., अस्थ्नः मध्यभागे स्थितो मज्जधातुः ( चचि. १५.२६ )

**–मर्मन्**–न., मर्मभेद० अष्टावस्थिमर्माणि ( सुशा. ६.४ )

यस्य मर्मणो लक्षणानि च. सन्निपातेऽस्थिबाहुल्यं बाहुल्येनास्थिजनितानि द्वे कटीकतरुणे, द्वौ नितम्बौ द्वे अंसफलके द्वौ शङ्खौ च इत्येवमष्टौ । ( डसुशा. ६.७ असंशा. ७.२९ )

**–वहस्रोतस्**–न., अस्थिवहानां स्रोतसां मेदोमूलम् ( चवि. ५.८ ) अस्थिवहनार्थं स्रोतः ( चवि. ५.८ ) तस्य दुष्टिहेतुः–अतिव्यायामादतिसंक्षोभादस्थ्नामतिविघट्टनाद्वातलानां च सेवनादस्थिवाहीनि स्रोतांसि दुष्यन्ति । ( चवि. ५.१७ )

तत्कृतरोगाः—अध्यस्थ्यधिदन्तौ दन्तास्थि भेदशूलौ विवर्णता केशलोमनखश्मश्रुदोषाश्च भवन्ति । ( चसू. २८.१६ )

( सुश्रुतसंहितायामस्थिवहानां स्रोतसां नोल्लेखः )

–विदष्ट–वि., अस्थन्यत्यासक्तम् ( सुसू. २७.१४ )

–विद्ध–वि., रोग०, अस्थन्यभिताडितः; लक्षणम्—निशादिनेषु घोरा रुजः सर्वास्ववस्थास्वशान्तिस्तृष्णाऽङ्गसादः श्वयथू रुक् च । ( सुसू. २५.३९ )

–विमुक्त–वि., बीजरहितम् । ( सुसू. ४४.६२ )

–विवर–न., अस्थिच्छिद्रम् । ( सुसू. २७.२४ )

–विष–न., विष०, 'विषहतास्थि सर्पकण्टकवरटीमत्स्यास्थि चेत्यस्थिविषाणि' ( सुक. ३.५ )

–शल्य–न., शल्य०, अस्थिरूपं शल्यम्; अन्नेन सहाभ्यवहृतमस्थिशल्यं यदा गुदेऽसम्यगागतं भवति तदा शरीरबाधाकरं भवति ( सुनि., ४.९ ) मत्स्यकण्टकमन्यद्वाऽस्थिशल्यं कण्ठेऽवलग्नं सूत्रेण सूत्रप्लोतेन वा वेष्टितयाऽङ्गुल्याऽपहरेत् । ( असंसू. ३७.१२ )

–शून्यता–स्त्री., रोगलक्षण०, रिक्तता, पूरणाभावात् । मज्जक्षयेऽल्पशुक्रता पर्वभेदोऽस्थिनिस्तोदोऽस्थिशून्यता च । ( सुसू. १५.९ )

–शूल–न., रोगलक्षण० मध्यममार्गजो रोगः ( चसू. ११.४९ )

अस्थिविद्धवद् वेदना । अस्थिप्रदोषजविकारेष्वेकः ( सुसू. २४.९ )

लक्षण० मज्जास्थिकुपितानिलस्यैकं लक्षणम्—अस्थिपर्वणां भेदः सन्धिशूलं, मांसबलक्षयः संतता रुक् अस्वप्नश्च मज्जास्थिकुपितेऽनिले भवन्ति । ( चचि. २८.३३ )

–शोष–पु., लक्षण० अस्थिशोषम् अस्थिगतवातस्यैकं लक्षणम् । ( सुनि. १.२८ )

अत्राऽऽस्थापनं प्रधानतमं चिकित्सितम् ( चसि. २.१६ )

–श्वेत–वि., अस्थिवत् श्वेतः । ( चइं. ८.१३ )

–संघात–पु., अस्थिमेलनम् चतुर्दशाऽस्थ्नां संघाताः तेषां स्थानानि एकैको गुल्फजानुवंक्षणमणिबन्धकूर्परकक्षासु त्रिकशिरसोरेकैकः ( सुशा. ५.१६ असंशा. ५.६६ )

–सन्धि–पु., अस्थिमेलनस्थानम्—सन्धि ( असंशा. ५.९५ )

–सम्बन्धन–पु., वनस्पति० प्रियङ्गुः ( धनि. ६.९० )

–स्राव–पु., रोग० ( र. ३०–३०.६६ )

अस्थ्याश्रय–वि., अस्थिसंश्रित । ( चसू. २८.२७ )

अत्र भेषजं–पञ्चकर्माणि वमनविरेकनस्यादीनि तथा तिक्तोपहितक्षीरसर्पींषि च । ( चसू. २८.२७ )

–सार–पु., अस्थिसारः शक्तिर्देहस्य श्रेष्ठो धातुर्वा यस्य सः । ( चवि. ८.१०७ )

लक्षणम्—महाशिरःस्कन्धः दृढदन्तहन्वस्थिनखः । ( सुसू. ३५.१६ )

गुणाः महोत्साहाः, क्रियावन्तः, क्लेशसहाः सारस्थिरशरीराः आयुष्मन्तश्च । ( चवि. ८.१.७ )

अस्थिकंकाल, अस्थिपंजर ( सुशा. ५.२१ )

मज्जा–( रा. ६.३८२ )

–स्तम्भ–पु., लक्षणम्० अस्थिगतिविघातः ( चसि. २.१६ )

अस्थिर–वि., चलम् ( सुचि. २२.२९ )

अकठिनम् ( सुचि. ५.३२

–जल–न., वहत्पानीयम् । ( सुचि. ३.५६ )

अस्निग्ध–वि., ईषत्स्निग्धम् । ( सुचि. ३७.४५ )

न स्निग्धः—अस्निग्धस्य लक्षणानि-पुरीषं ग्रथितं, रूक्षं वायुः अप्रगुणः, पक्ता मृदुः, गात्रस्य खरत्वं रौक्ष्यं च ( चसू. १३.५७ )

–दारुक–न., वनस्पति० देवदारुः ( रा. १२.१०४ )

अस्पर्शारि–पु., वनस्पति० धन्वयासः ( र. २५.७६ )

अस्र–पु., कोण, धारा ( र. २.५७ )

न., शारीर धातु० रक्तम् ( र. २०. १९७ )

नयनजलम् ( डसुक. ३.३५ )

वनस्पति० कुंकुमम् ( ध. ३.१२ )

अस्रशब्दः स्राववाची' आस्रावः ( सुनि.१०.१२ )

–खदिर–पु., वनस्पति० खदिरः ( रा. ८.३६ )

–पवन–न., रोग० वातरक्तम् ( अहृसू. १०.१३ )

–बिन्दुच्छदा–स्त्री., वनस्पति० लक्ष्मणा ( रापरि. ७.५६ )

–मण्डल–न., रोग० लोहितमण्डलम्, रक्तदोषजरोगेष्वेकः ( चसू. २८.१३ )

–रोधिनी–स्त्री., वनस्पति० लज्जालुः ( रा. ५.१६० )

–वात–पु., रोग० वातरक्तम् । ( र. २८.५२ )

–विशोधन–वि., रक्तदुष्टिहरम् । ( अहृसू. १०.२० )

–विस्रुति–स्त्री., उपक्रम० रक्तस्य स्रावः रक्त मोक्षः ( असंसू. २४ )

अस्रिपत्–वि., पालिपत्, धारावत् । ( सुचि. ३५.३२ )

अस्व–वि., आत्मव्यतिरिक्तम्, अनात्मीयम् ( चशा. ५.१२ )

**अस्वप्न**–पु., रोग० निद्राल्पत्वं, निद्रानाशः अशीति वातविकारेष्वेकः। ( चसू. २०.११ )

**अस्विन्न**–वि., अस्वेदितम् ( सुचि. ३७.९३ )

**अस्वेद**–पु., लक्षण० स्वेदराहित्यं स्वेदावरोधो वा ( चचि. ३.४० ) स्वेदायोगः ( अहसू. २७.३६ )

**अस्वेदन**–न., व्याधिलक्षण० घर्माभावः स्वेदाभावः ( चनि. ५.७ सुउ. ४६.२२ )

**अस्वेद्य**–वि., स्वेदानर्हः ( अहसू. १७.२१ )

**अहतवासा**–वि., अहतम् अधौतं शुद्धं शुक्लं वा वासो वस्त्रम् तदावृता सा अहतवासा ( सुशा. २.२५ )

**अहन्**–न., दिनम् (अहसू. १.८ )

**( अहः ) स्वप्न**–पु., दिवा स्वापः ( अहसू. १६.२७ )

**( अहो ) रात्र**–पु.. न., कालविभागः दिवा निशम् त्रिशन्मुहूर्तमहोरात्रम् ( सुसू. ६.५ ) सूर्योदयद्वय–परिच्छिन्नः कालः श. क. द्रु., शरदि वसन्ते च सममहोरात्रं भवति ( सुसू. ४६.४७०–७१ )

**अहंकार**–पु., अभिमानः राजसगुणः ( सुशा. १.१८ ) प्रकृतेः महान् महतोऽहङ्कार उत्पद्यते अयं त्रिगुणात्मकः सांख्यानां पञ्चविंशतितत्त्वेष्वेकः ( सुशा. १.४ )

**अहर्षण**–न., शुक्रप्रदोषजरोग०सत्यपि ध्वजोत्थाने मैथुनाशक्तिः ( चक्र. चसू. २८.१८ ) स्त्रीसेवनेऽनुत्साहः।

**अहास्यहासिन्**–पु., लक्षण० अहास्यविषये हास्यवान् ( चइ. ११.२० )

**अहि**–पु., प्राणि० सर्प० ( असंउ. ४१पृ. ३३२ ) वनस्पति० नागकेसरः ( र. २६.५६ ) खनिजद्रव्य० सीसकम् ( र., ५.२२० )

**–केसर**–पु., न., वनस्पति० नागकेसरः ( असंचि ९ तर्टेप्रत पृ. ५५ )

**–चर्मन्**–न., सर्पनिर्मोकः घृतेन सह धूपार्थम् उपयुज्यते ( असंउ. ४ पृ. ३८ )

**–च्छत्रा**–स्त्री., वनस्पति० शतपुष्पा। ( रा. ४.१ )

**( इक्षुविकार )**–शर्करा. ( ध. २.१०४ )

**–ज**–पु., कीट०, वायव्यकीट ( असंउ. ४३ पृ. ३५१ )

**–दमनी**–स्त्री., वनस्पति० नागदमनी

**–दर्वी**–स्त्री., वनस्पति० नागदमनी दर्वीकन्दः दर्वीकरकन्दः ( र. ३०.४६ )

**–निर्मोक**–पु., जाङ्गमद्रव्य० सर्पकञ्चुकः(असंचि. १०) ( तर्टेप्रत पृ. ५७ ) मषी चास्य गण्डमालादिष्वभ्यङ्गार्थम्। ( असंउ. ३५ पृ. २६५ )

**–निर्मोचक**–पु., सर्पकञ्चुकः सर्पनिर्मोकः धूपार्थमुपयुक्तः ( र. २३.६ )

**–पताक**–पु., सर्प० स निर्विषः' ( सुक. ४.३४ ) ( ४ )

**–पुष्प**–न., वनस्पति० नागकेसरम् ( सुचि. १७.२८ )

**–पूतन**–न., बालरोगः ( सुनि. १३.५८ ) पर्यायाः–केचित्त मातृकादोषं वदंत्यन्येऽहिपूतनम पृष्ठारुर्गुदकुट्टं च केचिच्च तमनामिकम्। ( अहउ. २.७० )

संप्राप्तिर्लक्षणानि च–दुष्टस्तन्यस्य पानेन मलस्याधावनेन च कण्डूदाहरुजावद्भिः पिडकाभिः समाचितः। अहिपूतनको नाम यथादोषं सुदारुणः॥ भोजः॥ स्विन्नस्यास्नाप्यमानस्य शिशोः शकृन्मूत्रसमायुक्तेऽधौते गुदे रक्तकफप्रकोपादन्तः-कण्डूमान् भूयरुपद्रवस्तास्रो व्रणो जायते। तस्य कण्डूयनादनेके स्फोटा उद्भवन्ति तेषामेकीभूतं घोरं व्रणमहिपूतनं विद्यात् ( सुनि. १३.५८, अहउ. २.६९ )

साध्यासाध्यता–साध्योऽयं रोगो बालानाम्। चिकित्सा–मातुः स्तन्यं पित्तश्लेष्महरैः शोधयेत् अन्तरपानार्थे श्वेतचन्दनं शृतशीताम्बुना देयम्। पानार्थे पटोलपत्रत्रिफलारसांजनविपाचितं घृतं बालकाय दद्यात्; व्रणपरिषेकार्थे त्रिफला बदरीप्लक्षत्वक्क्वाथं, व्रणलेपनार्थे श्वेतचन्दनक्षौद्रताक्ष्यशैलेयः; रागकण्डूत्कटे जलौकसा रक्तस्रावं कुर्यात्।

**–फणामुख**–पु., यन्त्र० शङ्क्वाकारः शलाका–यन्त्रस्य भेदः, "व्यूहनक्रियौ द्वादश षोडशाङ्गुलौ द्वावहिफणामुखौ" ( असंसू. ३४.१५ ) सुश्रुते इदं यन्त्रं सर्पफणमुखं यन्त्रनाम्ना निर्दिष्टम् ( सुसू. ७.१४ )

**–फणावक्त्र**–न., यन्त्र० अहिफणामुखम् ( अहसू. २५.३१ ) अहिफणामुखयन्त्रम्

**–फेनक**–न., वनस्पति निर्यास० अफूकम्। ( ध६. १२१ रा. ६.१९१ )

**–भुक्**–स्त्री., वनस्पति० नाकुलि ( रा ७.१५२ ) गन्धनाकुली ( रा. ७.१५२ )

**–मर्दिनी**–स्त्री., वनस्पति० गन्धनाकुली ( रा. ७.१५४ )

**–मार–क**–पु., वनस्पति० इरिमेदः। ( ध. ५.१३३ )

**–मेद–क**–पु., वनस्पति० इरिमेदः। ( ध. ५.१३३ )

**–लता**–स्त्री., वनस्पति० गन्धनाकुली ( रा. ७.१५४ )
**अहिंस्रा**–स्त्री., वनस्पति० बृहती (सुसू. ३७.३)
जटामांसी ( सुउ. ४५.३३ )
**अहिण्डुका**–स्त्री., सविषकीट० विश्वम्भरभेदः लक्षणम्–
दष्टस्थाने तोददाहकण्डूशोथाश्च भवन्ति ।
( ड. सुक. ८.३३ )
चिकित्सा–तद्विषनाशकः शिरीषाद्यगदः
"शिरीषं तगरं कुष्ठं शालिपर्णी सहानिशे ।
अहिण्डुकाभिर्दष्टानामगदो विषनाशनः ।"
( सुक. ८.५२ )
**अहित**–वि., अपथ्यम् । ( असंसू. १०.३१ )
**–सम्भूत**–वि., अपथ्यादिभिर्वृद्धिङ्गतः
( सुउ. ३९.६६ )
**अहित्थ**–पु., वनस्पति० वनमेथिका ( ध. ६.११३ )
**अहृद्य**–वि., मनसोऽप्रियम् ( सुचि. २६.९ )
अरुचिकरम् । ( सुउ. ४९.३ )
हृदयाय अहितम् । ( अहृसू. ५.२६ )
**अहेतु**–पु., असाधको हेतुः हेत्वाभासः । अहेतुस्तु
चरकविमाने त्रिविधः; प्रकरणसमः संशयसमो
वर्ण्यसमश्च । ( चवि. ८.५७ )
**–क**–वि., हेतुरहितम् कारणरहितम्
( सुउ. ४०.१६३ )
**अह्रीक**–वि., ह्री लज्जा, तद्धीनः लज्जाहीनः ।
**आकण्ठम्**–अव्य., तृप्तिपर्यंतम्, कण्ठपर्यंतम्
अतिमात्रम् । ( अहृसू. १८.१४ )
**आकर**–पु., उपादानम् । ( असंसू. ६.१३३.३४ )
कारणरूप द्रव्य.
खनिः ( र. २३.३९ )
समुदायः ( असंसू. ६.१३४ )
**–संकर**–पु., उत्पत्तिकारणानां संयोगः
( असंसू. ६.१३४ )
**आकरालका**–स्त्री., विदलधान्य० मसूरिका.
( ध. ६.९५ )
**आकर्णिकम्**–अव्य., कर्णिकां मर्यादीकृत्य
( सुचि. ३८.३ )
**आकस्मिक**–वि., कारणं यस्य नोपलभ्यते तद् विनैव
संसर्गप्राक्तनकर्मपीडित्वेन जातो रोगः ।
( सुसू. २४.७ )
**आकाङ्क्षा**–स्त्री., इच्छा० ( सुचि. ३७.६९ )
**आकार**—रूपम् । ( च. इं. १.३ )
**आकार**–पु., अभिनयः ( चवि. ८.२० )
आकृतिः लक्षणम् । ( अहृ. नि. १ )

**–करभ** पु., वनस्पति० गुणाः–कटुक उष्णो बलकृ-
द्वातघ्नः शोथप्रतिश्यायघ्नश्च, ( शालिग्रामनि. )
N. O.—Compositae
L—Anacylus Pyrethrum
Eng—Pellitony
हिं.—अकरकरा; म.—अक्कलकारा;
गु.—अक्कलकरो; बं.—अकीरकोरा
ता.—अक्किरकारम्;
**आकाश**–न., महाभूत० नभः, सत्वबहुलमिदम्
( सुशा. १.२० )
**–गङ्गा** स्त्री., नभसि नद्याकारा घनतारकसंततिः ।
( सुसू. ३०.२० )
**–ज**–वि., आकाशोत्पन्नं द्रव्यगुणादिकम्
( असंशा. ५ )
**–दर्शन**–न., नीलवर्णज्वालाया दर्शनम् (र. १३.३३)
**–देवता** 'आकाशं खानि ते पान्तु' इति (सुसू. ५.२८)
खनिज० अभ्रकम् । ( रा. १३.२ )
**–मांसी**–स्त्री., वनस्पति० गुणाः शीता वर्णकारिणी,
शोफव्रणनाडीरुजालूतागर्दभजालघ्नी च ।
( रा. १२.९५ )
N. O.—VALERIANACEAE
L.—NOR DAS TOCHYE
JATA MANSI
ENG.—SPIKENARD.
**–वल्ली**–स्त्री., वनस्पति० ख वल्ली० ( रापरि. ३.१९ )
**–सलिल**–न., दिव्योदकम् । ( रा. १४.३२० )
हिं.–जटामांसी;
म.–जटामांसी;
फारसी–सुबूल.
**आकाशात्मक**–वि., आकाशीयम् । ( चशा. ४.१२ )
आकाशगुणभूयिष्ठं द्रव्यादि । ( चसू. २६.११ )
**आकुञ्चन**–न., संकोचक्रिया ( सुशा. ७.३ )
कुटिलीकरणवद् वेदनाविशेषः ( सुसू. २२.११ )
**आकुल**–वि., व्यस्तं व्याकुलमसंगतम् ( चवि. ८.६७ )
**आकुली**–स्त्री., वनस्पति० गन्धनाकुली
( र. १७.६९–७५ )
गंधनाकुली.
**आकृति**–स्त्री., लक्षणम् ( चचि. ३.८–९ )
**आकृष्ट**–न., आक्रोशः ( सुसू. २९.४४ )
**आकोटनम्**–न., पीडनं, ताडनम् । ( चशा. ८.४१ )
**आकोठितम्**–वि., ताडितम् । ( चचि. १३.४८ )

**आक्त**–वि., मिश्रितम् । ( सुचि. ९.१६ )
**आक्रन्द**–पु., आक्रोशस्वनः । ( सुसू. २९.४४ )
**आक्रमण**–न., क्रामणं, संक्रामणम् । घनसारचतुर्जात-कंकोलं कटुकीफ ( प ) लम्, फ ( प ) लं ताम्बूल-वल्लीनां रसस्याक्रमणं परम् । ( र. ३०.९० )
**आक्रय**–पु., मूल्यम् । ( चसू. १५.३ )
**आक्ष**–वि., अक्षस्य बिभीतकस्येदं तैलफलादि ( सुसू. ४६.२०० )
**आक्षिक**–न., बिभीतकम् । ( सुसू. ४६.१९४ )
अक्षिकीफलम् । ( सुसू. ४६.१९४ ड. )
**आक्षिकी**–स्त्री., बैभीतकी ( बिभीतककृता ) सुरेयं पाण्डुरोगव्रणहिता दीपनी च ।
**आक्षेप**–पु., आकर्षणम् । ( अहसू. २८.५ )
आदानम् ( अहसू. २१.१२ )
क्षोभः ( अहसू. ५.९ )
वातरोग० आक्षेपक० ( चचि. २८.२३ )
आक्षेपकनामकः एकः वातिकः रोगः
**आक्षेपक**–पु., वातरोग० अशीतिर्वातविकारेष्वेकः । ( चसू. २०.११ )
निरुक्तिः–हस्त्यारूढपुरुषस्येव देहचालनादाक्षेपादाक्षेपकः, 'मुहुर्मुहुस्तदाक्षेपक इति स्मृतः । ( सुनि. १.५१ )
संप्राप्ति–यदा कुपितो वायुः सर्वा धमनीरभ्येति तदा स मुहुर्मुहुर्देहमाक्षिपति । ( सुनि. १.५१ )
लक्षणम्–गात्राणां पाणिपादयोश्च मुहुराक्षेपणं सस्नायुकण्डराणां सिराणां संशोषणञ्च । सर्वेष्वाक्षेपकेषु गते वेगे स्वास्थ्यं भवति । ( चचि. २८.५० )
अपतानकस्य दण्डायामादिभेदा आक्षेपकस्य विशेषाः । ( सुनि. ५२.५८ )
**आक्षेपण**–न., अंगविक्षेपः ( सुनि.१.३१ )
अङ्गस्याकर्षणेन त्रोटनम् ( इन्दु ) ( सुनि. १५.३ )
**आक्षोड**–पु., अक्षोटः ( ध. ५.६० )
**आखु**–पु., मूषकः ( सुशा. ४.६७ )
वृक्षमूषिकः ( सुउ. ४१.३६ )
**-कर्णिका**–स्त्री., वनस्पति० मूषककर्णी, मूषिकपर्णी. ( चसू. ४.११ र. ११.५२–५७ )
**-कर्णी**–स्त्री., वनस्पति० मूषककर्णी–मूषकपर्णी. ( चसू. ४.११ ( १५ )

N. O.—IPOMOCA RENNIFORMIS

L—LECT CARE MOFIFLORA

हिं.—मूसाकानी.
म.—उंदीरकानी, भोपनी.
गु.—उंदीरकानी
बं.—उंदूरकानी पाना
त.—चवारिया रकून्तल
फा.—गोरोमुष, सतर.

**-दंती**–( चसि., ८.९.१० )
दन्ती नामक वनस्पति०
**-घृत**–न., योग० इदं मूषकैः सह विपक्वमस्ति, ऊर्ध्व-जत्रुजरोगेषूपयुज्यते । ( चचि. २६.१७५ )
**-पर्णिका**–स्त्री., वनस्पति० द्रवन्ती ( ध. १.२२९ ) ( चचि. ३०.१०७ )
**-पर्णी**–स्त्री., वनस्पति० दन्ती. ( चसि. ८९.१० )
**-विन्ना**–स्त्री., वनस्पति० मूषकपर्णी, मूषिकपर्णी ( असंउ. ४६ पृ. ३७८ )
**-विषहन**–पु., वनस्पति० देवदाली ( ध. १.१७३ )
**-वृक्ष**–वनस्पति० मदनफलम् ( असंउ. ४६ पृ. ३७८ )
**आगति**–स्त्री., संप्राप्ति. ( चनि. १.११ )
**आगन्तु**–वि., पश्चात्कालभावि ( चइ. १२.६५ )
बाह्यहेतुजोऽभिघातनिमित्तो निजेतरो रोगप्रकारः ( चसू. २०.३, सुसू. १.२५ )
हेतवः–अभिशापाभिषङ्गाभिघातपतनपीडनबन्धन-व्यधनरज्जुदहनशस्त्राशनिभूतोपसर्गविषवाय्वग्निक्षत-भङ्गादयः ( चसू. २०.४, अहसू. ४.३२ )
निजागन्त्वोर्भेदः–निजो दोषोत्थः; तस्मिन् पूर्वं वातादयो वैषम्यमापद्यन्ते, ततो व्यथाऽभिनिर्वर्तते बाह्यहेतुजस्त्वागन्तुः तस्मिन् प्रहारेण व्यथापूर्वमुपजायते ततो दोषवैषम्यम् ( असंसू. २२ )
आगन्तुभेदाः–शारीराः मानसाश्च ( चसू. १.३६ )
आगन्तुरोगाः–आगन्तुज्वरः ( असंनि. २.३५ )
आगन्तुविद्रधिः ( सुनि. ९.१३ )
आगन्तुशोफः ( चसू. १८.४ )
आगन्तुशल्यम् ( सुसू. २६.६ ) एते शारीराः ।
कामक्रोधलोभाद्याश्च मानसाः । (अहसू. ४.३२)
**-भवा**–वि., सप्तविधनिद्रास्वेका (असंसू. ९.६८)
शस्त्रप्रहारादिना जाता सुश्रुते 'आगन्तुकी' नाम्नैषा निर्दिष्टा ।

**आगन्तुक**–वि., शारीरेतरशल्यप्रकारः। ( सुसू. २६.४ ) शारीरं दन्तरोमनखादिधातवोऽन्नमला दोषाश्च दुष्टाः आगन्त्वपि शारीरशल्यव्यतिरेकेण यावन्तो पदार्थास्तृणकाष्ठपाषाणलोहलोष्ठप्रभृतयो दुःख-मुत्पादयन्ति। ( सुसू. २६.६ )

**आगन्तुकी**–वि., सप्तविधनिद्रास्वेका। ( चसू. २१.५८ ) रिष्टभूता, शस्त्रप्रहारादिना वा जाता विसंज्ञता। 'आगन्तुभवा' नाम्नाऽस्या निर्देशो वाग्भटे ( अहसू. ९.६८ )

**आगम**–पु., आगच्छत्यस्मादिति आगमो हेतुः ( चचि. २२.२४ )
हेतुः, कारणं, निदानं योगः संयोगो वा ( चशा. १.९८ )
आगमनं, प्रवेशः, प्रारम्भो वा ( अहनि. २.१० )
आयुर्वेदः, तस्योपदेशो वा ( असंसू. २२ )
आगमयति बोधयति सूक्ष्मविप्रकृष्टानर्थानित्यागमः, वेदः, शास्त्रम् ( सुसू. ४०.४ )
परीक्षणार्थे प्रयुक्तेषु प्रमाणेष्वेकम् ( सुसू. १.१६ )
आप्तागमः। ( चसू. ११.२७ )
आप्तोपदेशः। ( चवि. ४.३ )
आप्तवचनम्। ( चवि. ४.४ )
ऐतिह्यम्। ( चवि. ८.४१ )
इत्येतेऽस्य पर्यायाः
प्राचीनो रसाचार्यः। ( र. ६.५२ )

**आगमावर्ता**–स्त्री., वनस्पति० वृश्चिकाली ( रापरि. ९.८ )

**आगस्त्य**–वि., अगस्त्यवृक्षस्येदम् ( सुसू. ४६.२८२ )

**आगार**–न., गृहम्, स्थानम्. ( सुचि. ६.४ )
**–कर्णिका**–स्त्री., गृहसंबन्धिकाष्ठः, गृहाच्छादनमध्ये गृहाच्छादनकाष्ठनिबन्धनी। ( चसू. ३०.५ )
**–गोधिका**–स्त्री., प्राणि० गृहगोधिका ( सुचि. १.१०८ )
**–धूम**–पु., भित्तिषु संचितो धूमः, गृहधूमः ( सुचि. ९.१० )

**आग्नेय**–न., कृत्तिकानक्षत्रम् ( असंउ. ४१ पृ. ३३८ )
खनिज. सुवर्णम् ( रा. १३.३ )
महाभूतस्याग्नेः शरीरकार्यं शरीरांशो वा
आग्नेयानि–दर्शनं रूपं
पित्तमूष्मा पक्तिः संतापो मेधा वर्णो भास्तेजः शौर्यञ्चेति ( असंशा. ५.११ ) ( चशा. ७.१६ )
यदग्निगुणभूयिष्ठं तत् तेजोभूयिष्ठम् ( सुशा. ३.३ )

**आग्नेयी**–स्त्री.,–छाया० इयं विशुद्धरक्ता दीप्ताभा दर्शन-प्रिया च। ( चइ. ७.११ )
**–ऋतु**–पु., आग्नेयकालः, ग्रीष्मः ( सुचि. ३.८–९ )
**–काल**–पु., आदानकालः ( असंसू. ४.६ )
**–ज्वर**–पु., ज्वरस्य विधिभेदः ( चचि. ३.३२ )
**–धूप**–पु., धूप. का धूपकल्पाध्यायः
**–मर्मन्**–न., तेजोभूयिष्ठं मर्म, तच्च सद्यःप्राणहरम्। ( सुशा. ६.१६ )
**–लोक**–पु., अग्निभूताधिदैवतस्वभावो लोकः
**–विसर्प**–पु., रोग. विसर्पविशेषः आग्नेयो वात-पित्ताभ्याम्। ( चचि. २१.१४ )
**–व्याधि**–पु., पैत्तिको रोगः ( चनि. १.४ )

**आघट्टक**– पु.,वनस्पति. अपामार्गभेदः, रक्तापामार्गः, अपामार्गः ( रा. ४.३९० )

**आघात**–पु., अवरोधः, दुष्टिः ( सुउ. ५८.१ )
**–काल**–पु., ग्रहादीनामावेशकालः ( चचि. ९.११ )

**आघातन**–न., वधस्थानम्, घातस्थानम् (चसू. ८.१९ )

**आघ्रात**–वि., उत्पलादिपुष्पानुप्रविष्टं नस्योपयोज्यं वामकं द्रव्यं; घ्राणेन गृहीतम्

**आचमन**–न., योनिप्रक्षालनोदकम् ( सुशा. २.१२–१३ ड. )
वनस्पति० वालकम् ( ध. १.४७ )

**आचमनीय**–वि., पात्र० आचम्यते येन पात्रेण तत् ( चसू. १५. ७ )

**आचय**–पु., समन्ताच्चयनम्, समुदायः ( अहसू. ७.२३ )

**आचार**–पु., शास्त्रशिक्षाकृतो व्यवहारः ( चइं. १.३ )
कायवाङ्मानसं कर्म। ( सुसू. १.२७ )
कुलदेशाद्यनुगतं लौकिकं विधानम् ( सुसू. २.३ )
**–चपल**–वि., सर्पसत्वलक्षण०
व्यापारे चपलः। ( सुशा. ४.८९–९० )
**–रसायन**–न., आचार एव रसायनम् यथा सत्यभाषणं, अक्रोधः, मद्यमैथुनान्निवृत्तिः, अहिंसा, प्रियभाषणं जपशौचपरता, धैर्यं, दाननित्यता, देवगोब्राह्मणा-चार्य–गुरुवृद्धार्चनरतिः, नित्यमानृशंस्यपरता, नित्यं करुणार्द्रता, समजागरणस्वप्नता, युक्तिज्ञता,शास्त्रा-चारता, अध्यात्मप्रवणेंद्रियता, वृद्धास्तिकजिता-त्मनां सेवा, धर्मशास्त्रपरता च आचरणमेतत् नित्यरसायनमेव अपि च एतैर्गुणैस्समुदितै रसा-यनं यः प्रयुङ्क्ते स यथोक्तान्सर्वान्रसायनगुणान् समश्नुते। ( चचि. १.४ ३०–३५ )

**–विधि**–पु., पथ्याचारः—उष्णोदकोपचारी ब्रह्मचारी, क्षपाशयश्च स्यात्, यान्यहानि स्नेहं पिबेत्तान्यहानि, व्यायामवेगसंरोधशोकवर्षहिमातपप्रवातयानयानाध्वभाष्यात्यशनसंस्थितिनीचात्युच्चोपधानाहःस्वप्नधूमरजांसि च त्यजेत्। अग्रेऽपि तावन्त्येवाहानि व्यायामादि सर्वं त्यजेत्, सर्वकर्मसु व्याधिक्षीणेषु च प्रायोऽयमेव क्रमः
( असंसू. २५.४१–४४ )

**आचारिक**–वि., स्नेहविध्युक्तः आहारादिनियमः
( अहृसू. २८. २५ )
आरोग्यनियमः। ( सुचि. ६.४ )
चर्या. ( सुचि. ३८.११३ )

**आचार्य**–पु., गुरुः, शास्त्राधिगमहेतूनां श्रेष्ठः।
( चसू. २५.४० )
मोक्षशास्त्रोपदेष्टा। ( चशा. ५.१२ )

**आचित**–वि., व्याप्तम्। ( सुनि. १६.६ )
युक्तम्। ( सुचि. ३०.३५ )

**आचूची**–स्त्री., बालानामौषधदानस्य साधनम्।
( कासि. ३ ( पृ. १५४ )

**आचूषण**–न., उपक्रम० चूषणम्–शृङ्गेण, अलाबुना ( व्वा ) मुखेन वा स्तन्य–रक्तादीनां निष्कासनम्
( सुसू. ७.१७ )

**आच्छादन**–न., आवरणम्। ( अहृसू. २६.४१ )
आवापः ( र. ८.५४ )

**आज**–वि., अजस्य अजायाः वा इदम्

**आजन्म**–अ., जन्मप्रभृति. ( अहृसू. १०.७ )

**–सात्म्य**–न., जन्मकालाद्यदुपशेते तत्
( अहृसू. १०.७ )

**–सुरभिपत्र**–पु., वनस्पति. जम्बीरः ( रा. १०.८१ )

**आजानेय**–पु., उत्तमकुलजातोऽश्वः। ( चशा.८.९ )
" आजानन्ति यतः संज्ञामाजानेयास्ततः स्मृताः "
( शब्दक. अश्वतन्त्रे. )

**आज्ञा**–स्त्री., अनुल्लङ्घनीय आदेशः
( सुसू. ३४.१०–११ )

**–विधेय**–वि., आदेशकारी ( सुक. १.१४–१६ )

**–सिद्ध**–न., सिद्धयोग. कमलाविलासरसस्य अपरं नाम, निश्चितगुणकारि ( र. २६.५२–५३ )

**आज्य**–न., घृतम् ( रस. २.७५ )

**आञ्छन**–न., आकर्षणेन स्वस्थाने स्थापनम्
( सुचि. ३.१८ )
यन्त्रकर्म. ( सुसू. ७.१७ )
भग्नोपक्रमः ( सुचि. ३.१८ )

**आटक**–पु., गुग्गुलुः ( र. २०.१३०–१३६ )

**आटरूष**–पु., वनस्पति० वासकः अयं तिक्तः कटुस्तुवरकः ( भा. प्र. ) शीतो, लघुः, स्वर्यो, हृद्यो, वातकृत् ( भा. प्र. ) कफपित्तघ्नो, रक्तविकारकासक्षयच्छर्दिकुष्ठज्वरतृष्णारक्तपित्तकामलावैकल्यादिघ्नः शाकार्थमप्युपयुज्यते. ( ध. १.२३ ( चसु. ३.३ )
( सुसु. ४६.२६२.२७० )
NO.—ACAN THACEAE
L.—ADHATODA VASIKA
हिं.—अडूसा, विसोंटा, वासा.
म.—अडुळसा
गु.—अरडुसो.
बं.—वाकस, छोट वाकस.
त.—अधडोडे.

**आटरूषक**–पु., आटरूषः ( सुसू. ४६.२६२.२७० )

**आटव्या**–स्त्री., वनस्पति०, कण्टकारीभेदः, कासघ्नी इति नाम ( ध. १.९८ )

**आटा**–स्त्री., पक्षि०, ( अहृसू. २६.१० )

**–मुख**–न., शस्त्र० आटीमुखम् ( असंसू. ३४.२७ )
( सुसू. ८.४ )

**–वदन**–न., शस्त्र० आटीमुखम् ( अहृसू. २६.१० )

**आटालत्व**–न., विस्तृततत्वम् अटालत्वम् ( चनि. ३.१४ )

**आटी**–स्त्री., पक्षि० जलवर्धनी ( सुसू. ८.४ )
अयं समुद्रतीरे कोङ्कणप्रान्ते उपलभ्यते, बकसदृशः प्रसिद्धः पक्षी. द्रष्टव्यं 'आटा'.

**–मुख**–न., शस्त्र० अङ्गुष्ठायतं फलं, सप्ताङ्गुलं वृन्तं, केशप्रमाणधारं विस्रावणोपयोगि शस्त्रम्
( सुसू. ८.३)

**आटोप**–पु., रोगलक्षण० उदरे गुडगुडशब्दः
( चनि. ८.६ )
उदरापूरः ( सुउ. ४२.८ )
नाभेरधो मन्दसञ्चारवायुता। ( असंनि.११ )
ईषत्सशब्दमाध्मानम्। ( सुसू. १५.१५ )
वातादीनामप्रवृत्तिः ( सुक. १.४२ )
रुजापूर्वकक्षोभः। ( सुनि. ९.२० )
क्षोभः ( अहृसू. २८.८ )

**आडूक**–न., पात्र० बालानामौषधप्रदानार्थं क्षुद्रनौकाकारं साधनम् ( कासि. ३ पृ. १५५ )

**आढ**–न., मान० आढकम् ( र. ९.३९ )

**आढक**–न., मान० चतुःप्रस्थमाढकम् ( चक. १२.९४ )
षट्पञ्चाशदधिकद्विशततोलमानम् २५६ तोलकाः
( र. १४.५६ )
पात्रकापरपर्यायम् ( र. ११.८ )

**( आढकी )**–स्त्री., खनिज० सौराष्ट्री ( ध. ३.१०६ ) वनस्पति० शिम्बीधान्य०
( चसू. २१.२६ ध. ६.९३ )
तद्गुणाः–कषाया, स्वादुः शीता कटुर्लघुः किञ्चिद्वातकरी, संग्राहिणी, कफपित्तघ्नी, मेदोरक्तपित्तघ्नी, लेपोपयोगिनी च, त्रिप्रकारैषा सितासितरक्तभेदात् ।
( ध. ६.९३ )
NO.—PAPILIONACEAE
L—CAJANUSINDICUS
Eng.—PIGIEON PEA, DHULL
हिं. —अडहर. अरहर. तोर. डुसुर.
म. —तुरटी.
गु. —तुवर, डंगरी.
बं. —अडहर, आइरी.
त. —तुवरै, इयवै.
फा. —शाखुल.

**आढ्य**–वि., धनवान् ( अहृसू. १.२९ )
**–पवन**–पु., रोग० ऊरुस्तम्भः ( अहृसू. १५.३६ )
**–मारुत**–पु., रोग० आढ्यवातः वातरक्तम् ( अहृसू. १९.८ ) द्र० "आढ्य पवन"
**–रोग**–पु., वातरक्तम् ( असंनि. १६.५ )
**–रोगिन्**–वि., वातरक्ती ( अहृसू. १७.२२ )
**–वात**–पु., रोग० वातरक्तम्, अयमाढ्यानां प्रायो भवतीत्याढ्यरोगः ( चक्र) चचि. २९.११ )

**आणि**–स्त्री., मर्म० जानुन ऊर्ध्वमुभयतस्त्र्यङ्गुलम् आणी नाम, स्नायुमर्मैतद् वैकल्यकरं च । तत्र ( विद्धस्य ) शोफाभिवृद्धिः स्तब्धसक्थिता च ( सुशा. ६.७ )

**आणी**–स्त्री., आणि मर्म ( सुशा. ६.७ ) द्र० 'आणि'

**आण्डूक**–न., खनिज०, वङ्गम् ( रा. १३.१४ )

**आतङ्क**–पु., व्याधिः, दोषाः, यक्ष्म, ज्वरः
( चनि. १.५, चवि. ६.४, चचि. ३.११ )
**–विपरीत**–वि., केवलव्याधिघ्नं भेषजम्
( चवि. २.१३ )

**आतत**–वि., व्याप्तम् । ( सुशा. ९.९ )
( सुसू. १७.५, सुनि. १२.६ )

**आतप**–पु., सूर्यातपः, रविप्रकाशः, तेजःपरमाणुपुञ्जः, तद्गुणाः–पित्ततृष्णाग्निस्वेदमूर्च्छाभ्रमास्रकृत्
( सुचि. २४,८६ )
**–त्र**–न., छत्रम् ( असंशा. ८.३२ )
लंघनप्रकारः, आतपसेवनम् । ( चसू. १२.१८ )
मध्यबलस्थूलमनुष्येषु स्थौल्यापनयनाय
( चसू. १२.२३ ) दुष्टव्रणपीडितेषु कुष्ठिषु तैलपानाभ्यङ्गादनन्तरमन्तःशोधनार्थं प्रयुक्तश्चिकित्सोपक्रमः ( सुचि. ९.६६ )
**–दग्ध**–परिवः रोग० सूर्यातपादिभिः दाहः
( सुसू. १२.३८ )
**–सह**–वि., य आतपं सहते सः ( चसू. १३.४७ ) )
**–सहत्व**–न., लक्षण० आतपसेवने क्षमत्वम्
( चनि. १.३३ )
**–हत**–वि., सूर्यतेजसा हतम् । ( चसू. २७.३१६ )

**आतपासहत्व**–वि., लक्षण० आतपस्यासहिष्णुत्वम्
( चनि. १.३३ )

**आतस्य**–वि., अतस्या इदम् । ( चसू. २७.२९२ )

**आतुर**–वि., रोगी. ( चसू. १.२४, सुचि. ३३.५ )
**–गुण**–पु., रोगिणो गुणः "निर्देशकारित्वमातुरगुणानां श्रेष्ठम्" (चसू. २५.४०) (असंसू. १३,) द्रष्ट० 'रोगिन्.'

**आतुरावस्था**–स्त्री., आतुरस्यावस्थारूपः कालः, स कालाकालरूपो द्विविधः कार्याकार्यविचारतः ।
( चवि. ८.१३२ )

**आतुरोपक्रमणीय**–पु., अध्याय० ( सुसू. ३५.१ )

**आतुरोपद्रवचिकित्सित**–न., अध्याय०
( सुचि. ३९.१ )

**आतुर्य**–न., आतुरस्य भावः रोगः ( चचि. १.७९ )

**आत्त**–वि., गृहीतम् । ( अहृसू. १.२८ )

**आत्मन्**–पु., जीवः ज्ञानप्रतिसंधाता, क्षेत्रज्ञः
( चसू. १.४२ ) ( सुशा. ५.३ )
देहः ( सुशा. ३.७ )
कर्मात्मा, बद्धपुरुषः (सुसू. १५.४१ )
जीवात्मा, मनः ( चवि. ८.३९ )
**–गुप्त**–न., आत्मगुप्तायाः फलम्, कपिकच्छुः
( सुसू. ४६.३६ )
**(–गुप्ता )**–स्त्री., वनस्पति० कपिकच्छुः
( सुउ. ५२.४१ ) द्र० 'आत्मगुप्त'.
**–गुप्तातैल**–न., कपिकच्छुबीजभवं तैलम्
( ध. ६.१३५ )
**–गुप्ताशूक**–पु., वनस्पति० कपिकच्छोः शूकः
( चसू. १८.४ )
**–ज**–वि., आत्मनो जायत इति ( चशा. ३.३ )
न., गर्भस्यात्मजन्यो भावः ( चशा. ३.१६ )
तासु तासु योनिषूत्पत्तिरायुरात्मज्ञानं मन इन्द्रियाणि प्राणापानौ प्रेरणं धारणमाकृति–स्वर–वर्णविशेषाः सुखदुःखे इच्छाद्वेषौ चेतना धृतिर्बुद्धिः स्मृतिरहङ्कारः प्रयत्नश्चेति ( चशा. ३.१० )
मन्मथः ( चचि. २.३–३० )

**–जा**–स्त्री., वनस्पति० पुत्रजीवा ( चक्र )
( चचि. ३.२६७ )
**–प्रत्यक्ष**–वि. मानसप्रत्यक्षज्ञानविषयः, सुखदुःखेच्छाद्वेषादय आत्मप्रत्यक्षाः ( चवि. ८.३९ )
**–रक्षा**–स्त्री., भूतावेशनिषेधार्थं मन्त्रैरात्मनो रक्षणम्
( चचि. २३.६१ )
वनस्पति० इन्द्रवारुणीभेदः, महेन्द्रवारुणी
( ध. १.२५० )
**–लिङ्ग**–न., स्वरूपम् । ( सुनि. १०.३ )
**–वत्**–वि., बुद्धिमान् । ( सुसू. ३४.९ )
वशी, संयमी ( सुचि. ५.१९ )
**–विज्ञान**–न., आत्मविद्या. ( असंसू. ५.४२ )
**–शल्या**–स्त्री., वनस्पति० = शतावरी
( रा. ४.४३९ )
**–संपद्**–स्त्री., अर्थग्रहणे प्रयत्नशालित्वम् ।
( चसू. ८.४ )
आत्मनः चिरायुष्ट्वकारकधर्मयुक्तता
( चशा. ६.३० )
आत्मनः शुक्रशोणितसंयोगाधिष्ठातुः शुभजीवकर्मयुक्तत्वम् । ( चशा. २.६ )
**–साक्षिक**–वि., आत्मोपलभ्यमानम् ( चशा. १.८३ )
**–सात्म्य**–न., आत्मनः स्वस्य सात्म्यम्
( चवि. १.२५ )
**आत्मोद्भवा**–स्त्री., वनस्पति० माषपर्णी ( रा. ३.१७२ )
**आत्ययिक**–वि., अत्ययो विनाशो भवति अस्मादिति विघातकः ( च.नि. २.११ )
**आत्रेय**–पु., ऋषि० अत्रेरपत्यमात्रेयः पुनर्वस्वपरनामा, भरद्वाजशिष्यः, अग्निवेशादीनां गुरुः, भरद्वाजादायुर्वेदं प्रतिगृह्य शिष्येभ्यो दत्तवान् । ( चसू. १.२ )
**–भद्रकाप्यीय**–पु., अध्याय० ( चसू. २६.१ )
**–भिक्षु**–पु., ऋषि० ( चसू. १.९ )
**–शासन**–न., आत्रेयस्य वैद्यकशास्त्रम् ( चसू. १.९३ )
**आथर्वण**–पु., वेद० अथर्ववेदः
**आदंशशोफ**–पु., रोगलक्षण० दंशस्याऽऽसमन्ताज्जायमानः शोफः । ( सुक ४.३७ )
**आदर्श**–पु., दर्पणः ( चइ. १२.७७ )
प्रतिबिम्बदर्शनार्थं पूर्णचंद्राकारं कांस्यमयः
( सुसू. ३०.२१ )
**–मण्डल**–पु., सर्प० मण्डलिजातीयः
( सुक.४.३४ ) ( २ )
**आदान**–पु., न; काल० आददाति क्षपयति पृथिव्याः सौम्यांशं प्राणिनां च बलमित्यादानम् ।
( चसू. ६.४ )
वसंतग्रीष्मवर्षास्त्रय ऋतवः आदानकालः अस्मिन्सूर्यः प्राणिनां बलमादत्ते ( चचि. ३.४७ )
न०, आवापः प्रक्षेपः ( सुसू. ४६.३५२ )
ग्रहणम्. हस्तस्य विषयः ( सुशा. १.५ )
**–कर्मन्**–वि., आदानमाहारप्रणयनं कर्म यस्य स ( प्राणः ) ( चचि. १५.६ )
**आदानी**–स्त्री., वनस्पति० घोषकभेदः । ( चशा. ४.८७ )
**आदारिबिम्बी**–स्त्री., वनस्पति० आदारशिम्बी, आलिः आउलिः ( डसुउ. ४४.१९ )
**आदारी**–स्त्री., वनस्पति० वेल्लान्तरसदृशपुष्पा लोहितफला, आलिः ( डसुउ. ४४.१९ )
वनस्पति० 'आदारी काकहन्ताळी तोया खदिरवल्यपि' ( इन्दु ) असंउ. १ पृ. ४ )
**आदि**–पु., कारणम्, उत्पत्तिः ( सुशा. १.४ )
**–काल**–पु., कृतयुगम् ( चचि. १९.४ )
**–देव**–पु., शङ्करः ब्रह्मादिर्वा ( सुसू. १.२१ )
**–बलप्रवृत्त**–वि., शुक्रशोणितस्थितदोषजनितः तेऽपि द्विविधा मातृजाः पितृजाश्च ( सुसू. २४.५ )
**–मधु**–न., पुराण मधु ( र. १७.६२–६४ )
**–वन्ध्या**–स्त्री., वन्ध्याभेद० आजन्मवन्ध्या, पापकर्मविनिर्मिता ( र. २२.१–२ )
**आदित्य**– पु., देवता० रविः, असावेव स्वरश्मिभिः शीतोष्णवर्षाः गतिविशेषेण कालविभागं च कुरुते
( सुसू. ६.४ )
पुरा द्वादश आदित्या आसन्, इन्द्रो भगः पूषाऽर्यमा मित्रावरुणौ धाता विवस्वानंशो . भास्करस्त्वष्टा विष्णुरिति, तेषां त्रयोदशो गुहोऽभवद्बृहस्पतिर्नाम ।
( का. रेवतीकल्प ६. पृ. १८८ )
**–कान्ता**–स्त्री., वनस्पति० आदित्यभक्ता
( ध. ४.९८ )
**–पर्णिनी**–स्त्री., वनस्पति० सोमसमवीर्यौषधिः तदुत्पत्तिस्थानं देवसुंदह्रदः सिंधुनदश्च ।
एषां मूलिनी, सुरक्तांशुककोमलैः पञ्चभिः पत्रैर्युक्ता, आदित्यानुवर्तिनी, कनकाभा, जलान्तेषु सर्वतः परिसर्पिणी च ( सुचि. ३०.१९–२० )
**–पर्णी**–स्त्री., वनस्पति० आदित्यपर्णिनी सूर्यावर्तः
( चक्र ) ( चचि. २६.२६८ )
सूर्यकान्ता, सूर्यवल्ली ( चचि. १. (४) ७ )
आदित्यानुवर्तिनी ( सुचि. ३०–३१ )

–भक्ता–स्त्री., वनस्पति० सुवर्चला सूर्यमुखी तद्गुणाः–कटुस्तिक्तोष्णा, (शीता. रा.) स्वर्या, कफघ्नी, स्फोटत्वग्दोष–कण्डू–व्रण–कुष्ठ–भूत–ग्रह–शीतज्वरघ्नी च (ध. ४.९९)
N.O. COMPOSIEAE
(NAD. VOL. I/614)
L.—HELIANTHUS ANNOUS LINN.
हिं.—सूरजमुखी
म.—सूर्यफूल, सूरजमुखी
गु.—सूरजमुख
बं.—सूरजमुखी
त.—आदित्य भक्तिचेट्टु
फा.—गुली अफताब

–वल्ली–स्त्री., वनस्पति० आदित्यभक्ता (ध. ४.९८) द्र० 'आदित्यभक्ता'

**आदिम**–पु., कश्चिद्रससिद्धिप्रदायकः सिद्धः (र. १.२–५)

**आदृत**–वि., सादरः (सुक १.२४)

**आदेयवाक्य**–वि., ग्राह्यवचनः (ग्राह्यं वचनं यस्येति) (चशा. ४.३७–३)

**आद्य**–न., अन्नम्। (चसू. ६.५०)

**आद्यमत**–वि., आध्मायमानः (चसि. २.१२)

**आधान**–न., स्थापनम्। (असंनि. १.२१)

**आधार**–पु., औषधिधारणार्थं नेत्रगोलकाद्बहिः माषपिष्टकृता पाली (असंसू. ३३.४)
कफामपित्तपक्वादीनामाशयोऽधिष्ठानं वा। (अहशा. ३.१०)

**आधारी**–स्त्री., वनस्पति० गुडूची, शतावरी (र. १७.४३–४६)

**आधि**–पु., मनोव्याधिः। (असंउ. ९. (पृ. ७३)

**आधिदैविक**–वि., देवेष्वधिकृत्य यद्वर्तते तदाधिदैविकम् (सुसू. २४.४)

**आधिभौतिक**–वि., भूतेष्वधिकृत्य यत्प्रवर्तते तदाधिभौतिकम्। (सुसू. २४.४)

**आध्मात**–वि., आध्मानयुक्तपुरुषः। (असंसू. २७.१०)
वातपूर्णम्। (सुनि. १.८८)

–कन्धर–वि., समन्तादध्माता कंधरा ग्रीवा यस्य (अहउ. ७–१०)

–ग्रीव–वि., पूरितस्तब्धग्रीवः। (चनि. ८.८)

**आध्मान**–न., रोगलक्षण० उदरे वायोरतीव संचयः अनिलपूरणम्। (चसू. २६.१०२)
वातरोग०, वातनिरोधाद्यदा उदरमतीवाऽऽध्मातमत्युग्ररुजं साटोपं च भवति तं रोगमाध्मानमिति विद्यात् (सुनि. १.८८.)
वाग्भटे 'आनाह' इत्यस्य संज्ञा (अहनि. ११.६०)
**अस्य चिकित्सा**—लंघनं, पाणितापः (स्वेदनं) फलवर्तिक्रिया पाचनीय–दीपनीय,–बस्तिप्रयोगाः लङ्घनानन्तरमन्नकाले जीरकादि–दीपनसिद्धान्यन्नानि च देयानि (सुचि. ५.२६)

**आध्मापन**–न., आध्मानम् (चसि. १.३३)

**आध्यात्मिक**–वि., आत्मसंबद्धम्, आत्मन्यधिकृत्य वर्तेत इति। (सुसू. २४.४)

**आनडुह**–वि., वृषभस्येदम् (चर्मादि) (चशा. ८.१०)

**आनद्ध**–वि., आनाहयुक्तम्, आध्मातम् (सुउ. २४.६)
आच्छादितम् (सुसू. ६.३१)

–बस्ति–वि., रोगलक्षण० आध्मातमूत्राधारः (सुउ. ५५.१०)

–बस्तिता–स्त्री., बस्तिप्रदेशेऽत्याध्मानम् (सुशा. ९.१२)

**आनन**–न., शारीर० मुखम्। (असंशा. ८.३०)

–दूषिक–पु., क्षुद्ररोग० मुखदूषिका (र. २५.२)

**आनन्द**–पु., कामः (सुशा. १.५)

–भैरव–पु., सिद्धयोग० त्रिदोषजातिसारघ्नः (र. १६.७–१०)

(–भैरवी)–स्त्री., सिद्धयोग० इयमश्मरीं हन्ति। (र. १७.१२–१३)

–भैरवघृत–न., सिद्धयोग० त्वग्वातघ्नमिदम् (र. २१.१७०–७१)

**आनाम**–पु., आनमनम्, वक्रीकरणम् (सुचि. ३३.४६)

**आनाह**–पु., स्थौल्यम्, परिणाहः (अहसू. २५.१४)
रोगलक्षण० उदरस्याध्मानम् वायुना परीपूरणम्। (चवि. २.७)
रोग० तस्य संप्राप्तिः–क्रमेण निचितमामं शकृद्वा भूयो विगुणानिलेन (उन्मार्गवायुना) विबद्धं सद् यथामार्गं न प्रवर्तते, स आनाहः (सुउ. ५६.२०–२१)
"यस्य वातः प्रकुपितः कुक्षिमाश्रित्य तिष्ठति। नाधो व्रजति नाप्यूर्ध्वमानाहस्तस्य जायते॥" (चसू. १८.३२

स आमसमुद्भवः पुरीषजश्च, आमसमुद्भवे तृष्णा, प्रतिश्यायः, शिरोविदाहः, आमाशये शूलमामाशयगुरुत्वमुत्क्लेशनमुद्गारविघातनं चेति लक्षणानि ( सुउ. ५६.२१–२२ )

पुरीषजानाहलक्षणानि–कटि–पृष्ठ–पुरीष–मूत्राणां स्तंभशूलौ, श्वासः, कुक्ष्यानाहः विड्वमनं, वातवर्चोनिरोधः, तृष्णोद्गारावरोधः कुक्षौ निरुद्धवायोरुपरिधावनम् ( सुउ. ५६.२२–२३ )

बालानामानाहरोगे लक्षणानि–विशालस्तब्धनयनता पर्वभेदोऽरतिः क्लमो मूत्रानिलविट्रोधश्च ( कासू.२५.१९ )

वंक्षणाश्रये आनाहे लक्षणम्–वंक्षणप्रदेशे संनद्धवातादिवत् ( चचि. १४.१३३ )

सामान्यचिकित्सा—स्वेदनपाचने गुदे वर्तिनिवेशनं नाड्या चूर्णप्रधमनं निरूहानुवासनबस्तिश्च । ( सुउ. ५६.२४–२५ )

**आनील**–न., खनिज० वङ्गम् ( ध. ६.१३ )

**आनुपूर्वी**–स्त्री., क्रमः परिपाटी ( सुउ. ६५.२९ )

**आनुबन्धिक**–वि., अनुबध्नाति, जन्मान्तरेऽप्यनुगच्छतीति । ( चवि. ८.३७ )

**आनुलोमिक**–वि., अनुलोमत्वकरम् ( अहसू. १९।४७.४८ )

**आनुलोम्य**–न., प्रवर्तकत्वम् । ( सुनि. १.१० )

**आनुवासनिक**–वि., अनुवासनबस्त्याद्युपयुक्तम् (स्नेहादि) ( चचि. ३.२५१ )

**आनूप**–वि., अनूपसंश्रयादानूपः ( चसू. २७.५४ )

पु., जलभूयिष्ठो देशः

तल्लक्षणम्–तत्र बहूदकनिम्नोन्नतनदीवर्षगहनो मृदुशीतानिलो बहुमहापर्वतवृक्षो मृदुसुकुमारोपचितशरीरमनुष्यप्रायः कफवातरोगभूयिष्ठश्चानूपः ( सुसू. ३५.४२ )

हिन्तालतमालनारिकेलकदलीवनगहनः सरित्समुद्रपर्यन्तप्रायः शिशिरपवन बहुलोवञ्जुलवानीरोपशोभिततीराभिः सरिद्भिरुपगतभूमिभागः ( चक. १.८ )

अहितदेशानां श्रेष्ठः । ( चसू. २५.४० )

**–पिशित**–न., आनूपप्रदेशस्थप्राणिनां मांसम् ( चसू. ५.५ )

स च पञ्चविधः–कूलचराः, प्लवाः, कोषस्थाः, पादिनो मत्स्याश्च ( सुसू. ४६.९३ )

**–भूमि**–स्त्री., आनूपदेशः, आनूपभूमिः अहितदेशानां श्रेष्ठा ( असंसू. १३.३ )

**–मज्जा**–स्त्री., स्नेह० महिषादीनां मज्जा; तस्याः गुणाः–मधुरा, गुर्वी, उष्णा, वातघ्नी च ( सुसू. ४५.१३१ )

**–मांस**–न., आनूपदेशचारि प्राणिजं मांसम् तद्गुरूष्णस्निग्धमधुरं बलोपचयवर्धनं वृष्यं वातहरं कफपित्तवर्धनं व्यायामदीप्ताग्निभ्यो हितम् ( चसू. २७.५७ )

**–वर्ग**–पु., आनूपदेशवासिप्राणिवर्गः ( सुसू. ४६.९३ )

**–वारि**–न., आनूपदेशस्थं जलम्, तदनेकदोषमभिष्यन्दि गर्हितं च ( सुसू. ४५.३७ )

**–शफ**–पु., महिषादीनां खुरः । ( सुचि. १.९२ )

**आनृतिकत्व**–न., राजसगुण०, मिथ्यावचनशीलता ( सुशा. १.१८ )

**आनृशस्य**–न., सात्विकगुण० अक्रूरकर्मकारित्वम् ( सुशा. १.१८ )

**आन्तरिक्ष**–वि., आकाशीयभावः आकाशभूतगुणः आन्तरिक्षास्तु–शब्दः शब्देन्द्रियं सर्वच्छिद्रसमूहो विविक्तता च. ( सुशा. १.१९ )

वि., आकाशभूयिष्ठम् । ( चशा. ७.१६ )

वि., अन्तरिक्षादागतम्, मेघोदकम्, उदकानां श्रेष्ठम् । ( सुसू. ४५.३ चसू. २५.४० )

**आन्तरीक्षानुकारिन्**–वि., यदन्तरीक्षमनुकरोति स्वच्छत्वादिभिर्गुणैः । ( असंसू. ६ )

**आन्ध्य**–न., नेत्ररोग० अन्धत्वम्, लिङ्गनाशः ( सुशा. ६.२७ असंउ. १७ )

**आन्ध्र**–पु., दाक्षिणात्यजनपदविशेषः ( असंशा. १२.१९ )

**आपगा**– स्त्री., नदी ( सुचि. ३०.३९ )

**आपद्**–स्त्री., संकटम्, व्याधिः । ( चसू. १५.३ )

**आपन्न**–वि., प्राप्तम् ( चशा. ४.९ )

**–गर्भा**–वि., लब्धगर्भा, गर्भिणी ( असंशा. ४.३ )

**–सत्वा**–स्त्री., लब्धगर्भा, गर्भिणी ( सुउ. ४९.४–५ )

**आपमार्ग**–पु., वनस्पति० अपामार्गः ( र. २५.८६ )

**आपाकशाक**–न., वनस्पति० आर्द्रकम् ( ध २.८५ )

**आपातभद्र**–वि., आपाततः कल्याणकारी ( चवि. १.१६ )

**आपान**–पु., धूमस्याक्षेपविसर्गौ ( चसू. ५.३६ )

न., पानम्, मद्यपानम् ( चचि. २४.७५ )

तत् सात्विक – राजस – तामसभेदात् त्रिविधम् ( चचि. २४.७५–७८ )

**आपिञ्जर**–न., खनिज० सुवर्णम् ( रा. १३.२ )

**आपीत**–पु., वनस्पति० नन्दीवृक्षः ( ध. ३.१८ )
न., खनिज० स्वर्णमाक्षिकम् द्रष्टव्यं ' माक्षिक ' ( रा. १३.२०९ )
न., वनस्पति० पद्मकेसरम् ( ध.४.१६५ )
**आपोथन**–न., विश्लेषणम् ( सुचि. ३.५२ )
प्रहरणम् ( चचि. १.१४७ )
**आपोथिताग्र**–वि. ईषत्क्षुण्णाग्रम् ( चसू. ५.७१.७२ )
**आप्त**–वि., यथार्थवक्ता, अवितर्कस्मृतिविभागविद् निष्प्रीत्युपतापदर्शी ( चवि. ४.४ )
यथार्थम् ( चक्र ) ( चवि. ८.८२ )
**–वचन**–न., आप्तोपदेशः ( चवि. ४.४ )
**आप्तागम**–पु., वेदः शास्त्रवादः ( चसू. ११.२७ )
**आप्तास्थित**–वि., आप्तैराश्रितम् ( सुसू. ४६.४४६ )
**आप्तोपदेश**–पु., ऐतिह्यम् आप्तवचनं वेदादिः ( चवि. ८.४१ )
**आप्तोपसेविन्**–वि., आप्तस्योपसेवकः आप्तवचनानुकारी-त्यर्थः ( असंसू. ५.४६ )
**आप्ति**–स्त्री., संप्राप्तिः ( अहृसू. १.२२ )
**आप्य**–वि., जलीयम् ( सुशा. १.१९ )
पाञ्चभौतिकमपि जलगुणभूयिष्ठम् ( चसू. २६.११ )
यद् द्रवसरमन्दस्निग्धमृदुपिच्छिलं रसरुधिरवसा-कफपित्तमूत्रस्वेदादि तदाप्यं रसो रसनं च अब्धातु-प्रधानम् । ( चशा. ७.१६ )
आप्यास्तु–रसो रसनेन्द्रियं सर्वद्रवसमूहो, गुरुता, शैत्यं, स्नेहो, रेतश्च ( सुशा. १.१९ )
**आप्यायन**–न., वर्धनम् ( सुसू. १.८. ( ८ )
**आप्यायनक**–न., घटयन्त्रम् रसस्य बलकारकम् ( र. ९.५१ )
**आप्यायमान**–वि., पुष्यमाणम् । ( असंसू. ४.७ )
**आप्लावन**–न., द्रवम्, द्रवद्रव्यम् ( चशा. ८.४१ )
भावना, मूत्रादिभिर्द्रव्याणां भावनम् ( सुसू. ४४.८४–८५ )
**आप्लुत**–वि., व्याप्तम् ( चइं. १०.१४ )
मिश्रितम्, पूर्णम् ( सुचि. ८.३० )
**आफोट**–पु., वनस्पति० आस्फोटः अर्कभेदः ( काखि. १५.१७ )
**आबाध**–पु., शारीरो मानसो वा व्याधिः ( सुसू.२४.१२ )
पीडा ( सुसू. ४६.४३८–३९ )

( **आबाधा** )–स्त्री., पीडा ( सुचि.२४.१ )
**–वर्जन**–न., मर्मोपघातकहेतुवर्जनम् ( चसि. ९.१० )
**आभरण**–न., भूषणम्, पोषणम् (असंसू. ८.४४ )
**आभा**–स्त्री., वृक्ष० बब्बूलः ( बर्बुरः ) ( र. २३. ४३–४४ )
**आभास**–पु., पारदबन्ध०, योगयुक्तः पारदः पुटनानन्तरं भावनानन्तरं च यदा विमुक्तो भूत्वा स्वभावं याति तदाऽनेन शब्देन व्यवह्रियते ( र. ८.१७ )
पुटितो यो रसो याति योगं मुक्त्वा स्वभावताम् ।
भावितो धातुमूलाद्यैराभासो गुणवैकृतैः ॥ ( र. ११.६८ )
**आभिप्रायिक**–वि., अभिप्रायप्रयोजकम्, इष्टम् ( चशा. ८.५० )
**आभीर**–पु., कुरुक्षेत्राद्दक्षिणां दिशमाश्रितो देशः; गुर्जर-देशस्य दक्षिणपूर्वभागस्थो नर्मदामुखप्रदेशः । ( काखिल. २५.१४ )
**आभुग्न**–वि., ईषज्जिह्मम्, कुब्जीभूतम् ( सुनि. १५.१० )
**–शिरस्**–वि., संकुचितं शिरः यस्य स आभुग्नशिराः गर्भः ( सुनि. ८.५ )
**–सक्थी**–वि., मूढगर्भ० यस्य आभुग्ने संकुचिते सक्थिनी जङ्घे सः ( सुचि. १५.९ )
**–सक्थी**–वि., यस्याः जानुमध्ये सक्थिनी संकुचिते सा ( सुशा. १०.८ )
**आभोग**–पु., परिपूर्णता, प्रमाणं, विस्तारः परिधिर्मध्य-भागः । ( र. १०.३४–३९ )
**आभ्यन्तर**–वि., शरीरान्तर्वर्ति । ( सुउ. २३.५ )
पु., शारीर० महास्रोतः ( असंसू. २२.१५ )
**आम**–वि., अपक्वम् । ( सुसू, ४६,२०९ )
अश्रुतम्; अक्वथितम् ( पयः स्नेह इ० ) ( चनि. २.४ )
पु., जठरानलदौर्बल्यादामाशयगतोऽपक्वोऽन्नरसः । ( अहृसू. १३.२५ )
धात्वग्निदौर्बल्यादधातुस्थितोऽपक्वोऽन्नरसः धात्व-ग्निभिरपाकादामः ( सुसू. १५.३२ ( डल्हण )
कोद्रवेभ्य उत्पन्नविषस्येव अतिदुष्टदोषाणामन्यो-न्यसंमूर्च्छनादुत्पन्नो आमः ( अहृसू. १३.२६ )
मलसंचयः प्रथमा दोषदुष्टिर्वा ( चचि. १५.९३ ( चक्र )
आमस्वरूपम्–गुरु, अनेकवर्णं, स्निग्धं, बहुपिच्छिलं तन्तुमद्, दुर्गन्धं, द्रवरूपम् । ( अहृसू.१३.१७ ( अरुणदत्त )
आमावस्था—आमसंपृक्ता दोषा दूष्या रोगश्चा

सामाः, आमवियुक्ता निरामा इत्युच्यते। (अहृसू. १३.२७)
रोग० विंशतिकफरोगेष्वेकः (कासू. २७.४१)
स द्विविधः-विसूचिका अलसकश्च (चसू. १९.३)
दण्डालसकविलम्बिकारोगावामजन्यौ (अहृसू. ८.१३-२८)

**–कोशिन्**–वि., आरूढकर्णस्य वर्धनेन जायमानोऽयं दोषः, असम्यग्गूढमध्यकर्णः (सुसू. १६.२४)

**–गन्धास्यत्व**–न., रोगलक्षण० रक्तपित्तस्य वक्त्रे विस्रगन्धित्वम्। (अहृनि. ३.५)

**–(गन्धा)**–स्त्री., वनस्पति० व्रीहिः (रा. १६.१०९)

**–गन्धि**–वि., आमस्यापक्वाऽऽहाररसस्वरूपस्य गन्धोऽस्यास्तीति, विस्रगन्धिः अम्लगन्धिर्वा (चचि. १५.५४)

**–गन्धिक**–वि., आमगन्धि, आमगन्धयुक्तः (सुउ. ४०.१७५)

**–गन्धित्व**–न., रोगलक्षण० रक्तपित्ते पूर्वरूपविशेषः। (चनि. २.६)

**–गर्भ**–पु., षण्मासं यावद्गर्भः (सुउ. ४२.१३)
अपक्वो गर्भोऽण्डादिरूपः (चशा. ६.१०)

**–(गर्भा)**–स्त्री., आमो गर्भो यस्याः सा (चशा. ८.३१)

**–गर्भभ्रंश**–पु., रोग० आमगर्भस्य भ्रष्टता पतनं वा (असंसू. २७.७)

**–गर्भशेष**–पु., आमगर्भपतनानन्तरं तस्य अपरादिकः शल्यरूपः शेषः (असंशा. ४.१०)

**–घ्नी**–स्त्री., वनस्पति० कटुका (ध. १.३८)

**–ज्वर**–पु., रोगावस्था० तरुणज्वरः सामज्वरः आमावस्थितो ज्वरः। (अहृसू. १८.७)

**–तैल**–न., अपक्वतैलम्, तिलकल्कनिपीडनेन मुष्टितः परिस्रुतं तैलम् (सुसू. १६.७)
सद्यस्कमनग्निसंबद्धं तैलम् (सुचि. ३.३४)
तलभङ्गेऽस्थिभङ्गे च परिषेकार्थमुपयुज्यते। (असंउ. ३२ (पृ. २४१)

**–दोष**–पु., अग्निमान्द्यादपक्वो रसधातुरामाशयस्थो दुष्टश्च आम इत्युच्यते; स एव आमदोषः (सुउ. ५०.४)

**–पक्वाशय**–पु., शारीर० आमस्य पक्वस्य चाशयः, कोष्ठः, महास्रोतः शरीरमध्यमित्येतस्य पर्यायाः आभ्यन्तररोगमार्गश्च (चसू. ११.४८)

**–पक्वाशयचर**–वि., कोष्ठचरः (सुनि. १.१६)

**–पक्वाशयान्तर**–न., आमाशयस्य पक्वाशयस्य च यदन्तरं तद्, आमाशयपक्वाशययोर्मध्यभागः (सुशा. ९.७)

**–पक्वैषणीय**–वि., अध्यायसंज्ञाविशेषः, सुश्रुतसूत्रस्थानगतसप्तदशोऽध्यायः (सुसू. १७.१)

**–पाचन**–वि., आमस्य पाचनं करोति तत् (सुसू. ३८.२३)

**–पित्त**–न., आमावरोधवृद्धपित्तम्। (चचि. २२.१५)

**–प्रजाता**–स्त्री., या आमगर्भं प्रसूते सा। (चसि. २.१४)

**–प्रदोष**–पु., रोग०, आमः, अपरिपक्वरस-धातुरूपेणाऽऽमेन जनितो विकारः (चवि. २.१०)

**–प्रदोषिकी**–वि., आमविकारशमनी चिकित्सा (चवि. ५.२६)

**–मत्स्यगन्धिन्**–वि., आममत्स्यस्येव गन्धो यस्य तत् (पुरीषम्) (चचि. १९.९)

**–यव**–पु., ईषद्भृष्ट-अदलितयवः (चचि. २२.२८)

**–लिङ्ग**–वि., आमलक्षणान्वितम् (अहृसू. ८.२८)

**–लोष्ट**–न., आममृत्पिण्डः (सुउ. ४६.२१

**–वात**–पु., रोग० (चचि. २८.१९५)
सम्प्राप्तिः–मन्दाग्नेर्विरुद्धाहारचेष्टस्य निश्चलस्य स्निग्धान्नं भुक्त्वा व्यायामं कुर्वतो नरस्य वायुप्रेरित आमः श्लेष्मस्थानं गच्छति ततो वातविदग्धः सन् धमनीः प्रतिपद्यते, वातपित्तकफदूषित आमः स्रोतांस्यभिष्यन्दयति, दौर्बल्यं हृदयगौरवं च करोति, स्वरूपम्–युगपत्कुपितावामवातौ अन्तः कोष्ठे त्रिकसंधिप्रवेशकौ सन्तौ गात्रं स्तब्धं कुरुतः स व्याधिरामवात उच्यते। सामान्यलक्षणम्–अङ्गमर्दस्तृष्णाऽरुचिरालस्यं ज्वरोऽपाको गौरवमङ्गशून ता च।
अतिवृद्धामवातलक्षणम्–हस्तपादशिरोगुल्फत्रिकजानूरुसंधिषु सरुजशोथं करोति, स देशो वृश्चिकैर्व्याविद्ध इवात्यर्थं रुजते, तत्र दोषलक्षणानि–पवनानुगे आमवाते शूलः, पित्तानुगे दाहरागौ, कफदुष्टे स्तैमित्यं कण्डुर्गुरुता च भवति।
उपद्रवाः–अग्निदौर्बल्यं प्रसेकोऽरुचिर्गौरवमुत्साहहानिर्वैरस्यं दाहो बहुमूत्रता कुक्षिकाठिन्यं शूलं निद्रानाशः तृट्छर्दिर्भ्रमो मूर्च्छा हृद्ग्रहो विड्ग्रहो जाड्यमन्त्रकूजनमानाहश्च। साध्यासाध्यत्वम्–एकदोषानुगः साध्यो द्विदोषजो याप्यः, सांनिपातिकः सर्वदेहचरः कृच्छ्रः (मा०)

**–विकार**–पु., अजीर्णान्नजव्याधिः ( अहृसू. ८.२० )

**–विष**–न., रोग० विषसदृशलिङ्ग आमदुष्टिजन्यः असावाशुकारित्वाद्विरुद्धोपक्रमत्वादसाध्यः ( चवि. २.१२ )

**–शकृत्**–न., अपक्वपुरीषम् ; इदं कुक्षिशूलहेतुः ( सुउ. ४२.१२४ )

**–शूल**–पु., रोग० आमाज्जायमानः शूलः ( र. ३०.३७ )

**शोफ**–पु., आमावस्थितः शोफः ( अहृसू. २९.२ )

**–सन्न**–वि., आमेन मन्दीभूतः ( अहृसू. ८.१८ )

**आमण्ड**–पु., वनस्पति० एरण्डः ( ध. १.२९५ )

**आमय**–पु., रोगः ( चनि. १.५ )
प्रायेणामसमुत्थत्वेनामयः ( चक्रः )
लिङ्गम्–लिङ्गरूपो व्याधिः । ( चसू. २९.४ )
न., वनस्पति० कुष्ठम् । ( सुउ. ३९.२५६ )

**आमलक**–न., वनस्पति०
तद्गुणाः–अम्लं, तिक्तं, मधुरं, शीतं, लघु, रूक्षं । ( सुसू. ४४.७०–७१. )
वृष्यं रसायनं रुच्यं त्रिदोषघ्नं विशेषतः । पित्तघ्नं ज्वरदाहवमनप्रमेहशोफपित्तास्रश्रमविबन्धाध्मान-विष्टम्भघ्नम् ( ध. १.२१५ )
इदं वयःस्थापनानां श्रेष्ठम् ( चसू. २५.४० )
दाडिमाद्यम्लफलेषु श्रेष्ठम् ( सुसू. ४६.३३४ )
कुष्ठघ्नगणोक्तमेकं द्रव्यम् । ( चसू. ४.११–१३ )
कासहरगणोक्तमेकं द्रव्यम् । ( चसू. ४.१६ )
विरेचनोपगगणोक्तमेकं द्रव्यम् ( चसू. ४.१३ )
तन्मज्जा–अस्थ्यभ्यन्तरं स्निग्धमधुरद्रव्यम् ;
तद्गुणाः–मधुरकषायं, पित्तनाशनं, तृष्णाच्छर्दि-निलघ्नं च ( सुसू. ४६.२०६ )
च्यवनप्राशाद्यनेकरसायनयोगानामामलकं प्रधानं द्रव्यम् ( च. चि. १.१ )
बालमामलकं व्यङ्गेष्वञ्जनार्थमुपयुज्यते । ( असंउ. ३७ )
N.O.—EUPHOR BIACEAE
ENG.—EMBLICA MYRO BALAN
L.-EMBLICA OFFICINALIS
हिं. — आमला
म. — आवळा
गु. — आवळो
बं. — आम्ला
त. — ( तुप्पो )
फा. — आम्लझम्

**(आमलकी)**–स्त्री., वनस्पति० आमलकम् । (चक १०८)
तद्बीजं पाण्डुरे अ सृग्दरे प्रशस्तम् । ( चचि. ३०. ११६–११७ )

**–घृत**–न., सिद्धघृत०
रसायनविध्युपयुक्तं चेद् अजरायुःप्रदं सर्वामय-प्रशमनं च ( चचि. १ (२) ४–६ )

**–रसायन**–न., सिद्धयोग० दीर्घायुःप्राप्त्यर्थमुपयुज्यते ( चचि. १ ( १ ) ७५ )

**आमलकावलेह**–पु., आमलककल्प अजराऽऽयुःप्रदम् ( चचि. १ ( २ ) ७ )

**आमलकाद्यघृत**–न., सिद्धघृत० पित्तगुल्मशमनमेतत् ( चचि. ५.१२२ )

**( आमलकी ) पत्र**–न., वनस्पति० तालीसकम् ( ध. २.५३ )

**आमलक्यादिगण**–पु., आमलकीहरीतकीपिप्पल्यश्चित्र-कश्चेति गणोऽयं सर्वज्वरापहः कफारोचकनाशनो दीपनश्चक्षुष्यो वृष्यश्च ( सुसू. ३८.६०–६१ )

**आमलसार**–पु., गन्धकभेदः शुकपिच्छाख्यः पीतवर्णः। ( र. ३.१५ )

**आमाजीर्ण**–न., रोग० अजीर्णभेदः अजीर्णम् ( सुउ. ४०.९५ )

**आमातिसार**–पु., रोग० आमेनारब्धोऽतिसारः ( अहृसू. १९.४ )
अतिसारस्य आमावस्था ( चचि. १९.१५ )

**आमानिल**–पु., रोग० आमवातः ( र. २१.५० )

**आमान्वय**–पु., आमसंबन्धः ( चशा. ८.२५ )

**आमाशय**–पु., शारीर० आशयविशेषः, जन्तोर्नाभिस्त-नान्तरमामाशय इत्युच्यते, अन्नाशितं खादितं पीतं लीढं च विपच्यते । ( चवि. २.१७ )
अन्नवहानां स्रोतसां मूलम् । ( चवि. ५.८ )
पञ्चदशकोष्ठाङ्गेष्वेकः । ( चशा. ७.१० )
अयं पित्ताशयस्योपरिष्टात्तत्प्रत्यनीकत्वादूर्ध्वगतित्वा-त्तेजसश्चंद्र इव आदित्यस्य स चतुर्विधस्याऽऽहार-स्याऽऽधारः स च तत्रौदकगुणैराहारः प्रक्लिन्नो भिन्नसंघातः सुखजरश्च भवति, अयम् आमाशयः श्लेष्मस्थानम् ( सुसू. २१.१२. )
असौ विशेषेण पित्तस्य स्थानम् 'आमपक्वाशयौ स्थानं विशेषात्पित्तवातयोः' ( कासू. २७.१२ )

**आमाशयद्वार**–न., शारीर० आमाशयद्वारसमीपे वर्तमानम् ( हृदयाख्यं मर्म ) ( सुशा. ६.२५ )

**आमाशयसमुत्थ**–वि., आमाशयाश्रयम् कफपित्तजं सर्वमेव रोगानीकम् । ( चवि. ६.३ )

**आमाशयोत्क्लेश**–पु., आमाशये दोषाणामुत्क्लेशनम् ( चचि. २०.८. )

**आमाशयोष्मन्**–पु., जाठराग्निः । ( चचि. ३.२७३ )

**आमिष**–न., जङ्गमद्रव्यम् मांसम् ( चसू. १.६८ )
निर्यास० गुग्गुल ( सुचि. ३७.१५ )

**आमुष्मिक**–वि., परलोकभवम् । ( सुसू. १.४ )

**आमोद**–पु., वनस्पति० शतावरी ( र. २१.१३९ )
**–जननी**–स्त्री., वनस्पति० ताम्बूलं ( स्त्री ) ( ध. ३.२ )

**आम्नाय**–पु., आगमः ( चशा. ८.४६ ) वेदः ।

**आम्भस्**–वि., आप्यम् । ( असंशा. ५.१२ )

**( आम्भसी )**–वि., छायाविशेषः शुद्धवैडूर्यविमला सुस्निग्धा छाया ( चइं. ७.१२ )

**आम्र**–पु., न., वनस्पति०
वृक्षविशेषः अस्य फलं भक्षणार्थं तथा पुष्पपल्लवबीजादीनि च भैषज्यार्थमुपयुज्यन्ते,संपक्वाम्रफलगुणाः–मधुरं कषायानुरसं गुरु स्वादुपाकं हृद्यं वर्णकरुच्यं रक्तमांसबलप्रदं बृंहणं शुक्रवर्धनं वातघ्नं पित्ताविरोधि च । ( ध. ५.१ )
अस्य पुष्पं दृष्टिरोगेष्वञ्जनार्थमुपयुज्यते । ( सुउ. १७.८–१० )
अस्य पल्लवाश्छर्दिनिग्रहणम् ( चसू. ४.१४ ( २८ )
अस्यास्थि पुरीषसंग्रहणीयम् ( चसू. ४.१५ ( ३१ )
अस्य फलं मूत्रसंग्रहणीयम् ( चसू. ४.१५ ( ३३ )
तथा रक्तपित्तशमनम् । ( सुउ. ४५.२३ )
बालाम्रं कषायकट्वम्लं रूक्षं वातास्रपित्तकृच्च । ( असंसू. ७.१८८ )
पर्यागताम्रं साम्लं स्वादु स्निग्धं गुरुमारुतघ्नमपित्तलं हृद्यं श्लेष्ममांसशुक्रबलप्रदं च । ( असंसू. ७.१८९–९० )
राजाम्रं ( आम्रभेदः ) तुवरं स्वादु विशदं शीतलं गुरु ग्राहि रूक्षं विबन्धाध्मानवातकृत् कफपित्तनुच्च ( भाप्र. )
कोशाम्रं ( आम्रभेदः ) बालं कोशाम्रं ग्राहि वातघ्नमलोष्णं गुरु पित्तलं च ( भाप्र. )
N.O.—ANACARDIACEAE
L.—MANGIFEKA INDICA
ENG.—MANGO
हिं.—आम
म.—आंबा
गु.—आंबो
बं.—आम
त.—मामरं, तितळं, मांति
न., मान० पलम्, द्वे पलार्धे आम्रम् ( चक. १२.९२ )
**–गन्धकृत्**–पु., वनस्पति० समाष्टीलः ( रापरि. ४.१ )
**–पल्लव**–पु. कोमलमाम्रपर्णम्, छर्दिनिग्रहणगणोक्तं द्रव्यम् । ( चसू. ४.१४–२८ )
**–पेशी**–स्त्री., शुष्कः आम्रसारभागः ( र. १६.१७–२४ )
**–शालि**–पु., शालि० रक्तशालिः ( रा. ६.८७ )

**आम्रातक**–पु., न., वनस्पति० आम्रसदृशफलवृक्षः "आम्राटकः", "वनाम्रः", "आम्राडकः" (चक्र) इत्यपि नामानि
तत्फलगुणाः—कषायं मधुरमम्लं शीतं गुरु वृष्यं रक्तपित्तकरं कफकरं किञ्चिद्वातकृद् दीपनं च ( ध. ५.१२ )
तथा बृंहणं तर्पणं बल्यं च, इदं विष्टभ्य जीर्यति ( सुसू. ४६.१५५ )
हृद्यगणोक्तमेकं द्रव्यम् । ( चसू. ४.१० )
N.O.—ANACARDIACEAE
L.—SPONDIASMANGIFERA
हिं.—अंबाडा
म.—आंबाडा
गु.—जंगली आंबो, अंबेडा
बं—आमडा

**आम्रान्त**–पु., वनस्पति० राजाम्रः ( ध. ५.११ )

**आम्रास्थि**–न., आम्रफलान्तर्गतं कठिनं बीजम्, बीजान्तर्गतमज्जा, पुरीषसंग्रहणीयगणोक्तं द्रव्यम् । ( चसू. ४.१५–३१ )

**आम्रास्थिमध्य**–न., आम्रफलमज्जा, पक्वातिसारजित् ( सुउ. ४०.७० )

**आयत**–वि., दीर्घम् ( सुचि. २४.४ )
**–यामा**–वि., दीर्घप्रहरा निशा । ( सुसू. ४६.४६८ )

**आयतन**– न., स्थानम् । (चसू. २९.३ )
स्थान अधिष्ठानहेतुः निदानम् । ( चनि. १.३ )

**आयताक्ष**–वि., रिष्टलक्षण० आयतेऽक्षिणी यस्य सः, विस्फारितनेत्रः । ( चइं. १०.९ )

**आयत्त**–वि., आधीनम् । ( अहृसू. ७.५३ )

**आयम**–न., आकर्षणम् । ( चचि. २८.४४ ) द्विधा-भवनम् । ( सुउ. ५१.१२ )

**आयम्यमान**–वि., आकृष्यमाणम् । ( सुउ. ५१.१३ )

**आयस्**–न., खनिज० तीक्ष्णलोहम् द्र० ' लोह. ' ( रा. १३.३० )
वि., लोहनिर्मितम् । ( र. ३.१७३ )

**–चूर्ण**–न., लोहचूर्णम्, गोमूत्रयुक्तत्रिफलासहितं पाण्डुरोगशमनम् । ( सुउ. ४४.२१ )

**–पात्र**–न., लोहपात्रम्, घृतमायसे पात्रे निदध्यात् । ( असंसू. १०.३६ )

**–पिण्डक**–पु., लोहपिण्डः । ( असंसू. ६.२६ )

**–पूटक**–न., लोहभवं पूटकम् । चसू. १४.२६ )

**–भाजन**–न., लोहपात्रम् । तत्र कषायरसप्रधान-मञ्जनं स्थापयेत् । ( अहृसू. ३०.१६; सुउ. ४४.३२–३३ ।

**–मल**–न., लोहकिट्टम्, इदं कुम्भाह्वयं पाण्डुरोगं हन्ति । ( सुउ. ४४.३२-३३ )

**आयाम**–पु., रोगलक्षणम्, अवयवानामनैच्छिक आतानः. ( चसू. १४.२४ )
वातरोग० स द्विविधः अन्तरायामो बाह्यायामश्च । ( चचि. २८.३५ )
दैर्घ्यम् । ( चवि. ८.११७ )

**–विस्तारसम**–वि., इष्टशरीरलक्षणम्. आयामो दैर्घ्यं, विस्तारस्तिर्यक्परिमाणं समं यस्य तत् शरीरम्. ( चवि. ८.११७ )

**–व्यायामोत्तुण्डिता**–स्त्री., बालनाभिरोग० नाड्या असम्यक्कल्पनोत्पन्ननाभिपाकजनितो दोषः, आयाम-व्यायामाभ्यां दीर्घपीनत्वयुता ( चशा. ८.४५ )
सुश्रुते ' तुण्डि ' इति संज्ञितो रोगः । ( सुशा. १०.४३ )

**आयास**–पु., अल्पक्रियया श्रमः । ( चसू. १७.६६ )
श्रमाधिक्यम्, असौ सर्वापथ्यानां श्रेष्ठः । ( चसू. २५.४० ) दुःखम् । ( चनि. ७.४ )

**आयुध**–न,, शस्त्रम् ( असंसू. ४०.१५ )

**आयुष्य**–वि., आयुषे हितम्, आयुर्वर्धनम् ( अहृसू. २.१६ )

**आयुस्**–न., शरीरेन्द्रियसत्वात्मसंयोगः, जीवितम् पर्यायाः–धारि, अनुबन्धः, नित्यगः ( चसू. १.४२ )

**आयुष्यम्**–प्राणलक्षणवायुना योगः । ( चवि. ८.९१ ) ( ३.३४ )

दीर्घायुः दीर्घजीवितम् । ( चइं. १२.८८ )
न., घृतम् ( रा. १५.२०२ )

**( आयुः ) क्षपण**–न., आयुर्विनाशः ( सुचि. २९.१५ )

**( आयुर् ) ज्ञ**–पु., आयुर्वेदज्ञः, आयुर्ज्ञानवान् वैद्यः ( असंशा. १०.३५ )

**–ज्ञानफल**–न., आयुर्मानज्ञानस्य फलम्, आयुर्ज्ञाना-फलं तु विद्यादनायुषि भेषजदानम् ( चइं.११.२८ )

**–प्रकर्ष**–पु., परमदीर्घायुष्ट्वम् । ( चचि. १ ( १.७३ )

**–प्रकर्षकृत्**–वि., परमदीर्घजीवितकरः ( चचि. १ ( ३ ) २३ )

**–प्रकर्षार्थ**–वि., आयुःप्रकर्षः प्रयोजनं यस्य ( चचि. १ ( ४ ) ३७ )

**–प्रद**–वि.,दीर्घायुःप्रदः । ( चचि. १ ( ३.४७ )

**–वृद्धिकृद्गण**–पु., दानं, दया, शीलं, सत्यं, कृत-ज्ञता, ब्रह्मचर्यं, मैत्री रसायनानीति पुण्यायुर्वृद्धि-कराण्येतानि ( र. ३०.११३ )

**–वेद**–पु., आयुषो वेदः भिषजां शास्त्रम् आयुर्वेदयती-त्यायुर्वेदः ( चसू. ३०.२३ )
आयुरस्मिन्विद्यत इति
आयुर्ज्ञायतेऽनेनेति
आयुरनेन प्राप्नोतीति ( सुसू. १.१५ )
हिताहितसुखदुःखादिभेदाच्चतुर्विधमायुः एतस्य चतुर्विधस्यायुषो हिताहितं मानमित्येतदस्मिन् व्याख्यातम्. ( अहृसू. १.२ )
अयं वातपित्तकफाश्रयः, ( कवि. १ ) आयुर्वेदो नामोपाङ्गमथर्ववेदस्यानुत्पाद्यैव प्रजाः श्लोकशत-सहस्रमध्यायसहस्रं च कृतवान स्वयम्भूस्तस्य पुन-रष्टधा विभजनं तेनैव कृतम् । ( सुसू. १.६ )
तस्याष्टावङ्गानि–कायचिकित्सा, शालाक्यं, शल्या-पहर्तृकं, विषगरवैरोधिकप्रशमनं, भूतविद्या, कौमारभृत्यकं, रसायनं, वाजीकरणमिति । ( चसू. ३०.२८ )
अयं चरक–सुश्रुत–काश्यपवाग्भटादिमहर्षिभिः संहितारूपेण परिष्कृतः, अस्य प्रयोजनम् व्याध्यु-पसृष्टानां व्याधिपरिमोक्षः स्वस्थानां स्वास्थ्यरक्षणं चेति ) ( सुसू. १.१४ )
आयुर्वेदोऽमृतानां जीवितप्रदानहेतूनां श्रेष्ठः । ( चक्र. चसू. २५.४० )

**–वेदरसायन**–न., टीका, संज्ञाविशेषः, हेमाद्रिणा कृता अष्टाङ्गहृदयस्य टीका ।

**–वैदिकसमय**–पु., संकेतविशेषः, आयुर्वेदे अस्य शब्दस्य अयमर्थो भवतीति ( चवि. ८.५४ )

(आयुष्) **काम**–वि., दीर्घायुष्कामः (चचि. २[४]४०) (चचि. १ [१] ५७)
(आयुष्) **कामरसायन**–न., रसायनविशेषः युक्तरथादि (सुचि. २८.९.२४)
**–कामीय**–वि., अध्यायसंज्ञा० (अहसू. १.१)
**–मत्**–वि., दीर्घायुः (सुसू. ३४.२१)
पु., वनस्पति० जीवकः (ध. ५.१५५)
**आर**–न., खनिज० पित्तलम् (१.१२.२१)
रौप्यम् (र. ५.२१९)
मुण्डलोहम् (रा. १३.२९)
वृश्चिकपुच्छकण्टकः (सुक. ३.५)
**–कूट**–पु., न., पित्तलम् (र. ५.२१९)
**आरग्वध**–पु., वनस्पति० तद्गुणाः तिक्तोऽतिमधुरः (रा) उष्णः, शीतः (रा) गुरुः त्रिदोषघ्नो, विशेषतः कफघ्नः कृमिशूलोदरप्रमेहमूत्रकृच्छ्रगुल्मज्वरकण्डूकुष्ठविष्टम्भघ्नश्च। (ध. १.२१९)
अयं मृदुर्मधुरशीतलश्च, हृद्रोगवातासृगुदावर्तादिरोगेषु बाले वृद्धे क्षीणे क्षते सुकुमारे मानवे चाधिकं पथ्यः। (चक. ८.४–५) कुष्ठघ्नगणोक्तमेकं द्रव्यम्। (चसू. ४.११.१३) फलमस्य विरेचनार्थं प्रयुज्यते। (चसू. २.१०) कषायोऽस्य विद्रध्यादिधावनार्थमुपयुज्यते (सुचि. १६.२४) मूलं वल्मीकलेपनार्थम्। (सुचि. २०.५०)
N. O.—LEGUMINOSAE, CACSALPINIACEAE
L.—CASSIA FISTULA
ENG.—PURGING CASSIA
हिं.—अमलतास
म.—बाहवा
गु.—गरमालो
बं.—सोन्दाल
त.—कोन्रै
फा.—खियारे चंबर
**आरग्वधादिगण**–पु., आरग्वधमदनगोपघोण्टाकण्टकीकुटजपाठापाटलामूर्वेन्द्रयवसप्तपर्णनिम्बकुरुण्टकदासीकुरुण्टकगुडूचीचित्रकशार्ङ्गे (ङ्ग) ष्टाकरञ्जद्वयपटोलकिराततिक्तकानि सुषवी चेति, अयं श्लेष्मविषापहः मेहकुष्ठज्वरवमीकण्डूघ्नो व्रणशोधनश्च। (सुसू. ३८.६–७) (अहसू. १५,१८)
**आरग्वधादिघृत**–न., सिद्धघृत० कफगुल्मापहमिदम् (सुउ. ४२.३७)
**आरग्वधीय**–वि., अध्यायसंज्ञा० (चसू. ३.१०)

**आरणिक**–पु., वनस्पति० अग्निमन्थः (ध. १.१११)
**आरण्यमाष**–पु., माष० तद्गुणाः–स्वजात्यपेक्षया रूक्ष, कषायोऽविदाही च (सुसू. ४६.३६)
**आरतकम्पन**–न., रोगलक्षण० अविश्रान्तकम्पनम् (चई. ७.२७)
**आरनाल**–न., पु., आसुत० काञ्जिकम् (चचि. २७.४६) निस्तुषीकृतैरामैः पक्वैर्वा संधितैर्गोधूमैरारनालं भवति, (भाप्र.)
**आरम्भ**–पु., प्रयत्नः कृतिः (चवि. ८.६७)
चिकित्सा (चनि. ३.१६)
**–फल**–न., कर्मफलं कर्मपरिणामो वा (चवि. ८.३८)
**–सामर्थ्य**–न., उपक्रमसामर्थ्यम्। (सुसू. ४०.३)
**आरा**–स्त्री., व्यधनोपयोगि शस्त्रम्। अष्टाङ्गुलायामं वा, अर्धाङ्गुलवृत्तास्यं तिलप्रमाणफलं दूर्वाङ्कुरपरीणाहं, गोपुच्छसन्निभवृन्तं शस्त्रं चर्मकाराणामारेव (सुसू. ८.४ (ड) अहसू २६.२५)
उपयोगः—कर्णपालीव्यधने (सुसू.१६.२)
पक्वामसंशये शोफव्यधने (अहसू. २६.२५)
अस्थनि वायौ निरुद्धे सति अस्थिवेधनार्थम् (सुचि. ४.९०) उन्मादे मदविनाशार्थं व्यथादाने प्रयुक्तमेतत् (सुउ. ६२.१९)
वारिचरवर्गीयः पक्षी (चसू. २७.४३)
**–कुट्ट**–न., खनिज० पित्तलम्। (रा. १३.१७)
**आराम**–पु., उपवनं, उद्यानम् (सुशा. ७.३)
**–शीतला**–स्त्री., वनस्पति० नन्दा, महानन्दा वा, तद्गुणाः—तिक्ता शीतला पित्तहारिणी दाहशोषशमनी विस्फोटव्रणरोपणी च। (रापरि.१०.५२)
**आराव**–पु.,शब्दः ध्वनिः (चवि. ३.७. (३)
**आरुक**–न., वनस्पति० फलविशेषः तद्गुणाः—मधुरं शीतं हृद्यमर्शःप्रमेहगुल्मरक्तदोषघ्नम्।
(ध. ५.३८) कार्तिकेयपुरे प्रसिद्धमिदम्, संपक्वफलं नात्युष्णं गुरु स्वादुप्रायं मुखप्रियं बृंहणं क्षिप्रं जरणशीलं नातिदोषलं च.
(चसू. २७.१३२); अनेनैव नाम्ना प्रसिद्धम्। (सुसू. २२.८ ड)
इदं हिमालयदेशे काबूलदेशे चोपलभ्यते
N. O.—ROSACEAE
L.—PRUNUS COMMUNIS
हिं.—आलुबुखारा
म.—अलबुखार, अरुक
गु.—आलु
बं.—आलुबखेरा

आरुष्कर–न., पु., वनस्पति० भल्लातकः। (सुसू. ४६.१९६)

–तैल–न., भल्लातकस्नेहः। (असंसू. ६.१०६)

आरुष्करोत्थतैल–न., भल्लातकस्नेहः (ध. ६.१३८)

आरेवत–पु., वनस्पति० आरग्वधः। (ध., १.२१९)

न., वनस्पति० पारेवतम्। (ध.५.६६)

आरोग्य–न., धातुसाम्यम्, प्रकृतिः सुखम् (चसू. ९.४)

तल्लक्षणम्—सत्वलक्षणसंयोगः, वैद्यद्विजातिषु भक्तिः, साध्यत्वं, निर्वेदाभावः (आत्मन्यवज्ञा) च, (चइ. १२.८७) आरोग्यलक्षणानि–अन्नाभिलाषो, भुक्तस्य सुखेन परिपाकः सृष्टविण्मूत्रवातत्वं, शरीरस्य लाघवं, सुप्रसन्नेन्द्रियत्वं, सुखस्वप्न–प्रबोधनं बलवर्णायुषां लाभः, सौमनस्यं, समाग्निता चेति (काखि. ५.६–८) आरोग्यं धर्मार्थकाममोक्षाणां मूलम्। (चसू. १.१५)

–वर्धनी–स्त्री., सिद्धयोग० इयं नागार्जुनप्रणीता गुटी एषा पाचनी, दीपनी, हृद्या, मेदोविनाशिनी मलशुद्धिकरी सर्वरोगेषु प्रशस्ता विशेषतः कुष्ठेषु। (र. २०.१११)

–शिम्बी–स्त्री., वनस्पति० आरग्वधभेदः कर्णिकारः (ध. १.१२१)

–सागर–पु., सिद्धियोग०, पाण्डुरोगार्शःश्वास–शिरोरोगवमिज्वराग्निमान्द्योदावर्तघ्नः (र. १९.६९–७६)

आरोग्यवृत्ती–स्त्री., आरोग्यस्य सातत्यम् (चवि.३.३६)

आरोट–पु., पारदबन्ध० सम्यक् शोधितो रसः आरोटः कथ्यते, अयं क्षेत्रीकरणे श्रेष्ठः; शनैर्व्याधिविनाशनश्च। (र. ११.६७)

वि., शुद्धम्। (र. २९.२३)

आरोहद्व्यधा–वि., उपर्युपर्यारोपितशस्त्रपदा। (सुशा. ८.१९)

आर्घ्य–न., मधु० अर्घा नाम मधुमक्षिकास्ताभिः संपादितं मधु आर्घ्यसंज्ञम्, तद्गुणाः—अतिचक्षुष्यं, कफपित्तहरं, रसे कषायं, पाके कटु, बल्यं, तिक्तमवातकृच्च। (सुसू. ४५.१३३–३८)

उष्णेन सहार्घ्यं न विरुध्यते। (ड.)

आर्त–वि., पीडितः (सुसू. ४६.४४४)

–गल–पु., स्त्री., वनस्पति० नीलसहचरः (सुउ. १७.५१)

कण्टकफलः (सुउ. ९.१९)

ककुभः सुगन्धमूलः, 'कौहा' इति पूर्वदेशे प्रसिद्धः। (सुसू. ३८.१०)

–गला–स्त्री., वनस्पति० नीलसहचरः (सुउ. १७.५१)

नीलसहचराख्य–आर्तगलगुणाः–कटुस्तिक्तः चक्षुष्यः कफमारुतघ्नः शूलकण्डूकुष्ठव्रणत्वग्दोषशोफघ्नः (रा. १०.४१८–४२०)

आर्तव–न., स्त्रीगतोपधातु० शोणितं, रजः (सुशा. २.५)

स्त्रीबीजम्। (सुशा. २.३६) शुक्रम् (सुसू.१४.१४३)

व्याख्या–रक्तमेव स्त्रीणां मासे मासे गर्भकोष्ठमनुप्राप्य त्र्यहं प्रवर्तमानमार्तवमित्याहुः (असंशा. १)

आर्तवस्य प्रतिमासं स्रावो भवति, द्वादशवर्षादारभ्य पञ्चाशत्पर्यन्तमत ऊर्ध्वं क्षयं याति (अहशा. १.७)

शुद्धार्तवलक्षणम्–प्रतिमासमुत्पद्यमानं पिच्छदाहार्तिरहितं पञ्चरात्रानुबन्धि नातिबहु नात्यल्पं च। (चचि. ३०.२२५)

गुञ्जाफलपद्मालक्तकेन्द्रगोपसंकाशं च। (चचि. ३०.२२६)

शशरुधिरलाक्षारसोपमं धौतं च विरज्यमानं शुद्धम्। (असंशा. १.२०)

क्षीणार्तवं नाम आर्तवस्य स्वप्रमाणहानिः; तल्लक्षणम्–यथोचितकालादर्शनमार्तवस्याल्पता योनिवेदना च (सुसू. १५.१२)

दुष्टार्तवमष्टविधम्–वातार्तवं, पित्तार्तवं, श्लेष्मार्तवं, रक्तेन कुणपार्तवं, श्लेष्मवाताभ्यां ग्रन्थ्यार्तवं, रक्तपित्ताभ्यां पूयार्तवं, मारुतपित्ततः क्षीणार्तवं, सन्निपातेन मूत्रपुरीषगंधि, ग्रन्थ्यार्तवं, पूतिपूयार्तवं, क्षीणार्तवं, मूत्रपुरीषार्तवं चासाध्यमन्यत्साध्यम्। (सुशा. २.५)

उपचितार्तवम्–काले मासेनोपचितमार्तवं वायुर्धमनीभ्यां योनिमुखं नयति, एतदीषत्कृष्णं स्निग्धं चास्ति। (सुशा. ३.१०)

आर्तवादर्शनसंप्राप्तिः दोषावृतमार्गत्वादार्तवं नश्यति (सुशा. २.२१)

आर्तववहे द्वे स्रोतसी–तयोर्मूलं गर्भाशयः आर्तववाहिन्यश्च धमन्यः तत्र विद्धाया वन्ध्यात्वं मैथुनासहिष्णुत्वमार्तवनाशश्च। (सुशा. ९.१२)

वि., यथोचितकालसंभवम्, वसन्ताद्यृतूद्भवम्। (चवि., ८.४)

–दुष्टि–(दोषः) स्त्री., लक्षण० आर्तवविकारः (असंशा. १.३०)

**-वह**-वि., गर्भाशयस्य रक्तवाहिन्यः ( सुशा. ४.२४ )
**-वाहिनी**-वि., गर्भाशयस्य रक्तवाहिन्यो धमन्यः ( सुशा. ९.१२ )
**-विषा**-वि., कीट० लूता, आर्तवे विषं यस्याः सा। ( सुक. ३.५ )

**आर्तवादर्शन**-न., लक्षण० आर्तवस्यादर्शनम्, गर्भोत्पत्तिलक्षणेष्वेकम्। ( चशा. ४.१६ )

**आर्तवार्ति**-स्त्री., आर्तवरोगः ( सुशा. २.१३ )

**आर्द्र**-न., वनस्पति० आर्द्रकम्। ( र. २२.८० )
**-पाणिन्**-वि., आर्द्रहस्तः; आर्द्रपाणिनमनुवासयेदित्यस्य भोजनादविलम्बितकालेऽनुवासयेदित्यर्थः। ( सुचि. ३७.५४ )
**-पेशिका**-स्त्री., आर्द्रकदीर्घखण्डम्।
**-माषा**-स्त्री., वनस्पति० माषपर्णी। ( ध. १.१३६ )
**-शाक**-न. वनस्पति०, आर्द्रकम्। ( ध. २.८५ )
**-संतानता**-स्त्री., आर्द्रः करुणरसभावितत्वात् त्यक्तकाठिन्यः संतानश्चित्तवृत्ति-परंपरा यस्येत्यार्द्रसंतानः, तस्य भाव आर्द्रसंतानता, परमकारुणिकत्वम्। ( हे० ) ( अहसू. २.४६ ) ( चचि. २४.१७६ )

**आर्द्रक**-न., वनस्पति०, कन्द० शुण्ठीविशेषः तद्गुणाः-कटूष्णं विपाके शीतलं लघु हृद्यं दीपनं रुचिदं स्वर्यं वृष्यं कफवातघ्नं शोफकण्ठरोगविबन्धानाहशूलघ्नम्। ( ध. २.८४ )
स्वादुपाकि ( र. १७.११८-१२० )

**आर्द्रा**-स्त्री., आर्द्रकम्, अतिविषा। ( ध. १.११ )
वि., अशुष्कम्, क्लिन्नम् ( र. २३.७०-७४ )

**आर्द्राख्य**-न. वनस्पति० आर्द्रकम्। ( ध. २.८५ )

**आर्द्राञ्जन**-न., रसाञ्जनम्, नेत्ररोगे प्रतिसारणार्थमुपयुज्यते। ( सुउ. १३.६-८ )

**आर्द्रिका**-स्त्री., वनस्पति० आर्द्रधानिका ( अरुण ) कुस्तुम्बरी ( हे० अहसू. ६.१०९ )

**आर्य**-पु., साधुवृत्तः। ( असंसू. ८.४ )
**-परिग्रह**-वि., आर्यः परिग्रहो नाम भार्यादिपरिवारो यस्य सः। ( असंसू. ८.४ )
**-प्रकृतिक**-वि., आर्यस्य श्रेष्ठस्येव स्वभावो यस्य सः। उदारमनस्कः, उदात्तचरितः ( चवि. ८.८ )

**आर्या**-स्त्री., श्रेष्ठ, प्रजा ( इं. असंउ. १ पृ. ४ )
**-तारा**-स्त्री., देवताविशेषः ( असंसू. ८.९४ )

**आर्यापराजिता**-स्त्री., विद्या० एषा मातुर्बालकस्य च रक्षित्री। ( असंउ. १ पृ. ४ )

**आर्यापर्णशबरी**-स्त्री., विद्या० एषा मातुर्बालकस्य च रक्षित्री। ( असंउ. १ ( पृ. ४ )

**आर्यावलोकितेश्वर**-पु., देवता० चिकित्साद्यारम्भेऽसावर्च्यते। ( असंसू. ८.९४ )

**आर्ष**-वि., सात्विककायेषु एकः ऋषिसत्वाधिष्ठितः। ( चशा. ४.३७ (२)
ऋषिकृतम्। ( चसू. ३०.१७ )
**-भी**-स्त्री., वनस्पति० कपिकच्छूः ( रा. ३.२०१ )

**आल**-न., खनिज० हरितालम् ( ड. सुउ. ५२.२२ )
वृश्चिकपुच्छकण्टकः। ( सुक. ३.५ )
**-विषा**-स्त्री., लूता० ( सुक. ८.१०९-११० )

**आलक**-न., खनिज० हरितालम्। ( र. ९.७४ )
वनस्पति० शालिपर्णीविशेषः ( ध. १.८८ )

**आलक्तक**-न., अङ्गरागोपयोगिद्रव्य० अलक्तकम्

**आलभ्य**-वि., वध्यः, आलभनयोग्यः। ( चवि. ८.५४ )

**आलम्बन**-न., आधारः। ( सुशा. ५.५३ )

**आलम्भ**-पु., मारणम्, यज्ञीयबलिः, हिंसनम्। ( चचि. १९.४ )

**आलर्क**-वि., उन्मत्तसारमेयसंबन्धि विषादि। ( असंउ. ४६, पृ. ३८१ )

**आलस्य**-न., लक्षण० कर्माभावः। ( चचि. ३.२८-२९ )
शक्तस्यापि कर्मण्यनुत्साहः। ( र. १९.४४ )

**आलाल**-वि., लालेव, समन्ताल्लालारूपम्। ( चनि. ४.२२ )
**-मेह**-पु., प्रमेहभेदः, कफदोषप्रधानः (चनि. ४.१०)
वाग्भटे अयं 'लालामेहः'। ( अहनि. १०.१३; असंनि. १० )
अस्मिन् प्रमेहे मूत्रं लालेव तन्तुयुतं पिच्छिलं भवति। ( चनि. ४.२२ )

**आलिकन्द**-पु., वनस्पति० मालाकन्दः। (रापरि. ७.४४)

**आलु**-पु.,न., वनस्पति० कन्दविशेषः। (चसू. २५.३९ )
इदं रक्तपित्तहरं शीतं मधुरं गुरु बहुशुक्रकरं स्तन्यवृद्धिकरं च ( सुसू. ४६.२९८-९९ )
इदं गुल्मे वर्ज्यम्। ( सुउ. ४२.७५-७६ )
कासालुः। ( रा.परि. ७.२८ )

**आलुक**-पु, न., आलुः। ( चसू. २५.३९ )
आलुकं कन्दानामहिततमम्।

**आलुड्**-क्रि., विलोडन। ( सुसू. ४३.३ )

**आलूक**-न., वनस्पति०, एलवालुकम्। ( ध. ३.७६ )

**आलेप**-पु., उपक्रम० लेपः। ( सुसू. १८.६ )

**आलेपन**-न., उपक्रम० लेपः ( चसू. १.९० )

**आलोचक**–पु., दृष्टिस्थोऽग्निः स एवाऽऽलोचकपित्तमित्युच्यते। (सुसू. २१.१०)
न., पित्त० दृष्टिस्थं रूपालोचनाच्चालोचकम्। (असंसू. २०.५)
खनिज० कान्तलोहप्रकारः (ध.६.२९)

**आलोडन**–न., द्रवीकरणम्, द्रुतत्वापादनम्। (चचि ७.४५)
मज्जनम् (र.२.१५७)

**आवन्तिक**–वि., अवन्तिदेशस्थितो जनः। आवन्तिकाः तैलाऽम्लसात्म्याः। (चचि. ३०.२१७)

**आवरण**–न., अवरोधः, गतिनिरोधः (चचि. २८.५९)

**आवर्त**–पु., वर्तुलम्, मण्डलम्। (सुशा. ५.४३)
मर्म० स्थानम्ः–भ्रुवोरुपरि संख्या–द्वौ आवर्तौ मानम्–अर्धाङ्गुलम्; प्रकारः–सन्धिमर्म, वैकल्यकरं च विद्धलक्षणम्–आन्ध्यं दृष्ट्युपघातो वा। (सुशा. ६.६)
कीट० वातप्रकोपणोऽयम्। (असंउ. ४३)
न., खनिज० माक्षिकम् (हेममाक्षिकम्) (ध. ३.१४८)

**आवर्तक**–पु., भ्रमिः (चइ. ८.६)
कीट० अष्टादश वायव्यकीटेष्वेकः (सुक. ८–६–८)

**आवर्तकी**–स्त्री., वनस्पति० कषाया; अम्ला; शीता; वृष्या; ऊर्ध्वाधोदोषनाशिनी, पित्तघ्नी, अतिसार-कुष्ठघ्नी च। (ध. १.१९८)
वनस्पति० अरणी। (ध. १.२२५)
वनस्पति० दन्तीभेदः, लता. (असंचि. २१)
नेत्ररोगेषु लिङ्गनाशोपद्रवविशेषः, श्वेतारुणा आवर्तवद् अनवस्थिता तारा एनां न विध्येत्। (असंउ. १७)

**आवर्तन**–न., संस्कार० (परिव.) द्रवीकरणम् द्रावयित्वा मर्दनेन एकीकरणम्–गालनम्। (र. ११.११०)

**आवसथ**–पु., न. गृहम्। (चचि. १. [२] ११)

**आवस्थिक**–वि., विकारविशेषितः बाल्याद्यवस्थाविशेषितः (कालः) (चवि. १.२२ (६)

**(आवस्थिकी)**–स्त्री., तत्तदवस्थाविशेषे प्रयोगोचिता (चिकित्सा क्रिया वा) (चचि. १५.१९८)
अवस्थानुरूपा चिकित्सा। (चचि. २९ १६५)

**आवान**–वि., शुष्कम्। (चसि. ६.८०)

**आवाप**–पु., प्रक्षेपः स्नेहादिषु द्रव्यप्रक्षेपः (चचि. २८.१७१)
द्रुते लोहादौ द्रव्यान्तरस्य प्रक्षेपः (र. ८.५४)

**आवास**–पु., संस्कारानन्तरं पुनः पूर्वस्वभावं प्राप्तः पारदः। (र. ८.१७)
पु., आश्रयः अधिष्ठानम्। (अहृशा. ३.९३)

**आविक**–वि., अविः प्राणिविशेषः उरभ्रः तस्येदमाविकम्। (चसू. २७.६२)
न., उरभ्ररोमन्यूतं वस्त्रम्, कम्बलः (सुसू. १८.१६)
**–शाटक**–पु., न., कम्बलः (चसू. १४.३७)

**आविघ्न**–पु., न., वनस्पति०–करमर्दकम् (ध. ५.१०२)

**आविद्ध**–वि., वक्रम्। (चवि. ८.२०)
**शिरस्क**–वि., ताडितशिरस्कः। (चनि. ८.८१)

**आविल**–वि., घनम्, कलुषम्, समलम् (अहृसू. २७.४१ सुउ. ६.१२)
**–दर्शन**–न., लक्षण० आकुलदर्शनम् (सुउ. ६.२६)
**–मूत्र**–वि., लक्षण० कलुषमूत्रलक्षणः (सुनि. ६.२६)
**–मूत्रता**–स्त्री., लक्षण० कलुषमूत्रता (अहृनि. १०.७)
**–लोचन**–वि., लक्षण० दूषिकास्राभ्यां मलिने लोचने यस्य। (सुक. ५.४१)

**आविलाक्ष**–वि., लक्षण० ओदनमण्डवदश्रुपूर्णेक्षणः।

**आविष्ट**–वि., ग्रस्तः (सुचि. ३६.७)

**आवी**–स्त्री., प्रसववेदना, गर्भनिष्क्रमणकाले जायमानः शूलविशेषः। (सुशा. १०.९ चशा. ८.३७)
योनेर्मूत्रकफप्रसेकादीन्यावीलिङ्गानि वा (सुनि. ८.१२)

**आवृत**–अभिसर्पता बलवता दोषेण अभिभूतो दुर्बलो दोषः प्रत्यावृत्तः सन् 'आवृतः' इत्युच्यते (सुचि. ५.२९ ड; चचि. २८.६५)
आच्छादितः (र. १२.५)
**–गति**–वि., रुद्धगतिः (चसू १७.८०)
**–मार्ग**–वि., (परिव०) प्रतिबद्धमार्गः। (सुशा. २.२१)
**–मार्गत्व**–न., अवरुद्धगतित्वम्। (चसू. २१.५)

**आवृत्ति**–स्त्री., आवरणम्। (र. २१.१८५)

**आवेगी**–स्त्री., वृद्धदारुकः। (ध. ४,१०७)

**–आवेधन**–(परिव०) न., ताडनम्, आघातः (अहृउ. ७.१०)

**आवेश**–पु., पिशाचराक्षसग्रहादिभिर्ग्रहणम्, येन अपस्मारोन्मादादयो विकाराः संजायन्ते (र. २३.६)
परपुरशरीरप्रवेशः, योगिनामैश्वरबलविशेषः। (चशा. १.१४१)

**आवेशन**—न., भूतविद्यासमुद्दिष्टोपचारविशेषः समन्त्र-सर्षपादिभिस्ताडनम्, भूताभिषंगोत्थज्वरे त्रय उपचाराः—बन्धः, आवेशनं, पूजनं च। (सुउ. ३९.२६५)

**आव्यध**—क्रि., ताडने। (अहृउ. ७.९०)

**आशय**—पु., शारीर० अवस्थानविशेषः अधिष्ठानं सञ्चय-स्थानम्, आधारः (सुशा. ५.८)

शरीरधात्ववकाशः स्रोतो वा आशयः (चवि. ५.९)

पुरुषाणामाशयाः सप्त—वाताशयः, पित्ताशयः, श्लेष्माशयो, रक्ताशयः, आमाशयः, पक्वाशयो, मूत्राशय इति स्त्रीणां तु अष्टमोऽधिको गर्भाशय इति (सुशा. ५.८)

शार्ङ्गधरे स्त्रीणां त्रयोऽधिका आशयाः उक्ताः धराशयः (गर्भाशयः) स्तन्याशयौ च। (शार्ङ्गधर प्रथमखंड)

काश्यपसंहितायां तु 'विण्मूत्रक्रिमिपक्वामकफवाताशया इति पूर्वतः किञ्चित् भेदेन सप्ताशया गणिताः (काखिल. ९.१६)

**—संभव**—पु., आशयानामुत्पत्तिः वायुराशय्य आसमन्तात् निवासं कृत्वाऽभ्यासयोगेनाऽऽशयसंभवं करोति। (सुशा. ४.३०)

**आशादिरिपुसंभव** पु., निर्यास० भूमिजो गुग्गुलुः (रा. १२.१८८)

**आशिस्**—स्त्री., आशंसनम्, आशीर्वादः प्रशंसा। (सुचि. १९.६९)

फलश्रुतिः (चचि. १ (२) ९)

**आशीविष**—न., मूलविषम्। (असंउ. ४१ इन्दु)

पु., दर्वीकरसर्पविशेषः भौमः। (सुक. ४.३४ (९)

दृष्टिनिश्वसनादिभिः, परमाशासनेन इच्छामात्रेण वाऽशुघातको दिव्यः सर्पः। (चचि. २३.१६०)

**आशीविषोपम**—वि., सद्योमारणे आशीविषदिव्यसर्पसंमाः, श्मशानचैत्यवल्मीकाश्रयाः चक्रवज्रगदाकुन्तत्रिशूलजटाधराः, रक्तास्यनयना ये भौमसर्पास्ते आशीविषोपमाः सन्ति। (असंउ. ४२)

**आशु**—(अव्य०,) शीघ्रम् (सुक. २.२२)

वि., विषगुणः शीघ्रं प्राणहननकारि (सुक. २.१९) द्रव्यगुणः तैलं यथाऽम्भसि तथा देहे शीघ्रं धावमानः। (भाव. पूर्वखण्ड)

**—कर**—वि., शीघ्रघाती। (अहृउ. ३५.७)

**—कारिन्**—वि., रोगगुणः दोषगुणो वा (सुनि. १.९ अहृनि. ३.१७)

शीघ्रमत्ययकारी, य आशु शरीरघातं करोति। (चनि. २.११)

द्रव्यगुणः—तैलं यथाऽम्भसि तथा देहे शीघ्रं धावमानः (सुसू. ४६.५२४)

**—कारितर**—वि., अतिशीघ्रं प्राणात्ययकारी (असंउ. ४०)

**—कोपित**—पु. व्रीहिः (रा. १६.११२)

**—क्रिया**—स्त्री., लघुहस्तता, शीघ्रशस्त्रकर्मकरणम्, शस्त्रवैद्यस्य गुणः; आशुक्रियया रोगिणः क्लेशो न भवति (सुसू. ५.१०)

**—ग**—वि., शीघ्रगामी। (चचि. २४.३०)

**—घातिन्**—वि. आशुमारकम्। (सुक. ३.३९)

**—जा**— वि)., शीघ्रं जायमाना। (सुनि. १४.६)

**—त्व**—न., आशुगत्वम्, शीघ्रप्रसरणशीलता। (सुसू. ४६.५२४; सुउ. ४७.५)

**—पाकिता**—स्त्री., शीघ्रपाककारित्वम्। (अहृसू. ९.१८)

**—भावन**—न., आशुगत्वम्, शीघ्राविष्करणशीलता। (चचि. २४.३२)

**आश्चोतन**—न., नेत्ररोगेषु उपक्रम० अक्षिपूरणम् नेत्रे औषधबिन्दुपातनं परिषेको वा (चचि. २६.२३९; सुउ. ९.४)

**—विधि**—पु.; निवातस्थानस्य तस्य आतुरस्य वैद्यो वामेन पाणिना लोचनमुन्मील्याऽपाङ्गदेशे भाजनं निधायाऽन्येन नाम दक्षिणकरेण पिचुवर्त्या शुक्त्या प्रलम्बमानया दश द्वादश वा बिन्दून् द्व्यङ्गुलात् नातिनिकटात् नातिदूरात् कनीनिकेऽवसेचयेत्। अनन्तरं कोमलेन वस्त्रखण्डेन शोधयित्वा चैलेन कोष्णजलप्लुतेनाऽक्षि मृदु स्वेदयेत्। तत्रापि वातकफयोः स्वेदनं पित्तरक्तयोस्तु शीतमिति। (अहृसू. २३.२–६)

स्नेहन–लेखन–रोपणभेदेन त्रिविधमाश्चोतनमुक्तम्, लेखने सप्ताऽष्टौ वा बिन्दवः, स्नेहने दश बिन्दवो, रोपणे तु द्वादश।

औषधधारणकालः—लेखनं वाक्शतं धार्यम्, स्नेहनं द्वे वाक्शते धार्यम्, रोपणं तु त्रीणि वाक्शतानि। (सुउ. १८.४६)

**आश्चोतनाञ्जनविधि**–पु., अध्यायसंज्ञा० ( अहसू. २३.१ )

**आश्मरथ्य**–पु., ऋषि०, रोगापहरणचिन्तनार्थं हिमवतः पार्श्वे समेतेषु महर्षिष्वेकः ( चसू. १.१० )

**आश्रम**–पु., तपस्विनां निवासस्थानम् ( सुशा. ३.२४ ) जीवनवृत्तिमुद्दिश्य कृत आयुषो भागविशेषः ब्रह्मचारि-गृहस्थ-वानप्रस्थ-यतयश्चत्वार आश्रमाः । ( सुसू. २९.५ )

**आश्रय**–पु., अधिष्ठानम् । ( चचि. ३.३५ )

**आश्लेष**–पु., परिष्वङ्गः, आलिङ्गनम् । ( अहसू. ७.६७ )

**आश्वबल**–वि., अश्वबलाया इदम् । ( सुसू. ४६. २६१ )

**आश्वयुज**–पु., आश्विनमासः । ( अहसू. ५,४ )

**आश्वलायन**–पु., ऋषि० रोगापहरणचिन्तनार्थं हिमवतः पार्श्वे समेतेषु महर्षिष्वेकः ( चसू. १.९ )

**आश्वास**–पु., आश्वासनम्, आश्वासो बलकराणां श्रेष्ठः । ( असंसू. १३.३ )

सांत्वन ( सुशा. २.२८ )

**–कर**–वि., सान्त्वनकरम्, प्राणबलकरम्, उदकमाश्वासकराणां श्रेष्ठम् । ( चसू. २५.४० )

**–जनन**–वि., मार्गादिशुष्कदेहानां प्राणजननम् ( सुसू. ४५.३ )

**आश्वासन**–न., उपक्रम० यथा योनियन्त्रपीडितस्य जातमात्रस्य शिशोर्मूर्च्छानिवारणार्थं प्राणजननार्थं प्राणानां प्रत्यानयनाय वा शीतेन जलेन सेचनम् । ( सुशा. १०.१३ )

**आसंग**–पु., रसाञ्जनम् । ( असंउ. ३० )

**आसंगिम**–पु., उपक्रम० विशेषः पञ्चदशकर्णबन्धेष्वेकः । ( सुसू. १६.१० )

**आसन**–न., उपवेशनम्, उपविष्टस्य स्थितिः ( सुसू. १९.१२ )

**आसन्दी**–स्त्री., आसन० ( काखिल. ११.२० )

**आसन्नप्रसवा**–वि., अद्य वा श्वो वा आसन्नः प्रसवः यस्याः सा ( गर्भिणी ) ( अहशा. १.७४ ) तस्याः लक्षणानि–क्लमो ग्लानिर्मुक्तबन्धने इव अक्षिणी निष्ठीविकामूत्रपुरीषबाहुल्यं शिथिलकुक्षिताऽधोगुरुत्वम् । अनन्नाभिलाषः उदरहृदयकटिबस्तिवङ्क्षणेषु वेदना, योन्यां च तोदभेदशूलस्फुरणस्रवणानि भवन्ति । तदनन्तरम् आवीनां प्रादुर्भावो गर्भोदकप्रवाहश्च । ( असंशा. ३.१६ )

**आसव**– पु., न., मद्यम्, आसवाश्च नानाविधौषधक्वाथगुडादि कृत्वा धातक्यादिचूर्णाधिवासिताः । ( सुचि. ६.२१ )

यद् अपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसवः । ( शाम. १०.२ )

**–द्रु**–पु., तालः ( रा. ९.९३ )

**–योनि**–स्त्री., आसवकारणम्, येन आसवः निर्मातुं शक्यस्तत्, धान्य-फल-मूल-सार-पुष्प-काण्ड-पत्र-त्वचोऽष्टौ चाऽऽसवयोनयः शर्करानवमीकाः एवं नवधान्यासवाः, सुरा-सौवीर-तुषोदक-मैरेय-मेदक-धान्याम्लाः षट्; फलासवाः षड्विंशतिः–मृद्वीका-खर्जूर-काश्मर्यधन्वन-राजादन-तृणशून्य-परूषका-ऽभयाऽऽमलक-मृगलिण्डिका-जाम्बव-कपित्थ कुवल-बदर-कर्कन्धु-पीलु-प्रियाल-पनस-न्यग्रोधाऽश्वत्थ-प्लक्ष कपीतनोदुम्बराऽजमोद-शृङ्गाटकशङ्खिनीफलासवाः ।

मूलासवा एकादश-विदारिगन्धाऽश्वगन्धा-कृष्णगन्धा-शतावरी-श्यामा- त्रिवृद्-दन्ती-द्रवन्ती-बिल्वो-रुबूक-चित्रकमूलाद्याः । सारासवा विंशतिः–शाल-प्रियका-अश्वकर्ण-चन्दन–स्यन्दन–खदिर–सप्तपर्णाऽर्जुनाऽसनाऽरिमेद-तिन्दुक—किणिही–शमी–शुक्ति-शिंशपा-शिरीष-वञ्जुल-धन्वन-मधूकाद्याः । पुष्पासवा दशः–पद्मो-त्पल-नलिन–कुमुद-सौगन्धिक-पुण्डरीक-शतपत्र-मधूक-प्रियङ्गु-धातकीपुष्पैर्दश; काण्डासवाश्चत्वारः–इक्षु–काण्डे-क्षिवक्षुबालिका-पुण्ड्रकाः ।

पत्रासवौ द्वौ–पटोल-ताडकपत्रासवौ । त्वगासवाश्चत्वारः–तिल्वक-लोध्रै-लवालुक-क्रमुकसम्भवाः । शर्करासव एकः, एवं चतुरशीतिरासवा भवन्ति । ( चसू. २५.४९ )

**आसवाम्ल**–न., अम्लद्रव्य० द्विक्षारसैन्धवादिकानां काञ्जिके मिश्रणं कृत्वाऽम्लत्वं यावद् भूमौ स्थापयित्वा जायमानः पारदस्य दीपनोपयोगी कल्पः ( र. ११.५० )

**आसादित**–वि., साधितम् ( सुचि. २८.२३ )

**आसिक्तक्षीरिक**–वि., अध्यायपादसंज्ञा० चरकसंहितायां चिकित्सास्थाने वाजीकरणाध्यायस्य द्वितीयपादस्य नाम ( चचि. २ (२) १ )

**आसीन**–पु., वनस्पति० तिन्दुकादिकफपित्तजिद्गणे एकं द्रव्यम्, तस्य फलगुणाः कषायमधुरं रूक्षं शीतलं गुरु लेखनं विबन्धाध्मानजननं स्तम्भनं वातकोपनम् । ( असंसू. ७.१८१–१८४ )

**आसीनप्रचलायित**–न., स्थिति० प्रचल इव आचरति आसीनस्य नाम उपविष्टस्य प्रचलायितं नाम अव-

घूर्णितम्; न तु प्रस्वपनं सर्वसार्विकया, गुणाः— आसीनप्रचलायितं तु अरूक्षमनभिष्यन्दि च भवति। उक्तं च खारणादिना—'इन्द्रियातिश्रमाद्रूक्षो वातलो जागरो निशि, तदालस्याद्दिवास्वप्नः स्निग्धः पित्तकफोल्बणः आसीनप्रचलः स्वप्नो निरभिष्यन्दिबृंहणः' इति ( अहसू. ७.५६ )

**आसुत**—न., शुक्तसन्धितं कन्दादिकम्, चिरकालावस्थानादम्लीभूतं कन्दादियुक्तं शुक्तम्, आसुतमुच्यते ( चसू. २७.२८४; अहसू. ५.७८ )

**आसुर**—वि., असुरस्येदम्। ( सुशा. ४.८९ )

**आसुरी**—स्त्री., वनस्पति० राजिका ( र. ३०.६३ )
न., लवण० बिडम् ( ध. २.२८ )
वि., राजसकायविशेषः
लक्षणम्—ऐश्वर्यवान् रौद्रः शूरस्तीव्रकोपः परगुणे मत्सरी एकाशी निर्दयः आत्मपूजको बह्वाशी च। ( चशा. ४.४५ ) ( सुशा. ४.८८ )

**—सत्व**—वि., राजसकाय०
आसुरकायः। ( सुशा. ४.८८ )

**आसूरी**—स्त्री., वनस्पति० राजिका ( र. ३०—६३; असंसू. ७ )
शाक० राजिका मण्डका वा फञ्जीचिल्ल्यादिगणे। ( चसू. २७.१०१ )

**आसेक्य**—पु., षण्ढविशेषः ( सुशा. २.४४ )
पित्रोर्बीजस्यात्यल्पबलत्वादासेक्यो भवति । सरेतस्कोऽयं षण्ढः। सोऽन्यपुरुषान्निजमुखे व्यवायं कारयित्वा ततः सिक्तं शुक्रं प्राश्य ध्वजोच्छ्रायं लभते। अतो 'मुखयोनिः' इति व्यपदिष्टः। ( सुशा. २.३८ )
चरके 'वक्री' नाम्नाऽस्य निर्देशः ( चशा. २.२० )
अष्टांगसंग्रहे मातुः पितुर्वाऽत्यल्पबलबीजत्वादासेक्योत्पत्तिर्निर्दिष्टा; न तु मातापित्रीरत्यल्पबीजत्वात्। द्वयोर्बीजदोषाद् वक्रध्वजस्योत्पत्तिः कथिता। ( असंशा. २ )

**आसोट**—पु., वृक्ष० वनस्पति० अक्षोटः ( चचि. ११.३७ )

**आस्तरण**—न., शयनादिषु यद् अजिनकम्बलादिकं भूमौ आस्तीर्यते तत् ( असंसू. ८.४३ )

**आस्तिक**—वि., दत्तमस्ति हुतमस्ति परलोकोऽस्तीत्येवं मतिर्यस्य सः ( सुसू. ३४.२२ )

**आस्तिक्य**—न., सात्विकगुणः, अस्ति धर्ममोक्षपरलोकादिकमिति मतिरस्येति आस्तिकः

**आस्थापन**—न., उपक्रम० निरूहबस्तिः। ( चसू. १.८४ )
वयःस्थापनाद्दोषस्थापनाद्वाऽऽस्थापनमित्युच्यते। ( असंसू. २८.६ )
आस्थापनद्रव्यप्रमाणं तु प्रथमे वर्षे प्रकुञ्चस्ततः परं प्रतिवर्षं प्रकुञ्चमभिवर्धयेदाषट् प्रसृतेभ्यः। ततश्चोर्ध्वं प्रसृताभिवृद्धिरष्टादशवर्षस्य तु द्वादशप्रसृता। इदं मानं सप्तति वर्षाणि यावत्। परं चातो दशैव। अन्ये पुनर्द्वादशप्रसृतार्हस्यापि अष्टाविच्छन्ति। ( असंसू. २८.२२ )
आस्थापनं भुक्तवते न देयम्। ( सुचि. ३८.१९.२० )

**—स्कन्ध**—पु., आस्थापनोपयुक्ता द्रव्यगणाः—ते च षट्—मधुराम्ललवणकटुकतिक्तकषायभेदात् ( चवि. ८.१३७ )

**आस्थापनोपग**—वि., आस्थापनक्रियायां सहायत्वेन अपायक्षपणपूर्वकं गुणवर्धनपूर्वकं च उपगच्छतीति, सप्तमहाकषायवर्गे एको गणः, त्रिवृद्बिल्वपिप्पलीकुष्ठसर्षपवचावत्सकफलशतपुष्पामधुकमदनफलानीति दशेऽमान्यास्थापनोपगानि भवन्ति। ( चसू. ४.१३ )

**आस्थाप्य**—वि., आस्थापनयोग्यो व्याधिः रोगी वा; विशेषतस्तु सर्वाङ्गैकाङ्गकुक्षिरोगवातवर्चोमूत्रशुक्रसङ्गबलवर्णमांसरेतक्षयदोषाध्मानाङ्गसुप्तिक्रिमिकोष्ठोदावर्तशुद्धातिसारपर्वभेदाऽभितापप्लीहगुल्मशूलहृद्रोगभगन्दरोन्मादज्वरब्रध्नशिरःकर्णशूलहृदयपार्श्वपृष्ठकटीग्रहवेपनाक्षेपकगौरवातिलाघवरजःक्षयार्तविषमाग्निस्फिक्जानुजङ्घोरुगुल्फपार्ष्णिप्रपदयोनिबाह्वङ्गुलिस्तनान्तदन्तनखपर्वास्थिशूलशोषस्तम्भाऽऽन्त्रकूजपरिकर्तिकाऽल्पाल्पसशब्दोग्रगन्धोत्थानादयो वातव्याधयो। विशेषेण महारोगाध्यायोक्ताश्चैतेष्वास्थापनं प्रधानतममित्युक्तम्। ( चसि. २. १६ )

**आस्फालन**—न., ताडनम्, उल्लालम्। ( र. २. १६४ अहसू. ५.९ )

**आस्फोट**—पु., अर्कः ( रा. १०.२५ )

**आस्फोटक**—पु., आफोटः ( रा. १०.२५ )

**आस्फोटन**—न., कम्पः, प्रहरणम्। ( सुउ. ६२.८ )

**आस्फोटा ( ता )**—स्त्री., वनस्पति० सारिवा। ( सुउ. ३९.२५७ )
अर्कः ( सुउ.३९.२५७
विष्णुक्रान्ता—( र. २९.७९ )

असरमल्लिका । ( चचि. २३.२४३ )
गिरिकर्णिका । ( र. २५.७ )
मुकुन्दा । ( असंउ. ६ )
अस्फुरमल्लिका । ( चचि. १५.१२५ )

**आस्फोत**–पु., न., वनस्पति० अर्कः रक्तार्कः (असंउ.३०)
सारिवा ( सुउ. ११.११ )
रक्तार्कः ( च. चि. ७.११२ )

**( आस्फोता )**–स्त्री., आस्फोटा ( सुसू. ११.११ )

**–पल्लव**–पु., न., अर्कस्य पल्लवः कल्कादिभिर्व्रणशोधनायोपयुज्यते । ( असंउ. ३५ )

**–मूलसिद्धघृत**–न., योग० अर्कमूलसिद्धं घृतम् । अस्य पानं मूषिक-विषापहं भवति । (सु. क.७.४८)

**आस्य**–न., शारीर० मुखम् । ( चवि. ८.११७ )
मुखकुहरम् । ( सुउ. ४१.२० )
प्रमाणतः पञ्चाङ्गुलमास्यम् ( चवि. ८.११७ )

**–गन्ध**–पु., मुखगन्धः । ( चसू. ५.२९ )

**–दाह**–पु., रोगलक्षणं मुखदाहः ( चसि. २.१३ )

**–पाक**–पु., रोग लक्षण० मुख-पाकः ( अहृसू. २.४ )

**–पूति**–स्त्री., रोगलक्षण० मुखदुर्गन्धः । ( असंसू. ३.३१ )

**–प्रसेक**–पु., रोगलक्षण० मुखस्रावः (असंसू.३.३१ )

**–बाष्प**–न., मुखफूत्कारजनितोष्मा; ईषदभ्याहतं नयनमास्यबाष्पसंस्वेदितं चेत् क्षणेन तन्नीरुजं भवति । ( सुउ. १९.५ )

**–मल**–पु., मुखस्थो मलः । ( असंसू. ३.३१ )

**–रोग**–पु., मुखरोगः ( चचि. २.२२ )

**–लेप**–पु., उपक्रम० मुखलेपः । ( सुउ. १९.३ )

**–विपाक**–पु., रोग०मुखदाहः चत्वारिंशत् पित्तविकारेष्वेकः ( चसू. २०.१४ )

**–वैरस्य**–न., रोगलक्षण० उचिताद् आस्यरसाद् अन्यथात्वम् । ( चसू. २८.९ )

**–शोफ**–पु., रोगलक्षण० मुखशोफः अर्शरोगे रिष्टलक्षणमेकम् ( असंशा. ११.१२ )

**–शोष**–पु., रोगलक्षण० मुखशोषः ( अहृसू. ६.१३२ )

**–संस्रवण**–न., रोगलक्षण० मुखे लालास्रावः ( चनि. ७.६, चशा. ४.१६ )

**–स्रवण**–न., रोगलक्षण० आस्यलालास्रावः

**आस्या**–स्त्री., आसनम्, स्थितिः, सुखोपविष्टस्य स्थितिः । ( सुचि., २४.७८ )
तद्गुणाः–वर्णकरी, कफकरी, स्थौल्यकरी, सौकुमार्यकरी सुखदा च ( सुचि. २४.७९ )

**–सुख**–न., उपाविष्टस्य चेष्टोपरमः तेन कृतं सुखम् ( चचि. ६.४ )

**आस्योपदेह**–पु., रोगलक्षण० मुखे मलोपलेपः ( चचि. १५,६८ )

**आस्योपलेप**–पु., रोगलक्षण० मुखलिप्तता । ( अहृसू. १६.२३ )

**आस्राव**–पु., स्रवणम् । ( चसू. ५.२८ )
नासारोग० अत्र जलोपमः श्लेष्माऽजस्रं नासापुटात्स्रवति । ( र. २४.२० )

**आस्वादन**–न., रसग्रहणम् । ( सुचि. २९.१० )

**आहत**–न., आहननम् आघातः " नपुंसके भावे क्तः " ( चसू. १३.९६) ( सुसू. २९.४५ )
रोगकारण० आघात । ( चसू. १३.१६ )

**आहरण**–न., यन्त्रकर्म० उपक्रम० आनयनम् निर्हरणं वा शल्यस्य । ( सुसू. ७.१७, सुचि. १.८ )

**–हेतु**–पु., ( शल्यस्य ) आहरणोपायः, महतामणूनां वा सर्वशल्यानां द्वावेवाऽऽहरणहेतू भवतः—प्रतिलोमोऽनुलोमश्च ( सुसू. २७.६ )

**आहरणोपाय**–पु., आकर्षणोपायः ( अहृसू. २८.१९ )

**आहव**–पु., संग्राम ( सुसू. २.१० )

**आहार**–पु., आह्रियते इति आहारः, अन्नपानादि सर्वम्, स च प्राणिनां प्राणहेतुर्मूलं पुनर्बलवर्णौजसां च । ब्रह्मादेरपि लोकस्य स्थित्युत्पत्तिविनाशहेतुः आहारः, आहारादेवाऽभिवृद्धिर्बलमारोग्यं वर्णेन्द्रियप्रसादश्च, तथा ह्याहारवैषम्यादस्वास्थ्यम् । ( सुसू. ४६.३ )
संक्षेपेण सर्वमन्ने प्रतिष्ठितम् ( चसू. २७.३५० )
स्वरूपम्–पञ्चमहाभूतात्मके देहे आहारोऽपि पाञ्चभौतिकः, सम्यग् विपक्वो भूत्वा स्वान् गुणानभिवर्धयति । स पुनः षड्रसात्मकः–मधुराम्ललवणकटुतिक्तकषायभेदेन गुणतः पुनर्गुरुलघुभेदेन द्विधा । ( सुसू. ४६.५२५ )
आहारगुणाः–आहारसम्पत्–बलवृद्धिकर–भावेष्वाहारः प्रीणनः सद्यो बलकृद्देहधारकस्तृप्तिकरः, उष्णं, स्निग्धं मात्रावद्वीर्याऽविरुद्धमित्याहारसाद्गुण्यम्; आहारकर्माणि–सद्यः प्रीणनो, बलकृद्देहधारकः, आयुष्करो, भ्राजिष्णुत्वकृत् समुत्साहकरः, स्मृतिकर ओजस्करोऽग्निवर्धनश्च । ( सुचि. २४.६८ )

आहारप्रकाराः–चतुर्विधमन्नम्–पेय–लेह्य–भोज्य–भक्ष्यभेदात्। ( सुसू. ४६.४९४ )
षड्विधम्–चूष्य–पेय–लेह्य–भक्ष्य–भोज्य–चर्व्य–भेदात्– ( भापू. ४ )
अष्टविधं पुनरन्नमिति केचित्। भोज्य–पेय–चोष्य–लेह्य–खाद्य–चर्व्य–निष्पेय–भक्ष्यभेदात्
( ध. ७.८६ )
स्वभावभेदेन आहारो द्विविधः गुरुर्लघुश्च; दिव्योदकरक्तशालिषष्टिकमुद्गैणलावादयो लघवः, क्षीरेक्षुव्रीहिमाषानूपामिषादयो गुरवः।
( असंसू. १०.५ )
तत्र सप्त आहारकल्पनाः–स्वभाव–संयोग–संस्कार–मात्रा–देश–कालोपयोग–व्यवस्थाभेदेन स्वास्थ्यास्वास्थ्यफलानां हेतुभूताः। ( असंसू. १०.४ )
आहारकालः—स्वस्थानस्थेषु दोषेषु स्रोतःसु विमलेषु च। जातायां च–प्रकाङ्क्षायामन्नकालं विदुर्बुधाः॥ ( काखिल० ५.१० )
विसृष्टे, विण्मूत्रे, विशदेन्द्रिये, गुरुत्वरहिते देहे, मधुराम्लधूमगन्धिवियुक्ते उद्गारे, निराकुले हृदयेऽधः प्रवहति वाते, भक्ताकाङ्क्षायामनायासश्रमरहिते, बुभुक्षोदयात्स्तब्धतारहिते कुक्षावाहारो दातव्यः। ( सुउ. ६४.८४ )
आहारमात्रा–आहारस्य सम्यग् युक्तं प्रमाणं पुनरग्निबलापेक्षि, दुर्बलाग्निविवृद्धये एककालं तथा हीनमात्र एव आहारो दातव्यः। (सुउ. २. ६४.६५) यावान् आहार एककालं भुज्यते पुरुषेण, स आहारराशिः ( असंसू. १०.९ ) तस्य प्रमाणं तु जठरस्य द्वौ भागावन्नेन प्रपूरयेत् जलादिना पानेनैकमंशं प्रपूरयेच्चतुर्थं तु पवनादीनामाश्रयमवशेषयेत्।
( अहसू. ८.४६ )
आहारगतिः परिणामश्च–स खलु विधिवत् अभ्यवहृतमन्नजातं प्राणेन वायुना कोष्ठमाकृष्टं द्रवैर्विभिन्नसंघातं स्नेहेन मृदूकृतमामाशयस्थं समानेन अभिसंधुक्षितोऽन्तरग्निः पचति यथा बाह्याग्निः स्थालीस्थतोयतण्डुलं पचति ( असंशा. ६.५७ )
आहारपरिणामकरा भावाः–पुनरूष्मा वायुः, क्लेदः, स्नेहः, कालः, समयोगश्च इति। तत्रोष्मा पाचयति, वायुरपकर्षति, क्लेदः शैथिल्यमापादयति, स्नेहो मार्दवं जनयति, कालः सर्वपर्याप्तिमभिनिर्वर्तयति। समयोगस्त्वेषां परिणामधातुसाम्यकरः संपद्यते। ( असंसू. १०.६१ )
( कोष्ठात् हृदयं प्राप्तः ) आहाररसो व्यानविक्षिप्तो यथास्वं सप्तसु धात्वग्निषु क्रमात् पच्यमानः स्वात्मभावप्रच्युतिसमनन्तरमेव प्राप्तरक्तादिधातुसंज्ञकः कालवदस्खलितबलप्रमाणो देहमूर्जयित्वा धातून् धातुमलांश्च पुष्णाति। ( असंशा. ६.६४ )
आहारविधिः—उष्णं स्निग्धं मात्रावत् जीर्णे वीर्याविरुद्धमिष्टे देशे, इष्टसर्वोपकरणं नातिद्रुतं, नातिविलम्बितमजल्पन्, अहसन् तन्मना भुञ्जीत। आत्मानं च सम्यगभिसमीक्ष्य भुञ्जीत। अयं विधिः अरोगाणामातुराणां च हिततमो भवति।
( चवि. १.२४ )
आहारविधिविशेषाऽऽयतनानि अष्टौ। प्रकृति–करण–संयोग–राशि–देशकालोपयोगसंस्थोपयोक्तार–इत्यष्टौ। ( चवि. १.२१ )
बुभुक्षितेन पुरुषेण वातपित्तप्रशमनाय प्रथमं मधुरो रसः ग्राह्यः सः पक्वाशयगतं वायुं जयति। अम्ललवणौ मध्यभोजनस्थौ पित्ताशयेऽग्निदीप्तिं कुरुतः अन्ते कफजयाय कट्वादयः। मतांतरं त्वादौ फलानि भुञ्जीत दाडिमादीनि, ततः पेयान् ततो भोज्यान् भक्ष्यांश्च अत्रापि घनं पूर्वं समश्नीयादिति केचिदाहुः। ( सुसू. ४६.४६० तः ४६३ ड )
बालानां पुष्टिवर्धकमन्नं–शालिषष्टिकानां विशेषतः पुराणानां निस्तुषैः क्षालितैर्भृष्टैस्तण्डुलैः साधिताः सस्नेहलवणाः द्रवाः लेह्याः, तथा च गोधूमानां यवानां वा चूर्णं यथासात्म्यं देशाग्निबलकालं क्षुधां चाऽभिसमीक्ष्य बालकमाशयेत्।
( काखिल. १२.१९–२०.२३ )
**–परिणामधातु**–पु., आहारपरिणामभवो धातुः रसाख्यः। ( चनि. १.२० ) ( चशा. ७.१५ )
**–प्रसादाख्य**–वि., आहारप्रसाद इति आख्या यस्य सः रसः। ( चमू. २८.४ )
**–मल**–पु., आहारस्य मलः, विण्मूत्रम् इत्यर्थः
( सुसू. ४६.५२८ )
वातोऽपि आहारमलः। ( चसू. २८.४ चक्र )
**–रस**–पु., रस गतौ धातुः अहरहः गच्छति इत्यतो रसः
( सुसू. १४.१३ )
तत्र पाञ्चभौतिकस्य चतुर्विधस्य षड्रसस्य द्विविधवीर्यस्याष्टविधवीर्यस्य वाऽनेकगुणस्योपयुक्तस्य आहारस्य सम्यक् परिणतस्य यस्तेजोभूतः सारः परमसूक्ष्मः स रसः इत्युच्यते, तस्य हृदयं स्थानम्।
( सुसू. १४.३ )

तत्र सर्वधातूनाम् अन्नपानरसः प्रीणयिता भवति ।
" रसजं पुरुषं विद्याद्रसं रक्षेत् प्रयत्नतः ।
अन्नात्पानाच्च मतिमान् आचाराच्चाप्यतन्द्रितः" ॥
( सुसू. १४.१२ )

**–विधिविधान**–न., आहारविषये नियमकथनम् ।
( चवि. १.३४ )

**–शक्ति**–स्त्री., आहारग्रहणस्य सामर्थ्यम्; रुग्ण-परीक्षणस्यैकं साधनम् आहारशक्तिः अभ्यवहरण-शक्त्या जरणशक्त्या च परीक्ष्यते ( चवि. ८.१२० )

**आहार्य**–पु., पञ्चदशकर्णबन्धेषु एकः । द्रष्टव्यः कर्णबन्धः
( सुसू. १६.१० )

न., आहरणीयम्, आकर्षणीयम् शस्त्रकर्म; शस्त्र-कर्मस्वेकम्

**–विषय**–शर्करास्तिस्रः, दन्तमलः, अश्मरी, शल्यं, मूढगर्भः, गुदे निचितं वर्चः इति आहार्यविषयाः,
( सुसू. २५.११–१२ )

**आहित**–वि., प्रयुक्तम् ( सुचि. २७.४ )

**आहुल्य**–न., वनस्पति०
तिक्तम्; शीतम्; चक्षुष्यम्; पित्त–दोषनुत्; मुखरुक्कुष्ठकण्डूतिजन्तु–शूलव्रणापहम्
आहुल्यं हलुराख्यं च गरं तखटं तथा । शिम्बी-फलं सुपुष्पं स्यादब्धुरं दन्तकाष्ठकम् । हेमपुष्पं तथा पीतपुष्पं काञ्चनपुष्पकम् । नृपमङ्गल्यकं चैव शरत्पुष्पं त्रिरेकधा ॥ ( रा. ४.३३–३४ )

## इ

**इक्षु**–पु., वनस्पति० तृण० तस्य गुणाः—
मधुरः, मधुरविपाकः, गुरुः, शीतः, स्निग्धः, बल्यः, वृष्यः, मूत्रलः, रक्तपित्तप्रशमनः कृमिकफकरश्च
( सुसू. ४५.१४८; ध. ४.१२० )
बालेक्षुः—कफकरः मेदकरः मेहकरश्च तरुणेक्षुः—स्वादुः, ईषत्तीक्ष्णः, वातहृत्, पित्तनुत्,
वृद्धेक्षुः—रक्तपित्तहरः क्षतहृत्, बलवीर्यकृत्
( भाप्र. इक्षुवर्गे; )
मूत्रजननानां श्रेष्ठः ( चसू. २५.४० )
श्रमहरद्रव्येष्वेकम् ( चसू. ४.१६ )
शुक्रशोधनद्रव्यम् ( चसू. ४.१२ )
इक्षुजातयः—पौण्ड्रकः, भीरुकः, वंशकः, श्वेतपोरकः, ( शतपोरकः ) कान्तारः, तापसेक्षुः, काष्ठेक्षुः, ( काण्डेक्षुः ); सूचिपत्रकः, नैपालः, दीर्घपत्रः, नीलपोरः, कोशकृत् इत्येता द्वादश, तासां गुणाः—
**पौण्ड्रकः भीरुकश्च**–सुशीतः, मधुरः, स्निग्धः, बृंहणः, श्लेष्मलः, सरः, अविदाही, गुरुः, वृष्यः ।
**वंशकस्तु** आभ्यां तुल्यगुणः किञ्चित्सक्षारश्च ।
**श्वेतपोरस्तु** वंशकवत् किञ्चिदुष्णः वातहा च ।
तथैव कान्तारतापसौ वंशकानुगतौ ।
**काष्ठेक्षुरपि** एवंगुणः परं वातप्रकोपणश्च, सूचिपत्रः, नीलपोरः, नेपालः, दीर्घपत्रकः । एते वातलाः कफ-पित्तघ्नाः, कषायाः विदाहिनः ।
**कोषकारः**–गुरुः शीतो रक्तपित्तक्षयापहः
( सुसू. ४५.१४९ तः १५५ )
**अवयवविशेषेणेक्षोर्माधुर्यम्**–इक्षो रसः अतीव मधुरो मूले, मध्ये मधुरः, अग्रेषु पर्वसंधिषु च इक्षूणां लवणो रसः स एव दन्तनिष्पीडितः, अविदाही, कफकरो, वातपित्तनिवारणो वक्त्रप्रह्लादनो वृष्यश्च ।
यान्त्रिकस्तु गुरुः विदाही विष्टम्भी च
( सुसू. ४५.१५५ तः ५८ )
इक्षुरसपानं श्रेष्ठं पाण्डुरोगे ( सुउ. ४४.१८ )
सर्वोदरेषु च ( असंचि. १७. )
रक्तपित्ते च ( चचि. ४.९; सुसू. ४६.४३१ )
इक्षुरसपूपकः–कृतान्नविशेषः इक्षुरसे भाविताः पोलिकाः गुर्व्यस्तर्पणा वृष्याश्च ( चसू. २७.२६९ )
इक्षुविकृतयः–इक्षोः जाताः फाणितगुडशर्करादयः
( सुसू. ४५.१५९ )
इक्षुशुक्तम्–इक्षुरसजन्यः आसुत–विशेषः स लघुः,
( असंसू. ६.१३६ )

N. O.—GRAMIMEAE
L.—SACCHAHRUM OFFICINARUM
ENG.—SUGAR CANE
हिं.—गन्ना, इख, उंख, गांडा, पौंडा
गु.—शेरडी
म.—ऊस. ऊंस
बं.—इक्षु. आक. कुशिर
ता.—इक्कु
फा.—नेशकर, केशकर.

**–काण्ड**–पु., काशः ( ध. ४.१३० ) ( असंसू. १४.३ )
**–कुसुम**–काशः ( ध. ४.१३० )
**–गन्ध**–पु., वनस्पति० क्षुद्रगोक्षुरः ( रा. १.१३१ )
**–गन्धा**–स्त्री., क्षीरविदारी ( ध., १.१४९ )
कोकिलाक्षः ( रापरि. ४.४९ )
**–ज**–वि., शाक० ( सुसू. ४६.२९३ )

**–जात**–पु., गुडः ( सुचि. ९.४४ )
**–दर्भा**–स्त्री., वनस्पति०, मधुरा, कषाया, रुच्या, सन्तर्पणी, कफपित्तहरा, स्निग्धा; लघुः। ( रा.परि. ८.४७ )
**–पत्रक**–पु., जूर्णा ( रा. १६.१६७ )
**–बालिका**–स्त्री., कोकिलाक्षः ( असंसू. १५.२२ )
**–बालिकारसमेह**–पु., श्लेष्मनिमित्तः प्रमेह-भेदः इक्षुमेहः ( चसू. १९.४(९) )
**–मूल**–न., इक्षोर्मूलम्, महाकषायवर्गे कण्ठ्य-गणे एकं द्रव्यम् ( चसू. ४.१० )
पञ्चतृणमूलेष्वेकम् ( चचि १.४४ )
पु., मोरटः ( चसू.४.१० )
**–मेह**–पु., प्रमेहरोग० अस्मिन् रोगे रुग्णः इक्षुरस–मिवातिमधुरं, शीतम् ईषत्पिच्छिलाविलं च मेहति। ( असंनि. १०.११ )
चिकित्सा—इक्षुमेहिन वैजयन्तीकषायं पाययेत। वैजयन्ती नाम अग्निमन्थः ( सुचि. ११.९ )
**–योनि**–स्त्री., इक्षुजाति० करङ्कशालिः अतीवमधुरः इक्षुरयम् ( रा. १४.१८५ )
**–वर्ग**–पु., इक्षुगणः, पौण्ड्रकादयः सर्वे इक्षवः ( अहसू. ५.४२.५४ )
**–वल्लरी**–स्त्री., क्षीरविदारी ( रा. ७.१९६ )
**–वल्ली**–स्त्री., क्षीरविदारी ( ध. १.१४९ )
**–वाटिका**–स्त्री., इक्षुजातिविशेषः, करङ्कशालिः, ( रा. १४.१८५ )
**–वाटी**–स्त्री., इक्षुवाटिका ( रा. १४.१८५ )
**–वालिका**–स्त्री., कोकिलाक्षः
इक्षुवालिका, खागालिका, स्तन्यजननगणे एकं द्रव्यम् ( चसू. ४.१२ )
काश तृणम् ( चसू. ४.१२ )
**–वालिकामेह**–पु., रोग० कफजप्रमेहविशेषः, इक्षु-रसतुल्यमूत्रत्वादिक्षुमेहः।
**–वालिकारसमेह**–पु., प्रमेहरोग० इक्षुमेहः कफप्रधानः प्रमेहभेदः ( चनि. ४.१० )
**–वालु**–स्त्री., वनस्पति० इक्षुवालिका ( असंक. ४ )
**–विकार**–इक्षुजातं द्रव्यम्; इक्षुविकृतिः गुडफाणित-शर्करादिः प्रमेहरोगे वर्ज्यः पु., ( सुचि. ११.५ )
**–विकृति**–स्त्री., इक्षुजातं द्रव्यम् , इक्षुविकारः ( चसू. ५.५ )
**–सार**–पु., गुडः ( ध. ४.१२८ )
**इक्षुक**–पु., वनस्पतिः० शरभेदः स्थूलशरः ( सुसू. ३८, ७५ ) ( ध. ४.१३५ )

**इक्षुर**–पु., इक्षुभेदः, कृष्णेक्षुः ( रा. १४.१८७ )
शरः, स्थूलशरः ( रा. ८.२११; ध. ४.१३५ )
कोकिलाक्षः ( रापरि. ४.४९ )
**इक्षुरक**–पु., कोकिलाक्षः ( चसू. ४.१२ )
काशः ( ध. ४.१३० )
वनस्पति० स्थूलशरः ( रा. ८.२१२ )
**इक्ष्वाकु**–पु., राज० यस्य पुत्रा राजतैलोपयोगेन गतिमा-युर्बलं सुखं च लेभिरे ( का० फक्करोगचिकित्सा० )
वैवस्वतमनोः पुत्रविशेषः ( चचि. १९.४ )
कटुतुम्बी ( चस. २.७ )
अस्याः पुष्पं वमनार्थमुपयुज्यते ( सुसू. ४३.७ )
क्षीरतुम्बी ( रा. ७.२३८ )
**–कल्प**–पु., इक्ष्वाकोः कल्पः चरकसहितायां कल्प-स्थाने तृतीयाध्यायस्य नाम ( चक. ३.१ )
**–कुसुम**–न., इक्ष्वाकुः कटुकालाबुः तस्याः पुष्पम्; वमनार्थमुपदिष्टम् ( सुसू. ४३.७ )
**इक्ष्वादि**–वि., इक्षुरादिर्यस्य सः ( वर्गः )
तृणपञ्चमूलपठितानां शरवर्जितानामिक्षुकुशकाश-शालिमूलादीनां वर्गः ( चसि. ८.४० )
**इक्ष्वारिका**–स्त्री., काशः ( असंचि. ५ )
**इङ्गितज्ञ**–वि., मर्मज्ञः - वैद्यः ( सुक. १.१८ )
**इङ्गुद**–पु., इङ्गुदी ( असंसू.३.२१ )
पुत्रजीवः ( चचि. १८.६९ )
**( इङ्गुदी )**–स्त्री., वनस्पति० मदगन्धिवृक्षः तस्य त्वक् शिरोविरेचनार्थमुपयुज्यते ( सुसू. ३९.६ )
तस्या गुणाः–कटुरुष्णा, रसायनी, वातघ्नी, कफघ्नी, जन्तुघ्नी, व्रणघ्नी, फेनिला, लघुर्मदगन्धिनी च। ( रा. परि. ८.१७ )
N. O.—SIMA ROUBACEAE
L.—BALANITES ROXBFRG
HIVI
ENG.—DELIL
हिं.–हिंगण, हिंगोट, इंगोट.
म.–हिंगणबेट
गु –हिंगर
बं.–हिंगोर, जियापुता.
त.–नानजुंडा. इंकुणमरं
**–क्षार**–पु., इङ्गुदीवृक्षस्य क्षारः भेषज द्रव्य० लौह-रसायने उपयुक्तः ( चचि. १ ( ३ ) १५ )
**–तैल**–न., इङ्गुदीबीजतैलम्, तच्च प्रमेहे शाकसि-द्ध्यर्थमुपयुज्यते। ( सुचि. ११.६ )

तस्या गुणाः—अनिलकफकृमिकुष्ठप्रमेहशिरोरोगापहरम् ( सुसू. ४५.११५ )

—त्वच्—स्त्री., इङ्गुदीवल्कलम्, धूम्रपाने उपयुक्तम् ( सुउ. ५२.२२ )

—फल—न., इङ्गुदीवृक्षस्य फलं, तस्य गुणाः—तिक्तमधुरं, स्निग्धोष्णं, कफवातघ्नं च ( चसू.२७.१४६ )
इङ्गुदीफलान्तर्गतो मज्जा रक्तपित्तशमनः ( सुउ. ४५.२६ )

—बीज—न., इङ्गुदीवृक्षस्य बीजम् ( सुचि. २५.२२ )

—मज्जन्—पु., इङ्गुदीफलान्तर्गतो मज्जा ( सुउ. ४५.२६ )

—मूल—न., इङ्गुदीवृक्षस्य मूलम्, ग्रन्थ्यादौ लेपार्थमुपयुज्यते ( असंउ. ३५ )

इच्छा—स्त्री., आत्मगुण० इदं मम अस्त्वित्यभिलाषः, कामः, अर्थाभिलाषः (सुशा. १.१७ सुसू. १.२५ (३)

इच्छाभिघात—पु., वाञ्छितस्याऽप्राप्तिः, वाञ्छितपदार्थोऽनवाप्त्या अरोचकोत्पत्तिः, इच्छाभिघातः; चित्तविपर्ययजारोचकस्य निदानविशेषः। एतेन कायाग्निरुपहन्यते ततश्चाऽरोचकः ( सुउ. ५७.१६ )

इज्या—स्त्री., यागः ( सुशा. ४.८१ )

इडाजात—पु., गुग्गुलुः ( रा. १२. १८८ )

इण्डरी—स्त्री., पक्वान्नः ( वै. श. सिं. ) पदार्थ० ( असंउ. ४९ )

इत्कट—पु., शर० ( इन्दुः, असंचि. १३ )
वनस्पति० महती खगाली ( सुचि. ७.९ ड. )
सूक्ष्मपत्रिका दीर्घलोहितयष्टिका काण्डविशेषरूपा 'इकडी' इति लोके (अरुणदत्तः अहृसू. १५.२४)
तृणविशेषः, स्तन्यजननगणे एकं द्रव्यम् ( चसू. ४.१२ )

—मूल—शरभेदविशेषस्य मूलम्; स्तन्यजननं मूत्रविरेचनीयं च ( चसू. ४.१२.१५ )

इन्दीवर—न., नीलोत्पलं, नीलपद्मम् ( सुशा. ४.७२ )
दीर्घपत्रो बहुलपुष्पः कर्णपूरकाख्यः शरबालिकाभेदः (सुचि. ७.११.१७)
कुरण्टकभेदो दीर्घपत्रो बहुलपुष्पः क्षुपविशेषः ( सुसू. ३८.१२ )

इन्दीवरी—स्त्री., वनस्पति० गुणाः—कटुः शीता पित्तश्लेष्मापहारिका चक्षुष्या कासदोषघ्नी व्रणकृमिहरा च
इन्दीवरी युग्मफला दीर्घवृंतोत्तमारणी।
पुष्प-मञ्जरिका द्रोणी करम्भा नलिका च सा॥
( रापरि. ३.२७ )

—कन्द—पु., कमलकन्दः, कन्दवर्गे एकः ( सुसू. ४६.२९८ )

इन्दीवरिणी—स्त्री., वनस्पति० उत्पलिनी ( रा. १०.२५० )

इन्दु—पु., अष्टाङ्गसंग्रहस्य, अष्टाङ्गहृदयस्य च 'शशिलेखा'-टीकायाः कर्ता, आचार्यवाग्भटस्य शिष्येषु प्रधानः।
संख्यासंकेतः; एक संख्याया संकेतशब्दः ( र. २६.५४ )
कर्पूरः, ( ध. ३.३१ )
चुक्रिकाशाकम् ( र. १६.५८ )
प्रसारणी ( र. १६.५८ )

—कमल—न., कुमुदम् ( रा. १०.२४६ )

—कलिका—स्त्री., केतकी ( रा. १०.२ )

—खण्डा—स्त्री., कर्कटशृङ्गी ( रा. ६.१११ )

—पुष्पिका—स्त्री., कलिकारी ( फ. ४.९ )

—रत्न—न., मौक्तिकम् ( र. २३.३९ )

—राजी—स्त्री., बाकुची ( असंउ. ४४ )

—रेखा—स्त्री., बाकुची ( र. १८.४७ )

—लेखा—स्त्री., बाकुची ( ध. १.१६६ )

—लोहक—न., रौप्यम् ( रा. १३.८ )

—शफरी—स्त्री., अश्मन्तकः ( रा. ९.२९० )

इन्दुक—पु., अश्मन्तकः ( रा. नि. ९.२९० )

—कन्द—पु., शाक० केसुककन्दः ( चसू. २७.११४ )

इन्द्र—पु., देवता० देवानामधिपतिः भरद्वाजाय आयुर्वेदं दत्तवान् ( चसू. १.३ )
आयुर्वेदतन्त्रं ब्रह्मा प्रोवाच ततः प्रजापतिः अधिजगे तस्माद् अश्विनौ अश्विभ्याम् इन्द्रः भृग्वादिमहर्षिभ्यो रसायनं वाजीकरणं चोपदिदेश ( सुसू. १.२०; चचि. १.४ )
श्लेष्मप्रकृतिदेवः ( सुशा. ४.७६ )
हस्तयोरधिदैवतमिन्द्रः ( सुशा. १.७ )
'सत्वमिन्द्रोऽभिरक्षतु' इति रक्षामन्त्रः, ( सुसू. ५.२६ )
सूर्यः ( असंशा. १२. )
इन्द्रनीलसंज्ञको मणि० ( सुसू. ४६.३२९.३३० )

—कील—पु., स्थान० इन्द्रार्थं कीला न्यस्यन्ते यस्मिन् देशे स प्रदेशः यागार्थं निखातयूपोपलक्षितः। ( सुचि. २४.८९ )

—गोप—पु., मृगनक्षत्रे संजातो रक्तवर्णकः लघुकीट० अस्य गुणाः—उष्णो, रूक्षोऽधोवभेदकतन्द्रादिकफप्रधानरोगनाशनो, योनिशैथिल्यनाशनश्च। ( र. २२.१२५ ) ( चचि. ३०.२२६ )

इन्द्रगोपकसंयुक्तं केतकीस्वरसं सैन्धवं स्वर्णपुष्पिकां वैक्रान्तं च सर्वं भाण्डे विनिक्षिपेत्सप्ताहं स्वेदयेत्तस्मिन्; अनया रीत्या वैक्रान्तद्रुतिर्भवति (र. ४.७६)

**–गोपक**–पु., इन्द्रगोपः (चचि. ३०.२२६)

**–चिर्भिटा**–स्त्री., इन्द्रवारुणी (रा. ३.३७१)

**–द्**–पु., सप्तविंशतिसंख्याकेष्वन्यतमो रससिद्धिप्रदायकः (र. १.३)

**–दारु**–पु., देवदारुः (ध. १.७६)

**–धनुस्**–न., मेघावृते नभसि सूर्यकिरणैः संजाता सप्तवर्णयुता भासमाना धनुराकृतिः (असंसू. ४.४१)

**–धूम**–पु., प्राचीनो रसाचार्यः (र. ६.४९–५३)

**–नील**–पु., नीलवर्णो मणि० (असंसू. ४.४०)

**–पर्णी**–वनस्पति० इन्द्रपुष्पी, लाङ्गलिकी (सुचि. १७.१५)

**–पुष्पी**–स्त्री., वनस्पति० कण्टकीकृष्णपुष्पकरञ्जः वृक्षः (सुसू. ३८.१६)
लाङ्गलकी, कलिकारी इत्यर्थः (सुसू. ३८.१७)

**–बस्ति**–पु., मर्म० पार्ष्णि प्रति त्रयोदशाङ्गुले जङ्घामध्ये अधःशाखायां तथैव करमूलंप्रति प्रकोष्ठमध्ये ऊर्ध्वशाखायाम् स्थितं कालान्तरप्राणहरमर्धाङ्गुलपरिमितं मांसमर्मेदम्, तत्र विद्धे सति शोणितक्षयेण मरणं भवति। **संख्या**–प्रतिशाखमेकम् एवं चत्वारि (सुशा. ६.६)

**–बीज**–न., इन्द्रयवः कुटजबीजम् (सुसू. ४४.२७)

**–मद्**–पु., जलौकारोगः असम्यग्वमनात् सततं च निपातनाज्जायमानोऽयं जलौकसां रोगः; अष्टांगहृदये 'रक्तमद' इति नाम्ना तस्य निर्देशः, अनेन रोगेण पीडिता जलौका न चेष्टते सलिलं प्राप्य च सीदति; रक्तावसेचने तस्याः प्रयोगो निषिद्धः (सुसू. १३.२२; अहृसू. २६-३९)

**–मुष्कक**–न., कन्दविषः (असंउ. ४०)

**–यव**–पु., कुटजबीजम्, कुटजवृक्षकस्य यवाकृतिबीजवत्त्वात्।
गुणाः–कटुस्तिक्त उष्णः (शीतः इति राजनिघण्टौ) दीपनः रक्तार्शोनाशनः अतिसारवमिशूलघ्नः, त्रिदोषघ्नश्च। (चक. ५.४ सुसू. ३८.६ ध.२.१५)
ENG.-SEEDS OF HOLARRHENA ANTI DYSENTERICA

**–लुप्त**–न., रोग० क्षुद्ररोग०
रोमकूपानुगं पित्तं वातेन सह मूर्च्छितं, रोमाणि च्यावयति, ततः श्लेष्मा स शोणितो रोमकूपान् रुणद्धि ततोऽन्येषां रोम्णामसंभवः (सुनि. १३.३३.३४)
इन्द्रलुप्तं श्मश्रुणि भवति, इति कार्तिकः। (मानि.)
पर्यायशब्दाः–खालित्यं, रुज्या, रुह्या, खल्लिः (अहृउ. २३.२६)
लवणरसस्याऽतियोगोऽस्य एको हेतुः (चसू. २६.४३ (३)
इन्द्रलुप्ते वाग्भटमतेन केशानां शातनं सहसा भवति (अहृउ. २३.२६९)
तत्र चिकित्सा–इन्द्रलुप्ते स्निग्ध–स्विन्नस्य मूर्ध्नि सिरां मोक्षयेत्। शिलाकासीसतुत्थकैः समरिचैः कल्कैर्लेपः कार्यः, अथवा कुटन्नटदारुकल्कैर्लेपनं शस्तम्, अवगाढं प्रच्छयित्वा गुञ्जाकल्कैर्मुहुर्मुहुर्लेपयेत्। (सुचि. २०.२४ तः २६)
तथैव इन्द्रलुप्तापहम् अभ्यञ्जने शस्तं मालत्यादितैलम् (सुचि. २०.२६)
ALOPESIA

**–वज्राग्नि**–पु., विद्युत्तेजोदग्धः आगन्तुकरोगः (सुसू. १२.३९)

**–वडवा**–स्त्री., जातहारिणी, रेवतीग्रह० (का० रेवतीकल्प० ५५)

**–वल्लरी**–स्त्री., इन्द्रवारुणी (रा. ३.३७२)

**–वल्ली**–स्त्री., वनस्पति० मत्स्याक्षकः मत्स्याण्डकः गण्डदूर्वा इति वा (सुउ. २८.७)
वनस्पति० ऐन्द्री (असंउ. ६)

**–वारु**–पु., इन्द्रवारुणी (ध. १.२४८)

**–वारुणिका**–स्त्री., इन्द्रवारुणी (र. १२.२९७–९८)

**–वारुणी**–वनस्पति० लता० (ध. १.२४८)
गुणाः–कटुका–तिक्ता–अत्युष्णा (ध) शीता (रा) रेचनी–कफघ्नी–कृमि–व्रणोदरगुल्मकुष्ठज्वरापहा।
N. O. CUCURBETACEAE
L.—CETRULLUS COLOCYNTHIS
ENG.—BITTER CUCUMBER
हिं.—इन्द्रायण, फरफेंदु, बडी इन्द्रफला
म.—कडु **इन्द्रावण, कवंडळ,** लघु **इन्द्रावण.**
गु.—इंदरवाणियु, गावसुकणु, इन्द्रवरुणा.
बं.—राखालशशा, राखालताडु, कुंदरुकीबडमाकाल.
त.—पेयिकोम्मट्टी.
फा.—खुर्जयल्तल्ख.

–**वृक्ष**–पु., कुटजः ( सुउ. ६१.३४ )
देवदारुः ( ध. १.७७ )

–**वृद्धा**–स्त्री., रोग० क्षुद्ररोगेष्वेकः
लक्षणम्–वातपित्तोत्था पद्मपुष्करवत् मध्ये पिडकाभिः समाचिता पिडकी ( सुनि. १३.११ )
अ. संग्रहे तु सैव विद्धेति नाम्नोल्लिखिता ( असंउ. ३६ )
तत्र चिकित्सा–पित्तजविसर्पवत् क्रिया कार्या, मधुरौषधैः सिद्धैर्घृतैः रोपणीया ( सुचि. २०.७–८ )

–**सुरा**–स्त्री., इन्द्रवारुणी ( सुचि. ३७.३४ )

–**सूनु**–पु., अर्जुनः ( रानि. ९.१९२ )

**इन्द्रा**–स्त्री., कोकिलाक्षः ( चक. ७.१९ )

**इन्द्राक्ष**–पु., ऋषभकः ( ध. १.१२५ )

**इन्द्राणिशाक**–न., वनस्पति० मत्स्याक्षकम् निर्गुण्डी वा ( चचि. २१.९० )

–**घृत**–न., लशुनादिसिद्धघृत० राजयक्ष्मचिकित्सिते उपयुक्तम् ( काचि. राजयक्ष्माचिकित्सा )

**इन्द्राणी**–स्त्री., इन्द्रवारुणी ( र. २१.२७ )
शेफाली निर्गुंडी ( रा. ४.११९ )
भद्रैला स्थूलैला ( रा. ६.७१ )
कृष्णनिर्गुण्डी ( चचि. २१.८५ )

**इन्द्राभ**–पक्षि–पु., मल्लकङ्कः ( चसू. २७.४९ )

**इन्द्रायुध**–न., शक्रधनुः ( सुसू १३.११ )
हीरकम्, खनिजोपल० ( रा. १३.५८ )
विष० कन्दविष० ( असंउ. ४० )

**( इन्द्रायुधा )**–स्त्री., सविषजलूकानामन्यतमा, इन्द्रायुधवदूर्ध्वराजिभिश्चित्रिता ( सुसू. १३.११ )

**इन्द्राह्वा**–स्त्री., इन्द्रवारुणी ( ध० १-२४८ )

**इन्द्रिय**–न., पुरुषस्य विषयज्ञानार्थं कर्मार्थं वा साधनीभूतः शारीरभावविशेषः । अवयवविशेषो वा इन्द्रियं द्विविधं ज्ञानेन्द्रियं कर्मेन्द्रियं च । तत्र श्रोत्रत्वक्चक्षुर्घ्राणरसनसंज्ञकानि पञ्च ज्ञानेन्द्रियाणि बाह्यानि, मनश्चाऽन्तरिन्द्रियं, वाक्पाणिपादपायूपस्थानि पञ्च कर्मेन्द्रियाणि, एवम् एकादशेन्द्रियाणि उभयात्मकं मनः ( सु. शा. १.४ )
तानि पाञ्चभौतिकान्यस्मद्दर्शने प्रतिक्षणं क्षीयमाणानि च ( चचि. १५.१२ चक्र। )
इन्द्रियोत्पत्तिः–वैकारिकादहङ्कारात्तैजससहायात् कफरक्तवाहिनां स्रोतसां महाभूतानां च प्रसादाद्वा ( सुशा. १.४; असंशा. ५.५० )
बुद्धीन्द्रियम् ( चसू. ८.७; चशा. १.२२ )



केवलचक्षुरादिपंचज्ञानेन्द्रियाणि
शुक्रम् ( चचि. ३०.१२६; सुउ. ५५.४ )
मूत्रेन्द्रियम्, मूत्रमार्गः ( का. मूत्रकृच्छ्रचि. )
रिष्टम्, अरिष्टम् वा ( चइ. १.१ )
इन्द्रशब्देन प्राण उच्यते, तस्यान्तर्गतस्य लिङ्गं रिष्टाख्यम् ( चइ. १.१ चक्र. )
पु., इन्द्रियाध्यायः इन्द्रियस्य रिष्टरूपस्य प्रतिपादकोऽध्यायः इन्द्रियः ( चवि. ८.१२४; चइ. ११ चक्र. )
भौतिकाधिष्ठानशक्तिरूपम् इन्द्रियम् ( सुसू. १५. ४०. ड. )

–**ज**–वि., इन्द्रियजातः व्याधिः ( चसू. २८.२९ )

–**दौर्बल्य**–न., रोगलक्षण० इन्द्रियगतशक्तिन्यूनत्वमिन्द्रियाधिष्ठानदौर्बल्यं वा ( सुसू. २०.१९ )

–**द्रव्य**–न., ज्ञानेंद्रियाणां प्राधान्येनाऽऽरम्भकं द्रव्यम्, पञ्चेंद्रियद्रव्याणि खं वायुर्ज्योतिरापो भूरिति। ( चसू. ८.९ )
इन्द्रियपोषकद्रव्यम्, पुष्यन्ति त्वाहाररसात् रसरुधिरपंचेंद्रियद्रव्याणि धातुप्रसादसंज्ञकानि । ( चसू. २८.४ )

–**प्रवृत्ति**–स्त्री., स्वस्वविषयोपलब्धौ इन्द्रियाणां प्रवर्तनम् ( चसू. ८.५ )

–**प्रसाद**–पु., इन्द्रियाणां स्वस्वविषयग्रहणसामर्थ्यम् ( सुसू. ४६.३ )

–**प्राणवह**–वि., इन्द्रियसंचारी प्राणो येन मार्गेण वहति ( गच्छति ) स गमनमार्गः ( चसि. ९.४ )

–**बुद्धि**–स्त्री., तेन तेन कारणभूतेन चक्षुरादिना इन्द्रियेण जायमानं ज्ञानम् यथा, चक्षु–बुद्धिः पुनः क्षणिकं नामचाक्षुषं ज्ञानं तच्च निश्चयात्मिका च; ( चसू. ८.३–१२ )

–**बोधन**–वि., इन्द्रियपाटवकरम् ( सुसू. ४५.१७१ )

–**वध**–पु., लक्षण० ज्ञानेन्द्रियाणां कार्यनाशः कुपितवातस्य लक्षणम्, इन्द्रियवधं इत्यनेनाश्रुत्य घ्राणादर्शनारसनास्पर्शानि वेदितव्यानि ( चचि. २८.२९; सुनि. १.२४ )

–**विज्ञान**–न., इन्द्रियगतरिष्टविज्ञानम् ( चइ. ४,२७ )

–**शुद्धि**–स्त्री., इन्द्रियाणां पाटवं, वैमल्यम् ( चसू. १६.६ )

–**संशुद्धि**–स्त्री., घ्राणादीन्द्रियगतदोषशोधनम् ( चसू. ५.३७ )

**–संश्रय ( संभव )**–वि., बाह्येन्द्रियजन्यम् ( चइ. ४.५ )

**–स्थान**–न., स्थानविशेषः, इन्द्रियस्य रिष्टस्य स्थानमिन्द्रियस्थानम् ( चइ. १.१ )

**इन्द्रियाच्छय**–न., चक्षुरादीनां स्वस्वविषयेषु पाटवम् ( चसि. १.५१ )

**इन्द्रियात्मन्**–पु., इन्द्रियाणां श्रोत्रादीनां स्वस्वक्रियाहेतुः–( आत्मा ) ( चशा. ४.८ )

**इन्द्रियाधिकार**–पु., इन्द्रियम् अधिकृत्य कृतं प्रकरणम् ( चसू. ८.३ )

**इन्द्रियाधिष्ठान**–न., शारीर० ज्ञानेन्द्रियस्य आश्रय–स्थानावयवः, यथाऽक्षि चक्षुरिन्द्रियस्याधिष्ठानम् ( चसू. ८.३ )

**इन्द्रियानीक**–न., ज्ञानेन्द्रियाणामानीकं समूहः तस्य रिष्टान्यधिकृत्य कृतोऽध्यायः चरकसंहितायामिन्द्रियस्थाने चतुर्थोध्यायस्य नाम ( चइ. ४.१ )

**इन्द्रियाभिग्रह**–पु., इन्द्रियेऽधिष्ठानम्, मनसः एकं कर्म ( चशा. १.२१ )
( चशा. १.२२; चसू. ८.३ )

**इन्द्रियायतनदोष**–पु., ज्ञानेन्द्रियस्थानस्य रोगो ज्ञानेन्द्रियस्थानविनाशो वैकल्यं वा ( सुसू. २४.९ )

**इन्द्रियार्थ**–पु., चक्षुरादिज्ञानेन्द्रियग्राह्यो विषयः, शब्दस्पर्शरूपरसगन्धाः पञ्चविषयाः

**इन्द्रियोपक्रमणीय**–वि., अध्यायसंज्ञा० इन्द्रियोपक्रमणमधिकृत्य कृतोऽध्यायः । ( चसू. ८.१ )

**इन्द्रियोपघात**–पु., लक्षण० ज्ञानेन्द्रियनाशः ( असंसू. ३० )

**इन्द्रियोपताप**–पु., लक्षण० चक्षुरादीनामिन्द्रियाणां स्वकर्मगुणहानिः ( सुसू. ४२.१० (३)

**इन्द्रियोपशम**–पु., लक्षण० इन्द्रियस्य निग्रहः ( असंसू. ५. )

**इन्द्रियोपशयः**–वि., इन्द्रियानुपघातकं, इन्द्रियसुखावहम् ( चवि. ८.१५१ )

**इन्द्रोक्तरसायन**–न., इन्द्रेणोक्तो रसायनकल्पः अस्मिन् रसायने निम्ना हिमवत्प्रभवाः दिव्याश्चौषधयो भवन्ति–ऐन्द्री, ब्राह्मी, पयस्या, क्षीरपुष्पी, श्रावणी, महाश्रावणी, शतावरी, विदारी, जीवन्ती, पुनर्नवा, नागबला, स्थिरा, वचा, छत्रा, अतिच्छत्रा, मेदा, महामेदा, जीवनीयाश्चान्याः । सेवनविधिः फलञ्च–पयसा प्रयुक्ताः षण्मासात्परमायुर्वयश्च तरुणमनामयत्वं स्वरवर्णसंपदमुपचयं मेधां स्मृतिमुत्तमबलमिष्टांश्चापरान् भावानावहन्ति सिद्धाः ( चचि. १. ( ४ ) ६ )

**इन्धन**–न., अग्नेराहारः ( अहसू. ३.८ )

**इभ**–पु., हस्ती, गजः ( सुउ. ५६.२५ )

**( इभा )**–स्त्री., हस्तिनी ( सुउ. ४१.४९ )

**–कणा**–स्त्री., गजपिप्पली ( सुउ. ५२.४२ )

**–कण्टिका**–स्त्री., गोक्षुरः ( र. १५.४० )

**–कर्णिका**–स्त्री., वनस्पति० गजकर्णीति प्रसिद्धा, अर्शःप्लीहग्रहणीकुष्ठादिनाशने मूलकुठाराख्ये रसयोगे उपदिष्टा ( र. १५.४० )

**–कृष्णा**–स्त्री., गजपिप्पली ( सुउ. ५२.३८ )

**–केसर**–न., नागकेसरम् ( सुचि. ३८.५२ )

**–गन्धा**–स्त्री., स्थावरफलविषभेदः ( सुक. २.५ )

**–पुट**–न., गजपुटम्, त्रिंशदङ्गुलमिते खाते घटसंपुटितमौषधं संस्थाप्य ऊर्ध्वाध उपलानि स्थापयित्वा परिपचनम् ( र. २.१९ )

**–शुण्डी**–स्त्री., हस्तिशुण्डी ( र. ११.९१ )

**इयत्ता**–स्त्री., मर्यादा, परिमाणम् ( असंसू. ३४.३ )

**इरा**–स्त्री., सुरा; मद्यविशेषः ( ध. ६.२५५ )

**–वती**–स्त्री., वटपत्री ( रा. ५.२११ )

**इरिमेद**–पु., वनस्पति० खदिरभेदः अरीमेदः विट्खदिरः, गुणाः–कषायस्तिक्तः, शीतः ( ध. ) उष्णः ( रा. ) रक्तस्तम्भनः, आमस्तम्भनो, मुखरोगहरो, भूतविनाशकः, शोफातिसारकासघ्नो, विषवीसर्पनाशनश्च ( ध. ५.१३३ )
हिं.—दुर्गंधि खैर.
म.—शेण्याखैर. गंधिया हिवर, घाणेरा खैर.
गु.—गंधिलो खेर; इरिमेद.
बं.—गुयेबाब्ला विट्खयेर.

**इरिवेल्लि**–स्त्री., रोग० क्षुद्ररोग० त्रिदोषजा सर्वदोषलक्षणयुता शिरोगता वृत्ता उग्ररुजा सज्वरा पिडका ( सुचि. २०.७–८ )

**इरिवेल्लिका**–स्त्री., इरिवेल्ली ( सुनि., १३.१५ )

**इलि**–पु.,मत्स्यजातीयप्राणि० ( काखिल. २४.५०.५१ )

**इली**–पु., इलीः ( काखिल. २४.५०.५१ )

**इलीष**–पु., इलिः ( काखिल. २४.५०.५१ ) द्र० 'इलि'

**इल्य**–न., इलिः मत्स्यजातीयप्राणि०, इलिः, इली, इलीशश्च अस्य पर्यायाः ( काखिल. २४.५०-५१ ) द्र० 'इलि'.

**इष**–पु., आश्विनो मासः ( सुसू. ६.६ )

इषीका–स्त्री., काशशलाका, दर्भतूली ( अहृसू. २१.१९ )
इषु–पु., शरः ( ध. ४.१३५ )
–पुङ्खिका–स्त्री., शरपुङ्खा ( र. ११.५२ )
इष्ट–वि., प्रियं हितं च ( चचि. १५.१२ )
प्रियमात्रम् ( सुसू. ४६.४५९ )
–गन्ध–वि., यथोक्तप्रमाणगुणैरुपेतम् ( असंशा.८ )
मनोहारिगन्धोपेतम् ( सुउ. ४७.२६ )
–संस्कार–पु., रुचिकरः पथ्यश्च संस्कारः
( सुसू. ४६. ४५९ )
इष्टक–पु., इष्टः, एरण्डः ( चचि. १४.४३ )
इष्टका–स्त्री., गृहादिनिर्माणार्थं कृतो दग्धमृत्खण्डः
पक्वेष्टिका ( सुचि. ३२. ५ )
ऊष्मस्वेदार्थम् उद्घर्षणार्थं च इयं प्रयुक्ता
भवति ( सुचि. २४.५ड )
–पथक–न., लामज्जकम् ( ध. ३.८६ )
–स्वेद–पु., जलाद्यवसिक्तया, आर्द्रालक्तकपरिवेष्टि-
तया वा तप्तेष्टकया कृतः स्वेदः ( सुचि. ३२.५ )
गुल्मेऽस्यावचारणमुपदिष्टम् ( सुउ. ४२.५६ )
इष्टि–स्त्री., यज्ञः ( चचि. ८.१८९ )
इष्टिका–स्त्री., इष्टका ( सुचि. २४.५६ ) पहा 'इष्टका'
–यन्त्र–न., गन्धकजारणार्थं यन्त्र० भूमौ वर्तुलं गर्तं
विधाय मह्लं गम्भीरोदरं क्षुद्रं मृण्मयं पात्रं
तद्गर्तमध्ये संस्थाप्य तत्रैकामिष्टिकां मध्यगर्तवर्तीं
च निधाय इष्टिकागतगर्तं परितोऽङ्गुलोच्छ्रायमाल-
वालं विधाय तद्गर्ते पारदं क्षिप्त्वा तद्गर्तमुखे वस्त्रं
प्रसार्य तच्च दृढं बध्वा तदुपरि समभागं गन्धकं
दत्वा न्युब्जमल्लेन गर्तमुखं रुद्ध्वा मल्लपालिमध्य-
भागं मृदा सम्यक् रुद्ध्वोपरि वन्योपलैः कपोत-
पुटं पुनः पुनर्देयम् । इष्टिकया पारदस्य यन्त्रणात्
एतद्यन्त्रमिष्टिकायन्त्रनाम्ना कथितम् । तेन निर्धूम-
गन्धकजारणं कार्यम् । ( र. ९.५२ तः ५५ )
इष्वास–पु., इषुमोक्षकः, बाणमोक्षकः ( चचि. ८.४२ )

## ई

ईक्षण–न., दर्शनम् ( अहृसू. २४.१ )
ईक्षणाञ्जन–न., नेत्राञ्जनम्, अञ्जनम् ( सुउ.३९.२६३ )
ईक्षित–न., दृष्टिः दर्शनम् ( असंशा. ८.३२ )
ईति–स्त्री., उपद्रव० रोगादिदुर्दैवम् ( सुसू. ५.३२ )
ईतयः–अन्नादिक्षयहेतवोऽतिवृष्ट्यादयः
अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः खगाः ।
स्वचक्रं परचक्रं च सप्तैता ईतयः स्मृताः ॥
( सुसू. ५.३२ ड )
अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः ।
अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः ॥
( कामन्दकीय–रघु० १.६३ मल्लिनाथ०
नीतिसारः १३.६३ )
अतिवृष्टिरनावृष्टिः शलभा मूषकाः शुकाः ।
असत्करश्च दण्डश्च परचक्राणि तस्कराः ॥
ईप्सित–वि., इष्टम्, अपेक्षितम् ( सुचि. ३४.५ )
ईप्सु–वि., इच्छुकः, अभिलाषी ( सुउ. ६०.१२ )
ईरण–पु., वातदोषः (सुचि. २४.१०८; अहृसू. १५.१२)
ईरिण–न., ऊषरं क्षेत्रम् ( सुक. ३.१० )
ईरित–वि., प्रेरितः ( चनि. ८.४ )
विलायितः ( चसू. ६.२२ )
ईर्ष्यक–पु., दृग्योनिः, सरेतस्क-षण्ढपुरुषः; दृष्ट्वा व्यवाय-
मन्येषां व्यवाये यः प्रवर्तते । ईर्ष्यकः स च
विज्ञेयः। ( सुशा. २.४१ ) ईर्ष्यारतिः इत्यस्य
चरकवाग्भटोक्तपर्यायः
ईर्ष्या–स्त्री., मनोविकार० परसंपत्त्यसहिष्णुता
( सुसू. १.२५ ( ३ )
समाने द्रव्ये परसंबंधप्रतिषेधेच्छा ( चसू. ७.२७ )
–रति–पु., ईर्ष्यकः षण्ढः (चशा. २.२०; असंशा. २)
ईर्ष्यकः दृग्योनिषण्ढः द्र० 'ईर्ष्यक'.
ईर्ष्यालु–पु., नपुंसक, ईर्ष्यकः ( असंशा. २.४५ )
द्र० 'ईर्ष्यक'
ईर्ष्यु–वि., ईर्ष्यायुक्तः ( चशा. ८.२१ )
ईशकोण–पु., ऐशानी दिक्; रसशालाया ईशकोणके
सिद्धवस्तूनां स्थापनं प्रकुर्यात् । ( र. ७.४ )
ईशान–पु., महेश्वरः ( सुचि. २९.१३ )
ईशानी–स्त्री., शमी ( ध. ५.९५ )
ईश्वर–पु., सृष्टिकारणम्, परमात्मा ( सुशा. १.११ )
रुद्रः अहङ्कारस्याऽधिदैवतम् । ( सुशा. १.७ )
धनाढ्याः विशेषेण सुकुमाराश्च । ईश्वरा हि प्रायेण
सुकुमाराः स्निग्धाश्च भवन्ति ।
( चक्रपाणि, चक्र. ७.२५ )
( ईश्वरा )–स्त्री., वन्ध्यकर्कोटकी ( असंउ. ४२ )
( ईश्वरी )–स्त्री., वन्ध्यकर्कोटकी
( र. २९.३४ रा. ३.२७३ ) द्र० 'ईश्वरा'.
रुद्रजटा ( रापरि. ३.२४ )
नाकुली ( रा. ७. १५२ )
लिङ्गिनी ( रापरि. ३.१६ )

**ईषिका**–स्त्री., शरिका ( चसि. २.२२ )
**ईह्**–क्रि., चेष्टायाम् ( सुउ. ३९.३२१ )
**ईहा**–स्त्री., चर्या, चेष्टा, वाञ्छा ( अहसू. १.३६ ) ( सुशा. ४.४९ )
**ईहित**–न., चेष्टितम्; कायिकं कर्म ( अहसू. ११.१५ )

उ

**उ**–पु., शिवः, धत्तुरो धात्री वा ( र. २०.२२२ ) ( शब्दस्तोमः )
**उखर**–न., खनिजलवणम् ( ध. २.३२ )
**उखल**–पु., तृण० भूरिपत्र० बलदो रुच्यः पशुभ्यः सर्वदा हितः ( रापरि. ८. ४६ )
**उखा**– स्त्री., शारीर० कक्षशिरःपार्श्वयोर्निम्नभागः ( चशा. ७.११ )
  **–पात्र**–स्थाली ( सुउ. ४४.३४ )
**उग्र**–( परिव ) वि., तीव्रम्, तीक्ष्णम्, सक्रोधम् अत्यन्तमसहनीयम् ( चइ. १२.६८ )
  न., वनस्पति० वत्सनाभः ( ध. ७.१२८ )
**( उग्रा )**–स्त्री., वनस्पति० वचा ( सुउ. ५१.२७ )
  मेथिका ( ध. ६.१११ )
  यवानी ( रा. ६.१४१ )
  **–कर्मन्**–वि., मारणादिदुष्कार्यप्रवृत्तः ( चइ. १२.१७ )
  **–काण्ड**–पु., वनस्पति०–काण्डीरः ( ध. ४.६२ )
  **–गन्ध**–पु., वनस्पति० कुठेरकः ( रा. १०.८४ )
  पु., रसोनः ( रा ७.९४ )
  न., निर्यास० हिङ्गुः ( रा. ६.५९ )
  वनस्पति०–पु., कट्फलम् ( रापरि. ८.१० )
  **–( गन्धा )**–स्त्री., वनस्पति० वचा ( सुउ. ५०.५३ )
  अजगन्धा; ब्राह्मी ( रा. ४.१५३ )
  यवानी ( ध. २.९१ )
  **–गन्धिका**–स्त्री., वनस्पति० अजमोदा ( रा. ६.१५१ )
  **–रेवती**–ग्रह० सा प्रजां हन्ति, 'ब्रह्मस्वहारिणां लोके विषमाणां दुरात्मनाम्। तस्कराणां शठानां च प्रजां हन्त्युग्ररेवती' ॥ ( का. रेवतीकल्प. १७ )
  **–वीर्य**–पु., न., निर्यास० हिङ्गुः ( रा. ६.५९ )
  **–शब्द**–पु., हस्तेन ताडिते उदरे आनाहवत् जायमान उच्चैर्नादः ( सुनि. ७.९ )
  वि., उत्कटशक्तियुक्तम् ( सुक. २.१८ )

**उचित**–वि., अभ्यस्तम् ( चसू. ६.४१ )
**उच्चटक**–पु., वनस्पति० उच्चटा ( चसि. १२.१८–७ )
**उच्चटा**–स्त्री., वनस्पति० घुर्घुराख्यशणघण्टकारफलोऽल्पो विटपः, सरयूपकण्ठे वारेन्द्रयां च प्रायशः उपलभ्यते ( सुचि. ३८.८४ )
  तामलकी ( रा. ५.१४४ )
**उच्चतरु**–पु., वनस्पति० नारिकेलः ( रा. ११.१०४ )
**उच्चय**–पु., समूहः ( र. २.५ )
  उच्चीयन्ते संगृह्यन्ते विक्षिप्ताः पदार्था अनेनेत्युच्चयः राशीकृत्य स्थापनम् ( अहसू. १.४ )
**उच्चाटा**–स्त्री., वनस्पति० नागरमुस्ता ( रा. ६.६२ )
**उच्चार**–पु., विष्ठा ( सुचि. २४.९८ )
  शब्दोच्चारः ( चशा. ८.५२ )
  **–शायिन्**–( परिव० वि०, ) उच्चारं घुर्घुरकादिं कृत्वा शेते इति ( चशा. ८.५२ )
**उच्चिटिङ्ग**–पु.. कीट० वायव्यः ( असंउ. ४३ )
  वृश्चिकभेदः तनुदीर्घश्च ( असंउ. ४३ )
  शुकतुण्डविषः कीटः ( सुक. ३.५ )
  उच्चिटिङ्गदष्टलक्षणानि चास्य वृश्चिकदंशवद्भवन्ति ( चचि. २२.१५३ )
**उच्चैर्भाष्य**–( न., ) उच्चस्वरेण भाषणम्
**उच्चैःश्रवस्**–( पु., ) अमृतमन्थनोत्पन्नस्तुरगः, शक्रवाहनभूतः ( सुचि. १५.६ )
**उच्चैःश्रुति**–( स्त्री., ) तारस्वरमात्रश्रवणम् अल्पशब्दस्य तु सर्वथैव अश्रवणम् ( चसू. २०.११ )
**उच्छादन**–( न., ) गन्धद्रव्येण शरीरमार्जनम्, उत्सादनम्, उद्वर्तनम् ( असंचि. ९ )
**उच्छिङ्घन**–( परिव. न., ) उच्छ्वासेन वायोरन्तर्नयनम् ( असंउ. २४ )
**उच्छिङ्घन**–( न., ) लक्षण० छिक्का ( सुउ. १७.६४ )
  नासिकया वायोरन्तःप्रवेशनम्, नेत्रे विलम्बिन्युच्छिङ्घनं कार्यम् ( सुउ. १९.८ )
**उच्छिन्दन**–( न., ) लक्षण० क्षुत् ( असंसू. २९.१६ )
**उच्छीर्षक**–वि., उच्छ्रितशिरस्कम् ( सुचि. ३६.२३ )
  न., शय्यायाश्शिरोभागः ( असंउ. १ )
**उच्छून**–वि., लक्षण० उन्नतशोफयुक्तम् ( असंसू. ४०.५ )
**उच्छ्रय**–पु., संबन्धः आधिक्यम् ( सुउ. ३८.१४ )
**उच्छ्राय**–पु., आधिक्यम्, उन्नतत्वम् ( सुचि. ३४.१९ )
  दीर्घत्वम् ( सुसू. ३५.१२ )
**उच्छ्रित**–वि., लक्षण० उत्सेधम् ( सुसू. १२.१० )
**उच्छ्रिताक्ष**–वि., उच्छूनाक्षम् ( चवि. १७.६१ )

**उच्छ्रिति**–स्त्री., उच्छ्रयः, संबन्धः, आधिक्यम्
(सुउ. ३८.१७)
**उच्छ्वास**–पु., लक्षण० श्वासागमः (सुशा. २.५५)
**उच्छ्वासारोधक**–वि., लक्षण० उच्छ्वासस्य आसमन्ताद् रोधकः (सुउ. ४२.१३२)
श्वासागमस्य आसमन्ताद् रोधकः
**उच्छ्वासावरोध**–पु., श्वासनिर्गमावरोधः
**–बस्ति**–पु., वायोर्निष्कासनं कृत्वा गृहीतो बस्तिः (चसि. ५.९)
**उच्छ्वासावरोधन**–न., लक्षण० श्वासग्रहणस्य अवरोधः
(सुनि. ९.२१)
**उच्छ्वासोपरोध**–पु., लक्षण० उच्छ्वासे कृच्छ्रत्वम् श्वासागमस्य अवरोधः (असंसू. २९.१६)
**उज्जृम्भण**–न., लक्षण० जृम्भायाः प्रवृत्तिः
(र. १२.९)
**उज्ज्वल**–पु., षष्टिक० कुधान्यभेदः (चसू. २७.१४)
पु., शृङ्गाररसः (अहृसू. २.३१)
वि., शोभनः (अहृसू. ३.४१)
न., सुवर्णम् (रा. १३.१)
**उज्ज्वाल**–पु., कुधान्य० उज्ज्वल (अहृसू. ६.९)
द्र० 'उज्ज्वल'.
**उटज**–पु., न., पर्णशाला (असंचि. ७)
**उटिका**–स्त्री., उडुकम्, उडुः=नक्षत्रम् उडुकशब्दः सप्तविंशतिसंख्यार्थे (र. २०.२२२)
**उडुप**–पु., न., पिधानम् (चवि. ७.२३)
**उडुपति**–पु., सोम० (सुचि. २९.८)
**उडुम्बर**–पु., उदुम्बरः (सुचि. २६.२९)
**उण्डुक**–पु., शरीर० पोट्टलकः (सुशा. ४.२५)
पक्वाशयैकदेशो विभक्तमलाधारः उण्डुकः अत उण्डुकात् पक्वाशयो भिन्नः (सुशा. ५.७)
शोणितकिट्टप्रभवः उण्डुकः (सुशा. ४.२५)
चरके पुरीषाधारशब्देन उण्डुकः प्रतिपादितः
(सुशा. ड. ४.१७;)
उण्डुकस्थं मलं मलधरा कला विभजते
(सुशा. ४.१७)
**उत्कट**–न., वनस्पति० त्वक् (ध. २.५०)
पु., रक्तेक्षुः (अहृसू. १५.२४)
धान्य० शालि० कषायमधुरलघ्वादिगुणः
(चसू. २७.१८)
शरः (ध. ४.१३५)
**उत्कटक**–पु., आसन० (असंसू. २८)
द्र० 'उत्कटासन.'
**(उत्कटा)**–स्त्री., वनस्पति० सैंहली पिप्पली
(रा. ६.११९)
**उत्कटासन**–न., शरीरसंस्थिति० गुदपार्ष्णिसमायोगः
सुशा. ३.१६; (सुनि. २.४)
**उत्कर**–पु., अवकरः (असंसू. ६)
समूह (सुसू. ४५.९)
**उत्कर्तन**–न., छेदः, ऊर्ध्वस्य कस्यचिदङ्गस्य कर्तरीशस्त्रेण छेदनम् (सुक. ८.१३०)
**उत्कर्ष**–पु., समृद्धिः, आधिक्यम् (सुसू. ४१.३)
**उत्कर्षण**–न., अधोगतस्योर्ध्वकर्षणम् (सुसि. १.३)
**उत्कार**–पु., लक्षण० उद्गारः (सुसू. ३१.१६)
**उत्कारिका**–स्त्री., भक्ष्यवस्तु० पूपलिका
(अहृसू. ८.४५)
'पोलिका' इति लोके (चचि. १७.८३)
लप्सिका (सुचि. २६.१७)
रोटिका (सुचि. १.८)
संयावप्रकारः (सुचि. १०.५)
उत्कारिकाशब्देन तत्साध्यः स्वेदो विवक्षितः षष्ट्युपक्रमेष्वन्यतम उपक्रमः (सुचि. १.८)
**–कल्प**–पु., उत्कारिकायाः पाककल्पः (चक. १.२३)
**उत्कारी**–स्त्री., उत्कारिका (असंचि. ५)
'द्र० उत्कारिका'
**उत्काशन**–न., उच्चैर्घोषेणाज्ञापनम् (असंसू. ३६)
**उत्कासन**–न., रोग० कासः (सुसू. २२.८)
उत्कृष्टं कासनम् (सुसू. २७.५)
**उत्कुञ्चा**–स्त्री., भक्ष्यवस्तु० उत्कारिकाः
(चचि. १५.२२७)
तिलवातामादीनां दृषदि पिष्टानां उष्णोदकमृदितपिंडा उत्कुञ्चा उच्यन्ते.
**उत्कुटुक**–वि., उत्कटकम् (सुचि. ३८.५)
द्र० 'उत्कटासन'.
उत्कुटुकासन, उत्कटिकस्य चिरासनस्थितिः;
(सुचि. ६.२२) द्र० 'उत्कटासन'.
**उत्कुपितचक्षुस्**–वि., लक्षण० अभिष्यन्नं चक्षुः, अभिष्यन्दाख्योऽक्षिरोगः (अहृसू. २.७)
**उत्कोठ**–पु., रोग० त्वचि रागवदतिकण्डूमन्मण्डलम्
(असंउ. ३६)
**उत्क्रम**–पु., यथानिर्दिष्टक्रमाद्विपरीतः क्रमः
(अहृसू. ११.२९)

काश्यपसंहितासूत्रस्थाने अध्यायः
( कासू. २४ पृ. २९ )

**उपकालिका**–स्त्री., वनस्पति० पृथ्वीका ( ध. २.५९ )

**उपकुञ्चा**–स्त्री., वनस्पति० पृथ्वीका, कृष्णजीरकम्, बृहज्जीरकम् ( ध. २.५९ )
सूक्ष्मैला ( चक. १३.२३ )

**उपकुञ्चिका**–स्त्री., उपकुञ्चा ( चचि. १३.१२५ )
द्र० 'उपकुञ्चा'

**उपकुञ्ची**–स्त्री., 'उपकुञ्चा' ( ध. २.५९ )
द्र० 'उपकुञ्चा'

**उपकुण्डन**–परिव० न., विपाचनम् ( चवि. ७.२१ )

**उपकुल्या**–स्त्री., वनस्पति० पिप्पली ( चचि. ७.१४५ ) ( सुचि. ९.८ )

**उपकुश**–पु.,दन्तरोग० रक्तपित्तसमुत्पन्नोऽयं व्याधिः लक्षणम्–दन्तवेष्टेषु दाहः पाकश्च तेन दन्ताश्चलन्ति। आघट्टिताः सन्तो मन्दवेदना युतं रक्तं स्रवन्ति : रक्ते स्रुते च आध्मायन्ते । मुखं पूति जायते
(सुनि. १६.२१.२२.)

चिकित्सा–वमनविरेचनाभ्यामूर्ध्वमधश्च कायं शोधयित्वा शिरोविरेचनेन शिरः शोधयेत् । अनन्तरं काकोदुम्बरिकागोजीपत्रैः रक्तमोक्षः करणीयः । मधुना सह सव्योषलवणैः प्रतिसारणं करणीयम् । नागरनैचुलफलसर्षपपिप्पलीयुक्तस्य जलस्य कवलं धारयेत् । काकोल्यादिभिः सिद्धं घृतं कवलार्थं नस्यार्थं चोपयोक्तव्यम् । ( सुचि. २२.१९–२१ )

**उपक्रम**–पु., चिकित्सा–कर्म ( अहृसू. १४.१ )
उपक्रमाश्च समासतो द्विविधाः–लंघनं बृंहणं चेति । लंघनं द्विविधं । शोधनं शमनं च । शोधनं दोषान् बहिरीरयेत् तच्च पंचधा–निरूहो वमनं कायरेकः शिरोरेकोऽस्रविस्रुतिश्च । शमनं-यद्दोषान्न शोधयति, समान्नोदीरयति विषमांश्च समीकरोति । तच्च सप्तधा–पाचनं, दीपनं, क्षुत्, तृड्, व्यायाम, आतपो, मारुतः इति ।
( अहृसू. १४.७., चसू २२.१८ )

सर्वे रोगाणां षडुपक्रमा भवन्ति लंघनं, बृंहणं, रूक्षणं, स्नेहनं, स्वेदनं स्तम्भनं च ( चसू. २२.४ )
( १ ) देहे यत् किञ्चित् लाघवकरं तल्लंघनम्
( २ ) यत् शरीरस्य बृहत्त्वं जनयेत्तत् बृंहणं मतम्
( ३ ) रौक्ष्यं खरत्वं वैशद्यं यज्जनयति तद्रूक्षणम्
( ४ ) स्नेहविष्यन्दमार्दवक्लेदकारकं स्नेहनम् ( ५ ) स्तम्भगौरवशीतघ्नं स्वेदकारकं च स्वेदनम् ( ६ ) यद् गतिमन्तं चलं ध्रुवं स्तम्भयति तत् स्तम्भनम् ।
( चसू. २२.९.१२ )

व्रणस्य षष्टिरुपक्रमा भवन्ति ( सुचि. १. ८ )
बृंहणं शमनं त्वेववायोः पित्तानिलस्य च
( असंसू. २४.९., अहृसू. १४.७ )

**उपक्रम्य**–वि., चिकित्सनीयः । ( असंसू. २४ )

**उपक्रान्त**–वि., चिकित्सितः । ( सुनि. १५.१५ )

**उपक्लिष्टसत्व**–वि., रजस्तमोभ्यामुपहतचेताः ( चनि. ७.४ )

**उपक्लेदन**–न., द्रवीकरणम् ( चवि. १.१८ )

**उपक्षित**–वि.,भोक्तुं दत्तमन्नम् ( सुक. १.३४ )

**उपक्षीणौजस्**–वि., उपक्षीणम् ओजो यस्य सः ( चसू. १४.१९ )

**उपगमन**–न., समीपे गमनम्, उत्पत्तिः ( अहृसू. ८.५५ )

**उपघात**–पु., विनाशः ( चसू. २८.२० )
बाधा ( सुचि. २७.१ )
मर्मसमीपदेशस्य घातः ( सुशा. ६.४१ )

**उपचक्र**–पु., क्रकरभेदः कृशचञ्चुर्मदाविलः
( सुसू. ४६.५० )
चकोरभेदः ( चसू. २७.४७ )
गुणाः–तस्य मांसरसो ज्वरे हितः । क्रकरवदस्य गुणा भवन्ति

**उपचक्रक**–पु., उपचक्रः ( सुसू. ४६.६४ )
द्र० 'उपचक्र'

**उपचय**–पु., पुष्टिः ( चसू. १.८७ सुचि. ३५.४ )
**–वर्धन**–वि., पुष्टिकरम् ( चसू. १.८७ )

**उपचार**–पु., चिकित्सा ( अहृसू. ५.६६ )

**उपचित्रुपर्णी**–स्त्री., वनस्पति० ( असंचि. १० पृ. ६५ )

**उपचित्रा**–स्त्री., वनस्पति० पृश्निपर्णी ( रा. ४.११८ )
दन्ती ( ध. १.२२३ )

**उपजिह्व**–पु., ( असंउ. २५ ) ( उपजिह्वा ) स्त्री०
( चसू. २४.९ )
शारीरावयव० जिह्वाया अधोगता जिह्वा तथोपरिगता च ग्राह्या । षट्पञ्चाशत् प्रत्यङ्गेष्वेकम् । द्वे उपजिह्विके ( चशा ७.११ ) अधिजिह्वासदृश उपजिह्वः । रोग० जिह्वाया उपरिस्थितः शोफः
( असंउ. २५. (पृ. १७९ )

**उपजिह्वक**–पु., उपजिह्वः ( र. २४.४६ )
द्र० 'उपजिह्व'

**उपजिह्विका**–स्त्री., उपजिह्वा ( चशा. ७.११ )
द्र० 'उपजिह्व'
रोग० जिह्वागतो मुखरोग० ( सुनि. १६.३६ )
मांसप्रदोषजरोगेष्वेकः ( चसू. २८.१४ )
( सुसू. २४.९ ) उपजिह्वकाश्रितः
शोफः ( चचि. १२.७७ ) ( असंउ. २५. पृ. १७९ )
जिह्वाग्ररूपः श्वयथुर्जिह्वामुन्नम्य जातः कफरक्तयोनिः, प्रसेककण्डूःपरिदाहयुक्ता प्रकथ्यतेऽसावुपजिह्विः। जिह्वाया अधो भवति ( सुनि. १६.३९ )
चिकित्सा—उपजिह्वाया लेखनं कृत्वा क्षारेण जिह्वां प्रतिसारयेत् । शिरोविरेकगण्डूषधूमा उपयोक्तव्याः [ गण्डूषः कफव्रणहरद्रव्येण ] कफकण्टकहरद्रव्येण वा, धूमो वैरेचनिकः
( सुचि. २२.४८ )

**उपजीव्य**–वि., आश्रयदाता ( असंसू. ३ )

**उपजोषम्**–( अव्यय. ) यथेच्छम्
( काकभोजन कल्प० ॥ १३ ॥ )

**उपतप्त**–वि., दुष्ट ( ( चशा. ३.१७ )
पीडितम् अनुपतप्तम्–अपीडितम् ( परिव० )
( चसू. ८.१७; अहसू. ८.३३ )

**उपतप्ति**–स्त्री., विनाशः ( चनि. ७.११ )

**उपताप**–पु., किञ्चिद्वैकल्यम् ( चसू. २८.२० )

**उपदंश**–पु., गुह्यरोग० छेद्यरोग० ( सुनि. १२.१ )
( सुसू. २५.४ )
निदानम्–हस्ताभिघातान्नखदन्तपाताद्धावनाद्योनिप्रदोषाद्विविधापचारैः शिश्ने उपदंशा भवन्ति ( मा; ) कर्कशरोमां नारीमुपसेवमानस्य दोषाः श्वयथुमुपजनयन्ति स एवोपदंशः ( सुनि. १२.७ )
सम्प्राप्तिः—अतिमैथुनादिभिः प्रकुपिता दोषा मेढ्मागम्य क्षतेऽक्षते वा श्वयथुमुपजनयन्ति
( सुनि. १२.७–९ )
संख्यासम्प्राप्ति–वातिकः पैत्तिकः श्लैष्मिकः सांनिपातिको रक्तजश्च ( सुनि. १२.१८ )
लक्षणानि–१ ) वातजः–मेढ्रे शोफाश्चित्रारुजः, स्तम्भस्त्वक्परिपोटनं च २ ) पित्तजः–मेढ्रे पक्वोदुम्बरसंकाशः श्वयथुर्ज्वरश्च ३ ) कफजः–कठिनः स्निग्धः, कण्डूमान्, शीतलो गुरुश्च शोफः मेढ्रे, ४ ) सांनिपातिकः–सर्वलिङ्गत्वं तथा च मुष्कयोरपि श्वयथुस्तीव्रा रुगाशुपचनं, दारुणं कृमिसम्भवश्च ५ ) रक्तजः–असितस्फोटसम्भवोऽस्रस्रुतिर्ज्वरश्च
( असंउ. ३८ पृ. २८४–८५ )
साध्यासाध्यत्वम्–रक्तजो याप्यः संनिपातजोऽसाध्यः पृथग्दोषजाः साध्याः ( असंउ. ३८ पृ. २८५ )
रिष्टलक्षणम्–शोथकृमिदाहपाकैर्विशीर्णशिश्नो म्रियते । सामान्यचिकित्सा–आमावस्थायां संशोधनालेपनसेकशोणितमोक्षणैर्यथापाकं न याति तथा प्रतिकुर्यात् । पाकावस्थायां शस्त्रेणोपचरेत् । प्रक्षालनार्थं करवीरस्य जात्या आरग्वधस्य वैजयन्त्याः पत्राणि प्रयुञ्जीरन् । सौराष्ट्र्यादि चूर्णं क्षौद्रादिसंयुक्तमुपदंशेषु पूजितम् । गोजिह्वादिसिद्धं तैलं रोपणार्थं युक्तम् । स्वर्जिकादिचूर्णं व्रणे विसर्पनाशकम् । ( सुचि. १९.३६–४८ )
स्निग्धस्विन्नस्य देहिनो मेढ्मध्ये सिरां विध्येदथवा जलौकसः पातयेत् । अत्यर्थमुच्छ्रितानुभयतो वमनविरेचनाभ्याम् हरेत् । दुर्बलस्याप्राप्तविरेचनस्य वाऽत्यर्थमुच्छ्रितान् दोषान् निरूहेण हरेत्
( सुचि. १९.२५–२७ )
विगतोपदंशलक्षणम्–रुक्शोफशान्तिः
( सुचि. १९.२६ )
व्यञ्जनम् सुउ. ४१.३८ )
वनस्पति०–समष्ठिलः ( रा. परि. ४.१ )

**–क्षम** पु., वनस्पति० शिग्रुः ( रा. ७.६० )

**उपदग्ध**–वि., अतिपाकत्वेन ज्वलितम्
( सुसू. ४६.४७८ )

**उपदेश**–पु., कथनम् ( सुसू. ४०.४ )
आप्तवचनम् ( चवि. ४.७ )
आगमप्रमाणम् ( चवि. ८.८३ )
तन्त्रयुक्ति० एवं कुर्यादित्युपदेशः यथा 'तथा न जागृयाद्रात्रौ दिवास्वप्नं च वर्जयेत्' ।
( सुउ. ६५.१४ )

**उपदेह**–पु., मलः ( चसि. २.२१ )
मलरूपः उपलेपः ( सुचि. ३६.१७ )
मलवृद्धिः ( चशा. ६.१७ )
उपलेपः ( परिव. ) ( सुचि. १६.१४ )

**उपद्रव**–पु., रोगः ( सुचि. ३३.१ )
उपद्रवति, उत्पद्यमानस्यव्याधेः समीपे उपैतीत्युपद्रवः, उपद्रवस्य व्याधेः पश्चाज्जायमानत्वात् । उपद्रवस्तु खलु रोगोत्तरकालजो रोगाश्रयो रोग एव । तत्र प्रधानो व्याधिः । व्याधेर्यो गुणभूत उपद्रवस्तस्य प्रायः प्रधानप्रशमे प्रशमो भवति । स तु पीडाकरतरोभवति पश्चादुत्पद्यमानो व्याधिपरिक्लिष्टशरीरत्वाद् । तस्मादुपद्रवं त्वरमाणोऽभिबाधेत । ( चचि. २१.४० )

व्याधेरुपरियोऽव्याधिर्भवत्युत्तरकालजः ।
उपक्रमाविरोधीच स उपद्रव उच्यते ॥
( सु. उ. ३९.२९० ).
पूर्वोद्भवनिमित्तेन योऽपरो जायते गदः ।
तमुपद्रवमित्याहुः अतीसारो यथा ज्वरे ॥
( कासु. २७.५७ )

**उपद्रुत**–वि. उपद्रवव्याप्तः ( सुशा. १०.९ )

**उपधा**–भोगतृष्णा० ( चशा. १.९५ )
अन्यव्यपदेशः, व्याजः ( चचि.८.१५६ )

**उपधातु**–पु., धातोरुपादानभूताज्जातोऽन्यधातुः
( चचि. १७.१७ )
खनिजद्रव्य० ( ध. ७.८८ )

**उपधान**–न., आवरणम् ( चशा. ८.४३ )
उपशीर्षकम् ( सुचि. ३८.३ )

**उपधारण**–न.,विषयस्य बुद्धौ स्थापनम् ( चवि. ८.२१ )

**उपधिः**–पु., छद्म ( चवि. ४.८ )
लेप०मूर्ध्नि काकपदं कृत्वा विषहरणाय यत् दीयते
( चचि. २३.५३ )

**उपधेय**–वि., यवाग्वादिद्रव्येषु आधायोपयुज्यमानः ।
( चवि. ८.१३६ )

**उपनख**–न., शारीरावयव० नखसमीपं स्थानम्
( सुसू. २३.६ )
न., रोग० चिप्पम् ( सुनि. १३.२२ )

**उपनत**–वि., सन्निधाने प्रणययुक्तः ( सुसू. २.८ )

**उपनन्द**–पु., दिव्यसर्प० ( असंउ. ४१ पृ. ३३० )

**उपनय**–पु., न्यायावयव० उदाहरणापेक्षः तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः । नित्यपुरुषानुमानेऽकृतत्वहेतौ 'तथा पुरुषः' इति वाक्यमुपनयः
( चवि. ८.३१ )

**उपनयन**–न., शिष्यस्य गुरोः समीपे वेदाध्ययनार्थं दीक्षाप्रदानम् ( सुसू. २.३ )
तद्विधिः–उपनयनीयं तु ब्राह्मणं प्रशस्तेषु तिथिकरणमुहूर्तनक्षत्रेषु प्रशस्तायां दिशि शुचौ समे देशे चतुर्हस्तम् चतुरस्रं स्थण्डिलमुपलिप्य गोमयेन दर्भैः संस्तीर्य पुष्पलाजभक्तैः रत्नैश्च देवताः पूजयित्वा विप्रान् भिषजश्च तत्रोल्लिख्य अभ्युक्ष्य च दक्षिणतो ब्रह्माणं स्थापयित्वाऽग्निमुपसमाधाय खदिरपलाशदेवदारुबिल्वानां समिद्भिश्चतुर्णां वा क्षीरिवृक्षाणां न्यग्रोधोदुम्बराश्वत्थमधूकानां दधिमधुघृताक्ताभिर्दार्वीहोमिकेन विधिना स्रुवेणाज्याहुतीर्जुहुयात् सप्रणवाभिर्महाव्याहृतिभिस्ततः प्रतिदैवतमृषींश्च स्वाहाकारं कुर्यात् । शिष्यमपि कारयेत् ।
( सुसू. २.३ )

**उपनासिका**–वि., ( सिरा ) नासासमीपस्था
( सुशा. ८.१५ )

**उपनाह**–पु., उपक्रम० स्वेद० उपनाहशब्दस्त्विह 'णह' बन्धने इत्यस्य इति उपनाहः । ( सुचि. ३२.१२ )
उपनह्यते चर्मपटादिना इत्युपनाहः ( अहृसू. १७.२ )
बहलं लेपं दत्वा चर्मादिभिरावृत्य व्याधियुक्तस्याङ्गस्य बन्धनम् ( चसू. १४.३५ )
विधिः–उपनाहस्तु वातहरमूलकल्कैरम्लपिष्टैर्लवणप्रगाढैः सुस्निग्धैः सुखोष्णैः प्रदिह्य स्वेदयेत् । एवं काकोल्यादिभिरेलादिभिः सुरसादिभिस्तिलाऽतसीसर्षपकल्कैः कृशरापायसोत्कारिकाभिर्वेशवारैः शाल्वणैर्वा तनुवस्त्रावनद्धैः स्वेदयेत्
( सुचि. ३२.१२ )
नेत्ररोग० नेत्रे कृष्णदृष्टिमण्डलयोः ईषत्पाकः कण्डूप्रायो नीरुजो महान् ग्रन्थिस्वरूपः ( सुउ. २.४ )
चिकित्सा—उपनाहं स्विन्नं व्रीहिमुखेन भित्त्वा मण्डलाग्रेण लेखयेत् प्रतिसारणान्तरं च पिप्पल्यादिभिः उष्णेन वारिणा प्रक्षाल्य घृतेन सिक्तमभ्यक्तं मधुसर्पिषा ऊर्ध्वाधः कर्णयोश्च यवसक्तुभिः पिण्डीं दत्वा बध्नीयात् । तथा पटोलपत्रामलककाथेन चाश्च्योतयेत् ( अहृउ. ११.१–२ ) (सुउ.१४.९–१०)

**उपनाहन**–न., स्वेद० उपनाहः ( सुउ. १२–४५ )
द्र० 'उपनाह'

**उपनीत**–वि., दत्तम् (असंसू. ८)
–**बल**–वि., अध्ययनात् प्राप्तं ज्ञानबलं येन सः
( असंसू. ९ )

**उपन्यूषम्**–अ., किञ्चिच्छेषायां रात्रौ ( चवि. ८.७ )

**उपपक्ष्मक**–पु., रोग० वर्त्मस्वन्यान्यधिकानि पक्ष्माण्युद्भवन्ति यस्मिन् ( असंसू. ४०.३ )

**उपपक्ष्मन्**–न., नेत्रे पक्ष्मसमीपस्थमवान्तरपक्ष्म, उपपक्ष्मणां निर्हरणे षडङ्गुलसंदंश उपयुज्यते
( अहृसू. २५.८ )

**उपपन्न**–वि., सहितम् ( सुनि. १६.५४ )

**उपपादन**–न., संयोजनम्–सम्पादनम् ( परिव० )
( सुचि. ५.७; असंशा. ४ )

**उपपादनीय**–वि., उपक्रमणीयः, शरीरबलादिसम्पद्युक्तः
( चवि. ७,१६ )

**उपप्लव**–पु., दुःखागमः ( चशा. ५.८ )
वृद्धिः, दूषणम् ( सुचि. १.४ )

**उपप्लुता**–स्त्री., योनिरोग० गर्भिण्याः श्लेष्मलाभ्यासेन छर्दिनिःश्वासनिग्रहात्क्षुध्दो वायुरुपनीय कफं योनिं

प्रदूषयेत् । पाण्डुमास्रावं श्वेतं कफं सतोदं स्रवति । कफवातामयव्याप्ता योनिरुपप्लुता कथ्यते । ( चचि. ३०.२१-२२ ) ( अरु. अहृउ. ३३.४८-४९; असंउ. ३८ पृ. २९३ )

**उपभूत**-पु., वनस्पति० नीलि ( ध. १.२३३ )

**उपमर्द**-पु., मृदूकरणम् ( काशा. जातिसूत्रीयः ( पृ.८५ )

**उपमान**-न., प्रमाण० प्रसिद्धसाधर्म्यात्सूक्ष्मव्यवहित-विप्रकृष्टस्यार्थस्य साधर्म्यसाधनम् ( सुसू. १.१६ )

**उपयन्त्र**-न.,शरीराङ्गे धमन्यादिकेऽवयवे वोपयुज्य-मानानि द्रव्याणि । तानि च पञ्चविंशतिप्रकाराणि । स्वल्पयंत्रकार्यकरणादुपयन्त्राणि । रज्जुवेणिकापट्ट-चर्मान्तर्वल्कलतावस्त्राष्ठीलाऽश्ममुद्गरपाणितलपाद-तलाऽङ्गुलिजिह्वादन्तनखमुखबालाऽश्वकटशाखाष्ठी-वनप्रवाहणहर्षायस्कान्तक्षाराऽग्निभेषजानीति । उप-मितानि यन्त्रैरिति उपयन्त्राणि । अनुयन्त्राणीति वाग्भटे पाठः ( सुसू. ७.१५ )

**उपयुयुक्षु**-वि., उपयोगं कर्तुमिच्छुः, उपयोक्तुम् इच्छुः ( सुचि. २९.१० )

**उपयोक्तृ**-वि., यः किमप्युपयुङ्क्ते सः ( चवि. १.२२ )

**उपयोग**-पु., भोजनं, सेवनमाचरणम् ( चवि. १.१५ )

**-नियम**-पु., आचारपद्धतिः, आहारोपयोगः एवं कर्तव्यं एवं च न कर्तव्यं इत्येतादृशविवेचनात्मिका पद्धतिः ( चवि. १.२१ ( ७ )

**-व्यवस्था**-स्त्री., उपयोगनियमः ( असंसू. १०.१६ )

**-संस्था**-स्त्री., उपयोगनियमः ( चवि. १.२२ ( ७ )

**उपयोजन**-न., ( परिव ) उपयोगः ( सुचि. ३१.५ ) ( डल्हण सुचि. ३१.१ )

**उपरतकायाग्नि**-वि., नष्टजाठराग्निः ( चवि. २.१३ )

**उपरत्न**-न., रत्न० ( ध. ७.९१ )

**उपरम**-पु., विनाशः, शमनम् ( चसू. १६.२७ ) निवृत्तिः ( चशा. ५.८ )

**उपरस**-पु., खनिजद्रव्य वि० ( ध. ७.९३ ) सप्त चैते उपरसास्ते च गन्धतालककासीसशिला-कंकुष्ठभूषणराजावर्ताः गैरिकं च ( र. ६.४२ )

**उपराग**-पु., ग्रहणं, राहुग्रहः ( असंशा. १२.५ )

**उपरिज**-वि., उपरिजातः, उपरिस्थः ( सुचि. २२.२७ )

**उपरुद्धायुस्**-वि., गतायुः, समाप्तायुः ( चइं. ९.४ )

**उपरूढ**-वि., विरूढम् अव्रणीभावमागतम् ( सुचि. ८.५ )

**उपरोधन**-न., पीडा, ग्रहः ( अहृसू. ४.३ )

**उपल**-पु., पाषाणः ( सुसू. २९.९-१५ ) अश्मा ( असंउ. १२.४ ) न., वन्यच्छगणम् ( र. ५.१८ )

**-कान्त**-न., कान्तपाषाणः ( र. १७.१३५-३६ )

**-भेद**-पु., वनस्पति० पाषाणभेदकः ( ध. १.१५७ )

**-( भेदी )**-स्त्री., उपलभेदः ( रा.५.२०९ )

**-सन्धी**-स्त्री., अल्पं वन्यच्छगणम् ( र. १०.५४-५५ )

**-साठी**-स्त्री., उपलाः कठिना महान्तो वन्यच्छगणाः, ततोऽल्पदेहाः साव्यः ( र. १०.५४-५५ ) शुष्कच्छगणम् ( र. ७.१८ )

**-सारी**-स्त्री., छगणम् ( र. १०.६६ )

**उपलेप**-पु., आवरण० लेपः ( चनि. ५.१० ) मलवृद्धिः स्रोतःसु । ( सुचि. ३७.९१ )

**उपलेपन**-न., लेपनम् ( सुचि. २७.८ )

**उपवर्णन**-न., ख्यापनम् ( सुउ. ६५.३३ )

**उपवात**-पु., अल्पवातः ( चशा. ८.२४ )

**उपवान**-वि., उपशुष्कम् ( असंउ. १ ( पृ. ३ )

**उपवास**-पु., उपक्रम० अथर्ववेदे चिकित्सा० ( चसू. ३०.२१ ) भोजनपरित्यागः अस्यापि संशम-नीयत्वम् ( सुउ. ३९.१३४ )

**-शोष**-पु., रोग० क्षुत्प्रभृतिभिः उपशोषितः ( सुसू. १५.३३ )

**उपविष**-न., वानस्पत्यो विषभेदः अर्कक्षीरं स्नुहीक्षीरं लाङ्गली करवीरकं गुञ्जाऽहिफेनो धत्तूरः इत्येताः सप्त उपविषजातयः

लाङ्गली विषमुष्टिः करवीरं जया नीलकः कनकोऽर्क-श्चेत्युपविषवर्गः ( र. १०.८७ )

विषतिन्दुकबीजमहिफेनं रेचकं धत्तूरबीजं विजया गुञ्जा भल्लातकोऽर्कक्षीरं स्नुहीक्षीरं लाङ्गली करवीरकः इत्यपि गणो मतः ( ध. ७.१३० )

**( उपविषा )**-स्त्री., वनस्पति० अतिविषा ( ध. १.१० )

**उपविष्टक**-न., गर्भरोग० सञ्जातसारे महति च गर्भे गर्भिण्या अपथ्यसेवनाद् योने रक्तरूपोऽन्या-दृशोऽपि परिस्रावो भवति तदा गर्भवृद्धिर्न भवति वृद्धिमप्राप्नुवन् गर्भः गर्भाशये एव तिष्ठति । योनिपरिस्रावात्कुपितो वायुः पित्तश्लेष्माणौ परिगृह्य गर्भस्य रसवहां नाडीं प्रतिपीड्याऽवतिष्ठते दोषप्रति-च्छन्ननाड्यां रसस्य असम्यग् वहनान्नाडीरोधाद्गर्भस्य वृद्ध्यभावो गर्भश्च सस्फुरस्तिष्ठति । तं तथाविधं गर्भमुपविष्टकमाहुः । तेनोदरं न वर्धते । ( अहृशा. १४-१५ ) ( असंशा. ४.११; र. २२.२८-२९ )

संख्यासम्प्राप्तिः-उपविष्टको वातेन पित्तेन कफेन च त्रिविधा भवति ( असंशा. ४ )

सामान्यचिकित्सा—जीवनीयबृंहणीयमधुरौषधसिद्धानां सर्पिषां तथा पयसां रसानामामगर्भाणां च उपयोगः गर्भवृद्धिकरः । तथा सम्भोजनमेतैरेव च घृतादिभिः । सुभिक्षाया अभीक्ष्णं यानवाहनादिभिः क्षोभणमार्जनजृम्भणैरुपपादनम् ( असंशा. ४ ) एवं गर्भो न वर्धते तदा गर्भिणीं तीक्ष्णैर्द्रव्यैर्विरेचयेत् । अपरापातनीयैर्वा प्रयोगैर्गर्भं पातयेत्
( इन्दु असंशा. ४.१२–२२ )

**उपवेशन**—न., आसना, उपविष्टस्थितिः
( काखिल. अ. १२.८–१४ )
( परिव० ) अतिसरणं, मलविसर्जनम्
( सुचि. ३६.४० )
( परिव० ) बालकस्य संस्कार० किष्कुद्वयमात्रलिप्तायां धरण्यां धरण्यादिस्वाहान्तेन मन्त्रेण चतुर्दिशं बलिं दत्वा पञ्चमे मासि पुण्येऽहन्युपवेशयेत्
( असंउ. १ पृ. ९ )
अत्युपवेशनाच्च इमे दोषा अतिबालस्य रोगिणो वा समुत्पद्यन्ते । स्तैमित्यं कटिदौर्बल्यं पृष्ठभङ्गः श्रमो ज्वरो विण्मूत्रानिलसंरोधाध्मानम् ।
अतिबालस्य च निर्घातं गात्रभेदनं । निर्घाताज्जर्जराङ्गत्वं तेन वेदना, तया च ज्वरसम्भवस्तस्माच्च बालस्य कठोराङ्गत्वं वृद्धिश्च तस्य न भवति । अन्यच्च यत्स बालश्चिरोपवेशनात् मक्षिकाकृमिकीटसर्पाखुनकुलवेलाङ्गञ्ज्ञानिलादीनां गम्यो भवति ।
( कासंखिल अ. १२.९–१४ )

**उपशम**—पु., शान्तिः ( सुचि. ३१.१२ )

**उपशमनीय**—वि., योगः बृंहणम् ( चसू. २६.८ )
शामको योगः ( चचि. १९.५० )

**उपशय**—व्याध्युपलब्धिकारण० हेतुव्याधिविपरीतानां विपरीतार्थकारिणां चौषधान्नविहाराणामुपयोगः सुखानुबन्धः । ( चनि. १. ६. )

**उपशान्त**—वि., लीनीभूतः ( सुशा. १०.५७ )

**उपशीर्षक**—पु., बालरोग० वातदुष्टे कपाले देहसमानवर्णो रुजारहितः शोफो भवति स उपशीर्षकनामा रोगः । गर्भस्याप्ययं रोगो भवति
( असंउ. २७. पृ. १९८ )
( अहृउ. २३.२१ ) चिकित्सा—उपशीर्षके नवे जन्मोत्तरं जाते वातव्याधिचिकित्सितं कुर्यात् । पक्वे च विद्रधिविहितं कर्म कुर्यात्
( अरु. अहृउ. २४. १९–२० )
अभ्यक्तं च स्वेदयित्वोपनाहयेद्यथा विदाहो न भवति ( असंउ. २८. ( पृ. २०४ )

**उपशुष्कक**—पु., गर्भरोग० नागोदरपर्यायः । प्रतिमासमार्तवात् प्रत्यहं वाऽतियोनिस्रावाद्गर्भो वृद्धोऽपि परिहीयते । स चिरात्किञ्चित्स्पन्दते । कुक्षिश्च वृद्धोऽपि परिहीयते । ( असंशा. ४.११ )
चिकित्सा—उपविष्टकवच्चिकित्सा कर्तव्या ।
( असंशा. ४.१३ )

**उपशोष**—( परिव० ) पु., लक्षण० कर्शनम्
( असंशा. ४. चनि. ६.१० )

**उपशोषण**—न., उपशोषः ( चनि. ६.१० )
वि. शोषकः, आर्द्रताविनाशकः
( सूच.२६.४२.५ )

**उपश्लेष**—पु., सान्निध्यम्, सन्निपातादिज्वरनिदानम्
( चनि. १.२८ )

**उपष्टब्ध**—वि., धारितः, बलयुक्तः ( चशा. ६.२३ )

**उपष्टम्भन**—न., उपस्तम्भनम्, आधारः, आलम्बनम्,
( असंसू. ९.३६ )

**उपसन्धान**—( परिव० ) न., आरोपणम्, उपरि समीपे वा स्थापनम् ( सुचि. ३२.१० )

**उपसंभृत**—वि., समीपस्थापितम् ( सुसू. ११.१८ )

**उपसर्ग**—पु., उपद्रवः ( चचि. २२.७ )
अन्यरोगाभिषङ्गः ( असंनि. ५.५९ )
संक्रामकः ज्वरादिरोगः अमानुषोपसर्गादयः
( सुउ. १.६ )
व्याकरणे धातोः पूर्वमुपयुज्यमानाः क्रियासंबन्धसूचकाः प्रादयः ( सुचि. २.९६ )
**–ज**—वि., रोगपीडितसमीपवर्तिनो जायमानो ज्वरादिरोगः ( सुसू. २४.७ )
**–संज्ञा**—स्त्री., अनर्थहेतुत्वभावना ( चशा. ५.१२ )

**उपसर्गात्मिका**—वि., स्त्री., तृष्णारोग०
( चसू. १९.४–( ४ )

**उपसर्जन**—न., ग्रहणम् ( असंक त. प्र. पृ. १३८ )
संसर्गः ( चक. १.२१ )

**उपसंस्कृत**—वि., विशुद्धम् ( सुचि. २७.८ )

**उपसंहरण**—न., एकत्राऽऽहरणम् ( सुचि. ३.६ )

**उपसंहित**—वि., संधिना युक्तम्, अनुकूलम्
( चवि. ८.२५ )

**उपसि ( शि ) ङ्घन**—न., उपक्रम० चूर्णादीनामाघ्राणम्
( सुउ. ५५.२९ )

**उपसूत**—पु., उपरसः ( र. १२.१४ )

**उपसृष्ट**—वि., संयुक्तम् ( सुशा. २.५ )
गृहीतम् ( सुउ. २८.३ )

**उपसेक**–पु., अन्नस्योपरि तक्रादिना सेचनम् ( चनि., २.४ )
व्यञ्जनम् येन मिश्रीकृत्यौदनादि भुज्यते ( अहृसू. ६.१७ )

**उपसेवन**–न., भोजनम् ( चसि. ४.४२ )
व्यञ्जनम् ( चचि. १९.११५ )

**उपस्कर**–पु., उपकरणद्रव्यम् ( असंशा. १२.१३. )
सामग्री ( र. ७.३४ )

**उपस्कृत**–वि.,संस्कारादिभिः संस्कृतम् ( चवि. ८.८७ )
**–क्षीर**–न., भेषजैः संस्कृतं दुग्धम् ( चशा. ८.३२ )
**–तनु**–वि., संस्कृतशरीरः ( अहृसू. १७.१८ )
**–भेषज**–न.,संस्कृतमौषधम् ( चवि., ८.८७ )

**उपस्तम्भ**–पु., स्तम्भ० शरीरधारको भावः ( चसू. ११.३४ )
अवरोधः, अवष्टम्भः ( सूचि. ३८.१६.१७; )
शरीरधारणम्, ' पुरीषमुपस्तम्भं करोति ( सुसू. १५.६ )
स्तब्धता ( सुउ. ४२.१२४ )
**–त्रितय**–न., आहारः स्वप्नोऽब्रह्मचर्यम् एभिरुपस्तम्भैः शरीरं बलवर्णोपचयोपचितमनुवर्तते यावदायुषः संस्कारः । ( असंसू. ९.३६ )

**उपस्थ**–पु., न., कर्मेन्द्रिय० ( चशा. ७.७ )
जननेन्द्रियम् ( सुशा. १.४ )
मेढ्रं पुरुषाणां, योनिः स्त्रीणाम् ( सुसू. १५.९ )

**उपस्थातृ**–पु., परिचारकः ( चसू. ९.३ )

**उपस्थान**–न., सांनिध्यम्, रक्षणम् ( चशा. १.१४६ )

**उपस्थित**–वि., प्रत्यासन्नम् ( चशा. ६.२४ )
**–काल**–पु., प्रत्यासन्नकालः ( चशा. ६.२४ )
**–गर्भा**–स्त्री., निकटीभूतगर्भा, आसन्नप्रसवा ( असंशा. ३.१८ )
**–प्रसवा**–स्त्री., आसन्नप्रसवा ( सुशा. १०.७ )
प्रसवोत्सुका, ( भाप्र. ) गर्भपः; अद्य वा श्वो वा यस्या गर्भिण्याः प्रसवः बालजन्म भवति सा ( अहृशा. १.७४ )
**–श्रेयस्त्व**–न., अचिरादेव प्राप्तकल्याणता " उपस्थितश्रेयस्त्वं श्रेयस्करमार्गानुष्ठानेन परीक्षेत " ( चवि. ४.८ )

**उपस्नेह**–पु., निःस्यन्दः, उपलेपः ( चशा. ६.२३ )
सूक्ष्मायनैराप्यायनमुपस्नेहः ( गयी सुनि. ३.२४ )
स्निग्धत्वम् ( असंशा. २.३३ )

**उपस्नेहन**–( परिव० ) न., पुष्टिः ( सुशा. ७.३ )

**उपस्नेह्य**–वि., उपस्नेहयोग्यः ( कासिद्धि. अ. ७ पृ. १६७ )

**उपस्पर्शन**–( परिव० ) न., आचमनम् ( सुचि. २९.१० )
उदकस्पर्शनम् ( सुचि. २९.१० )
स्नानम् ( परिव० ) ( चसू. ८.१८ )

**उपस्वेद**–पु.,विरलाल्पबाष्पसंयुतो वातः, आर्द्रता ( चक. १.११ )
घर्मः, सगर्भवृत्तिसाधनम् ( चशा. ६.२३ )

**उपस्वेदन**–( परिव० ) न., स्वेदनम् ( सुचि. २७.८ )
( परिव० ) पाचनम् ( सुचि. ३२.११ )

**उपहत**–वि., दूषितम् ( सुचि. ६.१७ )
**–भल्लातक**–पु., कृम्यादिर्दूषितो भक्षितो वा भल्लातकः ( सुचि. ६.१७ )
**–मनस्**–वि., उपहतं दूषितं मनो यस्य सः ( चनि. ७.४ )
**–वासस्**–( परिव. ) वि., मलिनवासाः ( चसू. ८.१८ )

**उपहार**–पु., आहार० नैवेद्यः देवादीनां शान्त्यर्थम् ( चनि. ७.१६ )
देवादिषु गवाश्वप्रभृतीनामुपायनम्, अन्ये-उपहारो देवतानां सपशुर्बलिः ( सुसू. ६.२१ ( ड. )
दानम् ( चचि. ९.२३ )
धूपदीपादिकं पूजोपकरणम् ( सुक. ५.१२ )

**उपहित**–( परिव० वि., ) उपधानसहितम् ' न अनुपहितं शयनं प्रपद्येत ' । ( चसू. ८.१९ )

**उपाकरण**–न., मन्त्रसंस्कारः, यथा पशोर्दैवतार्थत्वेन कल्पनम् अभिमन्त्र्य पशोः क्रतौ हननं च ( चचि. १९.४ )

**उपाङ्ग**–न., अङ्गमेवाल्पत्वादुपाङ्गम् । तद्यथा देहस्य बाहुजङ्घे शिर इत्यङ्गानि, करचरणनासिकादीन्युपाङ्गानि, अङ्गसमीपमित्येके ( सुसू. १.६ )
( परिव० ) पु., स्नेहः स्नेहदानम्, उप समीपे अंज्यते लिप्यते अनेन इति उपाङ्गः नाम स्नेहः ( चवि. ३.३८ ) यथा रथांगस्य उपाङ्गेन स्नेहदानेन दृढत्वं भवति ( चसू. ५.८५ )

**उपात्त**–वि., प्राप्तम्, अदृष्टादागतम् ( असंसू. ८.६ )

**उपादान**–( परिव० ) न., कारणम्, आधारः, अर्थः, आश्रयः ( चशा. १.१३५ )
समवायि कारणम्, यथा घटस्य मृत्तिका ( र. १०.३ )

**उपाध्याय**–पु., वैदिककर्माऽभिज्ञो याज्ञिकः ( सुशा. २.२७ )

**उपानत्क**–वि., सपादत्राणः ( सुचि. २४.८९ )

**उपानह्**– स्त्री., पादत्राणम् ( सुचि. २४.७३ )
चर्मपादुका ( इन्दु. असंसू. ३ )
पादहिता ( सुसू. २९–९ )
चर्मकृतं पादत्राणम् ( असंसू. ८.४३ ) ( इन्दुः )
गुणाः—अन्वर्थसंज्ञं पादत्रं बलदकशुक्ररक्षणम् । ( असंसू. १२. ९३ )
उपानद्रहितस्य चङ्क्रमणे अनारोग्यमनायुष्यं चक्षुरूपाद्घ्रातादिदोषाः ( सुचि. २४.७३ )

**उपाय**–पु., साधनम् ( अहृसू. २९.८० )
योजनापद्धतिः ( चसू. २६.१३ )
'द्रव्याणि यथा कुर्वन्ति स उपायः' ( सुसू.४१.५ )
यथा स्वरसकल्कशृतशीतफाण्टघृततैललेहमोदकोत्कारिकादिप्रकारेण यथा कुर्वन्ति ( सुसू. ४१.५ )
कर्तृकरणकार्ययोनित्रयस्य सौष्ठवमभिधानं ( चवि. ८.७८ )
उपायो नाम भयदर्शन–विस्मापन–विस्मारण–क्षोभण–हर्षण–भर्त्सन–वध–बन्ध–स्वप्न–संवाहनादिः, अमूर्तो भावविशेषः ( चवि. ८.८७ )
उपगमनं व्याधिमेलक इत्यर्थः ( चइ. १.३ )
**–बल**–न., चिकित्साबलम् ( असंसू. ८.६ )
**–वित्**–वि., उपायज्ञः, यन्त्रशस्त्रावचारणादि यो जानाति सः ( अहृसू. २५.४० )

**उपायार्थ**–वि., उपायेन अर्थः प्रयोजनम् ( चवि. ८.७८ )

**उपालम्भ**–पु., तन्त्रयुक्ति०, उपालम्भो नाम हेतोर्दोषवचनम् ( चवि. ८.५९ )

**उपावर्तन**–न., विरामः, परावर्तनम्. ( सुचि. ६.४ )

**उपाश्रय**–पु., उपधानभेदः ( चसू. १५.७ ) अवष्टम्भकम् ( सुचि. ३७.१०९ )

**उपास्त्र**–न., उ( अ )पास्त्रं शास्त्रनियमवर्जितं धनुः ( सुचि. ११.११ )

**उपोदक**–पु., वनस्पति०

**उपोदका**–स्त्री., वनस्पति० उपोदिका,

**उपोदकी**–स्त्री., वनस्पति० उपोदिका

**उपोदिका**–स्त्री., वनस्पति० पत्रशाक० उपोदिका तिलकल्कसिद्धा हेतुरतीसारस्य ( चसू. २६.८९ )
तिलकल्कसिद्धमुपोदिकाशाकं नाश्नीयात्संस्कारविरुद्धत्वात् । ( सुसू. २०.१४ )
गुणाः—मधुरा कषाया स्निग्धा हिमा सरा उष्णवीर्या ( रा. ७.३४ ) भेदिनी ( चसू. २७.९४ )
वृष्या वातपित्तघ्नी श्लेष्मकरी रुच्या विष्टम्भकारिणी ( रा. ७.३४ ) मदविनाशिनी ( च. सू. २.३३ )
हिं. —पोई.
म. —**थोर मयाळ** ( अहको ). **थोरवेल**
बं. —पुई शाक
त. —पचनैक्कीरे पोतकी

**उप्त**–वि., प्ररोहार्थं भूमौ निक्षिप्तं धान्यम् ( चशा. ८.१८ )

**उभय**–वि., सर्व० ( सुचि. ७.३५ )
**–कालम्**–अ., सायंप्रातरित्यर्थः ( सुचि. ७.३५ )
**–ज्ञ**–वि., शास्त्रज्ञः कर्मज्ञश्च ( सुसू. ३.४७ )
**–भाग**–वि., ऊर्ध्वाऽधोभागे प्रच्यवमानम् ( चनि. २.९ )
**–भागहर**–वि., वमनं विरेचनं च कोशातक्यादि ( सुसू.३९.५ )
**–वृत्ति**–वि., उभाभ्यां क्षीरान्नाभ्यां वृत्तिर्यस्य सः, यथा बालः क्षीरपोऽन्नादश्च ( असंउ. २. पृ. १६ )
**–संश्रित**–वि., अन्तःश्रितः बहिःश्रितश्च यथा विसर्पः ( चचि. २१.२३ )

**उभयतोभाग**–वि., वमनविरेचनकरम् ( असंक. ८ त. प्र. पृ. १६६ )
यथोन्मादचिकित्सिते विषाणिका देवदालिका कारवेल्लिकादि तीक्ष्णमुभयतो दोषहरं द्रव्यं शोधनार्थं देयम् ( सुउ. ६२.१४ )

**उभयतोमुख**–वि., उभयतो मुखं यस्य तत् यथा नाडीयन्त्रं स्रोतोगतशल्योद्धरणार्थं बस्त्युत्तरबस्तिधूमयन्त्रादीनि नाडीयन्त्राणि ( सुसू. ७.१३ )

**उभयतःशुद्ध**–वि., वमनविरेचनाभ्यां शुद्धः ( सुउ. ३९.१३२ )

**उभयार्थकर**–वि. व्याधिहेतुत्वं व्याधिलक्षणं च करोति इति ( चनि. ८.२० )

**उभयार्थकारि**–वि., हेतुव्याधिविपरीतम् यथौषधम् ( असंसू. १२.९ )
यत् हेतुव्याधिविपरीतमर्थं करोति यथा छर्दौ छर्दनम् दैवव्यपाश्रयमौषधञ्च ( असंसू. १२.९ )

**उमा**–स्त्री., वनस्पति० अतसी ( अहृसू. ६.२४ )
**–जं तैलम्**–न., अतसीतैलम् ( अहृसू. ५.६१ )
**–पति**–पु., सिद्धयोग०, मासेन सर्वरोगनाशकः, संवत्सरेण वलीपलितनाशकः ( र. २७.७१.–७६ )
**–प्रसादन**–पु.,ज्वरघ्नयोग०, शीतज्वरापहः, चातुर्थिकज्वरनाशकः ( र. १२.५६–५९ )
**–लेप**–पु., अतसीलेपः ( चचि. २९.१४० )
**–शम्भु**–पु., सिद्धयोग० सन्तापशोषबलहीनतातृषाप्रमेहघ्नः वासास्वरसेन युक्तः ( र. १७.५२–६१ )

**उम्पास**–पु., वनस्पति०=व्रीहिः ( रा. १६.११८ )

**उम्पिका**–स्त्री., वनस्पति०=व्रीहिः ( रा. १६.११८ )

**उरग**–पु., कृष्णसर्पः, तस्य वसा यष्टीमधुकचूर्णान्विता वातजतिमिरेऽञ्जनार्थं हिता ( सुउ.१७.३५ )

भूताधिपति० ( असंउ. ७ पृ. ५९ )

ग्रह० नागग्रहः, 'पञ्चम्यामपि चोरगा……… विशन्ति' ( सुउ. ६०.१८ )

**उरण**–पु., मेषः ( चसि. ११.२० )

जाङ्गलमृग० ( चसू. २७.४५ )

**उरभ्र**–पु., मेषः ( सुउ. ५१,५३ )

कीट० स वायव्यः वातकोपनः वातरोगान् करोति ( सुक. ८.५–८ )

**–वसा**–स्त्री., जाङ्गमद्रव्य० नेत्ररोगेषु अञ्जनार्थं उपयुज्यते ( असंउ. १६.१२१ )

**उरभ्रक**–पु., उरभ्रः ( असंउ. ४३. पृ. ३५१ )

**उरस्**–न., शारीर०, वक्षः द्वादशाङ्गुलोत्सेधं प्रमाणतः ( चवि. ८.११७ )

'अष्टादशाङ्गुलविस्तारमुरः' ( सुसू. ३५.१२ )

अवलंबकश्लेष्मणः स्थानम् ( अहसू. १२.१५ )

स्तनयोरन्तरालम् ( सुउ. ६२.३३ )

श्लेष्मस्थानम् ( सुसू. २१.७ )

ग्रीवामूलादधस्ताद्धृदयोर्ध्वं स्तनयोर्मध्यस्थानमुरः ( सुसू. १८.१८ )

अस्मिन् चतुर्दशास्थीनि ( चशा. ७.६ )

अस्मिन्मर्माणि नव, तानि च एकं हृदयमर्म, स्तनमर्मणी द्वे, स्तनरोहितमर्मणी द्वे, अपलापमर्मणी द्वेऽपस्तम्भमर्मणी द्वे । इति ( सुशा. ६.५ )

**उरः-क्षत**–न., उरोरोग०, उरस्यभ्यन्तरे क्षतादुरःक्षतम्

'उरस्यन्तःक्षते सति' ( इन्दु; असंनि. ३.३३ )

सामान्यस्वरूपम्–उरोरुक्कासः श्लेष्मरक्तनिष्ठीवनं च

सम्प्राप्तिः–यदा हि पुरुषो दुर्बलोऽपि सन् बलवतासह विगृह्णात्यतिमात्रं वा भारमुद्वहत्यभिहन्यते वाऽन्यद्वा ।

किंचिदेवंविधं विषममतिमात्रं वा व्यायामजातमारभते तदा तस्याऽतिमात्रेण कर्मणोरः क्षण्यते । तस्योरःक्षतमुपप्लवते वायुः । तत्राऽवस्थितो वायुः । श्लेष्माणमुरःस्थमुपसंसृज्य शोषयन् पित्तं च दूषयन्विहरत्यूर्ध्वमधस्तिर्यक्च ।

तस्य……योंऽशः प्राणवहानि स्रोतांस्यन्वेति तेन श्वासः प्रतिश्यायश्च जायते । ततः क्षणनाच्चैवोरसो विषमगतिमत्त्वाच्च वायोः, कण्ठस्योद्ध्वंसनाच्च कासः सततमस्य संजायते । स कासप्रसङ्गादुरसि क्षते शोणितं ष्ठीवति । शोणिताऽऽगमनाच्चाऽस्य दौर्बल्यमुपजायते । एवमेते साहसप्रभवाः साहसिकमुपद्रवाः स्पृशन्ति ( चनि. ६.४ )

पूर्वरूपम्—एतस्याव्यक्तलक्षणमेव पूर्वरूपम् ( चचि. ११.१२ )

उरोरुक्शोणितच्छर्दिः कासो वैशेषिकः क्षते । क्षीणे सरक्तमूत्रत्वं पार्श्वपृष्ठकटिग्रहः ॥ ( चचि. ११.१३ )

लक्षणम्—उरोभेदनविभजने, पार्श्वपीडनमङ्गवेपनं, क्रमेण वीर्यबलवर्णरुच्यग्निहानिज्वरो व्यथा मनोदैन्यं अग्निवधाद्विड्भेदश्च कासमानस्य सुदुर्गन्धो दुष्टः पीतो विंग्रथितो बहुः सरक्तोऽसितः श्यावः श्लेष्मा प्रवर्तते । सक्षतः अत्यर्थं क्षीयते शुक्रौजसोः क्षयात् । ( चचि. ११.९–११ )

'सन्तप्तवक्षाः सोऽत्यर्थं दूयनात् परिताम्यति'—मोहं याति ( सुउ. ४१.२५ )

विधिः—चरके राजयक्ष्मणि चतुर्विधेषु हेतुषु साहसज एको हेतुः ( चनि. ६.३ )

सुश्रुते धातुक्षयहेतुष्वेको रक्तक्षयजः । ( सुउ. ४१.२७ )

वाग्भटे पञ्चकासेष्वेकः उरःक्षतजः ( असंनि. ३.३३–३७ )

साध्यासाध्यता–'अल्पलिङ्गस्य दीप्ताग्नेः साध्यो बलवतो नवः । परिसंवत्सरो याप्यः सर्वलिङ्गं तु वर्जयेत् ॥ ( चचि. ११.१४ )

रोगोऽयं धातुशोषे राजयक्ष्मणि वा पर्यवस्यति, रोगी म्रियते वाऽकस्मात् । 'सानाथ्यात्साध्यः सामर्थ्यात्साध्यः–पाठः ( असंनि. ३.४२ )

चिकित्सासूत्रम्–'साहसं वर्जयेत्कर्म रक्षन् जीवितमात्मनः' ( चनि. ६.५ )

'उपद्रवांश्च स्वरवैकृतादीन् जयेद्यथास्वम् ।' ( सुउ. ४१.२३ )

कासात् उपेक्षया श्वासक्षयस्वरसादादयो रोगा भवन्ति ततस्तं त्वरया जयेत्तस्याऽऽशुकारित्वात् । ( असंनि. ३.४३ )

चिकित्सा–वृषो लाक्षा तथा नागबलाभ्यासोऽत्रोपयुज्यते ( असंसू. १३.३ )

अमृतप्राशः ( अहचि. ३.९४–१०१ )

तथा कूष्माण्डकरसायनमप्यत्रोपयुक्तम् । ( अहचि. ३.११४–११८ )

–**क्षतशोष**–पु., शोषभेद० उरःक्षतनिमित्ताद् धातुक्षयः शोषो वा भवति ( सुउ. ४१.२६–२७ )
–**सुतता**–स्त्री., लक्षण० रक्तजप्रतिश्यायस्य लक्षण० ( असंउ. २३ पृ. १६७ )
–**स्रोतस्**–न., सूक्ष्मस्रोतः ( चचि. २८.१९३ )
**उरस्य**–वि., उरःसंबद्धम् कर्म ( सुउ, ४१.२४ )
( **उरो** )-**गल**–न., कीट० पिपीलिका ( असंउ. ३१. त. प्र. पृ, २९९ )
उलुंगिलपाठः ( असंउ. ३१ पृ, २३२ )
–**घात**–पु., रोग० लक्षण०—'उरःक्षतं गुरु स्तब्धं पूतिपूर्णकफो रसः । सकासः सज्वरो ज्ञेय उरोघातः सपीनसः ॥ 'ताम्राक्षश्च भवेज्जन्तुरुरोघातप्रपीडितः' ( डसुउ. २४.१२ )
रोग०, लक्षणम्—'पित्तश्लेष्मोत्तरो व्याधिरुरोघातस्त्रिदोषजः । स्वहेतुकुपिता दोषा उरोघातं चतुर्विधम् ॥ कुर्वन्ति सेवमानानां लौल्यमध्यशनादि च । शीतज्वरः प्रतिश्यायः कण्ठः शुकैरिवावृतः ( काचि. उरोघात पृ. १३२ )
बाल्ये तस्य लक्षणविशेषः—'निष्टनत्युरसाऽधिकम्' ( कासू. २५.३८ )
–**धूमायन**–न., व्याधिलक्षण० उरसो धूमोद्गमनमिव ( चचि. १८.१५ )
–**रुज्**–स्त्री., रोगलक्षण० उरोभवं दुःखम् ( चचि. ११.१३ )
–**रोग**–पु., उरसि जायमानो रोगः ( चचि. १.७१ )
–**विबन्ध**–( परिव० ) पु., रोगलक्षण० रज्ज्वादिभिर्बद्धमानमिवोरसि दुःखम् ( हे. अहृसू. ४.८ )
**उरु**–वि., विस्तीर्णं, गम्भीरम् ( र. २४.९ )
–**पूग**–पु., वनस्पति० श्वेतैरण्डः, नेत्ररोगे उपयुक्तं द्रव्यम् ( काखि. १३.३२ )
–**माण**–पु., वनस्पति० औत्तरापथिको फल० वनस्पतिनामा मधुरस्निग्धफलवृक्ष० ( चचि. २९.६५ )
गुणाः–गुरूष्णस्निग्धमधुरः बलप्रदो वातघ्नो बृंहणो वृष्यः कफपित्तप्रवर्धनश्च (चसू. २७.१५७–१५८)
मेध्यः हृद्यः वयस्स्थापकश्च
हिं.—नास्पति ( हाराणचंद्र )
म.—वायवर्णा.
–**मूलक**–वि., गम्भीरमूलम् ( र. २४.९ )
**स्तम्भा**–स्त्री., कदली ( रा. ११.१०७ )
**उरुबु**–पु., ( सुचि. ३८.४३ ) उरुबुक–( चसू. ४.९ ) उरुबूक–( सुसू. ४६.२५४; ) उरुबुक–( चचि. ३.२६७; ) पु., उरुबूका, स्त्री., ( असंसू. ७. १४६ ) उरुबुकः–एरण्डः ( चसू. ४.९ ) उरुबूक= शुक्लैरण्डः ( सुसू. ४६.२५४; ) रक्तैरण्डः, ( चचि. ३.२६७ ) ( रा. ८.४४६ ) शाक० तल्लघु भिन्नशकृत्तिक्तं च ( चसू. २७.१०८ ) उरुबूकतैलम्–एरण्डतैलम् ( असंचि. १७. त.प्र.पृ. ९८ )
–**पत्र**–न., एरण्डपत्रम् ( अहृसू. २४.१८ )
**मूल**–न., एरण्डमूलम् ( सुउ. ५१.४९ )
**उरुबूक**–पु., वनस्पति० रक्तैरण्डः=एरण्ड ( रा. ८.४४६ )
**उर्वेरी**–स्त्री., वनस्पती०=व्रीहिः ( रा. १६.९८ )
**उर्वारु**–न., वनस्पति०=एर्वारुकम् ( ध. १.१७६ )
–**तैल**–परिव० न., एर्वारुतैलम् ( ध. ६.१४२ )
**उर्वी**–स्त्री., भूमिः ( सुसू. ६.८ )
पृथिवी ( सुशा. १.४ )
न., मर्म० सक्थिमर्म० उरुमध्ये वैकल्यकरं सिरामर्म, 'सिरामर्मैदमेकाङ्गुलं वैकल्यकरञ्च,' संख्या—वामदक्षिणभेदेन द्वे, तद्व्यधेन शोणितक्षयात् सक्थिशोषः ( सुशा. ६.६ )
**उलका**–चुल्लका पाठः स्त्री० गेहे जातो राग० "पतङ्गीकल्कतो जाता लोहे तारे च हेमता । दिनानि कतिचित् स्थित्वा यात्यसौ उलका ( चुल्लका ) मता ॥" ( र. ८.५१–५२ )
**उलुङ्गिल**–न., कीट०, पिपीलिका ( असंउ. ३१ पृ. २३२ )
**उलुम्ब**–पु., होलकाः, मुद्गकलायादिशिम्बा अग्निपक्वा होलका इत्युच्यन्ते ।
गुणाः—लघवः कफमेदोविशोषणाः ( सुसू. ४६.४१० )
–**क**–पु., सरसाः,–सार्द्राः–भृष्टयवाः ( सुचि. १०.५ )
**उलूक**–पु., पक्षि० प्रसहवर्गीयः ( चसू. २७.३६ ) ( सुसू. ४६.७४; ) दिवाभीतः ( सुउ. ६०.३८ ) घूकः ( काखिबालग्रह ) अस्य मांसं यक्ष्मिणे प्रशस्तम्, छद्मना देयम् ( सुउ. ४१.३६ ) चर्मरोमाणि ग्रहचिकित्सायां धूमार्थमुपयुज्यन्ते । ( सुउ. ६०.३८ )
मूत्रपित्तशकृल्लोमनखचर्माणि वातश्लेष्मात्मके उन्मादे सेकाञ्जनप्रधमननस्यधूमेषूपयुज्यन्ते ( चचि. ९.७४.७५ )
उलूकमांसगुणाः पित्तलम्, भ्रांतिकरणम्, वातलम्, शोषणम् ( ध. ६.४७४ )

**–मुख**–न., स्वस्तिकयन्त्र०, उलूकमुखसदृशं यन्त्रम् ( सुसू. ७.१० )

**उलूखल**–न.,उदूखलम् ( चशा. ७.६ )
तण्डुलकण्डनोपयोगि साधनम् ( सुशा. ५.२७ )

**–संधि**–पु., अस्थिसंधिप्रकार०, उलूखलाकृतिः संधिः, 'संधयः.......... कक्षावङ्क्षणदशनेपूलूखलाः' ( सुशा. ५.२७ )
कक्षासंधी द्वौ, वङ्क्षणसन्धी द्वौ, दशनसंधयो द्वात्रिंशदित्येते उलूखलसंधयः ( सुशा. ५.२७;) ( असंशा. ५.७७ )

**उलूप**–तृण०, ( चवि. ३.७. ( ३ )

**उल्का**–स्त्री., आकाशात् पतन् तेजःपिण्डः ( सुसू. ३२.४ )

**–पात**–पु., तारकापातः, आकाशाज्ज्वलदग्निगोलपातः, उत्पातेष्वेकः ( सुचि. २४.९२; चवि. ३.७ ( ३ )

**उल्ब**–न., गर्भकोशः, जरायुः ( असंउ. १. ( पृ. १ )
जातमात्रस्य बालस्य त्वगुपरि दृश्यमानः गर्भकाले संचितः चिक्कणद्रव्यविशेषः, उल्बदोषः, जातमात्रमेव बालमुल्बात्सैन्धवसर्पिषा मार्जयेत् । ( असंउ. १ )

**उल्बक**–पु., रोग० जातमात्रबालस्य रोगः, लक्षणम्–गर्भाम्भसोऽवमनात् कण्ठगतस्य श्लेष्मणः संपर्काद्वा दुष्टो रसो हृदये मार्गानावृणोति । तत आवृतमार्गत्वाब्दद्धमुष्टिः बालो हृद्रोगाक्षेपकश्वासकासच्छर्दिज्वरादिभिरभिभूयते । सहजोऽम्बुपूर्णश्च तस्यापरपर्यायौ ( असंउ. २ ( पृ. ३२ )

**उल्बण**–वि., विपुलम्, बहुलम् ( सुचि. ३४.५ )

**–मारुत**–वि., बहुवातः ( अहृसू. १९.३४ )

**उल्मुक**–न., अङ्गारः ( चसू. १७.९८ )

**उल्लापक**–पु., मिथो भाषणम् ( असंसू. २१ )
–न., स्तोत्रम् ( चशा. ४.३७ ( ७ ) ( चसू. १५.७ )

**उल्ली**–पु., वनस्पति०=पलाण्डुः ( रा.७.१०० )

**उल्लुप्त**–वि., पिष्टमिव कृतम्, शूल्य०, परिशुष्कमांसं निरंतरं छेदनातिशयेनाणुशश्छिन्नत्वात्पिष्टमिव उल्लुप्तपिष्टम्; उल्लुप्तमिति पाचका वदन्ति । ( सुसू. ४६.३५५ )
बस्तिप्रणेतृदोष०, उल्लुप्तमिह बस्तिपीडनदोषः, यः पीडनविच्छेदं कृत्वा पीडयते सः, तदेवोल्लुप्तत्वमिति, चक्र० ( चसि. ५.८ )

**उल्लेख**–पु., वमनम् ( चचि. २८.१९६ )
आहारस्य च्छर्दनम्, तच्छोषपूर्वरूपम् ( चनि. ६.१५ )

**उल्लेखन**–न., वमनम् ( चचि. २४.४४ )

**उल्लोडित**–न., दधिसरः ( चसू. १३.६६ )

**उशीर**–पु.न; तृण० तस्य सुगन्धिमूलमुपयुक्तम् ( सुसू. ३८,२४ )
पित्तसंशमनवर्गे एकं द्रव्यम् ( सुसू. ३९.८ ) ( अहृसू. १३.६ ) तिक्तस्कन्धे एकं द्रव्यम् ( अहृसू. १०.२८ ) दाहत्वग्दोषस्वेदापनयनप्रलेपनानां श्रेष्ठम् ( चसू. २५.४० असंसू. १३.३ ) शुक्रशोधनगणे एकं द्रव्यम् ( चसू. ४.१२ ( २० ) ( असंसू. १५.२५ ) वर्ण्यगणे एकं द्रव्यम् ( चसू. ४.१० ( ८ ) ( असंसू. १५ ) दाहप्रशमनगणे एकं द्रव्यम् ( चसू. ४.१७ ( ४१ ) ( असंसू. १५.४० ) अङ्गमर्दप्रशमनगणे एकं द्रव्यम ( चसू. ४.१७ ( ४४ ) धूम्रपाने उपयुक्तमेकं द्रव्यम् ( चसू. ५.२१ ) सारिवादिगणे एकं द्रव्यम्, ( असंसू. १६.५ ) छर्दिनिग्रहणगणे एकं द्रव्यं ( चसू. ४.१४ ( २८ ) गुणाः–तिक्तो मधुरानुरसः शीतो लघुः स्वेदघ्नो वातपित्तघ्नो दाहक्लान्तिज्वरतृष्णाप्रमेहरक्तविकारदौर्गन्ध्यश्रमहरः ( ध. ३.१४ ) 'उशीरं पाचनं ज्वरातिसारवमथुरक्तपित्तक्षतापहम्' ( असंसू. १२.७८–७९ )
हिं.—खस, काला वाला.
म.—काळा वाळा.
गु.—काळो वाळो.
बं.—खश.
त.—वेहि वेर.

**उशीरादितैल**–न., सिद्धतैल०, उशीरलोध्रत्रिफलाप्रियङ्गुभिर्द्रव्यैः सिद्धं तिलतैलं कफजतिमिरे नस्यार्थमुपयोज्यम् ( सुउ. १७.४१ )

**उषण**–पु., रस०, कटुरसः ( असंसू. १.३५ )

**उषणा**–स्त्री., पिप्पली ( रा. ६.११० )

**उषर**–वि., लवणयुक्तम् ( चक. १.९ )

**उषा**–स्त्री., रोगलक्षण० दाहः ( सुचि. २.२२–२३ )
अरतिमान् दाहः ( अहृसू. २९.४ )

**उषित**–वि., स्थितम् ( सुचि. ४.२९ )
रात्रौ स्थितम् ( सुउ. ४१.३८ )
पर्युषितम् ( अहृसू. ७.३६ )

**उष्ट्र**–पु.,–पशु० उष्ट्रिका ( र. १०.७९ ) उष्ट्री, स्त्री., ( चसू. १.९४ ) ग्राम्यवर्गीयः ( सुसू. ४६.८५ ) वातप्रकृतिः पशुः ( सुशा. ४.६७ ) मरुभूमौ वर्तमानः ( सुचि. ७.१८–१९ )

'( उष्ट्री ) क्षीरमुदरश्वयथुघ्नानां श्रेष्ठम्' ( असंसू. १३.३ ) 'अल्पाहारतया......उष्ट्रीणां ( पयः ) ......अलवणम्' ( काखि. २२–पृ. ३५६ )

श्वयथुरोगे मासं सप्ताहं वा भोजनवारिवर्जनपूर्वं योजनात्तद्रोगहरम् ( चचि. १२.२६ ) **दुग्धगुणाः**–स्वादु ( सु ) ईषल्लवणमुष्णं, रूक्षं, लघु, दीपनं, ( अहसू. ) वातकफघ्नं आनाहकृमिशोफोदरकुष्ठ-गुल्मश्वासहरम्, विषघ्नं ( सु. चसू. २७.२२० ) दुर्बलाय प्राणभृत् ( चचि. १३.१८३; सुसू. ४५.५३ ) ( असंचि. १७ त. प्र. पृ. ९५ ) ( अहसू. ५.२५ ) ( ध. ६.१७१ ) बहुत्वाच्च घनत्वाच्च बल्यं पुष्टिकरं पयः । गुरु वृष्यं च निर्दिष्टं मधुरं च विशेषतः ॥ ( काखि. २२. पृष्ठ ३५६ ) दधिगुणाः–स्वाद्वम्लमीषत्क्षारं गुरु ( सु ) कटु विपाके भेदि ( सु ) वातघ्नं अर्शःकुष्ठकृम्युदरशूलघ्नं च ( सुसू. ४५.७० ध. ६.१९४ )

नवनीतगुणाः– लघुविपाकं शीतलं व्रणकृमिकफास्रववातघ्नं विषनाशनम् ( रापरि. १५.११ )

घृतगुणाः–मधुरशीतकटुविपाकि दीपनं कफवातघ्नं शोफकृमिविषकुष्ठगुल्मोदरमूर्च्छाप्रमेहोन्मादगर-ज्वरापस्मारहरम् ( सुसू. ४५.१००; ध. ६.१५० )

मांसगुणाः–शोषिणे हितम् ( सुउ. ४१.३७ )

स्वादूष्णं शीतं ( रा ) लघुपाकि चक्षुष्यं बल्यं पुष्टिकरं रुच्यं वीर्यकरम् त्रिदोषघ्नमर्शोमेदहरम् ( ध. ६.३८० )

मूत्रगुणाः–सतिक्त श्वासकासघ्नमर्शोघ्नं चौष्ट्रमुच्यते । ( चसू. १.१०३ )

गजोष्ट्रादीनां पुंसां मूत्रं ग्राह्यम् ( हे. अहसू. ५.८२–८३ )

तत्कटुतिक्तलवणोष्णं बल्यं पित्तलं वातघ्नं शोफ-कुष्ठोदरोन्मादकृम्यर्शोघ्नम् ( सुसू. ४५.२२८ ) ( ध. ६.४९५ )

पुरीषगुणाः–शुष्कपुरीषचूर्णोऽवचारितमत्रं प्रमेहे उपयुज्यते ( सुचि. ११.११ )

तस्य दन्तोपयोगः–दन्तः एडगजादियोगे कुष्ठप्रशमनार्थम् ( चचि. ७.१६० )

क्षतशुक्रहरवर्त्युपयोगी च ( असंउ. १४. पृ. १०४ ) शकृदादिसिद्धघृतं शोषे उपयुक्तम्, तच्च उष्ट्र्याः शकृद्रसक्षीरमांसरसरुधिरैः द्राक्षाश्वगन्धामगधा-सिताभिः सिद्धम् ( सुउ. ४१.४९ )

उष्ट्रास्थिक्षारः पु० क्षार०, हस्तिमेहे पानार्थमुपयुज्यते ( सुचि. २१.९ )

**–काण्डी**–स्त्री., वनस्पति० एतस्याः बीजं मधुरं वृष्यं सन्तर्पणं च, गुणाः–तिक्ता उष्णा रुच्या हृद्रोगघ्नी च ( रापरि. १०.४३ )

**–ग्रीव**–पु., भगन्दररोग० ( सुनि. ४.६ )

**–धूमक**–पु., वृश्चिक० उष्ट्रवद्धूमवर्णत्वात् उष्ट्रधूमको, रात्रिचारो वा, दंशलक्षणम्–दंशेनाऽङ्गानां शीताम्बुना सेक इव, शेफस्स्तम्भः हृष्टरोमता च, सः साध्यः ( असंउ. ४३ पृ. ३५४–५५ )

**–भक्षिका**–स्त्री., वनस्पति० दुरालभाभेदः धन्वयासः ( रा. ३.२२ )

**–रथ**–पु., उष्ट्रेण युक्तो रथः ( सुसू. २९.६ )

**उष्ट्रिका**–स्त्री., वृश्चिकाली ( रापरि. ९.७ )

**उष्ण**–पु., गुण० विंशतिगुणेष्वेकः शीतविपरीतगुणः स्वेदने शक्तिः ( अहसू. १.१८ ) वीर्यसंज्ञको गुणः, अग्निगुणभूयिष्ठः ( सुसू. ४१.११ ) अस्य कर्म–क्लेशकरं, भेदनं, पाचनं, मूर्च्छातृट्स्वेददाहकरम् ( सुसू. ४६.५१४ ) वातघ्नः ( सुसू. ४१.११ ) त्वगिन्द्रियग्राह्यस्पर्शः ( चशा. ६.१० )

घर्मः, आतपः ( सुसू. ३०.२१ )

वि., अग्निगुणभूयिष्ठम्, यथा उष्णवीर्यद्रव्यम् ( चक. १.५ )

**–कामत्व**–न., रोगलक्षण० उष्णाभिलाषः ( अहसू. ११.६ ) द्र० 'उष्णकामिता'

**–कामिता**–स्त्री., रोगलक्षण० उष्णाभिलाषः ( सुसू. १५.१५ )

**–काल**–पु., ग्रीष्मकालः, वसन्तग्रीष्मात्मकश्चातुर्मासिकः ( चसू. ११.४२ )

**–गण**–पु., उष्णवीर्यौषधसंग्रहः, वातरोगे सेकलेप-क्वाथेषूपयुज्यते । ( सुचि. १७.४ )

**–गर्भगृह**–न., गृहमध्यगतमुष्णस्वभावं गृहम् ( चसू. १४.२८ )

**–जल**–न., ( उष्णाम्बु ) क्वथितं जलम् ( चचि. १३.१६१ सुसू. ४६.४२० )

**–तोय**–न., अनुपान० उष्णजलम् ( सुसू. ४६.४२० ) द्र० 'उष्णाम्बु'

**–दाह**–पु., लक्षण० उष्णेन कृतो दाहः उष्णेन कालेन उष्णेनाहारादिना च दाहः ( इंदु. असंसू. ६)

**–दोष**–पु., उष्णकालसमुद्भवो दोषो रोगो वा ( असंसू. ९ )

**–निःश्वास**–पु., लक्षण० उष्णस्पर्शः उच्छ्वासः ( चचि. २३.१६८ )

**–फला**–स्त्री., वनस्पति० बिम्बीभेदः, मधुरबिम्बी= बिम्बी ( रा. ७.३०४ )

**–वात**–पु., उष्णस्पर्शो वायुः, स ग्रैष्मिकः शारदो वा, 'उष्णवातातपैर्दग्धे शीतः कार्यो विधिः सदा' ( सुसू. १२.३८ )

मूत्ररोग० त्रयोदशबस्तिविकारेष्वेकः ( चचि. ९.३८ ) मूत्राघात० ( सुउ. ५८.२३ ) संप्राप्ति–व्यायाम-अध्व-आतपैर्वातावृतं पित्तं कृच्छ्रादधः स्रावयेत् । लक्षणम्–बस्तिमेढ्रगुदं च प्रदहन् हारिद्रवर्णं रक्तं सरक्तं वा मूत्रमधः स्रवति । ( सुउ. ५८.२२ )

चिकित्सासूत्रम्–मूत्रदोषे पञ्चकर्मक्रमो हितः । ततः संशुद्धदेहानां हिताश्चोत्तरबस्तयः । ( सुउ. ५८. ४९–५० )

चिकित्सा–शृतशीतपयोऽश्नाशी चन्दनं तण्डुलाम्बुना । पिबेत् सशर्करं श्रेष्ठमुष्णवाते सशोणिते ॥ ( भाप्र. मूत्राघात चि; असंनि. ९.२८, अहृनि. ९.३५.३६ )

**–वायु**–पु., दुष्टवात, उष्णस्पर्शः बाह्यो वायुः ( चवि. ३.७ ( १ ); असंसू. ९. ९६ )

**–विधि**–पु., क्रिया० यथा स्वेदः ( सुउ. ३९.२६६ )

**–वीर्य**–न., वीर्य० आग्नेयम्, स्वेदने शक्तिः ( अहृसू. ९.१८–१९ )

**–शरीर**–वि., रोगलक्षण० तप्ताङ्गः ज्वरार्तः ( चचि. ३०.२४४ )

**–स्वभाव**–वि., स्वभावतः उष्णम् ( अहृसू. ३.१४)

**उष्णाभिप्रायता**–स्त्री., लक्षण०, उष्णप्रियता ( चनि. १.२१ चनि. १.२७ )

**उष्णाभिप्रायिन्**–वि., उष्णस्य अभिप्रायः–इच्छा अस्यास्तीति ( चचि. ३.२६७ )

**उष्णाभिभूत**–वि., उष्णजन्यव्याधिग्रस्तः ( चसि. १.३५ )

**उष्णाम्बु**–न., उष्णं जलम्, कफविच्छेदि पित्तवातानुलोमनम्, स्रोतोमार्दवकरम् । ( सुउ. ३९.१०६–१०७ ) दीपनं पाचनं कण्ठ्यं लघूष्णं बस्तिशोधनम् । हिध्माऽध्मानानिलश्लेष्मसद्यःशुद्धौ नवज्वरे । कासामपीनसश्वासपार्श्वरुक्षु च शस्यते ॥

**उष्णाम्बुतप्त**–वि., उष्णोदकेन उष्णीकृतम् ( अहृसू. २०.१९ )

**उष्णाम्बुपरिषेक**–पु., उष्णाम्बुस्नानम्, "उष्णाम्बुनाऽधःकायस्य परिषेको बलावहः । तेनैव चोत्तमाङ्गस्य बलहृत्केशचक्षुषाम् ॥ ( अहृसू. २.१७ )

**उष्णार्त**–वि., रोगलक्षण० घर्मपीडितः (सुसू. ४५.१४४)

**उष्णाश्रुपात**–पु., रोगलक्षण०, ( सुउ. ५.७ )

**उष्णीष**–पु., न.. शिरोवेष्टनम्, शिरस्त्राणम् ( सुक. १.१५ ) केशबन्धपट्टकः ( असंसू. ८ )

गुणाः—पवित्रं केश्यमुष्णीषं रजोवाताऽऽतपापहम् । ( सुचि. २४.७५ )

शलाकायाः उष्णीषम्–शलाकायाः कार्पासवेष्टिताग्रम्, तत्प्रमार्जनक्रियासूपयुक्तम् (सुसू. ७.१४)

**उष्णोपचार**–पु., उष्णाऽऽहारादिः ( अहृसू. ५.६६ )

**उष्णौषध**–न., अग्निगुणभूयिष्ठं द्रव्यम् ( चक. १.५ )

**उष्मन्**–पु., औष्ण्यम् ( अहृसू. ११.२ )

बाष्पम् ( चशा. ८.१९ असंसू. ८ )

अग्निः ( अहृसू. १३.२५ )

जठराग्निः ( चचि. १५.२१५ )

भूताग्निः ( चचि. १५.१३ )

**–दाह**–पु., उष्णेन कालेनोष्णेनाहारादिना च दाहः ( असंसू. ६ )

**–देह**–पु., देहस्यौष्ण्यं, देहोष्मा ( असंसू. २९ )

**( उष्म )–स्वेद**–पु., स्वेद० सोऽष्टधा भिद्यते, पिंडः, संस्तरः, नाडी, घनाश्मा, कुंभी, कूप, कुटी, जेन्ताक इति ( असंसू. २६.७ )

**उस्र**–पु., किरणः ( सुउ. ६०.१९ )

## ऊ

**ऊखरज**–न., लवणद्रव्य०=रोमकम् ( रा. ६.४० ) औषर–क ( रा. ६.५१ )

**ऊद्र**–पु., वारिशयप्राणि० जलबिडालः ( चसू. २८.४० )

**ऊनम**–न., पात्रस्थे जले क्षिप्तस्य लोहादि–भस्मनः उपरिधान्यादिगुरुद्रव्य–स्थापनेनाऽपि हंसवत्तरतः इयं संज्ञा ( र. ८,२९ )

**ऊरु**–पु., शारीर० अधःशाखायाः प्रत्यङ्गम्, द्वौ ऊरू, ( डसुशा. ५.४ ) स्थानम्–जानुवङ्क्षणयोर्मध्यम्, ( सुउ. ६४.२६ ) जानूपरितनभागो वङ्क्षणसंधि-

पर्यन्तम् ( सुसू. ३५,१२ ) आयामः—अष्टादशाङ्गुलप्रमाणः, 'प्रमाणतश्च······अष्टादशाङ्गुलावूरू' ( चवि. ८.११७; सुसू. ३५.१२ )
'अष्टादशाङ्गुलायामे जङ्घे ऊरू च' ( असंशा. ८ )
परिणाहः—त्रिंशदङ्गुलपरिक्षेपौ—ऊरू' ( चवि. ८.११७ )
'त्रिंशदङ्गुलपरिणाहौ ऊरू' ( असंशा. ८.३० )
प्राशस्त्यम्—अनुपूर्ववृत्तावूरू ( असंशा. ८.४५ )

**—ग्रह**—पु., रोग०, ऊरुस्तम्भः ( चचि. २७.३३ )

**—दौर्बल्य**—न., रोगलक्षण० ऊर्वोः दौर्बल्यम् ( चचि. १४,१३३ )

**—नलक**—पु., अस्थि० ऊरौ स्थितं नलकाकारास्थि 'एकमूराविति' ( सुशा. ५.१९ )
'द्वावूरू नलकौ' ( चशा. ७.६ )

**—पिण्डिका**—स्त्री., प्रत्यङ्ग० षट्पञ्चाशत्प्रत्यङ्गेष्वेका, 'ऊरुमध्ये द्वे ऊरू पिंडिके' ( चशा. ७.११ )

**—मूल**—न., शारीरस्थान० वङ्क्षणप्रदेशसमीपे 'लोहिताक्ष' मर्मणः स्थानम् ( असंशा. ७ )

**—शूल**—पु., रोगलक्षण० ऊर्वोः शूलः ( चसि. ?.१६ )

**—शोष**—पु., रोगलक्षण० ऊरुस्तम्भः ( चसि. २.१६ )

**—संग्रह**—पु., रोगलक्षण० ऊरुग्रहः ऊर्वोराकर्षणमिव स्थितिः ( चसू. १४.२३ )

**—सदन**—न., रोगलक्षण० ऊर्वोः सादः सदनम् ( चसि. ७.४१ ) ऊर्वोः शक्त्यभावः ( चसू. १६.८ )

**—साद**—पु., रोगलक्षण० ऊर्वोः सादः, अशीतिर्वातविकारेष्वेकः ( चसू. २०.११ )

**—स्तम्भ**—पु., रोग०, निरुक्तिः—मेदसा सह श्लेष्मा वातपित्ते अभिभूय स्थैर्यशैत्याभ्यामूरू स्तम्भयेत्। स ऊरुस्तम्भः ( चचि., २७.१४ ) ऊर्वोः स्तम्भः, अशीतिर्वातविकारेष्वेकः ( चसू. २०.११ )
संप्राप्तिः—मेदोबलोत्कटः कफदोषो मेदसा सह वातादीन् कोष्ठे चितमामं चाशु रुद्ध्वा गौरवादधोगैः सिरादिभिरूरू याति, सक्थिजङ्घोरू च पूरयति, तेन चोर्वोरकर्मण्यता स्तैमित्यं च जायते। स ऊरुस्तम्भः ( चचि. २७.१०–१२ )
पूर्वरूपम्—प्राग्रूपं ध्याननिद्राऽतिस्तैमित्याऽरोचकज्वराः। रोमहर्षश्च छर्दिश्च जङ्घोर्वोः सदनं तथा ॥ ( चचि. २७.१५ )
लक्षणम्—गौरवं ध्यानमङ्गमर्दः स्तैमित्यं तन्द्रा छर्दि-



रुचिज्वराः पादयोः सदनं कृच्छ्रोद्धरणं सुप्तिः कम्पो दाहः भेदस्फुरणादिरुक् च ( चचि. २७.१३ )
( असंनि. १५.४९–५४; अहृनि. १५.४७–५१ ).
साध्याऽसाध्यत्वे—नवः साध्यः, सर्वलक्षणयुक्तः पुराणोऽसाध्यः ( चचि. २७.१९ )
चिकित्सा—अवस्थाविशेषेण यद्यप्याढ्यवाते स्नेहः प्रतिषिद्धस्तथापि यदा कफमेदसोर्भूयस्त्वेन परिक्षयः स्यात्तदा स्नेहादिकं कर्म विधीयते ( सुचि. ५.३९ )

**ऊरुस्तम्भचिकित्सित**—पु., अध्याय०, ( चचि. २७.१

**ऊर्ज**—पु.,कार्तिकमासः ( चसि. ६.५ )
इषोर्जौ शरत् ( सुसू. ६.६ )
''शरदूर्जसहौ पुनः'' ( चसि.६.५ )

**ऊर्जस्**—न., बल० उत्साहः ( चचि. १.४ )

**—कर**—वि., बलाधायकम् ( चचि. १.४ )

**—करभेषज**—(परिव०) न., औषध०, ऊर्जः प्रशस्तभावस्तत्करं साधनमर्थात्स्वस्थत्वेन व्यवह्रियमाणस्य पुंसो जरादिस्वाभाविकव्याधिहरं तथाऽप्रहर्षव्यवायक्षयिताल्पशुक्रत्वाद्यप्रशस्तशारीरभावहरम् ( चक्र. चचि. १.४ )

**ऊर्जा**—स्त्री., उत्साहः यथा 'स्नानमूर्जाबलप्रदम्', ( अहृसू. २.१६ ) मनसः प्रहर्षः, 'यथा अनुपानं करोत्यूर्जाम्,' ( अहृसू. ८.५२ ) प्राणनं, प्रीणनं वा ( अहृसू. १२.६ )

**ऊर्ण–र्णा**—न., स्त्री., मेषः, मेषा ( चवि. ७.१३ )

**—नाभि**—पु., कीट० लूता ( र. २७.१६ )

**ऊर्णांशु**—पु., मेषलोम ( चक्र. चवि. ७.१३ )

**ऊर्ध्व**—वि., श्रेष्ठम्, उपरितनम् ( असंशा. ६.७ )

**—कण्टका**—स्त्री., शतावरी ( रा. १.२९१ )

**—कण्टा-कण्टिका**—स्त्री., महाशतावरी ( ध. २.२९३ रा. ४.४४२ )

**—काय**—पु., कायस्य ऊर्ध्वभागः ( सुचि. ३.५४ )

**—ग**—पु., उदानः ( चचि. २८.२०९ )

**—गाम**—वि., ऊर्ध्वं गच्छतीति ( अहृसू. ९.११ )

**—गुद**—पु., मुखरोग० अर्शोगुल्मकफादिभिः अधः प्रतिहतो वायुर्वक्त्रदौर्गन्ध्यं कुर्वन् ऊर्ध्वं याति, स रोगो नामा ऊर्ध्वगुदः ( असंउ. २५. पृ. १८२ )

**—जत्रुग-गत**—वि., जत्रुग्रीवामूलं तस्योर्ध्वभागगतम् ( सुनि. १.१४., सुसू. ४६.४३८. )

**—जत्रुगद**—पु., ऊर्ध्वजत्रुगतो रोगः ( अहृसू. ८.५३ )

**—जत्रुज**—वि., जत्रुण ऊर्ध्वं जातः ( चसू. ५.३२ )

**–जत्रूत्थ**–वि., ऊर्ध्वजत्रुभागो नाम शिरोग्रीवम्, तत्र जायमानो रोगः ( चचि. २६.१३३ )
द्र० 'ऊर्ध्वजत्रुज.'

**–जानु**–वि., यो जङ्घे संकोच्य उत्तानश्शिरं शेते, यश्चोर्ध्वं तिष्ठति सः "नोर्ध्वजानुश्चिरं तिष्ठेत् इति चिरकालमूर्ध्वजानुस्थितिं निषेधति"
( अहसू. २.३७ )

**–पातन**–न., पारदसंस्कार०, पातनप्रकारः "ताम्रेण पिष्टिकां कृत्वा पातयेदूर्ध्वभाजने। नागवंगौ परित्यज्य शुद्धो भवति सूतकः ॥" ( र. ११.३४ ) अग्निसंयोगाद् घटसंपुटाधःस्थपारदस्योपरितनघटे आहरणम्। पारदसंस्कारो यत्र चतुर्थांशेन ताम्रेण सह मर्दितं पारदं स्थापयित्वा नागवङ्गविनाशार्थं घटसंपुटे स्थापयित्वाऽग्निनोर्ध्वघटे समाकर्षणं कुर्वन्ति। ( र. ११.३४ )

**–पाद्**–वि., ऊर्ध्वगाः पादा यस्य सः
( असंशा. १२.१३ )

**–भक्तिक**–वि., भुक्तस्यानन्तरं यत्सेव्यते तत्
( चचि. १८.३४ )

**–भाग**–वि., ऊर्ध्वं मुखेन दोषनिर्हरणं भजते इति, "दोषहरणमूर्ध्वभागं वमनसंज्ञकम्।"
( चक. १.४ )

**–भागिक**–वि., वमनद्रव्य० ( डसुचि. ३४.६ )

**–भाज्**–वि., ऊर्ध्वं भजते इति ऊर्ध्वभाज्
( चसू. २६.४१ )

**–मारुत**–पु., रोग० ऊर्ध्ववातः ( सुचि. १.१३ )

**–राजी**–स्त्री., उपरिभागे रेखा ( अहसू. ७.६ )

**–रोग**–पु., जत्रूर्ध्वरोगः ( अहसू. १८.३ )

**–वह**–वि., ऊर्ध्वं वहति इति, यथोर्ध्वगामि स्रोतः
( चसि. २.२१ )

**–वात**–पु., श्वासः ( चचि. २२.४० चक्र ) वातरोग० अधःप्रतिहतो वायुः श्लेष्मणा मारुतेन वोद्गारबाहुल्यं करोति स ऊर्ध्ववातः ( मानि. )

**–वायु**–पु., ऊर्ध्ववातः ( अहसू. ४.३ )
द्र० 'ऊर्ध्ववात'

**–व्यञ्जन**–न., ऊर्ध्वचिन्हं ऊर्ध्वरेखात्रयरुपलक्षणाभिव्यक्तिः ( चशा. ८.५१ )

**शिरस्**–वि., ऊर्ध्वं शिरः यस्य सः ( चशा. ६.२२ )

**–श्वास**–पु., श्वासरोग० ( सुसू. ३८.५ )

**–स्रोतस्**–न., शरीरस्योर्ध्वभागे वर्तमानं स्रोतः
( चचि. १८.६ )

**–हर**–वि., वमनम् ( चचि. १२.१७ )

**ऊर्ध्वाग्र**–वि., ऊर्ध्वमुखम् ( चइं. ७.२७ )

**ऊर्ध्वाङ्ग**–न., शारीर० ऊर्ध्वजत्रुभागः, शिरः
( अहसू. १.५ )
आयुर्वेदतन्त्र०, आयुर्वेदस्याष्टाऽङ्गेष्वेकम्, शालाक्यतन्त्रम्, 'यत्रोर्ध्वजत्रुगतानां रोगाणां नेत्रकर्णघ्राणादिसंश्रितानामाश्च्योतनशलाकादिनोपशमो-वर्ण्यते, तदूर्ध्वचिकित्सानामाऽङ्गम्
( अरु; अहसू. १.५ )

**ऊर्ध्वानिल**–पु., वातरोग०, ऊर्ध्ववातः ( अहसू. २१.३ )

**ऊर्ध्वानुलोमिक**–वि., ऊर्ध्वहरं अनुलोमहरं च वमनविरेचनद्विविधकर्मकरम् ( चसू. २६.६९ )

**ऊर्ध्वाभिघातिन्**–वि., ऊर्ध्वजत्रूत्थरोगी ( सुशा. १०.९ )

**ऊर्ध्वास्रपित्ति**–वि., ऊर्ध्वगरक्तपित्तवान् ( सुचि. ३३.१५ )

**ऊर्मिका**–स्त्री., मुद्रिका ( र. ५.२३९ )

**ऊर्वस्थि**–न., अस्थि० ऊरौ स्थितमस्थि ( सुशा. ५.१९ )

**ऊर्वस्थिनिर्गमन**–न., संधिविश्लेष० ऊरुसन्धिविश्लेषः
( सुचि. ३.२७ )

**ऊर्वी**–स्त्री., ऊरुः ऊरुः संबन्धि वा ( सुशा. ७.२२ )

**–सिरा**–परिव० स्त्री., उर्वीमर्मातिसान्निध्यादेकस्मिन् सक्थ्नि ऊर्वी संज्ञे द्वे सिरे ( सुशा. ७.२२ )

**ऊष ( र )** पु., ज्वर० भूमेः ज्वरः, ऊष्मा
( असंनि. १.५ )

**ऊषक**–पु., क्षारमृत्तिका, वाराणसीसमीपे बडहरदेशे बाहुल्येन लभ्यते ( सुसू. ३८.३७ )

**ऊषकादिगण**–पु., "उषकसैंधवशिलाजतुकासीसद्वयहिङ्गुनि चेति। ऊषकादिः कर्फं हन्ति गणो मेदोविश्लेषणः। अश्मरीशर्करामूत्रकृच्छ्रगुल्मप्रणाशनः ॥" ( सुसू. ३७.३८ ) अस्मिन् गणे अष्टाङ्गसंग्रहे तुत्थकमधिकम्
( असंसू. १६.१७ ) ( अहसू. १५.२३ )

**ऊषक्षार**–पु., ऊषरभूमिजातः क्षार०, गुणाः–उष्णोऽनिलघ्नः प्रक्लेदी बलापहश्च ( सुसू. ४६.३२४ )

**–सूत**–वि., ऊषरजातं लवणं, गुणाः–कटुकं छेदि उपयुक्तं सरकटु ( सुसू. ४६.३२१ )

**ऊषण**–पु., रस० कटुकः यथा मरीचादीनाम् "रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः"।
( अहसू. १.१४ )
न., वनस्पति०=मरिचम् ( चचि. १५.१११ )
पिप्पलीमूलम् ( ध. २.७५ )

**( ऊषणा )**–स्त्री., पिप्पली ( ध. २.७३ )

ऊषर–वि., लवण–क्षाररसप्रधाना मृत्तिका
( चचि. १६.१७; चवि. १.१८ )
–देश–पु., दग्धमृद्दिव प्रदेशः, तत्रस्थं जलं लवणरस-युक्तं भवति ( असंसू. ६.९ ) लवणयुक्ता भूमिः
( चक. १.९ )
–प्रसूत–न., ऊषरदेशजम् ,=औषरकम्, साम्भार-लवणम् ( सुसू. ४२.११ )
ऊषा–स्त्री., रोगलक्षण० प्रादेशिको दाहः, अग्निना दह्यमानस्यैव दुःखं दाहः, क्षारेणेवोषा ( हे अहृसू. ७.१९ ) पित्तजहृद्रोगलक्षणेष्वेकम् ( सुउ. ४३.७ )
क्षारमृत्तिका, वस्त्रधावनार्थे उपयुक्ता
( असंसू. २७ )
ऊषायण–न., दाह०, ओषः पित्तगुल्मे लक्षणम्,
( काचि० ) गुल्मचिकित्सा १२ ( पृ. १२२ )
ऊष्मन्–पु., अग्निः, उष्णत्वं ( चशा. ६.१५ )
पाचकवन्हिः ( चनि. १.२० )
आहारपरिणामकरभाव० तस्य कर्म पचनम्
( चशा. ६.१५ )
पित्तम् ( सुशा. ३.१८ ) औष्ण्यं, शरीरस्थ-पित्तस्य कार्यम् ( सुसू. १५.२ )
( ऊष्म )–स्वेद–पु., स्वेद०, बाष्पस्वेदः, विधि :–ऊष्मस्वेदस्तु कपालपाषाणेष्टकालोह-पिण्डानग्निवर्णानद्भिरासिच्यैदम्लद्रव्यैर्वा, तैरार्द्रालक्तकपरिवेष्टितैरङ्गप्रदेशं स्वेदयेत् मांसरसपयोदधिस्नेहधान्याम्लवातहरपत्रभङ्गक्काथपूर्णां वा कुम्भीमनुतप्तां प्रावृत्योष्माणं गृह्णीयात् । पार्श्वच्छिद्रेण वा कुम्भेनाऽधोमुखेन तस्या मुखमभिसंधाय तस्मिंश्छिद्रे हस्तिशुण्डाकारां नाडीं प्रणिधाय तं रोगिणं स्वेदयेत् । ( सुचि. ३२.५ )
ऊष्माधिक्य–न., ऊष्मणः आधिक्यम्, चत्वारिंशत् पित्तविकारेष्वेकः ( चसू. २०.१४ )
ऊष्मान्त–पु., वर्णाक्षरवर्गे० श ष स हा इति
( चशा. ८.५० )
ऊष्माभितप्त–वि., ऊष्मणा संतप्तः, यथाऽग्न्यातपादिना ( सुनि. ५.३ )
ऊष्मायण–न., औष्ण्यम्, कुष्ठस्य पूर्वरूपम्
( चनि. ५.७; ) पित्तोदरस्यैकं रूपम्
( चचि. १३.२८ )
ऊह–पु., आलोचनज्ञानं निर्विकल्पकम्, मनस एवं कर्म । "इन्द्रियाभिग्रहः कर्म मनसः स्वस्य निग्रहः । ऊहो विचारश्च ततः परं बुद्धिः प्रवर्तते ॥"
( चशा. १.२१ )
अश्रुतस्य परिकल्पना ( सुचि. ५.२९ )
ऊहापोह–पु., चर्चा; विचारः, त्याज्यात्याज्य० विवेचनम्
( चवि. ८.१४९ )
ऊह्य–न.. तन्त्रयुक्ति० मनोविषयाणामेकः, यत्संभावनयोह्यते 'एवमेतद्भविष्यति' इति । (चशा.१.२०;)
'यदनिर्दिष्टं बुद्ध्याऽवगम्यते तदूह्यम् ।
( सुउ. ६५.४० )
"यथापरिसंख्यातमपि यद्यद् द्रव्यमयौगिकं मन्येत तत्तदपकर्षयेत् ।" ( चसि. १२.४४ )

## ऋ

ऋक्ष–पु.. न., नक्षत्रम्, यथाऽऽर्द्रादीनि नक्षत्राणि
( सुसू. २९.३–४ )
मृग० नीलाण्डः, रोरुरिति प्रसिद्धः, जङ्गालमृगेष्वेकः ( सुसू. ४६.५४ )
वन्यपशु० भल्लूकः, अतिलोमशो गुहाशयः पशुः ( चसू. २७.३५ सुसू. ४६.७२ ) स मर्कटसदृशलोमशः ( हे० अहृसू. ६.४८ ) तस्य चर्म घृतेन सह धूपार्थमुपयुज्यते ( असंउ. ४ ) चर्मरोमाणि चास्य ग्रह–चिकित्सायां धूपनार्थमुपयुज्यंते ( सुउ. ६०.३८ ) तस्य पित्तेन सिद्धं तैलमपस्मारे पाना–भ्यङ्गार्थं प्रशस्तम् । ( सुउ. ६१.२४ ) मांसमस्य यक्ष्मिणे उपयुक्तम् ( चचि. ८.१५३ ) वसा तिमिररोगे मधुयुक्ताऽञ्जनार्थमुपयुज्यते ।
( असंउ. १६ पृ. १२० )
ऋक्षदंशेन विषबाधा भवति । ( सुक. ७.४२ )
ऋक्षविषलक्षणम्—व्यालविषवत् कण्डूनिस्तोदवैवर्ण्यसुप्तिक्लेदज्वरभ्रमादयो भवन्ति ।
( असंउ. ४६ पृ. ३७६ )
–जिह्व–न., पित्तजकुष्ठ०, ऋष्यजिह्वम् ( सुनि. ५.७ )
–पित्त–न., भल्लूकपित्तम्, एतत्सिद्धं तैलम् अपस्मारे पानाभ्यंगेषु प्रशस्तम् ( सुउ. ६१.२४ )
विषहरम् ( असंसू. ८.२९ )
–प्रिय–पु., वनस्पति०=ऋषभ ( रा. ५.१५८ )
–मुख–वि., स्वस्तिकयन्त्र० ऋक्षमुखसदृशं यन्त्रम्
( सुसू. ७.१० )
ऋक्षाह्वा–स्त्री., वनस्पति०=महामेदा ( रा. ५.१६४ )
ऋच्–स्त्री., मन्त्र०, यथा पशुपतेः ऋक्, शिवस्तवार्थं कृतो मन्त्रविशेषः, पाशुपत्यऋचः ( चचि.२.१८ )
( ऋग् )–वेद–पु., चतुर्णां वेदानामेकः (चसू. ३०.२०)
ऋचीक–पु., ऋषि०, जीवकस्य पिता ( काकसंहिताकल्प २० पृ. २२६ )

# आयुर्वेदीय - शब्दकोशः

## क



क–न., जलम्, नीरं कं सलिलं जलम् ( ध. ६.३०२ )
–ज–न., वनस्पति० कमल ( रा १०.२४३ )

कंस– पु., मान०, आढकप्रमाणम् ( चसि ३.४४ ) प्रस्थाष्टकं कंसः ( चक. १२.९४ ) ( असंक ८ त. पृ. १६९ ) षट्पञ्चाशदधिकशतद्वयतोलकम् ( २५६ ) इति यावत्
न., खनिजधातु०, कांस्यम् ( र. १२.२१ )
–हरीतकी–स्त्री., योग०, कंसे दशमूलकषाये हरीतकीनां शतं गुडं च दत्त्वा कृतो लेहः अयं श्वयथौ उपयुक्तः ( चचि. १२.५०–५२ )

कंसीय–न., कांस्यम् ( रा १३.२४ )

ककारादिगण–पु., वर्ग०, कण्टकारी–काञ्जिकं–कच्छपः तैलं राजिका निम्बूकं कतकं कलिङ्गफलं कूष्माण्डं कर्कटी मयूरी कुक्कुटः कारवेल्लं–कर्कोटी वृन्ताकं कपित्थं चेति । ( र ११.१२९ )

ककुत–पु., वनस्पति०,=ऋषभ–कः ( ध. १.१२५ )

ककुद–पु., सर्प०, दर्वीकरः ( सुक. ४.३४ ( १ )

ककुभ–पु., वनस्पति०, जाङ्गलदेशोद्भवो वृक्षः सुगन्धिमूलो विटप० ( डसुक. ६.३ ) शुक्रमेहे उपयुक्तः ( सुचि. ११.९ ) सूतिकायाः आचमनस्नानादौ षडङ्गकल्पनाकल्पितशिरीषककुभसलिलमुपयुक्तम् ( सुचि. १५.२४ ) शिरीषककुभक्काथाक्तान् पिचून् विकेशिकाप्रायान्कार्पासादिमयान्योनौ विनिक्षिपेत् ( अरु. अहृशा. २.४४ )

ककेरुक–पु., कृमि०, पुरीषजकृमि० ( चवि. ७.१३ ) ( असंनि. १४.५७ )

कक्कोल–पु., वनस्पति०,=कङ्कोलः ( चचि. २६.२१०; )

कक्कोलक–न.,=बृहत्कक्कोलकम् ( सुसू. ४६.२०२ )

कक्ष–पु., शारीर०, बाहुमूलम् ( सुसू. ५.१३ ) शारीर, बाहुमूलाधःकोटरदेशः, कक्षा, वामदक्षिणभेदेन द्वे अंतराधिप्रत्यंगे ( सुशा. ५.४ )
वनस्पति०, तृणम् ( चचि. १७.६९ )
तृणादिबहुलः प्रदेशः ( सुसू. १७.१६ )
काष्ठसमूहः ( चसू. १३.७२ )
–ग्रन्थि–पु., रोग०, कक्षायां जायमानो ग्रन्थिः, कक्षा ( र. २४.१३१ )
–धरमर्मन्–न., कक्षाधार ( असंशा. ७.७; ) कक्षाधरमर्म, ( अहृशा. ) यथा वङ्क्षणवृषणयोरन्तरे विटपमेवं वक्षःकक्षयोर्मध्ये कक्षधरं नाम मर्म, तस्मिन् विद्धे पक्षाघातः, स्नायुमर्मेदम्, एकांगुलप्रमाणम् वैकल्यकरं च ( सुशा. ६.२४ ) शाखामर्मेदम् कक्षाक्षमध्यः कक्षाधारः 'कक्षाधरः' ( इन्दु ) तस्मिन् विद्धे कुणित्वम् ( असंशा. ७.७ ) सिराश्रयो मर्मविशेषः ( अहृशा. ४.४२–४३ )
–पार्श्व–पु., मर्म०, कक्षधरमर्म, पार्श्वसमीपे कक्षयोः समीपभवाभ्यां कक्षधराभ्यां सह सम्बद्धः ( सुशा. ६.२८ ) द्र० 'कक्षधर'

कक्षा–स्त्री., शारीरप्रत्यङ्ग०, प्रमाणम्–अष्टकौ स्कन्धौ कक्षे च ( असंशा. ८.३० ) 'कक्षावुन्नतौ पृथुलौ पीनौ सुव्यञ्जनौ प्रशस्येते । विपरीतावधन्यौ ( कासु. २८ पृ. ४८ )
रोग०, क्षुद्ररोगः, चत्वारिंशत्पित्तविकारेष्वेकः ( चसू. २०.१४ ) लक्षणम्–बाहुपार्श्वांसकक्षासु कृष्णस्फोटा सवेदना पित्तप्रकोपसम्भूता पिडका ( सुनि. १३.२६ )
'यज्ञोपवीतप्रतिमाः प्रभूताः पित्तानिलाभ्यां जनितास्तु कक्षाः ।' ( चचि. १२.९१ ) 'यज्ञोपवीतप्रतिमा इति यज्ञोपवीतव्याप्यस्थानमात्रव्यापकाः स्फोटा एव कक्षाशब्दाख्याः ।' ( चक्र. ) प्रायकक्षाऽऽसन्नदेशेषु साऽनिलात्पित्तात् सूक्ष्मा लाजोपमा घनाः पिटका भवन्ति ( असंउ. ३६. ) चिकित्सा–चक्रतैलं प्रशमनार्थमुपयुज्यते ( सुसू. ४४–४८ )
'पित्तजस्य विसर्पस्य क्रियया साधयेद्भिषक् । रोपयेत्सर्पिषा पक्वान् सिद्धेन मधुरौषधैः ॥ ( सुचि.२०.७–८ )

कक्ष्या–स्त्री., रोग०, कक्षा ( चक.१२.९ )

चत्वारिंशत्पित्तविकारेष्वेकः ( असंसू. २० )
द्र० 'कक्षा'
'सुविभक्तस्थानम् ।' ( इन्दु )
गृहप्रकोष्ठः ( असंसू. ८.६१

**कङ्क**–पु., पक्षि० ( चसू. २७.४९ )
प्रसहवर्गीयः, दीर्घचञ्चुर्महाप्रमाणः कङ्कस्स्यात्कङ्कमल्लाख्यो बाणपत्रार्हपक्षकः। लोहपृष्ठो दीर्घपादः पक्षाधः पाण्डुवर्णभाक् ॥ (ड. सुसू. ४६.७४) अस्य पुरीषं पक्वशोथस्य विदारणं करोति, ...' कङ्कानां पुरीषाणि च दारणम् ।' ( सुसू. ३७.१० )

**–मुख**–न., स्वस्तिकयन्त्र०, कङ्कमुखाऽऽकारानुगतत्वात्कङ्कमुखयन्त्रम्, सर्वेषु स्थानेष्वधिकारित्वाद्यन्त्रेषु प्रधानम्, 'निवर्तते साध्ववगाहते शल्यं निगृह्योद्धरते यस्मात् यन्त्रेष्वतः कङ्कमुखं प्रधानं स्थानेषु सर्वेष्वधिकारि । ( सुसू. ७.२२ )
( असंसू. ३४.२१ अहसू. २५.४ )

**कङ्कण**–पु., पार्थिवद्रव्य०, शुद्धगन्धकः (र. १२.१०४ )

**कङ्कतक**–कङ्कतक न., काष्ठादिमयं बहुदन्तं केशसंयमनम्, प्रसाधनम् ( असंसू. ८.४९ )

**कङ्कता**–स्त्री., वनस्पति०, अतिबला ( ध. १.२८६ )

**कङ्कनी**–स्त्री., तृणधान्य०, कङ्गुः, प्रियङ्गुः ( ध. ६.९० )

**कङ्कु**–पु., पक्षि०, प्रतुदवर्गीयः ( चसू. २७.५२ )

**कङ्कुष्ठ**–न., भैषज्यद्रव्य०, 'सुवर्णक्षीरीनिर्यासः'
( ड. सुसू. २८.१३ )
खनिजद्रव्य०, विरङ्गम् रङ्गदायकम्, 'उसारेरेवन्' नाम्ना प्रसिद्धम्, स तु सम्प्रति नोपलभ्यते अतो भेषजादिकर्मणि तत्समानगुणं बोदारशृङ्गं, गृह्णन्ति ( र. ३.१ ) 'कङ्कुष्ठं सिद्धिमायाति त्रिधा शुण्ठ्यम्बुभावितम् ।' ( र. ३.१२७ )
'पर्वतीयमृत्तिका०, तद्द्विधा रजताभं स्वर्णाभं च ।' ( शब्दकल्पद्रुमः ) कङ्कुष्ठं द्विविधं नालिकाख्यं तथा रेणुकञ्च । गुणाः–तिक्तं कटु उष्णं रसरञ्जनमतिरेचनं कफघ्नं वातघ्नं च गुल्मोदावर्तशूलव्रणशूलनाशनम् ( ध. ३.१४१ ) यवपरिमाणमात्रया ग्राहिभिः पदार्थैः सह खादेत्, ताम्बूलैः सह भक्षितं विरेचनेनाऽसूनाशयेत् । कङ्कुष्ठविषनाशाय जीरसौभाग्यकसमं बर्बूरीमूलिकाक्वाथे भूयोभूयः पेयम् ( ३.१२९–१३१ )

**कङ्केलि**–पु., वनस्पति०,–अशोकः ( रा. १०.२७० )

**कङ्कोल**–पु., न., वनस्पति०, मरिचाकृतिसुगन्धिद्रव्य० वल्लीफलम् ( सुसू. ४६.४८५ ) ताम्बूलद्रव्येष्वेकं द्रव्यम् ( चसू. ५.७७ ) ( असंसू. १२.८४–८५ )
गुणः–कटुस्तिक्त उष्णो लघु रुच्यो दीपनः पाचनः कफवातघ्नो, वक्त्रवैरस्यनाशनो मुखजाड्यहरो, वक्त्रदौर्गन्ध्यनाशनस्तृष्णापहः
( असंसू. १२.८४–८५ ) ( ध. ३.३७ )
हिं. शीतलचिनी, कबाबचिनी, चिनीकबाब.
म. कंकोळ. कापूरचिनी.
गु. चणकबाब.
न., कङ्कोलक, ना. वनस्पति० बृहत्कङ्कोलकम् कङ्कोलकम् ( सुसू. ४६.२०२ )

**कङ्गु**–पु., तृणधान्य० ( अहसू. ६.११ ) तज्जाततण्डुलभक्तः पीतवर्णो जायते ( र. ११.१३१ )
( सुचि. ३१.५ )
गौरकृष्णषष्टिकः, सर्वप्राणिनां सामान्यतः पथ्यः
( सुसू. २०.५ )
वरकसदृशः स्थूलकङ्गुर्नाम वरकः । गुणाः–मधुरः कषायः शीतलो रूक्षः स्वादुविपाको रुच्यो भग्नास्थिबन्धकृत् पित्तघ्नो वातकृद्दाहभग्नाऽस्थिशमनः
( ध. ६.९० )
तस्य चूर्णं रोपणार्थं प्रशस्यते ( सुसू. ३७.२८ )

**–कूर**–पु., प्रियङ्ग्वोदनः ( असंउ. ४९. पृ. ४०८ )

**कङ्गुक**–पु., वनस्पति०=कङ्गु ( ध. ६.९० )

**कङ्गुणी**–स्त्री., वनस्पति०, ज्योतिष्मती
( र. ३०.१५–२२ )
तेजोवती ( र. १०.७२–७६ ) ( रा. ३.३९२ )
प्रियङ्गुः ( रा. १६.१४२ )

**–पत्र**–पु., वनस्पति०, पण्यन्धः ( रापरि. ८.५८ )

**कङ्गुनी**–स्त्री., वनस्पति०, प्रियङ्गुः ( रा. १२.२८ )

**कङ्ग्विष्टिका**–स्त्री., कङ्गुधान्यस्य पिष्टमयी इष्टिका
( असंउ. ४९. पृ. ४०८ )

**कच**–पु., केशः ( सुचि. १.१०८ )
न., वनस्पति०,=वालकम्, ( ध. १.४७ )

**–रिपुफला**–स्त्री., वनस्पति०, शमी ( रा. ८.१५२ )

**–शतन**–न., केशपतनम् ( असंसू. ३१.३० )

**कचामोद**–न., वनस्पति०, वालकम् ( रा. १०.६९ )

**कचोर**–पु., वनस्पति०,=कर्चूरः ( र. २१.१७–७३ )

**कच्चक**–पु., वनस्पति०, 'कवहक' इति मालवके प्रसिद्धः । 'स च मध्यलेखानिचितऋजुपत्र ईषद्रक्तमूलः ( ड ) अश्मरीचिकित्सायामुपयुक्तः ।
( सुचि. ७.६ )

**कच्छ**–पु., न., देश०, अनूपो देशः, 'जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविधः। (अमरकोषः) तथा कच्छान्तरुहा नीलदूर्वा (रा ८.२३७)

**–प**–पु., जलस्थलोभयचरः प्राणि०; कूर्मः (चचि. १९.३८) (धनि. ६.४३०) अस्य मांसरस उपयुक्तः, तद्गुणाः स्निग्धो बलदः पुंस्त्वकरो वातघ्नश्च (ध. ६.४३०)
वनस्पति०–तूणि (रा. १२.३१)
रोग० अयं कफजस्तालुगतरोगः, तल्लक्षणम्—कूर्मवदुन्नतोऽल्पवेदनश्चिरजः पाण्डुरवर्णः शोथस्तालुदेशे भवति। (सुनि. १६.४३ असंउ. (पृ. १७९)
रोग० क्षुद्ररोगः कच्छपिका (र २५.१)

**–पयन्त्र**–न., पारदस्य स्वेदनार्थं यन्त्रम्, यन्त्रस्वरूपम् विस्तीर्णे जलपूर्णे पात्रेऽन्यं विस्तीर्णं खर्परं स्थापयित्वा तन्मध्ये षण्मृत्कर्पटसन्धिलिप्ता मूषा संस्थाप्या। प्रथमतो मूषायां बिडं तन्मध्ये पारदं च स्थापयित्वा मूषामुखे लघुलोहकटोरिकां निधाय लेपं कुर्यात्। खदिराङ्गारैर्घटकर्परं पूरयित्वा प्रज्वालयेत्। एतत्प्रकारकं यन्त्रं कच्छपयन्त्रमित्युक्तम्। अनया रीत्या कच्छपयन्त्रस्थः स्वेदितः पारदोऽन्यधातुना सह मर्दितो द्रुतं जरति। (र. ९. १३–१५)

**कच्छपिका**–स्त्री., प्रमेहपिडका० कच्छपिकैषा भोजे 'कूर्मिका'। (सुनि. ६.६) लक्षणम्, सा महावास्तुपरिग्रहाऽवगाढाऽऽर्तिनिस्तोदा श्लक्ष्णा कच्छपपृष्ठनिभा पिडका वर्तते। (चसू. १७.८३) (असंनि. १०.२०)

**–पी**–स्त्री., क्षुद्ररोग० (सुनि. १३.८) (सुचि. २०.५) लक्षणम्—वातकफोत्थाः कच्छपपृष्ठवदुन्नताः पञ्च वा षड् वा कठिनाः पिडका वर्तन्ते। पिडकायुक्तं रोगं कच्छपीमिति विद्यात्। (सुनि. १३.८) (असंउ. ३६ पृ. २६८) चिकित्सा–पूर्वं स्वेदयेत्। मनःशिलातालकुष्ठदारुकल्कैर्लेपं कुर्यात्। परिपाकगतां पिडकां भित्त्वा व्रणवत् समुपाचरेत्। (सुचि. २०५.६) बालानां कच्छपिका श्लक्ष्णोन्नता कफप्राया भवति (काचि) द्विव्रणीय (पृ. १२६)

**–रुहा**–स्त्री., वनस्पति मुस्ता (रा. ६.६२)

**कच्छान्तरुहा**–स्त्री., वनस्पति० दूर्वाभेदः श्वेतदूर्वा

**कच्छु**–पु., स्त्री., रोग० कच्छुः कण्डूः (सुनि., ५..१५)

**–घ्नी**–स्त्री., वनस्पति० हपुषा (रा.४.१२)

**कच्छुरा**–स्त्री., वनस्पति० कपिकच्छूः (चसू. ४.१५-३२) फणिहारि–धन्वयासकाख्यः (चसि. ८.३८) फणिकारी कच्छुरा (इन्दुपाठः) (असंउ. २२ पृ. १६४) बहुकण्टका (सुउ. ४०.७४) धन्वयासः (ध. १.२०)
शूकशिम्बिः शूकशिम्बा (सुसू. ३९.७) (सुउ. ४०.११०)
मारुतातीसारे कच्छुरामूलैश्च साधितं क्षीरं भोजने पथ्यम्। (सुउ. ४०.११०) पिच्छाबस्त्युपयुक्तमेकं द्रव्यम्। सदधिका कच्छुरा–कङ्कतिकानाम्नी शूलातिसारनाशिनी (सुउ. ४०.११३)

**कच्छू**–स्त्री., रोग० क्षुद्रकुष्ठेष्वेकम्। लक्षणम् स्फिक्पाणिपादप्रभवाः सदाहाः स्फोटाः कच्छूपदवाच्याः। (सुनि. ५.१५) चिकित्सा–नक्तमालजं तैलमभ्यङ्गार्थमुपयुज्यते। कटुकौषधिसिद्धेन तैलेन अभ्यङ्गो हितः। (सुचि. २०.१७–१९)

**–घ्ना**–स्त्री., वनस्पति० हपुषा (ध. २.९)

**–रा**–स्त्री., वनस्पति० कच्छुरा द्र० 'कच्छुरा' (अहसू. १५.३८)

**कच्छोत्था**–स्त्री., वनस्पति० कच्छरुहा मुस्ता (रा.६.५९)

**कज्जल**–न., अञ्जनद्रव्य० दीपशिखोद्भवः, तुत्थकं कज्जलतुल्यभागं ताम्रपात्रे सर्पिर्युतं घृष्टं अञ्जनं प्रक्लिन्नवर्त्मन्युपयुक्तम्। (सुउ. १२.५३) कज्जली (र. २०.६४–६७)

**कज्जली**–स्त्री., पारदकल्प० "धातुभिर्गन्धकाद्यैश्च निर्द्रवैर्मर्दितो रसः–(पारदः) सुश्लक्ष्णः कज्जलाभोऽसौ कज्जलीत्यभिधीयते॥" (र. ८.५)

**–बन्ध**–पु., पारदबन्ध० पारदगन्धयोः सुश्लक्ष्णा कज्जली तत्तद्रोगनाशकविशिष्टौषधिसंयुक्ता कज्जलीबन्ध इत्युच्यते। 'कज्जलोपमा कज्जली तत्तद्योगेन संयुक्ता कज्जलीबन्ध उच्यते।' (र. ११.७५)

**कञ्चीपद**–पु., देश० कुरुक्षेत्राद् दक्षिणदेशः। द्रविडचोलदेशस्य राजधान्यासीत्; अद्यत्वेपि 'काञ्जीकाञ्चीवरम्' इति प्रसिद्धैव। (काखि. २५.१२ पृ. ३६४ का उपोद्घाते पृ. ६९)

**कञ्चुक**–पु., पारददोष० कञ्चुकः आवरणम्, पारदस्य पर्पट्याद्या गुणाच्छादका दोषाः (र. १.८१) नागवङ्गादिसप्तदोषाः (र. ८.६४) सप्तकञ्चुकाः–

'पर्पटी, पाटिनी, भेदी, द्रावी, मलकरी, अन्धकारी, ध्वांक्षी, इति सप्तकञ्चुकाः (र ११.२२)

**कञ्चुका**–स्त्री., वनस्पति० अश्वगन्धा (ध १.२७२)

**कञ्चुकिन्**–पु., वनस्पति० हरिमन्थः चणकः (रा १६.१५६)

यवः (रा १६.१२४)

**कञ्चुकी**–स्त्री. वनस्पति० क्षीरकञ्चुकी, क्षीरीवृक्ष इति यावत् (र ११.५३–५७) क्षीरान्विता मूलकतुल्यकन्दा सप्ताष्टपत्रा सितरक्तकाण्डा श्वेतवपुः शब्दात् घनगर्जितात् पल्लवान् बिभर्त्येषा रसायनविधिना उपयुज्यते। (असंउ. ४९. पृ.४२७)

**कञ्चोली**–स्त्री., चषकः, कटोरी, वाटिका (र. ७.२१)

**कञ्ज**–न., वनस्पति०, कमलम् (र. १०.२४३)

**कञ्जीर**–पु., वनस्पति०, गण्डीरः 'कडवा सुरण' इति म. भाषायाम्। (असंसू. ७.१४९)

**कट**–पु., कटिः इत्यमरः किलिञ्ज–तृणम्– (गी.ल.को.)

**–कटेरी**–स्त्री., वनस्पति० दारुहरिद्रा (चचि. ६.३२) (ध. १.१६) (असंचि. १४)

**–पूतना**–स्त्री., बालग्रह० शीतपूतना (काचि.) बालग्रहः

**–भा**–स्त्री., वनस्पति० गिरिकर्णिका (असंउ. ४५)

**–भी**–स्त्री., वनस्पति० ज्योतिष्मती (ध. १.२६७) कृष्णश्वेतभेदेन द्विधा, तत्र श्वेताऽधिकगुणा, कटुः, उष्णा, वातकफहरा, गुल्मविषाऽऽध्मानशूलाऽजीर्णरुजाशमनी। केचित् कटभीं गिरिकर्णिकां आहुः। (रापरि. ९.३७ सुक. ५ १७–१८)

लताशिरीषः, कण्टकशिरीषः, लघुज्योतिष्मती लता (सुचि. ३१.५)

**–शर्करा**–स्त्री., अग्निदग्धशर्करा (सुचि. २३.४) अदग्धसुधापाषाणः गाङ्गेष्ठी (सुसू. ११.११)

**कटङ्कटेरी**–स्त्री., वनस्पति० दारुहरिद्रा (चचि. ६.३२) (ध. १.५९) (असंचि.१४)

**कटत्र**–न., कषायितश्चर्मखण्डः (र.७.५–९)

**कटम्भर**–पु., वनस्पति० टिण्टुकः (ध. १.११४)

**(कटम्भरा)**–स्त्री., रेवतीग्रह० जातहारिणी; अन्यलक्षणम्– –'विनापुष्पं तु या नारी यथाकालं प्रणश्यति। कृशा हीनबला कुद्धा साऽपि चोक्ता कटम्भरा॥' (काक. रेवतीकल्प० ३२.३३)

वनस्पति० महापैशाचिकघृते एकं द्रव्यम्; कटभी (चक्र. चचि. ९.४७)

महाबला (रा. ४.४२४)

**कटाह**–पु., भाण्ड० लोहादिनिर्मितं भाण्डम् (सुसू. ५.६)

व्रणकर्मोपयोगार्थं भाण्डम् (असंसू. ३८.१५)

लोहपात्र० द्रवस्वेदार्थमुपयुज्यते (सुचि. ३२.१३)

महति कटाहे कुण्डे द्रोण्यां वाऽवगाहयेत् (असंसू. २६.६)

तैलपात्र० (सुचि. २५.४०) पाठभेदः

**कटि**–स्त्री., शारीर० वातस्थानेष्वेकम् (चसू. २०.८) विस्तारप्रमाणम्–अष्टादशाङ्गुलविस्तीर्णा कटी (सुसू. ३५.१२) अस्थिघटितः श्रोणिपर्यायो भागो य ऊरुनलकास्थिभ्यां संधीयते। "कंबर" इति म. भाषायाम्। (अहृसू. १२.१)

श्रोणि–वातः, **श्रोणिगुदसंश्रयः** तदुपरि अधोनाभेः पक्वाशयः (सुसू. २१.१६) पक्वाशयकटीसक्थिस्थानं वातस्य (अहृसू. १२.१) मुहुश्चारी (वातः) **पक्वाधानगुदालयः** (सुनि. १.९) **पक्वाधानालयोऽपानः** (सुनि. १.१५) **पुरीषाधानं**........पक्वाशयश्च उत्तरगुदं च (चशा. ३.६) **पुरीषाधारश्च**......पक्वाशयश्च उत्तरगुदं च (चशा. ७।१०) कफामपित्तपक्वानां **वायोर्मूत्रस्य** (अहृशा. ३।११) आशयास्तु **वाताशय**–पक्वाशयः मूत्राशयः... (इति सुशा. ५.८)

**–कपाल**–न., अस्थि० कपालसदृशं अस्थि (सुनि. ४.४ असंशा. ५.७५)

**–कपालवेदना**–स्त्री., रोगलक्षण० कटीरुजा (सुनि. ४.४)

**–ग्रन्थि**–पु., लक्षण० कटिप्रदेशस्थो ग्रन्थिः (र. २४.१३१)

**–ग्रह**–पु., रोगलक्षण० कटेर्ग्रहः (चचि. ११.१३) वेदना० कट्या ग्रहणम् (सुउ ४०.१०८) कट्याश्रितः शूलः (र. १८.१२८)

**–दौर्बल्य**–न., लक्षण० कटिस्थानस्य दौर्बल्यम् (चचि.१४.१३३)

**–भग्न**–न., रोग० वङ्क्षणसन्धेर्विश्लेषणम्, चिकित्सा (कटिभङ्गे) विश्लेषितमस्थि यद्यधोगतं स्यात् तर्हि तदूर्ध्वं कृत्वा बध्नीयात्। ऊर्ध्वगतं चेदधः–कृत्वा बध्नीयात् (सुचि. ३२.८)

**–वर्ष**–पु., कुरुक्षेत्रात् पूर्वदेशः, वङ्गदेशे वर्धमानप्रान्ते वर्तमानः कटवाप्रदेशोऽयमित्युच्यते। (का उपोद्घाते पृ. १३७) (काखिल. २५.७)

–शूल–पु., न., रोग० चतुःषष्टिसूतिकारोगेष्वेकः (काखि. ११.७–१४)

–सङ्ग्रह–पु., रोगलक्षण० कटिग्रहः (चसू. १४.२२)

कटिकतरुण-कटिकतरुणमर्मन्–न., शारीर० मर्म० पृष्ठवंशमुभयतः प्रतिश्रोणिकाण्डमस्थिनी कटिकतरुणे नाम मर्मणी। (सुशा. ६.२६) पृष्ठमर्मभेदम् (सुशा. ६.६) श्रोणिकाण्डास्थिस्थानेऽस्थिमर्म (सुशा. ६.७) वामदक्षिणभेदेन द्वे मर्मणी–अर्धाङ्गुलप्रमाणं कालान्तरप्राणहरं च (असंशा. ७.१६)

कटिल्ल–न., वनस्पति० दीर्घपत्रा वर्षाभूः (अरु,) रक्तपुनर्नवा (हेमाद्रि अहृसू. ६.७८)

कारवेल्लम् (र. २.२७.२८)

कटी–स्त्री., कटी (सुसू. ३५.१२)

कटु–पु., गुण० रस० तिक्तः, कटुः षड्रसेष्वेकः (चसू. १.६६) ऊषणम् (सुसू. ४६.३३६) कफप्रशमनः

कटुः स्यात् कटुतिक्तयोरित्यमरः। रसलक्षणं–उद्वेजयति जिह्वाग्रं कुर्वंश्चिमिचिमां कटुः। स्रावयत्यक्षिनासास्यं कपोलौ दहतीव च॥

तिक्तरसः पित्तप्रशामकः (चसू. १.६० र. २.७९ अहृसू. १२.५२)

योग० त्रिकटु, शुण्ठीमरिचपिप्पली चेत्येषां समभागमिश्रितं चूर्णम्। (र. ५.१९)

पु., वनस्पति० राजिका (र. १०.७३–७६)

अपामार्गः (र. ३.३८८)

कटुका (रा. ६.५६)

चित्रकः (ध. २.८०)

स्त्री., कट्वी (रा. परि. ३.४३)

(कट्वी–स्त्री., वनस्पति० कटुरोहिणी (सुसू. ४४.२६)

कटुका (सुचि. ३७.३७ रा. ६.५६)

काकमाची (ध. ४.२१)

–कामता–स्त्री., लक्षण० कटुरसस्येच्छा (चचि. १६.२५)

–ग्रन्थि–स्त्री., वनस्पति० पिप्पलीमूला (ध. २.७५)

शुण्ठी (रा. ६.१२९)

–तिक्तक–पु., वनस्पति० शणः (रा. परि. ४.१०)

–तिक्तका–स्त्री., वनस्पति० शणपुष्पी (ध. १.२००)

–तुण्डिका–स्त्री., वनस्पति० बिम्बी (रा. ३.३०२)

–तुम्बिका–तुम्बिनी–स्त्री., वनस्पति० कटुतुम्बी (र. ११.५२–५७) (रा. ३.२३४)

–तुम्बी–स्त्री., वनस्पति० गुणाः–कटुस्तिक्तातीक्ष्णा हिमा (भाप्र.) कटुविपाकी (भाप्र.) वामका हृद्या (भाप्र.) वातजित् (रा.) पित्तघ्नी (भाप्र.) कासश्वासच्छर्दिविषज्वरशोफव्रणशूलघ्नी, अपरासङ्गे योनिधूपनार्थम् (सुशा. १०.२१) पल्लवा लेपनार्थम् (चचि. १४.५७)

(ध. १.१७०)

–तैल–न., भैषज्यद्रव्य० सर्षपतैलम् (अहृसू. ७.४१) तत् प्लीहनाशने परमौषधम्। कटुतैलं योनिधूपनद्रव्येषु मिश्रणार्थम्। (सुशा. १०.२१) गुणाः–कटुतिक्तमुष्णं पित्तदाहकरं ग्राहि कृमिकण्डूकुष्ठमेदोवातरोगेषु शस्यते। (र. १७.१९)

कटुरसयुक्ततैलम्, निम्बाऽतसीकुसुम्भमूलक–जीमूतकवृक्षककृतवेधनाऽर्ककम्पिल्लकहस्तिकर्णपृथ्वीका-पीलुकरञ्जेङ्गुदीशिग्रुसर्षपसुवर्चलाविडङ्गज्योतिष्मती-फलतैलानि। तद्गुणाः–तीक्ष्णानि लघून्युष्णवीर्याणि कटूनि कटुविपाकानि सराण्यनिलकफकृमिकुष्ठप्रमेह-शिरोरोगाऽपहराणि चेति। (सुसू. ४५.११५)

–त्रय–न., योग० त्रिकटु (ध. ७.६) शुण्ठी मरीचं पिप्पली (र. १३.४९) इति त्रीण्येतानि त्रिकटुपदेन व्यपदिश्यन्ते।

–त्रिक–न., त्रिकटु (सुसू. ३७.१३–१५) (रा. २२.४)

–त्रिकाढ्य–वि., त्रिकटुप्रधानः (सुउ. ४०.१४५)

–दला–स्त्री., वनस्पति० कर्कटी (रा ७.२५२)

–निष्पाव–पु., वनस्पति० निष्पावभेदः–निष्पावः (रा १६.१७७)

–पत्र–न., वनस्पति० पर्पटः (रा ५.६६)

–पत्रक–पु., स्त्री., वनस्पति० सितार्जकः, अर्जकभेदः, कुठेरकः (रा. १०.८५)

सुमुखः

वनबर्बरिका (ध. ५.५८)

(–पत्रिका) स्त्री., वनस्पति० क्षुद्रचञ्चुः (रा परि ४.२२)

कारी (रापरि. ८.२६)

–पर्णिका–स्त्री., वनस्पति० क्षीरिणी काञ्चनक्षीरी (ध. २४० १)

–पर्णी–स्त्री., वनस्पति० क्षीरिणी कांचनक्षीरी- (ध. १–२४०)

**–फल**–पु. स्त्री, न, ( फल ) वनस्पति० पटोलः ( रा ३.७३ )

**–फला**–स्त्री., वनस्पति० कटुतुम्बी ( रा ३.२३४ ) काकमाची ( ध. ४.२१ )
लताकस्तूरी, अन्ये दक्षिणापथप्रसिद्धं सुगन्धि पञ्चलमाहुः ( चक्र. चचि. २८.१५२ )
श्रीवल्ली ( रापरि. ८.३३ )
न., ( फलम् ) वनस्पति०–कट्फलम् ( र. २७.१२६ )
–कङ्कोलफलम्–कङ्कोलः ( असंसू. १२.८४. )

**–बीजा**–स्त्री., वनस्पति० पिप्पली ( रा. ६.१०९ )

**–भद्र**–न., वनस्पति० शुण्ठी ( ध. २.८२ )

**–भेदिनिका**–स्त्री., वनस्पति० जीरकभेदः, कृष्णजीरकः ( रा. ६.१०४ )

**–मत्स्यक**–पु., जलचरप्राणि० शफरी शुष्कमत्स्यो वा ( चक्रः चचि. ३०.१२१ )

**–मूल**–न., वनस्पति० पिप्पलीमूलम् ( रा. ६.११२ )

**–रस**–पु., रस० ऊषणः रसः ( सुसू. २१.११ ) श्लेष्मघ्नरसः श्लेष्मणः पैच्छिल्यं गौरवं चाशु निहन्ति । ( काखि. ६.२५ ) तस्य कर्म–गलामयो–दर्दकुष्ठालसकशोफजित्, व्रणावसादनः क्लेदमेदो वसामज्जशकृन्मूत्रोपशोषण; दीपनः पाचनो रुच्यः शोधनोऽन्नस्य शोषणश्छिनत्ति बन्धान् स्रोतांसि विवृणोति कफापहः । अतियोगेन तृष्णा शुक्रबल-क्षयं मूर्च्छामाकुञ्चनं कम्पं कटिपृष्ठादिषु व्यथां करोति । ( अहसू. १०.१७–१९ ) कफप्रशमनः ( चसू. १.६६ )
रसलक्षणम् जिह्वाग्रमुद्वेजयति, चिमचिमां कुर्वन् अक्षिनासास्यं स्रावयति, कपोलौ दहन्निवावतिष्ठते । ( अहसू. १०.५ )

**–रोहिणी**–स्त्री., वनस्पति० स्तन्यशोधनगणे एकं द्रव्यम् ( चसू. ४.१२ (१८) लेखनीयगणेष्वेकम् ( चसू. ४.९ ( ३ ) कटुका ( सुसू. ३७.१६ ) ( अहसू. १५.१५ )

**–लावण्य**–न., कटुत्वं लवणत्वं चेति । ( असंसू. १२.३९ )

**–वार्ताक**–पु.,वनस्पति० बृहतीभेदः, वनवृन्ताकी, वन्यवार्ताकीफलम् ( र. १०.७३–७६ )

**–वार्ताकिनी**–स्त्री., वनस्पति०, कण्टकारीभेदः कासघ्नी (ध. १.९९ )

**–वार्ताकी**–स्त्री., वनस्पति० कण्टकारीभेदः लक्ष्मणा (रा. ४.१२४ )

**–विपाक**–पु., विपाक०, द्रव्यस्य त्रिविधेषु विपाकेष्वेकः, ( असंसू. १.३८ )

**–स्नेह**–पु., वनस्पति०, सर्षपः ( ध. ४.४२ )

**कटुक**–पु., रस०, कटुस्तिक्तो रसः, यथा शुण्ठीमरिचादि-द्रव्यस्य (चसू. १.६५ सुसू. ४२.९ सुसू. ४६.३७९)
कटुः, पु., वन० रस०
पु., वनस्पति०, सर्षपः ( ध. ४.४२ )
स्त्री., वनस्पति०, कटुका ( ध. १.३७ )
न., वनस्पति०, त्रपुसम् ( ध. १.१७५ )
खदिरसारः ( सुचि. २४.२१ )
लताकस्तूरी तांबूलद्रव्येष्वेकं द्रव्यम् (चसू. ५.७७) ( सुचि. ४६.२०२ ) ( र. १३.६५ )
मरीचम् ( रा. ६.१३६ )
वि. कटुरसात्मकं यथा मरीचादि( सुसू. ४६.३२१ )
'प्रायस्तिक्तकटुकं वातलमवृष्यं चाऽमृतापटोल-नागरपिप्पलीलशुनेभ्योऽन्यत्र ।' (असंसू. १८.२६)

**–गण**–पु., कटुकद्रव्याणां संग्रहः । कटुको हिङ्गुमरिच-कृमिजित्पञ्चकोलकं कुटेराद्या हरितकाः ( अहसू. १०.३०–३१ ) ( असंसू. १८.२४ )
द्र० कटुकवर्गः

**–दौग्धिक**–न., वनस्पति० ( असंउ. ४४ पृ. ३६८ )

**–प्रियता**–स्त्री., रोगलक्षण० ( चनि. १.३३ )

**–फल**–न., वनस्पति० लताकस्तुरिकाफलम् ( सुसू. ४६.२०२ )

**–बिन्दु**–पु., अवलेहकल्प०, शोथप्रमर्दनः ( काखि. १७.४४–४५ )

**–रसयोनि**–स्त्री., कटुरसस्योत्पत्तिस्थानम् ( असंसू. १८.३० )

**–रोहिणी**–स्त्री., वनस्पति०, कटुका ( ध. १.३७ )

**–वर्ग**–पु., कटुकरसद्रव्यसंग्रहः, 'पिप्पल्यादिः सुरसादिः शिग्रुमधुशिग्रुमूलकलशुनसुमुखशीतशीत-शिवकुष्ठदेवदारुहरेणुकावल्गुजफलचण्डागुग्गुलुमुस्त-लाङ्गलकीशुकनासापीलुप्रभृतीनि द्रव्याणि सालसारा-दिश्चप्रायशः कटुको वर्गः ।' ( सुसू. ४२.११ )
कटुकस्कन्धः ( चवि. ८.१४२ ) द्र० कटुकस्कंध.

**–वल्ली**–स्त्री., वनस्पति०, कट्वी ( रा. परि. ३.४३ )

**–सर्पिस**–न., सिद्धयोग०, सिद्धघृतकल्पः ( काक विशेषकल्प पृ. २२३ )

—सात्म्यता—स्त्री., भोजने कटुरसस्य अधिकाभ्यासः, तस्या गुणदोषाः 'पक्तेरुपचयं कार्श्यं रौक्ष्यं शुक्रबलक्षयम्। पित्ताऽनिलप्रवृद्धिं च कुर्यात् कटुकसात्म्यता ॥' (काखि. ५.४५)

—स्कन्ध—पु., द्रव्यसंग्रह०, कटुकवर्गः, 'पिप्पलीपिप्पलीमूलहस्तिपिप्पलीचव्यचित्रकशृङ्गवेरमरिचाजमोदार्द्रकविडङ्गकुस्तुम्बुरुपीलुतेजोवत्येलाकुष्ठभल्लातकाऽस्थिहिङ्गुनिर्यासकिलिममूलकसर्षपलशुनकरञ्जशिग्रुकखरपुष्पभूस्तृणसुमुखसुरसकुठेरकाऽर्जकगण्डीरकालमालकपर्णासक्षवकफणिज्झकक्षारमूत्रपित्तानि इति।' (चवि. ८.१४२) द्र० कटुकवर्ग.

**कटुका**—स्त्री., वनस्पति० कटुरोहिणी (सुउ ४२. १११) (असंउ ४२) **गुणाः**—तिक्ता कटुः शीतला लघु रुक्षा भेदनी दीपनी हृद्या (भा. प्र.) रेचनी पित्तकफहरी रक्तदोषदाहाऽरोचकश्वासविषमज्वरहरा (ध. १.३७)

हिं.—कुटकी.
गु.—कडु.
म.—कुटकी, काळी कुटकी.
बं.—कटकी.
फा.—खर्वके सियाह.

**कटुकाद्यघृत**—न., सिद्धघृत० पांडुरोगे उपयुक्तम् (चचि. १६.४७-४९)

**कटुकालाबु**—स्त्री., वनस्पति०, तिक्ततुम्बी (सुशा. १०.२१) (चक. ३.३)

**कटुकालाबूनी**—स्त्री., कटुकालाबूनी;

**कटुकालाम्बुनी**—स्त्री., कटुकालाबुनी; वनस्पति० तिक्त तुण्डी (रा. ३.३०२)

**कटुकास्यता**—न., रोगलक्षण०, पित्तज्वरस्य एकं लक्षणम्, मुखस्य कटुरसत्वम् (चनि. १.२४)

**कटुकिका**—स्त्री., वनस्पति० तन्मूलकल्कोऽर्शरोगे तक्रेणोपयुक्तः (असंचि. १०)
अरण्यकासमर्दिका, कटुतिक्तपुष्पाऽर्कफलाकारफला प्रसिद्धा (ड. सुसू. ४६.२६२)
तिक्तारिका (ड. ४६. २६२)

**कटुवल्ली**—(रापरि. ३.४४) गुणाः—'कटुका शीता रुच्या कफनाशनी श्वासार्तिज्वरराजयक्ष्मनिवारिणी (रापरि. ३.४४)

**कटूषण**—न., वनस्पति० पिप्पलीमूलम् (रा. ६.११२) शुण्ठी (रा. ६.१२९)

**कटोरिका**—स्त्री., शरावः (र.९.१३-१४)

**कटोरी**—स्त्री., चषकम् (र. ७.१२)

**कट्फल**—पु., न., वनस्पति० वेदनास्थापनगणे एकं द्रव्यम् (चसू. ४.१८-४७) सन्धानीयगणे एकं द्रव्यम् (चसू. ४.९ (५) शुक्रशोधनगणे एकं द्रव्यम् (चसू. ४.१२-२०)
व्रणाऽवचूर्णनार्थम् उपयुक्तं द्रव्यम् (काचिद्व्रिणीयअ० १८)
सोमवल्कलः (सुसू. ३८.४३)—लघुकाश्मर्यः, जातिपत्रिकावदस्य बीजोपर्यपि कोमला त्वग्वर्तते, सैव रामपत्री (अष्टकोष) गुणाः—रक्तपित्ते पिपासां दाहं च शमयति (चचि. ४.७३) कटुस्तुवरस्तिक्त उष्णस्तीक्ष्णो रुच्यः क्षुत्करः (शालिग्राम नि.)
कफवातघ्नो गुल्ममेहाऽग्निमान्द्यदाहज्वराऽर्शोग्रहणीपाण्डुकासश्वासगलामयमुखरोगादीनां नाशकः (ध. १.७३)

हिं.—कायफल;
म.—कायफळ, कुम्भ्याचे फळ;
गु.—करी फल (नाड.) कायफल (शालि.)
बं.—कायफल, कायशाल (शालि.)
फा.—उदुलवर्क (शालि.)

पु., कुमुदा, रोहिणीभेदः (अहसू. १५.२६)
न. काश्मरी (ड. सुक. ५.७५)
कक्कोलम् (रा. १२.६९)
(कट्फला) स्त्री., वनस्पति० बृहती (रा ४.१२१)
वार्ताकी (रा ७.१२८)
काश्मरी (रा. ९.१४६)
देवदाली (रा. ३.२४२)
मृगाक्षी (रा. ७.२५)
काकमाची (रा. ४.३५)

**कट्वङ्ग**—पु., वनस्पति०, अरलुः, स्योनाकः, श्योनाकः (चचि. ३०.९२) (सुउ. ६१.२३) (ध. १.११४) टिण्टुकः
तिन्दुकः (असंचि. ५)

**कट्वम्लरसत्व**—न., पित्तस्य कर्म (असंसू. २०.२०)
वनस्पति—तिक्ततुण्डी, बिम्बी (रा. नि. ३.३०२)

**कट्वर**—न., सस्नेहं तक्रम्, 'सस्नेहं दधिजं तक्रमाहुरन्ये तु कट्वरम्।' (सुसू. ४६.४५१) (चचि. ३.२६७)
'अन्ये तु सौवीराम्लमथात्यम्लं काञ्जिकं कट्वरं विदुः।' (ड. सुसू. ४६.४५१)
निर्जलं तक्रमम्लं वा तक्रम् (चनि. २.४)
अस्नेहं दधि (सुसू. २१. २१)

**कटुलाबु**–पु., वनस्पति०, कटुतुम्बी ( र. ५.१६५ )
**कट्वी**–स्त्री., वनस्पति कटुरोहिणी ( सुसू. २४.२६ )
कटुका. ( सुचि. २७.३७ रा. ६.५६ )
**कटुव्यञ्जनी**–स्त्री., वनस्पति० कटुका ( रा. ६.५६ )
**कठिञ्जर**–पु., वनस्पति० कुठेरकः, अर्जकः ( रा. १०.८४ )
**कठिन**–वि., गुण० काठिन्यकरः गुणः मृदुविरुद्धः, त्वगिन्द्रियग्राह्यो गुणः ( चशा. ६.१० ) 'दृढने कर्मणि शक्तिः' ( हे अहसू. १.१८ ) पार्थिवद्रव्य गुणः ( सुसू. ४१.४ (१)
पु., वनस्पति० व्रीहिः ( रा. १६.११७ )
**–फल**–पु., वनस्पती० कपित्थः ( रा. ११.१५५ )
**कठिना**–स्त्री., वनस्पति० काकोदुम्बरिका (रा. ११.१४२)
**–संस्थान**–वि., कठिनं स्वरूपं यस्य, स गुल्मः, 'गुरुः कठिनसंस्थानो गूढमांसान्तराश्रयः। अविवर्णः स्थिरश्चैव ह्यपक्वो गुल्म उच्यते ॥' ( चचि. ५.४० )
**कठिल्ल**–पु., वनस्पति० पुनर्नवा, कठिल्लकः ( चक्र. ) ( चचि. ३.१८९ )
**कठिल्लक**–पु., न., वनस्पति० पुनर्नवा ( ध. १.२७४ )
पुनर्नवाभेदः, रक्तपुनर्नवा ( चक्र. चचि. ३.१८९ )
पुनर्नवाशाकम् ( डसुउ. ३९.१५१ )
न., फलशाक० कारवल्ली, तस्य फलं कारवेल्लकम् ( र. १८.४७–५२ )
**कडर्य**–पु., वनस्पति० किराततिक्तः ( ध. १. ३४ )
**कडायखञ्ज**–पु., रोग० कलायखञ्जः ( अहनि १५–४६ )
**कडार**–न., खनिजधातु० मुण्डलोहम् ( ध.६. २७ )
मृदु कुण्ठं कडारं च त्रिविधं मुण्डमुच्यते। यद्रुतं भज्यते भङ्गे कृष्णं स्यात्तत्कडारकम् ॥ ( र. ५. ७४–७७ )
**कण**–पु., 'कुण्डक–' इति ख्यातः, खण्डतण्डुलः, 'कणी इति म. भाषायाम् ( चशा. ८.३४ ) ( असंउ. १ पृ. ५ )
वनस्पति० पिप्पली ( अहसू. १५.१ )
( कणा ) स्त्री., पिप्पली ( र. २.७५ ध., २.७३ )
**–गुग्गुलु**–पु. निर्यास० गुग्गुलु० ( रा. १२.१८६ )
गुणाः–कटुरुष्णः सुरभिः रसायनः
शुक्लजीरकः ( ध. २.६८ )
बृहत्पाली, वन्यजीरकः ( ध २.७२ )
वातकफघ्नः शूलगुल्मोदराऽऽध्मानघ्नः। ( रा. १२.८६ )

**–जीरक**–पु., वनस्पति० जीरकभेदः, शुक्लजीरकः ( ध. २.६८ )
कृष्णजीरकः ( ध. २.७० )
**–जीर्णा**–(स्त्री., वनस्पति० जीरकभेदः, श्वेतजीरकम् ( रा. ६.१०२ )
**–धूप**–पु., धूपकल्प० कणायुक्तो बालग्रहापहः
**–भ**–पु., कीट० मक्षिका चतुष्पदः ( ड.सुक ८.२६) मुखसंदंशविषः ( सुक. ३.५ ) अस्य विषयुक्तदंशेन विसर्पादिलक्षणं भवति ( चचि. २२.१५२ ) दंशलक्षणानि शूलशोफविसर्पवमथुज्वरा जायन्ते दंशः कर्णिकाकारः श्यावरक्तो विशीर्यते च ( असंउ. ४३ ) ( मा.नि. विषरोग ४९ ) 'सर्वे एव कणभाः साध्याः।' ( ड. सुक ८. २६–२७ )
**–भक**–पु., सविषकीट० अग्निप्रकृतिकः पित्तजरोगान करोति ( सुक. ८.८ ) ( असंउ. ४३ पृ. ३५१ )
**–वीरका**–स्त्री., मनः शिलाप्रकारः, 'मनःशिला त्रिधा प्रोक्ता श्यामाङ्गी कणवीरका। खण्डाख्येति ...।' ( र. ३.९६ ) लक्षणम्–'तेजस्विनी च निगौरा ताम्राभा कणवीरका।' ( र. ३.९८ )
**कणक**–पु., धान्यनिस्तुषः ( चशा. ८.४७ )
**–क्षार**–न., खनिजद्रव्य० टङ्कणक्षारः ( रा. ६.२९ )
**कणाह्वा**–स्त्री., वनस्पति० शुक्लजीरकः ( रा. ६.१०२ )
**कर्णिका**–स्त्री., वनस्पति० तरणी ( ध. ५.१४५ )
धान्यावयव० कुण्डकाजातः स्थूलतण्डुलावयवः ( चशा. ८.३४ )
**कण्ट**–न., खनिजधातु० मुण्डभेदः ( ध. ६.२७ )
**( कण्टा )**–स्त्री., वनस्पति० कुरण्टकः ( रा. १०.२४० )
**–तनु**–स्त्री., वनस्पति० बृहती ( रा. ४.१२१ )
**–दला**–स्त्री., वनस्पति०केतकी ( रापरि १०.१ )
**–पत्रफला**–स्त्री., वनस्पति० ब्रह्मदण्डी (रापरि ५.४७)
**–पत्रिका**–स्त्री., वनस्पति० वार्ताकी ( रा. ७.१२७ )
**–पाद**–पु., वनस्पती० विकङ्कतः ( रा. ९.५४ )
**–पुङ्खा**–स्त्री., वनस्पति० गुणाः–कटुरुष्णा कृमिशूलविनाशिनी ( रापरि. ४.९ पृ. ३३५ )
**–पुङ्खिका**–स्त्री., वनस्पति० कण्टपुङ्खा ( रापरि. ४.९ )
**–फल**–पु., वनस्पती० क्षुद्रगोक्षुरः ( रा. ३.३३१ )
गोक्षुरः ( ध., १.१०३ )
धत्तुरः ( रा. १०.१२ )
लताकरञ्जः ( रापरि. ८.२४ )
पनसः, ( रापरि. ११.९ )

-फला-स्त्री., वनस्पती० कर्कोटकी ( रा. ७.२७६ )
कारवल्ली ( रा. ७.२७८ )
जीमूतकः, देवदाली ( रा. ३.२४३ )
-फली-स्त्री., वनस्पती० झिञ्झिरीटा ( रापरि. ४.५३ )
-वल्ली-स्त्री., वनस्पती० श्रीवल्ली ( रापरि. ८.३० )
-वार्ताक-न., वनस्पति० कण्टमयी वार्ताकी ( र. १०.७३ )
-वृक्ष-पु., वनस्पति० तेजः फलः ( रापरि. ११.१८ )
-वृन्ताकी-स्त्री., वनस्पति० वृन्ताकी, वार्ताकी ( रा. ७.१२७ )
-वेध्य-वि., कण्टकवेधि, कण्टकेन यथा विध्येदेवं भस्मार्थं घनाघातेन तनूकृतं लोहताम्रादिधातुपत्रम् ( र. १२.१४८–१५१ )
वृन्ताकी, वार्ताकी ( रा. ७.१२७ )
त्रपुसम् ( रा. २.४६ )
कण्टपुङ्खा ( रापरि. ४.९; पृ. ३३५ )
द्र० कण्टपुङ्खा
बर्बुरः ( रापरि. ८.१२ )
वंशः ( रा. ७.२१४ )

**कण्टक**-पु., वनस्पत्यंग०, तीक्ष्णाग्रं वनस्पत्यङ्गम् ( चसू. १.७३ )
पु., वनस्पति० गोकण्टक ( इन्दु असंउ. २८ पृ. २०३ ) गोक्षुरः ( रा. ३.१३० )
बिल्वः ( ध. १.१०७ )
रोग० जिह्वागतरोग० जिह्वागतकण्टकाख्यो रोगः, स त्रिभिर्दोषैस्त्रिविधः । लक्षणम्-वातेन जिह्वा स्फुटिता शाकच्छदनप्रकाशा च भवति । पित्तेन जिह्वा परिदह्यते सरक्तैः कण्टकैश्च व्याप्ता भवति । कफेन जिह्वा गुर्वी बहला मांसोद्गमैः शाल्मलीकण्टकाभैः व्याप्ता भवति ( सुनि. १६.३६ )
न., प्राणिनः अङ्ग० मत्स्यादिजं कण्टकम्, यथा मत्स्यास्थि ( अहसू. २८.३७ )
रोग० कदरः (गयिटीकायां भोजः)
द्र० कदर. ( सुनि. १३.३०–३१ ) द्र० 'कदर'
-त्रिक-पु., वनस्पति० गोक्षुरः ( ध. १.१०२ )
-द्रुम-पु., वनस्पति० शाल्मली ( रा. ८.२११ )
-प्रावृता-स्त्री., वनस्पति० कुमारी ( रापरि. ५.११ )
-मूल-न., वनस्पत्यङ्ग० करमर्दाऽऽदिकं कण्टकपञ्चमूलम् ( ड. ) कण्टकसंज्ञगणः ( सुचि. ३७.३८ )
-वेध्य-वि., कण्टकेन वेध्यम्, बब्बूलादिकण्टकैर्वेध्यस्वधर्मविशिष्टं पत्तलम् धातुपत्रम् ( र. ५.१७ )
-शूकभूत-वि., शूकं नामाऽग्रम्, कण्टकस्याग्रमिव स्थितः ( सञ्जातः ) ( सुनि. १६.५१ )
-संज्ञगण-पु., कण्टकाख्यगणः ( सुसू. ३८.३७ ) करमर्दत्रिकण्टकसैरीयकशतावरीगृध्रनख्य इति गुणाः-'परं कफानिलहरं मधुराऽनुरसं पक्वाशयविशोधनम्' ( ड. सुसू. ३८.७३ )

**कण्टकाख्यपञ्चमूल**-न., गण० कण्टकसंज्ञगणः, कण्टकाऽऽख्यं तु श्वदंष्ट्राशतावरीसैर्यकहिंस्राकरमर्दैर्भवति । सर्वदोषहरं च तत्पञ्चमूलम्
द्र० 'कंटक संज्ञ गण' ( असुसू. १२.६२ )

**( कण्टकाढ्या )**-स्त्री., वनस्पति० शाल्मली ( ध. ५.१२७ )
कुब्जकः, ( ध. ५.१४६ )

**कण्टकाल्य**-पु., वनस्पति० कुब्जकः ( रा. १०.२४८ )

**कण्टकालुक**-पु., वनस्पति० धन्वयासः ( रा. ६.२६ )

**कण्टकारिका**-स्त्री., वनस्पति० कण्टकारी ( चसू. ४.१४ )
बृहत्यादिगणे एका ( सुसू. ३८.३१–३२ )

**कण्टकारी**-स्त्री., वनस्पति० कण्ठ्यगणे ( चसू. ४.१० ) हिक्कानिग्रहणगणे ( चसू. ४.१४ ( ३० ) अङ्गमर्दप्रशमनगणे ( चसू. ४.१७ ( ४४ ) कासहरगणे ( चसू. ४.१६ ( ३६ ) श्वयथुहरगणे तथा लघुपञ्चमूले शीतप्रशमनगणे ( चसू. ४.१६( ३८ ) ( चसू ४.१७ ( ४२ ) गुणाः कटुस्तिक्तोष्णा दीपनी कफवातघ्नी श्वासकासप्रतिश्यायज्वरारुच्याऽऽमदोषहृद्रोगहरा ( ध. १.९५ )
हिं.—कटेरी, लघुकटाई, भटकटैय्या, रेंगनी,
म.—रिंगणी, भुईरिंगणी, लघुरिंगणी.
गु.—बेठी भोरिंगणी;
बं.—कंटकारी.
त.—कण्डनकटारी;
( शालि २७७–७८) (नाड ११५०) 'कण्टकारिका कासघ्नानां श्रेष्ठा ।' ( असंसू. १३.३ )
श्वदंष्ट्राकण्टकारीभ्यां मूत्रकृच्छ्रे सफाणितं ( चसू २.२२ ) व्रणशोधनतैले उपयुक्तम् ।
( सुसू ३७.१८ ) वातकृच्छ्रे उपयुक्तम् ।
( सुउ ५९.१७ ) कण्टकारीफलं शाकार्थमुपयुज्यते ( सुसू. ४६.२६२ )
वनस्पति-लक्ष्मणा ( ध १.९७ )

**–घृत**–न., सिद्धघृत० वातकासे विशेषेणोपयुक्तम् कफरोगघ्नम् ( चचि १८.१२५ ) ( चचि १८.३५ )

**–सिद्धपयस्**–न., वाताऽभिष्यन्दे सेचनार्थमाश्चोतनार्थं वा कण्टकारीमूलसिद्धमजापयो हितकरम् ( सुउ. ९ ) ( ११–१२ )

**कण्टकिन्**–पु., वनस्पति० बदरम् ( रा. ११.१५७ )
वनस्पति–वंश ( रा. ७.२१ )
विकंकतः वृक्षकंटकारिका ( सुसू. ३८.६७ )
खदिरः ( ध. १.९५ ) ( असंचि. २. त. प्र. पृ. ८ )

**( कण्टकिनी )**–स्त्री., वनस्पति० कण्टकारी ( ध. १.९५ )
वार्ताकी ( रा ७.१२८ )
कुरण्टकः ( रा. १०.४१९ )
खर्जूरः मधुखर्जूरी ( रा. ११.७१ )
कण्टकिलता ( असंशा. १२०.१८ )

**( कण्टकि ) फल**–पु., वनस्पति०–समष्ठिलः ( रापरी ४.१ )

**–वृक्ष**–पु., कण्टकयुक्तो वृक्षः यथा–खदिरबदराऽरिमेद–स्नुग्दारुप्रभृतयः ( सुचि १०.४ )

**कण्टारिका**–स्त्री., वनस्पति० कण्टकारि ( रा. ४.१२१ )

**कण्टारी**–स्त्री., वनस्पति० बृहती ( र. ११.१२९ )

**कण्टालिका**–स्त्री., वनस्पति० कण्टकारी ( ध. १.९५ )

**कण्टालु**–स्त्री., वनस्पति० बृहती ( रा. ४.१२१ )

**कण्टिन**–पु., वनस्पति० अपामार्गः ( ध. १.२६१ )
वनस्पति० खदिरः ( रा. ८.३२ )
क्षुद्रगोक्षुरगोक्षुरः, ( रा. ३.१३१ )
गोक्षुरः, ( ध. १.१०२ )

**कण्ठ**–पु., शारीरावयव० ( चशा ७.९ ) गलः, कण्ठस्यान्तर्भागः ( इन्दु )
( असंउ २५ पृ. १८० ) ग्रीवायाः पुरस्ताद्भागोऽवटुनोपलक्षितः ( सुशा. ५.१९ ) दशप्राणायतनेष्वेकम् ( चसु. २९.३ ) ( चशा. ७.९ ) कफस्य स्थानम् ( अहृसू १२.३ )

**–कुब्ज**–पु., वि., रोग० संनिपातज्वरभेदः (मानि)

**–क्षणन**–न., लक्षण० कण्ठेक्षतवत् पीडा. ( असंक. ३ तप्र.पृ. १५० )

**–गतरोग**–पु., रोग० गलरोगः, मुखाऽऽयतने गले भवो रोगः, 'सप्तदश कण्ठे।' ( सुनि. १६.३ )
( सुनि. १६.४६ ) कण्ठे अष्टादश ( असंउ २५ पृ. १८०–८२ )

**–घ्न**–वि., 'स्वरसादकृत्। ( हे ) 'कपित्थमामं कण्ठघ्नम्, ( अहृसू ६.१२६ )

**–जनन**–वि., कण्ठाय हितम्, कण्ठ्यगणः ( असंसू १५.१४ )

**–तालु**– न., शारीर० कण्ठस्योर्ध्वतनो भागः ( चशा ८.४१ )

**–धूम**–पु., लक्षण० कण्ठे धूमोद्गमनमिव ( सुउ. ४७.२१–२२ )

**–धूमायन**–न., लक्षण० कण्ठे धूमोद्गमनवद् वेदना ( सुउ. ४५.७ )

**–ध्वंस**–पु., रोग० अशीतिर्वातविकारेष्वेकः स्वरस्य नाशः ( असंसू. २०.१३ )

**–नाडी**–स्त्री., शारीरावयव० ( सुशा. ६.२७ )
सा मण्डलसन्धिप्रकारेण रचिता, 'कण्ठहृदयनेत्रक्लोमनाडीषु मण्डलाः।' ( सुशा. ५.२७ )
कण्ठनाडीदेशः, स्वरस्थानम् ( सुशा. ५.१९ )

**–नाड्यस्थि**–न., अस्थि० कण्ठनाड्यां चत्वार्यस्थीनि तरुणास्थिप्रकाराणि, तत्र मण्डलाश्चाऽस्थिसन्धयः ( सुशा. ५.१९ )

**–पाक**–पु., रोगलक्षण० गलपाकः ( चनि. १.२४ )

**–पीडन**–न., रोगहेतु० गलस्रोतोनिरोधनम्; तत्कृतव्याधिस्वरूपम्–' बाहुरज्जुलतापाशैः कण्ठपीडनाद्वायुः प्रकुपितः श्लेष्माणं कोपयित्वा स्रोतो निरुणद्धि लालास्रावं, फेनाऽऽगमनं संज्ञानाशं चाऽऽपादयति।' तत्रोपायः–'तमभ्यज्य संस्वेद्य शिरोविरेचनं तस्मै तीक्ष्णं दद्याद्रसं च वातघ्नं विदध्यादिति।' ( सुसू. २७.२२ )

**–भङ्ग**–पु. रोग० = स्वरसादः, ग्रीवाया अविधारणम् ( मानि विषनि ) ( सुक. ३.४०–४१ )

**–रोग**–पु., कण्ठगतरोगः ( असंसू. ६.१८ )

**–विशोधन**–वि., कण्टरोधहरम् ( अहृसू. १०.१६ )

**–वेदना**–स्त्री., लक्षणम्–'पीतमुद्गिरति स्तन्यं, विष्टम्भिश्लेष्म सेवनेन ईषज्ज्वरोऽरुचिर्ग्लानिः कण्ठवेदनयार्दितः–' ( कासू. २५.९ )

**–शल्यावलोकिनी**–वि., यन्त्र० 'कण्ठाभ्यन्तरशल्याऽवलोकनार्थं दशाङ्गुला नाडी।' ( अहृसू. २५.१३ )

**–शालूक**–पु., कण्ठगतरोग० लक्षणम्–'कोलाऽस्थिमात्रः कफसम्भवो यो ग्रन्थिर्गले कण्ठशूकभूतः खरः स्थिरः शस्त्रनिपातसाध्यः ( सुनि. १६.५१ )

चिकित्सा–रक्तावसेचनं कार्यम् अशोषच्छेदः कर्तव्यः एककालमल्पशः स्निग्धमन्नं भोक्तव्यम्, प्रतिसारणकवलधूमादिविधिर्जलशुण्डीचिकित्सावत्करणीयः (सुचि. २२.६४–६५)

**–शुण्डी**–स्त्री., मुखतालुस्थः अवयव० मुखे जिह्वोपरि स्थिता (सुनि १६.४१)

रोग० कण्ठशुण्डीरोगः लक्षणम्–श्लेष्मासृग्भ्यां तालुमूले प्रवृद्धो दीर्घः शोथो ध्मातबस्तिप्रकाशः तृष्णाकासश्वासकृत् (मानि मुख रोग) चिकित्सा–अङ्गुष्ठाङ्गुलिसंदंशेन गलशुण्डिकामाकृष्य मण्डलाग्रेण छेदयेत् त्रिभागम्। अत्यादानात्स्रवेद्रक्तं तन्निमित्तं म्रियेत च। हीनच्छेदाद्भवेच्छोफो लालानिद्राभ्रमस्तमः। तत्र कफनाशनं धूमं कवलं प्रतिसारणं च योजयेत्॥ (सुचि. २२. ४९–५६)

**–शोष**–पु., लक्षण० कण्ठस्य शोषः (चनि. १.२१) (चनि. ४.४७)

**–श्वयथु**–पु., लक्षण० कण्ठस्थानस्थः शोथः (कासू. २५.११)

**–संशुद्धि**–स्त्री., कण्ठगतदोषशोधनम् (चसू,५.३७)

**–सिरा**–स्त्री., शारीरावयव० कण्ठस्थिता अष्टौ मातृकाः सद्यः प्राणहराणि मर्माण्येतानि (सुशा. ६.९)

**कण्ठक**–पु., रोग० कण्ठगतो रोगः लक्षणम्–कण्ठके श्वयथुः कण्ठे ज्वरारुचिशिरोरुजः। (कासू. २५.११)

**कण्ठामय**–पु., कण्ठरोगः गलगण्डादिः (अहसू. ६.१४)

**कण्ठालङ्कारक**–पु., वनस्पति० काशः (रा. ८.२०१)

**कण्ठावधमन**–(परिव०) न., लक्षण० कण्ठे शब्दविशेषः (चनि. ६.७)

**कण्ठिन्**–पु., वनस्पति० कलायः (ध. ६.१०३)

**कण्ठीरविन्**–पु., वनस्पति० वासकः आटरूषः (रा., ४.२८)

**कण्ठेगुण**–पु., अलङ्कार० 'कण्ठावलम्बी' (हे. अहसू. १३.५)

**कण्ठोद्ध्वंस**–पु., रोग० अशीतिर्वातविकारेष्वेकः कण्ठस्योद्ध्वंसः (चसू. २०.११)

रोगलक्षण० कण्ठभङ्गः उद्ध्वंसः उत्कासिका।

द्र० कण्ठोद्ध्वंस (सुउ. ४१.१३ असंनि. ५.१७)

**कण्ठोपलेप**–पु., रोग० विंशतिश्लेष्मविकारेष्वेकः कण्ठस्योपलेपः गौरवशब्दोच्चारणाशक्तिसूचकम् (चसू. २०.१७) (असंसू. २०.१५)

लक्षण० (असंनि. ३.३२) द्र० कण्ठोपलेप

**कण्ठ्य**–वि., कण्ठाय हितम् स्वर्यम् महाकषायवर्गे एको गणः (अहसू. ५.१६ चसू. ४.८)

**–गण**–पु., गण० स्वरहितौषधानाम् गणः 'सारिवेक्षुमूलमधुकपिप्पलीद्राक्षाविदारी कैटर्यहंसपादीबृहती कण्टकारिका इति दशेमानि कण्ठ्यानि भवन्ति।' (चसू. ४.१० (९) तान्येव कण्ठजननानि स्वर्याणि (असंसू. १५.१४)

**कण्डक**–पु., औषधियोग० लेपः (असंउ. ६. पृ. ५८)

न. तण्डुलक्षोदनचूर्णम् (असंउ. १ पृ. ५)

**कण्डकण्ठ**–पु., वनस्पति० अपामार्गः (रा. ४. ३८७)

**कण्डनी**–स्त्री., कण्डनोपयोगिनी भूमौ काष्ठादिनिर्मिता, इतस्ततश्चालनोपयोगिनी खातरूपा वा, उलूखलम् 'मुसलम्' (र. ७.५–८)

**कण्डरा**–स्त्री., शारीरावयव० महास्नायुः (चसू. ५.६०) स्नाय्वः 'वृत्तास्तु कण्डराः सर्वा विज्ञेयाः' (सुशा. ५.३१) 'स्नाय्वां वृत्तानां महतां कण्डरासंज्ञा' (इन्दु. असंशा. ५.८३) संख्या–षोडश कण्डराः (सुशा. ५.६) चतुर्दश कण्डराः (काशा. पृ.६६) स्थानानि पादहस्तग्रीवापृष्ठाणि। तासां चतस्रः पादयोः–'द्वे द्वे करचरणेषु (असंशा. ५.६१) तावत्यो हस्तग्रीवापृष्ठेषु (सुशा. ५.११) उपधातु० (चचि. १५.१७)

'कण्डराशब्दः स्नायुवाचकः' (डसुउ. १.१९–२०)

'स्थूलस्नायुः।' (चक्र. चचि. १५.१७)

**कण्डला**–स्त्री., वनस्पति० कपिकच्छूः (ध. १.१५१)

**कण्डीर**–पु., वनस्पति० जीरकः (असंसू. ७.१५७)

**कण्डु**–स्त्री., रोग० खर्जूः (चक्र. चसू. अ. २०.१५) खर्जूः (अस. अहसू. १२.५३) श्लेष्मकृत् लक्षणम् (असंसू. २०.१२०) बाले लक्षणम्–"घर्षत्यङ्गानि शयने। रोदितीच्छति मर्दनं शुष्ककण्डूर्दितं वियात्ततश्चार्द्रा प्रवर्तते सुखायते मृद्यमानं मृद्यमानं च शूयते। शूनं स्रवति सस्योढामार्द्रायां शूलदाहवत्॥–" (कासू. २५. ३०–३१) संशोधनयोग्यः विकारः (चसू. १६. १३) एलादिगणः कण्डूनाशनः (अहसू. १५.४४) चन्दननलदादीनि–दशेमानि कण्डूघ्नानि भवन्ति (चसू. ४.११–१४) कुष्ठाद्युद्वर्तनं कण्डूहरम् (चसू. ३.९)

लक्षण० (चसू. ५.२९) पित्तस्य कर्म (चसू. २०.१५) श्लेष्मणः कर्म, 'कर्माणि तु श्लेष्मणः

कण्डूस्थैर्यगौरवोपदेह. . . . . श्वेतवर्णता चेति ।
(असंसू. २०.२०) स्नानेन शमनीयं लक्षणम्
(चसू. ५.९२; अहृसू. २.१६)

**कण्डुल**–पु., वनस्पति० कन्दशाकम्, सितसूरणः
(रा. ७.५)

**कण्डुला**–स्त्री., वनस्पति० अत्यम्लपर्णी (रापरि. ३.३९)

**कण्डू**–स्त्री., कण्डुः (चसू. १३.३५)
रेवतीग्रहस्य नाम (काबालग्रहचि. पृ. ९९)

**करी**–स्त्री., वनस्पति० कपिकच्छूः (असंसू. १६.३)
(अहृसू. १५.९)
कारी कपिकच्छूः

**–घ्न**–वि., कषायवर्ग० (चसू ४.८) कण्डूं निघ्नन्ति
(असंसू. १५.१९) कण्डूघ्नगणः (चसू ४.११)
पु., वनस्पति० आरग्वधः (रा. ९.३३३)

**–मका**–स्त्री., कीट० विश्वम्भरभेदः (ड.) सविषः
असौ, 'कण्डूमकाभिर्दष्टे पीताङ्गच्छर्धतीसारज्वरा-
दिभिराहन्यते ।–' (सुक. ८.३३) चिकित्सा–
'कण्डूयकाभिर्दष्टानां रात्रौ शीताः क्रिया हिताः ।
दिवा ते नैव सिध्यन्ति सूर्यरश्मिबलार्दिताः ॥–'
(सुक. ८.५३)

**कण्डूक**–पु., रोग० बालस्य गलरोगः, लक्षणम् 'कण्डूके
श्वयथुः कण्ठे ज्वरारुचिशिरोरुजः ।–',
(कासू. २५.११)

**कण्डूति**–स्त्री., रोगलक्षण० कण्डूः (र. ३.१०१)

**कण्डूयन**–न., कण्डूशमनार्थं यद् घर्षणं तत्
(चशा ८.३२)

**कण्डूल**–पु., वनस्पति० कन्दः सूरणः (रा. ७.५)

**कण्डेर–क**–पु., वनस्पति० शाक० तण्डुलीयः
(असंचि. १३)

**कतक**–पु., न., वनस्पति० शशकपुरीषप्रतिमं फलम्
'निवळीचे बी' इति म. भाषायाम्
कतकफलम् (सुसू. ४५.१७) (धनि. ३.१७२)
निर्मलीवृक्षस्य फलम्, तोयप्रसादनं फलम्
(सुसू. ४२.११)
विषघ्नगणे एकं द्रव्यम् (चसू. ४.११ (१६)
दृष्टिप्रसादकम्–कतकस्य फलम्
(काक षड्कल्प. १०.३१)
फलगुणाः–कटु तिक्तं शीतलमुष्णं (रा.) चक्षुष्यं
रुच्यमम्बुप्रसादनं दृष्टिप्रसादनं (का.) मूत्रग्रहे
उपयुक्तम् काखि. (१४४.४५) तृष्णा-विष-नेत्ररोग-
शूलकृमि-मूत्रकृच्छ्रशर्कराऽश्मरीहरम्
(सुचि. ७.७) (ध. ३.१७२)

'नेत्रोत्थरोमविध्वंसि विधिनाऽञ्जनयोगतः ।
(रा. ३.१७३)
हिं.–नेलमल, नेइमल;
म.–निर्मली, निवळी.
त.–टोट्टामारम;

**कतमानिशरीरीय**–पु., अध्याय० (चइ. ६,१)

**कतिधापुरुषीय**–पु., अध्याय० (चशा. १.१)

**कत्तृण**–न., तृण० गन्धतृणम् (चसू. २.१३) रोहिष-
तृणम् (चसू. ४.१२ (१७) (सुउ. ५२.१४)
(असंचि. १;) आस्थापनेऽस्य मूलमुपयुज्यते
(चसू. २.१३) स्तन्यजननगणे एकं द्रव्यम्
(चसू. ४.१२ (१७) कासघ्नयोगे एकं द्रव्यम्
(सुउ. ५२.१४) कफवातज्वरे श्वासघ्नयोगे
(असंचि. १) गुणाः–कटुतिक्तकषायं (भाप्र.)
कफपित्तघ्नं श्वासकासहृद्रोगविपूचिकाऽजीर्ण–शूल-
हरं, रक्तदोषघ्नं शस्त्रदोषहरं शल्यदोषहरं बाल-
ग्रहघ्नं च.
हिं.–रोहिष सौन्धिया, गन्धेजवास, रसघास.
म. रोहिष, सुगन्ध रोहिषतृण,
ब.–रामकर्पूर.
फा.–खबालमामून.

**कथरी**–स्त्री., वनस्पति० कन्थारी (रापरि.) (८.२०)

**कथा**–स्त्री., शास्त्रवार्ता (हे. अहृसू. ३.२५)
पूर्वपुरुषवृत्तान्तप्रबन्धरचना (सुसू १९.८)

**–श्रवण**–न., (परिव.) उपक्रम० मद्यपानजदाहे
तच्छमाय हेमन्त–हिमालयमलयाऽऽदिपर्वतश्री-
ताम्भोहरितद्रुमजलाशयचन्द्र इत्येतेषां मनोज्ञाः
कथा दाहार्तं श्रावयेत् (सुउ. ४७.६३)

**कदम्ब–क**–पु., वनस्पति० वृत्तपुष्पः वृक्षः (ध. ५.१०४)
प्रावृषि पुष्पितः (सुसू. ६.३२) (सुसू. ३८.१४)
धाराकदम्बः (रा. ९.१७२) वेदनास्थापनगणे
(चसू. ४.१८ (४७)
न्यग्रोधादिगणे (सुसू. ३८.४८) गुणाः–कषाय-
स्तिक्तः कटुः शीतः व्रणरोपणः शुक्रलस्त्रिदोषघ्नः
कासदाहविषघ्नः (ध. ५,१०४)
हिं.–कदम्ब.
म.–कदम्ब, कळम्ब,
गु.–कदम्ब.
बं.–कदम.
त.–वेल्लकदम्ब,

न., शाक० गुणाः—विशदं गुरु शीतं समभिष्यन्दि (चसू. २७.११४)

—निर्यास—पु., कदम्बो बहुफलस्तस्य निर्यासः शुक्रशोधनगणे एकं द्रव्यम् (चसू. ४.१२ (२०)

—पुष्पगन्ध—पु., धान्य० व्रीहि (१६.१०२)

(कदम्बा)—स्त्री., वनस्पति० जीमूतकः देवदालीभेदः देवदाली (रा. ३.२४३)

—पुष्पा—स्त्री., वनस्पति० महाश्रावणिका मुण्डी (रा. ५.२१९)

—पुष्पिका—स्त्री., वनस्पति० श्रावणी मुण्डीभेदः मुण्डी (ध. १.१६०)

—पुष्पी—स्त्री., वनस्पति० अलम्बुषा, मुण्डकेति लोके (ड.) इयं श्लीपदरोगे काकादन्यादिपानीयक्षारे प्रयुक्ता (सुचि. १९.६३–६५)

भूमिकदम्बः (डसुउ. ४४.१९) कदम्बभेदः, कदम्बः (रा. ५.१७४)

कदम्बक—पु., वनस्पति० हरिद्रुः (रापरि. ९.२६)

कदम्बा, स्त्री., वनस्पति० जीमूतकः, देवदालीभेदः, देवदाली (रा. ३.२४३)

कदर—पु., वनस्पति० खदिरभेदः, श्वेतखदिरः (खदिर) (रा. १३५) (चसू. २५.४९) खदिराकारः श्वेतसारः (डसुसू. ३८.८) (अहसू. १५.१९) विट्खदिरः (चक्र. चचि. ३.२५८) खदिरः (रा. १.३९) उदर्दप्रशमने (चसू. ४.१७)

पु. न. रोग० हस्तपादस्थानगतः क्षुद्ररोगः बदरमात्रो ग्रन्थिविशिष्टोऽसौ; लक्षणम्—पादे शर्करादिभिः पीडिते कण्टकादिभिः क्षते वा मेदोरक्तानुगैर्दोषैः कीलवत्कठिनो निम्नमध्योन्नतः कोलमात्रः सरुक्स्रावी ग्रन्थिर्जायते (सुनि. १३.३०–३१) (असंउ.३६ पृ. २७२) चिकित्सा—कदरं तु शस्त्रेणोद्धृत्याऽग्नितप्तेन तैलेन दहेत् (सुचि. २०.२३)

कदली—स्त्री., प्राणि० मृगभेदः, बिलेशयः 'कदलीहट्ट' इति ख्यातः (चसू. २७.३८) महाबिडालसमो व्याघ्राऽऽकारः (सुसू. ४६.७८) (असंसू. ७.७६–७७)

वनस्पति० रम्भा (अहसू. १५.२६) अनुपदेशोद्भवो वृक्षः (चक. १.८) दीर्घपत्रा गुच्छफला क्षारनिष्कासनार्थमुपयुक्तेषु द्रव्येष्वेका (सुसू. ११.११) अस्याः क्षारोऽविमूत्रेण पीतः शर्करारोगनाशकः (सुचि. ७.२२) फलानि बालपक्वभेदेन द्विधोपयुज्यन्ते बालं फलं विशेषेण कषायम्, फलगुणाः—मधुरं कषायं शीतं मृदु गुरु पित्तहरं कफकरं रक्तपित्तघ्नम्। (ध. ४.७५)

कदलीपुष्पं कृमिहरम्

हिं.—केला.

म.—केळ.

गु.—केळा.

बं.—काला.

त.—कदली.

कनकरम्भा, सुवर्णरम्भा

फलगुणाः—स्वल्पाशने दीपनी तृष्णापहा दाहविमोचिनी (रा. ४.११६)

काष्ठकदली, कदलीभेदः कदली (ध. ४.७८)

—क्षार—पु., कदल्याः क्षारः कुष्ठहरप्रलेपे उपयुक्तः (चचि. ७.८९)

—गर्भ—पु., गर्भस्था कदली (चक्र. चचि. २१.७३)

—दल—न., कदलीपर्णम्, रक्तपित्ते प्रच्छादनार्थमुपयुक्तम् (चचि. ४.१०७)

—फल—न., कदल्या फलम्, 'दध्ना तक्रेण तालफलेन वा कदलीफलं नाभ्यवहरेत् ।' (असंसू. ९ अहसू. ७.३५)

—मृग—पु., मृगवर्गीयः, कदली, 'बृहत्तमबिडालसमो व्याघ्राकारः ।' (ड. सुचि. ८.३७)

कदाहार—पु., कुत्सिताहारः (चशा. ८.२४)

कदुष्ण—वि., ईषदुष्णम् (असंक. २.१४६)

कनक—पु., वनस्पति० तूणिः नन्दिवृक्षः (ध. ३.१८)

किङ्किरातः (रा. १०.४१५)

चम्पकमूलम् (र. ३०.६४)

आरग्वधः (र. ३०.६४)

पु., न., धत्तूरः (चचि. २३.७८) पीतधत्तूरः (सुशा. ४.६०) कृष्णबीजपुष्पो धत्तूरः (र. ११.९०–९२) उपविष० (र. १०.८७) धत्तूरः (रा. ४.७)

पु., निर्यास० कणगुग्गुलु (रा. १२.१८६)

कासमर्दः (ध. ४.११८)

न. लोह० सुवर्णम् (र.१४१) खनिजधातुः सुवर्णम् (ध. ६.१ सुचि. २४.१०१) ब्राह्मरसायने उपयुक्तम् (चचि. १.५८)

लोहेष्वन्यतमम् (र १.४१)

(पुं. न.) वनस्पति० नागकेसरम् (चचि. १.४९) (चचि. १४.१६६), (ध. २.४८)

**–क्षीरी**–स्त्री., वनस्पति० काञ्चनक्षीरी
( सुसू. ११–१३ ध १-२४२ )
कङ्कुष्ठम् ( चक्र. चचि. ७११ )

**–क्षीरीतैल**–न., सिद्धतैलम् योग० कण्डूनाशकम्
( चचि. ७.१११–११६ )

**–गैरिक**–न., सुवर्णगैरिकम् ( सुक २.५१–५२ )

**–पुष्पी** स्त्री., वनस्पति० कांचनक्षीरी, श्वित्रप्रशमनं लेपे ( चचि. ७.१६७ )

**–प्रभ**–( पु., ) वनस्पति० सोम० ( सुचि. २९.५ )

**–प्रभा**–( स्त्री., ) वनस्पति० तेजस्विनी, तेजोवती
( रा. ३.३९२ )
सुवर्णयूथा, यूथिका ( रा. १० २५२ )

**–प्रसवा**–( स्त्री., ) वनस्पति० सुवर्णकेतकी, केतकीभेदः ( रापरि. १०.३ )

**–बिन्द्वरिष्ट**–( पुं., ) अरिष्टयोग० महाकुष्ठघ्नः
( चचि. ७.७६-७९ )

**–रम्भा** ( स्त्री., ) वनस्पति० सुवर्णकदली, कदली
( रा. ११.११४ )

**–रस**–( पु., ) खनिज० हरितालम्
( रा. १३.५९ )

**–सार**–( पु., ) धत्तूररसः ( २५.११९ )

**–सुन्दर**–( न., ) पारदयोग० त्वग्विकारनाशकः (र. २०.५०–५२); राजयक्ष्मादिघ्नः (र. ४.२-१४) ग्रहण्यादिहरः ( र. १६.५२ तः ५४; ) अर्शोरोग-विषमज्वरवातरोगादिघ्नः ( र. १५.५३–५८ )

**–सुन्दर** न. सिद्धौषधिपारदयोगसुवर्णाभ्रकसत्वे समभागिके तत्समं च गन्धकं मूषायां विपाच्य त्रिकटुचित्रकविडङ्गवत्सनाभपारदशृङ्गीदेवदारूणि चार्धभागिकानि संमील्याजमूत्रेण संमर्दयेत्। मात्रा-गुञ्जा; फलम्–वातकफजकुष्ठमर्शोऽग्निमान्द्य-नाशकम् ( र २०.५०–५२ )

**–स्तम्भा**–( स्त्री., ) वनस्पति० सुवर्णकदली (कदली)
( रा. ११.११५ )

**कनकलोद्भव**–( पुं., ) वनस्पतिनिर्यास० सर्जरसः राळः, 'राळ' इति लोके ( रा. १२ १७६ )

**कनकाकरोद्भव**–( न., ) खनिजतुत्थकः, तुत्थम्
( डसुउ. १७.३९ )

**कनकाभिधाना**–(स्त्री.,) सुवर्णक्षीरिका, कांचनक्षीरी ( सूचि. २५.३८ ) पाठभेद द्र० 'कनकक्षीरी'

**कनकारक**–( पु., ) वनस्पति० कोविदारः
( रा. १०.२९३ )

**कनकारिष्ट**–( पुं. न. ) अरिष्टयोग० अर्शोघ्नः
( चचि. १४.१५८–१६८ )

**कनकाह्वय**–( न., ) वनस्पति० कङ्कुष्ठम्, मित्यन्ये ( ड. सुसू. ४४.४९–५१ )

**कनखल**–( न., ) ग्राम० गङ्गातीरस्थानम्
( काकसंहिताकल्पाध्याय २.२१–२२ )

**कनिष्ठा**–(स्त्री.,) कनिष्ठिका ( सुसू. ३५.१२ )

**कनिष्ठिका**–( स्त्री .,) शरीरावयवाऽङ्गुलि० (सुचि. २४,४) लघुतमाऽङ्गुलिः अङ्गुष्ठात्पञ्चमाऽङ्गुलिः (सुसू. ३५.७) तस्या आयामः हस्तकनिष्ठिकायाः सार्धाङ्गुलः सार्धाङ्गुलौ कनिष्ठाङ्गुष्ठौ। ( सुसू. ३५.१२ ) पादकनिष्ठिकायामः नखं विहाय एकाङ्गुलम्, 'पादाङ्गुष्ठप्रदेशिन्यौ द्व्यङ्गुलायते, प्रदेशिन्यास्तु मध्यमानामिका कनिष्ठिका यथोत्तरं पञ्चमभागहीनाः।' प्रदेशिन्याः सकाशान्मध्यमाङ्गुलिः पञ्चमभागहीना, ततोऽपि मध्यमायाः सकाशात् अनामिकापञ्चमभागहीना, ततोऽपि अनामिकायाः कनिष्ठिका पञ्चमभागहीनेत्यर्थः, पञ्चमभागस्तु अर्धाङ्गुलमात्रः ( ड. सुसू. ३५.१२ )

**–परिणाह**–वि., कनिष्ठिकासमस्थूलमित्यर्थः
(सुचि. ४०.५)

**कनीन**–पु., शारीर० कनीनक (सुउ. १५.९)
(असंसू. ५.५२)

**कनीनक**–पु., शारीर० नेत्रगतो नासासमीपस्थः सन्धिः ( सुउ. १५.९ ) (असंसू. ३२ (४) अहृसू. २३.३ ) नासासमीपस्थः प्रदेशः ( सुउ. १.१६ )

**कनीनका**–स्त्री., कनीनक द्र० कनीनक ( अहृसू. ३३.३ )

**कनीनी**–स्त्री., शारीर० कनिष्ठिका ( अहृसू. २.३; ) ( अहृसू. २५.३८ )

**कनीयस्**–पु., वनस्पति० सोमभेदः ( सुचि. २९.५ )

**कन्था**–स्त्री., वस्त्र० अनेकवस्त्रसंयोगजं प्रावरणम्
( चशा. ५.१२ )
वनस्पति० कन्थारी ( रापरि. ८.२० )

**कन्थारी**–स्त्री., वनस्पति० गुणाः–कटुतिक्तोष्णा दीपनी रुच्या कफवातघ्नी शोफघ्नी रक्तग्रन्थिरुजापहा
( रापरि ८.२० )

**कन्द**–पु., वनस्पति० ग्रन्थिरूपं मूलम् ( चसू. १.७४; र. २.८३; ) औदकाः कन्दा यथा कशेरुशृङ्गाटक-शालूकादयः ( सुचि. ५.२२ ) अग्राह्याः कन्दाः— यथा 'बालं ह्यनार्तवं जीर्णं व्याधितं क्रिमिभक्षितम्। कन्दं विवर्जयेत् सर्वं यो वा सम्यङ्न रोहति ॥'
( सुसू. ४६.३१२ )

( सुसू. ४६.३१२ ) शाकोपयोगिकन्दाः—विदारीकन्द-शतावरी-बिस-मृणाल-शृङ्गाटक-कशेरुक-पिण्डालुक-मध्वालुक-काष्ठालुक-शङ्खालुक-रक्तालुक-इन्दीवरोत्पलकन्दप्रभृतीनि ( सुसू. ४६. २९८ ) तद्गुणाः-मधुराः शीता गुरवो रक्तपित्तहरा बहुशुक्रकराः स्तन्यवृद्धिकराश्च ( सुसू. ४६.२९९ )
सूरणः ( धपरि. ४.६ )
वनस्पतिकन्द० अरण्यसूरणः सूरणभेदः वनसूरणः ( र ११.९०-; रा ५.८ )
रोग० गुदस्थस्थूलमांसाङ्कुरः अर्शोभेदः ( सुनि. २.४ )

( **कन्दा** )-स्त्री., वनस्पति० कन्दोद्भवा, गुडूची ( ध.नि. १.५ )
न. वनस्पति० गृञ्जनम् ( रा. ७.५५ )
**-ग्रन्थिन्**-पु., वनस्पति० रोमकन्दः गुणाः-मधुरः शीतो गुरुर्वृष्यः सन्तर्पणो मूत्रकृच्छ्रदाहशोष-प्रमेहघ्नः ( रा परि ७.२४ )
**-फल**-न., वनस्पति० कङ्कोलकम् ( ध ३.३७ )
**-फला**-स्त्री., वनस्पति० विदारिका विदारी ( रा. ७.१९४ )
**-बहला**-स्त्री., वनस्पति० तिलकन्दः ( रा. ७.५३ )
**-मूल**-न., वनस्पति० मूलकम् ( रा. ७.५० )
**-राल**-पु., वनस्पति० आक्षोडः अक्षोटः ( रा. ११.८२ )
**-रोहिणी**-स्त्री., वनस्पति० गुडूची ( ध. १.४ )
**-लता**-स्त्री., वनस्पति० कडुहुञ्ची ( ७.२८१ ) मालाकन्दः ( रापरि. ७.४४ )
**-वर्धन**-पु., वनस्पति० सूरणः ( धपरि. ४.६ )
**-वल्ली**-स्त्री., वनस्पति० त्रपुस० वन्ध्याकर्कोटकी
**-विष**-न., स्थावरविषभेद० तन्नामानि-कालकूट-वत्सनाभ-सर्षप-वालक-कर्दमक-वैराटक-मुस्तक-शृङ्गीविष-प्रपुण्डरीक-मूलक-हालाहल-महाविष-कर्कटकानि इति त्रयोदश कन्दविषाणि (सुक. २.५) 'कन्दजानि तु वाल-साक्तुक-क्रौञ्चक-बलाहलक-गालव-मर्कटक-करवीर-केन्द्रायुध-साङ्कोचक-लाङ्गलक-तैलपयकुशसुस्तेन्द्रमुष्कक-रोहिषाजनाभ-कादीनि (असंसू. ४०. पृ. ३१०) गुणाः-तीक्ष्ण-विषत्वात्सद्यःप्राणहरम्, उग्रवीर्यम् (सुक. २. ११ ) ज्वरहिध्मातन्द्रादन्तहर्षहनुस्तम्भगलग्रहफेन-वमनाऽरुचिश्वासमूर्च्छाकरम् ( असंउ. ४०. पृ. ३३० )

**-सूरण**-पु., वनस्पति० सूरणः ( धपरि. ४.६ )
**कन्दामृता**-स्त्री.,वनस्पति० गुडूची ( रा. ३.३ )
**कन्दार्ह**-पु., वनस्पति० सूरण ( धपरि. ४.६ )
**कन्दाद्य**-पु., वनस्पति० वनकन्दः धरणीकन्दः ( रापरि. ७.४२ )
**कन्दालु**-स्त्री., वनस्पति० कासालुः ( रापरि. ७.२८ ) धरणीकन्द ( रापरि. ७.४२ )
**कन्दोत्थ**-न., वनस्पति० पुण्डरीक० नीलोत्पलम् कुमुदम् ( रा. १०.२४८ )
**कन्दोद्भवा**-स्त्री., वनस्पति० गुडूची ( ध. १.५ )
**कन्दरोद्भवा**-स्त्री., वनस्पति० चतुष्पत्री, क्षुद्रपाषाण-भेदः ( रा. ५.२१५ )
**कन्दर्प**-पु., कामदेवः ( सुचि. २९.१८ )
-पलाण्डुः-पु., वनस्पति० ( गी. ल. को. )
**जीव**-पु., वनस्पति० कामवृद्धि ( रापरि. ४.५१ )
**कन्दल**-न., वनस्पति० आर्द्रकम् ( ध. २.८४ )
( **कन्दली** )-स्त्री., वनस्पति०-पद्मबीजम् ( ध. ४.१५९)
**कन्दाल**-पु., वनस्पति० करवीरकन्दः तैलकन्दः ( रापरि. ७.५३ )
**कन्दिन्**-पु., वनस्पतिकन्द० सूरणः ( रा. ७.५ )
**कन्दु**-पु., स्त्री., लोहमयं न्युब्जं पचनपात्रम् यथाऽपूप-पचनार्थम् ( सुसू. ४६.३५७ अहृसू. ६.४२ ) कन्दुपाचितमांसम्-जलोपसेकं विना केवले लोहमये पात्रेऽग्निना तप्तं मांसम् ( सुसू. ४६.३५६ ) वनस्पति० करवीरः ( रा. १०.२ )
**-यन्त्र**-यंत्र० जलयुक्ता वस्त्रेण मुखावच्छिन्ना स्थूला स्थाली, यस्यां स्थालिकान्तरपिहितमुखायां वस्त्रोपरि निक्षिप्तं स्वेद्यद्रव्यमधोभागस्थितेनाग्निना स्वेद्यते । यद्वा वस्त्रस्थाने तृणोपरि तृणक्षेपेण निर्मीयमाणया स्थाल्यादिकृतसंकेता स्वेदनीययन्त्र-मित्यपरसंज्ञम् । ( र. ९.७६-७८ )
**-संस्थान**-वि., वर्तुलाकृतिः ( असंसू २६.१५ )
**कन्दुक**-पु., वनस्पति० पूगीफलम् ( र. ११.१३१ )
-न., अपूपपचनपात्रम्, तापस्वेदार्थम् (सुचि३२.४)
**-यन्त्रम्**-न.. कन्दुकयन्त्रम् ( र. ५.२४३ )
**कन्धरा**-स्त्री., शारीरावयव० ग्रीवा ( असंउ. २७. पृ. १९७ ) ( असंशा. ८.३२ )
**कन्यकपञ्चमूली**-स्त्री., वनस्पतियोग० लघुपञ्चमूलम् ( सुउ. ४८ २१ )
**कन्यका**-स्त्री. वनस्पति० कुमारी ( रापरि ५.१० ) ( र. १४.५२ )
भद्रैला, द्र० एला ( ध. २.४६ )

**कन्या**–स्त्री., अप्राप्तद्वादशवर्षा ( सुचि. ३७.१०५ )
वनस्पति० स्थूलैला ( इन्दु.असंउ. २८.२०९ )
गुडूची ( ध. १.५ )
वाराहीकन्द ( रा. ७.१३४ )
घृतकुमारी, द्र० कुमारी ( रापरि ५.१० ) ( र. ११.१०३ )
महौषधि० सोमसमवीर्या महौषधिः, 'कान्तैर्द्वादशभिः पत्रैर्मयूराङ्गरुहोपमैः । कन्दजा काञ्चनक्षीरी कन्या नाम महौषधी ( सुचि. ३०.५–१६ ) तस्याः प्राप्तिस्थानं काश्मीरस्थं क्षुद्रकमानसं सरः; तत्र वसन्ते दृश्यते ( सुचि. ३०.३३ )

**कपट**–न., वनस्पति० कतृणम् ( ध. १.८२ )

**कपटा**–स्त्री., वनस्पति० कासघ्नी, कण्टकारीभेदः ( ध. १.९८ )

**कपटेश्वरी**–स्त्री., कण्टकारी ( ध. १.९८ )
लक्ष्मणा ( रा. ४.१२४ )

**कपर्द**–पु., जाङ्गमद्रव्य० कपर्दिका ( धपरि. ३.२४ ) ( र. ३.१३४ )

**कपर्दिका**–( स्त्री. ) जाङ्गमद्रव्य० गुणाः कटुतिक्तोष्णा दीपनी वृष्या नेत्र्या वातकफघ्नी कर्णशूलव्रणगुल्मशूलनेत्ररोगपरिणामशूलग्रहणीक्षयहरा ( धपरि. ३.२४ )

**कपाट**–( पु ) काष्ठपट्टकपर्यङ्कः ( असंउ ३२.२४२ )

**–शयन**–(न.,) भग्नजङ्घोर्वोः कपाटेऽवस्थितिः कपाटशयनविधिः अयं जङ्घोरुभङ्गयोः पश्चात्कर्मविशेषः। भग्नो भागः कपाटे कीलैः स्थिरः क्रियते, येन चलनवर्जितत्वादस्थिसन्धानं सत्वरं भवति । इदं च कपाटमिव कपाटं भग्नावयवसदृशम्। तस्मिंश्च भग्नमवयवं सम्यगवस्थापयित्वा तत्राऽपि तस्य स्थिरीकरणार्थं पञ्च कीलाः कथ्यन्ते–ते च उभयतो द्वौ द्वौ तले चैक इति पञ्च ( सुचि. ३.४८–४९ ); उभयभङ्गापेक्षया तु सप्तभिरेव कीलैः यन्त्रणम् । तथाहि उभयतो बहिर्द्वौ गुल्फयोर्द्वौ जानुनोर्द्वौ वङ्क्षणयोः तले चैक एवं सप्त ।' ( ड. सुचि. ३.४८–४९ )

**–संधिक**–पु., बन्ध० पञ्चदशकर्णबन्धेष्वेकः, अभ्यन्तरदीर्घैकपालिरितराल्पपाल्या सह बहिःसंधानात्कपाटवत्सन्धानं यत्र, सः कपाटसन्धिकः ( सुसू. १६.१० )

**कपाल**–पु., न., मृद्घटखण्डः ( सुचि. २०.६० )
न., अस्थि० ( चसू. ५.६० )
कपालास्थि–जानुनितम्बांसगण्डतालुशङ्खशिरःसु कपालानि ( सुशा. ५.२० )
न., शारीर० शिरसः उपरितनः प्रदेशः ( असंउ.२७ )
न., रोग० कपालकुष्ठम् ( चनि. ५.८(१) )

**–कुष्ठ**–न., रोग० महाकुष्ठेष्वेकम्, रूक्षाऽरुणपरुषाणि विषमविसृतानि खरपर्यन्तानि तनूनि उद्वृत्ततनूनि सुप्तवत्सुप्तानि हृषितलोमाचितानि निस्तोदबहुलानि अल्पकण्डूदाहपूयलसीकान्याशुगतिसमुत्थानानि आशुभेदीनि जन्तुमन्ति कृष्णारुणकपालवर्णानि च कपालकुष्ठानि विद्यात् ( चनि. ५.८(१) कृष्णकपालिकासदृशवर्णत्वात् कपालकुष्ठम् ( सुनि. ५.७–८ ) द्र० 'कुष्ठ'

**–चूर्ण**–न., नवमृण्मयघटखण्डचूर्णम् ( सुसू. १६.१५ )

**–मालिनी**–स्त्री., रेवतीग्रह० यस्याः स्त्रियाः जातमपत्यं चतुर्दशेऽहनि विनश्यति सा जातहारिणी ( का. रेवती क. ४७ )

**–रोग**–पु., शिरोरोगः ( चसि. २.२२ ) शिरस्येव कपाले व्याधिः ( असंसू. २७ )

**कपालिका**–स्त्री., शरावकर्परिका ( सुचि. १.९६ )
दन्तरोग०, दन्तशर्करोपेक्षिता सत्यणुशो दन्तकपालानि शातयति । ( सुनि. १६.३३ असंउ. २५ )
लेखनचिकित्सा कार्या ( सुचि. २२.३८ )

**कपालिन्**–पु., सप्तविंशतिसंख्याकेष्वन्यतमो रससिद्धिप्रदायकः आचार्यः ( र. १.२ )

**कपाली**–स्त्री., वनस्पति० विडङ्गम् ( रा. ६.१६ )

**कपि**–पु., पशु० मर्कटः ( अहशा. ३.९५ )
सुगन्धिद्रव्य० तुरुष्कः ( ध. ३.२२ )

**–कच्छू**–स्त्री., वनस्पति० गुणाः–मधुरा, तिक्ता, शीता ( उष्णा च ) गुरुर्बल्या, वृष्या, बहुमला, पुंस्त्वदायिनी, वातघ्नी, पित्तास्रघ्नी, दुष्टव्रणनाशिनी ( चसू.२७.३४ ) ( ध. १.१५१–१५२ )
हिं.—कौंछ, किवाँच.
म.—**कुहिलीचें बीज, खाजकुहिली.**
गु.—कउचों, मेरवनी शीगनी बी.
बं—आलकुशी, धनारगुण्ड, दया, शुयाशिंबी.
ता.—युनाइक, कालि.

**–कच्छूफलोपमा**–स्त्री., वनस्पति० जन्तुका, जन्तुकारी ( रा. ३.१२८ )

**–कच्छूबीजतैल**–न., तैल० कपिकच्छूबीजभवं तैलम् मधुरं, कषायमुष्णं, स्निग्धं, गुरु च ( ध. ६.१३५ )

**–चूत**–पु.,वनस्पति० आम्रातकः ( ध. ५.१२ )
**–ज** पु., सुगन्धिद्रव्य० तुरुष्कः ( ध. ३.२२ )
द्र० 'कपि'.
**–तैल** न., सुगन्धिद्रव्य० तुरुष्कः ( ध. ३.२२ )
**–त्थ** पु., वनस्पति० (चसू. २५.४०;) आमं कपित्थं मधुराम्लकषायतिक्तं, शीतमस्वर्यं, ग्राहि, वृष्यं, वातकरं, कण्ठघ्नं, विषघ्नम् ( चसू. २७.१३६–१३७ ) त्रिदोषकृत् ( असंसू. ७ ) कफहरं च ( ध. २.१०२ ) पक्वं कपित्थं मधुराम्लं कषायं, गुरु, कण्ठशोधनं, दोषघ्नं, विषघ्नं, ग्राहि, सुगन्धि, रुचिप्रदम् ( चसू. २७.१३६-१३७ ) कफवातहरं, श्वासकासारुचितृष्णाहरं, हिध्मावमथुजित् ( असंसू. ७; ध. २.१०२ ); सर्वं ग्राहि विषघ्नम्. नालच्छेदनानन्तरं बालकपित्थ-पत्रकषायेण स्नापयेत् ( असंउ. १ ) विषसंसृष्टेऽन्ने अस्य पुष्पमञ्जनार्थमुपयुज्यते ( सुक. १.६९–७१ ) कपित्थरसो मधुसंयुक्तो मूषिकविषे उपयुज्यते ( सुक. ७.३८ ) अस्य रसः हिक्काशमनार्थमुपयुक्तः ( सुउ. ५०.२५ ) वृन्तं पित्तविदग्धायां कफविदग्धायां च दृष्टावञ्जन-विधिनोपयुज्यते ( सुउ. १७.७ ) कपित्थपञ्चाङ्गघृतं सर्वमूषकविषहरम् ( सुक. ७.४० )
हिं.—कवट, कविठ.
म.—**कवठ.**
गु.—कविट.
बं—कगबेल.
ता. विलाकपिट्टम्, वेह्लिल.
फा.—कविटा.
न., वनस्पति० एलावालुकम् ( ध. ३.७६ )
द्र० 'एलवालुक'.
**–त्थतैल** न., योग० योनिदौर्गन्ध्ये पिच्छिले योनिस्रावे च कपित्थसिद्धतैलं पिचुभिर्योजयेत्; ( का. धात्रीचि. )
**–त्थासव** ( पु. न. ) आसुत० कपित्थफलस्यासवः ( असंसू. १० )
**–पिप्पली** स्त्री., वनस्पति० रक्तपुष्पोऽपामार्गः ( ध. १.२६३ ) 'अपामार्ग'
द्र० 'अपामार्ग.'
**–प्रिय** पु., वनस्पति० कपित्थः ( ध. २.१०२ )
आम्रातकः ( ध., ५.१२ )
**–भवबीज** न., वनस्पति० कपिकच्छुबीजम् ( र. २७. १२६–१२७ ) द्र० कपिकच्छु
**–रथ** पु., वानराणां रथः ( असंशा. १२ )
**–रोमफला** स्त्री., वनस्पति० कपिकच्छूः (रा.३.२०१)
**–लोला** स्त्री., वनस्पति० रेणुका ( ध. ३.५१ )
**–लोह** न., पित्तलधातुः ( ध. ६.१८ )
**–ष्ठल** पु., ऋषि० रोगापहरणचिन्तनार्थं हिमवत्-पार्श्वसमेतेषु महर्षिष्वेकः ( च. सु. १.९ )
**–सख्य** न., वानरमैत्र्यम्, शोषिणां स्वप्नानां दर्शनेः ऽरिष्टत्वेन लक्ष्यमाणम् ( सुसू. २९.६८–७१ )
**कपिञ्जल**–पु., विष्किरपक्षि० गौरतित्तिरिः ( चसू. २७.४७ )
तन्मांसं सरक्तपित्तश्लेष्मविकारेषु मन्दवातेषु शस्तम् ( चसू. २७.६८ )
ऋषि० रोगापहरणाचिन्तनार्थं हिमवतः पार्श्वे समेतेषु महर्षिष्वेकः ( चसू. १.९ )
**कपिञ्जलक**–पु., पक्षि० ( ध. ६.१० ) कपिञ्जलः
**कपिल**–पु., प्राचीनो रसाचार्यः, आद्यसांख्याचार्यः ( र. ६.५२ )
वर्ण० किञ्चित्ताम्रः, उज्ज्वलपिङ्गलवर्णः ( सुनि. ६.२६ असंसू. ६. ( चवि. ८.९९ )
मूषिक० दुष्टलक्षणम्–व्रणे कोथो ज्वरो ग्रन्थ्युद्गमस्तृषा च ( सुक. ७.२३–२४ )
पित्तलधातुः, राजरीतिः ( ध. ६. )
आग्नेयलूता० इयं च स्वेदजा वर्तते, सा पित्त-विकारदा भवति। तया दष्टस्य ताम्रा स्थिरा पिडका शिरोगौरवं, दाहस्तिमिरो भ्रमश्चेत्येतानि लक्षणानि भवन्ति ( सुक. ८.१०५ )
जलौका० निर्विषाणां जलौकानामन्यतमा, मनः-शिलारञ्जिताभ्यामिव पार्श्वाभ्यां युक्ता, स्निग्धमुद्ग-वर्णा ( सुसू. १३.१२ ) द्र० 'जलौका.'
**कपिला**–स्त्री., वनस्पति० द्राक्षाभेदः, उत्तरापथिका, द्र० 'द्राक्षा' ( ध. ५.५८ )
कुमारी ( रापरि. ५.११ )
रेणुका ( ध. ३.५१ )
कुशिंशपा ( ध. ५.१२१ )
शिंशपा ( रा. ९.१९८ )
**–द्राक्षा**–स्त्री., वनस्पति० द्राक्षाभेदः, उत्तरापथिका ( रा. ११.७६ )
**–फला**–स्त्री., वनस्पति० द्राक्षाभेदः उत्तरापथिका ( रा. ११.७६ )
**–शिंशपा**–स्त्री., वनस्पति० कुशिंशपा ( रा. ९.२०१ )

**कपिलाक्षी**—स्त्री., वनस्पति० कुशिंशपा ( रा. ९.२०१ ) मृगाक्षी ( रा. ७.२५७ )

**कपिलिका**—स्त्री., कीट० पिपीलिकाभेदः, दंशे चाग्निस्पर्शवद्दाहः शोफः श्वयथुश्च ( सुक. ८.३४ ) द्र० पिपीलिका.

**कपीतक**—पु., वनस्पति० प्लक्षः ( रा. ११.१२४ ध. ५.८१ )

**कपीतन**—पु., वनस्पति० गर्दभा(ण्डः) ( चचि. ३.२५८ ) कपिचूडो वानीराख्यः ( अरु. अहृसू. १५.४१ ) आम्रातकः ( हे. अहृसू. १५.४१ ) गन्धमुण्डः ( चसू. ४.१५ ) शिरीषः ( ध. ५.११२ ) पार्श्वपिप्पलः ( चसू. २५.४९ )

**कपीलु**—पु., वनस्पति० काकतिन्दुकः ( रा. ११. ५२–५३ ध. ५.४१ )

**कपीष्ट**—पु., वनस्पति० राजादनः ( ध. ५.९१ )

**कपोत**—पु., प्रतुदपक्षि० पारावतः, स द्विविधः गृहवासी वनवासी च, वनवासी पाण्डुकः, गृहवासिमांसगुणाः—कषायं मधुरविपाकं विशदं शीतं रक्तपित्तनिबर्हणं ( चसू. २७.७२ ) वनवासिमांसगुणाः—गृहवासिकपोतमांसात्किञ्चिल्लघुतरं शीतं स्वल्पमूत्रकरं च (चसू. २७.७३) शिलाजतुमाक्षिकधातुभ्यां व्याप्तदेहः कुलत्थकपोतौ यावज्जीवं विवर्जयेत् ( सुचि. १३.१९ ) पाण्डुककपोतस्य पुरीषं पक्वशोथस्य विदारणं करोति ( सुसू. ३७.९–१० ) अष्टादशमूषिकेष्वेकः, एतद्विषतः संनिपातजा रोग ग्रन्थयः कर्णिकाश्च भवन्ति ( सुक.७.६ असंउ.४६ ) कपोताभः ( सुनि. ६.२६ )

न., खनिज० अञ्जनम् ( ध. ३.१५१ ) ( रा. १३.२१५ )

**–चरणा**—स्त्री., वनस्पति० नलिका ( ध. ३.४३ )

**–पङ्का**—स्त्री., वनस्पति० कपोतवङ्का, सुवर्चला ( असंउ. ४. )

**–पुट**—न., पुट० घटसंपुटितौषधाय भूमावष्टसंख्याकैर्वनच्छगणैर्दीयमानं पुटम् ( र. १०.५८ )

**–पुरीष**—न., कपोतशकृत्, विशेषतः पाण्डुकस्य पुरीषं पक्वशोथस्य दारणं करोति ( सुसू. ३७.१० ) श्लेष्माऽर्बुदे प्रलेपार्थमुपयुज्यते ( असंउ. ३५; ( सुचि. १८.३६ )

**–बाणा**—स्त्री., वनस्पति० नलिका ( रा. १२.८८ )

**–वङ्का**—स्त्री., वनस्पति० सुवर्चला ( सुउ. ३२.३ ) कटभीसदृशपत्रा विटपी मध्यदेशे प्रसिद्धा ( सुचि. ७.२५ ) शिरीषसदृशपत्रः स्वल्पविटपः ( सुसू. ३८.१२ )

**–वर्णता**—स्त्री., कपोतसदृशो नीलोऽरुणो वा वर्णः ( सुसू. १२.८ )

**–वर्णा**—स्त्री., वनस्पति० सूक्ष्मैला ( ध. २.४४ ) द्र० 'एला'

**–वर्णी**—स्त्री., वनस्पति० सूक्ष्मैला, द्र० 'एला' ( रा. ६.६८ )

**–वल्ली**—स्त्री., वनस्पति० सूक्ष्मैला ( चवि. ८.१३९ ) द्र० 'एला'

**–वेगा**—स्त्री., वनस्पति० ब्राह्मी ( ध. ४.१०० )

**–सार**—न., खनिज० स्रोतोऽञ्जनम् ( रा. १३.२२६ )

**कपोतान्ध**—वि., अरिष्टलक्षण० "कपोतान्धस्तु रूपाणि दिवा कृष्णानि पश्यति" ( चक्र. च. ३.६ )

**कपोताभ**—पु., मूषिक० ( सुक. ७.६ ) द्र० 'मूषिक'

**कपोल**—पु., प्रत्यङ्ग० गल्लः ( अहृसू. १०.४ )

**कफ**—पु., दोष श्लेष्मा, केन जलेन के जले वा फलति वर्धते इति कफः। श्लेषणकर्मकरः पिच्छिलो देहधातुः ( सुसू. २१.५ ) रसस्य मलः ( चचि. १५. १८ ) शरीरस्थः सौम्यधातुः। उत्पत्तिः—अम्भःपृथिवीभ्यां कफः समुत्पद्यते ( असंसू. २० ) कफगुणाः—शीतो गुरुर्मन्दः स्निग्धः श्लक्ष्णो मृत्स्नः स्थिरः ( अहृसू. १.१२ ) पटुर्मृदुगौल्यवाँश्च ( रा. २१.८ ) तत्स्थानानि उरःकण्ठशिरःक्लोमपर्वाण्यामाशयो रसः। मेदो घ्राणं जिह्वा च ( अहृसू. १२. ३ ) प्राकृतकर्माणि—स्नेहो बन्धः, स्थिरत्वं, गौरवं, वृषता, बलं, क्षमा, धृतिरलोभश्च ( चसू. १८.५१ ) तद्भेदाः स्थानानि च पञ्च—अवलम्बक उरसि, क्लेदक आमाशये, बोधको जिह्वामूले, तर्पकः शिरसि, श्लेषकः संधिषु तिष्ठति ( अहृसू. १२.१५–१८ ) वृद्धिकालाः—बाल्ये, दिवसस्य निशायाश्च प्रथमे भागे, भुक्तस्य प्रथमकाले, तथैव वसन्ते कफवृद्धिर्भवति ( अहृसू. १.८ ) द्र० 'दोष'

**–घ्नी**—स्त्री., वनस्पति० हपुषा ( रा. ४.१३ ) शेरणी.

**–पूर्णदेह**—वि., रोगलक्षण० कफस्य गौरवादिभिर्लक्षणैर्युक्तः ( सुउ. ५२.९ )

**–पूर्णास्यता** स्त्री., रोगलक्षण० कफपूर्णमुखता ( अहृसू. २२.११ )

**–प्रकृति** (स्त्री.,) दोषप्रकृति० दूर्वेन्दीवरसुवर्णगोरोचनशरकाण्डान्यतमवर्णः समसुविभक्तस्निग्ध-

स्थिरसुकुमारश्लिष्टमांससन्धिबन्धः परिपूर्णचारुगात्रो महाललाटोरुबाहुर्व्यक्तसितासितप्रसन्नायतविशालपक्ष्मलाक्षः सिंहमृदङ्गघनघोषः, क्षुत्पिपासोष्णसहिष्णुः बह्वोजोबलशुक्रव्यवायापत्यश्चिरशोषमाल्यानुलेपनो बाल्येऽप्यरोदनः, पेशलः सत्यवादी, स्मृतिमान्, धृतिमान् अलोलुपः, कटुतिक्तकषायोष्णरूक्षेच्छोपशयश्च भवति ( असंशा. ८.१५ ) क्षुत्तृड्दुःखक्लेशघर्मैरतप्तः सात्त्विको धर्मात्मा, विनीतः प्रलम्बबाहुः पृथुपीनवक्षा घननीलकेशः प्रच्छन्नं, दृढं चिरं च वैरं दधानः। समदद्विरदेन्द्रतुल्ययातः स्वल्पभोज्यपि बलवान् सुस्निग्धविशालदीर्घसुव्यक्तशुक्लासितपक्ष्मलाक्षोऽल्पक्रोधो वदान्यः, क्षमावान् दीर्घदर्शी, दीर्घसूत्री, गम्भीरः कृतज्ञः ऋजुर्विपश्चित्सुभगसुलज्जो भक्तो गुरूणां, स्थिरसौहृदश्च ब्रह्मारुद्रेन्द्रवरुणतार्क्ष्यहंसगजसिंहाऽश्वगोसदृशवृत्तिः, स्वप्ने पद्मविहङ्गमालाजलाशयानां द्रष्टा ( अहृशा. ३.९६–१०३ ) प्रियदर्शनो मधुरप्रियश्च (सुशा. ४.७२–७६) श्लेष्मा हि स्निग्धश्लक्ष्णमृदुमधुरसारसान्द्रमंदस्तिमितगुरुशीतविज्जलाच्छः, तस्य स्नेहाच्छ्लेष्मलाः स्निग्धाङ्गाः श्लक्ष्णत्वाच्छ्लक्ष्णाङ्गाः मृदुत्वात् दृष्टिसुखसुकुमारावदातगात्राः, माधुर्यात्प्रभूतशुक्रव्यवायापत्याः, सारत्वात्सारसंहितस्थिरशरीराः, सान्द्रत्वादुपचितपरिपूर्णसर्वाङ्गाः, मन्दत्वान्मदचेष्टाहारव्याहाराः, स्तैमित्यादशीघ्रारम्भक्षोभविकाराः, गुरुत्वात्साराधिष्ठितावस्थितगतयः, शैत्यादल्पक्षुत्तृष्णासंतापस्वेददोषाः, विज्जलत्वात्सुश्लिष्टसारसंधिबन्धनाः, तथाऽच्छत्वात्प्रसन्नदर्शनाननाः प्रसन्नस्निग्धवर्णस्वराश्च भवन्ति, त एवंगुणयोगाच्छ्लेष्मला बलवन्तो वसुमन्तो विद्यावन्त ओजस्विनः शान्ता आयुष्मन्तश्च भवन्ति।
( चवि. ८.९६ )

**–प्रसेक**–पु., रोगलक्षण० श्लेष्मणोऽतिप्रसेकेन वायुः श्लेष्माणमस्यति स कफप्रसेकः ( चचि. ८.१२१ )

**–रक्तमूर्ति**–वि., कफरक्तजः ( सुनि. १६.३८ )

**–रक्तयोनि**–वि., कफरक्तोत्पन्नः ( सुनि. १६.३९ )

**–विरोधिन्**–न., वनस्पति० मरिचम् ( रा. ६.१३६ )

**–संस्रव**–पु., रोगलक्षण० कफस्रुतिः ( सुउ. ५७.५ )

**कफारि**–पु., वनस्पति० शुण्ठी ( रा. ६.१३० )

**कफान्तक**–पु., वनस्पति० बर्बुरः ( रा. ८.१२ )

**कफावृति**–स्त्री., कफावरणम् ( चसि. ३.४१ )

**कफाह्वय**–पु., वनस्पति० कैडर्यनिम्बः ( रा.९.४८ )

**कफाशय**–पु., कफस्थानम्, आमाशयोर्ध्वभागभूतं वक्षः ( चक्र. चचि. २०.२६ )

**कबन्ध**–न., जलम् ( रा. १४.३१७ )

**कबरी**–स्त्री., वनस्पति० हिङ्गुपत्री ( ध. २.३८ ) केशबन्धः ( रा. परि. १८.१८ )

**कमठ**–पु., जलचरप्राणि० कच्छपः ( र. ११.१२९ )

**कमण्डलु**–पु., वनस्पति० प्लक्षः ( ध. ५.८१ )

**कमल**–न., वनस्पति० पुष्पभेदेन त्रिविधं श्वेतं रक्तं नीलं च ( ध. ४.१५२ ) गुणाः–शीतलं वर्ण्यं मधुरं कफपित्तजित् तृष्णादाहास्रविस्फोटविषवीसर्पनाशनम् ( भा. प्र. )
हिं.—कमल.
म.—कमळ.
गु.—कमल.
बं.—पद्म.
ता.—तामरै.
ताम्रम् ( र. २१.१३९ )
जलम् ( रा. १४.३१७ )

**कमलाविलासकरस**–पु., पारदयोग० लोहाभ्रपारदगन्धकसुवर्णयुक्तः, पाण्डुहिक्कामन्दाग्निहलीमकसर्वप्रमेहनाशकः ( र. २६.५१–५३ )

**कम्प**–पु., लक्षण० वेपथुः, गात्रकम्पनम् ( सुनि. १.२७ )

**–वात**–पु., वातरोग० लक्षणम्–हस्तपादतलानां कम्पो भ्रमणं, निद्रानाशः बुद्धिक्षयः च ( र. २१.१४७–४८ ) 'सर्वाङ्गकम्पः शिरसो वायुर्वेपथुसंज्ञकः

**कम्पन**–न., लक्षण० कम्पः ( चइ. ७.२७ )

**कम्पिल्ल**–पु., खनिजद्रव्य० कम्पिल्लकः ( र. ३.१३४ )

**कम्पिल्लक**–पु., वनस्पति० रेचनगणोक्तं द्रव्यम् ( च. वि. ८.१३६ ) दद्रुकण्ड्वादित्वग्दोषेष्ववचूर्णनार्थम् ( चसू. ३.१० ) श्यामादिगणे गुल्मादिरोगहरम् ( सुसू. ३८.२९ ) कटुरुष्णो लघुः कफघ्नो व्रणगुल्मोदरविबन्धाध्मानक्रमिकासजन्तुश्लेष्मोदरनुत् ( ध. ३.१३८ ) पित्तासृङ्मेहविषाश्मनुत् ( भाप्र. )
हिं.—कबीला, कमीला, कमला.
म.—**कपिला, शेंद्री**
गु.—कपिलो.
बं.—कमिलागुडि, कमिल, कमलगुण्डी.
त.—चुवङ्गेचारि, कपिल पोडि.
का.—कनबेला.

खनिजद्रव्य० साधारणरसेष्वेकः, इष्टिकाचूर्णसंकाशश्चन्द्रिकाढ्यः सौराष्ट्रदेशोत्पन्नः, **गुणाः**–पित्तव्रणाध्मानविबंधहारी श्लेष्मोदरार्तिगुल्मकृमिनाशकः, मूलामशोफशूलज्वरघ्नोऽतिरेचनश्च (र. ३.१३६–१३७)

**–तैल**–न., फलतैल० गुणाः–कटु, कटुविपाकमुष्णं तीक्ष्णं, लघु, सरं, वातकफघ्नं कृमिकुष्ठप्रमेहशिरोरोगापहरं च (सुसू. ४५.११५)

**–स्नेह**–पु., तैल० तिक्तकटुकषायस्नेहेष्वेको दुष्टव्रणविशोधनः, अधोभागदोषहरः, कफवातहरः कृमिघ्नश्च (सुसू. ४५.१२४)

**कम्बल**–पु., ऊर्णावस्त्रम् (असंसू. ४)

**कम्बलि**–पु., ऋषि० सप्तविंशतिसंख्याकेष्वन्यतमो रससिद्धिप्रदायकः (र. १.२–५)

**कम्बा**–स्त्री., शलाका (र. ७.१२)

**कम्बु**–पु., जांगमद्रव्य० शङ्खः (ध. ३.१७९)

**–काष्ठा**–स्त्री., वनस्पति० अश्वगन्धा (रा. ४.४००)

**–पुष्पी**–स्त्री., वनस्पति, शङ्खपुष्पी (ध. ४.११३)

**–पूत**–पु., जांगमद्रव्य० शङ्खः (रा. १३.२४३)

**मालिनी**–स्त्री., वनस्पति० शङ्खपुष्पी (ध. ४.११३)

**कम्बुकी**–स्त्री., वनस्पति० अश्वगन्धा (र. ११. ५३–५७)

**कम्भारी**–स्त्री., वनस्पति० काश्मरी (रा. ९.१४६)

**कम्भिका**–स्त्री., धान्य० व्रीहिः (रा. १६.११७)

**कर**–पु.,प्रत्यङ्ग० हस्तः (अहृसू. २५.४०) (सुचि. ३८.४०) द्र० 'हस्त'

**–घाट**–पु., वनस्पति० मदनः (असंउ. ४४)

मूलविष० यस्य त्वचि निर्यासे मूले च विषं वर्तते (सुक. २.५)

देश० करहाटः, स्कान्दे सह्याद्रिखण्डे काराष्ट्रदेशस्य राजधानी, सांप्रतं 'कराड' इति प्रसिद्धः (काखिल. २५.१४)

**–च्छद**–पु., वनस्पति० सागः (धपरि. ५.३)

सिन्दूरी सिन्दूरपुष्पी (रापरि. १०.१९)

**–ज**–पु., शारीर० नखः (चशा. ८.५१)

वनस्पति० करञ्जः (चसू. ३.१३)

नखम् (ध. ३.५८)

**–जोडि**–पु.,कन्द० रसबन्धादिवश्यकृत् (रापरि.७.५७)

**–पत्र**–न., शस्त्र० खरधारं दशाङ्गुलदीर्घं, विस्तारे-द्वयङ्गुलं सूक्ष्मदन्तं सुत्सरुबन्धमरश्मां छेदोपयोगि (अहृसू. २६.१६)

**–पत्रिका**–स्त्री. प्रसहपक्षि० (ड. सुसू. ४६.७४)

**–पर्ण**–पु., वनस्पति० रक्तैरण्डः (रा. ८.४४७) द्र० 'एरण्ड'

**–(पर्णी)**–स्त्री., वनस्पति० भेण्डा (रा. ४.२६)

**–पाददाह**–पु., लक्षण० करयोः पादयोश्च दाहः (चचि. ६.१४)

**–प्रचित**–वि., करेण कराभ्यां वा संचितम् (चचि.१८. (३) ३)

**–प्रचितीय**–पु., अध्यायपाद० (चचि. १ (३) १)

**–प्राप्य**–वि., हस्तग्राह्यम् (अहृसू. २८.२२)

**–भु**–पु., पशु० रोहिणः (रापरि. ६.३४)

**–मर्द**–पु., न., वनस्पति० तद्विविधम्–ग्रामजं वनजं चेति, आमं तु दीपनं दाहकरम् (ध. ५.१०३)

कृष्णवर्णद्राक्षारूपं बीजबहुलमम्लमधुरं वन्यं फलम् (र. १०.८०–८१) तत्त्वम्लं रक्तपित्तकरम् (चसू. २७.१६१) तत्तृषापहं रुच्यं पित्तकृत् (सुसू. ४६.१५६)

आर्द्रं करमर्दं कफपित्तप्रदं सरं गुरूष्णं वातघ्नम् (असंसू. ७.२०३)

पक्वं करमर्दं मधुरं शीतं पित्तघ्नमरुचिरक्तपित्तघ्नम (ध. ५.१०३)

त्रिदोषघ्नं विषघ्नम् (रा. ५.१६९)

हिं.—करोन्दा.

**म.—करवन्द.**

गु.—करमदा.

बं.—करम्चा.

ता.—पेरु कळाचेटि.

**–मर्दिका**–स्त्री., वनस्पति० द्राक्षा (ध. ५.५६)

**–रुह**–पु., वनस्पति० नखः (ध. ३.५८)

**–वन्द**–न., वनस्पति० करमर्दः (र. १०.८०–८१)

**–वीर**–पु., वनस्पति० उपविषेष्वेकम्, स श्वेतरक्तपीतकृष्णपुष्पभेदाच्चतुर्विधः (सुचि. १९.३७–३९)

कटुस्तिक्तः कषायमधुरः (सुसू. ३८.६५) उष्णश्चक्षुष्योऽश्वमारणो ज्वरकुष्ठकण्डूविषव्रणस्फोटघ्नः (ध. ४.१)

कुष्ठघ्नगणे (चसू. ४.११) किक्किसोत्पत्तिकाले कण्डूप्रशमनार्थं करवीरसिद्धतैलेनाभ्यङ्गः (चशा. ८.३२)

अस्य कषायाणि व्रणशोधनानि (सुसू. ३७.१३-१४) त्वगस्य दद्रुघ्ना, पत्राण्यस्य व्रणप्रक्षालने उपयुज्यन्ते (सुचि. १९.३७–३९)

पुष्पमस्य जलगन्धनाशनम् (असंसू. ६) मूलमस्य

शिरोविरेचने उपयुक्तम् ( सुसू. ३९.६ ) तथा च कुष्ठनिषूदनलेपे उपयुक्तम् ( चसू. ३.१५ )
हिं.—कनेर, कनैली.
म.—**कण्हेर.**
गु.—कणेर.
बं.—करवी.
ता.—मलै अलरी, अयमरम्.
सोम० ( सुचि. २९.६ )
अर्जुनवृक्षः ( वैशसि. )

**–वीरकन्द**–पु., वनस्पति० तैलकन्दः ( रापरि. ७.५० )

**–वीरभुजा**–स्त्री., वनस्पति० आढकी ( ध. ६.९३ )

**–वीर्य**–पु., धन्वन्तरिशिष्येष्वेकः ( सुसू. १.३ )

**–हाट**–पु., वनस्पति० कमलकन्दः ( र. २७.११७ )
मरुबकः ( र. २७.११७ )
आकारकरभः ( र. २७.११७ )
मदनः ( चचि. २६.१५. चक्र. १.२७ ) ( सुचि. १८.४५ )
महापिण्डीतरुः ( रा. परि. ९.३३ )

**–हाटक**–न., वनस्पति० पद्मकन्दः ( ध. ४.१६३ )

**(–हाटिका–)** स्त्री., मूषा ( र. १०.१ )

**करक**–पु., वनस्पति० बकुलः ( रा. १०.२६३ )
वनस्पति० दाडिमः ( ध. २.६१ )
वनस्पति० अस्य त्वक्सारनिर्यासः विषरूपः ( असंउ. ४० )
वनस्पति० करीरः ( रा. ८.१६६ )
वनस्पति० कोविदारः ( रा. १०.२९३ )
पक्षि० रणगृध्रः ( ध. ६.३३ )

**( करका )**–स्त्री., वनस्पति० कारवल्ली ( त्रपुसविशेषः ) ( रा. ७.२७८ )
वर्षोपलः ( अमरकोश ) पाण्याची गार.

**करङ्कशालि**–पु., वनस्पति० इक्षुः ( रा. १४.१८५ )

**करञ्ज**–पु.; वनस्पति० गुणाः–तिक्तः कटूष्णस्तीक्ष्णो लघुश्चक्षुष्यो वातकफापहः पित्तघ्नः, कुष्ठोदावर्त-गुल्मार्शोनुत् ( भाप्र. ) रक्तपित्तनुत् ( सुउ. ४५.२५ ) जन्तुप्रमेहनुत् ( सुसू.४६.१९७–९८ )
रक्तदोषव्रणप्लीहवृद्धिकृमिभूतयोनिरोगघ्नः ( रा. ५.१०७ ) फलम्–अस्थिबीजं स्नेहयुक्तम् ( चसू. १३.१० ) कृमिहरम् ( चवि. ७.१७ ) कफवातघ्नं प्रमेहार्शःकृमिकुष्ठघ्नं च ( भाप्र. पूर्वखण्डः; ) विष्टम्भि पित्तश्लेष्माविरोधि च, (असंसू. ७) काष्ठम्। दन्तविशोधने उपयुज्यते, ( चसू. ५.७३ ) त्वक्–व्रणे सेकलेपार्थं हिता, ( अहृसू. २९.७६ ) पत्रम्–कटुपाकमुष्णलघुभेदनं कफवातघ्नं पित्तलमर्शःकृमिशोथहरम्, पुष्पम्–उष्णवीर्यं वातकफघ्नं च, ( भाप्र. ) मूलम्–शिरोविरेचनार्थम् ( सुसू. ३९.६ ) अङ्कुराः–अग्निदीपना रसे पाके च कटुकाः पाचनाः कफवातार्शः-कुष्ठकृमिविषघ्नाः शोथहराश्च ( वैशसि. )
हिं.—करंज, कंजा.
**म.—करंज.**
बं.—करंचा, धारकरानिआ, नाटा करञ्ज.
गु.—करंज.
ता.—पंकुमरम्, पुंगम्मारम्.

**करञ्जिका**–स्त्री., वनस्पति० नक्तमालः, करञ्जभेदः, क्षारागदे आवापार्थमुपयुज्यते ( सुक. ६.३ )

**–तैल**–न., तैल० ( चसू. १३.१० ) गुणाः तिक्तं नात्युष्णम् ( असंसू. ६. ) अनिलकफकृमिकुष्ठ-प्रमेहशिरोरोगापहारि ( सुसू. ४५.११५ )

**–द्वय**–न., आरग्वधादिगणे अर्कादिगणे च ( सुसू. ३८.६–७; सुसू. १६.१७ )
एकश्चिरबिल्वो द्वितीयः कण्टकी विटपकरञ्जः ( सुसू. ३८.६–७ )

**करट**–पु., धान्य० रूक्षणात्मकः ( रा. ६.१०९ )

**करण**–न., कार्याभिनिर्वृत्तौ प्रयतमानस्य कर्तुरुपकरणाय यत्कल्प्यते तत्करणम् ( चवि. ८.७० )
साधनम् ( र. ७.८ )
असाधारणं कारणम् ( तर्कसंग्रहः ) व्यापारवद् असाधारणं कारणं करणम् ( परमलंघुमंजूषा )
इन्द्रियम् ( चशा. १.५४–५६ ) ( सुशा. ४.३७ )
ज्योतिःशास्त्रीयसंज्ञा० दिनभागभेदः अर्धतिथिः ( चसू. १५.९ )
बवबालवादि ( सुसू. २.४ )
स्वाभाविकद्रव्याणामभिसंस्कारः (चवि. १.२२ ( २ )

**–प्राप्त** वि., स्वकर्मणि युक्तः निपुणः ( सुसू. ८.१९ )

**करणायतन**–न., बुद्धीन्द्रियकर्मेन्द्रियमनोबुद्ध्यहङ्कार-स्थानानि ( सुउ. ४६.४ )

**करण्डक**–पु., पात्र० हस्तिदन्तादिनिर्मितकरण्डः ( र. १७.७८-८१ )

**करण्डफलक**–पु., वनस्पति० कपित्थः (रा. ११.१५५. )

**करभ** पु., प्राणि० उष्ट्रः (सुउ. ६०.४१)
प्रत्यङ्ग० मणिबन्धात् कनिष्ठिकापर्यन्तो हस्त-बहिर्भागः (वैशसि) मणिबन्धादाकनिष्ठं करस्य करभो बहिः।
**(करभा)** स्त्री., वनस्पति० वृश्चिकाली (रापरि. ९.८)
**–काण्डिका** स्त्री., वनस्पति० उष्ट्रकाण्डी (रापरि. १०.४३)
**–प्रिया** स्त्री., वनस्पति० क्षुद्रदुरालम्भा, द्र० 'धन्वयास' (रा. ३.२३)
**–वल्लभ** पु., वनस्पति० पीलुः (ध. ५.५१)
कपित्थः (रा. ११.१५५)
**करभादनिका** स्त्री., वनस्पति० क्षुद्रदुरालम्भा (रा. ३.२३) द्र० 'धन्वयास'
**करभादिका**–स्त्री., मूषा (र. १०.१)
**करभीक्षीर**–न., उष्ट्रीक्षीरम् (असंचि. १९.१०६) द्र० "उष्ट्र"
**करम्भ**–पु., वनस्पति० उत्तमारणी (अहृसू. १५.२४)
स्थावरविषभेदः, यस्य पत्रं, फलं, पुष्पं, त्वक्सार-निर्यासश्च सर्वं विषमयं भवति (सुक. २.५)
**(करम्भा)**–स्त्री., वनस्पति० इन्दीवरी (रा. परि. ३.२७)
**कराम्ल**–पु., न., वनस्पति० करमर्दः (ध., ५.१०२)
**कराल**–पु., धान्य० मधुरः शीतो गुरुर्ग्राही वातलो रुच्यः कफपित्तघ्नः (ध. ६,१०९)
वनस्पति० शालुकः, कृष्णार्जकः (ध. ४.५६)
जङ्गाल० हिमवदादिपर्वतेषु दृश्यते, 'कस्तूरीमृगः' (सुसू. २०.५)
अधोनिष्क्रान्तदन्तोऽयम् (सुसू. ४६.५४)
वि., दन्तुरः, उन्नतदन्तः (सुशा. १०.२५)
दन्तरोग० अश्लिन्विकटानां दन्तानां प्रादुर्भावः (असंउ. २५)
**करिन्**–पु., हस्ती (रा. ६.११६)
**(करिणी)**–स्त्री., कणभ० सविषकीटभेदः (सुक. ८.२६–२७)
वनस्पति० हस्तिशुण्डी (र. १६.९९–१०२)
गजपिप्पली (र. १६.९९–१०२)
इन्द्रवारुणी (र. १६.९९–१०२)
**(करि–) कणा**–स्त्री., वनस्पति० गजपिप्पली (ध. २.७८)
चविका (रा. ६.११५)
**–पत्र**–न., वनस्पति० तालीसपत्रम् (रा. ६.८२)
**–पुट**–न., गजपुटम् (र. २२.२४–२९)
**–विजयभू**–स्त्री., वनस्पति० आटरूषः (र. १७.६७–६८)
नागदमनी, (र. १७.६७–६८)
**करिल्लुका**–स्त्री., वनस्पति० कारवल्ली (रा. ७.२७)
**करीर**–पु., वनस्पति० मरुजो द्रुमः (चचि. ३०.८२; चसू. २७.१४) उष्ट्रप्रियः, गुडपत्रवृक्षः (सुसू. ४६.२८३) अयं निष्पत्रकः ग्रन्थिलस्तीक्ष्णकण्टको वृक्षः (रा. ८.१६६) गुणाः–कटुः स्वादुस्तिक्त उष्णो रुच्यः आध्मानकरः कफकरः (रा.) वात-कफघ्नो गुदकीलारोचकश्वासशूलछर्दिखर्जूव्रणघ्नः। (ध. ५.९९) पुष्पं शाकत्वेनोपयुज्यते, शाकगुणाः—पाके कटु वातहरं सृष्टमूत्रपुरीषं च (सुसू. ४६.२८३) फलम्–सकषायं मधुरं शीतं पित्तकफघ्नं च (चसू. २७.१४२) करीरफलोद्भवतैलगुणाः—एतत्तैलं रसकर्मोपयोगि (र. १०.७३–७६)
हिं.—कचरा, कवरा, करेर.
म.—नेपती.
गु.—केरडी.
बं.—करील, कचरा.
ता.—कर्याल.
फा.—कुराका, केविर.
वंशाङ्कुरः (चचि. १४.१०) संयोगतः पयसा सह विषतुल्यं भवति (सुसू. २०.८)
उपोदिकाचञ्चवादीनां कोमलो नालः (सुचि. १.४१)
मांसांकुरः (सुनि. २.१७)
अनुशस्त्र० अंकुरः (सुसू. ८.१५)
**–ग्रन्थिल**–पु., वनस्पति० करीरः (रा. ८.१६६)
**करीशिफा**–स्त्री., वनस्पति० गजपिप्पलीमूलम् (र. १४.५३–५४)
**करीष**–पु. न. शुष्कगोमयम् (चसू. १४.२६)
गवादिशकृच्चूर्णम् (अहृसू. १७.६)
**करुणवेदिन्**–वि., करुणया सत्त्वानि वेदयतेऽनुभवति पश्यतीति (चचि. १ (४) ३२)
**करुणी**–स्त्री., वनस्पति० ग्रीष्मकाले पुष्पयुक्ता; पुष्पं रक्तवर्णम्, तद्गुणाः कटुतिक्तोष्णा वातकफघ्नी, आध्मानविषविट्छर्दिजत्रूर्ध्वरोगश्वासहारिणी च (रा. परि. १०.२७–२८)
**करेणु**–स्त्री., पशु० हस्तिनी (सुसू. ४५.४७)
वनस्पति० सोमसमवीर्या महौषधिः, काश्मीरे क्षुद्रमानससरसि भवति (सु. चि. ३०.५)

**करेणुका**–स्त्री., पशु० हस्तिनी ( असंचि. ९ )
**करेवर**–पु., धूप० तुरुष्कः ( रा. १२.३७ )
**कर्क**–पु., वनस्पति० आमलक ( रा. ११.३३१ )
**कर्कट**–पु., वनस्पति० क्षुद्रामलकः, गुणाः–कषायः शीतो लघुः रुच्यो दीपनो ग्राही चक्षुष्यः कफपित्तघ्नः ( रा. ११.३३१ )
बिल्वः ( ध. १.१०६ )
कर्कटशृङ्गी ( र. १७.४८–५० )
प्राणि० कर्कटकः ( अहृसू. ६.५२ )
न., विषम्, इदं कपिवर्णम् ( र. २९.१५ )
–**शृङ्गी**–स्त्री., वनस्पति० हिमालये वृक्षविशेषस्य पर्णेषु शाखासु च संस्थितानि क्षुद्रकीटकजन्यानि शृङ्गाकृतीनि लघुगोलकानि कर्कटशृङ्गीति नाम्ना प्रसिद्धानि सन्ति, गुणाः–तिक्तोष्णा वातपित्तघ्नी कासश्वासयक्ष्मोर्ध्ववातवान्तितृष्णारुचिज्वरहिक्कातिसाररक्तपित्तनाशिनी ( ध. १.८५ )
हिं.—काकडाशिंगी.
म.—**काकडशिंगी**
बं—काकडाशृङ्गी.
गु.—काकडाशिंगी.
ता—कक्कटशिंगी.
**कर्कटक**–पु., जलचरप्राणि० कर्कटः ( चसू. २७.४० )
स द्विविधः कृष्णशुक्लभेदेन पादिवर्गे एकः ( सुसू. ४६.१०९–११० ) '**खेकडा**' इति मराठीभाषायाम्
न., कन्दविष०, ( सु. क. २.५ )
लक्षणम्–अन्यसेवनाद् उत्पतति हसति दन्तांश्च दशति ( सुक. २.१८ ).
अस्थिभग्न० कर्कटसदृशमस्थिभग्नम्, लक्षणम्–समूढमुभयतोऽस्थिमध्ये भग्नं ग्रन्थिरिवोन्नतं कर्कटम् ( सुनि. १५.१० )
**( कर्कटिका )**–स्त्री., फल० कर्कटी ( र. ३०.३४ )
वनस्पति० त्रपुसम् ( ध. १.१७५ )
**कर्कटकिनी**–स्त्री., वनस्पति० दारुहरिद्रा ( रा. ६.८५ )
**कर्कटाख्या**–स्त्री., वनस्पति० कर्कटशृङ्गी ( चचि. २८. १६० )
द्र० 'कर्कटशृंगी'.
**कर्कटाह्व**–पु., वनस्पति० बिल्वः ( रा. ११.१३४ )
**कर्कटाह्वया**–स्त्री., वनस्पति० कर्कटशृङ्गी ( ध. १.८५ )
द्र० 'कर्कटशृंगी.'
**कर्कटाह्वा**–स्त्री., वनस्पति० कर्कटशृंगी ( रा. ६.१११ )

**कर्कटी**–स्त्री., वनस्पति० गुणाः–मधुरा शीता लघुर्मूत्रला रुच्या कफपित्तघ्नी मूत्ररोधमूत्रकृच्छ्राऽश्मरीवान्तिश्रमदाहादिरोगघ्नी च ( रा. ७.२५१–२५४ )
हिं.—काकडी.
म.—**काकडी.**
बं.—खिरा.
गु.—काकरी.
त.—मुल्लवेल्लरी.
एर्वारुकम् ( रा. ७.२६२ )
चिर्भटः ( रा. ७.२६२ )
देवदाली ( रा. ३.२४३ )
घोण्टा ( रा. ८.२२ )
**कर्कन्धु–धू**–स्त्री., वनस्पति० बदरभेदः, क्षुद्रबदरम् ( चसू. ४.१३ ) शृगालबदरी ( चसू. २७.१३२ )
विरेचनोपगणे एकं द्रव्यम् ( चसू. ४.१३ )
फलमस्या आसवार्थमुपयुज्यते ( चसू. २५.४९ )
पित्तश्लेष्मप्रकोपणी ( चसू. २७.१३२ )
आमकर्कन्धुगुणाः–पित्तकफावहा, पक्वाया गुणाः–मधुरा स्निग्धा सरा पित्तानिलहरा च ( सुसू. ४६.१४५ )
हिं—छोटे बेर.
म—**लघुबोर.**
बं.—सेया कुल.
मान० अष्टमाषकम् ( चचि. २६.१९३ )
**कर्कन्धुक**–न., वनस्पति० कर्कन्धुः ( ध. ५.९६ )
द्र० 'कर्कन्धु.'
**कर्कन्धू**–स्त्री., वनस्पति० कर्कन्धुः ( चसू. २७–१३२ रा. २१.१४६ )
द्र० 'कर्कन्धु'.
**कर्कश**–वि., खरस्पर्शयुक्तम्, कठोरम् ( चचि. ७.१७ )
गुणाः–खरः खरस्पर्शः ( सुसू. ४६.२९७ )
आर्द्रीभावविनाशकरः ( सुसू. ४६.५१६ )
**( कर्कशा )**–स्त्री., वनस्पति० वृश्चिकाली ( रापरि. ९.८ )
–**च्छद**–पु., वनस्पति० पटोलः ( ध. १.४९ )
–**दला**–स्त्री., वनस्पति० दग्धा ( रा. ९.२८ )
**कर्कारु**–पु., वनस्पति० षड्भुजा, त्रपुसभेदः खर्बुजः ( अहृसू. ६.८७ ) द्र० 'त्रपुस'
–**तैल**–न., कर्कारुबीजभवं तैलम्, इदं मधुरं मधुरविपाकं सृष्टमूत्रं वातपित्तप्रशमनं अग्निमान्द्यकरञ्च ( सुसू. ४५.१२० )

**कर्कारुक**–न., वनस्पति० त्रपुसभेदः वाडवं त्रपुसम् ( सुचि. ३१.५ ) द्र० त्रपुस.
कूष्माण्डभेदः, प्रवाहिकायामेतत् दधिदाडिमसिद्धेन बहुस्नेहेन च भोजयेत् ( चचि. १९.३२ ) उपनाहे वातार्बुदे उपयुज्यते ( सुचि. १८.२९–३० )

**कर्किन्**–पु., वनस्पति० कर्कटशृङ्गी ( असंउ. ४८ )

**कर्केतन**–पु., रत्न० पद्मरागः, अयं विषापहः ( चचि. २३.२५२ )
माणिक्यम् ( असंउ. ४२. इन्दुः)

**कर्कोट**–न., वनस्पति० कर्कोटकीभेदः–तिक्ता कर्कटी ( हे. अहृसू. ६.७६ ) द्र० 'कर्कोटकी.'
सर्पविशेषः ( र. १०.७६ )

**कर्कोटक**–पु., शाक० तिक्ता कर्कटी । गुणाः–कफपित्तहरः तिक्तः शीतः कटुपाकी च ( चसू. २७.९६ )
वनस्पति० कासमर्दः ( ध. ४.११८ )
पु., न., कम्पिल्लकः ( अहृसू. ६.७८ )
वनस्पति० इक्षुः ( ध. ४.१२० )
न., वनस्पति० वन्ध्याकर्कोटकी ( र. २.१५० )

**कर्कोटकी**–स्त्री., वनस्पति० कोशातकी ( र. ७.२८८ )
राजकोशातकी ( चक. ४.३ )
महाकोशातकी ( ध. १.१८९ )
गुणाः–कटुतिक्ता दीपनी रुच्या त्रिदोषघ्नी विषशिरोरोगनाशिनी ( ध. १.१८७ )
म.—**कर्टोली.**
गु.—कंटोलना, कर्तोला, कंकोला.
बं.—कंक्रोल.
रेवतीग्रह० सा दारुणा जातहारिणी ( क. रेवती क. ५४ )

**कर्कोटिका**–स्त्री., वनस्पति० कूष्माण्डम् ( रा. ७.२६९ )

**कर्कोटी**–स्त्री., वनस्पति० वन्ध्यालता वन्ध्याकर्कोटकी ( र. ११.४८ )

**कर्चूर**–पु., न., वनस्पति० गुणाः–कटुस्तिक्त उष्णो रोचनो दीपनो मुखवैशद्यकृत् हृद्यो वातकफघ्नः प्लीहरोगगुल्मार्शोगलगण्डकासघ्नः ( ध. ३.९४ )
श्वासहिक्काहितः सुगन्धिश्च ( चसू. २७.१५५ )
हिं.—कचूर.
म.—कचोरा, नरकचोरा, काचरी.
गु.—कचूरी.
बं.—एकांगी.
त.—कस्तूरी मंजल, निर्विशम्.
फा.—जरंबार, जद्वार खाटा.

**कर्ण**–पु., शारीर०, ऊर्ध्वजत्रुगतः ( चशा. ७.७ )
श्रोत्रेन्द्रियं यस्याऽधिष्ठानम् ( सुसू. ३५.१२ )
श्रोत्रेन्द्रियस्याधिष्ठानम् ( चसू. ८.१० )
प्रमाणतश्चतुरङ्गुलः ( चवि. ८.११७ )
रक्षाभूषणनिमित्तं बालानां कर्णौ विध्येते ( सुसू. १६.३ )
ज्ञानेंद्रिय० श्रोत्रेन्द्रियम् ( सुसू. ३५.१२ )

**–कण्डू**–स्त्री., कर्णरोग०, लक्षणम्–कर्णे संचितेन श्लेष्मणा कण्डूर्भवति ( सुउ. २०.११ )
चिकित्सा–क्रमेण सस्वेदवमनं वैरेचनिको धूमो मूर्धविरेचनम्, कफहारकः सर्वश्च विधिः ( सुउ. २१.५६ )

**–क्ष्वेड**–पु., कर्णरोग० अनेकविधहुंकारादिश्रवणम् ( सुउ. ४०.१७३ )
लक्षणम्–श्रमात् क्षयाद्रूक्षकषायभोजनात् प्रकुपितः पित्तादि–संसृष्टो वायुः शब्दपथे प्रतिष्ठितः सन् विरिक्तशीर्षस्य कर्णक्ष्वेडं करोति । कर्णनादस्तु केवलवातारब्धो वंशघोषानुकारिशब्दान्वितो भवति इति द्वयोः भेदः ( सुउ. २०.९ )

**–क्ष्वेडन**–न., कर्णक्ष्वेडः ( असंशा. ६.४० ) द्र० 'कर्णक्ष्वेड.'

**–क्ष्वेडिन्**–वि., कर्णनादवान् ( चचि. १६.१३ )

**–गतरोगप्रतिषेध**–पु., गतरोगप्रतिषेध अध्याय० ( सुउ. २१.१ )

**–गतरोगविज्ञानीय**–गतरोगविज्ञानीय–वि., अध्याय० कर्णगते रोगे विज्ञानम् अधिकृत्य कृतः ( सुउ. २०.१ )

**–गूथक**–पु., कर्णरोग०, कर्णमलः, संचितः कफो यदा पित्ततेजसा शुष्को भवति तदा कर्णे मलसंचयरूपः कर्णगूथकः जायते ( सुउ. २०.११ )

**–छिद्र**–न., कर्णमध्यः, कर्णविवरम् ( सुउ. २१.५८ )

**–तर्पण**–न., उपक्रम० तैलादिना कर्णपूरणम् ( चसू. ५.८४ )
तत् कर्णयोस्तृप्तिकरं बलकरं वा बाधिर्यादिविनाशकत्वेन ( चसू. १३.२५ )

**–तैल**–न., श्रुतिमान्द्यनाशकरं तैलम् ( चसू. १३.२५ )

**–धार**–पु., नाविकः ( सुसू. ३४.१८ )

**–नाडी**–स्त्री., कर्णरोग० ( असंसू. ३४.८ )

**–नाद**–पु., कर्णरोग० ( असंउ. २१ )
वाते कर्णस्रोतःस्थिते भेरीमृदङ्गशङ्खवंशादीनां विविधान् स्वरान् शृणोति ( मा. कर्ण )

**–पाक**–पु., कर्णरोग. कर्णे कर्णयोर्वा पित्तप्रकोपात् पाको भवति तेन पीडाकराणि विकोथविक्लेदादीनि भवन्ति ( सुउ. २०.१५ )

**–पाली**–स्त्री., शारीर०, बाह्यकर्णस्याऽधोभागः ( अहृसू. २९.४९ )

**–पीठ**–न., प्रत्यङ्ग० पुत्रिकोपरिप्रदेशः ( ड. सुसू. १६.११ )
कर्णाधोभागः ( असंउ. १ )

**–पुत्रक**–पु., न., प्रत्यङ्ग० कर्णपाल्या अधोभागः ( चशा. ८.५१ )
बाह्यकर्णः, षट्पञ्चाशत्प्रत्यङ्गेष्वेकम् ( चशा. ७.११ )

**–पूरक**–पु., वनस्पति० अशोकः ( ध. ५.१५९ ) कदम्बः ( ध. ५.१०४ )

**–पूरण**–न., उपक्रम० तैलेन कर्णस्य पूरणम् ( सुचि. २४.२९ )
ऊर्ध्वकायगते भग्ने कर्णपूरणं शस्तम् ( सुचि. ३.५४ ) कर्णपूरणविधिः–कर्णे तैलादिपूरणं कृत्वा कर्णमूलं विमर्दयन्तैलादि यावन्मात्राशतं धारयेत्तेन रुजो मार्दवं स्यात् ( असंसू. ३१ )

**–प्रतिनाह**–पु., कर्णरोग० संप्राप्तिलक्षणे–कर्णविक्न-स्नेहस्वेदाभ्यां विलयनं प्राप्तो घ्राणमुखं प्रपद्यते तदा कफमारुताभ्यां सन्निपातेन वा जायमानः कर्णप्रतिनाहो भवति स चासौ सकलशिरोरोगकारी ( सुउ. २०.१२ )

**–प्रपाक**–पु., कर्णरोग० कर्णपाकः ( सुउ. २०.१५ ) द्र० 'कर्णपाक'

**–बन्धाकृति**–स्त्री., बन्धाकृति०, कर्णवेधनानन्तरं तद्बन्धनाकृतिः, सा च पञ्चदशविधा तद् यथा नेमिसन्धानकः उत्पलभेद्यकः, वल्लूरकः, आसङ्गिमः, गण्डकर्णः, आहार्यः, निर्वेधिमः, व्यायोजिमः, कपाटसंधिकः, अर्धकपाटसंधिकः, संक्षिप्तः, हीनकर्णः, वल्लीकर्णः, यष्टिकर्णः, काकौष्ठकश्च ( सुसू. १६.१० )

**–भग्न**–न., रोग० कर्णस्य भग्नम्, भग्नः कर्णः कुटिलोऽन्तःप्रविष्टो वा स्यात् । भग्नं कर्णसमं घृतप्लुतं च कृत्वा बध्नीयात् । सद्यःक्षतविधानेन चोपाचरेत् । मधुघृताभ्यङ्गशीतपरिषेकादि ( सुचि. ३.४५ )

**–मूल**–न., प्रत्यङ्ग० कर्णपर्यन्तः तदङ्गुलप्रमाणम् ( सुसू. ३५.१२ )

**–मोटी**–स्त्री. वनस्पति० कर्णस्फोटा ( र. १६.९९–१०२ )

**–रुजू**–स्त्री., रोग० कर्णशूलः ( चसू. १३.१६ )

**–रोग**–पु., कर्णगतरोगाः, चरकमतेन चत्वारः कर्णरोगाः वातजपित्तजकफजसंनिपातजभेदात्, तत्र वातजलक्षणं नादः कर्णमलस्य शोषोऽतिरुक् तनुः स्रावोऽश्रवणं च । पित्तजे सरागः शोफो दरणं विदाहः कर्णश्च सपीतपूतिः । कफजे वैश्रुत्यं कर्णस्य कण्डूः स्थिरशोफः शुक्लस्निग्धवर्णत्वमल्पा च रुक् भवति । संनिपातजे ह्येतानि सर्वाणि लक्षणानि संभवन्ति तत्र यस्य दोषस्य प्राबल्यं भवति स्रावोऽपि तस्य वर्णसादृश्यमधिगच्छति ( चचि. २६.१२७–१२८ )
सुश्रुतमतेन तु अष्टाविंशतिः कर्णरोगाः ते च कर्णशूलं, प्रणादो, बाधिर्यं, क्ष्वेडः, कर्णस्रावः, कर्णकण्डूः, कर्णवर्चः, कृमिकर्णः, प्रतिनाहो, द्वौ विद्रधी, कर्णपाकः, पूतिकर्णश्चतुर्विधार्शः, सप्तविधं कर्णार्बुदं, चतुर्विधः कर्णशोफश्च ( सुउ. २०.३–५ )

**–विदारिका**–स्त्री., कर्णरोग० अयं संनिपाताज्जायते, लक्षणम्–कर्णसमवर्णः सवेदनः स्तब्धः श्वयथुः । उपेक्षितश्चेत् पक्वः सन् कटुतैलनिभं स्रावं स्रवति, कृच्छ्राच्च रोहति रूढा च कर्णशष्कुलीं संकोचयति ( अहृउ. १७.१७–१८ )

**–विद्रधि**–पु., कर्णरोग० संप्राप्तिः–कर्णकण्डूयनाद् व्रणे जाते सति विद्रधिलक्षणस्तीव्ररूपोऽयं स्यात् ( असंउ. २१ )

**–वेदना**–स्त्री., कर्णरोग० लक्षणम्–हस्ताभ्यां कर्णस्पर्शः भृशं शिरोभ्रमः अरतिः, अस्वप्नः अरोचकश्च ( कासू. २५.७ )

**–वेध**–पु., संस्कार० कर्णव्यधः ( असंउ. १ )

**–वेधनी**–स्त्री., शस्त्र० कर्णव्यधार्थं सूचिः । इयं त्रिभागसुषिरा त्र्यङ्गुला च ( अहृसू. २६.२६ )

**–व्यध**–पु., संस्कार० रक्षाभूषणनिमित्तं बालस्य कर्णौ विध्येते । तौ षष्ठे मासि सप्तमे वा शुक्लपक्षे प्रशस्तेषु तिथिकरणनक्षत्रमुहूर्तेषु कृतमङ्गलस्वस्तिवाचनं धात्र्यङ्के कुमारधराङ्के वा कुमारमुपवेश्य बालक्रीडनकैः प्रलोभ्याभिसान्त्वयन् भिषग्वामहस्तेनाकृष्य कर्णं दैवकृते छिद्रे आदित्यकरावभासिते शनैःशनैर्दक्षिणहस्तेन ऋजु विध्येत् । प्रतनुकं सूच्या बहलमारया; पूर्वं दक्षिणं कुमारस्य; वामं कुमार्याः ततः पिचुवर्तिं प्रवेशयेत् ( सुसू. १६.१–३ )

**–व्यधन**–न., शस्त्र० एतत् त्र्यङ्गुलायतमङ्गुलसुषिरं घनं वा यूथिकामुकुलाग्रं भवति ( असंसू. ३४ )

**–व्यधबन्धविधि** अध्याय० ( सुसू. १६.१ )

**–शष्कुलिका**–स्त्री., प्रत्यंग० कर्णगतावर्तकः षट्-पञ्चाशत् प्रत्यङ्गेष्वेकम्, द्वे कर्णशष्कुलिके ( चशा. ७.११ )

**–शूल**–पु., न,, कर्णरोग० कर्णस्य शूलम् अशीतिवातविकारेष्वेकः ( चसू. २०.११ ) भेदनवत् पीडाप्रधानलक्षणः कर्णरोगः। स्वरूपम् "हनुशङ्खशिरोग्रीवं भिन्दन्निव वायुः कर्णयोः शूलं कुरुते" ( सुनि. १.८४ ) संप्राप्तिः–विमार्गगः समीरणः कफादिदोषैर्यथा–दोषमावृतः सन् कर्णयोः समन्ततः शूलमतीव करोति। अयं दुरुपचरो मतः ( सुउ. २०.६ ) चिकित्सा–आर्द्रक–मातुलुङ्ग–दाडिम–तिन्तिडीकप्रभृतीनां स्वरसैः अजामूत्र–शुक्त–सुरा–लवणैः सिद्धं तैलं कर्णशूले उपयुज्यते ( सुचि. ५,२४ ) अयं स्वेद्यः ( चसू. १४.२० )

**–शोथ**–पु., कर्णरोग० द्र० 'कर्णशोफ'

**–शोधन**–न., शलाकायन्त्र० एतदश्वत्थपत्रप्रान्तं स्रुवाननं च वर्तते ( अहृसू. २५.३५ )

**–शोफ**–पु., कर्णरोग० कर्णशोथः, ( सुउ. २०.१६ ) कर्णस्य शोफप्रधानो रोगः, वातपित्तकफरक्तजत्वेन सन्निपातेन वा चतुर्विधः कर्णशोफः ( सुउ. २०.५ )

**–स्फोटा**–स्त्री., वनस्पति० गुणाः–कटुस्तिक्ता हिमा सर्वविषग्रहभूतादिदोषसर्वव्याधिविनाशिनी ( रापरि.. ३.४१–४२ )

हिं.—१ ) जंगली हुरहुर.
२ ) हुरहुर
३ ) कानफटा

म.—१ ) पिवळा तिळवण
२ ) कानफुटी
३ ) मोठी तिळवण, हुरुहुरु

**–संस्राव**–पु., कर्णरोग० कर्णस्रावः ( सुउ. २०.१० ) द्र० "कर्णस्राव"

**–स्राव**–पु., कर्णरोग० ( असंसू. ३७.२५ ) कर्णस्रावः, शिरोभिघातात् जलमज्जनात्कर्णविद्रधेश्च प्रपाकाद्वाप्यावृतः कर्णः पूयमभिसंस्रावयेत् स कर्णसंस्रावः ( सुउ. २०.३–१० )

**कर्णक**–पु., संनिपातज्वरभेदः, प्रलापश्रुतिह्रासकण्ठग्रहाङ्गव्यथाश्वासकासप्रसेकादिलक्षणानि तथैव ज्वरः, कर्णान्तयोः कपोलानां च पीडा, अस्य कालमर्यादा मासत्रयम्, कष्टसाध्यः, केषाञ्चिन्मतेन स्वयं साध्यः ( मा. ज्वर १६ ) द्र० 'ज्वर'

पु., शाक० तिक्तः स्वादुः कषायः कटुपाकी ग्राही वातकृत् पित्तजित् ( असंसू. ७ )

**कर्णाटी**–स्त्री., वनस्पति० हंसपादी ( रा. ५.१६६ )

**कर्णाभरणक**–पु., वनस्पति० आरग्वधः ( रा. ९.३३४ )

**कर्णारि**–पु., वनस्पति० अर्जुनः ( रा. ९.१९२ )

**कर्णार्बुद**–न., कर्णरोग० तस्य लक्षणं–कर्णस्य रुक्, पूतित्वं बधिरत्वं च ( असंउ. २१. ) ( र. २४.१ )

**कर्णार्शस्**–न., कर्णरोग० तल्लक्षणं–'रुक्पूतिकर्णत्वं बधिरत्वं च' ( असंउ. २१ ) ( र. २४.१ ) द्र० 'कर्णार्बुद'.

**कर्णावट्ट**–पु., प्रत्यंग० कर्णस्य गर्तः ( सुसू. ३५.१२ )

**कर्णावभञ्जनमुख**–न., स्वस्तिकयन्त्र० तित्तिरमुखसदृशयन्त्र० एतत् मसूराऽऽकृत्या कीलेनाववद्धं तथा मूलेऽङ्कुशवदावृत्तवारङ्गं वर्तते। तदस्थिविदष्टशल्योद्धरणार्थमुपदिष्टम् ( सुसू. ७.१० )

**कर्णि**–स्त्री., वनस्पति० गणेरुका. ( ध. परि. ५.२ )

**कर्णिका**–स्त्री., कर्णिका कमलमध्यकोशः ( सुक. ७.८–९ )
लक्षण० तत्समानाकारो ग्रन्थिः कर्णिका
लक्षण० कर्णिकाकारो ग्रन्थिः ( चचि. २३.१७८ )
वर्तुलाकृतिरुत्सेधः ( चसि. ३.१० )
छत्राकारा मांसकन्दी ( सुचि. ३५.७ ) ( सुक. ८.१३६–१३७ )
'पद्मकर्णिकाकारत्वात्कर्णिका भण्यते' ( ड. )
वनस्पति० अग्निमन्थः ( ध. १.११२ )
वनस्पति० काकोली ( ध. १.१३२ )
उपकरण० इदं गजहस्ताग्राकारं शाकच्छेदनायोपयुज्यते ( र. ७.२१ )

**कर्णिकार**–पु., वनस्पति० आरग्वधभेद० "कर्णिकारो रसे तिक्तः कटूष्णः कफशूलहृत्। उदरकृमिमेदघ्नो व्रणगुल्मनिवारणः॥" ( रा. ९.३३७ )
वनस्पति० कृतमालः 'कृतमालो मधुः शीतः पित्तघ्नो मधुरः सरः। तत्फलं मधुरं बल्यं वातपित्ताऽऽमजित्सरम्॥' ( ध. १.२२२ )
कण्टकिवृक्षः किंचिद्रक्तपुष्पः ( र. १०.९२ )
गणेरुका ( ध. परि. ५.२ )
लोहितपुष्पवृक्षः ( असंशा. पा. सा. ८.१४ )

**कर्णिन्**–पु., वनस्पति० आरग्वधः ( ध. १.२१९ )

**कर्णिनी**–योनिव्यापद्० अप्राप्ते गर्भनिष्क्रमणकाले प्रवाहणं कुर्वन्त्यः गर्भेण पिहितोऽनिलः श्लेष्मरक्तेन मूर्च्छितः सन् योनौ कर्णिकां–पद्मबीजकोशाकारं मांसग्रन्थिं जनयेत् ( चचि. ३०.२७–२८. ३८. )

**कर्णी**–स्त्री., वनस्पति० द्रवन्ती ( रा. ५.३४७ )

**कर्तरी**–स्त्री., शस्त्र० इयं दशाङ्गुला शरारिमुखी ( सुसू. ८.७ ड. ) 'कर्तरी त्रिभागपाशा व्रणस्नायुकेशसूत्रच्छेदनार्थम्' ( असंसू. ३४.२७ )

**कर्तरीय**–न., स्थावरविष०, अस्य त्वक्सारो निर्यासश्च विषमयो भवति ( सुक. २.५ )

**कर्तृ**–पु., यः स्वातन्त्र्येण कर्म करोति स एव 'कारण' संज्ञयाभिधीयते, ( चवि. ८.६९ ) निदानम्, हेतुः ( चनि. १.३ ) अत्र 'स्वतन्त्रः कर्ता' इति पाणिनीयसूत्रमप्यनुसन्धेयम्

**कर्तृण**–( न., वनस्पति० भूतिकम् ( असंउ. ४. इन्दु )

**कर्दम**–( पु., ) पङ्कः, ( सुचि. १७.६ )
रोग०, विसर्पभेदः, सप्तविसर्पेष्वेकः, (चसू. १९.४ (२) द्र० 'कर्दमविसर्प'
शालि., पंकिलभूमिजः, आहारार्थे हितः ( सुसू. २०.५ )
विष. तत्कर्दमसदृशं वर्तते ( र. २९-१६ )

–**वर्त्म**–न., नेत्ररोग० ( सुउ. ३.६ ) अस्मिन् कृष्णकर्दमोपमं च नेत्रवर्त्म भवति ( असंउ. ११ )

–**विसर्प** रोग० लक्षणम्–कफपित्तं प्रकुपितं सदेकदेशे विसर्पति देहिनं प्रक्लेदयति च । तद्विकाराः–शीतज्वरः शिरोगुरुत्वं दाहः स्तैमित्यमङ्गावसदनं निद्रा तन्द्रा मोहोऽन्नद्वेषः प्रलापोऽग्निनाशो दौर्बल्यमस्थिभेदो मूर्च्छा पिपासा स्रोतसां प्रलेपो जाड्यमिन्द्रियाणां प्रायोपवेशनमङ्गविक्षेपोऽङ्गमर्दोऽरतिरौत्सुक्यं चोपजायते । प्रायश्चामाशये विसर्पत्यलसक एकदेशग्राही । यस्मिन्नवकाशे विसर्पो विसर्पति सोऽवकाशो रक्तपीतपाण्डुपिडकावकीर्ण इव मेचकाभः कालो मलिनः स्निग्धो बहूष्मा गुरुः स्तिमितवेदनः श्वयथुमान् गम्भीरपाको निरास्रावः शीघ्रक्लेदः स्विन्नक्लिन्नपूतिमांसत्वक् क्रमेणाल्परुक् परामृष्टोऽवदीर्यते कर्दम इवावपीडितोऽन्तरं प्रयच्छत्युपक्लिन्नपूतिमांसत्यागी सिरास्नायुसंदर्शी कुणपगन्धी च भवति, संज्ञास्मृतिहन्ता च । तं कर्दमविसर्पपरीतमचिकित्स्यं विद्यात् ( चचि. ८. २१.३ )

**कर्दमक**–पु., रोग० विसर्पभेदः द्र० 'कर्दमविसर्प' ( चचि. २१.१४ )
राजिमान् सर्प०; ४.३४( ३ )
शालि० अतिशयपङ्किले स्थाने उत्पद्यते ( सुसू. ४६.४ )
कन्दविष० तज्जन्यानि लक्षणानि प्रसेको विड्भेदो नेत्रपीतता च ( सुक. २.५ )

**कर्दमिन्**–पु., वनस्पति० मुद्गरः ( रापरि. १०.२१ )

**कर्पर**–पु., पात्र० खर्परम्, ज्वालासन्तप्तं कपालम् ( अहसू. ६.४२ )

**कर्पराल**–पु., वनस्पति० अक्षोटः ( ध. ५.६० )

**कर्परिकातुत्थ**–न., खनिज० तुत्थम् ( ध. ३.१४५ )

**कर्परीतुत्थक**–न., खनिज० तुत्थम् ( ध. ३.१४५ )

**कर्पूर**–पु. न., सुगन्धिद्रव्य० इदं शुभ्रतरनिर्यासरूपं ज्वालाग्राहि द्रव्यम्, भुक्तेरितकफनाशनार्थमुपयुज्यते ( सुसू. ४६.४८३–४८५; चचि. २८.१५३; )
गुणाः–कटुस्तिक्तो मधुरः शीतः ( उष्णः. रा. ) चक्षुष्यो मदकरस्तृष्णामेदोविषापहः ( ध., ३.३१) कफापहं वक्त्रक्लेददौर्गन्ध्यनाशनं च, मुखशोषे वैरस्ये चापि युक्तम् ( सुसू. ४६.२०२-२०४ )
छेदनः ( असंसू. १२ ); तांबूलद्रव्येष्वेकम् ( चसू. ५.७७ )
हिं.—कपूर, कापूर.
म.—कापूर.
गु.—कपूर.
बं.—कर्पूर.
त.—कर्पूर.
फा. कफूर.

–**गन्धिनी**–स्त्री., सुगन्धिकन्द० 'आंबाहलदी' ( हजारी ) लोके ( र. १०.९१ )

–**निर्यास**–पु., निर्यास० कर्पूरः ( चसू. ५.७७ )

–**मूली**–स्त्री., वनस्पतिमूल० कर्पूरगन्धिनी ( र. ३०.४५ )

**कर्बुदार**–पु., वनस्पति० काञ्चनः चक्र ( चसू. २७.९९ )
श्वेतकाञ्चनः ( चसू. ४.१३ )
वमनोपगणे एकं द्रव्यम्
काञ्चनारः ( चक. १.१४ )
वसन्ते जातपुष्पः
श्लेष्मातकः ( सुसू. ३९.३ )
श्लेष्मातकभेदः ( सुसू. ४६.२४९ )
नीलझिण्टी ( असंचि. ९ )

–**तैल**–न., सिद्धतैल० मधुरतैलवर्गे एकम् ( सुसू. ४५.१२० )

**कर्बुदाराङ्कुर**–पु., काञ्चनाङ्कुरः ( सुउ. ४७.४६ )

**कर्बुदारक**–पु., वनस्पति० श्लेष्मातकः ( रा. ११.१४८ )

**कर्बुर**–वि., शबलम् चित्रवर्णम् ( र. २.५८ )
पु., वनस्पति० पौण्ड्रक इक्षुभेदः ( रा. १४.१८३ )
द्र० 'इक्षु'
न., खनिज० सुवर्णम् ( रा. १३.२ )

**( कर्बुरा )**–स्त्री., कीट० सविषजलौकाभेदः
सा वर्मिमत्स्यवदायता छिन्नोन्नतकुक्षिश्च जलौका ( सुसू. १३.११ )

**–फल**–पु., वनस्पति० साकरुण्डः ( रापरि. ६.१६ )

**कर्मन्**–न., क्रिया, चलनम् ( चसू. १.५२ )
स्पन्दनगमनादिका चेष्टा, प्रयत्नवाङ्मनःशरीरप्रवृत्तिः ( चसू. ११.३९ )
द्रव्याणि यत्कुर्वन्ति तत् भेषजद्रव्यव्यापारः शोधनादिः ( सुसू. ४१.५ )
चिकित्सा ( सुसू. ५.३ )
पञ्चकर्म ( चसि. १.३ )
रक्तस्रावनिरूहबस्तिसंस्कारः ( सुसू. २०.१४ )
वैशेषिकदर्शनोक्तपदार्थेष्वेकः ( चसू. १.२८ )
संयोगे च विभागे च कारणीभूतो द्रव्यनिष्ठः ( पदार्थेषु परिगणितः ) व्यापारः ( चसू. १.५२ )
जन्मान्तरकृतं कारणम् अदृष्टम् ( चसू. ११.१२ )

**( कर्म )–ज रोग**–पु., कर्म-पूर्वजन्मकृतं पापपुण्यादिः तज्जो रोगः ( चसू. २५.१९ )

**–निष्ठा**–स्त्री., कर्मणो निष्ठा–निष्पत्तिः क्रिया परिसमाप्तिः ( चसू. २६.६६ )

**–पथ**–पु., क्रियामार्गः ( सुसू. ९.३ )
आचारः । दशधर्मपथान् रक्षन् जयन्नाभ्यन्तरानरीन्
हिंसास्तेयान्यथाकामं पैशुन्यं परुषानृतम्
संभिन्नालापं व्यापदमभिध्यां दृग्विपर्ययम्
पापं कर्मेति दशधा कायवाङ्मानसैस्त्यजेत् ॥ ( असंसू. ३.११६–११७ )

**–पुरुष**–पु., कर्मफलभावपुरुषः–पंचमहाभूतशरीरिसंयोगेन संजातः चिकित्साधिकृतः पुरुषः ( सुशा. १.१६ ) तस्य गुणाः सुखदुःखे इच्छाद्वेषौ प्रयत्नः प्राणापानावुन्मेषनिमेषौ बुद्धिर्मनः सङ्कल्पो विचारणा स्मृतिर्विज्ञानमध्यवसायो विषयोपलब्धिश्च । ( सुशा. १.१७ )

**–फल**–न., कार्यफलम्, कर्मणः परिणामः शुभाशुभस्वरूपः ( चवि. ८.३७ )
यस्य कर्मफलस्य आसक्तिर्न विद्यते तस्य कर्मणः फलं न भवति इति सांख्ये सिद्धान्तः, 'न मुक्तः कर्म आनुबन्धिकं कुरुते निःस्पृहत्वात् ( चवि. ८.३७ )

**–बस्ति**–पु., बस्तिप्रकार० प्रागेकस्नेहबस्तिरन्ते पञ्चस्नेहास्तथा निरूहा द्वादश सहानुवासना इत्येवं त्रिंशद्वस्तयः ' कर्म-बस्ति ' इत्युक्तम् ( अरु. अहृसू. १९.६३ )

**–लोभ**–पु., कर्म-चिकित्साकर्म, तस्य लोभो वृत्तिलोभ इत्यर्थः ( चसू. २९.९ )

**–विपत्ति**–स्त्री., चिकित्सितनाशः ( सुसू. २९.५ )

**–विभ्रम**–पु., कर्मण्यविज्ञानम्, यथा सौधं पयोऽज्ञ-प्रयुक्तं विषवद् हन्तीति ( सुसू.४४.७९ )

**–विरुद्ध**–न., संस्काराद्विरुद्धम् ( सुसू. २०.१४ )

**–वैचित्र्य**–न., पूर्वजन्मकृतं वैचित्र्यम् अदृष्टम् ( असंशा. २.४६ )

**–वैशेष्य**–न., कर्मवैशिष्ट्यम् ( सुशा. ९.३ )

**–वैषम्य**–न., शारीरमानसवाङ्मयकर्मणो हीनमिथ्यातियोगरूपम् ( र. २३.१–२ )

**कर्मर**–पु., वनस्पति० कर्मारकः ( रापरि. ११.१३ )

**कर्मर-क**–पु., वनस्पति० कर्मारकः ( रापरि. ११.१२ )

**( कर्मरी )**–स्त्री., वनस्पति० वंशरोचना ( रा. ६.८६ )

**कर्मात्मन्**–पु., संसार्यात्मा ( चसू. २१.३५ )
इन्द्रियम् ( चसू. २१.३५ )

**कर्मार**–पु., वनस्पति० कर्मारकः ( रापरि. ११.१३ )

**कर्मारक**–पु., न., वनस्पति० फलगुणाः–अम्लं उष्णं पित्तकरं वातहृत्, पक्वकर्मारं तु मधुराऽम्लं बलपुष्टिरुचिप्रदम् ( रापरि. ११.१३ )
हिं.—कमरख.
म.—करमर, कमरख.
गु.—कमरख.
बं.—कमरंग.
ता.—तमरताई.
लोहकारः ( सुसू. ८.१९ )

**कर्मेन्द्रिय**–न., कर्मण आश्रयभूतमिन्द्रियं कर्मेन्द्रियाणि पञ्च । हस्तौ पादौ गुदमुपस्थं वाक्चेति । आहरणगमनोत्सर्गहर्षविसर्गाश्चेति तेषां पञ्च क्रमेण कर्माणि ( सुशा. १.४ )

**कर्वट**–न., कुरुक्षेत्रात्पूर्वदेश० ( काखिल. २५.९ )

**कर्शन**–न., कृशीकरणम् ( अहृसू. ५.५६ )
( परिव० ) लङ्घनम्, उपवासः ( सुशा. ३.१६ )

**कर्ष**–पु., न., मान० द्वौ द्रङ्क्षणौ, 'विद्याद् द्वौ द्रंक्षणौ कर्षं सुवर्णं चाक्षमेव च ' शाणचतुष्टयम् (असंक. ८)
सार्धद्वयप्रमाणधरणम् ( सुचि. ३१.७ )
निष्कचतुष्टयम् ( र. ११.४ )

–फल–पु., वनस्पति० बिभीतकः ( ध. १.२१२ )
कर्षक–न., कान्तलोह०; यल्लोहजातं कर्षयेत्तत् कर्षकम् ( र. ५.८९ )
कर्षण–न., लाङ्गलेन भूमिविलेखनं कर्षणसंस्कृता भूमिः ( चसू. ११.२३ )
धान्य० कुलित्थः ( ध. ६.१०५ )
( कर्षणी )–स्त्री., वनस्पति० काञ्चनक्षीरी ( रा. ५.३६२ )
कर्षणीया–स्त्री., वनस्पति० गोजिव्हा, गवेधुका ( रा. ४.१८१ )
कर्षू–स्त्री., अल्पमुखोऽभ्यन्तरविस्तीर्णो गर्तः ( चसू. १४.५१ )
–स्वेद्–उपक्रम० त्रयोदशस्वेदेष्वेकः ( चसू. १४.५१ ) यावदायामविस्तारः पुरुषो भवेत् तावानेव भूप्रदेशः खनितव्यः । स च भूप्रदेशोऽङ्गारैर्दह्यात्, अङ्गारांश्च अपोह्य तप्तायां भूमौ वातहरद्रवाणां सेचनं कुर्यात् । तस्यां च भूमौ शाययेतातुरम् । अयमुष्मस्वेदप्रकारः सर्वाङ्गे वात उपयुज्यते ( सुचि. ४.१० )
कल–वि., सूक्ष्मः ( चइ. १.१४ )
मधुरः ( अहसू. ३.४० )
पु., वनस्पति० बदरम् ( र. ११.१३१ )
लघुबदरम् ( र. २५.११९ )
पु., पक्षि० कलविङ्कश्चटकभेदः ( र. ११.१३१ )
खनिज० मनःशिला ( रा. २५.११९ )
( अम्बिका )
–कलोद्भव–पु., निर्यास० रालः ( ध. ३.१२१ )
–जात–न., धान्य० व्रीहिः ( रा. १६.१०२ )
–धौत–न., खनिज० रौप्यम् ( रा. १३.८ )
–मूकता–स्त्री., अव्यक्तवचनता, विरुद्धाशनाज्जायमानविकारविशेषः ( चसू. २६.८४ )
–हंस–पु., पक्षि० राजहंसः ( असंसू. २१ )
कलन–पु., वनस्पति० वेतसः ( ध. ५.११६ )
कलन्दु–स्त्री., वनस्पति० घोली ( रा. परि. ७.८७ )
कलभ–पु., तरुण हस्ती ( रा. परि. २३.५५ ) ( पृ. ४२६ )
( कलभी )–स्त्री., वनस्पति० चञ्चुः ( रा. परि. ४.१८ )
कलभोन्मत्त–पु., वनस्पति० धत्तूरः ( रा. १०.१२ )
कलम–पु., शूकधान्य० शालिभेदः, वेदाग्रहारेषु प्रसिद्धः महाशालेर्मनागल्पगुणस्तृष्णाघ्नस्त्रिमलापहः ( चसू. २७.८ )
अन्तर्वेद्यां कलविरिति प्रसिद्धः ( सुसू. ४६.४ ) ( ड )
स एव महातण्डुल इति काश्मीरेषु प्रसिद्धः ( अहसू. ६.१ ) ( अरुण )
सर्वप्राणिनामाहारार्थे हितः ( सुसू. २०.५ )
कलमोत्तम–पु., वनस्पति० गन्धशालिः ( रा. १६.९३ )
कलम्ब–पु., वनस्पति० सूप्यशाकभेदः फञ्जीचिल्ल्यादिगण एकः ( चसू. २७.१०१ )
वनस्पति० कदम्बः ( अहसू. ६.९३ )
( कलम्बी )–स्त्री., वनस्पति० उपोदकी ( रा. परि. ७.७४ )
कलल–न., गृहीतकाठिन्यः मिश्रितशुक्रशोणितरूपगर्भः ( असंशा. २ )
सिङ्घाणप्रख्यम् ( सुशा. ३.१८ )
गर्भ० या ऋतुस्नाता नारी स्वप्ने मैथुनमावहेत् तस्याः कुक्षौ वायुरार्तवमादाय गर्भं करोति स मासि मासि विवर्धते, एवंविधाया गर्भिण्याः गर्भलक्षणं कललं जायते तत्त पैतृकैर्गुणैः वर्जितमस्ति. ( सुशा. २.४८–४९ )
–ज–पु., निर्यास० रालः ( रा. १२.१७७ )
कलविङ्क–पु., प्रतुदपक्षि०, ग्राम्यचटकः ( चसू. २७.५२ )
भृङ्गराजः, काकचटकः भृङ्गराजाद्भिन्नः, रक्तशिराः कृष्णग्रीवो ग्रामचटकाकारः पक्षिविशेषः ( सुसू. ४६.५९ ड. )
पारावतः ( चइ. १.१४ )
कलश–पु., मान०, द्रोणः, चतुर्गुणः कंसः ( चक. १२.९५ )
( कलशी )–स्त्री., वनस्पति० पृश्निपर्णी ( चचि. ३.१८६–१८७ )
कलस–पु., न., कलशः ( सुसू. ४४.२९ )
( कलसी )–स्त्री., वनस्पति० पृश्निपर्णी ( सुचि. ३७.२४ )
कला–स्त्री., षोडशो भागः ( र. ९.८४ )
गुणः, सूक्ष्मो भागः ( चसू. १२.१ )
कालमान० त्रिंशत्काष्ठात्मको भागः ( सुसू. ६.५ )
शारीर० स्नायुभिः प्रतिच्छन्नान् जरायुणा संततान् श्लेष्मणा वेष्टितान् तान् कलाभागान् विदुः, धात्वाशयान्तरमर्यादा, यस्तु धात्वाशयान्तरेषु क्लेदोऽवतिष्ठते यथास्वमूष्मभिर्विपक्वः स्नायुश्लेष्मजरायुच्छन्नः काष्ठ इव सारो धातुसारो रसशेषो सोऽल्पत्वात् कलासंज्ञः । ताः कलाः सप्त–मांसधरा, रक्तधरा, मेदोधरा, श्लेष्मधरा, पुरीषधरा, पित्तधरा, शुक्रधरा चेति ( सुशा. ४.५–२३ ) ( असंशा. ५.३५ )

मान०, शाणः, धरणद्वयं, माषचतुष्टयं, तोलकपादं मानम् (र. ११.३)
खनिज०, मनःशिला (ध. ३.९६)
**–वृत्त**–पु., धान्य० कुलित्थः (ध. ६.१०५)

**कलाटक**–पु., धान्य० व्रीहिभेदः द्र० 'व्रीहि' (रा. १६.११३)

**कलाप**–पु., समूहः (चचि. ४.१०८) (असंचि. ९)
वनस्पति० गण्डदूर्वा (ध. ४.१४५)

**कलापिन्**–पु., पक्षि०, मयूरः (र. १०.९०)

**(कलापिनी)**–वनस्पति० मुस्तभेदः, नागरमुस्ता, द्र० 'मुस्त' (रा. ६.६२)

**कलाय**–पु., शिम्बीधान्य०, स द्विविधः, त्रिपुटो वर्तुलश्च (सुसू. ४६.३०) गुणाः–वर्तुलकलायस्तिक्तः शीतः कटुपाकश्च (चसू. २७.९७) त्रिपुटकलायः परमवातलः (चसू. २७.२९) कलायः पूयवर्धनो व्रणतुष्टिकरश्च। व्रणिनामहितः (सुसू. १९.१६)
अयं मधुरः शीतो रूक्षो लघुर्ग्राही वातकरो रुच्यः पुष्टिदः कफपित्तघ्नो दाहविनाशकरश्च (ध. ६.१०३)
आमदोषकरश्च (रा. १६. १६५)
हिं.—मटर, कैराव.
म.—**वाटाणा.**
गु.—वटाणा.
बं.—वांट्ला मटर.
त.—पटाणी.

**(कलाया)**–स्त्री., वनस्पति० गण्डदूर्वा (रा. ८.२३५)
**–खञ्ज**–पु., वातरोग०, संप्राप्तिः–प्रकुपितो वातः सक्थिकण्डराद्वयसंधिबन्धनशैथिल्यं कृत्वा कलायखञ्जरोगं करोति। लक्षणम्–यस्तु प्रक्रामन् वेपते खञ्जन्निव च गच्छति तं मुक्तसंधिप्रबन्धनं रोगं विद्यात् (सुनि. १.७८)
**–शाक**–पु., शाक०, त्रिपुटकभेदः, गुणाः–कषायो मधुरपाकी गुरुः कफपित्तघ्नः वातलश्च (सुसू. ४६.२४८)

**कलाह्व**–पु., वनस्पति० (रा. ११.५२)

**कलि**–पु., कलिपुरुषः, देवताविशेषः (चसू. ५.९८)
स्त्री.,–रेवतीग्रह० सा चतुर्थेऽहनि अपत्यं विनाशयति (का.रेवतीक. ४५)
**–कलहशील**–वि., कलिर्वाचिकः, कलहस्तु शारीरिकः तत्परशीलं स्वभावो यस्याः सा (चशा. ८.२१)
**–तरु**–पु., वनस्पति० भल्लातकः (असंचि. २२)
बिभीतकः (वैशसिं.)
**–द्रुम**–पु., वनस्पति० बिभीतकः (ध. १.२१२)
**–माल**–वनस्पति० उदकीर्यः, पूतिकरञ्जः (रा. ९.१८०)

**कलिक**–पु., वनस्पति० अशोकः (रा. १०.२७०)

**(कलिका)**–स्त्री., वनस्पति० वृश्चिकाली (रापरि. ९.८)

**कालिकारी**–स्त्री., वनस्पति०, गुणाः–कट्वी तिक्ता उष्णा सरा कफवातघ्नी श्वयथुगर्भशल्यव्रणापहा (ध. ४.९)
हिं.—कलिहारी.
म.—**करिया नाग.**
गु.—खड्या नाग.
बं.—बिशलांगुलि.
त.—अक्किनिविलम्.

**कलिङ्ग**–पु., न., वनस्पति० अलाब्वाकारं मधुरफलम्, तद्गुणाः–मधुरः शीतो वृष्यः सन्तर्पणो बल्यो वीर्यपुष्टिवर्धनः पित्तघ्नो दाहश्रमघ्नः (रा. ७.२७१)
वातकृत् (असंनि. १.१५)
हिं.—तरबुज, हिन्दोना, जमाऊका.
म.—**कलिंगड, टरबूज.**
गु.—तरबूज, तडबूब; करिंग.
बं.—तरंमूज.
त.—चक्करै, क्कुम्मट्टि, पिच्चापलं.
पु., वनस्पति० शिरीषः (रा. ९.१८९)
वनस्पति० कुटजः (ध. २.१३)
स्त्री., वनस्पति० कर्कटशृङ्गी (र. १८.१०९–११०)
देश० कुरुक्षेत्रात् पूर्वदेशविशेषः (काखिल. २५.९)
**–बीज**–न., वनस्पति० इन्द्रयवः (रा.९.२२)
**–यव**–पु., वनस्पति० इन्द्रयवः (चचि. ७.९१)

**कलिङ्गक**–न., फल० कलिङ्गम् (र. ११.१२९)
वनस्पति० इन्द्रयवः (चक. ५.४ ध. २.१५)

**कलु**–पु., धान्य० व्रीहिभेदः (रा. १६.११३) द्र० 'व्रीहि'

**कलुष**–वि., अस्वच्छम्, मलिनम् (अहसू. ५.६६)
**–पारावत**–पु., मण्डलिसर्प० (सुक. ४.३४ (२)
**–भोजन**–न.. समलभोजनम् (सुउ. ६२.६)

**कलुषीकृत**–वि., संसृष्टः (चशा. ४.९)

कलेवर–न., शरीरम् (असंशा. ५.१०४)
कलोड्य–न., पद्मबीजम् (अहृसू. ६.९२)
कल्क–पु., कल्प० (चसू. ४.७) दृषदि पेषितं सद्रवं द्रव्यम् (सुउ. ५८.२७) आलेप० शुष्कं द्रव्यं द्रवेणाऽऽप्लुत्य पिष्टम्। चूर्णीकृतमार्द्रमौषधिद्रव्यम् (सुसू. ५.६)
वनस्पति० बिभीतकः (ध. १.२१२)
सुगन्धिद्रव्य०, तुरुष्कः (ध. ३–२२)
–पेष्य–वि., कल्कस्वरूपप्राप्तिपर्यन्तं द्रव्यस्य पेषणं क्रियते तत् (सुचि. ९.६१)
–फल–पु., वनस्पति० दाडिमः (र.२.७२)
–बन्ध–पु., पारदबन्ध० स्वेदनमर्दनादिभिः साधितः सन् पङ्कत्वं प्राप्तः पारदः। चुल्लीस्थे लौहे कटाहे मयूरतुत्थकृतालवालके गङ्गापत्रीस्वरसं पारदं च प्रक्षिप्य यथा पारदो रसमग्नः स्यात्तथा रसमन्तराऽन्तरा दत्वा मन्दाग्निना चतुष्प्रहरपर्यन्तं पाचयेत्ततो निम्बूरसेन क्षालयेत्। एवं स्वेदेन पारदः पङ्कवद्भवति (र. ११.७४)
–रोध्र–पु., वनस्पति०, शाबरलोध्रः (रा. ६.२४०)
कलिकधर्मघ्न–पु., बिभीतकः (रा. ११.३२३)
कलिवृक्ष–पु. बिभीतकः (रा. ११.३२२)
कल्प–पु., कल्पना, विधिः (चक. १.१)
सामर्थ्यम् (र. १७.६८)
भ्रान्तिः (र. १७.६८)
चरकसुश्रुतादौ स्थानविशेषः
योजना (सुसू. ३.२८)
औषधियोग० औषधीनां संयोगेन केवलमेकमौषधं भावचूर्णनभस्मीकरणादिसंस्कारेण सिद्धम् (र. ११.८८)
–वैशेष्य–न., कल्पनावैशिष्ट्यम् (चक. ७.६)
–स्थान–न., वमनविरेचनानां कल्पास्तिष्ठन्त्यस्मिन्निति (चक. १;)
कल्पाङ्गिन्–पु., वनस्पति० पर्पटः (रा. ५.६५)
कल्पोपनिषद्–स्त्री., कल्प एव उपनिषद्, चरकसंहितायां कल्पस्थानम् (चसू. ४.४)
कल्पन–न., छेदनम् (चशा. ८.४४)
कल्पः, योगः, भैषज्यकल्पना (चचि. ३.१६२)
–विधि–पु., छेदनविधिः गर्भनाभिनाडीछेदनविधिः (चशा. ८.४४)
कल्पना–स्त्री., योगः विधिः (सुउ. १८.८३)
–सिद्धि–स्त्री., कल्पनाशब्देनेह पञ्चकर्माङ्गकल्पनोच्यते तस्य सिद्धिः (चसि. १.१)
अध्याय० (चसि. १.१)
कल्माष–पु., वनस्पति० शालिभेदः, गन्धशालिः (रा. १६.९३)
कल्य–वि., नीरोगः (चवि. ८.७)
न., प्रातः (सुउ ५८.३९)
कल्याण–न., खनिज०, सुवर्णम् (रा. १३.१)
(कल्याणी)–स्त्री., वनस्पति० माषपर्णी (रा. ३.१७१)
बीज–न., वनस्पति० मसूरिका (रा. १६. १४९)
–मातृक–वि., कल्याणी माता यस्य सः, मृतमातृक इत्यर्थः, (कासलेहाध्याय पृ. ४)
–मित्र–न., कल्याणे शुभकर्मणि मित्रं–सहायः सन्मित्रमिति यावत् (अहृसू. २.२१)
कल्याणक–पु., भैषज्ययोग० कल्याणकगुड इति नाम्नाऽपि प्रसिद्धः, मन्दाग्निकुष्ठकामलामेहग्रहणीपाण्ड्वादि रोगेषु प्रशस्तः (चक. ७.४० ४५)
कल्याणकावलेह–पु., योग० सर्वातीसारनाशकः (काखि. १०.८८)
कल्याणाभिनिवेश–पु., श्रेयस्करमार्गानुष्ठानम् (चवि.४.८)
कल्याणाभिनिवेशिन्–वि., कल्याणविषये यत्नपरः सत्त्वसारलक्षणेष्वेकं लक्षणम् (सुसू. ३५. १६)
(कल्याणिका)–स्त्री., खनिज० मनःशिला (रा. १३.१५८)
कल्याणिका नाम रसक्रिया नेत्ररोगार्थमुपयुज्यते (काखिल. १३.७९.८०)
–घृत–न., घृत० एतज्जीर्णज्वरश्वासकासगुल्मोन्मादगरान् हन्ति। अपस्माराग्निमान्द्यनुत्, क्लीबानां वन्ध्यानां क्लैब्यवन्ध्यत्वादिविनाशी, पाण्ड्वामयघ्नं बुद्धिप्रदं नयनहितं रेतोमार्गरुग्विनाशी गर्भप्रदं च (चचि. ९.३५–४१) (सुउ. ३९. २२५–२२९)
–लवण–न., योग० विसूचिकाऽलसकविलम्बिका वातव्याधिषूपयोज्यम् (सुउ. ५६.१६)
कल्याणिनी–स्त्री., वनस्पति० (रा. ४.४२२)
कल्याणी–स्त्री., वनस्पति० माषपर्णी (रा. ३.१७१)
कवक–न., वनस्पति० छत्रकं, सुखण्डकसंज्ञः छत्रकभेदः (सुसू. २०.८)

**( कविका )**–स्त्री., कटकम् ( डसुसू. २७.१४ )
केविका ( रा.परि. १०.३३ )
**कवच**–पु., न., संनाहः ( सुक. १.२५–२७ ड. )
अङ्गत्राणम् ( असंसू. ८.४३ )
पु., वनस्पति० पर्पटः ( ध. १.४५ )
**कवल**–पु., उपक्रमः गण्डूषभेदः ( ड. सुउ. ६४.३८.३९ )
व्याख्या–मुखपूर्णे सति यः संचारयितुं शक्यते स कवल उच्यते ( अहृसू. २२.१२ ) अयं चतुःप्रकारः स्नेही प्रसादी शोधनो रोपणश्च । चतुर्धा कवलः स्नेही प्रसादी शोधितरोपणौ । स्निग्धोष्णैः स्नेहिको वाते स्वादुशीतैः प्रसादनः । पित्ते कट्वम्ललवणै रूक्षोष्णैः शोधनः कफे । कषायतिक्तमधुरैः कटूष्णै रोपणो व्रणे ॥ ' धारणकालः तावच्च धारयितव्यः अनन्यमनसोन्नतदेहेन यावद्दोषपरिपूर्णकपोलत्वं नासास्रोतोनयनपरिस्रावश्च भवति तदा विमोक्तव्यः पुनश्चान्यो ग्रहीतव्यः ( सुचि. ४०.६३ )
शुद्धिलक्षणम्–समानयोगलक्षणानि व्याधेरपचयो वैशद्यं तुष्टिर्वक्त्रलघुतेन्द्रियप्रसादश्च
( सुचि. ४०.६५ )
अतियोगः–कवलस्यातियोगान्मुखे पाकः शोषस्तृष्णाऽरुचिः क्लमश्च भवति ( सुचि. ४०.६६ )
हीनयोगः–हीने कवले जाड्यकफोत्क्लेशावरसज्ञानं भवति ( सुचि. ४०.६६ ) कवलविषयाः 'मन्याशिरःकर्णमुखाक्षिरोगाः प्रसेककण्ठामयवक्त्रशोषाः। हृल्लासतन्द्रारुचिपीनसाश्च विशेषात्कवलग्रहेण साध्याः ( अहृसू. २२.१२ )
मुखरोगे दोषादिविभागेन उपयुक्ताः कवला दोषं वीक्ष्य क्षीरेक्षुरसगोमूत्रदधिमस्त्वम्लकाञ्जिकैः तैलघृतैरपि कवलान् विदध्यात् ॥ ' ( सुचि. २२.७६ )
कवलोऽपूर्णपञ्चसंवत्सरे बाले न प्रयोज्यः
( असंसू. २९.२२ )
**( कवलिका )**–स्त्री., व्रणकल्कौषधाच्छादनद्रव्यम्, सा चौषधस्वरसनिस्सरणनिवारणार्थं पलाशोदुम्बरादीनां त्वक्पत्रादिकृता ( ड. सुसू. ५.१७ )
**–ग्रह**–पु., उपक्रम०, गण्डूषभेदः कवलस्य धारणम्
( सुउ. ५३.८ )
मान० कर्षपर्यायः, द्वौ द्रङ्क्षणौ कवलग्रहं विद्यात्
( चक. १२.९१ )
**कवलालुक**–न., वनस्पति० घोली ( रापरि. ७.८७ )
**कवलित**–वि., ग्रासीकृतम् ( र. १.४२ )
**कवाट**–पु., न., कपाटः ( असंसू. २१.४ )
**कवोष्ण**–वि., ईषदुष्णम् ( असंचि. १० )
**कव्य**–न., पितृदेयम् ( असंउ. ४२ )
**कशा**–स्त्री., चर्मयष्टिः ( ड. सुउ. ६२.१८ )
**कशेरुक**–पु., न., तृण० क्षुद्रमुस्ता ( चचि. २९.५८ )
चिञ्चोडका शाक० ( चसू. २७.११६ )
मधुरस्कन्धे द्रव्यविशेषः ( चवि. ८.१३९ )
मागधम् ( अरुण. अहृसू. ६.९२ )
गुण्डकन्दः ( चसू. ३.२१ )
सरक्ते पवने प्रदेहार्थं देयम्
कसेरुकगुणाः–कषायोऽल्पमधुरः शीतोऽतिखरः रक्तपित्तप्रशमनः दाहश्रमापहः ॥
( रापरि. ८.६४ )
गुरु विष्टम्भिशीतौ च शृङ्गाटककशेरुकौ
( सुसू. ४६.३०४ )
लोमशकृष्णवर्तुलसूक्ष्मस्तडागकन्दः
( हे. अहृसू. ६.९२ )
गर्भस्थापनार्थं उपयुक्तः, "शृङ्गाटकपुष्करबीजकशेरुकान् भक्षणार्थं दद्यात्" ( चशा. ८.२४ )
शिरःपार्श्वांसशूलेषु प्रलेपने ( चचि. ८.८४ )
**कश्यप**–पु., महर्षि० हिमालये इन्द्रादेशात् रसायनप्रयोगं कृतवान् ( चचि. १. ( ४ ) ३ )
रोगापहरणचिन्तनार्थं हिमवतः पार्श्वे समेतेषु महर्षिष्वेकः ( चसू. १.८ )
काश्यपसंहिताकारः ऋषिः ( कासू. २७.३ )
काश्यप एवाग्रे तपसोऽग्रेणाविन्दत रेवतीम्
( काक. रेवतीक. ६२ )
इन्द्रशिष्यः ( कावि. )
**कषाय**–पु., रस० षड्रसेष्वेकः, कफपित्तप्रशमनः
( चसू. १.६६ )
वायूर्व्योर्बाहुल्यात्कषायरसो भवति
( सुसू. ४२.३ )
कषायरसलक्षणम्–स वक्त्रं परिशोषयति जिह्वां स्तम्भयति कण्ठं बध्नाति हृदयं कर्षयति पीडयति च ( सुसू. ४२.९ ) गुणाः–संशमनः संग्राही संधानकरः पीडनो रोपणः शोषणः स्तम्भनः श्लेष्मरक्तपित्तप्रशमनः शरीरक्लेदस्योपयोक्ता रूक्षः शीतो लघुश्च ( चसू. २६.४३ ) शोधनो लेखनः क्लेदोपशोषणः ( सुसू. ४२.१० ) रूक्षगुणत्वात् विशोषिभावाच्च पित्तस्य द्रवगुणस्य ह्रासकः
( काखि. ६.२९–३० )

त्वक्प्रसादनोऽस्रविशोधनश्च ( अहृसू. १०.२० ) अपवादः–प्रायः कषायशीतं स्तम्भनं चान्यत्र हरीतक्याः ( असंसू. १८.२६ ) कषायरसस्याधिकाऽभ्यासे कफपित्तक्षयो वायोः प्रकोपः पक्तिमार्दवं रक्तशान्तिश्च भवति ( काखि. ५.४७ )

कषायरसोऽत्यर्थमुपयुज्यमानः आस्यं शोषयति, वाचं निगृह्णाति, हृदयं पीडयति, उदरमाध्मापयति, स्रोतांस्यवबध्नाति, श्यावत्वमापादयति, पुंस्त्वमुपहन्ति, विष्टभ्य जरां गच्छति, वातमूत्रपुरीषरेतांस्यवगृह्णाति, कर्षयति, ग्लपयति, तर्षयति, स्तम्भयति, खरविशदरूक्षत्वात् पक्षवधग्रहापतानकाऽर्दित–प्रभृतींश्च वातविकारानुपजनयति। ( चसू. २६.४३ ) कषायस्कन्धः–हरीतकी–प्रियङ्ग्वनन्ताक्षौद्र–लोध्रकट्वङ्ग–कट्फल–धव–धन्वन–धात्रीफल–धातकीपुष्प–पद्मा–पद्मक–पद्मपुष्प–नागकेसर–कुमुदोत्पल–तुङ्ग–तिन्दुक–कदम्बोदुम्बर–प्लक्ष–वट–बिभीतक–विकङ्कत–जम्ब्वाम्रास्थ्याम–कपित्थाऽश्वत्थ–मोचरस–समङ्गा–सोमकल्प–सप्तपर्ण–स्यन्दना–ऽसन––सल्लकी–शाल–ताल–पियालैलवालुक–परिपेलव–जिङ्गिणी–बदरी–खदिर–कदराऽरिमेद–कास–कसेरुक–वंशाऽश्मन्तकाऽशोक–शिरीष–शिंशपा–पलाश–शमी–शण–शङ्खनाभि–मेषशृङ्गी–वरुण–खर्जूर–स्फूर्जक–सर्ज–भूर्जार्जुना–ऽऽजकर्ण–प्रवाल–मुक्ताञ्जन–गैरिक–बिस–मृणाल–प्रभृतीनि ( असंसू. १८.२५ )

पु., मण्डलीसर्प० ( सुक. ४.३४ ( २ )

पु., क्वाथः ( चसू. ४.३ )

पु., वनस्पति० सर्जकः ( ध. ५.१२३ )

धवः ( रापरि. ९.८ )

**( कषाया )**–स्त्री., अम्बष्ठा ( ध. ३.११६ )

खर्जूरी ( ध. ५.५३ )

धन्वयासः ( र. ३.२३ )

**–दन्त**–पु., मूषिका०, दष्टलक्षणम्–निद्रा हृच्छोषः कार्श्यं च जायते ( सुक. ७.१९–२० )

**–द्रुम**–पु., कषायरसोत्कटो वृक्षः न्यग्रोधादिः ( चशा. ८.२४ )

**–यावनाल**–पु., वनस्पति० तुवरयावनालः ( ध. १६.१७१ )

**–रक्त**–वि., कषायभावनया रक्तीकृतः ( चक्र चसि. ११ )

**–रसता**–स्त्री., कषायरसास्वादत्वम् ( अरु ) रसान्तरेऽपि कषायग्रहणम् ( हे अहृसू. १२.५१ )

**–वर्ण**–पु., गैरिकवर्णः रक्तवर्णो वा ( चचि. १९.९ )

**–वर्त्मता**–स्त्री., लक्षण० रूक्षवर्त्मत्वम् ( अहृसू. २३.६ )

**–वासिक**–पु., कीट० ( सुक. ३.५ )

**–वृक्ष**–पु., कषायरसयुक्तो वृक्षः ( चचि. ४.१०४ )

**कषायाभ**–वि., कषायवत् आभा यस्य तत् ( चचि. ४.१२ )

**कषायास्यता**–स्त्री., लक्षण० मुखस्य कषायरसत्वम् ( चनि. १.२१ ) अशीतिवातविकारेष्वेकः ( चसू. २०.११ )

**कषायिन्**–पु., वनस्पति० लकुचः ( रा. परि. ९.४४ ) सर्जकः ( रा. ९.२०५ )

**कष्टशब्द**–वि., कठिनार्थशब्दम्, नातिप्रसिद्धार्थम् ( चवि. ८.२० )

**कसन**–न., रोग० कासः ( र. १६.६७ )

**कसना**–स्त्री लूता०, दंशनात् पिच्छिलं शीतलं च रुधिरं स्रवेत्, कासश्वासौ च भवतः ( सुक. ८.११४–११५ )

**कसेरू**–पु., वनस्पति० मुस्ता ( रा. ६.५८ )

चिञ्चोटम् ( सुचि. १७.६ )

गुण्डकन्दः ( रापरि. ८.६३ )

अस्थि० पृष्ठास्थि ( रा., १८.६२ )

**कसेरूक**–पु., ईषन्नीलपीतमणिः ( चक्र. ) ( चचि. १७.१२६ )

वनस्पति० मुस्ता ( सुचि. ३७.३० )

वनस्पति०, नागरमुस्तकम् ( सुचि. २२.४० ) द्र० 'मुस्त'

वनस्पति० मागधम् ( अहृसू. ( ६.९२ )

**कस्तूरिका**–स्त्री., सुगन्धिद्रव्य० ( चचि. २८.१५२ )

इयं कस्तूरिमृगनाभिजन्या ( ध. ३.२८ )

गुणाः–तिक्ता कटुश्चक्षुष्या कफवातघ्नी विषमुखशोषमुखरोगकिलासकफजदुर्गन्धनाशिनी च ( ध. ३.२८ )

प्रकारः–'कपिला पिङ्गला कृष्णेति कस्तूरी त्रिविधा' ( ध.३.२८ )

लक्षणम्–'स्वादे तिक्ता पिञ्जरा केतकीनां गन्धं धत्ते तोलने च लाघवमस्ति। याऽप्सु न्यस्ता नैव वैवर्ण्यमीयात् सा कस्तूरी राजभोग्या प्रशस्ता ॥' ( रा. १२.५१ )

**–मृग**–पु., कस्तूरीहरिणः ( र. १.११–२१ )

**कह्लार**–न., रक्तपद्मम्, रक्तोत्पलम् ( सुसू. ३९.८ ) सौगन्धिकोत्पलम् ( सुउ. ४७.५७ ) कुमुदम् ( ध. ४.१५४ रा. १०.२४६ )

**कह्लार**–पु., वनस्पति० सौगन्धिकः ( अरु. अहृसू. ३.३५ ) सन्ध्याविकाशि पद्मिनीपुष्पम् ( हे. अहृसू. ३.३५ )

**काक**–पु,. धान्य०, शालिः ( ध ६.७१ ) प्रसहपक्षि० कृष्णवर्णोऽयम् ( सुसू. ४६.७४ ) वातप्रकृतिकोऽयम् ( सुशा. ४.६७ ) शोषे बृंहणार्थे प्रशस्तः ( सुउ. ४१.३६ ) प्रतुदवर्गीयपक्षी ( रा. १७.३ ) तन्मांसगुणाः–लघु चक्षुष्यं दीपनमायुष्यं बृंहणं बल्यं क्षतदोषक्षयापहं च ( ध. ६.४६८ )

**( काकी )**–स्त्री., वनस्पति० काकोली ( रा. ३.१६६ )

**–घ्नी**–स्त्री., महाकरञ्जः ( ध. ५.११० )

**–चण्डीश्वर**–पु., तन्त्रकर्तृविशेषः ( र १.६ )

**–जङ्घा**–स्त्री., वनस्पति० अस्याः क्षारः श्लीपदनाशनः ( सुचि. १९.६३ ) काकाङ्गी ( र. ११.५२ ) काकजङ्घागुणाः–तिक्तोष्णा वर्ण्या कफघ्नी ज्वर-रक्तपित्तकृमिविषव्रणबाधिर्याजीर्णजीर्णविषमज्वरघ्नी-च ( ध. ४.२३ )
हिं.–मसी, चकशोनी.
म.–**कांग.**
गु.–अघेडी.
बं.–कांगुडकाडली.

**–जम्बू**–स्त्री., जम्बूभेदः, ( रा.११.१३२ ) लघुजम्बूः, भूमिजम्बूः ( र १७.४६ ) द्र० 'जम्बू'

**–तिक्ता**–स्त्री., वनस्पति० शार्ङ्गेष्टा ( अरु ) करञ्जिका ( हे अहृसू. १५.१७ )

**–तिन्दु**–पु., वनस्पति० तिन्दुकभेदः ( ध ५.४१ ) द्र० 'तिन्दुक'.

**–तिन्दुक**–पु., वनस्पति० फलगुणाः–कषायमम्लं गुरुवातविकारकृत्, पक्वं तु मधुरं किञ्चित्कफकृत्, पित्तघ्नं कान्तिहृच्च (ध. ५.४१., रा. ११.५२–५३)
हिं.–तुमल.
बं.–मकागाव.

**–तुण्ड**–पु., जलचरपक्षि० श्वेतकारण्डवः ( असंसू. ७ )

**–तुण्डक**–पु., काकतुण्डः ( चसू. २७.४२ )

**–तुण्डफला**–स्त्री., वनस्पति० काकनासा ( ध. ४.२५ )

**( –तुण्डा )**–स्त्री., वनस्पति० काकनासा ( रा. ३.४० )

**( –तुण्डी )**–स्त्री., वनस्पति० काकादनी ( रा. ३.४४ )
खनिज० पित्तलभेदः ( ध. ६.१८ )

**–दन्तिका**–स्त्री., वनस्पति० काकादनी ( रा. ३.४४ )

**–नन्दिका**–स्त्री., वनस्पति० गुञ्जा ( इंदु. असंनि. ७.१९ )

**–नासा**–स्त्री., वनस्पति० वायसीफलं, वासाफलं ( चक ) ( चसि. ४.९ ) अस्याश्च फलभक्षणान्मत्स्या काकाश्च म्रियन्ते ( र. ५.२४६ ) वायफला ( ड. सुचि. ३७.२० ) काकनासागुणाः–तिक्ता, कटुः, कषाया, ( भाप्र ) मधुरा, उष्णा, शिशिरा ( रा ) व्रणशोधनी, रसायनी, दार्ढ्यकरी, वामनी, पित्तघ्नी, कफघ्नी, पलितनाशनी, शोफार्शःश्वित्रकुष्ठनुच्च (भाप्र.) ( ध. ४.२५ )

**–नासिका**–स्त्री.. वनस्पति० नासाफला, काकतुण्डकः ( चचि. २.६४ )

**–नीला**–स्त्री., वनस्पति० जम्बूभेदः ( रा ११.१३२ )

**–पद**–न., काकपदाकारो व्रणः ( चचि. २३.६६ )

**–पाद**–पु., विकङ्कतः ( ध. ५.४३ )

**( –पादा )**–स्त्री., द्र० काकजङ्घा ( ध. ४.२३ )

**–पीलु**–पु., वनस्पति० काकतिन्दुः तिन्दुकभेदः ( रा. ११.५२ )
द्र० काकादनी ( ध ४.२७ )

**–प्राणा**–स्त्री., वनस्पति० द्र० काकनासा ( रा ३.४१)

**–फल**–पु., वनस्पति० निम्बः ( रा ९.४३ )

**( –फला )**–स्त्री., वनस्पति० जम्बूभेदः ( रा. ११,१३२ )

**–बीजक**–पु., तिन्दुकभेदः काकतिन्दुः ( रा. ११.४२ )

**–भाण्डिका**–स्त्री., वनस्पति० महाकरञ्जः ( ध. ५.११० )

**–मद्गु**–पु., जलचरपक्षि० अस्य वसा अहिततमा ( चसू. २५.३९ )

**–माची**–स्त्री., अस्याः पर्णानि कुष्ठादिषूद्वर्तनार्थमुप-युज्यन्ते ( चसू. ३.१७ ) इयं नात्युष्णशीतवीर्या भेदिनी त्रिदोषघ्नी च ( चसू. २७.८९ ) उष्णवीर्यत्वादियं पित्तवर्धिनी ( सुसू. ४०.५ ) पत्रशाक० ( सुसू. ४६.२६६ ) गुडेन संयोगा-दहिता ( सुसू. २०.११ ) ( र. ११.५५ ) गुडफला ( अरु. ) अहृसू. १५.३० ) कामाता ( हे ) अहृसू. ६.७४ ) काकमाचीगुणाः–तिक्ता,

कटुः, सोष्णा, स्वर्या, वृष्या, रसायनी, त्रिदोषघ्नी, कुष्ठशूलार्शःशोफकण्डूतिनाशिनी च ( ध ४.२१ )
हिं.–मकोय, कवैया.
म.–लघुकावळी, कांगोणी.
गु.–कांगोणी, पीलुडीनी जात.
बं.–गुडकाई.
त.–मणत्तक्काळि.

–मात–स्त्री., वनस्पति० द्र० काकमाची ( रा ४.३६ )

–मुख–न., यंत्र० काकमुखसदृशं स्वस्तिकयन्त्रम् ( सुसू. ७.१० )

–मुद्गा–स्त्री., वनस्पति० मुद्गपर्णी ( रा. ३.१७५ )

–वन्ध्या–स्त्री., वन्ध्या०, सकृत्प्रसूः स्त्री ( र. २२.४ )

–वल्लभा–स्त्री., वनस्पति० जम्बूभेदः ( रा. ११.१३२ )

–शिम्बी–स्त्री., वनस्पति० द्र० काकादनी ( रा. ३.४३ )

–शोणित–न., काकस्य रक्तम् ( असंउ. १२.२२२ )

–साह्वया–स्त्री., वनस्पति० काकादनीभेदः ( ध. ४.२९ )

–स्फूर्ज–पु., वनस्पति० तिन्दुकभेदः ( रा. ११.५२ )

काकण–न., रोग० सप्तकुष्ठभेदेष्वेकं त्रिदोषजमिदम् ( चचि. ७.२७ )
काकणन्तिकावर्णान्यादौ, पश्चात्तु सर्वकुष्ठलिंगसमन्वितानि पापीयसा सर्वकुष्ठलिङ्गसंभवेनानेकवर्णानि काकणानीति विद्यात् ( चनि. ५.८ )

काकणक–न., द्र० काकणम् ( चचि. ७.१३ )

काकणन्तिका–स्त्री., गुञ्जा ( चचि .७.२० )
चिरिहिण्टिका, काकादनी ( सुनि. २.१३ )
काकादनी ( ध. ४.२७ )

–फल–न., गुञ्जाफलम् ( सुनि. २.१३ )

काकणन्ती–स्त्री., वनस्पति० गुञ्जा ( सुउ. ४०.१४ )

–काकादनी ( ध. ४.२७ )

काकल–न., शारीर० तालुमूलम् ( चसु. १८.२० )
शरीर० कण्ठमध्यम् ( इन्दु ) ( असंशा. ५.८९ )

काकलीद्राक्षा–स्त्री., वनस्पति० द्राक्षाभेदः ( रा. ११.७९ )

काकलक–पु., धान्य० षष्टिकभेदः ( सुसू. ४६.८ )
शारीर० गलमणिः ( सुशा. ५.२६ )
काकलम् ( सुशा. ५.३७ )

काकाक्षी–स्त्री., वनस्पति० काकनासा ( रा ३.४१ )
त्रिवृत् ( ध. १.२४५ )

काकाण्ड–पु., वनस्पति० ( चचि. २३.२१७ )
तिन्दुकभेदः ( रा. ११.५२ )
महानिम्बः ( रा. ९.४६ )
शूकरशिम्बी.
( चक्र. ) चसू. २७.३४; सुसू. ४६.३६ ( ड )

–फल–न., वनस्पति०, अश्वकः, कपिकच्छुसदृशशिम्बः ( सुसू. ४६–३६ )

( काकाण्डा )–स्त्री., शिम्बीभेदः, विषमूर्च्छायामञ्जने नस्ये चोपयुक्ता ( चचि. २३.४९ )

( काकाण्डी )–स्त्री., वनस्पति०, तेजोवती ( रा. ३.३९३ )
दधिपुष्पी ( ध. १.१५३ )
लूता० काकाण्डिका, सा उपपादिका उच्यते ( असंउ. ४४ ) इंदुपाठः पृ. ३६२ )

काकाण्डकी–स्त्री.,–काकमाची. ( असंउ. ४४; ( इंदु पृ. ३६६ )

काकाण्डिका–स्त्री., लूता० तद्दंशलक्षणम्–दंशः पाण्डुरक्तोऽतिवेदनो भवति । तृण्मूर्च्छाश्वासहृद्रोगहिक्काकासाः उच्छ्रिता भवन्ति । ( सुक. ८.१२६ )
स्मृतिमोषाक्षेपकौ चेति । ( असंउ. ४५ )

काकाण्डोला–स्त्री., वनस्पति० कोलशिंबी ( चसू. २७.३४ )
कटभी, ( अरु. ) निःशूका कपिकच्छुः ( हे अहसू. ६.२२ )

काकाण्डोलाफल–न., काकाण्डोलाफलम् ( स्निग्धोष्णं मधुरं, गुरु, बल्यं, वृष्यं, वातहरं, बहुमलं, पुंस्त्वप्रदं च ) ( चसू. २७.३४ )

काकादनी–स्त्री., वनस्पति० काकतिन्दुकः ( ड. सुउ. ४४.१९ )
कृष्णश्रीफलिका ( ड. सुक. ७.३१ )
वायसतिन्दुका ( ड. सुचि. १४.८ )
काकहिंस्रा ( ड. सुचि. १९.६३ )
गुञ्जा०, काकणन्तिका ( ध. ४.२७ )
अर्कफलसमानाकारगर्भितफला वल्ली, काकपीलुः
काकवल्लरी ( र. २९.१२१ )
काकादनीगुणाः–तिक्ता, कटुः, उष्णा, केश्या, वृष्या, रुच्या, दिव्यरसायनी, वातकफघ्नी, ग्रहदोषोर्ध्वगदपलितघ्नी च ( ध. ४.२७ )
हिं.–रती.
म.–गुंज.
बं.–कुंच.

**काकाम्र**–पु., वनस्पति० नद्याम्रः ( रा. परि. ४.१ )
**काकाह्वयोदुम्बरिका**–स्त्री., वनस्पति० काष्ठोदुम्बरिका ( ड. सुक. ४७.३७ )
**काकाह्वा**–स्त्री., काष्ठोदुम्बरिका ( चक्र. चचि. २१.९० )
काकजङ्घा ( रा. ४.३८ )
काकमाची ( ध. ४.२१ )
**काकाह्वानोदुम्बरी**–स्त्री., वनस्पति० काकसंज्ञोदुम्बरिका ( सुचि. ९.२५ )
**काकिनी**–स्त्री., मान० रक्तिका ( र. १४.७२ )
पार्थिवद्रव्य० कपर्दिका ( र. १०.४ )
या नारी कृष्णपक्षे पुष्पवती भवति सा काकिनीत्युच्यते सा रसबन्धे प्रयोगे रसायने चोत्तमा मता ( र. ६.३३ )
**काकुभ**–वि., ककुभस्य नाम अर्जुनवृक्षस्य इदम् ( चचि. २९.१४३ )
**काकुलीमृग**–पु., भूमिशयसर्प० श्वेतः श्यामः चित्रपृष्ठः कालक इति तस्य चत्वारो भेदाः । ( असंसू. ७.७६ ) ( चसू. २७.३७ )
**काकेक्षु**–पु., तृण०–कशः ( ध. ४.१३० )
**काकेन्दुक**–पु., वनस्पति० तिन्दुकभेदः काकतिन्दुकः ( ध. ५.४१ )
**काकोच्छ्वास**–पु., अरिष्टलक्षण० काकवद् व्यात्ताननः श्वसिति । ( सुसू. ३१.१४ )
**काकोदुम्बरिका**–स्त्री., वन० काष्ठोदुम्बरिका उपकुशाख्ये दन्तरोगेऽस्याः पत्राणि रक्तविस्रावणार्थमुपयुज्यन्ते । ( सुचि. २२.१९ )
वनस्पति० फल्गुः ( र. ११.११६ ) जघने फला ( र. २०.६३ )
काकोदुम्बरिकागुणाः–स्वादुः, कटुः, अम्ला, शीता, ग्राहिणी, कफपित्तघ्नी, कण्डूकुष्ठव्रणरक्तपित्तशोफपाण्डुघ्नी च ( ध. ५.८८ )
हिं.–कठूमर, कठगूलरी,
म.–काळा उंबर.
गु.–काळो उंबरो.
बं.–यज्ञडुमर, काकडुमर.
त.–पेयति, काट्टत्ति.
**काकोली**–स्त्री., वनस्पति० जीवनीयगणोक्तमेकं द्रव्यम् ( चसू. ४.९ )
शुक्रजननमेकं द्रव्यम् । ( चसू. ४.१२ ) अङ्गमर्दप्रशमनगणोक्तमेकं द्रव्यम् ( चसू. ४.१७ )
बृंहणीयगणोक्तमेकं द्रव्यम् । ( चसू. ४.९ )
स्नेहोपगमेकं द्रव्यम् ( चसू. ४.१३ ) काकोलीगुणाः स्वादुः शीता मधुरविपाका श्लेष्मशुक्रवर्धिनी वातपित्तप्रशमनी ज्वरदाहक्षयरक्तविकारघ्नी च ( ध. १.१३२ )
वनस्पति० दधिपुष्पी ( ध. १.१५३ )
**–द्वय**–न., काकोली क्षीरकाकोली ( असंसू. १५.२६ )
**काकोल्यादिगण**–पु., वर्ग० काकोलीक्षीरकाकोली जीवकर्षभकमुद्गपर्णी-माषपर्णी-मेदामहामेदाच्छिन्नरुहाकर्कटशृङ्गीतुगाक्षीरीपद्मकप्रपौण्डरीकर्धिवृद्धिमृद्वीकाजीवन्त्यो मधुकं चेति । वर्गोऽयं जीवनो बृंहणो वृष्यः स्तन्यः श्लेष्मकरः पित्तशोणितानिलनाशनश्च । ( सुसू. ३८.३५–३६ )
**काकौष्ठक**–पु., पञ्चदशकर्णबन्धेष्वेकः ( सुसू. १६.१० )
**काखोर्द**–पु., अष्टादशभूताधिपतिष्वेकः ( असंउ. ७ इन्दु )
**काङ्कायन**–पु., ऋषि० रोगापहरणचिन्तनार्थं हिमवतः पार्श्वे समेतेष्वेकः ( चसू. १.१२ ) यजः पुरुषविषये विवदमानो मुनिः ( चसू. २५.२२ )
बाल्हीकभिषगिति तस्यापरं नाम ( चशा. ६.२१ )
**काङ्क्षा**–स्त्री., हृदि आहारेच्छा ( सुउ. ३९.१०४ )
अन्नाभिलाषः ( ड. सुनि. ७.७ )
**काङ्क्षी**–स्त्री., खनिज० सौराष्ट्री ( ध. ३.१०५ )
सौराष्ट्रिका ( चक्र ) ( चचि. २३.५४ )
स्फटिका ( र. २.१०५ )
**काङ्गुक**–पु., व्रीहि० षष्टिकभेदः ( सुसू. ४६.८ )
**काच**–न., लवणभेदः काचलवणम् ( र. १९.२६ )
पु., पार्थिव० अनुशस्त्रेष्वेकम् ( सुसू. ८.१५ )
स्फटिकः ( असंसू. १२.२१ )
नेत्ररोग० ( चचि. २३.७३ ) अस्य लिङ्गनाशतिमिरनीलिकाश्चेति पर्यायाः ( सुउ. ७.१८ ) दृष्टेः तृतीयपटलगततिमिराख्यो रोगः । अत्र दोषेण दृष्टेः रागप्राप्तिर्भवति ( सुउ. ७.१८ ) रागप्राप्तस्य तिमिरस्य काच इति संज्ञा ( सुउ. ७.१५ )
काचसंप्राप्तिलक्षणे–तिमिराख्योऽयं नेत्ररोगो दोषे तृतीयपटलाश्रिते सति काचतां प्राप्नोति । तेन ऊर्ध्वमीक्षते नाधः । दृष्टिस्तनुचैलावृतोपमं यथावर्णं च रज्यते क्रमाद् हीयते च ( ड. सुउ. ७.१५ )
काचस्य दोषानुरोधेन लक्षणानि–वातेन आविलान्यरुणाभानि व्याविद्धानि भ्रमन्तीव च रूपाणि काचपीडितः पश्यति । पित्तेन आदित्यखद्योतशक्रचापतडिद्गुणान् शिखिबर्हविचित्राणि नीलकृष्णानि पश्यति । कफेन स्निग्धानि सितानि गौरचामर-

गौराणि श्वेताभ्रप्रतिमानि च रूपाणि पश्यति। अत्यर्थमसूक्ष्माणि रूपाणि पश्यति। व्यभ्रेऽभ्रसम्प्लवं तथा सलिलप्लावितानीव परिजाड्यानि रूपाणि पश्यति। रक्तेन धूमधूम्राणि तमांसि विविधानि रूपाणि पश्यति। सन्निपातेन चित्राणि विप्लुतानि रूपाणि च पश्यति। समन्ततः सर्वाण्येव बहुधा द्विधा वा तथा हीनाधिकाङ्गानि ज्योतींष्यपि च पश्यति (सुउ. ७.१८-२४)
नेत्ररोगोऽयं स्नेहादिक्रियया याप्यः (डसुउ. ८.४५)

**-घटी**-स्त्री., काचपात्रम् (र. २७.४६)

**-तिलक**-न., काचलवणम् (रा. ६.४४)

**-पात्र**-न., काचमयं पात्रम् (सुसू. ४६.४५३)

**-मणि**-पु., काचः, योनिधूपनद्रव्येष्वेकम् (चशा. ८.४१)

**-मल**-न., काचलवणम् (रा. ६.४५)

**-लवण**-न., पार्थिव० तत् वर्णतः कृष्णम्। तद्गुणाः ईषत्क्षारं रुच्यं दीपनं दाहकं पित्तलं कफवातघ्नं गुल्मशूलहरं च (र. १९.२६-२९)

**-संभव**-न., काचलवणम् (रा. ६.४४)

**-सौवर्चल**-न., काचलवणम् (रा. ६.४४)

**काचाक्ष**-पु., जलचरपक्षी० कपर्दिपाकः (सुसू. ४६.१०५)

**काचोत्थ**-न., काचलवणम् (रा. ६.४५)

**काजल**-वि., अल्पं जलं यस्मिन् तत् (असंसू. ९.८२)

**काञ्चन**-पु., वनस्पति० चम्पकः (ध. ५.१४२)
धत्तूरः (र. १८.३९)
शालिभेदः (अहृसू. ६.२)
न., नागकेसरम् (रा. ६.७३)
खनिज० सुवर्णम् (सुसू. २९.७२; ध. ६.१)

**(काञ्चनी)**-स्त्री., वनस्पति० हरिद्रा, स्वर्णक्षीरी (र. १८.१०४) काञ्चनारः (र. १५.८)
गोरोचना, (रा. १२.३४) काञ्चनक्षीरी (ध. १.२४२)

**-कदली**-स्त्री., वनस्पति० सुवर्णकदली (रा. ११.११५)

**-क्षीरी**-स्त्री., सुवर्णक्षीरी (सुचि. ३०.१६)
तद्गुणाः-तिक्ता, शोधनी, पित्तघ्नी, दोषसंघातशमनी, कृमिविषरक्तपित्तघ्नी च (ध. १.४१)
कटुः, शमनी, रेचनी, कफघ्नी, शोफपित्तज्वरघ्नी च (रा. ५.३६४)

**-गैरिक**-न., खनिज० दाक्षिणात्यप्रसिद्धं काञ्चनवर्णं गैरिकं छर्दिशमनम् (चक्र.) चचि. २०.३२)
सुवर्णगैरिकम्, चूर्णमस्य पाण्डुशमनार्थं उपयुज्यते (सुउ. ४४.२१)

**-पुष्पक**-न., वनस्पति० आहुल्यम् (रा. ४.३४)

**-पुष्पी**-स्त्री., वनस्पति० गणिकारी (रा. १०.३१)

**-रस**-पु., खनिज० माक्षिकः (र. २.७९)

**काञ्चनक**-पु., स्वर्णशालिः (सुसू. ४६.४)
पद्मकेसरम् (ध. ४.११६)
धत्तूरकः (ड. सुसू. ३९.७)
न., खनिज० हरितालम् (रा. १३.५९)
वनस्पति० पद्मकेसरम् (ध. ४.१६५)

**(काञ्चनिका)**-स्त्री., वनस्पति० गणकारी (रापरि. १०.३१)

**काञ्चनार**-पु., वन० कोविदारः (ध. १.१.१९६; रा. १०.२९४)

**काञ्चनारक**-पु., काञ्चनारः (ध. १.१९६)

**काञ्जि**-स्त्री., काञ्जिकम् (र. ३०.९२)

**काञ्जिक**-न., आसुत० (ध. ६.२४९) नाडीस्वेदोपयोगि द्रव्यम् (चसू. १४.३३) नष्टार्तवोपचारेष्वेकं द्रव्यम् (सुशा. २.२२) पक्वधान्यकृतं संधानम्, पारदस्वेदनोपयोगि। (र. ११.२६) अस्य आरनालमित्यपरं नाम। तन्निर्माणविधिः-निस्तुषीकृतैरामैः पक्वैर्वा गोधूमैः संधितैरारनालं स्यात्। गुणैस्तत् सौवीरसदृशम्। (भाप्र.) नूतनमृन्मयकुम्भं कटुतैलेन लेपयेत्। निर्मलं जलं तस्मिन् क्षिपेत्। राजिकाजाजिसैन्धवं हिंगुविश्वानिशाः ओदनं वंशपल्लवान् ओदनकुलित्थयोः जलं, वटकखाण्डवं च तस्मिन्निधाय, मुद्रां दत्वा, दिनत्रयं स्थापयित्वा, ततो वस्त्रे गालितं काञ्जिकं भवेत्। (शानि.)
काञ्जिकगुणाः-अम्लं रूक्षमुष्णं (असंसू. १७.२२)
भवस्रंसनं दीपनं स्पर्शाद्दाहज्वरापहं सेवनाद्वातकफघ्नं विबन्धशोफमूर्च्छाशूलश्रमाध्माननाशनं च (ध. ६.२४९)

**(काञ्जिका)**-स्त्री., जीवन्ती (रा. ३.१७८)
पलाशी (रापरि ३.५०)

**-प्रसाद**-पु., काञ्जिकस्योपरितनोऽच्छो भागः (सुसू. २२.८)

**काठिन्य**-न., अमृदुत्वम् (अहृसू. १२.५३)

**काढक**-न., क्वाथः (काखि. १३.६७)

**काण**-पु., नेत्ररोग० (चसि. २.२१; सूचि. २२.३०)

**काणा**–स्त्री. वनस्पति० द्र० काकोली ( उ., सुउ. ६०.४८; असंउ. ८; ( इंदुः )

**–कपोत**–पु., पक्षि० प्रतुदवर्गीयः ( असंसू. ७.१०९ ) अल्पारुतकपोतभेदः ( हे. अहसू. ६.६० ) वनवासी पाण्डुकपोतः; अरुणवर्णकः कपोतः ( उ. सुसू. ४६.६९ ) काणकपोतगुणाः–कषायः स्वादुर्लवणो गुरुश्च । ( सुसू. ४६.६९ ) सर्वदोषकृत् ( अहसू. ६.६० ) काणकपोतः पक्षिणामहिततमः । ( चसू. २५.३७ )

**–काण्ड**–न., मृदुर्वृक्षखण्डः ( र. १५.९३ ) काष्ठखण्डम् ( र. १७.१२ ) पु. पूर्वापरसंच्छिन्नोऽस्थ्यवयवः ( सुनि. १५.४ ) वनस्पति० किराततिक्तः ( ध. १.३३ ) वनस्पति० ( ध. ४.१३५ )

**–कटुक**–पु., वनस्पति० काण्डीरः ( ध. ४.६२ )

**–काण्डक**–पु., वनस्पति० काशः ( रा. ८.२०१ )

**–कीलक**–पु., वनस्पति० लोध्रः ( रा. ६.२३८ )

**–गुण्ड**–पु., वनस्पति० गुण्डः ( रा. ८.६० )

**–चित्रा**–स्त्री., वर्ति० सैन्धवादिभिर्निर्मिता सर्वाक्षिरोगान् जयति ( असंउ. १९.२४९ ) सर्प० राजिलजातीयः ( असंउ. ४२. इंदु पृ. ३२३ )

**–पुङ्खा**–स्त्री., वनस्पति० शरपुङ्खा ( रा. ४.६ )

**–भग्न**–न., रोग० अस्थिकाण्डभङ्गः ( सुनि. १५.४ ) अस्थिभङ्गस्य प्रकारः, ( सुनि. १५.१० ) तस्य सामान्यलक्षणम्–श्वयथुबाहुल्यं स्पन्दनविवर्तनं–स्पर्शासहिष्णुत्वम्, अवपीड्यमाने शब्दः, स्रस्तांगता, विविधवेदनाप्रादुर्भावः, सर्वास्ववस्थासु न शर्मलाभ इति ( सुनि. १५.९ ) काण्डभग्नं द्वादशविधम्–कर्कटकमश्वकर्णं चूर्णितं पिच्चितमस्थिच्छल्लितं काण्डभग्नमज्जानुगतमतिपातितं वक्रं छिन्नं पाटितं स्फुटितमिति ( सुनि. १५.८ )

**–रुहा**–स्त्री., कटुका ( ध. १३७ )

**–लवण**–न., भैषज्य० वनस्पति० काण्डैः लवणे च साधितो योगः तत् प्रक्रिया–स्नुहीकाण्डवार्ताकुशिग्रुलवणानि समांशानि संक्षुद्य, घटं पूरयित्वा सर्पिस्तैलवसामज्जभिः, प्रक्षिप्य शुष्कगोमयेन दाहयेत् । एतत् स्नेहलवणमुपदिशन्ति वातरोगेषु इति ( सुचि. ४.३१ )

**–वल्ली**–स्त्री., वनस्पति० काण्डीरः ( र. २.३० )

**–शाखा**–स्त्री., वनस्पति० सौम्या ( रापरि. ३.३१ )

**–संधि**–पु., वंशाङ्कुरः ( रा. ७.२१९ )

**–हीन**–पु., लोध्रः ( ध. ३.१७५ )

**काण्डेक्षु**–पु., वनस्पति० काशः ( ध. ४.१३० ) इक्षुभेदः श्वेतेक्षुः ( रा. १४.१८१ ) बृहदिक्षुः ( चक्र. ) चचि. १०.३३ ) श्वेतेक्षुः शुक्रशोधनगणोक्तमेकं द्रव्यम् । ( चसू. ४.१२ )

**काण्डेक्षुका**–स्त्री., वनस्पति० तृणपञ्चमूलेष्वेकम् महती खगाली ( सुसू. ३८.७५ ) इक्षुः ( सुसू. ३८.७५ ड )

**काण्डक**–पु., स्वल्पप्रमाणः खण्डः ( चचि. १३.८१ ) न., वालुकम् ( ध. १.१७८ )

**( काण्डिका )**–स्त्री., धान्य० कराल ( ध. ६.१०९ )

**काण्डीर**–पु., वनस्पति० ( चक्र. १.२५ ) गाण्डीरः ( असंसू. १५.२० ) काण्डीरगुणाः–कटुः तिक्तः तृष्णः सरः दुष्टव्रणलूतागुल्मोदरप्लीहशूलमन्दाग्निनाशनश्च । ( ध. ४.६२ )

**कात्यायन**–पु., ऋषि० रोगापहरणचिन्तनार्थं हिमवतः पार्श्वे समेतेषु महर्षिष्वेकः । ( चसू. १.११ )

**काथरा**–स्त्री., वनस्पति० तद्गुणाः–तिक्ता, दीपनी, वातघ्नी च । ( रापरि. ५.३६ )

**कादम्ब**–पु., वारिचरपक्षि० कलहंसः ( चसू. २७.४२ ) कलहंसोऽतिधूसरपक्षोऽसौ प्लववर्गीयः संघातचारी च ( सुसू. ४६.१०५ ) न., स्थावरविष० पुष्पविषमेतत् ( सुक. २.५; )

**कादम्बरी**–स्त्री., आसुत० मद्यम् ( ध. ६.२५६ ) वनस्पति० कदम्ब ( ध. ५.१०४ )

**कादम्बर्य**–पु., वनस्पति० कदम्बभेदः ( ध. ५.१०५ )

**कादि**–पु., वनस्पति० कारवेल्लम् ( र. १२.१०४ ) कादिकगणः ( र. १४.१०–१३ )

**कादिकगण**–पु., ककारारब्धद्रव्याणां गणः–कङ्कुः कन्दुकः ( पूगः ) कोलः ( मध्यमो बदरः ) कुक्कुटः कलः ( बदरः ) क्रोडः ( वराहः ) कुलत्थाः कण्टारी ( बृहती ) कटुतैलं ( राजिकातैलं ) कृष्णगलकः ( मधुरः ) कूर्मः कलायः कणा ( पिप्पली ) कर्कारुः कटिल्लकं कतकं कर्कोटकं कर्कटी काली काञ्जिकं च अयं श्रीकृष्णदेवोक्तः ( र. ११.१३१ )

**कानन**–न., वनम् ( सुसू. ६.२८ ) उद्यानम् ( सुउ. ४७.५७ )

**–दीर्घिका**–स्त्री. उद्यानदीर्घिका अवतरणवापी ( सुउ. ४७.५७ )

**काननोपल**–न., आरण्योपलं, वन्यच्छगलमिति यावत् (र. २१.२०)

**कान्त**–पु., वनस्पति० नन्दीवृक्षः (रा. १२.३१)
न., खनिज० लोहभेदः (ध. ६.२८)
कान्तलोहम् (र. १.२२)
वनस्पति० कुङ्कुमः (रा. १२.२१)
वि., कमनीयम्, मनोहरम् (सुचि. २४.६६)

**(कान्ता)**–स्त्री., वनस्पति० रेणुका (रा. ६.९९)
बृहती (ध. १.९३)
त्रिसंधिः (रा. १०.३७)
वाराहीकन्दः (ध. ४.९२)
एलाभेदः, भद्रैला (रा. ६.७१)
मञ्जिष्ठा (चचि. २५.११६)
वनमल्लिका (ध. ५.१४०)
प्रियंगु (र. २०.६)

**–नाग**–पु., अञ्जन० (र. २८.९२)

**–पुष्प**–पु., वनस्पति० कोविदारः (रा. १०.२९३)

**–मल**–पु., मण्डूरः (र. २७.३७)

**–रस**–पु., सिद्धयोग० कान्तलोहभस्म तत्समश्च पारदो गन्धकः टङ्कणं चेति सर्वं त्रिदिनं मत्स्यपित्तेन मर्दयेत् आर्द्रकस्वरसेन च नवज्वरे दद्यात् (र. १२.१४८)

**–रसायन**–न., सिद्धयोग० अनेन समृद्धा देहसिद्धिः प्राप्यते तथा च वृष्यत्वं पुत्रप्राप्तिश्च साध्यते दीपनं च भवति (र. २६.३७)

**–लोह**–न., खनिज० तस्य शोधनम्–कान्तलोहं तप्तं कृत्वा त्रिफलाक्वाथे सप्तवारं निर्वापयेत्। अनेन तत् शुद्धं भवति (र. ५.१३७–१३९)
तस्य मारणम्–शुद्धं कान्तं जम्बीरादिना अम्लेन पेषयित्वा, लोहापेक्षया चतुर्थांशेन पारदभस्मना तत् प्रलेपयेत् तत् पुटवह्नौ पचेत् । अथवा समभागैस्ताप्यगंधाश्महरतेजोभिः कान्तं लिप्त्वा गजपुटैः पचेत् । कान्तलोहं भ्रामकादिभेदात् चतुर्विधम्, भ्रामकं कनिष्ठं चुम्बकं मध्यमं कर्षकमुत्तमं द्रावकमुत्तमोत्तमं च। (र. ५.६४) व्याधिनाशे भ्रामकं चुम्बकं च प्रशस्तं वर्तते । रसकर्मणि रसायनकर्मणि च कर्षकं द्रावकं च हितम्।
पक्वजम्बूफलच्छायं कान्तलोहमुत्तमं वर्तते (र. ५.१३६)
मारुतातपविक्षिप्तं कान्तलोहं वर्ज्यम्।
कान्तलोहगुणाः–कान्तायोऽतिरसायनोत्तरतरं स्वस्थे चिरायुःप्रदं स्निग्धं मेहहरं त्रिदोषशमनं शूलाममूलापहम् । गुल्मप्लीहयकृत्क्षयामयहरं पाण्डूदरव्याधिनुत् तिक्तोष्णं हिमवीर्यकं किमपरं योगेन सर्वार्तिनुत् (रर. ५.१०४)

**–लौह**–न., कान्तलोहम् (रा. ५.१३६)
द्र० 'कांत लोह'

**–संज्ञ**–न., खनिज० वैक्रान्तम् (ध. ६.४४)

**कान्तलक**–पु., वनस्पति० नन्दीवृक्षः (ध. ३.१८)

**कान्ताभ्रकरसायन**–न., सिद्धयोग० पाण्डुशोफोदरानाहग्रहणीशोषकाससंततपुराणविषमज्वरकुष्ठप्रमेहनाशकम् (र. २६.४२–४७)

**कान्तादिरसायन**–न., सिद्धयोग० व्याधिवार्धक्यनाशकमिदम् (र. २६.३१)

**कान्तायस**–न., खनिज० कान्तलोहभेदः (रा. १३.२७)

**कान्तार**–पु., वनस्पति० इक्षुः (ध. ४.१२०)
वनस्पति० कोविदारः (रा. १०.२९३)
देश० कुरुक्षेत्रस्य दक्षिणस्यां दिशि वर्तमानः (काखि. २५.१४)

**(कान्तारिका)**–स्त्री., कीट० मक्षिकाभेदः तद्दष्टस्य कण्डूशोफदाहरुजो भवन्ति (सुक. ८.३५)

**कान्ति**–स्त्री., शोभा (सुसू. ४५.९६)
वनस्पति० वाराहीकन्दः (ध. ४.९२)

**–दा**–स्त्री., वनस्पति० बाकुची (रा. ४.२२८)

**कान्यकुब्ज**–पु., देश० अत्र स्वर्णसन्निभं माक्षिकमुपलभ्यते (र. २.८३)

**कापालिक**–पु., धातूनामुपरि रञ्जनयोगेन जातो रक्तादिवर्णः। सूतस्य खोटबद्धादिरूपस्य अभ्रकसत्त्वादीनां च वङ्गकापालिकानागकापालिकाकालिकादिर्दोषः । कपालिककापीलिककापालिकापरपर्यायाः । कापालिकाः योगाः धातुवादकर्मणि पूर्वं प्रसिद्धाः। लोहादिधातूनां सुवर्णकरणं धातुवादः (र १०.९६)

**कापिल**–वि., कपिलाधेनुसंबन्धि (असंउ. १६)

**–पित्त**–न., जाङ्गम० गोपित्तं, गोरोचनम्, नेत्ररोगे कणादिद्रव्यभावनोपयोगि (असंउ. १६)

**–वल**–पु., ऋषि० कपिलबलपुत्रो दृढबलः। तन्त्रपूरणकर्तृष्वेकः (चचि. ३०.२९०)

**–बलि**–पु., कापिलबल (चचि. ३०.२९०)
द्र० 'कापिलबल'.

**कापोत**–न., खनिज० अञ्जनम् (रा १३.२१५)

**काप्य**–पु., महर्षि० रोगापहरणचिन्तनार्थं हिमवतः पार्श्वे समेतेषु महर्षिष्वेकः (चसू. १.११)

**काम**–पु., मनोविकार० विषयेच्छा ( चनि ८.४ )
राजसगुण० भोगेच्छा ( सुशा १.१८ )
इन्द्रियार्थेष्वभिकाङ्क्षा ( सुसू. १.२५ (३ )
स्वेषु विषयेष्विन्द्रियाणामानुकूल्यतः प्रवृत्तिः ( सुशा. १०.५३ )
वनस्पति० आम्रभेदः, राजाम्रः ( रा ११.१० )
वनस्पति० कामदमनकः ( र ११.९५ )

( **कामा** )–स्त्री., वनस्पति० काकमाची ( र. ११.१०९ )
द्र० 'काकमाची'.

**–कर्मोन्त**–पु., मदनव्यापारः ( अरु. ) अहृसू. ३.२४ )
वि., कामकर्म मदनव्यापारम् अन्तन्ति बध्नन्ति स्वसौन्दर्येणोत्तरोत्तरं वर्धयन्ति इति कामकर्मोन्तः मदनव्यापारवर्धकः ( हे )

**–कान्ता**–स्त्री., वनस्पति० अतिमुक्त–कः ( रा. १०.२६० )

**–काली**–स्त्री., जलचरपक्षि० ( चसू २७.४४ )

**–खड्गदला**–स्त्री., वनस्पति० केतकीभेदः ( रा १० ३–४ )

**–ज**–वि., विषयवासनाभवज्वरः ( सुउ. ३९.७८ )

**–जननी**–स्त्री., तांबूलमूली ( धपरि ३.२ )

**–ज्वर**–पु., आगन्तुज्वर० विषयवासनाभवः ज्वरः तल्लक्षणम्–ध्याननिःश्वासबहुलत्वम् ( चचि. ३.१२२ ) एतस्मिन् किंकर्तव्यतामूढत्वं तन्द्राऽरोचकमालस्यं हृदयवेदना गात्रपरिशोषणं च भवति ( सुउ ३९.७८ )

**–दा**–स्त्री., वनस्पति० तांबूलम्–ली ( धपरि ३.२ )

**–देवरस**–पु., सिद्धयोग०, अतिवृष्यं रसायनमिदम् ( र. २७.२८ )

**–धेनु–रस** ( परिव० ) पु., सिद्धयोग०, अग्निदीप्तिकृद्वृष्यो वपुःस्थैर्यकृच्च ( र २७.६६ )

**–पिप्पली**–स्त्री., मदनबीजम् ( र. ११.९५ )

**–फल**–पु., आम्रभेदः, राजाम्रः ( रा. ११.१० )

**–भक्ष**–वि., यथाकामं भक्षणशीलः ( चचि.१ (१) ७५ )

**–मोदी**–स्त्री., जाङ्गम० कस्तूरिका ( रा. १२.४८ )

**–रूपका**–स्त्री., वनस्पति० वृक्षादनी ( ध. ४.९७ )

**–रूपिणी**–स्त्री., वनस्पति० अश्वगन्धा ( रा. ४.४०१ )

**–वती**–स्त्री., वनस्पति० दारुहरिद्रा ( रा. ६.८४ )

**–वल्लभ**–पु., वनस्पति० आम्रः ( रा ११.१ )

**–वृक्ष**–पु., वनस्पति० वृक्षादनी ( रा. ५.१४१ )
वनस्पति० बिंदुकली इति लोके ( र ११.१०९ )

**–वृद्धि**–पु., वनस्पति० अस्य बीजमुपयुज्यते । **गुणाः**–मधुरो बलवर्धनः कामवृद्धिकरो रुच्यो बहुलेन्द्रियवृद्धिदश्च ( रापरि. ४.५१ )

**–शर**–पु., वनस्पति० आम्रः ( रा. ११.१ )

**कामम्**–अव्य., यथेष्टम् ( सुचि. २४.६० )

**कामयमान**–वि., अभिलषन् ( अहृसू. १.२ )

**कामल**–न., कामला एव कामलम् ( र. ५.७८ )

**कामला**–स्त्री., रोग० पाण्डुरोगभेदः ( चक्र. चचि. १६.३४ ) चत्वारिंशत्पित्तविकारेष्वेकः ( चसू. २०.१४; ) रक्तदोषजरोगेष्वेकः ( चसू. २८.१२ ) संप्राप्तिः–यः पाण्डुरोगी अत्यर्थं पित्तलानि निषेवते तस्य पित्तमसृग्मांसं दग्ध्वा कामलारोगाय कल्पते । एषा कोष्ठशाखाश्रया बहुपित्ता कामला ( चचि. १६.३५ ) पित्तोल्बणस्य पित्तकरद्रव्यातिसेवनात् पाण्डुरोगादृतेऽपि अयं भवेत् ( असंनि. १३.१९ ) लक्षणानि–कामली हारिद्रनेत्रो हारिद्रत्वङ्नखाननो रक्तपीतशकृन्मूत्रो भेकवर्णो हतेन्द्रियो दाहाविपाकदौर्बल्यसदनारुचिकर्षितश्च भवति ( चचि. १६.३५ ) पाण्डुरोगान्तेऽन्यरोगान्ते वा अम्लाद्यपथ्यसेविनो वदनं देहश्च विशेषतः पाण्डुर्भवति । तन्द्रा बलक्षयश्च भवतः ( सुउ. ४४.१०–११ ) कफरुद्धपथकामलासंप्राप्तिलक्षणम्–कफसंमूर्च्छितो वायुः यदा पित्तं बहिः क्षिपेत् तदाऽऽतुरः श्वेतवर्चा हारिद्रनेत्रमूत्रत्वग् भवति । क्रमेण च पित्तं यदा शाखासमाश्रितं भवेत् तदा आटोपविष्टम्भहृदयगुरुत्वदौर्बल्याल्पाग्निपार्श्वार्तिहिध्माश्वासारुचिज्वराश्च भवन्ति ( असंचि. १८ )

कफरुद्धपथकामला शाखाश्रितकामलातो न भिन्नेति चक्रपाणिदत्तः ( चचि. १६.१२४–१२७ )

बालानां क्षीरजा कामला भवति । तल्लक्षणम्–कुपिते पित्ते स्तन्यं दौर्गन्ध्यम् ऋच्छति । तत्पिबतः शिशोः पाण्ड्वामयः कामला च भवेत् । कामलार्दितो बालः पीतचक्षुर्नखमुखविण्मूत्रो निरुत्साहो नष्टाग्निरुधिरस्पृहश्च भवति ( कासू. २५.३५ ) ( चचि. ३०.२४५ )

तस्याः असाध्यलक्षणम्–कृष्णपीतशकृन्मूत्रः शूनः सरक्ताक्षिमुखच्छर्दिविण्मूत्रस्ताम्यन् दाहारुचितृषानाहतन्द्रामोहसमन्वितो नष्टाग्निसंज्ञः कामली क्षिप्रं विपद्यते ( चचि. १६.३७–३८ )

**कामलिन्**–वि., कामलारोगयुक्तः ( चसू. १४.१८ )
**कामाङ्ग**–पु., वनस्पति० आम्रः ( ध. ५.१ )
**कामाता**–स्त्री., वनस्पति०, काकमाची
( हे. अहृसू. ७.३६ ) द्र० 'काकमाची'.
**कामात्ता**–स्त्री., वनस्पति० काकमाची
( र. १२.७४; अहृसू. ७.३६ )
द्र० 'काकमाची'.
**कामादिज**–वि., कामादिजन्यं व्याध्यादि (चचि. ३.१२५)
**कामानन्दा**–स्त्री., जाङ्गमकस्तूरिका ( रा. १२.४७ )
**कामायुध**–पु., वनस्पति० आम्रभेदः राजाम्रः
( रा. ११.१० )
**कामारि**–पु., प्राचीनो रसाचार्यः ( रा. ६.५१ )
**कामासक्ता**–स्त्री., ( सुचि. २६.८ )
**कामिन्**–पु., वनस्पति० ऋषभक ( रा. ५.१५८ )
**( कामिनी )**–स्त्री., वनस्पति० दारुहरिद्रा ( रा. ६.८३ )
आसुत० मद्यम् ( रापरि. १४.३०१ )
वृक्षादनी ( ध. ४.९७ )
**कामेश्वर**–पु., सिद्धयोग० शोफपाण्डुनाशनोऽयम्
( रा. १९.११० )
**कामेश्वरमोदक**–पु., सिद्धयोग० अयं रसराट् क्षय-नाशको वृष्यताऽऽपादको नैकव्याधिहरो बुद्धि-प्रागल्भ्यकृच्च ( र. २७.१२६–१२९ )
**कामेष्ट**–पु., वनस्पति० आम्रभेदः राजाम्रः ( रा. ११.८ )
**कामोपजीव**–पु., वनस्पति० कामवृद्धिः ( रा. ४.५१ )
द्र० 'कामवृद्धि'.
**काम्पिल्लक**–पु., वनस्पति० कपिल्लकः ( असंसू. १४.४ )
**काम्पिल्यराजधानी**–स्त्री., देश० ( चवि. ३.३ )
**काम्बलिक**–पु., यूष० दधिलवणतिलादिकृतः ईषदम्लः
( चक्रचसू. १३.२३ )
दधिमस्त्वम्लसिद्धयूषः ( ड. सुउ. ४२.९६ )
सौवर्चलाजाजीबीजपूरकसौरभैः संयोज्य मथितः स्वच्छः काम्बलिको भवेत् ( सुसू. ४६.३७६ )
**काम्बोजिका**–स्त्री., वनस्पति० कूविका माषपर्णी (गयी)
बाकुची ( रा. ४.२२७ ) ( डसुचि. १९.४२–४३ )
रक्तगुञ्जा ( र. १६.१४ )
**काम्बोजी**–स्त्री., वनस्पति० बाकुची ( रा. ४.२२७ )
माषपर्णी ( ध. १.१३६ )
**काम्भोजी**–स्त्री., वनस्पति० खदिरभेदः, विट्खदिरः
( रा. ८.३८ )
गुञ्जा ( रा. ३.४७ )
**काम्ली**–स्त्री., पार्थिव० सौराष्ट्री ( असंउ. ९. इंदु )

**काय**–पु., शरीरम् ( अहृसू. १.१ )
चित्तप्रकृतिः ( सुशा. ४.८८ )
चीयते प्रशस्तदोषधातुमलैरिति कायः
( अरु. अहृसू. १.५ )
**–चिकित्सा**–स्त्री., आयुर्वेदाङ्गविशेषः ज्वरातिसार-प्रभृतीनां कायरोगाणां संशमनं षट् कायचिकित्सा तन्त्राणि–अग्निवेशभेडजातुकर्णपराशरहारीतक्षार-पाणिप्रोक्तानि ( सुउ. १.६ )
कायस्य नाम अन्तरग्नेश्चिकित्सा ( चसू. ३०.२८ )
देहचिकित्सा ( सुसू. १.७ )
**–छिद्र**–न., शरीरस्रोतः ( चइं. १२.५२ )
**–निबन्धन**–न., योगपट्टम् ( चक्र. चशा. ५.१२ )
**–मान**–न., तृणादिरचितागारम्
( हे ) अरु. अहृसू. १३.९ )
वेण्वादिनिष्पादितगृहम् ( अरु. ) शिबिरम्
( हे अहृसू. ३.३५ )
**–यात**–पु., वनस्पति० विकण्टकः ( रापरि. ११.१९ )
**–रेक**–पु., विरेचनम् ( हे अहृसू. १४.५ )
**–स्था**–स्त्री., वनस्पति० आमलकी
( चक्र. चचि. २६.८३ )
सुरसा ( चक्र. ) ( चचि. १७.१४१ )
हरीतकी ( रा. ११.३०७ )
एलाभेदः भद्रैला ( रा. ६.७१ )
एलाभेदः सूक्ष्मैला ( रा. ६.६९ )
तुलसी ( रा. १०.७७ )
हरीतकी सुरसश्च ( इन्दु. असंउ. ९ )
**कायाग्नि**–पु., कायनिर्वर्तकः अग्निः जाठराग्निः
( चसू. ६.२२ )
**कार**–न., जलभेदः आन्तरीक्षजलप्रकारेष्वेकम्, करा वर्षोपलास्तेषां तोयं कारं तच्चाऽव्यक्तरसम् । ऐन्द्रं कारं हिमं च यज्जलं तदव्यक्तरसं विद्यात ( चसू. २७.२०० ) ( सुसू. ४५.७ ) द्र० 'जल'
**( कारी )**–स्त्री., वनस्पति० 'कारी तु कारिका कार्या गिरिजा कटुपत्रिका । तत्रैता कण्टकारी स्यादन्या त्वाकर्षकारिका' ॥ ( रा.परि. ८.२६ ) गुणाः– कषायमधुरा गुरुर्दीपनी ग्राहिणी रुच्या कण्ठशोधनी पित्तनाशनी च ( रापरि. ८.२६ )
**कारक**–पु., कारणं, निदानम् द्र० 'निदान'.
( असंनि. १ )
वि., करको वर्षोपलस्तद्भवं जलं, कारं जलमित्यर्थः
( र. १४.३५१ )

**( कारिका )**–स्त्री., वनस्पति० कारी ( रापरि. ८.२६ ) द्र० 'कारी'

**कारञ्ज**–वि., करञ्जस्येदम् कारञ्जफलम् ( चसू. २७.१६० ) ( सुसू. ३७.३२ )

**कारण**–न., अनन्यथासिद्धकार्यनियतपूर्ववृत्ति। यथा तन्तु-वेमादिकं पटस्य कारणम्, हेतुः ( सासं जातिसू० ) निदानम्, "इह खलु हेतुर्निमित्तम् आयतनं कर्ता कारणं प्रत्ययः समुत्थानं निदानमित्यनर्थान्तरम्" ( चनि. १.३ )

कारणं नाम तद् यत्करोति, स एव हेतुः स कर्ता ( चवि. ८.६९ )

आत्मा भूतात्मा चेन्द्रियात्मा चान्तरात्मा ( चशा. ४.८ )

**–ज्ञ**–वि., तत्त्वज्ञानी ( चशा. १.४१ )

**कारणानुरूपं कार्यम्**–कारणे ये गुणाः सन्ति तेषां कार्येऽप्यनुबन्धो भवति, यद्गुणं कारणं तद्गुणं कार्य-मिति ( सांख्यसिद्धान्तः ) ( सुशा. १.१० )

**कारणानुविधायि कार्यम्**–कार्यस्य कारणानुरूपत्वम् ( असंशा. २.४ )

**कारण्डव**–पु., काकवक्त्रो दीर्घचरणः कृष्णवर्णो हंस-विशेषः संघातचारिष्ठिवेष्वेकः ( चसू. २७.४१ ) अन्ये करद ( ई ) वमाहुः ( सुसू. ४६.१०५ )

**कारभ**–वि., करभायाः नाम उष्ट्र्या इदं पयस्, न; औष्ट्रं दुग्धम्, द्र० 'उष्ट्रः' ( चचि. १३.१८३–१८४ )

**–मूत्र**–न., औष्ट्रं मूत्रम्, द्र० 'उष्ट्र.' ( सुसू. ४५.२२८ ) ( सुचि. ९.६९ )

**कारम्भा**–स्त्री., वनस्पति० प्रियङ्गुः ( ध. ३.१६ )

**कारली**–स्त्री., वनस्पति० कारवल्ली ( र.२२.१२४ )

**कारवल्ली**–स्त्री., वनस्पति० कटुरसफलपत्रा शाकवल्ली अस्याः फलं शाकफलमिति उपयुज्यते ( र. १२.३० ) ( रा. ७.२७८ )

गुणाः–तिक्ता, उष्णा, दीपनी, रक्तदोषकरी, कफवातघ्नी, अरोचकघ्नी, च ( रा. ७.२७८ )

हिं.–करेला, करेली.

म.–**कारले.**

गु.–कारेला. कडवा वेला.

बं.–बडकरेला उच्छे; छोटकरला उच्चे.

त.–पाकै, मितिपाकल.

फा.–कारेलाह.

**कारवी**–स्त्री., वनस्पति० अजमोदा ( असंचि. १६ )

अजगन्धा ( ध. २.१०० )

जीरकभेदः, कृष्णजीरकम् ( चसू. २७.३०७ )

द्र० "जीरक"

यवानी ( ड सुसू. ४६.२३० )

राजिका ( ड सुसू. ६४.२३० )

स्वल्पद्राक्षा, गोस्तनिका ( चचि. २४.१८२ )

अल्पजीरकम्, द्र० 'जीरक' ( चचि. १३.१२६ )

शतपुष्पा ( ध. २.१ ).

कुड्डुच्ची (क्षुद्रकारलिका) ( रा. ७.२८० )

**कारवेल्ल(क)**–न., वनस्पति० कारवल्ली ( असंसू. ७.१२२, सुसू. ४७.२६९ )

पु., खनिज० खर्परप्रकारः, कारवेल्लवर्णत्वात् आकारत्वाच्च कारवेल्लक इति संज्ञा ( र. २.१५२ )

**( कारवेल्ली )**–स्त्री., वनस्पति० कारवेल्लिका ( र. २.३०-३१ )

**( कारवेल्लीका )**–स्त्री., वनस्पति० कारवल्ली ( सुसू. ३९.५ )

**कारस्कर**–पु., वनस्पति० विषतिंदुः, गुणाः–कटु-स्तिक्तः उष्णः कफवातजित् वातामयास्रकण्डूति-कुष्ठामार्शोव्रणापहः 'कारस्करस्तु किंपाको विषतिन्दुर्विषद्रुमः । गरद्रुमो रम्यफलः कुपाकः कालकूटकः ॥' ( रापरि. ९.३५ )

हिं.–कुचला.

म.–**काजरा. कुचला.**

गु.–झेर कोचला.

बं.–कुंचिले.

ता.–विषमुष्टि.

फा.–इफराकी.

**कारीष**–वि., करीषस्येदम् ( सुस. ४६.२९३ )

**कारेणव**–वि., करेणुर्हस्तिनी तद्भवम् ( सुसू. ४५.१०४ )

**कार्कट**–पु., वनस्पति० कर्कटः ( रा. ११.३३१ )

**कार्कश**–न., शाकविशेषः, स्वल्पकर्कोटकः ( चसू.२७.९७ )

**कार्कश्य**–न., लक्षण० दुःस्पर्शत्वं, कठिनत्वम्, परुषत्वम् ( असंनि. ५.५१ )

**कार्तस्वर**–न., खनिज० सुवर्णम् ( रा. १३.२ )

**कार्तिक**–पु., कालविभाग० चैत्रादिद्वादशमासेष्वेको मासः ( र. १५.३९ )

**कार्पास**–न., भैषज्य०, तूलः ( सुसू. १८.१६ )
कार्पासतन्तुविरचितं वस्त्रम्
व्रणबन्धनद्रव्येष्वेकम् ( सुसू. १८.१६ )
पु., वनस्पति० कार्पासी ( र. २३.६ )

**( कार्पासी )**–स्त्री., स्वनामख्याता वनस्पति०
( रा. ४.२४, असंशा. ३.१४ )
गुणाः–मधुरा शीता स्तन्या बलकारिणी पित्त-कफघ्नी तृष्णा-दाह-श्रम-भ्रान्ति-मूर्च्छाहरा च । कार्पासः कार्पासिका कार्पासिकी इत्यपि अस्याः नामानि सन्ति ( रा. ४.४५ )
हिं.—कपास, वनकपास.
म.—**कापशी. कापूस.**
गु.—वणरु कपास.
बं.—कार्पास, वनकार्पास.
त.—परुत्ति, उत्तिरी.
फा.—कुतुन, पुंबेदना.

**–पिचु**–पु., कार्पासखण्डः ( चशा. ८.४३ )

**–मूल**–न., कार्पास्याः मूलं, विषजोन्मादे पानार्थम् उपयुज्यते ( असंउ. ४७ )

**–विहितोष्णीषा ( शलाका )**–वि., कार्पासेन विहितम् उष्णीषं शिरोवेष्टनमिव यस्याः सा ( शलाका ) ( अहृसू. २५.३४ )

**कार्पासास्थि**–न., कार्पासबीजम् ( चचि. १८.७५ )
गुणाः—स्तन्यदं वृष्यं स्निग्धं कफकरं गुरु च ( र. २३.६ )

**कार्पासिनी**–स्त्री., अरण्यकार्पासी ( भारद्वाजी ) पानात्यये शमनी, वातसंशमनगणे ( सुसू. ३९.७ )
( सुउ. ४७.३४ )

**कार्मण**–पु., न., परद्रोहार्थो मन्त्रादियोगः
( चचि. २३.५९ असंसू. ८ )
वशीकरणम् ( असंउ. ४० )
कृत्रिमयोगः ( इन्दु. असंउ. १० )

**कार्मिक**–वि., कर्मोपयोगी ( असंउ. ४२ )

**कार्मुक**–वि., कार्यकरम् ( सुसू. ४१.५ )
पु., वनस्पति० अतिमुक्तकः ( ध. ५.१५३ ) वंशः ( ध. ४.१३७ )
खदिरविशेषः सोमवल्कः, श्वेतसारः द्र० 'खदिर' ( ध. १.२७ )
महानिम्बः ( ध. १.३१ )
हिज्जुलः ( रापरि. ८.७० )

**( कार्मुका )**–स्त्री., पुष्पवती माधवी लता । अतिमुक्ता ( अहृसू. १५.३० )

**कार्य**–न., कार्यं तु तद् यस्याभिनिर्वृत्तिम् अभिसंधाय प्रवर्तते कर्ता ( चवि. ८.७२ ) कार्यं प्रागभाव-प्रतियोगि ( तर्कसंग्रहः )

**( कार्या )**–स्त्री., वनस्पति० कारी ( रापरि. ८.२६ ).

**–ज्ञान**–न., कार्यप्रवृत्तिजनकबाह्यविषयज्ञानम् ( चशा. ३.१९ )

**–निमित्त** वि., कार्योत्पन्नः भावः ( चवि. ८.७४ )

**–निवृत्ति** स्त्री., व्याधेरुपशमः ( सुउ. १८.४७ )

**–प्राप्ति**–स्त्री., कार्योत्पत्तिः ( चवि. ८.८४ )

**–फल** न., कार्यफलं पुनस्तत् यत्प्रयोजना कार्याभिनिर्वृत्तिः इष्यते ( चवि. ८.७३ )

**–योनि**–स्त्री., कार्ययोनिस्तु सा या विक्रियमाणा कार्यत्वमेव आपद्यते
उपादानकारणं समवायिकारणं वा ( चवि. ८.७१ )

**कार्श**–पु., वनस्पति० कर्चूरः ( ध. ३.९४ )

**कार्श्य**–न., लक्षण० कृशता, उपशोषिताल्परसधातुजन्यं मांसहीनशरीरं मांसक्षयो वा ( सुनि. ३.१७ ) रोग० ( चचि. ११.६५ ) रसदोषजविकारेष्वेकः ( सुसू. २४.९ ) रसनिमित्तमेव स्थौल्यं कार्श्यं च ( सुसू. १५.३२ ) स्थौल्यात् कार्श्यमेव वरम् ( असंसू. २४.५१ ) ( अहृसू. १४.३१ ) क्षुधो निग्रहात् जायते तथैव वृद्धो वातः कार्श्यादीन् कुरुते ( अहृसू. ४.११. ( १.६ ); कार्श्यजनकानि कारणानि रूक्षान्नपानानां सेवा लङ्घनं प्रमिताशनं वा वमनादिक्रियातियोगः शोकः वेगनिद्राविनिग्रहो रूक्षस्योद्वर्तनं स्नानस्याऽभ्यासः जरा प्रकृतिः आनुवंशिकी कृशप्रकृतिर्विकारानुबन्धः क्रोधश्च । कृशस्य लक्षणानि–कृशो न सहते व्यायामं अतिसौहित्यं, क्षुत्पिपासामयौषधमतिशीतोष्णमैथुनम् । कृशं प्रायो ग्रहणीगता रोगाः प्लीहा कासः क्षयः श्वासो गुल्माऽर्शांस्युदराणि चाभिबाधन्ते ( चसू. २१.११–१४ ) कार्श्ये चिकित्सासूत्रम्–तत्र सर्वे पानान्नभेषजं बृंहणं योजयेत् । अचिन्तया चित्ततुष्ट्या प्रियदर्शनादिना ध्रुवं संतर्पणेन निद्राभ्यासेन च कृशो वराह इव पुष्यति
( अहृसू. १४.३३-३४ )
वनस्पति० सर्जकः ( रा. ९.२०४ )
वनस्पति० कर्चूरः ( ध. ३.९४ )
वनस्पति० लकुचः ( रापरि. ९.४४ )

**कार्षिक**–वि., कर्षप्रमाणम् ( चचि. १३.१६३ )

**कार्ष्णगन्धिक**–वि., कृष्णगन्धः शोभाञ्जनः, तत्कृतः कार्ष्णगन्धिकः पिण्डः ( चचि. १४.४२ )

**कार्ष्णायस**–न., कृष्णलोहपात्रं, 'कान्तलोहपात्रम्' इत्यन्ये ( सुसू. ४६. ४४९ )

**कार्ष्णी**–स्त्री., वनस्पति० शतावरी ( रा. ४.४४० )

**कार्ष्ण्य**–न., कृष्णवर्णता ( चशा. ४.१६ )
खनिज० मण्डूरः ( रा. १३.३६ )

**काल**–वि., कृष्णवर्णः ( का. मूत्रकृच्छ्रचि. )
पु., नवद्रव्येषु एकं द्रव्यम् । 'खादीन्यात्मा मनः कालो दिशश्च द्रव्यसंग्रहः' ( चसू. १.४८; ) क्षणादिव्यवहारहेतुः । कालो हि भगवान् स्वयम्भूः अनादिमध्यनिधनः । संकलयति कालयति वा भूतानि इति कालः । कलयति संक्षिपतीति वा कालः, अथवा कालयति मृत्युसमीपं नयति इति वा कालः, अन्ये 'कालयति' इत्यत्र कलयति इति पठन्ति, कलयति संख्याति इति वा कालः । संकलयति भूतानीति वा, सुखदुःखाभ्यां भूतानि योजयतीति वा ( सुसू. ६.३ ) स एव संवत्सरादिस्वरूपो जगतः सृष्टिस्थितिप्रलयनिमित्तमिति कालकारणिकाः ( सुशा. १.११; ) स द्विविधः– संवत्सरो नित्यगो वा, आतुरावस्था आवस्थिको वा ( चवि. ८.८४; ) ( चवि. १.२२ ) ( सुसू. ४६.४६४ ) तत्र संवत्सरो द्विधा, त्रिधा, षोढा, द्वादशधा भूयश्चाप्यतः प्रविभज्यते तत्तत्कार्यमभिसमीक्ष्य ( चवि. ८.१२५ ) द्विधा–आदानविसर्गभेदेन, त्रिधा–शीतोष्णवर्षलक्षणः, षोढा–वसन्तादिऋतुभेदेन, द्वादशधा– काष्ठा, कला, नाडिका, मुहूर्त, यामाहोरात्रपक्षमासर्त्वयनवर्षभेदेन ( असंसू. ४.४; ) ( असंसू. २३.९ ) ( चसू. २६.१३ ) चिकित्सिते अवेक्षाभेदेनाऽवस्थाभेदेन च कालस्य विभागो यथा– दिनाऽऽतुरौषध–व्याधि–जीर्णलिङ्गर्तुभेदेन षड्विधः । तत्र दिनावेक्षो यथा पूर्वाह्णे वमनम्, आतुरावेक्षो यथा बलवान् प्रातर्निरन्नो भेषजं पिबेत्; दुर्बलस्तु लघुपथ्यान्नैर्युक्तं भेषजमद्यात् । औषधावेक्षं यथा– भैषज्यकालः प्रातरेव निरन्नं तथा प्राग्भोजनं च, प्रातर्भोजनोत्तरकालं, सायं भोजनोत्तरकालं, मध्येभुक्तं तु यदर्धं भुक्त्वोपयुज्यते, पश्चात् पुनरर्धं भुज्यते; मुहुर्मुहुः सभक्तम् अभक्तं वा भुज्यमानम्; सामुद्गं नाम यद् भक्तस्याऽऽदावन्ते च, अन्तराभक्तं नाम यदन्नेन संयोगात् संस्काराद्वातद्विमिश्रितं भुज्यते । ग्रासग्रासान्तरं चैवं दश भैषज्यकालाः । तथैवाऽपाने विगुणेऽन्नादौ, समाने विगुणे भोजनमध्ये, व्याने विगुणे प्रातराशस्योदाने भोजनोत्तरं वायौ प्राणे प्रदुष्टे तु ग्रासग्रासान्तरिष्यते । श्वासकासपिपासासु मुहुर्मुहुः अवचार्यम् । हिक्किने लघुनान्नेन संयुतं सामुद्गं देयम्; अरुचौ तु विचित्रैर्भोज्यैः संयुक्तमौषधं हितम्, व्याध्यवेक्षः कालो यथा–ज्वरे आमयस्य कालं वीक्ष्य ज्वराहादारभ्य षडहे यथाक्रमं पेयाकषाय–क्षीर–सर्पिः– विरेचनं देयम् । जीर्णलिङ्गापेक्षः कालो यथा–क्षुद्वेगमोक्षौ लघुतां विशुद्धिं जीर्णलक्षणं चावेक्ष्य भेषजमादेयमन्यथा हि दोषवत् स्यात् । ऋतुकालावेक्षं यथा–दोषाणां चयादीन् वीक्ष्य ऋतौ अवेक्ष्य सेव्यं वर्ज्यं वा आहारविहारौषधादिकर्म चिकित्सा कार्या ( चचि. ३०.२९६–३०६ )
पु., मृत्युः, ज्वरस्य मारणात्मकत्वात् स कालो यमो नियतिर्मृत्युरित्यादिनामभिरुच्यते ( सुउ. ३९.९५ )
वनस्पति० व्याघ्रनखम्, सुगंधिद्रव्यविशेषः ( रा. १२.११० )
कासमर्दः ( ध. ४.११८ )
चित्रकविशेषः ( रा. ६.१२७ )
रालः ( रा. १२.१७७ )
न., शारीर० कालकम् ( सुउ. १.१९ )

**( काला )**–स्त्री., वनस्पति० मञ्जिष्ठा ( ध. १.१८ )
त्रिवृत् श्यामा ( ध. १.२४३ )
नीलिनी ( ध. १.२३२; ) ( असंउ. २६ )
कालानुसारिवा, सारिवा ( सुउ. ५८.५९ )
काकोली ( चचि. ३.२५८ )
कासमर्दः ( सुचि. १७.१४ )
अहिंस्रा ( सुसू. ३७.६ ) ( वैशासिं )
कटुहिंस्रा ( सुचि. १८.१३ )
हिंस्रा ( सुचि. १८.४६ )
ग्रहमाता ( असंउ. ४ )

**( काली )**–स्त्री., वनस्पति० कालिः ( ध. २.७० )
कृष्णजीरकः
त्रिवृच्छ्यामा ( र. ११.१३१ )
कालाञ्जनी ( रापरि. ४.४३ )
पोतकी ( ध.४ परि० ५ ) शीतला, स्निग्धा, श्लेष्मला, वातपित्तजित्
वि., कृष्णवर्णयुक्ता ( असंशा. ४.१६ )

–कल्प–वि., ईषत् मृत्युसदृशम् ( सु.क. ४.४१ )
–कुष्ठ–न., वनस्पति० कंकुष्ठम् ( ध. ३.१४१ )
–कूट–पु., विष० कन्दविषभेदः ( सुक. २.५ )
न., महाविषं कालकूटाख्यं श्रीशेन सद्य एव निपीतं तदवशिष्टं कन्दादिरूपेण जातेषु विषेष्वन्यतमं काकचञ्चुनिभं च ( र. २९.१५ ) ( र. २९.७ )
शुष्को जम्बीरफलरूपो वर्तुलकन्दो, घ्राणमात्रान्मृत्युदायकं तीव्रं विषं भवति ( र. २.१५ )
पु., वनस्पति० सर्जकः ( रा.९.२०४ )
–कूटक–पु., वनस्पति० कारस्करः ( रा. परि. ९.३५ )
–घातिन्–वि., विषप्रकारः, विषस्य उपयोगादिवसादन्यो दिवसपक्षमासादि कालः तस्मिन् हन्तुं शीलम् अस्येति कालघाति ( विषम् ) ( सु.क. २.११ )
–चक्र–न., निमेषादियुगपर्यन्तः कालश्चक्रवत् परिवर्तमानः कालचक्रमुच्यते ( सुसू. ६.९ )
–चोदित–वि., कालप्रेरितावसानः, मुमूर्षुः ( चइं. ११.१९ )
–च्छिद्र–न., कालरहितः कश्चिदवकाशः ( चशा. ६.२८ )
–ज–वि., काले जातम् ( चचि. १. ( २ ) ४. )
–जात–वि., स्वकाले संजातम् ( चक. १.१० )
–ताल–पु., वनस्पति० तमाल ( रा.परि. ९.१५ )
–त्रिक–न., शीतोष्णवर्षालक्षणस्त्रिविधः कालः ( चचि. २४.६८ )
–दंष्ट्रा–स्त्री., मृत्युः ( असंसू. ९.१३६ )
–नियत–वि., कालेन निश्चितम् ( असंसू ९. १११–११२ )
–निर्यास–पु., वनस्पति० गुग्गुलुः ( ध. ३.१२७ )
–पक्व–वि., कालेन पक्वः आसन्नमृत्युत्वात्पूर्णकालः ( चइ. २.२२ ) ( असंशा. ९.१७ )
–पत्रका–स्त्री., वनस्पति० पत्रविषविशेषः ( असंउ. ४० )
–( पत्रिका )–स्त्री., वनस्पति० पत्रविषम् ( इंदु. असंउ.४० )
–परिहीत–वि., कालसंबद्धः ( चसू. ६.५ )
–परिणाम–पु., कालेन परिणमनम् । तत्र वर्षास्वोषधयस्तरुण्योऽल्पवीर्यास्ता एव कालपरिणामात् परिणतवीर्या बलवत्यो भवन्ति हेमन्ते ( सुसू. ६.११. चशा.४.२७ )
–पालक–न., वनस्पति० कङ्कुष्ठम् ( ध. ३.१४१ )
–पाश–पु., कालस्य नाम मृत्योः पाशः ( चइ. ११.१६ )
–पिपीलिका–स्त्री., कीट० कृष्णवर्णपिपीलिकाभेदः, मर्कोटः ( अहचि. १५ ) उदररोगे अन्त्रसंधानार्थमुपयुज्यते ( सुचि. १४.१७ ) द्र० 'पिपीलिका'.
–पुच्छ–पु., पशु० हरिणभेदः, तस्य मांसरसो जीर्णज्वरे हितः ( चचि. ३.१९० )
–पुच्छक–पु., पशु० ललत्कृष्णपुच्छः कूलचरमृगः, हरिणभेदः ( सुसू. ४६.९४. चशा. ८.२४. चसू. २७.४६ )
–पुष्प–पु., वनस्पति० धत्तूरः ( रा. १०.१२ )
–पेशिका–स्त्री., वनस्पति० जीरकभेदः, कृष्णजीरकः ( ध. २.७० ) द्र० ' जीरक. '
–प्रकर्ष–पु., कालपरिणामः ( चचि. १.२२ ) ( २ ) ( सुनि. ८.८ )
–प्रकृति–स्त्री., कालस्वभावः, कालस्वभावसंबद्धो दोषः ( चवि. ३.४८ )
गर्भोत्पत्तिकाले विद्यमानं कालरूपं कारणम् । यथा कालस्वभावस्तथैव गर्भशरीरं भवति ( चवि. ८.९५ )
–प्रतीक्षण–न., कालप्रतीक्षा ( चसू. १३.७७ )
–प्रियकरी–स्त्री., वनस्पति० अश्वगन्धा ( रा.४.४०२ )
–बलप्रवृत्त–वि., शीतोष्णवातवर्षाप्रभृतिनिमित्तो रोगः कालबलप्रवृत्ता ये शीतोष्णवातवर्षाप्रभृतिनिमित्तास्तेऽपि द्विविधा व्यापन्नर्तुकृता अव्यापन्नर्तुकृताश्च ( सुसू. २.४७ )
–बस्ति–( परिव० ) पु., बस्तिप्रयोगः, अत्र षोडश संख्याका बस्तयो दीयन्ते । प्रथमः स्नेहबस्तिः, ततः निरूहषट्केनान्तरीकृताः षट् स्नेहाः इति क्रमेण द्वादश, अन्ते च त्रयः स्नेहबस्तय एवं षोडश ( चसि. १.४८ )
पञ्चदशसंख्याकाः बस्तयः, एकः पूर्वं स्नेहः, अन्ते त्रयः स्नेहाः तथा षट् स्नेहाः पञ्चभिर्निरूहबस्तिभिरन्तरिताः ( अरु अहसू. १९.६४ )
–भोजन–न., युक्ते काले भोजनम् । आरोग्यकराणां श्रेष्ठं भवति ( चसू. २५.४० )
–मल्ल–पु., वनस्पतिं० अर्जक ( चचि. ३.२६७ ) ( जज्जटः )
–मल्लिका–स्त्री., वनस्पति० अर्जक ( चचि. ३.२६७ ) ( जज्जटः )

**–माल**–पु., वनस्पति० अर्जकः ( चचि. ३.२६७ ) ( ध. ४.५६ )
कृष्णार्जकः कृष्णमल्लिका, 'बर्बरिका इति लोके' ( ड. सुसू. ३८.१८ )

**–( मालक )**–पु., वनस्पति० अर्जकः कृष्णपत्रा क्षुद्र-तुलसी ( चक १.२५ ) ( चवि. ८.१४२ )

**–( माला )**–स्त्री., वनस्पति० अर्जकः, तुलसीभेदः ( सुसू. ४६,२२१ ) ( अहसू. १५.३० ) ( असंसू. १६.२४ )

**–( मालिका )**–स्त्री., वनस्पति० अर्जकः, कृष्णकुठेरकः कृष्णार्जकः ( असंसू. ७.१५७ )

**–माषी**–स्त्री., वनस्पति० बाकुची ( रा. ४.२२७ )

**–मुष्कक**–पु., वनस्पति० मुष्ककः ( असंसू. ३९.७ ) ( अहसू. ३०.८ )

**–मूल**–पु., वनस्पति० चित्रकः ( रा. ६.१२७ )

**–मृत्यु**–पु., योग्यकाले आयुषः पूर्णत्वात् समागतो मृत्युः ( चवि. ३.३७ )

**–मेषिका**–स्त्री., वनस्पति० मञ्जिष्ठा ( ध. १.१८ )

**–मेषी**–स्त्री., वनस्पति० मञ्जिष्ठा ( ध. १.१७ )
जीरकभेदः कृष्णजीरकः ( रा. ६.१०५ )
द्र० 'जीरक.'
बाकुची ( ध. १.१६६ )
त्रिवृत् ( श्यामा ) ( ध. १.२४३ )

**–मेह**–पु., रोग० पित्तजप्रमेहभेदः, पित्तस्य परिकोपेन यो मषीवर्णमुष्णमजस्रं मूत्रं प्रमेहति, तं कालमेहिनं विद्यात् ( चनि. ४.२५ ) ( चसू. १९.४ ) ( ९ ) ( असंनि. १०.१२ )

**–योग**–पु., कालस्य संयोगः, शरीरवृद्धिकरभावेष्वेकः ( चशा. ६.१२ )

**–रात्रि**–स्त्री., मृत्युरात्रिर्यमभगिनी ( सुनि. १०.१३ )
रेवतीग्रह० जातहारिणी ( का. रेवतीकल्प. ३८ )

**–लवण**–न., लवण० बिडलवणम् ( चचि. १३.१३४ )
सौवर्चलम् ( सुउ. ४२.९२ )

**–लोह**–न., खनिज० तीक्ष्णलोहम्, कृष्णायसम् ( ध. ६.२८; र. २५.६७; चचि. १७.१२९ )

**–लोहरजस्**–न., काललोहस्य चूर्णम्; मण्डूरम् ( चचि. ७.१७१; चसू. २१.२३ )

**–वित्**–वि.,कालज्ञः ( असंसू. ५ )

**–विध्वंसनरस**– पु., पारदयोग० सुवर्णरौप्यताम्र-धत्तूरादियुक्तः पाण्डुनाशनः ( र. १९.४९-५७ )

**–विनिश्चय**–पु., कालविचारः ( ४३.१० )

**–विपर्यय**–पु., विषमकालः, कालदुष्टिः ( चसू. २८.७ )

**–विभाग**–पु., ऋत्वादिरूपः कालभेदः (सूचि. ३.१२)

**–वृन्त**–पु. वनस्पति० पाटला ( असंसू. १४.३ )

**–वृन्तिका**–स्त्री., वनस्पति० पाटला ( ध. १.१२० )

**–वेदिन्**–वि., रोगिणोऽन्यस्य चाऽवस्थास्वभावविशेषानुमितं कालं ज्ञातुं शीलमस्येति कालवेदी ( असंसू. २.९ )

**–वैकृत**–न., कालस्य विकृतत्वं विषमत्वं वा यथा प्राप्तत्वाद्विपरीतस्वरूपम् ( असंसू. ९.८६ )

**–शाक**–न., शाक० श्राद्धार्हं कालियाशाकम्। गुणाः– कटु, शीतवीर्यं, दीपनं, रक्तं, पित्तकफहरं, वातकृत्, सरं, रुच्यं, मेध्यं, बल्यं, गरशोफजित् ( चसू. २७.९१; सुसू. ४६.२७२;) ( भाप्र., ) चुंचुशाक-मित्येके, कैडर्यपत्रमिति केरलेषु केचित्। कलंबभेदः, नाडीकशाकं द्विविधं तिक्तं मधुरमेव च ( अहकोष )
हिं.–नाडिकाशाक, नरिचा.
बं.–नलितपाट्.
म.–**कुळीची भाजी, नाडीशाक.**
गु.–करली.

**–शालि**–पु., कृष्णशालि, द्र० 'शालि' ( रा. १६.८६ )

**–शेय**–न., आहारद्रव्य० तक्रम् ( असंचि. १० )

**–षड्क**–न., रात्रिदिवसयोः षड्भागाः ते च पूर्वाह्ण-मध्यान्हाऽपराह्ण-प्रदोषाऽर्धरात्रप्रत्यूषाः इति ( सुउ. ३९.६२ )

**–संपत्**–न., कालस्य अनतितीक्ष्णत्वादिरूपा संपत् ( गुणवत्त्वम् ) ( चशा. २.६ )

**–संप्राप्ति**–स्त्री., संप्राप्तिभेदः, सङ्ख्या–प्राधान्य–विधिविकल्प–बल–कालविशेषैर्भिद्यमाना संप्राप्तिः द्र० 'संप्राप्ति' ( च. १.१२ (१) )

**–स्कन्ध**–पु., वनस्पति० विट्खदिरः खदिरभेदः, द्र० 'खदिर' ( र. ८.१८ )
तमालः ( सुसू. ३८.८ )
तिन्दुकः ( ध. ५.४० )
उदुम्बरः ( रा. ११.१३६ )

**–स्फोट**–पु., रोग० तस्य चिकित्सा–पुत्रजीवस्य मज्जां तु जलैः पिष्ट्वा प्रलेपनात्। कालस्फोटं विषस्फोटं सद्यो हन्यात्सवेदनम् ( र. २४.१२९ )

**–स्वभाव**–पु., कालस्य स्वभावः, अनेन च ग्रीष्मे कृताभ्यां देहाऽऽहारयोर्लघुरूक्षत्वाभ्यां चीयमानोऽपि लघुः रूक्षो वायुर्न कुप्यति उष्णेन प्रतिबद्धत्वात्। वर्षाकाले जायमानाम्लविपाकेनाहारेण चीयमानमप्यविपाकं पित्तं न कुप्यति शीतेन प्रतिबद्धत्वात्। शिशिरे देहे आहारे च संजाताभ्यां स्निग्धशीताभ्यां प्रकृत्या स्निग्धशीतोऽपि श्लेष्मा चीयते, न तु कुप्यति शीतेन घृतवद् घनीभूतत्वात्।
( अहृसू. १२.२५–२८ )

**–स्वभावमार्ग**–पु., कालस्य स्वाभाविको मार्गः। आदानकाले निसर्गकाले वा सूर्यस्य मकरकर्कराशिमध्ये भ्रमणम् ( असंसू. ४.६ )

**कालक**–पु., कृष्णवर्णः ( सुनि. १३.४३ )
धान्य०, ( सुसू. २०.५ )
सर्प० ( असंसू. ७.७६ )
न., शारीर०, नेत्रगतं कालकास्थि
( सुउ. १.१९)

**–चूर्ण**–न., योग० पाठा, व्योषम्, रसाञ्जनं त्रिफला, लोध्रं, चित्रकः, इत्येभिर्युक्तः दन्तास्यगलरोगेषु गण्डूषधारणार्थमुपयुज्यते
( चचि. २६.१९४–१९५ )

**कालङ्कतक**–पु., वनस्पति० कासमर्दः ( चक. १.२५ )

**कालङ्कत**–पु., वनस्पति० कासमर्दः ( चवि. ८.१३५ )

**कालाकालसंज्ञा**–स्त्री., आतुरावस्थासु तु कालाकाल–संज्ञा। तद्यथा–अस्यामवस्थायामस्यौषधस्य कालोऽकालो वा ( असंसू. २३.१२ )

**कालागरु**–न., वनस्पति० अगरु-भेदः कृष्णागरु, द्र० 'अगरु' ( रा. १२.४० )

**कालाञ्जन**–न., अञ्जनम्, सौवीराञ्जनम्
( सुउ. ४५.३२ ड. )

**कालाञ्जनी**–स्त्री., वनस्पति० गुणाः–कटुः, उष्णा, मलामकृमिशोधनी, अपानावर्तशमनी जठरामयहारिणी च ( रापरि. ४.४३ )

**कालानुवर्तिन्**–वि., कालपराधीनः ( चसू. २७.१९७ )

**कालानुसारक**–न., वनस्पति० तगरम्
( रा. १०.१०३ )

**कालानुसारिन्**–पु., वनस्पति० तगरम् ( सुचि. ३.६० )

**कालानुसारिवा**–स्त्री., वनस्पति० सारिवाभेदः, कृष्णसारिवा, द्र० 'सारिवा.' ( सुउ. ५८.६५, सुचि. २२.६९ )

तगरभेदः ( सुक. ६.१७ )

**कालानुसारी**–स्त्री., वनस्पति० कृष्णसारिवा, द्र० 'सारिवा', ( सुचि. २०.५५ )

**कालानुसार्य**–न., तगरम् ( जज्जटः ) ( चचि. ३.२५८ )
शैलजम् इति केचित् ( सुसू. ३७.२६ )
( शैलजम्=शैलेयम् ) चन्दनभेदः ( चचि. ३ २५८. ( चक्र )

**कालानुसार्यक**–न., खनिज० शैलेयम् ( ध. ३.७३ )

**कालानुसार्या**–स्त्री., कालानुसारिवा
( सुक. ५.६५–६८ )
तगरम् ( सुचि. १७.१५ )
चन्दनभेदः, द्र० 'चन्दन' ( चचि. ४.१०३ )

**कालानुसार्यादितैल**–न., योग० कालानुसारी, अगुरु, एला, जाती, चन्दनम्, पद्मकम्, शिला, दारु, अमृता, तुत्थम् एतैः सिद्धं तैलं रोपणार्थं युज्यते
( असंउ. ३१. तत्प्रपृ. २९८ )

**कालान्तरप्राणहर**–वि., मर्मप्रकार० कालान्तरप्राणहराणि पक्षान्मासान्मारयन्ति, तेष्वपि तु क्षिप्राणि कदाचिदाशु मारयन्ति ( सुशा. ६.२३ ) द्र० 'मर्म'

**कालान्ध**–वि., कालेन आसन्नतरमृत्युनाऽन्धत्वं प्राप्तः
( चइं. ११.१८ )

**कालापेक्ष**–पु., ऋत्वहोरात्रवयोव्याधिभोजनेषु प्रत्येकं क्रियमाणो भेदः तं तं कालं अपेक्षते इति कालापेक्षः ( चचि. ३०.३०८ ) द्र० 'काल'.

**कालाभ्रक**–न., खनिज० कृष्णाभ्रकम्
( र. २०.११ ) द्र० 'अभ्रक'

**कालाम्ल**–वि., कालेन अम्लम् ( अहृसू. ५.७८ )

**कालायक**–न., वनस्पति० दारुहरिद्रा ( ध. १.५८ )

**कालायशाक**–न., शाक० त्रिपुटक–कलायस्य पत्राणि शाकत्वेनोपयुज्यंते, **गुणाः**–भेदनं मधुरं रूक्षमतिवातलं च ( सुसू. ४६–२७७ )

**कालायस**–न., खनिज० लोहभेदः, कृष्णलोहः, द्र० 'लोह' ( चचि. १.५८ )

**कालि**–पु., वनस्पति० धत्तूरः ( ध. ४.७ ) धोत्रा.
स्त्री., जीरकभेदः, कृष्णजीरकः ( ध. २.७० ) द्र० 'जीरक'

**कालिका**–स्त्री., वनस्पति० काकोली ( रा. ३.१६६ )
कर्कटशृङ्गी ( रा. ६.१११ )
कालीयकम् ( सुउ. ५१.२३ )
जीरकभेदः ( स्थूल ) जीरकः ( ध. २.५९ )
द्र० 'जीरक'
खण्डः ( र. १७.१३७ )

कर्णगतदैवकृतछिद्रसमीपवर्तिनी कृष्णवर्णा सिरा (सुसू. १६.५)

**कालिङ्ग**–पु., वनस्पति० इन्द्रयवः (र. १०.९७)
फल० कलिङ्गः (र. ३०.६३)
कलिङ्गडम् (अहृसू. ६.८७)

**–मान**–न., मान० कलिङ्गदेशे भवं मानम्। मानं च द्विविधं, कालिङ्गं मागधं च, कालिङ्गान्मागधं श्रेष्ठमिति कथ्यते (चक. १२.१०५)

**कालिनी**–स्त्री., रसबन्धनप्रयोगयोग्या स्त्री। तस्या लक्षणम्–श्यामवर्णा, पद्मलोचना, कुञ्चितकेशी, सुरूपा, तरुणी, विस्तीर्णजघना, शुभा, पीनस्तन-भारेण नम्रिता, चुम्बनालिङ्गनस्पर्शकोमला, मृदु-भाषिणी, अश्वत्थपत्रसदृशयोनिदेशसुशोभिता, कृष्णपक्षे पुष्पवती च या नारी सा 'कालिनी' इति कथ्यते। रसायने, रसबन्धप्रयोगे च उत्तमा स्मृता (र. ६.३३)

**कालिन्द**–न., फलशाक०, कृष्णबीजं कूष्माण्डसदृशं फलम्; कलिन्द इति लोके। तद्गुणाः–दृष्टिशुक्र-क्षयकरं कफवातकृच्च (सुसू. ४६.२१४)

**कालिन्दक**–पु., वनस्पति० जोन्नालः, कूष्माडभेदः (सुसू. ९.४) द्र० 'कूष्माण्ड'

**कालिन्दी**–स्त्री., वनस्पति० कटभी (रापरि. ९.३८)
त्रिवृत् (ध. १.२४३)

**–रक्ता**–त्रिवृत् श्यामाभेदः रक्ताकालिन्दी (रा. ६.३६९) द्र० 'त्रिवृत्'

**कालीय**–न., शारीर० रक्तस्यानिलयोगात् कालीयम् (असंशा. ५.४८)
कालीयकम् (रा. १२.१५ सुचि. २५.३९)
कृष्णचन्दनम् (सुचि. २०.३५)
द्र० 'चन्दन' 'कालीयक'

**कालीयक**–न., वनस्पति० दारुहरिद्रा (रा. ६.८४)
कृष्णचन्दनम् (असंचि. १८)
चन्दनभेदः, मलयादि चन्दनमिति प्रसिद्धम् (सुसू. ३८.८ चचि. १६.५४)
पीतचन्दनम्–गुणाः–तिक्तं, शीतं, हृद्यं, परं कान्तिदं कुष्ठश्लेष्मानिलापहं, कण्डूविचर्चिकादद्रुकृमिहृत् रक्तपित्तजित् (ध. ३.८ रा. १२.१५)
हिं.—पीला चंदन.
म.—**पिवळे चंदन.**
गु.—पीळो चंदन.
बं.—पीत चंदन.
फा.—संदल अबीयज,

**कालुष्य**–न., मलसंकीर्णत्वम्, मलिनता (र. ८.९५)

**कालेयक**–पु., वनस्पति० कालीयकः (सुसू. ३९.९)
न., वनस्पति० दारुहरिद्रा (इंदुः असंउ ३०; ध. १.५८)
दारुहरिद्रानुकारि द्रव्यम् (सुउ. ४४.३१)
कालीया काष्ठं, कृष्णचंदनम् (चसू. ३.२६)
कालीयकः (सुक. ६.१५)
अगरु (ध. ३.२७)
कुङ्कुमम् (रा. १२.२१)

**कालोत्थलवण**–न., काललवणम्, सौवर्चलम् (चचि. १५.१७१)

**कालोपपन्न**–वि., आवस्थिककालयोग्यम् (सुउ. २४.१८)

**कालिमकाभेदा**–स्त्री., वनस्पति० महाकरञ्जः (ध. ५.११०)

**कावीर**–कुरुक्षेत्रात् दक्षिणदेशविशेषः सोयं कावेरी-नदीपरिसरप्रदेशः संभाव्यते (काखि. २५.१२)

**काश**–पु., वनस्पति० इक्षुरकः, श्वेतचामरपुष्पो नाम तृणविशेषः, चमरपत्रस्तृणपञ्चमूलेष्वेकः, स्तन्य-जननगणे एकं द्रव्यम् (चसू. ४.१२); मूत्र-विरेचनीयगणे एकं द्रव्यम् (चसू. ४.१५) काशमूलं निर्वापणप्रदेहे (चसू. ३.२७) वीरतर्वा-दिगणे एकं द्रव्यम् (सुसू. ३८.१२) कुशकाशनल-दर्भकाण्डेक्षुका इति तृणसंज्ञकः, मूत्रदोषविकारं, रक्तपित्तं च विनाशयेत् (सुसू. ३८.७५).
गुणाः—स्वादुर्हिमस्तर्पणो वृष्यो बलकृद्रुच्यः पित्तास्रकृच्छ्रजित्, श्रमशोषदाहहरः आमशोष-क्षयापहः (ध. ४.१३०; रा. ८.२०२)
पित्ताश्मरीनाशनः (सुचि. ७.९).
हिं.—कास. काही.
म.—**कसाई, कसाड.**
गु.—कांसडो.
बं.—केशेघास.

**काशिपति**–पु., धन्वन्तरिः, सर्वशास्त्रार्थतत्त्वज्ञत्वादिगुण-युक्तः काशीराजो मुनिः राजर्षिः (सुउ. १८.३)
राजर्षि० वामकः
यज्ञःपुरुषविषये विवदमानेषु एकः (चसू. २५.५)

**काशीराज**–पु., वाराणसीजनपदनृपतिः, धन्वन्तरिः काशिपतिः (सुसू. १.३)

**काशीस**–न., खनिज० कासीसम् (चसू. ३.५)

**काश्मरी**–स्त्री., वनस्पति० 'श्रीपर्णी' 'गांभारीवृक्षः'

–( वेधनी )–स्त्री., वनस्पति० कोशातकी ( ध. १.१९२ )
–वेधनतैल–न., कोशातकीतैलम् ( सुसू. ४५.११५ )
–संसर्जन–वि., कृतपेयादिक्रमः ( चचि. ३०.२५६ )
कृतक–वि., कृत्रिमम् ( र.२५.१०४ )
पु., सुगन्धिद्रव्य०, तुरुष्क ( ध. ३.२३ )
न.,–लवण०, बिडम् ( ध. २.२८ )
खनिज०, रसाञ्जनम् ( रा. १३.२२१ )
कृतानुयात्र–वि., कृतानुगमः ( सुउ. २५.१६ )
कृतान्न–न., संस्कृतमन्नम् ( सुसू. ४६.३४० )
कृतोपचार–वि., पुष्पैः कृतरचनाविशेषं यथा—धारागृहम् ( सुउ. ४७.६१ )
कृत्त–वि., लक्षण० छिन्नम् ( चचि. १.३ ( ३ )
–नख–छिन्ननखः ( सुचि. २.५७ )
कृत्तिका–स्त्री., षट्संख्योपेताः सप्तर्षिभार्याः ( सुउ. २८.२० )
कृत्य–वि., साध्यः ( सुसू. २३.१ )
–( कृत्या )–स्त्री., अभिचारः ( चचि. ९.७२ )
अभिचारदेवता ( असंउ. १०. ( इन्दु पृ. ८२ )
कुपितमान्त्रिकाभिचारजनिता राक्षसी ( सुसू. ५.२० )
–ता–स्त्री., विद्वेषः ( सुक. १.४–६ ) तथा च कृत्यशब्दार्थोऽमरकोषे,–कृत्यं क्रिया देवतयोस्त्रिषु विद्विष्टकार्ययोः इति ( ड० )
कृत्याकृत्यविधि–अध्यायसंज्ञा० ( सुसू. २३.१ )
कृत्रिम–पु., सुगन्धिद्रव्य० तुरुष्कः ( ध. ३.२२ )
जवादि ( रापरि १२.६ )
निर्यास०; चीनकर्पूरः ( रा. १२.६३ )
लवण०; नीलकाचोद्भवम्, काचलवणम् ( रा. ६.४५ )
–गुणोपधान–न., देशकालादिविरोधे सति तद्गुण-प्रतीकारार्थं यत् क्रियते तत्, यथा–शीते शीतप्रतीकारार्थमुष्णसदनादिकरणम् ( चसि. २.२३ )
–विष–न., विविधैरौषधैर्मिलित्वा यत्क्रियते तत् (अहउ. ३५.६ चचि. १३.१३२ सुक. २.२४–२५)
कृत्रिमक–न., लवण०; बिडलवणम् ( ध. २.२८ )
कृत्स्न–वि., सर्वम् ( सुनि. ६.२३ )
कृमि–पु., कृमि० क्रिमिः ( चवि. ७.९ )
–कर–पु., कृमि० प्राणनाशनः संकीर्णः (असंउ. ४३)
–कर्ण–पु., कर्णरोग० ( र. २४.१ ) लक्षणम्–यदा कर्णे जन्तवो मक्षिकाश्च पतन्ति सूक्ष्मकृमीन् उत्पादयन्ति तेन च मलसंचयान्मार्गरोधो भवति तदा कृमिकर्णको भवति। 'अयं व्याधिः सांनिपातिकः, इति विदेहोक्तिः ( सुउ २०.१३ )



–कर्णक–पु., कृमिकर्णः ( र २४१ )
–ग्रन्थि–पु., नेत्ररोग०, अपाङ्गे कनीने वा कण्डूषा-पक्ष्मपोटवान् पूयास्राव्यार्तिमान् कृमियुतो ग्रन्थि-र्भवेत् ( असंउ १३ )
–घाति–न., वनस्पति० विडङ्गम् (सुउ ४२.४२–४४)
–घ्न–पु., वनस्पति० बीजपूरकम् ( ध. ५.२३ )
भल्लातकः ( रा. ११.२०१ )
पलाण्डुः ( रा. ७.१०० )
कोलकन्दः ( रापरि ७.३८ )
न., उपक्रम०, कृमिनाशनं ( सुचि १.८ ) ( अहसू. ५.५६ )
–( घ्नी )–स्त्री., वनस्पति० विडङ्गम् ( ध २.२१ )
धूमपत्रा ( रापरि ५.८ )
–घ्नवर्ग–पु., क्रिमिघ्नवर्गः ( चसू ४.११ )
–घ्नावलेह–पु., कृमिहरलेहः ( सुउ ५४.२७ )
–च्छिद्–पु., वनस्पति०, विडङ्गम् ( र. २०.६५ )
–जग्ध–न., वनस्पति० अगरुभेदः, काष्ठागरु
–जलज–पु., भैषज्य० कृमिशङ्खः ( रा. १३.२४७ )
–जा–स्त्री., प्राणिजद्रव्य० लाक्षा ( ध. ३.८२ )
–जित्–न., वनस्पति० विडङ्गम् ( अहसू. १०.३० )
कृमिघ्नम् (असंसू. १२.३८)
–जुष्ट–वि., कृमिभक्षितम् ( सुसू. ४६.२९७ )
–तरु–पु., वनस्पति०, कोषाम्रः ( ध. ५.९ )
–दन्तक–पु., दन्तरोग० वातप्रकोपात् कृष्णः छिद्री चलः स्रावी संरम्भी महारुजोऽनिमित्तरुजः कृमिदन्तकः ( सुनि., १६.२९ )
–दोष–पुं., रोग० कृमिप्रकोपः ( सुउ. ४०.५ )
–पात–पु., पारदयोग० मनःशिलाजमोदेन्द्रयवादि-युक्तोऽयं योगविशेषः क्रिमिपातकारी ( र. २०.२४१–४२ )
–प्रतिभट–न., वनस्पति० विडङ्गम् ( र. १३.६८ )
–भक्षण–वि., लक्षण० कृमिभिर्भक्ष्यमाणो व्रणः, अनेन व्रणलक्षणेन व्रणस्य कृच्छ्रत्वमुपजायते ( चचि. २५.३१ )
–लोह–न., खनिज० मुण्डलोहम् ( रा. १३.२९ )
–वारिरुह–पु., भैषज्य० कृमिशङ्खः (रा. १३.२४७)
–शङ्ख–पु., भैषज्य० शङ्खः ( रा. १३.२४७ )
–शरारिन्–पु., आग्नेयकीट० ( इन्दु असंउ. ४३ )

–शराविन्–पु., आग्नेयकीट० (असंउ. ४३)
–शूलघ्न–पु., पारदयोग० शूलनाशनः (र. २०.२४०)
–सरारिन्–पु., कृमि० अयं सविषः, अयमग्निप्रकृतिकः पित्तजरोगान् करोति ( सुक. ८.८-१२ )
–हर–न., वनस्पति० विडङ्गम् (अहृसू. २०.३७)
–हा–स्त्री., वनस्पति० विडङ्गम् (ध. २.११)
–हृद्रुद–पु., कृमिजहृद्रोगः ( चचि. २६.१०३ )
कृमिण–वि., कृमिव्याप्तम्, कृमिण इति कथम्, कृमयोऽस्य विद्यन्ते इति कृमिणः (असंशा. ११)
–कोष्ठ–वि., लक्षण० कृमियुक्तकोष्ठः (असंसू. २७.७)
कृमीलक–पु., वनस्पति० मकुष्ठकः ( ध. ६.९२ )
कृश–वि., लक्षण० अमेदस्वी, अष्टनिन्दितपुरुषेष्वेकः ( सुसू. १५.३५ ) अल्पमांसो निर्मांसो वा ( सुउ. ४०.१७४ ) दुर्बलः ( सुसू. ४६.४२९ )
प्रतुदपक्षि० (असंसू. ७.७२)
–शाख–पु., वनस्पति० पर्पटः (रा. ५.६६)
कृशर–पु., आहारद्रव्य० लवणार्द्रकहिङ्गुदालिसंमिश्रास्तण्डुलाः सलिले पक्वाः कृशराशब्देन व्यपदिश्यन्ते। तैः संभूता इयं शुक्रवर्धनी बल्या गुरुः पित्तकफकरी बुद्धिदा विष्टम्भमलमूत्रकरी दुर्जरा च ( भाप्रमिश्रप्र ) पिण्डस्वेदार्थमुपयुज्यते ( चसू. १४.२५ )
( कृशरा )–स्त्री., आहारद्रव्य० कृशरः ( सुचि. २५.३५ )
–पिण्ड–पु., तिलतण्डुलमाषकृतयवागूपिण्डः वातशूले स्वेदनार्थमुपयुक्तः ( सुउ. ४२.८९ )
कृशाङ्गता–स्त्री., रोग० रसप्रदोषजरोगेष्वेकः (चसू. २८.१०)
कृशानु–पु., वनस्पति० चित्रकः ( रा. ६.१२४ )
कृशानुरग्निः, सर्वेऽग्निपर्यायवाचिनः शब्दाश्चित्रकौषधिवाचका इति सङ्केतः
अग्निः ( र. १२.१७ )
कृशाशय–वि., दोषशून्यामाशयः (चसि. १२.४)
तिलतण्डुलमाषकृता यवागूः ( चसू. १३.६६ )
तिलौदनः ( सुचि. २५.३५ )
तिलतण्डुलमाषकृता पेया ( अहृसू. ७.३८ )
कृषि–स्त्री., धान्योत्पादनव्यापारः ( असंसू. ३ )
कृषिका–स्त्री., वनस्पति० मूषककर्णी ( रापरि. ३.२१ )
कृष्ण–पु., वनस्पति० राजसर्षपकः ( १६.७० )
जीरकभेदः कृष्णजीरकः ( ध. २.७० )
द्र० 'जीरकः'
मरिचम् ( ध. २.८८ )
कृष्णा, पिप्पलीत्यर्थः ( र. ३०.१०७ )
खनिज० सीसकम् ( ध. ६.२१ )
अञ्जनम् ( ध. ३.१५१ )
वर्ण० ( सुसू. ३२.३ )
मूषिक० दष्टलक्षणानि दंशे शोफोऽसृक्छर्दिः ( सुक. ७.१३ )
लवण० कृष्णलवणम् ( हे. अहृसू. १०.२७ )
नयनस्य कृष्णमण्डलाख्यो भागः ( सुउ. १.११–१२ )
(कृष्णा)–स्त्री., वनस्पति० पिप्पली ( सुचि. १५.२०–२१ )
सारिवा ( ध. १.१६२ )
द्राक्षा ( ध. ५.५६ )
नीली नीलिनी ( रा. ४.३५० )
कटुका ( रा. ६.५५ )
काश्मरी ( ९.१४७ )
लूता० दंशलक्षणम्–पुरीषगन्धिरल्पासृग्ज्वरमूर्च्छावमीदाहकासश्वासहेतुः ( सुक. ८.११६–१७ )
जलौका० अञ्जनचूर्णवर्णा पृथुशिरा (सुसू. १३.११)
–कञ्चुक–पु., वनस्पति० चणकः ( ध. ६.१०१ )
–कपालिकाशूर्प–पु., कृष्णकपालिकेषिका नलमुञ्जवंशादिभवा। तत्कृतः शूर्पः ( चशा. ८.४२ )
–कर्कटक–पु., कर्कट० अयं पादिष्वेको बल्यः कोष्णोऽनिलापहश्च ( सुसू. ४६.१११ )
–कर्मन्–न., रूढानां शुक्लव्रणानां समानवर्णापादकं कर्म, येन स व्रणस्त्वक्सवर्णो भवति ( सुचि. १.८ )
–कापोती–स्त्री., वनस्पति०, सोमसमवीर्या महौषधिः 'सक्षीरां रोमशां मृद्वीं रसेनेक्षुरसोपमाम्। एवं रूपरसां चापि कृष्णकापोतिमादिशेत् ॥' ( सुचि. ३०.१२,१३ ) '......गोनस्यजगरीकृष्णकापोतीनां सनखमुष्टिं खण्डशः कल्पयित्वा क्षीरेण विपाच्य अभिघारितमभिहुतं च सकृदेवोपयुञ्जीत ' ( सुचि. ३०.५ )
–काम्बोजिका–स्त्री., कृष्णगुञ्जाफलम् (र. १८.४८)
–काष्ठक–न., वनस्पति० अगरू ( रा. १२.४० )
–गतरोगविज्ञानीय–पु., अध्यायसंज्ञा० (सुउ. ५.१)
–गन्ध–पु., वनस्पति० शिग्रुः ( चचि. ८.१२९ )
–( गन्धा )–स्त्री., वनस्पति० शिग्रुः, शमीत्यपरे ( ड. सुचि. १८.५ )

–गन्धासव–पु., आसुतं तत्तदनुपानविचारानुसारं पर्णमृगमांसभक्षणोत्तरमयमनुपानविशेषत्वेन प्रोक्तः पर्णमृगाणामनुपानविशेषः ( सुसू. ४६.४३२ )
–गलक–पु., पक्षि० मयूरः ( र. ११.१३१ )
–गोक्षीर–न., कृष्णधेनोर्दुग्धम् ( र. १८.५१ )
–गोधा–स्त्री., सविषप्राणि० गुणाः–सौम्या श्लेष्मप्रकोपणी कफविकारहेतुः ( सुक. ८.१२–१५ )
–गौर–पु., व्रीहि० शीतः स्निग्धो लघुः स्वादुस्त्रिदोषघ्नश्च ( चसू. २७.१३ )
–चूडिका–स्त्री., वनस्पति० गुञ्जा ( रा. ३.४६ )
–चूर्ण–न., खनिज० मण्डूरम् ( रा. १३.३६ )
–जटा–स्त्री., वनस्पति० जटामांसी ( ध. ३.४५ )
–तण्डुला–स्त्री., वनस्पति० इन्द्रयवः ( ध. २.१५ ) कर्णस्फोटा ( रापरि. ३.४१ )
–तुण्ड–पु., कीट०, गुणाः–अयं सविषः अग्निप्रकृतिकोऽसौ पित्तजरोगान् करोति ( सुक. ८.८–१२ )
–धत्तूर–पु., वनस्पति० धत्तुरः ( र. २३.१३ )
–नाग–न., खनिज० सीसकम् ( र. १७.६७–६८ )
–पर्ण–न., कृष्णताम्बूलपत्रम् ( र. २०.२१६–२१७ )
–पाकफल–पु. न., वनस्पति० करमर्दकम् ( ध. ५.१०२ )
–पाटली–स्त्री., वनस्पति० कृष्णपुष्पा पाटली ( असंउ. ८ )
–पाण्डुत्व–न., लक्षण० कृष्णत्वसहितं पाण्डुत्वम् ( चचि. १६.१७ )
–पिण्डीतक–पु., वनस्पति०, मदनभेदः कृष्णमदनः ( असंउ. २८ ) द्र० 'मदन'
–फला–स्त्री., वनस्पति० बाकुची ( ध. १.१६५ )
–बर्बर–पु., वनस्पति० बर्बरभेदः कृष्णबर्बरः ( रापरि. १०.४८ )
–बीज–न., पिप्पलीतण्डुलः, नेत्रपाकेऽञ्जनार्थमुपयुक्तः ( सुउ. १२.४४ )
–भारद्वाज–द्र० 'बर्बर'
–भूमिजा–स्त्री., वनस्पति० गोमूत्रिका ( रापरि. ८.४८ )
–भेदा–स्त्री., वनस्पति० कटुका ( ध. १.३७ )
–मण्डल–न., नेत्रगतः कृष्णवर्णो वर्तुलाकारो विभागः ( सुउ. १.१५ )
–मत्स्य–पु., मत्स्य० अयं नादेयो नाम नदीसमुद्भवः। लक्षणम्–' कृष्णमत्स्यस्तु शकली बहुकण्टकसंयुतः। कषायवर्णो रक्ताक्षः...'( सुसू. ४६.११३–११४ ) अपतानके अस्य वसोपयुज्यते ( सुचि. ५.१८ )

–मल्लिका–स्त्री., वनस्पति० अर्जकभेदः, कृष्णार्जकः ( ध. ४.५६ ) द्रष्टव्यं 'अर्जक'
–मांस–न., शारीर० यकृत् ( र. २३.६१ )
–माणिक्य–पु., ( र. २०.३१–३२ ) पारदयोग० सुवर्णमाक्षिकगन्धकयुक्तः कुष्ठनाशनः
–मालुक–पु., वनस्पति० अर्जकभेदः कृष्णार्जकः ( रा. १०.८६ ) द्र० 'अर्जक'
–मीन–पु., मत्स्य० कृष्णमत्स्यः कण्टकयुक्तो मत्स्यः ( र. २८.७७ )
–मुद्ग–पु., वनस्पति० मुद्गभेदः 'वासन्ताः कृष्णमुद्गाश्च' मुद्गाः कृष्णवर्णा इत्यर्थः ( ध. ६.८३ ) द्र० 'मुद्ग'.
–मुष्कक–पु., वनस्पति०, मुष्ककः ( ध. ५.१३२ )
–मूला–स्त्री., वनस्पति० सारिवा ( र. १७.४३–४६ )
–मूली–स्त्री., वनस्पति० कृष्णमूला ( र. १७.४३–४६ )
–लवण–न., लवण० सौवर्चलम् ( ध. २.३० )
–ला–स्त्री., वनस्पति० गुञ्जा ( ध. ४.२९ ) काचलवणम्, नीलकाचोद्भवम् ( रा. ६.४४ )
–लोह–न., खनिज० लोहभेदः तीक्ष्णलोहम् ( सुसू. ३८.६२–६३ ) गुणाः–चक्षुष्यं कषायं स्वादु तिक्तकं लेखनं शीतं वातलं कृमिकुष्ठकफनाशनं गात्रशैथिल्यपालित्यपाण्डुरत्वघ्नं शोषशोफविनाशि च ( असंसू. १२.१७–१८ )
–लोहक–न., खनिज० लोहम् ( ध. ६.२६ )
–लोहाद्यञ्जन–न., अञ्जन० कुमाराणां कुकूणके हितम् ( सुउ. १९.१४ )
–वर्ग–पु., द्रव्यगण० रसकर्मणि प्रशस्तः, कदलीकारवल्ली त्रिफला नीलिका देवनलः कर्दमः कासीसं बालाभ्रं चेति ( र. १०.९४ )
–वल्लिका–स्त्री., वनस्पति० जन्तुका ( रा. ३.१२८ ) द्र० 'जन्तुका'.
–वल्ली–स्त्री., सारिवा ( ध. १.१६२ )
–वृन्तका–स्त्री., वनस्पति० काश्मरी ( ध. १.११७ )
–वृन्ता–स्त्री., वनस्पति० माषपर्णी ( ध. १.१३६ )
–व्रीहि–पु., वनस्पति० व्रीहिः ( ध. ६.७२ ) व्रीहिषु श्रेष्ठः कृष्णतुषतण्डुलः, अयं कषायानुरसो लघुश्च ( सुसू. ४६.१४ )
–शण–पु., वनस्पति० शणः, कृष्णपुष्पशणवृक्षः ( चचि. २६.२६९ )

–शालि–स्त्री., वनस्पति० व्रीहिभेदः कृष्णव्रीहिः ( ध. ६.७० )

–शालुक–पु., वनस्पति० अर्जकभेदः, कृष्णार्जकः ( ध. ४.५६ ) द्र० 'अर्जक'

–शिंशपा–स्त्री., वनस्पति० शिंशपा० ( रा. ९.१९८ )

–शिग्रु–पु., वनस्पति० शिग्रुः ( रा. ७.६२ )

–शैरेयक–पु., वनस्पति० झिण्टिका, कृष्णझिण्टी ( चक्रः चचि. २६.२६८ ) 'कृष्णसैरीयकः' इत्यपि ( चचि. २६.२६८ )

–सत्त्व–न., कृष्णरूपाकृतिः ( सुउ. ६१.१२ )

–सर्प–पु., सर्प० राजिमन्थः ( चचि. २३.१३६ ) दर्वीकरः ( सुक. ४.३४ (१ ); दर्वी फणा, तां करोति उन्नमयति कुपितः सन्निति दर्वीकरः

–सर्पमसी–स्त्री., कृष्णसर्पस्य दग्धत्वेनातिकृष्णत्वं प्राप्तस्य चूर्णम् ( सुचि. ९.१७ )

–सर्पविष–न., विष०, दूष्योदरे उपयुज्यते, तदर्थमिक्षुकाण्डानि वल्लीफलानि वा कृष्णसर्पेण भक्षयेत् ( सुचि. १४.८ )

–सर्पशिरस्–न., नेत्ररोगेषु तर्पणार्थमस्य क्वथनोत्पन्नः स्नेह उपयुज्यते ( असंउ. १९ )

–सर्पाख्या–स्त्री., वनस्पति०, वाराही, इयं काश्मीरादिदेशेषु वसन्तकाले दृश्यते ( सुचि. ३०.३४ )

–सर्षपा–स्त्री., वनस्पति०, राजसर्षपकः ( ध ४.४३)

–सारथि–पु., वनस्पति०, अर्जुनः ( रा ९.१९२ )

–सारा–स्त्री., वनस्पति० शिंशपा ( ध. ५.१२१ )

–सारिवा–स्त्री., वनस्पति० सारिवा ( सुसू. ३८.४.५ )

–सिकता–स्त्री., कृष्णवर्णवालुका, इमामग्निवज्ज्वलितां विधाय जले प्रक्षिप्य तज्जलं तृष्णासु शमनार्थं पेयम् ( चचि २२.४४ )

–सैर्यक–पु., वनस्पति०, कुरण्टभेदः ( र. ३०. ५८.५९ ) द्र० 'कुरण्टक'

–हिरण्य–पु., वनस्पति० धत्तुरभेदः कृष्णधत्तुरः ( र. १७.१३७ )

**कृष्णा**–स्त्री.,

**कृष्णाख्या**–स्त्री., पुनर्नवा ( रा. ५.४१० )

**कृष्णागुरु**–न., वनस्पति०, अगरुः ( ध. ३.२५ )

**कृष्णाजाजी**–स्त्री., वनस्पति० जीरकभेदः कृष्णजीरकः ( ध. २.७० )

**कृष्णाजिन**–न., कृष्णासारचर्म ( सुचि. २९.१२ )

**कृष्णाञ्जनी**–स्त्री., वनस्पति०, कालाञ्जनी ( रापरि ४.४३)

**कृष्णात्रेय**–पु., ऋषि०, 'कृष्णात्रेयः पुनर्वसोरभिन्न एवेति वृद्धाः ।' ( चक्रः, चचि. १५.१३१ ) 'नवायसमिदं चूर्णं कृष्णात्रेयेण भाषितम्' ( चचि. १६.७१ ) केचित्तु श्रीकण्ठदत्तशिवदाससेनादिभिः शालाक्यविषये उद्धृतेभ्यः कृष्णात्रेयवचनेभ्यः कृष्णात्रेयपुनर्वस्वोर्भेदं मन्यन्ते; शालाक्यतन्त्रप्रणेता कृष्णात्रेयोऽन्यः, परं पुनर्वसोरपि कृष्णात्रेय इति नाम्नि नास्ति सन्देहलेशोऽपि, चरकप्रतिसंस्कारे भेलतन्त्रे च तस्य कृष्णात्रेयनाम्नोल्लेखात् इति आचार्ययादवजीकृता चरकसंहिताप्रस्तावना

**कृष्णादिघृत**–न., घृत०; कफजापस्मारे उपयुक्तम् ( सुउ. ६१.३० )

**कृष्णायस**–न., खनिज० लोहम् ( ध. ६.२६ ) सीसकम् ( रा. १३.२१ ) कृष्णलोहचूर्णम्, नेत्ररोगेऽञ्जनार्थमुपयुक्तम् ( सुउ. १९.१४ )

**कृष्णारुण**–पु., वनस्पति० चित्रकः ( ध. २.८० )

**कृष्णार्जक**–पु., वनस्पति० अर्जकभेदः, गुणाः—कटुरुष्णरुच्यः सुखप्रसवकारकः कफवातघ्नः कृत्रिमविष–रक्तदोष–नेत्रामयविनाशनम् ( ध. ४.५६ )

**कृष्णालु**–पु., वनस्पति० नीलालुः ( रापरि. ७.३२ )

**कृष्णाश्रयविकार**–वि., नेत्रस्य कृष्णमण्डलगतो रोगः, अयं सव्रणाऽव्रणपाकात्ययाऽश्रयजभेदाच्चतुर्विधः ( सुउ. ५.३ )

**कृष्णाह्वा**–स्त्री., वनस्पति० पिप्पली ( सुउ. १७.८–१० )

**कृष्णेक्षु**–पु., वनस्पति० इक्षुः ( रा. १४.१८७ )

**कृष्णोदरश्वेतकपोत**–पु., सर्प०; दर्वीकरः ( सुक. ४.३४ ( १ )

**कृष्णोदुम्बरिका**–स्त्री., वनस्पति० काकोदुम्बरिका ( रा. ११.१४२ )

–कृष्णका–स्त्री., वनस्पति० राजिका ( ध. ४.६० )

**क्लृप्तनख**–वि., शस्त्रवैद्यलक्षणेष्वेकः छिन्नश्लक्ष्णनखः ( सुचि. ७.३० )

**क्लृप्तीभावः**–पु., अप्रवृत्तिः ( चनि. १.२१ ) भेदः स्फुटनं यथा नखादीनाम् ( चनि. १.२१ )

**केकिन्**–पु., पक्षि०, मयूरः ( र. ११.१२९ )

**( केकि )–शिखा**–वनस्पति० बर्हिचूडा ( रापरि. ५.१३ )

**केतकसूची**–स्त्री., वनस्पति० ( असंउ. ६ )

**केतकिक्षार**–पु., केतकिजः क्षारः, स च वातगुल्महरः ( सुउ. ४२.४५ )

केतकी–स्त्री., वनस्पति०; जातिः ( रा. १०.२१३ ) सुगन्धिपुष्पवृक्ष०; प्रावृषि केतकी पुष्पिता भवति। इयं श्वेतस्वर्णभेदेन द्विधा। श्वेताया गुणाः–कटुः स्वादुस्तिक्ता लघुः कफघ्नी; स्वर्णकेतकीगुणाः–तिक्तोष्णा चक्षुष्या ( भाप्र ) वैक्रान्तद्रावणे केतकीरस उपयुक्तः ( र. ४.७६–७७ )
केतक्याः कुसुमं वर्ण्यं केशदुर्गन्धनाशनं च। स्वर्णकेतक्यास्तु मदकारि सुखकरं च। तदतिशीतं कटु कफपित्तापहं रसायनं बल्यं देहदार्ढ्यकरं च ( धपरि. ५.१ )
–स्तन–पु., केतक्याः आदौ स्तनाकारतुल्यः पश्चाच्च प्ररोहरूपः स्थूलः अवयवः ( र. ३०.५८ )
केतु–पु., वनस्पति० अग्निमन्थः ( ध. १.११० )
केदार–पु., क्षेत्रम् ( सुसू. ४५.४ )
जलाशय० अवनिपतितजलसंचयस्थानम् ( सुसू. ४५.४ )
षष्टिकभेदः ( सुसू. ४६.८ )
–कटुका–स्त्री., वनस्पति० कटुका ( रा. ६.५६ )
–कुल्या–स्त्री., न्याय० कुल्याभिः कृत्रिमाभिरल्पसरिद्भिः केदारो यथोपस्निह्यते तथा सिराभिः शरीरमुपस्निह्यते ( सुशा. ७.३ )
–ज–न., वनस्पति० पद्मकम् ( रा. १२.१४९ )
केबुक–पु., वनस्पति० तिक्तस्कन्धे द्रव्य० पत्तूरः ( चवि. ८.२०१५ ) शाक० ( चचि. १४.१० ) गुणाः–रक्तपित्तहरो हृद्यो सुलघुः कुष्ठमेहज्वरश्वासकासारुचिहरः ( सुसू. ४६.२६२,२६३ )
केबुकाकन्द–पु., कन्द० अस्य निर्यासः श्लीपदे पानार्थमुपयुज्यते ( सुचि. १९.६२ )
केम्बुक–न., वनस्पति० गुणाः–तिक्तं, पाके कटु, शीतं, वातकृत् कफपित्तघ्नं च ( अहृसू. ६.७८ )
केलूट–पु. न. कन्दशाक० जलोदुम्बरः, गुणाः–रूक्षं ग्राहि हिमं गुरु ( अहृसू. ६.९२ )
केवल–वि., अमिश्रितं, एकमात्रम् ( सुसू. ३५.४७ )
–वात–पु., शुद्धवातः ( अहृसू. ६.६५ )
–वातरोग–पु., पित्तादिदोषेण असंसृष्टः केवलवातारब्धः रोगः ( सुचि. ३३.१४ )
केवलामलकरसायन–न., रसायन०, यतेन्द्रियो ब्रह्मचारी सावित्रीं मनसा ध्यायन् पयोवृत्तिः संवत्सरं गवां मध्ये वसेत्। संवत्सरान्ते पौषीं माघीं फाल्गुनीं वा तिथिं त्र्यहोपवासं कारयेत्। शुक्लपक्षे आमलकीवनं प्रविश्य बृहत्फलाढ्यमामलकीद्रुममारुह्य शाखागतं फलं पाणिना गृहीत्वाऽमृतागमपर्यन्तं ब्रह्म जपँस्तिष्ठेत्। तदा क्षणमामलकेऽमृतमवश्यं तिष्ठति। अमृतसंयोगात्तानि शर्करामधुकल्पानि स्नेहवन्ति मृदूनि च भवन्ति। तेभ्यो यावन्ति भक्षयेत्तावन्ति वर्षसहस्राण्यागतयौवनैर्जीवेत्। एषां सौहित्यं गत्वा अमरसंनिभो भवति। अस्य श्रीर्वेदाः वाग्रूपिणी देवता च स्वयमुपतिष्ठन्ते ( चचि. १ (३) ९.१४ )
–केवा–स्त्री., वनस्पति०, केविका ( रापरि १०.३३ )
–केविका–स्त्री., वनस्पति० गुणाः–मधुरा शीता पित्तहरा वातश्लेष्मरुक्पित्तच्छर्दिघ्नी दाहश्रमहरा च ( रापरि. १०.३३ ) द्र० 'केवा'
केवुक–पु., वनस्पति०, केमुरः ( ड. सुउ. ५४.२५ )
केवुकाकन्द–पु., वनस्पति० केवुकाकन्दः ( सुचि. १९.६२ ) द्र० 'केवुकाकन्द'
केश–पु., रोम ( चसू. १.६९ ) अस्थ्नो मलः ( चचि. १५.१९ ) ( सुसू. २९.९–१५ )
( केशी )–स्त्री., वनस्पति० गन्धमांसी ( ध. ३.४७ ) शतावरी ( असंउ. ९ ) भूतकेशी ( चचि. ९.४५ )
–घ्न–न., केशनाशकम् ( अहृसू. ६.१३० )
–दोष–पु., रोग० केशदुष्टिः, अस्थिप्रदोषजरोगेष्वेकः ( चसू. २८.१६ )
लक्षण० केशशातः, केशच्यवनमिति यावत् ( अहृसू. २०.४ )
–प्रसाधनी–स्त्री., वनस्पति० कङ्कतिका ( सुचि. २४.२९ )
–भू–स्त्री. केशभूमि. ( अहृसू. २२.३० )
–भूमि–स्त्री., त्वक्, केशोत्पत्तिस्थानम् ( चचि. २६.१३२ ) मस्तकम् ( असंसू. २९.१७ ) केशभूमिः स्निग्धा लोहिता निर्मला निर्व्रणा च प्रशस्यते ( कासू. २८.६ )
–भूमिस्फुटन–रोग०, अशीतिवातविकारेष्वेकः ( चसू. २०.११ )
–मथनी–स्त्री., वनस्पति० शमी ( रा. ८.१५२ )
–मुष्टि–पु., वनस्पति० महानिम्बः ( ध. १.३१ ) विषमुष्टिः ( रापरि. ४.३९ )
–रञ्जन–पु., वनस्पति० भृङ्गारकः ( ध. ४.११ ) न., श्वेतकेशानां कृष्णीकरणम् ( र. ३०.६१ )
–रुह–स्त्री., वनस्पति० नीलिनी ( ध. १.२३३ )

–(रुहा)–स्त्री., वनस्पति० महाबला ( ध. ४.२ )
दन्ती ( ध. १.२२५ )
–रूपा–स्त्री., वृक्षादनी ( रा. ५.१४२ )
–लुञ्चन–न., केशोत्पाटनम् (असंउ. २)
–वर्धनी–स्त्री., वनस्पति० महाबला ( रा. ४.४२४ )
–विधृति–स्त्री., लक्षण० रोम्णामवलम्बनम्, स्वेदस्य कचरोमधारणमपि ( अहसू. ११.५ )
–शात–पु., लक्षण० केशच्यवनम् (मुक. ३.४१–४२ )
–सीमन्तकृत्–पु., रोग० ज्वरभेदः सीमन्तः केशमार्गः, केशेषु सीमन्तान् करोतीति केशसीमन्तकृत्, अयमसाध्यो ज्वरः ( चचि. ३.५२–५३ )
–हन्त्री–स्त्री., वनस्पति० शमी ( ध. ५.९५ )
केशनी–स्त्री., वनस्पति० मांसी ( रा. १२.९० )
केशर–पु., न., वनस्पति० पद्मकेशरम् ( सुउ. ४५.३३ )
नागकेशरम् ( चसू. ५.२० )
बकुलः ( सुउ. ४७.६१ )
केशरिन्–पु., जलचरपक्षि० ( चसू. २७.४२ )
केशरुहा–स्त्री., वनस्पति० महाबला ( रा. ४.४२४ )
केशवावास–पु., पिप्पलः ( ध. ५.७८ )
केशाद–पु., रक्तजकृमि० अयं ताम्रवर्णः, इमे अणवो वृत्ताश्चापादाश्च, सूक्ष्मत्वाच्चैके भवन्त्यदृश्याः ( चवि. ७.११ )
केशान्त–पु. शङ्खयोरुपरिभागः ( सुसू. ३५.१२ )
केशार्हा–स्त्री., वनस्पति० महानीली ( रा. ४.३५३ )
केशिका–स्त्री., शतावरी ( रा. ४.४३९ )
केशोण्डुक–न., केशैः कृतं विटकं पुञ्जो वा, कण्ठगतशल्यादेर्वमनेनोद्धरणार्थमुपयुज्यते। वमतश्च शल्यैकदेशसक्तं ज्ञात्वा सूत्रं सहसा त्वाक्षिपेत् ( सुसू. २७.१९ )
केशोन्दुक–न., केशोण्डुकम् ( अहसू. २८.३७ )
द्र० 'केशोण्डुक'.
केश्य–वि., केशहितम् ( अहसू. ५.६० )
वनस्पति० अगरुभेदः, कृष्णागरुः ( रा. १२.४० )
द्र० 'अगरु'.
वालकम् ( ध. १.४७ )
भृङ्गराजः ( रा. ४.२० )
केसर–पु., वनस्पति० मातुलुङ्गः ( रा. ११.२६ )
बकुलः ( रा. १०.२६२ )
पद्मकेसरम् ( रा. १०.२६२ )
–नागकेसरम् ( ध. २.४८ )
खनिज० कासीसम् ( ध. ३.१२३ )

–वर–न., वनस्पति० कुङ्कुमम् (रा. १२.२१)
केसराम्ल–पु., वनस्पति० मातुलुङ्गः ( ध. ५.२२ )
केसरिका–स्त्री., वनस्पति० महाबला ( रा. ४.४२४ )
केसरिन्–पु., वनस्पति० मातुलुङ्गः ( ध. ५.२२ )
कैंशुक–वि., पलाशसंबन्धि ( सुउ. १०.९ )
कैकशेय–पु., ऋषि० ( चसू. १.१२ )
कैटभ–पु., असुरविशेषः ( मुक. ३.१८ )
कैटर्य–पु., वनस्पति०; पर्वतनिम्बः ( चसू. ४.१८ )
कट्फलम् ( चसू. ४.१० )
कैडर्य–पु., न., वनस्पति० सुरभिपत्रम् ( असंउ. ६ )
निम्बभेदः, कैडर्यनिम्बः ( रा. ९.४८ )
–निम्ब–पु., वनस्पति० गुणाः–कटुस्तिक्तः कषायः शीतो लघुः सन्तापशोषकुष्ठरक्तविकारक्रिमिभूतविषादिरोगघ्नः ( रा. ९.४८ )
हिं.—कृष्णनिंब, मीठा निंब.
म.—कढीनिंब.
गु.—मीठो लिंबडो.
बं.—घोडानिम.
त.—करुवेप्पिलै.
महानिम्बः ( सुउ. २८.४ )
पूतिकरञ्जः ( असंउ. १०, इन्दु )
कटभी ( रापरि. ९.३७ )
कैण्डर्य–पु., वनस्पति० कैडर्यनिम्बः ( असंसू. १५ )
कैण्डर्यक–पु., वनस्पति० कैडर्यनिम्बः ( असंचि. १३ )
कैतक–न., वनस्पति० केतकीपुष्पम् ( असंसू. १२.८९ )
कैदार–पु., धान्य० शालिभेदः, अनूपजः शालिः, गुणाः– मधुरो वृष्यो बल्यः पित्तनिबर्हण ईषत्कषायोऽल्पमलो गुरुः कफशुक्रलः ( सुसू. ४६.१७ )
द्र० 'शालि.'
कैरला–स्त्री., वनस्पति० विडङ्गम् (ध. २.११)
कैरली–स्त्री., वनस्पति० विडङ्गम् (ध. २.११)
कैरव–न., वनस्पति० कुमुदम् ( रा. १०.२४६ )
विडङ्गम् ( काखिल. ११.९७ )
(कैरवी)–स्त्री., वनस्पति० वनमेथिका ( रा ५.१८५ )
कैरविणी–स्त्री., वनस्पति०; उत्पलिनी ( रा १०.२५० ) द्रष्टव्यं 'कुमुद'
कैरात–पु., वनस्पति० किराततिक्तः ( रा. ९.५० )
प्रतुदपक्षि० ( चसू. २७.५० )
–तिक्त–पु., वनस्पति० किराततिक्तः ( रा ९.५० )
कैलास–पु., पर्वत० ( चचि. १३.३ )
कैलिञ्जी–स्त्री., किलञ्जसाधनानां कुशकाशादिद्रव्याणामियं कैलिञ्जी ( सुचि. ३२.७ )

**कैवर्तिका**–स्त्री., वनस्पति० गुणाः– कषाया लघुर्वृष्या कफनाशिनी कासश्वासहरा मन्दाग्निदोषनुच्च ( रापरि. ३.३५ )

**कैवर्तिमुस्त**–न., वनस्पति० जलमुस्तम् ( ध १.४३ )

**कैवल्य**–न., मोक्षः ( सुशा. १.८ )

**कैशिकी**–स्त्री., व्यधनानां कुठारिकादीनां सूचीकुशपत्रादीनां केशप्रमाणा धारा ( सुसू. ८.१० )

**कोककर्कटिका**–स्त्री., वनस्पति० पिण्डखर्जूरिका ( रा. ११.७१ )

**कोकनद्**–न., वनस्पति० पद्मभेदः, रक्तपद्मम् ( चवि. ६.१७ ) ( ध. ४.१५२ )

**कोकिल**–पु., प्रतुदपक्षि० स्त्री., कोकिला ( चक. १.८ ) ( सुक. १.३१ ) द्र० 'प्रतुद'

सविषमूषिकभेदः, तद्दष्टलक्षणम्–उग्रग्रन्थयो ज्वरो दारुणो दाहश्च ( सुक. ७.२४–२५ )

सविषकीट० गुणाः–सौम्यः श्लेष्मप्रकोपणः सन् कफविकारान् करोति ( सुक. ८.१२–१५ )

अर्धदग्धं काष्ठम् ( र. २.१२५ )

**–गुडिका**–योग० द्राक्षाक्षुद्रादियुक्तः, नेत्ररोगेषु उपयुक्तः ( काखि. १३.५०–५१ )

**कोकिलाक्ष**–पु., वनस्पति० गुणाः–मधुरः शीतः बल्यः रुच्यः सन्तर्पणः वृष्यः कफघ्नः पित्तातिसारनुच्च ( र. ११.१०० )

हिं.—तालमखाना, कैलया.

म.—**विखरा, तालीमखाना.**

गु.—एखरो.

बं.—कुलियारवाडा, कुलेकाँटा, कुलव, शूलमर्दन.

त.—नीरमुळ्ळी.

**कोकिलाक्षक**–पु., वनस्पति० इक्षुः (रा. १४.१८७) खगली, कोकिलाक्षः ( ड. सुउ. ५८.४४ )

**कोकिलानन्द**–पु., राजाम्रः ( रा. ११.८ )

**कोकिलावास**–पु., आम्रः ( रा. ११.३ )

**कोकिलेक्षु**–पु., वनस्पति० इक्षुः ( रा. १४.१८७ )

**कोकिलेष्टा**–स्त्री., वनस्पति० जम्बूः ( रा. ११.१३० )

**कोकिलोत्सव**–पु., वनस्पति० राजाम्रः ( रा. ११.८ ) आम्रः ( रा. ११.२ )

**कोटर**–पु., वनस्पति० अङ्कोलः ( रा. ९.३८३ )

**–पुष्पी**–स्त्री., वनस्पति० वृद्धदारुकः ( ध. ४.१०७ )

**कोटि**–स्त्री. वनस्पति० स्पृक्का ( रा. १२.११३ ) स्त्री., संख्या० ( सुउ. ६०.२२ )

**कोटिक**–पु., प्राणि० मण्डूकभेदः तेन दष्टस्य दाहश्छर्दिर्मूर्च्छा, दंशे कण्डूर्मुखतः पीतफेनागम इत्यादीनि लक्षणानि भवन्ति ( सुक. ८.३१ )

**( कोटिका )**–स्त्री., वनस्पति० स्पृक्का ( ध. ३.६२ )

**कोटी**–स्त्री., कोटिः ( सुउ. ६०.२२ )

**कोट्टकारक**–पु., जाङ्गलमृग० ( चसू. २७.४५ )

**कोठ**–पु., रोग० लक्षणम्–वरटीदष्टसंकाशः कण्डूमानत्रकफपित्ताह्लोहितः क्षणिकोत्पादविनाशश्च ( चचि. ३.१०८ ) रक्तदोषजरोगेष्वेकः ( चसू. २८.१३ ) पीडकः, लवणरसस्यातियोगतो भवति ( सुसू. ४२.१० )

लक्षण० ( अहसू. ४.१७ )

**–फल**–न., फल० ( चसि. ११.१२ )

**(फला)**–स्त्री., वनस्पति० कोशातकी ( चक. ४.३ )

**कोड**–पु., प्राणि० प्रसहवर्गीयः, मांसगुणाः–मधुरः, कटुपाकी, वातघ्नश्च ( काखिल. २४.३८,३९ )

**कोथ**–पु., पूतीभावः ( चसू. २०.१५ ) मृतशरीरक्लेदः ( असंसू. ६.२१ ) पित्तकर्म ( हे. अहसू. १२.५२ )

**कोथक**–पु., नेत्ररोग० ( काखिल १३.४९ )

**कोद्दालक**–पु., धान्य० शालिभेदः ( चनि. ४.५ ) द्र० 'शालि'

**कोद्रव**–पु., कुधान्य० गुणाः–मधुरस्तिक्तः शीतो रूक्षो गुरुर्ग्राही वातकृत् पित्तकफघ्नो विषघ्नश्च ( ध. ६. ८६ ) कोद्रवो रक्तपित्तं हन्ति, विदाहि रक्तपित्तं करोति ( असंसू. ७.३० )

हिं.—कोदो, कोदव.

म.—**हरीक, भगर.**

गु.—कोदरो.

बं.—कोदो धान, गोम. त. वरकु.

वन्यतण्डुलः, अयं मलविशोषी विण्मूत्रसंगकृच्च ( र. १६.१ )

कोरदूषः, सर्वप्राणिनां सामान्यतः पथ्यः ( सुसू. २०.५ )

तृणधान्य० गुणाः–शीतो लघुः पवनकृल्लेखनः कफपित्तहृत् ( अहसू. ६.११ )

**कोनालक**–पु., जलचर० श्यामपृष्ठश्वेतोदरः प्लवेष्वेकः ( सुसू. ४६.१०५,१०६ )

**कोप**–पु., मनोभाव० क्रोधः ( चनि. १.१५ )

प्रकोपः दोषसंस्थाने एव संचयापेक्षया अधिकदोषवृद्धिः ( सुसू. २१.१९ )

वातादेरुन्मार्गगामिता ( असंसू. २०९–१० )

**कोपन**–वि., यद्दोषादीन् कोपयति, नामातिशये वर्धयति तत् ( अहृसू. १.१६ )

**कोपनक**–पु., वनस्पति० चोरकः ( ध. ३.७१ )

**कोमल**–वि., अनिष्पन्नवर्णं पक्ववर्णं वा ( र. ४.५५ )

–**पत्रक**–पु., वनस्पति० शिग्रुः ( रा. ७.६० )

**कोयष्टि**–पु., प्रतुदपक्षि० ( चसू. २७.५० )

पु., पक्षि० कोयष्टिः ( सुसू. ४६.६७ )

**कोर**–पु., शारीर० संधिप्रकारभेदः, कोरो नाम गर्तः, तदाकृतयः कोराः, अङ्गुलिमणिबन्धगुल्फजानुकूर्परेषु कोराः ( सुशा. ५.२७ )

–**दूष**–पु., धान्य० कोद्रवः ( चसू. २७.१६ ) कोद्र.

–**सन्धि**–पु., शारीर० अस्थिसन्धिभेदः, कोरः ( सुशा. ५.२७ असंशा. ५.७७ )

**कोरक**–न., कलिका ( सुउ. ११.१५ )

वनस्पति० चोरकः ( र. २९.९४ )

कक्कोलकः ( र. २७.१३९–१४१ )

लवङ्गम् ( असंक. १ )

–**क्षारः**–न., क्षार० मालतीमुकुलक्षारः ( चचि. ७.१६८ )

**कोरङ्गी**–स्त्री., वनस्पति० पिप्पली ( ६.१०९ )

एलाभेदः सूक्ष्मैला ( ध. २.४४ ) द्र० 'एला'

कुरण्टकः ( १५.३९ )

**कोल**–न., वनस्पति० बदरम् ( चसू. २.१२ )

चव्यम् ( रा. ६.११५ )

मरिचम् ( र. २६.१७–१८ )

द्रव्यगण० पञ्चकोलम् ( सुउ. ३९.२१७ )

मान० द्वौ शाणौ ( चक. १२.८९ )

मान० वटकः निष्कद्वयं कोलः ( र. ११.४ )

अर्धकर्षः ( सुउ. ५१.२४ )

तोलकः ( चक. २.११ )

**( कोला )**–स्त्री., चव्यम् ( सुउ. ५१.३३ )

पिप्पली ( ध. २.७३ )

**( कोली )**–स्त्री., बदरी ( अहृसू. १५.४१)

–**कन्द**–पु., वनस्पति० गुणाः–कटुः उष्णः कृमिदोषवान्तिविच्छर्दिविषदोषनाशनश्च ( रापरि. ७.३८ )

हिं.—जंगली पियाज.

म.—**कोलकन्द**. जंगली कंद.

गु.—बनकन्दो.

बं.—जंगली पियाज.

त.—नारी वेंगायम्.

फा.—पियाज इ. दस्ता इ. हिंदी.

–**तैल**–न., बदरमज्जातैलम् ( सुसू. ४५.१२० )

–**पालिका**–स्त्री., वनस्पति० दधिपुष्पी (रा. ७.२०४)

–**बदरासव**–पु., आसुत० ( सुसू. ४६.४३३ )

–**भाण्डिका**–स्त्री., वनस्पति० मञ्जिष्ठा ( रा. ६.१७ )

–**मज्जा**–स्त्री., कोलास्थीलाभ्यन्तरीयो मृदुभागः कोलाभ्यन्तरम् ( चचि. २०.२९ )

–**मूल**–न., वनस्पति० पिप्पलीमूलम् ( ध. २.७५ )

–**वल्ली**–स्त्री., वनस्पति० चविका ( चचि. ३.२१० )

–**सीधु**–पु., कोलकृतमद्यम् ( चक. ८.९ )

**कोलक**–न., कक्कोलः ( र. ११.९४ )

अङ्कोलः ( रा. ९.३८४ )

बदरम् ( ध. ५.९६ )

मरिचम् ( ध. २.८८ )

**कोलाम्ल**–पु., वनस्पति० बदरभेदः अम्लबदरम् ( चचि. ३.१८६–१८७ ) द्र० 'बदर'

**कोलास्थिदल**–न., मान० बदरास्थिमज्जाविदलप्रमाणम् ( सुसू. ७.१४ )

**कोलास्थिमज्जा**–स्त्री., बदरास्थिजातं बीजम् ( सुउ. ५०.२६ ) द्र० 'कोलमज्जा'.

**कोलोदक**–न., कोलसिद्धं जलम् ( चशा. ८.३२ )

**कोविका**–स्त्री., मूषा० ( र. १०.१ )

**कोविदार**–पु., वनस्पति०; गुणाः–कषायः संग्रहणो रोपणो दीपनः कफवातघ्नो गण्डमालागुदभ्रंशकुष्ठकेशरोगमूत्रकृच्छ्रनाशनश्च ( ध. १.१९६ )

वमनोपगगणे एकं द्रव्यम् ( चसू. ४.१३ )

सर्पविषे हृदयावरणार्थमुपयुज्यते ( सुक. ५.१७–१८ )

शाक०; फञ्जीचिल्ल्यादिगणे एकं द्रव्यम् ( चसू. २७.१०० )

पुष्पशाकगुणाः–मधुरं मधुरविपाकं रक्तपित्तहरं च ( सुसू. ४६.२८१ )

हिं.—पीला कचनार.

म.—**कोरळ, पिवळा कांचन.**

गु.—कांचनार.

बं.—पीतकांचन.

त.—मन्तारै.

**कोश**–पु., ग्रन्थ्यावरणम् ( चचि. १२.७९ )

व्रणबन्ध० ( सुसू. १८.१७,१८ )

सूक्ष्ममुखं बृहन्मध्यकुहरं खदिरतरुसारनिर्मितभाजनम्, अस्मिन्नञ्जनं स्थाप्यते ( सुउ. १७ २१.२२ )

अन्तःपूरणवस्तु ( सुउ. २२.२० )

चर्मकोशः ( सुनि. १३.४७.४८ )

(कोशी)–स्त्री., सुगन्धिद्रव्य० नखे ( ध. ३.५८ )
–कार–पु., वनस्पति० इक्षुभेदः. गुणाः–गुरुः शीतलो रक्तपित्तक्षयापहः ( सुसू. ४५.१५५ ) द्र० 'इक्षु'
–धान्य–न., शमीधान्यानि माषादीनि ( सुचि. ३२.११ )
–फला–स्त्री., वनस्पति० कोशातकी ( ध. ३.१८९ ) त्रपुसम् ( रा ७.२४६ ) देवदाली ( रा. ३.२४३ )
–बन्ध–पु., व्रणबन्ध०, छिन्नशाखायामसौ प्रयोज्यः ( असंउ. ३१ )
–वती–स्त्री., वनस्पति० कटुकोशातकी ( सुचि. १८.२०,२१ )
–स्थ–पु., आनूपप्राणि०, गुणाः–मधुरः शीतस्निग्धः मधुरविपाकी बृंहणो बहुमलकारी वृष्यः बल्यः वातपित्तघ्नः श्लेष्मवर्धनः ( सुसू. ४६.१०८–११० )
–स्थान–न., धनसंचयस्थानम् ( असंसू. ८ )

कोशातक–पु., वनस्पति० कोशातकी ( ध. १.१९२ ) द्र० 'कोशातकी'.

(कोशातकी)–स्त्री., वनस्पति०; गुणाः–तिक्ता कटुरुष्णा कुष्ठपाण्डुप्लीहाशोफगुल्मगरनाशनी; अप्रगाढा कोमला प्रशस्ता ( ध. १.१९२ ) सा चतुर्विधा बृहत्फलाऽल्पफला पीतपुष्पा श्वेतपुष्पेति भेदात् ( डसुसू. ११.११ ) तस्याः स्वरसः उभयतोभागहरः ( सुसू. ३९.५ ) लघुः रक्तपित्तहरा ज्वरश्वासकासारुचिघ्नी ( सुसू. ४६.२६२–२६३ ) व्रणशोधनद्रव्ये उपयुज्यते ( सुसू. ३७. १७.–१९ ) क्षारनिष्कासनार्थमुपयुज्यते ( सुसू. ११.११ ) वमनोपगद्रव्येष्वेका ( असंसू. १४.५ )
हिं.—कडवी तोरई.
म.—**कडू दोडका.**
गु.—कडवी घिसोडी.
बं.—झिंगा.
त.—पैप्पीर्क्कम्.
देवदाली ( सुचि. १०.८ )

कोशाम्र–पु., वनस्पति०, क्षुद्राम्रः; गुणाः–अम्लः कटुरुष्णो गुर्वातघ्नः कफपित्तकरो रुच्यः कुष्ठघ्नो रक्तशोधनो विदाही शोफकारी ( ध. ५.९ ) स्नेहविरेचनद्रव्यम् ( सुचि. ३१.५ ) अस्य स्नेहस्तिक्तः कटुः कषायोऽधोभागदोषहरः कृमिकफकुष्ठानिलहरः दुष्टव्रणशोधनश्च ( सुसू. ४५.१२४ ) अम्लो मधुरः सरो बल्यः पथ्यो रोचनः पाचनो विषव्रणहरश्च ( ध. ६.१३४ ) अस्य मज्जा मधुरा स्निग्धा पित्तानिलापहा अग्निबलकृच्च ( सुसू. ४६.२०७ )
हिं.—कोशंभ, छोटा आम, कोशाम.
म.—**लाल रानआंबा.** कोशांबा, कोशिंब.
गु.—कोशम.
बं.—केओडा, केवडाफल.
त.—काट्टुमामर.

कोषकार–पु., कीट०, कौशेयतन्तुनिर्माता ( चशा. १.९६ )

कोषवती–स्त्री., वनस्पति० कोशातकी ( सुउ. ५६.१७ )

कोष्ठ–पु., शारीर० ( चसू. २८.३१ ) सर्वमुदरम् ( सुउ. ४२.८० ) आम–अग्नि–पक्व–मूत्र–रुधिर–उण्डुक–फुप्फुसेत्यादीनां स्थानम् ( सुचि. २.१२ ) महास्रोतः, आभ्यन्तरो रोगमार्गः ( चसू. ११. ४८. ) आमपक्वाशयाश्रयः ( अहृसू. १२.४६ ) महास्रोतसि विभागविशेषः ( सुशा. ४.१६ ) 'कोष्ठशब्देनात्र आहारपाकाधारो रसमूत्रपुरीषाधारो ग्रहण्यभिधानः' गयी ( सुनि. ७.६,७ ) स क्रूरमृदुसममध्यादिभेदाच्चतुर्विधः (अहृसू. १.९) तत्र क्रूरो बहुवातश्लेष्मा दुर्विरेच्यस्तत्र तीक्ष्णगुणोपेता मात्रोपयोज्या ( सुचि. ३३.२१ ) मृदुर्बहुपित्तयुक्तः, स क्षीरेणापि विरिच्यते, तत्र मृद्वी मात्रैव योज्या ( सुचि. ३३.२१ ) मध्यः समदोषयुक्तः स एव साधारण इत्युच्यते, तत्र विरेचनार्थं मध्यमा मात्रा ( सुचि. ३३.२१ )

(कोष्ठी)–स्त्री. यन्त्र० धातूनां सत्त्वस्य पातनार्थं शुद्धयर्थं वा भूमौ खनित्वा निर्मितमग्निगृहम् ( र. २.१६९ ) तत्षोडशाङ्गुलविस्तीर्णं हस्तैकमात्रमायतं समं च ( र. ९.४६ )
मृण्मयकोशः ( र. १०.३९ )
–भेद–पु., रोग० लक्षणानि ज्वरो दाहो मूत्रमार्गान्मुखाद्गुदाच्च रक्तप्रवृत्तिर्मूर्च्छा श्वासस्तृडाध्मानमभक्तच्छन्दो विण्मूत्रवातसङ्गस्वेदास्रावोऽक्षिरक्तता लोहगन्धि मुखं गात्रदौर्गन्ध्यं हृच्छूलः पार्श्वशूलश्च; यदा कोष्ठो भिन्नो रक्तेन पूर्यते तदेमानि लक्षणानि भवन्ति । ( सुचि. २.१३–१५ ) तत्र विण्मूत्रवातानां स्वैः स्वैर्मार्गैर्गमनं ज्वराध्मानाद्युपद्रवराहित्यं च साध्यलक्षणम् ( सुचि. २.५५ ) आमाशयस्थे रुधिरे रुधिरं छर्दयति, अतिमात्रेणाध्मानेन शूलेन च विनश्यति । पक्वाशयस्थे रुधिरे शूलो गौरवं च भवेत् । नाभेरधस्ताच्छीतत्वं खेभ्यश्च

रक्तागमो भवति। अभिन्नोऽप्याशयः सूक्ष्मैः स्रोतोभिः स्यन्दमानेन रक्तेन पार्श्वेऽभिपूर्यते। तत्रान्तर्लोहितं शीतपादोच्छ्वासकराननं रक्ताक्षं पाण्डुवदनमानद्धत्वं च तं विवर्जयेत्। (असंउ. ३१.२९९) क्लिष्टछिन्नान्त्रभेदेन भिन्नकोष्ठो द्विविधस्तत्र प्रथमे लक्षणान्यल्पानि, द्वितीये तीव्रत्वादतिबाधकानि; तत्रापि प्रथमः संशयितायुर्द्वितीयस्तु नैव जीवति (असंउ. ३१) अयं शस्त्रसाध्यः (असंउ. ३१.२९९)

**-रुजा**-स्त्री., लक्षण० कोष्ठशूलः (अहसू. १६.११)

**-वात**-पु.. लक्षण०; कोष्ठे प्रभूतो वातः (चचि. १३.३८)

**-विदाह**-पु., लक्षण० कोष्ठे दाहवत्पीडा (सुसू. ४२.१०२)

**-विरुद्ध** न., कोष्ठायाहितम् (चसू. २६.९५)

**-शूल**-पु., लक्षण०, उदरशूलः (चचि. १३.३८)

**-संक्षोभ**-पु., लक्षण० आमाशयपक्वाशयादिस्थानानां चलनम् (सुनि. ८.३)

**कोष्ठागारिका**-स्त्री., कीट० (सुशा. १०.५७) द्र० 'कोष्ठागारिन्'

**कोष्ठागारिन्**-पु., सविषकीट० अयं प्राणनाशनः; तेन दष्टस्य सर्पवद्वेगज्ञानं तीव्रा वेदना सांनिपातिकाः विकाराश्च भवन्ति, दंशस्तु वर्णेन रक्तपीतासितारुणः क्षाराग्निदग्धवच्च भवति (सुक. ८.१५-१८)

**कोष्ठाङ्ग**-न., नाभिहृदयादिपञ्चदशविधाङ्गम्, तानि च नाभिर्हृदयं क्लोम यकृत् प्लीहा वृक्कौ बस्तिः पुरीषाधानमामाशयः पक्वाशयः उत्तरगुदमधरगुदं क्षुद्रान्त्रं स्थूलान्त्रं वपावहनं च (चशा. ७.१०)

**कोष्ठानाह**-पु., लक्षण० (चसू. १४.२१)

**कोष्ठाभिसरण**-न., कोष्ठे गमनम् (चवि. ७.१६) क्षीरगुडादिलोभेन कोष्ठमहास्रोतःपरिसरे समन्ताद् (कृमीणां) आगमनम्, इतस्ततः चलनं वा

**कोष्ठिका**-स्त्री., कोष्ठी (र. १०.३३)

**कोहकारक**-पु., मृग० (असंसू. ७.३३)

**कोहल**-पु., यवसक्तुकृतं मद्यम्, गुणाः-त्रिदोषो भेद्यो वृष्यो वदनप्रियश्च (सुसू. ४५.१८०)

**कौक्कुट**-वि., कुक्कुटपक्षिसंबन्धि (चसू. १३.८३)

**-पुट**-न., कुक्कुटपुटम्, भूमितले वितस्तिद्वयोच्छ्रिते तावदेव विस्तृते खाते पूरितैश्छगणैः घटसंपुटितद्रव्यस्य परिपचनम् (र. २.१३५)

**कौञ्ची**-स्त्री., बालग्रह० पूतनाग्रहः (काचि. बालग्रह पृ. १०१)

**कौट**-पु., वनस्पति० कुटजः (ध. २.१३)

**-ज**-पु., वनस्पति० कुटजः (ध. २.१३)

**-जफाणित**-न., कुटजफाणितम्, क्वाथप्रकाराणामेकतमोऽयम् (सुउ. ४०.८९-९०)

**-जयव**-पु., वनस्पति० इन्द्रयवः (सुउ. ४०.४०)

**कौटिल्य**-न., वनस्पति० चाणक्यमूलम् चाणाख्यमूलम् (रा. ७.५३)

**-दयित**-पु., योग० विषहर० (असंउ. ४०)

**कौडविक**-न., मान०, कुडवपरिमितः (असंचि. ५)

**कौण्डिन्य**-पु., ऋषि० (चसू. १.१०)

**कौण्डिन्यक**-पु., कीट०; शकृन्मूत्रविषः (सुक. ३.५) आग्नेयकीट०; (असंउ. ४३) अयं पित्तजविकारान् करोति (सुक. ८.८-१२) द्र० 'कीट'

**कौण्य**-न., लक्षण० कुणेर्भावः, करवैकल्यम्, नष्टकरत्वम् (सुनि. ५.१८)

**कौतुकमङ्गल**-न., विशिष्टकाल एव यो रक्षाबन्धो बाह्वादौ बध्यते तत् कौतुकम्, तद् एव मङ्गलत्वात्कौतुकमङ्गलम् (असंशा. ३.१८)

**कौत्स**-पु., ऋषि०; द्वित्रिवेगं वमनं कनीयः, चतुष्पञ्चवेगं मध्यमं षट्सप्तवेगमुत्तममित्यस्य वमनविषये मतम् (कासिद्धि. ३ पृ. १५२)

**कौन्ती**-स्त्री., वनस्पति० रेणुका (ध. ३.५१)

**कौन्तेय**-पु., अर्जुनः (रा. ९.१९२)

**कौप**-न., कूपसंबन्धि, कूपोदकम् (सुसू. ४५.८)

**कौपीन**-न., कटिवस्त्रम् (चशा. ५.१२)

**कौबेर**-न., चित्तप्रकृति०; शुद्धसत्त्वस्य प्रकारः (चशा. ४.३७ (६)

मध्यस्थत्वं सहिष्णुत्वमर्थप्राप्तिसंचयपरत्वं महाप्रसवशक्तित्वं चास्य लक्षणम् (सुशा. ४.८४)

वनस्पति० कुष्ठम् (ध. ३.४९)

**कौब्ज्य**-न., कुब्जत्वम् (सुशा. १०.४६)

**कौमार**-वि., कुमारसंबन्धि (का. धात्रीचि. पृ. १४५)

**-धूप**-पु., योग० धूपकल्पः (काकधूपकल्प पृ. १७०)

**-भृत्य**-न., आयुर्वेदस्याऽष्टाङ्गेष्वेकम्, कुमारभरणधात्रीक्षीरदोषसंशोधनार्थं दुष्टस्तन्यग्रहसमुत्थानां च व्याधीनामुपशमनार्थं तन्त्रम् (सुसू. १.५) आयुर्वेदस्याष्टतन्त्राणामादिमं तन्त्रम्। वृद्धजीवकेन निर्मितं तन्त्रम् (काक. २७) तद् वात्स्येन प्रतिसंस्कृतम् (काक.)

**कौमारी**-स्त्री., वाराहीकन्दः (रा. ७.१३४)

**कौम्भघृत**–न., घृत० पुराणघृतभेदः (काखिविसर्पचि.) सर्पिर्दशाब्दिकं नाम दशवर्षपुराणं सर्पिः (चसू. २४.५७) शतवर्षस्थितम् (सुउ. १२.४)

**कौरव**–न., पु., कार्पासम् (चसू. १४.४९)

**कौर्पर**–पु., संधि० बाहुमध्यगतः सन्धिः (चसू. ३.३२)

**कौलक**–न., वनस्पति० (काखिल) पटोलभेदः (चसू. २७.९७)

**कौलत्थ**–पु., यूष० (सुक. ५.१८, १९)

**कौलाली**–स्त्री., मूषायोग्या मृत्तिका (र. १० ६.७); कुलालः कुम्भकारः कुलालस्येयमिति कौलाली मृत्तिका, कुलालकर्मोचितत्वादियं मृत्तिका मूषाक्षमाऽपि ज्ञेया

**कौशल्य**–पु., कोशलदेशः (काखिल. २५.९)

**कौशिक**–पु., ऋषि० यजःपुरुषविषये विवदमानेष्वेकः (चसि. ११.४)

प्राणि० उलूकः (सुसू. २९.३६, ३७)

वनस्पति० जरणद्रुमः (रापरि. ९.१३)

गुग्गुलुः (ध. ३.१२७)

**कौशिकी**–स्त्री., नदीसंज्ञा (सुचि. ३०.३४)

**कौशेय**–न., वस्त्रप्रकारः कोशाकारक्रिमिलालातन्तुरचितः पट्टः (सुउ. ३९.२७५)

राङ्कवादिवस्त्रम् (अरु. अहृसू. १७.५)

पट्टसंज्ञं वसनम् (अरु.) (अहृसू. ३.१३)

तसरसंज्ञं वस्त्रम् (सुचि. ४.२५)

**कौषेय**–न., कौशेयम् (चसू. ६.१५)

**कौष्ठिक**–वि., (कुष्ठव्याधिप्रकरणम्) (चचि. १५.१२८)

**–नवक**–न., योग० (इंदु. असंउ. ३७) (त. प्र. पृ. ३१२)

**कौसुम्भ**–न., शाक० कौसुम्भशाकम् (चसू. २७.११०)

**(कौसुम्भी)**-स्त्री., व्रीहि० (रा. १६.११७)

**–शाक**–न., वनस्पति०, गुणाः–मधुरं कटूष्णं दृष्टिप्रसादरुचिदीप्तिकरं विण्मूत्रदोषापहरं मदघ्नं च (रापरि ७.८१)

रूक्षं श्लेष्महरं लघु (सुसू. ४६.२७२) अम्लं गुरु पित्तकृत् सरं च (अहृसू. ६.१०१)

हिं.—कुसुम्बर, कुसुम.

म.—**करडई,** कर्डी;

गु.—कुसुंबी, कसंबी, कब्री;

बं.—कजिरेह;

त.—सेन्दुरकम्, सेन्दुरुक्काई, कुसुम्बविराई;

फा.—खसकदान;

खनिज० पुष्पाञ्जनम् (ध. ३.१६२)

कुसुम्भम् (रा. १६.१८९)

**कौसेन्दुक**–पु., धान्य० व्रीहि० (रा. १६.९७)

**कौस्तुभ**–पु., रत्न० कुं पृथ्वीं स्तुभ्नाति व्याप्नोति इति कुस्तुभः समुद्रः तत्र भवः कौस्तुभः (असंशा. १२.८)

**कौहली**–स्त्री., सुराभेदः (असंसू. ६.२७) द्र० 'सुरा'

**क्रकच**–पु., शस्त्र० करपत्रम्, (इन्दुः असंनि. ५.४२)

संनिपातज्वर० वातमध्यपित्ताभिवृद्धकफहीनैरसौ भवति। तल्लक्षणम्–स्तब्धाङ्गः स्तब्धदृष्टिर्हत इव शेते, बह्वनश्नतः पुरीषं चातिमात्रं विरिच्यते। सर्वेषां स्रोतसां पाकश्च (का. विशेषकल्पाध्यायः)

**(क्रकचा)**–स्त्री., वनस्पति० केतकी (रापरि. १०.२)

**–च्छद**–पु., वनस्पति० केतकी (धपरि. ५.१)

**–पत्र**–पु., वनस्पति० शाकः (रा. ९.६)

**क्रकर**–पु., पक्षि० (चसू. २७.४९) तद्गुणाः–लघुर्हृद्यो मेधाग्निबलवर्धनो वृष्यो वातपित्तहरश्च (सुसू. ४६.६३–६४)

हिं.—करेट्ट कुवार.

बं.—करकटीया.

म.—**करढोक.**

**क्रथ**–पु., लक्षण० अकस्मादुच्छ्वासावरोधः (सुचि. ४०.१६)

**क्रथन**–न., लक्षण० स्वपतः कण्ठे घुर्घुरारवः अकस्माच्छ्वासाऽवरोधः (सुसू. १५.३२)

पु., अकस्मादुच्छ्वासावरोधः क्रथनं एतत्क्रियावांश्च क्रथन इत्युच्यते (चशा. ८.२१)

**क्रन्दनम्** (चसि. २.२२) नासाशब्दः (इन्दुः असंनि. ४.१३)

**क्रम**–पु., उपक्रम०, चिकित्सा (सुचि. २२.५२)

अनुक्रमः (चसि. १.३)

विधिः (अहृसू. १६.२८)

परिपाट्या यथोचितसंनिवेशः (न्याय.)

उद्दिष्टानामर्थवशाद्यथावद् ग्रहणम् (न्याय.)

परिपाटी (चवि. ८.३)

**–कोविद**–वि., पेयादिक्रमाभिज्ञः (चसि. १२.६.)

**–पूरक**–पु., वनस्पति० वसुकः (रा. १०.३३)

**–विरुद्ध**–वि., क्रमं त्यक्त्वा यन्निषेव्यते तत्, यथा विण्मूत्रमनुत्सृज्य भुज्यमानं क्रमविरुद्धं भवति (चसू. २६.९७)

**–सेवन**–न., परिव० अन्नपानादीनां विधियुक्तं सेवनम् (चवि. ५.२२)

**क्रमुक**–पु., वनस्पति० पूगफलम् ( रा. ११.७१ )
( सुसू. ३८.२९ )
न.,–वनस्पति० तूलम् ( ध. ५.६४ )
वृक्षरोध्रः ( सुसू. ड. ३८.८ )
पट्टिकालोध्रः ( चक्र. चचि. ४.७४–७६ )
( असंउ. ६ )
लोध्रभेदः ( ध. इ. १७७ )
ह्रस्वपूगफलम् ( चक्र. चचि. ७.८१ )

**–प्रसून**–पु., वनस्पति० धूलीकदम्बः ( रा. ९.१७३ )

**क्रमोत्पत्ति**–स्त्री., क्रमश उत्पत्तिः ( चचि. १५.२४५ )

**क्रमोपयोग**–पु., क्रमेणोपयोगः, क्रमेण योगः, क्रमः चिकित्सा उपयोगो योजना चिकित्साकरणमित्यर्थः ( सुउ. ६१.१८ )
सुष्टुपद्धत्या उपयोगः ( चवि. ३.३६ )

**क्रय**–पु., पण्यम् ( चसू. १५.३ )

**क्रव्य**–न., मांसम् ( सुउ. १७.३५ )

**–भुज्**–वि., गृध्रादिः ( सुउ. १७.३५ )

**क्रव्याद्**–वि., मांसादप्राणी व्याघ्रादिः ( असंचि. ७ )

**क्रव्याद**–वि., मांसादो व्याघ्रादिः, तन्मांसरसो ग्रहण्यां शस्तः ( चचि. १५.११६ ) क्रव्यादमज्जा लघुशीतकषायो रक्तपित्तघ्नश्च ( सुसू. ४५.१३१ )

**( क्रव्यादी )** स्त्री., वनस्पति० जटामांसी ( ध. ३.४५ )

**क्रव्यान्मांसरसाभ्यास**–पु., मांसादमांसरसस्य सततं नियमेन सेवनम्, अयं ग्रहणीदोषशोषार्शोघ्नानां च श्रेष्ठः ( चसू. २५.४० )

**क्रव्यादप्रसह**–वि., वानरमूषककुलिङ्गमधुहाव्यतिरिक्ता द्वीप्यादयो, मांसाहारत्वात्
( अहसू. ६.६२–६३ हे )

**क्रव्यादरस**–पु., योग० गुरुमांसगुरुभोज्यपाचनोऽत्यग्निदीपनश्च ( र. १६.१४०–४७ )

**क्रशिमन्**–पु., कार्श्यम् कृशता, कृशस्य भावः
( अहसू. १४.३३ )

**क्राथिन्**–वि., हिंसाशीलः ( ड. सुशा. ४.६४ )
क्रथनशीलः सुप्तः सन् नासाद्वारेण शब्दं करोति, ( इन्दु. असंशा. ८.१४ )

**क्रान्त**–न., पारदसंस्कार० क्रामणम्, रसस्य शरीरान्तःस्थसर्वधातुषु व्याप्तिरेकीभावो वा
( र. २७.२०–२३ )

**( क्रान्ता )**–स्त्री., वनस्पति० बृहती ( रा. ४.१२० )

**क्रामण**–न., पारदसंस्कार० वेधद्वारा तारादीनां स्वर्णादिविधायकम्। पारदस्य लेपावापाद्युपयुक्तस्य लोहधात्वन्तःप्रवेशाभिव्यासिकारकम् ( र. ३.७३ )

**क्रिमि**–पु., कीट० ( चसू. १.१०१ )
कोष्ठपुरीषादिबाष्पसम्भवो जीवः(ड. सुसू. १.३०)
ध्वजभङ्गरोगे लिङ्गे जातो जन्तुविशेषः
( चचि. ३०.१७४–७५ )
रोग० कृमिजन्यो व्याधिरयं तन्नाम्नैव ज्ञायते। कृमयो बाह्याभ्यन्तरभेदतो द्विविधाः। तथा बहिर्मल-कफासृग्विड्जन्मभेदाच्चतुर्विधाः। नामतश्च विंशतिविधाः। तदुत्पत्तिः–आमपक्वाशये कफजानां पुरीषजानां तथा धमन्यां च रक्तजानां कृमीणां सम्भवः। तत्सम्प्राप्तिः–अजीर्णादिभिः प्रकुपिताः श्लेष्मादिदोषाः पुरीषादीन्यधिष्ठाय कृमीन् जनयन्ति ( चवि. ७.९–१३ )
सञ्जातकृमिलक्षणम्–ज्वरो विवर्णता शूलं हृद्रोगः सदनं भ्रमः। अरोचकोऽतिसारश्च
( सुउ. ५४.१८–१९ )
तत्र बहिर्मलोद्भवास्तिलप्रमाणसंस्थानवर्णाः केशाम्बराश्रया बहुपादाः सूक्ष्माश्च यूकालिक्षादिनामतो ज्ञेयाः। ते कोठपिटिकाकण्डूगण्डान् प्रकुर्वते
( असंनि. १४.४६–४७ )
आभ्यन्तराः कृमयः–तत्र रक्तजा रक्तवाहिशिरास्थानाः (असंनि. १४.५४) सप्तसङ्ख्याकाः। नामतः केशादा रोमादा नखादा दन्तादाः किक्किशाः कुष्ठजाः परीसर्पाश्च। ते रक्तवर्णाः कृष्णवर्णाः स्निग्धाः पृथवश्च भवन्ति। तेभ्यो रक्ताधिष्ठानजा विकारा कुष्ठविसर्पपिडकादयो भवन्ति
( सुउ. ५४.१५ )
पुरीषजाः कृमयः सप्तसङ्ख्याकाः। तेऽजवा वियवाः किप्याश्चिप्यागण्डूपदाश्चूरवो द्विमुखाश्चेति नामतः। तेऽतीव वृद्धा आमाशयोन्मुखा यदा भवन्ति तदा आस्योद्गारनिःश्वासा विड्गन्धानुविधायिनो भवन्ति। अधोविसर्पणं तेषां स्वभावः ( असंनि. १४.५५–५६ ) एते श्वेता सूक्ष्माः केचित् पुच्छेषु स्थूलाश्च ( सुउ. ५४.९ ) पृथुवृत्ततनुस्थूलाश्यावपीतसिता-सिता इति ( असंनि. १४.५५ ) ते गुदानुसरणं गुदतोदनं शूलमग्निमान्द्यं पाण्डुत्वं विष्टम्भं बलसंक्षयं लालास्रावमरुचिं हृद्रोगं विड्भेदं च कुर्वन्ति ( सुउ. ५४.९–१० ) पारुष्यकार्श्यरोमहर्षांश्चेति। (असंनि. १४.५८) कफजाः कृमयः षट्सङ्ख्याकाः। दर्भपुष्पा महापुष्पाः प्रलूनाश्चिपिटाः पिपीलिका दारुणाश्चेति नामतो ज्ञेयाः। एतेषामेव कर्मविशेषेण मज्जादा नेत्रलेढारस्तालुश्रोत्रभुजश्चेति

संज्ञान्तराणि ( सुउ. ५४.१३ ) एते रोमशा रोममूर्धानः सपुच्छाः श्यावमण्डला रूढधान्याङ्कुराकाराः शुक्लास्तनवश्च ( सुउ. ५४.१२ ) ताम्रावभासा इति ( असंनि. १४.४९ ) ते शिरोहृद्रोगवमथुप्रतिश्यायकराः ( सुउ. ५४.१२ ) हृल्लासाऽऽस्यश्रवणाविपाकारोचकमूर्च्छाज्वरानाहकार्श्यकराश्च ( असंनि. १४.५२ ) अन्तर्जाः कुष्ठैकहेतवः । तेषु कफजा अधिकतरम् ( असंनि. १४.४८ )

तत्साध्यासाध्यत्वम् - पुरीषजाः कफजाश्च दृश्याः साध्याश्च । रक्तजा अदृश्या याप्याश्च । रक्तजेष्वपि केशादरोमादनामानौ अत्यन्तादृश्यत्वादसाध्यौ ( सुउ. ५४.१९-२० )

**-कर**-पु., कीट० सविषोऽसौ एतद्दष्टे वेगज्ञानं सर्पवन्नवति, तास्ताश्च तीव्रा वेदना भवन्ति, तथा सान्निपातिका रोगा भवन्ति, दंशस्तु वर्णेन रक्तपीतासितारुणः, क्षाराग्निदग्धवच्च ( सुक. ८.१५-१८ )

**-कर्णक**-पु., कर्णरोग० वातादिभिः स्वकारणकुपितैर्दूषिते ये श्रोत्रसंबंधिनी मांसासृजी तयोर्विक्लेदस्तज्जन्याः कृमयः कर्णं भक्षयन्तस्तीव्रां रुजं कुर्युः त्रिदोषजोऽयमिति विदेहः ( सुउ. २१.५१ )

**-कोष्ठ**-वि., क्रिमियुक्तः कोष्ठो यस्य, विरेचनयोग्योऽसौ ( चसि. २.१३ )

**-ग्रन्थि**-पु., नेत्ररोग०, तल्लक्षणम्-वर्त्मशुक्लयोः संधौ ग्रन्थिः क्रिमियुक्तो भवति । ते कृमयः कण्डूं कृत्वा अन्तश्चरन्तो नयनं दूषयन्ति । साध्योऽयम् ( सुउ. २.९ )

**-घ्न**-न., वनस्पति० विडङ्गम् ( चसू. २३.१८ )

वि., क्रिमिनाशनम् ( चसू. १.९७ )

**-घ्नगण**-पु., द्रव्यगण० अक्षीवमरिचगण्डीरकेबुकविडङ्गनिर्गुण्डीकिणिहीश्वदंष्ट्रावृषपर्णिकाऽऽखुपर्णिका इति दशेमानि क्रिमिघ्नानि द्रव्याणि ( चसू. ४.११, असंसू. १५.२० )

**-घ्नवर्ग**-पु., द्रव्यगण० ( असंसू. १५.२० ) द्र० क्रिमिघ्नगण.

**-जाति**-स्त्री., क्रिमीणां जातिः, विंशतिः क्रिमिजातयः समुद्दिष्टाः ( चसू. १९.३ )

**-जिघांसु**-वि., क्रिमिपीडितो व्याधितः कृमिहननेच्छुः ( सुउ. ५४.४० )

**-दन्तक**-पु., दन्तरोग० मारुताधिकैस्त्रिभिर्दोषैर्मूलसहितं दन्तमाश्रित्य तन्मज्जनि शोषिते अंतर्दन्ते च सुषिरेऽन्नमलपूरिते सति मूलस्य पूतित्वात् सूक्ष्माः क्रिमयो जायन्ते । ततश्च अकारणमेव तीव्रार्तिस्तथा शमश्च भवति । तथा संरम्भान्वितः कृष्णश्चलः प्रलूनाख्यः पूयरक्तस्त्रावी दन्तः कृमिदन्तक इति संज्ञितः ( असंउ. २५ )

**-रोगप्रतिषेध**-पु., अध्याय० ( सुउ. ५४.१ )

**-शत्रु**-पु., वनस्पति० विडङ्गम् ( डसुउ. ६१.३६ )

**-शूक**-पु., क्रिमिजः शूकः, क्रिमिजशूकाच्छोथोत्पत्तिर्भवति ( चसू. १८.४ )

**क्रिमिल**-वि., कृमियुक्तं कृमिकारकं वा ( चसू. २७.२१५ )

**क्रिम्याशय**-पु., शारीर० 'विण्-मूत्र-क्रिमि-पक्वा-ऽऽमकफपित्ताशयाः पृथक् सन्त्येते देहिनां कोष्ठे ( का. शा. गर्भावक्रान्तिः ९ )

**क्रिया**-स्त्री., चिकित्सा० कायवाङ्मनोनिर्वृत्तं वा कर्म ( सुउ. ४१.४ )

शरीरस्य उत्क्षेपणावक्षेपणप्रसरणाकुञ्चनलक्षणात्मिका चेष्टा ( सुसू. २५.३६ )

शस्त्रक्रिया ( सुचि. ७.२९ )

शास्त्रोदितं कर्म ( सुसू. १.२२ )

**-कल्प**-पु., अध्याय० क्रियाणां तर्पणपुटपाकादीनां कल्पनं करणं वा अधिकृत्य कृतोऽध्यायः, सुश्रुतोत्तरतंत्रे अष्टादशोऽध्यायः ( सुउ. १८.१ )

**-काल**-पु., चिकित्साकालः ( सुसू. १.३८ )

द्रव्याणि यस्मिन् काले क्रियां कुर्वन्ति सः ( सुसू. ४१.५ )

**-क्रम**-पु., चिकित्साविधिः ( असंसू. ५.१८ )

**-क्रमविधि**-पु., क्रियाचिकित्सा, तस्याः क्रमः तस्याऽनुष्ठानं विधिः ( चचि. ३.६०.६१ )

**-क्षय**-पु., क्रियायाश्चिकित्सायाः कायवाङ्मानसकर्मणां वा क्षयः 'क्रियाक्षयकरत्वाच्च इत्युच्यते पुनः ( सुउ. ४१.४ )

**-पथ**-पु., उपचरणविधिः ( सुचि. ६.९ )

चिकित्सितम् ( सुचि. ५.१९ ) अत्र चिकित्सितपदे भावे क्तप्रत्ययो ज्ञेयः, तेन चिकित्सितं चिकित्सा इत्यर्थः

**-योग**-पु., संशमनसंशोधनादीनां सम्यग्योगः ( सुउ. १.२५ )

उपक्रमः ( सुउ. १.२५ )

**-विक्रयिन्**-वि., चिकित्साया विक्रयं कुर्वाणः केवलद्रव्यप्राप्तिदृष्ट्या चिकित्सां विदधानः ( असंसू. २.२१ )

**-विभाग**-पु., चिकित्साभेदः ( सुचि. ५.२७ )

**-सिद्धि**-स्त्री., अध्याय० ( कासि. ५ )
**-सूत्र**-न., चिकित्सासूत्रम् ( चनि. ४.५५ )
**-संकर**-पु., यौगपद्येन उपक्रमद्वयप्रयोगः ( सुसू. ३५.४८ )
**-हीन**-पु., पारदबन्ध० ( र. ११.६९ )
**क्रियाभ्यास**-पु., क्रियाणामुष्णोदकस्वेदक्षीरवृक्षकषाययोजनादीनामभ्यसनम्, अर्थाद् अनवरतमुपसेवनम् ( सुचि. ७.३३ )
**क्रीडनक**-न., बालानां क्रीडार्थं पशुपक्ष्यादीनां चित्राणि मूर्तयो वा ( काखिल. १२.६ ) अल्पं क्रीडनं क्रीडनकम्, अत्र अल्पार्थे कन्प्रत्ययः
क्रीडावस्तु ( चशा. ८.६३ )
**क्रीडा**-स्त्री., लोकप्रसिद्धैर्हस्तपादप्रक्षेपैर्नर्मपूर्वकं क्रीडनम् ( सुचि. ११.११ )
**-भूमि**-स्त्री., क्रीडनार्थं निर्मिता स्थली क्रीडाङ्गणम् ( असंउ. १ )
**क्रुकरमस्तक**-न., वनस्पति० चव्यम् ( रा. ६.११५ )
**क्रुद्ध**-वि., प्रकुपितः ( सुनि. १.२२ )
**-शूर**-वि., क्रुद्धे सति शूरः ( चशा. ४.३८ (४)
**क्रूर**-पु., वनस्पति० पुनर्नवाभेदः रक्तपुनर्नवा ( ध. १. २७६ ) द्र० 'पुनर्नवा'
**वनस्पति**०-क्षुवकः ( रापरि. ९.४० )
**-कर्मन्**-स्त्री., वनस्पति० कुटुम्बिनी ( रापरि. ५.२१ )
न., पशुवधादिकं क्रौर्यमूलकं कर्म ( सुसू. २९.१५ )
**-कोष्ठ**-वि., क्रूरं कोष्ठं यस्य ( चक. १२.७९ ) वातबहुलकोष्ठः, अस्य श्यामादिभिरपि कष्टेन विरेचनं जायते ( र. २८.७३ )
**-गन्ध**-पु., खनिज० गन्धकः ( रा. १३.१६७ )
**( -गन्धा )**-स्त्री., वनस्पति० कन्थारी ( रापरि. ८.२० )
**( क्रूरा )**-स्त्री., वनस्पति० रक्तपुनर्नवा पुनर्नवाभेदः ( रा. ५.४०६ ) द्र० 'पुनर्नवा'
**क्रोड**-पु., शारीर० उरः ( चसू. २७.३३४ )
हृदयस्थानम् ( सुसू. ४६.१३० )
प्राणि० वराहः ( रा. ११.१३१ )
वनस्पति० वाराहीकन्दः ( रा. ७.१३५ )
**-कन्या**-स्त्री., वनस्पति० वाराहीकन्दः ( रा. ७.१३४ )
**-चोडा**-स्त्री., वनस्पति० महामुण्डी ( रा. ५.२१९ )
**-पुट**-न., वराहपुटम् ( र. २.८७ )
**क्रोडेष्टा**-स्त्री., वनस्पति० मुस्ता ( रा. ६.५९ )

**क्रोध**-पु., मनोभाव० कोपः 'क्रोधमभिद्रोहेण नाम परपीडाप्रवृत्त्या परीक्षेत ( चवि. ४.८ )
राजसगुणः ( सुशा. १.१८ )
रुद्रकोपः स एव रुद्राज्ञया लोके ज्वररूपेणाऽऽगतः ( चचि. ३.२५ )
यक्ष्मपर्यायः ( चचि. ८.११ )
पित्तोन्मादस्य लक्षणेष्वेकं लक्षणम् ( चनि. ७.७ (२)
**-प्रचुरता**-स्त्री., लक्षण० क्रोधस्याऽऽधिक्यम्, शोणितजो विकारः ( चसू. २४.१४ )
**-विष**-न., क्रोधेन विषम् ( ड. सुक. १.४ )
**-संरम्भ**-पु., क्रोधस्यावेशो वेगो वा ( असंसू. ३६.११ )
**क्रोधाग्नि**-पु., रुद्रकोपस्वरूपोऽग्निर्ज्वररूपः स भस्मप्रहरणः त्रिशिरा नवलोचनो ज्वालामालाकुलो ह्रस्वजङ्घोदरश्च ( चचि. ३.२४ )
**क्रोशन**-न., आर्तस्वरेण रोदनम्, आक्रोशः ( सुशा. ९.१२ )
**( क्रोशना )**-स्त्री., ग्रह० रेवतीग्रहः ( का. रेवतीकल्पः ) तस्या लक्षणम्-उदरस्थो यया क्रोशेत्क्रोशना नाम सा स्मृता ।
**क्रोष्टुक**-पु., प्राणि० शृगालः ( सुनि. १.७६ )
**-पुच्छिका**-स्त्री., वनस्पति० पृश्निपर्णी ( ध. १.९० )
वनस्पति० गोलोमिका ( रा. परि. ५.३२ )
**-मेखला**-स्त्री., पृश्निपर्णी ( रा. ४.११८ ) ( असंउ. ४२ )
**-शिरस्**-न., रोग० वातरोगः तत्संप्राप्तिलक्षणे जानुमध्ये वातशोणितजो महारुजः स्थूलः शोफो भवति । स च शृगालमस्तकाकारः ( ड. सुनि. १.७६ ) ( असंनि. १५.५४ )
**-शीर्षक**-पु., क्रोष्टुकशिरः ( अहसू. २७.१६ )
**क्रोष्टुफल**-पु., वनस्पति० इङ्गुदी ( रा. परि. ८.१८ )
**क्रौञ्च**-पु., पर्वत० अयं स्कन्ददेवोऽसूदयत् ( सुउ. २८.१४ )
पक्षि० प्लवजातीयो जलचरः ( चसू. २७.४१ )
द्र० प्लव.
सविषान्नपरीक्षणपक्षिष्वेकः; क्रौञ्चस्तु विषसंसृष्टं दृष्ट्वान्नं मदमृच्छति ( सुक. १.३१ )
क्रौचिरः ( सुसू. ४६.१०५ )
अस्याऽस्थि मूत्रदोषहरम् । 'कैचर' इति लोके ( सुउ. ५८.४४ )
वनस्पति० पद्मबीजम् ( ध. ४.१५९ )

**क्रौञ्चक**–न., कन्दविष० ज्वरहिध्माफेनवमनादिकरम् ( असंउ. ४०.३३० ) 'कन्दविष'

( **क्रौञ्चिका** )–स्त्री., मूषा ( र. १०.१ )

( **क्रौञ्चा** )–स्त्री., वनस्पति० पद्मबीजम् ( रा. १०.२५६ )

( **क्रौञ्ची** )–स्त्री., बालग्रह० पूतना ( काबालग्रहचि. ) मूषा ( र. १५.४४ )

–**मुख**–वि., स्वस्तिकयन्त्र० क्रौञ्चमुखसदृशं यन्त्रम् ( सुसू. ७.१० )

**क्रौञ्चादन**–न., वनस्पति० घिञ्चुलिका शीतलं गुरु विष्टम्भि चेदम् ( चसू. २७.११६ )
क्रौञ्चुलिका ( जेज्जटः ) ( चचि. ३.२५८ )

( **क्रौञ्चादनी** )–स्त्री., वनस्पति० पद्मबीजम् ( ध. ४.१५९ )

**क्रौञ्चास्थि**–न., क्रौञ्चपक्षिणोऽस्थि ( चसू. २३.१५ ) मूत्रकृच्छ्रकृमिमेहस्थौल्यापहमेतत् ( असंसू. २४ )

**क्रौडी**–स्त्री., वनस्पति० वाराहीकन्दः ( रा. ७.१३४ )

**क्लम**–पु., लक्षण० मन इन्द्रियग्लानिः ( चसू. ७.३३ )
अनायासः श्रमः 'योऽनायासः श्रमो देहे प्रवृद्धः श्वासवर्जितः । स क्लम इति विज्ञेयः स च इन्द्रियार्थप्रबाधकः ॥ ( सुशा. ४.५१ )
तन्द्रालक्षणेष्वेकम् 'निद्रायां प्रबोधितस्य क्लमाभावः तन्द्रायां तु प्रबोधितोऽपि क्लाम्यति' ( ड. सुशा. ४.४९ )

–**घ्न**–वि., क्लमनाशनम् ( असंसू. ६ )

–**च्छेदिन्**–वि., क्लमनाशनम् ( असंसू. ७.२०६ )

**क्लान्त**–वि., लक्षण० श्रान्तः ( चसू. २१.३५ )

–**तमा**–वि., रोगलक्षण० मांसशोणितादिभिर्हीना अतितमां क्लान्ता, क्लान्ततमा ( चशा. ४.२३ )

**क्लिन्न**–वि., लक्षण० आर्द्रतां यातम्, आर्द्रितं वा ( र. ३.५० )

( **क्लिन्ना** ) स्त्री., वनस्पति० कण्टकारी ( रा. ४.१२४ )

–**वर्त्मन्**–न., नेत्ररोग० यद्वर्त्म बाह्यतोऽल्परुजं शूनमभ्यन्तरे च क्लिन्नं स्रवद्रूपं कण्डूनिस्तोदबहुलं, तत्क्लिन्नवर्त्मेति ज्ञेयम् ( सुउ. ३.२१ )

**क्लिष्ट**–वि., लक्षण० म्लानम् ( चसि. ६.१३ )
निन्दितम् ( चशा. १.१०७ )
आर्तम्, पीडितम् ( चचि. १३.१३ )
क्लेशयुक्तम्, दुःखयुक्तम् ( चशा. ६.३१ )

–**वर्त्मन्**–न., नेत्ररोग० यदुभयमपि वर्त्म मृद्वल्पवेदनमकस्माद्रक्तं च जायमानं दृश्यते, तत् क्लिष्टवर्त्म ज्ञेयम् । इदं रक्तजं साध्यं च । ( सुउ. ३.१८ )
श्लेष्मदुष्टेन रक्तेन यदुभयं वर्त्म बन्धुजीवनिभं क्लिष्टमांसमिव च जायते तदपि क्लिष्टवर्त्म बोध्यम् । अयं विदेहोक्तो नेत्ररोगः ( सुउ. ३.१८ )

**क्लीत**–पु., कीट० आग्नेयकीटः सविषोऽसौ ( असंउ. ४३ ) एतेन दष्टस्य नरस्य पित्तनिमित्तजा रोगा भवन्ति ( सुक. ८.११–१२ )

**क्लीतक**–न., मूलविष० स्थावरविष अष्टसु मूलविषेष्वेकम् । अनेनोपसेवितेन उद्वेष्टनप्रलापमोहा भवन्ति ( सुक. २.५ )
वनस्पति० यष्टीमधु ( चसू. १.८१ )
एतद् द्विविधम्–आनूपं स्थलजमिति ( च. सू. १.८१ )

**क्लीतनक**–पु., मूलविष० क्लीतकम् ( असंउ. ४० )

( **क्लीतनी** )–स्त्री., वनस्पति० नीलिनी ( रा. ४.३५० )

**क्लीतन**–न., वनस्पति० यष्टीमधुभेदः । क्लीतनं द्विविधम्–जलजं स्थलजं च । तत्र स्थलजं क्लीतनकं क्लीतनं क्लीतिकेति नामभिर्ज्ञायते । जलजं तु मधुपर्णी मधूलिकेति । क्लीतनगुणाः–मधुरं शीतलं गुरु रुच्यं बल्यं चक्षुष्यं वृष्यमस्रपित्तापहं च ( ध. १४४ ) द्र० 'यष्टीमधु'

( **क्लीतनिका** )–स्त्री., मूलविष० क्लीतकम् ( असंसू. १४ )
वनस्पति० जलजं यष्टीमधु ( असंसू. १४.४ )

**क्लीतनीयक**–न., वनस्पति० क्लीतकम् ( रा. ६.१८४ )

( **क्लीतिका** )–स्त्री., वनस्पति० स्थलजं क्लीतनम् ( ध. १.१४४ ) द्र० 'क्लीतन'

**क्लीब**–पु., हीनसत्त्वः ( चसू. ८.२५ )
नपुंसकः दुष्टबीजः ( चक्र. चशा. २.१९ )
क्षीणशुक्रः पुरुषः ( सुसू. ११.२८ ) नैष क्षारेणोपक्रम्यः ( सुसू. ११.२८ )
सुरताशक्तः ( भाप्र. )

–**ता**–स्त्री., लक्षण० पुरुषस्य भावो धर्मो वा पौरुषम् तद्विरुद्धमपौरुषं नाम क्लीबता ( सुशा. ९.१२ )
नपुंसकता, स्त्रीसंसर्गाद्धि सद्यः स्यात् क्लीबता बलिनामपि ( असंसू. ९.७७ )

**क्लेद**–पु., शरीरस्थं जलम्, द्रवद्रव्यविशेषो वा ( चसू. २६.४३ ( ६ )
आहारपरिणामकरभावविशेषः, अन्नशैथिल्यापादनं तस्य कर्म ( चशा. ६.१५ )
आर्द्रत्वम् ( सुसू. १८.२१ )
शोणितादिविकारः ( अरु. ) मलार्द्रत्वम् ( हे. अहृसू. १२.५२ )

**–वाहन**–न., क्लेदस्य बहिर्गमनम् ( अहृसू. ११.५ )

**–विधृति**–स्त्री., स्वेदस्य श्रेष्ठं कर्म, क्लेदस्य विधारणम् मध्यमत्वक्स्नेहकचरोमधारणम् ( अरु. अहृसू. ११.५ )

**–विशोषण**–न., रूक्षणं, क्लेदस्य विशोषणम् ( चशा. ८.३१ )

**क्लेदक**–पु., कफः क्लेदकबोधकतर्पकादिपञ्चप्रकारकः, तत्राऽयमामाशयस्थः अन्नसङ्घातस्य क्लेदनात्क्लेदकः ( असंसू. २०.६ अहृसू. १२.१७ )

**क्लेदन**–पु., अम्लरसस्य गुणविशेष आर्द्रताजनकः ( सुसू. ४२.१० ) आर्द्रभावः ( सुसू. ४१.४ (२ )

**क्लेदाचूषण**–वि.,विशदगुणस्य कर्म. आर्द्रीभावविनाशकरः ( सुसू. ४६.५१७ )

**क्लेशभीरु**–वि., दुःखासहनशीलः, ( अहृसू. १६.२१ )

**क्लैब्य**–न., लक्षण० नपुंसकत्वम् ( चचि. ३०.१५४ ) रोग० शुक्रप्रदोषजरोगेष्वेकः, ध्वजानुच्छ्रायः ( चक्र. चसू. २८.१८ ) तत्कारणानि–असात्म्यसेवनाद्दुष्टयोनिगमनादभिघाताच्छ्रुकातिसेवनादिभिर्बीजध्वजोपघाताभ्यां जरया शुक्रसंक्षयात्क्लैब्यं संपद्यते, तल्लक्षणम्–संकल्पप्रवणो वश्यां प्रियामपि स्त्रियं लिङ्गशैथिल्यान्न याति, कदाचिद्याति चेत् श्वासार्तः स्विन्नगात्रो मोघसंकल्पचेष्टितो म्लानशिश्नो निर्वीर्यश्च भवेत् ( चचि. ३०.१५५–५७ ) तत्पञ्चविधम्–बीजोपघातजं जरासंभवं शुक्रक्षयजं शेफश्छेदजं वृषणोत्पाटनजं च, तल्लक्षणानि–बीजोपघातजे नरः पाण्डुवर्णः सुदुर्बलोऽल्पप्राणः प्रमदास्वल्पहर्षश्च भवेत् ( चचि. ३०.१६० ) जरासंभवे क्षीणधातुर्विवर्णो दीनश्च भवेत् ( चचि. ३०.१६१ ) क्षयजे अनशनक्रोधशोकादिभ्यो रससंक्षयस्तेन च शुक्रक्षयस्ततः क्लैब्यम् ( चचि. ३०.१८१ ) शेफसश्छेदनात्क्लीबता वृषणोत्पाटनाच्च क्लैब्यम् ( चचि. ३०.१८८ ) अन्त्ये द्वे असाध्ये

सुश्रुते–क्लैब्यप्रकाराः षट्–मानसमाहारजं शुक्रक्षयजं मर्मच्छेदजं सहजं शुक्रनिरोधजं चेति, तत्र मानसम्–तैस्तैरहृद्यैर्भावैः रिरंसो रन्तुमिच्छोर्मनसि क्षते द्वेष्यस्त्रीसंप्रयोगाच्च भवति ( सुचि. २६.९ ) आहारजम्–कटुकाम्लोष्णलवणैरतिसेवितैः सौम्यधातुक्षयाद्भवति ( सुचि. २६.१०–११ ) शुक्रक्षयजम्–अतिव्यवायशीलनाद्वाजीकरणाभावाज्जायमानाद् ध्वजभङ्गाद्भवति (सुचि. २६.११) मर्मच्छेदजम्–महता मेढ्ररोगेण मर्मच्छेदेन वा पुंस्त्वोपघातो भवति, सहजम्–जन्मप्रभृति यः क्लीबस्तस्त्क्लैब्यं सहजम् ( सुचि. २६.१३ ) शुक्रनिरोधजम्–बलिनः क्षुब्धमनसो निरोधाद्ब्रह्मचर्यतश्च भवति ( सुचि. २६.१४ ) तत्र सहजं मर्मच्छेदजं च असाध्यम्, इतराणि साध्यानि

तत्सामान्यचिकित्सा–रक्तमोक्षणस्नेहपानानि, सस्नेहं विरेचनं, यथावस्थमनुवासनमास्थापनं वा, जरासंभवक्षयजयोः स्नेहस्वेदौ सस्नेहं शोधनं क्षीरसर्पिर्वृष्ययोगा यापनबस्तयो रसायनप्रयोगाश्च ( चचि. ३०.१९६–२०३ )

यापनबस्तिर्मुस्तादिबस्तिरिति ( चक्रः चचि. ३०.१९६–२०३ )

**क्लोम**–( तिलकम् ) तस्य ( हृदयस्य ) अधोदक्षिणतो यकृत् क्लोम च ( सुशा. ४.३१ ) ( चशा. ७.१० ) 'कालखण्डादधस्तात् स्थितं दक्षिणपार्श्वस्थं तिलकं प्रसिद्धम् ( ड० सुनि. ९.१८ ) वृक्कादूर्ध्वं पिपासास्थानम् क्लोम,' ( मानि. मधुकोशः ) हृदयावयवम् ( चक्र. चचि. १३.४५ )

हृद्दक्षिणतो मांसग्रन्थिः ( हे. अहृसू. १२.३ )

पिपासास्थानम्, उदकवहानां स्रोतसां मूलम् ( चवि. ५.८ ) ( अहृसू. १२.३ )

**( क्लोम )–नाडी**–स्त्री., मण्डलसंधिस्थानम् ( सुशा. ५.२७ )

**क्लोमन्**–न., शारीर० पञ्चदशकोष्ठाङ्गेष्वेकम्

**क्लोमापकर्षण**–न., लक्षण० क्लोमापकर्षणाकारा वेदना ( चक्र. चसि. ९.६ )

**क्वचित्स्थ**–वि., कण्ठताल्वादितत्तत्स्थानगतः ( दोषः ) ( चचि. १२.९ )

**क्वथित**–न., कथनं क्वाथः कषायो वा ( र. २.१७ ) वि., शृतम्, पाचितम् ( असंसू. ६.२९ )

**–शीत**–वि., आदौ क्वथितं पश्चाच्छीतम् ( अहृसू. ५.१८ )

**क्वाथ**–पु., कल्पद्रव्यं द्रवेणाप्लुत्य शृतं क्वाथ इत्युच्यते। क्षुण्णे द्रव्यपले मृत्पात्रस्थे षोडशगुणं पानीयं क्षिपेत्। तदष्टमांशावशेषितं गृहीतं क्वाथ इत्युच्यते। क्वाथपानमात्रा–क्वाथस्य पलमुत्तमा मात्रा। त्रिभिः कर्षैर्मध्यमा मात्रा। कर्षद्वयं निकृष्टा च मात्रा ( भा. प्र. भेषज. ३० )

केचिद् वैद्याः क्वाथ्यद्रव्यपले षोडशगुणं पानीयं क्षिप्त्वा, क्वाथयित्वा चतुर्भागावशिष्टं जलं क्वाथमिति

वदन्ति । क्वाथे वातपित्तकफातङ्के क्रमशश्चतुर्थाष्ट-मषोडशांशा सिता प्रक्षेप्या । एतत्प्रमाणविपरीतो मधुप्रक्षेपः कार्यः । जीरकगुग्गुलुक्षारलवणानि शिला-जतुहिङ्गुत्रिकटुकानि च शाणप्रमाणानि क्वाथे प्रक्षेप्-व्यानि । क्षीरं घृतं गुडं तैलं द्रवं कल्कं चूर्णादिकं च कर्षसम्मितं क्वाथे निक्षिप्येत
( सुचि. ११.८ काखिल. ३.४२-४३ ) ( भा. प्र. )

**काथन**-न., क्वाथवजले उत्क्वथनम् ( र. २.३६-३७ )

**क्षण**-पु., कालस्य सूक्ष्मो भागः ( अहसू. १.२४ )
निर्यास० रालः ( ध. ३.१२१ )
**-दा**-स्त्री. वनस्पति० हरिद्रा ( सुउ. १७.७ )
**-दान्ध्य**-न., नेत्ररोग० नक्तान्ध्यम्, राज्यन्ध्यम् ( सुउ. १७.१६ )

**क्षणन**-न., क्षतजननम् ( चनि. ६.४ )
छेदनम् ( सुचि. ७.३६ )

**क्षणादि**-वि., क्षणादारभ्य संवत्सरपर्यन्तः कालः ( अहसू. १.२४ )

**क्षणिका**-वि., आशुतरविनाशिनी इन्द्रियार्थसत्त्वात्म-सन्निकर्षजं तत्तदिन्द्रियविशिष्टं ज्ञानं (बुद्धिः) न तु बौद्धसिद्धान्तवदेकक्षणावस्थायिनी (चसू. ८.१२)

**क्षणिन्**-वि., कृतक्षणः, क्षणो नाम मुहूर्तो नियमो वा कृतो येन ( चचि. १(४).२७ )

**क्षत**-न., रोग० तन्निरुक्तिः त्वग्रक्तमांसस्नाय्वस्थ्यादिक्षण-नात्क्षतमिति । तत् छिन्नभिन्नपिच्चितभेदेन त्रिविधम् ( असंउ. ३१ )
आगन्तुव्रणः ( सुनि. ९.११ )
पाषाणलगुडादिभिरुद्भूतः सद्योव्रणप्रकारः ( सुचि. २.९० )
उरःक्षतम् ( परिव० ) ( चसू. १४.१८ )
वि., क्षतोरस्कः (ड. सुचि. ३५.२१, चसू. १४.१८)
अतिदारितम् उरः ( सुउ. ४१.२४ )
**-कण्ठ**-वि., लक्षण० कण्ठे क्षतं यस्य ( असंसू. ३७.२१ )
**-क्षम**-पु., वनस्पति० खदिरः ( ध. १.२५ )
**-क्षीण**-वि. लक्षण० उरःक्षतेन क्षीणः ( चचि. ११.३-८ )
**-क्षीणचिकित्सित**-पु., अध्याय० ( चचि. ११ )
**-गुद**-वि., लक्षण० क्षतयुक्तं गुदं यस्य, अविरेच्यो-ऽयम् ( चसि. २.१२ )
**-घ्नी**-स्त्री., भैषज्य० लाक्षा ( ध. ३.८२ )
**-ज**-वि., क्षतजन्यो ज्वरादिः ( चचि. ३.२७२ )
न., आर्तवरक्तम् ( ड. सुउ. ४२.१३ )
रक्तम् ( र. ५.१०९ )



**( जा )**-स्त्री., रोग० तृष्णाभेदः, व्रणनिमित्ता तृष्णा ( सु. उ. ४८.६ ) द्र० 'तृष्णा'
**-जसगन्धिक**-वि., लक्षण० रुधिरसमानगन्धिकः विस्रगन्धः ( सुउ. २७.८ )
**-जार्मन्**-न., नेत्ररोग० तल्लक्षणम्-नेत्रस्य शुक्लभागे अरुणपद्मप्रभं वृद्धिमुपयन्मांसमस्ति । एतद्रक्तजं साध्यं च ( सुउ. ४.५० )
**-ज्वर**-पु., रोग० उरःक्षते जायमानो ज्वरः ( चचि. २९.१०१ )
**-पायु**-वि., लक्षण० क्षतगुदः ( अहसू. १८.११ )
**-विधान**-न., क्षते चिकित्साविधिः ( सुशा. ९.१२ )
**-विधि**-पु., क्षतस्य क्षौद्रघृततैलाभ्यङ्गादिका यथा-वस्थं चिकित्सा । 'क्षते क्षतविधिः कार्यः पिच्चिते भग्नवद्विधिः' ( सुचि. २.७६ )
**-विसर्प**-पु., रोग० विसर्पभेदः, तत्संप्राप्तिः-दोष-बहुलस्य त्रिदोषबहुलस्येति केचित् ( ड. ) नरस्य पित्तं रक्तं च शस्त्रव्यालदन्तनखादिभिर्जातं सद्यः-क्षतव्रणमुपेत्य शोफं कुरुतः । तल्लक्षणम्-स शोफः श्यावः सलोहितोऽतिज्वरदाहपाकोऽसितैः कुलत्थ-सदृशैः स्फोटैः कीर्णो भवति ( सुनि. १०.७ ) एष पित्तविसर्पलक्षणो द्रुतगतिज्वरदाहपाकस्फोट-प्रभेदबहुलश्चेति भोजः । अयमसाध्यः । ( सुनि. १०.८ ) द्र० 'विसर्प'
**-विसर्पण**-न., लक्षण० क्षतप्रसारः ( सुनि. ५.४ )
**-शुक्रक**-न.,-नेत्ररोग० पित्तं कृष्णेऽथवा दृष्टौ त्वचं छित्त्वा तोदाश्रुरागवत् शुक्रं जनयति, तत् कृष्ण-मण्डलं पक्वजम्बूनिभं किञ्चिन्निम्नं च भवति, एतत् कृच्छ्रसाध्यम् । द्वितीयपटलव्यधात् याप्यम् । तृतीयपटलच्छेदाद् व्रणैर्निचितमसाध्यम् । तत्र तोदादिबाहुल्यं सूचीविद्धाभकृष्णता च ( असंउ. १३ )

**क्षतातुर**-वि., व्रणातुरः, ( सुउ. ६०.३ )

**क्षतान्त्र**-न., रोग० उदरभेदः छिद्रोदरम् । अस्य क्षतोदरं परिस्राव्युदरमिति नामनी । तत्संप्राप्तिलक्षणे-अस्मिन् अन्नसंबद्धं शर्कराकाष्ठास्थिकण्टकादिशल्यमुदरंगतं सत् अन्त्रं भिनत्ति । तस्मादन्त्रात् सलिलप्रकाशः स्रावः गुदतो भूयः प्रचलेत् । उदरं नाभेरधो वृद्धिमेति निस्तुद्यते विदह्यते च । द्र० 'उदर' ( सुनि. ७.१९-२१ )

**क्षतोत्थ**-न., क्षतजं शोणितम्. ( सुउ. ४१.४९ )

**क्षतोदर**-न., रोग० उदरभेदः छिद्रोदरम् ( चचि. १३.२२ ) द्र० 'उदर'

**क्षतोरस्क**–वि., लक्षण० उरःक्षतयुक्तः ( अहृसू. १९.४ )
**क्षतोष्मन्**–पु., क्षतस्थानीयोष्मा ( सुनि. ९.१२ )
क्षते प्रहारसंघट्टजनितं तेजः ( सुचि. १.४ )
**क्षत्र**–न., वनस्पति० तगरम् ( रा. १०.१०३ )
**क्षत्रिय**–पु., ब्राह्मणादिवर्णेष्वेकः ( सुसू. २.३ )
पु., सर्पजातिविशेषः, असौ स्निग्धवर्णो भृशकोपनः, सूर्यचन्द्राकृतिच्छत्राम्बुजराजचिह्नयुक्तः ( सुक. ४.२६ )
**–चरा**–स्त्री., वनस्पति० कटुतुम्बी ( ध. १.१७० )
क्षीरतुम्बी ( रा. ७.२३८ )
**क्षपण**–न., उपक्रम० सर्वथोच्छेदनम् ( चचि. २७.२५ )
ह्रासः ( परिव० ) ( सुसू. १५.३६ )
संशमनम् ( सुसू. १५.१७ )
**–क्रिया**–स्त्री., कफादिक्षयकरी चिकित्सा, श्लैष्मिकगुल्मशूलादिषु हिता ( सुउ. ४२.७४ )
**क्षपा**–स्त्री., रात्रिः ( सुनि. १०.११ )
**–शय**–वि., रात्र्यामेव स्वपितीति ( चसू. १३.६२ )
**क्षम**–पु., वनस्पति० खदिरः ( रा. ८.३१ )
**( क्षमा )**–स्त्री., क्षान्ति, सहिष्णुत्वम् ( अहृसू. ११.३ )
सर्वसहता ( सुसू. ३४.११ )
**( क्षमा )–शान्तिपर**–पु., वनस्पति० दमनः ( ध. ३.६६ )
**क्षय**–पु., लक्षण० शोकादिभिः संजातो हृदयस्थायिनो रसस्य क्षयः ( चनि. ६.३ )
धातुक्षयः ( चनि. ८.१९ ) ( सुउ. २०.९ )
ह्रासः, न्यूनत्वम् ( चसू. १७.४ )
क्षीयमाणशरीरावस्था ( सुसू. १४.३ )
स्वप्रमाणहानिः ( सुसू. १५.२४–२६ )
रोग० ज्वरः देहक्षयहेतुत्वात्क्षयः ( चचि ३. १३ )
शोषसंज्ञकस्य राजयक्ष्मणः पर्यायसंज्ञा, क्रियाक्षयकरत्वात्क्षयः ( सुउ. ४१.४ )
राजयक्ष्मा ( असंनि. ५ )
**–तृष्णा**–स्त्री., रोग० धातुक्षयजा तृष्णा ( चचि. २२.५० ) द्र० 'तृष्णा'
**क्षव**–पु., छिक्का ( सुउ. ५५.४ )
वनस्पति० क्षुवकः ( रापरि. ९.४० )
राजिका ( ध. ४.६० )
फणिज्जकाकारः परियात्रे प्रायो भवति ( सुउ. ५६.१७ )
**क्षवक**–पु., वनस्पति० अपामार्गः ( चक. १.२५ ) ( रा. ४.३८८ ) श्वेतापामार्गः ( चचि. २६.१८४ )
छत्रकः तद्गुणाः–स्वादुपाकः पिच्छिलो विष्यन्दी कृमिलो वातलो नातिपित्तश्लेष्मकरः कफहरः सृष्टमूत्रपुरीषश्च ( सुसू. ४६.२९०–९१ )
छिक्किनी ( कासि. ४ )
राजिका ( ध. ४.६० )
राजमाषः ( रा. १६.१३५ )
सुरसागणोक्तमेकं द्रव्यम्, क्षवथुकारः फणिज्झकाकारः ( ड. सुसू. ३८.१८–१९ )
**( क्षवथु )**–पु., छिक्का, 'प्राणोदानौ समौ स्यातां मूर्ध्नि स्रोतःपथि स्थितौ। नस्तः प्रवर्तते शब्दः क्षवथुं तं विनिर्दिशेत् ॥' ( ड. सुशा. ४.५० ) ऊर्ध्वस्रोतोऽवस्थितयोः प्राणोदानयोराकुलितयोर्नासाविवरतो निर्गमनम् ( ड. सुसू. २६.१३; चनि. ६.१३ )
**–ज**–पु., रोग० षड्डुदावर्तप्रकारेष्वेकः ( चसू. १९.४ (३) क्षवथुविघाताज्जायमानोदावर्तस्य लक्षणम्–शिरोक्षिनासाकर्णेषु रोगाः कण्ठमुखयोर्वायुपूर्णत्ववद् भानम्, कण्ठमुखयोरतीव तोदः अव्यक्तवचनत्वमुच्छ्वासावरोधो मन्यास्तम्भादयश्च विकारा अस्मिन् भवन्ति ( सुउ. ५५.१३ )
**( क्षविका )**–स्त्री., वनस्पति० बृहती ( रा. ४.१२३ )
**क्षाम**–वि., लक्षण० क्षीणम्, कृशम् ( चवि. ८.९८ )
क्षीणबलकायः ( ड. सुचि ३४.१६ )
**–ता**–स्त्री., लक्षण० निर्बलता ( अहृसू. २७.३६ )
**–स्वर**–वि., लक्षण० दुर्बलस्वरः ( सुउ. ४७.७५ )
**क्षामानन**–वि., लक्षण० क्षीणमुखक्रियः ( डसुउ. ५२.८ )
**क्षार**–पु., कल्प० अनुशस्त्रेष्वेकम्, शस्त्रानुशस्त्रेभ्यः क्षारः प्रधानतमः छेद्यभेद्यलेख्यकरणात् त्रिदोषघ्नत्वाद् विशेषक्रियावचारणाच्च ( सुसू. ११.३ ) तन्निरुक्तिः–क्षरणात् क्षणनाद्वा क्षारः ( सुसू. ११.४ ) तत्कर्म–तीक्ष्ण उष्णो लघुः रूक्षः क्लेदी पक्ता विदारणो दाहनो दीपनश्छेत्ता ( अग्निसन्निभश्च ) ( चसू. २७.३०६ ) रोपणः शोधनः शोषणः स्तम्भनो लेखनः कृम्यामकुष्ठविषमेदोनाशनः पुंस्त्वोपघातकश्च ( र. १७.६५ )
प्रतिसारणीय–पानीयभेदाद्द्विधा
पलाशतिलनालाश्वदंष्ट्रकदलीक्षाराः पानीयाः।
प्रतिसारणीयो मृदुमध्यतीक्ष्णभेदात् त्रिधा
तत्कृतिः–कृष्णमुष्ककं खण्डशः पाटयित्वा निर्वाते देशे निचितिं कृत्वा सुधाशर्कराश्च प्रक्षिप्य तिलनालैरादीपयेत्। उपशान्तेऽग्नौ तद्भस्म षड्गुणजले महति कटाहे आलोड्य मूत्रैर्वा

यथोक्तैरेकविंशतिकृत्वः परिस्राव्य दर्व्याऽवघट्टयन् विपचेत् । यदाऽच्छो रक्तस्तीक्ष्णः पिच्छिलश्च भवति तमादाय महति वस्त्रे परिस्राव्य पुनरग्नावधिश्रयेत् । नातिद्रवसान्द्रं दृष्ट्वाऽवतार्य सुगुप्तं स्थापयेत् । एवमेव कुटजपलाशाश्वकर्णादिषु क्षारकृतिः । एष मृदुः । पाकसमये सुधाकटशर्कराभस्मशर्कराशङ्खनाभीनां प्रक्षेपेण मध्यमः । दन्तीद्रवन्तीचित्रकादिप्रक्षेपणेन तीक्ष्णः ( सुसू. ११.११–१३ )

क्षारस्याष्टौ गुणाः–नातितीक्ष्णो, नातिमृदुः श्लक्ष्णः शुक्लः पिच्छिलोऽविष्यन्दी सौम्यःशीघ्रश्च ( सुसू. ११.१६ )

अष्टौ दोषाः–अतिमार्दवश्वैत्यौष्ण्यतैक्ष्ण्यपैच्छिल्यसर्पितासान्द्रतापक्वताहीनद्रव्यताश्च

पानीयक्षारयोग्याः–

गरगुल्मोदराग्निसङ्गाजीर्णारोचकाद्यार्ताः

प्रतिसारणीययोग्याः–

कुष्ठकिटिभदद्रुमण्डलकिलासादयः

क्षारायोग्याः–दुर्बलबालस्थविरभीरुसर्वाङ्गशूनोदरिणस्तथा मर्मसिरास्नायुसन्धितरुणास्थिवर्त्मरोगादीनि स्थानानि । क्षारदग्धं त्रिविधम्–सम्यग्दग्धमतिदग्धं हीनदग्धं च । सम्यग्दग्धे विकारोपशमो लाघवमनास्रावश्च । अतिदग्धे दाहपाकरागस्रावाङ्गमर्दक्लमपिपासा मूर्च्छा मरणं वा ( सुसू. ११.१७–१८ ) हीनदग्धे तोदकण्डुजाड्यानि व्याधिवृद्धिश्च ( सुसू. ११.२६ )

क्षारपातने मात्रा–नखोत्सेधप्रमाणाऽऽद्या, द्विगुणा मध्यमा, त्रिगुणा महती, पित्ते श्लेष्मणि वाते च यथासङ्ख्यं प्रयोज्या ( ड. सुचि. ६.४ )

पायनाद्रव्येष्वेकम्, तत्पायितं शस्त्रं शरशल्यास्थिच्छेदनेषु प्रयुञ्जीत ( असंसू. ३४.३४ )

क्षारः पुंस्त्वोपघातिनां श्रेष्ठः ( चसू. २५.४० )

न., भैषज्य० सामुद्रलवणम् ( ध. २.३४ )

भैषज्य० बिडम् ( ध. २.२८ )

**–कर्मन्**–न., क्षारोपयोजनम्, व्रणस्य षष्ट्युपक्रमेष्वेकः ( सुचि. १.८ )

**–कल्प**–पु., क्षारोत्पादनविधिः ( सुचि. ४.३२ )

**–कृत्य**–वि., क्षारेण कृत्यश्चिकित्सनीयः, क्षारकर्मयोग्यः ( सुसू. ११.२८ )

**–गुडिका**–स्त्री., योग० ग्रहणीनाशिनी ( चचि. १५.१८३–१८५ )

विसूचिकागुल्मगराश्मरीश्वासकासघ्नी ( चचि. १२.४३–४६ )

**–घृत**–न., घृत० इदमग्निविवर्धनं ग्रहण्यां च शस्तम् ( चचि. १५.१७१ )

**–जल**–न., क्षारसंस्कृतमुदकम्, अर्कामृताक्षारजलोषिता यवाः शोषिणे प्रशस्ताः । तत्कृतिः–पानाय भोजनायाथ भस्म स्राव्यं चतुर्गुणे जलेऽर्धमवशिष्टे तु क्षाराम्भः ( सुउ. ४१.३८ )

**–तन्त्रविद्**–वि., क्षारविधायकतन्त्रज्ञः ( चचि. ५.६४ )

**–ताम्र**–न., योग० सर्वशूलविनाशकः ( र. १८.१६० )

**–तैल**–न., तैल० बाधिर्यादिकर्णरोगेषु पूरणायोपयुज्यते ( चचि. २६.२२८ ) क्षारोदकेन सिद्धं तैलम् ( सुचि. २.८८ ) कफवातोत्थजीर्णज्वरेष्वभ्यङ्गार्थमुपयुज्यते ( सुउ. ३९.२७३ )

**–त्रय**–न., सर्जिक्षारं यवक्षारं टङ्कणक्षारं च ( ध. ७.६९ )

**–दग्ध**–वि., क्षारेण दग्धः ( अहृसू. २९.७२ )

**–दला**–स्त्री., वनस्पति० पलाशलोहिता ( रापरि. ७.६६ )

**–दोष**–पु., क्षारस्याऽतिमार्दवश्वैत्यौष्ण्यादिदोषाः नव दश वा ( सुसू. ११.१७ ) ( असंसू. ३९ )

**–द्रव्य**–न., क्षारकल्पार्थमुपयुक्तं द्रव्यम्, मुष्कककुटजपलाशाश्वकर्णपारिभद्रादीनि ( सुसू. ३७.१० )

**–निष्यन्द**–पु., क्षारगालनविधौ यः पिच्छिलो रक्तोऽच्छस्तीक्ष्णः परिस्रावो भवति स क्षारनिष्यन्दः ( अहृसू. ३०.१५ )

**–पञ्चक**–न., पलाश–तिल–मुष्कक–सर्जिका–यवक्षाराः, एतेषामेव संमील्य क्षारपञ्चकमुच्यते ( ध. ७.७७ )

**–पर्पट**–पु., क्षारयुक्तः पर्पटः, अयं रुच्यो लघीयांश्च ( असंसू. ७.५४ )

**–पाकविधि**–पु., अध्याय० ( सुसू. ११ )

**–पाणि**–पु., पुनर्वसोरात्रेयस्य षण्णां शिष्याणां तन्त्रकर्तॄणामेकतमोऽयं तन्त्रकर्ता ( चसू. १.३१ )

**–पायित**–वि., संस्कार० अग्नितप्त–शस्त्राणां तीक्ष्णतावाप्तये क्षारद्रव्येषु निर्वापणम् ( सुसू. ८.१२ )

**–बन्ध**–पु., पारदबन्ध० शङ्खशुक्तिवराटाद्यैः संसाधितः पारदः प्रक्रिया चास्य–भस्मीकृतानां शङ्खशुक्त्यादीनां वृक्षक्षारादीनां च मूषां कृत्वा तत् संपुटे निहितसम्पुटितः पारदो लघुपुटदानेन भस्मीभवति ( र. ११.७१ )

**–बल**–न., क्षारस्य शक्तिः, उष्णतीक्ष्णत्वादीनामौत्कट्यम् ( सुचि. ६.४ )
**–मेलक**–पु., भैषज्य० सर्वक्षारः ( रा. ६.५७ )
**–मेह**–पु., रोग० पित्तजमेहभेदः गलितक्षारद्रवेण वर्णगन्धरसस्पर्शैः सदृशमूत्रत्वात् क्षारमेहः ( सुनि. ६.११ ) द्र० 'प्रमेह'. गन्धवर्णरसस्पर्शैः स्रुतक्षारोपमं मेहति ( चनि. ४.२५ )
**–यूष**–पु., अपामार्गादिजक्षारयुक्तो यूषः ( चचि. १७.९७ )
**–लवण**–न., भैषज्य० लवणभेदः लोणारक्षारम् ( रा. ६.५३ )
**–लेप**–पु., उपक्रम० मषश्वित्रबाह्यार्शःकुष्ठादिषु योज्यः ( अहृसू. ३०.३–४ )
**–वटी**–स्त्री., योग० रक्तगुल्मारुचिमन्दाग्निग्रहण्यर्शःशूलनाशिनी ( र. १८.१७४ )
**–वर्ग**–पु., क्षारसंग्रहः, मुष्ककुटजपलाशाश्वकर्णपारिभद्रकाऽऽरग्वधतिल्वकार्कस्नुह्यपामार्गपाटलानक्तमालवृषकदलीचित्रकपूतीकेन्द्रवृक्षास्फोताश्मारकसप्तच्छदाग्निमन्थगुञ्जाकोशातक्यः ( सुसू. ११.११ ) यवक्षारस्वर्जिकाक्षारपाकिमटङ्कणक्षारप्रभृतयः ( सुसू. ४६.३२२ )
**–वृक्ष**–पु., वनस्पति० मुष्ककः ( रा. ११.२२० )
**–श्रेष्ठ**–पु., वनस्पति० मुष्ककः ( रा. ५.१३२ ) पलाशः ( ध. ५.१६२ )
न., लवणभेदः वज्रकक्षारम् ( रा. ६.५५ )
**–षट्क**–न., षट् क्षाराः–कृष्णतिलपलाशवचापामार्गकुटजमुष्ककेभ्यो जाताः ( ध. ७.७० )
**–सूत्र**–न., कार्पासकृता वर्तिः भगन्दरे गत्यवदारणे उपयुज्यते ( चचि. १२.९७ ) कृशदुर्बलभीरूणां मर्माश्रितनाडीच्छेदने समुपयुज्येत ( सुचि. १७.२९ )
**–स्वर्जिन्**–पु., खनिज० सर्जिकाक्षारः ( रा. ६.२६ )

**क्षारागद**–पु., योग० विसूचिकालसकविलम्बिकादिनाशनः ( सुउ. ५६.१५ ) एतल्लिप्ता दुन्दुभिध्वजपताकादयो दर्शनस्पर्शश्रवणादिभिः सर्पादिसर्वविषहरा भवन्ति ( सुक. ६.३–७ )

**क्षाराञ्जन**–न., नेत्ररोगे अञ्जन० बलासग्रथितनाशनम् ( सुउ. ११.१०–१२ )

**क्षाराम्बु**–न., क्षारजलम् ( अहृसू. २९.७६ )
**–गण्डूष**–पु., क्षारजलचुलुकः श्लेष्मचयापहः ( असंसू. ३१ )

**क्षाराम्लसर्पिस्**–न., योग० चाङ्गेरीकोलाद्यम्लक्षारसाधितं घृतम्, चाङ्गेरीघृतेत्यपरपर्यायम्, अतीसारामाजीर्णादिनाशनम् ( चचि. १९.४३ ) ( चसि. ६.६४ )

**क्षाराष्टक**–न., अपामार्गपलाशार्कतिलमुष्कयवाग्रजसर्जिकाटङ्कणाश्चेत्यष्टौ क्षाराः ( ध. ७.६६ )

**क्षारासव**–पु., आसुत० मध्वादिना पलाशक्षारपानीयेन सह निष्पादितः, महाकुष्ठचिकित्सितोक्तः कुष्ठहरः ( सुउ. ५७.१५ )
विरेचनार्थे कृतः सुराकल्पः ( सुसू. ४४.३०–३४ )

**क्षारोदक**–न., क्षारं गालयित्वा यदुदकं गृह्यते तत्। वातश्लेष्मशोफेषु परिषेकार्थमुपयुज्यते ( ड. सुचि. १.१७ )
क्षारक्वाथः ( सुसू. ११.११ )

**क्षिति**–स्त्री., वनस्पति० खदिरः ( रा. ८.३१ )
भैषज्य० गोपित्तम्, रोचना ( र. १०.१७ )
**–खेचर**–पु., भूनागः, इन्द्रगोपः भूनागसत्त्वं कासीसं च ( र. १०.१७ )
**–ज**–वि., भूमिजं शाकादि ( सुसू. ४६.२९३ )
**–धर**–पु., पर्वतः ( चक. १ र. १७.६८ )
**–धररुधिर**–न., गैरिकम् ( र. १७.६८ )
शिलाजतुः ( र. १७.६८ )
**–फल**–न., हरितमुद्गः ( र. १७.६६ )
धात्रीफलम् ( र. १७.६६ )
**–बदरी**–स्त्री., वनस्पति० बदरभेदः भूबदरी ( रा. ११.१६२ ) द्र० 'बदर'
**–रुह**–वि., वृक्षः ( चक. १.८ )

**क्षिप्र**–न., मर्म० स्नायुमर्म पादस्याङ्गुष्ठाङ्गुल्योर्मध्ये क्षिप्रं नाम मर्म ( सुशा. ६.२४ ) अधःशाखायां वामदक्षिणभेदेन द्वे तत्प्रमाणमङ्गुलार्धम् ( सुशा. ६.३२ ) तत्र विद्धस्य रक्तस्रुतिः ( असंशा. ७.४ ) आक्षेपकेण मरणम्। कालान्तर-प्राणहरमेतत् ( सुशा. ६.३२ )
**–कारिन्**–वि., आशुकारि ( चसू. २८.७ )
**–पाक**–पु., आशुपाकः ( असंसू. ८ )

( **क्षिप्रा** )–स्त्री., शुक्तिका, भारविरहिता ( ७.५–२२ )
क्षिप्रम्–( अव्य० ) नातिद्रुतं नातिविलम्बितम् ( सुसू. ४६.४६५ )

**क्षिप्रोत्थान**–वि., लक्षण० आशूद्गमो यस्य ( सुनि. ९.८ )

**क्षीण**–वि., लक्षण० उत्साहोपचयबलरहितः ( ड. सुउ. ४०.२१ )

दुर्बलः शक्तिहीनः ( सुचि. २६.४ )
क्षयी ( चसू. १३.४१ )
अध्वादिखेदेन हीयमानबलः ( सुचि. २.७८ )
**-बल**-वि., लक्षण० कर्मनिर्वर्तनासमर्थः (सुउ. ५२.८)
**-बलीय**-वि., क्षीणबलसम्बन्धि ( सुचि. २६.१ )
इदं वाजीकरणचिकित्सितशब्दस्य विशेषणम्
**-रक्त**-वि., लक्षण० हीनं रक्तं यस्य (असंसू. ३६.२०)
**( रक्ता )**-स्त्री., जातः स्त्रीशोणितस्य-रजसः क्षयो यस्याः ( चचि. ३०.२२४ )
**-रेतस्**-पु., लक्षण० कारणविशेषैः स्वमानादल्पीभूतं रेतो यस्य, क्षीणशुक्रः ( सुसू. १.८ ( ८ )
**-संधानकर**-वि., क्षतक्षीणे उरःसंधानकरः ( चसू. २६.४३ ( १ )
**क्षीणायुस्**-वि., क्षीणमायुर्यस्य, यस्य भेषजचिकित्सादयो निष्फला भवन्ति स क्षीणायुः ( काइं. ५ )
**क्षीणेन्द्रिय**-वि., लक्षण० क्षीणमिन्द्रियं यस्य ( चसि. १२.१६ ( ११ )
अतिक्षीणशुक्रः ( चसि. १.३४ )
**क्षीर**-न., प्राणिज० दुग्धम्-गोमहिष्यादिभवम् ( र. ११.३७ )
गोक्षीरम् ( सुचि. ४०.६७ )
भैषज्य० अर्कस्नुहुण्डादीनां दुग्धवत् स्रावः ( चसू. १.७३ )
जलम् ( रा. १४.३१८ )
पु., वनस्पति० श्रीवेष्टकः, धूपोपयोगी ( ध. ३.१३३ )
**-कन्द**-पु., वनस्पति० क्षीरविदारी ( रा. ७.१९६ )
**(-कन्दा )**-स्त्री., क्षीरविदारी ( ध. १.१४९ )
**-काकोली**-स्त्री., वनस्पति० काकोलीभेदः ( सुसू. ३८.३९ )
जीवनीयगणोक्तमेकं द्रव्यम् ( चसू. ४.९ )
बृंहणीयगणोक्ता ( चसू. ४.९ ) शुक्रजननगणोक्ता ( चसू. ४.१२ )
स्नेहोपगगणे एकं द्रव्यम् ( चसू. ४.१३ )
इयं किञ्चित्कृष्णवर्णोऽत्यन्तं च क्षीरं स्रवति ( र. २०.३३ ) द्र० 'काकोली'
क्षीरकाकोलीगुणाः-रुच्या वृष्या बस्तिशोधनी कफपित्तघ्नी हृद्रोगरक्तपित्तकासश्वासक्षयघ्नी च ( ध. १.१३४. )
हिं.—क्षीरकाकोली;
म.—श्वेतकाकोली, दूधकाउली.
त.—वेलैइरळि.

**-काण्डक**-पु., वनस्पति० अर्कः ( रा. १०.२४ )
स्नुक् ( रा. ८.३५६ )
**-काष्ठा**-स्त्री., वनस्पति० वटभेदः, नदीवटो वटी वा ( रा. ११.११६ ) द्र० 'वट'.
**-घृत**-न., क्षीरमथनसमुद्भूतनवनीतोत्थितं घृतम् ( सुसू. ४५.१०५ )
**-घृताभ्यास**-पु., क्षीरघृतयोः सततं नियमेन सेवनम्। इदं रसायनानां श्रेष्ठम् ( चसू.२५.४० )
**-ज**-न., आहारद्रव्य० दधि ( रा. १५.२४५ )
**-तुम्बी**-स्त्री., वनस्पति० तुम्बीभेदः वल्लीफलशाकी स्वादुश्वेततुम्बी ( र. ११.१२५ ) तद्गुणाः-सुमधुरा स्निग्धा वृष्या गर्भपोषकृत् वातप्रदा बलपुष्टि-विवर्धनी पित्तघ्नी च ( रा. ७.२३८ )
हिं.—लौकी.
म.—दुध्या भोपळा.
गु.—तुंबडी.
बं.—तोंबी.
त.—काट्टुचुरै.
फा.—तल्ख.
**-तैल**-न., क्षीरसिद्धं तैलम्, इदम् अर्दितातुराणा-मुपयोज्यम् ( सुचि. ५.२२ )
**-दल**-पु., वनस्पति० अर्कः ( रा. १०.२४ )
**-दान**-न., दुग्धप्रयोगः, क्षीरं व्रणे उत्सर्गतो निषिद्धमपि भग्नेऽपवादरवात् प्रयुज्यते। अव्रणे भग्ने उष्णं क्षीरमिति केचित्। उभयत्रापि नेति केचित्। तत्र च पूयजनकत्वं हेतुत्वेन कल्पयन्ति ( सुचि. ३.५ )
**-दोष**-पु., स्तन्यविकृतिः ( चचि. ३०.२१९ )
**-दौर्गन्ध्य**-न., लक्षण० स्तन्यगतदुर्गन्धदोषः ( चचि. ३०.२७४ )
**-द्रुम**-पु., वनस्पति० पिप्पलः ( ध. ५.७९ )
**-धारावदोहिता**-वि., ( पिप्पली ) पिप्पलीकल्का-दुपरि क्षीरधारावदोहः कर्तव्यः, क्षीरं च तावद्दोह्यं यावत् पानयोग्याः पिप्पल्यो भवन्ति। वृष्योऽयं योगः ( चचि. २ ( ३ ) १२ )
**-प**-वि., स्तननिःसृतक्षीरपायी एकसंवत्सरात्मको बालः ( सुसू. ३५.२९ )
**-पयोनिधि**-पु., श्वेतसमुद्रनाम्ना संप्रति संकेतितः समुद्रः ( र. ३.२३ )
**-पर्णिन्**-पु., वनस्पति० अर्कः ( ध. ४.१३ )

**–पलाण्डु**–पु., पलाण्डुभेदः, तद्गुणाः–स्वादुर्गुरुः स्निग्धः पिच्छिलो रुच्यो बल्यो मेध्यः कफपुष्टिदः स्थिरधातुकारी रक्तपित्ते शस्तश्च ( सुसू. ४६.२४७)

**( क्षीरा )**–स्त्री., वनस्पति० काकोली ( ध. १.१३२ )

**–पाक**–पु., जलशुक्तिः ( सुसू. ११.११ )

**–पात्र**–न., मान० क्षीरस्याऽऽढकम् ( सुचि. २.४४ )

**–पिष्ट**–वि., क्षीरे पेषितम् ( सुचि. १.५० )

**–पीत**–वि., (परिव.) दुग्धभावितम् (सुचि. ३.५७)

**–पुष्पी**–स्त्री., वनस्पति० इयं रसायनयोग्या ( चचि., १(४)६ )

**–पूपक**–पु., क्षीरप्रधानः पूपकः गुरुस्तर्पणो वृष्यश्च ( चसू. २७.२६९ )

**–पूर्णलोचन**–वि., क्षीरेण इव पूर्णे लोचने यस्य, सः शुक्रसारः

**–पेया**–स्त्री., कृतान्न० क्षीरसिद्धा पेया उदरिणामुपयोजनीया ( असंचि. १७.१०१ )
दीर्घोपवासिनां नृणां कृते प्रशस्यते ( काखिल. ४.७७ )

**–बस्ति**–पु., उपक्रम० औषधिदुग्धेन साधितो बस्तिः ( सुसू. १५.१२ ) पित्तगुल्मे उपयुज्यते, ( चचि. ५.३४ ) पित्तोदरे उपयुक्तः ( चचि. १३.६८ )

**–मधुरा**–(स्त्री., वनस्पति० क्षीरकाकोली ( ध. १.१३४ )

**–मोरट**–पु., वनस्पति० मोरटः लूतदंशे पानार्थमुपयुज्यते ( सुक ८.१३२; ध. १.१५ )
क्षीरविकृतिः किलाटमस्तु पीलुपर्णी (सुसू. ४२.११)

**–मोरटा**–स्त्री., वनस्पति० मूर्वा मधुस्रवा ( इंदु. असंउ. ४४ )

**–यवागू**–स्त्री., क्षीरसिद्धा यवागूः (चक. १.१७ )

**–योग**–पु., योग० वाजीकरक्षीरप्रयोगः अयमपत्यकरः ( चचि २ ( ३ ) ८–१० )

**–लता**–स्त्री., वनस्पति० क्षीरविदारी ( रा. ७.१९७ )

**–वर्ग**–पु., सर्वेषां क्षीराणां संग्रहः ( अहृसू. ५.२०–२८ )

**–वल्ली**–स्त्री., वनस्पति० क्षीरविदारी ( ध. १.१४९ )
मधुरस्कन्धगतद्रव्यविशेषः क्षीरलता ( चक्र. चवि. ८.१३९ )

**–वहा**– स्त्री., शारीर० स्तनगता स्तन्यवहा नाडी ( चचि. ३०.२३६ )

**–विकार**–पु., क्षीरजन्यो व्याधिः ( चशा. ८.५६ )

**–विकृति**–स्त्री., क्षीरोद्भवं दध्याद्याहारद्रव्यम्, इदं प्रकृतितो गुरु ( चसू. ५.५ )

**–विदारी**–स्त्री., वनस्पति० दीर्घकन्दा विदारिकन्दो मधुरो बृंहणो वृष्यः शीतस्पर्शो बल्योऽतिमूत्रलो वातपित्तघ्नश्च ( ड. सुचि. ५.७ )
क्षीरकन्देत्यपरपर्यायो, कन्दोऽयं विनालसनालभेदेन द्विविधः। आद्यो रोगहर्ता द्वितीयश्च वयस्तम्भी।
क्षीरविदारीगुणाः—मधुराऽम्ला कषाया तिक्ता पित्तघ्नी शूलमूत्रविकारघ्नी च (ध. १.१४९ )
हिं.—बिलाई कंद.
म.—**पांढरा भुईकोहळा.**
गु.—भोयकोळुं, फगबेलानो कंद.
बं.—भुई कुम्हडो.
त.—निलप्पूचिक्किळंकु.

**–विशोधन**–वि., स्तन्यशुद्धिकरम्, पाठा–महौषध–सुरदारु–मुस्त–मूर्वा–गुडूचीवत्सकफलकिराततिक्त–कटुरोहिणीसारिवाश्च ( चशा. ८.५६ )

**–विष**–न., स्थावरविष० कुमुदघ्नी–स्नुही–जाल. क्षीरिणि त्रीणि क्षीरविषाणि, तल्लक्षणम्–विड्भेदो गुरुजिह्वता फेनागमश्च ( सुक. २.५–१० )

**–विषाणिका**–स्त्री., वनस्पति० क्षीरकाकोली ( ध. १.१३४ )
वृश्चिकाली ( रापरि. ९.९ )

**–वीर्य**–न., क्षीरगुणः ( सुसू. ४५.५५ )

**–वृक्ष**–पु., **वनस्पति०** ( र. ३०.६५ )
राजादनः ( रा. ११.१४६ )
**उदुम्बरः** ( ध. ५.८६ )
**क्षीरिवृक्षः** ( र. ३०.६५ )

**–वृक्षत्वच्**–स्त्री., विषजे शिरोरोगे नस्यविधानेनोपयुज्यते ( असंउ. ४७ )

**–वृक्षासव**–पु., आसुत० प्रतुदानामनुपानम् ( सुसू. ४६.४३३ )

**–वृत्ति**–वि., क्षीरेणैव वृत्तिर्जीवनं यस्य, क्षीराहारः ( चचि. १३.१९१ )

**–वैवर्ण्यनाशन**–वि., स्तन्यवर्गजवैवर्ण्यविकारहरं भेषजम्, यष्टीमधूकमृद्वीकादि ( चचि. ३०.२७१ )

**–शाक**–न. पु., दध्ना तक्रेण वा सह पाकात् पृथग्भूत-घनद्रवभागं क्षीरं कूर्चिका, सैव पाकाद्विना क्षीरशाकः ( असंसू. ६०.७९ )

**–शीर्ष**–पु., वनस्पति० श्रीवेष्टकः ( रा. १२.१९३ )

**–शुक्ल**–पु., वनस्पति० राजादनः ( रा. ११.१४७ )

**–शुक्लक**–पु., वनस्पति० राजादनः ( धनि. ५.९१ )

**–शुक्ला**–स्त्री., वनस्पति० क्षीरविदारिका ( चचि., १.७६ ध. १.१४९ )

–सर्पिस्–न., क्षीरोत्थितं सर्पिः (चक, चचि.३०.६९) क्षीरमथनोत्थघृतम् ( ड. सुउ. ५८.५३ ) क्षीरोत्थितनवनीतसर्पिः ( ड. सुचि. २६.२० ) क्षीराक्तं घृतम् ( सुचि. ३४.११ )

–सात्म्य–वि., क्षीरोपशयः सैन्धवाख्यो जनः क्षीरोचितो नित्यशीलनात् "क्षीरसात्म्याश्च सैन्धवाः ( चचि. ३०.३१७ )

–सौहित्य–न., क्षीरेण तृप्तिः ( चचि. १९.४७ )

–स्राव–पु., वनस्पति० श्रीवेष्टकः ( ध. ३.१३३ )

क्षीरपक–न., खटिका ( हे अहृसू. ३०.१६ )

क्षीरान्न–न., दुग्धौदनम् ( र. ३०.४७ )

क्षीरान्नाद–वि., दुग्धान्नभोजी (बालः) (सुसू. ३५.२९)

क्षीरालसक–पु., बालरोग० तत्संप्राप्तिलक्षणानि—धात्री यदा सन्निपातप्रकोपनान्यासेवेत तदाऽस्याश्चयो मला युगपद्दक्षोऽभिप्रपन्नाः क्षीरवहा रसायनीः समनुसृत्य सङ्कीर्णलिङ्गं स्तन्यमावहन्ति । तत् पिबतः कुमारस्य सलिलोपममच्छं विच्छिन्नमामं दुर्गन्धि नानावर्णवेदनं फेनिलमतिसार्यते । पीतश्वेतमूत्रताविष्टम्भतृष्णाज्वरच्छर्दिविजृम्भिकाशुष्कोद्गारारुचिभ्रमाङ्गभङ्गविक्षेपकूजनघ्राणाक्षिमुखपाकदृष्टयुपप्लवस्वरसादादयश्चास्य प्रादुर्भवन्ति । तं क्षीरालसकमत्ययं चाचक्षते ( असंउ. २ )

क्षीराशय–पु., शरीर० स्तन्याशयः ( चचि., ३०.२३८ )

क्षीरिका–स्त्री., वनस्पति० व्रीहि ( रा. १६.९९ ) दुग्धिका क्षीरयुक्तपत्रमयीयम् । गुणाः–गुरुः रूक्षा गर्भकृद्विष्टम्भिनी कुष्ठकृमिनाशिनी मलमूत्रहृच ( र. १६.११–१३ )

–पुष्पक–पु., सर्प० निर्विषसर्पः ( सुक. ४,३४ (४)

क्षीरिन्–पु., वनस्पति० वटः ( ध. ५.७६ )
अर्कः ( रा. १०.२४ )
प्लक्षः ( रा. ११.१२४ )
राजादनः ( ध. ५.९१ )
गोधूमः ( रा. १६.१५१ )
स्नुही ( रा. ८.३५५ )
वंशलोचना ( र. २१.१८१–८६ )
सर्प० निर्विषोऽयम् ( असंउ. ४१ )

( क्षीरिणी )–स्त्री., वनस्पति० दुग्धिका, इयं विरेचनी ( चक चसू. २.९–१० )
पीतपुष्पा दुग्धिनी ( र. ३०.३२ )
काश्मर्यः ( र. ९.१४७ )
काञ्चनक्षीरी ( ध. १.२४० )
क्षीरिणीगुणाः–कटुस्तिक्ता रेचनी कफपित्तघ्नी शोफतापपित्तज्वरकृमिदोषघ्नी च ( रा. २.३६४ )
कुटुम्बिनी–( रापरि. ५.२१ )
क्षीरकाकोली ( र. २६.१२ )
सारिवाभेदः श्वेतसारिवा ( र. २०.६८–७४ )
अर्कपुष्पी ( सुचि. ९.२७ )
क्षीरस्नुही( रा. ७.२३९ )

( क्षीरि )–कपीतन–पु., वनस्पति० आर्द्रशिरीषः, पानकमस्य क्षतजतृष्णायां प्रशस्तम् ( सुउ. ४८.२६ )

–प्ररोह–पु.. न्यग्रोधादिक्षीरिवृक्षाणामङ्कुराः, एतैः रोपणवर्तयो विधीयन्ते ( सुसू. ३७.२३ )

–वृक्ष–पु., न्यग्रोधोदुम्बराश्वत्थप्लक्षगर्दभाण्डाः ( ड. सुचि. २.६५ )
उदुम्बरो वटोऽश्वत्थो मधुकः प्लक्ष एव च । पञ्चैते क्षीरिवृक्षाः स्युः ( चक. चचि. ११.५६ )
पीतकः, स एव कशेरुकः (इन्दु. असंसू. ७.१२४)

–वृक्षत्वच्–स्त्री., न्यग्रोधादिक्षीरिवृक्षाणां त्वचः, एतत्वक्कषाया व्रणरोपणसेचनादिषूपयुज्यन्ते । क्षीरिवृक्षपत्राणि रक्तपित्तदूषितव्रणेषु उपयुज्यन्ते ( सुक. ५.५९–६० )

–वृक्षफल–न., न्यग्रोधादिक्षीरिवृक्षफलानि, तद्गुणाः–कषायमधुरसाम्लानि गुरुविष्टम्भिशीतलानि नातिमारुतकोपनानि ( सुसू. ४६.१६५ )
रूक्षलेखनविबन्धाध्मानजनननीति च ( असंसू. ७.१८१–१८४ )

–वृक्षादितैल–न., तैल० जीर्णज्वरादिष्वभ्यङ्गार्थमुपयुज्यते ( सुउ. ३९.२५७–५८ )

–वृक्षाम्बु–न., क्षीरिवृक्षक्वाथः, कवलग्रहेषूपयुज्यते ( असंसू. ३.३१ )

–शुङ्ग–पु., वटादीनामविकसिताः प्रवालाः गर्भरक्षकद्रव्याणामन्यतमाः ( सुशा. १०.६१ )

–शुङ्गसर्पिस्–न., घृत० अतिसारोपद्रवशूलपरिकर्तिकादिनाशनम् ( सुउ. ४०. १०३ )

–क्षीव–पु., वनस्पति० अक्षीवः ( चचि. ३.२६७ )

क्षीरोत्थितसर्पिस्–न., दुग्धोत्थं घृतं रक्तातिसारे प्रशस्तम् ( चचि. १९.७७ )

क्षीरोद–पु., क्षीरसमुद्रः ( सुचि., २९.१७ )

क्षुण्णाग्र–वि., क्षुण्णं=कुट्टितं अग्रं यस्य (असंसू. ३०.१४)

क्षुत्–स्त्री. छिक्कितम् , छिक्का ( सुउ. ३९.२९ )

–स्तम्भ ( परिव० )–पु., लक्षण० छिक्काया अनिर्गमनम् ( सुउ. ३९.२९ )

**क्षुत**–न., छिका ( सुसू. २९.४५ )
**क्षुति**–स्त्री., छिका ( अहृसू. २.३५ )
**–धारण**–न., क्षवथोर्विधारणम्, क्षवथुरोधः, क्षुतिधारणात् शिरोर्तीन्द्रियदौर्बल्यमन्यास्तंभार्दितानि भवन्ति ( अहृसू. ४.९ )
**क्षुद्र**–न., फाणितम् ( सुचि. ३१.३९ )
**( क्षुद्रा )**–स्त्री., वनस्पति॰ लघुकण्टकारिका, पाठादिगणे प्रोक्ता, सा च मधुमेहघ्नी ( सुचि. १२.९ )
कण्टकारी ( ध. १.९५ )
यावनाली हिमशर्करा ( रा. १४.१६३ )
**–कण्टा**–स्त्री., कण्टकारी ( रा. ४.१२१ )
**–कण्टारिका**–स्त्री., अग्निदमनी ( रा. ४.४ )
**–कण्टिका**–स्त्री., कण्टकारी ( रा. ४.१२० )
**–कारलिका**–स्त्री., वनस्पति॰ कडुहुञ्ची ( रा. ७.२८१ )
**–कारवल्ली**–स्त्री., कुडुहुञ्ची ( रा. ७.२८१ ) द्र॰ 'क्षुद्रा कारलिका'.
**–कुलिश**–न., खनिज॰ वैक्रान्तम् ( ध. ६.४४ )
**–कुष्ठ**–न., कुष्ठप्रकारः चर्मदलाद्येकादशकुष्ठानि । क्षुद्रकुष्ठाभिधेयानि ( सुनि. ५.५ )
**–क्षुर**–पु., वनस्पति॰ गोक्षुरः ( रा. ३.१३१ )
**–गुड**–पु., फाणितम् ( चचि. १.५८ )
**–गुडभेदः** क्षुद्रगुडो असितगुड इत्युच्यते ( चसू. २७,२३९ )
**–चञ्चु**–स्त्री. वनस्पति॰ तद्गुणाः—मधुरा, कटुः, कषायिका, उष्णा, दीपनी, विबन्धकृत्, शूलगुल्मार्शःशमनी च ( रापरि. ४.२२ )
**–चन्दन**–न., वनस्पति॰ रक्तचन्दनम् ( ध. ३.४ )
**–चम्पक**–न., वनस्पति॰ नागचम्पकः ( रा. १०.२४२ )
**–चिर्भटा**–स्त्री., वनस्पति॰ गोपालकर्कटी ( रा. ३.२६४ )
**–जन्तु**–पु. क्रिमिः (इन्दु., असंसू. ६.२२ ) मक्षिकादयः क्षुद्रजन्तवः ( अहृसू. ७.१८ )
**–जातीफल**–न., वनस्पति॰ क्षुद्रामलकम् ( रा. ११.३२९ )
**–जीवा**–स्त्री., वनस्पति॰ जीवन्ती ( रा. ३.१७७ )
**–तुलसी**–स्त्री., वनस्पति॰ कुठेरकः ( रा. १०.८४ )
**–दीप्य**–पु., वनस्पति॰ यवानी, क्षुद्रजीरकम्; अजमोदा ( र. २०.१३० )
**–दुःस्पर्शा**–स्त्री., वनस्पति॰ अग्निदमनी ( रापरि. ४.४ )
**–दुरालम्भा**–स्त्री., वनस्पति॰ धन्वयासः ( रा. ३.२२ )
**–धात्री**–स्त्री., वनस्पति॰ कर्कटः ( रा. ११.३३१ )
**–पत्र**–पु., वनस्पति॰ वनजीरः ( रा. ६.१०७ )
**–पर्ण**–पु., वनस्पति॰ कुठेरकः, अर्जकः ( ध. ४.५४ )
**–पिप्पली**–स्त्री., वनस्पति॰ वनपिप्पली ( रा. ६.१२२ )
**–पुत्रा**–वनस्पति॰ ब्राह्मी ( रा. ५.१५१ )
**–पोतिका**–स्त्री., वनस्पति॰ मूलपोती ( रा.७.७८० )
**–फला**–स्त्री., वनस्पति॰ इन्द्रवारुणी ( ध. १.२४८ )
कण्टकारी, ( रा. ४.१२१ )
गोपालकर्कटी ( रा. ३.२६४ )
अग्निदमनी ( रा. ४.३ ) द्र॰ 'क्षुद्रकंटारिका'
**–मातृ**–स्त्री., वनस्पति॰ वार्ताकिनी ( ध. १.९८ )
**–मुस्ता**–स्त्री., वनस्पति॰ गुण्डकन्दः ( रा. ८.६३ )
**–रोग**–पु., रोग॰ अजगल्लिकादिः, क्षुद्रं हेतुलक्षणचिकित्सितादि यस्य ( सुनि. १३.१ ) पूर्वाचार्यपठिता पारिभाषिकीयं संज्ञा, संख्यया चतुश्चत्वारिंशत् एते क्षुद्ररोगाः ( सुनि. १३.३. ) भोजे तु मूषिकाकर्णमुष्ककोशफलार्शःप्रभृतयोऽधिकविकाराः पठ्यन्ते, ते च सुश्रुते विकारस्थानन्त्यादनुमता एव ( मानिमधुकोश )
**–रोगचिकित्सित**–न., अध्याय॰ ( सुचि. २० )
**–वर्षाभू**–स्त्री., वनस्पति॰ पुनर्नवा ( ध. १.२७४ )
**–वल्ली**–स्त्री., वनस्पति॰ मूलपोती ( रापरि. ७.७८ )
**–वार्ताकिनी**–स्त्री., वनस्पति॰ कण्टकारीभेदः ( रा. ४.१२३ ) द्र॰ 'कण्टकारी'
**–विकार**–पु., क्षुद्रव्याधिः, क्षुद्रविकाराः पुनर्यदेवाङ्गमाविशन्ति तदुपपदमेव नाम लभन्ते यथा नखशङ्खललाटभेदाः सान्तर्दाहकण्ठहृदयोपलेपादयः, तेषां हि तथैव स्वरूपमुपदिष्टं भवति ( असंसू. २० )
**–शङ्ख**–पु., भैषज्य॰ शङ्खभेदः, तद्गुणाः—कटुस्तिक्तः शूलहारी दीपनश्च ( रा. १३.२४६ ) द्र॰ 'शंख'
**–शणपुष्पिका**–स्त्री., शणपुष्पीभेदः ( रा. ४.३०० ) द्र॰ 'शणपुष्पी'
**–शर्करिका**–स्त्री., भैषज्य॰ हिमशर्करा ( रा.१४.१६३ )
**–शामा**–स्त्री., वनस्पति॰ कटभी ( रापरि. ९.३७ )
**–श्वास**–पु., पञ्चश्वासप्रकारेष्वेकः, तल्लक्षणम्—किञ्चित्कर्मारभमाणस्य नरस्य यः श्वासः प्रवर्तते निषण्णस्य च शान्तिमेति सः ( सुउ. ५१.७ ) नायमङ्गप्रबाधको नायं भोजनपानादीनामुचितगतिनिरोधको नायं काञ्चिद्रुजमापादयेत् । बलिनोऽसौ साध्यः ( चचि. १७.६५–६७ )

–श्वेता–स्त्री., वनस्पति० अर्कादिगणोक्ता, श्वेतस्यन्दा, श्वेतपुष्पा (सुसू. ३८.१६–१७)
गिरिकर्णिका (रा. ३.१२४)
–सहा–स्त्री., वनस्पति० माषपर्णी
(चक्र. चक. ४.१६)
मुद्गपर्णी विदारिगन्धादिगणोक्ता (सुसू. ३८.४–५)
(ध. १.१३८)
मधुरस्कन्धोक्ता, कुमारी (चक्र. चवि. ८.१३९)
इन्द्रवारुणी (रा. ३.३७१)
–सुवर्ण–न., खनिज० पित्तलम् (रा. १३.१७)
–हिक्का–स्त्री. रोग० हिक्काभेदः तत्संप्राप्तिलक्षणे–यदा क्षुद्रवातो कोष्ठाद्व्यायामपरिघट्टितः सन् कण्ठे प्रपद्यते तदा स क्षुद्रां हिक्कां करोति, नैषातिदुःखा नोरःशिरोमर्मप्रबाधिनी, नचोच्छ्वासान्नपानमार्गावरणी, आयस्यतो वृद्धिं भुक्तमात्रे च मार्दवं याति, येन हेतुना अस्याः प्रवृत्तिर्निवृत्तिरपि तेनैव व्यायामादिना हेतुना हृदयक्लोमकण्ठतालुसमाश्रिता भवति, मृद्वीयं साध्या च (चचि. १७.३४–३७).
क्षुद्रकमानस–न., काश्मीरस्थं सरः यत्र गायत्र्यादिसोमविशेषा उपलभ्यन्ते (सुचि. २९.३०)
क्षुद्रभ्र–पु., मान० कोलः (असंक. ८)
क्षुद्राग्निमन्थ–पु., वनस्पति० अग्निमन्थभेदः
(ध. १.११२) द्र० 'अग्निमन्थ'
क्षुद्राञ्जन–न., फाणिताकृतिः रसक्रियाञ्जनं (उ.) नेत्ररोगहरम्, गोमूत्रादिविपाचितमेकम्, यकृद्रसभावितं द्वितीयम्, त्रिफलाभावितं तृतीयम्, एतत् त्रिप्रकारकं राज्यन्ध्ये उपयुक्तम्
(सुउ. १७.१९–२०)
क्षुद्रान्त्र–न., शारीर० पञ्चदशकोष्ठाङ्गेष्वेकम्
(चशा. ७.१० चशा. ३.६) मातृजमिदम्
(चशा. ३.६) द्र० 'अन्त्र'
क्षुद्रापामार्गक–पु., वनस्पति० अपामार्गभेदः
(ध. १. २६३)
क्षुद्रामलक–न., वनस्पति० आमलकभेदः क्षुद्रामलकगुणाः—स्वादु कषायं कटुकं शीतं पित्तघ्नमस्रदोषघ्नं च (रा. ११.३३१) द्र० 'आमलक'.
क्षुद्राम्र–पु., वनस्पति० आम्रभेदः कोशाम्रः (ध. ५.९)
द्र० 'आम्र'
क्षुद्राम्ला–स्त्री., वनस्पति० शशाण्डुली (रा. ७.१०३)
क्षुद्राम्लिका–स्त्री., वनस्पति० चाङ्गेरी तद्गुणाः–साम्ला सोष्णा वह्निवर्धिनी रुचिकृत् कफापहा ग्रहणीदोषदुर्नामघ्नी च (रा. ५.४५) स्वादुः कषायका चेति
(ध. ५.३६)
क्षुद्रिका–स्त्री., मूर्धगता सिरा (असंशा. ६.२१)
क्षुद्रेङ्गुदी–स्त्री.,वनस्पति० धन्वयासः (रा.३. २५)
क्षुद्रेर्वारु–पु. वनस्पति० वालुकम् (रा. ७.२५०)
गोपालकर्कटी (रा. ३.२६४)
क्षुद्रैला–स्त्री., सूक्ष्मैला (ड. सुक. ६.१७)
क्षुद्रोपोदकी–स्त्री., वनस्पति० उपोदकीभेदः, तद्गुणाः–कषाया मधुरा कटुकोष्णा निद्रालस्यकरी रुच्या विष्टम्भश्लेष्मकारिणी च (रा. परि. ७.७६)
क्षुमा– स्त्री., वनस्पति० अतसी (सुसू. २५.२०)
व्रणबन्धनद्रव्येष्वेकम् (सुसू. १८.१६)
कौशेयं सोमरसायनविधौ शय्यायामास्तरणार्थमुपयुज्यते (सुचि. २९.१२)
–तैल–परिव०–न., अतसीभवं तैलम् । तद्गुणाः—वातघ्नं मधुरं बलापहं कटुपाकमचक्षुष्यं स्निग्धोष्णं गुरु पित्तलं च (सुसू. ४५.११६)
–धूम–पु., कौशेयवस्त्रस्य धूमः क्षौमं दग्ध्वोत्पाद्यमानो धूमः (चक्र. चचि. १८.१४६)
–ध्याम–न., अतसीभववस्त्रभस्म (सुसू. २५.२७)
–निचय–पु., कौशेयवस्त्राणां समूहः (असंउ. १)
–पट्ट–परिव०–पु., कौशेयः पट्टः अनग्निस्वेदस्यैकं साधनम् (सुचि. ४.१७)
–मषी–स्त्री., वस्त्रभस्म (हे. अहृसू. २७.४९)
–लक्तक–पु., चीनांशुकम् (चचि. ३०.११३)
–सूत्र–न. अतसीसूत्रम् व्रणौष्ठसीवनोपयोगि द्रव्यम्
(सुसू. २५.२०)
क्षुध्–स्त्री., क्षुधा, आहारसेवनेच्छा (चसू. १६.५)
बुभुक्षा (सुउ. ५५.५) क्षुत्पिपासादिः स्वाभाविको व्याधिः (सुसू. १.२५ (४)
(क्षुत्)–क्षाम–वि., लक्षण० क्षुधया क्षीणः
(चचि. १९.२३)
–तृट्सहोदय–पु., क्षुत्पिपासयोर्युगपदुदयः
(अहृसू. १४.१७)
(क्षुद्)–विघात–पु., क्षुधो निग्रहः (सुउ. ५५.३४)
–वेगनिग्रह–पु., क्षुद्वेगस्य निग्रहो नाम रोधः, एतस्मात् कार्श्यदौर्बल्यवैवर्ण्याङ्गमर्दारुचिभ्रमा भवन्ति (चसू. ७.२०) (अहृसू. ४.११) तन्द्राद्दष्टिमान्द्ये च (सुउ. ५५.१६)
क्षुधा–स्त्री., अन्नाभिलाषा (रापरि. ८.३०)
–कुशल–पु., वनस्पति० बिल्वान्तरः (रापरि. ८.३०

**क्षुधाभिजनका**—स्त्री., वनस्पति॰ राजसर्षपकः
( ध. ४.४३ )

**क्षुधाभिजनन**—पु., वनस्पति॰ राजमाषः
( रा. १६.१३५ )

**क्षुपक**—पु., ह्रस्वशाखाशिफः क्षुद्रवृक्षः अतिबालवृक्षः
( सुसू. २३.१७ सुचि. २९.१२ )

**क्षुब्धचित्त**—वि., भीतचित्तः ( सुचि. २४.११८ )

**क्षुमा**—स्त्री., वनस्पति॰ अतसी ( ध. ६.११५ )
व्रणबन्धनद्रव्येष्वेकम् ( सुसू. १८.१६ )
कौशेयं सोमरसायनविधौ शय्यायामास्तरणार्थमुपयुज्यते ( सुचि. २९.१२ )

**क्षुर**—पु., वनस्पति॰ मुञ्जः ( ध. ४.१३२ )
गोक्षुरः ( ध. १.१०३ )
क्षुद्रगोक्षुरः ( रा. ३.१३१ )
शरः ( ध. ४.१३५ )
महापिण्डीतरुः ( रा. ९.३३ )
**—पत्र**—पु., वनस्पति॰ शरभेदः स्थूलशरः
( रा. ८.२१२ ) द्र॰ 'शर'
**—( पत्रिका )**—स्त्री., वनस्पति॰ पालक्यम्
( रापरि. ७.७२ )

**क्षुरक**—पु., वनस्पति॰ तिलकः ( ध. ५.१५८ )
गोक्षुरः ( ध. १.१०३ )
कोकिलाक्षः ( रा. परि, ४.४९ )
क्षुवकः ( रा. परि. ९.४० )

**क्षुरप**—पु., शस्त्र॰ छुरिका, केशशातनोपयोगी अयम् । अत्र "क्षुरप" इत्येव ग्राह्यम् ( र. ७.५-२२ )

**क्षुरप्र**—पु., शस्त्र॰ क्षुरपः ( र. ७.५-२२ )

**क्षुराग्निमन्थ**—पु., वनस्पति॰ अग्निमन्थभेदः
( ध. १.११२ ) द्र॰ 'अग्निमन्थ'

**क्षुराङ्ग**—पु., वनस्पति॰ गोक्षुरः ( रा. ३.१३ )

**क्षुरिकापत्र**—पु., वनस्पति॰ शरः ( रा. ८.२११ )

**क्षुल्ल**—पु., वनस्पति॰ भूकर्बुदारः ( रा. ११.१५० )

**क्षुल्लक**—पु., भैषज्य॰ क्षुद्रशङ्खः ( रा. १३.२४६ )

**क्षुव**—पु., वनस्पति॰ राजमाषः ( रा. १६.१३५ )

**क्षुवक**—पु., वनस्पति॰ तद्गुणाः—कषायः कटुस्तीव्रगन्धः कफवातघ्नो भूतग्रहादिदोषघ्नश्च ( रा. परि. ९.४० )
हिं.—नकछिक्कनी.
म.—**नाकशिकणी.**
गु.—नाकछीकणी.
बं.—छिकनी.
त.—पेटमरुट्टी.
फा.—वेरगाउजवा.

**क्षेत्र**—न. पु., उत्पत्तिस्थानम्, भूमिः ( सुसू. १३.२४ )
प्रभवस्थानम्, कुलपुरुषः ( चक्र. सुसू. ३५.५ )
अव्यक्तक्षेत्रज्ञवर्जितं महदादिभूतपर्यन्तं क्षेत्रम्
( चशा. १.६५ )
देहदेशः ( चचि. १४.६ )
गर्भाशयः स्त्रीशरीरं वा ( सुशा. २.३३ )
**—कर्कटी**—स्त्री., वनस्पति॰ वालुकम् ( रा. ७.२५० )
**—गुण**—पु., भूमिगुणः ( चचि. १(४).११ )
**—चिर्भिटा**—स्त्री., वनस्पति॰ चिर्भटम् ( रा. ७.२६२ )
**—जा**—स्त्री., कण्टकारीभेदः श्वेतकण्टारिका
( रा. ४.१२४ )
वनस्पति॰ चणिका ( रापरि. ८.६५ )
गोमूत्रिका ( रापरि. ८.४८ )
शिल्पिका ( रापरि. ८.४९ )
**—ज्ञ**—पु., पुरुषः आत्मा कर्मपुरुषः ( ड. सुशा. १.३ ) ( चशा. १.५ ) अयं सांख्यदर्शने सर्वगतो नित्यश्च सुश्रुते प्रतिशरीरं भिन्नः पुरुषः ( सुशा. १.१६ ) शरीररूपक्षेत्रस्य ज्ञाता ( सुशा. ३.४ )
**—दूती**—स्त्री., वनस्पति॰ श्वेतकण्टारिका ( ध. १.९७ )
**—पारंपर्य**—न., क्षेत्रस्याव्यक्तवर्जितस्य महदादित्रयोविंशतिकस्य परंपरा नाम संततिः तदेव पारंपर्यम्, परम्परा एव पारम्पर्यम् ( चशा. १.८२ )
**—रुहा**—स्त्री., वनस्पति॰ वालुकम् ( रा. ७.२५० )
**—वास्तुक**—पु., वनस्पति॰ चिल्लि ( सुसू. ४६.२५६ २६०.३३५. ) (चक्र चसू. २७.९८) शाकवर्गे श्रेष्ठः लघुपत्रशाकं, वास्तुकतुल्यं, सक्षारं, पथ्यं, रुचिकरं, प्रमेहमूत्रकृच्छ्रघ्नं, श्लेष्मपित्तघ्नं च ( रा. परि. ७.६६ ) गुणैः वास्तुकवत् ज्ञेयं ( सुसू. ४६.२६१ )
हिं.—बथुआशाक.
**—संभव**—पु., वनस्पति॰ चञ्चुः ( रापरि. ४.१८ )

**क्षेत्रिणी**—स्त्री., वनस्पति॰ मञ्जिष्ठा ( ध. १.१८ )

**क्षेत्रीकरण**—न., उपक्रम॰ पारदसेवनयोग्यशरीरत्वविधानम् ( र. ११.६७ )

**क्षेप**—पु., प्रसारणम् ( सुनि. १.७४ )
**—वेध**—( परिव॰ ) पु., पारदसंस्कार॰ द्रुते ताम्रवङ्गादिधातौ सुवर्णकरणार्थं पारदस्य प्रक्षेपणम् ( र. ८.९१ ) ध्मानेन मूषायां लोहे ताम्रादौ द्रुते सति पारदस्य यत्प्रक्षेपणं सः क्षेपवेधः
( र.८.९१ )

**क्षेत्रेक्षु**—पु., वनस्पति॰ जूर्णा ( रा. १६.१६७ )

**क्षेम**—पु., न., रक्षणम् ( अरु., ) लब्धपरिपालनम्
( हे. अहसू. ७.२ )

**क्षेमक**–पु., वनस्पति० चोरकः ( ध. ३.७१ )
**क्षैरेय**–वि., क्षीरस्येदं पायसादि ( अहृसू. ६.४१ )
पु., पायसः ( अरु. अहृसू. ७.४१ )
**( क्षैरेयी )** स्त्री., क्षीरेण साधिता पेया ( असंसू. २५.७० )
**क्षोणिनाग**–पु.. जन्तु० भूनागः "कंचुआ" "दानवा" ( र. ४.४७ )
**क्षोद**–पु., चूर्णनम् ( असंनि. २.८ )
**क्षोभ**–पु., क्षुब्धता ( र. १.६१; अहृनि. १.१० )
**क्षोभण**–वि., क्षोभजननम् ( असंसू. १२.३ )
**क्षोभिणी**–वि., श्वसन–प्राणायामादि–क्रिया ( अहृसू. २८.१७ )
**क्षौद्र**–न., मधुभेदः, अष्टमधुजातिष्वेकं क्षुद्रमक्षिकाभवं क्षौद्रम्, तत् क्षुद्राभिः पिङ्गलवर्णमक्षिकाभिर्निर्मितमिति तत् कपिलवर्णम् ( चसू. २७.२४३ )
तद्गुणाः–शीतलं लघु लेखनं च (सुसू. ४५.१३३)
**–घृत**–न., मधुघृतसंयोगः सन्धानार्थमुपयुज्यते ( सुउ. १४.३–४ )
**–ज**–न., भैषज्य० सिक्थकम् ( रा. १३.१७४ )
**–( जा )**–स्त्री., भैषज्य० माध्वी सिता ( रा. १४.१६८ )
**–धातु**–पु., खनिज० हेममाक्षिकम् ( रा. १३.२१० )
**–प्रिय**–पु., वनस्पति० जलमधूकः ( रा. २१.५९ )
**–मेह**–पु., रोग० वातजप्रमेहेष्वेकः, अस्मिन् मधुवत् मधुरसवर्णसदृशं मेहति ( सुनि. ६.१२ )
**–शर्करा**–स्त्री., भैषज्य० माध्वी सिता ( रा. १४.१६८ )
**क्षौद्रेय**–न., भैषज्य० सिक्थकम् ( रा. १३.१७४ )
**क्षौद्रोत्थ**–न., मधूच्छिष्टं सिक्थकम् ( सुचि. २५.३९ )
**क्षौम**–न., अतसीवस्त्रम्, क्षुमा, अतसी, तत्तन्तुनिर्मितं क्षौमम् ( वस्त्रम् ) ( सुसू. २५.२७, २८ )
**क्षौमकं**–न., क्षौममेव क्षौमकम् अतसीवस्त्रम् ( चशा. ८.४७ )
**क्ष्मा**–स्त्री., पृथ्वी ( अहृसू. ९.१ )
**क्ष्वेड**–पु., वनस्पति० कोशातकी ( चक. ६.३ )
जीवकः ( ध. १.१२३ )
शब्द० गर्जना ( चइं. ८.२० )
व्रणे शब्दवैकृतम् 'खटखटा' शब्दः ( सुसू. २८.१६ )
कर्णरोग० कर्णक्ष्वेडः कर्णनादः केवलवातारब्धो नानाविधशब्दान्वितोऽयम् ( ड. सुउ. २०.९ )
विषम् ( र. १२.१०१ )
वि., वक्रं दुष्टम् (असंशा. ११.५४)
**( क्ष्वेडा )**–स्त्री., वनस्पति० कोशातकी ( ध. १.१९२ )
**क्ष्वेल**–पु., क्ष्वेडः विषम् ( र. २९.७९ )

## ख

**ख**–न., महाभूत० आकाशम् । पञ्चमहाभूतेष्वेकं द्रव्यम् ( चसू. १.४८, चसू. ८.९ )
रन्ध्रं छिद्रम् ( चनि. २.८ )
( सुशा. ९.१०; डसुशा. ९.१३; अहृसू. ११.३६)
स्रोतः, ( चसू. १३.४८; सुचि. ३५.२५. )
इन्द्रियम् ( सुसू. ५.२८ )
खनिज० अभ्रकम् ( र. ३०.१–२ )
अभ्रकम् ( रा. १३.२. )
**–ग**–पु., पक्षी ( सुसू. १.३० )
खनिज० कासीसम् ( र. २०.१०३ )
पुष्पकासीसम् ( र. ११.४९ )
कीटः ( असंशा. १० )
खनिज० अभ्रकम् ( र. २.४५ )
**–गपुङ्खा**–स्त्री., वनस्पति० शरपुङ्खा ( रा. परि. ४.६ )
**–गुणाधिक**–वि.. आकाशीयगुणाधिकम् ( असंसू. ६ )
**–गेश्वर**–पु. पारदयोग० पारदाभ्रकार्जुनादिनिर्मितोऽयं कुष्ठश्वासकासघ्नः ( र. २०. १०३–१०७ )
**–द्योत**–पु., सविषकीट० ज्योतिरिङ्गणः, ( सुउ. ७.३ )
तल्लक्षणम्—अयं लाक्षारुधिरवर्णाभः श्वेतबिन्दुविचित्रितः क्षुद्रको ह्यग्निसंकाशो निशि अग्निवद् भ्राजते तेन दष्टः दह्यते । दंष्ट्राविषः श्वेतबिन्दुः सपक्षः षट्पदोऽयम् ( ड. सुक. ८.२४–२५ )
**–द्योतक**–न., सविषफल० फलविषेषु एकम्, ( सुक. २.५ ) द्र० 'फलविष'
**–द्योताभ**–वि., खद्योतस्याभा इव आभा यस्य सः ( सुउ. ७.३ )
**–द्रु**–पु. वनस्पति० प्रियालः ( रा. ११.१०२ )
**–पुट**–पु., भैषज्य० व्याघ्रनखम् ( रा.१२.१११ )
**–पुर**–पु., वनस्पति० सल्लकीनिर्यासः ( हे. अहृसू. १५.४३ )
कुन्दरुकः वनस्पति० कुन्दरुः ( अहृसू. १५.४३ )
फलमज्जा ( र. १७.१३५ )
वनस्पति० पूग–फलम् ( ध. ३.३९ )
**–मल**–पु. रन्ध्रमलः, मांसधातोर्मलः, शरीरे च्छिद्रं कर्णनासिकात्वग्रन्ध्रादि, तत्रस्थो मलः ( चक. चचि. १५.१९ )

**—वल्ली**—स्त्री., वनस्पति० आकाशवल्ली, गुणाः—कटुका, मधुरा, वृष्या, रसायनी, बल्या, दिव्यौषधिपरा, पित्तनाशिनी ( रापरि. ३.१९ )

**—वारि**—न., दिव्यौदकमन्तरिक्षं जलम्, वृष्टयम्बु ( रा १४.३२० ) द्र० 'जल'

**—वैगुण्य**—न., स्रोतोवैगुण्यं स्रोतोदुष्टिः ( चचि. १५.३७ सुसू. २४.१० )

**—संभवा**—स्त्री.. वनस्पति० मांसीभेदः, आकाशमांसी ( रा. १२.९५ )

**—सत्त्व**—न., अभ्रकसत्त्वम् ( रा. २०.६८–७४ )

**खज**—पु., मन्थानदण्डः ( चक्र. चचि. ११.५९ )
मन्थनदण्डः ( ड. सुउ. ५८.५५ )
दध्याहननकाष्ठम् ( अरु. अहृसू. १९.४१ )
पञ्चाङ्गुलो हस्तः ( चचि. २९.७८ )
शस्त्र० ( असंसू. ३४ )
नासाभ्यन्तरतोऽसृग्हरणार्थमुपयुज्यते ( अहृसू. २६.२३ )
खजस्त्वर्धाङ्गुलायतोऽष्टकण्टकमुखस्ताम्रो लौहो वा ( असंसू. ३४ )

**( खजा )**—स्त्री., खजः 'रवी' इति म. भाषायाम् ( सुचि. २६.३५ )

**—मथित**—वि., खजेन मन्थानदण्डेन आलोडितम् ( असंसू. २८ )

**—मूर्च्छित**—वि., खजया खजेन वाऽऽलोडितम् ( असंचि. ५ )

**खञ्ज**—पु., वातरोग० सक्थिकण्डराश्रितः विकलगतिलक्षणो वातरोगः, सम्प्राप्तिः यदा वायुः कट्यां स्थितः सन् सक्थ्नः कण्डरामाक्षिपेत् तदा खञ्जो भवेत् ( सुनि. १.७७ असंनि. १५ )
एकसक्थिवधात्खञ्जः । एकपादस्य पङ्गुत्वम् 'किञ्चिद्गतिमत्त्वात्खञ्जः।' गयदासः (सुनि. १.७७)
चिकित्सा—सिराव्यधो वातव्याधिचिकित्सितं च ( सुचि. ५.२३ )

**खञ्जत्**—वि., गतिविकलत्वमनुभवन्निव गच्छति यः सः ( सु. नि. १.७८ )

**—ता**—स्त्री., लक्षण० ( चसू २०.१२ )
विकलगतित्वम् ( चसू. २०.१२ सु. शा. ६.२४)

**—त्व—रोग**० अशीतिवातविकारेष्वेकः पादेनैकेन विवशत्वम् ( चसू. २०.११ )
सुखेन गन्तुमसमर्थत्वम् द्र० 'खञ्ज'

**खञ्जन**—न., मर्दनादिनाऽऽमागारधूमानुरचितमुपस्तरणम् यं खरजिमित्याहुर्मृदङ्गवादकाः ( सुसू. ३१.६ )
पक्षि० खञ्जरीटः शुक्लकृष्णवर्णः ( सुसू. ३१.६ )

**खञ्जनक**—पु., धान्य० व्रीहिभेदः ( ड. सुसू. ४६.१२ )

**खञ्जरीट**—पु., धान्य० व्रीहि० ( ड. सुसू. ४६.१२ )
प्रतुदपक्षि० ( असंसू. ७ )
सितासितवर्णो द्रुतललितगतिः ( ड. ) '**कवडिया**' इति लोके ( ड. ) 'ताजवा पक्षी' इति ( गी. ल. को. ) ( सुसू. ४६.६७ )

**खट**—पु., कृतान्न० खटति कांक्षति रुग्ण एनमिति खटः ( काखिल १०. ९३–९४ )

**खटिका**—स्त्री., मृद्भेदः, 'खडिया' 'खडी' इति लोके ( र. १२. ३८–३९ )
खटी मृत्तिका ( र. ९. ६४ )
खनिज० गन्धकभेदः, खटिकाकारः श्वेतवर्णो गन्धकः 'श्वेतस्तु खटिकाकारो लेपनाल्लोहमारकः ( र. ३.१४. ) द्र० '**गन्धक.**'

**खटिनी**—स्त्री., भैषज्य० मृद्भेदः, खटिका ( र. १८. ७८–७९ )

**खट्वा**—स्त्री., व्रणबन्ध० खट्वाकारश्चतुष्पादः स हनुशङ्खगण्डेषु विधेयः ( सुसू. १८.१७ असंसू. ३८; ) द्र० '**बन्ध**'
पर्यङ्कः ( सुसू. १८. १७ )
वनस्पति० दधिपुष्पी ( ध. १.१५३ )

**—पातिन्**—वि. लक्षण० खट्वायाः पतितुं शीलमस्य इति ( सु. चि. ५.१८ )

**—पादी**—स्त्री., वनस्पति० कपिकच्छुभेदः, दधिपुष्पी ( रा. ७.२०४ )

**खट्वाङ्गनामिका**—स्त्री., वनस्पति० वटपत्री (रा. ५.२११)

**खट्वाङ्गी**—स्त्री., वनस्पति० दधिपुष्पी ( ध. १.१५३ )

**खड**—पु., कृतान्न० यूषप्रकारः ( काखिल० १०.९३ )
सतक्रशमीधान्यः सतक्रशाकश्च, 'खडांश्चैव सर्वान् शैलेषु दापयेत्' ( सुसू. ४६.४५१ )
खडो द्विविधः, (१) सतक्राणि शमीधान्यानि स्निग्धानि संग्राहकाणि खलानि इति (२) सतक्रशाकस्तु कपित्थतक्रचाङ्गेरीमरीचाऽजाजिचित्रकैः सुपक्वः खडयूषोऽयम् ( सुसू. ४६.३७६ )
खलः फलैः ( चक्र. चचि. ८.१२८ )
रागकर्पूरः ( चक्र. च. नि. २.४ )
'मुद्गयूषरसं तक्रं धान्यजीरकसंयुतम्। सैन्धवं सहितं खडयूष इति स्मृतम्' ( भाप्र. )

कपित्थदाडिममरिचादिभिः सुपक्वं तक्रम्
( उ. सु. उ. ४०.२७ )

**–यवागू**–स्त्री., खडेन सिद्धा यवागूः
( सुसू. ४६.३७८ )

**–यूष**–पु., यूष० ( चचि. १९.२५ ) द्र० 'खड'

**खड्डु**–पु., शारीर० पादजङ्घासंधिः गुल्फसंधिः
( सुनि. १.७९ )

**खड्डुल**–पु., शारीर० गुल्फसंधिः ( सुनि., १.७९ )

**खड्डुलक**–पु., शारीर० गुल्फसंधिः (सुनि. १.७९)

**खड्ग**–पु., प्राणि० आनूपश्चतुष्पादः पशुः
वन्यपशु० गण्डकः; ( सुसू. ६.२३; अहसू. ६.५१ )

**–शिम्बी**–स्त्री., वनस्पति० असिशिम्बी
( रा. परि. ७.९७ )

**खड्गिन्**–पु., पशु० गण्डकः अस्य मांसं मांसवृद्धिकरम्
( चचि. ८.१५४ )

**खण्ड**–वि., असमग्रम् ( सुसू. ८.९ )
शस्त्रदोष० ( असंसू. ३४ )
पु., रससिद्धः ( र. १.२–५ )
आदिमचन्द्रसेनलङ्केशादिषु सप्तविंशतिसंख्याकेषु अन्यतम आचार्यः
शर्करा० खण्डशर्करा ( सुसू. ४५.१६२ )
( अहसू. ५-४९ ) द्र० 'शर्करा'
न., खनिज० लवणभेदः बिडम् ( रा. ६.३६ )

**( खण्डा )**–स्त्री., वनस्पति० बलाभेदः नागबला
( ध. १.२८४ )

**–कल्पन**–(परिव०) न., खण्डकरणम् (सुचि. ४.२८)

**–केश**–न., रोग० इन्द्रलुप्तम् ( र. २४.८३ )

**–खाद्य**–व., शर्कराप्रचुरं भक्ष्यम् ( अहसू. ७.७६ )
योग० वासाभार्ङ्यमृताभीरुसाधितोऽयं क्षयकास-कुष्ठादिहरः ( र. २८.४८–५३ )

**–जा**–स्त्री.,भैषज्य० तवराजेति शर्कराभेदः
( रा. १४.१६५ )

**–पूर्विका**–स्त्री., खनिज० खण्डाख्या मनःशिला इयं चूर्णीभूताऽतिरक्ताङ्गी सभारा च (र. ३. ९६–९९)
द्र० 'मनःशिला.'

**–फण**–पु., सर्प० दर्वीकरः ( सुक. ४.३४० )

**–मोदक**–पु.; भैषज्य० तवराजशर्करा
( रा. १४. १६५ )

**–लवण**–न., खनिज० लवणभेदः, बिडम्
( ध. २.२८ )

**–शर्करा**–स्त्री.,इक्षुविकार० शर्कराभेदः, द्र० शर्करा
( चसू. २७.२४० )

**–सार**–पु., भैषज्य० तवराजशर्करा (रा. १४.१६५)

**–सिता**– स्त्री., खण्डशर्करा, द्र० 'शर्करा,'
( अहसू. ५.४९ )

**खण्डक**–पु., वनस्पति० मुद्गभेदः कृष्णमुद्गः (ध. ६.८३)
द्र० 'मुद्ग.'
भैषज्य० मधुभवा शर्करा मधुशर्करा
( रा. १४.६१ )

**खण्डकाप्य**–पु., ऋषि० ( असंशा. ३ )

**खण्डाख्या**–स्त्री., खनिज० मनःशिलाप्रकारः 'चूर्णीभूताऽतिरक्ताङ्गी सभारा खण्डपूर्विका, द्र० 'मनःशिला.'

**खण्डामलक**–पु., आमलकीखण्डः
( र. २०.२३३–२२६ )

**खण्डासव**–पु., आसुत० मधुरद्रव्येषु अनुपानार्थमुपयुक्तः ( सुसू .४६.४३२ )

**खण्डिका**–स्त्री., शिम्बीधान्य० त्रिपुटकलायः कलायभेदः, कलाय ( चसू. २७.२८ )

**खण्डिन्**–पु., वनस्पति० वनमुद्गः मुद्गपर्णी
( र. २३.७१ )

**खण्डौष्ठ**–पु., ओष्ठरोग० तल्लक्षणम्–अस्मिन् वातेनोष्ठो द्विधा भवति ( असंउ. २५. )

**खदिर**–पु., वनस्पति० जाङ्गलदेशोद्भवो रक्तसारो वृक्ष० ( चक. १.८ ) गायत्रीपर्यायः ( सुसू. ३८.८–९ ) अस्य काष्ठं दन्तपवनार्थमुपदिष्टम् (अहसू. २.२) उदर्दप्रशमनगणे ( चसू. ४.१७. ( ४३ ) ( असंसू. १५ ) कुष्ठघ्नगणे ( चसू. ४.११ ) ( १३ ) ( असंसू. १५ ) 'कुष्ठघ्नानां श्रेष्ठः ( चसू. २५.४० ) ( असंसू. १३. ) कुष्ठादिहरप्रदेहे उपयुक्तः ( चसू. ३.३. ) असनादिगणे ( असंसू. १६. ) अस्य कषायः शनैर्मेहे उपयुक्तः ( सुचि. ११.९ ) द्रावणसत्वपातनार्थं मत्स्यकोकिला उपयुक्ताः ( र. ८.३६. ) गुणाः–तिक्तः ( कषायश्च ) शीतः पाचनो रेतोविशोषणः, दन्त्यश्च, रक्तपित्तकुष्ठामकास—कण्डु—क्रिमि—शोफ–व्रणहरः ( ध. १.२६ ) मेह–श्वित्रज्वर-पाण्डुघ्नः ( भा. प्र. मिश्र ) श्वेतखदिररक्तखदिरविट्खदिरादयः खदिरभेदाः। श्वेतखदिरगुणाः–तिक्तः कटुः कषायः उष्णः कण्डूतिभूतकुष्ठघ्नः कफवातव्रणापहश्च ( रा. ८.३५ ) रक्तखदिरगुणाः

कटुः कषायः उष्णः गुरुस्तिक्तः आमवातास्रवातघ्नो व्रणभूतज्वरापहश्च ( रा. ८.३७ ) विट्खदिरगुणाः- कटुस्तिक्तः उष्णः रक्तव्रणोत्थदोषहरः कण्डूतिविष-विसर्पज्वरकुष्ठोन्मादभूतघ्नः ( रा. ८.३९ )

हिं.—खैर.

म.—**खैर.**

गु.—खेर.

बं.—खदेरगाल.

त.—वोदळं.

खदिरसारः न., ( असंसू. १ )

खादिरः ( रा. ८.४१ )

**( खदिरी )**–स्त्री., वनस्पति० लज्जालुभेदः, वैपरीत्याह्वा, लज्जालुः ( रा. ५.१६० )

वराहक्रान्ता ( असंक. ४ )

**–कषाय**–पु., योग० खदिरक्वाथः, त्वक्कण्ठरोगापचि-मेहकुष्ठघ्नः ( असंचि. २१ )

**–घृत**–न., घृत० खदिरसारसिद्धं घृतम्, रक्तपित्त-प्रबलेषु कुष्ठेषूपयुक्तम् ( चचि. ७.१३५ )

**–निर्यास**–खदिरनिर्यासः ( च. चि. ७.९७ )

खदिरः, तद्गुणाः—कटुस्तिक्त उष्णः कफवातहृत रुचिकृद्दीपनो व्रणकण्ठामयघ्नः ( रा. ८.४१ )

**–पत्रिका**–स्त्री., वनस्पति० लज्जालुः ( ध. ४.१५९ )

खदिर० अरिखदिरः ( रा. ८.४० ) द्र० 'खदिर'

**–वारि**–न., खदिरेण सिद्धं जलम् ( सुचि. ९.६६ )

**–विधान**–न., खदिरस्य स्वरसकल्प० तद्यथा 'प्रशस्तदेशजातमनुपहतं मध्यमवयसं खदिरं परितः खानयित्वा मध्यममूलं छित्वाऽयोमये कुम्भे तदधोऽव्यवहिते निदध्याद्यथा तस्य रसग्रहण-सामर्थ्यं जायेत, ततस्तत्खदिरखण्डं गोमयमृदा-ऽवलिप्तमवकीर्येन्धनैर्गोमयमिश्रैरादीपयेद्यथाऽस्य दह्यमानस्य रसः स्रवत्यधस्तात्, यदा जानीयात्पूर्णं भाजनमिति, अथैनमुद्धृत्य परिस्राव्य रसमन्यस्मि-न्पात्रे निधायानुगुप्तं निदध्यात्, ततो यथायोगं मात्रामामलकरसमधुसर्पिर्भिः संसृज्योपयुञ्जीत, जीर्णे भल्लातकविधानवदाहारः परिहारश्च, प्रस्थे चोपयुक्ते शतं वर्षाणामायुषोऽभिवृद्धिर्भवति' ( सुचि. १०.१३ )

**–सार**–पु., खदिरकाष्ठसारः ( चचि. १८.६४ )

**खदिरका**–स्त्री., भैषज्य० लाक्षा ( रा. ६.१४१ )

**खदिराङ्गार**–पु., खदिरकाष्ठाग्निः ( असंसू २६ )

**खदिराम्बु**–न., खदिरवारि, कवलग्रहार्थमुपयुक्तम् ( असंसू. ३ )

**खदिरारिष्ट**–पु., आसुत० खदिरकृतोऽरिष्टः, अयं मांस-गते विषे शमनार्थमुपयुज्यते ( चचि. २३.१८८ )

**खदिरासव**–पु., आसुत० अनेकशफानां छागादीनां मांसभक्षणोत्तरम् अनुपानत्वेन प्रोक्तोऽयम् ( सुसू. ४६.४३२ )

**खदिरोद्भूत**–पु., निर्यास० खदिरनिर्यासः ( रा. ८.४१ )

**खनि**–स्त्री., खानी आकरः ( र. २.४ )

खन्यते भू रत्नाद्यन्वेषणार्थमिति

**खनी**–स्त्री., खनिः ( र. २.४ )

**खर**–पु., गुण० ( अहृसू. १.११ ) वातस्य गुणः श्लक्ष्णविरुद्धः ( चशा. ६.१० ) ( हे. अहृसू. १.१८ )

श्लक्ष्णत्वनाशनः ( चसू. १२.४ ) कर्कोटफल-वत्स्पर्शः ( सुसू. ४१.४ ) ( ३ ) कर्कशः ( सुसू. ४६.५१६ )

कठिनः ( सुनि. ३.१० ) अमृदुः ( अहृसू. १.११ )

लेखने शक्तिः अस्य गुणस्य ( अहृसू. १.१८ )

तस्य कर्मस्तम्भनमतिसारादीनाम् (सुसू. ४६.५१६)

पशु० ग्राम्यवर्गीयः ( चसू. १.९४ ) ( सुसू. ४६.८५ )

खमस्यास्तीति कण्ठविवरं महत्, खरः ( असंशा. ३ ) ( अहृसू. ६.४८ )

वनस्पति० धन्वयासः ( रा. ३.२५ )

कुश० मृदुदर्भः ( ध. ४.१३३ ) द्र० 'दर्भ'

न., खनिज० खरलोहम्, तीक्ष्णलोहप्रकाराणामन्य-तमम्, तत्कठिनमलकवरकुटिलरेखाभी रहितं तथा भङ्गे सति पारदाभं नमने च भङ्गुरं वर्तते द्र० 'तीक्ष्णलोह' ( र. ५.८० )

उपरसभेदः ( र. २.१३९ )

**–काष्ठिका**–स्त्री., वनस्पति० बला ( रा. ४.४२२ )

**–गन्धा**–स्त्री., वनस्पति० गाङ्गेरुकी ( नागबला. ) ( ध. १.२८४ )

**–गन्धिनिका**–स्त्री., वनस्पति० गाङ्गेरुकी नागबला ( ध. १.२८४ )

**–चर्मा**–स्त्री., प्राणि० गोधा ( ध. परि. ६.३९ )

**–जिह्व**–वि., लक्षण० खरा कर्कशा श्लक्ष्णविपर्यया जिह्वा यस्येति ( सुउ. ३९.३९ )

**–त्व**–न., लक्षण० दुःस्पर्शत्वम्, दुःखेन स्पृश्यमानत्वम् ( चनि. ५.७ )

**–सार**–पु., सुगन्धिद्रव्य० कर्पूरः ( र. १८.२११ )
**–सारक**–पु., सुगन्धिद्रव्य० कर्पूरः ( रा. १२.५६ )
**–स्पर्शत्व**–न., निबिडस्पर्शता, हस्तादिना स्पृष्टे सति पाषाणतुल्यः स्पर्शः ( अहसू. २९.९ )
**–स्वन**–पु., वनस्पति० तण्डुलीयकः ( ध. ४.११६ )
**घनात्यय**–पु., ऋतु० शरदृतुः ( चसू. ६.४३ )
हेमन्तः ( चशा. २.४५ )
**घनान्त**–पु., शरदृतुः ( अहसू. ३.५६ )
**घनाश्मस्वेद**–पु., स्वेदचिकित्साविशेषः, तद्विधिः– पुरुषायाममात्रमधिकं वा घनं समं च शिलातलं भूप्रदेशं वा वातहरदारुदीप्तेनाग्निना सर्वतस्तापयित्वा अग्निमपोह्योष्णोदकाम्लादिभिरभ्युक्ष्य यथोक्तप्रच्छदे संस्तरवत्स्वेदयेदिति ( असंसू. २६ )
**–घनोदय**–पु., मेघागमनकालः ( असंसू. ४.४६ )
**घर्म**–पु., क्षरति अङ्गाज्जलमनेनेति घर्मः, आतपः ( चचि. ७.११८ )
स्वेदः ( र. १२.१७–१९ )
ऋतु० ग्रीष्मः ( अहसू. १६.१३ )
**–मास**–पु., कालविभाग० अत्र पश्चिम इति विशेषण- मनुसन्धेयम्; तेन पश्चिमो घर्ममासो ज्येष्ठ इति चक्रः साधुः । ज्येष्ठमासः ( चवि., ३.३ )
**घर्मांशु**–पु., सूर्यः ( सुउ. १७.६४ )
**घर्मान्त**–पु., वर्षाकालः ( सुसू. २१.२० )
**घर्माम्बु**–न., उष्णजलम् ( चचि. ३.१९४ )
प्रस्वेदः ( सुउ. १७.५५ )
**घर्मूटी**–वि., धान्य० ( सुसू. ४६.२१ ङ )
**घर्ष**–पु., घर्षणम् ( अहसू. २३.१ )
परस्परसंश्लेषः ( अहसू. २३.६ )
घर्षणी मुसली घृष्यते घर्षणविषयीक्रियतेऽनेनेति घर्षः ( र. ९.८४ )
**घर्षण**–न., मर्दनम् ( असंसू. ३ )
**( घर्षणी )**–स्त्री., द्वादशाङ्गुलोत्सेधा खल्वमध्ये मर्दनार्थ- मुपयुज्यमाना दण्डाकारा शिला, मुसली वा ( र. ९.८० )
**घर्षिणी**–स्त्री., वनस्पति० कांचनक्षीरी ( ध. १.२४० )
**घस्मर**–वि., बहुभक्षकः ( चसू. १३.५० )
घसति भक्षयति विशेषेणेति
**घस्र**–पु., दिवसः घसति भक्षयति अन्धकारमिति घस्रः
**( घस्री )**–स्त्री., घर्षणी ( र. ९८.४ )
**घाटा**–स्त्री., शारीरज अन्तःकण्ठस्थमस्थि, अवटुः ( चसू. १७.१९ )
ग्रीवायाः पश्चाद्भागः ( चसि. ९.८४ )
शङ्खस्योपरिभागः ( असंउ. २७ )
**घाटाल**–वि., उन्नतपर्यन्तः, यस्य घाटा नामोर्ध्वभागो महानस्ति सः ( सुनि. ९.१०.११ )
**घुण**–पु., कृमि० ( र. ३०.११५ )
**–दन्त**–पु., विवरयुक्तो दन्तः ( कासू. २०.८ )
**–प्रिया**–स्त्री., वनस्पति० अतिविषा ( अहसू. १५.३३ )
**घुणाक्षर**–न., काष्ठकीटदशनजनिताक्षरम्, घुणाख्येन कीटकेन काष्ठक्षरणपूर्वकं कृतं रन्ध्रमक्षरविशेषसम- त्वादतर्कितोपनतत्वं काकतालीयत्वं वा सूचयति ( र. ३०.११५.१६ )
**घुर्घुरक**–पु., मार्जारशब्दानुकारी ध्वनिः ( सुक. ४.३७ )
स कफावरुद्धेन श्वासेन भवति ( चइ. १०.१८ )
**घुर्घुराशब्दः**–पु., घुर्घुरकः, घुर्घुराकारशब्देन वेदनया युक्तम् ( सुसू. २८.१६.१७ )
**( घुर्घुरिका )**–स्त्री., लक्षण० ( चचि. १२.७५ )
**घुसृण**–न., वनस्पति० कुङ्कुमम् ( रा. १२.२१ )
**घूकावास**–पु., वनस्पति० शाखोटः ( रानि. ९.३० )
**घूर्णन**–न., भ्रमणम् ( असंउ. ४३ )
लक्षण० चक्रवद् भ्रमणं, निद्रायां लुण्ठनम्
**घृत**–न., स्नेह० ( चसू. २७.२३१–३२ ) ( ध. ६.१४४ ) महास्नेहेष्वेकम् ( चसू. १.८६ ) उत्पत्तिः–गोमहिष्यादीनां दुग्धात् तज्जदध्नो वा स्नेहसाररूपेण घृतं पृथग्भवति नवनीतस्याग्नि- संस्कारेण घृतं जन्यते ( अहसू. ५.३७ ) मधुर- स्कन्धे श्रेष्ठम् ( असंसू. १८ ) गुणाः–मधुरं सौम्यं मृदुशीतवीर्यमल्पाभिष्यन्दि स्नेहनमुदावर्तो- न्मादापस्मारशूलज्वरानाहवातपित्तप्रशमनमग्निदीपनं स्मृतिमेधाकान्तिस्वरलावण्यसौकुमार्यौजस्तेजोबल- करमायुष्यं वृष्यं मेध्यं वयःस्थापनं गुरु चक्षुष्यं श्लेष्माभिवर्धनं पाप्मालक्ष्मीप्रशमनं विषहरं रक्षोघ्नं च ( सुसू. ४५.९६ ) पित्तेऽभ्यधिकं घृतं लिह्याद्वातेऽधिकं घृतं पिबेत् ( असंचि. ५ ) शैत्यात्पित्तं जयेत् स्नेहाद्वातं जयेत् योगसंस्कारतः कफं जयेत् ( असंचि. २ ) वातपित्तप्रशमनानामग्र्यम् ( चसू. २५.४० ) सर्पिः खलु पित्तं जयति सतत- मभ्यस्यमानं माधुर्याच्छैत्यान्मन्दत्वाच्च, पित्तं ह्यमधुरमुष्णं तीक्ष्णं च, तस्मात्सर्पिः पित्तजित् ( चवि. १.१४ ) घृतपानं पित्तशूलशमनम् ( सुउ.

४२.१०६ ) धीस्मृतिमेधाग्निकांक्षिणं घृतं शस्यते ( असंसू. २५ ) श्रेष्ठं विषहरं ( असंउ. ४० ) घृतं क्षीरस्य रसादिभिस्तुल्यमपि विशेषतो दीपनम् ( असंसू. १७ ) भोजनादावन्ते च क्षुतिनिग्रहज-विकारशमनार्थं घृतसेवनं प्रशस्तम् ( चसू. ७.१७ ) इदं संस्कारात् कर्मसहस्रकृत् ( अहृसू. ५.३९ ) हितत्वेनाभ्यस्यमानमेकं द्रव्यम्, स्नेहनार्थं वर्षान्ते शरदि च घृतं युज्यते ( असंसू. २५ ) घृतात्तैलं गुरु तैलाद्वसा वसायाश्च मज्जा गुरुः ( असंसू. २५ ) मज्जावसातैलेभ्यो घृतं संस्कारस्यानुवर्तनात् माधुर्यादविदाहाच्च श्रेष्ठम् ( असंसू. २५ ) पित्तेऽपि केवलं सर्पिर्न पेयं सामे तु विशेषतो नोपयोक्तव्यम् उपयुक्तं चेत् सर्वदेहोपघातं कृत्वा संज्ञामपि मारयेत् ( असंसू. २५ )

**–पर्ण**–पु., वनस्पति० करञ्जः ( ध. ५.१०७ )

**–पर्णक**–पु., वनस्पति० करञ्जः ( ध. ५.१०७ रा. ९.१७८ )

**–पान**–न., सर्पिषः सेवनम् ( सुउ. २१.३ )

**–पानार्ह**–पु., परिव० घृतपानार्थं योग्यः ( सुचि. ३१.१५ )

**–पूर**–पु., आहारद्रव्य० घृतापूपः ( सुउ. ४२.१०१–१०२ ड. ) ( सुउ. २६.३८ ) गुणाः–प्राणकरो हृद्यः कफावहो वातपित्तहरो वृष्यो गुरू रक्तमांसकृच्च ( सुसू. ४६.३९४ )

**–मण्ड**–पु., स्त्यानघृतोपरितनः स्वच्छो भागः ( सुचि. ३४.१३ ) गुणाः–अयं घृततुल्यगुणोऽपि रौक्ष्यतैक्ष्ण्यतनुत्ववान् ( असंसू. ६.७८ ) घृतसंतानिका ( चचि. २१.९४ ) घृतस्योपरि स्त्यानभागः ( चक्र चचि. १८.१५५ )

**–मण्डलिका**–स्त्री., वनस्पति० हंसपादी ( ध. ४.१११ )

**–सात्म्य**–वि., घृतोपशयः ( काखिल. ५.४८ )

**–सिद्धिलक्षण**–न., परिव० सम्यक्सिद्धं घृतं, तस्य लक्षणम्, शब्दफेनयोरुपशमो गन्धवर्णरसादि-समृद्धिश्च ( सुचि. ३१.१२.१३ )

**–हेतु**–पु., नवनीतम् ( ध. ६.२२९ )

**घृणाफल**–पु., वनस्पति० कलिङ्गः ( रा. ७.२७१ )

**घृताभ्यक्त**–वि., घृतावचारितम् ( सुचि. ६.४ )

**घृताची**–स्त्री., वनस्पति० एला ( रा. ६.७१ )

**घोटी**–स्त्री., वनस्पति० घोण्टा ( रापरि. ८.२२ )

**घोणा**–स्त्री., घोणतो भ्रमतः प्राणापानवायू अनया इति घोणा, यद्वा घोणाति गृह्णाति वस्तुगन्धमिति घोणा। शारीर० नासा ( सुचि. १८.२६ )

**घोण्टा**–स्त्री., वनस्पति० गुणाः–कटुका मधुरोष्णा वातघ्नी व्रणकण्डूतिकुष्ठास्रग्दोषश्वयथुनाशिनी ( रापरि. ८.२२ )

हिं.—झरबेर.

**म.—चन्याबोर.**

गु.—गांगोर.

बं.—सेयाकुळ.

पूग० ( अरु. अहृसू. १५.१७ )

वनबदरीविशेषः ( र. २५.१९ )

**–फल**–न., वनस्पति० पूगफलम् ( ध. ३.३९ )

**घोर**–वि., दारुणम् ( सुनि ९.४ )

**( घोरा )**–स्त्री., वनस्पति० देवदाली ( रा. ३.२४३ )

**–पुष्य**–न., खनिज० कांस्यम् ( रा. १३.२४ )

**–फडा**–स्त्री., प्राणि० गोधा (धपरि. ६.३९ )

**घोल**–न., आहारद्रव्य० दण्डाहतं सस्नेहमजलं दधि ( सुसू. ४५.८५ )

**( घोला )**–स्त्री. वनस्पति० घोली ( रापरि. ७.८७ )

**घोलिका**–स्त्री.,वनस्पति० घोली ( रापरि. ७.८७ )

**( घोली )**–स्त्री., वनस्पति० गुणाः–अम्ला लवणा रूच्या वातकफापहा च ( रापरि. ७.८७ )

हिं.—नोंनिया लुणियाशाक.

**म.—घोळ.**

गु.—लुणी झिण्पी.

बं.—णुनी.

त.—परप्पुक्कीरै.

फा.—खुरफा.

**घोष**–पु., न., आहतं सदितरापेक्षया अधिकतरं घोषति शब्दं करोति इति घोषं कांस्यमिति साधीयो निर्वचनम्। खनिज० कांस्यम् घ. झ. ढ. ध. भाः इति वर्णाः ( चशा. ८.५० ) ( च. ६.२३ )

**( घोषा )**–स्त्री., वनस्पति० शतपुष्पी (ध. २.१) वनस्पति० कर्कटशृङ्गी ( रा. ६.११० ) कोशातकी ( र. १०.७३–७६ )

**–पुष्प**–न., खनिज० कांस्यम् ( ध. ६.२३ )

**घोषाकृष्ट**–न., चतुर्थांशेन हरितालेन युक्तं कांस्यं वङ्क-नालेन ताडयित्वा वङ्गाद्विमुच्य ताम्रावशिष्टं विधीयते, तदेयं संज्ञा ( र. ८.३८ )

**घ्राण**–न., शारीर० पञ्चबुद्धीन्द्रियेष्वेकम् ( चशा. ७.७ ) घ्राणेन्द्रियं तच्च पार्थिवम् ( चशा. ७.१६ ) जिघ्रतीत्यनेन घ्राणम् ( चसू. ८.८ ) तस्य पृथिवी द्रव्यं, नासिकायामधिष्ठानं, गन्धो विषयः, घ्राणबुद्धिरिन्द्रियबुद्धिः ( चशा. ७.७ ) बहिर्मुखं स्रोतः देहे द्वे नासाद्वारे बहिर्मुखे स्रोतसी ( सुशा. ५.१० ) कफस्थानेष्वेकम् ( अहृसू. १२.३ )

**–क्लेद**–पु., नासिकास्थद्रवमलः ( असंसू. २९ )

**–गन्ध**–पु., लक्षण० नासास्थपूतिगन्धः ( चसू. ५.२९ )

**–नाश**–पु., रोग० गन्धग्राहकघ्राणेन्द्रियस्य नाशः ( चसू. २.६ ) अशीतिवातविकारेष्वेकः ( चसू. २०.२१ )

**–प**–वि., घ्राणेन धूमं पिबति ( चसू. ५.४७ )

**–पाक**–पु., रोग० नासारोगः ( चचि. २६.११५ ) संप्राप्तिः–पित्तं स्वहेतुना नासापुटे कुपितं दाहशूलाभ्यां युक्तं तत्रैव त्वङ्मांसं पचेत् स घ्राणपाकः ( असंउ. २३ )

**–मार्ग**–पु., नासामार्गः ( असंशा. ७.२३ )

**–स्रव**–पु., लक्षण० नासास्रवः, अतिस्नेहपानजलक्षणेष्वेकम् ( अहृसू. १६.३१ )

**घ्राणार्बुदयन्त्र**–न., यन्त्र० तन्नाड्याकारं द्व्यङ्गुलायतमेकच्छिद्रं प्रदेशिनीपरिणाहम्, नासार्बुदे दर्शनार्थं चिकित्सार्थं चोपयुज्यते ( असंसू. ३४ )

**घ्राणार्शोयन्त्र**–न., यन्त्र०, घ्राणार्बुदयन्त्रवत् इदं यन्त्रमवगन्तव्यम् ( असंउ. ३४ )

**घ्रातृ**–वि., घ्राणेन्द्रियस्य गन्धबोधहेतुः, गन्धज्ञाता ( सुशा. ३.४ )

**घ्रेय**–वि., घ्राणक्रियार्हम् ( चक. १.२८ )

# आयुर्वेदीय-शब्दकोशः

## च



**चकोर**–पु., पक्षि० ( चसू. २७.४७ )
अयं रक्ताक्षः, विष्किरेष्वेकः ( सुसू. ४६.५९ ) विषसंसृष्टमन्नं दृष्ट्वा चकोरस्याक्ष्णोर्वैराग्यं जायते ( सुक. १.३०,३१ ) तस्याण्डं क्षीणरेतःकासहृद्रोगक्षतेषु हितम् । तन्मधुरमविदाहि सद्यो बलकरं च ( चसू. २७.८५ ) अस्य मांसगुणाश्चटकमांसवत् ( अहृसू. ६.४४ )

**चकोराक्षि**–न., चकोरपक्षिणो नेत्रम्, विषं दृष्ट्वा तद्विरज्यते ( चचि. २३.११० )

**चक्र**–न., पानीयोद्धरणार्थं नियुक्तं वाह्यमानं चक्राकारं यन्त्रम् ( चचि. १५.२१ )
तैलनिष्पादनार्थं तिलनिष्पीडनयन्त्रम् ( सुसू. ४४.४७ )
चक्र न., (सुसू. ४४.४७) (चचि. १५.२१)

**–( चक्र )-गज**–पु., वनस्पति० चक्रमर्दः ( रा. ४.८ )

**–चापसमुद्भवा**–स्त्री., वनस्पति० भूतुम्बी ( रा. ७.२४१ )

**–तैल**–न., चक्रपीडितं तैलम्, चक्रे ह्यभृष्टा एव तिलादयः पीड्यन्ते चेत्, ते गुणवत्तरा भवन्ति ( सुसू. ४४.४७–४८ )
अन्ये पुनरणुतैलकल्पेन गृहीतमपक्वं तैलं चक्रतैलमाहुः ( सुचि. ३.१२ )

**–दन्तीबीज**–न., जेपालः ( रा. ६.३४४ )

**–नख**–पु., व्याघ्रनखम् ( रा. १२.११० )

**–नाभि**–स्त्री., चक्रस्य मध्यभागः ( सुशा. ७.५ )

**–नायक**–पु., व्याघ्रनखम् ( रा. १२.११० )

**–मर्द**–पु., वनस्पति०, गुणाः—कटुरूष्णः कान्तिसौकुमार्यकरो मेदोघ्नो वातकफनाशनो दद्रुकण्डूतिव्रणकुष्ठपामाघ्नश्च ( ध.४.४ )
हिं.—चकवड, पमार.
**म.—टाकळा.**
गु.—कुवाडियो.
बं.—चनेवार, चकुण्डा.
त.—तकरै.
फा.—संजिमवोया.

**–मर्दिनी**–स्त्री., वनस्पति० अलक्तकः ( रापरि. ६.१२ )

**–मुद्गक**–पु., ऋषिमुद्गकः ( चसू. २१.२५ )

**–यन्त्र**–न., यन्त्र० गर्ताकारयन्त्रम् ( र. २५.५७, ५८ )

**–योग**–पु., बन्ध०; वर्तुलकुशादानपूर्वकं चक्रवद्बन्धनम्; भग्नं पुरुषं भूमावुत्तानं शाययेत् । यस्य पादस्योर्वस्थि निर्गतं स्यात्तस्यैव पार्ष्णिभागो बलवता वैद्येन स्वहस्तोपरि ग्रहीतव्यः । ततश्च चक्रवद्भ्रामतो दक्षिणं परिभ्रमणीयः । एवं कृते विमुक्तः ऊरुः पुनः स्वस्थानं प्रतिपद्यते ( सुचि. ३.२७ )

**–लक्षणा**–स्त्री., वनस्पति० गुडूची ( ध. १.२ )

**–लताम्र**–पु.,आम्रभेदः राजाम्रः ( रा. ११.११ )

**–वर्तिन्**–पु., वनस्पति० वास्तुकम् ( रापरि. ७.६२ )

**–( वर्तिनी )**–स्त्री., वनस्पति० जन्तुका ( ध. ४.८८ )
जटामांसी ( रा. १२.९१ )

**–वाक**–पु., पक्षि० जलचरोऽयं ( चसू., २७.४४ )
द्वन्द्वचरो निशावियोगी, प्लवजातीयः (सुसू. ४६.१०५, १०६) मांसगुणाः–स्निग्धं गुरु शुक्रलं बल्यं रुच्यं वातघ्नं च ( ध. ६.४५४)
हिं.—चकवा.
बं.—रामचका.
**म.—चक्रवाक.**

**–वेधक**–न., शस्त्र० सूक्ष्म् ( रा. १५.२९२ )

**चक्रक**–पु., वनस्पति० करीरः ( ध. ५.९९ )

**( चक्रका )**–स्त्री., सोम० सोमसमवीर्यमहौषधिः, 'श्वेतां विचित्रकुसुमां काकादन्यासमां क्षुपाम् । चक्रकामोषधीं विद्याज्जरामृत्युनिवारिणीम् ॥' ( सुचि. ३०.१८–१९ ) चक्रकायाः पयः सकृद्देवोपयोक्तव्यम् ( सुचि. ३०.५ )

**( चक्रा )**–स्त्री., भैषज्य० कर्कटशृङ्गी ( ध. १८५)

**चक्राङ्गा**–स्त्री., वनस्पति० मुस्ता ( रा. ६.६१ )

**चक्राङ्गी**–स्त्री., वनस्पति० कटुका ( ध., १.३८ ) सुदर्शनलता अम्लवास्तुकम् ( २१.१०४–११० )

**चक्राङ्ग**–पु., वनस्पति० चक्रमर्दः ( ध. ४.४ ) चक्रवाकः ( सुसू. ६.३०.३१ ) 'द्र० चक्रवाक'.

**( चक्रिका )**–स्त्री., वनस्पति० चक्रमर्दः ( ध. ४.४ ) चक्राकृतिर्वटिकादिः ( र. ५.१२६ )

**–बन्ध**–पु., भैषज्य० गन्धकमनःशिलाहरितालयुक्तः ( र. २२.२४–२९ ) शूलगुल्मभगन्दरग्रहण्युदरादिहरः

**चक्रिन्**–पु., वनस्पति० तिनिशः ( रापरि. ९.२४ )

**( चक्री )**–स्त्री., वनस्पति० चक्रमर्दः ( ध. ४.५ ) चक्रिका ( र. २.१९ ) व्याघ्रनखम् ( रा. १२.११० )

**चक्षुस्**–न., शारीर० चष्टे आचष्टे रूपमिति चक्षुः, शारीर० पञ्चबुद्धीन्द्रियेष्वेकम्, तच्च तैजसम्, ( चशा. ७.७ ) तस्य तेजो द्रव्यं शिरःसंश्रयस्थानं नेत्रेऽधिष्ठानं रूपं विषयः, रूपबुद्धिरिन्द्रियबुद्धिः ( चशा. ७.७ ) पित्तस्थानेष्वेकम् ( अहसू. १२.३ ) तच्चोभयनयनगोलकाधिष्ठितमेकमेव ( चसू. ८.८ )

**–( चक्षुः )–काम**–वि., दृष्टिकामः ( चसू. १३.४१ )

**–प्रसादन**–न., दृष्टिप्रसादनम् ( सुचि. २४.७० )

**–( चक्षुर् ) ग्रहण**–न., लक्षण० दृष्ट्यवरोधः ( सुक. ४.३९ )

**–बुद्धि**–स्त्री., चाक्षुष्यं चक्षुषा निर्वृत्तं ज्ञानम् ( चसू. ८.१२ )

**चक्षुरपसर्पण**–न., लक्षण० चक्षुर्व्यपगमः ( चनि. ७.६ )

**चक्षुष्य**–वि., चक्षुष्यम् चक्षुषे हितम् ( चसू. २७.३०० ) खनिज० अञ्जनम् ( रा. १३.२१५ ) प्रपौण्डरीकम् वनस्पति० ( ध. ३.९२ ) शिग्रुभेदः नीलशिग्रुः ( रा. ७.६२ ) द्र० 'शिग्रु'

**( चक्षुष्या )**–स्त्री., खनिज० अञ्जनम् ( ध. ३.१५६ ) गुणाः–कषाया कटुः शीता चक्षुर्हिता विषनेत्रस्रावविस्फोटकण्डूव्रणदोषघ्नी ( ध. ३.१५६ ) वनस्पति० मेषशृङ्गी ( रा. ९.११३ ) कुलत्था ( रापरि. ५.१८ ) वनकुलत्थिका ( चचि. २६.२५० ) अस्या एकस्या अपि स्तन्यसंयुक्तायाः कल्पो नेत्ररोगे प्रशस्तः ( काकल्प० षट्कल्पाध्यायः )

**चक्षूरोधन**–न., नेत्रयोः क्रियाप्रतिबन्धः ( अहसू. ७.२३ )

**चङ्क्रमण**–म., परिभ्रमणम् ( सुचि. ३९.३४ ) कुटिलगत्या परिभ्रमणम् ( सुचि. २४.८० ) गुणाः–अग्निबलायुर्वर्धनं मारुतस्यानुलोमनं खुडस्तम्भश्रमहननं च ( असंसू. १२ ) तदेवोपानद्रहितमनारोग्यं मनायुष्यमचक्षुष्यम् ( सुचि. २४.७३ )

**चञ्चु**–स्त्री., वनस्पति० गुणाः–मधुरा कषाया मलशोषणी तीक्ष्णा गुल्मोदरविबन्धार्शोग्रहणीरोगघ्नी च ( रापरि. ४.१८ )

हिं.—चंचु, चेबुना, चेंबुका.
म.—चंचू.
गु.—छुछ.
बं.—चेचको.

शाक० प्रवाहिकायां बहुस्नेहेन युक्तोपयोज्या ( चचि. १९.३२ )

एरण्डभेदः रक्तैरण्डः ( रा. ८.४४६ )

**–पत्र**–पु., वनस्पति० चञ्चुशाकः ( रापरि. ४.१८ )

**–बीजक**–न., चञ्चुशाकबीजम् ( र. २०.२–४ ) रक्तैरण्डबीजम् ( र २०.२–४ )

**–मालिका**–स्त्री., दंशस्योपरि पिडकासदृशैराचितानि क्षतानि पदानि वा ( ड सुक. ४.१५.१६ ) सर्पदष्टस्थानस्य पार्श्वे वटप्ररोहाग्रतुल्यो विषोत्पन्नोऽङ्कुरः ( गयी ) ( सुक. ४.१५.१६ )

**चञ्चुक**–पु., वनस्पति० रक्तैरण्डः ( ध. १.२९६ )

**चञ्चुर**–पु., वनस्पति० चञ्चुः ( रापरि. १.१८ )

**चटक**–पु., प्रतुदपक्षि० ( चसू. २७.५२ ) मांसगुणाः—मधुरं स्निग्धं बलशुक्रवर्धनं मारुतनाशनं संनिपातप्रशमनं च ( चसू. २७.७५ ) शीतं लघु कफघ्नम् ( ध. ६.५० ) तदण्डं क्षीणरेतःकासहृद्रोगक्षतेषु हितं मधुरमविदाहि बलकरं च ( चसू. २७.८६ ) रक्तष्ठीवी चटकाण्डरसं पिबेत् ( चचि. ११.२५–२६ ) तद्वसा तु अहिततमा ( चसू. २५.३९ )

**( चटकी )**–स्त्री., वनस्पति० गुञ्जा ( ध. ४.२९ )

**चटचटायम**–न., वातिकव्रणे वेदनाविशेषः ( सुचि. १.७ )

**चटित**–न., वेदना ( चनि. १.३१ )

**चण**–पु., वनस्पति० चणकः ( रा. १६.१५६ )

**–द्रुम**–पु., वनस्पति० क्षुद्रगोक्षुरः ( रा. ३.१३१ )

**–पत्री**–स्त्री., वनस्पति० रुदन्ती ( रापरि० ५.१५ )

**चणक**–पु.,–धान्य० ( चसू. २७.२८ ) गुणाः–मधुरः शीतो रूक्षो वातलः पुंस्त्वघ्नो दीप्तिकरो वर्ण्यो

बल्यो रूक्ष आध्मानकरः कफपित्तघ्नो रक्तविकार-मेहनाशनश्च ( ध. ६.१०१ )
हिं.—चना, चने, छोला.
म.—हरभरा.
गु.—चणा.
बं.—छोलारगाछकट.
फा.—नखुद.

**( चणका )**–स्त्री., वनस्पति० मसूरिका ( ध. ६.९५ )

**( चणिका )**–स्त्री., वनस्पति० गुणाः—अतिमधुरा वृष्या बल्या बीजतृणसहिता च ( रापरि. ८.६५ )

**–क्षारोदक**–न., चणकपञ्चाङ्गस्य क्षारपातविधिना पातितस्य क्षारस्य जलेन मिश्रणम् ( र. १६.१४०–१४५ )

**–प्रयोग**–पु., संस्कार० रात्रौ कान्तलोहपात्रे जले स्थापितान् चणकान् सुक्लिन्नान् मुष्टिमितान् भक्षयेत्। मर्यादा—षण्मासाः। फलं—नैकव्याधि-विनाशः कुष्ठप्रमेहपाण्डुयक्ष्मकामलानिर्मूलनञ्च । पथ्यं तक्रम् ( र. २६.३९ )

**चणकाम्ल**–न., चणकशाकोद्भवो द्रवः ( र. १०.८० ) अत्यम्लं दन्तहर्षणं लवणानुरसं रुच्यं शूलाजीर्ण-विबन्धनुत् ( वैशसिं. )

**चण्ड**–वि., शीघ्रकोपः, आसुरसत्त्वलक्षणम् ( सुशा. ४.८८ )
न., आसुत० सूक्तम् ( ध. ६.२४६ )

**( चण्डा )**–स्त्री., वनस्पति० चोरकः ( ध. ३.७१ )
कपिकच्छूः ( ध. १.१५१ )
आखुकर्णी ( रापरि. ३.२२ )
लिङ्गिनी ( रापरि. ३.१७ )
द्रवन्ती ( ध. १.२२९ )
दन्ती ( चक. १२.३ )
चोरहुली, श्वासहरगणे एकं द्रव्यम् ( चसू. ४.१६ )
अजमोदाकारं सुगन्धिद्रव्यम् ( सुसू. ४२.११ )
दूर्वाभेदः ( रा. ८.२२९ ) द्र० 'दूर्वा'
कोपना ( अरु. अहृसू. १५.४३ )

**–संग्रहगदैककपाट**–पु., रसयोग० ज्वरगुल्मार्शो-ऽतिसारनाशनः ( र. १६.५१–६१ )

**–हासा**–स्त्री., वनस्पति० गुडूची ( रा. ३.२ )

**चण्डक**–पु., वनस्पति० करवीरः ( ध. ४.२ )

**( चण्डिका )**–स्त्री., रेवतीग्रह० त्रयोदशे दिनेऽपत्यं विनाशयति ( कारेवतीक. ४६ )



**चण्डातक**–पु., वनस्पति० करवीरः ( ध. ४.२ )

**चण्डाल**–पु., चाण्डालः ( असंशा. १२.१८ )

**( चण्डाली )**–स्त्री., वनस्पति० लिङ्गिनी ( रापरि. ३.१७ )

**–कन्द**–पु., वनस्पति० गुणाः—मधुरो रसायनः कफपित्तघ्नः कफपित्तास्रदोषविषभूतादि दोषघ्नः ( रापरि. ७.४८ )

**चतुर्**–वि., संख्याविशेषः ( सुशा. १०.२२ )

**–गुण**–न., चतुःप्रमाणम् ; चतुरावृत्तिकम् ( चक. १२.१०१ )

**–जात**–न., त्वगेलापत्रकेशरम् ( सुशा. १०.२२ ) त्वक्पत्रैलं त्रिजातकं, तदेव सकेसरं चतुर्जातम् ( अहृसू. ६.१६० )

**–भद्र**–पु., बस्तिकल्पोऽयं ( काखिल. ८.२२–२३ )

**–विध**–वि., चतुःप्रकारकम् ( सुउ. २२.९ )

**–विंशतिक**–पु., पुरुष० चतुर्विंशतितत्त्वयुक्तः पुरुषः प्रकृतिर्महानहंकारः एकादशेन्द्रियाणि पञ्चतन्मा-त्राणि पंचभूतानि चेति चतुर्विंशतितत्त्वानि। अत्र प्रकृतिव्यतिरिक्तं चोदासीनं पुरुषमव्यक्तसाधर्म्या-दव्यक्तायां प्रकृतौ एव प्रक्षिप्य अव्यक्तशब्देनैव गृह्णाति तेन चतुर्विंशतिकः पुरुष इति अविरुद्धम् ( चक्रः चशा. १.१७ )

**–हस्त**–वि., हस्तचतुष्टयसम्मितम् ( सुसू. २.४ )

**चतुरङ्गुल**–पु., वनस्पति० आरग्वधः ( ध. १.२१९ )

**चतुरम्ल**–न., अम्लचतुष्टयम्, चतुरम्लं हृद्यवर्गे प्रथ-मोक्तं वृक्षाम्लाम्लवेतसदाडिमबदररूपम् ( चचि. १५.१११ )

**चतुरस्र**–वि., चतुष्कोणम् ( सुसू. २२.५ )

**चतुःश्रेयस्**–वि., चत्वारि देहाग्निबलचेतःसम्बन्धीनि श्रेयांस्यस्येति चतुःश्रेयः ( चिकित्सितम् ) ( चनि. ८.३७ )

**( चतुः– ) सुधारस** पु., भैषज्य० ताम्रसुवर्णरौप्य-युक्तः जीर्णशूलगुल्महरः ( र. २१.१०४–११५ )

**–स्नेह**–न., घृततैलवसामज्जानश्चत्वारः स्नेहाः ( सुसू. ४४.४७–४९ )

**( चतुष्– )–पत्री**–स्त्री., वनस्पति० पाषाणभेदप्रकारः ( रा. ५.२१५ )

**–पथ**–पु., मार्गचतुष्टयसंयोगः ( सुचि. २४.८९ )

**–पद**–पु., वनस्पति० भेण्डा ( रापरि. ४.२५ )

**–पद्दंश**–पु., रोग० लक्षणम्–मुहुर्मुहुः शिरोन्यासः शोथः स्रस्तौष्ठकर्णता ज्वरः स्तब्धाक्षिगात्रत्वं हनु-कम्पोऽङ्गमर्दनं रोमापगमनं ग्लानिररतिर्वेपथुर्भ्रमश्च ( चचि. २३.२२९.२३० )

–पदाभिगमन–न., पश्वादिभिर्गमनं मैथुनमिति यावत् ( चचि. ३०.१६६–१६८ )
–पदीगमन–न., अजादिभिश्चतुरंघ्रिभिः सह मैथुनक्रिया ( सुनि. १२.७ )
–पर्णी–स्त्री., वनस्पति० क्षुद्राम्लिका ( ध. ५.३६ )
–पादकीट–पु., चतुष्पादकीटप्रतिसूर्यकादिः ( ड. सुक. ८.२८ )
–पादक्षत–न., हस्त्यश्वप्रभृतिपशुभिः कृतं क्षतं, तेन रागज्वरस्रावरुजो भवन्ति, शूयते पच्यते च ( असंउ. ४६ )
–पुण्ड्र–पु., वनस्पति० भेण्डा ( रापरि. ४.२५ )
–प्रयोग–पु., पाननस्याभ्यङ्गानुवासनानि ( असंउ. ३२ )
–फला–स्त्री., वनस्पति० नागबला ( रा.४.४२७ )

चतुर्थ–वि., तुरीयः ( सुचि. ९.९ )
–कर्मगुणप्राप्त–वि., त्वग्धातोश्चतुर्थं मेदः तस्य कर्माणि शोधनादीनि, तेषां तु गुणाः फलं, तेन मेदोगतं संशोधनादिगुणविशिष्टमित्यर्थः । अथवा चतुर्थे मेदसि स्थितं चतुर्थम्, तस्य कर्माणि गुणाश्च दौर्गन्ध्योपदेहपूयादयस्तैः प्राप्तं युक्तं कुष्ठादि ( सुचि. ९.६ )
–भक्त–वि., एकाहमुपोष्य द्वितीयेऽहनि सायंभोजनम् उपसेवमानः ( सुचि. ९.१९ )
–भक्तान्तरित–वि., पक्षादूर्ध्वं प्रथमेऽहनि सायंप्रातभोजनद्वयं निषेव्य द्वितीयदिने प्रातर्भुक्तवतो यदा चतुर्थं भुक्तं भोजनमन्तरितं वर्जितं तदा स एवमुच्यते । चतुर्थं भोजनं वर्जितं यस्य सः ( सुचि. १३.२४–२५ )

चतुर्थक–पु., रोग० चतुर्थे दिने भवति इति चतुर्थकः विषमज्वरभेदः ( चशा. १.११३ चचि. ३.७२ सुउ. ३९.७०–७१ ) अस्थिमज्जगो दोषश्चतुर्थकज्वरं कुरुते । चतुर्थके चतुर्थदिनभाविरवमस्ति । चतुर्थको द्विविधं प्रभावं दर्शयति। तत्र श्लैष्मिकः पूर्वं जङ्घाभ्यामनिलसंभवश्च पूर्वं शिरस्तः संभवति । तदनन्तरं निखिलदेहं व्याप्नोति । चतुर्थकविपर्ययस्तु मध्ये दिनद्वयं भूत्वा आद्यावन्ते च मुञ्चति

( चतुर्थिका )–स्त्री., मान० पलम् ( चक. १२.९२ ) ( असंक. ८ )
–विपर्यय–पु., रोग० चतुर्थकज्वरः; एष दिनद्वयं मध्ये भूत्वा आदौ अन्ते च मुञ्चति ( चचि. ३.७३ ) ( सुउ. ३९.५५ )

चत्वर–न., चतुष्पथः; चत्यते स्वीक्रियते बल्यादि अस्मिन् इति चत्वरम् ( सुउ. ६०.३३ )
अङ्गणम् ( सुउ. ६०.३३ )

चन्दन–पु., न., वनस्पति० सुगन्धिद्रव्यम् ( चसू. ४.१० ) गुणाः–स्वादुस्तिक्तः कषायः कटुः शीतो गुरू रूक्षो रक्तप्रसादनो वृष्यो दाहहरो रक्तपित्तविषतृड्दाहकृमिघ्नश्च (ध. ३.१) तत्सप्तविधं श्रीखण्डशबरपीतपतङ्गरक्तचन्दनबर्बरहरिगन्धभेदेन ( भाप्र. ) दुर्गन्धहरदाहनिर्वापणलेपनानां श्रेष्ठम् ( चसू. २५.४० ) महाकषायवर्गे कण्डूघ्नगणे एकं द्रव्यम् ( चसू. ४.११ )
वर्ण्यगणे एकं द्रव्यम् ( चसू. ४.१० ) अङ्गमर्दप्रशमनगणे ( चसू. ४.१७ ) धूम्रपाने उपयुज्यते ( चसू. ५.२१ )
अञ्जनार्थमुपयुक्तम् ( सुउ. १७.२७ ) रक्तातीसारे उपयुक्तम् ( चचि. १९.८६ ) शुक्रमेहे समुपयोज्यम् (सुचि. ११.९) कुणपपूयार्तवे समुपयुज्यते ( असंशा. १.३८ )
हिं.—संदल.
म.—**चंदन.**
बं.—चन्दन.
गु.—सुखड.
फा.—सन्दल, सफेद.
वनस्पति० मधुकसारः ( सुउ. २६.३४ )

( चन्दना )–स्त्री., वनस्पति० सारिवा ( ध.१.१६२ )
–गोपा–स्त्री., वनस्पति० सारिवा ( ध. १.१६२ )
–पुष्प–न., वनस्पति० लवङ्गम् ( ध. ३.४१ )
–पुष्पक–न., वनस्पति० लवङ्गम् (ध. ३.४१)
–रूषित–वि., चन्दनलिप्तम् ( असंसू. ४ )
–सार–न., क्षार० वज्रकक्षारः (रा. ६.५५)
–सारिवा–स्त्री., वनस्पति० सारिवा० (ध. १.१६२)

चन्दनाञ्जन–न.,–अञ्जन० षड्विधतिमिररोगापहमिदम् ( र. २३.५६.५७ )

चन्दनादिवर्ति–स्त्री., लेखनवर्तिः, नेत्ररोगेषूपयुज्यते ( सुउ. ( १२.१३.१४ )

चन्दनाद्यतैल–न., शीतवीर्यं तैलं, दाहज्वरप्रशमनम् ( चचि. ३.२५८ )

चन्दनोदुम्बरयोग–पु., योग० अभिष्यन्दे उपयुज्यते, चन्दनोदुम्बरे क्षीरपिष्टेऽञ्जनं पित्ताभिष्यन्दे उपयुक्तम्; चन्दनोदुम्बरं भृशतरं चूर्णितं बस्त्रबद्धं तोयप्लुतमाश्च्योतनाञ्जनम् ( सुउ. १०.१० )

**चन्द्र**–पु., देवता०, सोमः ( अहृसू. १८.१६ )
वनस्पति० कर्पूरः ( ध. ३.३१ )
खनिज० सुवर्णम् ( रा. १३.३ )

**–कला**–स्त्री., तोलमानं सूतं ताम्रं च त्रिदिनं मर्दयित्वा गुटिकां कुर्यादग्नौ शोषयित्वा पुनः संमर्दयेत्। ततो द्वितोलेन गन्धकेन कज्जलिकां कृत्वा मुस्तादाडिमदूर्वाकेतकीसहदेवीकुमारीपर्पटरामशीतलिकाशतावरीणां रसैर्भावयेत्। ततो गुडूचीसत्त्वं पर्पटोशीरपिप्पलीशृङ्गाटसारिवाणां च समानं चूर्णं प्रक्षिप्य द्राक्षादिकषायेण सप्तकृत्वः भावयेत्। अनन्तरं वस्त्रेऽवगुण्ठ्य परिपीड्य गुटिकां कुर्यात्। अयं सर्वपित्तविकारनाशनो योगः । विशेषतो दाहनाशनो रक्तपित्तप्रदरमूत्रकृच्छ्रनाशनश्च ( र. १४.१३.२२ )

**–कान्त**–पु., रत्न० चन्द्रकिरणसंसर्गादस्माजलधाराः निपतन्ति तज्जलगुणाः–रक्षोघ्नं शीतलं ह्लादि ज्वरदाहविषापहं पित्तघ्नं विमलं च ( सुसू. ४५.२७ )

**–गन्धा**–स्त्री., वनस्पति० सटी ( ध. १.६२ )

**–चक्र**–वि., छेद० चक्राकारसादृश्याचन्द्रमण्डलाकारछेदः ( सुचि. ८.२७ )

**–चन्दन**–न., चन्दनभेदः हरिचन्दनम् ( र. १२.१९ )

**–दल**–न., रसभस्मना बद्धरसेनान्येन वा लोहेन साधितं यल्लोहं भस्मीभूय श्वेतवर्णं याति तत् ( रा. ८.१७ )

**–पाद**–न., चन्द्रकिरणः दाहज्वरे शमनार्थं चन्द्रपादस्पर्शो हितावहः ( चचि. ३. २६६ )

**–पुष्पा**–स्त्री., वनस्पति० कण्टकारी कासघ्नी ( ध., १.९९ )
कण्टकारी लक्ष्मणा ( रा. ४.१२५ )

**–प्रभा**–स्त्री., भैषज्य० बोलजातिफलमधुकमधुयष्टिखादिरसारकर्पूरामलकसठीशतावरीघोण्टाम्लवेतसशालिपर्णीकासीसधत्तूरमुद्गपर्णीदाडिमबीजानि समभागानि दुग्धेन दध्ना लाङ्गलीक्वाथेन कटुतुम्बीरसेन मुद्गयूषेण च भावयित्वा तदीया गुटिकाः कारयेत्। अयं प्रमेहाञ्जयति ( र. १७.३९, ४० )

**–बाला**–स्त्री., वनस्पति० एलाभेदः सूक्ष्मैला ( ध. २.४४ ) 'एला'

**–भूति**–न., खनिज० रौप्यम् ( ध. ६.६ )

**–मण्डलच्छेद**–पु., छेद० चन्द्रमण्डलाकारच्छेदः ( सुसू. ५.१४ )

**–लेखा**–स्त्री., वनस्पति० बाकुची ( ध. १.१६६ )

**–लोहक**–न., खनिज० रौप्यम् ( रा. १३.७ )

**–वपुस्**–न., खनिज० रौप्यम् ( ध. ६.६ )

**–वर्चस्**–वि., लक्षण० चन्द्रस्येव वर्चस्तेज इव वर्चो यस्य सः दिवा सूर्यस्य चन्द्रवर्चस्त्वमिंद्रियार्थविप्रतिपत्तिलक्षणम् ( सुसू. ३०.१६ )

**–वल्ली**–स्त्री., वनस्पति० प्रसारणी ( रा. ५.४३५ )
माधवी ( रापरि. १०.२९ )

**–शीतल**–न., चन्द्रेण शीतलीकृतम् ( अहृसू. ३.३३ )

**–शूर**–न., वनस्पति०, गुणाः–बलपुष्टिवर्धनमसृग्वातगदद्वेषि हिक्काघ्नं वातश्लेष्मातिसारिणां हितं च ( भाप्र. )
हिं.—हालो हालिम.
म.—आहाळीव.
गु.—अशेळियो.
बं.—हालिम.
फा.—हालमतुख्मतरातेजक.

**–सूर्य**–पु., योग० तुत्थं पारदो गन्धकश्चेति समभागिका जम्बीररसेन त्रिदिनं मर्दिताः पुनरेवं समभागेन त्रिकटुनाऽभिमिश्रिताऽमुं संज्ञां प्राप्नुवन्ति। अनुपानं–नागवल्लीरसः; प्रमाणं गुञ्जाद्वयम्, पथ्यं दुग्धम्; अनुपानभेदेनासौ शैत्यज्वरशूलापस्मारगुल्मप्लीहोदरवान्तीर्नाशयति ( र. १२.५०–५१ )

**–सेन**–पु., सप्तविंशतिरससिद्धिप्रदायकानामेकतमः ( र. १.२–५ )

**–हास**–न., खनिज० रौप्यम् ( ध. ६.६ )

**–( हासा )**–स्त्री., वनस्पति० गुडूची ( चचि. १.४ )

**चन्द्रक**–पु., वनस्पति० अश्मन्तकः ( ध. १.१९४ )
कर्पूरः ( र. २९.७२–७४ )
मरीचम् ( रा. ६.१३८ )
पार्श्वेषु कण्टकवलयितो वर्तुलो मत्स्यः ( सुसू. ४६.११८–१९ )
जलोपरि दृश्यमानतैलबिन्दोराकृतिः ( चचि. १९.९ )
मयूरपिच्छे चन्द्राकारो मेचकः चन्द्रवत्कायते प्रकाशते इति चन्द्रकः ( सुचि. ३४.१३ )
मयूरपिच्छम् ( सुउ. ४०.२० )

**( चन्द्रकी )**–स्त्री., लक्षण० लिङ्गनाशोपद्रवः कांस्यसमच्छाया चन्द्रकसंस्थानदृष्टिः ( असंउ. १७ )

**चन्द्रमस्**–पु., देवता० ( सुशा. १.७ ) मनसोऽधिदैवतम् ( सुशा. १.७ ) द्विजानामयं राजा, पुनः समुद्रमन्थनकाले समुद्रादाविर्भूत इति चन्द्रमा द्विजातत्वाद् द्विजः ( सुउ. ४१.५ ) अस्य राज्ञश्चन्द्रमसः शोषरोगः पुराऽभूदिति शोषो राजयक्ष्मेत्युच्यते ( सुउ. २९.५ ) सोमस्य महौषधेः स्थानाकृतिवीर्यविशेषैर्भिद्यमानानां नाम्नामेकतमम् ( सुउ. २९.५ )

**चन्द्राणी**–स्त्री., वनस्पति० सटी ( ध. १.६२ )

**( चन्द्रा– )** स्त्री., भैषज्य० कर्कटशृङ्गी ( रा. ६.११० )

**चन्द्रांशुकल्प**–वि., अत्यर्थशुभ्रम् अत्यर्थशुभ्रत्वेऽपि चन्द्रांशुत ऊनं धावल्यं बोध्यम् । ( २ (२) २७ )

**चन्द्राब्ज**–न., वनस्पति० कुमुदम् ( रा. १०.२४६ )

**चन्द्राभिधा**–स्त्री., वनस्पति० बाकुची ( रा. ४.२२७ )

**चन्द्रार्क**–न., खनिज० रौप्यस्य षोडश भागास्ताम्रस्य च द्वादश इत्येवमेकत्र द्रावयित्वा मेलनाज्जातम् ( र. ८.२३ )

**चन्द्रार्ध**–वि., अर्धचन्द्राकारच्छेदः ( सुचि. ८.२७.२८ )

**चन्द्रालोक**–पु., वनस्पति० कर्पूरः ( रा. १२.५६ )

**चन्द्रावती**–स्त्री., वनस्पति० बाकुची ( र. ११.९५ )

**चन्द्रावलेह**– पु., भैषज्य० असौ पित्तोन्मादभ्रममूर्च्छाच्छर्दिकासक्षयपाण्डुरोगापहः ( र. २१.१८१–१८६ )

**चन्द्रास्पदा**–स्त्री., भैषज्य० कर्कटशृङ्गी ( ध. १.८६ )

**चन्द्रिका**–स्त्री., वनस्पति० कर्णस्फोटा ( रापरि. ३.४१ )
मेथिकाभेदः वनमेथिका ( रा. ५.१८५ )
द्र० 'मेथिका'
मल्लिका ( रा. १०.२२५ )
कण्टकारी० लक्ष्मणा ( रा. ४.१२५ )
एलाभेदः सूक्ष्मैला ( रा. ६.६९ ) द्र० 'एला'
अभ्रकस्यापक्वे भस्मनि हस्ततले संपिष्टे सति, सूर्यातपे दृश्यमानाश्चन्द्रिकाकृतयः ( र. २.१४ )
मण्डलाकारो धातुस्नेहः ( चचि. २०.१९ )
मत्स्यविशेषः चन्द्रकः ( अहृसू. ६.५३ )

**चन्द्रिकाञ्चित**–वि., जलक्षिप्ततैलबिन्दुसदृशैश्चन्द्रिकैराचितो व्याघ्रः ( अहृसू. अरु. ७.४ )

**चन्द्रिकाम्बुज**–न., वनस्पति० कुमुदम् ( रा. १०.२४६ )

**चन्द्रेष्टा**–स्त्री., वनस्पति० कुमुदम्; तल्लता कुमुदिनी ( रा. १०.२५० )

**चन्द्रोदय**–पु., योग० आदौ पारदवज्रौ संमर्द्य ततो गन्धकाभ्रके पृथङ्मर्दयेन्मेलयित्वा च जम्बीररसेन मर्दयेत् । ततो लघुपुटं दत्त्वा चित्रकेण कुमार्या च सप्तसप्तवारं भावयेत् ।
अनुपानम्–गुडमिश्रजीरकचूर्णं जीर्णज्वरे, कुमारीरसः कासे, त्रिफलाक्वाथः श्वासे, गुडूचीक्वाथश्च उन्मादधनुर्वातयोरिष्यते ( र. १५५.१५९ )
योग० विषहरोऽगदः ( असंउ. ४० )

**चपल**–पु., खनिज० पारदः ( ध. ६.३७ )
खनिज० महारसः ( धपरि. ६.१० ) गुणाः–तिक्तो मधुर उष्णः स्निग्धो लेखनो देहलोहकरणोऽतिवृष्यो रसबन्धकरणस्त्रिदोषघ्नश्च; अयं गौरश्वेतारुणकृष्णहेमाभताराभभेदात् षोढा ( धपरि. ६.१० )
राजमाषः ( रा. १६.१३५ )
चोरकः ( रा. १२.१२७ )
मूषिकदष्टलक्षणम्–च्छर्दिर्मूर्च्छा च तृष्णासहिता ( सुक. ७.२२–२३ )

**( चपला )**–स्त्री., वनस्पति० पिप्पली ( ध. २.७३, र. १२.४८ )
आसुत० सुरा ( ध. १४.३०१ )

**चमर**–पु., प्राणि० चमति भक्षयति तृणादि इति चमरः महिषाकृत्यानूपमृगः । मांसगुणाः– स्निग्धं मधुरं कासजिद्विपाकमधुरं वातपित्तघ्नं च ( सुसू. ४६.१०० )
हिं.—चमरपुच्छि गौ, चमरगई, चमरगाय, सुरेगाय.
बं.—चमरी.
**म.—चवरीगाय, चमरी.**

**चमरिक**–पु., वनस्पति० कोविदारः ( ध. १.१९६ )

**( चमरी )**–स्त्री., चमरीमृगः ( ध. परि. ६.३४ )

**चम्प**–पु., मत्स्यजातीयप्राणि० ( काखिल. ) ( २४.५०–५१ )

**चम्पक**–पु., वनस्पति० गुणाः—अतिकटुस्तिक्तः शीतः सुगन्धिर्हृद्यः कफपित्तघ्नो विषदाहकुष्ठकण्डूव्रणघ्नः ( ध. ५.१४२ )
रक्तपित्तघ्नः शीतोष्णश्च ( सुसू. ४६.२८८ )
हिं.—चम्पा.
**म.—सोनचांफा, पिवळा चांफा.**
गु.—रायचम्पो, पीळो चम्पो.

**–रम्भा**–स्त्री., वनस्पति० सुवर्णकदली ( रा. ११.११४ )

**चय**–पु., दोषस्य स्वस्थाने संचयः ( चसू. १७.११४ ) लक्षणानि–दोषस्य स्वधाम्न्येव वृद्धिः,

वृद्धिहेतुषु प्रद्वेषो विपरीतगुणेच्छा च ( असंसू. २० ) सुश्रुतस्तु चये एव संचयप्रकोपौ अभिप्रैति प्रकोपे च प्रसरस्थानसंश्रयव्यक्तिरिति निश्चप्रचम् ( सुसू. २१.१८–३६ )

–काष्ठा–( स्त्री., चयमर्यादा ( असंसू. ५ )

–कृत्–वि., त्रयाणां दोषाणां चयं करोति इति त्रिदोषकरम् ( अहसू. ५.४७ )

**चर**–पु., चारी, आनूपचरो जलचर आकाशचरो धन्वचरश्चेति चतुर्विधश्चारी ( चसू. २७.३३२ ) आहारविहारौ, चर्यते आचर्यते भक्ष्यते च इति चर आहारविहारतात्पर्यकः ( सुसू. ४६.१३८ ) खनिज० कपर्दिका ( धपरि. ३.२४ )

**चरक**–पु., ऋषि० अग्निवेशतन्त्रस्य संस्कर्ता ( चसू. १. समाप्तिसूत्रम् चचि. ३०.२७९ ) वनस्पति० पर्पटः ( रा. ५.६५ )

**चरण**–पु.,चतुर्थो भागः ( र. २६.३७ )

–वेदस्य शाखा–( सुचि. २८.१९ )

–लेप–पु., शुक्रवर्धकः पादलेपः ( असंउ. ५० )

**चरणायुध** पु., कुक्कुटः ( चसू.२७.६७ )

**चरमधातु**–पु., शुक्रम् र. २७–३२ )

**चरमसंन्यास**–पु., पश्चाद्दाविसकल्कर्मसंन्यासः ( चशा. १.१५४ )

**चराचर**–पु., खनिज० कपर्दिका ( धपरि. ३२४ )

'पीताभा ग्रन्थिला पृष्ठे दीर्घवृत्ता वराटिका ।
रसवैद्यैर्विनिर्दिष्टा सा चराचरसंज्ञिका ॥'
( र. ३.१४५ )

**चरु**–पु., ओदनः ( काजातिसूत्रीयशा. ८ )

**चर्पटि**–पु., प्राचीनो रसाचार्यः ( र. ६.४९–५३ )

**चर्मन्**–न., शारीर० त्वक् ( चशा. ७.१६ )

'बाह्यत्वक्संहतिश्चर्म' ( असंसू. २० )

कुष्ठरोग० लक्षणानि–हस्तिचर्मवत् खरस्पर्शं च चर्म ( असंनि. १४ )

–कषा–स्त्री., वनस्पति० सातला ( ध. १.२३८ ) ( चचि. २३.६६ )

–कसा–स्त्री., वनस्पति० मांसरोहिणी ( ध. ४.९४ )

–कील–पु., न., बहिर्मार्गजरोगः लक्षणं संप्राप्तिश्च–व्यानस्तु कुपितः श्लेष्माणं परिगृह्य बहिः स्थिराणि कीलवदर्शांसि निर्वर्तयति, तानि चर्मकीलान्यर्शांसीत्याचक्षते ( सुनि. २.१८ ) ( असंनि. ७ ) तेषु कीलेषु वातेन तोदो जायते, कफेन सवर्णत्वं ग्रन्थिलत्वं च, पित्तशोणितजस्तु रौक्ष्यकार्ष्ण्यश्लक्ष्णत्वयुक्तः तत्र समुदीर्णत्वं खरत्वं च सर्वचर्मकीलेषु दृश्यते ( सुनि. २.१९–२० ) छेद्योऽयं रोगः ( सुसू. २५.३–५ )

तत्राग्निकर्मचिकित्सा कार्या ( सुसू. १२.१० )

–गोणी–स्त्री., चर्मप्रसेवकः, चर्मप्रवेशको वा; अनग्निस्वेदस्य साधनम् ( सुचि. ४.१७ )

–चेट–पु., निशाचरपक्षिः यश्च दिने वृक्षाल्लम्बमानो निद्राणो दृश्यते ( र. २४.१२ )

–दरण–न., रोग०, त्वगवदरणम् ( असंसू. २०.१४ )

–दल–न., रोग० कुष्ठरोगः क्षुद्रकुष्ठेष्वेकम्, रक्तदोषजरोगः, लक्षणम् ( चसू. २८.१३ ) सकण्डु, सस्फोटं, सरुक्, रक्तं, स्पर्शासहं, दलनशीलं चर्म ( चचि. ७.२४ ) इदं दोषभेदेन चतुर्विधम् ( काखिल. ) ( १५.६ ) तस्याधिष्ठानं तृतीया श्वेता नाम त्वक् ( सुशा. ४.४ ) इदं प्रायः पित्तश्लेष्माधिकम् ( चचि. ७.३० )

–दलन–न., रोग० चर्मावदरणम्, षण्णामपि त्वचां दरणम्, चत्वारिंशत्पित्तविकारेष्वेकः ( चसू. २०.१४ )

–पट्ट–न., चर्मखण्डम् ( अहसू. २२.२८ )

–मसी–स्त्री., चर्मरक्षा ( चचि. ९.४९ )

–रङ्गा–स्त्री., वनस्पति० आवर्तकी ( ध. १.१९८ )

–वृक्ष–पु., पूर्वदेशे नौवृक्षः ( सुक. ५.४३–४६ ड ) भूर्जवृक्षः ( वैशसि. )

–हस्त–वि., चर्ममयदृत्यादिधारी एतादृशो दूतो गर्हितः ( सुसू. २९.९–१५ )

**चर्मरी**–स्त्री., फलविषम् ( सुक. २.५ )

**चर्मसाह्वा**–स्त्री., वनस्पति० सातला ( चक. ११.३ )

**चर्माख्य**–न., रोग० चर्मदलम्; वातकफाधिकं कुष्ठम् ( चचि. ७.२९ )

**चर्मानुरञ्जन**–न., खनिज० हिङ्गुलम् ( ध. ६.४० )

**चर्मान्त**–न., चर्मावयवः उपयन्त्रेष्वेकम् ( सुसू. ७.१५ )

**चर्मार**–पु., शुकतुण्डाख्यो हिङ्गुलः ( र. ४.१५५ )

**चर्मीवृक्ष**–पु., वनस्पति० लकुचद्रुमाकारो महावृक्षः ( सुचि. ११.१० )

**चर्या**–स्त्री., चरितुम् आचरितुमर्हं तच्चर्यम् । शास्त्रनियत आचारः ( सुसू. ६.१ )

**चल**–वि., अस्थिरः ( चसू. १.५९ ) स्थानात्स्थानान्तरगतिः ( चसू. १८ ( १ ) ७ ) चञ्चलः, स्पन्दनः

'चला वाताशयसिरासन्धिजिह्वादयः' ( सुसू. ३२.३ ) प्रेरणे शक्तिमान् ( अहसू १.१८ ) वायुः चलति गच्छति वहति सदागतिमत्त्वादिति चलो वायुः ( अहसू. ११.१ ) वनस्पति० नखम् ( ध. ३.५८ )

**–पत्र**–पु., वनस्पति० ( ध. ५,७८ )

**–मल**–वि., प्रवृत्त्युन्मुखमलः ( र. १६.९६ )

**–मूर्धता**–स्त्री., शिरःकम्पः कृकाटिकामर्मविद्धस्य लक्षणम् ( सुशा. ६.२७ )

**–सुमुहूर्त**–पु., ( परिव० ) इन्द्रमुहूर्तः, दिवसस्य दशमो मुहूर्तः ( यचि. १ ( २ ) चक्र. ११ )

**–स्थूलगल**–वि., लक्षण० शीतलेऽपि काले तैलपानार्होऽयम् ( चसू. १३.४४ )

**–स्थूलोदर**–वि., लक्षण० शीतलेऽपि काले तैलपानयोग्योऽयम् ( चसू. १३.४४ )

**चलत्कोष्ठी**–स्त्री., यन्त्र० कोष्ठीयन्त्रम्, इतस्ततश्चालने सौकर्यं यथा स्यात्तथा निर्मिता कोष्ठी ( र. ७.६ )

**चलामय**–पु., चलस्य वातस्य आमयो रोगः, वातरोगः ( अहसू. २७.४२ )

**चवल**–पु., वनस्पति० राजमाषः ( ध. ६.८४ )

**चविक**–न., वनस्पति० चव्यम् ( ध. २.७७ )

**( चविका )**–स्त्री., वनस्पति० चव्यम् ( असंसू. १५ )

**–शिरस्**–न., वनस्पति० पिप्पलीमूलम् ( ध. २.७५ )

**चव्य**–न., वनस्पति० गुणाः—कटूष्णं लघु दीपनं रोचनं कफवातघ्नं जन्तुकासश्वासशूलघ्नं च ( ध. २.७७ ) दीपनीयगणे, तृप्तिघ्नगणे अर्शोघ्नगणे शूलप्रशमगणे एकं द्रव्यम् ( चसू. ४.९, ११–१७ )

हिं.—चव्य, गजफल.

म.—**कंकल चवचिनी, चवक.**

बं.—चएर, चाई.

त.—चव्यम्

गजपिप्पलीमूलम् ( ड. सुसू. ३८.२२–२३ )

**चव्यक**–न., वनस्पति० चव्यम् ( रा. ६.११५ )

**( चव्या )**–स्त्री., वनस्पति० कार्पासी ( रापरि. ४.४५ )

**–जा**–वनस्पति० गजपिप्पलीमूलम् ( रा. ६.११७ )

**–फला**–स्त्री., वनस्पति० गजपिप्पली ( रा. ६.११७ )

**चषक**–न., शरावः, वाटिका, चषति भक्षयति पिबति अनेन इति चषकं चषको वा ( र. ७.१९ ) सुरापानपात्रम् ( असंचि. ९ )

**चाङ्गेरी**–स्त्री., पत्रशाक०, चाङ्गेरीशाकम् । क्षुद्राम्लिका-नामाम्ललोणिका शाक० ( चसू. २७.९३; ध. ५.३६ ) गुणाः—अम्ला कषाया मधुरोष्णा दीपनी वातकफे हिता ग्रहण्यर्शोविकारघ्नी ( सुसू. ४६.२७३, चसू. २.१९ ) अतीसारजित् ( रापरि. ७.८६ )

हिं.—अमरुल.

**म.—अंबुटी, भुईसर्पटी.**

बं.—अमरुल शाक.

**–घृत**–न., गुदभ्रंशे प्रशस्तम् ( चचि. १९.४२–४३ ) द्र० 'अम्लसर्पिस्'

**–यूष**–पु., चाङ्गेरीशाकयूषः दध्ना सर्पिषा वा कृतोऽयं वातघ्नः ( का. खिल० ४.५३ )

**–शाक**–न., वनस्पति०, चाङ्गेरी' द्र० चांगेरी

**चाचा**–स्त्री., शिरोरोग० इन्द्रलुप्तम् ( असंउ. २७ )

**चाटालत्व**–न., विस्तृततरत्वम् (चनि. ३.१४; चशा. ४.१६)

**चाणाख्यमूलक**–न., वनस्पति०, मूलकभेदः, इदं मरुसंभवं स्थूलमूलं महाकंदं च । गुणाः—तिक्तं, कटूष्णं, रुच्यदीपनं, परं ग्राहकं, गुरु, कफवातापहं क्रिमिगुल्मनाशनं च ( ध. ४.३५ रा. ७.५४ पृ. १४१ )

**चाण्डाल**–पु., चण्डालः, चण्डाल एव चाण्डालः, यद्वा चण्डति कुन्धति सततमिति चाण्डालः ( असंशा. १२ )

**चाण्डाली**–स्त्री., शाल्मली; पञ्चगुरिया; लिङ्गिनी; चाण्डालकन्दवल्ली ( र. १७.४१ )

**चातुर्जातक**–न., जायते इति जातं, चतुरवयवं जातं चतुर्जातम्, तेन चातुर्जातकं-चतुर्णां त्वगेलादीनां समूहः । भैषज्यवर्ग० त्वक्–एला–पत्रक–नागकेशराणां समः समूहः । अस्यापरं नाम चातुर्भद्रकमिति । गुणाः—स्वरभेदश्वासकासमुखदोषविनाशनम् । वृष्यं बल्यं च योगार्हं चातुर्जातं रसायनम् ( ध. ७.११ पृ. ३०० )

**चातुर्थक**–पु., चतुर्थ एव चातुर्थः, तेन चातुर्थकचातुर्थिकशब्दौ समानार्थौ । चतुर्थको ज्वरः प्रथमे दिने तथैव दिनद्वयं विश्रम्य चतुर्थे दिने यो ज्वर आगच्छति स चातुर्थको नाम विषमज्वरः ( सुउ. ६१.३७ )

**चातुर्थिकहर**–पु., चतुर्थकज्वरहरो योग० पारदस्य एको भागो, गन्धकोऽर्धभागिकस्तालकं भागत्रयं, मनःशिला पादभागिका, सर्वमेकत्र कारवल्लीदलरसेन प्रहरत्रयपर्यन्तं मर्दयेत्, वालुकायंत्रे च पाचयेत्, अयं चातुर्थिकहरो रसः (र. १२.१०५)

**चातुर्भद्रक**-न., भैषज्यवर्ग० अत्रापि चातुर्जातकवद् व्युत्पत्तिरनुसंधेया। शुण्ठी-अतिविषा-मुस्ता-गुडूचीनां समः समूहः ( ध. ७.७ पृ. ३०० )
एला-त्वक्-तमालपत्र-मरिचैर्जातः समः समूहः ( ध. ७.९ पृ. ३०० )

**चान्द्री**-स्त्री., वनस्पति० अतिविषा ( रा. ६.८ पृ. ९ )
बाकुची ( रा. ४.२२६ पृ. ३८ )
कण्टकारीभेदः ( रा. ४.१२५ पृ. २५ )

**चापल**-न., चपलस्य भावः चापलम्। चापल्यम्, चलनम् ( असंसू. ३.५४ )

**चापवट**-पु., वनस्पति० प्रियालः ( ध. ५.७२ पृ. १८३ )

**चामर**-पु., न., चमर्याख्यमृगविशेषस्य लोमभिः निर्वृत्तं चमर्या इदमिति चामरम् ( असंसू. ८.४७ )

**( चामरा )**-स्त्री., वृश्चिकाली ( रापरि. ९.८ पृ. ३६४ )

**चामीकर**-न., खनिज० चमीकरो रत्नाकरविशेषः, तत्र भवं चामीकरम्, सुवर्णम् ( ध. ६.२ पृ. २०५ )
पु., प्राणि० स विषं दृष्ट्वा छर्दयति (असंसू. ८.२३)

**चाम्पा**-स्त्री., क्षुद्ररोग० इन्द्रलुप्तम् ( र. २४.८७ )

**चाम्पेय**-पु., वनस्पति० चम्पकः ( ध ५.१४२ पृ. १९९ )
न., नागकेसरम् ( ध. २.४८ पृ. ७९ )

**चाम्पेयक**-न., वनस्पति० पद्मकेसरम् ( रा. १०.२६२ पृ. १६७ )

**चार**-पु., गतिः चर्यते गम्यते इति चारः (असंनि. १५.६)
वनस्पति० प्रियालः ( ध. ५.७२ पृ. १८३ )

**चारक**-पु., वनस्पति० प्रियालः ( ध. ५.७२ पृ. १८३ )

**चारटिका**-स्त्री., नीलिनी ( रा. ४.३५० पृ. ५५ )

**चारटी**-स्त्री., पद्मा ( ध. ४.९० पृ. १५२ )
कुम्भी, ब्रह्मयष्टिका इत्यन्ये । महापैशाचिकघृते एकं द्रव्यम् ( चचि. ९.४५ ) पद्मचारिणी गुञ्जा ( असंउ. ४२ )

**चारण**-पु., देवयोनि० अयं चारयति प्रचारयति स्तुतिसङ्गीतविद्यां तज्जन्यकीर्तिं वा देवानां स्तुतिपाठकाः ( चचि. १.(४).३. )
न., पारदकर्तृकग्रासभक्षणकरणम्। 'चारणा 'परपर्यायम्। जारणाप्रकारः, स्वर्णादिधातूनां पारदे मेलनम् ( र. ८.७२ )

**( चारणा )**-स्त्री., पारदस्य मध्ये ग्रासयोग्य-पदार्थप्रक्षेपणं चारणा ( र. ८.७९ )

**चारु**-न., वनस्पति० कुङ्कुमम् ( ध. ३.१२. पृ. ९५ )
पद्मकम् ( ध. ३.८८. पृ. ११३ )

**-केशरा**-स्त्री., वनस्पति० तरणी ( ध. ५.१४५. पृ. १९९ )

**-केसरा**-स्त्री., वनस्पति० चारुकेशरा ( ध. ५.१४५. पृ. १९९ )

**-दर्शन**-पु., प्लक्षः ( ध. ५.८१. पृ. १८५ )
पशु०; रोहिणः, रुरुः ( धपरि. ६.३५ पृ. २९३ )

**-पर्णी**-स्त्री., वनस्पति० प्रसारणी ( ध. १.२८९ पृ. ६६ )

**-फला**-स्त्री., वनस्पति० द्राक्षा ( ध. ५.५६ पृ. १७९ )

**-मोदा**-स्त्री., वनस्पति० यूथिका ( ध. ५.१४८ पृ. २०० )

**-रत्न**-न., खनिज० सुवर्णम् ( ध. ६.२ पृ. २०५ )

**-रूप**-न., खनिज० सुवर्णम् ( ध. ६.२ पृ. २०५ )

**चारुटा**-स्त्री. भूधात्री ( रा. ५.१४५ पृ. ११३ )

**चारुष्क**-पु., जाङ्गलमृग०, हरिणभेदः ( चसू. २७.४६ )
चारुशरीरः स्वल्पतनुमृगभेदः ( सुसू. ४६.५४ )

**चारुष्कर**-पु., चारुष्कः ( चसू. २७.४६; सुसू. ४६.५४ )

**चाल**-पु., स्पन्दः वायोरेकं कर्म ( चसू. २०.१२ )
दन्तरोग० दन्तचालः ( असंउ. २५ )

**चालन**-न., कम्पनं, स्थानात् स्थानान्तरं प्रति शल्यस्य नयनम्। चतुर्विंशतियन्त्रकर्मस्वेकम् ( सुसू. ७.१७ )

**( चालनी )**-स्त्री., द्रव्यगालनोपयोगि यन्त्रम् । सा चालनी तु त्रिविधा १ ) वैणवीभिः शलाकाभिः निर्मिता गुणैश्च ग्रथिता सा सदा स्थूलद्रव्याणां गालने हिता ॥ २ ) चूर्णचालनहेतोरन्या वंशजा चालनी कर्णिकारस्य शाल्मल्या हरिजातस्य चतुरङ्गुलविस्तारयुक्तया कंबया निर्मिता ॥ ३ ) कुण्डल्यरत्निविस्तारा छागचर्माभिवेष्टिता । वाजिबालाम्बरानद्धतला चापरा चालनी ॥ सूक्ष्मतरं रजो धर्तुं धारयितुं वा तया प्रचालनं कुर्यात् ( र. ७.११-१३ )

**चाष**-पु., प्रसहपक्षि० ( ध. वर्गेतराणि. १४ पृ. २८७ )
चषति भक्षयति, इति चाषः कनकवायस इति ख्यातः, नीलवर्णः पक्षि० ( चसू. २७.३६ ) इन्द्रनीलमणिसदृशपक्षः शस्तदर्शनः ( सुसू. ४६.७४ )
प्रस्थाने चाषदर्शनं प्रशस्तम् ( सुसू. २९.२९ )
कर्णायसः ( सुउ. ३५.६ ) किकिदिवः ( र. १०.९० ) चातकः ( र. १०.९० )
हिं.—नीलकण्ठ.
म.—तासपक्षी, मणिकण्ठ.
मत्स्य०, तस्य दर्शनं पुण्यकरम् ( काइ. ३.१० )

**चाषची**–स्त्री., प्राणि० ( असंउ. ६ )
**चास**–पु., पक्षि०, चाषः ( सुसू. ७.१० )
**–मुख**–न., स्वस्तिकयन्त्र०, चासमुखसदृशं यन्त्रम् अस्थिविदष्टशल्योद्धरणोपयोगि ( सुसू. ७.१० )
**चिकित्सक**–पु., वैद्यः ( सुसू. १.३५ )
**चिकित्सन**–न., चिकित्सितं; चिकित्सा; उपचारः ( र. १२.७ )
**चिकित्सा**–स्त्री., रुक्प्रतिक्रिया ( चसू. २.३६ ) धातुसाम्यक्रिया (सुसू. ३.२६) रोगापनयनम् ( सुशा. १.१३ ) प्राणी यावदुच्छ्वसिति यावद् भेषजमत्ति च तावच्चिकित्सा कर्तव्या ( र. ३०.१२१ ) क्वचिदर्थः, क्वचिन्मैत्री, क्वचिद्धर्मः, क्वचिद्यशः, क्वचिदभ्यासयोग इत्येवंप्रकारेण चिकित्साया नानाफलानि संति, तेन चिकित्सा निष्फला नास्ति ( असंउ. ५० )
**–प्रविभागविज्ञानीय**–वि., अध्याय० ( सुउ. ८.१ )
**–प्राभृत**–वि., चिकित्सा प्राभृतम् उपायनं यस्य इति, प्राभ्रियते दानार्थं धार्यते स्मेति प्राभृतम् । चिकित्साप्रभृतरूपा सदा यत्नेन आतुरोपढौकनीयत्वेन च यस्य विद्यते सः ( चसू. १६.३ चक्र )
**–प्राभृतीय**–वि., चिकित्साप्राभृतेति शब्दमधिकृत्य कृतोऽध्यायः ( चसू. १६.१ )
**–संपद्**–स्त्री., चिकित्सायाः संपत्, पादचतुष्टयस्य भिषक् भेषजम् आतुरः परिचारक इति पादचतुष्टयम् । चत्वारः पादा यदा गुणवन्त उपपद्यन्ते तदा साध्यो व्याधिर्नातिवर्तते ( कासू. २६.३ )
**–सम्पदीय**–वि., अध्यायविशेषः ( कासू. २६.१ )
**–स्थान**–न., चिकित्साभिधायकं कृतं स्थानम् । चिकित्साध्यायानां त्रिंशत्संख्यानां समूहः चरकसंहितायाः षष्ठस्थानम् ( चचि. १ ) सुश्रुतसंहितायाश्चतुर्थस्थानं चत्वारिंशदध्यायात्मकम् ( सुसू. ३.२६ सुचि. १ ) अष्टाङ्गसंग्रहस्य चतुर्थं स्थानञ्चतुर्विंशत्यध्यायात्मकम् ( असंचि. १ )
**चिकित्साङ्ग**–न., चिकित्साया अङ्गम् । तेषु च भिषक्प्रधानमङ्गम् । यथा भिषक् चिकित्साङ्गः ( असंसू. १३.३ )
**चिकित्साधिकृत**–वि., चिकित्सितकर्मफलमवाप्नोति इति चिकित्सायां फलभोक्तृत्वेनाधिकृतत्वात् चिकित्साशास्त्रोपयोगी पुरुषः । पञ्चमहाभूतशरीरिसमवायः पुरुषः, स एष कर्मपुरुषश्चिकित्साधिकृतः ( सुशा. १.१६ )

**चिकित्सार्ध**–न., चिकित्साया अर्धभागः । बस्तिः चिकित्सार्धम् इति ब्रुवन्ति ( चसि. १.३९-४० )
**चिकित्सित**–न., भेषजम् ( चचि. १.१ ) चिकित्सितं द्विप्रकारं प्रोक्तम् । औषधं भेषजं चेति (काइ. ३० )
**चिकित्सितार्थ**–पु., चिकित्सितस्य अर्थो नाम विषयः ( चचि. १.१४ )
**चिकुर**–न., खनिज० पोगरसंज्ञकं लोहम् ( र. ५.७८ )
वि., नीलप्रभम्, तत्र चिकुरं नीलमित्यर्थेन गृह्यते ( हजारी० र. ७८ )
**चिक्कण**–वि., स्निग्धस्थानम् । ( सुचि. ३१.११. र. २०.७६ )
न., वनस्पति० पूगफलम् ( ध. ३.३९ पृ. १०३ )
( **चिक्कणा** )–स्त्री., पूगफलम् ( ध. ३.३९ पृ. १०३ )
**चिक्कस**–न., भैषज्य० इदं पैत्तिके दंशे लेपार्थमुपयोज्यम् (असंउ. ३९) ईषद् भृष्टानां यवानां चूर्णम् ( असंउ. १० )
**चिक्का**–स्त्री., वनस्पति० पूगफलम् (ध. ३.३९ पृ. १०३)
**चिक्किर**–पु., मूषिक० तद्दष्टलक्षणम्–एतद्विषतः शिरोदुःखं, शोफो, हिध्मा वमिर्भ्रमश्च भवन्ति ( असंउ. ४६ )
**चिक्रिर**–पु., चिक्किरः मूषिकः ( सुक. ७.१५ )
**चिच्चिटिङ्ग**–पु.. तन्नामकीट० वायव्यः, पवनकोपनः, अस्य दंशात् वातजरोगाः भवन्ति ( सुक. ८.५ )
**चिञ्चा**–स्त्री., वनस्पति०, अम्लिका, तिन्तिणी । फलानि च अर्धचन्द्राकाराणि
हिं.—अम्ली, अंम्ली, इमली, इंब्ली, अम्लिका.
**म.—चिंच.**
गु.—अम्लिना, चिंचोरा.
बं.—तेंतुल, अम्ब्ली, तितिल.
त.—पुलियान.
फा.—अंबला, अन्बलाह.
गुणाः—आमफलमतीवाम्लं पित्तकृल्लघु रक्तकृद् वातशमनं प्रकामं बस्तिशुद्धिकरम् । पक्वं तु मधुराम्लं भेदि विष्टम्भि वातजिच्च । अस्य त्वग्भस्म कषायोष्णं कफघ्नमनिलनाशनञ्च ( ध. ५.३३ )
पक्वचिञ्चाफलरसो मधुराम्लो रुचिप्रदः ।
शोफपाककरो लेपाद् व्रणदोषविनाशनः ( रा. ११.३९ )
**–सार**–पु., अम्लसारः, चिञ्चाफलस्य सारः । गुणाः–अतीवाम्लः वातघ्नः कफदाहकृत् । समानप्रमाण-

शर्करामिश्रस्तु दाहपित्तकफार्तिनुत्
(रा. ११.४१० पृ. १७५)

**चिञ्चाम्ल**–न., चिञ्चासारः (रा. ११.४१ पृ. १७५)

**चिञ्चिका**–स्त्री., चिञ्चा (ध. ५.३३ पृ. १७४)

**चिञ्चिटाङ्ग**–पु., वायव्यकीट० (असंउ. ४३)

**चिञ्चुका**–स्त्री., वनस्पति०, मूत्राघातचिकित्सायामुपयुज्यते (असंचि. १३)

**चिञ्चुपर्णी**–स्त्री., शाक० (असंचि. १०)

**चिडा**–स्त्री., वनस्पति०, कपटं (कट्तृण०)
गुणाः–उष्णा दीपनी कफवातहरा रक्तपित्तजित्
(ध. १.८२ पृ. २२)
सरलः (ध. ३.७८ पृ. १११)

**चिति**–स्त्री., चीयते श्मशानाग्निरस्यामिति चितिः चिता शवदाहनचुल्ली
(असंसू. ३.६)

**चित्त**–न., चित्यते संज्ञायतेऽनेन इति चित्तम्, मनः
(अहृसू. १२.४)

**–खेद**–पु., चित्तखिन्नता, मनःपीडा०
(असंसू. ९.६८)

**–नाश**–पु., संज्ञानाशः (सुउ. ६१.१५) (सुशा. ६.२८) मनसो विचारादिशून्यता (चचि. २२.९) बुद्धिनाशः, भ्रमः (चसि. ९.६)

**–प्रसादन**–न., चित्तस्य तुष्टिः मनःशान्तिः। उन्मादे चित्तप्रसादनं कर्तव्यम् (सुउ. ६२.३४)

**–भ्रम**–पु., सन्निपातज्वर० यदि कथमपि पुंसां जायते कायपीडा भ्रममदपरितापो मोहवैकल्यभावो विकलनयनहासो गीतनृत्यप्रलापः तमसाध्यं केऽपि चित्तभ्रमाख्यमभिदधति। अस्य मर्यादा वह्न्यष्टौ वासराः। साध्योऽयमिति केचित् (मा. ज्वर. १२)

**–विपर्यय**–पु., अरोचकनिदान०, कामशोकभयादिभिर्विलुप्तचित्तत्वम् (सुउ. ५७.३)

**–विभ्रंश**–पु., किंकर्तव्यतामूढत्वम्
(सुउ. ३९.७८)

**–विभ्रम**–पु., मानसरोग० विभ्रान्तचित्तत्वम्
(सुचि. ३३.१८)

**चित्र**–वि., नानाप्रकारम् (सुउ. ६२.१३)
न., कुष्ठभेद०, श्वित्रम् (र. २९.८९)
चित्रकः (र. १३.८२)
पु., कालिङ्गम् (रा. ७.२७१ पृ. ४४)
एरण्डः (ध. १.२९५ पृ. ६७)
अशोकः (ध. ५.१५९ पृ. २०३)
तिलकः (ध. ५.१५८ पृ. २०२)
राजिमान् सर्प० रजन्याः पश्चिमे यामे चित्राः सर्पाश्चरन्ति (सुक. ४.३१)

**(चित्रा)**–स्त्री., वनस्पति० आखुकर्णी
(रापरि. ३.२१ पृ. ३३१)
सुतश्रेणी (रापरि. ४.१६ पृ. ३३६)
मृगाक्षी (रा. ७.२५८ पृ. ४२)
दूर्वा (रा. ७.२३५ पृ. १६४)
दन्ती महाकषायवर्गे भेदनीयगणे एकं द्रव्यम्
(चसू. ४.९)
द्रवन्ती (ध. १.२२९ पृ. ५४ (असंउ. ३१)
(चक. १२.३)
एरण्डः (सुचि. २.४८)
मञ्जिष्ठा (रा. ६.१६ पृ. १०)
इन्द्रवारुणी (असंसू. १५.९) चित्राण्डिका पटोलफलाकारफला आरण्यका चण्डकेत्यर्थः
(ड. सुसू. ३९.३)
द्रवन्ती (सुसू. ३९.३)
गोरक्षकर्कटी, लोहितैरण्डो वा (चसू. १३.१०)
कीट० वायव्यलूता० इयमुक्तिदा वर्तते। सा दंशे रक्ता पिटका विसृता स्थिरा च भवति। सा पीतास्रावा, महाव्रणा पर्वभेदशिरस्तापज्वरशोफविसर्पिणी च भवति, स्वयंभिन्ना कृष्णत्वं च प्राप्नोति
(असंउ. ४४.४५)
नक्षत्र० (चचि. २६.२४८)
कृतान्नवर्गे अपूप० (सुचि. १०.५ ड)

**–गन्ध**–न., उपरस० हरितालम् (ध. ७.११९ पृ. ३१५)

**–गन्धक**–न., उपरस० हरितालम्
(ध. ७.११९ पृ. ३१५)

**–घट**–पु., घटो यश्चित्रित इव स्थाप्यते यद्वा चित्रः कर्बुरितः कल्माषितो वा घटः (चवि. ३.३६)

**–घना**–स्त्री., वनस्पति० सातला (रा. ४.३६० पृ. ५६)

**–तण्डुला**–स्त्री., वनस्पति० विडङ्गम्
(ध. २.११ पृ. ७१)

**–त्वच्**–पु., वनस्पति० भूर्जः
(रा. परि. ९.२२ पृ. ३६५)

**–दीप**–पु., चित्रे लिखितो दीपः। दीपचित्रमित्यर्थः
(चचि. २ (१) १७)

**–धातु**–पु., नानावर्णधातुः (चचि. ३०.३)

**–पक्ष**–पु., प्रतुदपक्षि० बृहच्छुकः
(ध. परि. २.१२ पृ. २८६)

**–पत्र**–पु., पक्षि० मयूरः ( असंउ. ४२ )
**–पत्रिका**–स्त्री., वनस्पति० द्रोणपुष्पी ( रापरि. ५.४८ पृ. ३४४ )
**–पर्णी**–स्त्री., वनस्पति० कर्णस्फोटा ( रापरि. ३.४१ पृ. ३३३ )
महाराष्ट्री ( रापरि. ४.१३ पृ. ३३५ )
पृश्निपर्णी ( रा. ४.११८ पृ. २४ )
**–पुष्पी**–स्त्री., वनस्पति० अम्बष्ठा ( रा. ४.१७१ पृ. ११८ )
**–पृष्ठ**–पु., भूमिशयसर्प० काकुलीमृगाख्यसर्पस्य भेदः ( चसू. २७.३७ ) ( असंसू. ७.७६ )
**–प्रपाक**–पु., नानाविधप्रपाकः ( सुनि. ९.७ )
**–फल**–न., वनस्पति० शीर्णवृन्तम् ( ध. १.१७९ पृ. ४२ )
कलिङ्गः ( रा. ७.२७१ पृ. ४४ )
**–फला**–स्त्री., वनस्पति० लिङ्गिनी ( रापरि. ३.१६ पृ. ३३० )
इन्द्रवारुणी (ध. १.२५० पृ. ५८) "चित्राण्डिका" ( सुउ. ३२.८ )
गुडदुग्धिका ( सुउ. ५८.६६ )
चिर्भटम् ( रा. ७.२६२ पृ. ४२ )
वार्ताकी ( रा. ७.१२८ पृ. २६ )
कण्टकारी ( रा. ४.१२१ पृ. २५ )
चित्रपला ( असंउ. ६ )
**–बीज**–पु., वनस्पति० एरण्डः (रा. ८.४४७ पृ. ६८)
**–भानु**–पु., चित्राः सप्तविधा भानवः किरणा यस्य तथाविधः आदित्यः (सुचि. १५.६; असंशा: ३.२८)
चित्रकः, वनस्पति० (ध. २.८० पृ. ८६)
**–भेषजा**–स्त्री., वनस्पति० काकोदुम्बरिका ( ध. ५.९८ पृ. १८७ )
**–मण्डल**–पु., मण्डलिसर्प० ( सुक. ४.३४ (२)
**–मूल**–न., चित्रकमूलम् ( र. ४.६८ )
**–योधिन्**–पु., वनस्पति० अर्जुनः ( ध. ५.११४ पृ. १९३ )
**–लता**–स्त्री., वनस्पति० मञ्जिष्ठा (रा. ६.१६ पृ. १०)
**–वर्णा**–स्त्री., सविषपिपीलिका० तन्नामकसविषपिपीलिकाभेदः । तद्दंशे श्वयथुरग्निस्पर्शवद्दाहशोफौ भवतः ( सुक. ८.३४ )
**–वल्लिक**–पु., वनस्पति० कलिङ्गः ( रा. ७.२७१ पृ. ४४ )

**–वल्ली**–स्त्री., वनस्पति० मृगाक्षी (रा. ७.२५७ पृ. ४२)
इन्द्रवारुणी (रा. ३.३७५ पृ. ५८)
**–शिरस्**–पु., कीट०, मुखसन्दंशविशर्धितमूत्रपुरीषविषः ( सुक. ३.५ ) अत्र संदंशशब्देन ऊर्ध्वाधरदंतकृतसंदंशः कर्कटादिकीटानां पुरः पदकृतसंदंशो वा ग्राह्यः । तथैव विशर्धितशब्देन शर्धो दुर्गंधयुतोऽधोवातसंज्ञको ग्राह्यः
**–शीर्ष**–पु., वायव्यः कीट०, चित्रशिराः (असंउ. ४३)
**–शीर्षक**–पु., चित्रशीर्षः, कीट०, गुणाः– वायव्यो वातकोपनोऽसौ वातरोगान् करोति ( सुक ८.६ )

**चित्रक**–पु.. मण्डलिसर्प० ( सुक. ४.३४ (२)
वनस्पति० क्षुप० अस्य मूलमुपयुज्यते। सिकतामेहे उपयुक्तम् ( सुचि. ११.९ ) अधोभागदोषहरम् ( सुसू. ३९.४० ) क्षारनिष्कासनार्थमुपयुक्तेषु द्रव्येष्वेकः ( सुसू.११.११ ) पक्वशोथस्य विदारणं करोति ( सुसू. ३७.१० ) शाकं त्वस्य कफं नाशयति ( चसू. २७.१०६ ) महाकषायवर्गे दीपनीयगणे, तृप्तिघ्नगणे, अर्शोऽघ्नगणे, शूलप्रशमनगणे, लेखनीयगणे, भेदनीयगणे चैकं द्रव्यम् ( चसू. ४.९–१७ ) दीपनीययवाग्वां शूलघ्नयवाग्वां चोपयुज्यते ( चसू. २,१८ ) गुणाः– चित्रकस्तु द्विधा शुक्लारुणभेदेन । सितासितारुणभेदेन त्रिधेति केचित् । रक्त एव प्रशस्तः । पीतसितासितैः पुष्पैः चित्रको यथास्वं ज्ञेयः । पीतात्सितश्च सितादसितः यथोत्तरं गुणवान् भवेत् । तद्वत् स युक्तविधिना त्वग्दोषिणां मेहिनां तथैव उदररोगिणामपि रसायनं भवेत् । विशेषतः श्वित्रिणां कृष्णो हितकरः । श्वेतपुष्पचित्रको ग्रहण्यर्शोविकारघ्नोऽतीसारनाशनो वयसः स्थापनो मेध्यो वर्तते मेधाभिवर्धनो जाठराग्निप्रदीपनः तेजोवर्णकरश्चैव कफहा च पीतचित्रकः ॥ नावनीतके (अ. ह. कोष) चित्रकोऽग्निसमः पाके कटुकः, कफशोफजित्, वातोदरार्शोग्रहणीक्षयपाण्डुविनाशनः ॥ ( ध. २–८१. पृ. ८६ )
हिं.—लालचित्रक, चित्र, लालचित्र.
म.—**लालचित्रक.**
बं.—लालचिट, रक्तोचित्र.
त.—शिवप्पु चित्रमूलं, चितुरमोल, कोडिमूलि
**–घृत**–न., चित्रकमूलसिद्धात्क्षीरात्कृतं घृतम् । क्षीरं घटे चित्रककल्कलिप्ते धटे स्थितं क्षीरं साधु

विमृश्य, तज्जं घृतं चित्रकमूलगर्भं उपयुज्यते। इदं शोथहरम् ॥ (चचि. १२.५८.)
उदररोगहरं चित्रकसिद्धं घृतम् (चचि. १३.११६)

**चित्राङ्ग**–न; खनिज० हिङ्गुलम्
(रा. १३.४७ पृ. २१५)
हरितालम् (रा. १३.५८ पृ. ३१६)
पु., वनस्पति० चित्रकः (रा. ६.१२५; पृ. ८६)
चित्रकभेदः रक्तचित्रकः (रा. ६.१२७; पृ. ८६)

**(चित्राङ्गी)** स्त्री., वनस्पति० मञ्जिष्ठा
(रा. ६.१६. पृ. १०)

**चित्रायस**–न., खनिजधातु० तीक्ष्णलोहम्
(रा. १३.३०; पृ. २११)

**चित्रोत्थान**–वि., नानाविधोद्गमः यथा वायोर्विषमक्रियत्वात् वातविद्रधेरुद्गमो नानाविधः (सुनि. ९.७)
**–मूल**–न., चित्रकस्य मूलम्। दीपनीयपाचनीयगुदशोथार्शःशूलहराणां श्रेष्ठम् (चसू. २५.४०)
**–यूष**–पु. सिद्धयूष० (का. खिल० ४.३९).

**चित्रकादिघृत**–न., चित्रकत्रिकटुसैंधव–हिङ्गु-पत्री-चव्य-अजमोदा–दाडिम–पिप्पलीमूल-जीरकद्वय–हपुषा-धान्यकैः समैः दध्यारनालबदरमूलकस्वरसैः सिद्धं घृतं वातगुल्मे देयं; तत्त्वग्निमान्द्याऽऽटोपशूलादीन् हन्ति (सु. उ. ४२.२५).

**चित्रला**–स्त्री., वनस्पति० गोरक्षी
(रापरि. ५.३० पृ. ३४२)

**चित्रा**–स्त्री., वनस्पति० आखुकर्णी
(रापरि. ३.२१ पृ. ३३१)
**–क्षुप**–पु., द्रोणपुष्पी (रापरि. ५.४८ पृ. ३४४)
**–फलतैल**–न., दन्तीफलतैलम्। वातोदरिण आस्थापने अनुवासने च उपयुज्यते (सुचि. १४.५)

**चिन्तक**–पु., चिन्ताबहुलः (चसू. १३.५२)

**चिन्ता**–स्त्री., मनोविकार० (चनि. ७.४) आध्यान, व्यग्रता, वैक्लव्यम् (चनि. ८.४)
विचारः (अहृसू. १४.२२; सुशा. १.१३)
कफोपशमनी मेदोऽनिलश्लेष्मनाशनी
(अहृसू. ७.६३) (अहृसू. १३.११)
**–मणि**–पु., सिद्धयोग० द्विभागगन्धकेन पारदं कोरण्टनिम्बूरसेन चिञ्चात्वक्क्वाथेन चैकैकं दिनं विमर्दयेत्। गोलकं च कृत्वा लवणयन्त्रे पुटं दद्यात्। उद्धृत्य पारदचतुर्थांशे गन्धके तत्परिपाचयेत्। ततश्च गन्धकसमभागं वत्सनाभं प्रक्षिप्य चित्रकक्वाथे पाचयेत्। मात्रा–वल्लः; अनुपान–मधुयुक्तमैरण्डतैलम्। परिहार्यम्–तैलं शीतं च। फलं–तूनीप्रतितूनीगुल्माध्मानविबन्धशूलानां विनाशः
(र. १८.११४–११७)
सिद्धयोग० सर्वांगसुन्दररसः, अभ्रकगन्धकपारदाः पृथक् पृथक् तोलैकैकं गृहीत्वा अर्धतोलकं वत्सनाभमर्धतोलकं च तिन्तिणीफलं समादाय सर्वं मसृणत्वोदयं यावच्छनैर्मर्दयेत्। ततश्च षडङ्गुलायतदीर्घे गर्ते नागवल्लीदलैः पूरिते सूतकल्कं स्थापयेत् कूटयेच्च। स्वाङ्गशीतलं तं वत्सनाभतिन्तिणीफलाभ्यां, मिश्रयित्वा खल्वे विमर्दयेत्। मात्रा–गुञ्जैका। दधिभक्तं भोजनम्। शृङ्गबेराद्यनुपानेन त्रिदोषजा विषमज्वरा अग्निमान्द्यं ग्रहण्यतिसाराश्च नश्यन्ति (र. १२.६४.७३)

**चिन्त्य**–वि., कर्तव्यतया अकर्तव्यतया वा यन्मनसा चिन्त्यते तत् मनोविषयः (चशा. १–२०, न.) इन्द्रियनिरपेक्षं मनो यद्गृह्णाति तच्चिन्त्यम्। यदि वा इन्द्रियगृहीतमेवार्थं यत् पुनरिन्द्रियनिरपेक्षं मनो गृह्णाति तच्चिन्त्यम् (चसू. ८–१६)

**चिन्मय**–वि., चैतन्यरूपम्; अतिसूक्ष्मम् (र. १.५५)

**चिपिट**–वि., चिपिटाकारम् (र. ४.१२)
पु., कीट० शकृन्मूत्रविषः (सुक. ३,५)
कफजकृमि० दर्भपुष्पमहापुष्पादीनां षण्णामेकतमः (सुउ. ५४.१२)

**(चिपिटा)**–स्त्री.. निष्पावी (रापरि. ७.१०० पृ. ३७६)
गुण्डासिनी (रापरि. ८.६६ पृ. ३६३)

**चिपिटिका**–स्त्री., चर्मचे(वे)ली। विशुष्यमाणत्वात्त्वचश्चर्मचे(वे)लीसंभवः। व्रणे शुष्का सूक्ष्मा श्वेता या उच्चटति त्वक्, सा चर्मचेली कथ्यते
(सुसू. २३.१९)

**चिप्प**–न., नखमांसस्थः। प्रपाकी क्षुद्ररोग० लक्षणम्–नखमांसमधिष्ठाय पित्तं वातश्च दाहपाकौ वेदनां च कुरुतः (सुनि. १३.२१) अङ्गुलिवेष्टकम्
(सुनि. १३.२१. ड.)

**चिप्य**–न., क्षुद्ररोग० चिप्पम् (सुचि. २०.९)
द्र० 'चिप्प'.
(पु.) पुरीषजकृमि० (सुउ. ५४.८)

**चिबुक**–न., शारीर० हन्वग्रभागः, षट्पञ्चाशत् प्रत्यङ्गेष्वेकम् (चशा, ७.११) प्रमाणतस्तच्चतुरङ्गुलम् (चवि. ८.११७) ओष्ठाधोमांसास्थिपिण्डिका। तद् व्यङ्गुलप्रमाणम् (सुसु. ३५.१२)

**चिमचिमा**–स्त्री., सर्षपलिप्तवद् दुःखानुभवः
(अहृसू. १०.५)

**चिमिचिम**–न., वेदना॰ चिमचिमा ( असंसू. ८.२६ ) द्र॰ 'चिमचिमा'.

**चिमिचिमायन**–न., परिव॰ वेदना॰ ( चसू. १८.७ अहसू. ७.२१ ) द्र॰ 'चिमचिमा'.

**चिर**–अव्यय॰ चिरकालम् ( असंसू. २०.२० )

**–कारिता**–स्त्री., दीर्घकालानुबन्धित्वम् ( अहसू. १२.५४ )

**–कारित्व**–न., कार्यादौ विश्रब्धत्वं चिरेण कार्यनिर्वर्तकत्वम् ( असंसू. २०.२० )

**–ग्राहिन्**–वि., चिरेण बहुतिथकालापगमेनापि वैरादिग्रहणशीलः ( सुशा. ४.७२ )

**–जीविका**–स्त्री., वनस्पति॰ शाल्मली ( ध. ५.१२७ पृ. १९५ )

**–जीविन्**–पु., वनस्पति॰ जीवकः ( ध. १.१२३ पृ. ३० )

**–जीवी**–स्त्री., वनस्पति॰ शाल्मली ( ध. ५.१२७ पृ. १९५ )

**–तिक्त**–पु., वनस्पति॰ किराततिक्तः ( र. १६.६७ )

**–निमेष**–वि., रोगलक्षण॰ चिरं निमेषः अक्षिनिमीलनं यस्य सः ( चशा. ८-२१ )

**–पत्रक**–पु., वनस्पति॰ सर्जकः ( ध. ५.१२३ पृ. १९४. )

**–पाकिन्**– पु., वनस्पति॰ कपित्थः ( ध. २.१०२ पृ. ९०. )

**–पाली**–पु., कुरुक्षेत्राद्दाक्षिणात्यदेशः ( काखिल. २५.१३ ) रावणसेनापतेस्त्रिशिरोनामकस्य नाम्ना पूर्वं त्रिशिरःपल्लीति नामासीत्, तस्या एव समयवशेन त्रिचनापल्लीति नाम्ना प्रसिद्धिरभूत् ( का. उपोद्घाते )

**–पुष्प**–वनस्पति॰ बकुलः ( रा. १०–२६३ पृ. २०२)

**–बिल्व**–पु., वनस्पति॰ करञ्जः महाकषायवर्गे भेदनीयगणे लेखनीयगणे च एकं द्रव्यम् (चसू. ४.९)

**–बिल्वक**–पु., वनस्पति॰ पूतिकरञ्जः ( ध. ५.१०७ पृ. १९१ )

**–बिल्वाङ्कुर**–पु., वनस्पति॰ करञ्जवृक्षस्याङ्कुरः दीपनः कफवातघ्नः सरश्च ( असंसू. ७–१४६ )

**–सिद्ध**–वि., अतिकालसिद्धम् ( सुसू. ४६.४७७ )

**चिरटी**–स्त्री., प्रतुदपक्षि॰ ( चसू. २७.५२ )

**चिरायुस्**–पु., तालः ( रा. ९.९३ पृ. १८२ )

**चिरिण्टी**–स्त्री., वनस्पति॰ शंखपुष्पी ( रा. ३.१७१; पृ. १५७ )

**चिरिपाली**–पु., कुरुक्षेत्राद्दाक्षिणात्यदेशः ( काखिल. २५.१३ ) द्र॰ 'चिरपाली'.

**चिरिबिल्व**–पु., वनस्पति॰ पूतिकरञ्जः (अहसू. ६.९८)

**चिरीटी**–स्त्री., प्रतुदपक्षि॰ ( असंसू. ७.७४ )

**चिरोत्थ**–वि., चिरेण उत्था उत्थितिर्यस्य, बहुकालभवम् ( सुउ. २१.५० )

**चिरोत्थित**–वि., दीर्घकालोत्पन्नम्, चिरकारीत्यर्थः ( सुचि. ५.१४ )

**चिरोत्सृष्ट**–वि., बहुकालं यावत्परित्यक्तम् ( सु.चि २५.४ )

( **चिरोत्सृष्टा** ) वि., प्रभूतकालत्यक्ता ( सुनि. १२.७ )

**चिर्भट**–न., वनस्पति॰ त्रपुस॰ गोरक्षकर्कटी प्रवाहिकायां बहुस्नेहेन भोजयेत् ( चचि. १९.३२ ) डङ्गरं मालवेषु प्रसिद्धम्; अतिप्रसिद्धं जालन्धरादिषु ( अहसू. ६.८७ ) फलशाक॰ वर्चोभेदे हितकरम् ( चसू. २७.११२ ) गुणाः—बालचिर्भटं पित्तहरं शीतं च ( असंसू. ७.१३५ ) मधुरं रूक्षं पित्तकफापहम् ( ध. १.१८०; पृ. ४३ ) बाल्ये चिर्भिटा तिक्ता किञ्चिदम्ला पाके गौल्योपेता दीपनी च शुष्का रूक्षा श्लेष्मवातघ्नी जाड्यघ्नी रोचनी ( रा. ७.२६४; पृ. ४३ )

**चिर्भिट**–न., वनस्पति॰ चिर्भटम् ( असंनि. १.१५ )

( **चिर्भिटा** )–स्त्री., वनस्पति॰ चिर्भटम् ( रा. ७.२६२ पृ. ४३ )

**चिर्भिटिका**–स्त्री., वनस्पति॰ चिर्भटम् ( रा. ७.२६२ पृ. ४३ )

**चिलिचिम**–पु., मत्स्य॰ अयं मत्स्येष्वहिततमः ( चसू. २५.३० ) चिलिचिमं पयसा सह नाभ्यवहरेत् ( चसू. २६.८४ ) शकली, लोहिताक्षः, सर्वतो लोहितराजिः प्रायो भूमौ चरति ( सुसू. २०.८ ) कर्दमशैवालादौ ( अगोचरे ) यतो विचरति अतश्चिदोषकरो भवति ( असंसू. ७.१०२ )

**चिल्ल**–पु., प्रसहप्राणि॰ ( ध. परि. १४ )

**चिल्लक**–पु., वनस्पति॰ लोध्रः ( रा. ६.२३८ )

( **चिल्लिका** )–स्त्री., वनस्पति॰ चिल्ली ( रापरि. ७.६६ ) क्षेत्रवास्तुकम्

**चिल्लट**–पु., भूमिशयप्राणि॰ चियारः ( चसू. २७.३८ ) बिलेशयप्राणि॰ (असंसू. ७.७६)

**चिल्लि**–पु., प्रसहपक्षि॰ चिण्हः, चिल्लः, शोषिणे हितः ( सुसू. ४६.७४ )

–मुख–न., स्वस्तिकयन्त्र० अस्थिविदष्टशल्योद्धरणोपयोगि ( सुसू. ७.१० )

चिल्ली–स्त्री., वनस्पति० शाक० क्षेत्रवास्तूकः ( चसू. ४६.३३५ )
गौडवास्तूकः ( चसू. २७.९८ ) यवशाकम्, यवशाकान्तरम् ( सुसू. ४६.२६१ ) रक्तवास्तूकम् ( सुनि. ६.८ )
श्वेतचिल्ली शुनकचिल्ली इति प्रकार० ( रापरि. ७.६६ )

चिह्न–न., चिह्नयते लक्ष्यते अनेनेति चिह्नम्; रूपं, लक्षणम्। "तत्र लिङ्गमाकृतिर्लक्षणं चिह्नं संस्थानं व्यञ्जनं रूपमित्यनर्थान्तरम्" ( चनि. १.९ )

चीडा–स्त्री., वनस्पति० श्रीवेष्टकः ( रा. १२.१९२ पृ. १२१ )

चीन–पु., देश० तत्रस्था लोकविशेषाः चीना एव ( चवि. १.१७ )
धान्य० शालिभेदः ( चनि. ४.५ ) कङ्गुतुल्यव्रीहिधान्य० शीत–स्निग्धादिपष्टिकाल्पान्तरगुणः ( चसू. २७–१४ ) षष्टिकभेदः (ड. सुसू. ४६.८)
बन्ध० बहुभिश्चीनांशुकैः कृतो व्रणबन्ध० स चाऽपाङ्गयोर्विधेयः ( १८.१७; असंसू. ३८.४२ )

–कर्पूर–पु., कर्पूर०गुणाः–चीनकः कटुस्तिक्तोष्ण ईषच्छीतः कफापहः कण्ठदोषहरो मेध्यः पाचनः कृमिनाशनः ( रा. १२.६३ पृ. १०१ )

–ज–न., खनिजधातु० तीक्ष्णलोहम् ( रा. १३.३० पृ. २११ )

–पट्ट–न., व्रणबन्धनद्रव्येष्वेकम्। चीनदेश एवोत्पद्यते, तद्देशजनास्तु चीनयुगपट्टमिति वदन्ति। स च पत्त्रोर्णस्यैव भेदः ( सुसू. १८.१६ )

–पिष्ट–न., खनिजधातु० सीसकम् ( ध. ६.२१; पृ. २०९ )

–पिष्टक–न., खनिजधातु० सीसकम् ( ध. ६,२१; पृ. २०९ )

चीनक–पु., निर्यास० चीनकर्पूरः ( रा. १२.६३; पृ० १०१ )
वनस्पति० प्रियङ्गुः ( ध. ६.९; पृ. २२५ )

चीनाक–न., वनस्पति० वल्लीफलम्। 'वीणकम्' ( अहसू. ६.८७ )

चीनाकर्कटी–स्त्री., वनस्पति० कर्कटीफल० त्रपुस० गुणाः—रुच्या, शिशिरा, पित्तनाशनी, मधुरा, तृप्तिदा, हृद्या, दाहशोषापहारिणी ( रा. ७.२६०; पृ. ४२ )

चीर–न., वल्कलम् ( र. २९.९४ )

–पत्री–स्त्री., वनस्पति० चिल्ली ( रापरि. ७.६६ पृ. ३५३ )

–पर्ण–पु., वनस्पति० सर्जकः ( रा. ९.२०४ पृ. १९४ )

–राज्य–न., जनपद० कुरुक्षेत्राद्—दक्षिणदेश० सोऽयमद्यत्वे म्हैसूरराज्येऽन्तर्भवति ( कां. सं. उपोद्घाते ) ( काखिल. २५.१३ )

–वृक्ष–पु., वनस्पति० बिल्वान्तरः ( रा. ८.३० पृ. ३५९ )

चीरक–पु., जनपद० कुरुक्षेत्रात्पूर्वदेश० ( काखिल. २५.९ )

चीरल्लि–पु., पक्षि० 'चील' 'चिल्ल' इति वा लोके ( सुउ. ३५.६ )

चीरिपत्र–पु., वनस्पति० कारवल्ली ( रा. ७.२७८ पृ. ४५ )

चीर्ण–वि., पारदसंस्कार०, ग्रस्तं कृतचारणं वा ( र. ३०. १०६ )

चुक्र–न., वनस्पति० गुणाः–अम्लपत्र, लघूष्ण, वातगुल्मनुत्, रुचिकृत्, दीपनं, पथ्यम्, ईषत् पित्तकरं च ( रा. ७.६४; पृ. ३५२ )
हिं.—चुका.
म.—चुका.
बं.—चुका.
आसुत० अम्लं, शुक्तम् ( ध. ६.२४६ पृ. २५० अहसू. १७.३ )

–( चुक्रा )–स्त्री., वनस्पति० चिञ्चा ( ध. ५.३३ पृ. १७४ )

–फल–न., वनस्पति० वृक्षाम्लम् ( रा. ६.१४४ पृ. ८९ )

–वास्तूक–न., वनस्पति० चुक्रम् ( रा. ७.६४ पृ. ३५२ )

चुक्राम्ल–न., चिञ्चासारः ( रा. ११.४१; पृ. १७५ )
वनस्पति० वृक्षाम्लम् ( रा. ६.१४३ पृ. ८९ )

चुक्राह्वा–स्त्री., वनस्पति० क्षुद्राम्लिका ( रा. ५.४३ पृ. १७५ )

चुक्रिका–स्त्री., वनस्पति० क्षुद्राम्लिका ( रा. ५.४३ पृ. १७५ )
चिञ्चा ( ध. ५.३३ पृ. १७४ )
चुक्रम् ( र. १०.८३ )
आसुत० ( रा. १५.२९२ पृ. २५० )

**चुक्रीका**–स्त्री., वनस्पति० चाङ्गेरीशाक० (चचि. २४.१५१)

**चुचुक**–पु., वनस्पति०, शाक० फञ्जादिशाकवर्गोक्तमेकं शाकम् (रापरि. ७.९४: पृ. ३५५)

**चुचुन्दरी**–स्त्री., प्राणि० दीर्घतुण्डनखी सुगंधिमूषिका; चिचुंद्री इति लोके। मधुरा स्निग्धा शुक्रवर्धनी व्यवायिनी च (ध. ६.४३२ पृ. २७४)

**चुञ्चु**–स्त्री., वनस्पति० चञ्चः (रापरि. ४.१८ पृ. ३३६)

**–पर्णिका**–स्त्री., नाडीचभेदः, शाक० फञ्जीचिल्ल्यादिगणे (चसू. २७.१००)

**चुञ्चु**–स्त्री., पत्रशाक० नाडिकाकारपत्रः 'चुंचु' इति लोके। तद्गुणाः—पाके लघुर्जन्तुघ्नः पिच्छिलः व्रणिनां हितः, कषायमधुरः, ग्राही, त्रिदोषहरश्च (सुसू. ४६.२५१) पिच्छाबस्त्युपयुक्तं द्रव्यम् (सुउ. ४०.११३) कषायमधुरशाकवर्गे एकं द्रव्यम् (सुसू. ४६.२४९)

**चुण्टी**–स्त्री., अबद्धकूपः 'भुआ' नाम नद्याः समीपे तत्कालकृता लघुकूपिका; गिरिपल्वलम्–पल्वलम् अखात इति (सुसू. ४५.४ ड.)

**चुमचुमायन**–न., वेदना० चुमुचुमायनम् (ड सुसू. ४२.१०) द्र० चुमुचुमायन

**चुमुचुमायन**–न., वेदना० सर्षपकल्कावलिप्तानामिवाङ्गानां वेदना (सुनि. १.२५)

**चुम्बक**–न., खनिजद्रव्य० कान्तलोहप्रकारः (ध. ६.२९ पृ. २११)

कान्तलोहस्य पञ्चप्रकारेष्वेकम्। कान्तलोहं पञ्चविधं स्मृतम्–भ्रामकं, चुम्बकं, कर्षकं, द्रावकं, रोमकान्तं च (र. ५.८९)

पु., ग्रन्थैकदेशग्राही पल्लवग्राही विद्वान्। कृपणः (र. ६.८)

**चुम्भल**–न., वस्त्रचुम्बलं, पट्टमयः कोमलपिण्डः (असंशा. ४.३८)

**चुरु**–पु., कफजक्रिमि० (चसू. १९.४ (९)

**चुलुक**–न., कवलः (र. १२.३७)

**चुलुकिन्**–पु., वारिशयप्राणि०, मत्स्यभेदः, सागरवराहः (चसू. २७.४०); प्राणि०, शिशुमारः (चचि. २८.१२८)

**चुल्लका**–स्त्री., लोहे जातो रोग०, केषाञ्चिदोषधिद्रव्याणां कल्केन लोहे सञ्जाता तारत्वहेमत्वरूपा पतङ्गी कतिचिद्दिनानि स्थित्वा नश्यन्ती चुल्लकेति व्यपदिश्यते (र. ८.५१)

**चुल्लिका**–स्त्री., वनस्पति० शाक०, लोणिका (र. १०.८३)

**चुल्लुकी**–स्त्री., मत्स्य०, चुलुकी, अस्या वसा मत्स्यवसानामग्र्या (चसू. २५.३८)

**चूचुक**–न., शारीर०, स्तनाग्रभागः (सुचि. १७.४७; असंशा. ७.१३)

**–आकृति**–वि., चूचुकाकारम्, स्त्रीकुचाग्रसमाकारम् (अहसू. २५.२६)

**चूचू**–पु., वनस्पति० नाडीकाकारपत्रः चुञ्चू शाकवर्गे श्रेष्ठ (डसुसू. ४६.३३५)

**चूञ्चू**–पु., वनस्पति० नाडिकाकारपत्रः चुञ्चू शाकवर्गे श्रेष्ठः (सुसू. ४६.३३५)

**चूडा**–स्त्री., शिखा (कासू. २१)

**–करण**–न., चौलम्, बालस्य प्रथमकेशकर्तनम्। षोडशसंस्कारेष्वष्टमः संस्कारः (कासू. २१)

तृतीये वर्षे चौलम् (आश्व. गृह्यसूत्रम् १।१७।१) सांवत्सरिकस्य चूडाकरणम् (पारस्करगृह्यसूत्रम् २।१।१)

**–करणीय**–वि., अध्याय० चूडाकरणं नाम चौलमधिकृत्य कृतोऽध्यायः (कासू. २१)

**–मणि**–पु., वनस्पति० काकमाची० (ध. ४.२९ पृ. १४०)

**चूडाम्ल**–न., वनस्पति० वृक्षाम्लम् (रा. ६.१४४ पृ. ८९)

**चूडाला**–स्त्री., वनस्पति० मुस्ता (रा. ६.६१ पृ. १५)

**चूत**–पु., वनस्पति० आम्रः (ध. ५,१ पृ. १६९)

आम्रवृक्ष०, स च वसन्ते पुष्पितो भवति (सुसू. ६.२७) "अपुष्पफलवानाम्रः पुष्पितश्चूत उच्यते। पुष्पैः फलैश्च संयुक्तः सहकारः स उच्यते" (ध. ५.१ पृ. १६९)

**चूतास्थि**–न., आम्रफलास्थि (र. १६.११०)

**चूरु**–न., पुरीषज–कृमि०, सप्तानाम् अजववियवादीनामन्यतमः (सुउ. ५४.८)

**चूर्ण**–पु., न., सुपिष्टं वस्त्रगालितं शुष्कं द्रव्यम् (चचि. १.४७; सुसू. ३७,११)

कल्क० (असंक. ८) सुधा, चव्यताम्बूलपत्रसहितद्रव्येष्वेकम् (सुचि. २४.२१; र. १२.३८)

क्षार०, ताम्बूले समुपयुक्तानि क्षारापराभिधानानि चूर्णानि—अर्जुनवृक्षजमर्काह्वयं, कुटजं, करञ्जं, जलजं, मौक्तिकं, शैलाह्वयं, स्फाटिक्यं, शुक्त्यादिजं च (ध. ३ परि. २०)

कङ्कोलकम् ( ध. ३.३७ पृ. १०२ )

**-पारद**-न., खनिज० हिङ्गूलम् (ध. ६.४० पृ. २१४)

**-प्रकुञ्च**-पु., चूर्णस्य मुष्टिः । कराङ्गुलिचतुष्कमूलावधिमितं चूर्णम् ( सुसू. ४३.३ )

**-प्रयोग**-पु., चूर्णस्य नानाकर्मसु योजना ग्रहण्यामविकारेषु व्रणावत्र्यञ्जनादिषु च ( काखिल. ३.३६ ) असृक्स्थापनाय चूर्णस्य उपयोजनम् (असंसू. ३६.१० ) असृक्स्रावणाय चूर्णानि (असंसू. ३६.१० ); अञ्जनार्थम् (असंसू. ३२.९); प्रतिसारणार्थम् ( असंसू. ३१.१३ ) नस्यार्थम् ( असंसू. २९.५ )

**-बस्ति**-पु., आस्थापनबस्ति० स शूलादिविकारेषूपयुक्तः ( काखिल. १८.४८ )

**-वज्र**-न., वैक्रान्तम् ( रा. १३.५० पृ. २१५ )

**-शोधन**-न., व्रणशोधनकल्प० कासीसादिकम् ( सुचि. १.६२ ड )

**चूर्णक**-पु., षष्टिकशालिभेदः ( सुसू. ४६.८ )
चूर्णः, सुधा ( चइ, १०.१९ )
अरिष्टलक्षण० निरतिशयं रुग्णस्य दन्तेषु श्वेतक्षारसदृशः सुधासदृशो वा मलः सञ्चितो दृश्यते ( चइं. १.२१ )

**चूर्णाञ्जन**-न., योग० चूर्णस्वरूपमञ्जनम् । चूर्णाञ्जनद्रव्याणि समुद्रफेनः, सैन्धवं, शङ्खो, मुद्गः, शुक्रमरिचम् एतेषां चूर्णैरञ्जिते नेत्रे कण्डूरक्लिन्नवर्त्मानि च विनश्यन्ति ( सुउ. १२.५१ ) तस्य प्रमाणं- शलाकाद्वयं लेखनचूर्णस्य, तिस्रो रोपणस्य, चतस्रः प्रसादनस्य इति ( सुउ. १८.६० ८५-९३ )

**चूर्णायस्कृति**-स्त्री., योग० चूर्णयुक्ता अयस्कृतिः ( चचि. १३.७३ )

**चूर्णित**-वि., बहुधा खण्डीकृतम् ( सुसू. १८.३० )
न., काण्डभग्नस्य प्रकारः, क्षुण्णमस्थि तच्च शब्दस्पर्शाभ्यामवगन्तव्यम्; चूर्णितं भग्नम् ( सुनि. १५.१० )
वि., व्रणभेदः अस्थिसमाश्रितो व्रणः ( अहृसू. २९,६८ )

**चूलिका**- स्त्री., लवण० चुल्लिकालवणं नवसागरः ( र. ३०.८ )

**-पटु**-न., लवण० नवसागरः ( र.१२.७६ )

**-लवण**-न., लवण० नवसागरः ( र. ४.६७ र. १०.६९ रा. १४.१; र. ३. १४२)

**चूलिनी**-स्त्री., वनस्पति० शाल्मली ( ध. ५.१२७ पृ. १९५ )

**चूषण**-न., कर्षणम् चूषणं पानम्, लक्षणया पानार्थं मुखेन पेयद्रव्याकर्षणमपि चूषणपदवाच्यमिति अवधेयम् ( अहृसू. २५.२६ )
आचूषणयत्रं श्रृङ्गादि ( अहृसू. २८.३५ )

**चेतकी**-स्त्री., वनस्पति० हरीतकी ( ध. १.२०५ पृ. ४९)

**चेतन**-न., ज्ञानवत् चेतति संजानीते इति चेतनः ( चसू. १.४७ )

**( चेतना )**-स्त्री., चैतन्यम् ( असंशा. २.१६ )
ज्ञानकारणम् आत्मा ( चशा. ६.४ )

**-च्युति**-स्त्री., लक्षण० चित्तनाशः ( सुउ. ३९.३७ )

**-धातु**-पु., भूतात्मा (चशा. ४.८) आत्मा (चसू. २५.९; सुशा. ३.१८) केवलश्चेतनः पुरुषः पुरि शरीरे शेते इति व्युत्पत्त्या य आत्मा पुरुषशब्देनोच्यते सः ( चशा. १.१६; २.३२ )
ज्ञानाधिकरण आत्मा ( चसू. ११.१३ )

**-निबन्ध**-न., वैशेष्यचेतनाधातोर्मर्मसु विशेषेण निबद्धत्वम् ( चसि. ९.३ )

**-वत्**-पु., चेतना ज्ञानं तद्वान्, चेतनायुक्त आत्मा पुरुषो वा (सुशा. १.९; चशा. ४.८ )
वि., सेन्द्रियं ( द्रव्यम् ) ( चसू. २६.१० )

**-स्थान**-न., संवेदनास्थानम् । हृदयम् । संवित्स्थानम् ( सुशा. ४.३१ )

**चेतनाधिष्ठान**-वि., चेतनाया अधिष्ठानं चेतना अधितिष्ठति अस्मिन् इति चेतनाधिष्ठानम्, हृदयमित्यर्थः ( चशा. ७.८ )

**चेतनाधिष्ठानभूत**-वि., चेतनस्य आत्मनः अधिष्ठानभूतं शरीरम् ( चशा. ६.४ )

**चेतनानुवृत्ति**-स्त्री., चैतन्यसंतानः चेतनायाः प्रवाहसातत्यमित्यर्थः ( चसू. ३०.२२ )

**चेतनिका**-स्त्री.,वनस्पति० हरीतकी ( रा. ११.२०६ )

**चेतनीया**-स्त्री.,वनस्पति० ऋद्धिः (रा. ५.१८७पृ. ३४)

**चेतयितृ**-पु., चेतनः, साक्षी, पुरुषः । चेतनपुरुषसंसर्गाद्चेतनमयव्यक्तं चेतनावदिव 'अचेतनं चेतनावदिव लिङ्गम्, इति सांख्यकोशोऽनुसन्धेयो भवतीति पुरुषश्चेतयिता ( सुशा. १.८ )

**चेतस्**-न., मनः ( चसू. ८.४ असंनि. २०.४२ )

**-समवायिन्**-वि., मनःसंबंधि ( चसू. ११.३८ )

**( चेतो- ) विकार**-पु., उन्मादादिमानसिकविकारः ( सुचि. ४०.४६ )

**चेतिका**-स्त्री., वनस्पति० जाती ( ध. ५. १३७ पृ. १९८ )

**चेल**-न., वस्त्रम् ( चशा. ८.२४ )

**चेष्टा**-स्त्री., क्रिया ( चशा. ६.७ )
व्यापारः ( चसू. ८.४ )
कायपरिस्पन्दः ( ड. सुसू. २.३ )
चलनात्मकं कर्म, वायवीयो भावः ( सुशा. १.९ )
कायवाङ्मनोव्यापारः ( अहृसू. ११.१ )
प्रसारणाकुञ्चनविनमनोन्नमनतिर्यग्गमनानि पञ्च चेष्टाः। अन्ये तु गतिप्रसारणोत्क्षेपणनिमेषोन्मेषैः पञ्चभिः प्रकारैः पञ्चधा। प्राकृतव्यानस्य कर्म ( सुनि. १.१८ )

**-निवृत्ति**-स्त्री., क्रियात्यागः ( अहृसू. २८.८ )

**-प्रचार**-पु., शयनपरिवर्तनादिगतिः ( सुसू. १९.६ )
आकुञ्चनप्रसरणादिका क्रिया ( सुचि. ३.७० )

**-प्रणाश**-पु., लक्षण० चेष्टानां प्रणाशः ( चसू. १७.५९ )

**चेष्टाहारव्यपाश्रय**-वि., चेष्टाहारगोचरम्। चेष्टाहारविषयम् ( चसू. ६.३ )

**चेष्टित**-न., कार्यम् ( सुचि. ३८.१६ )

**चेष्टोपघात**-पु., चेष्टाहानिः ( सुशा. ६.२६ )

**चैतन्य**-न., चेतना, ज्ञानम् ( चसू. १.५६ )

**चैत्य**-न., रचितमायतनं चित्यस्य इदम् इति चैत्यम् वैदिकबौद्धजैनादीनाम् ( चइ. १२.२८ )
पु., न., ग्रामदेवताश्रयो महातरुः ( चचि. २३,१५९ चसू. ८.१९ )
देवालयः, वेदिः यज्ञस्थानम् ( चक. १.९ )
बौद्धालयः ( सुशा. १०.३ चनि. ७.१४ ) ( अहृसू. २.३३ )
श्मशानवृक्षः ( सुचि. २४.९२ )
चिता ( असंसू. ३.४५ )

**-द्रुम**-पु., वनस्पति० पिप्पलः ( ध. ५.८० पृ. १८५ )

**चैत्ररथ**-न., उद्याननाम; गन्धर्वराजस्य चित्ररथस्येदं वनम् ( चसू. २६.६ )

**चैलवेणिका**-स्त्री., वस्त्रपट्ट० ( अहृसू. २२.२९ )

**चैलिक**-न., कर्पटम् ( १८.४३ )

**चोक्ष**-वि., निर्मलम् ( असंउ. ४ )

**चोच**-न., वनस्पति० त्वक् ( ध. २.५०; पृ. ७९ सुचि. १७.१५; असंसू. १६.३७ ) ( अहृसू. १५. ४३; र. २१.१९०-९७ )
त्वग्भेदो, वनवासिका त्वक्। सुगन्धद्रव्य० ( सुसू; ३८.२४ )
स्थूला त्वक् यां शाल्मकमित्याचक्षते ( सुक. ६.३ )
नारिकेलफलम् ( अहृसू. ८.४५; ३.३१ )
पनसफलम् ( अहृसू. ३.३१ )

**चोर**-पु., कुरुक्षेत्राद्दक्षिणदेश०, 'चोरः, चोलः' इत्येक एव। पद्मपुराणे चोलस्य द्रविडदेशे उल्लेखोऽस्ति। म्हैसुरस्य दक्षिणतः कावेरीसरित्तीरवर्ती "तंजोर" इति साम्प्रतिकप्रदेशविशेषविख्यातः ( काखिल०, २५.१३ )

**-पुष्प**-न., वनस्पति०, यवानीपुष्पम्; ग्रन्थिपर्णः ( र. १६.६८ )

**चोरक**-पु., वनस्पति०, चोरपुष्पिका, शिरोरुजायां प्रदेहे उपयुज्यते ( चसू. ३.२४ ) संज्ञास्थापनगणे एकं द्रव्यम् ( चसू. ४.१८ ) गन्धद्रव्यमेतत् ( सुसू. ३८.२४; चक. १.२३ ) विषघ्नं द्रव्यम् ( सुक. ५.८४ ) महापैशाचिकघृते एकं द्रव्यम् ( चचि. ९.४५ ) गुणाः—शिशिरस्तिक्त उग्रगन्धो, विषघ्नो, रक्तदोषघ्नः कुष्ठकण्डूव्रणकृमिसमीरजित् ( ध. ३.७१; पृ. १११ ) उष्णो, वातकफापहो नासामुखरुजाजीर्णकृमिदोषविनाशनः ( रा. १२.१२९; पृ. ११० )

**-पत्र**-पु., वनस्पति० लाक्षावृक्षः ( सुसू. ३८.४८ )

**चोल**-पु., देश० द्र० 'चोर' ( काखिल २५.१३ )

**चोष**-पु., चूष्यमाणस्येव वेदना० ( सुउ. ४३.७ )
आकृष्यमाणस्येव दाहप्रकारः ( सुचि. ३७.६७ )
पिपासा ( सुसू. २२.११.१७.५ )

**-कुञ्ची**-स्त्री., वनस्पति० एला ( रा. ६.६९ पृ. ७८ )

**चोषण**-न., क्रिया०, विपरीतरतजन्यदाहोपशमनार्थं पुरुषेण आदौ लिङ्गं वस्त्रादिना निबध्य चूषणीयम् ( र, २५.७० )

**चौक्ष**-वि., शुचि, शुद्धम् ( चचि. ९.२१ )

**चौक्षाचार**-वि., चौक्षः शुचिः आचारो यस्य सः

**चौण्ट्य**-वि., अबद्धकूपश्चुण्टी, तस्योदकं तत्र भवं वा चौण्ट्यम्। चौण्ड्यं चौण्डं वा। तत्तु प्रावृषि पिबेत् ( सुसू. ४५.८ )
चौण्ट्यजलं—चुण्टीभवं पानीयं तत्तु अग्निकरं, रूक्षं मधुरं, कफकृन्न च। 'शिलाकीर्णे स्वयं श्वभ्रे नीलाञ्जनसमोदकम्। लतावितानसंछन्नं चौण्ट्यमित्यभिधीयते' ( सुसू. ४५.३४ )

**चौण्ड**-वि., चौण्ट्यजलं; पर्वतादौ पाषाणनिम्नस्थितमुदकं त्रिदोषहरम् ( असंसू. ६.१२ )

**चौण्ड्य**–वि., चौण्ड्यम् ( असंसू. ६.१२ )

**चौरक**–पु., वनस्पति० चोरकः
( रा. १२.१२८ पृ. ११० )

**चौहार**–( पु. ) वनस्पति० यवानीविशेषः, यवानिका जन्तुनाशन इत्यपरपर्यायः। तद्गुणाः—कटुस्तिक्तोष्णो वातश्लेष्मघ्नः श्रेष्ठो, दीपनो, दन्तरोगगुल्मोदर-शूलाऽर्शआध्मानकृमिच्छर्दिघ्नो विशेषात्कृमिनाशनः
( ध. २.९३; रा. ६.१४२ )

**च्यवन**–पु., ऋषि०, योगापहरणचिन्तनार्थं हिमवतः पार्श्वे समेतेषु महर्षिष्वेकः। च्यवनप्राशनामकरसायनस्य प्रथममुपयोगं कृत्वा स सुवृद्धोऽपि पुनर्युवाऽभूत् ( चचि. १.७२ )
न., ( पार्श्वतः ) स्खलनं संधीनाम् ( चइ. ३.४ )
स्रावः। शीघ्रत्वेनावस्रंसनम् ( सुसू. १५.५ (१)

**–प्राश**–पु., रसायनयोग०, तस्य पाठः—बिल्वोऽग्निमन्थः श्योनाकः काश्मर्यः पाटलिर्बला चतस्रः पर्ण्यः, पिप्पल्यः, श्वदंष्ट्रा, बृहतीद्वयं, शृङ्गी, तामलकी, द्राक्षा, जीवन्ती, पुष्करागुर्वभयाऽमृता ऋद्धिर्जीवकर्षभकौ, शटी, मुस्तं, पुनर्नवा, मेदा, एला, चंदनमुत्पलं, विदारी, वृषमूलं, काकोली, काकनासिकेत्येतेषां पलोन्मितान्भागान्ग्राहयेत्। चतुःशतभागान् आमलकस्य ग्राहयेत्। तदैकध्यं जलद्रोणे विपाचयेत्। एतान्यौषधानि गतरसानि ज्ञात्वा तं रसं गृहीत्वाऽऽमलकं निष्कुलं कृत्वा तैलसर्पिषोः पलद्वादशके भृष्ट्वा, मत्स्यण्डिकाया अर्धतुलां दत्वा लेहं साधयेत्। सिद्धशीते लेहे षट्पलं मधुनः प्रदापयेत्। तुगाक्षीर्याश्चतुष्पलं, पिप्पल्या द्विपलं, त्वगेलापत्रकेशराणां प्रत्येकमेकं पलं निदध्यात्। च्यवनप्राशः रसायनः कासश्वासहरः क्षीणक्षतानां वृद्धानां बालानामङ्गवर्धनः, स्वरक्षयमुरोरोगं हृद्रोगं वातशोणितं, पिपासां, मूत्रशुक्रस्थान्दोषानपकर्षति। अस्य सेवनेन मेधां स्मृतिं कान्तिमनामयत्वम् आयुःप्रकर्षं इन्द्रियबलं, स्त्रीषु प्रहर्षम्, अग्निवृद्धिं, वर्णप्रसादं, वातानुलोम्यं, जरानाशं नवयौवनं च प्राप्नुवन्ति
( चचि. १.६२–७४ )

**च्यावन**–वि., विस्रावणः ( चसू. २६.४३ ( ३ )
( परिव० ) च्युतिः पातनम्
( काखिल. १०.२३; सुनि. ८.३.

**–मन्त्र**–पु., गर्भपातनमन्त्रः ( सुचि. १५.५ )



**च्युत**–वि., स्खलितं स्थानादधोगतम् ( सुशा. ३.४ सुसू. ४५.११२ ) लम्बितं, विश्लिष्टं, सन्धिमुक्तप्रकारः
( सुनि. १५.१२ )

**च्युतांस**–वि., च्युतौ स्थानाद् भ्रष्टाविवांसौ यस्य सः
( चइं. १२.४ )

## छ

**छगण**–न., गवादिपशूनामार्द्रो मलः ( र. ३.४१ )

**छगल**–पु., प्राणि० छागः अजः इति यावत् ( र. २०. ५५ ); ग्राम्यपशुष्वेकः पशुः। तद्गुणाः—नातिशीतो गुरुः स्निग्धो मन्दपित्तकफोऽनभिष्यन्दी पीनसनाशनश्च ( सुसू. ४६.८७ )

**छगलान्त्रिका**–स्त्री., वनस्पति० बस्तान्त्रिः
( ध. १.१ पृ. ६८ )

**छगलान्त्री**–स्त्री., वनस्पति० वृद्धदारकभेदः बुध्नभेदः, श्यामादिगणे निर्दिष्टा ( सुसू. ३८.२९ ) तस्याः पत्राणि शाकत्वेनोपयुज्यंते। चुञ्चवादिशाकवर्गे निर्दिष्टा ( सुसू. ४६.२४९ ) अस्याः मूलं ग्राह्यम्। विरेचनद्रव्येषु निर्दिष्टा ( सुसू. ३९.४ )

**छगलाम्बु**–न., छागमूत्रम्, अजामूत्रम् ( सुउ. ५२.२२ )

**छत्र**–पु., वनस्पति० भूतृणम्
( ध. ४.४७०; रा. ८.४२ पृ. १४३.३६० )
न., आतपत्रम् ( असंउ. ४२ )

**( छत्रा )**–स्त्री., वनस्पति० शतपुष्पा
( रा. ४.२ अहसू. २९.३१ पृ. ६९ )
मिश्रेया वनस्पति०
( रा. ४.६ पृ. ६९ असंसू. ३८.२३ चचि. ९.४६ )
द्रोणपुष्पीभेदः वनस्पति० ( सुसू. १९.२९ )
धान्यकम्, वनस्पति० ( असंउ. ९ )
कोकिलाक्षः वनस्पति० ( चवि. ८.१३९ )
महौषधि० सोमसमवीर्या महौषधिः। एकपत्रा महावीर्या भिन्नाञ्जनसमप्रभा। छत्रातिच्छत्रके विद्याद्रक्षोघ्ने कन्दसम्भवे॥ तस्याः उत्पत्तिस्थानं काश्मीरस्थं दिव्यं क्षुद्रमानसं नाम सरः
( सुचि. ३०.१४ ३२.३३ )

**–गुच्छ**–पु., वनस्पति० गुण्डः
( रापरि. ८.६० पृ. ३६२ )

**–जारि**–स्त्री., शाक० करीषपललादिजा बहवो जातयो ज्ञेयाः। इयं जातिः शीता, पीनसकर्त्री मधुरा गुर्वी च ( चसू. २७.१२३ )

**-धान्य**-न., वनस्पति० धान्यकम् (ध. २.६३ पृ. ८२)

**-धारण**-न., छत्रस्य धारणम्। तस्य गुणाः-वर्षानिलरजोघर्महिमादीनां निवारणम्। वर्ण्यं चक्षुष्यमौजस्यं शंकरं छत्रधारणम् (चसू. ५.५०१; सुचि. २४.७६) वर्ण्यं नेत्रहितं वातवर्षातपापहम् (असंसू. १२.९४)

**-पर्ण**-पु., वनस्पति० सप्तपर्णः (ध. ३.८०; पृ. ११२)

**-पुष्पक**-पु., वनस्पति० तिलकः (ध. ५.१५८ पृ. २०२)

**छत्रकी**-स्त्री., लक्षण० नैकवर्णा छत्रनिभा तारा दृष्टिर्वा (असंउ. १७.२४०)

**छत्राक**-पु., वनस्पति० जालबर्बुरः गुणाः-शीतं गुरु मधुरं नातिवातलं पीनसकरं च (चसू. २७.१२४) (रापरि. ८.१४; पृ. ३५७)

न., शाक०, शिलीन्ध्रः, (र. ३०.९३)

हिं.—सांपकी छत्री, कुकरमुत्ता.

**म.—आळंबें, अळंबी.**

**(छत्राकी)**-स्त्री. वनस्पति० गन्धनाकुली (ध. ४.१०५ पृ. १५५)

**छद**-पु., न., वृक्षस्य पत्रं यथा निम्बच्छदम्

**छदन**-न., वृक्षस्य पत्रम् (सुनि. १७; असंचि. २.५१) तमालपत्रम् (ध. २.५२ पृ. ८० सुउ. ५१.५०)

**छद्मा**-स्त्री., वनस्पति० मञ्जिष्ठा (रा. ६.१७; पृ. १०)

**छद्मिका**-स्त्री., वनस्पति० गुडूची (रा. ३.२; पृ. ८)

**छद्मोपसिद्ध**-वि., छद्मना व्याजविशेषेण सिद्धं (मांसं) जुगुप्सानिवारणार्थमस्य प्रयोजनं वर्तते (चचि. ८.१५७)

**छन्द**-पु., अभिलाषः (सुसू. ४६.४१८) इच्छा.

**छन्दानुवर्तिन्**-वि., चित्तानुगुणकारी (अहसू. १३.७)

**छर्दन**-पु., वनस्पति० निम्बः (रा. ९.४४; पृ. १३) मदनः (ध. १.१६८ पृ. ३९)

**न.**, वमनम् (चसू. १.७९ सुउ. ४९.१६) (चइ. ९.७ चनि. ६.१४ सुउ. ४२.१०४)

**-गण**-पु., वमनगणः (अहसू. १५.१)

**छर्दासनिका**-स्त्री., वनस्पति० कर्कटी (रा. ७.२५२ पृ. ४१)

**छर्दि**-स्त्री., लक्षण० वान्तिः वमनम् (चचि. २०.५) आमाशयात् मुखमार्गेण दोषाणां बहिर्गमनम्। रोग० निरुक्तिः-दोषो वेगैराननं छादयन् अङ्गभञ्जनैः अर्दयन् वक्त्राद्बहिर्निश्चरतीति छर्दिः (सुउ. ४९,६) अन्तर्मार्गज एको रोगः (चसू. ११.४९) संप्राप्तिः—वायुर्महास्रोतसि संप्रवृद्ध उत्क्लेश्य दोषांस्तत ऊर्ध्वमस्यन्। आमाशयोत्क्लेशकृतांश्च मर्म प्रपीडयंश्छर्दिमुदीरयेत् (चचि. २०.७) व्यानेन सह एकीभूत उदानो विरुद्धाहारसेवनाद् वृद्धान् दोषानुदीरयन् भृशमूर्ध्वमागच्छति (सुउ. ४९.७) संख्या-वातजा-पित्तजा-कफजा-सन्निपातजा-द्विष्टार्थजेति पञ्चविधा। (चचि. २०.६ असंनि. ५. ३०) पूर्वरूपम्-प्रसेको हृदयोत्क्लेशो भक्तस्यानभिनन्दनम्। अशने द्वेषः (सुउ. ४९.८ चचि. २०.६) सामान्यरूपम्-उत्क्लेशाऽऽस्यलावण्यप्रसेकाऽरुचयश्च सर्वास्वपि छर्दिषु भवन्ति। वातजा-अस्यां वायुर्नाभिं पृष्ठं च रुजन् आहारमुत्क्षिपेत्। ततोऽल्पाल्पं विच्छिन्नं फेनिलं कषायं च वमति। तथा शब्दोद्गारयुतं कृष्णमच्छं कृच्छ्रेण वेगवच्च भवति। कासास्यशोषो हृत्पीडा मूर्धपीडा, स्वरपीडा क्लमश्च भवन्ति। पित्तजा-क्षारोदकनिभं धूम्रं हरितपीतकं सासृगम्लं कटूष्णं च वमति तृण्मूर्च्छा दाहतापाश्च भवन्ति। कफजा-स्निग्धं घनं श्वेतं श्लेष्मतन्तुगवाक्षितं मधुरं लवणं भूरिप्रसक्तं लोमहर्षणं च वमति। मुखश्वयथुमाधुर्यतन्द्राहृल्लासकासाश्च भवन्ति। सर्वजा-सर्वदोषलिङ्गा भवति। छर्दिर्वेगवती मूत्रशकृद्गन्धिः सचन्द्रिका। सास्रविड्पूयरुक्कासश्वासवत्यनुषङ्गिनी॥ सा असाध्या (असंनि. ५) द्विष्टार्थयोगजा बीभत्सजा वा-द्विष्टाशुचिपूत्यमेध्यादिकाद् घृणाकरात् जाता छर्दिः अस्यां यथादोषलक्षणं जानीयात्। दौहृदजा-दौहृदविमाननाज्जाता, अन्ये च गर्भनिमित्तामाहुः। अस्या लक्षणानुसारेण तद्दोषजत्वं परिकल्पनीयम्। आमजा-विसूच्यादिजाता छर्दिः। लक्षणानुसारेणाऽस्यास्तत्तद्दोषजत्वं परिकल्पयेत्। सात्म्यप्रकोपजा अकस्मात् सात्म्यत्यागाज्जाता छर्दिः। कृमिजा-कृमिजन्या छर्दिः (सुउ. ४९.१२); तस्या लक्षणानि-शूलवेपथुहृल्लासाः कृमिहृद्रोगलक्षणानि च भवन्ति (असंनि. ५) कृमिहृद्रोगलक्षणानि-श्यावनेत्रता, तमःप्रवेशो, हृल्लासः, शोषः, कण्डूः, कफस्रुतिः, प्रततं हृदयं क्रकचेन दार्यत इव। बीभत्सजा, दौहृदजा, आमजा, सात्म्यप्रकोपजा, कृमिजा इति छर्दिभेदाः कैश्चित्कृताः। परम् अनेकप्रकारापि एकैव पञ्चमी छर्दिरिति सुश्रुतः, पञ्चस्वपि छर्दिषु यथास्वलक्षणैर्दोषं विजानीयात्। असाध्या-क्षीणस्योपद्रवयुक्ता-

ऽसृक्पूययुक्ता, सचन्द्रिका प्रसक्ता च । सामान्य-चिकित्सा-सर्वाश्छर्दयो यत आमाशयोत्क्लेशभवाः सन्ति तस्मात्तास्वनशनरूपलङ्घनमेवादौ हितकरं भवति । लङ्घनं बलिनो हितम् (सुउ. ४९.१२-१५) चिकित्सा-छर्द्यां योगाः ( सुउ. ४९.२७-३५ ) बीभत्सजां छर्दिं हृद्यतमैर्द्रव्यैः शमयेत् । दौहृदीं छर्दिं काङ्क्षितैः फलैर्जयेत् । लङ्घनैः वामनैश्च आमजां छर्दिं जयेत् । हृद्रोगवत्कृमिजछर्द्यां चिकित्सां कुर्यात् ( सुउ. ४९.२५-२६ ) आहारादिपथ्यम्-वमनादिशोधन-पेयादिक्रमानंतरं लघु परिशुष्कं सात्म्यमन्नं देयम् ( सुउ. ४९.१७ ); संदर्भाः-( चसू. ११. ); ( चचि. २० ); ( चचि. ८.६२ ); ( चनि. १.२७ ); ( चसू. १६.७ ); ( चशा. ४.१६ ); ( सुउ. ४९ ); ( सुशा. ३.१५ ); ( असंशा. ११. ); ( असंनि. ५ ); ( कासू. २५ ).

**-घ्न**-पु., वनस्पति० किराततिक्तः ( ध. १.३४ पृ. १४ )

**-चिकित्सित**-न., अध्याय० ( चचि. २०.१ )

**-निग्रहज**-वि., छर्दिनिग्रहाज्जातो ( रोग० ); यथा कण्डूकोठारुचिव्यङ्गशोथपाण्ड्वामयज्वराः कुष्ठहृल्लास-वीसर्पाश्च ( चसू. ७.१४ ) द्र० ' उदावर्त '

**-निग्रहण**-वि., छर्दिघ्नम् । छर्दिं निगृह्णाति हन्ति इति छर्दिनिग्रहणः महाकषायवर्गे एको गणः ( चसू. ४.१४ )

**-प्रतिषेध**-पु., अध्याय० ( सुउ. ४९.१ )

**-विघात**-पु., छर्द्याघातो रोगहेतु० छर्दिविघातजो रोग० उदावर्ताख्यः ( सुउ. ५५.१४ )

**छर्दिका**-स्त्री., वनस्पति० विष्णुक्रांता ( ध. ४.११५; पृ. १५७ )

**छर्द्याघात**-पु., छर्दिविघातः ( सुउ. ५५.३१ )

**छल**-न., वचनविघातः छलं नाम परिशठमर्थाभासम-पार्थकं वाग्वस्तुमात्रमेव ( चवि. ८.५६ ) वचन-विघातोऽर्थविकल्पोपपत्त्या च्छलम् ( चक. चवि. ८.५६ )

**छल्ल**-न., वल्कलम् ( सुनि. १५.१० )

**छल्ली**-स्त्री., वनस्पति० वृक्षविशेषः स्वनामख्यातः ( असंउ. २ )

**छवि**-स्त्री., प्रभा, कान्तिः ( असंसू. ३१.१४; र. २.६२ )

**छाग**-पु., ग्राम्यपशु० अजः ( असंसू. ६.११४ ) ( ध. वर्गेतराणि १६ ; पृ. २८७ )

**-कर्ण**-पु., वनस्पति० सर्जः (असंसू. १६.१३)

**-पयस्**-न., अजादुग्धम् ( चसू. २७.२२२ ध. ६.१६७ पृ. २३९ चचि. १९.७१ )

**-मूत्र**-न., अजामूत्रम् ( सुसू. ४५.२२३, असंसू. ६.१४४ )

**-यकृत्प्रयोग**-पु., योग० नक्तान्ध्यचिकित्सायां मगधासमन्वितं छागयकृत् हुताशने विपाच्य भक्ष्यमाणं नक्तान्ध्यं निहन्ति ( सुउ. १७.२५ )

**-लोह**-न., अजरुधिरम् ( र. २९.३९ )

**छागल**-पु., " द्र० छागः " ( र. ३.८० ) छागसम्बन्धि ( र. १०.७९ )

**-पञ्चक**-न., आजपञ्चकम् । यथा-अजायाः मूत्रं दधि, दुग्धं, घृतं, शकृद्रसश्चेति ( र. १०,७९ )

**छागलान्त्रिका**-( स्त्री., ) वनस्पति० वृद्धदारुकः ( ध. ४.१०७; पृ. १५५ )

**छागलान्त्री**-स्त्री., वनस्पति० वृद्धदारुकः ( ध. ४.१०७; पृ. १५५ )

**छागान्तराधि**-पु., अवयव० छागस्य शरीरमध्यम् ( चचि. १४.२०९ )

**छागिका**-स्त्री., ग्राम्यपशु० अजा ( र. १०.८८ )

**छाण**-न., छगणम् ( र. ७.१८ )

**छात्र**-न., मधुप्रकार० पीतका, पिङ्गला यत्कुर्वन्ति छत्रकाकारं हैमवते वने मालववने च तच्छात्रम ( मधु )। अष्टौ मधुजातयः-पौत्तिकं, भ्रामरं, क्षौद्रं, माक्षिकं, छात्रं, आर्घ्यमौद्दालकं दालं च ( सुसू. ४५.१३३ ) छात्रमधुगुणाः-स्वादुपाकं, गुरु, हिमं, पिच्छिलं, रक्तपित्तजित्, श्वित्रमेहकृमिघ्नं च ( सुसू. ४५.१३७ )

**छादन**-न., आच्छादनम् ( चचि. २५.४१ ) पु., वनस्पति० आर्तगलः ( सहचरभेदः ) ( रा. १०.४१७ पृ. ६४ )

**छादयत्**-वि. पूरयत् ( सुउ. ४९.६ )

**छाया**-स्त्री., आतपाभावः आतपस्थितानां वृक्षादीनां स्वाकृत्यवच्छिन्नातपाभावः ( चचि. १.३९; सुसू. ३४.५ ; सुचि. २४.८६ ) प्रकाशस्थितानामपि वृक्षादीनां वा स्वाकृत्यवाच्छि-न्नप्रकाशाभावः

दर्पणगतं प्रतिबिम्बम् ( चचि. ९.१८ )
वर्णः प्रभा ( चसू. २४.३६ ) "वर्णमाक्रामति च्छाया प्रभा वर्णप्रकाशिनी। आसन्ना लक्ष्यते च्छाया प्रभा दूराच्च लक्ष्यते" ( चइं. ७.१६ )
वर्णप्रभाश्रयं प्रतिच्छायास्वरूपं वा रूपविशेषः। ( चवि. ४,७ ) छाया पञ्चविधा-तत्र आकाशाद् अमलखड्गाकाशनीलनिर्मला सस्नेहा सप्रभेव। वातात्पांशुभस्मरूक्षारुजोऽरुणा श्यावा निष्प्रभा स्वेदमलगन्धिः। तेजसो हुतहुताशविद्युत्तप्ततपनीयरक्ता दृष्टिसुखा। अम्भसो वैदूर्येन्द्रनीलविमला घना सुस्निग्धा। भुवो रुचिराभा घना स्थिरा स्निग्धा शुद्धा, श्यामा श्वेता च। तासां वायव्या विनाशाय क्लेशाय चातिमहते, शेषास्तु सुखोदयाः। ( असंशा. ९.६ ; चइं. ७,१० )
( सुसू. ३१ ; चइ. ७ )
पोगरलोहविशेषः। अत्र पाठभेदोपलब्ध्या 'छाया' पदम् ( र. ५.७८ )

**-विप्रतिपत्ति**-स्त्री., अध्यायसंज्ञा० छायावैकृतम् विप्रतिपत्तिर्विपरीतावबोधः ( सुसू. ३१.१ ) छाया पञ्चविधा-स्निग्धा विमला रूक्षा मलिना संक्षिप्ता इति। वर्णश्चतुर्विधः—गौरः, कृष्णः, श्यामः, गौरश्यामः। प्रभा सप्तविधा-रक्ता, पीता, सिता, श्यावा, हरिता, पाण्डुरा, असिता इति
( सुसू. ३१ )

**-विवर्तन**-न., ( परिव. ) छायायाः अन्यथा भवनं छायावैकृतमित्यर्थः, छायाविषयकरिष्टलक्षणम्
( चइ. ७.७ )

**-विशुष्क**-वि., छायायां शुष्कम्
( सुउ. ६२.३२ )

**-शुष्क**-वि., छायायां शुष्कम् ( सुउ. १७.१८ ; चचि. २३.१०४ )

**छासि**-न., तक्रम् ( ध. ६.२११ पृ. २४६ )

**छिद्र**-वि., अवकाशः, स्रोतः, रन्ध्रम् ( सुशा. १.१९ ; चशा. ७.१२ ; चइ. ८.२०; चचि. ४.१६ )
अस्य शब्दस्य दैवादित्वेन दैवादिशब्देषु एव संनिवेशः साधुः। दैवकृतं छिद्रम्-नेत्रे कर्णपाल्यां च सिराजालवर्जितं शास्त्रनिर्दिष्टं स्थानम् ( सुउ. १७.५९; सुसू. १६.३ ) दैवकृते छिद्रे इति दैवेन कर्णव्यधार्थं सूर्यालोकदृश्यमानप्रतनुप्रदेशरूपं सिरादिभी रहितं, निर्लोहितागमनं च छिद्रं कृतमस्तीति भावः ( सुसू. १६.३ )

**-प्रहारिन्**-वि., छिद्रेषु प्रहर्तुमस्ति शीलमस्येति छिद्रप्रहारी ( चशा. ४.३८. ( २ )

**-वैदेही**-स्त्री., वनस्पति० गजपिप्पली
( रा. ६.११७ ; पृ. ८५ )

**छिद्रान्त**-पु., वनस्पति० नलः ( रा. ८.२२२; पृ. १६२ )

**छिद्राफल**-न., भैषज्यद्रव्य० मायाफलम्
( रापरि. ६.२२ पृ. ३४६ )

**छिद्रिन्**-वि., सच्छिद्रः कृमिकृतच्छिद्रः ( दन्तः )
( सुनि. १६.२९ )

**छिद्रोदर**-न., रोग० उदररोगभेद० ( चचि. १३.४३ ; सुचि. १४.१७ ; सुनि. ७.१९; चसू. १९.४ (१); असंनि. १२.३६ ; अहृसू. १९,५ )
द्र० 'उदर'

**छिन्न**-वि., सद्योव्रणस्य प्रकारः ( सुचि. २.९ ) ऋजुस्तिरश्चीनोऽपि आयतो व्रणो गात्रस्य च पातनं हस्तादिसम्बद्धं छिन्नम् इत्यभिधीयते ( सुचि. २.१० )
अस्थिभग्नस्य प्रकारः, अन्यतरपार्श्वावशिष्टं छिन्नम्
( सुनि. १५.१० )
महाकुष्ठेष्ववस्था० ( र. २९.२६ )
पु., श्वासभेद०, छिन्नश्वासः द्र० 'छिन्नश्वास, श्वास' ( सुउ. ५१.११ )

**( छिन्ना )**-स्त्री., वनस्पति० गुडूची ( ध. १.१; पृ. ७ र. २२.७५ )
महामुण्डी ( रा. ५.२२० पृ. ३८ )

**-ग्रन्थिनिका**-स्त्री., वनस्पति० मुण्डी
( ध. १.१६० ; पृ. ३० )

**-ग्रन्थी**-स्त्री., वनस्पति० तिलकन्दः
( रापरि. ७.५३; पृ. ३५१ )

**-पत्रा**-स्त्री., वनस्पति० अम्बष्ठा
( रा. ४.१७१; पृ. ११८ )

**-रुह**-पु., वनस्पति० तिलकः
( रा. १०.२६६; पृ. २०२ )

**-( रुहा )** स्त्री., वनस्पति० गुडूची
( ध. १.१० पृ. ७ सुसू. ३८.३५ र. २८.४१ )
सल्लकी ( रा. ११.१९७ पृ. १२२ )
केतकीभेदः, सुवर्णकेतकी ( रा. १०३, पृ. २०४ )

**-रूढ**-वि., पूर्वं छिन्नः पश्चाद्रूढः शालि०

**-रोहा**-स्त्री., वनस्पति० गुडूची
( असंसू. १६.३९; अहृसू. १५.४५ )

**-श्वास**-पु., श्वासभेदः, पञ्चश्वासप्रकारेष्वेकः ( चसू. १९.४; चचि. १७.५२ ) लक्षणम्-आध्मानं बस्तिदाहः सवेदनं कष्टाच्छ्वसनम्
( सुउ. ५१.११ )

छिन्नांशुका–स्त्री., विषमच्छिन्नदग्धाभा सरुग् दृष्टिः ( असंउ. १७. )

छिन्नाङ्गी–स्त्री., वनस्पति० गुडूची ( ध. १.२ पृ. ८ )

छिन्नोद्भवा–स्त्री., वनस्पति० गुडूची ( ध. १.१ पृ. ७. )

छिल्लि–स्त्री., वृक्षत्वक् ( र. १८.११४ )

छिल्ली–स्त्री., वृक्षत्वक् ( र. १७.१८ )

छुच्छुन्दर–पु., मूषिक० तद्दष्टलक्षणं–तृट्, छर्दिर्ज्वरो, दौर्बल्यं, ग्रीवास्तम्भः, पृष्ठशोफो, गन्धाज्ञानं, विसूचिका च ( सुक. ७.१६–१७ असंउ ४६ )

( छुच्छुन्दरी )–स्त्री., मूषिक०, गन्धमूषिका ( सुशा. १०.५१ असंशा. १२.९ )

छुरिकापत्री–स्त्री., वनस्पति० श्वेता ( रापरि. ५.४६ पृ. ३४४ )

छेद–पु., छेदनम्, द्वैधीकरणम् ( सुसू. १८.२१ )

भ्रूगण्डशङ्खललाटाक्षिपुटौदन्तवेष्टककक्षाकुक्षिवङ्क्षणेषु तिर्यक्छेदः उक्तः ( सुसू. ५.१३ )

लक्षण० ( चसू. १७.२९ )

–शब्द–पु., छेदशब्दोच्चारणं शुभसूचकम् 'ग्रन्थ्यर्बुदादिषु रोगेषु सदा छेदशब्दस्तु पूजितः' ( सुसू. २९.४२ )

छेदक–न., खनिजधातु० कान्तलोहम् ( रा. १३.२८ पृ. २११ )

छेदन–न., उपक्रम०, शल्यतन्त्रे शस्त्रादिना द्विधा अनेकधा वा करणम् (चसू. ११.५५, सुचि. १.८) ( सुचि. १५.३ )

षड्विधशस्त्रकर्मस्वेकम् ( चचि. २५.५५ )

साक्षाच्छेदनक्रियाजन्यवेदनासदृशो वेदनाविशेषः ( सुसू. २२.११ )

छिद्यंते शारीरावयवा अनेन इति छेदनं ( शस्त्रम् ) ( चशा. ८.४४ )

छेदनावकाश–पु., छेदनस्थानम् ( चशा. ८.४४ )

छेदनीय–वि., अपतर्पणकारकम् ( चसू. २६.८ )

पु., वनस्पति० कतकम् ( ध. ३.१७२ पृ. १२९ )

छेदिन्–वि., मेदःश्लेष्मादिग्रन्थिघ्नः ( क्षारकर्मविशेषः ) ( अहृसू. ६.१५१ )

छेद्य–न., अष्टविधशस्त्रकर्मस्वेकम् ( सुसू. ५.५ )

छेद्या रोगाः–भगन्दरो, ग्रन्थिः, श्लैष्मिकस्तिलकालको व्रणवर्त्म, सर्वाण्यर्बुदानि, अर्शो वातिकं श्लैष्मिकं च, चर्मकीलोऽस्थिमांसगं शल्यं, जतुमणिर्मांससंघातो, गलशुण्डिका, स्नायुमांससिराकोथो वल्मीकं, शतपोनकोऽधृष उपदंशो मांसकन्धाधिमांसकश्च ( सुसू. २५.३–५ )

–रोगप्रतिषेध–पु., अध्याय० ( सुउ. १५.१ )

## ज

जगत्–न., सृष्टिः ( सुशा. १.३ )

–प्रधानभिषज्–पु., श्रीधन्वन्तरिः ( र. १.१ )

जगल–पु., आसुत० भक्तकिण्वकृता सुरा ( चसू. २७.१८१ )

मद्यस्य घनतरभागः, तस्य गुणाः–ग्राही, उष्णः पक्ता रूक्षः, तृट्कफशोफकृत्, हृद्यः, प्रवाहिकाऽऽटोपदुर्नामाऽनिलशोषहृत् ( सुसू. ४५.१८०–८१ )

शोफघ्नः ( चसू. २७.१८१ )

जग्ध–वि., भक्षितम् ( सुचि. ९.५२ )

जघन–पु., प्रत्यंग० कट्याः पुरोभागः, भगास्थिसमीपो भागः ( सुशा. ३.८ ) अस्थिवहानां स्रोतसां मेदो मूलं जघनं च (चवि. ५.८ ) कट्याः पश्चिमो भागः ( सुशा. ६.२६ )

स्त्रीकटिः ( सुशा. १०.६ )

–सक्त–वि., कटिसक्तः ( सुचि. १५.१२ )

जघन्य–वि., पश्चाद्भवम् ( चसू. २०.७ )

अन्तिमम् ( सुचि. ७.२८ )

–वेग–पु., अल्पो हीनो वा वेगः वमने जघन्य–मध्य–प्रवरा इति त्रयो वेगा भवन्ति तथैव विरेचनेऽपि ( चसि. १.१३ )

जङ्गम–वि., गतिशीलः प्राणी, मनुष्यादिः ( चसू. २६.३९ )

पु., चतुर्विधाः जङ्गमाः जरायुजः अण्डजः स्वेदजः उद्भिज्जश्च ( सुसू. १.३० )

–विष–न., विष०, जङ्गमप्राणिनां विषम्; सर्पाः कीटोन्दुरालूतावृश्चिका गृहगोधिकाः। जलौकामत्स्यमंडूकाः कणभाः सकृकंटकाः। श्वसिंहव्याघ्रगोमायुतरक्षुनकुलादयः ये चापि दंष्ट्रिणः तेषां दंष्ट्रोत्थं विषं जङ्गमं विषमित्युच्यते ( चचि. २३.९–२० )

तस्याधिष्ठानानि 'दृष्टिनिःश्वासदंष्ट्रानखमूत्रपुरीषशुक्रलालार्तवमुखसन्दंशविशर्धिततुण्डास्थिपित्तशूकशवानीति' ( सुक. ३.४ )

विषजन्यलक्षणानि–निद्रां तंद्रां क्लमं दाहं सपाकं लोमहर्षणं शोफमतिसारं च जनयेत् ( चचि. २३.१५ )

–विषविज्ञानीय–वि., अध्याय० ( सुक. ३.१ )

जङ्गमात्मक–वि., प्राणिजः स्नेहादिः, जङ्गमात्मकस्तु वसा मज्जा सर्पिरिति ( चवि. ८.१५० )

जङ्घा–स्त्री., शारीर० गुल्फजानुमध्यः, जान्वधस्ताद्भागः ( चवि. ८.११७ )

**-पिण्डिका**-स्त्री., जङ्घाया मांसपिण्डम्, षट्पञ्चाशत्प्रत्यङ्गेष्वेकम् ( चशा. ७.११ )

**-मध्य**-न., जङ्घाया मध्यम् ( असंशा. ८.३० )

**-रुजा**-स्त्री., लक्षण० जङ्घायाः शूलम् ( अहसू. १४.३० )

**-शूल**-पु., लक्षण० जङ्घायाः शूलमयी वेदना ( चसि. २.१६ )

**-शोष**-पु., लक्षण०, जङ्घायाः शोषः ( चसि. २.१६ )

**-संग्रह**-पु., लक्षण० जङ्घाया आकुञ्चनादिकर्माक्षमत्वम् ( चसू. १४.२३ )

**-सदन**-न., लक्षण० जङ्घायाः सादो नाम अवसादोऽनुत्साहः, तेन जङ्घादौर्बल्यम् ( चसि. ७.४१ )

**-स्तम्भ**-पु., लक्षण० जङ्घायाः स्तम्भः ( चसि. २.१६ )

**जङ्घार्ति**-स्त्री., लक्षण० जङ्घाशूलम् ( चसू. १४.२३ )

**जङ्घाल**-पु., पशु० प्रशस्तजङ्घावान् पशुरित्यर्थः । एणहरिणर्क्षकुरङ्गकरालकृतमालशरभश्वदंष्ट्रापृषतचारुष्कर-मृगमातृकाप्रभृतयः जंघालाः ( सुसू. ४६.५४ ) तन्मांसगुणाः—कषायं मधुरं लघु वातपित्तहरं तीक्ष्णं हृद्यं बस्तिशोधनञ्च ( सुसू. ४६.५४ )

**जङ्घास्थि**-न., शारीर० जंघादेशस्थोऽस्थिविशेषः ( सुशा. ५.१९ )

**जटा**-स्त्री., वनस्पति० मूलम् ( र. ५.१८० ) मूळ.
स्त्री., वनस्पति० जटामांसी ( सुक. ६.१५ )

**-मांसी**-स्त्री., वनस्पति० १ क्षुपं, हिमालयेऽत्युच्चप्रदेशेऽस्योत्पत्तिः, तत्कंदः कंदतैलं च चिकित्सायामुपयुज्यते; ससूक्ष्मकेसरापिङ्गजटाकृतिः, मधुरा, तिक्ता, कषाया, शीता, स्निग्धा, कान्तिबलप्रदा, पित्तघ्नी, मेध्या, दाहविसर्पकुष्ठभूतपित्तमदनाशिनी च ( र. १०.१६.१८ ) २ कृष्णजटामांसीभेदः, तद्गुणाः—मधुरा, कषाया, बल्या, त्वचाकान्तिप्रसादनी, वातकफघ्नी, विषपित्तास्रनाशिनी (ध. ३.४५) ३ भूतजटामांसी, मांसीभेदः, तद्गुणाः—कषाया कटुः शीतला, मोदकान्तिकारिणी, पित्तकफघ्नी, भूतदाहघ्नी ( रा. १२.९२ ) 'मांसीद्वयं कषायं च वर्ण्यपित्तकफापहं रक्षोघ्नं च सुगन्धि स्याद्दाहघ्नं केश्यमुत्तमम्' ( ध. ३.४८ ) ४ आकाशमांसी (अभ्रमांसी) मांसीभेदः, शीता, वर्ण्या, शोफनाडीव्रणरुजालतागर्दभजालनाशिनी ( रा. १२.९६ )
हिं.—जटामांसी.
**म.—जटामांसी.**
गु.—जटामांसी.
बं.—जटामांसी.
ता.—जटामांसी.
फा.—सुबुल.

**-मूला**-स्त्री., वनस्पति० शतावरी ( रा. ४.४३९ )

**-रुद्रा**-स्त्री., वनस्पति० रुद्रजटा ( रा. परि. ३.२५ )

**-वती**-स्त्री., वनस्पति० जटामांसी ( रा. १२.९१ )

**-वल्ली**-स्त्री., वनस्पति० रुद्रजटा ( रा. परि. ३.२५ )

**जटायु**-पु., वनस्पति० गुग्गुलुः ( ध. ३.१२७ )

**जटाल**-पु., वनस्पति० वटः ( रा. ११.११३ )
मुष्ककः ( रा. ११.२२१ )
गुग्गुलुः ( रा. १२.१८३ )

**( जटाला )**-स्त्री., वनस्पति० जटामांसी ( रा. १२.९१ )

**जटिन्**-पु., प्रतुदपक्षि० (चसू. २७.५१ )
सौम्यकीट० श्लेष्मप्रकोपणः ( असंउ. ४३ )

**जटिल**-पु., वनस्पति० कर्चूरः ( रा. ६.१५६ )
दमनः ( रा. १०.११९ )

**-( जटिला )**-स्त्री., वनस्पति० वचा ( काखिल ११.९६ )
जटामांसी ( चसू.४.१८ )
गुञ्जा ( चसू. ४.१२ )

**जटिलीभावः** पु., केशानामन्योन्यमेलनम् ( चनि. ४.४७; सुनि. ६.५ )

**जटीभूत**-वि., जटा इव परस्परसंयुक्तम् ( चइं. ८.४ )

**जठर**-न., शारीर० अग्न्यधिष्ठानमुदरम् ( चचि.१३.३७)
रोग० उदररोगः ( सुनि. ७.७ )

**-व्यथा**-स्त्री., रोग० उदररोगः ( र. २.५३ )
अतिसारः ( र. २.५३ )

**-शिखिन्**-पुं., जाठराग्निः( र, २७.६६ )

**जठरामय** पु., रोग० अतिसारः ( चचि. १९.८५ )
उदररोगः ( र. २२.२८ )

**जठरार्दित**-वि., जठररोगेण नाम उदररोगेण पीडितः ( चसू. १३.५५)

**जठरिन्**- वि., उदररोगयुक्तः ( चइ. ६.११ )

**जड**-वि., मन्दबुद्धिः ( चशा. ३.१५ )
न., खनिज० सीसकम् ( रा. १३.२० )

**-ता**-स्त्री., लक्षण० निःस्पन्दता ( सुक. ४.३७ )

**जतु**-न., वनस्पति० लाक्षा ( सुसू. २७.१८ ) ( ध. ३.८२ )

–कृता–वि., लाक्षामयी ( सुचि. २०.४३ )
–द्रुम–पु., वनस्पति० कोशाम्रः ( ध. ५.९ )
–पादप–पु., वनस्पति० कोशाम्रः ( ध. ५.९ )
–प्रकाश–वि., लाक्षाप्रकाशः, लाक्षासदृश इत्यर्थः ( सुचि., १३.४ )
–मणि–पु., क्षुद्ररोग० तत्स्वरूपम्, नीरुजं, समसुत्सन्नं, मण्डलमीषद्रक्तं, श्लक्ष्णं, सहजम् ( सुनि. १३.४१ )
चर्मकीलसदृशः सरुजः ( असंउ.३६.३१६ )
एनं समुत्कृत्य क्षारेण वह्निना वा प्रदहेत् ( सुचि. २०.३२–३३ )
अयं छेद्यः ( सुसू. २५.४–५ )
–मुख–पु., धान्य० व्रीहिभेदः जतु लाक्षा, तदाकृति मुखं यस्यासौ जतुमुखः, व्रीहिविशेषः ( सुसू. ४६.१२ ङ )
–श्रुत–वि., लाक्षालिप्तम् ( असंचि. १० )
**जतुका**–स्त्री., वनस्पति० जन्तुका ( ध. ४.८८ )
प्राणि०, चर्मचटिका ( चचि. १४.४८ )
**जतूकर्ण**–पु., पुनर्वसोरात्रेयस्य शिष्यः, तन्त्रकर्तॄणामेकतमः ( चसू. १.३१ )
**जतूमुख**–पु., धान्य० व्रीहिः ( अहृसू. ६.८ )
**जत्रु**–न., शारीर० स्कन्धकक्षासन्ध्यस्थि ( चशा. ७.६ )
ग्रीवामूलम् ( सुसू. ४६.४४० )
–मूल–न., शारीर० कण्ठादधोविद्यमानो जत्रुद्वयमध्यभागः ( असंनि. ४.२१ )
–हुण्डन–न., लक्षण० हुण्डनं शिरःप्रभृतीनामन्तःप्रवेशः; वक्षस उपरोधः ( चचि. २८.२२ )
**जत्वश्मक–जत्वश्मज**–न., खनिज० शिलाजतु ( रा. १३.२२९ )
**जन**–पु., लोकः ( चनि. ६.१३ )
**( जन )–पद**–पु., जनवसतिस्थानम् ( चवि. ३.२० )
मण्डलम् ( चक. चनि. ६.१३ )
–पदमण्डल–न., जनपदानां समूहः ( चवि. ३.३ )
–पदोद्ध्वंस–पु., असामान्यवतामप्येभिः प्रकृत्यादिभिर्भावैर्मनुष्याणां येऽन्ये भावाः सामान्यास्तद्वैगुण्यात् समानकालाः समानलिङ्गाश्च व्याधयोऽभिनिर्वर्तमाना जनपदमुद्ध्वंसयन्ति । ते तु खल्विमे भावाः सामान्या जनपदेषु भवन्ति; तद्यथा–वायुरुदकं, देशः, काल इति । तत्र वातमेवंविधमनारोग्यकरं विद्यात्, तद्यथा–यथर्तुविषममतिस्तिमितमतिचलमतिपरुषमतिशीतमत्युष्णमतिरूक्षमत्यभिष्यन्दिनमतिभैरवारावमतिप्रतिहतपरस्परगतिमति कुण्डलिनमसात्म्यगन्धबाष्पसिकतापांशुधूमोपहतमिति । उदकं तु खल्वत्यर्थविकृतगन्धवर्णरसस्पर्शं क्लेदबहुलमपक्रान्तजलचरविहङ्गमुपक्षीणजलाशयमप्रीतिकरमपगतगुणं विद्यात् । देशं पुनः प्रकृतिविकृतवर्णगन्धरसस्पर्शं क्लेदबहुलमुपसृष्टं सरीसृपव्यालमशकशलभमक्षिकामूषकोलूकश्माशानिकशकुनिजम्बूकादिभिस्तृणोलूपोपवनवन्तं प्रतानादिबहुलमपूर्ववदवपतितशुष्कनष्टशस्यं धूम्रपवनं प्रध्मातपतत्रिगणमुत्क्रुष्टश्वगणमुद्भ्रान्तव्यथितविविधमृगपक्षिसङ्घमुत्सृष्टनष्टधर्मसत्यलज्जाचारशीलगुणजनपदं शश्वत्क्षुभितोदीर्णसलिलाशयं प्रततोल्कापातनिर्घातभूमिकम्पमतिभयारावरूपं रूक्षताम्रारुणसिताभ्रजालसंवृतार्कचन्द्रतारकमभीक्ष्णं ससंभ्रमोद्वेगमिव सत्रासरुदितमिव सतमस्कमिव गुह्यकाचरितमिवाक्रन्दितशब्दबहुलं चाहितं विद्यात् । कालं तु खलु यथर्तुलिङ्गाद्विपरीतलिङ्गमतिलिङ्गं हीनलिङ्गं चाहितं व्यवस्येत् ( चवि. ३.१३–७ ) स्वभावतो वाताजलं, जलाद्देशं, देशात्कालं गरीयस्तरं विद्यात् । वाय्वादीनां यद्वैगुण्यमुत्पद्यते तस्य मूलमधर्मः, तन्मूलं वाऽसत्कर्म पूर्वकृतं, तयोर्योनिः प्रज्ञापराध एव । तथा शस्त्रप्रभवस्यापि जनपदोद्ध्वंसस्याधर्म एव हेतुर्भवति । तस्य प्रतिकारोपायाः पञ्च कर्माणि, विधिवद्रसायनोपयोगः, भेषजैर्देहवृत्तिः, सत्यं, दया, दानं, बलयः, देवतार्चनं, सद्वृत्तानुवर्तनं, शान्तिः, आत्मरक्षणं, शिवानां जनपदानां सेवनं, ब्रह्मचर्यं, ब्रह्मचारिणां च सेवनं, धर्मशास्त्रादिश्रवणं, सात्त्विकैः धार्मिकैः सह संवादः ( चवि. ३.१३–१७ )
–पदोद्ध्वंसकर–वि., जनपदानामुद्ध्वंसं करोति इति जनपदोद्ध्वंसकरः जनपदानामुद्ध्वंसो येन भवति तत् ( चवि. ३.७ )
–पदोद्ध्वंसन–न., जनपदोद्ध्वंसः ( चवि. ३.५ )
–पदोद्ध्वंसनीय–वि., अध्याय० ( चवि. ३.१ )
–प्रिय–पु., वनस्पति० नीलशिग्रुः ( रा. ७.६२ ) द्रष्टव्यं ' शिग्रु; '
धान्यकम् ( रा. ६.९८ )
–वल्लभ–पु., वनस्पति० रोहितकभेदः, श्वेतरोहितः ( रा. ८.२१८ ) द्रष्टव्यं ' रोहितक; '
**जनक**–पु., राजर्षि० वैदेहः ( चशा. ६.२१ )
**जननी**–स्त्री., माता ( कासू. लेहाध्याय )
वनस्पति० मञ्जिष्ठा ( रा. ६.१६ )

जन्तुका ( ध. ४.८८ ) द्र० 'जतुका'
कटुका ( ध. १.३८ )
जटामांसी ( रा. १२.९१ )
अलक्तकः ( रा. ६.१२ )

**( जना )**–स्त्री., वनस्पति० कटुका ( ध. १.३८ )

**जनिष्ठा**–स्त्री., वनस्पति० हरिद्रा ( रा. ६.७९ )

**जनेष्ट**–पु., वनस्पति० मुद्गरः ( रा. १०.२२ )

**( जनेष्टा )**–स्त्री., वनस्पति० जन्तुका ( रा. ३.१२८ ) द्र० 'जतुका'.
ऋद्धिः ( रा. ५.१८८ )
जाती ( रा. १०.२३२ )

**जन्ती**–स्त्री., जयन्ती, कृमिपर्यायः ( र. २०.२२२ )

**जन्तीनु**–स्त्री., वनस्पति० काकोदुम्बरिका ( र. २०.२२२ )

**जन्तु**–पु., नरः ( चचि. ३.२०७ )
कीट० ( चचि. ७.३६ )
कृमिः ( सुसू. ४६.२४५ )
रोगोत्पादकः कृमिः ( र. ५.१९३ )
यूका ( सुचि. २४.२९ )

**–कम्बु**–पु., भैषज्य० कृमिशङ्खः ( रा. १३.२४७ )

**–कारी**–स्त्री., वनस्पति० जन्तुका ( ध. ४.८८ ) द्र० 'जतुका'.
अलक्तकः ( रा. ६.१२ )

**–कार्दित**–वि., ( क्षुद्र ) जन्तुदष्टः, जन्तुदष्टबालस्य लक्षणानि–स्वस्थोऽपि बालो निशि न शेते, रक्तबिन्दुचिताङ्गश्च भवति ( कासू. २५.३९ )

**–कृष्णा**–स्त्री., वनस्पति० जन्तुका ( ध. ४.८८ ) द्र० 'जतुका'.

**–घ्न**–पु., वनस्पति० मातुलुङ्गः ( रा. ११.२७ )
हिङ्गु ( ध. २.३६ )
विडङ्गम् ( र. ५.२०२ )

**( –घ्नी )**–स्त्री., विडङ्गम् ( रा. ६.१५ )

**–घ्नी वटी**–स्त्री., पारदयोग० पारदगन्धकमण्डूराखुकर्ण्यादिभिः सिद्धो भल्लातकपलाशबीजादियुक्तोऽयं योगः कृमिकुष्ठनाशकः ( र. २०.१३०.३६ )

**–जग्ध**–वि., जन्तुभिर्भक्षितम् ( अहसू. ५.४४ )

**–जित्**–पु., वनस्पति० जम्बीरः ( रा. ११.१८ )

**–जुष्ट**–वि., जन्तुयुक्तम् ( अहसू. ६.१४१ )

**–दुष्ट**–वि., कृमिदुष्टम् ( असंसू. ४०.५ )

**–नाशन**–पु. वनस्पति० यवानिका ( ध. २.९३ )
न., हिङ्गुः ( रा. ६.५९ )

**–फल**–पु., वनस्पति० उदुम्बरः (रा. ११.१३७)

**–माता**–पु., कृमि० शोणितजः ( चसू. १९.४.( ९ )

**–मारी**–स्त्री., वनस्पति० निम्बूकः (रा. ११.१२)

**–रस**–पु., वनस्पति० अलक्तकः (रा. ६.१२)

**–हन्त्री**–स्त्री., वनस्पति० विडङ्गम् ( ध. २.११ )

**जन्तुका**–स्त्री., वनस्पति० लाक्षा ( रा. ६.१४२ )
नाडीहिङ्गु ( ध. २.४० )
लता० कृष्णवल्ली, वृक्षरुहा, बहुपत्रा, दीर्घफला, तिर्यक्फला कपिकच्छूफलोपमा इत्यस्याः स्वरूपम् ( रा. ३.१२७.२९ ) गुणाः–तिक्ता, शीता, रुचिकरी, दीपनी, पित्तकफघ्नी, दाहतृष्णावमिघ्नी, रक्तदोषनाशिनी ( ध. ४.८८ ) द्र० 'जतुका'

**जन्तुमत्**–वि., कृमियुक्तम् ( अहसू. ५.७ )

**जन्मन्**–न., जननम् ( चशा. ३.८ )

**( जन्म )–काल**–पु., प्रसवकालः ( सुनि. ८.१४ )

**–बलप्रवृत्त**–वि., शुक्रशोणितदुष्टिं विनाऽपि मातुरपचारबलजातः ( रोगः ) ( ड. सुसू. २४.५ )

**जन्मर्क्ष**–पु., जन्मराशिः ( इन्दुः असंशा० १२.१४ )
जन्मनक्षत्रम् ( सुसू. ३२.४ )

**जन्मादि**–पु., गर्भाधानकालः जन्मन आदिरुत्पत्तिः कारणं वा, तेन गर्भाधानकालोऽपि ( अरु. अहसू. १.९ )

**जप**–पु., कर्म० ईश्वरस्मरणम् । ॐकारपूर्वकगायत्र्याद्यावर्तनम् 'तज्जपस्तदर्थभावना' इति योगसूत्रमप्यनुसन्धेयम् ( ड. सुउ. ६०.२८.२९ )

**( जपा )**–स्त्री., वनस्पति० गुणाः–कटुः उष्णा इन्द्रलुप्तकनाशकृत् ( रा. १०.३९ )
हिं.—जासन्द.
म.—**जासवन्द**.
गु.—जासुद.
बं.—जाबा.
ता.—शाम्बरात्तै.

**जमदग्नि**–पु., ऋषि० रोगापहरणचिन्तनार्थं हिमवतः पार्श्वे समेतेषु महर्षिष्वेकः ( चसू. ७.८ )

**जम्बीर**–पु., न., वनस्पति० फणिजकः ( ध. ४.५२ )
अर्जकः ( रा. १०.८४ )
मरुबकः ( ध. ४.५४ )
शाक० हरितशाकमुत्तरापथे जम्बीरगन्धि किञ्चिदम्लम् ( ड ). तस्य गुणाः—पाचनस्तीक्ष्णः, सुरभिर्मुखवैशद्यकारको रुच्यो, दीपनो, वातकफघ्नः, कृमिनाशकः ( चसू. २७.१६० सुसू. ४६.२३२ )

वनस्पति० बृहन्निम्बूकं वक्त्रशोधि दन्तहर्षणं मधुरं अम्लं कटुकं गुरु रुच्यं तर्पणं वातकफघ्नं पित्तलं तृष्णाशूलकफोत्क्लेशच्छर्दिश्वासनिवारणम् ( सुसू. ४६.१६२ ) नात्यम्लं जम्बीरं गुरु वातश्लेष्मविबन्धहृच्च कटुकमधुरं अम्लं सुप्रतीतं जम्बीरं रुच्यं दीपनं त्रिदोषघ्नं अतिसारे तर्पणम्। जम्बीरफलगुणाः– तत्रामं–मधुरं अम्लं रुच्यं दीपनं पाचनं बल्यं पथ्यं वातघ्नं पित्तकारकं पक्वफलं मधुरं रुच्यं तर्पणं पुष्टिप्रदं, वर्ण्यं पित्तकफनाशनं वीर्यवर्धनं च (रा. ५.१४)

हिं.—जम्बीर, पहाडी निम्बू.
म.—**लिम्बू.**
गु.—मोटुनिम्बु.
बं.—कर्णनेम्बु.
ता.—पेरिया एलिमिच्चम्.

**जम्बु**–पु., वनस्पति० जम्बूः ( चसू. ४.१५ )

**जम्बुक**–पु., पशु० शृगालः ( चसू. २७.३६ )
वनस्पति० टिण्टुकः ( १.११५ )

**(जम्बुका )** स्त्री., वनस्पति० द्राक्षाभेदः, काकलीद्राक्षा, ( र. ११.७९ ) द्र० 'द्राक्षा'.

**जम्बू**–पु., पशु०, शृगालः ( र. १८.१७९ )
वनस्पति० फलविशेषः, मधुरः, अम्लः, कषायः, शीतो रुच्यो ग्राही, पित्तकफघ्नो भृशवातलः ( चसू. २७.१४० ) मूत्रसंग्रहणीयगणे पुरीषविरजनीयगणे चैकं द्रव्यम् ( चसू. ४.१५ ) छर्दिघ्नः ( चसू. ४.१४ ) रक्तपित्तशमनः ( सुउ. ४५.२३ ) अकण्ठ्यः ( अहृसू. ६.१२८ ) तस्य पत्राणि कुकूणके रोगे नेत्रधावनार्थमुपयुज्यन्ते ( सुउ. १९.१३ ) श्रमदाहकण्ठरोगशोषकासश्वासातिसारकृमिघ्नः स च राजजम्बूकाकजम्बू (=क्षुद्रजम्बू ) भूमिजम्बूभेदेन त्रिविधः। महाजम्बूगुणाः– मधुरः, कषायः, उष्णः, विष्टम्भकरः, श्रमहरः, स्वर्यः, कफघ्नः, शोषश्रमातिसारश्वासकासघ्नः। काकजम्बूगुणाः–मधुरकषायाम्लः, मधुरपाकी, गुरुर्दाहश्रमातिसारघ्नो, वीर्यपुष्टिबलप्रदः। भूमिजम्बूगुणाः–कषायो, मधुरो, ग्राही, पित्तकफघ्नो, हृद्यः, कण्ठदोषघ्नो, वीर्यपुष्टिप्रदः ( रा. ११. १२८–३५ ) जम्बूफलास्थिगुणाः–संग्राही ( चसू. २.२८ ) दन्तकाष्ठगते विषे जिह्वादन्तौष्ठमांसानां शोथे प्रतिसारणार्थमुपयुज्यते ( सुक. १.४८–४९ )



हिं.—जामुन, जाम.
म.—**जाम्भूळ.**
गु.—जाम्बूदो.
बं.—कालाजाम.
ता.—नागम्.
वनस्पति० नागदमनी, कटुस्तिक्ता उष्णा तीक्ष्णा त्रिदोषघ्नी उदराध्मानदोषघ्नी कोष्ठशोधनकारिणी ( रा. परि. ५.२४–२५ )

**–द्वय**– न., वनस्पति० जम्बूभेदौ, एको राजजम्बूर्बृहत्फलो, द्वितीयः काकजम्बूः स्वल्पफलः ( ड. सुसू. ३८.४८ ) द्र० 'जम्बू'

**–फलास्थि**–न., जम्बूफलस्य बीजम् ( सुक. १.४९ )

**जम्बूक**–पु., पशु० शृगालः वातकफजोन्मादे जम्बूकस्य पित्तमूत्रशकृल्लोमनखैश्चर्मभिः सेकाञ्जनं प्रधमनं नस्यं धूमं च कारयेत् ( चचि. ९.७४ )
वनस्पति० टिण्टुकः ( रा. ९.१४२ )
वनस्पति० केतकी ( ध. ५.१४ )

**जम्ब्वस्थि**–न., जम्बूफलास्थिः ( चचि. १९.५४ )

**जम्ब्वोष्ठ**–न., यन्त्र० जम्ब्वोष्ठं जम्बूफलसदृशमुखाग्रा कृष्णपाषाणरचिता वर्तिः ( सुचि. ८.३२ ) दहनोपकरणेष्वेकम् ( सुसू. १२.४ )

**जम्भ**–पु., वनस्पति० जम्बीरः ( ध. ५.१४ )

**जम्भल**–पु., वनस्पति० जम्बीरः ( ध. ५.१४ )
वनस्पति० अर्कः ( ध. ४.१३ )

**जम्भीर**–पु., वनस्पति० जम्बीरः ( रा. ११.१८ )

**जय**–पु., देवता० विषशमनमन्त्रे उल्लिखितः,
'पिष्यमाणमिमं चात्र सिद्धं मन्त्रमुदीरयेत्।
मम माता जया नाम जयो नामेति मे पिता
( चचि. २३. ९० )

**( जय )–पाल**–पु., वनस्पति० दन्तीबीजम् ( ध. १.२२७ )

**–पालरस**–पु., पारदयोग० गन्धकताम्रजयपालयुक्तः पाण्डुशोथघ्नः ( र., १९.९१–९२ )

**–सुन्दर** पु., पारदयोग० पारदसुवर्णरौप्यताम्रादियुक्तः, सूतिकारोगवन्ध्यत्वघ्नः ( र. २२.५–१४ )

**जयन्तिका**–स्त्री., वनस्पति० हरिद्रा (रा. ६.८१)

**जयन्ती**–स्त्री.,वनस्पति० हरिद्रा ( ध, १.५५ )
अग्निमन्थः ( ११.५२–५७ )
चक्रमर्दः ( र. ३.१०४–५ )
बलामोटा ( ध. ४.१ )

**( जया )** स्त्री., देवता० ( चचि. २३.९० )

**जया**–स्त्री.,वनस्पति० भङ्गा ( र. १४.३७–४७ )
अग्निमन्थः ( असंउ. ९ )
हरीतकी ( र. १८.१३९ )
चक्रमर्दः ( र. १८.१०६.९ )
दूर्वाभेदः, नीलदूर्वा ( रा. ८.२२६ ) 'दूर्वा' द्र० 'दूर्वा'
कपिकच्छुः ( रा. ३.२०१ )
बलामोटा ( असंउ. ९ )
शमी ( रा. ८.१५५ )
नीलिनी ( ध. १.२३३ )
जयन्ती ( चचि. ९.४५ )

**–गुलिका**–स्त्री., योग० हरिद्रानिम्बवत्सनाभादियुक्ता, क्षयकासपाण्डुकुष्ठादिनाशिनी ।
भस्मसूतगुडक्षौद्रघृतैः सह निषेवितम् ।
जरां जयेदतो नाम्ना गुलिकेयं जयोदिता
( र. २९.१३८–५१ )

**–द्वय**–न., वनस्पति० चक्रमर्दो हरीतकी च ( अहस. १५.२१ )

**–युग**–न., वनस्पति० भङ्गा जयन्ती च ( र. १९.३९–४१ )
हरीतक्यग्निमन्थश्च ( र. १९.३९–४१ )
हरीतकी जयन्ती च ( र. १९.३९–४१ )

**–वहा**–स्त्री., वनस्पति० दन्ती ( ध. १.२२५ )

**जयाह्वा**–स्त्री., वनस्पति० दन्ती ( रा. ६.३४१ )

**जरडी**–स्त्री. वनस्पति० गर्मोटिका ( रा. ८.५१ )

**जरण**–वि., पाचनः ( सुसू. ४५.१८५ )
न., वार्धक्यम् ( र. २.७४ )
पु., जाठराग्निः जीर्यते अशितखादितपीतादिकम् अन्नमनेनेति जरणो जाठराग्निः ( चवि. ६.२१ )
वनस्पति० जीरकम् ( रा. ६.१०० )
न., हिङ्गुः ( ध. ३.३६ )

**( जरणा )**–स्त्री., वनस्पति० कृष्णजीरकम् द्र० जीरक ( ध. २.७० )

**( जरण )–द्रुम**–पु., वनस्पति० स्निग्धः, कटुस्तिक्तः पित्तास्र–ज्वर–विस्फोट–कण्डु–सिरादोषार्तिकृन्तनः ( रा. ९.१३ )

**–शक्ति**–स्त्री., अन्नपाचनसामर्थ्यम् ( चवि. ८.१२० )

**जरत्ता**–स्त्री., वार्धक्यम् ( असंउ. ४९ )

**जरद्गव**–पु., पशु० वृद्धवृषः ( चसि. ११.२० )

**जरा**–स्त्री., जीर्यति इति जरा वार्धक्यम्, षष्टिवर्षोत्तरमिति ( चरक ) सप्ततिवर्षोत्तरमिति ( सुश्रुतवाग्भटौ; ) तत्कारणानि,–'पन्थाः शीतं कदन्नं च वयोवृद्धाश्च योषितः । मनसः प्रातिकूल्यं च जरायाः पञ्च हेतवः ( र. २६.२ ) जरानाशनार्थं रसायनचिकित्सोपयुज्यते ( सुचि. २९.३ )
पाकः ( सुउ. ४६.१२ )

**–कास**–पु., रोग० यो जरया देहक्षयकारिकया कृतः कासः, स याप्यः, यस्तु दोषकृतः स साध्य एव भवतीति दर्शयति ( चचि. १८.३० )

**–शोष**–पु., रोग० शोषभेदः असौ जरावस्थायां जरया देहक्षयकारिण्या कृत इति ज्ञेयम् । तल्लक्षणानि–कृशो मन्दवीर्यबुद्धिबलेंद्रियः कम्पनोऽरुचिमान् भिन्नकांस्यपात्रहतस्वरः ( सुउ. ४१.१९ )

**जरायु**–पु., गर्भस्यावेष्टनरूपं गर्भावरणम् (सुशा. २.५४) उल्वाकारो येन वेष्टिताः प्राणिनो जायन्ते उल्बाकार इत्यनेन जरायुसदृशत्वमेव आकारेऽभिप्रेतं नतु केवलमुल्बाकृतिरिति ( सुशा. ४.७ )
भैषज्य० अग्निजारः ( ध. ६.२१ )

**–ज**–पु., जरायुः–गर्भावरणं, तस्माद् जातो यः, स प्राणी, चतुर्विधभूतग्रामेष्वेको, यथा पशुमनुष्यव्यालादयः ( काखिल. २२ ) जरायुः अमरा नाम नाडी येन वेष्टिता मनुष्यादयः प्रजायन्ते ( चशा. ३.६ )

**–प्रपातन**–न., उपक्रम० जरायोः पातनम् ( चशा. ८.३१ )

**जर्जर**–पु., वाद्यभाण्डम् ( चइ. १.१४ )
वि., त्यक्तस्थैर्यम् ( इन्दुः असंउ. २६ )

**जर्जरित**–वि., पीडितः ( चचि. २८.१७१ )

**जर्जरीकरण**–न., ( परिव. ) पिष्टीकरणम् ( चक. १.१४ )

**जर्तिल**–पु., वनस्पति० तिलः ( ध. ६.१२२ )

**जल**–न., महाभूत० रसगुणबहुलद्रवद्रव्यम्; उत्पत्तिः–सौम्याः खल्वापोऽन्तरिक्षप्रभवाः प्रकृतिशीता लघ्व्यश्चाव्यक्तरसाश्च (चसू. २६.३९ ) पाञ्चभौतिकद्रव्योत्पत्तौ हेतुभूतं, षण्णां रसानां समवायिकारणं, सर्वं जलमैन्द्रं नभस्तलात्पतति । एकत्वेऽपि देशकालाश्रयभेदेन तद्बहुविधं भवति । दिव्यमुदकं प्रकृत्या शीतं शुचि शिवं मृष्टं लघुगुणयुक्तमस्ति । आकाशात्पतितं जलं सोमवाय्वर्कैः स्पृष्टं भवति । हिताहितत्वे तद्देशकालमपेक्षते ।
गुणाः–जीवनं, तर्पणं, धारणं, आश्वासजननं, श्रमक्लमपिपासामदमूर्च्छातन्द्रानिद्रादाहप्रशमनमे-

त्रायमाणाकारवेल्लिकाकरीरकरवीरकेबुककठिल्लकवृष-
मण्डूकपर्णीकर्कोटकवार्ताकुकर्कशकाकमाचीकाको-
दुम्बरिकासुषव्यतिविषापटोलकुलकपृष्ठागुडूचीवेत्रा-
ग्रवेतसविकङ्कतबकुलसोमवल्कसप्तपर्णसुमनार्का-
वल्गुजवचातगरागुरुवालकोशीराणीति
( चचि. ८.१४३ ) ( सुसू. ४२.११ )

**तिक्तक**–पु., रस० तिक्तरसः, अयं तरुणज्वरपाचनः,
( तिक्तः ) ( चचि. ३.१४२ )

**तिक्तला**–स्त्री., वनस्पति० शङ्खिनी ( चक. ११.३ )

**तिक्ता**–स्त्री., ( रा. ३.३८१ )

–**द्वय**–न., वनस्पति० कटुका काकतिक्ता च
( अहसू. १५.४० )

**तिक्तालाबु**–स्त्री., वनस्पति० कटुतुम्बिनी
( सुसू. ४६.२१५ )

**तिक्तालाबुकबीज**–न., तिक्तालाब्वा बीजम्
( चचि. ७.१०८ )

**तिक्तास्यता**–स्त्री., लक्षण० तिक्तमुखत्वम्
( सुउ. ३९.५० )
चत्वारिंशत्पित्तविकारेष्वेकः ( चसू. २०.१४ )

**तिक्तिका**–स्त्री., वनस्पति० काकमाची ( ध. ४.२१२ )
( रा. ४.३६ )

**तिक्तेक्ष्वाकु**–पु., कटुकालाबुः ( चक चचि. २३.२०६ )

**तिक्तेक्ष्वाकादितैल**–न., तैल० एतत् तैलं कण्डूकुष्ठ-
मारुतकफविनाशनम् ( चचि. ७.१०८–११० )

**तिक्तोद्गिरण**–न., लक्षण० तिक्तरसयुक्तमुद्गिरणम्
( चसू. १७.३३ )

**तिजला**–स्त्री., वनस्पति० व्रीहिः ( ध. ६.१०२ )
( रा. १६.१०८ )

**तितिक्षत्**–वि., प्राणान् उत्क्रमणार्थे तीक्ष्णीकर्तुं त्वरयितुं
वा इच्छन् ( चइं. १०.३ )

**तितिक्षा**–स्त्री., क्षमा ( सुशा. १.१८ )

**तित्तिडी**–स्त्री., चिञ्चा ( र. १२.६४–७३ )

–**फल**–न., वनस्पति० वृक्षाम्लम् ( ध. २.९५ )
( रा. ६.१४३ )

**तित्तिडीक**–न., वनस्पति० वृक्षाम्लम् ( ध. २.९५ )

( **तित्तिडीका** )–स्त्री., वनस्पति० चिञ्चा ( ध. ५.३३ )

**तित्तिर**–पु., पक्षि० तित्तिरिः ( ध. ६.४८ )

**तित्तिरी**–पु., पक्षि० ( सुउ. ४०.८४ ) तन्मांसगुणाः–
कषायं, मधुरं, शीतं, स्निग्धं, लघु, ग्राहि, वर्ण्यं,
वीर्यप्रदं, बल्यं, त्रिदोषघ्नं, हिक्काश्वासघ्नं च
( भपरि. ६.४८ ) गुरूष्णं, मेधाग्निवर्धनम्
( सुसू. ४६.६१ ) धन्वानूपनिषेवणान्नातिमधुरं,
नात्युष्णं, नातिगुरु, वातोल्बणं दोषत्रयं शीघ्रं
संजयेत् ( चसू. २७.६७–६८ ) गौरकृष्णभेदेन
तित्तिरिर्द्विविधः, तयोः गौरः प्रशस्तः कपिञ्जल
इति कथ्यते ( र. १८.४२ )
हिं.—तीतर.
**म.—तित्तिरपक्षी.**
बं.—तितोर.
त.—चिचिलवु.

–**पक्षतुल्यशुक्र**–न., परिव० लक्षण० नेत्रस्य कृष्ण-
भागे तित्तिरिपक्षवर्णं शुक्रं भवति ( सुउ. ५–७ )

–**फल**–न., वनस्पति० रेचकः (ध. १.२२७)

**तिथि**–स्त्री., तन्यते विस्तार्यते वर्धमानक्षीयमाणचन्द्र-
कलोपलक्षितकालेनेति तिथिर्दिनम्, ज्योतिः–
शास्त्रीया संज्ञा ( चसू. १५.९ ) चन्द्रकलोपलक्षितः
काल इति ज्योतिर्विदः ( सुचि. २९.१० )

**तिनि**–पु., वनस्पति० तिनिसः (सुचि. १६.४३ )

**तिनिश**–पु., वनस्पति० स्यन्दनः ( ड. सुक. ६.३ ) गुणाः
कषाय उष्णो ग्राहको दाहजननः कफजिद्वातामय-
रक्तातिसारजित् ( रा. ९.२४ )
हिं—तिनिस.
**म.—तिवस.**
गु.—हम्मों.
बं.—जारुलगाछ.

**तिन्तिडिका**–स्त्री., वनस्पति० अम्लफलवृक्षः, चिञ्चा
( असंचि. ७ )

**तिन्तिडी**–स्त्री., वनस्पति० चिञ्चा ( र. १९.९९ )

**तिन्तिडीक**–न., वनस्पति० वृक्षाम्लम्, (ड.) अम्लिका-
फलम् ( सुचि. ५.२४ ) आमफलगुणाः–वातापहं
पित्तबलासकृच्च । संपक्वफलगुणाः–ग्राह्युष्णं, दीपनं,
रुच्यं, कफवातनुच्च ( सुसू. ४६.१५९ )

**तिन्तिणीक**–न., वनस्पति० अम्लद्रव्यम्, वृक्षाम्लम्
( र. १०.८० )

**तिन्दु**–पु., वनस्पति० तिन्दुकः ( र. २९.११४ )

**तिन्दुक**–पु., वनस्पति० ( चशा. ८.४७ ) तत्फलगुणाः–
आमतिन्दुकगुणा :–अम्लोष्णं, लघु, संग्राहि,
स्निग्धं, पित्ताग्निवर्धनम्; पक्वतिन्दुकगुणाः–कषायं,
संग्राहि, वातकोपनं, विपाके गुरु, मधुरं, कफपित्त-
जिच्च ( सुसू. ४६.१६८ )
मान० कर्षः ( असंक. ८; चक. १२.९१. )

**(तिन्दुकी)**–स्त्री., वनस्पति० तिन्दुः तिन्दुलः (सुचि. २१.१०)

हिं.—तेंदू.

**म.—टेंभुर्णी.**

गु.—टिंबरवो.

बं.—तेंद.

ता.—तुंपि.

**तिन्दुकिनी**–स्त्री., वनस्पति० आवर्तकी (ध. १.१९८)

**तिमन**–(परिव०) न., क्लेदनम् (असंउ. ४९.)

**तिमि**–पु., समुद्रजो महत्तमो मत्स्यः (डसुसू. ४६.११८)

**तिमिङ्गिल**–पु., सागरजमत्स्य० तिमिं नाम महान्तं मत्स्यं गिलति इत्यनेन अस्य तिमिमत्स्यतो महत्तरत्वं स्पष्टम् (चसू. २७.४०)

**तिमिर**–पु., न., नेत्ररोगः अशीतिवातविकारेष्वेकः (चसू. २०.११) संप्राप्तिः अवस्थाश्च–नेत्रस्य प्रथमं पटलं सिरानुसारिणि दोषे श्रिते सति, तैमिरिको नरः अव्यक्तं रूपं पश्यति। व्यक्तमपि कदाचित् निमित्तमन्तरेण पश्यति। द्वितीयं पटलं दोषे प्राप्ते सत्यभूतमपि पश्यति, भूतं यत्नात्पश्यति, आसन्नं दूरे सूक्ष्मं च नेक्षते। विपर्यासेन दूरान्तिकस्थं रूपं मन्यते। दोषे मण्डलसंस्थाने मण्डलानीव पश्यति। दृष्टिमध्यस्थे दोष एकमेव वस्तु द्विप्रकारं पश्यति। बहुधा स्थिते दोषे एकमेव वस्तु बहुप्रकारं पश्यति। दृष्टेरभ्यन्तराश्रिते दोषे ह्रस्वं वृद्धं वृद्धं च ह्रस्वं पश्यति। अधःस्थिते दोषे समीपस्थं पदार्थं नेक्षते। उपरिष्टात्स्थिते दोषे दूरगं न पश्यति। पार्श्वस्थे दोषे पार्श्वस्थितमपि रूपं न पश्यति। अयं तिमिरसंज्ञो रोगः। तृतीयपटले स्थिते दोषे काचत्वं प्राप्नोति। तेन काचेनोर्ध्वमीक्षते न त्वधः। तच्च तनुवस्त्रच्छन्नसदृशम्। दृष्टिश्चात्र दोषानुसारेण रज्यते। उपेक्षमाणस्याचिकित्सितस्य तृतीयं पटलं मुक्त्वा चतुर्थपटलं गतो दोषः लिङ्गनाशं कुर्वन् दृष्टिमण्डलं छादयेत्। वातजतिमिरे नरो व्याविद्धमिव पश्यति। चलं धूमाविलमरुणाभासं मुहुः प्रकृतिस्थनयनेन पश्यति। तथा जालादीनि मुहुः पश्यति। अचिकित्सितत्वेन काचत्वं प्राप्ते दृक् अरुणाऽऽस्यमनासिकं पश्यति। तथा चन्द्रदीपादीनामनेकत्वं वक्रमवक्रमिव च मन्यते। वृद्धः काचो रजोधूमावृतामिव च दृष्टिं कुर्यात्। तथा स्पष्टाऽरुणाऽऽभां विस्तीर्णां सूक्ष्मां वा हतदर्शनां दृष्टिं कुर्यात्। पित्तजे तिमिरे नरो विद्युदादिदीपितं तथा मयूरतित्तिरिपत्राभं प्रायेण नीलं च पश्यति। काचे काचनीलसदृशी दृष्टिर्भवति। तादृगेव काचनीलाभासं पश्यति। किंचाऽर्केन्दुपरिवेषादीन् पश्यति। लिङ्गनाशाद् दृष्टिर्भ्रमरनीला निरालोका स्निग्धा च भवति। पित्तेन ह्रस्वसंज्ञा दृष्टिर्भवति। ह्रस्वसंस्थानाऽल्पदर्शिनी वा पित्तविदग्धसंज्ञा दृष्टिः पीता पीताभदर्शना च भवति। श्लेष्मजतिमिरेणार्तः प्रायः स्निग्धं शुक्लं च पश्यति। काचे तु निष्प्रभेन्द्वर्कादिभिरिवाचितं पश्यति। सा दृष्टिः सिताभा स्यात्। लिङ्गनाशे तु मूर्तः कफो दृष्टिगतः स्निग्धो दृष्टिविनाशनश्च दृश्यते। पद्मिनीपुटसंस्थितश्चलजलबिन्दुवत् दृश्यते। आतपे चासौ बिन्दुः संकुचति। छायायां प्रसरति। रक्तजतिमिरवान् रक्ताभं तम इव च पश्यति। काचेन रक्ता कृष्णा वा दृष्टिः स्यात्। तस्यां तादृगेव रूपमीक्ष्यते। लिङ्गनाशेऽपि काचवत् दृष्टिर्निष्प्रभा हतदर्शना च स्यात् (अहृउ. १२.१–२२)

पु., वनस्पति० तिनिशः (सुउ. ५१.३२)

**तिरस्कृत**–न., तिरोहितम् (चशा. १.८०)

**तिरीटक**–पु., वनस्पति० लोध्रः (ध. ३.१७५)

**तिर्यञ्च**–वि., वक्रम् (सुनि. १.८)

**(तिर्यक्)–पातनयन्त्र**–न., दीर्घे एकस्मिन् घटे पारदोऽन्यस्मिंश्च जलमुभयोः संयोगार्थं नताधोनालः, येन चुल्ल्यामारोपिताद्दीर्घघटादग्नितापेनोत्थितः पारदोऽन्यस्मिन् पात्रे पतति (र.९.१०–१२)

**(तिर्यग्)–ग**–वि., तिर्यग्गामी (सुनि. १.८)

**–गत**–वि., शाखामार्गगत उन्मार्गगतो वा (चनि. ८.३८)

**–प्रधमनकोष्ठी**–स्त्री., मृण्मयकोशः, उच्छ्राये द्वादशाङ्गुला मूले च चतुरङ्गुला, तिर्यक् प्रधमनक्रियानुकूल्येन स्थापितमुखा कोष्ठी (र. १०.४७)

**–फला**–स्त्री., वनस्पति० जन्तुका (ध. ४.८८) (रा. ३.१२७)

**–योनि**–स्त्री., पश्वादियोनिः (चनि. १.३५)

**तिल**–पु., न., तैलधान्य० (चसू. २७.३०) (सुसू. ४६.३९) (ध. ६.१२२)

कृष्णसितेति द्विविधः, पीतहरितलोहिता इति केचित् (ड) सर्वेषु कृष्णस्तिलः प्रधानः (सु)

मधुरः, कटुकः, ईषत् कषायः, तिक्तः, सांग्राहिकः, दंत्यः, पथ्यः, अग्निमेधाजननः, अल्पमूत्रः, व्रण-शोधनः, उष्णः, पित्तकरः, बल्यः, स्निग्धः, व्रणे लेपने पथ्यः, त्वच्यः केश्यः अनिलहा
(सुसू. ४६.३९)
कफपित्तकृत् (चसू. २७.३७) हिमस्पर्शः
(ध. ६.१२२)
हिं--तिल.
**म.--तीळ.**
गु.--तल.
बं.--तिल.
ता.--नूवू.
न., **परिमाण०** (चचि. १० (३) २५)
पु.,–**त्वग्रोग० पित्तले नरे पित्तस्य औष्ण्यात् त्वचि तिलाकारं चिह्नं जायते** (चवि. ८.९७)

**–कण**–पु., भर्जिततिलः (चसू. ४.१५)

**–कन्द्**–पु., वनस्पति० तिलकन्दः (रापरि. ७.५२)
गुणाः–मधुरः, शीतः, पित्तघ्नः, श्वासकासपित्त-प्रकोपविषव्रणहरः (रापरि. ७.५४)

**–कल्क**–पु., तिलानां कल्कः (सुचि. १.६५)
व्रणरोपणस्तिलकल्कः (सुचि. १.६७ सुसू. ११.२२)
शोधनस्तिलकल्कः (सुचि. १.६७)

**–काम्बलिक**–पु., कृतान्न० तिलप्रधानः काम्बलिकः
(चसू. १३.८५)

**–कालक**–पु., क्षुद्ररोग० त्वक्स्थाः तिलाभाः कृष्णाः अवेदनाः पिटिकाः (सुसू. १२.१०)
गुह्यरोग० संनिपातेन गुह्ये पकानि मांसानि कृष्णी-भूय समन्ततो विशीर्यन्ते, ते तिलकालकाः
(असंउ. ३८)

**–कुन्तल**–पु., तिलकाण्डम् (असंसू. ३९.१०)

**–क्षार**–पु., तिलस्य क्षारः (चसू. ३.१४)

**–चित्रपत्रक**–पु., वनस्पति० तैलकन्दः
(रापरि. ७.५०) द्र० तिलकंद

**–ज**–न., स्नेह० तैलम् (ध. ६.१२५)

**–जीवन**–न., जीवनं जलम्, तेन तिलजीवनं तिल-काथपर्यायः, तिलकाथः, तिलमज्जा
(र. २५.८५)

**–तैल**–न., तिलाद् कृष्टं तैलम् (चसू. १३.१२)
तिलेषु भवं तैलं तच्च स्थावरस्नेहोत्तमम्, गुणाः–आग्नेयमुष्णं, मधुरं, मधुरविपाकं, बृंहणं, प्रीणनं, व्यवायि, सूक्ष्मं, विशदं, गुरु, सरं, विकाशि, वृष्यं, त्वक्प्रसादनं, शोधनं, मेधामार्दवकरम्
(सुसू. ४५.११२)

**–नाल**–पु., तिलकाण्डम् (सुसू. ११.११)

**–नालज**–वि., तिलनालदाहारकृतः यथा क्षारः
(चचि. १३.१७०)

**–परिपीडन**–न., चक्रम् ; तिलपरिपीडनक्रियोपयुक्तम् (सुचि. ४.२८)

**–पर्ण**–न., वनस्पति० चन्दनम् (ध. ३.१; रा. १२.१)
(**–पर्णी**) स्त्री.,–वनस्पति० व्रीहिः (रा. १६.१०९)
बदरकः (इन्दु. असंउ. १०)
चोरकः श्रीहस्तिनी (ड. सुसू. ४६.२३९)
हुलहुलः इति ख्यातः (चक्र. चचि. ३.२६७)
पु., वनस्पति० श्रीवेष्टकः (रा. १२.१९३);
(ध. ३.१३३)

**–पर्णक**–न., वनस्पति० चन्दनम् (ध. ३.१)

**–पर्णिक**–न., वनस्पति० तैलपर्णिकः सरलरसः
(सुक. ६.१४)

**–(पर्णिका)**–स्त्री., शाक० हुलहुलिका
(चसू. २७.९७)
चोरकः, श्रीहस्तिपर्णी (सुसू. ४६.२२१)
(र. ११.५२–५७)

**–पिष्ट**–न., आहारद्रव्य० (चसू. १३.२४)

**–पीडक**–न., यन्त्र० तिलानां तैलनिष्पादनोपयोगि यन्त्रम् (चसू. २५.२७)

**–भेद**–पु., वनस्पति० खस्तिलः (ध. ६.१२०)

**–मषी**–स्त्री., तिलभस्म, अरुंषिकानामके शिरोरोगे लेपनार्थमुपयुज्यते (असंउ. २८.)

**–वासी**–स्त्री., वनस्पति० व्रीहिः (रा. १६.१०८)

**–विकृति**–स्त्री., कृतान्न० मोदकादिः मयूराण्डकादिः
(हे अहृसू. ६.३४)
(ड सुसू. ४६.३८१)

**–शाक**–न., शाक० (चसू. २७.१०९)

**–संभव**–न., स्नेह० तैल (ध. ६.१२५.)

**तिलक**–पु., वनस्पति० गुणाः–अस्य त्वक्षाया, मधुरा उष्णा (रा) अयं स्निग्धो, लघुः, पुंस्त्वघ्नो बल्यो वातपित्तकफघ्नः, पुष्टिकरो हृद्यो मेदोविवर्धनः दन्तरोगकृमिशोफव्रणरक्तदोषघ्नः (ध. ५.१५८)
हिं.--तिलकपुष्प.
**म.--तिलपुष्पक.**
गु.--तिलकवृक्ष,

अक्षम् ( ध. २.३० )
लोध्रः ( ध. ३.१५७ )
तिलकालकः ( र. २४.४० )
त्वग्रोग० ( चसू. १८.२५ )

**( तिलकी )**–स्त्री., वनस्पति० शङ्खपुष्पी ( ध. ४.११३ )

**तिलनी**–स्त्री., वनस्पति० व्रीहिः ( ध. ६.१०२ ) ( रा. १६.१०९ )

**तिलाङ्कितदल**–पु., वनस्पति० तैलकन्दः ( रापरि. ७.५० )

**तिलातस्याद्युपनाह**–पु., स्वेद० केवले वाते उपयुज्यते ( ड ) सुचि. ३२.१२ )

**तिलादिकल्क**–पु., योग० श्वदंष्ट्राविषजित् ( असंउ. ४६. )

**तिलादिलेप**–पु., किञ्चित् भृष्टतिलाः सर्षपयुक्ताः मातुलुङ्गरसयुक्ताः । लेपाद् अक्षिरागरुजोर्हराः ( सुउ. १७.८८–८९ )

**तिलोत्सेधतनु**–वि., तिलोत्सेधप्रमाणम् ( चचि. १ (३).१६ )

**तिल्वक**–पु., वनस्पति० लोध्रः ( ध. ३.१७५ )
पट्टिकारोध्रः ( सुचि. १४.५ )

**–घृत**–न., घृत० उदररोगे विरेचनार्थमुपयुज्यते ( सुचि. १४.१० )

**–घृतचतुर्थ**–वि., तिल्वकघृतं चतुर्थं येषु तानि, हरीतकीचूर्णप्रस्थेत्यादि ( सुचि. १४.१० ) गव्ये पयसि महावृक्षक्षीरेत्यादि ( सुचि. १४.१० ) चव्यचित्रकेत्यादि ( सुचि. १४.१० ) वातव्याध्युक्त-तिल्वकघृतम् ( सुचि. ४.२७ )

**–सर्पिस्**–न., लोध्रादिसिद्धं घृतम्, एतद्वातरोगेषु स्नेहविरेचनार्थमुपयुज्यते ( सुचि. ४.२७ )

**तिष्ठत्**–वि., ऊर्ध्वीभवन् ( ड. सुउ. ४२.१२५ )

**तिष्य**–पु., नक्षत्र० पुष्यनक्षत्रम् (चवि. ८.९)

**तिस्रैषणीय**–वि., अध्याय० तिस्रैषणाशब्दोऽस्मिन्नस्तीति चरकसूत्रस्थानगतैकादशोऽध्यायः ( चसू. ११.१ )

**तीक्ष्ण**–पु., झटिति कार्यकारी गुणः ( चशा. ६.१० ) अग्निगुणभूयिष्ठो वीर्यसंज्ञको गुणः ( सुसू. ४१.११ ) शोधने शक्तिः ( हे अहृसू. १.१८ ) राजिका-मरिचादिष्वनुभूयमानो गुण० तैजसद्रव्यगुणः ( सुसू. ४१.४ ( ३ )
द्रव्यस्य शोधने कर्मणि शक्तिः, गुण० तस्य कर्मणि दाहपाककरत्वं, स्रावणत्वं च ( सुसू. ४६.५१८ )
वि., शीघ्रकारि, मन्दविपरीतः सूचीव भिनत्ति ( अरुणः ) ( अहृसू. १.१८ ) मुखे दुःखोत्पादकम् ( सुसू. ४५.१९९ )
कोपनम् ( सुउ. ६२.९ ) शीघ्रतरदोषस्रावणकारि यथा विरेचनं द्रव्यं तीक्ष्णं भवति ( सुचि. ३३.३३ )
पु., वनस्पति० कुशः ( रा. ८.२०७ )
कुन्दुरुः ( ध. ३.१३१ ) ( रा. १२.१९० )
क्षुवकः ( रा. परि. ९.४० )
न., वनस्पति० मरीचम् ( र. १२.६४–७३ )
खनिज० लोहम् ( ध. ६.२६ )

**( तीक्ष्णा )**–स्त्री., वनस्पति० कपिकच्छूः ( ध. १·१५१ ) ( रा.३.२०२ )
चविका ( ध. २.७७ ) ( रा. ६.११६ )
तेजस्विनी ( ध. १.२६६ ) ( रा. ३.३९२ )
पिप्पली ( र. ११.५० )

**–कण्ट**–पु., वनस्पति० धन्वयासः ( रा. ३.२६ )
इङ्गुदी ( रापरि. ८.१८ )

**–कण्टक**–पु., वनस्पति० बर्बुरः ( रापरि. ८.१२ )
करीरः ( ध.५.९९ )

**–( कण्टका )**–स्त्री., कन्थारी ( रापरि. ८.२० )

**–कण्टकमुखी**–स्त्री., एषणीशस्त्र० ( सुसू. ८.११ )

**–कन्द**–पु., वनस्पति० पलाण्डुः ( रा. ७.१०० ) ( ध. ४.७१ )

**–क्षार**–पु., त्रिविधक्षारेष्वेकः ( सुसू. ११.१३ )

**–गन्ध**–पु., वनस्पति० शिग्रुभेदः नीलशिग्रु०ः द्र० शिग्रु ( रा. ७.६२, ध. ४.४१)
वनस्पति० कुन्दुरुः ( ध. ३.१३१ ) द्र० 'तीक्ष्ण'
व्रणगन्धविशेषः ( सुसू . २८.९–१० )

**( तीक्ष्णगन्धा )**–स्त्री., शोभाञ्जनकः ( ड. सुउ.२३.४ )
वनस्पति० कन्थारी ( रापरि. ८.२० ) द्र० कंटका.
श्वेतवचा ( ध. १.१०; रा. ६.१० ) द्र० वचा
राजिका ( ध. ४.६० )

**–तण्डुला**–स्त्री., वनस्पति० पिप्पली ( ध. २.७३ )

**–पत्र**–पु., वनस्पति० तुम्बुरुः ( ध. २.४२ )

**–पर्णिका**–स्त्री., वनस्पति० तुम्बुरुः ( र. १६.९९–१०२ ) द्र० तीक्ष्णपत्र

**–पावक**–पु., रोग० तीक्ष्णाग्निः ( भस्मकः ) ( चचि. १५.५० )

**–पुष्प**–न., वनस्पति० लवङ्गम् ( रा. १२.८५ )

**–( पुष्पा )**–स्त्री., वनस्पति० केतकी ( रापरि. १०.१. )

**-फल**-पु., वनस्पति० तुम्बुरुः ( ध. २.४२ )
द्र० तीक्ष्णपत्र
तेजःफलः ( रापरि. ११.१७ )
**-(फला)**-स्त्री., वनस्पति० राजक्षवकः ( ध. ४.४३ ) ( रा. १६.७० )
**-मञ्जरी**-स्त्री., वनस्पति० नागवल्ली ताम्बूलवल्ली ( ध. परि. ३.३ )
**-मुख**-पु., पारदयोग० पारदः सुवर्णं बिडलवणं हरितालं बोलः कान्तलोहं मण्डूरोऽभ्रकं गन्धकं माक्षिकं चेति। सर्वे एते कुमारीरसेन मर्दितगजपुटे परिपाच्याः। अयं अर्शसां नाशनः ( र. १५.६८ )
**-मूल**-पु., वनस्पति० शिग्रुः ( रा. ७.६० )
कुलञ्जः ( रा. परि. ६.११ )
**-लोह**-न., लोह० खरं, सारं, हन्नालं तारावट्टं वाजिरं काललोहाभिधानं चेति तीक्ष्णलोहं षड्विधं विद्यते ( र. ५.८० ) ( सुचि. १०.११ )
**-वल्क**-पु., वनस्पति० तुम्बुरुः ( ध. २.४२ )
द्र० 'तीक्ष्णपत्र'
**-विष**-वि., तीक्ष्णं विषं यस्य स तीक्ष्णविषः कीटः, तद्दष्टलक्षणम्, तद्यथा ज्वरोऽङ्गमर्दो रोमाञ्चो, वेदना, छर्द्यतीसारस्तृष्णा, दाहो, मूर्च्छा, विजृम्भिका, वेपथुः, श्वासो, हिक्का, शीतं ( दारुणम् ) पिडकोपचयः, शोफो, ग्रन्थयो मण्डलानि ( सुक. ८.१९-२३ )
**-वृक्ष**-पु., वनस्पति० पीलुः ( असंसू. १६.३९ )
**-वेगार्त**-वि., तीक्ष्णवेगपीडितः ( सुउ. ३९.९४ )
**-शूका**-स्त्री., वनस्पति० यवः ( ध. ६.७८ )
**-सार**-पु., वनस्पति० करीरः ( ध. ५.९९ )
स्त्री.,-वनस्पति० शिंशपा ( रा. ९.१९८ )

**तीक्ष्णक**-पु., वनस्पति० सर्षपः ( रा. १६.६८ )

**तीक्ष्णाग्नि**-वि., लक्षण० दीप्ताग्निः ( सुचि. ३३.५५ )
पु., स गुर्वप्यन्नं पचति तथा सर्वापचारसहश्च जाठराग्निः ( चवि. ६.१२ )
विविधेषु विक्रियापन्नेष्वग्निषु पित्तदोषजनितोऽयं तीक्ष्णो जठराग्निः ( सुसू. ३५.२४ )

**तीक्ष्णायस**-न., लोह० तीक्ष्णमायसम् ( चचि. १(३).१६ )

**तीर्थ**-पु., उपाध्यायः ( अरुण ) गुरुः ( हे अहृसू. १.२८ )
न., नद्यादिघट्टम् ( ड. सुक, ३.१० )

**तीव्र**-न., उग्रम्, इन्द्रियोद्वेजकम् ( चइ. १२.२३ )
खनिज० तीक्ष्णलोहम् ( रा. १३.३० )

**(तीव्रा)**-स्त्री., वनस्पति० सुरसा ( रा. १०.७७ )
तरटी ( रापरि. ८.३२ )
तेजस्विनी ( ध. १.२६६ रा. ३.३९३ )
यवानी ( ध. २.९४ )
तेजस्विनी ( रा. ३.३९३ )
गण्डदूर्वा ( ध. ४.१४५ ) द्र० 'दूर्वा'
**-कन्द**-पु., वनस्पति० सूरणः ( रा. परि. ७.६ )
**-गन्धा**-स्त्री., वनस्पति० यवानी ( ध. २.९४ ) ( रा. ६.१४१ )
**-ज्वाला**-स्त्री., वनस्पति० धातकी ( रा. ६.१५२ )
**-बलि**-पु., अपक्वः पशूपहारो मद्योत्कटः ( ड. सुउ. ६०.३७ )
**-मात्सर्य**-न., लक्षण० तीव्रद्वेषः ( चनि. ७.७(१ )

**तीव्रावी**- परिव० स्त्री., अतीव प्रसववेदना ( काखिल. ११.४४ )

**तुकाह्वया**-स्त्री., वनस्पति० ( असंउ. २ )

**तुगा**-स्त्री., वनस्पत्यङ्ग० तुगाक्षीरी ( अहृसू. १५.१२ )
भैषज्य० वंशलोचना, वंशलोचनानुकारि पार्थिवं द्रव्यम् ( ड ) सुउ. ५२.१७ )
भैषज्य० वंशरोचना ( ध. २.५५ )
**-क्षीरी**-स्त्री., निर्यास० वंशरोचना ( चचि. १.(१)६८ )

**तुगाख्या**-स्त्री., निर्यास० तुगा, वंशरोचना ( सुउ. ४५.३२ )

**तुङ्ग**-पु., वनस्पति० पुन्नागः ( चक्र. चसि. १०.२२ )
न., वनस्पति० पद्मकेसरम् ( ध, ४.१६५ )

**( तुङ्गा )**-स्त्री., निर्यास० वंशरोचना ( रा. ६.८६ )
शमी ( ध. ५.९५ )

**( तुङ्गी )**-स्त्री., वनस्पति० अजगन्धा ( ध., २.१०० )
**-क्षीरी**-स्त्री., वनस्पति० वंशरोचना ( ध., २.५५ )
**-नास**-पु., सविषकीट० गुणाः-प्राणनाशनः, तेन दष्टस्य सर्पवत् तीव्रा वेदनाः, सान्निपातिका रोगाश्च भवन्ति दंशश्च रक्तपीतसितारुणो भवति क्षाराग्निदग्धवच्च प्रतीयते ( सुक. ८.१५-१८ ) ( असंउ. ४३ )

**तुङ्गिनी**-स्त्री., वनस्पति० सहस्रवीर्या ( रा. ४.४४१ ) ( ध., १.२०३ )

**तुण्ड**-न., मुखम् ( सुक. ३.४ ) मुखाग्रम् ( इन्दु, असंउ, १०. )

**(तुण्डी)**-स्त्री., वनस्पति० बिम्बी (ध., १.२०२) मधुरबिम्बी (ध. १.२०२ रा. ७.३०४)
**-नाभ**-पु., कीट० प्राणनाशकः कीटः (असंउ ४३)
**-नाम**-पु., सविषकीटः (सुक. ८.१५-१८)
**-विष**-वि., तुण्डे विषं यस्य सः, वरटीशतपदीशूक-शृंगिभ्रमरादयः तुण्डविषाः (सुक. ३.५)
**तुण्डाहत**-न., सर्पेण अदंष्ट्रया कृतो दंशः (वैशसि.)
**तुण्डि**-स्त्री., वातेनाध्मापितायाः सरुजाया नाभेस्तुण्डिरिति नाम (असंउ. २.)
**-केर**-न., वनकार्पासी, वनकार्पासीसमुद्भवं फलम्, एतत् फलं जले पिष्टं पाययेत् क्षतजतृष्णाशमनार्थम् (सुउ. ४८.२७)
**-केरफला**-स्त्री., वनस्पति० बिम्बी (ध. १.२२)
**-(केरी)**-स्त्री., वायव्यः कीटविशेषः (असंउ. ४३) वनस्पति० वनकार्पासिका (सुनि. २.१०) (असंनि. ७.) वनकार्पासीफलतुल्याकारशोथतया इयं रोगे निरूढा। तालुगतरोगविशेषः (सुसू. २५.८)
**-केरिका**-स्त्री., वनस्पति० कार्पासी (रापरि. ४.४५) कण्ठगतव्याधिः, लक्षणानि-कंठे हनुसंध्याश्रितः कार्पासीफलाकारः पिच्छिलो मंदरुक् कठिनश्च शोफो भवति, स नाम्ना तुंडिकेरिका इत्युच्यते (असंउ. २५.)
**-नाभि**-स्त्री., नाभिरोग० मुखयुक्तनाभिः (सुशा. १०.४३)
**तुण्डिका**-स्त्री., वनस्पति० बिम्बी (ध. १.२०२) वनकार्पासीफलम् (र. २९.१२१-२२)
**तुत्थ**-न., खनिज० तुत्थकम् (ध. ३.१४५)
**(तुत्था)**-स्त्री., वनस्पति० नीलिनी (ध. १.२३२) महानीली (रा. ४.३५३) एलाभेदः सूक्ष्मैला (ध. २.४४) द्र० 'एला'
**-खर्पर**-न., मयूरतुत्थम् (र. २.१३४)
**तुत्थक**-न., खनिज० मयूरतुत्थम् (सुचि. ९.६१) गुणाः-कटुः, तिक्तं, कषायं, उष्णं, (रा) शीतं, (ध) चक्षुष्यं, रसायनं, रुच्यं, दीपनं, पुष्टिवर्धनं, वान्तिकरं, दृष्टिरोगश्वित्रविषवेगत्वग्दोषविनाशनम् (ध. ३.१४५)
इदमेव मयूरतुत्थं खर्परिकातुत्थमित्युच्यते (चचि. ७.१०८)
ऊषकादिगणे (सुसू. ३८.३७) प्रक्लिन्नवर्त्मनि नेत्ररोगप्रकारे तुत्थकं कज्जलतुल्यभागं ताम्रपात्रे घृष्टं सर्पिर्युतमञ्जनं कार्यम् (सुउ. १२.५३)



हिं.—नीलाथोथा.
**म.—मोरचूद.**
गु.—मोरथुथु.
बं.—तूतिया.
ता.—तुरिचि.
**तुद्यमान**-वि., लक्षण० पीड्यमानम् (चसू. १७.३९)
**तुन्द**-वि., स्थूलः (र. १६.१५०)
न., शारीर० उदरम् (र. १८.१९४)
**तुन्दिलफला**-स्त्री., वनस्पति० त्रपुसम् (रा. ७.२४६)
**तुन्नसंज्ञा**-स्त्री., सेवनी (असंउ. ३१)
**तुन्नसेवनी**-स्त्री., सीवनप्रकारेष्वेकः यथा वस्त्रं पाटितं तन्तुवायकः संदधाति तद्वत् (सुसू. २५.२२)
**तुमुलस्वन**-वि., प्रचण्डगर्जितः (मेघः) (सुसू. ६.३१)
**तुम्ब**-पु., यन्त्र० अलाबूः (चचि. २९.३७)
**(तुम्बी)**-स्त्री., वनस्पति० कटुकालाम्बुनी (ध. १.१७०) सरलः (ध., ३.७८) (रा. १२.१३६) इक्ष्वाकुः (चक. ३.३) तिक्तालाबूः, गुणाः-तिक्ता, कटुः, कषाया, अधोभागदोषहरा, कृमिकुष्ठकफानिलहरा, दुष्टव्रणशोधनी (सुसू. ४५.१२४)
**-बीज**-न., भैषज्य० इक्ष्वाकुफलबीजम् (चक. ३.१५)
**तुम्बरु**-पु., वनस्पति० तुम्बुरुः (ध. २.४२) (असंसू. ७)
**-तैल**-न., स्नेहविशेषः (ध. ६.१३८-३९)
**तुम्बिका**-स्त्री., वनस्पति० कटुकालाम्बुनी (ध. १.१७०) (रा. ३.२३४)
**तुम्बिनी**-स्त्री., वनस्पति० कटुकालाम्बुनी (ध. १.१७०) (रा. ३.३३४) कटुतुम्बिनी (र. १०.७३-७६)
**तुम्बुरु**-पु., धान्य० (चसू. २७.३०३) कटुर्मधुरस्तिक्तः (रा.), उष्णस्तीक्ष्णो वह्निदीपनः, कफवातशूलाऽपतन्त्रोदराऽऽध्मानकृमिगुल्मान्नाशयति (ध. २.४२) वातशूलघ्नः (चक. ४.१५) (सुउ. ४२.६९)
हिं.—तुंबरु.
**म.—चिरफळ.**
गु.—तुंबरुफल.
बं.—तेजबलेरगाछ.

**तुरग**–पु., वनस्पति० अश्वगन्धा ( र. ३०.७९ )
–**चर्या**–स्त्री., विक्रमवाञ्छितोपशल्यसंहितासु हयारोहणम् ( सुचि. ११.११ )
–**प्रिय**–पु., वनस्पति० यवः ( रा. १६.१२४ )
**तुरगाह्वा**–स्त्री., वनस्पति० घोण्टा ( रापरि. ८.२२ )
**तुरगी**–स्त्री., वनस्पति० अश्वगन्धा ( ध. १.२७२ )
**तुरङ्गगन्धा**–स्त्री., वनस्पति० अश्वगन्धा ( सुउ. ४१.४१ )
**तुरङ्गवर्चस्**–पु., अश्वपुरीषम्, अस्य स्वरसो रक्तपित्तशमनः ( सुउ. ४५.३१ )
**तुरङ्गिका**–स्त्री., वनस्पति० जीमूतकः ( रा. ३.२४४ )
**तुरङ्गी**–स्त्री., वनस्पति० घोण्टा ( रापरि. ८.२२ )
**तुरुष्क**–पु., सुगन्धिद्रव्य० धूपभेदः सिह्लकः ( चक. चचि. २८.१५३ (असंउ. १) गुणाः–कटुस्तिक्तोष्णः स्निग्धः स्वादुः कटुको वातकफपित्तघ्नः ( रा ) कुष्ठाश्मरीमूत्राघातभूतज्वरघ्नः ( ध. ३.२२ )
हिं.—शिलारस.
**म.—शिळारस.**
गु.—शिलारस.
बं.—शिलारस.
ता.—चिलारचं.
वनस्पति० यवानी ( ध. २.९४ )
**तुर्यांश**–पु., चतुर्थांशः ( असंशा. ६ )
**तुलसी**–स्त्री., वनस्पति० सुरसा ( ध. ४.५० ) गुणाः–कटुः, तिक्ता, हृद्योष्णा, दाहपित्तकारिणी, दीपनी, कुष्ठकृच्छ्ररक्तपित्तपार्श्वशूलहिक्काश्वासकासविषपूतिगन्धकफनाशिनी । सितासितकुसुमभेदाद्विविधा ( र. १८.१७४–७६ )
हिं.—तुलसी.
**म.—तुळस.**
गु.—तुलसी.
बं.—तुलसी.
ता.—तुलसी.
फा.—रेहान्.
**तुला**–स्त्री., मान० पलशतम् ( असंक. ८ )
**तुलिक**–पु., कार्पासगोलकावृतमुखी तृणकाष्ठादिशलाका ( र. २२.१२६ )
**तुलिनी**–स्त्री., वनस्पति० लक्ष्मणा ( रापरि. ७.५५ )
**तुल्ययोनित्व**–न., एकहेतुजन्यत्वं यथा चक्षुस्तेजोजन्यं रूपं च तेजोजन्यमिति चक्षूरूपयोस्तुल्यतेजोजन्यत्वम् । आयुर्वेदे तुल्ययोनित्वस्य सिद्धान्तः इन्द्रियार्थग्रहणे स्वीकृतः । तद्यथा—" इन्द्रियाणामिन्द्रियार्थानां च पाञ्चभौतिकत्वेऽपि यस्य भूतस्य यत्रेन्द्रिये आधिक्यं तेन तेनेन्द्रियेण तस्य तस्यैव गुणाः शब्दादयो गृह्यन्ते । इन्द्रियेण चक्षुरादिना रूपादिकमात्मीयं मानव उपादत्ते । तद्यथा–तैजसं चक्षुस्तैजसमेव रूपमादत्ते । तुल्ययोनित्वादेकभूतहेतुत्वात् । भूतं हि स्वयोनिमभिधावति जलमिव जलम् ( ड ) सुशा. १.१५ )
**तुल्यशीला**–स्त्री., समानस्वभावा ( सुचि. २४.१३० )
**तुल्या**–स्त्री., वनस्पति० आढकी ( ध. ६.९३ )
खनिज० सौराष्ट्री ( ध. ३.१०५ )
**तुवर**–पु., वनस्पति० यावनालभेदः तुवरयावनालः द्रव्यं यावनालम् ( रा. १६.१७१ )
न., कषायरसम् ( र.५.३० )
**( तुवरी )**–स्त्री., वनस्पति० आढकी ( ध. ३.१०५ )
खनिज० सौराष्ट्री ( ध. ३.१०५ )
–**धान्य**–पु., वनस्पति० यावनालभेदः तुवरयावनालः ( ध. ६.१०८ ) ( रा. १६.१७१ )
द्र० 'यावनाल'
–**यावनाल**–पु., वनस्पति० जूर्णाविशेषः ( रा. १६.१७१ )
**तुवरक**–पु., वनस्पति० पश्चिमसमुद्रभूमिषु पलाशानुकारी वृक्षः; अस्य स्नेहो महाव्याधिषूपयोज्यः ( सुचि. ३१.५ ) तद्गुणाः–महाप्रभाव उत्कृष्टतमः कुष्ठमेहापहस्तस्य मज्जानो मात्रया पीता नरं शोधयन्ति ( सुचि. १३.२०–३४ ; असंउ. ४९ )
हिं.—चौलमोगरा.
**म.—कडुकवठ, कंवठी.**
**(तुवरिका)**–स्त्री., भैषज्य० कांक्षी ( र. ३०.६४–६५ ) नेत्ररोगेष्वक्षिक्षालनार्थमुपयुज्यते ( असंउ. २०.२५३ )
–**तैल**–न., तुवरकः पश्चिमार्णवतीरजोऽयं वृक्षः तत्फलतैलं सर्वेषु कुष्ठेषूपयुज्यते ( असंचि. २१ ) गुणाः–उष्णं, मधुरं, कषायं, तिक्तानुरसं, वातकफकुष्ठमेदोमेहकृमिप्रशमनमुभयतोभागदोषहरं च ( सुसू. ४५.१२२ )
–**तैलप्रयोग**–पु., तैलस्य पञ्चाहिकप्रयोगः कुष्ठहरः प्रथमः; तस्यैव खदिराम्बुसिद्धस्य विशिष्टावस्थे कुष्ठे द्वितीयः प्रयोगः, तदेव सर्पिर्मधुखदिरकषायविधिना प्रयुज्यमानं तृतीयप्रयोगत्वेन व्यपदिश्यते । परोऽपि

पञ्चाशद्दिनावधिको नस्यप्रयोगो रासायनिकश्चतुर्थः स्मृतः। किंच मज्जप्रयोगः पञ्चमः। अञ्जनप्रयोगश्च षष्ठः ( सुचि. १३.२०–३५ )

**तुवरकास्थि**–न., तुवरकबीजं ( असंचि. २१ )

**तुवरानुरस**–न., तुवरोऽनुरसतयाऽऽस्वाद्यते यस्मिंस्तत् तुवरानुरसम्, अन्ये तु तुवरशब्देन कषायमाहुस्तेन किञ्चित्कषायानुरसमित्यर्थः ( चक्र. चचि. २२.२६ )

**तुष**–पु., धान्यत्वक् ( सुचि. ५.१८ र. १४.६० )

**तुषाम्बु**–न., सन्धान० यत्सतुषैर्यवैः क्रियते। तद्गुणाः–दीपनं हृद्यं हृत्पाण्डुक्रमिरोगनुत् ( सुसू. ४५.२१३ )

हिं.—यवोंकी कांजी.

**म.—जवाच्या कोंड्याचे पाणी.**

**तुषार**–पु., वनस्पति० चीनकः ( ध. ३.३१ ) ( रा. १२.६३ )

कर्पूरः ( ध. ३.३१ रा. १२.५६ )

अवश्यायः ( अहसू. २.४० )

**तुषोद**–न., आसव० तुषोदकम् ( ध. ६.२५१ )

**तुषोदक**–न., आसुत० ( चसू. २७.१९१ )

सतुषयवकाञ्जिकम् ( सुसू. ४४.४०–४४ )

**तुष्ट**–पु., वनस्पति० तिन्दुकः ( ध. ५.४० )

**तुष्टि**–स्त्री., मनःसंतोषः ( सुसू. १५.५ ( १ )

वनस्पति० ऋद्धिः ( ध. १.१८५. रा. ५.१८८ )

**तुहिन**–पु., वनस्पति० कर्पूरः ( ध. ३.३१ )

**तुहिनोदक**–न., हिमपानीयम् ( सुउ. ४७.५५ )

**तूणि**–पु., वनस्पति० गुणाः–कटुस्तिक्तो वृष्यः पुष्टिकरो वीर्यदो, कण्डूकुष्ठव्रणगण्डमालासंनिपातरक्तविकार-दाहशिरोरोगश्वेतकुष्ठानि त्रिदोषाँश्च हन्ति ( ध. ३.१८ )

हिं.—टूना.

**म.—देवदारी.**

बं.—हण्डीत्रिक्षा.

वातरोग० ( सुसू. ४६.३७२–७३ )

स्त्री., वनस्पति० नीलिनी ( ध. १.२३२ )

**तूणीक**–पु., वनस्पति० तूणिः ( ध. ३.१८ ) द्र० 'तूणि'.

**तूद**–न., फलविशेषः, अम्लं परूषकफलसदृशं गुणतोऽपि ततोऽल्पान्तरगुणम् ( चसू. २७.१३५ )

हिं.—शहतूत.

**म.—शहातूत.**

गु.—शेतूत,

बं.—तूत.

ता.—मल्लुकट्टेचेटि.

वनस्पति० तूलम् ( ध. ५.६४ ) द्र० 'तूल'

लक्षण० तोदनम्, तुद्यतेऽनेन दन्तः इति तूदम् यद्वा तुदति इति तूदम् ( आम्रातकम् ) ( अहसू. ६.१३८ )

**तूनसेवनीसंधि**–पु., अस्थिसंधिप्रकारः ( असंशा. ५ )

**तूनी**–स्त्री., रोग० ( र. १८.११६–१७ ) पक्वाशया-द्गुदोपस्थं तीव्ररुजो वायुश्चरन् तूनी भवेत् ( असंनि. ११ सुनि. १.८६ )

**तूर्णक**–पु., शालिभेदः ( चसू. २७.८ )

**तूर्णम्**–( अव्य० ) शीघ्रम् ( सुचि. ३६.१३ )

**तूल**–न., वनस्पति० गुणाः–मधुरमम्लं वृष्यमग्निकरं बल्यं वर्ण्यं सरं वातपित्तकफदाहनाशनम् ( ध. ५.६४ )

**–फल**–न., शाल्मलीफलादि। व्रणबन्धनद्रव्यम् ( सुसू. १८.१६ )

पु., वनस्पति० अर्कः ( रा. १०.२६ )

**–वृक्ष**–पु., वनस्पति० शाल्मली ( रा. ८.२११ )

**तूष्णींभाव**–पु., स्तब्धता ( धनि. ७.७ ( ३ )

**तृण**–न., वनस्पति० कुशकाशादि ( सुक. ३.१३ )

पु.,–वनस्पति० कुशः ( रा. ८.२०८ )

**( तृणी )**–स्त्री., वनस्पति० सठी ( रा. ६.८७ )

**–कुङ्कुम**–न., वनस्पति० कुङ्कुमम् ( रा. १२.२३ ) गुणाः–कटुरुष्णं, कफवातशोफकण्डूतिपामाकुष्ठाम-दोषघ्नम् ( रा. १२.२३ )

**–केतुक**–पु., वनस्पति० वंशः ( ध. ४.१३७ )

**–गौर**–न., वनस्पति० तृणकुङ्कुमम् ( रा. १२.२३ )

**–ग्रन्थि**–स्त्री., वनस्पति० हिमा ( रापरि. ३.१३ )

**–धान्य**–न., वनस्पति० कुरी ( रा. १६.१७९ )

**–निम्ब**–पु., वनस्पति० नेपालनिम्बः ( रा. ९.५२ )

**–पञ्चमूल**–न., ( सुसू. ३९.८ )

'तृणाख्यं पित्तजिद्दर्भशरकाशेक्षुशालयः।
एतैरेकीकृतं पञ्चमूलं तु तृणसंज्ञितम्॥ ( ध. ७.२६ )

**–पत्रिका**–स्त्री., वनस्पति० इक्षुदर्भा ( रापरि. ८.४७ )

**–पत्री**–स्त्री., वनस्पति० गुण्डासिनी ( रापरि. ८.६६ )

**–पुत्रिक**–पु., पुरुषाकृतिभूयिष्ठोऽपुरुषः, व्यवायेच्छा-युक्तः किन्तु व्यवायसामर्थ्यहीनः ( चशा. ४.३१ )

**–पुष्प**–न., वनस्पति० तृणकुङ्कुमम् ( ध. ३.२३ ) ( रा. १२.२३ )

**–(पुष्पी)**–स्त्री., वनस्पति० सिन्दुरी (रापरि. १०.१९)
**–पूली**–स्त्री., तृणमयी पुरुषाकृतिः (चचि. २(१).१८)
**–बल्वजा**–स्त्री., वनस्पति० बल्वजा (रापरि. ८.४०)
**–बीज**–पु., वनस्पति० श्यामाकः (ध. ६.८८)
**–बीजोत्तम**–पु., वनस्पति० श्यामाकः (ध.६.८८)
**–मूल**–न., सुगन्धितृणमूलम् (चचि. ४.१०३) (सुचि. ३७.३१)
**(–मूली)**–स्त्री., केतकी (सुक. ६.२१)
**–राज**–पु., वनस्पति० तालः (ध. ५.६८) नारिकेलः (रा. ११.१०५)
**–वालुक**–न., वनस्पति० उशीरम् (ध. ३.१४)
**–शीता**–स्त्री., वनस्पति० महाराष्ट्री (रापरि. ४.१३)
**–शुण्ठ**–पु., वनस्पति० गुण्ठः (ध. .(३१८
**–शूनी**–स्त्री., केतकी (ड सुक. ६.२१)
**–शून्य**–न., फल० केतकी, अस्य फलमासवार्थमुपयुक्तम् (चसू. २५.४९)
**–शून्यकन्द**–पु., केतकीमूलम् (सुचि. १८.१०)
**–शून्यफल**–न., फल० केतकीफलम् (सुसू. ४६.१९४)
**–शोषक**–पु., सर्पविशेषो राजिमान् (सुक. ४.३४(३))
**–संज्ञक**–पु., पञ्चानां तृणमूलानां समाहारः (सुसू. ३८.७५)
**तृणाम्ल**–न., वनस्पति० लवणतृणम् (रापरि. ८.५७)
**तृणाख्र**–न., वनस्पति० तृणकुङ्कुमम् (ध. ३. रा. १२.२३)
**तृणेक्षु**–स्त्री., वनस्पति० बल्वजा (रापरि. ८.४०)
**तृणोत्तम**–पु., वनस्पति० उखलः (रापरि. ८.४६)
**तृणोत्थ**–न., वनस्पति० तृणकुङ्कुमम् (ध. ३ रा. १२.२३)
**तृणोद्भव**–न., वनस्पति० नीवारः (रा. १६.१३९)
**तृणोलप**–न., तृणगुल्मम् (हे अहृसू. २९.१३)
**तृतीयक**–पु., विषमज्वर० (चचि. ३०.६६) अस्थिमज्जगो दोषस्तृतीयकज्वरं कुरुते। अस्मिन् ज्वरे तृतीयदिनभावित्वमस्ति। केचिद्विषमज्वरं भूताभिषङ्गोत्थं वदन्ति। तृतीयकस्तु त्रिविधः। कफपित्तात् त्रिकग्राही वातकफात्मकः पृष्ठग्राही, वातपित्ताच्छिरोग्राही (चचि. ३.६७–७१)
**तृप्ति**–स्त्री., संतोषः अयमाहारगुणानां श्रेष्ठः (चसू. २५.४०) लक्षण० (चसू. ४.८) विंशतिश्लेष्मविकारेष्वेकः (चसू. २०.१७)
अनन्नाभिलाषः (र. १८.४४)
**–घ्न**–वि., तृप्तिरोगघ्नः (चसू. ४.८)
**तृष्**–स्त्री., द्विविधलङ्घनान्तर्गतशमन० उदकवर्जनम् (अहृसू. १४.७)
जलपानेच्छा (सुउ. ६१.१६)
**तृषा**–स्त्री., जलेच्छा (चसू. १४.१४)
**तृष्णा**–स्त्री., लक्षण० पानीयसेवनेच्छा (चसू. १६.५) पिपासा (चनि. ४.४८) इच्छाद्वेषस्वरूपा वासना (चशा. १.३४) व्याधिः (चचि. २२.१) हेतुः संप्राप्तिश्च–भयश्रमबलसंक्षयैः पित्तलैश्च चितं पित्तं सवातमूर्ध्वं प्रसरत् तालुप्रपन्नं सत् तृष्णां जनयति (मा) रसवाहिनीश्च धमनीर्जिह्वामूलगलतालुकक्लोम्नः संशोष्यातिबलौ पित्तवातौ तृष्णां कुरुतः (चचि. २२.६) पूर्वरूपम्, ताल्वोष्ठकण्ठास्यानां विशोषणं दाहश्च, तथैव संतापो मोहो भ्रमो विप्रलाप इति पूर्वरूपाणि तृष्णोत्पादकाले विशेषतो भवन्ति (सुउ. ४८.७) भेदाः–तिस्रः दोषजाः, क्षतजा क्षयजा आमजा भक्तजा चेति सप्त तृष्णाः (मा) लक्षणानि—वातजतृष्णायां क्षामास्यता, स्रोतोनिरोधः शीताभिरद्भिश्च विवृद्धिः, शंखयोः शिरसि वा तोदः, विरसवक्त्रता। पित्तजतृष्णायां मूर्च्छा, विलापदाहा रक्तेक्षणत्वं प्रततश्च शोषः, शीताभिनन्दनं, परिदूयनमुपतापोऽन्नविद्वेषः मुखतिक्तता च। कफजतृष्णायां निद्राधिक्यं गुरुत्वं मधुरास्यता तृष्णार्दितत्वं भक्तद्वेषः प्रसेकश्च। क्षतजतृष्णायां रसक्षयः आभीक्ष्ण्येनाम्भःपानेऽपि सुखप्रत्ययाभावः हृत्पीडा कम्पः शोषः शुष्कता तृष्णा च। आमजतृष्णायां त्रिदोषलिङ्गयुक्तेयं तृष्णा हृच्छूलनिष्ठीवनसादकर्त्री; अन्नजा तृष्णा। स्निग्धाम्ललवणं गुर्वन्नं भुज्यमानमाशु इमां तृष्णां करोति। (मा;) तृष्णाया अन्ये प्रकाराः तच्छमनोपायाश्च–श्रमोद्भवा तृष्णा–श्रमजन्यतृष्णायां मांसरसो गुडोदकमथवा मन्थः प्रशस्तः (सुउ. ४८.३०) स्नेहपानजा तृष्णा–अस्यामुष्णं जलं प्रभूतं पातुमिष्यते (सुउ.४८.३१) मद्यपानजा तृष्णा-पाटलोत्पलकन्दमुद्गपर्णीसाधितं पिप्पलीमिश्रहिमशीतलं जलं मद्यतृष्णायां प्रशस्तम् (सुउ. ४७.५१) उष्णोद्भवा तृष्णा–उष्णोद्भवां तृष्णां सुशीतं सशर्करं सेक्षुरसं जलं हन्ति (सुउ. ४८.३२) व्याधिपीडितः पुरुषः जलं

काङ्क्षन् यदि जलं न लभते, तर्हि स आश्वेव मरणमाप्नुयाद्दीर्घरोगं वा लभेत । तस्मात् बहुभ्योऽपि रोगेभ्यः पूर्वमेव तृष्णां जयेत् ( चचि. २२.६० )
सर्वतृष्णासु पित्तशमनो विधिः कार्यः
( सुउ. ४८.३३ )
इच्छाद्वेषस्वरूपा वासना ( चशा. १.१३४ )
**–घात**–पु., लक्षण० तृष्णाघातज उदावर्तः, अस्मिन् शीतलमन्थयवाग्वादीनां पानं कार्यम्
( सुउ. ५५.३४ )
**–घ्न**–वि., तृष्णां हन्ति हरतीति ( चसू. १.१०९ )
**–निग्रहजरोग**–पु., तृष्णाया निग्रहो नाम अवरोधः तस्मात् निग्रहाच्छोषोऽङ्गसादबाधिर्यसम्मोहभ्रमहृद्गदा भवन्ति । तत्र सर्वशीतो विधिर्हितः
( असंसू. ५.१४ )
**–निग्रहण**–वि., तृष्णाशमनः ( चसू. ४.८ )
**–निग्रहणवर्ग**–पु., ( परिव० ) नागरधन्वयवासमुस्तपर्पटकचन्दनकिराततिक्तकगुडूचीह्रीबेरधान्यकपटोलानीति दशेमानि तृष्णानिग्रहणानि भवन्ति
( चसू. ४.१४ )
**–प्रतिषेध**–पु., अध्याय० ( सुउ. ४८.१ )
**तृष्णाधिक्य**–न., लक्षण० तृष्णाया आधिक्यम्
( चसू. २०.१४ )
**तृष्णाभिघात**–न., तृड्वेगविघातजोदावर्तः
( सुउ. ५५.१६ )
**तृष्णारि**–पु., वनस्पति० पर्पटः (रा. ५.६५)
**तृष्णालु**–वि., लक्षण० पिपासायुक्तः ( चचि. ३०.२४४ )
**तृष्णोपशमनी**–वि., तृष्णाया उपशमनी अपहन्त्री ( चिकित्सा ) ( चवि. ५.२६ )
**तृष्यत्**–वि., तृष्णायुक्तः ( चसू. १६.१० )
तृषारोगवान् ( चसू. १४.१८ )
**तेजन**–न., दीपनम् ( सुचि. २४.५२ )
वनस्पति० मुञ्जतृणम् ( चचि. १ ( ३ ). ३ )
**( तेजनी )**–स्त्री., वनस्पति० मोरटः ( ध. १.१५ )
मूर्वा ( असंचि. २. )
तेजोवती ( ध. १.२६६ )
**तेजनाह्वय**–पु., वनस्पति० मुञ्जः ( रा. ८.२०४ )
**तेजवती**–स्त्री., वनस्पति० तेजोवती ( ध. १.२६६ )
**तेजस्**–न., देहोष्मा ( चचि. १५.३ )
त्वक्स्था दीप्तिः ( ड. सुचि. ३८.५० )
पित्तोष्मा ( ड.सुउ. ४७.७०–७१ )
रञ्जकपित्तम् ( सुसू. १४.५ ) अग्निः ( सुसू. १४.५ )
पराक्रमः ( सुसू.४५.९६ )

**(तेजः–) पथ**–पु., जठरानलमार्गः ( सुसू. ४६.५१३ )
**–फल**–न., वनस्पति० गुणाः–कटु तीक्ष्णं दीपनं बालरक्षाकरं वातश्लेष्मघ्नमरुचिघ्नं च
( रा. परि. ११.१७ )
**(तेजो–) धातु**—पु., तेजः ( सुशा. २.३५ )
**–वृक्ष**–पु., वनस्पति० अग्निमन्थभेदः, क्षुद्राग्निमन्थः ( रा. ९.१३८ ) द्र० ' अग्निमन्थ '
**–ह्वा**–स्त्री., वनस्पति० तेजस्विनी, तेजोवती
( सुचि. ९.६१; ध. १.२६६ )
**तेजस्विनी**–स्त्री., वनस्पति० गुणाः–दीपनी, पाचनी, रुच्या, कफवातघ्नी ( ध. १.२६६ )
मूर्वा ( रा. ३.१० )
**तेजिनी**–स्त्री., वनस्पति० तेजोवती
( र. ११.९४; असंशा. ४ )
**तेजिवाह्**–पु., अश्वजाति० ( र. ३.१२५ )
**तेजोवती**–स्त्री., वनस्पति० मर्दनिका ( ड सुचि. २२.२४ )
गुणाः–श्लेष्मवातघ्नी, रुच्या, दीपनी
( ध. १.२६६ )
हिं.—तेजमल.
**म.—नेपाळी धनिया.**
फा.—तेजबळ.
महाज्योतिष्मती लता ( सुचि. २४.८ )
काकमर्दनिका ( ड. सुउ. ५१.२८ )
चविका ( चचि. १७.१४१ )
**तेर**–पु., वनस्पति० तैरिणी ( रापरि. ४.१५ )
**तेरण**–पु., वनस्पति० गुणाः–तिक्तः शिशिरोऽरुणवर्णकरो व्रणघ्नश्च ( रापरि. ४.१५ )
**तैजवल्ली**–स्त्री., वनस्पति० शतावरी ( रा. ४.४४० )
**तैजस**–वि., अग्निगुणनिर्वृत्तः ( सुशा. १.१९ )
अहङ्कारभेदः राजसोऽहङ्कारः ( सुशा. १.४ )
उष्णः ( सुसू. १४.३ )
न., आहारद्रव्य० घृतम् ( रा. १५.२०२ )
**( तैजसी )**–स्त्री., वनस्पति० गजपिप्पली (रा. ६.११७)
**तैत्तिर**–वि., तित्तिरस्य संबन्धि मांसरसादि
( चसू. १३.८३ )
**तैन्दुक**–वि., तिन्दुकवृक्षस्येदम्, तिन्दुकवृक्षभवम्
( चशा. ८.३३ )
**तैमिरिक**–वि., तिमिरव्याधियुक्तः
( चसू. १४.१९; सुचि. ३३.१४ )
**तैमिर्य**–न., रोग० तिमिरम्; तिमिरमेव तैमिर्यम्
( र. २३.४६; चचि. १४.११ )

**तैरिणी**–स्त्री., वनस्पति० ( रापरि. ४.१५ ) द्र० 'तेरण'

**तैर्यग्योन**–वि., तिर्यग्योनिजातो गोगजाश्वादिः तिर्यग्योनिभवः तैर्यग्योनः ( सुउ. ३९.१३ )

**तैल**–न., आहारद्रव्य० ( चसू.१.७३ ) तिलोद्भवं मुख्यम् एरण्डकरञ्जकुसुम्भादीनां बीजेभ्योऽपि तैलं निष्पद्यते सर्वतैलेषु स्वयोनिवद्गुणकर्माणि भवन्ति, तिलोद्भव तैलगुणाः–स्वादुकषायानुरसोष्णं, सूक्ष्मं, व्यवायि, तीक्ष्णं, पित्तलं, बद्धविण्मूत्रं, बल्यं, त्वच्यं, मेधाग्निवर्धनम्। वातघ्नं न श्लेष्मवर्धनं, संयोगात् संस्कारात् सर्वरोगहरम् ( चसू. २७.२८७ )

तैलात् परं वातघ्नं किञ्चिदपि औषधं नास्ति व्यवाय्युष्णगुरुस्नेहादिगुणैः संस्काराच्च बलवत्तरं भवति। तत्तु सूक्ष्ममार्गाश्रितान् गदान् क्षिप्रतरं हन्ति। स्नेहेन वातस्य रौक्ष्यं गुरुत्वाद्वातस्य लघुतामौष्ण्याद्वातस्य शैत्यं हत्वा तैलमाशु मनःप्रसादं वीर्यं बलं वर्णं पुष्टिमग्निं च ददाति ( चसि. १.३० ) वातश्लेष्मप्रशमनानामग्र्यम्

( चसू. २५.४० )

ग्रन्थिनाडीकृमिश्लेष्ममेदोमारुतरोगिषु लाघवदार्ढ्यार्थिक्रूरकोष्ठेषु च देहिषु तैलं विशेषतः शस्यते

( असंसू. २५.१२–१३ )

स्नेहनार्थं प्रावृषि तैलं युञ्ज्यात्

( असंसू. २५.१५–१६ )

कृशानां बृंहणाय स्थूलानां कर्शनाय च तैलमेव अलम्। तैलप्रयोगाद् दैत्याधिपतयो निर्विकारा युद्धेऽजरा जितश्रमाः प्राप्तातिबला बभूवुः

( असंसू. ६ )

भैषज्य० सिह्लकम्, शिलारसः इति यावत्

( र. २१.१३९ )

**–कन्द**–पु., वनस्पति० गुणाः–कटुरुष्णो रसबन्धको देहसिद्धिकरश्च, वातापस्मारविषशोफघ्नः

( रा. परि. ७.५० )

**–गण्डूष**–पु., तैलस्य मुखे धारणम् ( चसू. ५.८० ) तैलगण्डूषधारणगुणाः–हन्वोर्बलं स्वरबलं वदनोपचयः परं च रसज्ञानमन्ने च उत्तमा रुचिः, अनेन कण्ठशोषो नस्याऔष्ठयोः स्फुटनाद्भयम्। दन्ताः क्षयं न यान्ति दृढमूलाश्च भवन्ति नाम्लेन शूल्यन्ते न हृष्यन्ते परानपि खरान् भक्ष्यांश्च भक्षयन्ति च

( चसू. ५.७८–८० ) ( असंसू. १३.३० )

दन्तबलरुचिकराणां श्रेष्ठः ( चसू. २५.४० )

**–घृत**–न., योग० द्राक्षाकाश्मर्यादिसिद्धं कटुतैलं मत्स्यमाषदध्यादिसिद्धं घृतं च मिलित्वा तैलघृतं उत्पाद्यते एतद् दीपनं स्नेहनं बल्यं ग्रहणीपार्श्वरोगप्लीहगुल्मनिवारणं च ( काकटुतैलक १६.१७ )

व्योषजात्यादिभिर्दध्ना च सिद्धं तैलघृतमिदं शूलातिसारविनाशकम् ( सुउ. ४०.५६ )

**–दान**–न., तैलस्य दानं, तैलयुक्तो बस्तिः

( चसि. १.२९ )

**–द्रव्य**–न., कङ्गुणीतुम्बिन्यादि ( र. १०.७३–७५ ) तैलद्रव्याणि–कङ्गुणीतुम्बिनीघोषाकरीरश्रीफलकटुवार्ताकसिद्धार्थसोमराजीबिभीतकअतसीबीजमहाकालीनिम्बबीजतिलअपामार्गबीजदेवदालीदन्तीबीजतुम्बुरुअङ्कोलधत्तूरभल्लातकपलाशाः॥

एतेभ्यस्तैलान्युद्धृत्य रसकर्मण्युपयोक्तव्यानि

( र. १०.७३ )

**–द्रोणी**–स्त्री., अवगाहार्थे पात्रविशेषः, तैलयुक्ता द्रोणी बद्धगुदे परिस्राविणि चोदररोगे शल्यकर्मानन्तरं व्रणित्वेनाध्मानक्लेशनिवृत्त्यर्थमुपयुज्यते

( सुचि. १४.१७ )

**–निर्यास**–न., भैषज्य० जवादि ( रा. परि. १२.७ )

**–पाक**–पु., तैलपातनं; विध्युक्ता तैलसिद्धिः

( र. १२.१४ )

आसन्नपाके तैले परीक्षणार्थं बलाकायाः पक्ष्मेकं क्षिपेत्। स च यदा भ्रमराङ्गनीलो भवेत् तदा तैलं विपक्वं विद्यात् ( सुचि. २५.३०–३१ )

**–पायना**–स्त्री., शस्त्रतीक्ष्णीकरणार्थं संस्कार० पातुं प्रयोजना ( ड. ) निवृत्तानां शस्त्राणां तत्क्षणाद्द्रवद्रव्येषु निर्वापणं पायना ( हाराणचंद्र )। पायना त्रिविधा क्षारोदकतैलेषु। तत्र क्षारपायितं शस्त्रं शरशल्यास्थिच्छेदनेषु, उदकपायितं च मांसच्छेदनभेदनपाटनेषु। तैलपायितं च सिराव्यधनस्नायुच्छेदनेषूपयुज्यते ( सुसू. ८.१२ )

**–पेय**–न., कन्दविष० ( असंउ. ४० ) द्र० 'कन्दविष'

**–फल**–पु., वनस्पति० इङ्गुदी ( रा. परि. ८.१८ ) बिभीतकः ( रा. ११.३२२ )

**( फला )**–स्त्री., वनस्पति० अतसी ( ध. ६.११५ )

न., तिलोमास्फोतादि ( चचि. २६.४८ )

एरण्डफलतिलादि ( चसू. ३.१८ )

**–बीज**–पु., वनस्पति० भल्लातकः ( रा. ११.२०१ )

**–भाविनी**–स्त्री., वनस्पति० जाती ( ध. ५.१३७ )

**–योनि**–न., तिलादि, सतैलफलम्, तैलकारणं द्रव्यम्

( चचि. १५.२२७ )

**–लशुन**–न., योग० लशुनसिद्धं तैलम् अपस्मारे हितम् ( चचि. १०.६४ )

**–व्यापद्**–स्त्री., तैलादियोगजन्यविकृतिः ( चसू. २.३० )

**–सात्म्यता**–स्त्री., भोजने तैलस्याधिकाभ्यासः ( काखिल. ५.५० )

**–सिद्धि**–परिव० स्त्री., तैलसाधनम्, तैलपाकः ( सुचि. ३१.१२–१३ )

**तैलाक्ता**–स्त्री., तैलाभ्यक्ता ( सुचि. २५.२० )

**तैलागरु**–न., वनस्पति० अगरुभेदः दाहागरु ( रा. १२.४३ ) द्र० 'अगरु'

**तैलावचारण**–न., तैलप्रक्षेपः, तैलप्रयोगः पिचुसेकाऽनु–वासनादितैलोपयोगः ( सुउ. ४०.११२ )

**तैलोचित**–वि., यस्य तैलमुचितम्, तैलाभ्यस्तः ( चसू. १३.४६ )

**तैल्वक**–वि., तिल्वकस्येदं तैल्वकम् ( सुउ. ४४.१५ )

**–घृत**–न., विरेचनघृत० पाण्डुरोगे रेचनार्थमुपयुक्तम् ( सुउ. ४४.१५ )

तिल्वकः पट्टिकारोध्रस्तेन सुसंस्कृतं तैल्वकं घृतम् कफपित्तविदग्धयोर्दृष्ट्योर्हितम् ( सुउ. १७.४–६ )

**–भस्मन्**–न., योग० तिल्वककाष्ठानि दग्ध्वा कृतं भस्म। एतद् क्षौद्रघृतयुक्तं हिक्काशमनार्थं लिह्यात् ( सुउ. ५०.२० )

**–सर्पिस्**–न., घृत० तिल्वकसिद्धं घृतमम्लाध्युषिते नेत्ररोगे पेयम्। शुक्तिकारोगेऽपि घृतमिदं कार्यकारि ( सुउ. १०.१४ )

**तोटक**–पु., कीट० शकृन्मूत्रविषः चिपिटपिच्चिटकप्रभृती–नामन्यतमोऽयम् ( सुक. ३.५ )

**तोत्र**–न., सूचिप्रकारः ( सुउ. ४६.२२ )

**तोद्**–पु., लक्षण० तुद्यत इव वेदना ( सुचि. १.७ ) ( सुउ. ६१.१६ )

तुद्यते इति तोदः व्यथा इति यावत् तुदनम् ( र. २४.७४ )

विच्छिन्नं शूलम् ( सुसू. १३.२१ )

**–पर्णी**–स्त्री., धान्य० तोयपर्णी ( सुसू. ४६.२१ )

**तोदन**–न., फलशाक० तत्फलं–कषायं मधुरं रूक्षं कफवातजिच्च ( सुसू. ४६.१६७ )

लक्षण० सूचिभिस्तुद्यमानत्ववद् वेदना ( सुसू. २२.११ )

**तोय**–न., जलम् ( सुसू. ४५.२० )

क्वाथः ( सुचि. १८.६ )

स्वरसः ( र. २.८६ )

वनस्पति० वालकम्, मद्यपानजदाहे वालकजल–परिषेको हितः ( सुउ. ४७.५८ ) ( ध. १.४७ )

**–द**–पु., वनस्पति० मुस्तकम् ( र. २५.१०० ) मेघः ( सुचि. ३०.८ )

**–धातु**–पु., अब्धातुः ( र. १६.४ )

**–नाडी**–स्त्री., तोयस्याऽऽगमनार्थं नाडी प्रणाली इव, पक्वव्रणे पूयस्यागमनार्थं मार्गः ( सुसू. २२.८ )

**–पर्णी**–स्त्री., धान्य० तोयपर्णी ( सुसू. ४६.२१ ) शूकधान्यं, श्यामाकसदृशी गुणैः कषायमधुरा शीता लघुः वातला कफपित्तघ्नी सङ्ग्राहिणी शोषणी च ( चसू. २७.१७ )

**–पिप्पली**–स्त्री., वनस्पति० जलपिप्पली ( ध. ४.६४ ) महाराष्ट्री ( रा. परि. ४.१२ )

**–फला**–स्त्री., वनस्पति० उर्वारुकम् ( ध. १.१७६ )

**–मृत्तिका**–स्त्री., जलमृत्तिका ( र. ९.६० )

**–वल्लिका**–स्त्री., वनस्पति० अमृतस्रवा ( रा. परि. ३.४५ )

**–वल्ली**–स्त्री., वनस्पति० काण्डीरः ( ध. ४.६२ )

**–श्यामाक**–पु., त्रिविधश्यामाकमध्ये एकः, 'श्यामाकशब्देन 'तोयश्यामाक' उच्यते ( ड. ) ( सुसू. ४६.२१ )

**तोयाधा**–पु., अधस्तनघटस्थापितस्योण्णतयोर्ध्वघटमानी–तस्य पारदस्य आसनार्थं शीतोपायत्वेनाख्यातः पातनायन्त्रोपरितनभाण्डं परितो गलादधश्चतुरङ्गुलो–त्सेधमानो जलाधारः ( र. ९.६ )

**तोरण**–न., आर्द्रवंशादिरचितं प्रतोल्याकारम् ( सुसू. २९.३२ )

**तोल**–पु., मान० कर्षः ( र. ११.४–६ )

**तौलिक**–न., रत्न० मौक्तिकम् ( ध. ६.६२ )

**तौवरक**–न., तुवरकस्येदमिति तौवरकम्, तौवरफल० तद्गुणाः–कषायं कटुविपाकयुष्णं कृमिज्वरानाहमेहो–दावर्तनाशनं कुष्ठगुल्मोदरार्शोघ्नं च ( सुसू. ४६.१९६ )

**–तैल**–न., स्नेह० तुवरवृक्षफलोद्भवं तैलम्। कुष्ठ–व्याधिषूपयुज्यते ( असंउ. ४९ )

**–स्नेह**–पु., तुवरवृक्षफलोद्भवं तैलम् ( सुसू. ४६.४२३ )

**तौवरकल्क**–पु., योग० कषायरसद्रव्याणां कल्कः; यथा–कासीससौराष्ट्रीत्रिफलामोचरसादितुवरद्रव्याणि तेषां कल्कः ( चचि. ३०.१२४–२५ )

**तौषार**–पु., वि. आन्तरीक्षजलप्रकारेष्वेकम्, अवश्यायर्ज निशाजलम् ( सुसू. ४५.७ )

**त्याग**–पु., कीर्तिधर्मार्थं बहुप्रकारको वित्तविसर्गः (सुसू. ३४.१०–११)

**त्रपु**–न., खनिज० वङ्गम् (ध. ६.१३, सुसू. ४६.३२९) जिह्वानिर्लेखन–यन्त्रोत्पादनार्थम् उपयुक्तमेकं द्रव्यम् (चसू. ५.७४)

मन्थादिनेत्ररोगेषु लेखनार्थमुपयुज्यते (सुउ. १२.१४) (सुसू. ४६.३२९)

**त्रपुक**–न., खनिज० वङ्गम् (ध. ६.१३)

**त्रपुष**–न., वनस्पति० त्रपुसम् (चसू. १.८१–८४)

**त्रपुषीमूल**–न., वनस्पति० कर्कटीमूलम् । अस्य कल्कस्तण्डुलाम्बुना सह रक्तपित्तशमनः (सुउ. ४५.२४)

**त्रपुस**–न., फलशाक० (चसू. २७.११०) कर्कटीभेदः (ध. १.१७५) गुणाः–मधुरं, शीतं, गुरु, मूत्रबस्तिविशोधनं, रुच्यं, पित्तं, छर्दिभ्रमविदाहहृद्रोगहरम् (ध. १.१७५) तिक्तरसयुक्तम् (सुसू. ४६.२१६) वमने आस्थापने चोपयुज्यते (चसू. १.८१–८४)

हिं.—खीरा.

**म.—तौशी कांकडी.**

गु.—तांस्ली.

बं.—शसा.

वनस्पति० वालुकम् (हे. अहृसू. ६.८७)

खनिज० वङ्गम् (रा. १३.१४)

**(त्रपुसा)**–स्त्री., वनस्पति० इन्द्रवारुणी (ध. १.२५०)

**(त्रपुसी)**–स्त्री., वनस्पति० इन्द्रवारुणी (ध. १.२५०) कर्कटी (रा. ७.२५२)

**–कर्कटी**–स्त्री., वनस्पति० त्रपुसम् (रा. ७.२४६)

**–तैल**–न., स्नेह० कर्कटीफलतैलम् (सुसू. ४५.१२०) गुणाः–शीतलं, वातपित्तहरं, केश्यं, श्लेष्मलं, गुरु च (असंसू. ६)

**त्रप्वादिगण**–पु., द्रव्यगण० त्रपुसीसताम्ररजतकृष्णलोहसुवर्णानि लोहमलश्चेति, अयं गरक्रिमिहरः पिपासाविषहृद्रोगपाण्डुमेहहरः (सुसू. ३८.६२–६३)

**त्रयोदशाङ्गतैल**–न., तैल० व्रणरोपणमिदम्, चन्दनकर्कटशृङ्गीमाषपर्णीमुद्गपर्णीहरेणुगुडूचीमृणालनीलोत्पलमांसीपद्मकत्रिफलाभिः घृतवसामज्जभिर्वृतं त्रिवृतं तैलं सेकार्थं व्रणरोपणार्थमुपयुक्तम् (सुचि. २.३९–४१)

**त्राणा**–स्त्री., वनस्पति० त्रायमाणा (रा. ५.३७९)

**त्रायन्ति**–स्त्री., वनस्पति० त्रायमाणा, पटोलमूलादिक्वाथे श्वयथुहरेऽस्य निर्देशः कृतः (चचि. १२.५३) (चक. ७.५९)

**त्रायन्तिका**–स्त्री., वनस्पति० मदयन्तिका, मेहे प्रियङ्ग्वादिगणोक्तं द्रव्यम् (सुचि. ११.१०)

**त्रायन्ती**–स्त्री., वनस्पति० त्रायमाणा (असंचि. १.६२–६४; ध. १.२५४)

**त्रायमाणका**–स्त्री., वनस्पति० त्रायमाणा (ध. १.२५४)

**त्रायमाणा**–स्त्री., वनस्पति० (चचि. १३.७०) गुणाः–कटुः कषाया तिक्ता उष्णा कफपित्तघ्नी रक्तविकारगुल्मज्वरभ्रमतृष्णासूतिकाशूलश्रमक्षयच्छर्दिविषग्लानिहरा च (ध. १.२५४)

हिं.—त्रायमाण.

**म.—त्रायमाण.**

गु.—त्राहिमान.

बं.—वनभादुलिया.

**त्रास**–पु., रत्नदोष० वक्रता (र. ४.३६)

**त्रासन**–पु., वनस्पति० कलायः (ध. ६.१०३)

न., उपक्रम० अकस्माद्भयोत्पादनम् (अहृसू. १३.२ चचि. ९.७९–८४)

**त्रि**–वि., संख्या० (ध. ७.६)

**–कटुक**–न., योग० पिप्पली मरिचं शुण्ठीति द्रव्यत्रयम् (ध. ७.६)

''पिप्पली मरिचं शुण्ठी त्रयमेतद्विमिश्रितम् त्रिकटु (ध. ७.६)

**–कटुकादिकवल**–पु., उपक्रम० शुण्ठीमरिचपिप्पलीप्रभृतीनां कल्केन तैलादिभिः कवलः (सुचि. ४०.६१)

**–कण्ट**–पु., सविषकीट० कणभः (सुक. ८.२६)

**–कण्टक**–पु., वनस्पति० गोक्षुरकः (चचि. २८.१७३)

लघुपञ्चमूलेष्वेकम् (सुसू. ३८.६६–६७; र.१३.८७–८८)

सविषकीट० कणभः, त्रिकण्टकैर्दष्टस्य दंशः श्वयथुमान् नानावर्णोऽथवा सितश्च भवेत् । तत्र मोहो वर्चसो भेदश्च स्यात् (असंउ. ४३)

**–कूटलवण**–न., लवण० द्रोणीलवणम् (रा. ६.४९)

**–कूर्चक**–न., शस्त्रविशेषः त्रयः कूर्चाः यस्य तत् (सुसू. ८.४)

–कोणक–पु., वनस्पति० गुण्डः ( रापरि. ८.६० )
–कोश–वि., त्रयः कोशाः पर्वाणि यस्य तत् त्रिकोशम्
अ. त्रिकाण्डम् ( हेअहसू. २१.७ )
–कोषाफलित–वि., त्रिभिः पर्वभिर्भिन्नैः समन्वितम् ( चसू. ५.५० )
–क्षार–न., योग० यवसर्जिकाटङ्कणात्मकं क्षारत्रयम् ( र.५.२१९ )
–गन्धक–न., योग० पत्रत्वगेलानां सुगन्धिभेषजद्रव्याणां समूहः ( चचि. १६.८९ )
हरितालमनःशिलागन्धकानां योगः ( र. २१.२९–३० )
–गुणा–स्त्री., सत्त्वरजस्तम इति त्रयो गुणाः, तैरन्विता त्रिगुणा ( प्रकृतिः ) ( सुशा. १.९ )
–जात–न., योग० त्वग् एलापत्रकं चेति (र. २०.७२)
–जातक–न., त्रिसुगन्धम् त्रिजातम् ( त्वक्पत्रैलम् ) ( अहसू. ६.१६० )
–त्रिक–न., द्रव्यगण० त्रिफला, त्रिकटु त्रिजातकमिति ( र. १३.६३ )
–दण्ड–पु., परस्परसंयोगविधृतकुम्भादिधारकः ( चसू. चक्र. १.४६ )
–दश–पु., देवः ( र. १.६७ )
–दशमञ्जरी–स्त्री., वनस्पति० तुलसी (रा. १०.७८)
–दशाह्व–पु., देवदारुः ( चक्र. चचि. २८.१६२ )
–दिवोद्भवा–स्त्री., वनस्पति० एलाभेदः भद्रैला ( रा. ६.७० ) द्र० 'एला'
–दोष–पु., वायुपित्तकफाः ( र. २.१४९ )
–धारक–पु., वनस्पति० गुण्डः ( रा. परि. ८.६० )
–नेत्र–पु., पारदयोग० पारदशुल्बहरिणशृङ्गादिसाधितोऽयं पक्तिशूलनाशनः ( र. १८.११२ )
रसताम्रगन्धकादिसाधितोऽयं पक्तिशूलनाशनः ( र. १८.१४३–१४६ )
(–नेत्रा)–स्त्री., वनस्पति० वाराही ( र. ७.१३४ )
–पटु–न., लवणत्रयं सैन्धवसौवर्चलबिडानीति ( र. २३.४७–४८ )
–पत्र–पु., वनस्पति० बिल्वः ( र. ११.१३४ )
–पदा–स्त्री., वनस्पति० हंसपादी ( रा. ५.१६५ )
–पर्ण–पु., वनस्पति० पलाशः ( ध. ५.१६१ )
(–पर्णी)–स्त्री., वनस्पति० शालिपर्णी ( ध. १.८७ )
हंसपादिका ( असंसू. ७.१३९–४३ ) ( चसू. २७.१०२ )
मूर्वा ( ध. १.१३ )

–पर्णिका–स्त्री., वनस्पति० धन्वयासः ( रा. ३.२६ )
दुग्धिका ( सुसू. ४६.२७४ )
तिलकन्दः ( रा. परि. ७.५३ )
–पादिका–स्त्री., वनस्पति० हंसपादी (रा. ५.१६५) ( अहसू. १५.९ )
–पादी–स्त्री., वनस्पति० हंसपादी ( ध. ४.१११ ) ( अहसू. १५.९ ) ( असंसू. १६ )
–पुट–पु., वनस्पति० कराटः ( ध. ६.१०९ )
वि., त्रिकोणम् ( अहसू. २८.१८ )
–( पुटा )–स्त्री., वनस्पति० वार्षिकी ( ध. ५.१३६ )
कर्णस्फोटा ( रा. परि. ३.४१ )
त्रिवृद्भेदः, रक्ता त्रिवृत् ( ध. १.२४५ )
द्र० 'त्रिवृत्'
एलाभेदः भद्रैला ( ध. २.४६ ) द्र० 'एला'
–( पुटी )–स्त्री., आकार० त्रिकोणाकारा ( चचि. २६.३७ )
–पुटक–वि., व्रणाकृति० त्रिकोणाकारः ( सुसू. २२.५ )
–पुटोद्भवा–स्त्री., वनस्पति० एलाभेदः भद्रैला, ( ध. २.४६ ) द्र० 'एला'
पु., विदलधान्य० स्वल्पः त्रिपुटः, अल्पः करालः ( सुसू. ४६.२७ )
–पुरा–स्त्री., त्रिपुराख्या देवी (ह. र. २०.५६ )
–पुरान्तक–पु., पारदयोग० पारदजीवकचित्रकादिसाधितोऽयं वातजपित्तजकफजकुष्ठानां नाशकः ( र. २०.५४–५६ )
–पुरुषानूक–वि., त्रिपुरुषनामानुरूपम्, त्रिपुरुषाधिष्ठितम् ( चशा. ८.५० )
–प्रकृति–वि., दोषप्रकृतिः ऋतुप्रकृतिः रोगप्रकृतिश्चेति त्रिप्रकृतिर्व्याधिः ( का. खिल. २.४९ )
–प्रकोपण–वि., असात्म्येन्द्रियार्थसंयोगपरिणामप्रज्ञापराधकारणकः ( चचि. १७.४ )
–फला–स्त्री., योग० हरीतकी, आमलकं, बिभीतकमिति त्रयाणां फलानां समाहारः, विरेचनार्थमुपयुज्यते ( चसू. २.९–१०;ध. ७.१ ) बिभीतकाभयाधात्रीफलैः स्यात् त्रिफला समैः। त्रिफलागुणाः–कफपित्तघ्नी, मेहकुष्ठविनाशनी, चक्षुष्या दीपनी विषमज्वरनाशनी च ( सुसू. ३८.५३–५७ )
योग० द्राक्षाकाश्मर्यपरूषकाणि ( चचि. २६.८७ )
त्रिफलाचूर्णं रोपणार्थमुपयुज्यते ( सुसू. ३७.२७ ) ( असंसू. १६ )

–फलागुग्गुलु–पु., योग० त्रिफलायुतो गुग्गुलुः व्रण्यानां श्रेष्ठः ( असंसू. १३ )

–फलाघृत–न., सिद्धघृत० त्रिफलाक्काथकल्कपक्कमिदं घृतं तिमिररोगेषु सर्वशो हितम् ( सुउ. १७.२१ )

–फलारसायन–न., रसायन० जरणान्ते मधुसर्पिर्भ्यामेकामभयां प्रागभुक्तान्मधुसर्पिर्भ्यां द्वे बिभीतके, भुक्त्वा तु मधुसर्पिर्भ्यां चत्वार्यामलकानि खादेत्। त्रिफलाया रसायनमेकवर्षपर्यन्तं प्रयोजयेत् । अनेन नरो वर्षशतं जीवति । अजरो व्याधिरहितश्च भवति ( चचि. १(३).४१–४२ )

–फलासव–पु., आसुत० कुष्ठरोगविनिहन्ता योगः ( चचि. ७.८१ ) ( सुसू. ४६.४३३ )

–फली–स्त्री., योग० त्रिफला ( रा. २२.१ )

–बीज–पु., वनस्पति० श्यामाकः ( रा. १६.१४० )

–भण्डि–स्त्री., वनस्पति० त्रिवृत् (ड. सुउ. ५६.२७) शुक्ला त्रिवृत् ( सुसू. ४४.१५ )

–भण्डी–स्त्री., बनस्पति० रक्ता त्रिवृत् ( ध. १.२४९ ) द्र० 'त्रिवृत्'

त्रिवृद्भेदः ( चक. ७.४ )

मण्डला–स्त्री., लूता० दंशलक्षणम्–त्रिमण्डलाया दंशेऽसृक् कृष्णं स्रवति दीर्यते च, बाधिर्यं कलुषा दृष्टिर्नेत्रयोर्दाहश्च भवति ( सुक. ८.१०१ )

–मधु–न., घृतं गुडो मधु चेति मधुरत्रयम् ( र. ६.३७ )

–मधुर–न., शर्करामधुघृतम् ( र. ३०.८१ )

–मर्मीय–वि., अध्याय० ( चसू. २८.२९ )

–मर्मीयचिकित्सित–न., अध्याय० ( चचि. २६.१)

–मलापह–वि., त्रिदोषघ्नः ( चसू. २७.११ )

–योनिरस–पु., पारदयोग० ताम्रपारदादिसाधितोऽयं पाण्डुशोफविनाशनः ( र. १९.१०३–१०६ )

–रात्र–पु., रोग० तृतीयकाख्यो ज्वरः, यस्मिन्नेकं मध्यं दिनं मुक्त्वाऽर्थात्तृतीये दिने ज्वर आगच्छति ( र. १२.५९ )

–लवण–न., सैन्धवसौवर्चलबिडानि, इदं वातशूलघ्नम् ( सुउ. ४२.६९ )

लवणसमूहः ( ध. ७.६८ )

–लवणादिचूर्ण–न., योग० उदरव्याधावुपयुज्यते ( असंचि. १७.९६ )

–लिङ्ग–वि., वातपित्तश्लेष्मणां त्रयाणां लिङ्गानि यस्मिंस्तद् ( सुनि. ७.१२ )

–लोह–न., सुवर्णरौप्यताम्राणि ( र. २३.२५–२६ )

–वर्ग–पु., त्रिफला ( सुउ. ४१.४५ ) धर्मार्थकामाः ( चसू. ३०.२४; अहसू. २.३० )

–वर्गत्रितय–न., त्रिफला त्रिकटु त्रिजातकं च ( असंसू. ३.१६ )

–वर्णक–न., त्रिजातम् ( सुसू. ४४.७ )

–वर्ष–वि., संवत्सरत्रयातीतम् ( सुनि. १.७३ )

–विक्रम–पु., पारदयोग० ताम्रपारदगंधकादिसाधितोऽयम्, अश्मरीनिर्हरणः ( र. १७.९–११ )

–विधकुक्षीय– वि., त्रिविधकुक्षिशब्दप्रारब्धः ( अध्यायविशेषः ) ( चवि. २.१ )

–विधरोगविशेषविज्ञानीय – वि., त्रिविधरोगविशेषविज्ञानमधिकृत्य कृतः ( अध्याय० ) ( चवि. ४.१ )

–विधशिष्य–पु., तीव्रमध्यमन्दबुद्धिरिति त्रिविधः शिष्यः, तेषां सर्वेषां विशेषतो मन्दबुद्धीनामर्थसौकर्याय शास्त्रविस्तरः ( चचि. ३०.२३१ )

–विधशिष्यबुद्धि–स्त्री., उत्कृष्टमध्याल्पबुद्धयस्त्रिविधाः शिष्याः, तेषां मतिः ( चवि. ८.३ )

–वृत्–स्त्री., वनस्पति० ( चसू. ४.१३ ) श्यामश्वेतभेदेन द्विधा; तद्गुणाः–कटुरुष्णा, विरेचनी, कफघ्नी, कृम्युदरज्वरशोफपाण्डुप्लीहाकण्डूकुष्ठव्रणान्हन्ति ( ध. १.२४४ ) ( रा. ६.३६८ ) श्यामा त्रिवृद्विरेचने श्रेष्ठा ( ध. १.२४४ ) विरेचने त्रिवृन्मूलं श्रेष्ठम् ( चसू. २५.४० ) ( चक. ७.३.) कषाया मधुरा विपाके कटुका रूक्षा कफपित्तप्रशमनी, रौक्ष्याच्चानिलकोपनी, तस्या मूलं तु त्रिविधं श्यामं चारुणमेव च, तयोर्मुख्यतरमरुणप्रभम्, सुकुमारे शिशौ वृद्धे मृदुकोष्ठे च तद्धितकरम् ( चक. ७,३–७ ) श्यामा त्रिवृदतीवतीक्ष्णा, आशुकारित्वान्मोहयेद्धातुक्षयं कुर्यात् मूर्च्छयेत् तैक्ष्ण्यात् हृत्कंठं कर्षति, आशु दोषहरम् । अपि च ये नराः क्रूरकोष्ठा बहुदोषाश्च तेषां कृते शस्यते ( चक. ७. ८–९ ) श्यामादिगणे ( सुसू. ३८.२९ ) ( सुसू. ३९.४ ) अरुणात्रिवृद्गुणाः–कषाया मधुरा कटुविपाकोष्णा रूक्षा बहुरेचनी कफपित्तहरा वातप्रकोपणी ( ध. १.२४६–४७ ) रक्तत्रिवृद्गुणाः–तिक्ता कटुरुष्णा रेचनी ग्रहणीमलविष्टम्भहारिणी हितकारिणी च ( रा. ६.३७० )

हिं.—पिठोरी, निशोथ.

**म.—निशोत्तर.**

गु.—तेड.

बं.—दूधकलयी.

त.—शिवदाई.

–वृच्छाक–न., शूले शूलशमनार्थं त्रिवृच्छाकेन स्निग्धमुष्णं भोजनं प्रशस्तम् ( सुउ. ४२.९० )
–वृत–न., त्रिःपरिवृता गर्भकुटी ( सुचि. २९.१० )
(–वृता)–स्त्री., वनस्पति० त्रिवृच्छयामा ( चक.७.४)
–वृतायोगकिण्वा–त्रिवृद्योगयुक्तं किण्वं यस्यां सा ( चक. ७.७१ )
–वृत्ता–स्त्री., वनस्पति० पाठा ( ध. १.७० )
–वृत्स्नेह–पु., त्रिभिस्तैलसर्पिर्वसाभिर्वृतो व्याप्तः स्नेहसंयोगस्त्रिवृतसंज्ञः ( सुचि. १८.४ )
–वृदष्टकसंज्ञ–पु., विरेचनयोग० व्योषत्रिजातमुस्ता-विडङ्गादिसिद्धः ( सुसू. ४४.५४–५९ )
–वृद्विरेक–पु., त्रिवृता सिद्धघृतेन विरेकः, अयं कफजे तिमिरे उपयुज्यते ( सुउ. १७.३० )
–वृन्मूल–न., विरेचनद्रव्याणां मूलेषु त्रिवृन्मूलं श्रेष्ठम्, तदरुणाभं ग्राह्यम् ( सुसू. ४४.३ )
–वेला–स्त्री., वनस्पति० त्रिवृत् श्यामा (रा. ६.३६७)
–शाकपत्र–पु., वनस्पति० बिल्वः ( रा. ११.१३५ )
–शिख–पु., वनस्पति० बिल्वः ( रा. ११.१३५ )
–शिखदला–स्त्री., वनस्पति० मालाकन्दः ( रा. परि. ७.४४ )
–शिरस्–वि., त्रीणि शिरांसि यस्य, स क्रोधाग्निः ज्वररूपः ( चचि. ३.२३ )
वनस्पति० स्त्री., पाठा ( रा. ६.९९ )
–शूलिन्–पु., अग्निः ( र. ५.१२९ )
–शूली–स्त्री., वनस्पति० शिवलिङ्गी ( र. २९.३६)
–शोथीय–वि., त्रिशोथमधिकृत्य कृतोऽध्यायविशेषः ( चसू. १८.१ )
–संकर–वि., ऋतुप्रकृत्यादित्रयाणां संकरो मिश्रणं यस्मिन् स ( ज्वरः ) यथाऽऽतुरस्य वातप्रकृतिः ऋतुर्वातप्रकृतिः ( वर्षा ) वातज्वरश्चेति त्रिसंकराः एवमेव पित्तस्य कफस्य च ( काखिल. २.४७ )
–संधि–स्त्री., वनस्पति० वल्लीरूपा सा त्रिविधा– सिताऽसिता रक्ता, गुणाः–रुच्या कफकासहरा, त्वग्दोषशमनी च ( रा. परि. १०.३७ )
–संध्यकुसुमा–स्त्री., वनस्पति० त्रिसंधिः ( रा. परि. १०.३७ ) द्र० 'त्रिसंधि'
–सम–वि., समभागा हरीतकी शुण्ठी गुडूची च ( रा. २२. काखिल. १७.३२ )
–सुगन्धि–स्त्री., सुगन्धिद्रव्यत्रयं त्वक्तमालैलाः ( सुउ. ५२.४० )
–सूत्र–वि., त्रीणि सूत्राणि यस्मिन् सः, यथा–हेतु-लिङ्गौषधानि सूत्र्यन्ते यस्मिन् येन वा स आयुर्वेदः ( चसू. १.२४ )
–स्कन्ध–वि., त्रयः स्कन्धा यस्मिन् सः यथा हेतु-लिङ्गौषधानि स्कन्धा विभागा यस्य स आयुर्वेदः ( चसू. १.२५ )
–स्थूण–न., तिस्रः स्थूणा यस्य तच्छरीरम्; आगा-रस्याऽऽधारका यथा स्तम्भास्तथा शरीरस्यापि वात-पित्तकफास्त्रय आधारका, अतः शरीरं त्रिस्थूण-मित्युच्यते ( सुसू. २१.३ )

त्रिक–न., शरीर० गुदास्थ्नः प्रभृति कटिकपालोर्ध्वपर्यन्तो भागः ( चवि. ८.११७; असंशा. ८.३० ) पृष्ठ-वंशस्याऽधोभागः, शिरोबाहुद्वयसन्धानस्थानम् ( ड सुसू. २१.१४ ) पृष्ठवंशाधारः ( हे. अहृसू. १२.१५ ) ग्रीवायाः अंसद्वयस्य च यः संयोगः, स त्रिकः ( ड. सुशा. ६.२६ ) बाहुग्रीवास्थित्रय-संघातः त्रिकम् ( ड. सुसू. २२.१० )
–ग्रह–पु., लक्षण० त्रिकस्य ग्रहः, अशीतिवातविकारे-ष्वेकः (चसू. २०.११)
–ग्राहिन्–वि., लक्षण० त्रिकं स्तम्भयति इति ( चचि. ३०.७१ )
–वेदना–स्त्री., लक्षण० त्रिकभागे वेदना ( चचि. २८.२८–२९; सुनि. १.२४ )
–संधि–पु., बाहुग्रीवास्थित्रयसंघातः ( ड. सुसू. २२.१० )

त्रिकास्थि–न., अस्थि० ( सुशा. ५.१९ ) द्र० 'अस्थि'

त्रुटि–स्त्री., परिमाण० अणुषट्कमानम् ( र. ११.१ ) वनस्पति० सूक्ष्मैला ( र. १.२८; ध. २.४४ ) द्र० 'एला'

त्रेतायुग–न., युग० चतुर्णां युगानामेकम्, अयं पौराणिकः कालविभागः ( चवि. ३.२४ )

त्रैफलघृत–न., त्रिफलादिभिः सिद्धं घृतम्, शोणित-पित्तरोगयोर्विशेषहितम्, सर्वतिमिरेषु शोधनार्थ-मुपयुक्तम् ( सुउ. १७.२९ )

त्रैफलसर्पिस्–न., त्रिफलासिद्धं घृतम्, अम्लाध्युषिते पेयम्, शुक्तावप्येतदुपयुक्तम् ( सुउ. १०.१४ )

त्रैलोक्य–न., त्रयाणां लोकानां समूहः ( र. १२.२० )
–डम्बर–पु., पारदयोग० सूतार्कगंधचपलाजयपाला-दिसाधितोऽयं ज्वरघ्नः ( र. १२.२० )
–तिलक–पु., पारदयोग० कृष्णाभ्रककाचटंकणपारद-गुग्गुलुत्रिफलादिसाधितोऽयं उदावर्तविड्बंधसूति-कारोगादिहरः ( र. १५.८१ )

-विजय-न., तैल० पारदगंधकायस्ताम्रगुग्गुल्वादि-साधितं तैलं पानादिषु प्रयोजितं सर्वकुष्ठान्नाशयति (र. २०.१६८)

-(विजया)-स्त्री., वनस्पति० भङ्गा (र. २७.१०६-१०९)

-सुन्दर-पु., पारदयोग० पारदगंधकाभ्रकादिसाधितोऽयं वातोदरनाशनः (र. १९.१८-२०)

त्रैवृत-वि., कल्प० यथा त्रिवृता सिद्धं घृतं तैलं वा (सुउ. ५९.१८)

त्रैष्टुभ-पु., वनस्पति० सोमभेदः (सुचि. २९.७)

त्रोटक-पु., कीट० गुणाः-सौम्यः, श्लेष्मप्रकोपणः, अयं कफविकारान् करोति (सुक. ८.१२-१५)

त्र्यक्ष-पु., देवता० शंकरः ईशानः त्रीणि अक्षीणि नेत्राणि यस्य स त्र्यम्बकः (र. ७.१-२)

त्र्यक्षदिश-स्त्री., शिवस्य दिशा शिवाधिष्ठिता ऐशानी दिक् (र. ७.१-२)

त्र्यम्बक-न., खनिज० ताम्रम् (ध. ६.९)
पु., देवता० शंकरः (चचि. २३.८१)

त्र्यम्बकफल-पु., वनस्पति० नारिकेलः (रा. ११.१०५)

त्र्यष्टक-न., जलपात्रस्थापनार्थमाधार० अष्टास्रदण्ड-त्रयसंयोगरूप आधारविशेषः; इदं भूम्यादिस्पर्शजदोषापनुत्तये समुपयुज्यते (सुसू. ४५.१८)

त्र्यस्र-पु., भैषज्य० व्याघ्रनखम् (रा. १२.११०)
वि., त्रिकोणाकारो (व्रणः) (सुचि. २.५)

(त्र्यस्रा)-स्त्री., वनस्पति० वार्षिकी (ध. ५.१३६) रक्तात्रिवृत (ध. १.२४५) द्र० 'त्रिवृत्'

त्र्यस्रफला-स्त्री., वनस्पति० सल्लकी (ध. ३.१३५) (रा. ११.१९६)

त्र्याहल-पु., त्रिभिश्चरणयुगलचञ्चुभिराहलन्ति विलिखन्तीति विष्किराः (सुसू. ४६.५९)

त्र्याहिक-पु., रोग० 'दिनं हित्वा प्रत्येति स तृतीयकः' (चवि. ३.६७) तृतीयेऽह्नि भवो ज्वरः तृतीयकः (र. १२.६३)

त्र्यूष-न., त्रिकटु (ह. र. २९.६३)

त्र्यूषण-न., शुण्ठी पिप्पली मरीचमिति त्रयम्, त्रिकटुकमिति (चचि. १२.२४; ध. ७.६)

त्र्यूषणघृत-न., घृत० त्र्यूषणत्रिफला द्राक्षाकाश्मर्यादिसाधितमिदं कामलाकासज्वरादिरोगेषूपयुक्तम् (चचि. १८.३९-४२)

त्वच्-स्त्री., शारीर० मांसजन्य उपधातुः (चचि. १५.१७) मांसवहानां स्रोतसां मूलम् (चवि. ५.८) त्वगुत्पत्तिः-गर्भे शुक्रशोणितस्याभिपच्यमानस्य क्षीरस्य संतानिका इव सप्त त्वचो भवन्ति (सुशा. ४.४) असृजः पच्यमानस्य षट् त्वचो भवन्ति (असंशा. ५.२४)

स्पर्शनेन्द्रियस्याधिष्ठानम् (चसू. ८.१०) त्वक्। संख्याशरीरे षट् त्वचः इति चरकः। सुश्रुते तु सप्त त्वचः, शरीरे षट् त्वचः, तद्यथा-उदकधरा त्वग्बाह्या, द्वितीया त्वसृग्धरा, तृतीया सिध्मकिलाससंभवाधिष्ठाना, चतुर्थी दद्रुकुष्ठसंभवाधिष्ठाना, पञ्चमी त्वलजीविद्रधिसंभवाधिष्ठाना, षष्ठी तु यस्यां छिन्नायां ताम्यत्यन्ध इव च तमः प्रविशति यां चाप्यधिष्ठायारूंषि जायन्ते पर्वसु कृष्णरक्तानि स्थूलमूलानि दुश्चिकित्स्यतमानि च इति षट् त्वचः। एताः षडङ्गशरीरमवतत्य तिष्ठन्ति (चशा. ७.४) त्वचां प्रथमाऽवभासिनी नाम, या सर्वान् वर्णानवभासयति पञ्चविधां च छायां प्रकाशयति, सा व्रीहेरष्टादशभागप्रमाणा, सिध्मपद्मकण्टकाधिष्ठाना च; द्वितीया लोहिता नाम, षोडशभागप्रमाणा, तिलकालकन्यच्छव्यङ्गाधिष्ठाना; तृतीया श्वेता नाम, द्वादशभागप्रमाणा, चर्मदलाजगल्लीमषकाधिष्ठाना; चतुर्थी ताम्रा नामाष्टभागप्रमाणा विविधकिलासकुष्ठाधिष्ठाना; पञ्चमी वेदिनी नाम पञ्चभागप्रमाणा कुष्ठविसर्पाधिष्ठाना; षष्ठी रोहिणी नाम व्रीहिप्रमाणा ग्रन्थ्यपच्यर्बुदश्लीपदगलगण्डाधिष्ठाना; सप्तमी मांसधरा नाम व्रीहिद्वयप्रमाणा, भगन्दरविद्रध्यर्शोऽधिष्ठाना (सुशा. ४.४)

इंद्रिय० सर्वशरीरवर्ति स्पर्शनेन्द्रियं त्वगिन्द्रियमित्यभिधीयते (सुशा. १.४)

वनस्पत्यङ्गत्वग् (चसू. १.७३) गन्धद्रव्येष्वेकम् (सुसू. ३८.२४) (चसू. ५.२१) गुणाः-इदं त्वगाख्यं गन्धद्रव्यं कटु उष्णं (शीतं, (रा.) तीक्ष्णं, लघु, बस्तिशोधनं कण्ठशुद्धिकरं कफवातघ्नं विषकण्ठरुजावक्त्ररुजाशिरोरुजाकासघ्नं च (ध. २.५०)

हिं.—दालचीनी.
म.—दालचिनी.
गु.—दालचीनी.
बं.—दालचिनी.
ता.—इलवङ्कप्पट्टै.

अश्मन्तकः (ध. १.१९४)

**–क्षीरी**–स्त्री., वनस्पति० तुगाक्षीरी (चचि. २९.६४)
भैषज्य० वंशलोचना ( सुसू. ४४.१६ )
( ध. २.५५ )
**–गन्ध**–पु., वनस्पति० नारङ्गः ( रा. ११.२४ )
**–दाह**–पु., लक्षण० त्वचो दाहः ( चसू. २०.१४ )
**–दोष**–पु., त्वग्रोगः ( चसू. ३.२९ )
कुष्ठम् ( ड. सुसू. २४.९ )
न., वनस्पति० कुष्ठम् ( रा. १२.९७ )
**–दोषारि**–पु., वनस्पति० हस्तिकन्दः
( रा. परि. ७.३६ )
**–पत्र**–न., वनस्पति० त्वक्पत्रिका ( सुउ. ४७.३२ )
**–परिपुटन**–न., लक्षण० त्वच उच्चटनम्
( सुसू. १७.५ )
**–पाक**–पु., लक्षण० त्वचः पाकः ( सुनि. १४.१३ )
गुह्यरोग० पित्तासृग्भ्यां ज्वरदाहवान् त्वक्पाकः भवति द्र० 'शूकदोषः' ( असंउ. ३८ )
**–भेद**–पु., लक्षण० त्वचो भेदः ( चशा. ८.३२ )
**–वात**–पु., रोग० देहस्फोटनं पादतलविदारणं हस्तपादतलानां च विदाह इत्येतान्यत्र वर्तन्ते लक्षणानि ( र. २१.१७१ )
**–विष**–न., स्थावरविष० ( सुक. २.५ ) द्र० 'विष'
**–सवर्ण**–वि., त्वचा सवर्णम् ( ड. ) रूढव्रणलक्षणेष्वेकम् ( सुसू. २३.२० )
**–सार**–पु., वनस्पति० वंशभेदः, रन्ध्रवंशः
( रा. ७.२१६ )
वंशः ( ध. ४.१३७ ) ( सुसू. ८.१५ )
विशुद्धत्वग्युक्तः पुरुषः, तल्लक्षणम्–स्निग्धश्लक्ष्ण–मृदुप्रसन्न-सूक्ष्माल्पगम्भीरसुकुमारलोमा सप्रभेव त्वक् चास्य भवति ( चवि. ८.१०३ ) रससारः सुप्रसन्नमृदुत्वग्लोमा त्वक्सारः ( सुसू. ३५.१६ )
वनस्पति० शणः ( रा. परि. ४.१० )
**-सारभेदिनी**–स्त्री., वनस्पति० क्षुद्रचञ्चुः
( रा. परि. ४.२२ )
**–( सारा )**–स्त्री., भैषज्य० वंशरोचना ( रा. ६.८६ )
**–सुगन्ध**–पु., वनस्पति० नारङ्गः ( ध. ५.२० )
**–( सुगन्धा )**–स्त्री., वनस्पति० एलाभेदः भद्रैला ( ध. २.४६ ) द्र० 'एला'
**–स्फोटन**–न., लक्षण० त्वचां स्फुटनम्
( सुउ. ४४.५ )
**त्वगवदरण**–न., लक्षण० बाह्यत्वङ्मात्रावदरणम्
( चसू. २०.१४ )
**त्वगवदलन**–न., लक्षण० त्वचो भागशः पतनम्
( सुचि. २९.१२ )
**त्वच्**–न., वनस्पति० त्वच् ( ध. २.५० )
**त्वच्य**–वि., त्वचे हितः ( चसू. ५.८७ )
**त्वरितक**–पु., धान्य० षष्टिकवत्त्वरितं पच्यते इति व्रीहिभेदः ( सुसू. ४६.१२ )
**त्वष्टा**–स्त्री., वनस्पति० ब्राह्मी ( ध. ४.१०० )
**त्वाष्ट्र**–न., खनिज० ताम्रम् ( ध. ६.९ )
**त्सरु**–पु., असिमुष्टिः ( अहृसू. २६.१७ )

## द

**दंश**–पु., कीट० ( चइ. २.२१ )
दन्तः ( कासू. २०.५ )
वनमक्षिका ( सुसू. १८.२९ )
भक्षितस्थानम् ( ड. ) दष्टस्थानमिति यावत्
( सुक. ३.४२ )
दन्तेन कर्तनम् ( सुसू. १३.२१ )
वनस्पति० शिग्रुः ( ध. ४.३९ )
यन्त्र० सन्दंशः ( र. ३.४५ )
**–मूल**–पु., वनस्पति० शिग्रुः ( रा. ७.६० )
**दंशावदरण**–न., विषगतपित्ताधिक्येन दंशस्थानस्फोटनम् ( चचि. २३.१६८ )
**दंष्ट्रा**–दंत० राजदन्तसमीपवर्ती बस्तः, तत्सन्निकृष्टा दंष्ट्रा
( कासू. २०.४ )
**–पद**–न., सर्पादिकृतदंशस्य स्थानम् (चचि. २३.१२७)
**–विष**–न., दंष्ट्रायाः विषम् ( चचि. १३.१३२ )
वि., दंष्ट्रागतविषवान् ( भौमः सर्पः ) मार्जारश्व-वानरादयोऽपि दंष्ट्राविषाः ( सुक. ३.५ )
**दंष्ट्रिन्**–पु., प्राणि० वराहः ( र. १२.७५ )
**दक**–न., उदकम् ( असंचि. १.४२ )
**–लावणिक**–वि., यूष० अयं अल्पमांसादिकृतः स्वच्छश्च ( असंसू. ७.५१ )
**दकोदर**–न., रोग० जलोदरम् ( चसू. १९.४(१) ( सुनि. ७.४ ) द्र० 'उदर'
**दकोदरयन्त्र**–न., यंत्र० दकोदरस्रावणार्थं नाडीयन्त्रम्
( सुसू. ७.१३ )
**दक्ष**–पु., नृप० ( अहृसू. १८.१६ )
देवताविशेषः ( चचि. ३.१७ )
प्राणि० कुक्कुटः ( अहृसू. ७.१६ )
शीघ्रकारी ( हे. ) कर्मणि चतुरः
( अरु. अहृसू. १.२८ )

चतुरः ( सुक. १.१४ )

**–पुरीष**–न., कुक्कुट–शकृत् ( असंउ. ३५ )

**–यज्ञ**–पु., दक्षेन कृतो यज्ञः ( चचि. १९.४ )

**दक्षाण्ड**–पु., न., दक्षः गोष्ठकुक्कुटः तस्याण्डम् ( चचि. ११.२५ ) कुक्कुट्याः अण्डम्, वाजीकरणार्थमुपयुज्यते ( असंउ. ५७ )

**दक्षिण**–पु., अभिजातः कुलीनः ( ड. सुक. १.१४ )

**( दक्षिणा )**–स्त्री., अनुकूला ( इन्दु. असंउ. १ )

**दक्षिणानिल**–पु., वसन्ते दक्षिणदिशो जातत्वान्मलयपर्वतस्थितचन्दनसुरभिर्दक्षिणो वायुः (सुसू. ६.२८)

**दक्षिणायन**–न., दक्षिणां दिशं प्रति सूर्यस्य गमनम् ( चसू. ६.४ )

**दक्षिणावर्तकी**–स्त्री., वनस्पति० वृश्चिकाली ( रा. परि. ९.७ )

**दक्षिणावर्ता**–स्त्री., वनस्पति० मेषशृङ्गी ( ध. १.८७ )

**दग्ध**–न., वनस्पति० शालिपर्णीभेदः, आलकम् ( ध. १.८८ )

**( दग्धा )**–स्त्री., वनस्पति० ( रा. परि. ९.२८ ) गुणाः–कटुकषायोष्णा, पित्तप्रकोपणी दीपनी, कफवातनिकृन्तनी ( रा. परि. ९.२८ )

**–गुद्**–पु., लक्षण० अयं स्वेदनानर्हः ( अहृसू. १७.२३ )

**–रुह**–पु., वनस्पति० तिलकः ( रा. १०.२६६ ) ( ध. ५.१५८ )

**–( रुहा )**–स्त्री., वनस्पति० दग्धा द्र० दग्धा ( रा. परि. ९.२८ )

**–लक्षण**–न., कृष्णता, क्षारादिदग्धस्य लक्षणम् ( सुसू. ११.१९ )

**–स्नेहपाक**–पु., स्नेहपाक० खरपाकः, कृष्णोऽवसन्नः, ईषद्विशदं चिक्कणं भेषजं अभ्यवहारार्थे नोपयुज्यते; अयं बस्तिकर्णपूरणयोरुपयुज्यते ( सुचि. ३१.११ )

**–हस्त**–वि., अदैष्टिकादिलक्षणयुक्तो रसकर्मणि वर्जनीयहस्तः ( वैद्यः ) ( र. ७.३० )

**दग्धिका**–स्त्री., वनस्पति० दग्धा ( रा. परि. ९.२८ ) द्र० दग्धा

**दण्ड**–पु., लौहादिवलयैर्निबद्धा दीर्घनिष्ठुरकाष्ठयष्टिः ( सुसू. २९.७ ) न., घटिका ( र. ५.२२९ )

**–कन्दक**–पु., वनस्पति० धरणीकन्दः ( रापरि. ७.४२ )

**–धारण**–न., दण्डस्य धारणम् ( चसू. ५.१०२ ) तद्गुणाः–स्खलतः संप्रतिष्ठानं, शत्रुनिषूदनमवष्टंभनं, भयघ्नमायुष्यं च ( सुचि. २४.७८ )

**–मुष्टिहत**–वि., दण्डेन मुष्ट्या च ताडितम् ( चचि. २८.३२ )

**–वात**–पु., रोग० दण्डापतानकः ( र. २१.१४८ )

**–वृक्षक**–पु., वनस्पति० स्नुही ( रा. ८. ३५६ )

**दण्डक**–पु., रोग० दण्डवद् दृश्यते इति दण्डकः ( चवि. ८.४२ ) तल्लक्षणानि आमबद्धायनः कफान्वितो वायुरङ्गं संस्तभ्य दण्डवत् करोति असावसाध्यः ( असंनि. १५.४२ ) अवयवस्य काष्ठवत्स्तम्भनम् ( चसू. २०.११ ) ( असंसू. ५.३१ )

**दण्डकालसक**–पु., रोग० दण्डकालसकः ( अहृसू. ८.१३ )

**दण्डापतानक**–पु., वातरोग० ( सुनि. १.५३ ) दण्डवत् स्तब्धगात्रस्य दण्डकः, मारुतः पाणिपादसिराः स्नायूः कण्डराश्च संशोष्य पाणिपादशिरःपृष्ठश्रोणीः स्तभ्नाति ( चचि. २८. ५१–५२ )

**दण्डालसक**–पु., रोग० अस्मिन् व्याधौ शरीरस्य दण्डवत् स्तम्भनम्, तल्लक्षणम्–वातेन शूलभ्रमानाहकम्पस्तम्भादयः, पित्ताच्च ज्वरातिसारान्तर्दाहतृट्प्रलयादयः, कफाद् अङ्गगौरववाक्संगष्ठीवनादयश्च भवन्ति; दुश्चिकित्स्योऽसौ ( अहृसू. ८.८–१२ )

**दण्डाहत**–न., आहारद्रव्य० मथितम् ( ध. ६.१८९ ) ( अहृसू. १४.२२ )

**दण्डिन्**–पु., वनस्पति० दमनम् (रा. १०.११९)

**दण्डैरका**–स्त्री., वनस्पति० तृण० ( चचि. २६.५१ ) गुन्द्राख्यगुल्मो, नलो वा ( चक्र चक. १.२५ )

**दत्तनावन**–वि., दत्तनस्यः, दत्तं नस्यं यस्मै सः ( अहृसू. १९.४ )

**दद्रु**–पु., कुष्ठरोग० पित्तश्लेष्माधिकं कुष्ठम् ( चसू. ३.७ ) द्र० 'कुष्ठ'

**–घ्न**–पु., वनस्पति० चक्रमर्दः ( रा. ४.९ )

**–मण्डल**–न., चर्मरोग० ( सुसू. ११.७ ) द्र० 'कुष्ठ'

**–हस्त**–न., वनस्पति० तगरम् (रा. १०.१०२)

**दधि**–न., आहारद्रव्य० ( चसू. २७.२२५ ) ( ध. ६.१८७ ) दधिगुणा :–अम्लं रसे पाके च ( चसू. २७.२२५ ) कषायानुरसम् ( सुसू. ४५.६५ )

उष्णं ( ध. ६.१८७ ) स्निग्धं ( भाप्र. ) गुरु ( अहसू. ५.२९ ) ( भाप्र. ) रोचनं वृष्यं स्नेहनं बलवर्धनं बृंहणं मङ्गल्यं च ( चसू. २७.२२५ ) पीनसविषमज्वरातिसारारोचकमूत्रकृच्छ्रकार्श्यापहम् ( सुसू. ४५.६५ ) ग्राहि मेदःकरं शुक्रलं च ( ध. ६.१८७ ) रक्तपित्तकरं शोफकरं च ( ध. ६. १८७ ) प्राणकरं ( सुसू. ४५.६५ ) वातघ्नं ( ध. ६.१८७ )

दधिभेदाः—तत् सप्तविधम्—स्वाद्वम्लमत्यम्लं, मन्दजातं, शृतक्षीरभवं, ससारमसारं चेति, मधुरदधिगुणाः—मधुरं महाभिष्यन्दि कफमेदोविवर्धनम्। अम्लं दधि कफपित्तकृत्। अत्यम्लं दधि रक्तदूषणम् ( सुसू. ४५.६६ )

मन्दजातं दधि नाम न सम्यग्दधिभावमापन्नं दधि। तत्तु विदाहि सृष्टविण्मूत्रं त्रिदोषकृच्च ( सुसू. ४५.६७ )

शृतक्षीरभवं दधि गुणवद्रुच्यं वातपित्तहरं धात्वग्निबलवर्धनं च। असारं दधि कषायं (रूक्षं) ग्राहि, विष्टम्भि, दीपनीयं, लघुतरं, रुचिप्रदं, वातलं च ( सुसू. ४५.६५–८३ )

शरद्ग्रीष्मवसन्तेषु दधिनिषेधः, तथा रक्तपित्तकफोत्थविकारेषु च दध्यहितकरम् ( चसू. २७.२२७ )

जातं दधि नाम मन्दकावस्थामुत्सृज्य घनतया जातं तच्च मधुरमीषदम्लं भवति। तत्तु विशेषेण वातघ्नम् ( चसू. २७.२२८ ) अजातं दधि—वातलं ( असंसू. ७.२४२ ) दधिसरः शुक्रलः। दधिमण्डः श्लेष्मवातघ्नः स्रोतोविशोधनश्च ( चसू. २७.२२८ ) गुर्वेव दधि वह्निं कुरुते ( असंसू. १७.४२ ) स्निग्धमपि दधि श्वयथुकरम्। न तथा तद्विकारयोः स्निग्धयोरपि तक्रनवनीतयोः श्वयथुकारित्वम् ( असंसू. ७.२३१ )

गुडयुक्तं दधि स्नेहनं हृद्यं वातघ्नं च ( सुसू. ४६.३८४ )

मन्दकं दधि अभिष्यन्दकराणां श्रेष्ठम् ( चसू. २५.४० )

दधिसेवननियमाः—रात्रौ दधि न भुञ्जीत। तथोष्णं दधि न सेवेत। अमुद्गसूपमक्षौद्रमघृतसितोपलमनामलकं न सेवेत। नित्यं न सेवेत। मन्दकं न सेवेत, अन्यथा तत् ज्वरासृक्पित्तवीसर्पकुष्ठपाण्डुभ्रमकरं भवति ( अहसू. ५.३१–३३ )

हिं.—दही.
**म.—दही.**
गु.—दही.
बं.—दई.
ता.—तयिर.

वनस्पति० कपित्थः ( रा. ११.१५५ )
धूप० श्रीवेष्टकः ( ध. ३.१३३ )

**–ज**–न., आहारद्रव्य० नवनीतम् ( रा. १५.२५७ )

**–पुष्पिका**–स्त्री., वनस्पति० गिरिकर्णिका ( ध. ४.८४ ) ( रा. ३.१२३ )

**–पुष्पी**–स्त्री., वनस्पति० स्वादुरसा ( कटुः ) उष्णा ( शिशिरा ) गुरुः रञ्जनी वातघ्नी ( वातामयकरी ) ( रा ) सन्तापपित्तदोषारोचकघ्नी च ( ध. १.१५३ )

**–फल**–पु., वनस्पति० कपित्थः (ध. २.१०२)

**–भव**–न., आहारद्रव्य० नवनीतम् ( ध. ६.२२४ )

**–मण्ड**–पु., मस्तु ( चनि. २.४ ) ( सुउ. ५२.१८ )

**–मण्डोद्भव**–न., आहारद्रव्य० नवनीतम् ( ध. ६.२२९ )

**–मस्तु**–न., दध्युदकम् ( चसू. १४.३३ ) सुजातस्य दध्नो द्रवभागः ( सुसू. ४६.४२७ )

**–मस्तुक**–पु., दधिसरः ( सुचि. ३१.३८ )

**–मुख**–पु., सर्प० दर्वीकरः (सुक. ४.३४ (१)

**–सर**–पु., दध्न उपरितनो भागः, नेत्ररोगेषूपयुज्यते ( असंउ. २०० ) (सुउ. ४०.१३७ )

**दधित्थ**–न., वनस्पति० कपित्थः ( चसू. २.१९ ) ( सुउ. ४९.२७) ( सुउ. ३९.३०३ )
पु., वनस्पति० कपित्थः ( ध. २.१०२ )

**दध्यम्ल**–न., दध्नाऽम्लीकृतम् ( किमपि द्रव्यम् ) ( चक. १.१२ )
आहारद्रव्य० मथितम् ( ध. ६.१८९ )

**दध्युत्तर**–न., दधिसरः ( चक्र चचि. १७.७४ )

**दध्युत्तरक**–न., दध्नः सरः (सुउ. १२ ४०)

**दनु**–पु., खनिज० गन्धकः ( र. २२.३३ )

**–ज**–पु., खनिज० गन्धकः (ह) (र. २०.७७)

**दन्त**–पु., शारीर० मुखस्थः कठिनश्चर्वणादिसाधनोऽवयवः (चशा. ४.१४) नृणां द्वात्रिंशद्दन्ताः ( चशा. ७.६) ( सुसू. २६.२२ ) ( असंशा. ९.१४ )

तत्राष्टौ सकृज्जाताः स्वरूढदन्ता भवन्ति, अतः शेषा द्विजाः। यावत्स्वेव च मासेषु दन्ता निषिच्यन्ते तावत्स्वहःसूद्भिद्यन्ते। यावत्स्वेव च मासेषु

जातस्य सत उद्भिद्यन्ते तावत्स्वेव च वर्षेषु पतिताः पुनरुद्भिद्यन्ते। तत्र मध्ये द्वावुत्तरौ राजदन्तसंज्ञौ भवतः, तौ पवित्रौ, तस्मात्ताभ्यां खण्डे न श्राद्धमर्हति, अपवित्रो हि सः। तयोरुभयतः पार्श्वयोरपि बस्तौ तयोरपि दंष्ट्रे, शेषाः स्वरूढा हानव्या इति चोच्यन्ते, तथाऽधस्तात्। तत्र कुमारीणामाशुतरमल्पाबाधकरं च दन्तजन्म, सुषिरत्वाद्दंशानां मृदुस्वभावाच्च, प्रकृष्टकालमाबाधबहुलं तु कुमाराणामाचक्षते, घनत्वाद्दंशानां स्थिरस्वभावाच्च। दन्तानां निषेकमूर्तित्वोद्भेदवृद्धिपतनपुनर्भावनिवृत्तिस्थितिपरिक्षयचलनपतनदृढत्वदुर्बलताजातिविशेषान्निषेकात् स्वभावान्मातापित्रोरनुकरणात् स्वकर्मविशेषाच्चेत्याचक्षते महर्षयः। नृणां तु चतुर्थादिषु मासेषु दन्ता निषिच्यन्ते। तत्र सदन्तजन्म च पूर्वमुत्तरदन्तजन्म च, विरलदन्तजन्म च, हीनदन्तता च, अधिकदन्तता च, करालदन्तता च, विवर्णदन्तता च, स्फुटितदन्तता चामङ्गल्या भवति। चतुर्विधं तु दन्तजन्माचक्षते सामुद्गं, संवृतं, विवृतं दन्तसंपदिति। तत्र सामुद्गं क्षयि, नित्यसंपातात्, संवृतमधन्यं मलिष्ठं, विवृतं वीतमनित्यलालोपहतमसंछन्नदन्तत्वादाशुदन्तवैवर्ण्यकरमासन्नाबाधमिति। चतुर्थे तु मासि दन्ता निषिक्ता दुर्बला भवन्त्याशुक्षयिणश्चामयबहुलाश्च, पञ्चमे स्यन्दनाश्च प्रहर्षिणश्चामयबहुलाश्च षष्ठे प्रतीपाश्च मलग्राहिणश्च विवर्णाश्च घुणदन्ताश्च भवन्ति, सप्तमे द्विपुटाः स्फोटिनश्च राजिमन्तश्च खण्डाश्च रूक्षाश्च विषमाश्चोन्नताश्च भवन्ति, तथाऽष्टमे मासि सर्वगुणसंपन्ना भवन्ति। पूर्णता समता घनता शुक्लता स्निग्धता श्लक्ष्णता निर्मलता निरामयता किञ्चिदुत्तरोन्नतता, दन्तबन्धनानां च समता रक्तता स्निग्धता बृहद्घनस्थिरमूलता चेति दन्तसंपदुच्यते ( कासू. २०.४७)

**( दन्ती )**–स्त्री., वनस्पति० ( ध. १.२२३ ) गुणाः–कटुका उष्णा तीक्ष्णा दीपनी शोधनी कफवातघ्नी उदरार्शोव्रणाश्मरीशूलामदोषत्वक्दोषहरा च ( ध. १.२३ )

अस्याः श्यावानि मूलानि कल्पे उपयोक्तव्यानि ( चक. १२.३ )

हिं.—अजयपालवृक्ष.

**म.—दाती.**

गु.—दाती.

बं.—दन्तीगाछ.

ता.—नाकतेन्ति.

क्षीरविष० ( असंउ. ४० ) ( अहृसू. १५.४५ ) द्र० 'क्षीरविष'

हस्तिदंतः ( चसि. ३.७ )

**–काष्ठ**–पु., वनस्पति० विकङ्कतः ( रा. ९.५५ ) दन्तशोधनार्थमुपयुक्तं काष्ठम् ( सुक. १.२५ )

**–काष्ठक**–न., वनस्पति० आहुल्यम् (रा.परि. ४.३३)

**–खादन**–न., लक्षण० परस्परं दन्तपीडनम्; दन्तैर्दन्तानां पीडनम्

**–खादिन्**–वि., लक्षण० यस्तु मारुतप्रकृतिः, स सुप्तः सन् दन्तान् किटिकिटायते ( सुशा. ४.६० )

**–ग्राहिता**–स्त्री., लक्षण० अतिशीततया दन्तान् कार्याक्षमान् करोति ( सुसू. ४५.११ )

**–चलन**–न., लक्षण० दन्तमांसे दन्तोलूखले च दन्तस्य इतस्ततश्चलनम्, चलदन्तत्वम् ( कासू. २०.५ )

**–चाल**–पु., लक्षण० चलदन्तत्वम्, दन्तशैथिल्यम् ( चसि. २.२२ ) ( कासू. २७.१९–२५ ) ( अहृसू. २२.५ )

**–च्छद**–पु., ओष्ठः ( असंउ. २६. )

**–जन्मन्**–न., दन्तोत्पत्तिः ( कासू. २०.३ ) चतुर्विधं दन्तजन्म–सामुद्गं, संवृतं, विवृतं, दन्तसंपदिति ( कासू. २०.७ ) द्र० 'दन्त'

**–जन्म–संवृत**–वेष्टितदन्तजन्म ( कासू. २०.७ )

**–जन्म–सामुद्ग**–संपुटयुक्तदन्तोद्भवः (कासू. २०.७)

**–जन्म–विवृत**–ओष्ठेनानाच्छादितं दन्तजन्म

**–जन्मिकाध्याय**–पु., ( परिव० ) अध्याय० ( कासू. २०.१ )

**–दुर्बलता**–स्त्री., लक्षण० दन्तस्य कार्ये दौर्बल्यम् ( कासू. २०.५ )

**–दृढता**–स्त्री., लक्षण० दन्तस्य कार्ये दृढत्वम् ( कासू. २०.५ )

**–दौर्बल्य**–न., लक्षण० दन्तानां दुर्बलता ( चसू. ५.२८ )

**–धावन**–पु., वनस्पति० गुच्छकरञ्जः ( रा. ९.१८४ ) खदिरः ( ध. १.२५ )

न., दन्तमार्जनम्, धावनं शुद्धिरिति यावत् दन्तरोगी तद्विवर्जयेत् ( सुचि. २२.४२ )

**–धावनकूर्चक**–न., दन्तधावनानां करञ्जकादीनां कुटिलाग्रम् ( सुसू. २७.१९ )

**–नाडी**–स्त्री., दन्तरोग० दन्तमूलजो व्याधिः अयं पंचधा–वातपित्तकफसन्निपातागन्तुभेदात् ( असंउ. २५ ) ( सुचि. १६.२६ )

**–निवृत्ति**–स्त्री., दन्तपतनादनन्तरं तस्यापुनर्भवः (कासू. २०.५)

**–निषेचन**–न., (परिव०) दन्तसंभवः (कासू. २०.४)

**–निष्पीडित**–वि., दन्तैः पीडितम् (सुसू. ४५.१५७)

**–पतन**–न., दन्तस्य पतनम् (कासू. २०.५)

**–परिक्षय**–पु., दन्तस्य क्षयः क्षीणत्वम् (कासू. २०.५)

**–पवन**–न., दन्तधावनकाष्ठम्, पूयते शुध्यते अनेनेति पवनं दन्तधावनकाष्ठे रूढम् (चचि. २३.११६)

**–पवननिषेध**–परिव० पु., दन्तपवनार्थमयोग्याः (सुचि. २४.४–१२)

गलरोगे, तालुरोगे, ओष्ठरोगे, जिह्वारोगे, आस्यपाके, श्वासे, कासे, हिक्कायां, छर्दिरोगे, दुर्बलत्वे, अजीर्णभक्ते, मूर्च्छायां, मदपीडिते, अर्दिते, शिरोरोगे, तृषायां, श्रमे, पानक्लमे, कर्णशूले, दन्तरोगे च दन्तपवनं निषिद्धमुक्तम् (सुचि. २४.४–१२)

**–पातन**–वि., चलतां दन्तानां पातकरम् (शरपुङ्खमुखयन्त्रम्) (अहसू. २५.३३)

**–पुप्पुट**–पु., दन्तरोग० दन्तमूलगतोऽयं व्याधिः, द्वयोस्त्रिषु वा दन्तमूलेषु ककास्थाद्वदराष्ठिनिभो घनस्तीव्ररुक् च शोफो भवति। स च शीघ्रं पच्यते। स दन्तपुप्पुटो नाम दन्तरोगः (असंउ. २५) तस्य चिकित्सा–अस्मिन् व्याधावुत्पन्ने सति रक्तावसेचनं प्रथमं करणीयम्। अनन्तरं पञ्चलवणैः सह क्षारो मधुना सह प्रतिसारणार्थं योजनीयः। तथा शिरोविरेको मधुकोत्पलपद्मकैः सह त्रिफलासिद्धस्नेहेन नस्यं करणीयम्। स्निग्धं चापि भोक्तव्यम् (सुचि. २२.१२–१३)

**–पुप्पुटक**–पु., दन्तमूलगतरोग० दन्तमांसस्य शोफप्रधानो रोगः दन्तपुप्पुटः (सुनि. १६.१६) द्र० 'दंतपुप्पुट'.

**–फला**–स्त्री., वनस्पति० पिप्पली (रा. ६.११०)

**–बीजक**–पु., वनस्पति० दाडिमः (रा. ११.९३)

**–बीजा**–स्त्री., वनस्पति० क्षीरतुम्बी (रा. ७.२३९)

**–भाण्ड**–न., दन्तनिर्मितं पात्रम् (रा.१२.४३.४४)

**–भेद**–पु., दन्तरोग० दन्तस्य भेदः (चसू. २०.११) (असंउ. २५ असंसू. २०)

**–मांस**–न., दन्ताधारमांसम् (चचि. १२.७८) (अहसू. २.३)

**–मूल**–न., दन्तोत्पत्तिस्थानम् (सुनि. १६.१८) (असंशा. ८.३२)

**–मूलगतरोग**–पु., दन्तमूलास्थ्याश्रयिरोगः शीतादो दन्तपुप्पुटकः, दन्तवेष्टकः, शौषिरो, महाशौषिरः, परिदरः, उपकुशो, दन्तवैदर्भो, वर्धनोऽधिमांसो नाड्यः पञ्चेति (सुनि. १६.१३)

**–लेखन**–न., शस्त्र० (असंसू. ३४.२४)

**–लेखनक**–न., शस्त्र० (अहसू. २६.१९)

**–वल्क**–न., दन्तत्वक् (सुनि. १६.३३)

**–विद्रधि**–पु., दन्तरोग० दन्तमूलगतोऽयं व्याधिः। सरक्तैर्वातादिभिर्दोषैर्दन्तमांसेऽन्तर्बहिश्च गुरुः सरुग्दाहश्वयथुश्च भवति, स च भिन्नः पूयास्रं स्रवेत् स रोगो दन्तविद्रधिः (असंसू. २५) (चचि. १२.७८)

**–वृद्धि**–स्त्री., परिव० दन्तस्य वर्धनम् (कासू. २०.५)

**–वेष्ट**–पु., दंतरोग० दुष्टशोणितजोऽयं व्याधिः, अस्मिन् चलाः दंताः पूयरुधिरं स्रवन्ति (मा) (सुसू. २३.८)

**–वेष्टक**–पु., दन्तानां वेष्टकः (चशा. ७.११)

**–वैदर्भ**–पु., दन्तरोग० (सुसू. २५.९) लक्षणम्–घृष्टेषु दन्तमूलेषु महान् संरम्भो जायते, दन्ताश्चला भवन्ति च। स अभिघातजो वैदर्भो नाम व्याधिः (सुनि. १६.२३–२४) शस्त्रेण दन्तमूलशोधनम्। क्षारस्योपयोगः कर्तव्यः। सर्वाऽपि चिकित्सा शीतगुणप्रधाना करणीया (सुचि. २२.२२)

**–शङ्कु**–पु., शस्त्र० कपालिकाशर्करादिदन्तदोषहरणाय शङ्कुः (सुसू. ८.३–४)

**–शठ**–पु., वनस्पति० जम्बीरः (ध. ५.१४), वृक्षाम्लः (चचि. ३.२६७) (सुसू. ४६.१९१) (र. १८.२२६) कपित्थः (रा. ११.१५५)

**–(शठा)**–स्त्री., वनस्पति० क्षुद्राम्लिका (ध. ५.३६)

**–शर्करा**–स्त्री., दन्तरोग० लक्षणम्–दन्तेषु शर्करेव स्थिरीभूतो मलो दन्तशर्कराख्यो रोगः। सेयं दन्तशर्करा दन्तानां शुक्लादिगुणहारिणी (सुनि. १६.३२) शर्करामुद्धरेत्, परं दन्तमांसानि मा हिंस्यात्। अनन्तरं मधुना सह लाक्षाचूर्णेनाऽवशिष्टशर्करां प्रतिसारयेत् (सुचि. २२.३६–३७)

**–शुद्धि**–स्त्री., दंतधावनम्, तस्य विधिः–दन्तशोधनद्रव्येण मृदुना कूर्चेन दन्तमांसाबाधनेनैकैकं दशनं घर्षयेत् (सुचि. २४.८–९)

–शूल–पु., लक्षण० दन्तस्य शूलः ( चसि. २.१६ )
–शैथिल्य–न., लक्षण० दन्तस्य शैथिल्यम् ( चसू. २०.११ ) ( असंसू. २९.१३ )
–शोधन–न., दन्तशुद्धिः ( सुचि. २४.८–९ )
( –शोधनी )–स्त्री., वनस्पति० जीरकभेदः कृष्णजीरकः ( रा. ६.१०५ ) द्र० 'जीरक'
–शोष–पु., लक्षण० दन्तस्य शोषः ( चसि. २.१६ )
–स्तम्भ–पु., लक्षण० दन्तस्य स्तम्भः ( चसि. २.१६ )
–स्थिति–स्त्री., दन्तस्य स्थिरत्वम् ( कासू. २०.५ )
–संपद्–स्त्री., सर्वगुणसंपन्नता, अष्टमे मासि निषिक्ता नाम उद्भूता दन्ताः सर्वगुणसंपन्ना भवन्ति ( कासू. २०.८ ) द्र० 'दन्त'
–हर्ष–पु., दन्तरोग० दन्तस्य हर्षः ( चचि. २.२२ ) ( सुनि. १६.३० ) लक्षणम्–यस्य दशनाः शीतमुष्णं च स्पर्शनं न सहन्ते । सोऽयं समीरणाद्भवति ( सुनि. १६.३० ) ( असंउ. २५ ) सुखोष्णाः स्नेहा वातव्याधिपठितत्रिवृत्सर्पिः वातघ्नकषायाश्च कवलार्थमुपयोजनीयाः । स्नैहिक–धूमस्य, स्नैहिक–नस्यस्य, स्नैहिक–भोजनस्याप्युपयोगः करणीयः ( सुचि. २२.३४–३६ )
–हर्षण–पु., वनस्पति० जम्बीरः ( ध. ५.१४ )
–हर्षप्रमर्दन–वि., दन्तहर्षनाशकः ( सुचि. २२.३४ )
दन्ताद–पु., शोणितजकृमि० दन्तान्दन्तमांसानि चात्तीति दन्तादः । अदृश्योऽयं कृमिः । दुश्चिकित्स्यो नत्वसाध्यः । ( सुउ. ५४.१५ ) दन्तादचिकित्सा– अचलं कृमिदन्तं स्वेदयेत् । ततो रक्तमोक्षणं च विधेयम् । तथा च वातहरद्रव्यैरवपीडनं नाम नस्यमुपयोज्यम् । वातघ्नसिद्धतैलैर्गण्डूषाः करणीयाः । तत्स्थाने भद्रदार्वादिभिश्च लेपः स्निग्धं भोजनं चोपयोज्यम् । चलं कृमिदन्तमुत्पाट्य दन्तसुषिरमग्नितप्तशलाकादिभिश्च दहेत् । विदारीयष्ट्याह्वादिसिद्धं तैलं नस्यार्थमुपयोज्यम् ( सुउ. ५४.३७ )
दन्ताधान–पु., वनस्पति० निम्बूकः ( रा. ११.२२ )
दन्तान्तर–न., दन्तयोर्मध्ये योऽवकाशः सः ( सुसू. ४६.४८३ )
दन्ताशय–पु., शारीर० दन्तस्थानम् ( असंउ. २ )
दन्तिनी–स्त्री., वनस्पति० दन्ती ( रा. ६.३३८ )
–बीज–न., वनस्पति० जेपालः ( रा. ६.३४४ ) ( ध. १.२२७ )
दन्तिमद–पु., वनस्पति० हस्तिमदः ( रा. ६.२० )

दन्ती–स्त्री., वनस्पति० ( ध. १.२२३ ) गुणाः–कटुका उष्णा तीक्ष्णा दीपनी शोधनी, कफवातघ्नी उदराशोव्रणाश्मरीशूलामदोषत्वग्दोषहरा च
–शलाटु–पु., दन्तीफलम् ( चचि. १६.५१ )
–स्नेह–पु., तैल० तद्गुणाः–तिक्तः कटुः कषायश्चाऽधोभागदोषहरः कृमिकफकुष्ठानिलहरो दुष्टव्रणशोधनश्च ( सुसू. ४५.१२४ )
–हरीतकी–स्त्री., योग० दन्तीचित्रकहरीतक्यादिसाधितोऽयं गुल्मार्शःश्वयथुकुष्ठकामलारोचकग्रहण्यादिहरः ( असंचि. १६ )
दन्तुरत्वच्–पु., वनस्पति० मातुलुङ्गः ( रा. ११.२७ )
दन्तोलूखल–न., शारीर०दन्तानामुलूखलम् (चशा.७.६)
दन्त्यरिष्ट–पु., आसुत० दन्तीचित्रकपंचमूलादिसिद्धोऽयं ग्रहणीपाण्डुरोचकघ्नो दीपनः शुष्कार्शोघ्नश्च ( चचि. १४.१४४–४७ सुचि. ६.१४ )
दन्त्यादिगण–पु., द्रव्य० गण० दन्तीत्रिवृच्चित्रकपलाशमूलत्रिकटुत्रिफलाऽष्टवर्गविडंगपलाशबीजमुस्तकजीरकैलाकण्टकारीणां समूहः लोहकल्पार्थमुपयुज्यते ( र. २८.६२ )
दन्दशूक–वि., पुनः पुनर्भक्षणशीलः, दष्टुं शीलं अस्य इति ( चक्र चवि. ८.९७ )
दम–पु., वनस्पति० दमनम् ( ध. ३.६६ )
–वशान्वित–पु., वनस्पति० दमः (ध.३.६६)
दमन–पु., वनस्पति० कुन्दः ( रा. १०.२५६ )
न., वनस्पति० तद्गुणाः– तिक्तः कषायः कटुकः शीतलो हृद्यस्त्रिदोषघ्नो विषभूतकण्डूकुष्ठविस्फोटहरश्च ( ध. ३.६४ )
( दमनी )–स्त्री., वनस्पति० अग्निदमनी ( रापरि. ४.४ )
दमनक–पु., वनस्पति० दमनम् ( रा. १०.१९ )
दमयन्ती–स्त्री., वनस्पति० मल्लिका ( रा. १०.२२५ )
दम्पती–पु., जायापती ( सुचि. २४.९२. )
दम्भ–पु., कुहकवृत्तिता ( ड. ) राजसगुणः (सुशा.१.१८)
दर–पु., लक्षण० दरदरिका, हृत्कम्पः ( चसू. १७.३१ )
–द–पु., न., खनिज० हिङ्गुलः ( र. १.१८८ ) ( ध. ६.४० )
दरण–न., ( परिव० ) वेदना० आरया दीर्यते इव ( सुउ. ४३.६ )
दरिद्र–पु., निर्धनः (सुचि. ३०.४)
दर्दुर–पु., खनिज० खर्परप्रकारः ( र. २.१५२ )
प्राणि० मण्डूकः ( इन्दु. असंउ. ४३ )
शालिधान्य० ( चसू. २७.१४ )

**( दर्दुरी )**–स्त्री., वनस्पति० मण्डूकपर्णी ( र. १२.८८ )
**दर्प**–पु., भैषज्य० कस्तूरिका ( अहृसू. ३.११ )
**दर्पण**–पु., आदर्शः ( चचि. ९.१८ ) (सुउ. ६०.१९ )
**दर्भ**–पु., वनस्पति० सः खरमृदुभेदेन द्विधा; गुणाः– मधुरः, शीतलो रुच्यः पित्तघ्नो मूत्रकृच्छ्ररक्तपित्त-ज्वरतृषाश्वासकामलाघ्नः ( ध. ४.१३३ ) तृणपंचमूलेष्वेकम् ( अहृसू. १५.२१ ) स्तन्यजननगणे एकं द्रव्यम् (चसू. ४.१२) (सुसू. ३८.७५–७६)
हिं.—दाभ.
म.—दर्भ.
गु.—कुश.
बं.—कुश.
–**कुसुम**–पु., कफजक्रमि० ( असंनि. १४.५२ )
द्र० 'कृमि'
–**पञ्चक**–न., तृणपञ्चमूलम् (असंचि. ८) (हे.
–**पत्र**–पु., वनस्पति० काशः ( रा. ८.२०१ )
–**पुष्प**–पु., श्लेष्मजक्रिमि०
( चवि., ७.१२. सुउ. ५४.१२ ) द्र० 'कृमि'
सर्प० दर्वीकरः ( सुक. ४.३४ (१)
पु., सर्प० राजिमान् ( सुक. ४.३४ (३ )
–**मूल**–न., दर्भस्य मूलम् ( अहृसू. ६.१७१ )
–**संस्तरशायिनी**–वि., यस्याः शयनं दर्भासने अस्ति सा ( सुशा. २.२५ )
**दर्भाह्वय**–पु., वनस्पति० मुञ्जः ( रा. ८.२०४ )
**दर्विका**–स्त्री., चमसः ( र. ३.३४ )
**दर्वी**–स्त्री., वनस्पति० दारुहरिद्रा ( ध. १.५८ )
दर्व्याकारः शलाकायन्त्र०
( सुचि. ६.८ असंसू. ३४ असंउ. ३५ )
–**कर**–पु., सर्प० वातदोषकरमस्य विषम्
( चचि २३.१२४ )
तद्गुणाः–मधुरः, कटुपाकी, अतिचक्षुष्यः, सृष्टविण्मूत्रमारुतश्च ( सुसू. ४६.८४ )
दर्वीकराः फणावन्तः दिवा चरन्ति; तरुणा दर्वीकरा मृत्युहेतवः ( सुक. ४.३१–३२ )
दर्वीकराः–कृष्णसर्पो, महाकृष्णः, कृष्णोदरः, श्वेतकपोतो, महाकपोतो, बलाहको, महासर्पः शङ्खकपालो, लोहिताक्षो, गवेधुकः, परिसर्पः, गण्डफणः, ककुदः, पद्मो, महापद्मो, दर्भपुष्पो, दधिमुखः, पुण्डरीको, भ्रूकुटीमुखो, विष्किरः, पुष्पाभिकीर्णो, गिरिसर्पः, ऋजुसर्पः, श्वेतोदरो, महाशिरा, अलगर्दः, आशीविषः इति ( सुक. ४.३४ (१ )

–**करदंश**–पु., एतद्दंशः सूक्ष्मदंष्ट्रापदः, कृष्णो, निरुद्धरक्तः, कूर्माभो, वातव्याधिकरः (चचि. २३.१२७)
–**करविष**–न., तल्लक्षणम्–दर्वीकरविषेण त्वङ्नयननखदशनवदनमूत्रपुरीषदंशकृष्णत्वं रौक्ष्यं शिरसो गौरवं सन्धिवेदना कटीपृष्ठग्रीवादौर्बल्यं जृम्भणं वेपथुः स्वरावसादो घुर्घुरको जडता शुष्कोद्गारः कासश्वासौ हिक्का वायोरूर्ध्वगमनं शूलोद्वेष्टनं तृष्णा लालास्रावः फेनागमनं स्रोतोवरोधस्तास्ताश्च वातवेदना भवन्ति ( सुक. ४.३७ )
–**प्रलेप**–पु., योग०-पलाशनिर्दाहरसेन साधितोऽयं कुष्ठहरः ( चसू. ३.१६ )
–**विलेपन**–न., पाकक्रियायां पाकस्य सान्द्रीभवनमादर्वीलेपनं कर्तव्यम्–तथा सान्द्रत्वं दर्वीप्रलेपनेन ग्राह्यम् ( चचि. २३.१०२ )
**दर्व्याकृति**–स्त्री., दर्वी; दारुहस्तकस्तदाकृतिः
( सुसू. ७.१४ )
**दर्शन**–न., चक्षुः ( चक्र. चचि. २३.१२० )
पञ्चबुद्धीन्द्रियेष्वेकम् ( चशा. ७.७ )
दृष्टिः ( सुउ. १७.५२ )
आलोकनम् ( चनि. ७.६ )
व्याध्यादिपरीक्षाप्रकारः ( अहृसू. १२.५५ )
**दल**–पु., पर्णम् ( डसुचि. ४.१०७ )
शिम्बीधान्यस्य निस्तुषस्य खण्डः ( सुसू. ७.१४ )
न., वनस्पति० तमालपत्रम् (ध. २.५२)
–**पुष्पा**–स्त्री., वनस्पति० केतकी ( रा. १०.२ )
**दलाम्ल**–न., वनस्पति० शाकम्, चुक्रम् (रापरि. ७.६४)
**दव**–पु., दावानलः ( सुउ. ४१.३० )
दाहः तापो वा ( असंसू. २० )
**दवथु**–पु., लक्षण० चक्षुरादिष्वत्यर्थं तापः च
( चचि. २१.३० ) ( चसू. २६.४३(४)
( असंसू. २०.१६ )
**दवन**–न., लक्षण० संतापः ( सुउ. ४५.९ )
**दशन्**–वि., सङ्ख्या० ( सुउ. २१.२९ )
**दशन**–पु., दन्तः ( सुचि. २२.२९ )
प्रत्यङ्ग० ( सुसू. ३५.१२ )
न., भक्षणम् ( सुनि. १५.३ )
–**च्छद**–पु., ओष्ठः (चइ. ११.२०) (असंउ. २५)
**दशप्राणायतनीय**–वि., अध्याय० दश प्राणायतनानि अधिकृत्य कृतोऽध्यायविशेषः ( चसू. २९.१ )
**दशभागावशेष**–वि., पाकेन दशमो भागोऽवशिष्टो यस्य स ( रसः ) ( चचि. १.४६ )

–मूल–न., लघुपञ्चमूलं बृहत्पञ्चमूलं च मिलित्वा ( ध. ७.२२–२३ ) गुणाः–हिक्काशिरोरुजाश्वास-संनिपातज्वरतन्द्रापार्श्वशूलहृत्म् ( ध. ७.२२–२३ ) ( चसू. ३. १९–२० ) ( सुसू. ६६.७१ ) ( असंसू. १५ ) ( अहृसू. १५.३ )

–(मूली)–स्त्री., दशमूलानि ( चसू. २.२७ )

–मूलहरीतकी–स्त्री., योग० दशमूलत्रिकटुत्रिजात-यवक्षारादिसाधितोऽयं श्वयथूदरज्वरारोचकाविपा-कपाण्डुरोगगुल्ममेहश्वासकासकार्श्यामवाताम्लपित्त-मलदोषशुक्रदोषहरा ( असंचि. १९.१०७ )

–मूलीघृत–न., सिद्धघृत० दशमूलव्योषक्षारलवणादि-सिद्धमिदं कफगुल्महरम् ( चचि. ५. १४२ )

–सार–न., योग० यष्टीद्राक्षाधात्रीचंदनैलवालकादि-साधितमिदं सर्वपित्तविकारमेहतृष्णादिहरम् ( र. १८-२४० )

दशा–स्त्री., सदशस्य वस्त्रप्रान्तः ( सुसू. २९०.१० ) ( असंशा. १२.४ )

दशाङ्ग–पु., योग० मांसीत्वक्पत्रसुरसमनोह्वाशीत-कुंकुमनिशाव्याघ्रनखशुण्ठीसाधितोऽयं विषनाशनः ( असंउ. ४० )

न., दशमूलम् ( सुउ. ५७.१४ )

दशाङ्गयोग–पु. योग० कफजच्छर्द्याः शमनार्थं प्रदिष्टः योगविशेषः ( सुउ. ४९.२३ ) नागरं धान्यकं भार्गीमभयां सुरदारु वचां पर्पटकं मुस्तं भूतीकं कट्फलं च ग्राह्यम् ( सुउ. ३९.१९३ )

दशाङ्घ्री–स्त्री., दशमूलम् ( र. १६ ७४ )

दशाष्टक्रिया–स्त्री., अष्टादश पारदसंस्काराः ( र. ७.३७ )

दष्ट–न., व्याडादिभिर्दंशः ( ड. सुसू. ४२.१० )

–निपीडित–न., सर्पदंशभेदः ( असंउ. ४१ )

दष्टक–न., सर्पदंशभेदः, अयं सर्पदंशः असाध्यो वर्तते ( असंउ. ४१ )

दष्टौष्ठ–वि., लक्षण० क्षत ओष्ठो यस्य सः ( सुशा. १०.५१ )

दस्र–पु., वैद्यविशेषौ, अश्विनौ ( र. २७.१४३ )

दहन–पु., वनस्पति० भल्लातकः ( ध. ३.४३ )

चित्रकः ( ध. २.८० )

आसुत० सूक्ष्म् ( ध. ६.२४६ )

महाभूतम्, अग्नेः रूपम्–एकगुणवृद्ध्यन्वयेन त्रिगुण-त्वाच्छब्दस्पर्शरूपगुणत्वम् ( सुसू. ४२ (४)३ )

न., उपक्रम० दाहः, क्षारादिना औषधकर्म ( सुसू. ४०.५ ) ( अहृसू. १५.१ )

( दहनी )–स्त्री., वनस्पति० मूर्वा ( रा. ३.१० )

–विशेष–पु., दाहप्रकारभेदः ( सुसू. १२.११ )

दहनागरु–न., वनस्पति० दाहागरु ( रा. १२.४३ ) द्र० 'अगरु'.

दहनाराति–पु., जलम् ( रा. १४.३१८ )

दाक्षिणात्यक–पु., वनस्पति० नारिकेलः ( ध. ५.७४ )

दाक्षिण्य–न., परापेक्षिणी प्रकृतिः, परच्छन्दानुवर्तिता ( सुसू. ४५.२०७ )

दाडिम–पु, न., वनस्पति० फलविशेषः ( चसू. २७. १४९–५० ) महाकषायवर्गे हृद्यगणे छर्दिनिग्रहण-गणे श्रमहरगणे चैकं द्रव्यम् ( चसू. ४.१०, १४,१६ ) तद्विविधम्, अम्लं मधुरं च; साधारण-गुणाः–अम्लं कषायं मधुरमुष्णम् ( च ) शीतलम् ( रा. ११.९५–९६ ) स्निग्धम् ( रा. ) लघु ( भाप्र. ) ग्राहि, दीपनं, हृद्यम् ( रा. ) रुच्यं, तर्पणं, शुक्रलं, मेधाबलावहं, वातघ्नं, कफपित्ताविरोधि, त्रिदोषघ्नम् ( भाप्र. ) कासघ्नम् ( रा. ) हृत्कण्ठमुख-गन्धघ्नं, तृड्दाहज्वरनाशनम् ( भाप्र. ) तत्र मधुरं दाडिमं पित्तघ्नं प्रशस्तं च । रूक्षाम्लं दाडिमं पित्तानिलकोपनम् ( च ) अम्लं दाडिममुष्णं वात-कफापहम् ( सुसू. ४६.१४१–४२ ) स्वाद्वम्लं दाडिमं किञ्चित् पित्तकरं लघु ( भाप्र. ) दाडिमपुष्प-रसो घ्राणगे रक्तपित्ते उपयुज्यते ( असंचि. ३ )

हिं.—अनार.
म.—**डाळिंब.**
गु.—दाडम.
बं.—डालिम.
ता.—मातुळै.

–पुष्पक–पु., वनस्पति० रोहितकः ( ध. ५.१३० )

–यूष–पु., दाडिमसंस्कृतयूषः ( का खिल. ४.३६ )

–वेत्रासव–पु., आसुत० ( सुसू. ४६.४३२ )

दाडिमादिरसक्रिया–स्त्री., रसक्रिया० दाडिमाद्यवलेहः ( सुउ. १२.४२ )

दाडिमाद्यघृत–न., घृत० पाण्डुरोगे उपयुक्तम् ( चचि. १६.४४–४६ )

दाडिमाष्टक–पु, योग० चातुर्जातयवान्यादियुक्तः, अतिसारे समुपयोज्यः ( असंचि. ११. )

दाडिमीसार–पु., वनस्पति० दाडिमः ( ध. २.६१ )

दात्यूह–पु., पक्षि० प्रतुदजातीयोऽसौ, कालकण्टकः ( सुसू. ४६.६७ )

दाधिकघृत–न., घृत० गुल्मप्लीहाशूलनाशनम् ( सुउ. ४२.२९–३० )

**दाधिकाख्यसर्पिस्**–न., घृत० दाधिकघृतम् ( असंचि. १६ ) द्र० दाधिक घृत.

**दान**–न., वनस्पति० हस्तिमदः ( रा. परि. ६.२० )

**दानवप्रिया**–स्त्री., वनस्पति० ताम्बूली ( ध. परि. ३.२ )

**दान्त**–वि., शिक्षितः ( चचि. ९.८२ )

पु., वनस्पति० दमनम् ( ध. ३.६४ )

**दाम**–न., व्रणबन्ध० संबाधेऽङ्गे विधेयः ( सुसू. १८.१७–१८ )

ग्रैवेयकादिपुष्पाभरणम् ( सुसू. १९.२५ )

**दारक**–पु., पुत्रः ( काकरेवती )

**दारण**–न., उपक्रम० ( चसू. ११.५५ ) विदारणम् ( सुचि. १५.३ ) पाटनम् ( सुचि. ४.९ ) शरकर्णादिशल्यस्य द्विधाकरणम् ( सुसू. ७.१७ )

**दारणक**–न., रोग० कपालगतरोगः, कफवाताभ्यां हेतुभ्यां कण्डूकेशच्युतिस्वापरौक्ष्यकृद्यत् सुसूक्ष्मं त्वचः स्फुटनं, तद् दारणकमिति विद्यात् ( असंउ. २७ )

**दारवी**–वि., काष्ठमयी, दारुणा निर्मिता दारुमयी वा इति दारवी ( सुचि. २०.४३ )

**दारी**–स्त्री., रोग० विपादिका ( सुनि. १३.२९ )

**दारु**–न., वनस्पति० देवदारुः ( ध. १.७६ )

**–कण्टक**–पु., खनिज० पित्तलम् ( ध. ६.१९ )

**–कदली**–स्त्री., वनस्पति० काष्ठकदली ( रा. ४१.११० )

**–निशा**–स्त्री., वनस्पति० दारुहरिद्रा ( ध. १.५८ )

**–पत्रिका**–स्त्री., वनस्पति० हिङ्गुपत्री ( ध. २.३८ )

**–पत्री**–स्त्री., वनस्पति० हिङ्गुपत्री ( रा. ६.६२ )

**–पीता**–स्त्री., वनस्पति० दारुहरिद्रा ( रा. ६.८४ )

**–मत्स्याह्वा**–स्त्री., प्राणि० गोधा ( रा. १९.१७ )

**–वाह**–पु., राजर्षि० कश्यपशिष्यः ( कासू. २५.३ )

**–विभावरी**–स्त्री., वनस्पति० दारुहरिद्रा ( र. २२.७८ )

**–शल्य**–न., काष्ठशल्यम् ( अहृसू. २८.४४ )

**–हरिद्रा**–स्त्री., वनस्पति० महाकषायवर्गे लेखनीयगणे, कण्डूघ्नगणेऽर्शोघ्नगणे चैकं द्रव्यम् ( चसू. ४.९–११ )

तिक्ता, कटूष्णा, रूक्षा, व्रणमेहकर्णरुजामुखरुजाकर्णकण्डूनेत्रकण्डूविसर्पत्वग्दोषनाशिनी ( ध. १.५७ रा. ६.८५–८६ )

तस्यास्त्वक् त्रिदोषजेऽतिसारे उपयुज्यते ( चचि. १९.८० )

अस्याः सारः शीर्षविरेचने उपयुज्यते ( चसू. २.५ )

हिं.—जर्की–हलद.

म.—दारुहळद.

बं.—दारहळदी.

ता.—कस्तुरिमंजल.

**दारुक**–न., वनस्पति० देवदारुः ( रा. १२.१०३ )

**दारुण**–वि., तीक्ष्णः ( चसू. १८.४१ ) कठिनम् ( सुचि. ७.३ )

किञ्चित् कालानुपातादेव बलवत्त्वान्मारयति ( चवि, ६.३ )

पु., कृमि० ( सुउ. ५४.१२ )

वनस्पति० चित्रकः ( ध. २.८० )

**–कर्मन्**–न., कठिनीकरणम्, व्रणस्य षष्ट्युपक्रमेष्वेक उपक्रमः ( सुचि. १.८ )

**–प्रतिबोधिन्**–वि., कृच्छ्रोन्मीलिन् ( अहृसू. १६.६ )

**दारुणक**–पु., क्षुद्ररोग० कफवातप्रकोपेण केशभूमिर्दारुणा, कण्डुरा, रूक्षा भवति प्रपाट्यते च ( सुनि. १३.३५ ) द्र० 'दारणक'

**दारुणाख्य**–पु., रोग० दारुणकः, चूर्णकः इति पर्यायः ( चइं. १२.५२ )

**दारुणीभूत**–वि., परुषीभूतम्, रूक्षीभूतम् ( चवि., ८.१२७ )

**दार्ढ्य**–न., दृढता ( अहृसू. १६.९ )

**दार्दुर**–वि., मण्डूकविषम्, दर्दुरस्येदमिति दार्दुरं ( विषम् ) ( चचि. २३.२०९ )

**–दंश**–पु., मण्डूककृतो दंशः ( असंउ. ४३ )

**दार्विका**–स्त्री., वनस्पति० गवेधुका ( रा. ४.१८० )

**दार्वी**–स्त्री., वनस्पति० दारुहरिद्रा ( चसू. ५.६३ )

**–करीरासव**–पु., आसुत० ( सुसू. ४६.४३२ )

**–क्वाथसमुद्भव**–न., भैषज्य० रसाञ्जनम् ( ध. ३.१५८ )

**–घृत**–न., घृत० रक्तपित्तप्रबले कुष्ठे उपयुक्तम् ( चचि. ७.१३५ )

**–हौमिकविधि**–पु., दार्वीहोमप्रोक्तकल्पः सप्रणवमहाव्याहृतिभिः ॐ भूः स्वाहेत्यादिभिर्हवनम् ( सुसू. २.४ )

**दार्व्यादिघृत**–न., घृत० त्रिदोषजाऽतिसारे उपयुज्यते ( सुउ. ४०.७७–७८ ) ( सुउ. ४०.१०४–१०५ )

**दाल**–न., मधुभेदः दलोद्भवं मधु; गुणाः–कषायं, उष्ण-

मम्लं, पित्तकृत्, कटुपाकि, छर्दिमेहप्रशमनं, रूक्षम् (सुसू. ४५.१३३) (सुसू. १३९.१४०) द्र० 'मधु'

**दालन**–पु., दन्तरोग० अस्मिन् रोगे दन्तास्तीव्ररुगान्विता दाल्यन्ते । अयं वातजः ( सुनि. १६.२८ )

**( दाला )**–स्त्री., वनस्पति० अरिः ( रा. ८.४० )

**( दाली )**–स्त्री., वनस्पति० देवदाली ( रा. ३.२४४ )

**दाव**–पु., वनाग्निः ( असंसू. ४.२८ )

**–दीपित**–वि., दावाग्निप्रकाशितः ( असंसू. ४.२८ )

**दावाग्निमल**–पु., भैषज्य० अग्निजारः ( ध. परि. ६.२१ )

**दाशपुर**–न., वनस्पति० जलमुस्तम् ( ध. १.४३ )

**दाशमूलिकनिरूह**–पु., परिव० बस्तिभेदः, दशमूलसिद्धो निरूहः ( चचि. १३.६५ )

**दासपुर**–न., वनस्पति० परिपेलम् ( ध. ३.५५ )

**दासी**–स्त्री., वनस्पति० काकजङ्घा ( ध. ४.२३ )
कुरण्टकः ( रा. १०.४२० )
नीलपुष्पा ( रा. १०.४१७ )

**–कुरुण्टक**– पु., वनस्पति० कुरुण्डकः ( सुसू. ३८.६ )

**दाह**–पु., रोग० सर्वाङ्गदहनमिव संतापः, चत्वारिंशत्पित्तविकारेष्वेकः ( चसू. २०.१४ ) स सप्तप्रकारकः, तत्र प्रथमो मद्यजः–मद्यपानकुपितपित्तोष्मा पित्तरक्ताभिमूर्च्छितस्त्वचं प्राप्तो घोरं दाहं प्रकुरुते । तत्र पित्तवद्भेषजम् ( सुउ. ४७.५४ ) द्वितीयो रक्तजः–कृत्स्नदेहानुगं रक्तमुद्रिक्तं सद् अतीव दहति । तल्लक्षणानि–संचूषणं, दाहस्ताम्राभता, ताम्रलोचनता, लोहगन्धांगता, लोहगन्धवदनता, दहनावकीर्णवद् वेदना ( सुउ. ४७.६७–६८ ) अन्ये तु रक्तजो भोजनं कुर्वतोऽनेकधा शोचतो रक्ते दाहो भवति तेनात्यर्थं दह्यते । तृष्णा, मूर्च्छा, प्रलाप इति ( सुउ. ४७.७६–७७ ) तृतीयः पित्तजः–पित्तज्वरसमानि लक्षणानि चिकित्साऽपि पित्तज्वरसमा कार्या ( सुउ. ४७.७७ ) चतुर्थस्तृष्णानिरोधजः–तृष्णानिरोधाद् अब्धातौ क्षीणे समुद्धतं तेजो मन्दचेतस आतुरस्य सबाह्याभ्यन्तरं देहं दहेत् । तेन संशुष्कगलताल्वोष्ठो जिह्वां निष्कृष्य चेष्टते । ( सुउ. ४७.७०–७१ ) पञ्चमोऽवगाढशस्त्रप्रहारजनितरक्तपूर्णकोष्ठजः ( मा ) रक्तेन पूर्णकोष्ठस्य दाहो दुःसहो भवति । तत्र सद्योव्रणीयोक्तं लक्षणं चिकित्सां च विद्यात् । ( सुउ. ४७.७३–७४ ) षष्ठो धातुक्षयजः–अस्मिन् दाहे मूर्च्छा, तृषा, क्षामस्वरः, क्रियाहीनता, भृशं सदनं, पीडेति लक्षणानि भवन्ति । तत्र वातघ्नी रक्तपित्तोक्ता क्रिया ( सुउ. ४७.७५ ) सप्तमो मर्माभिघातजः मर्मण्याघातेन दाहो भवति सोऽसाध्यतमः ( सुउ. ४७.७८ ) सर्वदाहेषु यदा आतुरस्य शीतगात्रता भवति, तदा ते सर्वेऽसाध्याः ( सुउ. ४७.७८ )
लक्षण० अग्निदग्धस्येव वेदना० ( सुनि. १.३२ )
उपक्रम० अग्निकर्म दहनं शलाकाप्रभृतिभिः सिरासंकोचनार्थं शोणितस्थापनार्थं च, अनेन दग्धानां रोगापुनर्भावस्य सुश्रुतेनोक्तत्वात् उपक्रमविशिष्टत्वम् ( सुसू. १४.४० ) ( सुसू. १२.३ )

**–प्रशमन**–पु., द्रव्यगण० महाकषायवर्गे एको गणः, दाहघ्नः ( चसू. ४.८ ) लाजाचन्दनकाश्मर्यफलमधूकशर्करानीलोत्पलोशीरसारिवागुडूचीह्रीबेराणीति दशेमानि दाहप्रशमनानि ( चसू. ४.१७ )

**दाहनी**–स्त्री., वनस्पति० धातकी ( रा. ६.५१ )

**दाहागरु**–न., वनस्पति० अगरुभेदः, द्र० 'अगरु' ( रा. १२.४३ )

**दाहाभिभूत**–वि., दाहाधिक्येनाक्रान्तः ( सुउ. ४७.५८ )

**दाहार्ह**–वि., दहनयोग्यः ( असंसू. ४०.५ )
पु., वनस्पति० चित्रकभेदः, कालः
द्र० 'चित्रक' ( रा. ६.१२७ )

**–काष्ठ**–न., वनस्पति० अगरुभेदः, दाहागरु, ( रा. १२.४३ ) द्र० 'अगरु'

**–गल**–वि., लक्षण० लिप्तकण्ठः ( सुउ. ५३.६ )

**दिग्ध**–वि., लिप्तम् ( सुउ. ५३.६ )
युक्तम् ( ड. सुउ. ६४.४३ )

**–विद्ध**–वि., विषलिप्तबाणताडितो व्रणः, तल्लक्षणानि– सद्यो विद्धं कृष्णरक्तं निःस्रवेद्व्रणः पाकं यायादभीक्ष्णं च दह्यते, क्षतात्कृष्णीभूतं क्लिन्नमत्यर्थं पूति, शीर्णमांसमनवरतं याति सोऽयं तृष्णामूर्च्छाभ्रान्तिदाहज्वरयुतो भवति (सुक. ५.५७–५८ )

**दिति**–स्त्री., कश्यपपत्नी, दैत्यमाता ( असंशा. १२ )

**दिन**–न., तिथिः ( सुसू. २९.१९ )
सप्तसंख्यामानम् ( र. ११.१०३ )

**–कर**–पु., खनिज० ताम्रम् ( र. १३.५४ )

**–चर्या**–स्त्री., दिने यच्चरणं तत्, प्रतिदिनं यत्कर्तव्यं तत् ( अरु ) दैनन्दिन आहारो विहारश्च ( हे. अहसू. २ ) ( चसू. ५; सुचि. २४; असंसू. ३ ) दिने दिने चर्या दिनस्य वा चर्या; चर्या नाम चरणमाहारविहारचेष्टितमिति यावत्, प्रतिदिने

यत्कर्तव्यम् ( अरु. अहृसू. २०.१ ) स्वस्थपुरुष आयुषो रक्षार्थं ब्राह्मे मुहूर्ते रात्रेश्चतुर्घटिकावशेषे काले प्रबुध्येत्, जीर्णाजीर्णनिरूपणादिकां शरीरचिन्तां निर्वर्त्य, मूत्रपुरीषादेः कृतशौचविधानो दन्तशुद्धिं कुर्यात्, दन्तकाष्ठं भक्षयेत्, दन्तधावनचूर्णेन वा दन्तान्विशोधयेत्, शीतजलेन लोचने सिञ्चेत्, सौवीरमञ्जनमक्ष्णोर्हितं नित्यं भजेत्, तथैव सप्तरात्रे श्लेष्मस्रावणार्थं रसाञ्जनं योजयेत्, ततो नावनगण्डूषधूमताम्बूलभाग्भवेत्, जराश्रमवातनाशार्थं त्वग्दार्ढ्यार्थं च नित्यमभ्यङ्गमाचरेत्, शारीरलाघवार्थं कर्मसामर्थ्यार्थं च व्यायामं कुर्वीत, व्यायामानन्तरं देहमनुसुखं मर्दयेच्च, त्वक्प्रसादनकरं कफहरं चोद्वर्तनं कुर्यात्, ततः स्नानं कुर्यात्, स्नानेन कण्डूमलश्रमस्वेदतन्द्रातृषादाहादीनां शमो बलप्राप्तिश्च भवति, उष्णाम्बुनाधःकायस्य परिषेको बलावहः, केशचक्षुर्बलार्थिभिः शीतजलेन स्नातव्यम्, पूर्वे आहारे सम्यग्जीर्णे हितं मितं भोक्तव्यं भोजनविधौ शास्त्रोक्तेनान्नपानेन भवितव्यम् ( अहृसू. २ ) भुक्त्वा राजवदासीत यावदन्नक्लमो गतः, ततः पादशतं गच्छेदनन्तरं वामपार्श्वेन संविशेत् ( सुसू. ४६.४८७ )

–जन्मन्–न., प्रभातम् ( र. २०.२२० )

**दिनान्ध**–पु., नेत्ररोग० पित्तविदग्धदृष्टिः; अत्र भावप्रधाननिर्देशो द्रष्टव्यः, तेन दिनान्धत्वं प्राप्नोति इत्यर्थः ( सुउ. १७.१२ )

–पति–पु., खनिज० ताम्रम् ( र. १२.३९ )

**दिलीप**–पु., राज० यत्पुत्रा राजतैलोपयोगेन गतिमायुर्बलं सुखं च लेभिरे ( का फक्करोगचिकित्सा )

**दिवा**–अव्य० दिने ( सुशा. ४.४१ )

–करावर्त–पु., शिरोरोग० सूर्यावर्तः ( काचि. ५ )

–निद्रा–स्त्री., दिवास्वप्नः ( सुशा. ४.४१ )
'विकृतिर्हि दिवास्वप्नो नाम' तज्जन्यव्याधयः– अरोचकाविपाकाग्निनाशस्तैमित्यपाण्डुत्वकण्डूपामादाहच्छर्द्यङ्गमर्दहृत्स्तम्भजाड्यतन्द्रानिद्राप्रसङ्गग्रन्थिजन्मदौर्बल्यरक्तमूत्राक्षितातालुलेपाः पिपासा श्लेष्मपीडा च ( चसि. १२.१४७ ) प्रतिश्यायशिरोगौरवज्वराः ( सुशा. ४.३८ ) दिवास्वप्नाद् व्रणे शोफकण्डूरागरुक्पूयस्रावविवृद्धिर्भवति (असंसू. ३८.२५) दिवास्वपनमपथ्यमप्यभ्यासान्नोपघातकम् ( सुशा. ४.४१ )
रात्रावपि जागरितवतां जागरितकालादर्धमिष्यते दिवास्वपनम् ( सुशा. ४.३८ ) बालवृद्धस्त्रीकर्षितक्षतक्षीणमद्यनित्ययानवाहनाध्वकर्मपरिश्रान्तानामभुक्तवतां मेदःस्वेदकफरसरक्तक्षीणानामजीर्णिनां च मुहूर्तं दिवास्वपनमप्रतिषिद्धम् ( सुशा. ४.३८ ) श्वासहिध्मातिसारतृष्णाशूलपीडितानामपि हितकरम् ( सुशा. ४.४८ )
दिवास्वापो ग्रीष्मादन्यत्र गर्हितः, अजीर्णिना भोजनात्प्रागेव सुप्यताम् 'स्वप्यात्...अभुक्तवान्' ( असंसू. ७.२४४ )

–बलिन्–वि., दिवा यस्य बलं प्रवृद्धं भवति, दिवा वा यो वर्धते स शोथः ( चचि. १२.१२ )

–स्वपन–न., दिवानिद्रा ( सुशा. ४.३८ )

–स्वप्न–पु., दिवानिद्रा ( सुशा. ४.४८ )

–स्वप्नविकृति–स्त्री., दिवास्वप्नजनिता विकृतिः; अस्यां कासश्वासप्रतिश्यायशिरोगौरवाङ्गमर्दारोचकाग्निदौर्बल्यानि भवन्ति ( सुशा. ४.३८ ) द्र० 'दिवानिद्रा'

–स्वप्नसात्म्य–वि., दिवास्वप्नः सात्म्यं यस्य सः ( सुसू. ३५.३९ )

–स्वप्नोचित–वि., दिवानिद्रा हितकरी यस्य सः ( अहृसू. ७.५९ )

–स्वाप–पु., दिवानिद्रा ( सुशा. ४.३८ )

**दिविज**–न., वनस्पति० हरिचन्दनम् द्र० 'चन्दन' ( रा. १२.१९ )

**दिवोदास**–पु., राज० ( सुसू. १.३ )

**दिव्य**–वि., मेघजं जलम् ( सुनि. ३.२६ )
पु., वनस्पति० यवः ( रा. १६.१२४ )
गुग्गुलुः ( रा. १२.१८४ )
सर्प० 'वासुकिस्तक्षकोऽनन्तः सगरः सगरालयः । तथानन्दोपनन्दाद्याः समिद्धाग्निसमप्रभाः' दिव्येभ्यो नमोऽस्तु तेषु क्रुद्धेषु चिकित्सा नास्ति (असंउ. ४१)
न., वनस्पति० हरिचन्दनम्, चन्दनम् ( रा. १२.१९ )
लवङ्गम् ( ध. ३.४१ )

**( दिव्या )**–स्त्री., वनस्पति० श्वेतदूर्वा, द्र० 'दूर्वा' ( रा. ८.२२९ )
ब्राह्मी ( रा. ५.१४९ )
महामेदा ( रा. ५.१६३ )
वन्ध्याकर्कोटकी ( रा. ३.२७३ )
हरीतकी ( रा. ११.३०७ )

**-गन्ध**-वि., उत्तमगन्धः ( व्रणः ) अयं दिव्यगन्धो व्रणो मुमूर्षूणामेव विपरीताविपरीतगन्धत्वेन ज्ञेयः ( सुसू. २८.११ )
खनिज० गन्धकः ( रा. १३.१६७ )

**-( गन्धा )**-स्त्री., वनस्पति० बृहच्चञ्चुः ( रापरि. ४.२० )
भद्रैला ( रा. ६.७१ )

**-जल**-न., आन्तरीक्षं जलम् ( अहृसू. २०.३८ )

**-तुम्बी**-स्त्री., वनस्पति० भूतुम्बी ( रा. ७.२४१ )

**-तेजा**-स्त्री., वनस्पति० ब्राह्मी (ध. ४.१००)

**-पुष्प**-पु., वनस्पति० करवीरः (रा. १०.३)
चम्पकः ( रा. १०.२३९ )

**-( पुष्पी )**-स्त्री., वनस्पति० महाद्रोणा ( रापरि. ५.५० )

**-मूलिका**-स्त्री., सोमवल्ल्यादिदिव्यौषधिः ( र. ११.८६ )

**-रस**-पु., खनिज० पारदः ( रा. १३.४३ )

**-लता**-स्त्री., वनस्पति० मूर्वा ( रा. ३.१० )

**-सार**-पु., वनस्पति० सर्जः ( रा. ९.२०५ )

**दिव्यक**-पु. सर्प० निर्विषजातीयः ( सुक. ४.३४ (४ )

**दिव्यानुकारिन्**-वि., गुणतो दिव्यजलसमं ( जलम् ) ( असंसू. ६ )

**दिव्याम्भस्**-न., आन्तरीक्षं जलम्, इदं नेत्ररोगे चूर्णाञ्जनादिसाधने उपयुज्यते ( असंउ. १९ )

**दिव्येलक**-पु., सर्प० वैकरञ्जेभ्यस्त्रिभ्यो जातः, अयं राजिलसर्पवत् वर्तते ( सुक. ४.३४ ) द्र० 'सर्प'

**दिव्योदक**-न., आन्तरीक्षं जलम्; द्र० 'जल' ( रा. १४.३२० )

**दिव्योदकानुपान**-न., तनुपानार्थमान्तरीक्षं जलम् द्र० 'जल' ( असंसू. ९.१५ )

**दिव्यौषधि**-स्त्री., सोमलतादिकाश्चतुःषष्टिर्दिव्यौषधयः ( र. ८.७८ )

**दिश्**-स्त्री., दिशा ( चसू. १.४८ )
देवता० श्रोत्रस्याधिदैवतम् ( सुशा. १.७ )

**( दिक्-)प्रासादा**-स्त्री., वनस्पति० कुलत्था ( रा. १३.२१९ )

**-संख्या**-स्त्री., दशदिशः-प्राच्याग्नेयीदक्षिणानैर्ऋतीप्रतीचीवायव्युदीचीशान्यूर्ध्वाऽधराः ( र. २३.७५ )

**( दिग्- ) वासस्**-वि., नग्नः ( चनि. ७.१४. )

**दीक्षा**-स्त्री., गुरुतो मन्त्रादिग्रहणम् ( सुसू. ६.२१ )

**दीन**-वि., लक्षण० क्लिष्टचित्तः ( ड. सुउ. ३९.१४३ )
अगम्भीरः (चक्र. चचि. २८.४१)
न., वनस्पति० तगरम् ( ध. ३.५३ )

**-मनस्**-वि., क्लिष्टचित्तः ( सुउ. ३९.२९१ )
द्र० 'दीन'

**दीनार**-पु., मान० निष्को त्रिंशद्गुञ्जामानं वा ( र. ११.१०३ )

**दीप**-पु., स्नेहाशः ( दीपकः ) ( चशा. ५.१५ )

**-गन्ध**-पु., दीपस्य गन्धः ( असंशा. १०.९ )

**-वह्नि**-दीपाकारोऽग्निः ( र. १२.१६१ )

**-वृक्ष**-पु., वनस्पति० सरलः (ध.३.७८)

**दीपक**-पु., औदर्याग्निः, दीपकः ( र. १६.१५५-५८ )
वनस्पति० कासमर्दः ( रा. ४.१७७ )
जीरकम् ( रा. ६.१०० )
यवानी ( ध. २.९१ )
सर्प० अयं राजीमद्वर्गीयः बिलेशयेष्वेकः तन्मांस गुणाः-मधुरः कटुपाकी सृष्टविण्मूत्रमारुतोऽतिचक्षुष्यः ( सुसू. ४६.८४ )

**दीपन**-वि., जाठराग्निदीप्तिकरम् ( र. २.३ )
पु., जाठराग्निः ( र.३.३२ )
न., अग्निभूयिष्ठं द्रव्यम् ( सुसू. ४१.६ )
पारदसंस्कारविशेषः स्वर्णताम्रादिधातुभिः सैंधवादिपाषाणादिभिः सर्पाक्ष्यादिमूलैश्च घटयन्त्रमध्यस्थस्य पारदस्य बुभुक्षितत्वजननेन कवलीकरणशक्त्युत्पत्त्यर्थं दिनत्रयपर्यन्तं स्वेदनम् ( र. ८.७० )
पु., वनस्पति० पलाण्डुः ( रा. ७.१०० )

**( दीपनी )**-स्त्री., वनस्पति० पाठा ( रा. ६.१९ )
मेथिका ( ध. ६.१११ )
यवानी ( ध. २.९१ )

**-जीवन-(रसेन्द्रः)**-पु., पारदयोग० गन्धकसैन्धवपिप्पलीचित्रकादियुक्तः शोथहलीमककामलाशूलाजीर्णनाशकः ( र. १६.१६६ )

**दीपनीय**-पु., अग्निदीप्तिकरः; महाकषायवर्गे एको गणः ( चसू. ४.८ ) पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेराम्लवेतसमरिचाजमोदाभल्लातकास्थिहिङ्गुनिर्यासा इति दशेमानि दीपनीयानि ( चसू. ४.९ )
वनस्पति० यवानी ( ध. २.९१ )

**( दीपनीया )**-स्त्री., वनस्पति० यवानी ( ध. २.९१ )

**-गण-( वर्ग )** पु., दीपनीयो वर्गः ( असंसू. १५ )

**-वर्ग**-पु., दीपनीयद्रव्याणां समूहः ( चसू. ४.९ असंसू. १५ )

दीपाग्नि–पु., दीपस्येव मन्दोऽग्निः ( र. १६.१५७ )

दीपाशय–पु., दीपधारिका, दीपगृहं वा (चशा. ५.१५)

दीपिका–स्त्री., वनस्पति० वनमेथिका ( रा. ५.१८४ )

–तैल–न., तैल० महत्पञ्चमूलयुक्तम्, कर्णवेदनाहर-तैलम् ( सुउ. २१.२१–२२ )

–यन्त्र–न., यन्त्र० दीपिकायन्त्रम्, इदं पारदस्य तिर्यक्पातनसंस्कारे समुपयुज्यते ( र. ११.४१ )

–यन्त्र–न., यन्त्र० जलपूर्णपात्रमध्यगते घटखर्परे मृत्तिकामयीं वक्रनालाकारां नलिकां स्थापयित्वा तस्योपरिभागे क्षारलवणसहितः पारदः स्थाप्यते, ततः सन्धिरोधं विधायाग्निः प्रदीयतेऽन्यनलिकया चोर्ध्वभागाच्च पारदस्तिर्यक् पात्यते–इदं दीपिका-यन्त्रम् ( र. ९.१६ )

–रस–पु., पारदयोग० पिप्पलीजम्बीरकुमारीयुक्तः, अयं सर्वज्वरघ्नः ( र. १२.२३–२७ )

दीप्त–पु., न., नासारोग० ( चचि. २६.११७ ) दाह-युक्तायां नासायां निःश्वासो यदा धूमवद्बहिरायाति नासा च ज्वलितेव भवति तदा अयं रोगो ज्ञेयः ( सुउ. २२.१४–१५ )

न., खनिज० कांस्यम् ( रा. १३.२४ )

सुवर्णम् ( रा. १३.२ )

वनस्पति० हिङ्गु ( रा. ६.३० )

दीप्तक–न., खनिज० कांस्यम् ( रा. १३.२४ )

( दीप्ता )–स्त्री., वनस्पति० कलिकारी ( ध. ४.९ )

ज्योतिष्मती ( रा. ३.३९५ )

सातला ( ध. १.२३८ )

वि., सूर्योद्भासिता दक्षिणा वा ( दिक् ) ( चइ. १२.२९–३० )

दीप्ताग्नि–पु., प्रदीप्तो जाठराग्निः ( र. २.५९ )

दीप्तामर–पु., पारदयोग० गन्धकताम्रयुक्तः पित्तगुल्म-नाशकः ( र. १८.६२–६६ )

दीप्ति–स्त्री., जठराग्निदीपनम् ( चसू. १३.४३ )

भैषज्य० लाक्षा ( ध. ३.८२ )

नासारोग० दीप्तम् ( असंउ. २३ )

दीप्य–पु., वनस्पति० निम्बूकः ( रा. ११.२२ )

यवानी ( ध. २.९१ )

जीरकम् ( रा. ६.१०० )

न., जीरकम् ( ध. २.६६ )

( दीप्या )–स्त्री., वनस्पति० खर्जूरभेदः ( ध. ५.५५ ) द्र० ' खर्जूर '



उपकुञ्ची ( रा. ६.९१ )

दीप्यक–पु., वनस्पति० अजमोदा ( सुउ. ५७.८, ध. २.९८ )

यवानी ( रा. ६.१४० )

दीर्घ–वि., आयतम् ( चवि. ८.११७ )

पु., वनस्पति० माडः ( ध. ५.७० )

व्रीहिः ( रा. १६.११२ )

स्त्री., वनस्पति० पृश्निपर्णी ( रा. ४.११८ )

–कणा–स्त्री., वनस्पति० जीरकभेदः, शुक्लजीरकः ( ध. २.६८ ) द्र० ' जीरक '

–कण्ट–पु., वनस्पति० बर्बुरः ( रा. परि. ८.१२ )

–कन्द–पु., वनस्पति० मुखालुः ( रा. परि. ७.२२ )

–कन्दक–न., वनस्पति० मूलकम् (रा. ७.५१ )

–कन्दिका–स्त्री., वनस्पति० मुसलीकन्दः ( रा. परि.७.५८ )

–काण्ड–स्त्री., वनस्पति० गुण्डः ( रा. परि. ८.६० )

–काण्डा–स्त्री., वनस्पति० व्रत्सादनी ( रा. परि. ३.३३ )

–काल–पु., वनस्पति० अङ्कोटः ( रा. ९.३८४ )

–कीलक–पु., वनस्पति० अङ्कोलः ( ध. १.२५८ )

–कूरक–न., धान्य० व्रीहिः ( रा. १६.८१ )

–कृष्णा–स्त्री., धान्य० व्रीहिः ( रा. १६.१०८ )

–ग्रन्थि–पु., वनस्पति० गजपिप्पली ( रा. ६.११७ )

–च्छद–पु., वनस्पति० शाकः ( ध.परि. ५.३)

–जिह्वी–स्त्री., असुरकन्या ( का. रेवतीकल्प. ६ )

–जीरक–पु., वनस्पति० जीरकभेदः, शुक्लजीरकः ( ध. २.६८ ) द्र० ' जीरक '

–तरु–पु., वनस्पति० तालः ( ध. ५.६८ )

–तुण्डनखी–स्त्री., बिलेशयप्राणि० चुचुन्दरी ( ध. ६.४३२ )

–तुण्डी–स्त्री., बिलेशयप्राणि० चुचुन्दरी ( ध. ६.४३२ )

–तृण–पु., वनस्पति० पल्लिवाहः ( रा. परि. ८.५६ )

–दण्डक–पु., वनस्पति० एरण्डः ( ध. १.२९५ )

–दण्डी–स्त्री., वनस्पति० गोरक्षी ( रा. परि. ५ )

–दर्शिन्–वि., दूरदर्शी ( च. शा. ४.३७ ( ३ ) )

–द्रुम–पु., वनस्पति० शाल्मली ( रा. ८.२१२ )

–नाद–पु., भैषज्य० शङ्खः ( ध. ३.१७९ )

–नाल–पु., वनस्पति० गुण्डः ( रा. परि. ८.६१ )

जूर्णा ( रा. १६.१६७ )

कत्तृणम् ( रा. ८.१०८ )
-निःस्वन-पु., भैषज्य० शङ्खः ( ध. ३.१७९ )
-नेत्र-न., बस्तिनेत्रदोषः दीर्घबस्तिनेत्रजन्यो दोषः अतिगतिर्नाम दूरप्रवेशः ( चसि. ५.४-५ )
-पटोलिका-स्त्री., वनस्पति० पटोली ( ध. १.५२ रा.७. ७६ )
-पत्र-पु., वनस्पति० तालः ( रा. ९.९३ )
पलाण्डुः, राजपलाण्डुः ( रा. ७.१०३ )
पुनर्नवा ( ध. १.२७४ )
जलमधूकः ( ध. ५.४९ )
शरः ( रा. ८.२०९ )
( -पत्रा )-स्त्री., वनस्पति० अन्यादोडी ( रा. परि. ४.४१ )
कदली ( ध. ४.७५ )
केतकी ( रा. परि. १०.२ )
गन्धपलाशः ( ध. १.६४ ) ( रा. ६.९० )
द्रोणपुष्पी ( रा. परि. ५.४८ )
-पत्रक-पु., वनस्पति० हिज्जुलः ( रा. परि. ८.७० )
इक्षुः ( सुसू. ४५.१५४ )
जलदः ( ध. ५.४८ )
वेतसः ( ध. ५.११६ )
लशुनः ( ध. ४.६६ )
( -पत्रिका )-स्त्री., वनस्पति० कुमारी, गृहकन्या ( रा. परि. ५.१० )
शालिपर्णी ( रा. ४.११३ )
वचा, श्वेतवचा ( रा. ६.१० )
( -पत्री )-स्त्री., वनस्पति० पलाशी ( रा. परि. ३.५० )
बृहच्चञ्चुः ( रा. परि. ४.२० )
-पर्ण-पु., वनस्पति० जरणद्रुमः ( रा. परि. ९.१३ )
( -पर्णी )-स्त्री., वनस्पति० पृश्निपर्णी ( ध. १.९१ ) ( रा. ४.११८ )
त्रपुसम् ( ध. १.१७५ )
-पल्लव-पु., वनस्पति० शणः ( रा. परि. ४.१० )
-पादप-पु., वनस्पति० पूगः (रा. ११.७१ )
तालः ( रा. ९.९२ )
-पुच्छिका-स्त्री., प्राणि० गोधा ( रा. १९.१७ )
-पुत्र-पु., वनस्पति० जलमधूकः ( ध. ५.४९ )
-पुष्प-पु., वनस्पति० श्वेतमन्दारकः ( रा. १०.३१ )
-प्रेक्षण-वि., दीर्घदृष्टिः आयताक्षः ( सुसू. ३५.४ )
-फल-पु., वनस्पति० आरग्वधः ( ध. १.२१९ )
-फलक-पु., वनस्पति० अगस्त्यः (रा. परि. १०.१३)
( -फला )-स्त्री., वनस्पति० द्राक्षा, मृद्वीका ( रा. ११.७६ )
जन्तुका ( ध. ४.८८ ) ( रा. ३.१२९ )
कोशातकी ( रा. ७.२८८ )
-बीजा-स्त्री., वनस्पति० क्षीरतुम्बी ( रा. ७.२३८ )
-मूल-पु., वनस्पति० बिल्वान्तरः ( रा. परि. ८.३० )
यासः ( ध. १.२२ )
मोरटः ( ध. १.१५ )
न., लामजकम् ( ध. ३.८६ )
( -मूला )-स्त्री., वनस्पति० मोरटः ( ध. १.१५ )
धन्वयासः ( सुसू. ३८.४५ )
शालिपर्णी ( सुसू. ३८.४५ ) ( ध. १.८८ )
-मूलक-पु., वनस्पति० शरः ( रा. ८.२१२ )
न., मूलकम् (रा. ७.५० )
-रङ्गा-स्त्री., वनस्पति० हरिद्रा ( ध. १.५५ )
-रागा-स्त्री., वनस्पति० हरिद्रा ( ध. १.५५ )
-रोहिषक-न., वनस्पति० कत्तृणम् ( रा. ८.१०८ )
-वल्ली-स्त्री., वनस्पति० वत्सादनी ( रा. परि. ३.३३ )
पलाशी ( रा. परि. ३.४९ )
इन्द्रवारुणी ( रा. ३.३७६ )
-वालुक-पु.,वनस्पती० वृद्धदारुः ( ध. ४.१०७ )
-वृत्त-पु., वनस्पति० विष्णुकन्दः ( रा. परि. ७.४०)
-( वृत्ता )-स्त्री., वनस्पति० इन्दीवरी ( रा. परि. ३.२७ )
-वृत्तफला-स्त्री., वनस्पति० क्षीरतुम्बी ( रा. ७.२३८ )
-वृन्त-पु., वनस्पति० टेण्टुकः ( सुउ. ४०.८१ अहसू. १७. ८)
-वृन्तक-पु. वनस्पति० टिण्टुकः ( रा. ९.१४१ )
-शर-पु., धान्य० जूर्णा ( रा. १६.१६७ )
-शाख-पु., वनस्पति० शणः (रा. परि. ४.१० )
-शाखिका-स्त्री., वनस्पति० नीलाम्ली ( रा. परि. ४.३८ )
-शिम्बिक-पु., वनस्पति० राजमाषः ( रा. १६.१३५ )
-शूक-पु., धान्य० शालिः ( चसू. २७.८; अहसू. ६.१ )
-सूत्रता-स्त्री., चिरेण कार्यकारित्वम् (चनि. १.३३ )
-सूत्री-वि., चिरकारी ( असंशा ८.१६ )
-स्कन्ध-पु., वनस्पति० तालः ( ध. ५.६८ )

**दीर्घक**–पु., वनस्पति० जीरकभेदः शुक्लजीरकः (ध. २.६८) द्र० 'जीरक'
न., वनस्पति० जीरकम् (ध. २.६६)
**(दीर्घिका)** स्त्री., सोपानपुष्करिणी (सुउ. ४७.५७)
वनस्पति० हिङ्गुपत्री (२.३८)
**दीर्घाङ्गुलिपर्वन्**–वि., महाङ्गुलिग्रन्थिप्रमाणः (सुसू. ३५.४)
**दीर्घात्यर्क**–पु., वनस्पति० श्वेतमन्दारकः (रा. १०.३१)
**दीर्घायुस्**–वि., शतवर्षपर्यन्तमायुर्यस्य सः तत्र महापाणिपादपार्श्वपृष्ठस्तनाग्रदशनवदनस्कन्धललाटं दीर्घाङ्गुलिपर्वोच्छ्वासप्रेक्षणबाहुं, विस्तीर्णभ्रूस्तनान्तरोरस्कं ह्रस्वजङ्घामेढ्रग्रीवं, गम्भीरसत्त्वस्वरनाभिमनुच्चैर्बद्धस्तनमुपचितमहारोमशकर्णं, पश्चान्मस्तिष्कं स्नातानुलिप्तं मूर्धानुपूर्व्या विशुष्यमाणशरीरं पश्चाच्च विशुष्यमाणहृदयं पुरुषं दीर्घायुषं जानीयात् (सुसू. ३५.४)
पु., वनस्पति० शाल्मली (रा. ८.२१२)
जीवकः (रा. ५.१५५; ध. १.२३)
**दीर्घोर्वारु**–पु., वनस्पति० डङ्गरी (ग. १.१८१)
**दुःकोष्ठ**–वि., क्रूरकोष्ठः (सुचि. ३३.१५)
**दुःख**–न., प्रतिकूलवेदनीयम् (चवि. ८.३९)
कायवाङ्मानसी पीडा (सुसू. १.२३)
रोगः (चक. चशा. १.९२) पीडा, तच्च दुःखं त्रिविधमाध्यात्मिकमाधिभौतिकमाधिदैविकमिति (सुसू. २४.४)
वि., दुःखकरः, दुःखबहुलः कष्टसाध्यो वा (चचि. ३.४८)
**–जीविन्**–वि., दुःखी, दुःखेन जीवितुं शीलमस्य (असंसू. ३.७८)
**–प्रसविनी**–वि., दुःखेन प्रसूते या सा (चचि. १६.४६)
**–बहुलता**–स्त्री., दुःखाधिक्यम् (सुशा. १.१८)
**–वर्धन**–पु., कर्णरोग० कर्णपालीरोगः (सुचि. २५.३)
कर्णौ दुर्विद्धः सन् वर्धितस्तस्मिन् कण्डूदाहपाकरुजावान् संनिपातजः शोफो भवति (असंउ. २१)
**–वृद्धि**–स्त्री., कर्णरोग० दुःखवर्धनः (र. २४.१)
द्र० 'दुःखवर्धन'.
**–शय्या**–स्त्री., दुःखोत्पादिका शय्या (चचि. २.९)
**दुःखाश्रय**–पु., शरीरम् (चक. चशा. १.९५)

**दुःशुद्ध**–वि., अयोगेनाविशुद्धम् (चक. १२.६४)
**दुःस्पर्शा**–स्त्री., वनस्पति० धन्वयासः (सुचि. ११.९) (ध. १.२०)
कण्टकारी (ध. १.९५)
कपिकच्छूः (रा. ३.२०१)
**दुकूल**–न., सूक्ष्मं क्षौमम्, श्लक्ष्णवस्त्रभेदः (सुशा. ३.२३)
पट्टवस्त्रम् (सुसू. १८.१६)
**–पट्ट**–न., पट्टवस्त्रम् (ड. सुशा. ३.२३)
**दुग्ध**–न., आहारद्रव्य० उत्पत्तिः–स्त्रीगोमहिष्यादिभ्यः संभवः। दुग्धगुणकर्माणि–प्रायशो मधुरं, मधुरपाकि, शीतं, स्निग्धं, प्रीणनं, बृंहणं, वृष्यं, मेध्यं, बल्यं, मनस्करं, जीवनीयानां श्रेष्ठं, श्रमहरं, विहतसंधानं, सर्वप्राणभृतां सात्म्यं, शमनं, शोधनीयं, दीपनीयं, वातपित्तघ्नं, श्वासकासरक्तपित्ततृष्णाक्षीणक्षतपाण्डुरोगाम्लपित्तशोषगुल्मोदरातिसारज्वरदाहशोथयोनिशुक्रप्रदोषाप्रचुरमूत्रग्रथितपुरीषेत्यादिषु पथ्यं प्रशस्तं च; नस्यालेपावगाहेषु वमनास्थापनेषु विरेचने स्नेहने च दुग्धं सर्वत्रोपयुज्यते। (चसू. १.१०७–१२)
दुग्धमनेकौषधिरसप्रसादं प्राणदं गुरु पिच्छिलं श्लक्ष्णं सरं मृदु सर्वप्राणिनामप्रतिषिद्धं जातिसात्म्याद् जीर्णज्वरोन्मादमूर्च्छाभ्रममददाहहृद्बस्तिदोषप्रवाहिकाग्रहण्यर्शःशूलगर्भास्रावेषु प्रशस्तं क्लमहरं पाप्मापहं वाजीकरणं रसायनं वयःस्थापनमायुष्यं तुल्यगुणत्वादोजसो वर्धनं बालवृद्धानां क्षुद्व्यवायव्यायामकर्शितानां च पथ्यतमम् (सुसू. ४५.४९) प्राधान्येन दुग्धमष्टविधम्–गव्यं माहिषमाजं स्त्रैणमाविकमैभं कारभमेकशफं चेति (असंसू. ५२.५४) दुग्धं रसस्य उपधातुः रसात् स्तन्यं प्रासादजम् प्राधान्येन दुग्धमष्टविधम्–गव्यं माहिषमाजं स्त्रैणमाविकमैभं कारभमेकशफं चेति (असंसू. ५२.५४) (चचि. १५.१७) धारोष्ण–दुग्धगुणाः–जीर्णज्वरतृट्शूलप्रवाहिकाविबद्धानिलवर्चोनाशनम् (असंचि. २.४५–४६) अक्वथित–दुग्धगुणाः–अभिष्यन्दि प्रायशो गुरु च; (सुसू. ४५. ६१;) अतिपक्वदुग्धगुणाः–शीतं, गुरु, बृंहणं च, (सुसू. ४५.६३) शृतदुग्धगुणाः–उदरिभ्य आस्थापने विरेचने, आहारविधिक्रियासु पाने च प्रयोज्यम् (सुचि. १४. १९;) शालिषष्टिकयोस्तथोपवासाध्वभाष्यस्त्रीव्यायामक्लान्तबालवृद्धेष्वनु-

पानार्थम् उपयोज्यम् ( असंसू. १०. ४६; ) अनिष्टगन्धमम्लं, विवर्णं, विरसं, सलवणं, विग्रथितं पयो न सेव्यम् ( सुसू. ४५.६४ )

हिं.—दूध.

**म.—दूध.**

गु.—दूध.

बं.—दुध.

ता.—पाल्.

दुग्धम्, जीर्णज्वरेषूपयुक्तम् ( चचि. ३.२३९ ) दुग्धं ज्वरक्षीणस्य वमनविरेचनभेषजापेक्षया मलहरणाय हितम् ( चचि. ३.१७० ) उपवासाध्वभाष्यस्त्रीमारुतातपकर्मक्लान्तानां पयोऽनुपानं पथ्यम् ( चसू. २७.३२२ ) शालिमुद्गादिभोजिनां युद्धसन्तापविषमद्यरुजासु च हितम् ( सुसू. ४६.४२६ ) प्रयोगापचिताङ्गानामुदरिणां सर्वधातुक्षयार्तानां सर्वप्रयोगाणामनु क्षीरं हितम्। तेन च दोषानुबन्धरक्षा बलस्थैर्यं च भवति ( चचि. १३.१९३ ) सदाहपिपासार्तानां सुखावहम् ( सुउ. ३९.१४४ ) गण्डूषकवलाद्यर्थमुपयुज्यते ( असंसू. ३१.७ ) पयोगुणाः—स्वादु सरं शीतं वातघ्नं च ( असंसू. ७.२४१ ) आमं पयोऽभिष्यन्दि गुरु, शृतं लघ्वनभिष्यन्दि, अतिशृतं गरीयः, धारोष्णममृतोपमं च ( अहृसू. ५.२८ )

**–तुम्बी**–स्त्री., वनस्पति० क्षीरतुम्बी ( रा. ७.२३८ )

**–दा**–स्त्री., वनस्पति० चणिका ( रा. परि. ८.६५ )

**–पान**–परिव० न., क्षीरपानम् ( सुचि. २४.९९ )

**–फेनी**–स्त्री., वनस्पति० कटुस्तिक्ता शीता रुच्या रसायनी विषनाशिनी व्रणापसारिणी च ( रा. परि ५.३४ )

हिं.—दुधिया.

**म.—लघुदुधी.**

गु.—दुधेली मोटी.

ता.—दुधी.

फा.—निशाशत.

**–बीजा**– स्त्री., वनस्पति० क्षीरतुम्बी ( रा. ७.२३९ )

**–वर्ग**– पु., हस्तिनी, वडवा, गौः, उष्ट्री, गर्दभी, स्त्री, अजा, अविका इत्येतासां दुग्धानि; उदुम्बरः पिप्पलोऽर्को वटो रोध्रो दुग्धिका स्नुहीभेदा उत्तमारणी चैतासां क्षीराणि ( र. १०.८९ ) अत्र हस्तिन्यादीनां प्राणिनो दुग्धवर्गः, उदुम्बरादीनां तु वानस्पतिको दुग्धवर्गो ज्ञेयः।

**–हरिणी नाडी**–स्त्री., दुग्धवहा नाडी ( सुचि. १७.४७ )

**दुग्धनिका**–स्त्री., वनस्पति० अपामार्गः ( रा. ४.३९० )

**दुग्धिका**–स्त्री., ( र. १४.८८–८९ ) क्षीरिणी ( र. १४.३७.४६ )

**दुच्छाय**–वि., मलिनकान्तिः ( अहृसू. ११.४० )

**दुटि**–पु., जलजप्राणि० ( का. खिल अ. २४.५३ )

**दुद्रुम**–पु., वनस्पति० पलाण्डुः ( ध. ४.७१ )

**दुन्दुभि**–पु., निःस्वातः ( सुसू. २९.३० )

प्रतुदपक्षि० ( चसू. २७.५१ )

असुर० स्कन्देनासौ निहतः ( काचि. बालग्रह )

आग्नेयकीट० ( असंउ. ४३ )

**–स्वनीय**–वि., अध्याय० ( सुक. ६.१ )

**दुन्दुभिक**–पु., सविषकीट० आग्नेयत्वात् स पित्तजरोगान् करोति ( सुक ८.१० )

**दुरभिग्रह**–पु., वनस्पति० अपामार्गः ( ध. १.२६१ )

**दुरभिग्रहा**–स्त्री., वनस्पति० धन्वयासः ( रा. ३.२० )

कपिकच्छूः ( ध. १.१५१ )

**दुराकर्ष**–वि., आक्रष्टुमशक्यम् ( अहृसू. २८.२६ )

**दुराचर**–वि., दुःखेनोपचर्यते ( सुउ. २०.६ )

**दुरात्मन्**–वि., दुःखितान्तःकरणः ( सुउ. ३९.९३ )

अजितेन्द्रियः ( सुउ. ४०.२१ )

**दुराधर्ष**–पु., वनस्पति० सर्षपः ( रा. १६.६८ )

**दुराधर्षा**–स्त्री., वनस्पति० कुटुम्बिनी ( रा. परि. ५.२१ )

**दुरारुह**–पु., वनस्पति० बिल्वः ( रा. ११.१३५ )

नारिकेलः ( रा. ११.१०५ )

तालः ( ध. ५.६८ )

**दुरारुहा**–स्त्री., वनस्पति० खर्जूरः ( रा. ११.६५ )

**दुरारोहा**–स्त्री., वनस्पति० श्रीवल्ली ( रापरि. ८.३३ )

खर्जूरः ( ध. ५.५३ )

**दुरालभा**–स्त्री., वनस्पति० धन्वयासः ( चसू. ४.१४ )

**दुरालभासव**–पु., आसुत० ग्रहणीपाण्डुरोगार्शःप्रभृतिरोगेषु शस्तः ( चचि. १५.१५२–१५५ )

**दुरालम्भा**–स्त्री., वनस्पति० धन्वयासः ( चचि. १८. १२७ )

**दुरितशमनी**–स्त्री., वनस्पति० शमी ( रा. ८.१५२ )

**दुर्ग**–वि., गम्भीरम् ( चसू. २४.४५ )

पु., निर्यास० गुग्गुलुः ( ध. ३.१२७ )

**दुर्गन्ध**–वि., कुत्सितगन्धम् ( सुसू. ४५.१९८ ) तस्य

कर्माणि हृल्लासोऽरुचिकरत्वं च
( सुसू. ४६.५२२ )

**( दुर्गन्धा )** स्त्री., वनस्पति० बाकुची ( ध. १.१६६ )

**दुर्गाध**–वि., अगाधम् ( सुउ. १.८ )

**दुर्गाह्लाद्**–पु., निर्यास०
भूमिजगुग्गुलुः ( रा. १२.१८८ )

**दुर्ग्रह**–पु., वनस्पति० अपामार्गः ( ध. १.२६० )

**दुर्ग्रहोपसर्ग**–पु., दुष्टानां स्कंदादिबालग्रहाणां संसर्गः
( सुशा. १०.४६ )

**दुर्जरा**–स्त्री., वनस्पति० ज्योतिष्मती ( ध. १.२६७ )

**दुर्दर्शन**–वि., दुःखेन दृश्यते ( सुनि. २.१५ )

**दुर्दिन**–न., मेघाच्छादितं दिनम् ( अहसू. ३.४६ )

**दुर्धर**–पु., वनस्पति० ऋषभः ( ध. १.१२५ )

**( दुर्धरा )**–स्त्री., रेवतीग्रह० ( का. रेवतीकल्प. ३७.३८ )

**दुर्धर्षा**–स्त्री., वनस्पति० कन्थारी ( रा. परि. ८.२० )
जम्बूः ( रा. परि. ५.२४ )

**दुर्नामन्**–पु., रोग० अर्शस् ( र. २१.८९ )

**दुर्नामारि**–पु., वनस्पति० सूरणः ( ध. परि. ४.६ )

**दुर्निबन्धन**–न., दुर्बन्धनम्, अनुचितबन्धनम्
( सुनि. १५.१४ )

**दुर्न्यास**–पु., दुःस्थापनम् ( सुनि. १५.१४ )

**दुर्बल**–वि., प्राणहीनः, क्षीणः ( सुसू. ११.९ ) मन्दः
( चचि. १५.५१–५२ )

**दुर्भग**–वि., अमनोरमाकारः ( सुशा. ४.६४ )

**दुर्भगक**–न., रोग० भगन्दरः ( र. २.१० )

**दुर्मनस्** वि., गतोत्साहः ( अहसू. ११.४० )

**दुर्मरा**–स्त्री., वनस्पति० दूर्वाभेदः श्वेतदूर्वा
( ध. ४.१४४ ) द्र० 'दूर्वा'
शतावरी ( रा. ४.४४० )

**दुर्मेधस्त्व**–वि., दुष्टबुद्धित्वं, तामसगुणः ( सुशा. १.१८ )

**दुर्मेल**–वि., परस्परं न संमील्यते यथा कठिनं लोहं मृदु च स्वर्णं परस्परं न संमील्येते ( र. २.८५ )

**दुर्मोहा**–स्त्री., वनस्पति० काकादनी ( ध. ४.२७ )

**दुर्योग**–पु., दुष्प्रयोगो, मिथ्याप्रयोगः
( सुचि. ३४.२२ )

**दुर्लभ**–पु., वनस्पति० कर्चूरम् ( ध. ३.९४ )

**( दुर्लभा )**–स्त्री., वनस्पति० धन्वयासः ( रा. ३.२० )
लक्ष्मणा ( ध. १.९७ )

**–हेतुक**–वि., दुर्लभो दुर्मेहो हेतुः कारणं यस्य सः
( असंसू. ७.२६२ )

**दुर्वर्ण**–न., वनस्पति० एलावालुकम् ( ध. ३.७६ )

**दुर्वान्त**–वि., असम्यग्वामितः ( सुचि. ९.४२ )

**दुर्विधेया**–स्त्री., वनस्पति० सठी ( ध. १.६२ )

**दुर्हृद्**–वि., दुष्टं हृदयं यस्य सः, दुर्बुद्धिः ( कासू. १९ )

**दुश्चक्रम**–पु., वनस्पति० गोक्षुरः ( रा. ३.१३० )

**दुश्चिकित्स्य**–वि., असाध्यः दुःखेन चिकित्सनीयः
( सुसू. ३३.५ )

**दुश्छर्दन**–वि., यो दुःखेन छर्दयति सः ( च. सि. २.८ )

**दुष्कर**–वि., दुश्चिकित्स्यम् ( सुचि. ८.११ )

**दुष्कुल**–पु., वनस्पति० चोरकः ( रा. १२.१२८ )

**दुष्कृत**–न., असत कृतम् ( अहसू. १२.३५ )

**दुष्ट**–वि., दोषकारकम् ( चचि. १२.५ ) विषादिभिर्दोषकरम् ( सुसू. ४६.४७६ )

**–क्षीरा**–वि., दुष्टं क्षीरं यस्याः सा ( चशा. ८.५६ )

**–ग्रह**–पु., स्कन्दापस्मारादिकग्रहः ( सुसू. २३.१६ )

**–पीनस**–पु., नासारोग० पीनसः अप्रतिकुर्वतः नरस्य प्रतिश्यायोत्तरं पीनसस्य दुष्टत्वमत्रानुसन्धेयम्
( सुसू. २४.१७ )

**–प्रतिश्याय**–पु., नासारोग० प्रतिश्यायः अत्रापि दुष्टपीनसशब्दगदुष्टविशेषणस्य तात्पर्यमतिदेश्यम्
( सुउ. २४.१५–१६ )

**–मद्य**–न., विकृतमद्यम्, नवम्, व्यापन्नम्, अकालजम् ( सुउ. ४०.४ )

**–यान**–न., अयोग्यं वाहनम् ( अहसू. २.३५ )

**–योनि**–वि., योनिरोगपीडिता स्त्री
( र. २२.३८–४० )

**–रक्त**–न., दूषितरक्तम् ( अहसू. २७.२–५ )

**–रक्तापगम**–पु., दूषितरक्तस्य निस्सरणम्
( असंसू. ३५.७ )

**–रक्तापगमन**–न., दूषितरक्तस्य निस्सरणम्
( अहसू. २६.४७ )

**–व्रण**–पु., दूषितो व्रणः ( सुसू. २२.७ )

**–व्रणविधि**–पु., अशुद्धव्रणस्य चिकित्सितम्
( सुचि. २.९४ )

**–शोणित**–न., दूषितरक्तम् ( चनि. १.३० )

**दुष्टात्मन्**–वि., दुष्टो हि आत्मा स्वभावो यस्य सः
( सुउ. ६०.९ )

**दुष्टादुष्ट**–वि., दुष्टश्चायमदुष्टश्चेति तेन पिता हि पुत्रस्य दुष्टोऽप्यदुष्टत्वाद् आप्त एव भवति
( चक्र. चवि. ४.४ )

**दुष्टाम्बु**–न., दुष्टं जलम् ( सुउ. ४०.४ )

**दुष्टास्र**–न., दुष्टरक्तम् ( असंसू. ३६.१७ )

**दुष्टास्रसंभव**–पु., दुष्टरक्तसंभवः ( असंसू. ७.२५१ )

**दुष्टि**–स्त्री., दूषणम् ( चनि. ५.७ )
**दुष्टेक्षित**–न., दुष्टमीक्षितम्, 'स्वभावनष्टे शुष्के वा दुष्टे साध्वीक्षिते हितम् ( कासंसू. १९ )
**दुष्पत्र**–पु., वनस्पति० चोरकः ( ध. ३.७१ )
**दुष्प्रजाता**–वि., दुःखेन प्रसूता, यस्याः प्रसवः कष्टेन जातः सा ( काचि. दुष्प्रजा. ३ )
**दुष्प्रधर्षा**–स्त्री., वनस्पति० खर्जूरः ( ध. ५.५३ ) धन्वयासः ( रा. ३.२० )
**दुष्प्रधर्षिणी**–स्त्री., वनस्पति० कण्टकारी ( ध. १.९५ )
**दुष्प्रवेशा**–स्त्री., वनस्पति० कन्थारी ( रापरि. ८.२० )
**दुष्प्रसू**–वि., दुःखेन प्रसूयते इति ( सुउ. ३८.१३ )
**दुःस्पर्श**–पु., वनस्पति० लताकरञ्जः ( रापरि. ८.२४ ) बदरम्, भूबदरी ( रा. ११.१६४ )
**( दुःस्पर्शा )**–वनस्पति० धन्वयासः ( सुउ. ५५.२५ ) खवल्ली ( रापरि. ३.१९ )
**दुस्सह**–पु., बालोपग्रह० ( का. द्विव्रणीयचि. )
**(दुस्सहा )**–स्त्री., वनस्पति० जम्बूः ( रापरि. ५.२४ )
**दुहितृकाम**–वि., अपत्यत्वेन कन्यामभिलषन् ( असंशा. १ )
**दूत**–पु., स्त्रीपुरुषादिर्य आतुरेण प्रेष्यते स दूतः ( सुसू. २९.३ ) दूतस्य शुभलक्षणानि शुक्लवासाः, शुचिः प्रियदर्शनः स्मृतिमान्विधिकालज्ञोऽलंकृतो मङ्गलवान् स्वस्थः प्राङ्मुखमासीन इति ( सुसू. २९ २३–२६ ) तस्याऽशुभलक्षणानि–रौद्रस्वरूप उद्विग्नो न्यूनाधिकाङ्गो विकृत आर्द्रजीर्णापसव्यैकमलिनवस्त्रधारी ( सुसू. २९.१५–२३ )
**दूतादिविज्ञान**–न., अध्याय० ( असंशा. १२.१ )
**दूताधिकार**–पु., दूतानां शुभाशुभादित्वस्य विचारो यत्र कृतः, सोऽधिकारः ( चइ. १.३ )
**दूयन**–न., लक्षण० दुःखमङ्गमर्दः ( चसू. १७.५४ ) अतिवेदना ( सुउ.४१.२५ )
**दूरजनान्तनिलय**–वि., ( परिव० ) दूरे ग्रामान्निलयो गृहं यस्य सः ( सुसू. ४६.९१ )
**दूरपानीयगोचर**–वि., ( परिव० ) पानीयाद्दूरे निवासी ( मृगः ) ( सुसू. ४६.९ )
**दूरमूल**–पु., वनस्पति० मुञ्जः ( रा. ८.२०५ ) धन्वयासः ( ध. १.२२ )
**दूरेक्षण**–न., दूरस्थितस्य वस्तुनः प्रेक्षणं नेत्रविकारकारणानामेकतममिदम् ( सुउ. १.२६ )
**दूर्वा**–स्त्री., तृण० ( चसू. ३.२७ ) साधारणगुणाः—कषाया, मधुरा, शीता, रुच्या, तृप्तिदा, कफपित्तघ्नी, तृष्णाच्छर्दिदाहमूर्च्छाग्रहभूतनाशिनी, श्रमनाशिनी, रक्तपित्तापहा ( रा. ८.२३६ ) त्वगामयघ्नी ( र. १७.१२२ ) विसर्पनाशिनी ( र. १३.१३ ) दूर्वाभेदाः—नीलदूर्वा—मधुरा, तिक्ता, शीता, रोचनी, कफवातघ्नी, रक्तपित्तातिसारज्वरघ्नी; श्वेतदूर्वा—मधुरा, अतिशीता, रुच्या, पित्तघ्नी, छर्दिदाहतृष्णाकासामातिसारघ्नी, गण्डदूर्वा–मधुरा, शीता, पित्तवातघ्नी, ज्वरभ्रमतृष्णाश्रमापहा; वल्लीदूर्वा—मधुरा तिक्ता शीता पित्तकफघ्नी, तृष्णाच्छर्दिनाशिनी
( ध. ४.१४३–४७; रा. ८.२२६–३६ )
हिं.—दूब.
**म.—हरळी.**
गु.— नीली धो.
बं.—दूर्वा.
ता.—अरुकु.
वनस्पति० सठी ( ध. ६.८७ )
**–सोम**–पु., सोम० ( सुचि. २९.५ )
**दूर्वानलवेत्रासव**–पु., आसुत० ( सुसू. ४६.४३३ )
**दूषक**–पु., धान्य० शालिवर्गीयाणामेकतमः द्र० 'शालि' ( सुसू. ४६.४ )
**( दूषिका )**–स्त्री., नेत्रमलम् ( सुउ. ६.१६ )
**दूषण**–न., दोषकारणम् ( चवि. ६.१० )
**दूषणात्मन्**–वि., दूषणस्वभावः ( अहृसू. ७.५१ )
**दूषीविष**–न., विष० कालान्तरप्रकोपि विषम् ( चक्र. चसू. २१.४५ ) ( चचि. २३.३१ )
यद्यपि न प्राणहरं तथापि बहुदोषकरम् ( चचि. २३.१४० )
यस्माद्देशकालान्नदिवास्वप्नैरभीक्ष्णशो दूषितं विषं रसादिधातून् दूषयते तस्माद्दूषीविषं स्मृतम्, विषघ्नौषधिभिर्हतं वा दावाग्निवातातपशोषितं वा स्वभावतो गुणविप्रहीनं वा विषं दूषीविषतामुपैति। तस्य पूर्वरूपाणि–निद्रा, गुरुत्वं, विजृम्भणं, विश्लेषो रोमहर्षोऽङ्गमर्दः. तल्लक्षणानि–दूषीविषेणार्दितो भिन्नपुरीषवर्णो विगन्धवैरस्यमुखः, पिपासामूर्च्छावमीगद्गदवाणीविषण्णतादूष्योदरलिङ्गो भवति, प्रायेण दूषीविषं तदर्दिते नरे अन्नमदमविपाकमरोचकं, मण्डलकोठमोहान्धातुक्षयं, पादकरास्यशोफं दकोदरं, छर्दिमतिसारं करोति। त्रैवर्ण्यमूर्च्छाविषमज्वरान् प्रवृद्धां प्रबलां तृषां वा कुर्यात्। उन्मादमानाहश्च जनयेत्। शुक्रं क्षपयेत्। गाद्गद्यं

कुष्ठं वा जनयेत् (सुक. २.२५-३३) उपद्रवाः ज्वरदाहादयः, चिकित्सा सम्यक् शुद्धं च दूषीविषार्तं दूषीविषार्यगदं पाययेत् (सुक. २.५०,५३,५४)

**दूषीविषारि**-पु., योग० अयं दूषीविषे विषान्तरेष्वपि दध्ना मधुना वा संयुतः पेयः (सुक. १.४३)

**दूष्य**-वि., यद्दोषैर्दुष्टं भवति रसादिकं मलादिकं च तत् (चवि. ८.१०१)

**दूष्युदर**-न., रोग० उदरभेदः (सुनि. ७.१३-१४) द्र० 'उदर'

**दूष्योदर**-न., रोग० सान्निपातिकमुदरम् (चसि. २.१५)

**दृढ**-वि., अजर्जरम् (सुचि. ३५.१२)
पु., वनस्पति० लकुचः (रा. परि. ९.४४)
न., वनस्पति० एलावालुकम् (ध. ३.७६)
खनिज० हीरकम् (ध. ६.५६)
लौहम् (र. २३.४०)

-**काण्ड**-पु., वनस्पति० कत्तृणम् (रा. ८.१०८) वंशः (रा. ७.२१५)

-( **काण्डा** )-स्त्री., वनस्पति० वत्सादनी (रा. परि. ३.३३)

-**क्षुरा**-स्त्री., वनस्पति० बल्वजा (रा. परि. ८.४०)

-**ग्रन्थि**-पु., वनस्पति० वंशः (रा. ७.२१५)

-**च्छद**-पु., वनस्पति० तालः (रा. ९.९३)
न., वनस्पति० कत्तृणम् (रा. ८.१०८)

-**तरु**-पु., वनस्पति० धवः (रा. परि. ९.८)

-**ता**-स्त्री., स्थैर्यम् (चवि. ८.५)
लक्षण० काठिन्यम् (चसू. १३.४५)

-**तृण**-पु., वनस्पति० मुञ्जः (रा. ८.२०५)

-**त्वच्**-पु., वनस्पति० यावनालः (रा. परि. ८.३८)

-**नील**-पु., वनस्पति० नारिकेलः (रा. ११.१०४)

-**पत्र**-पु., वनस्पति० वंशः (रा. परि. ७.२१५)

-**पत्री**-स्त्री., वनस्पति० बल्वजा (रा. परि. ८.४०)

-**पादा**-स्त्री., वनस्पति० शङ्खिनी (ध. १.२५६)

-**पादी**-स्त्री., वनस्पति० भूधात्री (रा. ५,१४४)

-**प्ररोह**-पु., वनस्पति० प्लक्षः (रा. ११.१२५)

-**फल**-पु., वनस्पति० नारिकेलः (ध. ५.७४)

-**फलस्थिति**-पु., वनस्पति० नारिकेलः (रा. ११.१०५)

-**बल**-पु., ऋषि० चरकसंस्कृतस्याग्निवेशतन्त्रस्य सप्तदशचिकित्साध्यायैस्तथा कल्पसिद्धिस्थानाभ्यां पूरणमकरोत् । यक्ष्मचिकित्सितान्तानष्टावध्यायान् तथाऽर्शोऽतिसारविसर्पद्विव्रणीयमदात्ययोक्तान् विहाय सप्तदशाध्याया ज्ञेया अवशिष्टाः (चक. चचि. ३०.२९०)

-**बीज**-पु., वनस्पति० बर्बुरः (रा. परि. ८.१३)
चक्रमर्दः (रा. ४.९)
बदरम् (रा. ११.१५७)

-**मूल**-न., वनस्पति० मन्थानकः (रा. परि. ८.५५)

-**मूल**-पु., वनस्पति० मुञ्जः (रा. ८.२०५)

-**लता**-स्त्री., वनस्पति० (रा. परि. ३.३३)

-**वल्क**-पु., वनस्पति० पूगः (रा. ११.७१)
पु., वनस्पति० लकुचः (रा. परि. ९.४४)

-**स्कन्ध**-पु., वनस्पति० राजादनः (ध. ५.९१)

-( **वल्का** )-स्त्री., वनस्पति० अम्बष्ठा (ध. ३.११६ रा. ४.१७०)

**दृढाग्नि**-पु., बलवानग्निः (चचि. ३.१७२)

**दृढेन्द्रिय**-वि., दृढानि स्वकार्यैकरणक्षमाणीन्द्रियाणि यस्य सः (सुचि. ३१.५६)

**दृढोत्थान**-पु., दृढारम्भः (सुशा. ४.८६)

**दृति**-स्त्री., चर्मपुटकम् (सुसू. ९.४) पानीयपूर्णखल्ली (सुचि. १५.१२)

**दृप्त**-वि., मदोन्मत्तः (असंसू. ४.१०)

**दृश्**-स्त्री., दृष्टिः (अहसू. १२.२)

( **दृक्** )-**प्रद**-न., खनिज० अञ्जनम् (रा. १३.२१४)

-**प्रसादा**-स्त्री., वनस्पति० कुलत्था (ध. ३.१५६)

( **दृग्** )-**घ्न**-वि., दृष्टिनाशकम् (अहसू. ६.३४)

-**विपर्यय**-पु., शास्त्रदृष्टिवैपरीत्यं नास्तिकत्वादि (अरु). आप्तवाक्येष्वप्रमाणबुद्धिः (हे. अहसू. २.२२)

( **दृङ्** ) **नाश**-पु., लक्षण० दृष्टिनाशः (अहसू. २३.५)

**दृश्य**-वि., प्रत्यक्षोपलब्धिविषयम् (चशा. ७.१३)

**दृषद्**-स्त्री., शिला (सुचि. २७.८)
मांसादिपेषणार्थं कृतः पाषाणविशेषः (सुसू. ४६. ३६४) घर्षणार्थं पाषाणखण्डविशेषः (कासू. लेहाध्याय)
वनस्पति० पाषाणभेदः (ध. १.१५७)

-( **दृषत्** ) **पत्री**-स्त्री., वनस्पति० सिगृडी (रापरि. ४.३१)

-**सार**-न., खनिज० मुण्डलोहम् (रा. १३.२९)

**दृष्ट**-वि., दर्शनविषयीभूतम् (चसू. २५.४०)

-**कर्मता**-स्त्री., बहुशः कर्मानुभवः (चसू. २५.४०)

-**कर्मन्**-वि., अभ्यस्तकर्मा (अहसू. १.२८) छेदादौ स्नेहादौ च कुशलः (सुसू. ३४.१९) बहुशश्चिकित्सितरोगो वैद्यः (सुसू. १०.३)

**–रिष्ट**–वि., दृष्टं रिष्टं नाम मरणसूचकं लक्षणं यस्मिन् तत् ( असंशा. १०.३१ )

**दृष्टान्त**–वि., पु., यस्मिन्नर्थे मूर्खाणां लौकिकानां पण्डितानां च योऽर्थोऽविवादसिद्धः स दृष्टान्तो भवति। विदुषां बुद्धिसाम्यं–यथाऽऽदित्यः प्रकाशकस्तथैव सांख्यज्ञानं प्रकाशकम् ( चवि. ८.३४ ) न्याये पञ्चावयववाक्ये उदाहरणम्–यथा नित्यः पुरुषः, अकृतकत्वादिति हेतौ, अकृतकमाकाशं तच्च नित्यमिति दृष्टान्तः

**दृष्टापचारज**–वि., ऐहिकलौकिकाद् व्याधिकारणाज्जातः ( अहृसू. १२.५७ )

**दृष्टार्तव**–वि., दृष्टमार्तवं यस्मिन् काले, स दृष्टार्तवः कालः ऋतुः स च द्वादशरात्रं भवति ( सुशा. ३.६ ) दृष्टार्तवर्तुमत्त्वादेव स्त्री ऋतुमती दृष्टार्तवा वा अभिधीयते ( सुशा. ६.८ )

**दृष्टार्थ**–वि., प्रत्यक्षज्ञानवान् ( सुशा. ५.५१ ) प्रमाणान्तरोपलब्धियोग्यार्थः ( चवि. ८.३८ )

**दृष्टि**–स्त्री., कृष्णमण्डलस्य मध्यवर्ति रूपग्राहकंचक्षुरिन्द्रियम् ( सुउ. १.१३ ) नेत्रम् ( सुसू. १२.९ ) मसूरदलमात्रा, पञ्चभूतप्रसादजा, खद्योतविस्फुलिङ्गाभाऽव्ययतेजोभिर्विशिष्टा ( सुउ. ७.३–४ ) दृष्ट्याश्रयं मण्डलम् ( सुउ. १७.१ ) अतीन्द्रियदर्शनम् ( चशा. १.१४०-४१ ) उपलब्धिः ( चइ. ४.२५ )

**–कृशता**–स्त्री., दृङ्मांद्यम् ( सुउ. ५५.१६ )

**–क्लेद**–पु., दृष्टिगतं जलम् ( सुचि. २४-१८ )

**–गतदोष**–( परिव० )–पु., रोग० द्र० 'नेत्ररोग'

**–गतरोग**–पु., रोग० द्र० 'नेत्ररोग' ( सुउ. १७.१ )

**–गतरोगप्रतिषेध**–पु., अध्याय० ( सुउ.१७.१ )

**–गतरोगविज्ञानीय**–वि., अध्याय० ( सुउ. ७.१ )

**–दूषण**–वि., दृष्टिरोगप्रदः ( अहृसू. ६.४० )

**–प्रदा वर्ति**–स्त्री., भैषज्य० त्रिफलाकुक्कुटाण्डत्वगादिभिः कृता एषा वर्तिः अभिन्नचक्षुषोऽन्धस्य दृष्टिप्रदा ( चचि. २६.२५४–५६ )

**–प्रसाद**–पु., नयनगोलकस्य संरम्भरागादिरुजाहरणपूर्वकं निर्मलीकरणम् ( सुउ. १९.४ )

**–प्रसादन**–वि., दृष्टेर्नैर्मल्यजननम् ( सुउ. १७.७० )

**–बल**–न., दृष्टेः सामर्थ्यम् ( असंसू. ३१.१५ )

**–भाग**–पु., चक्षुरिन्द्रियाधिष्ठानम् ( सुशा. २.३५ )

**–मण्डल**–न., शारीर० नेत्रगतमण्डलम् ( असंशा. ५.५२ ) नेत्रे कृष्णताराग्रवर्ति विभाग० ( सुउ. १.१५ )

**–विभ्रम**–पु., लक्षण० दृग्भ्रमः ( असंसू. ८.३७ )

**–विशारद**–वि., शालाक्यतन्त्रनिपुणः, नेत्रचिकित्सकः ( सुउ. १.१३ )

**–विष**–वि., दृशि विषं यस्य सः (सर्पः) ( सुक. ३.५ )

**–हनन**–(परिव०) न., रोग० दृष्टिनाशः (सुउ. ६.२०)

**दृष्ट्यन्तर**–न., दृष्टी कृष्णतारके मसूरदलप्रमाणे भवतः तयोर्दृष्ट्योरन्तरं चतुरङ्गुलम् ( सुसू. ३५.१२ )

**दृष्ट्याश्रयरोग**–पु., रोग० पित्तविदग्धदृष्ट्यादयः षड्रोगास्तेष्वेकः ( सुउ. ७.३४–३५ )

**दृष्ट्युपघात**–पु., लक्षण० आघातजन्यं दृष्टिवैकल्यम् ( सुशा. ६.२७ )

**दृष्ट्युपरोध**–पु., लक्षण० दृष्टिमन्दता, सविषान्नसेवनाद् भवति ( चचि. २३.११४ )

**देव**–पु., इन्द्रादिः ( चनि. ७.१० ) ( सुक. ५.९ ) अमानुषगुणयुक्तो राजा देव इति संज्ञितः, तस्य गुणाः–आज्ञा, त्यागः, क्षमा, धैर्यं, विक्रमश्च ( सुसू. ३४.१०–११ ) मेघः ( सुउ. ६१.१९ ) खनिज० पारदः ( रा. १३.४३ )

**( देवी )**–स्त्री., पार्वती देवी ( र. ११.१३० ) वनस्पति० अतसी ( रा. १६.१८७ ) कर्कोटकी ( ध. १.१८७ ) पाठा ( ध. १.७० ) बला, बृहद्बला ( र. ११.३७–३९ ) भूतुम्बी ( रा. ७.२४१ ) मूर्वा ( ध. १.१३ ) मृगाक्षी ( रा. ७.२५८ ) वन्ध्यकर्कोटकी ( ध. १.१८५ ) शालिपर्णी ( रा. ४.११४ ) स्पृक्का ( ध. ३.६२ ) लिङ्गिनी ( रा. परि. ३.१७ ) हरीतकी ( रा. ११.३०७ )

**–काष्ठ**–न., वनस्पति० देवदारुः ( ध. १.७७ )

**–कुरम्बा**–स्त्री., वनस्पति० महाद्रोणा ( रा. परि. ५.५० )

**–कुसुम**–न., वनस्पति० लवङ्गम् (ध. ३.४१) लवंग.

**–गन्धा**–स्त्री., वनस्पति० महामेदा ( रा. ५.१६४ )

–गिरि–पु., पर्वत० अत्र चन्द्रमोऽभिधानः सोमविशेष उपलभ्यते (सुचि. २९.२७)
–जुष्ट–वि., देवाविष्टः, सन्तुष्टः शौचयुक्तो गन्धमाल्याभिलाषी निस्तन्द्रो यथार्थभाषी तेजस्वी निमेषरहितो वरप्रदाता ब्रह्मण्यश्च भवति देवग्रहाविष्टो नरः (सुउ. ६०.८)
–ताड–पु., वनस्पति० देवदाली (ध. १.१७३)
–ताडक–पु., वनस्पति० देवदाली (च. क. २३).
–दंशक–न., वनस्पति० कत्तृणम् (ध. १.८०)
–दण्डा–स्त्री., वनस्पति० बलाभेदः नागबला (रा. ४.४२८) द्र० 'बला'
–दारु–पु. न., वनस्पति० सुगन्धिवृक्षः (चसू. ३.२५) व्रणधूपनद्रव्यम् (सुसू. ३७.२१) तद्गुणाः–तिक्तः, उष्णः, स्निग्धो (ध), रूक्षो (रा), वातकफजिदामदोषविबन्धाऽऽध्मानप्रमेहभूतदोषघ्नः (ध. १.७६) शोथतन्द्राहिक्काज्वरास्रजित् (र. १३.४९)
हिं.—देवदार.
**म.—देवदार.**
गु.—देवदार.
बं.—तून.
त.—देवदारु.
फा.—देवदार.
–दारुतैल–न., तैल० तिक्तं कटु कषायं दुष्टव्रणशोधनं क्रिमिकफकुष्ठानिलहरम् (सुसू. ४५.१२३)
–दाली–स्त्री., वनस्पति० तद्गुणाः–तिक्ता, कटु, उष्णा, छर्दिकृत्, कफघ्नी, ज्वरश्वासकासहिध्माऽरुचिक्षयशोथपाण्डुकामलागरभूतनाशिनी (रा. ३.२४४–२४५) (ध. १.१७३–७४)
हिं.—सोनैया.
**म.—देवडांगरी, देवदाली.**
गु.—कुकडवेला.
बं.—देयाताडा.
–दासी–स्त्री., वनस्पति० बीजपूरकः (रा. ११.३४)
–दुन्दुभि–पु., वनस्पति० तुलसी (ध. ४.५०)
–दूती–स्त्री.,वनस्पति० बीजपूरकः (रा.११.३३)
–द्रु–पुं., वनस्पति० देवदारुः (र. २६.३८)
–द्रुम–पु., वनस्पति० देवदारुः (र. २६.३६)
–द्रोह–पु., मनोभाव० देवगुरुसिद्धानां द्रोहः (सुसू. २४.७)
–धान्य–न., वनस्पति० यावनालः (रा. १६.१६९)



–धूप–पु., निर्यास० रालः (र. २०.१९६)
–नालोत्तम–पु., वनस्पति० महानलः (ध. ४.१४२)
–निर्मिता–स्त्री., वनस्पति० गुडूची (ध. १.३)
–पर्ण–न., वनस्पति० सुरपर्णकः (रा. परि. १०.५०)
–पुत्रिका–स्त्री., वनस्पति० स्पृक्का (ध. ३.६२)
–पुत्री–स्त्री., वनस्पति० स्पृक्का (ध. ३.६२)
–प्रिय–पु., वनस्पति० भृङ्गराजभेदः पीतभृङ्गराजः (रा. ४.२१) द्र० 'भृङ्गराजः'
–बला–स्त्री., वनस्पति० त्रायमाणा (रा. ५.३७९)
–मणि–पु., वनस्पति० महामेदा (ध. १.१२७)
–यजनागार–न.,देवयजनस्याऽगारम् (चक. १.९)
–लाङ्गुलिका–स्त्री., वनस्पति० वृश्चिकाली (रा. परि. ९.८)
–वन्ध्या–स्त्री., देवकोपेन जायमानो वन्ध्याभेदः (र. २२.२)
–शत्रु–पु., दैत्याख्यो ग्रहः (सुउ. ६०.९)
–शत्रुजुष्ट–पु., दैत्यग्रहाविष्टः, तल्लक्षणानि–प्रस्वेदयुक्तो देवद्विजगुरुनिन्दको वक्रलोचनो निर्भयो विमार्गाहितदृष्टिः प्रभूतैरप्यन्नपानैरसन्तुष्टो दुष्टस्वभावश्च भवति (सुउ. ६०.९)
–शेखर–पु., वनस्पति० दमनम् (रा. १०.१२०)
–श्रेणी–स्त्री., वनस्पति० मूर्वा (ध. १.१३)
–सर्षपक–पु., वनस्पति० कटुरुष्णो रुच्यः कफनाशनो जन्तुदोषहरो वक्त्रामयविशोधनः (रा. परि. ९.४२)
–सहगिरि–पु., (परिव०) पर्वत० अत्र चन्द्रमोऽभिधानः सोमविशेष उपलभ्यते (सुचि.२९.२७)
–सहा–स्त्री., वनस्पति० महाबला (ध. १.२८२)
–सुन्द–पु., जलाशय० अत्र चंद्रमोऽभिधानः सोमविशेष उपलभ्यते (सुचि. २९.२८)
–सेना–स्त्री., अष्टोत्तरशतमङ्गलपदार्थेष्वेकः (असंशा. १२.८)
–हृद्या–स्त्री., वनस्पति० ताम्बूली (ध. परि. ३.२)
देवता–स्त्री., वनस्पति० धत्तूरः (ध. ४.७)
देवल–पु., ऋषि० रोगापहरणचिन्तनार्थं हिमवतः पार्श्वे समेतेषु महर्षिष्वेकः (चसू. १.१०)
देवाह्व–पु., वनस्पति० देवदारुः (अहसू. १५.३५)
देवाह्वय–पु., सुरदारुः (अहसू. १५.९)
देवाह्वय–न., वनस्पति० सहदेवा विश्वदेवा च (अहसू. १५.९)

**देवार्ह**–न., वनस्पति० सुरपर्णकः ( रा. परि. १०.५० )
**( देवार्हा )**–स्त्री., वनस्पति० महाबला ( रा. ४-४२५ )
**( देवी ) काण्डा**–स्त्री., वनस्पति० महाद्रोणा ( रा. परि. ५.५० )
**देवी-भागवतम्** ( र. २२.२०–२१ )
**–रज**–न., खनिज० गन्धकः ( र. २.२ )
**–शास्त्र**–न., देवी पार्वती, तदुक्तं रसविद्याशास्त्रम् ( र. २२.२०–२१ )
**–शुक्र**–न., खनिज० अभ्रकम् ( र. २.२ )
**देवेष्ट**–पु., निर्यास० रालः ( रा. १२.१७६ ) गुग्गुलुः ( रा. १२.१८४ )
**( देवेष्टा )**–स्त्री., वनस्पति० महामेदा ( रा. ५.१६३ ) बीजपूरकः ( रा. ११.३४ )
**देवोन्मत्त**–पु., देवाविष्टः, लक्षणानि–सौम्यदृष्टिं गम्भीरमधृष्यमकोपनमस्वप्नभोजनाभिलाषिणमल्पस्वेदमूत्रपुरीषवातं शुभगन्धं फुल्लपद्मवदनं देवोन्मत्तं विद्यात् ( चचि. ९.२० )
**देश**–पु., स्थानम् ( चवि. १.२२ ( २ ) अधिष्ठानम् ( चवि. ८.७५ ) देशो द्विविधः भूमिः, आतुरश्च ( चवि. ८.८४ ) भूमिर्देहश्च ( अहसू. १.२३ ) भूमिप्रविभागः त्रिप्रकारकः–आनूपो जाङ्गलः साधारणश्च ( चक. १.८–९ ) ( सुसू. ३५.४२ )
**–प्रधान**–पु., देशाध्यक्षो देशाधिपो वा ( चवि. ३.२० )
**–सात्म्य**–न., देशविपरीतगुणम् ( चवि. १.२२ ( ५ ) भूमिसात्म्यम्, तच्च समुदायैकदेशभेदेन द्विविधं–तत्र समुदायस्य यथा–जाङ्गलदेशे यावाहाराचारावानूपे तौ विपरीतौ, आनूपे कफोल्बणत्वेन कफविपरीतगुणरूक्षादिगुणोपेतौ आहारविहारौ देशावयवानामपि यथा बाह्लीकपल्लवचीनादीनां माषगोधूममाध्वीकादिभिः सात्म्यम् ( सुसू. ३५.३९ )
**–सात्म्याध्याय**–पु., अध्यायविशेषस्य संज्ञा ( काखिल. २५.१ )
**–देशिक**–पु., गुरुः ( र. ७.३० ) उपदेष्टा ( असंनि. ६.७ )
**–देश्य**–वि., प्रायेण तुल्यम् ( सुक. ४.३६ )
**देह**–पु., शरीरम् ( सुउ. ६६.६–७ ) स्थूलकृशमध्यभेदेन त्रिविधो देहः ( सुसू. ३५.३३ ) द्र० 'शरीर'
**–कृत्**–वि., शरीरदार्ढ्यकारी ( र. २.७१ )
**–खेद**–पु., देहश्रमः ( असंसू. ९ )
**–चिन्तक**–वि., शरीरविषये विचारणपरः ( सुउ. ३७.१० )
**–द**–पु., खनिज० पारदः ( रा. १३.४२ )
**–( दा )**–स्त्री., वनस्पति० ताम्बूली ( ध. परि. ३.३ )
**–धातु**–पु., रसादिधातुः ( चचि. १५.५ )
**–धारण**–न., देहस्य धारणम् ( असंसू. १०.३ )
**–धृष्**–वि., देहधारकः ( सुनि. १.१३ )
**–प्रकृति**–स्त्री., देहस्वास्थ्यम् ( चक. चसू. ७.४० )
**–बन्ध**–पु., देहस्य मूर्तिराकृतिश्च ( असंशा. ८.३२ )
**–बल**–न., देहसामर्थ्यम् ( सुसू. १५.५ ( १ )
**–बृहत्त्वकृत्**–वि., पुष्टिप्रदम्, देहबृंहणकरम् ( असंसू. २४.५८ )
**–भेद** (परिव०)–पु., देहविनाशः, मृत्युः ( सुनि. १.२१ )
**–वृत्ति**–स्त्री., देहस्यारोग्यम् ( चवि. ३.१४ )
**–वेदना**–स्त्री., शारीरव्यथा ( कासू. २५.४ )
**–सन्धुक्षण**–न., शक्त्युपचयलक्षणबलसंदीपनं पुष्ट्यादिवहमित्यर्थः ( ड, सुचि. ३१.५७ )
**–संभवहेतु**–पु., देहोत्पत्तिहेतुः ( सुसू. २१.३ )
**–सात्म्य**–न., देहस्य सात्म्यं नाम उपशयः ( असंसू. ७.२३५–२३६ )
**देहली**–स्त्री., गृहद्वाराधःकाष्ठम् ( चशा. ८.१९ ) द्वारदेहसंरक्षिका ( र. १०.३६ )
**देहिन्**–वि., देहवान् देहविशिष्टो वा ( आत्मा ) ( चशा. १.७९ ) पु., मनुष्यः ( सुचि. ३६.२७ )
**देहेन्द्रियमनस्तापिन्**–वि., देहमिन्द्रियं मनश्च तापयति पीडयतीति ( चचि. ३.४ )
**देहोष्मन्**–पु., सकलशरीरगतोष्णत्वम् ( चचि. ३.१३० ) देहस्यौष्ण्यम् ( असंसू. ३७.२६ )
**देहौजस्**–न., देहस्यौजः, देहसारः ( चसू. १७.६० )
**दैत्यमेदज**–पु., निर्यास० गुग्गुलुः ( रा. १२.१८८ )
**दैत्या**–स्त्री., वनस्पति० मुरा ( ध. ३.६७ )
**दैन्य**–न., लक्षण० क्लिष्टचित्तता ( सुसू. १.२५ ( ३ ) ग्लानिः ( ड. सुउ. ३९.८३ ) रोदनादि ( चवि. ४.८ )
**दैर्घरात्रिक**–वि., दीर्घकालानुबंधी अथवा दीर्घा रात्रिं मरणरूपां करोतीति दैर्घरात्रिकः ( ज्वरः ) ( चचि. ३.५२-५३ )
**दैर्घ्य**–वि., दीर्घताऽऽधिक्यं वा ( अहसू. ४.३० )
**–श्रवस**–पु., ऋषि० ( असंसू. ९.११५ )
**दैव**–न., पौर्वदेहिकमात्मकृतं यत् कर्म तद् दैवम्, 'दैवमात्मकृतं विद्यात् कर्म यत् पौर्वदेहिकम्' ( चवि. ३.३० ) तच्च कालजरोगस्य हेतुः ( चशा. १.११६ )

वि., देवस्येदमिति दैवम्, देवनिमित्तकं देवसम्बन्धि वा ( सुसू. २९.१७-१८ )

-जन्मन्-वि., दैवात् पूर्वजन्मकृतकर्मणो जन्म उत्पत्तिर्येषां ते ( रोगाः ) अदृष्टहेतवः ( असंसू. २२.४ )

-बलप्रवृत्त-वि., दैवशक्तिजातः द्र० 'रोग' ( सुसू. २४.७ )

-व्यपाश्रय-वि., अदृष्टसंश्रयी ( उपक्रमविशेषः ) व्याधिप्रतिकारार्थमदृष्टमाश्रित्य क्रियमाणं बलिमङ्गलादि ( चसू. १.५८ ) मन्त्रौषधिमङ्गलबल्युपहारहोमनियमप्रायश्चित्तोपवासस्वस्त्ययनप्रणिपातगमना-दिर्दैवव्यपाश्रयं औषधं भेषजम् ( चसू. ११.५४; चवि. ८.८७ )

दोःपाद-पु., हस्तः पादश्च ( र. २३.७ )

दोग्ध्री-वि., दुग्धवती ( चशा. ८.५२ ) बहुक्षीरा ( सुशा. १०.२५ )

दोलायन्त्र-न., यन्त्र० स्वेदनयन्त्रम्, तत्स्वरूपं मुखस्योभयतः कृतद्वारद्वये स्थापितस्य दण्डस्य मध्ये निहितायाः पोट्टल्याः परिपाचनार्थं निर्मितं द्रवेणार्धपूरितं भाण्डम् ( र. ९. ३-४ )

दोष-पु., वातादिः, तत्संज्ञा निरुक्तिश्च-दूषणस्वभावत्वाद्दोषः, दूषयति नाम विकारं जनयतीति दोषः ( असंसू. २०.३ ) तत्सङ्ख्या-वायुः पित्तं कफश्चेति समासतस्त्रयो दोषाः ( चसू. १.५७; अहृसू. १.६) रक्तस्यापि दोषत्वं सुश्रुतवचनाधारेण पूर्वटीकाकारैराषाढधर्मदासादिभिः स्वीकृतमस्ति ( मधुकोश मा. पंचनिदान ) तत्र वायौ, वा गतिगन्धनयोरिति धातुः । पित्ते, तप सन्तापे इति। श्लेष्मणि, श्लिष आलिङ्गने इति। एतेषां कृद्विहितैः प्रत्ययैर्वातः पित्तं श्लेष्मा इति च रूपाणि भवन्ति ( सुसू. २१.५ ) तत्पर्यायाः-वायुर्वातः पवनो मारुतः समीरणश्चेति वातस्य, पित्तमग्निश्चेति पित्तस्य, श्लेष्मा कफो बलासश्चेति कफस्य, तदुत्पत्तिः-पञ्चमहाभूतेभ्यः अविकृतानां वातादिदोषाणामुत्पत्तिः, तत्र वाय्वाकाशधातुभ्यो वायुः, आग्नेयं पित्तम्, अम्भःपृथिवीभ्यां श्लेष्मा ( असंसू. २०.३ ) तद्देवताः-वातपित्तकफा द्वे द्वे देवते आश्रिताः । वायुर्मारुतमाकाशं च, पित्तमग्निमादित्यं च, कफः सोमं वरुणं च श्रितः ( का.वि. ) अविकृतदोषाणां स्थानानि-त्रिदोषाः सर्वदेहचराः सर्वदेहव्यापिनश्च सन्ति। तत्रापि हृदयादूर्ध्वं कफो विशेषेण, पित्तं हृदयनाभ्योर्मध्यभागे वायुर्नाभेरधोभागे च तिष्ठति । पुनश्च पक्वाशयकटीसक्थिश्रोत्राऽस्थिस्पर्शनेन्द्रियं स्थानं वातस्य, तत्रापि पक्वाधानं विशेषतः । नाभिरामाशयः स्वेदो लसीका रुधिरं रसो दृक्स्पर्शनं च पित्तस्थानानि, नाभिस्तत्र विशेषतः । उरःकण्ठशिरःक्लोमपर्वाण्यामाशयो रसो मेदो घ्राणं जिह्वा च कफस्थानानि तत्रोरस्तु विशेषतः ( अहृसू. १२.१-३ ) तत्कालः-अहोरात्रिभुक्तानामन्तमध्यप्रथमकालेषु क्रमशो वातपित्तकफानामुत्पत्तिर्वृद्धिर्वा भवति । तथा बाल्ये कफस्य, यौवने पित्तस्य, वार्धक्ये वातस्य च वृद्धिर्भवति ( अहृसू. १.८ ) ऋतुषु दोषगतिः-वायोर्ग्रीष्मे चयो, वर्षासु प्रकोपः, शरदि प्रशमश्च; पित्तस्य वर्षासु चयः, शरदि प्रकोपो हेमन्ते प्रशमश्च; श्लेष्मणः शिशिरे चयो, वसन्ते प्रकोपो ग्रीष्मे प्रशमश्च भवति। तत्र ग्रीष्मकाले लघुरूक्षादिभिरोषधीभिस्तद्विधो वायुर्लघुरूक्षे देहे चीयते, परन्तु ग्रीष्मकालस्यौष्ण्याद्वातस्य प्रकोपो न भवति। वर्षासु सर्वगुणैर्वातस्य प्रकोपो भवति। वर्षास्वम्लविपाकादिभिरोषधीभिस्तादृशं पित्तं चयं याति । वर्षाकालस्य शैत्यतः पित्तस्य कोपो न भवति । वर्षाशीतोचिताङ्गानां नराणां वर्षासु संचितं पित्तं शरदर्करश्मिभिः सहसा तापेन कुप्यति। हेमन्ते शिशिरे च स्निग्धशीताभिरोषधीभिः कफश्चीयते । कालदेहयोस्तुल्यत्वेऽपि स्कन्नत्वात्कफस्य प्रकोपो न भवति । वसन्ते सूर्यसन्तापात्कफस्य विलयनं, ततः प्रकोपश्च भवति ( अहृसू. १२.२४-२७ ) दोषसम्बन्धादग्निस्वरूपम्-वातेन विषमोऽग्निः पित्तेन तीक्ष्णः, कफेन मन्दश्च भवति । समैर्दोषैः समोऽग्निर्भवति । कोष्ठोऽपि वातेन क्रूरः, पित्तेन मृदुः, कफेन मध्यः, समैरपि दोषैश्च मध्य एव भवति ( अहृसू. १.८-९ ) दोषाणां गतिविशेषाः-अवस्थाभेदेन दोषगतिः प्राकृती वैकृती चेति द्विविधा। वर्षादिषु पित्तादीनां चयप्रकोपप्रशमास्तु कालकृता गतिः। क्षयः स्थानं वृद्धिश्चेति दोषाणां प्रमाणतस्त्रिविधा गतिः । ऊर्ध्वमधस्तिर्यक् चेति देहे त्रिविधा गतिः । तथा कोष्ठशाखामर्मास्थिसन्धिषु च त्रिविधा गतिः (चसू. १७.११२-११५) अविकृतदोषकर्माणि - उत्साहोच्छ्वासनिःश्वासचेष्टा-

वेगप्रवर्तनैर्धातूनां सम्यग्गत्याऽक्षाणां पाटवेन चाविकृतो वायुर्देहमनुगृह्णाति। अविकृतं पित्तं पक्त्यूष्मदर्शनैः क्षुत्तृड्रुचिप्रभामेधाधीशौर्यतनुमार्दवैर्देहमनुगृह्णाति। अविकृतः श्लेष्मा स्थिरत्वस्निग्धत्वसन्धिबन्धक्षमादिभिर्देहमनुगृह्णाति (अहृसू. ११.१–३) तथा च शुक्रार्तवादिसहकारितया दोषा एव देहसंभवहेतवो भवन्ति (सुसू. २१.३) विकृतवृद्धदोषकर्माणि– काश्र्यकार्ष्ण्यौष्णकामित्वादीनि वातस्य, पीतविण्मूत्रनेत्रत्वगादीनि पित्तस्य, अग्निसदनप्रसेकाऽऽलस्यगौरवादीनि श्लेष्मणश्च (अहृसू. ११.५-७; असंसू. १९.६) दोषसामान्यचिकित्सा – क्षीणा बृंहयितव्याः, कुपिताः प्रशमयितव्याः, वृद्धा निर्हर्तव्याः, समाः परिपाल्या इति (सुचि. ३३.३) कुपितं त्वविरोधयन् चये एव दोषं जयेत्। सर्वकोपे शेषदोषाविरोधतो बलीयांसं दोषं जयेत् (अहृसू. १३.१५; असंसू. २१.१५-१७) शरीरजानां वातपित्तकफानां विकृतदोषाणां क्रमेण बस्तिविरेकवमनानि तैलघृतमधूनि च परमौषधानि (अहृसू. १.२५-२६) रोगः (चवि. ६.४; सुसू. ४१.१०) प्रमादः (चवि. ८.५४)

(दोषा)–स्त्री., वनस्पति० हरिद्रा (र. २८.८९)

–कर्मजव्याधि–पु., रोगप्रकार० अल्पके हेतौ महारम्भो व्याधिर्दोषकर्मजः (अहृसू. १२.५८)

–कृतदुष्टि–(परिव०) स्त्री., दोषैः कृता दुष्टिः (असंसू. १९.१९)

–कोपकारण–न., दोषाणां कोपहेतुः, असात्म्यैरर्थैः संयोगः, कालो दुष्कृतं कर्म चेति त्रीणि कारणानि 'कालार्थकर्मणां योगो हीनमिथ्यादिमात्रकः' इत्यनेनाऽपि दोषाणां कोपकारणानि उक्तानि स्फुटम् (अहृसू. १२.३५)

–क्षयविकार–पु., वातादिदोषाणां क्षयादुद्भूतो विकारः, यथा क्षीणो वायुः प्रसेकारुचिहृल्लासादीन् करोति। स्तम्भशैत्यानियततोददाहारोचकादींश्च पित्तम्। श्लेष्मा च भ्रमोद्वेष्टनाऽनिद्राऽङ्गमर्दपरिशोषादींश्च करोति (असंसू. १.९९–११)

–घातिन्–वि., दोषघ्नं हिक्काच्छर्द्यादिरोगघ्नं च (अहृसू. ६.१२६)

–घ्न–वि., रोगहरम् (सुसू. ३४.२३)

–चय–पु., दोषाणां स्वधाम्नि वृद्धिः (असंसू. ५)

–दुर्बल–वि., दोषैर्दुर्बलो तैर्व्याधितो वा (सुसू. १३.११)

–धातुभिषग्जित–न., यद्विकृतं दोषं धातुं चैककालं साम्यावस्थां नयति तत् भेषजादि (चचि. ३०.१५१)

–धातुमलक्षयवृद्धिविज्ञानीय– वि., अध्याय० (सुसू.१५)

–नाशन–वि., दोषशामकत्वेन दोषनाशनम् (चचि. १६.९२२)

–निबद्धायुस्–वि., मलादिरूपे देहस्थे दोषे निबद्धमायुर्यस्य (चसि. १०.१२)

–निर्हरण–(परिव०) न., दोषाणां वमनविरेचनादिना शोधनम् (सुचि. ३३.५०)

–पचन–न., दोषाणां निरामावस्थाऽऽपादनम् (असंचि. १)

अत्रपक्वस्याऽपि दोषस्य लङ्घनादिना पाचनं सङ्ग्रहनिनीषया कार्यमिति ज्ञेयम् (अहृचि. १.१०३) तथैव 'धातवो हि धात्वाहाराः प्रकृतिमनुवर्तन्ते' इत्यनेन चरकवचनेन दोषाणां पचनं प्रसादस्तरादिपर्यवसितमुक्तमेवेति अनुसन्धेयम्।

–परिप्लुति–स्त्री., दोषस्य समन्तादागमनम् (सुउ. १७.८२)

–पाक–पु., दोषस्य पक्वता तल्लक्षणम् –'दोषप्रकृतिवैकृत्यं ज्वरदेहयोः लाघवम् इन्द्रियवैमल्यं च' (मानि. मधु. चक. १२.६५; अहृनि. २.३३)

–पाचन–वि., आमसंसृष्टानां दोषाणां पाचकम् (सुसू.३८.२८)

–प्रकृति–स्त्री., दोषस्वभावः (सुसू. ६.१९.) तस्य तस्य दोषस्याऽऽधिक्येन संजाता प्रकृतिः (चवि. ६.१३) येन दोषेण गर्भोऽनुबध्यते तेन दोषेण आरब्धा प्रकृतिर्दोषप्रकृतिरुच्यते (चवि. ८.९५) वि., व्याधिः दोषो नाम दोषवैषम्यं एव प्रकृतिः कारणं हेतुर्वा यस्य सः (व्याधिः) (चवि. ६.४)

–प्रकृतिवैकृत्य–न., उच्छ्रिताया दोषप्रकृतेरन्यथात्वम् (सुउ. ३९.११६)

–प्रच्यावन– न., उपक्रम० दोषाणां प्रकर्षेण निर्हरणम् (सुचि. १. १२७) विरेचनम् (सुसू. ३९. ११)

–प्रतिपक्ष–वि., दोषविपरीतम् (असंसू. ३६)

–प्रभाव–पु., दोषस्य कार्यविशेषकारित्वम् (चवि. १.१२)

**–प्रमाण**–न., वातादेरल्पाऽनल्पादिपरिमाणम् ( चवि. ४.८ )
**–प्रशमन**–वि., दोषशामकम्, लङ्घनादिना (द्रव्यम्) ( चसू. १.६७ )
**–बलप्रवृत्त**–वि., दोषा वातादयो रजस्तमसी च। तेषां बलं शक्तिः, तत्प्रवृत्तो व्याधिः। स च पक्वाऽऽमाशयसमुत्थभेदाद्विविधः।
पुनश्च शारीरमानसभेदाद्विविधः ( सुसू. २४.५ )
**–बहुल**–वि., मलरूपपुरीषादिबहुलम्, पुरीषादिबहुलम् ( सुउ. ४०.१३० )
**–बीज**–न., दोष एव बीजम् (असंनि. २.६७)
**–भक्षित**–वि., लक्षण० वातादिदोषैराक्रान्तम्, पूयभक्षितम् ( मांसादि ) ( अहृसू. २९.७ )
**–भेद**–पु., दोषप्रकारः, वृद्धिक्षयसाम्यविभेदतो दोषभेदस्त्रिधा ( असंसू. १.२३ )
त्रिदोषाणां परस्परमेलनेन संभूतः संसर्ग० दोषभेदास्त्रिषष्टिः, ते एवम्– एकशः षट्, द्विशः पञ्चविंशतिः, त्रिशश्च द्वात्रिंशत् ( सुउ. ६६.४ )
**–भेदविकल्प**–पु., अध्याय० (सुउ. ६६.१)
**–भेदीय**–वि., अध्यायविशेषः (असंनि. १५)
**–लक्षण**–न., वातादिदोषाणां रूक्षशीतत्वादिलक्षणानि ( अहृसू. १२.५४ )
**–लिङ्ग**–न., ( परिव० ) वातादिदोषलक्षणम् (सुउ. ५६.१० )
**–वक्तृ**–वि., देवद्विजगुरूणां दोषोद्घाटकः निन्दकः ( सुउ. ६०.९ )
**–वती**–स्त्री., विरुद्धधर्मयोरेकत्रसमावेशरूपदोषयुक्ता ( चवि. ६.४ )
**–वर्जित**–वि., कृमिविषशस्त्राद्युपघातादिदोषैरत्यक्तम् ( सुसू. ३६.१३ )
**–वाहिस्रोतस्**–न., ( परिव० ) स्रोतो० वातादिदोषवाहकं स्रोतः, समानवायोः स्थानमेतत् ( चचि. २८.८ )
**–विकल्पविद्**–वि., दोषाणां विकल्पस्य ज्ञाता ( चसू. २६-२७ )
**–विग्रथित**–वि., दोषमिश्रितम् (सुचि. ३४.६)
**–विभ्रान्तचेतस्**–वि., रोग० दोषवृध्या विभ्रान्तं चेतो यस्मिन्, स उन्मादः ( चक्र.चक. १०.५ )
**–विष**–न., दोष एव विषम् (असंनि. २.६८)
**–वृद्धिविकार**–पु., वातादिदोषवृद्ध्या जायमानो व्याधिः ( असंसू. २०.३७ ) ते च व्याधयः कार्श्यकार्ष्ण्यादयो वातस्य, पीतत्वग्ग्लानीन्द्रियदौर्बल्यादयः पित्तस्य, श्वैत्यशैत्यादयश्च कफस्येति ( असंसू. १९.६ )
**–वेग**–पु., दोषगतिः ( चचि. १०.८ )
**–वेगोदय**–पु., दोषवेगवृद्धिः ( असंसू. ३२.६ )
**–वैषम्य**–न., दोषविकृतत्वम्, दोषाणां प्राकृतप्रमाणन्यूनत्वं प्रमाणाधिक्यं वा चयप्रकोपप्रभृतिरोगावस्थारूपमनुसंधेयम् (असंसू. १.४३; अहृसू. १.२०)
**–शमन**–वि., दोषशामकम् ( लङ्घनादिना ), दोषप्रशमनम् ( सुसू. ४६.४३७ )
**–शमनत्व**–न., दोषशमनसामर्थ्यम् ( असंसू. १२ )
**–संघात**–पु., दोषाणां मेलनम् ( चक. १.५ )
**–संघातभेदन**–वि., दोषसमूहपृथक्करणम् ( सुसू. ४६.४३६ )
**–समता**–स्त्री., दोषसाम्यम् ( सुनि. १.१० )
**–समुच्छ्रिति**–स्त्री., दोषाणामौत्कट्यम्, एकस्य द्वयोस्त्रयाणां वा प्रकर्षः ( सुचि. ६.२१ )
**–साम्य**–न., वातादिदोषाणां समत्वं–प्रकृतिस्थत्वम्, दोषाणां स्वरूपादप्रच्युतिः ( अरु. ) अविकृतत्वम् ( हे. अहृसू. १.२०; असंसू. १ )
**–स्थान**–न., प्राकृतदोषसंश्रयस्थानम् (सुसू. २१.६; अहृसू. १२.१८ ) तदपि पूर्वरूपावस्थायां विकृतत्वेन दोषाणां स्थानसंश्रयः ( सुसू. २१.३३ )
**–स्यन्द**–पु.,उपक्रम०रक्तपिच्छादिदोषाणां निर्हरणम् ( असंशा. ५.४६ )
**–स्रोतस्**–न. स्रोतो० दोषवहस्रोत: (सुउ. ३९.१०७) दोषश्च स्रोतश्चेति ( सुउ. ३९.१०७ )
**–स्वभाव**–पु., दुष्टीकरणस्वभावः ( चशा. ६.१८ )
**–हर**–न., उपक्रम० शोधनम् ( ड. सुउ. ४२.१४० )
**–हरण**–न., उपक्रम० शोधनम् (अहृचि. १.१०३) द्र० 'दोषहर.'
**–हारिन्**–पु., वनस्पति० अशोकः ( रा. १०.२७१ )
**दोषल**–वि., दोषजनकम् ( सुशा. १०.३२ ) आमसंचयकारि ( हे. अहृसू. ५.४१ )
**दोषाग्नि**–पु., दोष एवाग्निः ( सुचि. १.१८ )
**दोषानद्ध**–वि., आमदोषव्याप्तम् ( सुचि. १.१२ )
**दोषानुकर्षिणी**–वि., दोषनिर्हरणी ( मात्रा ) ( चसू. १३.३४ )
**दोषानुगमन**–न., संसृष्टेषु प्रधानदोषस्याप्रधानदोषेण अनुसरणम् ( असंनि. ३ )
**दोषानुपशयित**–वि., दोषाज्जातम् (असंशा. ८)

**दोषानुशयिता**–वि., उल्बणवातादिभाविताऽव्यभिचारिणी ( प्रकृति. ) ( चक्र. चसू. ७. ४० )

**दोषापकर्षण**–न., उपक्रम० दोषाणां संशोधनम् ( चवि. ७.३३ )

**दोषाप्रवृत्ति**–स्त्री., लक्षण० वातादीनां निश्चलता ( ड. सुउ. ३९.११७ )

**दोषावसेचन**–न., उपक्रम० अपतर्पणभेदः शोधनम् ( चवि. ३. ४३; असंसू. ११. ४६ )

**दोषाशय**–पु., दोषाणां ( विकृतिजनकत्वेन ) संश्रयस्थानम् ( चवि. १३. ११८ )

**दोषोच्छ्रय**–पु., दोषोद्रेकः ( सुउ. ३९.२०२ )

**दोषोच्छ्राय**–( पु., )दोषास्यौत्कट्यम् ( सुचि. १.१२ )

**दोषोत्क्लेश**–पु., दोषस्थो विक्लेदनलक्षण उत्क्लेशः ( ड. सुचि. ३७.४७ )

**दोषोत्क्लेशिन्**–पु., वनस्पति० वनबर्बरिकाभेदः ( ध. ४.५८ ) द्र० 'बर्बर'

**दोषोत्थ**–वि., कुपितदोषसमुत्पन्नो व्याध्यादिः ( अहृसू. १२.५८ )

**दोषोदर**–न., रोग० दोषजन्यमुदरम् ( चसू. १.१०१ )

**दोषोद्रेक**–पु., दोषस्याऽऽधिक्यम् (असंसू. २९)

**दोषोपचय**–पु., दोषपुष्टिः ( सुसू. ६.१० )

**दोषोपप्लवविशेष**–पु., दोषाणां विशिष्टा दुष्टिः, स विशेषः पञ्चदशप्रकारकः, वातपित्तश्लेष्मशोणितान्येकशो द्विशस्त्रिशः सर्वशश्चेति संकरेण पञ्चदशप्रकाराणि । शुद्धत्वात् षोडशप्रकार इत्येके इति व्रणाधिकारे ( सुचि. १.५; सुसू. २१.२८ )

**दोषोपलिप्तवदना**–स्त्री., सिरा० दोषव्याप्तमुखा सिरा ( असंसू. ५ )

**दोस्**–पु., न., शारीर० हस्तः ( र. २३.७ )

**दोहद**–पु., गर्भिण्या इच्छा, दौहृदम्, तृतीये चतुर्थे वा मासि गर्भिणीनां जायमाना इन्द्रियार्थेष्वभिप्रायाः ( चनि. ३.१४; र. २२.४५ )

**दोहन**–न., दोहनपात्रम्, दुहन्ति गां पयोऽस्मिन् दोग्धारः इति दोहनं दोहनपात्रमिति यावत् ( सुचि. ३१.४२ )

**दौर्गन्ध्य**–न., लक्षण० दुर्गन्धित्वम् ( चसू. ५.९३ )

**दौर्बल्य**–न., लक्षण० बलहीनता ( चसू. १६.७; सुनि. ३.१६ ) शरीरबलहानिः मांसाऽपचयः ( चनि. १.३३ )

**दौर्बल्यता**–स्त्री., दुर्बलक्रियता, अत्र 'दुर्बलस्य कर्म' दौर्बल्यम्, तस्य भावो दुर्बलता, तेन पितुर्बीजस्य दुर्बलक्रियता (चशा. २.२०)

**दौर्मनस्य**–न., लक्षण० दुश्चित्तत्वम् ( सुसू. २९.४५ ) दौर्मनस्यमवृष्याणां श्रेष्ठम् ( चसू. २५.४०; असंसू. १३.३ )

**दौर्हृद**–न., गर्भिण्या इच्छा, दोहृदः. तन्निरुक्तिः– स्वहृदयं गर्भहृदयं चेति द्वे हृदये यस्याः सा द्विहृदया, तस्या इदं दौर्हृदम् । तद्धेतुः– प्राक्तनकर्मसंबन्धाद्दैवयोगाच्च दौर्हृदं हृदि जायते ( सुशा. ३.२८ ) दौर्हृदकालः–पक्षत्रयात्प्रभृत्यापञ्चमान्मासाद्दौर्हृदकालः ( इन्दु. असंशा. २.१५–१७. ) गर्भस्वभावान्मातुश्चतुर्थादिमासेष्विन्द्रियार्थप्रार्थना ( ड. सुसू. २४.५ ) प्राप्तदौर्हृदा गुणान्वितं सुतं प्रसूते । अलब्धदौर्हृदा त्वात्मनि गर्भे वा भयं लभेत ( सुशा. ३.१९–२१ ) श्रद्धाविघाताद्गर्भस्य विकृतिश्च्युतिर्वा भवति ( अहृशा. १.५४; असंशा. २.२० ) प्रार्थनायां च तीव्रायां काममहितमप्यस्यै हितोपसंहितं दद्यात् । श्रद्धाविघातस्तु न करणीयः ( असंशा. २.१९ ) येषु येष्विन्द्रियार्थेषु दौर्हृदविमानना भवेत् तस्मिन् तस्मिन्निन्द्रिये सुतस्यार्तिः प्रजायेत ( सुशा. ३.१९–२१ ) दौर्हृदेऽवमानिते वातप्रकोपेण गर्भः कुब्जः कुणिः पङ्गुर्मूको मिम्मिणो वा भवति ( सुशा. २.५१ ) राजसंदर्शनविषये दौर्हृदे सत्यर्थवन्तं महाभागं कुमारं सूते । तथा दुकूलपट्टादिविषयेऽलङ्कारैषिणं ललितं च, आश्रमे संयतात्मानं, देवताप्रतिमायां पार्षदोपमं, व्यालादिदर्शने हिंसाशीलं, गोधामांसाशने सुषुप्सुम्, गोमांसे बलिनं, माहिषे शूरं रक्ताक्षं लोमसंयुतम्, वाराहे स्वप्नालुं शूरम्, मृगमांसाद्वनचरं जङ्घालम्, सृमराद्विग्नमनसम्, तैत्तिरान्नित्यभीतं सुतं सूते । यथा समभिध्याति सा तथा शरीराऽऽचारशीलैः समानं सुतं जनयति ( सुशा. ३.१८–२७ )

**–विमानन**–न., गर्भिण्याः श्रद्धाविघातः ( सुशा. ३.१९; असंशा. २. २० )

**(–विमानना)**–स्त्री., दौर्हृदखण्डितत्वम् ( सुशा. ३.२१ )

**दौर्हृदावमानन**–(परिव०) न., गर्भिणीश्रद्धाया असम्पूर्तिः ( सुशा. २.५१ )

**दौर्हृदिनी**–स्त्री., द्विहृदया नारी ( सुशा. ३.१८; असंशा. २०.१७ )

**द्यूत**–पु., न., क्रीडा० पाशकादिक्रिया, कैतवम् ( सुचि. २४.१०१ )

**द्यो**–स्त्री., स्वर्गलोकः ( सुचि. ३०.३ )

**द्रङ्क्षण**–न., मान० शाणद्वयम्, 'शाणौ द्वौ द्रंक्षणं विद्यात्' ( चक. १२.८९ ) कोलम्, तोलकार्धम् ( र. २०.३६ )

**द्रव**–पु., आप्यो गुणः सान्द्रविपरीतः ( चशा. ६.१०; सुशा. १.१९ ) तस्य कर्म प्रक्लेदनम् ( सुसू. ४६.५२० ) उदकधातुः ( सुउ. ४०.१२५. )

न., आहारद्रव्य० तक्रभेदः, मथितम् (ध. ६.१८९)

वि., द्रुतिमद्द्रव्यम् ( सुशा. १.१९ )

**–ता**–स्त्री., द्रवभावः ( सुसू. १४.९ )

**–द्रव्य**–न., जलीयं द्रव्यम्, तोय-क्षीर-दधितक्रेक्षु-रसादि ( अहसू. ५.१ )

**–द्रव्यविज्ञानीय**–पु., अध्याय० ( अहसू. ५ )

**–धातु**–पु., द्रवत्वगुणयुक्तो धातुः ( चचि. १५.२४ ) धातोर्द्रवरूपोंऽशः ( चचि ४.८ )

**–रसा**–स्त्री., भैषज्य० लाक्षा ( रा. ६.१४२ )

**–स्वेद**–पु., स्वेद० द्रवद्रव्यैः स्वेदः, स द्विविधः परिषेकावगाहभेदात् ( सुचि. ३२.३ ) तद्विधिः – वातहरद्रव्यक्वाथपूर्णे कोष्णकटाहे द्रोण्यां वाऽवगाह्य स्वेदयेत् । एवं पयोमांसरसयूषतैलधान्याऽम्लघृत-वसामूत्रेष्ववगाहेत्सुखोष्णैः कषायैश्च परिषिञ्चेत् ( सुचि. ३२.१३; असंसू. २६.६; अहसू. १७.१ ) द्र० 'स्वेद'

**द्रवन्ती**–स्त्री., वनस्पति० सुतश्रेणी (रापरि. ४.१६) आखुकर्णी ( रापरि. ३.२१ ) आखुपर्णिका, मूषिकपर्णी, ( सुउ. ५२.२०; असंउ. १० ) समुद्रैरण्डः ( इन्दु. असंउ. १० ) चीरितपत्रा, दन्तीभेदः, फलमस्या विरेचने उपयुज्यते (चसू. २.१०, १.७८; चक. ११.१३; सुउ. ४२.६३) द्रवन्तीगुणाः– मधुरा शीता रसायनी रसबन्धनी त्रिदोषघ्नी ग्रहणी-तृष्णा-ग्रन्थि-प्रमेह-जठर-गर-पाण्डु--कृमिकोष्ठ-भगन्दर-हृद्रोग कृमि-ज्वर-शूलशमनी च ( ध. १.२२९; चक. ११.१३. )

हिं.–बडी दन्ती.

म.–थोरदांती, मोगली एरंड.

गु.–मोटो नेपालो, रतनजोत.

बं.–सांबरी, बृहद्दन्ती.

त.–कटलामणक्कु.

फा.–दंतीनाहरी.

**–स्नेह**–पु., स्नेह० शम्बरीतैलम्, तद्गुणाः–तिक्त-कटुकषायोऽधोभागदोषहरः कृमिकफकुष्ठाऽनिलहरो दुष्टव्रणशोधनश्च ( सुसू. ४५.१२४ )

**द्रविड**–पु., देश० दाक्षिणात्यजनपदः ( इन्दु. असंशा. १२.१२; काखिल. २५.१३ )

**(द्रविडी)**–स्त्री., वनस्पति० एला ( असंचि. ४ )

**द्रवोत्तर**–वि., द्रवाढ्यं द्रवप्रधानं भोजनादि ( सुसू. ४६.४१० )

**द्रव्य**–न., षट्सु पदार्थेष्वेकम् ( चसू. १०.२८ ) वैशेषिकसंमतसप्तपदार्थेष्वेकम् ( चवि. ८.२७ ) आधारकारणम् ( चसू. १.६४ ) तल्लक्षणम्–क्रिया–गुणवत्समवायिकारणम् (चसू. १.५१; सुसू. ४०.३ )

आहारभेषजादि सर्वं द्रव्यं पञ्चभूतात्मकम्, तथात्वेऽपि भूयसा व्यपदेशादाकाशीयवायवीयतैजसाप्य-पार्थिवभेदात्पञ्चविधम्, तत्र–आकाशीयं श्लक्ष्ण-सूक्ष्ममृदुव्यवायिविशदविविक्तमव्यक्तरसं शब्द-बहुलं मार्दवसौषिर्यलाघवकरं च, वायवीयं सूक्ष्म-रूक्षादिगुणं वैशद्यादिकरं च, तैजसमुष्णतीक्ष्णादिगुणं दहनादिकरं च, आप्यं शीतस्तिमितादिगुणं स्नेहन-ह्लादनादिकरं च, पार्थिवं स्थूलसारसान्द्रादिगुणं स्थैर्यबलादिकरं च ( चसू. २६.११; सुसू. ४१.३४; अहसू. ९.५-९ )

तच्च पुनः सचेतनाचेतनभेदेन द्विधा (चसू. २६.१०; सुसू. १.२८ ) विचित्रप्रत्ययारब्धसमानप्रत्यया-रब्धभेदेन द्विधा, विचित्रप्रत्ययारब्धं यवादि समान-प्रत्ययारब्धं गोधूमादि च ( अहसू. ९.२७-२८ ) भौममौद्भिदं जाङ्गमं चेति त्रिधा ( असंसू. १२.३ ) शमनकोपनस्वस्थहितभेदेन त्रिधा ( असंसू. १.३७ ) ऊर्ध्वभागहर–अधोभागहर–उभयतोभागहरभेदात् त्रिधा, ऊर्ध्वभागहरं मदनफलादि, अधोभागहरं निकुम्भकुम्भादि, उभयतोभागहरं कोशातकीश-ङ्खिनीसप्तलादि (सुसू. ३९.३-५) मधुरादिरसभेदा त्षट्प्रकारकं मधुराम्ललवणकटुतिक्त कषाया-ऽऽत्मकम् ।

द्रव्यगुणाः–गुरुमन्दहिमस्निग्धश्लक्ष्णसान्द्रमृदुस्थिर-सूक्ष्मविशदाः सविपर्ययाः लघुतीक्ष्णोष्णरूक्षखर-द्रवकठिनचलस्थूलपिच्छिला दश गुणा गुरुमन्दा-दिविपरीताः क्रमशो ज्ञेयाः विंशतिः (अहसू१.१८) द्रव्यवीर्यम्– गुरुस्निग्धहिममृदुलघुरूक्षोष्णतीक्ष्णभे देनाष्टविधं ( अहसू. ९.१२-१३ ) शीतोष्णवीर्येण द्विविधेति च ( अहसू. ९. १७ )

द्रव्यविपाकः– मधुराम्लकटुभेदात् त्रिविधः ( अहृसू. ९. २१ ) पाकस्य द्विविधत्वमेव सुश्रुतेन सिद्धान्तितं तद्यथा–'आगमे हि द्विविध एव पाको मधुरः कटुकश्च' ( सुसू. ४०. १० ) अत्रापि मधुरः पाके गुरुः कटुकश्च पाकतो लघुरिति गुरुलघुत्वं बोध्यं सुश्रुतानुसारेण

द्रव्यकर्म– वमनविरेचनबस्तिनस्यशिरोविरेचनानि पञ्चकर्माणि ( चसू. २६. १० ) बस्तिर्विरेको वमनं शिरोरेकोऽस्रविसृतिः ( अहृसू. १४.७ )

द्रव्यस्य रसादिसाम्येऽपि विशिष्टं कर्म प्रभावः ( अहृसू. ९. २६ )

**–प्रभाव**–पु., द्रव्यस्य विशेषकर्मकर्तृत्वम्, अत्र द्रव्यप्रभावेण रसक्रमोक्तवीर्यविपाकविपरीतौ वीर्यविपाकौ अपि बोद्धव्यौ इति चक्रपाणिः ( च. वि. १.१२ )

**–रसगुणवीर्यविपाकविज्ञानीय**–वि., अध्यायसंज्ञा० ( सुसू. ४० )

**–विकारप्रभावतत्त्व**–न., द्रव्यविकारयोः प्रभावनिर्णयः ( चवि.१. ११ )

**–विशेषविज्ञानीय**–वि., अध्यायसंज्ञा० ( सुसू. ४१ )

**–संग्रहणीय**–वि., अध्याय० ( सुसू. ३८ )

**–संभार**–पु., द्रव्याणामेकत्र आहरणं समूहो वा ( असंसू. २५.३ )

**द्रव्यापहृत्**–पु., वनस्पति० चोरकः ( र. २२.१६७ )

**द्रव्याभिनिर्वृत्ति**–स्त्री., द्रव्यस्योत्पत्तिः ( सुसू. ४१.३ )

**द्रष्टृ**–वि., दर्शनकर्ता आत्मा ( चशा. ४.८ ) रूपज्ञापकः ( सुशा. ३.४ )

**द्राक्षा**–स्त्री., फल० महाकषायवर्गे कण्ठ्यगणोक्तमेकं द्रव्यम् ( चसू. ४.१० ) कासहरगणोक्तमेकं द्रव्यम् ( चसू. ४.१६; असंसू. १५.३६ ) विरेचनोपगगणोक्तमेकं द्रव्यम् ( चसू. ४.१३; असंसू. १४.४ ) ज्वरहरगणोक्तमेकं द्रव्यम् ( चसू. ४.१६; असंसू. १५.३८ ) श्रमहरगणोक्तमेकं द्रव्यम् ( चसू. ४.१६; असंसू. १५.३९ ) स्नेहोपगगणोक्तमेकं द्रव्यम् ( असंसू. १५.२६ ) मधुरफलवर्गे श्रेष्ठा ( सुसू. ४६.३३४ ) आसवोपयोगिनी ( असंसू. ६.१३३ ) रसवीर्यवृद्धिकरी ( र. ११.३७ ) आर्द्रा द्राक्षाऽम्ला गुरुरुष्णवीर्या सरा पित्तकफप्रदा वातघ्नी च ( असंसू. ७०.३०३ ) द्राक्षागुणाः–मधुराऽम्ला कषाया स्वादुपाका शीता गुरुः स्निग्धा रुच्या वृष्या सन्तर्पणी पित्तघ्नी रक्तपित्तज्वरश्वासतृष्णादाहक्षयमूत्रदोषहरा च ( ध. ५.५६ ) सृष्टमूत्रविट् चक्षुष्याऽनिलतिक्तास्यत्वमदात्ययकासस्वरभेदनुच्च ( सुसू. ४६.१८३-१८४; अहृसू. ६.११५-११७ )

हिं.–अंगूर, मुनक्का.

म.–द्राक्ष.

गु.–द्राक्ष, धराख.

बं.–मनेक्का, आंगूर. किसमिस.

त.–तिराक्षै.

फ.–किशमिश, आंगूर.

**–रस**–पु., द्राक्षाया रसः, मृदुकोष्ठस्य विरेचनकरः ( चसू. १३.६७ )

**–लेह**–पु., योग० द्राक्षापिप्पलीतवक्षीरीनागरमधुकादिसाधितोऽयं पाण्ड्वाऽऽमयहृद्रोगकामलाहलीमकज्वरगुल्मोदरशोफोदावर्तहरस्तथा विरेकसाध्यव्याधिहरश्च ( असंचि. १८ )

**–सर्पिस्**–न., सिद्धघृत० द्राक्षालशुनादिसिद्धं घृतम्, राजयक्ष्महरमेतत् ( का. राजयक्ष्मचि. )

**द्राक्षासव**–पु., आसुत० अयं मध्वासवसमः–छेदी तीक्ष्णो मेहपीनसकासजिद्दीपनश्च ( असंसू. ६.१३२ )

**द्राक्षोत्तमा**–स्त्री., फल० गोस्तनी द्राक्षा ( चक्र. चचि. २०.३३ )

**द्राघिष्ठ**–न., वनस्पति०कत्तृणम् ( रा.८.१०८ )

**द्रामिली**–स्त्री., वनस्पति०एला ( र. २९.१३० )

**द्राव**–पु., द्रावणम्, स्त्रीणां कामपूर्तिजन्यं सुरतक्रीडाकालिकं मानभङ्गपुरस्सरवश्यतापादनं शैथिल्यं वा ( र. ११.६५ )

**द्रावक**–न., भैषज्य०सिक्थम् (रा.१३.१७४; ध.३.११९) खनिज० टङ्कणभेदः, श्वेतटङ्कणम् ( ध. २.२२; रा. ६.३१ ) द्र० 'टङ्कण'

एतल्लोहधातुद्रावकम्

कान्तलोहप्रकारेष्वेकम् ( र. ५.८९ )

**–कन्द**–पु., वनस्पति० तैलकन्दः ( रापरि. ७.५० )

**द्रावण**–न., संस्कार० कठिनानां धातूनां द्रुतिकरणम् ( र. १०.८२ )

लवणबिडम् ( ध. २.२८ )

**–गण**–पु., लोहादिद्रुतिकरो गणः, गुडगुग्गुलुगुञ्जाघृतमधुटङ्कणानि ( र. १०.९८ )

**–वर्ग**–पु., गुडगुग्गुल्वादिद्रावणगणः ( र. ३.९१ )

**द्रावणक**–पु., खनिज० टङ्कणक्षारः ( ध. २.२२ )

**द्राविक**–न., लवण० सौवर्चलम् ( रा. ६.३८ )

द्राविड–पु., वनस्पति० कर्चूरम् ( ध. ३.९४ )
(द्राविडी)–स्त्री., वनस्पति० एलाभेदः, सूक्ष्मैला ( सुसू. ३८.५४; ध. २.४४ ) द्र० 'एला'
द्राविडक–न., लवण० बिडम् ( रा. ६.३६ )
द्रावित–वि., द्रुतभावमापादितम् ( र. २.३८ )
द्राविन्–पु., खनिज० टङ्कणक्षारः ( ध. २.२२ )
द्रावी–स्त्री., पारदसप्तकञ्चुकेष्वेकः, लोहादिद्रावको दोषः ( र. ११.२२ )
द्रुत–वि., द्रुतभूतम् ( र. २.३८ )
–गति–वि., शीघ्रविसरणशीलम् ( सुनि. १०.५ )
–द्राव–वि., शीघ्रद्रवणशीलम् ( र. २.९३ )
–मति–वि., लक्षण० उद्भ्रान्तमनाः ( ड. सुउ. ६०.११ )
द्रुति–स्त्री., स्वरसः ( र. १७.३५ )
रसादेः स्थिररूपा द्रवस्थितिः ( र. १.१० )
औषधाध्मानयोगेन धात्वादिकस्य लोहस्य या द्रवाकारस्थितिः सा द्रुतिः ( र. ८.८३ )
तल्लक्षणम्– निर्लेपत्वं द्रुतत्वं तेजस्त्वं लघुता सूतेनाऽसंयोगश्चेति पञ्चधा श्रेष्ठद्रुतिलक्षणम् ( र. ८.८२ )
–बन्ध– पु., पारदबन्ध० रसोपरसधातूनां या बहिर्द्रुतयस्ताभिः पारदस्य जारणं मारणं च। ईदृग्बद्धः पारदो दुःसाध्यरोगहरः ( र. ११.८१ )
द्रुपदी–स्त्री., वनस्पति० वृक्षादनी ( रा. ५.१४२ )
द्रुम–पु., वृक्षः ( चसि. ३.७ )
–व्याधी–पु., भैषज्य० लाक्षा ( ध. ३.८२ )
द्रुमारुहा–स्त्री., वनस्पति० कैवर्तिका ( रापरि. ३.३५ )
द्रुमेश्वर–पु., वनस्पति० तालः ( ध. ५.६८ )
द्रोण–पु., मान० चतुर्गुणः कंसः ( चक. १२.९५ ) षोडशप्रस्थाः ( चचि. २९.१०५ ) आढकचतुष्टयम् (सुचि. ३१.७; असंक. ८) द्वादशाधिकपञ्चशतपलानि (सुउ. ५२.४३) चतुर्विंशत्यधिकसहस्रतोलकानि ( र. ११.७-८ )
न., रत्न० वैकुण्ठम् ( इन्दु. असंउ. ४२ )
द्रोणि–स्त्री., भाण्ड० द्रोणी, इयं द्रवस्वेदाद्यर्थमुपयुक्ता (सुचि. ३२. १३)
–चुली–स्त्री., द्रोण्याकाराऽङ्गारकोष्ठी ( र. १६.६२ )
–ज–न., लवण० द्रोणीलवणम् ( रा. ६. ४९ )
–लवण–न., लवण० तद्गुणाः–लवणमल्पोष्णमीषत्स्निग्धमविदाहि भेदनमल्पपित्तलं शूलघ्नं च ( रा. ६.४९ )



द्रोणी–स्त्री., वनस्पति० इन्दीवरी ( रापरि. ३.२७ ) दारुकृतं नौसदृशं भाण्डम् ( ड. सुचि. २.७८; चचि. १(२).१०; असंसू. २६.६) जलक्षेपणी ( सुचि. १०.१३ )
–पुष्पी–स्त्री., वनस्पति० तद्गुणाः– कटुरुष्णा रुच्या पथ्या वातकफाऽपहाऽग्निमान्द्यहरा वातरोगाऽपहारिणी ( रापरि.५. ४८ )
हिं.–गोमा, मधुपाटी.
म.–बहुफूल.
गु.–कुलनुफूल.
बं.–दारुणफूला.
ता.–तुंबेकीरी
द्रौण–न., लवण० द्रोणीलवणम् ( रा. ६.४९ )
द्रौणेय–न., लवण० द्रोणीलवणम् ( रा. ६.४९ )
द्वन्द्व–न., द्विकरूपं मिथुनं द्वयम् ( चशा.१.६९ )
–ज–वि., दोषद्वयाज्जातः (चचि. ३.८९; सुउ. ३९.४६)
द्वन्द्वन–न., द्वन्द्वानम् ( र. ८.४८ ) द्र० 'द्वंद्वान'
द्वन्द्वान–न., द्रव्यद्वयस्यैकत्रमर्दनेन ध्मानेन चैकत्रीकरणम् ( र. ८.४८ )
द्वान्द्विक–वि., द्विदोषजम् ( चनि. १.२९ )
द्वारदा– स्त्री; वनस्पति० शाकतरुः ( चवि. ८.१३९ )
द्वारपक्ष–पु., द्वारस्य पक्षः, द्वारपार्श्वः ( चशा. ८.४७; असंउ. १ )
द्वाःस्थ–पु., द्वारपाल ( असंसू. ८.६१ )
द्वि–वि., संख्या० ( सुनि.१.८ )
–ककुद्– पु., पशु० उष्ट्रः ( असंचि. १० )
–करञ्ज–न., पूतिकरञ्जो नक्तमालश्चेति करञ्जद्वयम् ( असंसू. १६.१५ )
–कर्ण–वि., द्विकर्णिकम् ( असंसू. ३४.१८ )
–क्षार–न., यवक्षारः स्वर्जिकाक्षारश्चेति क्षारद्वयम् ( र. ११.५० )
–गुण–वि., गुणद्वययुक्तम्, यथा शब्दस्पर्शगुणो वायुः ( सुनि. १.८ )
–जीरक–न., श्वेतकृष्णजीरकद्वयम् ( र. १६.३६ )
–तालक–न., तालयन्त्र० द्वे ताले नाम प्रदेशौ यस्य तत्, मत्स्यशकलवत् प्रतनुमुखद्विप्रदेशं द्वितालम्, इदं कर्णनासानाडीशल्यानामाहरणार्थमुपयुज्यते ( सुसू. ७.१२ )
–तिक्ता–स्त्री., कटुका काकतिक्ता च ( अरु. ) कटुका करञ्जिका च (असंसू. १६.३४; हे. अहसू. १५.४०) किराततिक्तककटुरोहिणीति, स्तन्यशोधनगणे ( चक. चसू. ४.१२ )

–दल–न., मुद्गाढकीमसूरादिदलद्वययुक्तं शिम्बीधान्यम् (र. ३.३५) रसलोहानां मारकमिदम् (र. ३०.६३)

–निशा–स्त्री., हरिद्रा दारुहरिद्रा च (असंसू. १६.३४; अहसू. १५.४०; र. २४.८३)

–पञ्चमूल–न., दशमूलम्–ह्रस्वपञ्चमूलं बृहत्पञ्चमूलं च (चसि. ३.५९; सुशा. १०.४५)

–पञ्चमूलरस–पु., लघुबृहत्पञ्चमूलयोः क्वाथः, निरूहेण सर्वोऽनिलव्याधिहरोऽयम् (चसि. ३.३५)

–पाद्–वि., मनुष्यमयूरकुक्कुटादिः (इन्दु.) वनमानुषमर्कटादिः (चक्र.) एतेषां नखदन्तक्षतानि सविषाणि, रागज्वरस्रावरुजान्वितानि शूनानि च भवन्ति (चचि. २३.२१९; असंउ.४६)

–प्रभव–वि., द्वे प्रभवस्थाने यस्य तत् (रक्तपित्तम्) (सुउ. २२.९)

–बिन्दुक–वि., बिन्दुद्वयमात्रम्, अत्र शेषाद्विभाषेति कप्प्रत्ययो विहितोऽस्ति (अहसू. २०.२९)

–बृहती–स्त्री., कण्टकारिका महोटिका च (असंसू. १६.१५; अरु. अहसू. १५.२१) कण्टकारीद्वयम् (र. २९.६५)

–मार्ग–वि., अधरोत्तरमार्गद्वयं यस्य तद् (रक्तपित्तम्) (सुउ. २२.९; चचि. ४.२४)

–मुख–वि., कृमि० मुखद्वययुक्तः, सप्तविधेषु पुरीषजकृमिष्वेकः (सुउ. ५४.८)

–योनि–वि., द्विप्रभवम् स्थावरजङ्गमात्मकम् (चसू. २५.३६)

–रद–पु., पशु० गजः (सुउ. ५७.१०)

–रदकिञ्जल्क–पु., वनस्पति० नागकेसरम् (र. १२.१२१)

–रदरदन–पु., गजदन्तः, अञ्जनस्थापनार्थमस्य पेटिका विधीयते (असंसू. ८.९६)

–रदाह्वया–स्त्री., वनस्पति० गजपिप्पली (र. १२.१२१)

–रेतस्–वि., षण्ढ० द्विधा स्त्रीत्वपुरुषत्वोपजनकत्वेन स्थितं रेतो बीजं यस्य स द्विरेताः किंवा स्त्रीपुरुषलिङ्गी।
उपतप्तबीजाच्छुक्रशोणितादेतादृशी संभूतिः (चशा. २.१८)

–रेफगणसंमता– स्त्री., वनस्पति० तरणी (ध. ५.१४५)

–वार्ताकी– स्त्री., कण्टकारीद्वयम् (असंउ. २)

–विधोपक्रमणीय– वि., अध्यायसंज्ञा० (अहसू. १४.१)

–व्रणीय–वि., अध्यायसंज्ञा० (कासंचि. द्विव्रणीयचि. १)

–व्रणीयचिकित्सित– न., अध्याय० (चचि. २५; सुचि. १)

–शफ–वि., पशु० द्वौ शफौ यस्य सः, यथा हरिणगोमहिषादिः (चचि. १७.११८)

–हृदया–वि., द्वितीयं हृदयं यस्याः सा–गर्भिणी (ड. सुशा. ३.१८; असंशा. २.१७)

द्विज–पु., विद्यासमाप्त्या द्वितीयं जन्म यस्य भवति सः (चचि. १ (४) .५३)
द्विर्जन्म यस्य स दन्तः (चसू. १७.६७; अहसू. ६.४०)
वनस्पति० तुम्बरुः (ध. २.४२)

(द्विजा) – स्त्री., वनस्पति० रेणुका (ध. ३.५१)

–कुत्सित–पु., वनस्पति० श्लेष्मातकः (ध. ५.९४)

–प्रिया–स्त्री., वनस्पति० सोमवल्ली (धपरि. ४.४)

–सौम्या (रापरि. ३.२९)

द्विजामय–पु., दन्तव्याधिः (असंसू. ३.२९)

द्विधालेख्य–पु., वनस्पति० हिन्तालः (रा. ९.९८)

द्विपपिप्पली–स्त्री., वनस्पति० गजपिप्पली (ध. २.७८; र. २९.८७)

द्विरन्न–न., द्वितीयं भोजनम्, अत्र द्विः अन्नमिति पदच्छेदः, तेन क्रियाविशेषणपूर्वपदः कर्मधारयोऽयं बोध्यः, अन्यथा क्रियाविशेषणत्वेन समासाभावात् (सुसू. ४६.४९२)

द्विरुत्तर–वि., पूर्वपूर्वद्रव्याद् उत्तरोत्तरं द्रव्यं द्विगुणम्, द्विरुत्तरं द्विगुणम् (सुउ. ५५.४४)

द्विष्ट–वि., प्रतिपुरुषाप्रीतिजनकम् (चचि. २०.१८)
मनःप्रति घातकम् अरुचिकरत्वात् (सुसू. ४६.४७७)

द्वीप–न., वनस्पति० कक्कोलम् (ध. ३.३७)

–कर्पूरज–पु., निर्यास० चीनकर्पूरः (रा. १२.६३)

–खर्जूरी–स्त्री., वनस्पति० पारेवतभेदः, महापारेवतम् (रा. ११.९०; ध. ५.६६) द्र० 'पारेवत'

–ज–न., वनस्पति० पारेवतभेदः, महापारेवतम् (रा. ११.९०) द्र० 'पारेवत'

द्वीपिका–स्त्री., वनस्पति० हिंस्रा, कण्टकारी (चक्र. चक. १.२२)
शतावरी (ध. १.२९१)

द्वीपिन्–पु., हिंस्रपशु० चित्रव्याघ्रः (ड. सुसू. ४६.७२; अहसू. ६.४८; धपरि. ६.६)

वनस्पति० चित्रकः ( ध. २.८०; असंसू. ७.१५८; र. २९.८५ )

(द्वीपि)-चर्मन्-न., चित्रव्याघ्रस्य चर्म, घृतमिश्रं धूपनोपयोगि ( असंउ. ४ )

-नख-पु., भैषज्य० व्याघ्रनखम् ( रा. १२.१११ )

-पत्र-न., चित्रकपत्रम्, अक्षिरोगे परिषेकार्थम् (काखिल. १३.५९ )

-पित्त-न., भैषज्य० चित्रव्याघ्रस्य पित्तम्, विषहरमिदम् ( असंसू. ८.२९ )

-मद-पु., भैषज्य० हस्तिमदः ( रापरि. ६.२० )

-मुख-न., स्वस्तिकयन्त्रभेदः, चित्रव्याघ्रमुखसदृशं यन्त्रम्, अस्थिनिमग्नशल्योद्धरणार्थमुपयुज्यते ( सुसू. ७.१० )

-विष-न., चित्रव्याघ्रस्य विषम्, तल्लक्षणम्-कण्डूनिस्तोदवैवर्ण्यसुप्तिक्लेदज्वरभ्रमविदाहरागरुक्पाकशोफग्रन्थिविकुञ्चनानि दंशाऽवदरणं स्फोटाः कर्णिका मण्डलानि च भवन्ति ( असंउ. ४६ )

-शत्रु-स्त्री., वनस्पति० शतावरी ( ध. १.२९१ )

द्वेष-पु., शत्रुता ( चवि. ४.८ ) अप्रीतिः, तिरस्कारः ( सुशा. १.१७; सुसू. १.२५(३) )

द्वेष्या-वि., शत्रुभूता स्त्री., ( सुचि. २४.११५ )

द्वैप-वि., द्वीपिनश्चित्रव्याघ्रस्य संबन्धि ( चर्मादि ) (असंचि. २२; सुचि. ९.१६)

द्वैहृदय्य-न., दौर्हृदम्, द्विहृदयस्य भाव इति द्वैहृदय्यम्, भावार्थकोऽत्र ष्यञ्प्रत्ययः (चशा.४.१५)

द्व्यङ्गुल-न., अङ्गुलद्वयम् ( असंशा. ७.३३ )

द्व्यन्तर-वि., द्वाभ्यामन्तरितम् ( असंसू. ९.३४ )

द्व्यन्तरीकृत-वि., द्वाभ्यामन्तरीकृतम् (अहसू. ७.४८)

द्व्यहग्राहिन्-वि., रोग० विषमज्वरः, मध्येऽह्नी ज्वरयति, आदावन्ते च मुञ्चति। चतुर्थकविपर्ययोऽयम् ( चचि. ३.७३; चशा. १.११३ )

द्व्याहिक-वि., रोग० यः प्रतिदिनं द्विवारं ज्वरयति सः ( र. १२.६३ )

## ध

धत्तूर-पु., वनस्पति० उपविषमेतत्, स च सितनीलकृष्णलोहितपीतभेदात्पञ्चविधः, तत्र कृष्णः श्रेष्ठः, धत्तूरगुणाः- कटुरुष्णः कान्तिकरो भ्रमकृद्व्रण-कुष्ठज्वरत्वग्दोषकण्डूतिखर्जूघ्नश्च ( ध. ४.७; र.१९. ४९) अस्य सेवनेन नरः सर्वं पीतकं पश्यति, अपि च तस्य कम्प-लाला-मद-च्छर्दिस्मृतिभ्रंश-भ्रमादयो भवन्ति ( असंउ. ४० )

हिं.-धतूरा.

म.- **धोत्रा, धोतरा.**

गु.-धंतुरो.

बं.-धुत्तूरा.

त.-ऊमत्तै, इलकं.

फा.-तातुलह, कौसाबमात.

धत्तूरक-पु., वनस्पति० धत्तूरः ( असंउ. ४० )

धनञ्जय-पु., वनस्पति० अर्जुनः (चचि. ४.७५., ध. ५.११४)

धनादक्ष-पु., वनस्पति० लताकरञ्जः( रापरि. ८.२४ )

धनिक-न., वनस्पति० धान्यकम् ( रा. ६.९७ )

( धनिका )-स्त्री., वनस्पति० धान्यकम् ( असंचि. ११; असंशा. ३.३५ )

धनु-पु., वनस्पति० भल्लातकः ( ध. ३.१४३)

-वृक्ष-पु., वनस्पति० धन्वनः ( रापरि.९.२० )

धनुस्-न., चापः ( चवि. ८.४२)

-स्तम्भ-पु., रोग० अस्मिन् शरीरं वातेन धनुरिव वक्रं भवति। स बाह्याभ्यन्तरभेदाद्द्विधा अङ्गुल्यादिसंश्रितो वेगवान्वायुः शरीरं धनुरिवाभ्यन्तरं नामयति सोऽभ्यन्तरायामः, बाह्यस्नायुप्रतानस्थो बली वायुर्देहं धनुरिव बाह्यतो नामयति स बाह्यायामः ( सुनि. १.५४-५७ )

( धनुः )-कम्प-पु., वातरोग० बाह्यायामः ( असंनि. १५.२९ )

( धनुर् )-द्रुम-पु., वनस्पति० वंशः ( रा. ७.२१५ )

-लता-स्त्री., वनस्पति० सोमवल्ली ( रा. ३.३ ) सौम्या, ( रापरि. ३.२९ )

-वक्र-वि., धनुरिव वक्रम् ( असंशा. ७ )

(-वक्रा)-स्त्री., सूचीभेदः, चापवत्कुटिला सूची, मानतः सार्धद्व्यङ्गुला, पक्वाशयामाशयमर्मसु सीवनोपयोगिनी ( अहसू. २६.२९ )

-वात-पु., वातरोग० धनुःस्तम्भः ( र. ३.१५१ )

( धनुश् )-चल-पु., वातरोग० धनुःस्तम्भः ( र. २१.१४१ )

धनुष्य-पु., वनस्पति० वंशः ( रा. ७.२१५ )

धनेशायतन-न., पर्वत० हिमालयः ( चसि. ३.३ )

धनैषणा-स्त्री., धनेच्छा ( चसू. ११.३ )

धन्य-पु., वनस्पति० जरणद्रुमः, ( रापरि. ९.१३ )

धन्या-स्त्री., वनस्पति० कोशातकीभेदः महाकोशातकी ( ध. १.१९० ) द्र० 'कोशातकी'.

धन्व-पु., वनस्पति० वमनोपयोगिद्रव्येष्वेकम् (असंसू. १४.२) पिच्छिलगुणोऽयम् (असंशा. ४.३८)

**-ज**-वि., धन्वस्य काष्ठादि, दन्तधावने निषिद्ध-मेतत् ( असंसू. ३. )

**-भूमि**-स्त्री., देश० जाङ्गलो मरुदेशश्च ( सुशा. १०.१७ )

**-भूमिजाता**-वि., धन्वभूमौ जातं जननं गर्भमोचनं यस्याः ( सुशा. १०.१७ )

**-यवास**-पु., वनस्पति० धन्वयासः ( चचि. ७.१४५; असंसू. १५.२९ )

**-यवासक**-पु., वनस्पति० धन्वयासः (चसू. ४.१४; ध. १.२०)

**-यास**-पु., वनस्पति० अर्शोघ्नगणोक्तमेकं द्रव्यम् ( चसू. ४.११; ) तृष्णानिग्रहणगणोक्तमेकं द्रव्यम् ( चसू. ४.१४ )

तद्गुणाः – स्वादुस्तिक्तः कटुर्लवणोऽम्लः ( रा. ) शीतः उष्णः वातपित्तघ्नो दाहविषमज्वरतृषाच्छर्दि-प्रमेहमोहज्वरगुल्मघ्नश्च क्षुद्रधन्वासश्चाम्लमधुरो ज्वरकुष्ठकासश्वासभ्रमघ्नः पारदशुद्धिकरश्च ( ध. १.२० )

हिं.—धमासा.

**म.—धमासा.**

गु.—धमासो.

बं.—दुरालभा.

त.—काञ्चोरी.

फा.—वादावर्द.

**-यासक**- पु., वनस्पति० धन्वयासः ( अहसू. १०.२९ )

**-रस**- पु., जाङ्गलमांसरसः ( अहसू. १९.५१ )

**धन्वन**-पु., वनस्पति० धनुर्वृक्षः, बदरीसदृशपत्रः ( ड सुचि. १५.९ ) अस्य फलमासवार्थमुपयुक्तम् ( चसू. २५.४९ )

धान्वनगुणः– कटुकः कषाय उष्णो दाहशोषकरो ग्राही कफनाशनः कण्ठामयशमनश्च (रापरि. ९.२०)

हिं.—धामिन, धाम्नि.

**म.—धामिन, धामण.**

गु.—धामण.

बं.—धामनागाछ.

**-मृत्स्न**-न., धनुर्वृक्षपिच्छा ( सुचि. १५.९ )

**धन्वन्तरी**-पु., देवता० आदिदेवः, अमराणां जरामृत्यु-हरः ( सुसू. १.२१; ) ऋषि० धनुः शल्यशास्त्रम् तस्यान्तं पारमियर्ति गच्छतीति धन्वन्तरिः ( चशा. ६.२१; ) ( सुसू. १.३; ) दिवोदासः, सुश्रुतमहर्षेराचार्यः (सुनि. १.२-३; असंसू. ८.९४) सिद्धयोग० पारदगन्धकटङ्कणादिनिर्मितो योगः सर्वकुष्ठविनाशकोऽयम् ( र. २०.१३७ )

**-भाग**-पु., रोगिषु धन्वन्तरिभागस्य दानेनैव वैद्यस्य पाककालहिंसापापमपगतं भवति, तद्यथा– सिद्धरसस्यार्थे तैलघृतलेह्यानां चाष्टमो लोहचूर्ण-वटकादीनां सप्तमो भागः वैद्याय देयः ( र. ८.२ )

**धन्विन्**-पु., वनस्पति० अर्जुनः ( रा. ९.१९३ ) बकुलः ( रा. १०. २६३ )

**धन्वोत्थरस**-पु., जाङ्गलमांसरसः स्वेदात्पूर्वोऽय-माहार्यः ( असंसू. २५.६३; अहसू. १६.३६ )

**धमन**-पु., वनस्पति० नलः ( ध. ४.१४१ ) निम्बः ( रा. ९.४४ )

**(धमनी)**-स्त्री., नाडी० शोणितवाहिनी नाडी ( चनि. ६०.८ )

तन्निरुक्तिः – ध्मानाद्धमनी, रसवहानां स्रोतसां मूलम् ताः संख्यया दश ( चवि. ५.८ ) द्वे धमनीशते ( चशा. ७. १४ ) ( काशा. ) अन्या एव हि धमन्यः .... शिराभ्यः नाभिप्रभवाश्चतुर्विंश-तिर्धमन्यः ( असंशा. ६.२८ ) ऊर्ध्वगा दश, अधोगामिन्यो दश तिर्यग्गामिन्यश्च चतस्रः ( सुशा. ९.३-९ ) ऊर्ध्वगाः शब्दस्पर्शरूप-रसगन्धप्रश्वासोच्छ्वासजृम्भितक्षुद्धसितकथितरुदि-तादीन्विशेषानभिवहन्त्यः शरीरं धारयन्ति । तास्तु हृदयमभिप्रपन्नास्त्रिधा जायन्ते तास्त्रिंशत्, तासां तु वातपित्तकफशोणितरसान् द्वे द्वे वहतस्ता दश, शब्दरूपरसगन्धानष्टाभिर्गृह्णीते शब्दादींश्चतुरः प्रत्येकं द्वाभ्यां द्वाभ्यामित्यष्टाभी रजःप्रवर्तितात्म-प्रयत्नप्रबोधमनोऽनुगताभिर्धमनीभिर्गृह्णीते, मनस-श्चाणुत्वादेकत्वाच्च तासां युगपत्प्रवृत्तिर्नास्तीति तासां या धमनी मनसाऽनुयुज्यते तयैव रूपादिष्व-न्यतममात्मा गृह्णीते, न पुनर्युगपदेव रूपादिकं सर्वं सर्वाभिरिति, स्पर्शग्रहणं च तिर्यग्गाणां कर्म (ड) द्वाभ्यां भाषते, द्वाभ्यां घोषं करोति, द्वाभ्यां स्वपिति, द्वाभ्यां प्रतिबुध्यते, द्वे चाश्रुवाहिन्यौ, द्वे स्तनसंश्रिते स्त्रियाः स्तन्यं वहतः, ते एव शुक्रं नरस्य स्तनाभ्यामभिवहतः । एता ऊर्ध्वनाभेरुदर-पार्श्वपृष्ठोरःस्कन्धग्रीवाबाहून्धारयन्ति यापयन्ति च । अधोगमास्तु वातमूत्रपुरीषशुक्रार्तवादीन्यधो वहन्ति तास्तु पित्ताशयमभिप्रपन्नास्तत्रस्थमेवान्न-पानरसं विपक्वमौष्ण्याद्विवेचयन्त्योऽभिवहन्त्यः

शरीरं तर्पयन्ति अर्पयन्ति चोर्ध्वगानां तिर्यग्गाणां च अन्नपानरसम्। रसस्थानं चाभिपूरयन्ति, मूत्रपुरीषस्वेदांश्च विवेचयन्ति। आमपक्वाशये च त्रिधा जायन्ते तास्त्रिंशत्, तासां वातपित्तकफशोणितरसान् द्वे द्वे वहतस्ता दश, द्वेऽन्नवाहिन्यावन्त्राश्रिते, तोयवहे द्वे, मूत्रबस्तिमभिप्रपन्ने मूत्रवहे द्वे, शुक्रवहे द्वे शुक्रप्रादुर्भावाय, द्वे विसर्गाय ते एव रक्तमभिवहतो विसृजतश्च नारीणामार्तवसंज्ञं द्वे वर्चोनिरसन्यै स्थूलान्त्रप्रतिबद्धे, अष्टावन्यास्तिर्यग्गामिनीनां धमनीनां स्वेदमर्पयन्ति। एताभिर्नाभेरधः पक्वाशयकटीमूत्रपुरीषगुदबस्तिमेढ्रसक्थीनि धार्यन्ते याप्यन्ते च। तिर्यग्गाणां तु धमनीनां चतसृणामेकैका शतधा सहस्रधा चोत्तरोत्तरं विभज्यन्ते तास्त्वसंख्येयाः। ताभिरिदं शरीरं गवाक्षितं विबद्धमाततं च, तासां मुखानि रोमकूपप्रतिबद्धानि, यैः स्वेदमभिवहन्ति रसं चाभितर्पयन्त्यन्तर्बहिश्च, तैरेव चाभ्यङ्गपरिषेकाऽवगाहावलेपनवीर्याण्यन्तःशरीरमभिप्रतिपद्यन्ते त्वचि विपक्वानि, तैरेव च स्पर्शं सुखमसुखं वा गृह्णीते (सुशा. ९.३-९; अहृशा. ३.३९-४०) धमनीक्रिया-धमन्य आकाशादिपञ्चमहाभूतसमुदायसमुत्पन्नाः कर्मपुरुषमिन्द्रियाधिष्ठानेषु पञ्चवारान्भावयन्ति ततश्चेन्द्रियपञ्चकमाकाशादिषु भूतेषु संयोज्य विनाशकाले विनाशं यान्ति (सुशा.९.११)
वनस्पति० पृश्निपर्णी० (रा. ४.११७)
नलिका (ध. ३.४३)

**धमनी**-(स्त्री.,) इयं शोणितादिवाहिनी (चनि. ६.८)
  **-जाल**-न. धमनीनां समुदायः (चसू. २१.१५)
  **-तत**-वि., सिरासन्ततः (सुशा. ४.६५)
    लक्षण० सिराव्याप्तः (ड. सुउ. ६२.८)
  **-प्रतिचय**-पु., विंशतिश्लेष्मविकारेष्वेकः, धमन्युपलेपः (चसू. २०.१७; असंसू. २०.१५)
  **-प्रविचय**-पु., धमनीप्रतिचयः (चसू. १६.८४)
  **-बन्ध**-पु., उपक्रम० विषप्रतिबन्धार्थं मन्त्रादिभिर्धमनीबन्धनम् (चचि. २३.६१)
  **-मर्मन्**-न., मर्म० कण्ठनाडीमुभयतश्चतस्रो धमन्यः, द्वे नीले द्वे च मन्ये तत्रैकस्मिन्पार्श्वे एका नीला मन्या चैका, एवमपरस्मिन्नपि, जातित एतानि सिराममर्माणि, मानमेषां चतुरङ्गुलमितम् वैकल्यकरमिदं मर्म, तत्र विद्धे मूकता स्वरवैकृत्यमरसग्राहिता च भवति (सुशा. ६.२७)
  **-लेपक**-पु., रोग० विंशतिकफजरोगेष्वेकः (कासू. ३७.१९-४२)
  **-विवृतत्व**-न., धमनीनां विस्तृतत्वम् असंवृतत्वं वा (सुशा. १०.१४)
  **-व्याकरण**-न., अध्याय० (सुशा. ९.)

**धयन्ती**-वि., स्वयं पिबन्ती (सुचि. २४.९२)

**धरण**-न., मान० एकोनविंशतिर्मध्यमनिष्पावाः (सुचि. २२.७५) पलस्य दशमो भागः (इन्दु. असंचि. २३ शाणः पादतोलकम् (र. १७.१२१) माषद्वयम् (र. ११.३)

**धरणी**-स्त्री; ग्रह० रेवती (का. बालग्रहचि.)
  **-कन्द**-पु., वनस्पति० तद्गुणाः-मधुरः कफपित्तघ्नः वक्त्रदोषकुष्ठकण्डूतिनाशनःकफपित्तामयघ्नश्च (रा. परि ७.४२)
  **-धरसार**-वि., धरणीधराः पर्वतास्तेषां सारो लौहं तद्वत्सारो बलं यस्य, 'सारो बले स्थिरांशे च' इत्यमरः (चचि.१.६१)

**धरा**- स्त्री., वनस्पति० मेदा (ध. १.१२७)

**धराभिध**-पु., वनस्पति० अम्लवेतसः (रा. ६.१४८)

**धर्म**-पु,, ध्रियते लोकोऽनेनेति धर्मः, 'धारणाद्धर्ममित्याहुर्धर्मो धारयते प्रजाः' इति महाभारते, धरतेर्मनिन्प्रत्ययः, (अरु.)(अहृसू. १.२) कायवाङ्मनोभिः सुचरितम् (ड.सुउ. ६०.२०; अहृसू. २.२०) श्रुतिस्मृतिविहितं यज्ञाद्यनुष्ठानम् (सुशा. १०.५३) पुण्यम्, (सुशा. ३.३६)
  **-द्वार**-न., धर्मशास्त्रम् (चसू. ११.२८)
  **-पत्तन**-न., वनस्पति० मरिचम् (ध. २.८८)
  **-पाद**-पु., धर्मस्य चतुर्थांशः, (चवि. ३.२५)
  **-प्रकाशक**-वि., यो धर्मं प्रकाशयति सः (चसू.३०.२९)
  **-भृत्**-वि., धार्मिकः धर्मं बिभर्ति आत्मनि धारयति इति धर्मभृत् (सुनि. १.३)
  **-वृक्ष**-पु.,वनस्पति० पिप्पलः (रा. ११.११९)

**धर्मिणी**-स्त्री., वनस्पति० रेणुका (रा. ६.१००; र. १२.१२१)

**धर्मेतरपुरःसर**-वि., धर्मेतरोऽधर्मः, स एव पुरःसरः यस्य सः अधर्मपुरस्कृतः अधर्मसहितो वा (सुशा. २.३७)

**धर्षण**-न., धर्षः आक्रमणम् आस्कंदनम् (सुचि. २५.६)

**धव**-पु., वनस्पति० इन्द्रवृक्षः (ड. सुचि. ३४.१७)
  शकटवृक्षः (सुसू. ३७.२८; अहृसू. १५.१९)
  कुष्ठादिहरप्रदेहे उपयुक्तः (चसू. ३.३)

जाङ्गलदेशोद्भवोऽयम् ( चक. १.८ ) दृढशुष्कदारु-मधुरत्वविशिष्टः पाण्डुरवृक्षभेदः ( रा. ९.८ ) धवगुणाः– कषायः कटुः शीतः पित्तलः ( रा. ) रुच्यो दीपनः पित्तकफघ्नो वातकफघ्नः प्रमेहार्शःपाण्डुघ्नश्च ( धपरि. ५.४ ) कुष्ठ-मेदोघ्नश्च ( सुसू. ३८.८-९; असंसू. १६.१२; अहृसू. १५.१९ ) गुल्माश्मरीशुक्रदोष-नाशनश्च ( सुसू. ३८.२०-२१; असंसू. १६.२६; अहृसू. १५.३२ ) काष्ठमस्य दन्तधावने निषिद्धम् ( असंसू. ३.२० ) त्वगस्य लेपनेनोपदंशहरा ( सुचि. १९.३३ ) व्रणरोपणी च ( सुसू. ३७.२८ ) बीजमस्य लोहकाठिन्यनाशनवर्गोक्तम् ( र. १०.९७ )
हिं.–धय, धाउरा.
**म.–धावडा.**
गु.–धावडो.
बं.–धाऊयागाछ.

**धवल**–पु., भैषज्य० शङ्खः ( ध. ३. १७९ )
पक्षि० प्रतुदजातीयोऽसौ ( धपरि. ६.१२ )
निर्यास० चीनकर्पूरः ( रा. १२.६३ )
वनस्पति० धवः ( रा. ९.८ )

**( धवला )**–स्त्री., वनस्पति० पाटलाभेदः, काष्ठपाटला ( रा ९.१५२; ) द्र० 'पाटला'
सितपाटलिः ( रापरि. १०.१७ )
न. वनस्पति० मरिचम् ( रा ६.१३८ )

**–यावनाल**–पु., ( परिव० ) धान्य० जूर्णाभेदः ( रा. १६.१६८ )

**धवलेक्षुक**–पु., वनस्पति० इक्षुभेदः, श्वेतेक्षुः ( रा. १४.१८१ ) द्र० 'इक्षु'

**धवलोत्पल**–न., वनस्पति० कुमुदम् ( रा. १०.२४६ )

**धातकि**–स्त्री., वनस्पति० धातकी ( असंसू. १५.३१; अहृसू. १५.३८; )

**धातकी**–स्त्री., वनस्पति० महाकषायवर्गे सन्धानीयगणोक्तमेकं द्रव्यम् ( चसू. ४.९; असंसू. १५.१० ) ( अहृसू. १५.३८ ) अस्याः पुष्पं मूत्रविरजनीयगणोक्तम् ( चसू. ४.१५; असंसू. १५.३४ ) पुरीषसंग्रहणीयगणोक्तम् ( चसू. ४.१५; असंसू. १५.३१ ) विषजशोफे प्रच्छिते प्रतिसारणोपयोगि ( सुक. १.४९ ) रक्ताभिष्यन्देऽञ्जनोपयोगि ( सुउ. १२.११-१२ ) आसवकारणम् ( चसू. २५.४९ ) ( असंसू. ७.२४३ ) धातकीगुणाः–कटुरुष्णा मदकृत् गर्भस्थापनी प्रवाहिकातीसारकृमिरक्तविकार-विसर्पव्रणविषघ्नी च ( ध. ३.९० ) पित्ते हिता व्रणरोपणी च ( सुसू. ३८.४७; अहृसू. १५.३८; )
हिं.–धायके फूल, धावइ.
**म.–धायटीफूल, पुलशायि.**
गु.–धावडीना फूल.
बं.–धाइफूल.
त.–तातरिप्पूवु., काट्टात्तिप्पू.

**धातक्यभिषुत**–पु., आसुत० धातकीफलासवः, अयं हृद्यो रूक्षो रोचनदीपनश्च ( चसू. २७.१८८ असंसू. ६,१२१ )

**धातु**–पु., आश्रय आधारः (चचि. २१.१५) तन्निरुक्तिः– पुरुषधारणाद्धातुः ( चक्र. चशा. १.३ ) दधतीति धातवः, रसरक्तमांसादयः कफपित्तपुरीषाण्यपि प्राकृतानि स्वकर्मणा दधतीति धातवः; ( ड. सुशा. ४.५ ) शरीरधारणपोषणहेतुः रसरक्तादिरूपः ( सुसू. १४.२० ) वातादिदोषः (चचि. ३.७३ ) ( का. जातिसूत्रीयशा. ) वातादिः रसादिश्च ( असंसू. १०.७४ ) सत्त्वबुद्धीन्द्रियादिः, ( चक. चचि. २४.३६ ) धातुसंख्या नामानि च– रसादयः सप्त धातवः, ते रसरक्तमांसमेदोस्थिमज्जाशुक्राणि ( चचि. १५.१६; सुशा. ५.६ ) धातूत्पत्तिः– आहाररसाद्रसादिसप्तधातूनामुत्पत्तिः, तत्क्रमः– रसाद्रक्तं ततो मांसं मांसान्मेदो मेदसोऽस्थि ततो मज्जा ततः शुक्रं च ( चचि. १५.१६ ) एवं पूर्वधातोरुत्तरधातुः संभवति क्षीरदधिन्यायेन (चचि. १५.२८-३४; असंसू. १.३१ ) धातुवृद्ध्यादिक्रमः– पूर्वो वृद्धो धातुः परं वर्धयति क्षीणश्च परं क्षपयति ( असंसू. १९.१६-१९) दुष्टाश्च वातादयो दोषा रसैर्धातून् दूषयन्ति ( असंसू. १९.१६-१९ ) धात्वग्नयो नाम धातूष्माणः सप्तसंख्याकाः, रसोष्मरक्तोष्मेत्यादयः (चक्र. चचि. १५.३८) देहधातारः सप्त धातवः सप्तभिर्यथास्वमग्निभिः ते च किट्टप्रसादरूपं द्विविधं पाकं यान्ति। यथा रसस्य किट्टं कफः प्रसादश्च रक्तमित्यादि ( चचि. १५.१५-१८) परिणाममापद्यमानानामयनार्थेन देशान्तरप्रापणेन धातूनामभिवाहीनि स्रोतांसि भवन्ति ( चवि. ५.३ ) तानि च धातुवाहीनि स्रोतांसि सप्त, रसवाहिरक्तवाहीत्यादीनि ( चवि. ५.१३-१९ ) धातुसाराश्च सप्त, त्वग्रक्तमांसमेदोस्थिमज्जशुक्रभेदेन, सत्त्वेन सत्वसारश्चेत्यष्टौ ( चवि. ८,१०२)

धातुकर्माणि– रसादिधातूनां क्रमशः प्रीणनं जीवनं लेपः स्नेहो धारणं पूरणं गर्भोत्पादश्चेति कर्माणि ( असंसू. १.३३; अहसू. ११.४ ) धातुमलाः– रसस्य कफः, रक्तस्य पित्तम्, मांसस्य खेषु श्रोत्रमुखादिषु स्रोतःसु जायमानो मलः मेदसः स्वेदः, अस्थ्नां नखरोमाणि, मज्ज्ञोऽक्षिपुरीषत्वचां स्नेहश्चेति धातूनां मलाः
सुवर्णादिखनिजद्रव्यम् (ध. ७.८७; र. १.६४–६५) 'स्वर्णं रूप्यं च ताम्रं च —' इत्यादि-सप्तधातवः तत्रापि धातुमलस्य मण्डूराभिधायकत्वं पारदसप्तकञ्चुकवाचकत्वं रसशास्त्रेऽतीवप्रसिद्धमेव। खनिज० गैरिकम् ( चशा. ५.१२; र. ५.१५; रा. १३.२३१ )
न., खनिज० माक्षिकम्, स्वर्णमाक्षिकम् ( ध. ३.१४८ )
–**कासीस**–न., खनिज० कासीसम् (ध. ३. १२३)
–**क्षय**–पु., रोग० रसादीनां नाशः (अहसू. १०. १६)
–**क्षयकर**–वि., धातुविनाशकम् ( असंनि. १५.८ )
–**ग**–वि., धातुस्थो दोषादिः ( अहसू. १७.२९)
–**गति**–स्त्री., रसादीनां पोष्यं धातुप्रति गमनम् ( चसू. १८.४९ )
–**ग्रहण**–न., धातुवहस्रोतः (सुसू. १५.२३ ) धातवो गृह्यन्तेऽनेन इति धातुग्रहणं नाम धातुवहस्रोतः
शरीर० हृदयम्, धातुवहस्रोतसां स्थानत्वात् ( ड. सुसू. १५.२३ )
–**चूर्ण**–न., कल्प० हरितालपुष्पकासीसरसाञ्जनादिचूर्णम्, इदमुत्सन्नमांसेषु व्रणेष्ववसादने प्रशस्तम् ( सुसू.३७. ३२-३३ )
–**ज**–न., खनिज० शिलाजतु (ध. ३.१६५)
–**पक्तृ**–वि., धात्वग्निः ( चचि. १५. ३८ )
–**प्रदूषण**–वि., वातादिदोषाणां समत्वेन शरीरधारणात्मकानां तथा रसादिधातूनां दूषकं द्रव्यम् ( चसू. १.६७ )
–**प्रसादसंज्ञक**–वि., धातूनां प्रसादो धातुप्रसादः, स एव संज्ञा यस्य तत्, पञ्चेन्द्रियद्रव्यम्, अत्यर्थशुद्धेनैव धातुप्रसादेनेन्द्रियारम्भ इति ( चक्र. चसू. २८.४ )
–**भेद**–पु., मूलघटकतत्त्वानां भिन्नत्वम् ( चशा. १.३ )
–**माक्षिक**–न., खनिज० माक्षिकम् ( ध. ३.१४८ )
–**राग**–पु., गैरिकमनःशिलादिधातुभिरानीतो वर्णः ( र १.११–१५ )
–**वर्धन**–वि., रसादिधातून् वर्धयति यत् तत् ( अहसू. ५.२० )
–**वल्लभ**–न., खनिज० टङ्कणक्षारः ( रा. ६.२९ )
–**वाद**–पु., स्वर्णादिधातूनां शोधनं मारणं च, लोहादिहीनधातुभ्यो हेमाद्युत्कृष्टधातुनिर्माणम् ( र. ७.३४ )
–**विष**–न., स्थावरविषभेदः, फेनाश्महरितालं च द्वे धातुविषे, अनेन हृत्पीडनं मूर्च्छा तालुदाहश्च भवति ( सुक. २.५–१०; असंउ. ४० )
–**वैषम्य**–न., वातादिधातूनां स्वमानान्न्यूनत्वमधिकत्वं वा, विकारः 'विकारो धातुवैषम्यं साम्यं प्रकृतिरुच्यते' ( चसू. ९.४ )
–**व्यूहन**–न., धातुरचना धातुवहनं च (चक्र. चशा. ४.१२)
–**संनिभ**–वि., गैरिकसमानम् (र. २.८८)
–**समता**–स्त्री., धातुसाम्यम्, धातु मलोपधातूनां साम्यम् ( सुनि. १-१० )
–**सामान्य**–न., धातूनां समानत्वम्, एकविधत्वं च ( अहसू. ६.६४ )
–**साम्य**–न., सर्वधातूनां समप्रमाणत्वम्, आरोग्यम् तल्लक्षणम् – रुगपगमनं स्वरवर्णयोगः शरीरोपचयो बलवृद्धिरभ्यवहार्याऽभिलाषो रुचिराहारकालेऽभ्यवहृतस्य चाहारस्य काले सम्यग्जरणं, यथाकालं निद्रालाभो वैकारिकाणां च स्वप्नानामदर्शनं सुखेन च प्रतिबोधनं वातमूत्रपुरीषरेतसां मुक्तिः सर्वाकारैर्मनोबुद्धीन्द्रियाणामव्यापत्तिश्चेति (चवि. ८.८९ )
–**साम्यकृत्**–वि., धातुसाम्यकरम् (अहसू. ६-२७)
–**सार**–पु., न., धातोर्बलम्, धातुसाराणि सप्त, अष्टमं च सत्त्वसारम्, विशुद्धतरो धातुः सारशब्देनोच्यते ( चवि. ८. १०२-१०९., सुसू. ३५. १६ )
–**स्थिरत्व**–न., रसादिधातूनां स्थैर्यापादनम् (सुचि. ३३.२७; अहसू. १८.६०; असंसू. २७. ६५)
–**हन्**–पु., खनिज० गन्धकः ( ध. ३.१०९ ) रसादिधातवो नित्यं क्षीयमाणाः सन्तोऽशितादिजनितधातुमाहार्यैव स्वास्थ्यं जनयन्ति ( चसू. २८.३; असंसू. १.३२ )
**धातुकि**–स्त्री., वनस्पति० धातकी ( असंसू. १६.३२ )
**धातुकी**–स्त्री., वनस्पति० धातकी (असंसू. १७.४३)
**धातूष्मन्**–पु., रसादिधातुगतमौष्ण्यम्, धात्वग्निः ( असंनि. ५.१९ )

**धातृ**–वि., धारणकर्ता आत्मा जगतो धारणाद्धाता ( चशा. ४.८ ) पञ्चमहाभूताऽऽत्मकशरीरादिसंयोगधारणहेतुः क्षेत्रज्ञः ( ड. सुशा. ३.४ ) देवता० ब्रह्मा, प्रजापतिः ( असंसू. २८.३५ )

**( धात्री )** स्त्री.,–बालसङ्गोपनार्थं नियुक्ता स्त्री, उपमाता (चचि.३०.२२९) स्तन्यदात्री (चशा. ८.५२;- कासू. १९ ) बालकपोषयित्री ( ड. सुउ. २७.६ ) कुमारपरिचारिका (सुसू. १६.३) माता, स्तनदायिनी च ( अरु. अहृउ. १.२८–२९ ) तल्लक्षणानि–धात्री यथावर्णं नाम समानवर्णा मध्यमप्रमाणा मध्यमवयस्काऽरोगा शीलवत्यचपलाऽलोलुपाऽकृशाऽस्थूला प्रसन्नक्षीराऽलम्बौष्ठ्यलम्बोर्ध्वस्तन्यव्यङ्गाऽव्यसनिनी जीवद्वत्सा दोग्ध्री वत्सलाऽक्षुद्रकर्मिणी कुलवती श्यामा नाम तप्तकाञ्चनवर्णाभा स्त्री च ईदृशी धात्री बालस्याऽऽरोग्यबलवृद्धये भवति ( सुशा. १०.२५; असंउ. १ )
यन्त्र० घर्षणी घर्षी वा ( र. ९.८४ )
वनस्पति० आमलकी ( चसू. ४.१८; सुउ. १२.११–१२ ) ( असंसू. १५.४९ ) इयं वयःस्थापनी ( चसू. ४.१८ ) अस्याः पुष्पाण्यञ्जनार्थमुपयुज्यन्ते ( सुउ. १२.११–१२ )

**धात्रिका**–स्त्री., वनस्पति० आमलकम् (रा. ११.३२५)

**धात्री**–स्त्री., ( चसू. .४.१८ )
**–चिकित्सित**–वि., अध्याय० ( का. धात्रीचि. )
**–द्वेष**–पु., लक्षण० धात्रीविषयेऽप्रीतिः ( कासू. २५.३६ )
**–पत्र**–न., वनस्पति० तालीसपत्रम् ( रा. ६.८२ )
**–परीक्षा**–स्त्री., स्तन्यदात्र्याः परीक्षणम् ( चशा. ८.५२ ) द्र० ' धात्री '
**–फल**–न., वनस्पति० आमलकम् ( ध, १.२१५ ) ( सुउ. ४४.२७ )
**–मूल**–वि., धात्री स्तन्यदात्री मूलं कारणं यस्य तत्सुखदुःखादि ( का. धात्रीचि. )
**–यूष**–पु., कल्प० मुद्गामलकनिर्यूहः, अयं पञ्चकर्मसूपयुक्तः ( काखिल. ४.३७ )

**धात्रेयी**–स्त्री., वनस्पति० आमलकम् ( रा. ११.३२६ )

**धात्वग्नि**–पु., धातुगतमौष्ण्यम् ( चचि. १५.३८ )

**धात्वन्तरस्थ**–वि., एकस्माद्धातोरन्यो धातुर्धात्वन्तरं तत्र स्थितो लीनो वा ( सुउ. ३९.६५ )
धात्वन्तरं नाम कला, तत्र स्थितः (सुउ. ३९.६५)
[illegible]ाशा–पु., धात्वन्तरम्, स्रोतःसिराधमनीरसाय[illegible]न्यादि ( चवि. ५.९; असंशा. ६.५० )

**धात्वाहार**–वि., धातुराहारो यस्य सः ( धातुः )

**धानक**–पु., मान० माषकः ( असंक. ८ )

**( धानका )**–स्त्री., वनस्पति० धान्यकम् ( असंचि. ११ ) ( अहृसू. १५–१६ )

**धाना**–स्त्री., भक्ष्य० भृष्टयवादिधान्यम्, तद्गुणाः–लेखनी तर्पणी दुर्जरा च ( चसू. २७.२६६ ) विष्टम्भिनी रूक्षा गुरुश्च ( अहृसू. ६.३८; चचि. १२.१०; सुचि. १०.५ )
भृष्टयवाः लघवः कफमेदोविशोषणाः (सुसू. ४६.४१०) श्वासव्याधिहराः (सुउ. ५१.३६)
भृष्टं धान्यम् ( अहृसू. ६.३८ )

**धानी**–स्त्री., वनस्पति० धान्यकम् ( ध. २.६३ ) पीलुः ( ध. ५.५१ )

**धानेय**–न., वनस्पति० धान्यकम् ( रा. ६.९७ )

**धानेयक**–न; वनस्पति० धान्यकम् ( ध.२.६३ )

**धान्य**–न., आहारद्रव्य० शूकधान्यं शिम्बीधान्यं शाल्यादिसर्षपान्तम् ( सुसू. ४६.४-५२ ) तत्र सर्वमपि नवं धान्यमभिष्यन्दि, संवत्सरोषितं लघु विरूढं विदाहि गुरु विष्टम्भि दृष्टिदूषणं च, अनार्तवं कुङ्कुमादिव्याधिहतमपक्वमभूमिजमूषरोपलकादिसविषभूमिजं नवं च धान्यमगुणवत्, एतद्विपरीतं गुणवत् ( सुसू. ४६.५०–५१; अहृसू. ६.२५ ) तत्र रक्तशालिषष्टिकौ यवगोधूमौ च शूकधान्येषु वरौ तथा मुद्गाढकीमसूराश्च शिम्बीधान्येषु प्रवराः ( चसू. २७.२१–२४; सुसू. ४६.३३२ )
वनस्पति० धान्यकम् ( चसू. ३.८; सुउ. ४७.३०. अहृसू. १४.२५; रा. ६.९७ )
परिपेलम् ( अहृसू. १५.२६; रा. ८.१०५ )

**(धान्या)**–स्त्री., वनस्पति० धान्यकम् ( ध. २.६३ )
**–ज**–न., वनस्पति० धान्यकम् ( रा. ६.९७ )
**–तुम्बुरु**–न., वनस्पति० हरित० धान्यकम् ( चसू. २७.३०७; असंसू. ७.१५६ )
**–तुम्बुरुयूष**–पु., धान्यतुम्बुरुक्राथः, सर्वविषापहोऽयम् ( चक. ४.१५ )
**–नागरसिद्धतोय**–न., कल्प० धान्यकशुण्ठीभ्यां षडङ्गविधिना सिद्धं तोयम् (चक्र.) इदं स्नेहाजीर्णं जरयति श्लेष्माणं च भिनत्ति ( चसि. ४.४३ )
**–बीज**–पु., वनस्पति० धान्यकम् ( रा. ६.९८ )
**–माष**–पु., मान० व्रीहिमाषः ( चशा. ८.१९ ) तण्डुलद्वयम् ( चक. १२.८७–८८ ) सुवर्णमाषकस्य द्वादशो भागः ( सुचि. ३१.७ ) वनस्पति० माषः ( ध. ६.९९ )

–मृद्–स्त्री., धान्यमूलमृत्तिका (इन्दु.) इयं काण्डचित्राख्यसर्पविषे प्रलेपोपयोगिनी (असंउ. ४२)

–यूष–पु., धान्यप्रधानो यूषः, अयं प्रवाहिकानाशनः (चचि. १९.३५)

कुलत्थादिधान्यकृतो यूषः, अयं वातविकारिणां हितः (सुचि. ४.१४)

अखण्डितानां धान्यानां सर्वेषां समभागिनां माषतिलनिष्पावसर्षपाद्दते साधितश्चित्रकदाडिमाभ्यां संस्कृतश्च धान्ययूषो भवति। मुख्योऽयं धान्ययूषः (काखिल. ४.४२-४३)

–राज–पु., वनस्पति० यवः (रा. १६.१२४)

–वीर–पु., वनस्पति० माषः (रा. १६.१५४)

–श्रेष्ठ–न., वनस्पति० व्रीहिः (रा. १६.८१)

–स्वेद–पु., उपक्रम० माषादिकोष्णधान्यस्वेदः, धान्याम्लम्, अयं छिन्नादिषु स्वेदोपयोगी (सुचि. २.२५) माषादिशिम्बीधान्येन स्वेदनम् (ड.) वमनादिव्यापदि वातशूले स्वेदनार्थमुपयुज्यते (सुचि. ३४.९) द्र० 'स्वेद'

**धान्यक**–पु., मान० चतस्रोऽण्डिकाः, धान्यमाषः (चक. १२.८९)

न., हरित० कुस्तुम्बरुधान्यम् (चसू. ३.८) शीतप्रशमनगणोक्तमेकं द्रव्यम् (चसू. ४.१७; असंसू. १५) तृष्णानिग्रहणगणोक्तमेकं द्रव्यम्, (चसू. ४.१४) कण्ड्वादिहरोद्वर्तने उपयुक्तम्, (चसू. ३.८) आर्द्रं धान्यकं रोचनं सुगन्धं नातिकटुकं दोषोत्क्लेशकरं च (चसू. २७.१७३)

धान्यकगुणाः– स्वादु कषायं शीतं स्निग्धं मधुरविपाकि चक्षुष्यं हृद्यं पित्तकफघ्नं तृड्दाहकासच्छर्दिज्वरघ्नं च (ध. २.६३; असंसू. १६) रोचनं दीपनं वातकफघ्नं दौर्गन्ध्यनाशनम् (चसू. २७.३०७) रुच्यमन्नगन्धहरं च (असंसू. १२)

हिं–धनिया, कोथुंबुरि.

म.–**धने. कोथिंबीर.**

गु.–धाणा, कोथमीर.

बं.–धने.

ता.–कोत्तुमल्लि, उत्तंपरि.

फा.–किश्निज.

(**धान्यका**)–स्त्री., वनस्पति० धान्यकम् (ध. २.६३)

**धान्याक**–न., वनस्पति० धान्यकम् (र. ११.१२५.)

**धान्याभ्रक**–न., कम्बलवस्त्राऽवगुण्ठितमभ्रकचूर्णं शालियुक्तं दिनमेकं काञ्जिके क्षिप्त्वाऽपरस्मिन्दिने मर्दनेन वस्त्रादायाति तत् (र. २.१९)

**धान्याम्बु**–न., काञ्जिकम् (चसू. २५.४९)

कुस्तुम्बरीफलसिद्धं जलम्, इदं तृष्णासु शस्तम् (चचि. २२.६१)

**धान्याम्ल**–न., आसुत० काञ्जिकम् (चक्र. चक. १.१२) (ध. ६.२४९) शालीजूर्णाह्वकोद्रवादिकृतं मद्यम् (सुसू. ४५.२१४)

तत्कृतिः – षष्टिकधान्यस्य प्रस्थं नीरप्रस्थद्वये क्षिप्त्वाऽऽधारभाण्डे संरुध्य भूमिगर्भे संस्थाप्य पक्षाच्च समुद्धृत्य वस्त्रपूतं कारयेत्। जातरसं सत् सर्वकर्मसु योजयेत् (सुसू. ४२.११)

तद्गुणाः– स्पर्शाद्दाहनाशनं गण्डूषधारणात्कफनिर्हरणं मुखवैरस्यदौर्गन्ध्यमलशोषक्लमापहं लघु दीपनं जरणं भेदि हितमास्थापने समुद्राश्रितजनानां सात्म्यं च (सुसू. ४५.२१४-२१६) कृमिनाशनं च (सुउ. ५४.२८) तीक्ष्णोष्णं पित्तकृद्रुच्यं बस्तिशूलनुद्वातकफापहं च (अहसू. ५.७९) तदेवाल्पवणं शीतं मुखशोषहरं च (असंसू. ३१.८-९) धान्याम्लं माषादेर्वैदलानां तालफलादीनामनुपानम् (सुसू. ४६.४२७,४३३) शाकावरान्नेषु चाऽनुपानम् (असंसू. १०.४६)

वातशोफजव्रणे परिषेकार्थमिदम् (सुचि. १.१७) दाहाभिभूते ज्वरे परिषेकोपयोगि (सुउ.३९.२८४) कुक्षिशूले परिषेचनोपयोगि (सुउ. ४२.१३०) अर्शःप्रयुक्तक्षारस्य प्रक्षालनोपयोगि (सुचि. ६.४) विरेचनोपयोगिद्रव्येष्वेकम् (असंसू. १४.४)

**धान्याम्लबीज**–न., धान्याम्लतलस्थं द्रव्यम् (हे. अहसू. ३०.३३)

किण्वम् (असंसू. ३९.१२)

**धान्यासव**–पु., आसुत० धान्यकृत आसवः, सुरासौवीरादिधान्यासवाः षट् (चसू. २५.४९)

**धान्योत्तम**–पु., श्रेष्ठो व्रीहिः (रा. १६.७८)

**धान्व**–वि., जाङ्गलदेशोद्भवं प्राण्यादि (असंचि. ४)

**धान्वन**–वि., धन्वनस्य संबन्धि फलादि (सुसू. ४६.१७०)

–यूष–पु., जाङ्गलमांसरसः, अयं पित्तशूले हितः (सुउ. ४२.१०७)

**धान्वन्तरघृत**–न., घृत० भल्लातकबिल्वपिप्पलीमूलादिसाधितं घृतम्, एतन्मेहश्वयथुकुष्ठगुल्मोदरार्शःप्लीहविद्रधिपिडकानां नाशनम् (सुचि. १२.५; असंचि. १९.)

**धान्वन्तरसर्पिस्**–न., घृत० दशमूलहरीतकीदेवदार्वादिसिद्धं घृतम् । एतत्सर्वप्रमेहपिटिकाकुष्ठविषशोफार्शोगुल्मविद्रधिप्लीहजठरश्वासकासवर्ध्मपाण्डुरोगवातशोणितोन्मादाऽपस्मारहरम् ( असंचि. १४ )

**धान्वन्तरीय**–वि., धन्वन्तरितन्त्राध्यायी, शल्यविद्, धन्वन्तरिणा कृतं तंत्रं धान्वन्तरीयं, धान्वन्तरीयं तन्त्रमधीते सः धान्वन्तरीयः ( चचि. ५.४४; असंशा. ५.१०० )

**धान्वीरक**–पु., रोग० धनुःस्तम्भः ( का, भोजनक. )

**धापयन्ती**–वि., पाययन्ती ( सुचि. २४.९२ )

**धामक**–न., खनिज० कान्तलोहम् ( रा १३.२८ )

**धामन्**–न., सारभागः, उत्कृष्टांशः ( चनि. ६.९ )
स्थानम् ( असंसू. २३.४ )
शारीरं तेजः ( अहसू. ७.७६ )

**धामार्गव**–पु., ऋषि० बडिशः ( चसू. १२.७ )
पु.,न., वनस्पति० पीतघोषकः ( चक. चक.४.३; सुउ. ४७.३७ ) राजकोशातकी (हे.) कोशफलम् (अरु. अहक. १.३५ ) धामार्गवगुणाः – तिक्तं मधुरमुष्णं पक्वामाशयशोधनं वृष्यं वमनकृद्वातकफघ्नं गरगुल्मोदरकासघ्नं श्लेष्माशयस्थितकण्ठवक्त्रस्थकफजरोगघ्नं व्रणरोपणं च ( चक. ४.४-५; सुसू. ४३.८; अहक. १.३५; ध. १.१८९ )
हिं.–घिया तोरई, नेनुआ.
म.–**घोसाळे.**
गु.–गलका.
बं.–हस्तिघोषा, धुन्दुल.
त.–यानैपीर्क्कु.
फा.–खियार.
**–कल्प**–पु., अध्याय० ( चक. ४ )
**–फल**–न., पीतघोषकफलम्, वमनद्रव्येष्वेकम् ( चवि. ८.१३५ )

**धार**–वि., आन्तरिक्षजलेष्वेकम्, धाराभिः पततीति धारं जलम्, तत्कारतौषारहैमेभ्यः प्रधानतमं लघुत्वात्। तद्गाङ्गसामुद्रभेदेन द्विविधम् । गाङ्गं सर्वदा सेव्यं सामुद्रं त्वाश्वयुजे सेव्यम् ( सुसू. ४५.७ )
द्र० 'जाल'

**(धारा)**–स्त्री., उपक्रम० सेकः (चचि. १४.२१७)
प्रवाहः (सुशा. ८.११)
शस्त्रधारा, भेदनलेखनव्यधनविस्रावणच्छेदनोपयोगि–प्रधाना शस्त्रसंपत् । तत्र शस्त्रधारा भेदनानां मासूरी, लेखनानामर्धमासूरी, व्यधनानां विस्रावणानां च कैशिकी छेदनानामर्धकैशिकी च ( सुसू. ८.१० )
वनस्पति० गुडूची ( ध. १.१ )

**धारण**–पु., स्तम्भः धार्यते गृहोपरि स्थितपटलादि अनेन इति धारणः स्तम्भः ( अहसू. ७.५२ )

**धारणी**–स्त्री., विद्या०नेत्ररोगेऽञ्जनमन्त्रः, " नमश्चक्षुःपरिशोधनराजाय तथागतायार्हते सम्यक्सम्बुद्धाय । ॐ चक्षुःप्रज्ञाचक्षुर्ज्ञानचक्षुर्विज्ञानचक्षुर्विशोधय स्वाहा " ( असंसू. ८.९९-१०० )
न., ज्ञानस्य बुद्धौ स्थैर्यम् ( चवि. ८.१८ )
इन्द्रियाणां धारणशक्तिः ( चशा. ३.१० )
वातकर्म० विधारणम् ( सुसू. १५.४ ( १ )
बलदानम् ( सुसू. १४.३ )
वेगावरोधः ( अहसू. ४.७ )
अस्थिकर्म० शरीरस्य स्तम्भवद्धारणम् ( असंसू. १.२३; अहसू. ११.४ )
वि., बीजधारणकारकः ( संयावः ) (चचि. ३०.१०७)

**धारणात्मक**–वि., हृदयगृहीतवस्तूनाममोचकः ( सुशा. ३.२५ )

**धारणीया**–स्त्री., वनस्पति० धरणीकन्दः (रापरि. ७.४२)

**धारा**–स्त्री., सेकः ( चचि. १४.२१७ )
**–कदम्ब**–पु., वनस्पति० कदम्बभेदः (ध. ५.१०५)
द्र० 'कदम्ब'
**–गृह**–न., यदुपरि जलधाराः सततं पतन्ति तत्, अम्बुपूर्णसदनम् ( चचि. ३.२६१; सुउ. ४७.६० ) दाहप्रशमनार्थमत्र निवासः प्रशस्तः ( चचि. ४.१०६; चचि. २४.१५९ )
**–धरात्यय**–पु., शरदृतुः, धाराधरा मेघाः, तेषामत्ययोऽन्तः यस्मिन् सः ( चसू. ६.४४ )
**–फल**–पु., वनस्पति० मदनः ( रा. ८.२३० )
**(–फला)**–स्त्री., वनस्पति० कोशातकी (रा. ७.२८८)
**–फलक**–पु., वनस्पति० कर्मारः ( रापरि. ११.१३ )
**–संस्थापन**–न., शस्त्रधारास्थिरीकरणम् ( सुसू. ८.१३; असंसू. ३४.३७ )

**धारिन्**–वि., आयुः शरीरं धारयति पूतितां गन्तुं न ददातीति ( चसू. १.४२ ) शरीरेन्द्रियसत्त्वात्मसंयोगरूपात् शरीरधारणाद्धारि ( चसू. ३०.६ )

**(धारि)–लोहित**–न., जीवशोणितम्, रक्तधातुः ( चवि. ४.७)

**धारोष्णदुग्ध**–न., सद्योदोहनेन गृहीतमसंस्कृतमुष्ण-स्पर्शं पयः । इदं वातपित्तज्वरहरम् (चचि.३.२३८) पित्तरक्तावृतेऽनिले प्रशस्तम् ( चचि. २९.८२ ) तद्गुणाः– धारोष्णं गोपयो बल्यं शीतं लघ्वमृतो-पमं दीपनं त्रिदोषघ्नं च। धाराशिशिरं गोपयस्त्या-ज्यम् ( भा. प्र. )

**धार्तराष्ट्र**–पु., पक्षि० हंसभेदः, तदण्डं क्षीणरेतः कास-हृद्रोगक्षतेषु हितं मधुरमविदाहि सद्यो बलकरं च ( चसू. २७.८५ )

**–पदी**–स्त्री., वनस्पति० हंसपादी ( रा. ५.१६८ )

**धावन**– न., पार्श्वतो गमनम् ( चक्र. चइं. ३.४ ) उपक्रम० प्रक्षालनम्, धावति शुध्यति इति धावनम् प्रक्षालनम् ( सुचि. २२.३१; असंसू. ३८.५३ )

**( धावनी )**– स्त्री., वनस्पति० कण्टकारी ( चचि. ३.१८७,–२२४; ध. १.९५ ) पृश्निपर्णी ( ध. १.९० )

**धी**–स्त्री., प्रज्ञाभेदः यश्च बाह्याध्यात्मिकानां भावानां हिताहितपरिच्छेदविभागकारी, (अरुणः) ( चक्र. चशा. १.९८; अहृसू. १.२६ )

**धीतिका**–स्त्री., शुष्कगोमयादिकृतोऽग्न्याश्रयः ( चसू. १४.६१ )

**धीमत्**–वि., अनुक्तदुरुक्तोहापोहलक्षणबुद्धियुक्तः ( सुसू. ३४.२० )

**धीर**–पु., वनस्पति० ऋषभः ( ध. १.१२५ )

**( धीरा )**–स्त्री., वनस्पति० शिंशपा (रा. ९.१९८) काकोली ( रा ३.१६६ ) तेजोवती ( रा. ३.३९४ )

**धुकधुकास्वन**–पु., लक्षण० कर्णगतो धुकधुकेति शब्दः ( असंशा. १०.८ )

**धुक्षण**–वि., अग्निदीपनम्, धुक्ष सन्दीपनक्लेशनजीवनेषु इति भौवादिको धातुः, धुक्ष्यते सन्दीप्यतेऽनेनेति धुक्षणम् अग्निसन्दीपनम् ( चवि. ६.१२ )

**धुन्वत्**–वि., विक्षिपत् 'धुञ् कम्पने' इति स्वादौ ( ड. सुउ. ६१.१३ )

**धुरन्धरी**–स्त्री., वनस्पति० धवः (धपरि. ५.४)

**धुस्तूर**–पु., वनस्पति० धत्तूरः (र. २५.९०)

**धूप**–पु., उपक्रम० धूपनम् ( चनि. १.३६ ) अगुर्वादिधूपः ( अहृसू.३.१५ ) धूपानुधूपप्रतिधूपा-श्चेति कर्मभेदात् त्रिविधो धूपः। स च जाङ्गमस्था-वराश्रयत्वाद् द्वियोनिः। तद्द्रव्याणि–वचाकुष्ठक्षौम-कहिङ्गुघृतसिद्धार्थकसर्पत्वग्देवनिर्माल्यमक्षतादीनि च। रक्षोघ्नचतुरङ्गिकनन्दकश्रीधूपदशाङ्गमाहेश्वरा-दयो बहुविधा धूपाः ( का. धूपकल्प )

**–यन्त्र**–न., यन्त्र० यथोक्तं लौहं पात्रं विधाय तत्कण्ठाधो द्व्यङ्गुले देशे जलाधारं लघुपात्रं निधाय तस्मिन् लोहशलाकास्तिर्यङ् निधाय तत्र स्वर्णपत्राणि स्थापयेत्। तेषामधोभागे धूमद्रव्यं निक्षिपेत्। यन्त्रपात्रमपरेण न्युब्जपात्रेणाऽऽच्छादयेत्। मृदा सन्धिलेपं कृत्वा यन्त्रस्याऽधो वह्निं कुर्यात्। उक्तविधानेन स्वर्णपत्राणि कृष्णानि भवन्ति ( र. ९.६९-७२ )

**–वृक्ष**–पु., निर्यास० श्रीवेष्टकः ( ध. ३.१३३ )

**धूपन**–न., लक्षण० धूमायनम् धूपितवत् त्रासः, धूममिवोद्वमनम् ( चसू. १७.५८. १८.७; अहृसू. ३०.४८ ) उपक्रम० धूपनद्रव्यैर्धूमदानम्, ज्वरापस्मारोन्माद-दंशव्रणादिष्वयं विधीयते ( चचि. १०.५१; सुउ. ६२.१६ ) तद्द्रव्याणि–नकुलोलूकमार्जारगृध्रकीटाहिकाकादीनां पुरीषतुण्डपक्षादीनि ( चचि. १०.५१ ) सुगन्धि-द्रव्याणि च ( चचि. ३.१७६ ) नृकेशपीत-सर्षपजीर्णगुडादीनि च (असंउ. ४३ ) तद्गुणा :– कठिनानां व्रणानां शैथिल्यकरं शिथिलानां च कठिनत्वापादकं रुक्स्रावगन्धक्रमिहरं शैथिल्य-मार्दवहरं च ( चचि. २५.१०८-१०९ )

**धूपनाङ्ग**–न., धूपद्रव्यम्, श्रीवेष्टकसर्जरससरलदेवदारु-त्वक्सारादीनि धूपद्रव्याणि ( सुचि. १.८०-८१ )

**धूपागरु**–न., वनस्पति० अगरुभेदः, दाहागरु (रा. १२.४३ ) द्र० 'अगरु'

**धूपाङ्ग**–पु., निर्यास० श्रीवेष्टकः ( रा. १२.१९३ )

**धूपाधिवासित**–वि., धूपितैर्वस्त्रैर्युक्तः ( असंसू. ४.१४ )

**धूपार्ह**–न., वनस्पति० अगरुभेदः, कालेयकम् (रा. १२.४० ) द्र० 'अगरु'

**धूपिताम्बर**–वि., धूपितैर्वस्त्रैयुक्तः ( अहृसू. ३.४७ )

**धूप्य**–पु., भैषज्य० नखम् ( रा. १२.१०८ )

**धूम**–पु., गृहधूमः ( र. २.१६५ ) भेषजयुक्तं धूम्रस्वरूपं द्रव्यम् ( चसू. ५.२६ ) ग्रहोपक्रम० अजर्क्षशल्यकोलूकचर्मरोमाणि हिङ्गु-बस्तमूत्रादीनि तद्द्रव्याणि। एतद्धूपनाद्बलव-द्ग्रहोपशमः ( सुउ. ६०.३१ )

**–कवल**–पु., धूमभागः (चसू. ५.४७)

–गन्धिक–वि., लक्षण० उद्गारस्य धूमस्येव गन्धः यस्य यस्मिन्वा तत् ( सुउ. ४०.१७५ )

–ज–न., लवणभेदः वज्रकक्षारः ( रा. ६.५५ )

–दर्शिन्–पु., नेत्ररोग० पैत्तिकोऽयम्, तल्लक्षणम्–शोकज्वरायासशिरोभितापैर्नरस्य दृष्टिरभ्याहता सती सधूमकान्भावान्पश्यति । साध्योऽयम् ( सुउ. ७.३९; सुउ. १.३२ )

–धूम्र–वि., धूमवेष्टितमिव धूमेन धूम्रम् मलिनमिति यावत् ( सुउ. ७.२२-२३ )

–नस्यकवलग्रहचिकित्सित–न.,अध्याय० (सुचि. ४०१)

–नेत्र–न., धूमपानोपयुक्ता नलिका ( चसू. ५.२४) द्र० 'धूम्रपान '

–नेत्रक–न., धूमनेत्रम् ( अहसू. २१.८ )

–प–वि., धूमपानं कुर्वाणः (चसू. ५.३५; अहसू. २१.२२)

–पान–न., उपक्रम० धूम्रस्वरूपस्य भेषजयुक्तस्य द्रव्यस्य जत्रूर्ध्वकफवातोत्थविकाराणामजन्मने जातानामुच्छेदाय च मुखेन घ्राणेन वा सेवनम् । स सेवनीयो धूमः कर्मभेदात्पञ्चविधः । प्रायोगिकस्नैहिकवैरेचनिककासघ्नवामनीयाख्याः पञ्च ( चसू. ५.२६; सुचि. ४०.३ ) दोषभेदात् त्रिविधः स्निग्धो मध्यस्तीक्ष्णश्चेति स्निग्धस्य बृंहणो मृदुश्चेति पर्यायौ ( सुचि. ४०.४ ) मध्यस्य शमनप्रायोगिकौ पर्यायौ ( सुचि. ४०.४; असंसू. ३०.४ ) तीक्ष्णस्य शोधनवैरेचनिकौ पर्यायौ ( सुचि. ४०.४ ) वाते स्निग्धःवातकफे मध्यः, कफे तीक्ष्णश्च (अहसू. २१.२) धूमपानद्रव्याणि — हरेणुकाप्रियङ्गुपृथ्वीकाकेशरनखादीनि प्रायोगिकधूमद्रव्याणि । वसाघृतमधूच्छिष्टजीवकर्षभकादीनि मधुरद्रव्याणि स्नैहिकधूमद्रव्याणि । श्वेताज्योतिष्मतीहरितालमनःशिलाअगरुपत्रादयश्च गन्धा वैरेचनिकधूमद्रव्याणि ( चसू. ५.२०–२६ ) हरिद्रापत्रैरण्डमूलादीनि च ( चचि. १७.७७–८०; असंसू. १४.७ ) भार्गीवचाहिङ्गुवेणुत्वगादीनि कासघ्नधूमद्रव्याणि (सुउ. ५२.२१) धूमपानकालः–प्रायोगिको दन्तप्रक्षालननस्यस्नानभोजनशस्त्रकर्मान्तेषूपयुक्तः । स्नैहिको मूत्रोच्चारक्षवथुहसितरुषितमैथुनान्तेषूपयुक्तः । वैरेचनिकः स्नानच्छर्दनदिवास्वप्नान्तेषूपयुक्तः । ( सुचि. ४०.१३ ) कासघ्नो ग्रासान्तरेषूपयुक्तः सुचि. ४०.१८ ) प्रायोगिकस्य नाम मध्यस्याऽष्टौ कालाः ( चसू. ५.३३ ) मृदोरेकादश तीक्ष्णस्य च पञ्चकालाः ( असंसू. ३०.८)

धूमयन्त्रम् — तन्नेत्रं बस्तिनेत्रद्रव्यभवमग्रमूलयोर्गोपुच्छाकारं कनिष्ठिकाङ्गुष्ठाग्रपरिणाहं राजमाषधूमवर्तिप्रवेशच्छिद्रमृजु त्रिकेशं श्लक्ष्णं शिथिलशलाकागर्भं शमनादिषु क्रमादातुराङ्गुलमानेन चत्वारिंशद्द्वात्रिंशच्चतुर्विंशत्यङ्गुलं कुर्यात् कासघ्ने वमने च दशाङ्गुलं व्रणधूपनार्थेऽष्टाङ्गुलं कुर्यात् । ( असंसू. ३०.९)

धूमपानविधि :— आत्मवान् नरः सुखोपविष्टः सुमना ऋज्वधोदृष्टिरतन्द्रितः स्नेहाक्तदीप्ताग्रां धूमद्रव्यनिर्मितां वर्तिं नेत्रस्रोतसि प्रणिधाय धूमं पिबेत् । उरःकण्ठादिरोगेषु मुखेनैव पिबेत् । शिरःकर्णाऽक्षिनासास्थेषु रोगेषु नासातः पिबेत् । विशेषतः प्रायोगिकं घ्राणेन स्नैहिकं मुखनासाभ्यां वैरेचनिकं नासिकया कासघ्नवामनीयौ च मुखेनैव पिबेत् । तदुद्वमनं तु मुखेनैव । नासाकृतमुद्वमनं तु दृग्विघातकृद्भवति ( ड. सुचि. ४०.६-९)

धूमोपद्रवाः— अकालपीतो धूमो भ्रममूर्च्छाशिरोरुजो घ्राणश्रोत्राक्षिजिह्वानां दारुणमुपघातं च करोति ( सुचि. ४०.१२ ) तत्सम्यग्योगातियोगायोगाः— सम्यग्योगे हृत्कण्ठेन्द्रियसंशुद्धिः शिरसो लाघवं रोगोपशमश्च, अयोगे अविशुद्धस्वरत्वं सकफकण्ठत्वं मस्तकस्तैमित्यं रोगापशमश्च, अतियोगे तालुगलशोषपरिदाहपिपासामूर्च्छाभ्रममदकर्णक्ष्वेडदृष्टिनासारोगदौर्बल्यानि शिरोभ्रमणमतिरक्तस्रावश्च भवति ( सुचि. ४०.१७; असंसू. ३०.१७; चसू. ५.५२-५५ )

धूमायोग्याः— अपूर्णाष्टादशवर्षस्य धूमपानं वर्ज्यम् ( असंसू. २९.२२ ) रक्तपित्ताऽर्तिविरिक्तोदरमेहितिमिरोर्ध्वाऽऽनिलाध्मानार्ताः, क्षीरक्षौद्रस्नेहमत्स्यमद्यदधिविषाशिनो धूमाऽयोग्याः तथा शिरस्यभिहते पाण्डुरोगे निशि जागरिते च धूमो वर्ज्यः (चसू. ५.२७-३२; अहसू. २१.२-३) धूमप्रशस्तिः– धूमपानेन नरः प्रसन्नेन्द्रियवाङ्मना दृढकेशद्विजश्मश्रुः सुगन्धिविशदाननो भवति । तथा श्वासकासपीनसविस्वरत्वानि कर्णास्याऽक्षिस्रावकण्डूर्तिजाड्यानि पाण्डुताहिध्मातन्द्रादयश्चैनं न स्पृशन्ति (सुचि. ४०.१५; अहसू. २१.२२)

–पूर्ण–वि., धूमेन मृतम्, अस्य मांसमभक्ष्यम् ( असंसू. ७.१०५ )

–वक्त्रकपान–वि., मुखेन धूमं पिबन् पुरुषः (चसू. ५.३२-३३)

–वर्ति–स्त्री., धूमपानार्थं कृता वर्तिः (चचि. ३.२५५)

–विभ्रम–पु., धूमपानजन्यः संक्षोभः (चसू. ५.४६)

–वेध–पु., संस्कार० धूमायमाने वन्हौ अन्तर्मूषान्तस्थः तद्वन्हिमध्ये प्रक्षिप्तोऽयः पारदस्तत्सम्बन्धि धूमस्योर्ध्वस्थापितताम्रादिपत्रे सम्पर्काद् यत् स्वर्णरजतापादनं, स धूमवेधः (र. ८.९३)

–सार–पु., गृहधूमः (र. २१.१७२)

धूमक–पु., चत्वारिंशत्पित्तविकारेष्वेकः, धूमोद्गमनमिव (चसू. २०.१४; असंसू. २०.१४) शिरोग्रीवाकण्ठतालुषु धूमाऽयनम् (असंसू. २०.१६)

(धूमिका)–स्त्री., पक्षि० प्रतुदजातीयः, धूम्याटः (चसू. २७.३७; अहसू. ६.५०)

धूमपिका–स्त्री., पक्षि० प्रसहवर्गीयः (सुसू. ४६.७४)

धूमर–पु., नेत्ररोग० धूमदर्शी (असंउ. १५)

धूमागद्–पु., योग० तगरकुष्ठशिरीषपुष्पसर्पशिरांसि घृतेन प्रज्वाल्य कृतो धूमः। विषघ्नोऽयम्। (चचि.२३.९९)

धूमागम–पु., लक्षण० मुखे धूमोपस्थितिवद् वेदनाविशेषः (च.निर.६)

धूमायन–न., लक्षण० अङ्गानां धूमोद्गमनमिव (सुसू. २२.११; सुउ. २९.१४) कण्ठे धूमवत् करणम् (असंनि. ५०.१६)

धूमोत्थ–न., लवणभेदः वज्रकक्षारः (रा. ६.५५) गृहधूमः, धूमादुत्थानमुत्पत्तिर्यस्य (र. २९.४४-४९)

धूमोद्गम–पु., गृहधूमः (र. २०.७५)

धूमोपघात–पु., धूमपानव्यापत् (असंसू. ३०.२)

धूमोपघातप्रतीकार–पु., धूमव्यापच्चिकित्सितम् (असंसू. ३०.६)

धूमोपहत–वि., धूमेन प्रपीडितः (सुसू. १२.२९)

धूम्र–वि., धूम्रवर्णः (चचि. १ (४).४६) पु., भैषज्य० तुरुष्कः (ध.३.२२)

–पत्रा–स्त्री., वनस्पति० तद्गुणाः–तिक्तोष्णा रुच्या दीपनी शोफकृमिकासहरा च (रापरि. ५.८)

–पवन–वि., धूम्रवर्णः पवनो यस्मिन्, एतादृशो देशोऽहितः (चवि. ३.७८३)

–मूलीका–स्त्री., वनस्पति० शूली (रापरि. ८.६८)

–वर्ण–पु., भैषज्य० तुरुष्कः (ध. ३.२२)

–वृत्तफला–स्त्री.,वनस्पति० शशाण्डुली (रापरि. ७.१०३)

धूम्राह्वा–स्त्री., वनस्पति० धूम्रपत्रा (रापरि. ५.८) द्र० 'धूम्रपत्रा'

धूम्रिका–स्त्री., वनस्पति० शिंशपा (रा. ९.१९८)

धूर्त– पु., वनस्पति० धत्तूरः (ध. ४.७; र. १२.११२) चोरकः (रा. १२.१२७) न., लवणभेदः बिडम् (ध. २.२८)

धूर्तर–पु., खनिज० पारदः (रा. १३.४१)

धूर्धर–पु., वनस्पति० ऋषभः (रा. ५.१५७)

धूर्य–पु., वनस्पति० ऋषभः (रा. ५.१५७)

धूलिकदम्ब–पु., वनस्पति० कदम्बभेदः (ध. ५.१०५) –द्र० 'कदंब'

धूलिपुष्पिका–स्त्री., वनस्पति० केतकी (रा. १०.१)

धूसर–पु., वनस्पति० मुद्गभेदः धूसरमुद्गः (रा. १६.१३०) –द्र० 'मुद्ग'

(धूसरा–)स्त्री., वनस्पति० पाटली (रापरि. ५.४४)

–पत्रिका–स्त्री., वनस्पति० हस्तिशुण्डी (रापरि. ५.२०)

धृति–स्त्री., प्रज्ञाभेदः धैर्यम् (चशा १.९८) संयमः (चवि. ४.८) सात्विकगुण० मनसो नियमात्मिका बुद्धिः (सुशा १.१८) मनःसंतुष्टिः (ड. सुसू. २.३)

–भ्रंश– पु., लक्षण० मनोनियमनकर्त्री बुद्धिःशक्तिर्वा, तस्या भ्रष्टत्वम्। चशा. १.१००)

धेनुका–स्त्री., सिराव्यधव्यापत्० सिरा व्यधनप्रदेशस्य शस्त्रपदैर्बहुवारताडनान्मुहुर्मुहुः रक्तं स्रवन्ति। धेनुस्तनैरिव स्रवणात् सा धेनुकेत्युच्यते। (ड. सुशा. ८.१९)

धेनुजिह्वा–स्त्री., वनस्पति० गवेधुका (रा. ४.१८०)

धेनुदुग्ध–न., वनस्पति० चिर्भटम् (ध. १.१८०)

धैर्य–न., धीरता, मनसो विपद्यप्यदैन्यम्, धैर्यमविषादेन परीक्षेत (चवि. ४.८)

धौत–वि., संस्कारवशान्निर्मलम् (अहसू. ५.४७) न., खनिज० रौप्यम् (रा. १३.८) रुपे. भूनागमृत्तिकां क्षालयित्वा गृहीतं कृष्णवर्णं रज एव धौतम् (र ८.४७)

–माक्षीक–न., खनिज० स्वर्णमाक्षीकम्, रौप्यमाक्षीकं वा (र. १५.५३–५४)

–वासस्–न., निर्मलं वस्त्रम् (असंसू. ३.७३)

धौम्य–पु., ऋषि०रोगापहरणचिन्तनार्थं हिमवतः पार्श्वे समेतेषु महर्षिष्वेकः (चसू. १.१२)

ध्मान–उपक्रम०–न., नस्यपञ्चकम्, प्रधमनाख्यं नस्यम् (अहसू. २०.८) अङ्गारप्रज्वालनार्थं भस्त्रिकादिना प्रध्मानम् (र.२.२९)

**ध्मापन**–न., चूर्णादीनां नासादिषु प्रक्षेपणम् ( चसि.९.९१ )

**ध्यान**–न., लक्षण० चिन्तनम् ( चनि. ७,६ )
चिन्ता ( हे अहसू. ११.३९ )
अनवरतकार्याकार्यचिन्तनम् ( सुसू.१९.२० )

**–चक्षुस्**–न., ध्यानं समाधिविशेषः समानाकारप्रत्ययसंततिर्ध्यानमिति योगग्रन्थेभ्य उन्नेयम् । तदुपलब्धिसाधनं चक्षुर्ध्यानचक्षुः । ध्यानं चक्षुरिव ध्यानचक्षुः ( चक. चसू.१.१७ )

**ध्याम**–वि., ईषत्कृष्णम् ( सुसू.२८.१३ ) दग्धेष्टकादिवर्णम् ( सुक.८.१२२ )
न., रोहिषतृणम्, कत्तृणम् ( चचि.२८.१५४ )
गन्धतृणम्, भूतृणम् ( सुचि.२२.६९ )

**–क्वाथ**–वि., ध्यामो मलिनः क्वाथः क्वाथ्यद्रव्यं यस्मिंस्तद् व्यञ्जनादि ( अरु.अहसू.७.५ )

**–मण्डलता**–स्त्री., मलिनं वर्तुलं यत्र तद्वस्त्रादि, तद्भावो मलिनमण्डलता । विषस्पृष्टं वस्त्रमीदृग्वर्णं नाम कृष्णमलिनवर्तुलोपेतं भवति ( अहसू. ७.११)

**ध्यामक**–न., वनस्पति० रोहिषतृणम् कत्तृणम्, ( चचि.१२.६६ ) ( सुक. २.५१; ध. १.८०; र.२२.१६७ ) प्रायोगिकधूमार्थमुपयुज्यते ( अहसू. २१.१४; ) गरादिसर्वविषेषूपयुज्यते ( असंउ.४० )
गन्धतृणम् ( चसू. ५.२१ ) क्षौमकम्,
( जज्जट ) ( चचि. ३.२६७; अहचि. १.१३८ )

**ध्येय**–न., मनोविषयाणामेकम्, भावनाविषयं ज्ञानम् ( चशा. १.२० )

**ध्रुव**–पु., वनस्पति० वटः ( ध. ५.७६; सुसू. ५.२९ )

**( ध्रुवा )**–स्त्री., वनस्पति० शालिपर्णी ( ध.१.८७ )
वि., निश्चितम् ( सुचि. ७.२९ ) निश्चित.

**ध्रुवम्**–अव्य., निश्चितम्, शाश्वतम् ( सुशा. २.३३ )

**ध्वंशी**–स्त्री., मान० त्रसरेणुः, धूलिः ( चक. ) ( चक. १२.८७ )

**ध्वंसक**–पु., रोग० मद्यजोऽयम् । त्यक्तमद्यस्य पुनः सहसाऽनुचितमद्यसेवनेन वातात् कष्टतमोऽसौ व्याधिर्भवति । तल्लक्षणम्–अस्मिन् श्लेष्मप्रसेकः कण्ठास्यशोषः शब्दाऽसहिष्णुता तन्द्रानिद्रातियोगश्च भवति ( चचि. २४.२०१; असंनि. ६.२२.३० )

**ध्वज**–पु., पताकाया दण्डः ( चइ. १२.२८–३० ) ( सुसू. २८.१९ )
लिङ्गम्, पुरुषेन्द्रियम् ( चचि. ३०.१५४–१५५ ) ( असंशा. २.४३ )

**–क्षय**–पु., रोग० मेढ्रनाशः ( सुचि. १९.३७ )

**–द्रुम**– पु., वनस्पति० तालः ( ध. ५.६८ )

**–भङ्ग**–पु., गुह्यरोग० क्लैब्यकारणेष्वेकम् (चसू. १९.४ (५)
शूकातिसेवन रेतःप्रतिघातादिभिर्हेतुभिर्ध्वजभङ्गो भवति । स वातपित्तकफरक्तसन्निपातभेदात् पञ्चविधः तत्र वातजे ध्वजभङ्गे मेढ्रे श्वयथुर्वेदना रागश्चोपलक्ष्यते । पित्तजे-तीव्राः स्फोटा जायन्ते लिङ्गपाकश्च भवति । कफजे-मेढ्रे मांसवृद्धिर्भवति व्रणाश्च भवन्ति । पुलाकोदकसङ्काशः श्यावारुणप्रभः स्रावः वलयीभवनं, परिग्रहश्च कठिनो भवति । रक्तजे-ज्वरस्तृष्णा भ्रमो मूर्च्छा छर्दिश्च भवति । नीलमाविललोहितं कृष्णं रक्तं च स्रवति । सन्निपातजे-बस्तौ वृषणयोः सीवन्यां वङ्क्षणेष्वग्निदग्धवत् तीव्रो दाहः, पिच्छिलः पाण्डुश्च स्रावो मन्दश्वयथुः श्वयथौ च कृम्युद्भवः क्लेदः पूतिगन्धित्वं मणिमेढ्रमुष्काणां विशीर्णत्वंच भवति ( चचि. ३०.१६३–१७५ ) र. २७.४९; सुचि. २६.१२ )

**–वृक्ष**–पु., वनस्पति० माडः ( ध. ५.७० )

**–ध्वजोच्छ्राय**–पु. शिश्नोत्थानम् ( सुशा. २.४५ ) असंशा. २. )

**ध्वनिमूल**–न., वनस्पति० आकाशवल्ली, खवल्ली ( र. १०.२२ )

**ध्वाङ्क्ष**–पु., पक्षि० काकः, ध्वांक्षति कांक्षति आमिषादिकं मृतपशोरपि इति ध्वांक्षः ( सुसू. ६.२३ )

**( –ध्वाङ्क्षी )**–स्त्री., पारददोष० सप्तकञ्चुकेष्वेकः, कालिमा, काकपक्षवत्स्नैग्ध्यकारिणी ( र. ११.२२ )

**–जङ्घा**–स्त्री., वनस्पति० काकजङ्घा ( ध. ४.२३ )

**–जम्बू**–स्त्री., वनस्पति० जम्बूभेदः काकजम्बूः ( रा. ११.१३२ ) द्र० 'जम्बू'.

**–तुण्डफला**–स्त्री., वनस्पति० काकनासा ( ध. ४.२५)

**–तुण्डा**–स्त्री., वनस्पति० काकनासा ( रा. ३.४० )

**–दन्ती**–स्त्री., वनस्पति० काकादनी ( रा. ३.४४ )

**–नखी**–स्त्री., वनस्पति० काकादनी ( ध. ४.२७ )

**–नाम्नी**–स्त्री., वनस्पति० काकोदुम्बरिका ( रा. ११.१४३ )

**–नाशिनी**–स्त्री., वनस्पति० हपुषा ( ध. २.९ )

**–नासा**–स्त्री., वनस्पति० काकनासा, ( ध. ४.२५ )

**–नासिका**–स्त्री., वनस्पति० काकनासा ( रा. ३.४१ )

**–माची**–स्त्री. वनस्पति० काकमाची, ( ध. ४.२१ )

**ध्वाङ्क्षादनी**–स्त्री., वनस्पति० काकादनी ( रा.३.४३ )
**ध्वाङ्क्षिका**–स्त्री., वनस्पति० काकोली, ( रा. ३ १६६ )
**ध्वाङ्क्षोलिका**–स्त्री., वनस्पति० काकोली ( ध. १.१३२ )
**ध्वाङ्क्षोली**–स्त्री. वनस्पति० काकोली ( रा. ३१६७ )

## न

**नकुल**–पु., प्राणि० भूमिशयोऽसौ ( चसू. २७,३८ ) बिलेशयः ( सुसू. ४६.७८; रा. १७.१ ) असौ स्थूलपुच्छो रक्तनेत्रो बभ्रुदेहो भुजङ्गशत्रुश्च भवति ( सुशा. ४.७१ ) अस्य मांसं शोषे छद्मना केनापि व्याजेन वा देयम् ( सुउ. ४१.३६ ) अस्य वामगमनं प्रशस्तम् ( सुसू. २९.३६ ) निरग्निस्वेदार्थमस्य चर्मगोण्युपयुज्यते ( सुचि. ४.१७ )
**( नकुला )**–स्त्री., ग्रहमाता० ( असंउ. ४. )
**( नकुली )**–स्त्री., वनस्पति० जटामांसी ( र ३०.४८ )
**–पित्त**–न., भैषज्य० नकुलस्य पित्तम्, अपस्मारे नकुलपित्तसिद्धतैलं पानाभ्यङ्गेषु प्रशस्तम् ( सुउ. ६१.२४ ) इदं हरितालविषे नस्याञ्जनार्थमुपयुज्यते ( असंउ. ४० ) ग्रहचिकित्सायां चोपयुज्यते ( सुउ. ६०.४० )
**नकुलाख्या**–स्त्री., वनस्पति० गन्धनाकुली (रा.७.१५३)
**नकुलान्ध**–वि., नकुलान्ध्यवान् ( अहउ. १२.२३–२४ )
**नकुलान्ध्य**–न., नेत्ररोग० सर्वजोऽयम्, तल्लक्षणम्–अस्मिन् नकुलदृष्टिर्विद्योतते। दिवा चित्राणि रूपाणि पश्यति रात्रौ च न किञ्चिदपि पश्यति। असाध्योऽयम् ( सुउ. ७.४०; असंउ. १५ )
**नकुलेष्टा**–स्त्री., वनस्पति० गन्धनाकुली ( ध. ४.१०५ )
**नक्तक**–पु., कर्पटावयवः जीर्णं वस्त्रम् ( चसू. १४.११ )
**नक्तम्**–अव्य० निशि ( अहसू. २.४७ )
**–चर**–पु., निर्यास० गुग्गुलुः ( ध. ३.१२७ )
**–चारिणी**–वि., या रात्रौ चरति सा गर्भिणी (चशा. ८.२१)
**नक्तमाल**–पु., वनस्पति० करञ्जः ( चसू. ४.११; सुचि. १६.१६; अहसू. ३०.९; ध. ५. १०७ ) अस्य क्वाथः स्नानव्याजेन श्वयथावुपयुज्यते ( असंचि. १९ ) अस्य फलं नयनाञ्जनेन ग्रहबाधायामुपयुज्यते ( सुउ. ६०.४४ )
**नक्ता**–स्त्री., वनस्पति० कलिकारी ( ध. ४.९ )
**नक्तान्ध**–वि., नक्तान्ध्ययुक्तः ( सुसू. ४६.२८२ )
**नक्तान्ध्य**–न., नेत्ररोग० तल्लक्षणम्-अस्मिन् सूर्येऽस्तङ्गते स्तम्भमागतास्त्रिषु पटलेषु स्थिता दोषा दृशं स्थगयन्ति, तेन ईदृग्दोषदूषितनयनो रात्रौ न पश्यति। अह्नि दृष्टिपथाद्भ्रष्टा मला व्यक्तदर्शने साहायकमाचरन्ति ( सुउ.७.३८; असंउ. १५. )
**नक्ताह्व**–पु., वनस्पति० करञ्जः बीजान्यस्य प्रलेपधूपाञ्जननस्यैर्विसूचिकानाशनानि ( असंसू. ११.५२ )
**नक्र**–पु., मत्स्यभेदः ( सुचि. २६.२६; अहसू. ६.५३ )
**–रेतस्**–न., नक्रस्य शुक्रम् इदं वृष्याणामग्र्यम् ( चसू. २५.४०; असंसू. १३.३ )
**नक्राण्ड**– पु. न., नक्रस्याण्डम्, वृष्यमिदम् ( चचि. २ ( २ ) २८ )
**नक्षत्र**–न., तारका इयं ज्योतिःशास्त्रीया संज्ञा ( चसू. १५.९ ) क्रान्तिवृत्तस्थसप्तविंशतिनक्षत्राणि अश्विन्यादिरेवत्यन्तानि प्रसिद्धानि ( सुसू. २.४ ) नक्षत्रविशेषे ज्वरादिविशेषरोगाः संभवन्ति ( असंनि. १ )
रत्न० मौक्तिकम् ( रा. १३.६६ )
**–चरित**–न., उल्कापातादिभिर्जन्मनक्षत्राऽभिहननम् ( सुसू. ६.१९ )
**–नामन्**–न., नक्षत्रदेवतानुकारि नाम ( सुशा.१०.२४ )
**–पीडन**–न., क्रूरग्रहाणां बाधनम् ( ड. सुउ. ३९.४१)
**–पीडा**–स्त्री., नक्षत्राणां पीडा ( सुसू. २८.६ )
**–शीतल**–वि., नक्षत्रसम्बन्धात्शीतम् (अहसू. ३.३३)
**नक्षत्राकृतिविस्तार**–पु., वनस्पति० जूर्णाभेदः धवलयावनालः ( १६.१६८ )
**नख**–पु. न. प्रत्यङ्ग० करजः नखरः तत्सङ्ख्या–विंशतिर्नखाः, ( चशा. ७.६ ) अस्थ्नो मलः, ( सुसू. ४६.५२९ ) अनुयन्त्रेष्वेकम् ( असंसू. ३४.३७; अहसू.२५.४० ) अनुशस्त्रेष्वेकम्, ( सुसू. ८.१५ )
न., सुगन्धि० धूमपानार्थमुपयुज्यते ( चसू. ५.२० ) तद्गुणाः–कटूष्णं कफविषकुष्ठकण्डूव्रणभूतपीडाहरं च ( ध. ३.५८; र. १७.११०–११६ )
हिं.–नख.
म.–नखला.
गु.–नखला.
बं.–नखी.
फा.–नाखुनपर्या.
**–च्छेदन**–न., नखकर्तनम्, ( सुशा. २.२५ )
**–च्छेद्या**–स्त्री., वनस्पति० मेदा, ( रा. ५.१६० )
**–दन्तक्षत**–न., नखदन्तानां व्रणः, ( चचि. २३.२१९ )

–दोष–पु., नखेषु जायमानो विकारः
( चसू. २८.१६ )
–द्वय–न., हस्तिनखं व्याघ्रनखं च ( असंउ. १० )
–पर्णी–स्त्री., वनस्पति० वृश्चिका ( रापरि. ५.४० )
–पुष्प–न., नखे श्वेतचिह्नम् मरणसूचकारिष्टानामेकतममिदम् ( चइ. १२.५५ )
–( पुष्पी )–स्त्री., वनस्पति० स्पृक्का ( रा. १२.११४ )
–पूर्विका–स्त्री., वनस्पति० निष्पावी ( रापरि. ७.९९ )
–प्रिय–पु., वनस्पति० नीलः ( रापरि. ९.११ )
–भेद–पु., अशीतिवातविकारेष्वेकः नखानां भेद; ( चसू. २०.११; असंसू. २०. )
–विष–वि., नखे विषं यस्य, तादृशाश्च मार्जारश्ववानरमकरमण्डूकपाकमत्स्यगोधाशम्बूकप्रचलाकगृहगोधिकाचतुष्पादकीटा नखविषास्तथा दंष्ट्राविषाः
( सुक. ३.५ )
–वृक्ष–पु., वनस्पति० नीलः ( रापरि. ९.११ )
द्र० 'नखप्रिय'.
–शङ्कुक–पु., भैषज्य० क्षुद्रशङ्खः ( रा. १३.२४६ )
–शस्त्र–न., शस्त्र० एतद् एकतो वक्रधारमुखमन्यतश्च ऋजुधारमुखमेवं द्विमुखमिदम् । प्रमाणमस्य नवाङ्गुलम् । इदं सूक्ष्मशल्योद्धृतौ छेदभेदप्रच्छानलेखनेषूपयुक्तम् ( अहसू. २६.१८ ) तस्य फलं द्व्यङ्गुलायाममेकाङ्गुलविस्तृतम् ( डसुसू. ८.४ ) एकतोऽश्वकर्णमुखमन्यतो वत्सदन्तमुखं प्रमाणतोऽष्टाङ्गुलं सूक्ष्मशल्योद्धृतावुपयुज्यते
( असंसू. ३४.३१ )
–शात–पु., लक्षण० नखपातनम् ( ड. सुक. १.३७; असंसू. ८.२५ )
–शूल–पु., लक्षण० नखस्य शूलवद्वेदना (चसि. २.१६)
–शोष–पु., लक्षण० नखानां शुष्कत्वम् (चसि. २.१६)
–सन्धि–पु. शारीर० नखानां संधिस्थानम्
( सुचि ३.२३)
–स्तम्भ–पु., लक्षण० नखस्य स्तम्भः ( चसि २.१६ )
**नखर**–पु., प्रत्यङ्ग० नखम् ( चचि. १०.३८ )
**नखराश्व**–पु., वनस्पति० करवीरः ( रा. १०.२ )
**नखाद**–पु., कृमि० शोणितजोऽयम् । नखानत्तीति नखादः । अदृश्योऽयम् ( सुउ. ५४.१५ )
**नखान्तर**–न., नखानां मध्यः ( असंसू. ३९.५)
**नखालु**–पु., वनस्पति० नीलः ( रापरि. ९.११ )
**नग**–पु.,वृक्षः न गच्छति अवशीर्यते दृढमूलत्वादिति नगः, ( ड. सुउ. ६०.१६ )
पर्वतः ( सुक.५.७६ )
–जा–स्त्री., वनस्पति० क्षुद्रपाषाणभेदः ( रा. ५.२१६ )
–जित्–पु., वनस्पति० पाषाणभेदकः ( रा. ५.२०९ )
–भिद्–पु., वनस्पति० पाषाणभेदकः ( ध.१. १५७ )
–मृत्तिका–स्त्री., पर्वतस्य शोभनगन्धा मृत्तिका, विषहरेयम् ( ड. सुक. ५.७६–७८ )
–वृत्तिक–पु., वनस्पति० जिङ्गिनी, (ड.) गुडमज्जनिका वृश्चिकाली ( सुचि. २०.१२ )
–वृत्तिका–स्त्री., वनस्पति० शल्लकी, ( सुचि. १५.९; सुक. ५.७६ )
**नगरोत्था**–स्त्री., मुस्ताभेदः, नागरमुस्ता,
( रा ६.६१ )
**नगाश्रय**–पु. वनस्पति० हस्तिकन्दः,
( रापरि. ७.३६ )
**नग्नजीव**–पु., वनस्पति० पुंसवनविधावुपयुक्तः
( असंशा. १.६१ )
**नट**–पु. वनस्पति० अशोकः ( रा १०.२७२ )
नलः, ( ध. ४. १४१ )
**( नटी )**–स्त्री., वनस्पति० नलिका, ( ध. ३.४३)
–मण्डक–न., खनिज० हरितालम्, ( ध ७.११९ )
–मण्डन–न., खनिज० हरितालम् ( रा. १३.५८ )
**नड**–पु., वनस्पति०नलः, ( ध. ४.१४१ )
**नत**–न., वनस्पति० तगरम् ( चसू. ३.२८; ड सुउ. १८.१०३; अहसू. १५.५; ध. ३.५३ )
**नद**–पु., सिन्धुशोणादिः ( ड. सुसू. ४५.४ )
**नदी**–स्त्री., गङ्गाद्या (ड.) तत्र शीघ्रवहा नद्योऽमलोदका लघ्व्यः । मन्दगास्तु शैवालच्छन्नाः कलुषाश्च गुर्व्यः । पश्चिमाभिमुखा नद्यो लघूदकत्वात् पथ्याः, पूर्वाभिमुखा गुरूदकत्वादप्रशस्ताः । दक्षिणाभिमुखाः साधारणत्वान्नातिदोषलाः । देशतः, सह्यप्रभवा नद्यः कुष्ठं जनयन्ति । विन्ध्यप्रभवाः कुष्ठं पाण्डूरोगं च, मलयप्रभवाः कृमीन्, महेन्द्रप्रभवाः श्लीपदोदराणि, हिमवद्भवा हृद्रोगशिरोरोगश्वयथुश्लीपदगलगण्डान्, प्राच्यावन्त्या अपरावन्त्याश्चार्शांस्युपजनयन्ति । पारियात्रप्रभवास्तु पथ्या बलारोग्यकर्यश्च । मरुदेशगता नद्यः प्रायेण सतिक्तलवणा लघ्व्यः समधुराः पुरुषाणां हितावहा बले हिताश्च ( सुसू. ४५.२१-२३; अहसू. ५.११ )
वनस्पति० अग्निमन्थः ( रा.९.१३६ )

**नदिज**–पु., धान्य० यावनालः ( रापरि. ८.३८ )
**नदी–कदम्ब**–पु., वनस्पति० महामुण्डी ( रा. ५.२२० )
**–कान्त**–पु., वनस्पति० हिज्जुलः ( रापरि. ८.७० )
**–( कान्ता )**–स्त्री., वनस्पति० काकजङ्घा ( ध. ४.२३ )
**–ज**–पु., वनस्पति० यावनालः ( रापरि. ८.३८ )
हिज्जुलः ( रापरि. ८,७० )
निष्पावभेदः कटुनिष्पावः ( रा. १६.१७७ )
वनस्पति० ' निष्पावः '
न., लवण० सैन्धवम् ( सुउ. १७.२७ )
खनिज० सुवर्णमाक्षिकम्, एतत् कुम्भकामला–रोगघ्नम् ( सुउ. ४४.३१; सुचि. ९.२५ )
स्रोतोञ्जनं शङ्खो वा यामुनं सौवीरम् ( र. २३.४० )
**–जल**–न., नद्या जलम्, तद्गुणाः–रूक्षं वातलं कटुकं च ( असंसू. ६.१३–१४ ) मधुरमीषदुष्णं लघु दीपनं पाचनं रुच्यं पथ्यं तृष्णाहरं च ( रा. १४.३२७ )
**–जशिम्ब्याद्यञ्जन**–न., अञ्जन० सैन्धवहरित-मुद्गादिभिर्निर्मितमञ्जनम् । एतद्दिवान्धानां प्रशस्तम् ( सुउ. १७.२७ )
**–भल्लातक**–पु., भल्लातकभेदः, नदीपिप्पलिका ( ड. ) गण्डोपली ( ड. ) शीतपूतनाजुष्टे परिषेकार्थ-मुपयुज्यते ( सुउ. ३४.५; का बालग्रहचि. )
चुच्चवादिवर्गोक्तं शाकम् । नन्दीभल्लातकः, अस्याऽऽमानि फलानि पल्लवाश्च शाकत्वेनोपयुक्ताः ( सुसू. ४६.२४९ )
**–माषक**–पु., शाक० नन्दीमाषकः, वानीरकः, अयं विशदो गुरुः शीतः समभिष्यन्दी च ( चसू. २७.११४ )
**–वट**–पु., वनस्पति० वटभेदः, वटी ( रा. ११.११६ )
**–सर्ज**–पु., वनस्पति० अर्जुनः ( ध. ५.११४ )
**नद्याम्र**–पु., वनस्पति० आम्रभेदः, समष्ठिलः ( रापरि. ४.१ )
**नद्युदुम्बरिका**–स्त्री., वनस्पति० उदुम्बरभेदः ( रा. ११.१४० ) द्र० ' उदुम्बर '
**नन्द**–पु., सर्प० दिव्यसर्पः ( असंउ. ४१. )
**( नन्दा )**–स्त्री., वनस्पति० स्नुही ( चक. १०.८ )
आरामशीतला ( रापरि. १०.५२ )
**( नन्दी )**–स्त्री., वनस्पति० तुण्डेरिका ( अरु. अहृसू. ६.९२ )
**नन्दकधूप**–पु., धूप० घृतं त्वचा तरक्षोर्बिड्लोमचर्माणि प्रसहानां पुरीषं च । एतेषां धूपो ग्रहापहः ( का. धूपकल्प )

**नन्दन**–पु., स्थावरविष० विषवृक्षोऽयम्, अस्य फलं त्वक् सारो निर्यासश्च विषमयः । फलेन मुष्कशोफदाहाऽन्नद्वेषा भवन्ति । त्वक्सारनिर्यासैरास्यदौर्गन्ध्यपारुष्यशिरोरुक्कफसंस्रवा भवन्ति ( सुक. २.५ )
वि., आह्लादकरम्, हर्षकरम् ( चसू. ३०.१५ )
**–ज**–न., वनस्पति० हरिचन्दनम् ( रा. १२.१९ )
**नन्दनक**–पु., फलविष० नन्दनः ( असंउ. ४० )
**नन्दिक**–पु., वनस्पति० नन्दिवृक्षः ( ध. ३.१८ )
**नन्दिकेश्वर**–पु., देवता० षष्टिबालग्रहस्य पञ्चमो भ्राता ( का. बालग्रहचि. )
**नन्दिन्**–पु., वनस्पति० गुच्छकरञ्जः ( रा. ९.१८४ )
अपामार्गः ( ४.३८८ )
नन्दिवृक्षः ( रा. १२.३१; अहृसू. १५.४१ )
जयवृक्षः ( अरु; अहृसू. १५.४१; असंसू. १६.३५ )
मेषशृङ्गी ( हे अहृसू. ६.७७ )
प्राचीनो रसाचार्यः ( र. १.५-९; र. ९.६४-६६ )
रसमण्डपे पूजनीया देवता ( र. ६.२५ )
**( नन्दि )–तरु**–पु., वनस्पति० धवः ( ध. परि ५.४ )
**–वारल**–पु., मत्स्य० सामुद्रोऽयम् ( सुसू. ४६.११८ )
**–वारलक**–पु., मत्स्य० सामुद्रोऽयम् ( सुसू. ४६.११८ )
**–वृक्ष**–पु., वनस्पति० तद्गुणाः – कटुस्तिक्तः सुगन्धी पुष्टिवीर्यदोऽस्रदाहजिच्छिरोर्तिश्वेतकुष्ठघ्नश्च ( ध. ३.१८ )
**( नन्दिनी )**–स्त्री., वनस्पति० हरीतकी ( ध. १.२०५ )
रेणुका– ( ध. ३.५१ )
**नन्दी**–स्त्री., वनस्पति० तुण्डेरिका ( अरु. अहृसू. ६.९२ )
**–माषक**–पु., वनस्पति० वानीरकः ( हे ) वानीरः ( अहृसू. ६.९२ )
**–मुख**–पु., पक्षि० प्लवजातीयोऽसौ ( चक. १.८ )
आटीभेदः पत्राटी ( सुसू. ४६. १०५ )
व्रीहि० आडीचञ्चुसदृशस्तण्डुलः ( सुसू. ४६.१२ )
**–मुखमुख**–न., यन्त्र० स्वस्तिकयन्त्रम्, पत्राटी-मुखसदृशम्, इदं शल्योद्धरणार्थमुपयुज्यते ( सुसू. ७.१० )
**–मुखी**–स्त्री., जलचरपक्षि० पत्राटी ( चसू. २७.४३ )
कुधान्य० मर्कटहस्ततृणभेदः ( सुसू. ४६.२१ )
गोधूमभेदः, तद्गुणाः–पथ्या शीता कषायमधुरा लघुश्च ( अहृसू. ६.१६ )
**–वृक्ष**–पु., वनस्पति० प्ररोही गर्दभाण्डः, पार्श्व-पिप्पलः ( ड. ) न्यग्रोधादिगणोक्ता गुणाः–व्रण्यः

सङ्ग्राही भग्नसाधको रक्तपित्तहरो दाहमेदोघ्नो योनिदोषहृच्च ( सुसू. ३८.४८–४९; ) ( असंसू. १६.३२ ) अम्बष्ठादिगणोक्ता गुणाः –पक्वातीसार-नाशनः पित्ते हितश्च ( सुसू. ३८.४६–४७; अहृसू. १५.३८ )

काश्मरी ( द्र. सुसू. ३८.४६–४७ )

**नन्दीश्वर**–पु., प्राचीनो रसाचार्यः ( र. १५.४४–५२ )

**नन्द्यावर्त**–पु., वनस्पति० तगरम् ( र. २३.४६ )

**नन्द्यास्य**–पु., जलचरपक्षि० नन्दीमुखः आटीभेदः (अहृसू. ७.८१–८३)

**नपुंसक**–न., न स्त्री न च पुमान्, क्लीबः ( सुशा. ३.५; असंशा. २.३८)

**–कर**–वि., नपुंसकत्वव्यञ्जकं चिह्नम् ( चशा. ४.१४ )

**नप्तृका**–स्त्री., पक्षि० घुडुरुका, इयं विष्किरजातीया हुङ्कारकारिणी पाण्डुरोदराऽल्पा च ( सुसू. ४६.५९ )

**नभ**–न., वनस्पति० कमलम् ( रा. १०–२४३ ) मास० श्रावणः (चक. चसि. ६.५)

**नभस्**–पु., कालविभाग० श्रावणः द्वादशमासानामेकतमः ( सुसू. ६.६ )

**–वत्**–पु., वायुः ( र. १२.१-८ ) अत्र नभवत्पदं तज्जन्यपक्षवधादिवातरोगाभिप्रायकम्

**नभस्य**–पु., कालविभाग० भाद्रपदः द्वादशमासानामेकतमः ( सुसू. ६.६ )

**–प्रथम**–वि., नभस्याद् भाद्रपदात्प्रथमः पूर्वो मासः श्रावणः ( चसू. ७.४६ )

**नमस्करी**–स्त्री., वनस्पति० लज्जालुः ( असंसू. १६.३२; अहृसू. १५.३८ )

**नमस्कारी**–स्त्री., वनस्पती० लज्जालुः ( ध. ४.१०९ )

**नमेरु**–पु., वनस्पति० देवदारुः ( का. जातिसूत्रीय शा.) सुरपुन्नागः ( रापरि. १०.१० )

**नयन**–न., शारीर० नेत्रम् नीयते दृष्टिविषयोऽनेन इति नयनम् ( असंशा. ९.११ )

**–प्रवेश**–पु., लक्षण० नेत्रस्यान्तर्गमनम् ( असंसू. २७.३७ )

**–प्लव**–पु., लक्षण० नयनयोरश्रुपूर्णत्वम् ( सुउ. ३९.२५ )

**–बुद्बुद**–न., अक्षिगोलकः ( सुउ. १.१० )

**–संमीलन**–न., नेत्रसङ्कोचः ( सुसू. ४२.१० (२ )

**नयनान्तर**–न., प्रत्यङ्ग० नयनयोर्मध्यम् (सुसू. ३५.१२)

**नयनाभिघात**–पु., ( परिव० ) नेत्रस्याऽऽघातः ( सुउ. १९.१ )

**नयनाभिघातप्रतिषेध**–पु., अध्याय० ( सुउ. १९. )

**नयनामय**–पु., नेत्ररोगः ( असंसू. ३२.६ )

**नर**–पु., पुमान्, पुरुषः ( सुशा. ४. ९७. )

**–कामा**–वि., पुंस्यभिलाषवती ( स्त्री ) ( सुशा. ३.७–८. )

**–चेष्टिता**–स्त्री., नारीषण्ढः ( सुशा. २.४३ )

**–नामन्**–पु., वनस्पति० नीलः ( रापरि. ९.११ )

**–वारि**–न., नरमूत्रम्, इदं रसकशुद्ध्यर्थमुपयुक्तम् ( र. १३.१—१० )

**–वाहन**–पु., रसवैद्यः, सप्तविंशतिसङ्ख्याकेष्वन्यतमो रससिद्धिप्रदायकः ( र. १.२–५ )

**–षण्ड**–पु., क्लीबः पुरुषः ( चशा. २.१७ )

**नराधिप**–पु.,वनस्पति० कृतमालः ( द्र. ) कर्णिकारः ( सुचि. ३७.११ )

**नरिष्यत्**–पु., मनुपुत्रः ( चचि. १९.४ )

**नरेन्द्र**–पु., वनस्पति० किरमालकः (द्र.) आरग्वधः ( सुक. ५.६१ )

प्राचीनो रसाचार्यः ( र. १.५–९ )

**नरेन्द्रद्रुम**–पु., वनस्पति० आरग्वधः ( सुचि. ९.४० )

**नर्तक**–पु., वनस्पति० नलः (ध. ४.१४१)

**( नर्तकी )**–स्त्री., वनस्पति० नलिका ( ध. ३.४३ )

**नल**–पु., वनस्पति० तृण० धमनः (सुचि. ५.८ ) दूर्वा-काराङ्कुरोऽन्तःसुषिरस्तृणविशेषः, तृणपञ्चमूलेष्वेकः ( सुसू. ३८.७५ ) अस्य मूलं रक्तपित्ते प्रलेपार्थमुपयुक्तम् ( चचि. ४.१०२ ) श्वदंशे पानलेपनयोर्हितं ( असंउ. ४६. ) पित्तशोफे प्रलेपार्थमुपयुक्तम् ( सुसू. ३७.४ ) नलगुणः – कषायो मधुरः शीतो रुच्यो दीपनो वीर्यवृद्धिकरः पित्तघ्नो मूत्ररक्तपित्तघ्नश्च ( ध. ४.१४१ ) वीरतर्वादिवर्गोक्ता नलगुणाः– वातघ्नोऽश्मरीशर्करामूत्रकृच्छ्राघातरुजाहरः ( सुसू. ३८.१०–११; असंसू. १६.१८; अहृसू. १५.२४ )

हिं.––नरसल, नल.

म.––लघुदेवनळ.

गु.––नडगल, नाळी.

बं.––नल.

त.––कोरुक्के, तण्टरुम्पुल्लु

**( नली )**–स्त्री., वनस्पति० नलिका ( ध. ३.४३ )

द्र० ' नर्तकी. '

न., वनस्पति० रक्तपद्मम् ( ध. ४.१५२ )

**–द**–न., वनस्पति० जटामांसी ( चसू. ४.११; सुउ. ३१.४; असंउ. ४५; अहृसू. २१.१३ )

वनस्पति० उशीरम् (सुउ. ३९.१७३; असंउ. २८)
उशीरभेदः लामज्जकम् ( सुक. ६.१४ )
( -दा )-स्त्री., वनस्पति० जटामांसी ( ध. ३.४५ )
**नलक**-पु. वनस्पति० कलायः ( ध. ६.१०३ )
( **नलिका** )-स्त्री., वनस्पति० इन्दीवरी (रापरि. ३.२७)
नलिकागुणाः-मधुरा तिक्ता कटुः शीता तीक्ष्णा गुरुर्मलशोधनी रक्तपित्तविषकृमिवातोदरार्शःशूलघ्नी च ( ध. ३.४३; चचि. २८.१५२; र. २९.१२१-१२२ )
**नलकास्थि**-न., अस्थिप्रकार० नलकवदस्थि हस्तपादाङ्गुलितले कूर्चेषु मणिबन्धयोर्बाहुजङ्घाद्वये च नलकास्थीनि भवन्ति (सुशा. ५.२०; असंशा.५.७२)
एतानि च भज्यंते ( सुनि. १५.१६ )
**नलिका**-स्त्री., र. ६.४३ )
**-यन्त्र**-न., यन्त्र० नलिकायन्त्रम् ( र. ९.४३ )
नलिकाघटितं तैलादिनिष्पीडनयन्त्रम् (र. २१.७०)
**नलिन**-न., वनस्पति०रक्तपद्मम् ( चचि. ३.२५८ ) ( सुसू. १३.१४; ध. ४.१५२ )
श्वेतमष्टदलपद्मम् ( चक. चसू. २५.४९ )
कमलम् ( चसू. ४.१५; रा. १०.२४३ )
फञ्जीचिल्यादिगणोक्तं शाकम्, पद्ममृणालम् ( चसू. २७.१०१ )
**नलिन-केशर**-न., पद्मकेशरम् ( सुसू. ३८.४१ )
**नलिनी**-स्त्री., वनस्पति० पद्मिनी ( ध. ४.१५७ )
**-भवपङ्क** (परिव०)-पु., पद्मतलकर्दमः ( सुचि. २५.२९ )
**-रुह**-न., वनस्पति० बिसम् ( ध. ४.१६१ )
**नलिनीका**-स्त्री., फञ्ज्यादिगणोक्तं शाकम्, पद्ममृणालम् ( चसू. २७. १०१ )
**नल्व**-पु., मान० द्रोणः ( असंउ. ५ )
**नल्वण**-पु., न., मान० द्रोणः ( चक. १२.९५; असंक. ८.; र. ११.८-९ )
**नव**-पु., वनस्पति० पुनर्नवाभेदः, रक्तपुनर्नवा ( रा. ५.४०८ ) द्र० 'पुनर्नवा'
( **नवा** )-स्त्री., वनस्पति० पुनर्नवा ( र. २६.२४ )
न., खनिज० अभ्रकम् ( धपरि. ६.३-४ )
वि., सद्योजातम्, तत्कालाहृतम्, नूतनम्, नातिजीर्णम् ( सुउ. २४.१८; सुसू. ४६.३३९ )
संख्या० एकोनदश ( सुउ. २७.१ )
**-ग्रहाकृतिविज्ञानीय**-वि., अध्यायसंज्ञा०(सुउ. २७)
**-ज्वर**-पु., रोग० तरुणज्वरः ( चचि. ३.१३८-१३९; र. १२.११० )
**-ज्वरमुरारि**-पु., पारदयोग० पारदगन्धकमनःशिलानां समप्रमाणानां कर्कोटिकारसेन संमर्दनात् सिद्धो रसः शर्करानुपानोऽसौ तण्डुलीयकरसानुपानो वा; नवज्वरनाशनः ( र. १२.१६४-१६६ )
**-ज्वरारि**-पु., पारदयोग० प्रत्येकं कर्षसंमितयोः शुद्धपारदगन्धकयोः कृतां कज्जलीमार्द्रकरसेन विमर्द्य गोलकं कुर्यात्। नवमृत्पात्रे तं गोलकं ताम्रपात्रेणाच्छाद्य व्रीहिस्फुटनमात्रं वालुकायन्त्रे विपचेत्। ततः सिद्धोऽयं रस आर्द्रकरसानुपानो नवज्वरविनाशनः ( र. १२.१४२-१४७ )
**-द्रु**-पु., वनस्पति० प्रियालः ( रा. ११.१०२ )
**-धान्य**-न., न्यूनसंवत्सरोषितं धान्यम् ( सुसू. ४६.५१ )
तद्गुणाः - अभिष्यन्दी दोषधातुमलस्रोतसां क्लेदको दोषसञ्जननः पूयवर्धनश्च ( सुसू. १९.१७; सुसू. ४६.५१; अहसू. २९.३९-४० )
**-धान्यादिवर्ग**-पु.,न्यूनसंवत्सरोषितानां शालिव्रीहिषष्टिकादीनां माषतिलकलायकुलत्थादीनां च गणः
**-ध्वान**-पु., देश० कुरुक्षेत्राद्दक्षिणदेशः ( काखिल. २५.१२ )
**-नीत**-न., आहारद्रव्य० तक्रजः स्नेहः।
तद्गुणाः मधुरं शीतं स्निग्धं मधुरविपाकि हृद्यं रोचनं दीपनं ग्राहि चक्षुष्यं वृष्यं जीवनं बृंहणं वातपित्तघ्नं क्षयारुच्यर्दितप्लीहग्रहण्यर्शोक्षिरोगरक्तपित्तविषोन्मादशोफघ्नं च ( ध. ६.२२९; र. २३.१९ ) क्षीरोद्भवनवनीतगुणाः-संग्राहि रक्तपित्ताक्षिरोगजिच्च ( सुसू. ४५.९३; असंसू. ६.७३; अहसू. ५.३६ ) नवोद्धृतनवनीतगुणाः-संग्राहि दीपनं हृद्यं ग्रहण्यर्शोघ्नमर्दितारुचिनाशनम् ( चसू. २७.२३० ) वृष्यमविदाहि क्षयकासव्रणशोषघ्नं पित्तानिलहरं च (सुसू. ४५.९२ ; अहसू. ५.२५; असंसू. ६.७२),
**-नीतक**-न., नवनीतम् नवनीतमेव नवनीतकम्, ( र. २०.२०० )
**-नीतज**-न., भैषज्य० घृतम् ( ध. ६.१४४ )
**-नीतोद्भव**-न., भैषज्य० नवनीतमुद्भवति, अथवा उद्भवति अस्मात् इति उद्भवः कारणम्, नवनीतमुद्भवः कारणं यस्य तत्, कार्ये कारणोपचारात् दधि ( ध. ६.१८८ )
**-पीनस**-पु., अपक्वपीनसः ( अहसू. २०.१२ )
**-प्रसूता**-स्त्री., नवसूतिका ( सुचि. ३३.३० )

**–मद्य**–न., अनतीतसंवत्सरं मद्यम्, तद्गुणाः – अभिष्यन्दि गुरु वातादिकोपनमनिष्टगन्धि विरसमहृद्यं विदाहि च ( सुसू. ४५.१९२–१९३ )

**–मालिका**–स्त्री., पुष्प० वनमल्लिका ( असंसू. २१.४ )

**–लोचन**–वि., नव लोचनानि यस्य स क्रोधाग्निज्वररूपः ( चचि. ३.२३ )

**–विध**–वि., नवप्रकारम् ( हे. अहृसू. २३.२५ ) अयं शब्दष्टीकायामेव वरीवर्ति ।

**–सार**–पु., सार० नवसादरः, अष्टसु साधारणरसेष्वेकः ( र. ३.१३४ ) करीरपीलुकाष्ठेषु पच्यमानेषूद्भूतः क्षारः, तद्गुणाः – तीक्ष्णः क्षारः सरो जठराग्निकृन्मांसजारणो रसेन्द्रजारणो लोहद्रावणो गुल्मोदरविष्टम्भशूलप्लीहाऽ ऽस्यशोषघ्नश्च ( ध.२.१–४ )

**–सारक**–पु., क्षार० नवसारः ( र. ३.१३४–१३५,

**नवाङ्गिनी**–स्त्री., वनस्पति० कर्कटशृङ्गी ( ध. १.८५ )

**नवायसचूर्ण**–न., योग० त्रिफलाचित्रकत्रिकटुविडङ्गमुस्तानां नव भागाः, तावन्त एव च कृष्णायश्चूर्णस्य भागाः । एतेषां मिश्रणाजातं चूर्णम् । कृष्णात्रेयेण कथितमेतत् । एतत् पाण्डुरोगहृद्रोगकुष्ठार्शःकामलापहं तथा दीपनं शोफाविपाककासश्वासप्रमेहनाशनं च ( चचि. १६.७०–७१; सुचि. १२.११;असंचि. १४. )

**नवालाम्बु**–स्त्री., वनस्पति० कुम्भतुम्बी ( रा. ७.२३६ )

**नवेगान्धारणीय**–वि., अध्याय० ( चसू. ७. )

**नवोद्धृत**–वि., सद्यस्कम् ( चसू. २७.२३० )

**नवौदन**–पु., नवतण्डुलनिर्मितमन्नम् ( असंसू. ४.१७ )

**नव्य**–पु., पुनर्नवाभेदः, रक्तपुनर्नवा ( रा. ५.४०८ ) द्र० ' पुनर्नवा '

**नष्ट**–वि., अन्तर्हितम् ( सुउ. ४७.१२ )

**–कर्मक्रियागुण**–वि., लक्षण० नष्टानि कर्माणि क्रिया–गुणाः क्रियाफलानि च यस्य ( सुउ. ४७.१२ )

**–निद्र**–वि., लक्षण० विगतनिद्रः ( अहृसू. ५.६४ )

**–पिष्ट**–वि., बन्ध० नष्टचाञ्चल्यादिरूपः पारदो मूर्तिबद्धरूपः सन् नष्टपिष्टः इत्युच्यते ( र. ८.६६ )

**–पिष्टि**–स्त्री., नष्टपिष्टत्वम् ( र. ८.६६ )

**–पुष्पा**–वि., विगतार्तवा ( काधात्री चि. )

**–मानस**–वि., लक्षण० अपस्मरणः ( ड. सुउ. ४६.१२ )

**–रक्त**–न., आर्तवनाशः ( सुशा. २.२२ )

**–संज्ञ**–वि., लक्षण० संज्ञानाशस्वरूपव्याधिलक्षणविशेषयुक्तः ( चसू. १४.१७ ) विषयग्रहणशक्तिरहितः ( सुक. ५.४३ )

**–सिर**–वि., समुद्धृतसिरासन्ततिः ( चक्र. चसि. ३.११ )

**–सूर्य**–वि., सूर्यस्यादर्शनं यत्र सूर्यालोकरहितम् ( अहृसू. ३.२४ )

**–स्वरता**–स्त्री., लक्षण० आत्यन्तिकः स्वराभावः ( सुसू. ३२.४ )

**नस्तस्**–( अव्य., ) नासिकांतः, नासिकायां वा

**( नस्त ):–कर्मन्**–न., नस्यकर्म ( चसि. ९.८९; चनि. १.३६)

**–तर्पण**–न., उपक्रम० नस्यम् ( चसू. १३.२५ )

**–प्रच्छर्दन**–न., शिरोविरेचनम् ( चसू. १.८५ )

**नस्य**–न., उपक्रम० व्रणस्य षष्ट्युपक्रमेष्वेकः, स्नैहिकं नस्यम्, इदं रुजावत्सु वाताऽऽविष्टेषु रूक्षेपूर्ध्वजत्रुजेषु व्रणेषु च देयम् (सुचि. १.१२६) तन्निरुक्तिः– औषधमौषधसिद्धो वा स्नेहो नासिकाभ्यां दीयते इति नस्यम् ( चसि. ९.८८; सुचि. ४०.२१; अहृसू. २०.१ )

तद्विविधम्– शिरोविचनं स्नेहनं च ।

तदपि पञ्चविधम्– नावनमवपीडो ध्मापनं धूमः प्रतिमर्शश्च ( चसि. ९.८९ ) तथा–नस्यं शिरोविरेचनं प्रतिमर्शोऽवपीडः प्रधमनं च (सुचि.४०.२१) तत्र प्रतिमर्शः स्नेहनस्यम् । स मर्शप्रतिमर्शभेदेन द्विधा, कल्कादिभिरवपीडः, तीक्ष्णकल्कादिभिर्मूर्धविरेचनः, विरेचनश्चूर्णो ध्मानम् ( अहृसू. २०.७ ) तत् त्रिविधम्– विरेचनं बृंहणं शमनं च ( अहृसू. २०.२; असंसू. २९.४ ) तत्र नावनं स्नेहनशोधनभेदेन द्विविधम्, अवपीडः शोधनस्तम्भनभेदेन द्विधा, धूमः प्रायोगिकवैरेचनिकस्नैहिकभेदेन त्रिविधः ( चसि. ९.९०–९२ ) तत्र शिरोविरेचनं स्तम्भसुप्तिगुरुत्वादिश्लैष्मिकशिरोरोगेषु शस्यते ( चसि. ९.९३; सुचि. ४०.२३; असंसू. २९. ५; अहृसू. २०. २,३ ) तर्पणं शिरःकम्पार्दितादिवातात्मिकेषु रोगेषु शस्यते ( चसि. ९.९४ ) शमनं च रक्तपित्तादिरोगेषु केशदोषेषु च शस्यते ( चसि. ९५; असंसू.२९.७; अहृसू. २०.७ ) बृंहणं वातजशूले तथा सूर्यावर्तस्वरक्षयनासास्यशोषवाक्सङ्गकृच्छ्रोन्मीलनाऽवबाहुकेषु शस्यते ( असंसू. २९.७; असंसू. २०.७ )

विरेचननस्यद्रव्याणि – यथास्वं यौगिकाः स्नेहाः सर्षपतैलादयः, मरिचशुण्ठ्यादिसाधितकल्कक्वाथादयः, मधुसैन्धवमासवाश्च ( असंसू. २९.७; अहसू. २०.५ ) बृंहणद्रव्याणि – धन्वमांसोत्थरसा रुधिरं मोचरसादिर्बृंहणद्रव्यसाधितस्नेहाश्च ( असंसू. २९.६; अहसू. २०.६ ) शमनद्रव्याणि धन्वमांसोत्थरसादीनि शमनौषधसाधितस्नेहादीनि क्षीरोदकान्यणुतैलं च ( असंसू. २९.७; अहसू. २०.६ ) दोषभेदान्नस्यद्रव्याणि – केवलवाते वसा, पित्ते सर्पिः, सवाते कफे तैलम् समारुते पित्ते मज्जा च ( सुचि. ४०.५६–५७ ) नस्यकालः – दोषभेदाद्–वातरोगेष्वपराह्णे रात्रौ च, श्लेष्मरोगेषु प्रातः, पित्तरोगेषु च मध्याह्ने नस्यं देयम्. ( अहसू. २०.१३ ) ऋतुभेदात् – शीते दिनमध्ये ग्रीष्मे सायं वर्षासु च विद्यमाने आतपे नस्यं देयम् ( अहसू. २०.१५ ) वयोभेदाद् – ऊनसप्ताब्देऽतीताशीतिवत्सरे च नस्यं न देयम् ( अहसू. २०.३०; असंसू. २९.२१ ) प्रतिमर्शस्त्वाबाल्याद् यावदायुस्तथा तल्पोत्थितादिचतुर्दशसु कालेषु शस्यते ( सुचि. ४०.५१ ) नस्यमात्रा – तत्र मर्शस्य दश बिन्दव उत्कृष्टा मात्रा, अष्टौ बिन्दवो मध्यमा मात्रा, षट् बिन्दवश्च कनिष्ठा मात्रा । प्रतिमर्शोऽवपीडशिरोविरेचनानामुत्तममध्यमकनिष्ठा मात्रा अष्टषट्चतुर्बिन्दवः ( सुचि. ४०.२६; अहसू. २०.१० ) नस्यप्रदानविधिः – उत्तानशयानस्य प्राक्कृतावश्यकस्य किञ्चित् प्रलम्बशिरसः किञ्चित् पादोन्नतस्य नरस्य नासापुटे स्नेहं दद्यात् । ग्रीष्मे प्राक्सूर्ये, शीते मध्यसूर्ये च नस्यं दद्यात् (चसि. ९.९८-१००) नस्यान्ते वाक्शतमुत्तानं तिष्ठेत् । अनन्तरं कण्ठशुद्धये धूममुष्णाम्बु कवलांश्च सेवेत ( अहसू. २०-२२ ) नस्यस्य हीनातियोगादयः– सम्यग्योगे सुखोच्छ्वासः स्वप्नबोधाक्षपाटवानि भवन्ति ( सुचि. ४०.३३- असंसू. २९.३८; अहसू. २०.२३ ) अतियोगे कण्डूगुरुताप्रसेकारुचिपीनसा इन्द्रियविभ्रमाश्च भवन्ति ( सुचि. ४०.३४; अहसू. २०२३; असंसू. २९.१८) अयोगेऽक्षिस्तब्धता नासास्यशोषो मूर्धशून्यता च भवति ( सुचि. ४०.३५ ) नस्यव्यापदः – हीनातिमात्रादिभिस्तृष्णोद्गारादयो दोषनिमित्ता दोषक्षयजाश्च व्याधयो भवन्ति । ( सुचि.४०.४८ )

नस्यायोग्याः – तोयमद्यगरस्नेहपीतानां भुक्तभक्तशिरःस्नातस्तु कामानां स्रुतासृजां दत्तबस्तीनां शुद्धानां च न देयम् । तथाऽनार्तवे दुर्दिनेषु च न देयम् ( चसि. २.२०; सुचि. ४०.४७; असंसू. २.१२) नस्येनोर्ध्वजत्रुजा रोगा शाम्यन्ति । इन्द्रियाणां वैमल्यमास्यसौगन्ध्यं च भवति । हनुदन्तशिरोग्रीवात्रिकबाहूरसां बलं वलीपलितखालित्यनाशश्च व्यङ्गानां भवति ( सुचि. ४०.५४–५५ ) नस्यशीलिनो घनोन्नतप्रसन्नत्वक्स्कन्धग्रीवास्यवक्षसो दृढेन्द्रिय अपलिता भवन्ति (चसू.५.५७-६२; अहसू. २०.३९; कासिद्धि. ४ )

**–कर्मन्**–न., नासाद्वारेण भेषजदानम् ( चसू. ५.५७ )

**–शीलिन्**–वि., नस्याभ्यासी ( अहसू. २०.३९ )

**नस्यानर्ह**–वि., नस्यायोग्यः ( सुचि. ४०.४७ )

**नहुष**–पु., नृप० सोमवंशीयोऽसौ ( काफकचि. )
न., वनस्पति० तगरम् ( ध. ३.५३ )

**नाकलायक**–पु., वनस्पति० व्रीहि ( रा. १६.१०२ )

**नाकिनी**–स्त्री., ग्रह० रेवती ( का. रेवतीकल्प. )

**नाकुलान्ध्य**–न., नेत्ररोग० नकुलान्ध्यम् ( सुउ. १.३९ )

**नाकुली**–स्त्री., वनस्पति० सर्पसुगन्धा ( जज्जट ) ( चचि. ३.२६७; इन्दु. असंसू. ४२ )
चविका (चक. चचि. ३.२६७; इन्दु. असंसू. ४२; र. १७.४३ )
रास्ना ( चचि. २३.२१२; इन्दु. असंसू. ४२ )
शङ्खिनी ( ध. १.२५६ )
नाकुलीगुणाः–कटुस्तिक्तोष्णा त्रिदोषघ्नी मूषकविषकृमिघ्नी च ( ध. ४. १०३ ) वृश्चिकसर्पविषनाशिनी, व्रणरोपिणी ( र. १८.६२–६३ )
हिं.—नकुलकन्द, चन्द्रा.
**म.—मुंगुसकांदा, सांपसंद, नावळी.**
गु.—नकुलकन्द, नोळवेल.
बं.—नाकुली, चन्द्रा.
त.—चिवन्त, अमल्पोरि.
फा.—विषमुंगरी, छोटाचांद.

**–द्वय**–न., रास्ना तृणरास्ना च ( चचि. ९.४६ )

**नाकुलीयक**–पु., वनस्पति० नाकुली (असंसू. ८.१२२)

**नाक्षत्रिकनामन्**–न., जन्मनक्षत्रसम्बन्धकृतं नाम ( चशा. ८.५० )

**नाग**–पु., खनिज० सीसकम् ( र. १.४१ )
वनस्पति० नागकेसरः ( सुसू. ४५.१२; र. २१.२५–२८ )

ताम्बूलम् ( र. २४.१३६ )
एरण्डः ( र. २१.२५–२८ )
सल्लकी ( असंशा. ४.३८ )
ग्रह० भुजङ्गमः ( सुउ. ६०.३६ )
देवयोनि० वासुक्यादिः ( सुसू. ५.२१ )
पशु० गजः ( सुचि. २८.२६ )
न., सुगन्धि० नखम् ( इन्दु. असंउ. ८ )
खनिज० सीसकम् ( ध. ६.२१ )
नागकेसरम् ( सुसू. ४६.२८७; ध. २.४८ )
वत्सनाभः ( ध. ७.१२८ )

**(नागा)**–स्त्री., वनस्पति० नाकुली ( र. २१.२९ )

**–कन्द**–पु., वनस्पति० हस्तिकन्दः ( रापरि. ७.३६ )

**–करण्डक**–पु., हस्तिदन्तविनिर्मितं सिद्धौषधिस्थापनपात्रम् ( र. १७.८३–८४ )

**–कर्ण**–पु., वनस्पति० एरण्डभेदः, रक्तैरण्डः ( र. २५.९८; रा. ८.४४६ ) द्र० 'एरण्ड'

**–किञ्जल्क**–न., वनस्पति० नागकेसरम् ( ध. २.४८ )

**–कुमारी**–स्त्री., वनस्पति० गुडूची ( ध. १.२ )

**–कुमारीका**–स्त्री., वनस्पति० मञ्जिष्ठा ( रा. ६.१७ ) गुडूची ( रा. ३.२ )

**–केसर**–न., वनस्पति० तद्गुणाः– तिक्तं अल्पोष्णं लघु कफवातघ्नं बस्तिरुग्विषवातास्रकण्डूशोफकण्ठशीर्षरुग्घरं च ( ध. २.४८ )
हिं.—नागकेशर.
**म.—नागकेशर.**
गु.—नागकेशर.
बं.—नागेश्वर.
त.—नाकेसुरं, नाकप्पू.

**–गन्धा**–स्त्री., वनस्पति० नाकुली ( रा. ७.१५२ )

**–गर्भ**–न., खनिज० सिन्दूरम् ( ध. ३.१०१ )

**–चपल**–न., अर्कदुग्धेन मर्दितं त्रिंशत्पलमानं सीसकं तावत्कालं पुटयेद् यावत्कालपर्यन्तं तत् कर्षावशिष्टं स्यात्। एतत् कर्षावशिष्टं सीसकं नागचपलमित्युच्यते। ( र. ८.४२–४३ )

**–चम्पक**–पु., वनस्पति० वनचम्पकः, तद्गुणाः– कटुरुष्णो वर्ण्यश्चक्षुष्यो वह्निस्तम्भको वातकफघ्नो व्रणरोपी च ( रा. १०.२४२ )

**–छत्रा**–स्त्री., वनस्पति० नागदन्ती ( रापरि. ५.२६ )

**–ज**–न., खनिज० सिन्दूरम् ( ध. ३.१०१ )

**–जिह्वा**–स्त्री., खनिज० मनःशिला ( ध. ३.९६ )

**–तुम्बी**–स्त्री., वनस्पति० भूतुम्बी ( रा. ७.२४१ )

**–दन्ती**–स्त्री., वनस्पति० काष्ठपाटला, इयमपस्मारे नावनार्थमुपयुक्ता ( चक्र. चचि. १०.४२ )
दन्तीभेदः (चक्र. चचि. २३.२४१)
दन्ती ( ड. सुसू. ३८.१६–१७ )
इन्द्रवारुणीभेदः ( सुक. ६.३ )
पर्वपुष्पिका (अरु.) पर्वपुष्पी ( हे. अहृसू. १५.२८ )
श्वेतपुष्पी– ( ध. १.२५२; असंसू. १६.२९ )
नागदन्तीगुणाः– कटुस्तिक्ता रूक्षा मेधाकृत् पाचनी शुभदायिनी वातकफापहा विषदोषघ्नी गुल्मशूलोदरव्याधिकण्ठदोषनिकृन्तनी च ( रापरि. ५.२६ )

**–दमनी**–स्त्री., वनस्पति० जम्बूः ( रापरि. ५.२४ )
वन्ध्यकर्कोटकी– ( ध. १.१८६ )
बलामोटा– ( ध.परि. ४.३ )
नागदन्ती– ( र. २५.१०९ ) द्र० 'नागदन्ती.

**–पत्नी**–स्त्री., वनस्पति० लक्ष्मणा ( रापरि. ७.५५ )

**–पित्त**–न., हस्तिनः पित्तम्, एतत्सिद्धं तैलमपस्मारे पानाभ्यङ्गेषु प्रशस्तम् ( सुउ. ६१.२४-२५ )

**–पुरग**–न., खनिज० सीसकम् ( रा. १३.२० )

**–पुष्प**–न., वनस्पति० नागकेसरम् ( चचि. १४.१६१; सुउ. ४७.३०; सुसू. ३८.४५; ध. २.४८ )
नागकेशरपुष्पसमपुष्पो महातरुः ( ड. सुसू. ३८.२४–२५ )

**–पुष्पफला**–स्त्री., वनस्पति० कूष्माण्डम् ( रा. ७.२६९ )

**–पुष्पिका**–स्त्री., वनस्पति० यूथिकाभेदः ( रा. १०.२५१ ) द्र० 'यूथिका'

**–फल**–पु., वनस्पति० पटोलः ( रा. ३.७४ )

**–बला**–स्त्री., वनस्पति० क्षतक्षीणे पुष्ट्यायुर्बलाऽऽरोग्यकरी। ( चचि. ११.९१ ) पानाल्यये शमनार्थं प्रशस्ता (सुउ.४७.३४) शोषघ्नी (का राजक्ष्मचि.)
तद्गुणाः— मधुराम्ला कषाया कटुस्तिक्तोष्णा (बल्या) ( असं. ) वातघ्नी (क्षतक्षीणहिता) ( असं. ) कण्डूतिकुष्ठव्रणपित्तविकारघ्नी च ( ध. १.२८४; असंसू. १२.८३; र.२०.१९–२२ )
हिं.—गुलसकरी.
**म.—गांगेटी, तुकाटी, खरेटी.**
गु.—गंगेटी, काण्टालोबल.
बं.—गोरखचाकुले, गोरखचाकुलिया.
फा.—शालेते, दरित.

–बलाप्रयोग–पु., नागबलारसायनम्, अनेन शोषो नश्यति ( सुउ. ४१.५७ )
–बलाभ्यास–पु., नागबलायाः सततं शीलनं नाम सेवनम् ( असंसू. १३. ३ )
–बलारसायन–न., योग० नागबलाया मूलानां श्लक्ष्णपिष्टचूर्णस्य सततं सेवनम्। रसायनमिदं वयःस्थापनं शतायुःकरं च ( चचि. १(२).११ )
–बलासर्पिस्–न., घृत० पित्तरक्तक्षतक्षयकासघ्नं च ( असंचि. ५ )
–बुद्धि–पु., प्राचीनो रसाचार्यः ( र. ६.४९–५३ )
–बोधि–पु., प्राचीनो रसाचार्यः, रससिद्धिप्रदायकोऽसौ ( र. १.२–५ )
–बोधिन्–पु., प्राचीनो रसाचार्यः (र. १५.५८-६५)
–भू–स्त्री., वनस्पति० क्षुद्रपाषाणभेदः (रा. ५.२१५)
–मूत्र–न., हस्तिमूत्रम् ( सुसू. ४५.२२६ )
–मृत्तिका– स्त्री., वनस्पति० सल्लकी (असंशा. ४.३८)
–रङ्ग–न., फल० नारङ्गः (चसू. २७.१५६; ध. ५.२०)
–रेणु–पु., खनिज० सिन्दूरम् ( रा. १२.१६० )
–लता–स्त्री., वनस्पति० ताम्बूलम् (र. २७.३४-३६)
–वधू–स्त्री., पशु० हस्तिनी ( सुउ. ६४.१२ )
–वल्ली–स्त्री., लता० ताम्बूलम् ( र. ११.११० )
विघ्ना–स्त्री., वनस्पति० इन्द्रवारुणीभेदः ( सुउ. ६२.३१ ) द्र० इन्द्रवारुणी
नागदन्ती–श्वेतपुष्पी ( इन्दु. असंउ. ९ )
–शुण्डी–स्त्री., वनस्पति० डङ्गरी ( ध. १.१८१ )
–सुंदर–पु., पारदयोग० पारदगन्धकनागयुक्तः अयमतिसारगुदभ्रंशार्शःप्रवाहिकानाशनः ( र. १६.३६-४१ )
–स्फोता–स्त्री., वनस्पति० दन्ती ( रा. ६.३३८ )
नागदन्ती ( रापरि. ५.२६ )
–हनु–पु., सुगन्धि० नखम् ( ध. ३.५८ )
–हन्त्री–स्त्री., वनस्पति० वन्ध्यकर्कोटकी ( रा. ३.२७३ )
नागर–पु.न., मुस्ताभेदः पिण्डमुस्तः ( ध. १.४१ )
वनस्पति० शुण्ठी ( चसू. २.१८; ध. २.८२; असंसू. १६.२९ )
मुस्ता ( चक. चसू. २.२१ )
गर्जरम् ( ध. ४.६९ )
–धान्याम्भस्–न., शुण्ठीधान्यकानां जलम् (काथः) ( अहसू. १९.३३ )
–मुस्ता–स्त्री., वनस्पति० मुस्ता ( रा. ६.६१ )

नागरादिक्काथ–पु., योग० नागरदीप्यकादिसिद्धोऽयं क्वाथः शूलहरः ( सुउ.४२.१२७ )
नागरादिघृत–न., घृत० नागरत्रिफलादिसिद्धं घृतम् सर्वोदरघ्नं दीपनीयं च घृतमिदम् ( चचि. १३.११५–११६ )
नागराद्यचूर्ण–न., योग० इदं पित्तग्रहण्यां शस्तम् ( चचि. १५.१२९–१३२ )
नागराह्व–न., वनस्पति० शुण्ठी ( रा. ६.१३० )
नागादिवर्ति–स्त्री., पारदयोग० नागपारदामलकीमौक्तिकयुक्ता इयं पित्ताभिष्यन्दाधिमन्थादिरोगघ्नी ( र. २३.३९ )
नागाराति–स्त्री., वनस्पति० वन्ध्यकर्कोटकी ( रा. ३.२७३ )
नागारि–स्त्री., वनस्पति० वन्ध्यकर्कोटकी ( ध. १.१८५ )
नागार्जुन–पु., प्रसिद्धो रसाचार्यः ( र. ९.६४–६६ )
नागाह्व–पु., वनस्पति० नागचम्पकः ( रा. १०.२४२ )
द्र० 'चम्पक' ( ध. ५.१४२ ) वनचम्पकः
(नागाह्वा)–स्त्री., वनस्पति० ताम्बूली ( धपरि. ३.३ )
लक्ष्मणा ( रापरि. ७.५५ )
न., वनस्पति० नागकेसरम् ( असंसू. १६.८; अरु. हे. अहसू. १५.१४ )
नागाह्वय–न., वनस्पति० नागकेसरम् ( असंसू. १६.३७; अहसू. १५.४३ )
नागिनी–स्त्री., वनस्पति० नागदन्ती ( रापरि. ५.२७; र. ११.९०–९२ )
लक्ष्मणा ( रापरि. ७.५५ )
ताम्बूलम् ( र.२६.८–१० )
नागीय–न., वनस्पति० नागकेसरम् ( रा. ६.७३ )
नागेन्दु–स्त्री., वनस्पति० सठी ( रा. ६.८७ )
नागेन्द्रद्विज–पु., हस्तिदन्तः ( र. २३.६ )
नागोदर–पु., रोग० उपशुष्ककः तत्सम्प्राप्तिलक्षणम्–उपवासादिव्रतपराया गर्भिण्याःकदाहारेण वातप्रकोपकाहारविहारेण प्रतिमासमार्तवातिस्रवणेन च गर्भो वृद्धिं न प्राप्नोति। कालान्तरमवतिष्ठते। कुक्षिश्च परिहीयते। अस्पन्दनश्च भवति गर्भोऽल्पस्पन्दनो वा ( चशा. ८.२६; असंशा. ४.१३ र. २२.२८ )
सुश्रुते तु, शुक्रशोणितं वायुनोपरुद्धमवक्रान्तजीवं कदाचित्प्रलीयमानमकुथितमवतिष्ठते तस्य नागोदर इति संज्ञा ( सुशा. १०.५७ )
नाड–पु., पत्रपुष्पफलानां सुषिरः काण्डः ( चसू.१. ७३ )

**नाडिका**–स्त्री., काल० नाडयति भ्रंशयति कालं स्वपरिमाणेन इति नाडिका, त्रयोविंशतिः कलाः ( असंसू. ४.५ )

**नाडी**–स्त्री., दन्तनाडी ( सुचि. २२.२६ )
नलिका, नालम् ( चशा. ६.२३ ) ताम्रादिरचितनलिका (सुसू. २७.१७)
वंशादिनलिका ( अहसू. १७.१० )
प्रणालिका अन्त्रनाडी ( सुनि. ७.१७ )
शारीर० स्रोतः ( चवि. ५.९; असंशा. ६.५० )
शाक० नाडीचः तद्गुणाः–तिक्तं शीतं कटुपाकि कफपित्तहरं च ( चसू. २७.९७-९८ )
वनस्पति० गण्डदूर्वा (ध. ४.१४५)
रोग० नाडीव्रणः ( चसू. १३.४६; सुनि. १०.१० )
तन्निरुक्तिः–व्रणान्नाडीवत्-प्रणालीवत् पूयो वहतीति नाडी ( सुनि. १०.१० )
तन्निदानं सम्प्राप्तिश्च–पक्वशोफस्या भेदाद्व्रणेऽपथ्यसेविनश्च पूयो मांसादीननुप्रविश्य दूरमभिधावति ( असंउ. ३४ )
तत्स्थानम् — त्वङ्मांससिरास्नायुसन्ध्यस्थिकोष्ठमर्म्माणि चेत्यष्टौ स्थानानि ( सुनि. १०.९ )
तत्सङ्ख्या—वातजा, पित्तजा, कफजा, सन्निपातजा शल्यजा चेति पञ्च ( सुनि. १०.१०; असंउ. ३४ )
द्वन्द्वजास्तिस्रः वातपित्तजा पित्तकफजा वातकफजेति ( ड. सुनि १०.१० )
तत्र वातजा परुषसूक्ष्ममुखी सशूला विवर्णा रात्रौ अभ्यधिकफेनिलोद्गमा च ( सुनि. १०.११; असंउ. ३४ ) पित्तजा तृड्ज्वरदाहकृत् पीतोष्णपूतिपूयस्रावा दिवाऽत्यधिकस्राविणी च (सुनि. १०, ११; असंउ. ३४) कफजा विपुलसान्द्रधवलपिच्छिलस्राववती स्तिमितरुक् कठिना कण्डूला निश्यभ्यधिकक्लेदा च ( सुनि. १०.१२; असंउ. ३४ )
सन्निपातजा दाहज्वरश्वसनमूर्च्छनवक्त्रशोषकारिणी ( सुनि. १०.१३; असंउ. ३४ )
शल्यजा- अनाहृतमन्तःस्थितं शल्यं नाडीं करोति साऽल्पमुष्णं तनु फेनाऽनुविद्धं सास्रं सरुजं पूयं नित्यं वहति ( सुनि. १०.१४; असंउ. ३४ )
तत्साध्यासाध्यता-त्रिदोषप्रभवाऽसाध्या शेषाश्चतिस्रः यत्नसाध्याः ( सुचि. १७.१७ ) भेद्यरोगोऽसौ ( सुसू. २५.५-७ )

**नाडी-कलाय**–पु., सुवर्चलाभेदः, सकुलाक्षकः, तद्गुणाः – तिक्तं पाके कटुर्ग्राही वातलः कफपित्तजिच्च ( अहसू. ६.७७ )

–**कल्पनविधि**–पु, गर्भनाभिनाडीच्छेदनविधिः ( चशा. ८.४४ )
–**घ्न**–वि., नाडीहरम् ( सुचि. १७.३८ )
–**तिक्त**–पु., वनस्पति० किराततिक्तः ( रा. ९.५२ )
–**द्वय**–न., नलनालः एरण्डपत्रनालश्च (सुसू. १६.२९)
–**धूम**–पु., उपक्रम० नाड्या गृहीतो धूमः। कासप्रतिश्यायवतां शिरःपीडावतां नासायाः स्रावे हृदि च ताम्यति सति अष्टाङ्गुलोम्मितया दशाङ्गुलोम्मितया वा नाड्या धूमः प्रयोज्यः ( चचि. १८.६५-६६ )
–**भङ्गशाक**–न., नाडीपल्लवशाकम् ( सुसू. २०.१३ )
–**मार्ग**–पु., कण्ठस्रोतोमार्गः कण्ठनाड्यधोमार्गः ( र. १४.५२ )
–**मुखाकृति**–वि., लक्षण० नालिकामुखवदाकृतिमत् ( सुनि.२.१० )
–**यन्त्र**–न., यन्त्र० सुषिरमेकानेकमुखं स्रोतोगतशल्योद्धरणार्थं रोगदर्शनार्थं क्रियासौकर्यार्थमाचूषणार्थं च स्रोतोद्वारप्रवेशि यथायोगदीर्घं यन्त्रम् विंशतिप्रकारकमिदम् (सुसू. ७.१३; असंसू. ३४.९; अहसू. २५.११ )
–**व्रण**–पु., नाड्या युतो व्रणः ( सुचि. १.४१ )
–**व्रणप्रक्षालनयन्त्र**–न., यन्त्र० तत् षडङ्गुलं बस्तियन्त्राकारं मुखतोऽकर्णिकं मूलमुखयोरङ्गुष्ठकलायप्रवेशस्रोतस्कम् ( असंसू. ३४.१३ )
–**स्वेद**–पु., स्वेद० मूलफलपत्रशुङ्गादीनां मृगशकुनपिशितशिरःपदादीनामुष्णस्वभावानां यथार्थमम्ललवणस्नेहोपसंहितानां मूत्रक्षीरादीनामुत्क्वथितानां स्वेदनद्रव्याणां बाष्पमनुद्वमन्त्यां कुम्भ्यां शरेषीकावंशाद्यन्यतमकृतया गजाग्रहस्तसंस्थानया व्यामदीर्घया व्यामार्धदीर्घया वा व्यामचतुर्भागाऽष्टभागमूलाऽग्रपरिणाहस्रोतसा सर्वतो बिल्वैरण्डादिवातहरपत्रसंवृतच्छिद्रया द्विस्त्रिर्वा विनामितया नाड्या वातहरसिद्धस्नेहाभ्यक्तगात्रो बाष्पमुपहरेत्। अनेन विहतचण्डवेगोऽनृजुगामी बाष्पस्त्वचमविदहन् सुखं स्वेदयति ( चसू. १४.४३; सुउ. २१.७; असंसू. २६.१० )
–**हिङ्गु**–न., निर्यास० तद्गुणाः कट्वुष्णं दीपनं कफवातघ्नं विष्टम्भविबन्धामदोषानाहघ्नं च (ध. २.४०)

**नाथ**–पु., स्वामी, ईश्वरः ( असंसू. २८.३६. )

**नाद**–पु., रोग० कर्णनादः ( चचि. २६.१२७ )

**नादेय**–पु., वनस्पति० वानीरः ( रापरि. ९.१७ )
काशः ( रा ८.२०१ )
मुस्ताभेदः, पिण्डमुस्तः ( ध. १.४१ )
**( नादेयी )** – स्त्री., वेतसभेदः मेघपुष्पः ( ध. ५.११७ )
जम्बूभेदः, काकजम्बूः ( ध. ५.८४; रा. ११.१३२) द्र० ' जम्बू '
वनस्पति० अग्निमन्थः ( ध. १.१११ ).
मुस्ता ( रा. ६.६१ )
जम्बूभेदः, जलजम्बूः ( ड. सुचि. ४.३२ )
न., लवण० सैन्धवम् ( सुउ. ११.१६; ध. २.२५)
खनिज० अञ्जनम् ( रा. १३.२१४ )

**–जल**–न., नद्या नदस्य वा जलम्; तद्गुणाः–वातलं रूक्षं दीपनं लघु लेखनं च। कासाञ्चन नदीनां जलमभिष्यन्दि मधुरं सान्द्रं गुरु कफावहं च ( सुसू. ४५.७-३१ ) वर्षासु नादेयं जलमग्राह्यम् ( अहसू. ५.२० )

**–मत्स्य**–पु.,नदीजो मत्स्यः, रोहितपाठीनपाटलाराजीववर्मिगोमत्स्यकृष्णमत्स्यवागुञ्जारमुरलसहस्रदंष्ट्रप्रभृतयो नादेयाः। तद्गुणाः – मधुरा गुरव उष्णा वृष्याः स्निग्धा अल्पवर्चसो रक्तपित्तकरा मारुतापहाश्च ( सुसू. ४६.११३-११४ )

**नाना**–अव्य०., बहुविधम् ( रापरि. ७.२४ )
**–कन्द**–पु., वनस्पति० कन्दग्रन्थिः ( रापरि. ७.२४ )
**–करण**–न., अनेकभेदभिन्नतापादनम् भेदकरणम् ( सुनि. ६.२६ )
**–त्व**–न., पृथक्त्वम् ( ड. सुउ. २९.१०० )
**–द्रव्यात्मकत्व**–न., अनेकद्रव्यसमुद्भूतत्वम् अनेकेभ्यो द्रव्येभ्यो लब्धतद्भावत्वम् (असंसू.६.९७)
**–रुजा**–स्त्री., लक्षण० वातादिकृततोददाहकण्ड्वादिवेदना ( सुनि. १६. ५७ )
**–रूप**–वि., अनेकप्रकारम् ( अहसू. १२.३० )
**–वर्ण**–अनेकविधवर्णः ( सुउ. ४०.८१ )

**नानात्मक**–वि., नानास्वभावम्, अनेककारणम् ( हे अहसू. ९.१७ )

**नानात्मज**–वि., वातादिभिर्दोषान्तरासस्पृक्तैर्जायमानम् ( चक्र. चसू. २०.१० )

**नान्दीमुख**–न., फल० मुरजमुखाकृति खर्जूरद्राक्षाऽऽमलकादि, नान्दीमुखश्राद्धाय हितमेतत् ( चशा. ८.३५ )

**( नान्दीमुखी )**–स्त्री., धान्य० यविका इयं मधुरा स्निग्धशीतला च ( चसू. २७.२२ )

**नापाक**–पु., वनस्पति० पद्मबीजम् ( ध. ४.१५९ )

**नाभस**–वि., आकाशसम्बन्धि ( अहसू. ९.१० )

**( नाभसी )**–स्त्री., छायाविशेषः इयं निर्मला नीला सस्नेहा सप्रभा च पञ्चच्छायानामन्यतमेयम् ( चइ. ७.१० )
**–द्रव्य**–न., आकाशीयं द्रव्यम् ( अहसू. ९.९ )

**नाभसप्रकृति**–वि., ( परिव० ) आकाशभूतप्रकृतिः नाभसप्रकृतिको नरः शुचिश्चिरजीवी च भवति अस्य कर्णनासादिच्छिद्राणि महान्ति भवन्ति ( सुशा. ४.८० )

**नाभाग**–पु., मनुपुत्रः वैवस्वतमनोर्नवमः पुत्रः ( चचि. १९.४ )

**नाभि**–स्त्री., शारीर० उदरावर्तः ( सुशा. ९.७ ) असौ मातृजोऽवयवः ( चशा. ३.६ ) पञ्चदशकोष्ठाङ्गेष्वेकम् ( चशा. ७.१० ) दशप्राणायतनेष्वेकम् ( चशा. ७.९ ) नाभ्यां विशेषेण प्राणा व्यवस्थिताः। यतश्च साऽन्तरग्न्यधिष्ठानम् ( सुशा. ७.५; असंशा. ६.२९) चतुर्विंशतिधमनीनां प्रभवस्थानम् (सुशा. ९.३) सिराणां प्रभवस्थानम् (सुशा. ७.३) देहे ज्योतिःस्थानम् ( सुशा. ४.५८ ) विशेषतः पित्तस्य स्थानम् ( अहसू. १२.२ )
गर्भदेहवर्धनमूलस्थानम्—गर्भिण्या गर्भाशये गर्भनाभिनाडी गर्भस्य नाभ्यां प्रतिबद्धा भवति। नाड्यां चापरा, तया अपराख्यया नाड्या गर्भस्य पोषणं जायते ( सुशा. ३.३२ )
**–ग्रह**–पु., लक्षण० बस्त्यभिघातजनितो नाभेर्ग्रहः ( चसि. ९.६ )
**–ज**–वि., नाभौ जातम् ( चसू. १७.१०१ )
न., सुगन्धि० कस्तूरी ( र. २७.११७ )
**–नाडी**–स्त्री., नाभिसंसक्ता नाडी ( चशा. ६.२३ )
गर्भस्य नाभिनालः ( सुशा. १०.१२ )
**–नाल**–पु., न., नाभिसम्बद्धा नलिका ( असंउ. १ )
**–प्रपीडन**–न., उपक्रम० नाभेः पीडनम् ( असंउ. २७.१५ )
**–प्रभवा**–वि., गर्भनाभिसम्भूता, नाभितः सम्भवो यस्याः सा प्रभवति इति प्रभवः उत्पत्तिः, अथवा प्रभवति अस्मात् इति प्रभवः उत्पत्तिकारणम् ( सुशा. ९.३ )
**–बन्धन**–न.,उपक्रम० गर्भनाभेर्बन्धनम् ( चशा. ८.४४ )

–मण्डल–न., नाभिप्रदेशः ( सुसू. ५.२६-२७ )

–मर्मन्–न., मर्म० म्रियते पुरुषो यस्मिन्नभिहते तन्मर्म तत्स्थानम् उदरं, पक्वामाशययोर्मध्ये (सुशा. ६.६-२५) जातितः सिरामर्म (सुशा. ६.७) सङ्ख्ययैकम्, मानतश्चतुरङ्गुलपरिमितम् ( सुशा. ६.२९ ) सद्यःप्राणहरमिदम् (सुशा. ६.९; असंशा. ७.१० )

–यन्त्र–न., यन्त्र० दृढस्थूलविस्तृतमृत्पात्रमध्ये गर्तं कुर्यात्। तत्र पारदं गन्धकं च निदध्यात्। ततो गर्तस्य समन्ततोऽङ्गुलोच्छ्रायं कुड्याकारं बन्धं कुर्यात्। अनन्तरं तं गर्तं गोस्तनाकारमूषया न्युब्जया पिदध्यात्। तोयमृदाख्यया मृदा संधिं रुद्ध्वा सम्पाद्य वा संशोष्योपरिस्थितमल्लभागमाकण्ठं जलेन पूरयेत्। यन्त्रस्याधस्ताच्च वह्निं प्रज्वालयेत् ( र. ९,५९–६१ )

–रुज–स्त्री., लक्षण० नाभिप्रदेशे रुजा ( चसि. ७.९ )

–विद्रधि–पु., रोग० नाभिजो विद्रधिः, तल्लक्षणम् हिक्काऽऽटोपश्च ( सुनि. ९.१६–२० )

–शूल–पु., लक्षण० नाभिप्रदेशे शूलवद्वेदना ( चचि. १३.४१ )

–हृदयान्तर–न., नाभिहृदयोरन्तरम्। तच्च द्वादशाङ्गुलम् ( सुसू. ३५.१२ ) इदं दीर्घायुर्ज्ञापकम्

**नाभिक**–न., शङ्खनाभिः, शङ्खस्य मध्यगता वर्तुलाकारा नाभिः। इयमक्षिरोगे उपयुक्ता (का. षट्कल्पाध्यायः)

**(नाभिका)**–स्त्री., वनस्पति० कटभी ( रापरि. ९.३७ )

**नाभ्यर्ति**–स्त्री., लक्षण० नाभिशूलम् ( चचि. २०.८ )

**नामन्**–न., अभिधानम् (सुउ. ३९.९; असंउ. १)

**(नाम)–करण**–न., संस्कार० शततमे दिने पूर्णे संवत्सरे वा शिशोर्नामाभिधानं कुर्यात्। तन्नाम पूज्यं त्रिपुरुषानूकमादिघोषवदक्षरमवृद्धं कृतमूष्मान्तं नक्षत्रदेवतायुक्तमनरातिप्रतिष्ठितं मङ्गल्यमन्तरन्तःस्थं निर्दिष्टं च स्यात् ( असंउ. १ )

–कर्मन्–न., नामकरणम् नामकरणसंस्कारसमये क्रियमाणं होमादि कर्म ( चशा. ८.५०; ५१ )

**नाम्यमान**–वि., सङ्कोच्यमानम् ( अरु. हे; अहृसू. ८.१६; असंसू. ११.३४ )

**नारङ्ग**–पु., न., वनस्पति० फलविशेषोऽयम् तद्गुणाः– अम्लं मधुरमुष्णं गुरु दुर्जरं (सु) हृद्यं विशदं भक्तरोचनं रोचनं बलकरं वातहरमामशूलश्रमकृमिशूलघ्नं च ( सुसू. ४६.१६१; ध. ५.२०; र. २३.१७-१८ )

हिं.—नारंगी.

म.—नारिंग.

बं.—नारंगालेंबुक.

गु.—नारंगीलिंबु.

फा.—नारंज.

त.—किचिलि.

न., वनस्पति० गर्जरम् ( रा. ७.९८ )

**नारद**–पु., देवर्षि० रोगापहरणचिन्तनार्थं हिमवतः पार्श्वे समेतेषु महर्षिष्वेकः ( चसू. १.८; सुसू. ५.३१ )

–कन्दक–न., वनस्पति० गृञ्जनम् ( ध. ४.३७ )

**नाराचक**–न., स्थावरविष० त्वक्सारनिर्यासविषम्, इदं प्रसेकास्यदौर्गन्ध्यपारुष्यशिरोवेदनाकरम् ( असंउ. ४०; सुक. २.५-९ )

चूर्ण० त्रिफलादन्त्यादिनिर्मितं चूर्णम्। इदमुदावर्तादिरोगभगन्दरार्शोघ्नम् ( काउदावर्त चि. )

**नारायण**–पु., पारदयोग० पारदगन्धकगुग्गुल्वादिनिर्मितो रसयोगः। अयं दुःसाध्यकुष्ठक्षयभगन्दरशूलमूलगुल्मपाण्डुताग्रहणीमन्दाग्निनाशनः ( र. २०.११८-१२१ )

**(नारायणी)**–स्त्री., वनस्पति० शतावरी ( रा. ४.४३८ )

–चूर्ण–न., योग० गवाक्षीशङ्खिनीतिल्वकादिनिर्मितं चूर्णम्, इदं विशेषेणोदररोगे उपयुक्तम् ( चचि. १३.१२५-१२८ )

–तैल–न., तैल० शतावरीप्रधानैर्द्रव्यैर्निर्मितं तैलम्। इदं वातव्याधिष्वभ्यङ्गार्थमुपयुज्यते (र. ११.१३३)

–प्रिय–न., वनस्पति० कालीयकम् (ध. ३.८)

**नारिकेल**–पुं., न., वनस्पति० फल० आनूपदेशोद्भवोऽयम् (चक. १.८) तद्गुणाः–मधुरं शीतलं गुरु हृद्यं स्निग्धं पित्तकरं ( पित्तघ्नम् ) ( रा. ) बल्यं मांसदं वृष्यं बृंहणं बस्तिशोधनं तृष्णाशोषघ्नं च (चसू. २७.१३०; सुसू. ४६.१८०; ध. ५.७४; असंसू. ७.१७५; अहृसू. ६.११९; र. १७,४३-४६) नारिकेलस्य मस्तकमज्जा नाम वृक्षाग्रमज्जा स्वादुरसपाकः शुक्रलः वातघ्नः कफवृद्धिकरः रक्तपित्तहरश्च ( सु. सू.४६.३१० )

हिं.—नारियल.

म.—नारळ, माड.

गु.—नारिएल.

बं.—नारिकेल.

त.—तेंकु.

फा.—शोजहिन्दी; नारीयल.

**( नारिकेली )**–स्त्री., वनस्पति० नारिकेलः (र. १८.१११)
**–तैल**–न., स्नेह० तद्गुणाः–शीतं गुरु केश्यं श्लेष्मलं वातपित्तहरं च (ध. ६.१४१; असंसू. ६.१०९) वाजीकरं क्षीणधातुपोषणं मूत्राघातप्रमेहश्वासकास-यक्ष्मघ्नं मेधाकृत् क्षतभरणं च ( सुसू. ४५.१२० )
**–पाक**–पु., नारिकेलकल्पः सौश्रुतः तद्विधिः— वाराहीमुशल्योः कन्दौ धत्तूरमहिफेनं धन्वयासं कपिकच्छुफलानि च पृथक् संचूर्ण्य कार्पासफल-मज्जजातेन दुग्धेनाऽऽलोड्य सूर्यातपे शोषयेत् । एवं प्रत्येकं सप्तवारं भावयित्वा नारिकेलगर्भे पूरयेत् । तद्वारं च रुध्वा द्वात्रिंशद्गुणितदुग्धेना-ऽन्तराऽन्तरा दर्व्या संवर्त्य दार्ढ्योपगमपर्यन्तं भाण्डे पचेत् । शीतं चूर्णीकृतं च घृतेन पचेत् । ततो जातीफललवङ्गैलाचूर्णं तस्मिन्निक्षिप्य गुटिकाः कुर्यात् । पाकोऽयं वातरोगप्रमेहघ्नो बल्यो वृष्यश्च ( र. २६.५६.६२ )

**नारिकेलोदक**–न., नारिकेलमध्यगतम् उदकम् तद्गुणाः–स्निग्धं स्वादु हिमं हृद्यं दीपनं वृष्यं बस्तिशोधनं गुरु पिपासाघ्नं च ( सुसू. ४५.४३–४४; ध. ६.३५१; अहसू. ५.१९)

**नारिषण्ड**–पु., स्त्रीनपुंसकः ( चशा. २.१७ )

**नारी**–स्त्री. वनस्पति० अश्वबला, बल्वजसदृशपत्रा, द्रोणीप्रावेशिकरसायनेष्वेका ( चचि. १ (४)७.)
**–दधि**–न., मानुषं दधि; तद्गुणाः—स्निग्धं मधुरविपाकं बल्यं गुरु सन्तर्पणं चक्षुष्यं दोषघ्नञ्च ( सुसू. ४५.७३—७४ )
**–प्रसङ्ग**–पु., नारीष्वतिशयेन मैथुनार्थं प्रवृत्तिः ( सुउ. २४.३ )
**–स्तन्य**–न., मानुष्याः ( स्त्रियाः ) दुग्धम् ( सुसू. ४५.५७—५८ )

**नारीष्टा**–स्त्री., वनस्पति मल्लिका ( रा. १०.२२५ )

**नाल**–पु.,न., नलिका, दण्डः ( अहसू. ३०-११; र. १०.२४ )
नाभिनालः ( असंशा. ३ ( ७ ) ३४; र. ३.१२५ )
स्रोतस् ( सुउ. ५८.१५ )
मेहनम्–मिह्यते सिच्यते शुक्रमनेनेति मेहनार्थेऽपि नालपदं रूढं, सेचनावस्यन्दनयोरेकार्थत्वात् ( सुउ.३७.११० )

**( नाली )** स्त्री., नाडी ( चचि. २२.६ )
**–पात**–पु., नाभिनालपतनम् ( असंउ. २ )
**–वंश**–पु., वनस्पति० नलः ( रा. ८.२२२ )

**नालक**–पु., धान्य० कलायः ( ध. ६.१०३ )

**नालान्धमूषा**– स्त्री., नालयुक्ता सम्पुटितमूषा गोस्तनाकारमूषा, नालयुक्तांधमूषा (र. १८.२१-२२)

**नालाभिबन्धन**–न., नाभिनालस्य निबन्धनम् ( असंउ. १ )

**नालिक**–न., निर्यास० बोलम् ( ध. ३.६२ अ )

**( नालिका )**–स्त्री., शाक० गोनाडीचः ( चसू. २७.१०१ ) इयं स्तन्यजननी ( सुशा. १०.३० )
तद्गुणाः–वातला पित्तघ्नी मधुरा च (सुसू. ४६.२७३) दीर्घनालरूपा कलम्बुसंज्ञा, (अरु.) नाड्याकारा सूक्ष्म-सुषिरा बहुतोयजा श्लक्ष्णा च । ( हे. ) कलम्बादि-वर्गोक्ता गुणाः – स्वादुः सलवणा रूक्षा वातश्लेष्मा करी गुरुः शीतला सृष्टविण्मूत्रा विष्टभ्य जरणशील-स्नेहाढ्या सती च नातिदोषला (अहसू. १०.९३-९५) कङ्कुष्ठभेदः, इयं पीतवर्णा गुरुः स्निग्धा श्रेष्ठा च ( र. ३.१२०-१२२ )
**–यन्त्र**–न., यन्त्र० वालुकायन्त्रभेदः, तत्र वालुका-स्थाने लवणं निक्षिप्य तस्मिन् लोहनालगतस्य निरुद्धसूतस्य पचनं कुर्यात् । अतिमृदुस्वेदोपयोगि यन्त्रमिदम् ( र. ९.४३ )
**–शाक**–न., नालिका ( सुसू. ४६.२७३ )
द्र० ' नालिका '.

**नालिकेर**—पु., वनस्पति० नारिकेलः (सुसू. ४५.१२० )
**–तैल**–न., स्नेह० नारिकेलतैलम् ( सुसू. ४५.१२०; असंसू. ६.१०९ )

**नालिकेरक**–पु., वनस्पति० नारिकेलः (धनि. ५.७४)

**नालिकेरासव**–पु., आसुत० नारिकेलासवः अयं गुहाशयमांसभक्षणोत्तरमनुपाने विहितः । ( सुसू. ४६.४३३ )

**नावन**–न., उपक्रम० नस्यम् (चसू. ५.३९; अहसू. २.६ )

**नावनिकतैल**–न., नस्यार्थमुपयुक्तमणुतैलादिकम् ( चचि. ३.२५५ )

**नासत्य**–पु., देवानांभिषजौ अश्विनीकुमारौ ( र. २०.८५ )

**नासा**–स्त्री., शारीर० शीर्षप्रत्यङ्गम्, नासिका (सुशा. ५.४) वनस्पति० आटरूषः ( रा. ४.२९ )
**–गतरोगप्रतिषेध**—पु., अध्यायसंज्ञा ( सुउ. २३ )
**–गतरोगविज्ञानीय**–वि., अध्यायसंज्ञा० ( सुउ. २२ )
**–परिशोष**–पु., नासारोग० तल्लक्षणम् अस्मिन् घ्राण-

गतः कफो मारुतपित्ताभ्यां शोषितो भवति । तेन च ऊर्ध्वाधःश्वासोच्छ्वासकर्मण्यतीव क्लेशा भवन्ति (सुउ. २२.१७-१८; र. २४.२०)

**-परिस्राव**—पु., नासारोग० तल्लक्षणम्—नासातोऽनवरतमविशिष्टवर्णं जलाभमच्छं स्रवति । रात्रौ चाधिकतरं स्रवणं भवति । अस्मिन् रोगे स्रावः शृंगाटकाख्यस्रोतसि प्रविलायितात् कफात् जायते (सुउ. २२.१६-१७)

**-पाक**—पु., नासारोग० नासिकापाकः (सुउ. २३.५; र. २४.२०) अस्मिन् रोगे बाह्याभ्यन्तरी क्रिया पित्तहारिणी एव योज्या (सुउ. २३.५.६)

**-पिटिका**—स्त्री., नासारोग० नासापुटकम् तल्लक्षणम्—अन्तर्नासायां शुष्कः श्लेष्मा पिटिकावस्थां प्राप्नोति (र. २४.२०; असंउ. २४)

**-पुट**—पु., शारीर० नासिकापुटकः तत्प्रमाणम्—अङ्गुलस्य त्रिभागेन सहाङ्गुलं त्रिभागाङ्गुलम् तावन्मात्रतिर्यङ्क्ति एको नासापुटः (ड.) संख्यया द्वौ (सुसू. ३५.१२; असंशा. ८.३०)

**-पुटभाग**—पु., प्रत्यङ्ग० द्वयोर्नासापुटयोर्बहिर्भागः प्रमाणतोऽयं प्रत्येकमङ्गुलद्वयमितः (सुसू. ३५.१२)

**-प्रतीनाह**—पु., नासारोग० वातेन नासा प्रतिनह्यते बध्यते इव । तल्लक्षणम्—उदानो वायुः कफावृतो भूत्वा स्वमार्गे विगुणः स्थितः स्यात् तदा नासा प्रतिनह्यते बध्यते इव वातेन, सच नासाप्रतीनाहो भवति (सुउ. २२.१५-१६)

**-रोग**—पु., नासागतो व्याधिः, तत्संख्या—एकत्रिंशन्नासारोगाः । ते इमे—अपीनसः पूतिनस्यं नासापाकः शोणितपित्तं पूयशोणितं क्षवथुर्भ्रंशथुर्दीप्तो नासानाहः परिस्रवो नासाशोषश्चत्वारि नासार्शांसि नासाशोफाश्चत्वारो नासार्बुदानि सप्त प्रतिश्यायाश्च पञ्च । एवमेकत्रिंशन्नासारोगाः (चचि. २६.११०-११६; सुउ. २२.३-५.२०; असंउ. २३; र. २४.२०)

**-वंश**—पु., शारीर० नासास्थिदण्डः (सुसू. ३२.४; असंशा. ८.३२)

**-वदनावरोध**—पु., उपक्रम० नासावदनयोर्निरोधनम् तेनान्तःप्रविष्टो वायुः रुद्धस्रोतोविवरणं कृत्वा मूर्छामपहन्ति (सुउ. ४६.१८)

**-शोष**—पु., नासारोग० तल्लक्षणम्— क्रुद्धोऽनिलो मूर्ध्नि कफं संशोष्य नासाशृङ्गाटकघ्राणविशोषणं च करोति (चचि. २६.१११; सुउ. २३.११) तथा शूकपूर्णाभनासात्वं कृच्छ्रादुच्छ्वसनं च भवति (असंउ. २३)

**-श्वयथु**—पु., नासारोग० तल्लक्षणम्—वातादयो दोषा घ्राणाश्रितास्रक्प्रभृतीन् प्रदूष्य नासायाः श्वयथुं कुर्वन्ति (चचि. २६.११५)

**-संवेदन**—पु., वनस्पति० काण्डीरः (ध. ४.६२)

**-सन्नत्व**—(परिव.) न., नासाया अन्तःप्रविष्टत्वम् (सुचि. ३.४३)

**-स्राव**—पु., नासारोग० नासापरिस्रावः (चसि. २.२१; सुउ. २३.१०)

**-स्रोतस्**—न., शारीर० नासारन्ध्रम् (ड. सुचि. ४०.६३; असंसू. २९.१४)

**-स्रोतोभव**—वि., नासास्रोतसि जातः (रोगादिः) (सुउ. २२.२०)

**-हुण्डन**—न., घ्राणनाशः (चक्र. चचि. २८.२२)

**नासाग्र**—न., शारीर० नासान्त्यभागः (असंसू. २९.१४)

**नासाग्रपाक**—पु., लक्षण० नासाग्रस्य पाकः (चचि. २६.१०६)

**नासाध्मान**—न., लक्षण० कफावृतत्वाद्वायुना नासिकापूरणम् (सुउ. ६.१७)

**नासानाह**—पु., नासाप्रतीनाहः (सुउ. २३.९)

**नासार्बुद**—पु., न., नासारोग० नासाभवोऽर्बुदसदृशो व्याधिः अर्बुदं नाम स्रोतःपथे विपुलं कोषवच्च यत् तत् । सच मांसासृग्दोषाद्भवति । असौ सप्तविधः । पृथग्दोषजस्त्रिविधः, द्वन्द्वजस्त्रिविधः सन्निपातजश्चैकः (चचि. २६.११६; सुउ. २२.१६-२० असंउ. २३)

**नासार्शस्**—न., नासारोग० नासायां जायमानो मांसाङ्कुरः, स पृथग्दोषात् सन्निपाताच्च चतुर्विधः (सुउ. २२.१८; असंउ. २३)

**नासावभङ्ग**—पु., लक्षण० नासास्रोतोवैगुण्यम्, तच्चानुनासिकवाक्यत्वेन ज्ञेयम् (ड. सुक. ३.४१)

**नासिका**—स्त्री., पञ्चेन्द्रियाधिष्ठानेष्वेका, घ्राणम् (चशा. ७.७) प्रमाणत इयं चतुरङ्गुला (चवि. ८.११७) सा शिरसो द्वारम्, तत्र निषिक्तमौषधं स्रोतःशृङ्गाटकं प्राप्य मूर्धानं नेत्रश्रोत्रकण्ठादिशिरामुखानि च व्याप्योर्ध्वजत्रुगतान् दोषानपकर्षति (चसि. ९.८८; अहसू. २०.१) इयं उदानस्य विचरणस्थानम्, उरःस्थानमुदानस्य नासानाभिगलांश्चरेत् (अहसू. १२.५)

-गण्डकूटललाटास्थि—न., शारीर० अस्थि० नासिकागण्डकूटललाटानामस्थि । तत्त्वेकमेवमूलत्वान्नासादीनाम् ( चशा. ७.६ )

-पाक—पु., नासारोग० तल्लक्षणम्—घ्राणस्थितं पित्तं नासायां व्रणान् करोति तीव्रतरः पाकश्च भवति नासायामार्द्रत्वं पूतित्वं च दृश्यते ( सुउ. २२.९)

-मुख-न., प्रत्यङ्ग० नासाद्वारम् ( सुशा. १०.२५ )

-वंश-पु., नासानलिका (चइं. ८.१०)

-शोष-पु., रोग० नासाशोषः ( असंउ. २३ )

नास्तिक-वि., परलोकादिर्नेति मन्यमानः, नास्ति परलोकादि इति मतिर्यस्य, सः ( चसू. २५.४० )

नास्तिक्य-न., तामसगुण० आस्तिक्याभावः। धर्ममोक्षपरलोकादिकं नास्तीति बुध्द्याचरतीति नास्तिकः, तस्य भावो नास्तिक्यम् ( सुशा. १.१८ )

-बुद्धि-स्त्री., नास्त्येव परलोक इति विपर्ययज्ञानम् ( चसू. ११.७ )

नाह-पु., परिणाहः ( अहसू. २५.१७ )
न., उपक्रम० बन्धनम् "सैरण्डपत्रया शोफं नाहयेदुष्णया तया" ( सुचि. १.२६ )

निःशल्य-वि., शल्यरहितम्, तल्लक्षणम्—प्रसन्ने व्रणे नातिस्पर्शासहिष्णुषु प्रान्तेषु शोफे तापे चाल्पे सति निःशल्यं ज्ञेयम् ( असंसू. ३७.३९ )

( निःशल्या )-स्त्री., वनस्पति० दन्ती ( रा.६.३३८ )

निःशूक-पु., वनस्पति० शालिभेदः मुण्डशालिः (रा. १६.८९). द्र० 'शालि' व्रीहिः (रा. १६.८० )

निःशेषविषनाशिनी-स्त्री., वनस्पति० बलामोटा ( ध. परि. ४.३ )

निःश्रेणी-स्त्री., वनस्पति० खर्जूरी ( ध. ५.५३ )

निःश्रेयस-न., मोक्षः (चसू. ११.२७)

निःश्लेष्मपित्त-वि., लक्षण० निर्गते श्लेष्मपित्ते यस्मात् श्लेष्मपित्तरहितः, अतिविरिक्तस्य एकलक्षणम्. (चसू. १६.१० )

निःश्वास-पु., श्वासप्रवेशः ( हे. चसू. १८.४९ )
फूत्कारः ( ड. सुक. ३.४ )

-विष-वि., निःश्वासे फूत्कारे विषं यस्य दिव्यः सर्पो निःश्वासविषो भवति ( सुक. ३.५ )

निःसङ्ग-वि., निर्गतोऽभिघातहेतोः सङ्गः सम्बन्धो यस्य स व्रणः ( सुचि. १.१११ )

निःसंज्ञत्व-न., लक्षण० चेतनारहितत्वम् ( ड. सुउ. ५१.१२ )

निःसंपात-वि., उल्लोचसहितं देशादि ( सुसू. ४६.४५८ )

निःसंशय-वि., संशयरहितम् ( सुशा. ५.४७ )

निःसार-वि., लक्षण० अपगतधातुसारः ( चचि. १६.६ )
निर्गतसारमाहारादि ( सुसू. ४६.५२७ )
पु., वनस्पति० टिण्टुकः ( ९.१४२ )

( निःसारा )-स्त्री., वनस्पति० कदली ( ध. ४.७५ )

निःसुखत्व-न., दुःखम् ( अहसू. १३.१२ )

निःसृता-वि., लक्षण० स्थानच्युता बहिरागता ( चसि. ६.५५ )

निःस्नेह-वि., स्नेहरहितम् ( चसू. २७.३१६ )

-फला-स्त्री., वनस्पति० कण्टकारीभेदः श्वेतकण्टारिका ( रा. ४.१२६ ) द्र० 'लक्ष्मणा'

-सिद्ध-वि., स्नेहेन विना सिद्धम् (चसू. २७.३१६)

निःस्पृह-वि., उपादित्साजिहासाशून्यः उपादित्सा ग्रहणेच्छा, जिहासा त्यागेच्छा ताभ्यां रहितः, निरिच्छः ( चशा. ५.१७ )

निःस्यन्द-पु., उपस्नेहः ( सुनि. ३.२३ )
मूत्रम् ( ड. सुचि. ७.३३ )

निःस्रुतरक्ता-वि., लक्षण० अतिस्रुतरक्ता ( सूतिका ) ( काखिल. ११.७१ )

निःस्वन-वि., निःशब्दम् ( असंसू. ३.२८ )

निकुच-न., फल० इदं पित्तश्लेष्मप्रकोपि ( चसू. २७.१३२ ) फलानामहिततमं च ( चसू. २५.३९ )

निकुञ्चन-न., क्रिया० संकोचनम् (चसि. १२.१८(१५)

निकुञ्ज-पु., अल्पकुञ्जः, लतादिपिहितोदरम् (चक. १.८)

निकुञ्जक-पु., वनस्पति० वेतसः ( ध. ५.११७ )

( निकुञ्जिका )-स्त्री., वनस्पति० निकुञ्जिकागुणाः—कटुकाऽम्ला वातकफापहा शोफघ्नी च ( रापरि. ८.३५ )

निकुम्भ-पु., वनस्पति० दन्ती (सुउ. ४२.४९; अहसू. १५.२; र. २९.५६, कुष्ठादिहरप्रदेहोक्तमेकं द्रव्यम् ( चसू. ३.५ )
वनस्पति० जेपालः ( ध. १.२२७ )

( निकुम्भा )-स्त्री., वनस्पति० जेपालः ( ध. १.२२८ ) दन्ती ( ध. १.२२३ )

-कल्क-पु., कल्प० निकुम्भकल्कोऽयं सशीतजलः कामलापहः ( असंचि. १८ )

-तैल-न., निकुम्भकाथकल्केन सिद्धं तैलम् ( चक्र. चसि. ११.३३ ) प्रमेहे शाकसिद्ध्यर्थमुपयुज्यते ( सुचि. ११.६ )

–बीज–न., वनस्पति॰ जेपालः ( रा. ६.३४४ )

**निकुम्भादिविरेचनगण**–पु., द्रव्यगण॰ निकुम्भकुम्भत्रिफलागवाक्षीस्नुकशङ्खिनीनीलिनीतिल्वकानी, शम्याककम्पिल्लकहेमदुग्धा दुग्धं मूत्रं चेति ( अहृसू. १५.२ )

**निकृन्तक**–पु., खनिज॰ गन्धकभेदः वटसौगन्धिकः ( ध.३.११४ )

**निकेत**–पु., शरीरधात्ववकाशः आशयः स्रोतःपदार्थकोऽयं शब्दः ( चवि. ५.९ )

**निकोचक**–पु., वनस्पति॰ अङ्कोटः ( ध. १.२५८., असंचि. २४ )

न., फल॰ औत्तरापथिकमिदम्, तद्गुणाः– मधुरम् उष्णं स्निग्धं गुरु बलप्रदं वातघ्नं बृंहणं वृष्यं कफपित्तप्रवर्धनं च ( चसू. २७.१५७; सुसू. ४६.१८७ )

**निकोचन**–वि., सङ्कोचकः ( अहृसू. १०.३ )

**निक्षेपण**–न., यत्र जलं स्थाप्यते तत् पञ्चप्रकारकं —फलकं त्र्यष्टकं मुञ्जवलयं उदकमञ्चिका शिक्यं चेति अत्र निक्षिप्तमुदकं भूम्यादिस्पर्शाभावात् निर्दुष्टं भवति ( सुसू. ४५.१८ )

**निगद**–वि., निर्मलं स्वच्छं च ( चचि. २६.६८ )

**निगम**–पु., नगरम्, बहुवसतिः ( चनि. ६.१३ )

**निगमन**–न., न्यायावयव॰ पञ्चानां न्यायावयवानामेकतमोऽयम् अवयवः, यश्च हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम् ( चवि. ८.३१ )

हेतुसाधितसाध्यधर्मकथनम् ( चसू. ३०.१८ )

**निगर्भा**–वि., सुषिरा ( चसू. ५.२४ )

**निगूढरोमन्**–वि., अपरिलक्षितरोमा ( ड. सुनी. १२.७ )

**निग्रह**–पु., लक्षण॰ अप्रवृत्तिः ( चसू. १६.८ )

–प्राप्त–वि., निग्रहणीयत्वेन ज्ञानः ( चवि. ८.५८ )

–भय–न., जल्पवितण्डोक्तनिग्रहाद् भयम् ( चवि.८.१७ )

–स्थान–न., वादाङ्ग॰ पराजयप्राप्तिः विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्, निग्रहस्य पराजयस्य स्थानमिव स्थानं कारणमिति निग्रहस्थानम् ( चवि. ८.६५ )

**निघण्टु**–पु., कोशः आयुर्वेदोदितौषधीनां पर्यायगुणादिवर्णनपरः कोषविशेषः ( र. ७.२६ )

**निचय**–पु., सन्निपातः ( चनि. ३.३ )

–गुल्म–पु., रोग॰ सन्निपातजो गुल्मः द्र॰ गुल्म ( चनि. ३.३ )

**निचयोदरिन्**–वि., सन्निपातोदरयुक्तः ( चचि. १३.१०२ )

**निचित**–वि., संचयं प्राप्तः ( सुउ. ४०.१३८ )

क्षीणम् ( चइं. ७.३१ )

**निचिति**–स्त्री., काष्ठानामौत्तराधर्येणावस्थितिः (सुसू. ११.११)

**निचुल**–पु., वनस्पति॰ हिज्जलः ( चक. चचि. १०.२० रापरि. ८.७० )

जलवेतसः ( ड. सुचि. ३७.४० ) फलमस्य विरेकार्थमुपयुज्यते ( चसू. २.१० )

वेतसः ( ध. ५.११६ )

न., फल॰ वातामादिवर्गोक्तमिदम् तद्गुणाः–मधुरमुष्णं स्निग्धं गुरु बृंहणं बल्यं वातपित्तकफहरं च ( सुसू. ४६.१८७ )

–क्षार–पु., वेतसक्षारः, कुष्ठहरप्रलेपोपयुक्तः ( चचि. ७.८९ )

**निचुलक**–पु., वनस्पति॰ जलवेतसः ( ड. सुक. ६.३ )

**निज**–वि., शारीरदोषसमुत्थम् स्वधातुवैषम्यनिमित्तजं च ( चसू. ११.४५ )

न., कृत्रिमधातु॰ कांस्यम् ( ध. ६.२३ )

–द्राव–पु., उद्भिज्जादेः स्वरसः ( र. २०.८३ )

–विकार–पु., शरीरान्तर्गतदोषैर्वैषम्यपूर्वकं व्यथां कुर्वद्भिर्जायमानो व्याधिः ( अहृसू. ४.३५ )

**निजातिशाणहुल्या**–स्त्री., धान्य॰ व्रीहिभेदः ( रा. १६.९७ ) द्र॰ 'व्रीहि'

**नितम्ब**–पु., शारीर॰ कटिपश्चाद्भागः ( सुसू. २३.६ )

मर्म॰ अस्थिमर्म श्रोणिकाण्डयोरुपर्याशयाच्छादनौ ( सुशा. ६.७; सुशा. ६.२६ ) वामदक्षिणभेदेन संख्यया च द्वौ। मानतोऽर्धाङ्गुलपरिमाणौ, कालान्तरप्राणहरौ। तद्विद्धेऽधःकायशोषो दौर्बल्यान्मरणं च ( सुशा. ६.२६ )

**नितम्बास्थि**–न., अस्थि॰ (सुशा. ५.१९) द्र॰ 'अस्थि'

**नितम्बिनी**–स्त्री., नारी ( र. ११.१०८ )

**नित्य**–वि., त्रिकालावस्थायि, नोत्पन्नं न विनाशं गच्छतीति ( चशा. १.५९ ) भावस्वरूपो ध्वंसाप्रतियोगी यस्य ध्वंसो नास्ति ( सुशा. १.९ )

–ग–वि., नित्यं शरीरस्य क्षणिकत्वेन गच्छतीति शरीरेन्द्रियसत्वात्मसंयोगः, तद्रूपञ्च आयुः ( चसू. १.४२ )

नित्यं गमनशीलः अहोरात्रादिरूपः कालः ( चवि. १.२१-( ६ )

–भाव–वि., नित्यस्वरूपम्, आत्मवाय्वादि (सुनि. १.६)
–शूला–वि., लक्षण० नित्यं शूलविद्धावेदनासदृश-वेदनावती ( असंशा. ४.१६ )

**नित्यातुर**–वि., लक्षण० नित्यव्याधितः ( असंशा. ८.१९ )

**नित्योपदिग्ध**–वि., लक्षण० नित्यमुपलिप्तमिवाङ्गं यस्य तादृशः क्लिन्नशरीरः ( चचि. ३०.२४७ )

**नित्योपयोगिक**–वि., सदोपयोगवान्, नित्योपयोगी ( अहृसू. ६.१७२ )

**नित्योपसेवन**–न., नियमेन शीलनम्, सतताभ्यासः ( अहृसू. २०.३२ )

**नित्योष्मन्**–वि., लक्षण० अवयवगतमुष्माणं नित्यं बिभ्राणः नित्यमूष्मणा सहितोऽवयवो वा (चइं.३.४)

**निदधान**–न., स्थापनम् ( ड.सुचि. ५.१८ )

**निदर्शन**–न., युक्तिः ( चवि.३.३६ )
लक्षणम् ( काखिल. ११.५८; सुउ. ४२.८६ )
तन्त्रयुक्ति० दृष्टान्तेनार्थः प्रसाध्यते यत्र तत् दृष्टान्तव्यक्तिर्निदर्शनम् ( सुउ. ६५.३६ )
मूर्खविदुषां बुद्धिसाम्यविषयो दृष्टान्तः, विज्ञातम-मृतं यथेति (चक्र. चसि. १२.४४ )

**निदाघ**–पु., ऋतु० ग्रीष्मकालः (ड. सुउ. ६४.४८ )

**निदान**–न., व्याध्युपलब्धिकारण० हेतुः निदानपंचकेष्वेकः, कारणम् ( चनि. १.६ )
उत्पत्तिहेतुः ( सुनि. १.१ )
ते च – व्यभिचारिदूरनिकटप्राधानिकरवाच्चत्वारः असात्म्येन्द्रियार्थसंयोगपरिणामप्रज्ञापराधात्त्रिधा, रुग्दोषोभयकारणाद्वौ द्वौ व्यञ्जकोत्पादकौ बाह्या-भ्यन्तरभेदाच्च ( मा. मधु. )
हेतुलक्षणनिर्देशरूपम् ( सुनि. १.१ )
–त्याग–पु., कारणपरिवर्जनम् ( असंसू. १२.६ )
–परिवर्जन–न., रोगकारकहेतूनां सर्वतस्त्यागः, पथ्यम् ( सुउ. १.२५ )
–विपरीत–वि., हेतुविपरीतम् ( भेषजादि ) ( चवि. ३.४२ )
–विपर्यय–पु., हेतुविरुद्धत्वम्, यथा-संतर्पणोत्थे-ऽपतर्पणम् शीतोत्थे उष्णम् ( अहृसू. ८.२२ )
–स्थान–न., प्रकरण० हेतुलक्षणप्रतिपादकं स्थानम् ( सुसू. ३.१४ )

**निदानार्थकर**–वि., निदानं रोगहेतुः तस्यार्थः प्रयोजनं व्याधिजननम्, तत्करोतीति निदानार्थकरो नाम व्याधिजनकः । यथा–रक्तपित्ताज्ज्वरो ज्वरसन्तापाच्च रक्तपित्तम् ( चनि. ८.१६ )

**निदिग्धिका**–स्त्री., वनस्पति० कण्टकारी ( चचि. ३.२२०; असंचि. १६; ध. १.९५; सुउ. ५८.३९ )

**निद्रा**–स्त्री., शयनम् स्वापः, सुषुप्तिः ( सुउ. ५५.५ ) मेध्यानाडीमनःसंयोगाद्देहेन्द्रियाणां सुखभोगः ( सुसू. १.२५ ( ४ ) निद्राहेतुः–श्लेष्मतमसी च ( सुशा. ४.५६ ) निद्रासंप्राप्तिः–स्रोतःसु श्लेष्मावृतेष्विन्द्रियेषु श्रमात् स्वकर्मभ्य उपरतेषु देहिनं निद्राऽऽविशति ( असंसू. ९.५५ ) मनसि क्लान्ते क्लमान्विताः कर्मात्मानः नाम ( इन्द्रियाणि ) विषयेभ्यो यदा निवर्तन्ते, तदा मानवः स्वपिति ( चसू. २१.३५ ) निद्राप्रकाराः– त्रिविधेति ( ड. ) चतुर्विधेति ( अरु. ) सप्तविधेति ( असंशा. ९.६८ ) तत्र त्रिविधा–तामसी वैकारिकी स्वाभाविकी चेति भेदात्। तत्र तामसी—अनवबोधिनी सा प्रलयकाले भवति। वैकारिकी विकारैः संपद्यते। स्वाभाविकी तु त्रिप्रकारा तमोभूयिष्ठा रजोभूयिष्ठा सत्त्वभूयिष्ठा चेति। प्रथमा तमोभूयिष्ठा नाम अहस्सु निशासु च भवति। रजोभूयिष्ठा रजोभूयिष्ठानामनिमित्तं भवति। अन्त्या च सत्त्वभूयिष्ठानामर्धरात्रे भवति (सुशा. ४.३३) चतुर्धा-अकाले सेविता मिथ्यायोगरूपा, अतिप्रसङ्गात् सेविताऽतियोगरूपा, न च सेविता हीनयोगरूपा, काले सेविता सम्यग्योगरूपा च। तत्र सम्यग्योगरूपा सुखायुषीकुर्यात्। शेषास्तिस्रः सुखायुषी पराकुर्यात् ( अहृसू. ७.५४) सप्तधा निद्रा—कालस्वभावा, आमयजा, चित्तखेदोद्भवा, देहखेदोद्भवा, कफोद्भवा, आगन्तुभवा, तमोभवा चेति। एतासु प्रथमा कालस्वभावा शरीरं धारयति। अन्त्या तमोभवा पापा दुष्टा शेषाः पञ्च व्याधिहेतुसमुद्भवाः ( असंसू. ९.६ ) निद्रागुणाः—आहारादिवत् निद्रा देहस्थितिकारिणी तथा सुखदुःखे पुष्टिकार्श्ये बलाबले वृषताक्लीबता ज्ञानाज्ञाने जीवितमरणे च निद्रायत्ते (चसू. २१.३६) रात्रौ जागरणं रूक्षं, दिवा निद्रा ग्रीष्मकालादृतेऽन्येष्वृतुषु स्निग्धा कफपित्तकरी च। आसीनप्रचलायिता निद्राऽरूक्षाऽनभिष्यन्दिनी च ( अहृसू. ७.५५) कालशयनात् पुष्टिवर्णबलोत्साहाग्निदीप्त्यतन्द्राधातुसात्म्यानि भवन्ति। ( सुचि. २४.८८ ) अकालशयनात्मोहज्वर स्तैमित्यपीनसशिरोरुक्शोफहृल्लास–स्रोतोरोधाग्निमन्दता भवन्ति ( अहृसू. ७.६१ )

अहितनिद्रया हलीमकशिरोजाड्यस्तैमित्यमतिभ्रंश-शोफारोचकार्धावभेदककण्डूरुक्कोठपिटिकाकास-गलामयविषवेगप्रवृत्तयश्च भवन्ति (असंसू. ९.४९-५१)

**–कर**–वि., निद्राजनकः (सुचि. २४.७०)

**–क्षय**–पु., लक्षण० निद्रायाः क्षयः (चचि. ११.६५)

**–नाश**–पु., लक्षण० निद्राया नाशः (चसू. १६.१४) रोग० निद्राक्षयः तत्कारणानि–कायशिरसो विरेको वमनं रक्तमोक्षणं धूमक्षुत्तृड्व्यथाहर्षशोकाश्रिन्तोत्कण्ठाऽसुखाशय्यारूक्षान्नं कालशीलक्षयोऽनिलपित्तयोर्वृद्ध्यादयश्च (असंसू. ९.५३-५६) तज्जन्या रोगाः– अङ्गमर्दशिरोगौरवजृम्भिका जाड्यग्लानिभ्रमापक्तितन्द्रा वातजा व्याधयश्च (असंसू. ९.५६) तत्र चिकित्सासूत्रम् – अभ्यंगो मूर्ध्नि तैलनिषेवणं गात्रस्योद्वर्तनं संवाहनानि शालिगोधूमादिनिर्मितं स्निग्धं मधुरं भोजनं बिलेशयानां विष्किराणां मांसरसा द्राक्षादिफलोपयोगो मनोज्ञशयनासनयानानि च (सुशा. ४.४२-४६)

**–निग्रहज**–वि., रोग० उदावर्तभेदः निद्राविधारणाज्जायमानो (व्याधी) (अहृसू. ४.१२)

**–प्रणाश**–पु., लक्षण० निद्रानाशः (असंसू. ५.३३)

**–भ्रंश**–पु., लक्षण० निद्रानाशः (अहृसू. ११.६)

**–विधारणज**–पु., रोग० उदावर्तभेदः, निद्राया विधारणात् जृम्भाऽङ्गमर्दस्तन्द्रा शिरोरोगोऽक्षिगौरवं च भवति (चसू. ७.२३) तत्र चिकित्सा—स्वप्नसंवाहनाभ्यङ्गादीनि (चसू. ७.२३)

**निद्राघात**–पु., लक्षण० निद्राया विघातः [सुउ.५५.३५]

**निद्रातियोग**–पु., निद्राया अतिशयेन सेवनम् (सुशा. ४.४७)

**निद्राधिक्य**–न., लक्षण० विंशतिश्लेष्मविकाराणामेकतमः, अतिनिद्रता (चसू. २०.१७; चनि. १.३२)

**निद्राभिघात**–पु., रोग० निद्रावेगविघातः (सुउ. ५५.१७)

**निद्रारि**–पु., वनस्पति० निम्बभेदः नेपालनिम्बः (रा. ९.५२; ध. १.३५) द्र० 'किराततिक्त' किराततिक्तः (ध. १.३५)

**निद्रालु**–स्त्री., वनस्पति० वार्ताकिनी (ध. १.१०१; रा. ७.१२८) वनबर्बरिका (रा. १०.८८)

**–त्व**–न., तामसगुण० सुषुप्सिशीलता (सुशा. १.१८)

**निधन**–न., विनाशः, मृत्युः (सुसू. ३१.३०) जन्मतः सप्तमं नक्षत्रम् (इन्दुः असंनि. १.२१)

**निपतित**–वि. लक्षण० विकलाङ्गः (ड. सुउ. ३९.४०)

**निपात**–पु., च तु इत्यादीन्यव्ययानि निपातसंज्ञानि (सुचि. २.९६) संयोगः स्पर्शः रसनायोगश्चेति (चक्र.चसू. २६.६६)

**निफेन**–न., निर्यास० अफूकम् (रा. ६.१९१)

**निबन्ध**–पु., निश्रित्य बध्नातीति निबन्धो मूलम् (ड.) मूलम् (सुनि. ९.३०)

**निबन्धन**–न., अधिष्ठानम् (अहृसू. ११.३७)

**(निबन्धनी)**–स्त्री., मांसरज्जुः भग्नपर्शुकादिबन्धनार्थमुपयुज्यते (सुचि. ३.२९)

**निबर्हण**–न., नाशनम्, विनाशः (अहृसू. ५.८१)

**निभ**–वि., तुल्यम्
न., प्राकाश्यम्, स्वरूपम्, उपदेशः (सुउ.१३.१०)

**निभृत**–वि., विनीतः (चक्र. चवि. ८.८)

**(निभृता)**–स्त्री., अव्यग्रा (इन्दु. असंउ. १)

**निमग्नरूप**–वि., लक्षण० अंतःप्रविष्टरूपम्, ईषद्दृश्यरूपम् (ड. सुउ. ५.४)

**निमज्जन**–न., बुडनम् (चनि. ७.६)

**निमि**–पु., राजर्षि० शालाक्यतंत्रकर्ता वैदेहः (चसू., २६.५)

**निमित्त**–न., हेतुः, कारणम् (सुचि. ३४.३) चिह्नम्, शकुनः (चइ. १२.२१) निदानम् (चनि. १.३)

**–विपरीत**–वि., हेतुविपरीतम् (चवि. ३.१३)

**निमित्तानुरूपा**–वि., निमित्तमनुसृत्य वर्तते सा। निमित्तसदृशी विकृतिः (चइ. १.७)

**निमिष**–पु, नेत्ररोग० वातजोऽयं असाध्यश्च (सुउ. १.२९)

**निमीलन**–(परिव०) न., संकोचः (सुशा. ४.३२)

**निमेष**–पु., चक्षुषोर्निमीलनम् (चशा. ७.१६; सुशा. १.१७)
कालविभाग० लध्वक्षरमकारादि तस्योच्चारणं कण्ठताल्वादिव्यापारेणोदीरणम् तत्प्रमाणो निमेषः (सुसू. ६.४)
नेत्ररोग० असौ नेत्रवर्त्मगतः, तल्लक्षणम्—उच्चैः संभाषणाद् वायुर्वर्त्मसंश्रया निमेषणीः सिराः प्रविष्टः सन् वर्त्मानि चालयेत्, स निमेषाख्यो व्याधिः (सुउ. ३.२५) असौ वेदनारहितः (असंउ. ११)

**–काल**–पु., सूक्ष्मतमकालविभागः 'अक्षिपक्ष्मपरिक्षेपो निमेषः परिकीर्तितः। द्वौ निमेषौ त्रुटिर्नाम

द्वे त्रुटी तु लवः स्मृतः ' इत्यग्निपुराणे
( चशा. १.५०; सुसू. ६.४ )

**निमेषणी**–स्त्री., सिरा० नेत्रवर्त्मस्था सिरा, यद्बलेन निमेषोन्मेषौ स्याताम् ( सुउ. ३.२५ )

**निम्न**–वि., गम्भीरम् ( र. ९.८४ )
नीचैस्तनः, लीनः, मग्नः ( र. १.६७ )

**–ग**–न., जलम्, निम्नमधस्तनं देशं स्वसमानस्तरावाप्तये गच्छति इति निम्नगं जलम् ( रा. १४.३१८ )

**–स्थान**–न., गर्तकूपवद् गम्भीरं स्थलम्
( सुशा. १०.४६ )

**निम्ब**–पु., वनस्पति० कण्डूघ्नगणोक्तमेकं द्रव्यम् ( चसू. ४.११ ) कुष्ठादिहरप्रदेहोक्तमेकं द्रव्यम् ( चसू. ३.३ ) मण्डूकपर्ण्यादिशाकवर्गोक्तमेकं द्रव्यम्, तिक्तं पित्तकफापहं च तत् ( सुसू. ४६.२६२–२७० ) निम्बगुणाः–तिक्तः, शीतो ऽ पक्वशोथपाचनः पक्वव्रणशोधनः कफपित्तघ्नो रक्तकुष्ठकण्डूव्रणकृमिशोफहृदयदाहविषदोषनाशनश्च ( ध. १.२९; असंसू. १२.७३ )
हिं.—नीम, निम.
बं.—निम, निंब.
**म.—कडुनिंब, कडुलिंब.**
गु.—कडू लिंबडो.
त.—वेंपु.
फा.—दरखहक, दरख्तहक.
किराततिक्तः ( ध. १,३४ )

**–कषाय**–पु., योग० निम्बक्वाथः सुरामेहघ्नः
( सुचि. ११.९ )

**–घृत**–न., घृत० निम्बत्वक् साधितं घृतम् रक्तपित्तप्रबलेषु कुष्ठेषूपयुक्तम् ( चचि. ७.१३५ )

**–च्छदाद्यञ्जन**– न., अञ्जन० कुकूणके उपयुक्तम्
( सुउ. १९.१२ )

**–तरु**–पु., वनस्पति० पारिभद्रः ( रापरि. ८.१० )

**–तैल**–न., स्नेह० निम्बतैलगुणाः—तिक्तं अल्पोष्णं. वातपित्तकफघ्नं, कुष्ठशिरोरोगघ्नं ( सुसू. ४५.११५ ) कृमिघ्नं च ( ध. ६.१३५ ) वल्मीकव्याधौ रोपणार्थमुपयुज्यते ( सुचि.२०.५५ ) (असंउ.३७) रसकर्मण्युपयुज्यते ( र. १०.७३.७६ )

**–त्वच्**–स्त्री,, निम्बत्वक्तत्कल्कलेपो व्रणजकृमिनाशकः
( अहसू. २९.७६ )

**–धूप**–पु,, निम्बस्य त्वक्पत्रपुष्पफलमूलानां धूपः सघृतः सर्वारिष्टहरः ( काक.१.३५ )



**–निर्यास**–पु., निम्बस्य निर्यासः नेत्ररोगेष्वञ्जनार्थमुपयुज्यते ( सुउ. १२.१३.१४ )

**–पत्र**–न., निम्बस्य पर्णानि, रक्षोघ्नधूपनद्रव्येष्वेकम् ( सुसू. १९.२८ ) कर्णिकापातनोपयोगि
( सुक. ८. १३६ )

**–पुष्प**–न., निम्बकुसुमं शाकत्वेनोपयुज्यते, कफपित्तहरं कुष्ठघ्नं च ( सुसू. ४६.२८६ )

**–प्रसव**–पु., निम्बपल्लवः, कफजतृष्णायां वमनोपयोगी
( सुउ. ४८.२१ )

**–फल**–न., निम्बफलगुणाः–रूक्षोष्णं कटुपाकि लघु वातकफघ्नं जन्तुप्रमेहनुच्च ( सुसू. ४६.१९७ )

**–बीज**–न., निम्बस्य बीजम् वमनोपयोगि
( चसू. २.७-८ )
वातजग्रन्थ्यादिषु लेपार्थम् ( असंउ. ३१ )
पु., वनस्पति० राजादनः ( रा. ११.१४६ )

**–मूल**–न., निम्बस्य मूलम् वमनार्थमुपयुज्यते
( सुसू. ३९.३ )

**–यूष**–पु., कृतान्न० तद्गुणः दीपनो हृद्यः पित्तघ्नः कफमेदोविशोषी कृमिकुष्ठज्वरापहश्च
( सुसू. ४६.३७० ३७१ )

**निम्बरक**–पु., वनस्पति० महानिम्बः ( ध. १.३१ )

**निम्बारिष्ट**–पु., आसुत० कुष्ठमेहकृमिघ्नो ऽ यं वरुणेन विनिर्मितः निम्बपंचांगखदिरसारहरितक्यादिसंधितोऽयं ( असंचि. २१ )

**निम्बुक**–न., वनस्पति० जम्बीरः ( र. १०.८० )

**निम्बूक**–पु., वनस्पति० जम्बीरः ( रा. ११.२२ )

**निम्बोदक**–न., निम्बक्वाथः, वामकः, स्तन्यदोषहरणश्च
( सुचि. १७.४३ )

**नियति**–स्त्री., दैवम्, पूर्वजन्मार्जितौ धर्माधर्मौ, नियतिरेव सर्वस्य कारणमिति नियतिवादिनो जोघुष्यन्ते
( ड. सुशा. १.११ )
ज्वरः ( सुउ. ३९.९५ )

**नियन्तृ**–वि., नियामकः, शास्ता ( चसू. १२.८ )

**नियम**–पु., निबन्धनम् पथ्याचरणम् अथर्ववेदोदितचिकित्साविशेषः ( चसू. ३०.२१ )
मनःसंकल्पादिनिरोधः ( ड. ) शौचं संतोषस्तपः स्वाध्याय ईश्वरप्रणिधानं च ( सुचि. २९.१० )
शास्त्रोदितो व्रतावस्थामौनादिविधिः (सुसू. ६.३०)
निषेधः ( ड. सुचि. ३८.९८ )
उपवासादिः ( ड. सुचि. ३९.१४ )
अक्रोधो, गुरुशुश्रूषाशौचमाहारलाघवमप्रमादश्चेति पञ्च नियमाः ( ड. सुचि.१.१३३ )

**नियमन**–न., पारदसंस्कार० पारदस्य चाञ्चल्यनिवारणार्थं रोधनसंस्कारानन्तरं विधीयमानः स्वेदनसंस्कारः ( र. ८.६२ )
पु., वनस्पति० निम्बः ( ध.१.२९ )

**नियमात्मिका**–वि., नियमयुक्ता संयमरूपा ( चशा. १.१०० )

**नियुद्ध**–न., बाहुयुद्धम् ( ड. सुउ. ६४.३८ )
निरग्निकः स्वेदः स्वेदोत्पत्तिप्रभविष्णुरयं निरग्निकः स्वेदः (सुचि. ३२. १५)

**नियोग**–पु., तन्त्रयुक्ति० इदमेव कर्तव्यमिति नियमो नियोगः, यथा–पथ्यमेव भोक्तव्यम् (सुउ. ६५.३७)

**निरग्निकस्वेद**–पु., स्वेद० आतपो गुरुप्रावरणं नियुद्ध-मध्वगमनं भारहरणं व्यायामो निपातोऽमर्षश्चेति साक्षादग्निसम्बन्धराहित्येनाऽयं निरग्निकः स्वेदः ( सुचि. ३२.१५; चसू. १४.६४ )
( अहृ. सू. १७.१८-२९ ) द्र० ' स्वेद '

**निरङ्कणा**–स्त्री., वनस्पति० नीरकणा जलपिप्पली रसोपरसशुद्ध्यर्थमुपयुक्ता ( र. ३.१३२ )

**निरङ्कुश**–वि., स्वायत्तः स्वाधीनः निर्नियन्तृकः ( असंसू. ८.५ )

**निरत्यय**–वि., निर्भयः ( चचि. २८.१४४ )
निर्गतव्यापत्, अत्ययो व्यापत्, तद्रहितः ( सुशा. ४६.२ )
निर्दोषम् ( सुउ. ४७.२९ )
अबाधम् ( सुसू. ४६.४६३ )

**निरनुबन्ध**–वि., निर्विकल्पम् निःसंज्ञकम् अत्रेदं क्रिया-विशेषणत्वेन प्रयुक्तमस्ति ( अहृसू. ७.७७ )

**निरन्न**–वि., परिवर्जितान्नः ( सुचि.६.१३ )

**निरप**–पु., धान्य०व्रीहिः--( रा. १६.७९ )

**निरपत्य**–वि.,सन्तानरहितः, अपत्यहीनः(चचि.२(१)१६)

**निरपत्रपा**–वि. लज्जाशून्या, अपत्रपा लज्जा, तद्रहिता (सुनि. ८.११)

**निरपेक्षरूक्षा**–वि., अपेक्षारहिता निःस्नेहा च ( असंनि. १ )

**निरवशेषतस्**–अव्य., संपूर्णतया ( सुचि. २२.३७ )

**निरस्तमुष्क**–वि., लक्षण०यस्याण्डकोषौ भिन्नौ तादृशौ भिन्नाण्डकोषो मनुष्यः ( सुचि. २.६६ )

**निराकरिष्णु**–वि., तामससत्त्वलक्षण० निराकरणशीलः ( चशा. ४.३९ (१)
**–ता**–स्त्री., पाशवगुण०निराकरणशीलता स्मृतिहीनता च ( सुशा. ४.९५ )

**निराबाध**–वि., निर्गता बाधा यस्मात् तत्, बाधारहितम् ( चसू. १३.४० )
**–गृह**–न., धूलिधूमवातातपादिरहितं गृहम् ( सुउ. १७.६७ )

**निराम**–वि., लक्षण० आमदोष रहितं पक्वं ( ज्वरादि ) ( चचि. ३.१६७.६८ )
**–ज्वर**–पु., परिपक्वज्वरः, तल्लक्षणम्–क्षुत्क्षामता गात्रलघुत्वं ज्वरमार्दवं दोषप्रवृत्तिरष्टाहश्चेति ( चचि. ३.१३७ )
**–मल**–पु., आमरहितो दोषो वातादिः, निरामलक्षणम्–स्रोतःशुद्धिर्लघुत्वं बलवत्त्वं वायोः सम्यक्संचार उत्साहः पक्तिर्मलप्रवृत्तिरन्नाभिलाषा क्लमाभावश्च ( अहृसू. १३.२४ )

**निरामय**–वि., स्वस्थः, व्याधिरहितः ( सुसू. ४६.४२९ )

**निरालम्बा**–स्त्री., वनस्पति० आकाशमांसी (रा. १२.९५)

**निराश**–वि., निर्गता आशा यस्मात् वितृष्णः ( चचि. ६.३ )

**निराश्रय**–वि., मर्माद्यनाश्रितः, जिह्वादन्तसन्ध्याद्यप्राप्य-देशमनाश्रितो व्रणादिः ( सुसू. ५.८ )

**निराहार**–वि., कृतोपवासः अभोजी ( सुचि. ३८.२२ )

**निरिन्द्रिय**–वि., इन्द्रियरहितं, तच्च अचेतनम् ( चसू. १.४८ )

**निरीश**–वि., स्थाय्यात्मरहितः ( चशा. १.४७ )

**निरीह**--वि., निश्चेष्टः निर्व्यापारः ( असंचि. ८ )

**निरुच्छ्वासिन्**–वि., लक्षण० निरुद्धोच्छ्वासः ( ड. सुउ. ४२.८० )

**निरुच्छ्वासिकरण**–न., श्वासावरोधात्मकं कर्म ( असंशा. ४.३२ )

**निरुञ्छिका**–स्त्री., ग्रह० रेवतीग्रहसंज्ञाविशेषः

**निरुत्थ**–वि., अपुनर्भवम् लोहादि भस्म (गुडगुञ्जादिकेन ध्मात्वा जातं ) रौप्येण सहितं मूषायां ध्मात्वा तेन न लगति चेत् तदा इयं संज्ञा ( र. ८.३० ).
**–लोह**–न., अपुनर्भवं लोहभस्म, तत्परीक्षा यथा-षोडशांशस्वर्णमाक्षिकयुते घृतमधुभ्यां मर्दिते कान्ते समप्रमाणं रूप्यं प्रक्षिप्याग्नौ द्रावयित्वा यदि लोहं स्वप्रमाणावशिष्टमेव उपलभेत तर्हि तन्निरुत्थं जानीयात् ( र. २८.१७ )

**निरुद्‌गार**–वि., उद्‌गाररहितः ग्रन्थिरहितः अस्यां अवस्थायां घर्षणसमये भेषजस्य खल्वान्निर्गमनं न भवति ( र. ९.८२ )

**निरुद्ध**–वि., अवरुद्धः, विबद्धः ( चशा. २.८ ) ( सुनि. १३.५४ ) संकुचितः

**–प्रकश**–पु., मेढ्रजक्षुद्ररोग० तल्लक्षणम्—वातोपसृष्टं चर्ममणिं संश्रयते तेन मूत्रस्रोतोरोधो भवति। मूत्रमवेदनं मन्दधारं प्रवर्तते। मणिश्च न विदीर्यते ( सुनि. १३.५२-५३ )

**–मणि**–पु., क्षुद्ररोग० निरुद्धप्रकशः मणेर्विकासरोधश्च भवति ( असंउ. ३८ )

**निरुपम**–पु., कीट० पञ्चगौधेरकेष्वेकः, सविषोऽसौ, तेन दष्टस्य शोफः दाहरुजौ च भवतः (सुक. ८.२८)

**निरुपस्तम्भ**–वि., अनावृतः ( चक. चचि. २८.७५ )

**निरुल**-पु., जलचर० सामुद्रो मत्स्यः ( सुसू. ४६.११८ )

**निरूढ**–वि., कृतनिरूहबस्त्युपचारः ( सुचि. २४.३६ )

**(निरूढा)**-स्त्री., वनस्पति० मकुष्ठका ( ध. ६.९२ )

**निरूह**–पु., उपक्रम० पञ्चकर्मस्वेकम्, बस्तिभेदः आस्थापनेत्यपरपर्यायः, निःस्नेहिकोऽल्पस्नेहो वाऽयम्, तन्निरुक्तिः—शरीररोहणात् दोषनिर्हरणादचिन्त्यवीर्यप्रभावतया चास्मिन्नूहासम्भवान्निरूह इति ( सुचि. ३५.१८; असंसू. २८.३ ) तद्गुणाः— वयःस्थापयिता सुखायुर्बलाग्निमेधास्वरवर्णकृत् सर्वार्थकारी शिशुवृद्धयूनां निरत्ययः सर्वगदापहो विट्श्लेष्मपित्तानिलमूत्रकर्षी दार्ढ्यावहः शुक्रबलप्रदो विष्वक्स्थितदोषचयनिरसनः सर्वविकारशामकश्च ( चसि. १. २७–२८ ) तत्कालनियमः— तत्र विरेचनादूर्ध्वमन्नसंसर्गेण दिनानि षट्, ततो मधुरादिरससंसर्गमाचरेत्, स्नेहपानेनापि दिनानि षडतिक्रामेत्, ततो दिनत्रयं लघूष्णं भुञ्जानश्चतुर्थेऽहनि स्नेहाभ्यक्तः स्वेदितश्चास्थापनं सेवेत (सुचि.३६.५१) तत्कल्पनम् – निरूहकल्पनार्थं विंशतिपलानि बस्तिकल्पोक्तं दशमूलादि, अष्टौ मदनफलानि, सामान्यपरिभाषया षोडशगुणं जलं दत्त्वा क्वाथयेत्, चतुर्भागावशेषश्च तत्क्वाथो ग्राह्यः। ततस्तस्मादेवंकृतात् क्वाथाच्चतुर्थांशं स्नेहं वाते प्रकल्पयेत्। पित्तेऽधिके षष्ठांशं कफेऽधिके स्वस्थे च पुरुषेऽष्टमांशं स्नेहं त्रिपलिकं प्रकल्पयेत्। सर्वत्र वाते पित्ते कफे स्वस्थे च, कल्कात् पेष्यद्रव्यादष्टमं भागं त्रीणि पलानि कल्पयेत्, यथा वा बस्तिरत्यच्छोऽतिसान्द्रोऽतिघनो न भवति तथा कल्कः कल्पयितव्यः। पलमात्रं गुडं मधुपद्वादिविशेषं च युक्त्या प्रकल्पयेत् ( अहसू. १९.३८–४० ) निरूहयौगिकानि द्रव्याणि – क्षीराण्यम्लानि मूत्राणि स्नेहाः क्वाथा रसा लवणानि फलं क्षौद्रं शताह्वा सर्षपो वचा एला त्रिकटुकं रास्नादीनि मधूलिकान्तानि द्रव्याणि (सुचि.३८.२४–२८; असंसू.१४.५) द्रव्यप्रमाणम्–स्वस्थे पुरुषे क्वाथस्याष्टौ, स्नेहस्य पादोनपञ्च, कल्कस्य त्रीणि। क्रुद्धेऽनिले क्वाथस्याष्टौ, स्नेहस्य षट्, कल्कस्य त्रीणि। क्रुद्धे पित्ते क्वाथस्याष्टौ, स्नेहस्य चत्वारि, कल्कस्य त्रीणि। क्रुद्धे कफे क्वाथस्याष्टौ, स्नेहस्य त्रीणि, कल्कस्य त्रीण्येव पलानि। लवणादीनां प्रमाणं तु दोषभेषजयोः सामान्यविशेषन्यायेन गुणं अवलोक्य सम्यक् प्रकल्पयेत् ( सुचि. ३८.२९–३० ) वयोऽनुरूपं प्रमाणम्–आद्ये वर्षे प्रसृतार्धं तत आद्वादशादर्धप्रसृताभिवृद्धिः द्वादशतः परमष्टादशपर्यन्तं प्रसृताभिवृद्धिः सा चासप्ततेः ( चसि. ३.३१–३२ ) तद्द्रव्यसंयोजनम् माक्षिकं लवणं स्नेहं कल्कं क्वाथमिति क्रमादावपेत्। निरूहाणां संयोजने विधिरयम् ( अहसू. १९.४६ ) तत्प्रदानविधिः—अथानुवासितमभ्यक्तं सुस्विन्नशरीरं मध्याह्ने शुचौ वेश्मनि योग्यशय्यायां वामपार्श्वशायिनं वामसक्थिप्रसारितं दक्षिणसक्थ्याकुञ्चितं वाग्यतं सुनिषण्णदेहं विदित्वा बस्तिद्रव्यं बस्तौ प्रक्षिप्याशयं बुद्बुदरहितं वातरहितं च कृत्वा बस्तिनेत्रं बस्तौ स्थापयित्वा सूत्रेण द्विस्त्रिर्वाऽऽवेष्ट्याकर्णिकं बध्नीयात्। अत उत्तरं बस्तिप्रणिधानविधिना नातिद्रुतं नातिविलम्बितं सकृदेव बस्तिमवपीडयेत्। नेत्रमपनीय च मृदुकोष्ठपुरुषापेक्षया त्रिंशन्मात्रामुपेक्षेत ( सुचि. ३८.३–६ ) ततो दत्तमात्रे निरूहे उत्तानस्तन्मनाः कृतोपधानः सञ्जातवेगः सन्नुत्कटकः सृजेत् ( अहसू. १९.४६ ) तत्पश्चात्कर्म निरूढं वातादिदोषानुसारेण बिल्वयष्ट्याह्वमदनफलतैलैर्यथाक्रममनुवासयेत् ( सुचि. ३७.४६ दोषभेदेननिरूहसङ्ख्या— वातघ्नौषधदशमूलादिभद्रदार्वादिनिःक्वाथसैन्धवयुतः स्निग्धः स्वाद्वम्लोष्णरसान्वित एको बस्तिर्वाते हितः। पित्ते च न्यग्रोधादिगणपद्मकादिगणसिद्धौ मधुरशिशिरौ घृतदुग्धेक्षुरसमधुयुक्तौ बस्ती। कफे चारग्वधादिवत्सकादियुता रूक्षाः सक्षौद्रगोमूत्रास्तीक्ष्णोष्णकटुकास्त्रयो बस्तयः ( अहसू. १९.५६–५९ ) निरूहस्यातिशीलनाद्वातवृद्धिर्जायते ( अहसू. १९.६५ ) निरूहयोग्याः–गुल्मानाहखुडप्लीहशुद्धातिसारशूलिनो जीर्णज्वर-

प्रतिश्यायशुक्रानिलमलग्रहातुरा वर्ध्माश्मरीरजोनाश-दारुणानिलपीडिताश्च ( अहसू. १९.२-३ ) दुर्निरूढे मूत्रार्त्यरुचिजाड्यानि भवन्ति ( सुचि. ३८.८-९ ) द्र० ' बस्ति '

**-क्रम**-पु., निरूहस्य क्रमः अनुक्रमविधानम् ( ड. सुचि. ३८.१ )

**-क्रमचिकित्सित**-न., अध्याय० ( सुउ. ३८.१ )

**निरूह्य**-वि., निरूहबस्तियोग्यः निरूहितुं योग्यो निरूह्यः ( असंसू. २८.१३ )

**निरोजस्**-वि., ओजोहीनः ( सुशा. ३.३० )

**निरोध**-पु., मरणम् ( चसू. ३०.२५ ) विनाशः ( चसू. १६.२८ )

पारदसंस्कार० निरोधनम्, यत्र पारदं गोऽजावि-नरनारीणां मूत्रशुक्ररक्तसैन्धवैश्च मर्दयित्वा कुपिकास्थं कृत्वा भूगर्ते च निधाय तदुपरि त्रिदिनपर्यन्तमेक-विंशतिदिनपर्यन्तं वाऽग्निं ददाति, येन स मुखकरो ( तीक्ष्णः ) भवति । केचन सैन्धवलवणजलेन दोला-यन्त्रे दिनमात्रं तस्य स्वेदनं कुर्वन्ति ( र. ११.४७ )

**निर्ऋति**-पु., रक्षसां पितामहः ( ड. ) देवानुचरगणेष्वेकः ( सुउ. ६०.२५ )

**निर्गत**-वि., विश्लिष्टम् ( सुचि. ३.२७ )

**-त्व**-न., बहिर्निःसरणम् ( सुसू. ३२.४ )

**निर्गद**-वि., निर्दोषम् ( असंचि. १३; अहसू. ३.२२ )

**निर्गन्ध** न., वनस्पति० चन्दनभेदः बर्बरः ( ध. ३.९ )

**निर्गुण**-वि., गुणरहितोऽल्पगुणः ( सुशा. ३.३५ )

**निर्गुण्डिका**-स्त्री., वनस्पति० निर्गुण्डी ( र. २.९० )

**निर्गुण्डी**-स्त्री., वनस्पति० कटुस्तिक्तोष्णा वातकफघ्नी, कृमिकुष्ठरुक्प्लीहगुल्मारुचिकण्डूतिशूलहृद्रोग-कासघ्नी च (ध. ४.८१; चसू. ४.११; चचि. ८.८४)

हिं.—सम्हालू, न्यवारी.

**म.—काळी निर्गुंडी.**

गु.—नीली नगोड.

बं.—नीलनिशिंदा.

ता.—करुनोच्चिल.

फा.—मिसवान.

**निर्गुण्डीभेदः शेफालिनिर्गुण्डी** ( भ. ४.८३ )

**नीलसिन्धुवारः** ( ड. सुउ. ५२.३० )

**निर्घात**-पु., वज्रपातः ( चवि. ३.७.३ )

**रोगलक्षण० आघातजपीडावद्दुःखम्** ( काखिल. १२.११ )

**निर्घातन**-न., चतुर्विंशतियन्त्रकर्मस्वेकम्, इतश्चातश्चा-लनात्मकं यन्त्रकर्म ( सुसू. ७.१७ )

**निर्घृण**-वि., निष्कृपः ( चक्र. चसू. ७.५७ )

**निर्घृणित्व**-न., लक्षण० जुगुप्सारहितम्, विगतलज्जत्वम् ( चनि. ६.१३ )

**निर्घोष**-पु., अत्युच्चशब्दः ( चचि. १८.१२ )

**निर्जय**-पु., उपशमः ( सुउ.१३.११ )

**निर्जरसर्षप**-पु., वनस्पति०देवसर्षपकः ( रा. ९.४३ )

**निर्जीव**-पु., पारदबन्ध० जीर्णाभ्रको जीर्णगन्धो वा पारदो भस्मीभूतः 'चतुर्थांशेन जीर्णवज्राभ्रकसत्वो जीर्णषड्गुणगन्धो वा' (र. ११.७७ )

**निर्णय**-पु.,तन्त्रयुक्ति०पूर्वपक्षस्य यदुत्तरं स निर्णयः ( सुउ. ६५.२६ )

विचारितस्यार्थस्य व्यवस्थानम् ( चसि. १२.४२ )

**निर्दहन**-न., वेदना० भस्मसात्करणवद् वेदना ( सुचि. १.७ )

वह्निना निःशेषं दह्यमानत्ववद् वेदना ( सुसू. २२.११ )

**( निर्दहनी )**-स्त्री., वनस्पति० चित्रकः ( सुउ. ५७.१० )

अजमोदा ( सुसू. ५७.१० )

मोरटः, मूर्वा, अग्निमन्थः ( ड. सुचि. ४.३२ )

गणकारिका ( ड. सुउ. ५५.४८ )

**निर्देश**-पु., तन्त्रयुक्ति० विस्तर-वचनं निर्देशः यथा-शारीरमागन्तुकं चेति शल्यम् ( सुउ. ६५.१३ )

विवरणम् ( सुशा. ६.१ )

**-कारित्व**-न., आतुरगुण० वैद्योपदिष्टार्थकर्तृत्वम् ( चसू. ९.९ ) द्र० ' रोगिन् '

भिषग्वश्यत्वम् इदमातुरगुणानां श्रेष्ठम् ( चसू. २५.४०; असंसू. १३.३ ) द्र० ' रोगिन् '

**निर्दोह**-पु., उपक्रम० स्तन्यनिर्हरणम् ( कासू. १९ )

**निर्द्रववर्तित**-वि., अनतिद्रववर्तितं शुष्काख्यं व्यञ्जनादि ( चक्र. चचि. २४.१७३ )

**निर्धूनन**-(परिव०) न., आलोडनम् ( सुचि. २.५९ )

**निर्धूम**-वि., विगतधूमावस्थः यथा गन्धकहरितालसोमल-मनःशिलादिकानां ज्वलन-शीलानां विगतधूमा-वस्थायामग्नाववस्थितिः ( र. ९.६१ )

**निर्ध्मापन**-न., उपक्रम० प्रधमनम्, पिप्पलीकट्फलादि-चूर्णस्य नाड्या नासान्तःप्रापणम् अनेनावबद्धशल्यो-द्धरणं विधीयते ( सुसू. २७.४ )

**निर्बन्ध**-पु., संबन्धः ( चशा. ४.१५ )

**निर्बीज**–वि., बीजरहितम् ( ध. ५.५८; रा. ११.७९ )
पु., पारदबन्ध० पादांशसुवर्णजीर्णो, गन्धके च समभागेन क्रमेण पिष्टीकृतः पुटितश्च पारदः ( र. ७८ ११ )

( **निर्बीजा** )–स्त्री.,वनस्पति० द्राक्षाभेदः, काकलीद्राक्षा ( ध. ५.५८; रा.११.७९ ) द्र० 'द्राक्षा'

**निर्भक्त**–वि., आहाररहितम् ( सुउ. ४७.१४ )

**निर्भर्त्सन**–पु., रंजनद्रव्य० अलक्तकः ( रापरि. ६.१२ )

**निर्भुग्न**–वि., अतिकुटिलम् ( चचि. ३.१०४ )
(परिव०) परिवर्तनम् , उत्तानीकरणम् (सुउ.१३.४) वक्रीभवनम् ( अहसू. २८.४५ )

**निर्भेद**–पु., लक्षण० शस्त्रेण विदारणवद् वेदना ( सुउ. ६.१२ )
(परिव०) निःसरणम् ( सुनि. ६.४ )

**निर्मथन**–न., लक्षण० मन्थानविलोडनवद् वेदना (सुचि. १.७; सुउ. ४३.६)

**निर्मथ्या**–स्त्री., वनस्पति० नलिका ( ध. ३.४३ )

**निर्मन्थन**–न., मंथनम्, विलोडनम् ( ड. सुक. ३.२८ )

**निर्मल**–न., खनिज० महारसभेदः, विमलम् ( ध. परि. ६.६ )
खनिज० महारसभेदः अभ्रकम् ( ध. परि. ६.३ )

**निर्माल्य**–न.,वनस्पति० स्पृक्का ( इन्दु. असंउ. ८ )
शिवनिर्माल्यं बिल्वफलम् ( र. २३.६ )

( **निर्माल्या** )–स्त्री., वनस्पति० स्पृक्का ( ध. ३.६२ )

**निर्मोक**–पु., कञ्चुकः, सर्पत्वक ( र. २२.१०५; ) ( सुचि. २९.२५ )

**निर्यन्त्रण**–लि., वातातपादिनिषेधरहितो भैषज्य-प्रयोगादिः ( सुसू. ४४.५३ )

**निर्यन्त्रणाशिन्**–वि., निर्यन्त्रणं यन्त्रणारहितं स्वच्छन्दम् अन्नादिकमत्ति इति निर्यन्त्रणाशी (चक. ७.४९)

**निर्यातन**–न., निर्गमनम् ( र. ८.७७ )

**निर्यास**–पु., औद्भिदान्निर्गतोंऽशः ( चसू. १.७३ )
निश्च्यूतः वृक्षान्निःस्रवन् श्लक्ष्णश्चिक्कणो घनद्रावः ( र. १७.१२१ )
क्वाथः ( र. २५.७१ )
भेषजकल्प० सद्यः समुद्धतप्रक्षालितक्षुण्णस्य तान्तवनिष्पीडितस्य स्वरसः ( असंक.८ )
वनस्पति० शाल्मली (ध. ५.१२६)
–**विष**–न., स्थावरविष० सप्त निर्यासविषाणि अन्त्रपाचककर्तरीयसौरीयककरघाटकरम्भनन्दन-नाराचकानि ( सुक. २.५ )
निर्यासविषेणाऽऽस्यदौर्गन्ध्यपारुष्यकफसंस्रवा भवन्ति ( सुक. २.९ ) द्र० 'विष'

**निर्यूह**–पु., क्वाथः ( चचि. १.४७, सुचि. २२.३४ )
षडङ्गविधानसिद्धं जलम् ( चचि. १९,५० )

**निर्लेखन**–न., उपक्रम० पुनःपुनर्लेखनं शस्त्रादिना ( सुचि. १.३९ )

**निर्लोह**–न., भैषज्य० बोलम् (ध. ६२)

**निर्लोहित**–वि., स्रुतरक्तम्, अपनीतरक्तम् ( अहसू. २८.२५ )

**निर्वचन**–न., तन्त्रयुक्ति० निश्चितं वचनम्, यथा–आयुर्विद्यतेऽस्मिन् अनेन वा, आयुर्विन्दतीत्यायुर्वेदः ( सुउ. ६५.३५ )
पण्डितबुद्धिगम्यो दृष्टान्तः यथा–ज्ञायते नित्यगस्येव कालस्यात्ययकारणम् ( चसि.१२.४४ )
यथा विविधं सर्पतीति विसर्पः ( चसि. १२.४४ )

**निर्वलीक**–लक्षण० वलीरहितम् ( चसि. ३.१६, अहसू. २९.२९ )

**निर्वातशयनस्थित**–वि., वातरहिते देशे शय्योपरि वर्तमानः ( असंसू. २५.३७ )

**निर्वाप**–पु., तप्तलोहस्य जले प्रक्षेपणम् (र. ८.५६)

**निर्वापन**–न., उपक्रम० व्रणस्य षष्ठ्युक्रमेष्वेकः, सेकलेपादिभिर्वेदनोपशमः ( सुचि. १.८ )
दाहौष्ण्यशमनम् ( चचि. २५.४० )
रोपणम् ( चसू. ३.२६ )
दाहप्रशमनम् ( चसू. १३.१४ )
औषधस्य शीतजलस्य वा परिषेकः ( चसू. १८.५,
निर्वाहणम्, साध्ये द्रुते लोहे वङ्कनालेनान्य-लोहप्रक्षेपणम्, एकीकरणम् ( र. ८.२४ )
( जले ) निःक्षेपणम् ( सुसू. ४५.१२ )

**निर्वाहण**–न., लक्षण० प्रवाहणम् ( चचि. १४.९ )
निर्वापणम्, एकीकरणम् ( र. ८.२४ )

**निर्वाहिका**–स्त्री., रोग० प्रवाहिका ( काखिल ४.८१ )

**निर्विकार**–वि., निर्व्यापारः ( सुचि. ७.३१ )
नीरोगः ( चसू. १.५६ )

**निर्विष**–वि., विषरहितः निर्विषाः सर्पा गलगोलीशूकपत्रा-दयः ( सुक. ४.३४. ( ४ )
गोनसादिः ( ड. सुउ. ६२.१७ )
ईषद्विषः (ड. सुक. ४.१००)
न., सर्पदंश० अविषं तत् ( सुक. ४.१४ )

**निर्वृत**–वि., अपेतदुःखानुबन्धि ( अहसू. २३.२८ )

**निर्वृति**–स्त्री., सुखम् ( चसू. २१.२९ )

शान्तिः ( सुसू. ४१.७ ) सा च पुष्टिकराणां श्रेष्ठा ( असंसू. १३ )

**निर्वृत्त**-वि., जातमात्रम् ( सुसू. ४३.३ )

**निर्वृत्ति**-स्त्री., निष्पत्तिः ( सुशा. ३.३६ ) अभिव्यक्तिः ( चसू. १.६४ )

**निर्वेग**-वि., निश्चलम् ( ड. सुसू. ४५.४० )

**निर्वेद**-पु., आत्मन्यवज्ञा, आत्मलाघवकल्पना ( चइ. १२.८७ )

**निर्वेधिम**-पु., पञ्चदशकर्णबन्धेष्वेकः पीठोपमपालिरुभयतः क्षीणपुत्रिकाश्रितः कर्णबन्धः(सुसू.१६.१०)

**निर्व्यलीक**-वि., त्वक्संकोचरहितम् ( सुचि. ७.३० )

**निर्व्यूढ**-वि., धातूनां द्रावणेनैकीकृतम्, धमनद्वारा अन्तःप्रवेशेन ऐक्यमापन्नम् ( र. २१.१९४ )

**निर्हरण**-न., उपक्रम० हरणम् दोषादीनाम् ( ड. सुउ. ३९.१२४ )

**निर्हार**-पु., मलादिनिर्गमः ( चक्र. चसि., ११.३० )

**निर्हृतशल्या**-वि., अपहृतशल्या ( सुचि. १५.१९ )

**निलयन**-न., उपवेशनम् ( सुसू. ३२.४ ) (परिव०) श्लेषणम् ( सुचि. ३३.४० )

**निवात**-वि., वायुरहितं स्थानादि ( सुचि.२४.८५ )
न., एकान्तस्थलम् ( चचि. ९.७८ )
पु., स्वेद० निरग्निकः ( सुचि. ३२.१५ ) द्र० 'स्वेद'
**-शरण**-न., निर्वातगृहम् ( असंसू. २६.९ )

**निवारण**-न., चिकित्सा ( सुउ. ४७.२४ )

**निवासवृक्ष**-पु., आवसतरुः ( चशा.५.१० )

**निवृत्त**-न., गुह्यरोग० परिवर्तिका ( असंउ. ३८ )
निर्गतं, परिवृत्तम् ( असंउ. ३८ )
**-चर्मन्**-न., क्षुद्ररोग० परिवर्तिका ( सुनि. १३.४८ )
**-प्रसवा**-स्त्री., यस्या अनुजननकालः षड्भ्यो वर्षेभ्य ऊर्ध्वं सा ( सुशा. १०.६६ )
**-सन्ताप**-वि., शारीरमानसदुखःरहितः, व्याधिमुक्तः ( सुचि. ३०.३ )
**-सन्तापीय**-वि., अध्याय० निवृत्तसन्तापेतिशब्दमधिकृत्य कृतः ( सुचि. ३० )

**निवृत्ति**-स्त्री., परावृत्तिः सा च सुखमिति जेगीयते (चशा. ५.८)
वैराग्यम्, निवृत्तिः पुष्टिकराणां श्रेष्ठा ( चसू. २५.४० )
उपरमः ( चइ. ११.७ )
**-काल**-पु.; निर्गमनसमयः ( अहसू. १९.२० )
**-लक्षण**-न., निवृत्त्यनुगुणं लक्षणम् ( चवि. ८.८० )

**निवेश**-पु., स्थापनम्, आश्रयणम् ( असंसू. ८.६ )

**निवेशन**-न., गृहम् ( असंसू. ८.७ )

**निशा**-स्त्री., रात्रिः ( सुसू. ५.२७ )
वनस्पति० दारुहरिद्रा ( ६.८४ )
हरिद्रा ( सुचि. १७.२१; ध. १.५४; र. ११.१०५ )
**-कल्कयुक्ताम्भस्**-( परिव० ) न., हरिद्राकल्कयुक्तं जलं यच्च जलौकास्थापनार्थमुपयुज्यते जलौकोपक्रमे ( अहसू. २६.४० )
**-चर**-पु., पिशाचः, राक्षसः ( सुसू. ५.२२ )
देवादिग्रहः निशाविहारित्वात् असृगादिभोजित्वाच्च राक्षसादय इत्येके ( सुउ. ६०.६ )
वनस्पति० चोरकः ( रा. १२.१२७ )
**-च्छद**-पु., वनस्पति० शटी ( ड. सुचि. ३८.४३ ) द्र० 'सठी' 'शठी'
**-द्वय**-न., हरिद्रा दारुहरिद्रा च ( अहसू. १५.४० )
**-पर्युषित**-वि., निशागमं यावत्स्थापितत्वात् शीतकषायः ( चक्रः चचि. २१.५८ )
**-वन**-पु., वनस्पति० शणः (रा. परि. ४.१७)

**निशाटक**-पु., निर्यास० गुग्गुलुः (रा. १२.१८३)

**निशान**-न., शस्त्रधाराकरणम् [ सुसू. ८.१३ ]

**( निशानि )**-स्त्री., अनिशितधाराणां शस्त्राणां निशानार्थं माषयूषप्रभा श्लक्ष्णशिला ( असंसू. ३४.३७ )

**निशान्धता**-स्त्री., नेत्ररोग० नक्तान्ध्यम् ( र. २९.१३८ )

**निशान्धा**-स्त्री., वनस्पति० जन्तुका ( रा. ३.१२७ )

**निशित**-न., खनिज० लोहभेदः तीक्ष्णलोहम् ( र. १३.३० )
**-निस्त्रिंश**-पु., तीक्ष्णखड्गः ( सुक. ४.३६ )

**निशिस्थित**-वि., शीतकषायः ( चचि. ३.२०७ )

**निशीथ**-पु., अर्धरात्रम् ( असंउ. ६. )

**निश्चन्द्र**-वि., चन्द्रिकया निर्मुक्तम् ( र. २.४५ )

**निश्चन्द्रिक**-वि., लक्षण० चन्द्रिकारहितम् ( र. २.१४ )

**निश्चयात्मिका**-वि., वस्तुस्वरूपपरिच्छेदात्मिका बुध्यादिः ( चसू. ८.१२ )

**निश्चला**-स्त्री., वनस्पति० शालिपर्णी ( रा. ४.११४ )

**निश्चारक**-पु., रोग० अतीसारस्यावस्थिको भेदः। प्रवाहिकाया अवस्थाभेदोऽपरपर्यायश्च, पुरीषक्षयापरपर्यायः ( ड. सुउ. ४०.१४५ )

**निश्चेष्टाधरकाय**-वि., लक्षण० चलनवलनादिश्चेष्टा, तद्रहितोऽधरकायो यस्य सः ( का. फक्कचि. )

**निश्च्युतित**-वि., परिस्रावितम् ( सुचि. ६.१८ )

**निःश्रेणिका**-स्त्री., वनस्पति० गुणाः- नीरसोष्णा पशूनामबलप्रदा ( रापरि. ८.५० )

**निःश्वसित**–न., श्वासप्रवेशनम् ( सुशा. २.५५ )
**निश्वास**–पु., श्वासस्याशरीरान्तःप्रवेशनम् (अरु.) श्वासप्रवेशः ( हे. अहसू. ११.१
श्वासनिर्गमः ( सुनि. ५.३३ )
**निषण्ण**–वि., उपविष्टम् ( सुचि. ३७.१०९ )
**निषिक्त**–वि., निक्षिप्तम् अवसिक्तम् ( सुचि. ६.१३ )
**निषूदन**–वि., विनाशकः ( अहसू. १५.३१ )
**निषेक**–पु., क्षरणम्, रोपणम् ( असंसू. ९.७१ )
**–सात्म्य**–न., जन्मसात्म्यम्, निषेको योनौ शुक्रस्थापनं, लक्षणया निषेको जन्म, कारणे कार्योपचारात् ( कासू. २३.३० )
**निषेकाभिमुख** वि., क्षरणाभिमुखम् ( असंसू. ९.७१ )
**निष्क**–पु., मान० शाणः, धरणद्वयं, माषचतुष्टयं तोलकपादश्च ( र. ११.३ ),
न., खनिज० सुवर्णम् ( रा. १३.३ )
**निष्कुट**–पु., गृहोपवनम् (ड.) वनगहनम् (सुउ. ३०.८)
गृहारामः ( इन्दु. असंउ. ५.— )
**( निष्कुटी )**–स्त्री., वनस्पति० एलाभेदः सूक्ष्मैला ( ध. २. ४४ ) द्र० ' एला '
**निष्कुल**–वि., निरस्थि, निर्बीजम् ( चचि. १.६६ ).
**निष्कुलीकरण**–न., निष्फलीकरणम् निर्बीजीकरणम् ( सुचि. २७.९ )
**निष्कोषण**–न., दन्तरञ्जकैः पुरुषैर्दन्तनिशानार्थमुपयुज्यमानः सविषः शाणो दन्तकाष्ठं वा ( सुसू. २३.८ )
**निष्क्रमण**–न., बहिःक्षेपणम् ( अहसू.१२.९ )
**निष्क्रियत्व**–न., चिकित्साकरणे निर्वर्तनीयत्वम् ( चचि. २५.३४ )
**निष्क्वाथ**–पु., क्वाथः, रसकापरपर्यायः ( सुशा. १०.१६; र. २२.२० )
कल्प० चतुर्भागावशेषः क्वाथः ( सुचि. ३१.६ )
**निष्टनन**–(परिव०) न., दुःखोद्गारः प्रवाहणम् कुन्थनम् ( कासू. २५.२६ )
**निष्ठा**–स्त्री., मोक्षः ( चशा. ५.२६ )
**निष्ठीव**–पु., मुखस्थितलालात्यागः ( अहसू. १३.२४ )
**निष्ठीवन**–न., (परिव०) निष्ठीवः ( सुचि. ४०.३० )
**निष्ठीविका**–स्त्री., निष्ठीवनम् ( चसू. ८.२१ )
**निष्ठुर**–पु., खनिज० ( कृत्रिमधातुः ) पित्तलम् ( ध. ६.१९ )
**निष्ठ्यूत**–न., ष्ठीवितः उद्वान्तः श्लेष्मा ( चइ. ९.१८ )
**निष्ठ्यूति**–(असंचि. ५.२४ )
**निष्पतद्यन्त्रसलिल**–न., यन्त्रपतितं जलम् ( असंसू. ४.३८ )

**निष्पतन**–न., स्रावः ( चचि. २६.११९ )
**निष्पत्रक**–पु., वनस्पति० करीरः ( रा. ८.१६ )
**निष्परीहार**–वि., निर्यन्त्रणः ( सुसू. ४४.८८ )
अनियन्त्रणः ( अहसू. १९.९६९ )
**निष्पाव**–पु., विदलधान्य० शिम्बीधान्यम्, वल्लो वातपित्तलोऽसौ ( चसू. २७.३३ ) अस्य पयसा सहाभ्यवहरणं विरुद्धम् ( चसू.२६.८४ ) गुणाः– उष्णो गुरुर्मूत्रस्तन्यकरः, सरो विदाही, शुक्रनाशनः शोफशोफकृद्वातघ्नो रक्तपित्तघ्नश्च ( ध. ६.११० ) मधुरः कषायो रूक्षोऽम्लपाकी वातविबन्धकृद्विषश्लेष्मशोथहृच्च ( भाप्र. ) कटुनिष्पावो निष्पावभेदः, तद्गुणाः–तिक्तः कटुकः कषायो गुरू रूक्षो वातलोऽस्रप्रदः कफदो त्रिदोषनुच्च ( रा. १६.१७६.७७ )
हिं.—निष्पाव, भटवांस.
म.—पावटा.
गु.—ओलिया वाल.
बं.—भेटरास सीम.
ता.—वेळवरं.
श्वेतशिम्बी (चनि. २.४)
शाक० फलीचिल्ल्यादिगणोक्तः अयं मधुरो गुरू रूक्षः शीतवीर्यो विष्टभ्य जरणशीलः पुरीषभेदी च ( चसू. २७.१०० ).
मान० द्विगुञ्जः ( र. ११.२ )
धरणस्य एकोनविंशतितमो भागः ( सुचि.३१.७ ).
**(निष्पावि)**–स्त्री., वनस्पति० हरिच्छुभ्रभेदादियं द्विविधा, निष्पावीगुणाः—कषायमधुरा सरा मेध्य-दीपनी रुचिकरी कण्ठशुद्धिकरी च। निष्पावीद्वयं समानगुणम्। तत्र शुभ्रा सङ्ग्राहि समवीर्या ईषच्छ्रेष्ठा वर्तते ( रा. परि. ७.९९ )
**निष्पावाम्बु**–न., निष्पावोदकम्, निष्पावक्वाथः आमाशयगते विषे वमनायोपयोगि ( असंसू. ८.३८ )
**निष्पीडितरस**–वि., निर्गतरसम् ( अहसू. ६.९३)
**निष्पीत**–वि., क्षीणम् ( चसू. १३.४७ )
**–कफ**–वि., लक्षण० क्षीणकफः ( चसू. १३.४७ )
**–मेदस्**–वि., लक्षण० क्षीणमेदाः ( चसू. १३.४७ )
**निष्पुरीष**–वि., लक्षण० क्षीणवर्चाः ( ड. सुउ. ४०.१३२ )
**निष्पेष**–पु., चूर्णनम्, आघातः घर्षणम् ( चचि. ३०.१६६ )
**निष्प्रत्यनीक**–वि., यस्य प्रत्यनीकः प्रतिपक्षी न विद्यते सः ( चचि. ३.५६ )
निष्क्रियः ( सुसू. २१.३० )

**निष्प्रभत्व**–न., लक्षण० प्रभाहानिः ( सुसू. १५.७ )
**निसर्ग**–पु., स्वभावः ( सुउ. ६१.२१ )
**निःसृता**–वि., अधःस्रस्ता ( चचि. ३०.४४ )
**निस्तन्द्र**–वि., ग्रहग्रस्तलक्षण० तन्द्रारहितः (सुउ. ६०.८)
**निस्तलन**–न., भर्जनम् ( अहसू. ७.३७ )
**निस्तुष**–वि., निर्गततुषम् ( असंसू. ७.३९ )
पु., वनस्पति० गोधूमः ( १६.१५१)
**–यव**–पु., तुषरहितो यवः ( असंसू. ८.९४ )
**निस्तोद**–पु., वेदना० नियतप्रबन्धप्रवृत्ता रुक्, सैव विच्छिन्ना, शूलमित्युच्यते ( अहसू. २९.३ )
लक्षण० सूचीभिर्व्यधनमिव पीडा ( सुउ. ३८.११ )
**निस्तोदन**–न., लक्षण० निस्तोदः सूच्येव व्यधनम् ( सुउ. ६.६ )
**निस्त्रिंश**–पु., खड्गः ( सुशा. ४.७२ )
**–पत्रक**–पु., वनस्पति० स्नुही ( ध. १.२३५; चक. १०.८ )
**(–पत्रिका)**–स्त्री., वनस्पति० स्नुही ( रा. ८.३५५ )
**–शिम्बिका**–स्त्री., वनस्पति० असिशिम्बी ( रापरि. ७.९७ )
**निहित**–वि., धृतम्, स्थापितम् ( सुचि. ३०. २९-३० )
**नीच**–पु., वनस्पति० चोरकः ( रा. १२.१२७ )
वि., अपकृष्टो म्लेच्छादिः ( सुचि. २४.९० )
**–नखरोमन्**–वि., क्लृप्तत्वात् कर्तनप्रसाधननखरः, अल्पं नखरोमादि यस्य सः ( सुसू. २.६ )
**–वज्र**–न., खनिज० वैक्रान्तम् (रा. १३.५०)
**नीचैःकदम्ब**–पु., वृक्ष० लघुकदम्बः ( सुउ. ५१.४० )
**नीप**–पु., वृक्ष० कदम्बः ( चक. १.१४; ध. ५.१०४ )
कदम्बभेदः धाराकदम्बः ( रा. ९.१७२ )
कदम्बभेदः धूलिकदम्बः ( ध. ५.१०५ )
अयं प्रावृषि पुष्पितो भवति ( सुसू. ६.३२ )
**नीर**–न., जलम् ( ध. ६.३०२ )
**–कणा**–स्त्री., वनस्पति० जलपिप्पलिका ( र. ११.५७ )
**–ज**–न., वनस्पति० नीलोत्पलम् ( सुचि. २५.३३ )
मणि० मौक्तिकम् ( रा. १३.६६ )
पु., वनस्पति० दर्भः ( ध. ४.१३३ )
**–द**–पु., वनस्पति० मुस्ता ( रा. ६.५८ )
**नीरसा**–स्त्री., वनस्पति० निश्रेणिका ( रापरि. ८.५० )
**नीरुज**–वि., नीरोगः ( र. १.६९ )
विगतपीडम्, अखण्डितम् ( र. १८.२१ )
न., वनस्पति० कुष्ठम् ( र. १८.२१ )
**नील**–पु., वनस्पति० वटः ( रा. ११.११४ )
वनस्पति०, नीलगुणाः– कटुकः कषाय उष्णो लघुर्वातामयनानाश्वयथुनाशनश्च ( रापरि. ९.११ )
पशु० गवयः ( धपरि. ६.३५ )
न., नीलाञ्जनम् ( र. २३.८० )
वनस्पति० तालीसपत्रम् ( ध. २.५३ )
खनिज० तुत्थम् ( रा. १३.२०५ )
खनिज० अञ्जनम् ( रा. १३.२१४)
रत्न० एकच्छायं गुरु स्निग्धं स्वच्छं पिण्डितविग्रहं मृदु मध्यलसज्ज्योतिः सप्तधा नीलमुत्तमं मतम् ( र. ४.५४ ) नीलगुणाः– दीपनं वृष्यं त्रिदोषघ्नं विषमज्वरदुर्नामश्वासकासघ्नं च ( र. ४.५६ )
वि., नीलवर्णम् सामावस्थायां पित्तस्य वर्णः ( सुसू. २१.११ )
**(नीला)**–स्त्री., वनस्पति० पिप्पलीभेदः ( रा. ६.१०४ )
गिरिकर्णी ( ३.१२५ )
वार्ताकिनी ( रा. ७.१२८ )
नीलिनी ( रा. ४.३४९ )
पुनर्नवाभेदः नीलपुनर्नवा ( रा. ४.५.१० ) द्र० 'पुनर्नवा'
भैषज्य० लाक्षा ( रा. ६.१४२ )
ग्रहमातृ० ( असंउ. ४ )
वनस्पति० नीलक्षीरा नीलपुष्पा लताप्रतानबहुला द्रोणीप्रावेशिकरसायनेपूक्ता औषधिः ( चचि. १ (४) ७ )
धमनी० ( असंशा. ७.२१ )
गलपार्श्वगतधमनी ( चक. सुशा. ६.२७ )
ग्रीवापार्श्वस्थितसिरा ( अरु. सुशा. ६.२७ )
मर्म० कण्ठनाडीमुभयतः द्वे नीले द्वयोः पार्श्वयोः सिरामर्मणी चतुरङ्गुले वैकल्यकारिणी च ( सुशा. ६.२७ )
सिरा० नीलवर्णैषा, पित्तवाहिनी च (सुशा. ७.१८)
**(नीली)**–स्त्री., वनस्पति० नीलिनी ( रा. ४.३४९; र. २९.३४; र. २०.६८ )
कालाञ्जनी ( इन्दु. असंक. २ )
वनस्पति० नीलवृक्षः, नीलापराजिता वस्त्ररञ्जनोपयोगिनी, एतद्रसेन नीलाख्यं रत्नं विशुद्ध्यते ( र. ४. ६४ )
श्रीफलिका ( सुसू. ४४.२२ )
शारदं फलम् श्रीफलम् ( ड. सुचि. १९.६८ )
नीलाञ्जनिका ( सुक. ६.१५ )
**–कटुकी**–स्त्री., वनस्पति० कृष्णवर्णा कटुकी. ( र. ८.६०.६४ )

–कण्ठ–पु., पारदयोग० पारदगन्धकलोहशुल्बादि-साधितोऽयं श्वासादिसर्वरोगहरः ( र. १३.६३ )
न., वनस्पति० मूलकम् ( रा. ७.५० )
–कण्ठाक्ष–पु., वनस्पति० रुद्राक्षः (रापरि. ११.१५)
–कन्द–पु., वनस्पति० शुभ्रालुः ( रापरि. ७.३३ )
न., वनस्पति० मूलकम् ( ध. ४.३३ )
–कपित्थ–पु., वनस्पति० राजाम्रः ( ध. ५.११ )
–कपित्थक–पु., वनस्पति० राजाम्रभेदः (रा. ११.९)
द्र० 'राजाम्र'
–कमल–न., वनस्पति० नीलपद्मम् (रा. १०.२३९)
–काच–पु., नेत्ररोग० पैत्तिकोऽयम् याप्यः ( सुउ. १०.३२ )
–काचोद्भव–न., लवण० सामुद्रम् ( रा. ६.४४ )
–कारक–न., आसुत० सूक्तम्, शुक्रम् (ध. ६.२४६)
–कुरण्ट–पु., वनस्पति० कुरण्टकभेदः (रा. १०.४१९)
द्र० 'कुरण्टक.'
–कुसुमा–स्त्री., वनस्पति० कुरण्टकभेदः (रा. १०.४१९) द्र० 'कुरण्टक'
–केशी–वनस्पति० नीलिनी ( रा. ४.३५० )
–क्रान्ता–स्त्री., वनस्पति० विष्णुक्रान्ता (रा. ५.१७३)
–गन्धिन्–न., खनिज० नीलगर्भारुणवर्णं माणिक्यम्, तत् नीलवर्णं गङ्गोदकसमुद्भूतं नीलवर्णान्तरारुणवर्णप्रभायुक्तम् ( र. ४.११ )
–ग्रीव–पु., देवता० श्रीशङ्करः (र. १३,३८)
–ग्रीवगलालय–न., विषम् ( र. १३.३८ )
–घृत–न., घृत० असाध्यकुष्टहरम् घृतमिदं पानाभ्यङ्गयोरुपयुज्यते ( सुचि. ९.२९.३२ )
–ज्योतिस्–वि., वनस्पति० भीमलता, एषा बुन्दीसन्निधौ वर्तमाने दुर्गे रात्रौ नीलवर्णेन प्रकाशमाना उपलभ्यते ( र. ४.४६ )
नीलदूर्वा, तृणरूपा दिव्यौषधिः ( र. १८.४७ )
नीलज्वालाभिधा लता ( र. २६,३३ )
–झिण्टी–स्त्री., वनस्पति० कुरण्टकभेदः (रा. १०.१९)
द्र० 'कुरण्टक'
–तरु–पु., वनस्पति० नारिकेलः ( रा.११.१०४ )
–ताल–पु., वनस्पति० तमालः ( रा. ९.१५ )
–तुत्थ–न., खनिज० मयूरतुत्थम् ( र. १४.२० )
–दूर्वा–स्त्री., वनस्पति० दूर्वाभेदः ( ध. ४.१४३ )
द्र० 'दूर्वा'
–द्रुम–पु., वनस्पति० सर्जकभेदः ( रा. ९.२०९ )
द्र० 'सर्जक'

–ध्वज–पु., वनस्पति० तमालः ( रा. ९.१५ )
–नामा–पु., वनस्पति० व्रीहिः ( रा. १६.१०८ )
–निर्यासक–पु., वनस्पति० सर्जकभेदः नीलबीजः ( रा. ९.२०९ )
–पङ्कज–न., वनस्पति० नीलपद्मम् ( रा. १०.२३९ )
–पत्र–पु., सर्जकभेदः ( रा. ९.२०९ ) द्र० 'सर्जक'
गुण्डः ( रापरि. ८.६० )
दाडिमः ( रा. ११.९४ )
–(पत्री)–स्त्री., वनस्पति० नीलिनी ( रा. ४.३४९ )
–पद्म–न., वनस्पति० तद्गुणाः–स्वादु शीतं सुगन्धि रुच्यं केश्यं पित्तघ्नं च ( ध. ४.१५० )
–पिष्टौण्डी–स्त्री., वनस्पति० नीलाम्ली ( रापरि. ४.३८ )
–पुनर्नव–पु., वनस्पति० पुनर्नवाभेदः ( रा. ५.४१० )
द्र० 'पुनर्नवा'
(पुनर्नवा)–स्त्री., पुनर्नवाभेदः ( रा. ५.४११ )
द्र० 'पुनर्नवा'
–पुष्प–पु., वनस्पति० निर्गुण्डी (ध. ४.८१)
भृङ्गराजभेदः ( रा. ४.२२ )
–( पुष्पा )–स्त्री., वनस्पति० गिरिकर्णी ( ध. ४.८५ )
( –पुष्पी )–स्त्री., वनस्पति० गिरिकर्णी ( ध. ४.११५ )
विष्णुक्रान्ता ( ध. ४.११५ )
नीलिनी ( रा. ४.३४९ )
अतसी ( ध. ६.११५ )
–पुष्पिका–स्त्री., वनस्पति० अतसी ( रा. १६.१८६ )
–पोर–इक्षु० अयं वातलः कफपित्तघ्नः सकषायो विदाही च ( सुसू. ४५.१५४ )
–फला–स्त्री., वनस्पति० जम्बूः ( रा. ११.१२८ )
–बीज–पु., वनस्पति० सर्जकभेदः ( रा. ९.२०९ )
द्र० 'सर्जक'
–भृङ्गराज–पु., वनस्पति० भृङ्गराजभेदः ( रा. ४.२२ )
–मक्षिका–स्त्री., कीट० मक्षिकाभेदः ( सुसू. ३०.१० )
–मञ्जरी–स्त्री., वनस्पति० निर्गुण्डीभेदः शेफाली ( ध. ४.८३ )
–मण्डल–न., वनस्पति० परूषकम् ( रा. ११, ८४ )
–मल्लिका–स्त्री., वनस्पति० कपित्थः ( रा. ११.१५५ )
–माष–पु., वनस्पति० राजमाषः ( ध. ६.८४ )
–मृत्तिका–स्त्री., खनिज० पुष्पकासीसम् ( ध. ३.१२५ )

-मेह-पु., रोग० षट्पित्तजप्रमेहेष्वेकः, तल्लक्षणम्-पित्तस्य परिकोपे चाषपक्षनिभमल्पं मूत्रं मेहति (चनि. ४.३१) सफेनमच्छं नीलं मेहति (सुनि. ६.११; असंनि. १०.२२)

-लोह-न., खनिज० वर्तलोहम् (रा. १३.३४)

-वर्ण-न., वनस्पति० परूषकम् (ध. ५.६२) (ध. ५.६२) द्र० जम्बू.

(-वर्णा)-स्त्री., वनस्पति० जाम्बूभेदः काकजम्बूः (ध. ५.८४) द्र० 'जम्बू'

-वर्षाभू-स्त्री., वनस्पति० नीलपुनर्नवा (रा. ५.४१०) द्र० पुनर्नवा

-वृक्ष-पु., वनस्पति० नीलः (रा.९.११)

-वृन्तक-न., वनस्पति० तूलम् (ध. ५.६४; रा.९.८६)

-शिग्रु-पु., वनस्पति० शिग्रुभेदः (रा. ७.६२) द्र० 'शिग्रु'

-शिलाजतु-न., खनिज० ताम्रपर्वतजन्यं शिलाजतु (र. २३.८०)

-सार-पु., वनस्पति० तिन्दुकः (ध. ५.४०) सर्जकभेदः (रा. ९.२०९)

-सिन्दुक-पु., निर्गुण्डीभेदः शेफालिका (रा. ४.११९)

(सिन्दुका)-स्त्री., निर्गुण्डी (ध. ४.८१)

-स्पन्दा-स्त्री., वनस्पति० गिरिकर्णी (ध. ४.८५)

**नीलक**-पु., वनस्पति० नीली (र १०.८७) उपविष० कृष्णापत्रो धत्तूरः (र. १०.८७) असनः (रा. ९.२०७) भृङ्गराजभेदः (रा. ४.२२)

(**नीलिका**)-स्त्री., क्षुद्ररोग० तत्सम्प्राप्तिलक्षणे-प्रकुपितं पित्तं शोणितं प्राप्य शुष्यति, तस्य नीलिका जायते (चसू. १८.२५)
शोकक्रोधादिकुपिताभ्यां वातपित्ताभ्यां मुखादन्यत्र गात्रे कृष्णं मण्डलं जायते। तत् वातात् परुपस्पर्शं श्यावं च। पित्तात् ताम्रान्तमानीलं मण्डलम्। कफात् श्वेतान्तं कण्डूमन्मण्डलम्। रक्तात् रक्तान्तमाताम्रं सोषं चिमिचिमायमानं मण्डलं भवति (असंउ. ३६)
चत्वारिंशत्पित्तविकारेष्वेकः (चसू. २०.१४)
रक्तदोषजरोगेष्वेकः (चसू.२८.१२; असंसू.२०.१४)
नेत्ररोग० लिङ्गनाशः तिमिराख्यः काचसंज्ञितो दृष्टिचतुर्थपटलगतः सन् नीलिका भवति (सुउ. ७.१८)
वनस्पति० नीलिनी (चक्र. ११.१४; ध. १.२३२; र. १०.९४)
निर्गुण्डीभेदः शेफालिका (रा. ४.११९)
खनिज० वङ्गम् (ध. ६.१३)
नीलाञ्जनिका (सुचि. ९.३७)

-काच-पु., नेत्ररोग० लिङ्गनाशः, चतुर्थपटलगते दोषे काचसंज्ञिततिमिरः (डसु. ७.१८)

स्नेह-पु., श्रीफलिकास्नेहः, तद्गुणाः-तिक्तः कटुः कषायोऽधोभागदोषहरः कृमिकफकुष्ठानिलहरो दुष्टव्रणशोधनश्च (सुसू. ४५.१२४)

**नीलाञ्जन**-न., खनिज० अञ्जनम् (रा. १३.२१५)
नीलाञ्जनगुणाः-गुरु, स्निग्धं नेत्र्यं दोषत्रयापहं रसायनं सुवर्णघ्नं लोहमार्दवकारकम् (र. ३.१०८)

(**नीलाञ्जनी**)-स्त्री., वनस्पति० कालाञ्जनी (रापरि. ४.४३)

**नीलाण्ड्रग**-पु., पशु० गवयः (धपरि. ६.३५)

**नीलाब्ज**-न., वनस्पति० नीलपद्मम् (रा. १०.२३९)

**नीलाभ्र**-न., कृष्णवज्राभ्रकम्, कृष्णाभ्रम् (र. १७.६७)

**नीलाम्बर**-न., वनस्पति० तालीसपत्रम् (रा. ६.८३)

**नीलाम्लान**-पु., वनस्पति० आर्तगला (रा. १०.४१७)

**नीलाम्ली**-स्त्री., वनस्पति० तद्गुणाः—मधुरा, रुच्या कफवातहरा च (रापरि. ४.३८)

**नीलालिकुलसङ्कुला**-स्त्री, वनस्पति० कुब्जकः (ध. ५.१४६)

**नीलालु**-पु., वनस्पति० तद्गुणाः— मधुरः शीतः पित्तघ्नः पित्तदाहश्रमापहश्च (रापरि. ७.३२)

**नीलाश्मज**-न., खनिज० तुत्थम् (रा. १३.२०५)

**नीलाश्मन्**-पु., खनिज० राजावर्तः (ध. ६.६०)

**नीलिनी**-स्त्री., वनस्पति० तिक्ता (कटुः) (रा.) उष्णा केश्या कफघ्नी वातकफघ्नी (रा.) कटिदोषविषोदरवातरक्तकृमिनाशिनी कासामगुल्मज्वरापहा च (रा.) (ध. १.२३२)
हिं.—नील.
**म.—नीळ. गुळी.**
गु.—गळी.
बं.—नीलगच्छी.
त.—अवरि, अवुरि.
फा.—दओरो. खाद्-ए-निला.
नीलसमाह्वा, नीलबुह्वा (ध्रा), (चक्र.) अस्याः फलपत्राणि विरेचकानि (चसू. २.९)
नीलाञ्जनिका (चसि. १०.२६; चचि. ३.२९९)

नीलपुष्पा, श्रीफलिका ( सुचि.३७.१५ )
नीलाञ्जनिका, शारदं फलम् ( ड. ) विरेचने उपयुक्ता ( सुचि. ३१.५ )
रजनिका, शारदफला ( ड. सुउ. ६१.३६ )
पशु० गवयः ( ध. परि. ६.३४ )
–घृत–न., स्नेह० गुल्मप्लीहकुष्ठश्वित्रजठरव्यङ्गशोफज्वरपाण्डुरोगोन्मादहरम् ( असंचि. १६ )

नीली–स्त्री., वनस्पति० ( सुचि. २५.२८ )
–दल–न., नीलाञ्जनिकापत्रम् ( सुचि. २५.२८ )
–रोग–पु., क्षुद्ररोग० नीलिका ( सुचि. १३.३५ )

नीलोत्पल–न., वनस्पति० कुमुदम् ( रा. १०.२४८ )
दाहप्रशमनगणोक्तमेकं द्रव्यम् ( चसू. ४.१७ )
कल्कोऽस्य दाहनाशनकवलग्रहणार्थमुपयुज्यते ( सुचि. ४०.६७ )

नीलोत्पलादिप्रलेप–पु., कल्प० नेत्ररोगेषु प्रलेपनार्थः ( सुउ. १२.७ )

नीलोत्पलादिशतपाकतैल–न., सिद्धतैल० इदं सर्ववातविकारनुत् शुक्रवर्धनं गर्भदं आक्षेपकहिक्काकासाधिमन्थगुल्मश्वासान्त्रवृद्धिघ्नं च ( सुचि. १५.४५-४७ )

नीलोत्पलिनी–स्त्री., वनस्पति० कुमुद्वती (रा. १०.२५०)

नीलोद्धतसिरा–स्त्री., लक्षण० कृष्णोद्धतसिरा ( सुचि. ८.११ )

नीवार–पु., धान्य० उडिका ( चक्र. चचि. २९.५० )
उलिकाधान्यम् तद्विधम्-एकं धान्यसदृशाविटपं धान्यक्षेत्रजं द्वितीयं महादलकाण्डंतु सलिलजम् अरण्यशालि-रक्तशूक-प्रसाधिका इति तन्नामानि ( सुसू. ४६.२१; सुसू. २०.५ )
नीवारगुणाः–कषायो मधुरः शीतः स्निग्धः (रा.) लघुः ( पथ्यः ) (रा.) वातलः शोषणश्च ( चसू. २७.१७; रा. ६.८७ )
हिं.—तीनी, नीवार, पुनेरा.
म.—देवभात.
गु.—नानवी. वंटी.
बं.—उडीधान.

नीहार–पु., अवश्यायः हिमम् ( चशा. ५.१४ )
–निलय–पु., पर्वत० हिमालयः ( र. १.११ )
वनस्पति० चोरकः ( र. २०.२२२ )

नुर–पु., नु अपमानं राति ददातीति नुरो रिपुः ( र. २०.२२२ )

नृ–पु., मनुष्यः ( असंउ. २० )
–कपाल–न., शारीर० नरस्य कपालास्थि नेत्ररोगेषु सन्धावादौ उपयुज्यते ( असंउ. २० )
–करोटिका–स्त्री., मनुष्यस्य कपालास्थि (र. २३.४७)
–ग–पु., नृप० मनुपुत्रोऽसौ शर्यातिनामा ( चचि. १९.४ )
–शंसाभिप्रायता–स्त्री. लक्षण० हिंसाप्रियता, परापकाररुचित्वम् ( चक्र. चनि. ७.११ )

नृणातलिङ्गा–स्त्री., तृतीयप्रकृतिः षण्ढः ( असंशा. २.५१)

नृत्तकौण्डक–पु., वनस्पति० मर्कटकः ( ड. ) श्वासघ्नोऽसौ ( सुउ. ५१.३४ )

नृप–पु., राजा ( सुक. १.२८ )
वनस्पति० राजादनी ( ध. ५.९१ )
न., वनस्पति० तगरम् ( ध. ३.५३ )
–कन्द–पु., वनस्पति० पलाण्डुभेदः राजपलाण्डुः ( रा. ७.१०४ ) द्र० 'पलाण्डु'
–द्रुम–पु., वनस्पति० राजादनः, राजादनी ( रा. ११.१४६ )
–प्रिय–पु., वनस्पति० अपर्वदण्डः ( रापरि. ८.३६ )
आम्रः ( रा. ११.३ )
पलाण्डुभेदः, राजपलाण्डुः ( रा. ७.१०४ ) द्र० 'पलाण्डु'
( –प्रिया )–स्त्री., वनस्पति० केतकी ( रा. १०.१ )
व्रीहिः ( रा. १६.७८ )
खर्जूरीभेदः, राजखर्जूरी (रा. ११.६८) द्र० 'खर्जूरी'
–प्रियफला–स्त्री., वनस्पति० वार्ताकी ( रा. ७.१२८ )
–बदर–पु., वनस्पति० बदरभेदः राजबदरः ( रा. ११.१६० ) द्र० 'बदर'
–मङ्गल्यक–न., वनस्पति० आहुल्यम् (रापरि. ४.३४)
–माष–पु., वनस्पति० राजमाषः ( ध. ६.८४ )
–वर्त–पु., रत्न० राजावर्तः ( र. १५.७० )
–वल्लभ–पु., वनस्पति० राजाम्रः ( रा. ११.८ )
(–वल्लभा)–स्त्री., वनस्पति० केविका ( रापरि. १०.३३)
–वृक्ष–पु., वनस्पति० आरग्वधः, किरमालकः ( ड. सुउ. ५७.९ )
गिरिमालकः ( ड. सुउ. ४२.६१ )

नृपात्मज–पु., वनस्पति० राजाम्रः ( ध. ५.११ )
राजाम्रभेदः ( रा. ११.१० ) द्र० 'राजाम्र'

नृपान्न–न., धान्य० व्रीहिः ( रा. १६.८१ )

नृपाह्वय–पु., वनस्पति० पलाण्डुभेदः राजपलाण्डुः द्र० 'पलाण्डु' ( रा. ७.१०३ )

**नृपेष्ट**–पु., वनस्पति॰ पलाण्डुभेदः राजपलाण्डुः द्र॰ 'पलाण्डु' ( रा. ७.१०४ )
बदरभेदः राजबदरः (रा. ११.१६०) द्र॰ 'बदर'

**नृपोचित**– पु., वनस्पति॰ राजमाषः ( ध. ६.८४ )

**नृपोपल**–पु., खनिज॰ राजावर्तः ( ध. ६.६० )

**नेकराज**–पु., वनस्पति॰ भृङ्गराजः ( काखिल. १३.१९ )

**नेतृ**–पु., वनस्पति॰ निम्बः ( ध. १.२९ )
निर्गुण्डी ( रा. ४.११७ )

**नेत्र**–न., बस्तिनेत्रम्, उत्तरबस्तिधूमयन्त्रबस्त्यादीनां नेत्रम् ( चसि. ११.२१; अहसू. १९.७१ )
सङ्ख्यासङ्केतः द्विसङ्ख्यावाचकः ( र. २६.५४ )
यन्त्रम् ( ड. सुचि. ३५.१ )
व्रणप्रक्षालनयन्त्रम् ( सुचि. २.७३ )
नलिका, बस्तिनलिका ( सुचि. ३५.१२ )
शारीर॰ ज्ञानेन्द्रियेष्वेकम् चक्षुः, वामदक्षिणभेदेन ते द्वे, शीर्षस्य प्रत्यङ्गे ( सुशा. ५.४ ) तत्रापि नेत्रे श्लेष्मणः प्रसादात् शुक्लमण्डलं तत् पितृजम्। असृजश्च कृष्णमण्डलं तन्मातृजम् मध्ये दृष्टिमण्डलं तदुभयात्मकम् ( सुशा. ३.३३ ) मज्ज्ञः प्रसादादपि नेत्रयोरुत्पत्तिरनुमीयते। नेत्रयोरुपरि मज्ज्ञः सारासारत्वस्य वृद्धिक्षययोश्च इष्टानिष्टपरिणामदर्शनात्। महानेत्रं च मज्ज्ञा ( सुसू. ३५.१६ ) मज्जा नेत्रांगगौरवम् ( अहसू. ११.११ ) मज्जनि- भ्रमस्तिमिरदर्शनम् ( अहसू. ११.१९ ) इत्यादि वचनेभ्यः। पक्ष्मवर्त्मशुक्लकृष्णदृष्ट्याख्यानि पञ्चमण्डलानि। तत्सन्धयश्चत्वारः। द्वौ चापाङ्गकनीनयोः। इति ते षट्। पक्ष्मवर्त्मनोरेकः, वर्त्मशुक्लयोर्द्वितीयः, शुक्लकृष्णयोस्तृतीयः, कृष्णदृष्ट्याख्ययोश्चतुर्थः, नेत्रापाङ्गयोः पञ्चमः, नेत्रकनीनकयोः षष्ठ इति षट्। अपाङ्गः कर्णदिशि, कनीनकं नासादिशि ( इन्दु. ) तन्मानम्–सार्धमङ्गुलद्वयं नेत्रदैर्घ्यम्। एतत्-त्रिभागं तु कृष्णमण्डलम्। ( सुउ. १.१३ ) षट् च पटलानि। द्वे वर्त्मनी। बाह्यं च आश्रितमन्यदम्भसी द्वितीयं मांसं तृतीयं मेदश्चतुर्थमस्थि तेषां बहलता दृष्टेः पञ्चमांशेन। ( असंशा. ५.५१-५२ ) नेत्रबुद्बुदमानम् – स्वाङ्गुष्ठोदरमितं द्व्यंगुलबाहुल्यं सर्वतश्च सार्धद्व्यङ्गुलम् (सुउ.१.१०) तर्पणपुटपाकसेकाश्च्योतनाञ्जनादीनि नेत्ररक्षाकराणि ( सुउ. १८.४ ) हीनतर्पितनेत्रलक्षणम् – रूक्षमाविलमस्राढ्यं – रूपदर्शनासहत्वं व्याधिवृद्धिश्च ( सुउ. १८.१५ ) अत्यर्थतर्पितनेत्रलक्षणम् –गुर्वाविलमतिस्निग्धम् अश्रुकण्डूपदेहयुक्तं दोषसमुत्क्लिष्टं नेत्रं भवति ( सुउ. १८.१४८ ) सम्यक्तर्पितनेत्रलक्षणम् – सुखस्वप्नः सुखावबोधत्वं नेत्रस्य मलाभावः श्वेतत्वादिवर्णस्य यथार्थग्रहणं तात्कालिकं सुखं व्याधिविध्वंसो निमेषोन्मेषादीनां क्रियाणां शीघ्रता च ( सुउ. १८. १३ ) नेत्रपुटपाके हीनयोगः – अश्रु हर्षणं दोषोद्गमश्च (सुउ. १८.३२) नेत्रपुटपाकेऽतियोगः–रुजः शोफः पिडकास्तिमिरोद्गमश्च भवति ( सुउ. १८.३२ ) नेत्रपुटपाके सम्यग्योगः – नेत्रं प्रसन्नवर्णं विशदं वातातपसहं लघु सुखस्वप्नावबोधि च भवति ( सुउ. १८.३१ ) पुटपाककृते तर्पितनेत्रे च वर्ज्यानि – दीपज्वालादितेजांसि सम्मुखवायुराकाशमादर्शआदित्यादीनि भास्वराणि च (सुउ.१८.२९) तर्पणायोग्यः कालः – दुर्दिनात्युष्णशीतेषु कालेषु चिन्तायासभ्रमेष्वशान्तोपद्रवेऽक्षिण च तर्पणमप्रशस्तम् (सुउ. १८.१८) मन्दविरिक्तनेत्रलक्षणम्– अक्ष्युदग्रतरदोषवद् भवति ( सुउ. १८.७८ ) अतिविरिक्तनेत्रलक्षणम् – जिह्मं दारुणदुर्वर्णं स्रस्तमतीव रूक्षमतिमात्रशो नेत्रं स्यन्दते ( सुउ. १८.७६–७७ ) सुविरिक्तनेत्रलक्षणम्– विशदं लघु क्रियापटुनास्रावि सुनिर्मलं संशान्तोपद्रवं भवत्यक्षि ( सुउ. १८.७५–७६ ) अतितर्पणनेत्रलक्षणम् – प्रसादनाञ्जनातियोगे चक्षुः किञ्चिद् हीनविकारं स्यात् ( सुउ. १८.८१ ) प्रसन्ननेत्रलक्षणम् प्रसादनाञ्जने सम्यग्युक्ते सति नेत्रं स्नेहवर्णबलोपेतं प्रसन्नं दोषवर्जितं सर्वक्रियाक्षमं भवति (सुउ. १८.७९) अतिविघट्टितनेत्रलक्षणम्– रागाश्रुवेदनास्तम्भहर्षा नेत्रे तादृशे भवन्ति (सुउ. १७.७७) नेत्ररक्षा– त्रिफला रुधिरस्रुतिर्विशुद्धिर्मनसो निवृतिरञ्जनं नस्यं शकुनाशनता पादपूजा घृतपानं चेति नेत्ररक्षणानि ( असंउ. १६ )

**–कोश**–पु., शारीर॰ नेत्रपुटकम् ( असंसू. ३३.४ )

**–गौरव**–न., लक्षण॰ मज्जावृद्धिजविकारेष्वेकः, अक्षिजाड्यम् ( अहसू. ११.११ )

**–तर्पण**–न., उपक्रम॰ नेत्रपूरणम् ( असंसू.८.३४ )

**–नाडी**–स्त्री., नेत्ररोग॰ तल्लक्षणम्–कनीनकसंधौ नेत्रात् दोषयुक्तोऽश्रुस्रावः ( सुउ. २.५ )
मण्डलसंधिस्थानम् ( सुशा. ५.२७ )
अक्षिविवरम् ( चसि. २.२१ )

**–नैर्मल्यकरी**–स्त्री., खनिज॰ तुत्थम् ( ध. ३.१४६ )

**–पटल**–न., नेत्रच्छदः ( असंशा. ५.५९ )
**–पाक**–पु., नेत्ररोग० स द्विविधः सशोफजोऽशोफजश्च, तत्र सशोफजनेत्रपाकलक्षणानि–कण्डूरुपदेहपक्वोदुम्बरसन्निभत्वं दाहः संहर्षस्ताम्रत्वं शोफो निस्तोदो गौरवं मुहुः रक्तस्रावः पिच्छिलत्वमुष्णशीताम्बुनः स्रावः क्षुब्धत्वं चाक्षिणि जायन्ते तथाऽक्षि पच्यते ( सुउ. ६.२१-२२ ) अशोफजनेत्ररोगे शोफवर्जं एतान्येव लक्षणानि भवन्ति ( सुउ. ६.२२-२३ )
**–पुष्करा**–स्त्री., वनस्पति० रुद्रजटा ( रापरि. ३.२५ )
**–प्रक्षालन**–न., उपक्रम० नेत्रधावनम् (सुचि.२४.१६)
**–बल**–न., दृक्शक्तिः दर्शन-सामर्थ्यम् (अहसू.८.४४)
**–बस्तिप्रमाणप्रविभागचिकित्सित**–न., अध्याय० ( सुचि. ३५ )
**–बस्तिव्यापच्चिकित्सित**–न., अध्याय० ( सुचि. ३६ )
**–बस्तिव्यापत्सिद्धि**–स्त्री., अध्याय० ( सुचि. ५ )
**–बुद्बुद**–न., अक्षिगोलकः ( सुउ. १.१२ ) द्र० 'नेत्र'
**–मीला**–स्त्री., वनस्पति० यवतिक्ता ( ध. १.२५६ )
**–मूल**–न., बस्तिनेत्रस्य मूलस्थानम्, बस्तिमुखे बन्धेन योजनीयो नेत्रस्य भागः ( सुचि. ३५.१६ )
**–रक्षा**–स्त्री., दृग्रक्षणम्, त्रिफलारुधिरस्रुतिविशुद्धिमनोनिर्वृत्त्यादिभिर्नेत्ररक्षणं भवति ( असंउ. १६ )
**–रोग**–पु., रोग० अक्षिरोगः तन्निदानम्–उष्णाभितप्तस्य जलप्रवेशात् दूरेक्षणादिभिः। तथा चन्द्रसूर्योपरागदर्शनात् नेत्रामया भवन्ति ( सुउ. १.२६.२७ )
तत्सम्प्राप्तिः— अचक्षुष्यैः कुपिताः पित्तानुसारिणो मलाः सिराभिरूर्ध्वं प्रसृताः सन्तो नेत्रावयवं वर्त्म सितं कृष्णं सन्धिं दृष्टिं सर्वमक्षि वाऽऽश्रिता नेत्ररोगान् कुर्युः ( सुउ. १. २०.२१; असंउ. ११ ) तत्सङ्ख्या–चरकमते नेत्ररोगाः षण्णवतिः, वर्त्मस्थाः सप्तविंशतिः, सन्धौ नव, शुक्लस्थास्त्रयोदश, कृष्णभागजाः षट्, दृष्टिस्थाः पञ्चविंशतिः, सर्वगाः षोडश ( चचि. २६.१३० ) सुश्रुतमते स्थानतः सन्ध्याश्रया नव, वर्त्मजा एकविंशतिः, शुक्लभागे एकादश, कृष्णभागे चत्वारः, सर्वाश्रयाः सप्तदश, दृष्टिजा द्वादश, बाह्यजौ द्वौ, एवं षट्सप्ततिः ( सुउ. १.४४.४५ ) दोषभेदतो वातजा दश, पित्तजा दश, कफजास्त्रयोदश, रक्तजाः षोडश, सर्वजाः पञ्चविंशतिः, बाह्यजौ द्वौ षट्सप्ततिः ( सुउ. १.२८ ) तत्पूर्वरूपाणि—अक्षि शोफाश्रुकण्डूमलयुतं भवति कफपित्तवातरक्तजनितं गुरूषातोदरागादि, वर्त्मकोषे शूलः, रूपे क्रियासु चाक्षणोर्वर्णहानिनिमेषोन्मेषादि क्रियाहानिश्च ( सुउ. १.२१.२३ )
असाध्या नेत्ररोगाः पञ्चदश, पवनप्रभावात्–हतवर्त्मगम्भीरिकहताधिमन्थनिमिषाश्चत्वारः, पित्तजौ ह्रस्वजाड्यजलास्रावौ द्वौ, कफनिमित्तजः कफस्राव एकः, रुधिरजाः, सव्रणशुक्रशोणितार्शोऽजकाजातरक्तस्रावाश्चत्वारः, त्रिदोषजा अलज्यक्षिपाकात्ययनाकुलान्ध्यपूयास्रावाश्चत्वारश्च, सनिमित्तानिमित्ताख्यौ बाह्यजावसाध्यौ याप्यौ वा ( सुउ. ८.११ )
अशस्त्रकृत्या द्वादश, शुष्काक्षिपाककफविदग्धदृष्ट्याम्लाध्युषितक्षतशुक्रकार्जुनपिष्टकाक्लिन्नवर्त्मधूमदर्शीशुक्तिका प्रक्लिन्नवर्त्मबलासग्रथिताः आगन्त्वामययुग्मेन दूषितदृष्टावपि शस्त्रं नावचारणीयम् ( सु. ८.९.१० ) भेद्याः पञ्च-श्लेष्मोपनाहलगणबिसवर्त्मकृमिग्रन्थ्यञ्जननामिकाः (सुउ.८.८)
लेख्या नव–उत्सङ्गिनीबहलवर्त्मकर्दमवर्त्मश्यावक्त्मबद्धवर्त्मक्लिष्टवर्त्मपोथकीकुम्भीकिनीशर्कराः ( सुउ. ८.७ ) याप्याः–सप्त-अरुणो मारुतजः, पीतः पित्तजो, नीलः पित्तजः, सितः कफजो, रक्तो रक्तजः, विचित्ररूपस्त्रिदोषजः, पक्ष्मकोपश्च ( सुउ. ८.११ )
व्यध्याः पञ्चदश–शिरोत्पातशिराहर्षशोफाशोफयुक्तपाकान्यतोवातपूयालसानिलविपर्ययहताधिमन्थश्लेष्माधिमन्थरक्ताधिमन्थवाताभिष्यन्दपित्ताभिष्यन्दश्लेष्माभिष्यन्दरक्ताभिष्यन्दाः (सुउ. ८.८-९)
छेद्या एकादश–अर्शोवर्त्मशुष्कार्शोर्बुदानि वर्त्मगतानि, सिराजा पिडका शुक्लगता, सिराजं जालं शुक्लगतं, प्रस्तार्यर्मशुष्कार्मरक्तार्माधिमांसार्मस्नाय्वर्माणि शुक्लगतानि, पर्वणिका सन्धिगता च ( सुउ. ८.६)
कफजलिङ्गनाशाद्व्यतिरिक्ताः सर्वे लिङ्गनाशा गम्भीरा ह्रस्वजाः चासाध्याः। नकुलान्ध्यं षट् काचाश्च याप्याः। शेषा दृग्व्याधयः साध्याः ( असंउ. १५ ) हताधिमन्थाक्षिपाकात्ययौ त्याज्यौ (असंउ. १८) शुक्तिसिराहर्षसिरोत्पातपिष्टकबलासग्रथितार्जुनानि भेषजैः साधयेत्। शुक्लार्मशोणितार्मप्रस्तार्यर्मस्नाय्वर्माधिमांसार्मसिराजालसिराजपिटिकाः

शस्त्रसाध्याः (असंउ.) उपनाहकृमिग्रन्थिपूयालसकपर्वणीः शस्त्रेण साधयेत्। अलजीजलास्रावरक्तास्रावपूयास्रावान् पञ्च शस्त्रकर्मणि त्यजेत् ( असंउ. १३ ) नेत्ररोगे पथ्यतमानि कृष्णसर्पवसा क्षौद्रं धात्रीरसो रसक्रिया च सर्वाक्षिरोगेषु शस्ता ( असंउ. १९ ) पुराणयवगोधूमशालिषष्टिककोद्रवमुद्गादयो भूरिसर्पिःपरिप्लुता जाङ्गलं मांसं दाडिमं सिता सैन्धवं त्रिफला द्राक्षा पाने नाभसं वारि पदत्राणमातपत्रमभ्यञ्जननावनानि विधिवद्दोषशोधनं च ( असंउ. २० ) दृष्टेरास्थैर्यलाभात् रूपाणि सूक्ष्मदीप्तानि सहसा नावलोकयेत् ( असंउ. १७ )

**–रोगहन्**–स्त्री., वनस्पति० वृश्चिकाली ( रापरि. ९.७ )

**–लेह**–वि., कृमि० कफजोऽयं, नेत्रगतमांसादि च लेढीति नेत्रलेढा ( सुउ. ५४.१४ )

**–वर्त्मन्**–न., नेत्रपक्ष्म ( ड. सुसू. ८.१८ )

**–विकारजित्**–न., वनस्पति० कतकम् ( ध. ३.१७ )

**–विनाश**–पु., अरिष्ट–लक्षण० दृष्टिनाशः, यश्चन्द्रसूर्ययोः पतनं स्वप्ने पश्यति तस्य नेत्रविनाशो भवति ( असंशा. १२.१८ )

**–विष**–स्त्री., अक्षिपुरीषम् तच्च मांसस्य मलः ( सुसू. ४६.५२७ )

**–विभ्रम**–पु., लक्षण० नेत्रस्योर्ध्वगमनादि स्वरूपं चलनम् ( चसि. ७.४५ )

**–संवेजन**–न., लक्षण० नेत्रकम्पनम् (सुचि. ३६.२६)

**–स्तम्भ**–पु., लक्षण० अक्षिस्तब्धता (अहसू. २२.२६)

**नेत्रान्त**–पु., नेत्रस्य पर्यन्तः ( असंशा. ८.३९ )

**नेत्राभिष्यन्द**–पु., नेत्ररोग० संक्रामकोऽयम् ( सुनि. ५.३४ )

मज्जदोषजविकारेष्वेकः ( सुसू. २४.९ )

**नेत्रामय**–पु., नेत्ररोगः ( चचि.२६.१३०; अहसू.२.४ )

**नेत्रायाम**–पु., नेत्रदैर्घ्यम् ( सुउ. १.१३ )

**नेत्रारि**–पु., वनस्पति० स्नुही ( रा. ८.३५६ )

**नेत्रास्र**–न., नेत्रजलम्, अश्रु ( सुशा. ४.५० )

**नेत्रोपदेह**–पु., नेत्रमलः ( असंशा. ११.३ )

**नेत्रौषध**–न., खनिज० पुष्पकासीसम् ( ध. ३.१२५ )

**नेत्र्य**–वि., नेत्राय चक्षुषे हितम् ( र. ३.१११ )

**नेपाल**–न., खनिज० ताम्रभेदः नेपालदेशीयखनिलब्धं ताम्रम् ( र. ५.५० )

**(नेपाली)**–स्त्री., खनिज० मनःशिला ( र. ३०.६३; सुउ. ३९.२६३ )

वनस्पति० वनमल्लिका ( ध. ५.१४० )

**–जा**–स्त्री., खनिज० मनःशिला ( सुउ. १९.१४ )

**–जाता**–स्त्री., खनिज० मनःशिला ( ड. सुउ. ११.१६ )

**–निम्ब**–पु., वनस्पति० किराततिक्तभेदः (रा.९.५२) द्र० 'किराततिक्त'

**नेपालक**–न., वनस्पति० जयपालः ( र. १२.४७ )

खनिज० ताम्रम् ( रा. १३.११ )

**( नेपालिका )**–स्त्री., खनिज० मनःशिला ( ध. ३.९६ )

**नेपालाञ्जन**–न., सिद्धयोग० एतत् काचार्मनेत्रस्रावतिमिरशुक्लपिल्लनाशनम् ( र. २३.५१ )

**नेपालेक्षु**–पु., इक्षु० पौण्ड्रकः ( रा. १४.१८३ ) द्र० 'इक्षु'

**नेमि**–पु., पक्षि० चक्रवाकः ( चइ. १.१४ )

**–वृक्ष**–पु., वनस्पति० खदिरभेदः, सोमवल्कः ( ध. १.२७ ) द्र० 'खदिर'

**–सन्धानक**–पु., पञ्चदशकर्णबन्धेष्वेकः चक्रधारावत्सन्धानं अस्य ( सुसू. १६.१० )

**नैकान्त**–पु., तन्त्रयुक्ति० अन्यतरपक्षानवधारणम्, यथा ये ह्यातुराः केवलाद् भेषजादृते म्रियन्ते न च ते सर्वे एव भेषजोपपन्नाः समुत्तिष्ठेरन् इत्यादि ( चसि. १२.४३ )

**नगमेष**–पु., बालग्रह० पितृग्रहेष्वेकः, एतज्जुष्टलक्षणम्-शिशुःफेनोद्वामीमध्यविनामीउद्विजितऊर्ध्वदृङ्रोदनः क्षीयमाणो वसागन्धिको निसंज्ञः सज्वरश्च भवति ( सुउ. २७.१६ ) आध्मानं पाणिपादस्पन्दनं तृट् मुष्टिबन्धोऽतिसारस्स्वरदैन्यं विवर्णता कूजनं स्तननं कासो हिध्मा प्रजागर ओष्ठदंशोऽससङ्कोचस्तम्भो बस्ताभगन्धता ऊर्ध्वं निरीक्ष्य हसनं मूर्च्छा एकनेत्रशोफश्च इत्यधिकानि लक्षणानि ( असंउ. ३ )

**( नैगमेषी )**–स्त्री., बालग्रह० नैगमेषस्त्रीग्रहः ( काइ. )

**–प्रतिषेध**–पु., अध्याय० ( सुउ. ३६ )

**नैचुल**–वि., निचुलस्येदम् फलम् निचुलो वेतसः ( ड. सुचि. २२.२० )

**–फल**–न., (परिव०) वेतसफलम् (ड. सुउ. ५१.२३)

**नैपाल**–पु., वनस्पति० किराततिक्तभेदः, नेपालनिम्बभेदः ( रा. ९.५२ ) द्र० 'किराततिक्त'

इक्षु० अयं वातलः कफपित्तघ्नः सकषायो विदाही च ( सुसू. ४५.१५४ )

**नैपालीज**–स्त्री., खनिज० मनःशिला (सुउ. १४.४; सुउ. ६०.४९ )

**नैर्ऋत**–न., मूलनक्षत्रम् ( इन्दु. असंउ. ४१ )
पु., द्वादशो मुहूर्तः ( इन्दु. असंउ. ४१ )

**( नैर्ऋती )**–स्त्री., दिग्विशेषः, दक्षिणपश्चिमयोरन्तरे विद्यमाना उपदिक्, अस्यामेव रसशालानिहितानि शस्त्रकर्मणि निर्वर्त्यानि ( र. ७.२ )

**–भाग**–पु., राक्षसानां विभागः, गर्भस्य ओजोरूपोंऽशो नैर्ऋतभागः, तत एवाष्टमे मासि जातो न जीवति ( सुशा. ३.३० ) अष्टमे मासे नैर्ऋतभागत्वाद् भूतावसरत्वात् तस्य कालस्य गर्भस्य मरणमाहुः ( इन्दु. असंशा. २ )

**–मारुत**–पु., नैर्ऋतदिग्भवो वायुः, असौ ग्रीष्मेऽसुखो भवति। तदा जन्तवो ज्वरिता इव भवन्ति ( सुसू. ६.२९; असंसू. ४.२८ )

**नैषध**–पु., धान्य० शालिभेदः ( चनि. ४.५; ड. सुसू. ४६.४ ) द्र० ' शालि '

**नैषधक**–पु., शूकधान्य० शालिः ( चसू. २७.१२ )

**नैष्ठिक**–वि., निष्ठा, निश्चयः, तद्भवं नैष्ठिकम् निश्चयेन कर्तव्यम् ( चक्र. चवि. ८.८ )

**(नैष्ठिकी)**–वि., मोक्षसाधिका (बुद्धिः) ( चशा. ५.२६ ) निष्ठाऽत्यन्तदुःखमोक्षरूपा तदर्थभूता चिकित्सा (चक्र.) ( चशा. १.९४ )

**नैसर्गिक**–वि., निसर्गात्सञ्जातं निसर्गदत्तम् ( चसू. २६.७३ )

**नोदन**–( परिव० ) न., प्रेरणम् ( सुउ. ४०.१३७ )

**नौ**–स्त्री., वनस्पति० शमी ( रा. ८.१५२ )

**न्यग्रोध**–पु , वृक्ष० वटः ( ध, ५.७६ )

**(न्यग्रोधा)**–स्त्री., वनस्पति० द्रवन्ती ( धनि. १.२२९ )

**(न्यग्रोधी)**–स्त्री., वनस्पति० द्रवन्ती ( चक्र. १२.३ ) ( धनि. १.२२९ )
वनस्पति० सुतश्रेणी ( रा. परि. ४.१६ )

**–पल्लव**–न., पु., शाक० शीतं कषायं स्तम्भनं पित्तातिसारिणां हितम् ( चसू. २७.१०५ )

**–पाद**–पु., वटप्ररोहः ( चक्र. चचि. २१.७३ )

**–वर्ग**–पु., द्रव्यगण० न्यग्रोधादिगणः पाण्डुरोगशमनः ( सुउ. ४४.२७; सुसू.३७.२९ )

**–शुङ्ग**–न., वटस्य कोमलाङ्कुरः गर्भस्थापनोपयोगि ( चशा. ८.२४ )

**–न्यग्रोधादि**–वि., वटप्रभृतिवर्गः ग्रन्थौ प्रदेहपरिषेकार्थमुपयुज्यते ( असंउ. ३५; सुउ. ४०.८५ )

**न्यग्रोधादिकषाय**–पु., कल्प० अयं क्वाथो दह्यमानप्रमेहेष्वास्थापनार्थमुपयोज्यः ( सुचि. ११.७ )

**न्यग्रोधादिगण**–पु., द्रव्यगण० न्यग्रोधोदुम्बराश्वत्थप्लक्षमधूककपीतनककुभाम्रकोशाम्रचोरकपत्रजम्बूद्वयपियालमधूकरोहिणीवञ्जुलकदम्बबदरीतिन्दुकीसल्लकीरोध्रसाबररोध्रभल्लातकपलाशनन्दीवृक्षाश्चेति। अयं व्रण्यः सङ्ग्राही भग्नसाधको रक्तपित्तहरो दाहमेदोघ्नो योनिदोषहरोऽस्ति (सुसू. ३८.४८-४९; असंसू. १६.३५–३६; अहसू. १५.४१ )
पित्तप्रशमनवर्गोक्तो गणः ( सुसू. ३९.८ )

**न्यग्रोधादिपल्लव**–पु., न., शाक० न्यग्रोधोदुम्बराश्वत्थप्लक्षपद्मादीनां पल्लवाः, इमे कषायाः शीतास्स्तम्भनाः पित्तातिसारिणां हिताश्च ( चसू. २७.१०५ )

**न्यग्रोधादिसिद्धसर्पिस्**–न., सिद्धघृत० पित्तक्षयथौ पानोपयोगि सुचि. ( २३.११; असंचि. १९ )

**न्यग्रोधिका**–स्त्री.,वनस्पति० आखुकर्णी ( रापरि. ३.२१ )

**न्यङ्कु**–पु., आनूपमृग० बहुशृङ्गः , न्यङ्कुशो हरिणः (चक्र.चसू.२७.३९) कूलचरवर्गोक्तः,(सुसू.४६.९४) जङ्गाल० तद्गुणाः– पित्तश्लेष्महरः किञ्चिद्वातकरो लघुर्बलवर्धनश्च ( धपरि. ६.३-४ )

**न्यच्छ**–न., क्षुद्ररोग० अस्याधिष्ठानं द्वितीयालोहिता त्वक् ( सुशा. ४.४.) पित्तरक्तान्वितो वायुरस्य कारणम् ( गयी सुनि. १३.४४ ) रक्तदोषजविकारेष्वेकः ( सुसू. २४.९ ) तल्लक्षणम् – गात्रे महदल्पं वा श्यामं सितं वा सहजं नीरुजं यन्मण्डलं तन्न्यच्छम् ( सुनि. १३.४४ ) लाञ्छनमिति लोके ( ड. सुनि. १३.४४ )

**न्युब्ज**–वि., अधोमुखम् (चशा. ८.२९; सुचि. ३५.१६)

**–शयन**–न., ( परिव० ) अधोमुखशयनम् ( काखिल. ११.१८ )

**न्यून**–न., वाक्यदोष० प्रतिज्ञाहेतूदाहरणोपनयनिगमनानामन्यतमेनापि अवयवेन न्यूनं, रहितमेव न्यूनम्। अथवा बहूपदिष्टहेतुकमेकेन हेतुना साध्यते तन्न्यूनम् ( चवि. ८.५४ )

# आयुर्वेदीय - शब्दकोशः

## प



**पक्ति**–पु., जाठराग्निः, पच्यते विपाकं जरणं वा नीयते अनया इति पक्तिः यद्वा पच्यते इति पक्तिः, तद्वानपि पक्तिः ( सुउ. ४०.१३; चचि. ३.१३० )
अग्निस्थानम् ( ड. सुसू. ४६.४९७ )
पाचनम् ( सुसू. १५.४( २ )

–**द**–वि., पाकोत्पादकम्, पाचकम् ( अहसू. ४.२९ )

–**रस**–पु., आहाररसः तत्प्रमाणम्–नवाञ्जलयः शारीरे ( का. शा. )

–**रुज्**–स्त्री., लक्षण० परिणामशूलो, यश्च भुक्तेऽन्ने पच्यमाने उपजायते ( र. ४.१८ )

–**शूल**–पु.,लक्षण० पक्तिरुक् भुक्तान्ने जीर्यति जरणं वा गच्छति सति जायमानः शूलः ( र. १८.१४३ )
रोग० परिणामशूलः ( र. ३०.३८ )

–**स्थान**–न.. अग्निस्थानम् ( सुउ. ३९.१८ )

**पक्तृ**–वि., जाठराग्निः ( चचि. १५.३९ )

–**वेग**–पु., अग्निबलम् ( असंसू. ३६.३५ )

**पक्त्रिम**–वि., पाकाभिनिर्वृत्तम् ( सुसू. ४२.११ )
न., फुल्लालवणम् ( ड. सुसू. ४२.११ )

**पक्व**–त्रि., निरामम् ( चसि. ८.२०; सुउ. ४०.१८ )
पाकमुपगतम् ( सुसू. ३१.१२ )
कालपक्वम् ' कालः पचति भूतानि कालः संहरते प्रजाः ' इति पक्वपदमपि कालपक्वं नाम मृत्युग्रस्तमित्यर्थे प्रकरणवशाद् गृहीततात्पर्यम् (ड.चसू. ६.४६; ड. सुसू. ३१.१२; चइ. ४.२२ )
न., वनस्पति० कुरी ( रा. १६.१७९ )

–**गुद**–वि., लक्षण० पाकमुपगतं गुदं यस्य सः ( चचि. १९.९ )

–**जाम्बवप्रतीकाश**–वि., लक्षण० पक्वजम्बूफलसदृशवर्णम् ( सुचि. ६.४ )

–**पीनस**–पु., रोगावस्थापाकप्राप्तः पीनसः ( चचि. २६.१४५ )

–**मूषा**–स्त्री., मूषा० कुलालभाण्डरूपा दृढा परिपाचिता मूषा पक्वा हण्डिका घटो वा सेयं पोट्टल्यादिविपाचनोपयोगिनी ( र. १०.२८ )

–**रस**–पु., आसुत० सीधुभेदः पक्वेनेक्षुरसेन कृतं मद्यसीध्वासवादि (चचि. ७.४४; अहसू.५.७४-७५)

–**लोष्ट**–पु., न., भृष्टमृत्तिका या च दाहप्रशमनबस्त्यर्थे उपयुक्ता ( चसि. ७.१४ )
न., भृष्टलोष्टम्, तृष्णाहरणार्थम् एतन्निक्षेपणशीतलीकृतं जलं ( चचि. २२.४२ )

–**शोणिताभ**–वि., लक्षण० पक्वशोणितमिव रक्तकृष्णवर्णयुतं रूपं यस्य ( चचि. १९.९ )

–**शोथ**–पु., शोथस्य पक्वावस्था ( चचि. २५.५६ )

–**शोफ**–पु., (परिव०) पक्वावस्थां गतः शोफः ( सुसू. १७.१० )

**पक्वाण्ड**–पु., वनस्पति० तद्गुणाः–कटुर्नस्याञ्जनविधौ शस्तो जीर्णज्वरापहश्च ( रापरि. ८.१६ )

**पक्वातिसार**–पु., निरामोऽतिसारः ( असंसू. ३३.६ )

**पक्वातीसार**–पु., रोग० निरामोऽतिसारः (सुसू.३८.४७)

**पक्वाधान**–न., शारीर० पक्वमन्नमाधीयते नाम स्थाप्यतेऽस्मिन्निति, पक्वाशयः, वातस्थानमिदम् ( अहसू. १२.१ ; सुचि. ३६.१४ )

**पक्वाधानालय**–वि., शारीर० पक्वाधानम् आलयः स्थानं यस्य सः, अपानो वायुः ( सुनि. १.१९ )

**पक्वान्न**–न., कृतान्नम् ( असंसू. ७.२१०; अहसू. ६.४२ )

**पक्वामाशयमध्य**–न., शारीर० पक्वाशयामाशययोर्मध्यस्थानम् पाचकपित्तस्थानमिदम् ( अहसू. १२.१० )

**पक्वाशय**–पु., शारीर० आशयः ( चसू. १४.९ )
पञ्चदशकोष्ठाङ्गेष्वेकम् ( चशा. ७.१० ) पुरीषवहानां स्रोतसां मूलम् ( चवि. ५.८ ) पुरीषधराकलायाः स्थानम् (सुशा. ४.१६) परिपक्वानामाहारद्रव्याणामाशयः, बृहदन्त्रम् ( हाराणचन्द्रः ) ( सुशा. ९.१२ ) वामपार्श्वानुगोऽयम् ( सुचि. ३६.२८ ) पित्ताशयः ( ड. सुचि. २.५२ ) स्थूलान्त्रम् ( सुशा. ५.८ ) श्रोणिगुदयोरुपर्यधोनाभेः स्थितः (सुसू. २१.६) उत्पत्तिस्थानं वातस्य ( चचि. १५.११ )

**पक्वाशयगुद**–न., शारीर० पक्वाशयं गुदं च ( चशा. ६.२१ )

**पक्वाशयशूल**–न., लक्षण० पक्वाशये शूलवद् वेदना ( चसू. ७.८ )

**पक्ष**–पु., कालविभाग० मासार्धम्, पक्ष्यते परिगृह्यते ज्ञाप्यते चन्द्रस्य पञ्चदशकलानामापूरणक्षयो वाऽनेन इति पक्षः। पञ्चदशाहोरात्राणि, शुक्लकृष्ण-भेदेनासौ द्विविधः ( सुसू. ६.५ ; सुचि. २५.२९ ) वादाङ्गम् ( चसू. २५.२६ )

शरीरार्धम्, वामदक्षिणभेदाद्विविधम् (सुनि. १.६१)

**–ग्रह**–पु., रोग० एकग्रहः, मध्यमार्गानुसार्यसौ ( चसू. ११.४९ )

**–वध**–पु., रोग० अशीतिवातविकारेष्वेकः ( चसू. २०.११ ) मध्यममार्गजोऽयम् ( चसू. ११.४९ )

एकाङ्गरोगः ( चचि. १८.५३ ) अर्धाङ्गः ( चचि. २८.३८-४९ )

तत्सम्प्राप्तिलक्षणानि—मारुतस्तनोर्दक्षिणं वामं वा पक्षमेकं हत्वा सिराः स्नायूश्च विशोष्य सन्धिबन्धान् विमोक्ष्य चेष्टानिवृत्तिं रुजं वाक्स्तम्भं च कुर्यात्। तथैकं पादं हस्तं वा सङ्कोचयति। तोदशूलकृच्च भवति। तेनार्धशरीरमकर्मण्यं विचेतनं भवति (चचि. २८.५३ ; असंनि. १५)

साध्यासाध्यता–शुद्धवातहतः कृच्छ्रसाध्यतमः, पित्तकफयोरन्यतरेण संसृष्टः कृच्छ्रः क्षयहेतुको विवर्ज्यः ( असंनि. १५.४३ )

**–संश्रय**–पु., रागतः पक्षसङ्ग्रहोऽन्यतरपक्षाश्रयणम् ( चसू. २५.२६ )

**–हत**–वि., लक्षणम्० नष्टार्धभागः ( चसि. २.२१ )

**पक्षाघात**–पु., रोग० पक्षवधः ( चसू. १४.२१ )

**पक्षान्त**–पु., सम्यगर्थावधारणम्, निर्णयः ( चसू. २५.२७ )

**पक्षिक**–पु., धान्य० व्रीहिः ( रा. १६.१२० )

**पक्षिन्**–पु., प्राणि० पक्षतिद्वययुक्तो विहगः ( चसू. १३.११ )

**( पक्षि )-नावलय**–पु., धान्य० व्रीहिः (रा. १६.१२०)

**–राज**–पु., धान्य० व्रीहिः ( रा. १६.१२० )

**पक्ष्मन्**–न., शारीर० वर्त्मभवं रोम, पक्ष्मबालः ( ड. सुउ. ३.२९ )

वर्त्मगतरोममालिका ( सुउ. १६.१ )

**( पक्ष्म )-कोप**–पु., नेत्ररोग० उपपक्ष्ममाला, पक्ष्मबालः (ड. सुउ. ३.३०) सर्वजोऽयम्, तत्सम्प्राप्तिलक्षणम्–पक्ष्माशयगता दोषास्तीक्ष्णाग्रखराणि पक्ष्माणि निष्पादयन्ति। तैर्घृष्टं लोचनमुपतप्यते। तेषूत्पाटितेषु वेदनाप्रशमो भवति। वातातपानलांश्च नाभिनन्दति व्याधितः ( सुउ. ३.३० ) याप्योऽयम् ( सुउ. १.३९ )

**–कोपप्रतिषेध**–पु., अध्याय० ( सुउ. १६ )

**–बाल**–पु., पक्ष्मस्थं रोम ( चचि. १३.३९ )

**–मण्डल**–न., शारीर० नयनस्य बाह्यमावरणं पटल-स्वरूपम् तस्य पटलस्य ऊर्ध्वाधःस्थितस्य मण्डलम् ( सुउ. १.१५ )

**–ल**–वि., घनरोमान्वितम्, पक्ष्मभ्यो हितम् ( सुचि. २४.६६ )

**–शात**–पु., नेत्ररोग० तल्लक्षणम्–पित्तं पक्ष्मान्तमाश्रितं सत् कण्डूं दाहं पक्ष्मणां शातनं च करोति ( असंउ. ११ )

**पक्ष्माशय**–पु., शारीर० अक्षिरोम्णोऽन्तर्भागो मध्यं वा (सुउ. ३.२९)

**पक्ष्मोपरोध**–पु., वर्त्मरोग: पक्ष्मप्रकोपः (ड.) तल्लक्षणानि–वर्त्मनां सङ्कोचखरत्वान्तर्मुखत्वादीनि ( सुउ. १६.९; असंउ. ११ )

**पङ्क**–पु., मलः ( चइ. १२.५५ )

लेपः ( असंचि. ९ )

**–ज**–न., वनस्पति० कुमुदम् ( ध. ४.१५४ )

**–मलोपदेह**–पु., पङ्कमलाभ्यां लेपः (असंसू. ८.१७)

**पङ्किल**–वि., पङ्कयुतम् ( असंशा. ९.१४ )

**पङ्केज**–न., वनस्पति० कमलम् ( रा. १०.२४३ )

**पङ्केरुह**–न., वनस्पति० कमलम् ( १०.२४४ )

**पङ्क्ति**–स्त्री., पु., धान्य० व्रीहिः ( रा. १६.९६ )

**–कण्टक**–पु., वनस्पति० अपामार्गः ( रा. ४.३८ )

**–कन्द**–पु., वनस्पति० मालाकन्दः ( रापरि. ७.४४ )

**–बीज**–पु., वनस्पति० बर्बुरः ( रापरि. ८.१२ )

**–बीजक**–पु., वनस्पति०कर्णिकारः ( रा. ९.३३६ )

**पङ्गु**–पु., रोग० पङ्गुलवातः ( ड. सुनि. १.७७ ) तल्लक्षणम्–द्वयोः सक्थ्नोर्वधात् पङ्गुत्वं भवति ( सुनि. १.७७ ) यदा कटिस्थितो वातो द्वयोरपि सक्थ्नोः कण्डरा आक्षिपेत्, तदा पङ्गुत्वं जायते ( असंनि. १५ )

**–त्व**–न., खञ्जत्वम् ( असंसू. २०.१३ )

**पङ्गुल**–पु., वातरोग० पङ्गुत्वम् ( सुचि.५.२३ )

**पचन**–न., वि., अग्निसम्पाद्य आहारादिपाकः पाचनम् ( सुसू. ११.५ ) पच्यते विपाकं नीयते अनेनेति पचनम् ( सुसू. ४१.४ (३)

**पचम्पचा**–स्त्री., वनस्पति० दारुहरिद्रा ( ध. १.५९ )

**पञ्च**–( परिव० ) वि., विस्तृतम् ( र. १९.५८-६८ )

**पञ्चन्**–वि., सङ्ख्या० दशार्धम् ( चसू. २७.२८ )
( **पञ्च** )–**कर्मन्**–न., चिकित्सोपायः, वमन-विरेक-नस्य-निरूहानुवासनानि ( चसू. २८.२७; अहृसू. २७.८ ) निरूहवमनकायविरेकशिरोविरेकास्रविस्रुतय इति पञ्च कर्माणि (अहृसू. १४.५ ) केचन स्नेहनस्वेदन-वमनविरेचनबस्तीन् पञ्चकर्माण्याहुः, स्नेहनस्वेदने वमनादीनां पूर्वकर्मणी ( र. १८.१९५ )
–**कर्मगुणातीत**–वि., लक्षण० संशोधनसंशमना-भ्यङ्गगुग्गुलुशिलाजतुप्रभृतीनि, तेषां फलेभ्योऽ-तीतम्, नात्र वमनादिपञ्चकर्म कथमपि सम्बध्यते ( सुसू. ३३.९ )
–**कर्मीयसिद्धि**–स्त्री., (परिव०) अध्याय० (चसि. २)
–**कापित्थघृत**–न., घृत० कपित्थफलमूलपुष्पत्वक्पत्र-कल्ककषायसिद्धं घृतम्, सर्वमूषिकविषहरमिदम् ( सुक. ७.४०; असंउ. ४६ )
–**कृत्**–पु., वनस्पति० पञ्चकाण्डः ( रापरि. ८.१६ )
–**कृत्वः**–अव्य० पञ्चवारम् ( सुशा. ९.११ )
–**कृष्ण**–पु., कीट० सविषोऽयम्, तथा सौम्यः श्लेष्मप्रकोपणश्च, एतेन दष्टे सति कफविकारा भवन्ति ( सुक. ८.१२-१५; असंउ. ४३ )
–**कोलक**–न., शुण्ठी–पिप्पली–पिप्पलीमूल–चव्य–चित्रकाणि च पञ्चकोलमुच्यते ।
तद्गुणाः–कटु दीपनमुष्णवीर्यं कोष्ठगतवातनाशनं पाचनं रुच्यं त्रिदोषघ्नं स्वरभेदशूलगुल्मघ्नं च । ( र. १३.९१ ) (ध. ७.१३; अहृसू. ६.१६६)
'पिप्पली पिप्पलीमूलं चव्यचित्रकनागरम् ।
एकत्र मिश्रितैरेभिः पञ्चकोलकमुच्यते ॥ '
–**कोलघृत**–न., घृत० पिप्पलीपिप्पलीमूलचव्या-दिसिद्धम् घृतम् इदं श्वयथुवातविष्टम्भगुल्मार्शो-जठरामयनाशनम्, रूक्षाणां बहुवातानां संशोध-नार्थिनामुपयोज्यम् ( चचि. १३.११२-११४ )
–**खर्पर**–न., तुत्थखर्परम्, तुत्थकम्, किट्टतुल्यतुत्थ-खण्डः ( र. २.१३४ )
–**गङ्ग**–पु., देश० पञ्चनदो देशः, अयमतीव सुमनो-हरः ( चचि. ४.३ )
–**गण**–पु., पञ्चमूलानि ( सुउ. ४८.१९ )
–**गव्य**–न., गोजाताः क्षीरादिकाः पञ्चपदार्थाः गोमूत्रं गोमयं क्षीरं दधि सर्पिश्च । एतद् देहशुद्धिकरं कफघ्नं च ।
'गोमूत्रं गोमयं क्षीरं दधि सर्पिस्तथैव च ।
समं योजितमेकत्र पञ्चगव्यमिति स्मृतम् ॥ ' ( ध. ७.५२ )
–**गव्यघृत**–न., घृत० कामलापाण्डुरोगघ्नम् ( चचि. १६.४३ )
अपस्मारकामलाज्वरनाशनम् ( चचि. १०.१७ )
जीर्णज्वरशोफपाण्डुरोगेषु प्रशस्तम् ( सुउ. ३९.२४२ )
श्वयथावुपयुज्यते ( असंचि. १९ )
–**गव्यसर्पिस्**–न., घृत० अपस्मारभूतचातुर्थकक्षय-श्वासोन्मादनाशनम् ( सुउ. ६१.३४-३७ )
पाण्ड्वामयघ्नमिदम् ( असंचि. १८ )
विषमज्वरे बलार्थमुपयुक्तम् ( काखिल. १.७८ )
–**गुप्ति**–स्त्री., वनस्पति० स्पृक्का ( रा. १२.११४ )
–**जन**–पु.,मनुष्यः, पञ्चभिर्भूतैर्जन्यत इति पञ्चजनः पुरुषः ( का. उदावर्त. चि. )
–**ता**–स्त्री., पञ्चानां क्षित्यादिभूतानां भावः पञ्चता पञ्चत्वमिति यावत्, मृत्युः, पञ्चत्वगमनम् ( सुसू. २८.३ )
–**तिक्त**–वि., तिक्तपञ्चकयुतं निरूहादि, पटोलनिम्ब-भूनिम्बरास्नासप्तच्छदानि पञ्चतिक्तानि ( चसि. ८.९ )
–**त्व**–न., मृत्युः ( चशा. १.७४ )
–**त्वग्रहण**–न., मरणज्ञानम् ( चशा. १.७१ )
–**त्वप्रत्यय**–पु., मृत्युहेतुः, क्षयादिव्याधिः ( चचि. ३.१३ )
–**नखराज**–पु., प्राणि० गोधा ( धपरि. ६.३९ )
–**निम्ब**–न., निम्बस्य पञ्चाङ्गम्, निम्बस्य पत्रत्वक्-पुष्पफलमूलानि। पञ्चनिम्बगुणाः–कुष्ठपञ्चकघ्नं व्रण-नाशनं च ( ध. ७.५४ )
–**पटु**–न., पञ्चलवणानि, सैन्धवसौवर्चलबिड-सामुद्रौद्भिदानि ( र. १२.६९ )
–**पर्णिका**–स्त्री., वनस्पति० गोरक्षी ( रापरि. ५.३० )
–**पित्तक**–न., पित्तपञ्चकम्, नागाश्वशिखिगोमत्स्य-पित्तैः स्यात् पञ्चपित्तकम्। पित्तं पञ्चविधं मात्स्यगवाश्वरुरुबर्हिजम्। वाराहच्छागमाहिष-मात्स्यमायूरपित्तजम् ( र. १२.१२२ )
–**भूत**–न., भूतपञ्चकम्, पृथ्व्यप्तेजोवाय्वाकाशानि ( अहृसू. ९.१ )
–**भूतप्रसादजा**–वि., पृथिव्यादिपञ्चमहाभूतानां प्रसन्नांशैर्निर्मिता दृष्ट्यादिः ( सुउ. ७.३ )
–**भृङ्ग**–न., देवदाली-शमी-भृङ्गा-निर्गुण्डी-सनकाः, रोगोपशमे जाते रुग्णस्य स्नानार्थं पानार्थं चोपयुज्यन्ते ( ध. ७.१७ )

**–महाभूतशरीरिसमवाय**–पु., आकाशादिपञ्चभूतानामात्मनश्च संयोगः ( सुशा. १.१६ )

**–माहिष**–न., माहिषपञ्चकम् महिष्या दुग्धं दधि घृतं मूत्रं मलश्च ( र. २.३३ )

**–मुखच्छिद्रा**–वि., मुखे छिद्रपञ्चकयुता ( नाड्यादिः ) ( अहसू. २५.१२ )

**–मुखी**–स्त्री., वनस्पति० आटरूषः ( रा. ४.२९ )

**–मुष्टि**–स्त्री., वनस्पति० स्पृक्का ( ध. ३.६२ )

**–मूल**–न., मूलानां पञ्चकम् ( चचि. १.४१ )
महल्लघुभेदेन तद् द्विविधम्, तत्र महत्–बिल्वाग्निमन्थश्योनाककाश्मर्यपाटलाः। एतद् सतिक्तं मधुरानुरसं पाके लघ्वग्निदीपनं कफवातघ्नं च ( चसि. ३.१३; सुसू. ३८.६८-६९; ध. ७.२१ )
लघुपञ्चमूलम्–शालिपर्णी पृश्निपर्णी बृहती कण्टकारिका गोक्षुरश्च। तद्गुणाः–कषायतिक्तमधुरं बृंहणं बलवर्धनं वातपित्तशमनं त्रिदोषघ्नम् ( सुसू. ३८.६६-६७) ज्वरकासश्वासशूलाग्निमान्द्यारुचिघ्नं च ( ध. ७.१९ )
सङ्ख्यया पञ्चमूलानि पञ्च, विदारिगन्धादि, बिल्वादि, पुनर्नवादि, जीवकादि, शरादि च
( चचि. १.४२-४५ ) सुश्रुतगतानि पञ्च पञ्चमूलानि त्रिकण्टकादि बिल्वादि विदार्यादि करमर्दादि कुशादि च। तत्र त्रिकण्टकादि–त्रिकण्टकबृहतीद्वयपृथक्पर्ण्यो विदारिगन्धा च कनीयः। बिल्वादि–बिल्वाग्निमन्थटिण्टुकपाटलाः काश्मर्यश्चेति महत्। विदार्यादि–विदारीसारिवारजनीगुडूच्योऽजश्रृङ्गी चेति वल्लीसंज्ञम्। करमर्दादि–करमर्दत्रिकण्टकसैरीयकशतावरीगृध्रनख्यश्चेति कण्टकसंज्ञम्। कुशादि–कुशकाशनलदर्भकाण्डेक्षुकाश्चेति तृणसंज्ञम् तत्र–आद्यौ त्रिकण्टकादिबिल्वादी वातहरौ, मध्यौ वल्लीकण्टकसंज्ञौ श्लेष्मशमनौ, अन्त्यश्च तृणसंज्ञः पित्तनाशनः ( सुसू. ३८.६६-७८ )

**–मूलक**–न., पञ्चमूलम् ( सुसू. ३८.६७ )

**–मूलकपञ्चक**–न., पञ्चमूलानां पञ्चकम्, बिल्वादि पुनर्नवादि जीवकादि शरादि गन्धादि च। तत्र बिल्वादिचतुष्टयं सर्वत्र चरकसुश्रुतादिषु समानम्। भिन्नं तु पञ्चमम्, गन्धादि–गन्धहर्षदंष्ट्रा सौरभ्यकरमर्दिकानां मूलानि ( ध. ७.७४ )

**–मूली**–स्त्री., कनीयः पञ्चमूलम् ( चचि. ३.२३४ )

**–रक्षक**–पु., वनस्पति० पक्वाण्डः ( रापरि. ८.१६)

**–राजीफल**–पु., वनस्पति० पटोलम् ( रा. ३.७४ )

**–रात्र**–न., रात्रिपञ्चकम् ( चसू. ५.१५ )

**–लवण**–न., लवणपञ्चकम्–काच-सैन्धव-सामुद्र-बिड-सौवर्चलात्मकम् ( र. ५.२१९ )
सैन्धव-सौवर्चल-बिड-रोमक-सामुद्रात्मकम् ( र. ४.६७ )

**–लोह**–न., खनिज० वर्तलोहम् ( ध. ६.३३; ( र. ५.२२० )

**–वक्त्र**–पु., योग० पारदगन्धक–वत्सनाभ–मरिच–टंकणयुक्तः
सन्निपातज्वरघ्नः कफघ्नोऽग्निदीपनश्च ( र. १२.११२-१३ )

**–वर्ग**–पु., अक्षराणां कचटतपानां कचटतपवर्गीयाणामन्येषां च समुदायः ( चवि. ८.५४ )
आनूपपञ्चवर्गो कूलचराः प्लवाः कोषस्थाः पादिनो मत्स्याश्चेति पञ्चवर्गः ( सुचि. ५.१८ )

**–वर्धन**–पु., वनस्पति० पक्वाण्डः ( रापरि. ८.१६ )

**–वल्क**–न., पञ्चवल्कलम् ( चचि. १४.२१४ )

**–वल्कल**–न., पञ्चक्षीरिवृक्षाणां न्यग्रोधोदुम्बराश्वत्थपारीषप्लक्षाणां त्वक्, स्राविण्यर्शसि परिषेचने उपयुज्यते ( चचि. १४.२१४ ) न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः सर्वैरेकत्र संयुक्तैः पञ्चवल्कलमुच्यते। तद्गुणाः–कषायं शीतं वर्ण्यं कफघ्नं दाहतृष्णायोनिदोषशोफघ्नं च ( चचि. २१.९४; ध. ७.१५ ) सल्लकीझिञ्झिणीजम्बूधवशाल्मलिकात्वचः। (इन्दु.) शिरीषपिप्पलवटप्लक्षवेतसत्वक् (अरु.)मण्डलिसर्पविषे लेपार्थमुपयुज्यते (असंउ.४२)

**–शिरीष**–पु., योग० शिरीषवृक्षस्य फलमूलत्वक्पुष्पपत्रैः कृतः सर्वविषप्रशमनः ( चचि. २३.२१८) विशेषतः कीटविषघ्नः (सुक. ५.८१)

**–शुक्र**–पु., कीट० सविषोऽयम्, असौ सौम्यः कफविकारांश्च करोति ( सुक. ८.१२; असंउ. ४३ )

**–शैरीष**–न., शिरीषस्येदमिति शैरीषं, शिरीषवृक्ष पञ्चाङ्गम्, विषघ्नमिदम् ( ध. ५.५७ ) कीटविषघ्नमिदम् ( रा. २२.२७ )

**–सार**–पु., मधुखर्जूरमृद्वीकापरूषकसिताम्भसा कृतः रक्तपित्तप्रशमनः ( असंचि. ३ )
न., आहारद्रव्य० द्राक्षामधूकखर्जूरकाश्मर्यैः सपरूषकैः तुल्यांशैः कल्पितं पूतं शीतं कर्पूरवासितं पञ्चसाराख्यं दाहतृष्णानिवर्तकं पेयम्। वसन्ततौ पानोपयोगि ( अहसू. ३.३१ )

क्वथितं दुग्धं शर्करा पिप्पल्यो मधु सर्पिश्च इत्येषां समभागोपयोगेन कृतम् । विषमज्वर-क्षतक्षीणक्षय-श्वास-हृद्रोगादिषु शस्यते ( सुउ.३९.२५४-२५५ )

–सिद्धौषधिक–न., सिद्धौषधिपञ्चकम्, कन्दपञ्चकम्-तैलकन्दः सुधाकन्दः क्रोडकन्दो रुदन्तिका सर्पनेत्रञ्चेति पञ्चसिद्धौषधिकम् ( ध. ७.६१ )

–सूरण–न., योग० अत्यम्लपर्णी काण्डीर-मालाकन्द-द्विसूरणैर्युक्तम् ( ध. ७.६० )

**पञ्चम**–पु., स्वर० सप्तस्वरेष्वेकः, कोकिलस्वरः ( र. २७.५८ )

**( पञ्चमी )**–स्त्री., तिथि० बालोत्पत्तेः पञ्चमे दिने दुःसहनामानं गजेन्द्रं पूजयेत् । येन व्रणगण्डादिरूपा पीडा बालानां न भवति ( का. द्विव्रणीय चि. )

**पञ्चल**–पु., वनस्पति० कोलकन्द ( रापरि. ७.३८ )

**पञ्चाङ्ग**–न., अङ्गपञ्चकम् मूलत्वक्पत्रपुष्पफलमिति वृक्षाणां पञ्चाङ्गम् ( चचि. २३.७८; ध. ७.५८ )
मूलकाण्डफलपुष्पपत्राणि (र. १९.९३; र.३०.४३)
मूलकाण्डशाखापत्रपुष्पाणि (र. २०.८१) पत्रपुष्पफलनालकन्दः ( र. २०.८१ )

**( पञ्चाङ्गी )**–स्त्री., व्रणबन्ध० चतुर्दशबन्धेष्वेकः अयं जत्रुण ऊर्ध्वं विधीयते। तत्स्वरूपम्–अस्मिन् व्रणबन्धविशेषे पट्टे चत्वारो बाहव एका चोर्ध्वं पट्टिका ( सुसू. १८.१७ )
अयं हनुसन्धिभङ्गादौ प्रयुज्यते ( असंउ. ३२; असंसू. ३८.४२ )
वर्तिः पञ्चभिरङ्गभूतैर्द्रव्यैः कृता वर्तिः, मुखरोगे धूमपानार्थमुपयुक्ता ( सुचि. २२.५५ )

**पञ्चाङ्गिक**–वि., पञ्चसङ्ख्याकः (द्रव्यगण) (सुउ. ४८.१९)

**पञ्चाङ्गुल**–पु., वनस्पति० चित्रैरण्डः ( चसू. २७.१०९ )
पत्रशाकः एरण्डः, शाकमस्य वातलं कटुतिक्ताम्लमधोमार्गप्रवर्तनं च ( चसू. २७.१०९ )
वनस्पति० एरण्डः ( ध. १.२९९; र. १२.७४ )

**( पञ्चाङ्गुली )**–स्त्री.. वनस्पति० तक्राह्वा ( रापरि. ४.२९ )

**पञ्चाङ्गुलतैल**–न., स्नेह० एरण्डतैलम्, वातजतिमिरे विरेचनोपयोगि ( सुउ. १७.२९ )

**पञ्चाङ्गुष्ठक**–पु., वनस्पति० एरण्डः (र. ११.९४)

**पञ्चाज**–न., अजाया इदमिति आजम्, अजानां, दुग्ध-दधि-घृत-मूत्र-पुरीषाणां मेलनम् (र. २.३३ )

**पञ्चात्मक**–वि., पञ्चमहाभूतमयं पाञ्चभौतिकम् ( चसू. २६.१०९ )

**पञ्चानन**–पु., योग० पाण्डुरोगराजयक्ष्मोदरहलीमकवातरोगमलावरोधकुष्ठग्रहणीज्वरातिसारश्वासकासकफरोगगलरोगार्शोऽग्निमान्द्यगुल्मनाशनः ( र. १९.६५ )

**पञ्चामृत**–पु., योग० व्याधिवार्धक्यनाशनः (र. ३०.८९)
राजयक्ष्मादिरोगनाशनः ( र. १४.३१ )
न., योग० इदं दीपनं पाचनं बालरोगनाशनं च ( र. २२.१५६ )
गव्यमाज्यं दधि दुग्धं मधु शर्करा चैकत्रीकृतं पञ्चामृतमिति प्रकीर्त्यते। इदमजीर्णभूतबाधानाशनम् ( ध. ७.५१ )

**पञ्चामृतपर्पटी**–स्त्री., योग० सुवर्णरौप्यताम्राभ्रककान्तलोहाद्युक्ता क्षयश्वासादिनाशिनी ( र. १४.९७ )

**पञ्चाम्ल**–न., अम्लपञ्चकम्, कोलाम्लं चुक्रिकाम्लं मातुलुङ्गमम्लवेतसं दाडिमं च ( चचि. २२.३५ )

**पञ्चाम्लक**–न., बदर–दाडिम–चिञ्चा–चुलिकाचुक्राणां च अम्लरसानां पञ्चकम् ( र. १०.८३ )
कोलदाडिमवृक्षाम्लचुक्रिकाऽम्लवेतसाः इति पञ्चाम्लकम् ( ध. ७.५७ )

–पञ्चाल–पु., कीट० पञ्चालकः ( असंउ. ४३ )

**पञ्चाम्लक**–पु., कीट० सविषोऽसौ अनेनाग्निप्रकृतिकेन दष्टे सति पित्तजा रोगा भवन्ति ( सुक. ८.१० )

**पञ्चाम्लक्षेत्र**–न., देश० कान्यकुब्जः ( चवि. ३.३ )

**पञ्चेन्द्रिय**–वि., पञ्चेन्द्रियाणि यस्य सः ( सुशा. ९.११ )

**पञ्चेन्द्रियग्रहण**–न., पञ्चभिर्ज्ञानेन्द्रियैर्ज्ञानम् (सुसू. ४०.३)

**पञ्चेन्द्रियार्थविप्रतिपत्ति**–स्त्री., अध्याय० पञ्चेन्द्रियार्थानां शब्दादीनां विपरीतावबोधमधिकृत्य कृतः सुश्रुतस्थानगतत्रिंशत्तमः ( सुसू. ३० )

**पटचूर्ण**–न., वस्त्रगालितचूर्णम् ( र. १५.२२ )

**पटल**–न., शारीर० त्वक्सदृशास्तनुभागः ( सुउ. १.१४ )
नेत्ररोग० लिङ्गनाशः (चचि. २३.७३; असंउ. १७)

–हर–न., अञ्जन० इदं पटलरोगनाशनम् (र. २३.५५)

**पटह**–पु., वाद्योऽयं दुन्दुभिः, महागन्धहस्तिनामकागदलिप्तपटहवादनेन विषार्तस्य विषं नश्यति ( चचि. २३.८७ )

**पटालिका**–स्त्री., पटानां वस्त्राणां आलिः पंक्तिः पटालिः पङ्क्तिमती नवा तृणादिरचिता भित्तिः । वस्त्रनिर्मितं गृहम् ( अरु. अहसू. ३.३४ )

**पटु**–वि., प्रवीणः, वक्ता ( ड. सुक. १.१० )
पु., वनस्पति० काण्डीरः ( ध. ४. ६२ )

चोरकः ( रा. १२.१२७ )
निर्यास० कर्पूरभेदः ( ध. ४.६२ )
न., लवण० सैन्धवम् ( अहृसू. १९.४१ )
**-क्षीरा**-वि., लवणं क्षीरं यस्याः सा ( धात्री ) ( का. फक्कचि. )
**-तृणक**-न., वनस्पति० लवणतृणम् ( रापरि. ८.५७ )
**-पञ्चक**-न., लवणपञ्चकम्, सैन्धवसौवर्चलबिडसामुद्रौ-द्भिदानि पञ्च पटूनि लवणानि ( र. १६.१५५ )
**-प्रजा**-वि., कुशलाधिकप्रबलप्रजा ( काफक्कचि. )

**पटोल**-न., वनस्पति० तृप्तिघ्नगणोक्तमेकं द्रव्यम् ( चसू. ४.११ (११) ) तृष्णानिग्रहणगणोक्तमेकं द्रव्यम् ( चसू. ४.१४ ) उद्वर्तनेन कण्ड्वादिहरम् ( चसू. ३.८ ) अस्य फलपत्रे शाकत्वेनोपयुज्येते ( सुसू. ४६.२६८ ) नेत्ररोगे एतन्मुकुलान्याश्चो-तनोपयोगीनि ( असंउ. १४ ) मधुरतिक्तभेदेनेदं द्विधा। आद्यं स्वादु कृमिनुद् रुचिकरं हृद्यं च द्वितीयं कटु तिक्तमुष्णं कटुपाकि ( ध. ) वृष्यं व्रण्यमवातलं ( सु. ) ग्राहि वातलं रुचिप्रदं ( असं. ) पित्तकफघ्नं रक्तकण्डूकुष्ठज्वरदाहनाशनं च ( चसू. २७.९६ ; ध. १. ४९ )
हिं.—परवल.
म.—पडवळ.
गु.—परवल.
बं.—चिचिण्डा.
त. —पुटोलु.

**( पटोली )**-स्त्री., स्वादुपत्रफलं पटोलम् ( रा. ७.७६ ) तिक्तद्रव्यस्कन्धे पटोली श्रेष्ठा ( असंसू. १८.२८ )
**-घृत**-न., घृत० रक्तपित्तप्रबलेषु कुष्ठेषूपयुक्तम् ( चचि. ७.१३५ )
**-यूष**-पु., यूष० अयं हृद्यो दीपनः पित्तघ्नः कफमेदो-विशोषणः कृमिकुष्ठज्वरापहश्च ( सुसू. ४६.३७०-३७१ )

**पटोलादिकषाय**-पु., कल्प० अयं विसर्पघ्नः ( चचि. २१.५९ )

**पटोलादिगण**-पु., द्रव्यगण० पटोलचन्दनकुचन्दनमूर्वा-गुडूचीपाठाः कटुरोहिणी च। अयं पित्तकफारोचकघ्नो ज्वरोपशमनो व्रण्यश्छर्दिकण्डूविषापहः ( सुसू. ३८.३३-३४ ) कफपित्तकुष्ठज्वरविषवम्यरोचक-कामलानाशनः ( असंसू. १६.९; अहृसू. १५.१५ )

**पटोलादिघृत**-न., घृत० रक्तपित्तकफस्वेदक्लेदपूयाङ्ग-शोषणकामलाज्वरविसर्पगण्डमालानाशनम् ( सुउ. ३९.२४६ )

**पटोलाद्यचूर्ण**-न., चूर्ण० सर्वोदरघ्नमेतत् ( चचि. १३.११९-१२३ )

**पटोली**-स्त्री., वनस्पति० पटोलम् ( रा. ७.७६ )

**पटोल्यादिघृत**-न., घृत० अपचीकुष्ठज्वरनेत्रवदन-कर्णघ्राणजगदशुक्रव्रणार्जुनव्रणनाशनमिदम् ( सुउ. ३९.२२६-२२९ )

**पट्ट**-पु., न., व्रणबन्धनद्रव्येष्वेकम्, वस्त्रपट्टकम् ( सुसू., ५.६; चचि. २५-९६ )
**-बन्ध**-पु., स्वेद० क्षौमकार्पासादिपट्टकैर्बन्धनम्, अयमनग्निस्वेदप्रकारः ( ड. सुचि. ४.१७ )
**-रञ्जन**-न., वनस्पति० कुचन्दनम् ( ध. ३.६ )
**-राग**-न., वनस्पति० कुचन्दनम् ( ध. ३.६ )

**पट्टक**-पु., न., पट्टिका ( सुसू. १८.३७ )
काष्ठपट्टिका, चिक्कणशिला ( र. ५.२३० )

**पट्टिकारोध्र**-पु., वनस्पति० लोध्रभेदः पट्टिकालोध्रः ( ध. ३.१७७ )

**पट्टिन्**-पु., वनस्पति० लोध्रभेदः, पट्टिकालोध्रः ( ध. ३.११७ ) द्र० ' लोध्र '

**पठन**-पु., अध्ययनं पाठः, पठनविधिः-अद्रुतमविलम्बित-मविशङ्कितमननुनासिकं व्यक्ताक्षरमपीडितवर्णमक्षि-भ्रुवौष्ठहस्तैरनभिनीतं सुसंस्कृतं नात्युच्चैर्नाति-नीचैश्च स्वरैः पठेत् ( सुसू. ३.५४ )

**पणधा**-स्त्री., वनस्पति० पण्यन्धः ( रापरि. ८.५८ )

**पणव**-पु., दुन्दुभिप्रकारः ( असंशा. १०.७ )

**पणाङ्गना**-स्त्री., वेश्या ( चसि. ११.२९ )

**पणिक**-पु., वणिक् ( सुचि. २४.९८; अहृसू. २.४३ )

**पण्यजीविन्**-पु., वणिक् ( चसि. ११.२७ )

**पण्यन्ध**-पु., वनस्पति० अयं दीर्घमध्यह्रस्वभेदेन त्रिविधः, पण्यन्धगुणाः-तिक्तः क्षारः व्रणसंरोपणः सारकश्च ( रापरि. ८.५८ )

**(पण्यन्धा)**-स्त्री., वनस्पति० पण्यन्धः (रापरि. ८.५८)

**पण्यविलासिनी**-स्त्री., भैषज्य० नखम् (रा. १२.१०८)

**पतङ्ग**-पु., धान्य० शालिभेदः ( चसू. २७.९ ) द्र० ' शालि ' ( अहृसू. ६.३ )
वनस्पति० जलमधूकः ( रा. ११.५९ )

**( पतङ्गी )**-स्त्री., संस्कार० पारदघटितकल्केन लोहे जातं गौरवतेजस्वित्वादिसहितं हेमत्वं ( र. ८.५१ )
न., वनस्पति० कुचन्दनम् ( ध. ३.६ )
कालीयकम् ( ध. ३.८ )

**पतङ्गी**-स्त्री., संस्कार० ( र. ८.५१ ) '( पतङ्गी )'
**-राग**-पु., औषधिकल्केन स्वर्णादिरञ्जितस्य लोहस्य

कालातिपातेन, चिरं वाऽग्नौ ध्मानेन, निर्गतः सार-भागः ( र. ८.५३ )

**पतन**-न., अनूर्ध्वस्थितिः ( सुसू. ३४.३५ )
श्वभ्रादौ वृक्षपर्वतादेर्वा पातः ( सुनि. १५.३ )
गलनम् ( चसू. ५.३० )

**-धर्मिन्**-वि., पतनस्वभावः ( सुसू. ३२.३ )

**पताक**-पु., सर्प० निर्विषोऽसौ ( असंउ. ४१ )

**( पताका )**-स्त्री., देवगृहादिध्वजपटः ( असंसू. ८.८३ )
वैजयन्ती ( इन्दु. असंउ. ५ )

**पतित**-वि., भ्रष्टम्, च्युतम् (सुचि. २४.९८; सुचि. २.७७)
स्वकीयधर्मात् स्वकीयाचाराद्वा भ्रष्टः ( सुचि. २४.९०,९८ )

**-गुदवलि**-वि., लक्षण० पतिता गुदवलिर्यस्य ( चचि. १९.९ )

**-त्व**-न., लक्षण० शिरोग्रीवादीनामधार्यमाणता ( सुसू. ३२.४ )

**-शल्य**-वि., लक्षण० पाकात् स्वयं पतितं शल्यं यस्य स उत्क्षेपमर्मविद्धोऽपि पतितशल्यः सन् जीवति ( सुशा. ६.२७ )

**पत्तङ्ग**-न., चन्दनभेदः, रक्तचन्दनम् ( चचि. २६.२१०; सुसू. १४.३६; असंउ. २६ ) द्र० 'चंदन'
पत्तूरम्, रक्तचन्दनसमं काष्ठम् ( र. ३०.६४ )

**पत्तूर**-पु., वनस्पति० शालिञ्चिका (चक.चचि. २६.४६)
शाक० शालिञ्चः ( चसू. २७.१०० )
वातसंशमनवर्गोक्तमेकं द्रव्यम्, कुचन्दनम् ( सुसू. ३९.७ )
शिरवालिका, कृमिनाशिनी ( ड. सुउ. ५४.२६ )
स्वेदोपयोगिनी ( ड. सुउ. ११.५ ) प्रलेपनद्रव्येष्वेकम् ( सुचि. १९.३५ )
सितिवारः ( सुउ. ९.१९ )
सारिवा ( जेज्जटः ) ( चचि. ३.२६७ )
लोहमारः (हे.)
पत्तूरगुणाः— दीपनस्तिक्तः कफवातजित् प्लीहार्शोघ्नः ( अहृसू. ६.१००; असंसू. ७.१४९ ) स्वादुपाकरसः शीतलो नातिपित्तलो लवणानुरसः सक्षारो रूक्षो वातलः सरः कफघ्नश्च ( सुसू. ४६.२७५ )

**पत्र**-न., वनस्पति० पत्रकम् ( ड. सुउ. १२.१३ )
तमालपत्रम् ( ड. सुउ. ३९.२९७; असंसू. २६.४; ध. २.५२ )
पर्णम्, व्रणाद्युपरि बन्धनोपयोगि, तत्स्वरूपम्— अकर्कशमखरधारमत्रुटितं नवं सुकुमारकमजन्तुजग्धं मृदु च ( सुचि. १.११६ )
तालीसपत्रम् ( ध. २. ५३ )

**(पत्री)**-स्त्री., वनस्पति० गङ्गापत्री ( रापरि. १०.४५ )
पाची ( रापरि. १०.४६ )

**-कन्दका**-स्त्री., वनस्पति० गन्धपलाशः (ध. १.६५)

**-तण्डुली**-स्त्री., वनस्पति० शङ्खिनी (रा. ३.३८०)

**-तरु**-पु., वनस्पति० खदिरभेदः, विट्खदिरः ( रा. ८.३८ ) द्र० 'खदिर'

**-दान**-न., व्रणस्य षष्ठ्युपक्रमेष्वेकः पत्रेण व्रणाच्छादनम्, तेन च शैत्यौष्ण्यजननस्नेहसङ्ग्रहणे भवतः, अकर्कशाविच्छिन्नादिगुणं पत्रमुपादेयं व्रणाद्याच्छादनार्थम् ( सुचि. १.८ )

**-भङ्ग**-पु., पत्रखण्डः, पल्लवः ( ड. सुउ. १४.१०; सुचि. ३२.५; अहृसू. १४.६ )
छदसमूहः ( असंसू. २६.६ )

**-यूष**-पु., यूष० अयमनिलापहः ( काखिल. ४.४९ )

**-रङ्ग**-न., वनस्पति० कुचन्दनम् ( रा. १२.१२ )

**-लवण**-न., योग० वातादिहरपत्रैः सह लवणमवक्षुद्य यत् क्रियते तत् पत्रलवणम् ( सुचि. ४.३० )

**-वर्ण**-पु., वनस्पति० सप्तपर्णः ( रा. १२.१३८ )

**-वल्ली**-स्त्री., वनस्पति० रुद्रजटा ( रापरि. ३.२५ )
पलाशी ( रापरि. ३.४९ )

**-विष**-न., स्थावरविष० विषपत्रिकालम्बावरदारुकरम्भमहाकरम्भाणि पञ्च पत्रविषाणि, पत्रविषेण जृम्भाङ्गोद्वेष्टनश्वासा भवन्ति ( सुक. २.५-७; असंउ. ४० )

**-वृश्चिक**-पु., कीट० सविषोऽसावग्निप्रकृतिकः पित्तजरोगान् करोति ( सुक. ८.८-१२ )

**-शाक**-न., शाकवर्गः, कर्कश-परिजीर्ण-कृमिजुष्टादेशजाकालविरोहि पत्रशाकं वर्ज्यम्। एतद्विपरीतं ग्राह्यम् ( सुसू. ४६.२९७ )

**-श्रेणी**-स्त्री., वनस्पति० द्रवन्ती ( रा. ५.३४६ )

**-श्रेष्ठ**-पु., वनस्पति० बिल्वः ( रा. ११.१३४ )

**-सेवनी**-स्त्री., पत्रगतो मध्यदण्डः, पत्रगता मध्यसिरा ( असंशा. ६.४ )

**पत्रक**-न., वनस्पति० तमालपत्रम् ( र. १९.३९ )
तालीसपत्रम् ( र. ११.९४ )
तेजपत्रम् (र. ११.९४)

**( पत्रिका )**-स्त्री., वनस्पति० जातिपत्री ( र. ३०.८१ )

**पत्रक**-न., वनस्पति० तमालपत्रम् ( र. १९.३९ )

तालीसपत्रम् ( र. ११.९४ )
तेजपत्रम् ( र. ११.९४ )
**( पत्रिका )**–स्त्री., वनस्पति० जातीपत्री ( र. ३०.८१ )
**पत्राङ्ग**–न., वनस्पति० कुचन्दनम् (ध. ३.६)
**पत्राढ्य**–पु., पक्षि० मयूरः ( अहसू. ७.४३ )
न., वनस्पति० पिप्पलीमूलम् ( रा. ६.११३ )
तालीसपत्रम् ( ध. २.५३ )
कुचन्दनम् ( रा. १२.१२ )
तृणाढ्यम्–( रापरि. ८.५३ )
**पत्राद्य**–न., खनिज० हरितालभेदः पत्रतालकम् ( र. ३.७४ )
**पत्राभ्रक**–न., अभ्रकभेदः, श्वेतपत्रमयः पिनाकः, अस्य पावकसंसर्गाद्दलमोचनं भवति ( र. २.१५ )
**पत्रालु**–पु., वनस्पति० इक्षुदर्भा ( रापरि. ८.४७ )
कासालुः ( रापरि. ७.२८ )
**पत्रिन्**–पु., वनस्पति० दमनम् ( रा. १०.१२० )
खदिरः ( रा. ८.३१ )
तालः ( रा. ९.९२ )
**पत्रोर्ण**–पु., व्रणबन्धनद्रव्येष्वेकम्। रल्लूकाख्यः कम्बलः। यैर्हरितादीनि देवाङ्गान्युच्यन्ते ते पत्रोर्णाः। धौतकौशेयम्। मागधादिदेशेषु नागवृक्षादयश्चत्वारो वृक्षास्तत्पत्रेभ्यो जातैर्हरिततन्तुभिरूर्णारूपैरूयते तत् ( सुसू. १८.१६ )
**पथिन्**–पु., मार्गः ( सुसू. ३४.५ )
शारीर० स्रोतः धात्ववकाशः शरीरच्छिद्रम् ( चवि. ५.९; असंशा. ६.५० )
**(पथि) –च्छेद**–पु., बिडालादिभिर्मार्गलङ्घनम् प्रयाणावसरे चैतदप्रशस्तम् ( चइ. १२.२९ )
**–द्रुम**–पु., वनस्पति० खदिरः ( ध. १.२७ )
**पथ्य**–वि., पथोऽनपेतम्, स्वस्थस्य स्वास्थ्यरक्षणमातुर व्याधिपरिमोक्षश्चेति पन्थास्तस्मादनपेतम्। मनःप्रियम् ( चसू. २५.४५ )
हितकरमाहारविहारौषधादि ( चसू. १.१००; र. २०.११५; असंसू. २३.२६ )
न., भेषजम् ( चचि. १.३ )
लवण० सैन्धवम् ( रा. ६.३३ )
**(पथ्या)**–स्त्री., वनस्पति० हरीतकी ( सुचि. २.७४; र. १२.१२१; ध. १.२०५ )
वन्ध्यकर्कोटकी ( रा. ३.२७३ )
चिर्भटम् ( रा. ७.२६२ )
त्रपुस० मृगाक्षी ( रा. ७.२५८ )
**–करा**–स्त्री., धान्य० व्रीहिः ( रा. १६.११२ )
**–कारिन्**–पु., व्रीहिः ( रा. १६.१०१ )
**–गण**–पु., पथ्यवर्गः. ( सुचि. १७.३ ) वातादिदोषहरवर्गः, भद्रदार्वादिचन्दनादिकालेयकादयः (सु.सू. ३९.७-९)
**–वर्ग**–पु., हितकरद्रव्यसमूहः, घृतं सैन्धवं धान्याकं जीरकमार्द्रकं तण्डुलीयकं पटोलमलाब्वादिकं गोधूमो जीर्णशालिर्गव्यं क्षीरं दधि घृतं हंसोदकं मुद्गाश्चेति पथ्यवर्गः। विशेषतः पारदसेविनाम् (र. ११.१२६)
**–शाक**–पु., वनस्पति० तण्डुलीयकः (रा. ५.१७५)
**पथ्या**–स्त्री., वनस्पति० हरीतकी (ध. १.२०५)
**–घृत**–न., घृत० पाण्ड्वामयगुल्महरम् ( चचि. १६.५० )
**–फल**–न., हरीतकीफलम् ( सुउ. १६.८ )
**–वृन्त**–हरीतकीफलबन्धनम्, अस्थिरहितं फलम् ( चचि. १६.५० )
**पथ्यादिचूर्ण**–न., हरीतक्यादिचूर्णम् विसूच्यजीर्णशूलारुचिनाशनम्. ( सुउ. ५६. १४ )
**पथ्योपचारज्ञ**–वि., हितकरचिकित्सादिविद् (वैद्यः) ( असंसू. २३.२८ )
**पद**–न., शक्तिमदक्षरम्, तत्तत्पदानां तत्तदर्थेषु रूढत्वं शक्तिः, तस्याश्च ग्रहो व्याकरणोपमानादिष्वायत्तः अक्षरसमूहः ( चवि. ८.२७ )
शस्त्रपदम्, शस्त्रस्थानम् (सुचि. १.२९;सुसू.५.७)
क्षतम् ( ड. सुक. ४.१५ )
**–शतमात्र**–( अव्य. ) केवलं शतानि पदानि ( असंसू. १०.५९ )
**पदाघातन**–न., पद्भ्यामुद्वर्तनम् ( चचि. ६.४ )
**पदाङ्गी**–स्त्री., वनस्पति० हंसपादी ( रा. ५. १६७ )
**पदातिचर्या**–स्त्री., पद्भ्यां गमनम् ( सुचि. ११.११ )
**पदार्थ**–पु., तन्त्रयुक्ति० पदस्य पदयोः पदानां वाऽर्थ. ( चसि. १२.४१ ) सूत्रे पदे वा योऽर्थोऽभिहितः स पदार्थः। यथा वेदोत्पत्त्यध्याये वेदपदस्याऽऽयुर्वेद इत्यर्थः, स एव पदार्थः, पद्यते गम्यते येनार्थ इति सूत्रस्यापि पदत्वात् सूत्रे योऽर्थः प्रतिपादितः सः पदार्थः ( सुउ. ६५.१० )
वस्तु, द्रव्यम् ( र. ७.५-९ )
**पदिका**–स्त्री., वनस्पति० हंसपादी ( रा. ५.१६७ )
**पद्म**–पु , सर्प० दर्वीकरभेदः, पद्मः ( सुक. ४.३४-(१) द्र० ‘ सर्प ’
न., सङ्ख्या० दशार्बुदप्रमाणम्, अर्बुदेत्यनेन दशकोटिसङ्ख्या, तादृग् दशार्बुदं शतकोटिप्रमाणम् ( सुउ. ६०.२२ )

खनिज० सीसकम् ( रा. १३.२१ )
वनस्पति० कमलम् (रा. १०.२४३; र. १६.१२३; असंसू. १२.८६ ) मूत्रविरजनीयगणोक्तमेकं द्रव्यम् ( चसू. ४.१५ ) निर्वापणप्रदेहोक्तमेकं द्रव्यम् ( चसू. ३.२६ ) आसवोपयोगि द्रव्यम् ( चसू. २५.४९ )
सरक्तमष्टदलपद्मम् ( चक. चसू. २५.४९ )
रक्तकमलम् ( चसू. २४.२२; सुउ. ३९.२३६ )
ईषच्छुक्लं कमलम् ( ड. सुउ. ४७.५८ )
सूर्योदयविकासि कमलम्, शाकत्वेनोपयुज्यते। तद्गुणाः– सतिक्तं मधुरं शीतं पित्तकफापहं च ( सुसू. ४६.२८५ )

( पद्मा )–स्त्री., कीट० आग्नेयी लता, स्वेदजेयं पित्तविकारान् करोति (असंउ.४४) तद्दंशलक्षणानि– अस्या दंशे पद्माभस्फोटो भवति। स तु भिन्नः सन् पुनरभिन्नो भवति। स्फोट आशु क्लिद्यत्युष्णं च क्लेदं स्रवति। स्पर्शेऽतिवेदना भवति (असंउ. ४५)
वनस्पति० भार्गी ( ध. १.६८; ड. सुउ. ४०.७३ हे. अहृसू. १५.३७ )
ब्राह्मणयष्टिका पुरीषसङ्ग्रहणीयगणोक्तमेकं द्रव्यम् ( चसू. ४.१५ )
पद्माकारा पद्मरक्ता पद्मगन्धौषधिः द्रोणीप्रावेशिकरसायने प्रयुक्ता ( चचि. १ (४) ७ )
मञ्जिष्ठा ( रा. ६.१५ )
शाक० फञ्ज्यादिशाकवर्गोक्तमेकं शाकम् ( रापरि. ७.९४ )
पद्मप्राचारिणी ( जज्जट ) ( चचि. ३.२५८ )
पद्मचारिणी ( सु.शा. १०.६०; अरु. अहृसू. १५.२७; ध.४.९० )
तस्या गुणाः–सुगन्धा गौल्या तिक्ता शीता मोहापस्मारवान्तिमेहभूतातिसाररक्तपित्तहरा च ( ध. ४.९०; रा. ५.१३३ )

–कण्टक–पु., न., क्षुद्ररोगः पद्मिनीकण्टकः क्षुद्रकुष्ठानामेकतममवभासिनीत्वगधिष्ठानम् (सुशा. ४.४)

–कन्द–पु., वनस्पति० तद्गुणाः –कषायः कटुस्तिक्तविपाकी रूक्षो विष्टम्भी शीतबीजो रुच्यः पित्तकफापहोऽस्रपित्तविनाशनः कासतृष्णादाहनिवारणश्च ( ध. ४.१६४ ) द्र० 'शालूक'
शाक० कमलस्य कन्दः, तद्गुणाः –कषायो हिमो मधुरविपाकी मारुतप्रकोपनः पित्तशमनश्च ( सुसू. ४६.३०८ )

–कर्कटी–स्त्री., वनस्पति० पद्मबीजम् ( ध. ४.१५९ )

–काष्ठ–न., वनस्पति० पद्मकः ( रा. १२.१५० )

–किञ्जल्क–पु., न., वनस्पति० पद्मकेसरम्, पद्मपुष्पतन्तुः, रक्तपित्ते उपयुक्तम् (चचि. ४.६७) गर्भस्थापनविधौ लेह्यद्रव्यम् ( चशा. ८.२४ ) साङ्ग्राहिकरक्तपित्तप्रशमनानां श्रेष्ठम्(चसू. २५.४०)

–कीट–पु., कीट० सविषोऽयं, अग्निप्रकृतिकोऽसौ पित्तजविकारान् करोति ( सुक. ८.१०; असंउ. ४३ )

–केशर–न., वनस्पति० कमलकिञ्जल्कः ( चसू. ५.६५; सुसू. ३८.४६ )

–केसर–न., वनस्पति० कमलकिञ्जल्कः पुरीषसङ्ग्रहणीयगणोक्तमेकं द्रव्यम् ( चसू. ४.१५ )
तद्गुणाः– मधुरं कटु शीतं रूक्षं रुच्यं पित्तघ्नं तृष्णारक्तक्षयास्यव्रणदाहघ्नं च ( ध. ४.१६५ )
हिं.—कमलकेसर.
म.—कमलकेसर.
गु.—कमलकेसर.
बं.—पद्मरेनू.

–चारिणी–स्त्री., वनस्पति० पद्मा ( ध. ४.९० )

–तन्तु–पु., वनस्पति० बिसम् ( रा. १०.२५८ )

–तीर्थ–न., वनस्पति० पाठा ( ध. १.७१–७२ )

–नाल–न., वनस्पति० बिसम् ( ध. ४.१६१ )

–पत्रक–पु., न., वनस्पति० कमलम् (र. १८.१०७) पुष्करमूलम् ( र. १८.१०६–१०८; रा. ६.९२ )

–पल्लव–पु., न., शाक० तद्गुणाः–कषायः शीतः स्तम्भनः पित्तातिसारिणां हितः ( चसू. २७.१०५ )

–पुष्कर–न., पद्मकर्णिका ( ड. सुनि. १३.११ )

–बीज–न., वनस्पति० कमलबीजम् ( चचि. २९.६४ ) श्वेतश्लक्ष्णबहुपुटकन्दः, पित्तसंशमनवर्गोक्तमेकं द्रव्यम्। सर्पच्छत्रकमिति लोके ( सुसू. ३९.८ )
तद्गुणाः मधुरं तिक्तं गर्भस्थापनं पित्तघ्नं रक्तपित्तहरं च ( ध. ४.१५९ )

–मध्य–न., पद्मवराटकम् ( सुचि. २५.३८ ) पद्मकेसरम्:– ( सुचि. २५.३९ )

–मूल–न., वनस्पति० पद्मकन्दः ( ध. ४.१६३ )

–रजस्–न., पद्मकेशरम् ( अहृसू. १५.३७ )

–राग–पु., रत्न० ( र. ४.३; असंसू. १२.१९ )

–रूपिणी–स्त्री., वनस्पति० वृक्षादनी ( ध. ४.९७ )

–वती–स्त्री., वनस्पति० पद्मिनी ( ध. ४.१५७ ) पद्मा ( ध. ४.९० )

–वृक्ष–न., वनस्पति० पद्मकः ( रा. १२.१५० )

**—हस्त**—वि., पद्माकाररेखा हस्ततले यस्य, तथाविधो वैद्यः ( र. ७.२८ )

**पद्मक**—पु., न., वनस्पति० कुष्ठम् ( रा. १२.९८ )
हेमपद्मम् ( अहृसू. १५.१२
मरुद्भवः ( अरु. १५.१६ )
पद्मकाष्ठम् (चसू. ५.२१; सुसू. ३८.३९)
शिरोरुजि प्रदेहोपयोगि ( चसू. ३.२४ )
वेदनास्थापनगणे एकं द्रव्यम् ( चसू. ४.१८ )
महाकषायवर्गे वर्ण्यगणे एकं द्रव्यम् ( चसू. ४.१० )
निर्वापणप्रदेहोपयुक्तम् ( चसू. ३.२७ )
धूमपानोपयोगिद्रव्यम् ( चसू. ५.२१ )
पद्मकगुणाः— कषायस्तिक्तः शीतः स्निग्धो गर्भस्थैर्यकरः पित्तघ्नो रक्तपित्तज्वरच्छर्दिविषमोहदाहभ्रान्तिकुष्ठविस्फोटनाशनश्च ( ध. ३.८८ )
हिं.—पद्माख.
**म.—पद्मकाष्ठ.**
गु.—पद्मकथि.
बं.—पद्मकाष्ठ.

**पद्मकादिगण**—पु., द्रव्यगण० पद्मक-पुण्डू-वृद्धि-तुगर्द्धि-श्रृङ्ग्यमृता-जीवन्ती-काकोली-क्षीरकाकोली-मेदा-महामेदा-मुद्गपर्णी-माषपर्णी-मधुकर्षभक-जीवकाः । अयं स्तन्यकरः प्रीणनो बृंहणो जीवनो वृष्यो मारुतपित्तघ्नश्च ( असंसू. १६.६; अहृसू. १५.१२ )

**पद्मकादिहिम**—पु., पद्मकादीनां शीतकषायः, सिराव्यधे रक्तेऽतिप्रवृत्ते स्तम्भकोऽयम् ( अहृसू. २७.४९ )

**पद्माकार**—वि., पद्मकर्णिकासदृशम् ( सुनि. १६.४३ )

**पद्माक्ष**—न., वनस्पति० पद्मबीजम् ( ध. ४.१५९ )

**पद्माह्वा**—स्त्री., वनस्पति० पद्मा ( रा. ५.१३१ )

**पद्मिनी**—स्त्री., वनस्पति० पद्मा ( रा. ५.१३१ )
तद्गुणाः— मधुरा तिक्ता कषाया शीता रूक्षा कफपित्तघ्नी कृमिशोषवान्तिभ्रान्तिसन्तापनाशनी च ( ध. ४.१५७ )

**—कण्टक**—पु., क्षुद्ररोग० कफवातजोयम्, अस्याधिष्ठानमवभासिनी त्वक् । तल्लक्षणम्-पद्मिनीकण्टकसदृशैः कण्टकैराचितं वृत्तं कण्डूमत् पाण्डुमण्डलं शरीरे भवति ( सुनि. १३.४०; असंउ. ३६ )

**—कर्दम**—पु., योग० विसर्पे प्रदेहोपयोगी ( चचि. २१.८१ )

**—पुट**—पु., नलिनीपत्रम् ( अहृसू. ३.३९ )

**पद्मोत्तर**—न., वनस्पति० कुसुम्भम् ( ध. ६.११८ )

**पद्मोत्तरिका**—स्त्री., वनस्पति० कुसुम्भः ( चसू. २६.८४)

**पद्मोत्तरिकानाशक**—न., वनस्पति० कुसुम्भः ( असंसू. ९.१५. )

**पद्मोत्पलकन्दासव**—पु., आसुत० अम्लफलानामनुपानमिदम् ( सुसू. ४६.४३३ )

**पद्य**—न., वनस्पति० पाठाभेदः, श्वासारिः ( ध. १.७२ )
पुष्करमूलम् ( रा. ६.९२ )

**पनस**—पु., सर्प० मण्डली (सुक.४.३४(२)

**(पनसी)**—स्त्री., क्षुद्ररोगः पनसिका ( सुचि. २०.५ )
(न.,) फल० बहिःकण्टकि, महाफलम् ( सुसू. ४६.१८१ ) पनसगुणाः— मधुरं पिच्छिलं गुरु हृद्यं बलवीर्यवृद्धिदं ग्राहि दुर्जरं रुचिकृत् श्रमदाहशोफघ्नम् । तद्बीजमीषत्कषायं गुरु वातलं तत्फलस्य च विकारघ्नं रुच्यं त्वग्दोषनाशनम् । बालं पनसं हृद्यं नीरसं मध्यपक्वं तु दीपनम् (रापरि. ११.९ ) संपक्वं कषायं स्वादु स्निग्धं गुरु च ( चसू. २७.१४३–१४४; सुसू. ४६.१८१; अहृसू. ६.११९ )

**पनसास्थि**—न., पनसफलबीजम् ( सुनि.२.१२ )

**पनसिका**—स्त्री., क्षुद्ररोगः, श्लेष्मवातजेयम्, कर्णस्याभ्यन्तरे परिसमन्तात् पृष्ठे वा कमलशालूकनिभा कठिनोग्रवेदना पिडका जायते ( सुनि. १३.१२; असंउ. ३६ )

**पन्नग**—पु., सर्पः ( सुक. ४.११; असंउ. ४१ )

**( पन्नगी )**—स्त्री., सर्पिणी ( इन्दु.असंउ.४१ )
वनस्पति० सर्पिणी ( रापरि.५.३९ )

**पन्नरूपा**—वि., नष्टरूपा ( चइ. ७.३. )

**पन्नरूपीय**—वि., पन्नरूपामधिकृत्य कृतम् ( चइ.७.१ )

**पन्नरूपेन्द्रिय**—न., अध्याय० ( चइ. ७.१ )

**पयस्**—न., दुग्धम् (चचि. ३.२३९) द्र० 'दुग्धम्'
न., जलम् ( ध. ६.३०२; सुउ. ५८.६० )
क्षीररूपो वृक्षस्रावः ( र. २.२८ )

**—विनी**—स्त्री., वनस्पति० क्षीरकाकोली (ध. १.१३४)
क्षीरतुम्बी ( रा. १.२३९ )
क्षीरविदारी ( ध. १.१४९ )
दुग्धफेनी ( रापरि. ५.३४ )

**( पयः )-कन्दा**—स्त्री., वनस्पति० क्षीरविदारी ( रा. ७.१९७ )

**—क्षीर**—न., वनस्पति० तवक्षीरम् ( रा. ६.८८ )

**( पयो )-धर**—पु., स्तनः, स्तन्याशयः ( सुशा. ४.२४; असंशा. २.११)

**—धिज**—न., भैषज्य० समुद्रफेनम् ( ध. ३.१५४ )

–पाक–पु., कल्प० क्षीरक्वाथः, तद्विधिः–द्रव्यादष्टगुणं क्षीरं, क्षीराच्चतुर्गुणं च तोयं गृहीत्वा क्षीरावशेषः कर्तव्यः ( सुचि.२.४७ )
–फेनी–स्त्री., वनस्पति० दुग्धफेनी ( रापरि. ५.३४ )
–भव–न., घृतम्, नवनीतम् ( र. १२.५३ )
–युत–वि., क्षीरयुक्तम् ( सुशा. १०.६२ )
–लता–स्त्री., वनस्पति० क्षीरविदारी ( रा. ७.१९७ )
–वहस्रोतस्–न., ( परिव० ) स्तन्यवहसूक्ष्ममार्गः (काखिल. ११.६३)
–विदारिका–स्त्री., वनस्पति० क्षीरविदारी ( रा. ७.१९७ )
–वृत्ति–स्त्री., वि., क्षीरवृत्तिः वृत्तिर्जीविका, क्षीरेण जीविका नाम पयसा भोजनम् ( सुचि. १४.१७ ) क्षीरभोजी ( चचि. १ ( ३ )९ )
–हेतु–न., आहारद्रव्य० पय एव हेतुः कारणं यस्य तद् दधि ( ध. ६.१८८ )

पयस्या–स्त्री., वनस्पति० कुटुम्बिनी ( रा. परि. ५.२१ )
शतावरी ( र. २२.७६ )
श्वेतदूर्वा ( सुक. ८.१३२ )
दुग्धिका ( सुउ. ५८.५९; र. २०.७१ )
काकोली ( चसू. ४.१० )
क्षीरकाकोली ( र. २९. ७१; रा. ३.१६५; सुउ. १७.८९)
इन्द्रोक्ता रसायनी वनस्पतिः ( चचि.१(४).६ )
वाजीकरणार्थमुपयुज्यते ( असंउ. ५० )
विदारीकन्दः, बृंहणीयवर्गोक्तमेकं द्रव्यम् ( चसू. ४.९ )
क्षीरिणी, पुरीषविरजनीयगणेष्वेकं द्रव्यम् ( चसू. ४.१५ )
अर्कपुष्पी ( ड. ) रक्तातिसारनाशिनी ( सुउ. ४०.१२० ) जेज्जट ( सुचि. १७.८; चक. चचि. २९.९२; असंसू. ८.५३ ) अर्कसदृशपत्रपुष्पा लता, लूताविषे पानार्थम् उपयुज्यते (सुक.८.१३२) गर्भपतनेऽदृष्टशोणितवेदनावस्थायां प्रतिकारद्रव्येषु एकम् ( सुशा. १०.५७ ) गर्भस्रावपरिहारोपयोगि द्रव्यम् ( सुशा. १०.५९ ) बल्या मूत्रदोषहरा (सुउ.५८.५९) पित्ताधिकवातरक्ते पानप्रदेहोपयोगि द्रव्यम् ( सुचि. ५.८ )
क्षीरविदारी ( चसू. ४.१०; ड. सुचि. १७.८ )
महाकषायवर्गे बल्यगणोक्तमेकं द्रव्यम् ( चसू. ४.१० ) महाकषायवर्गे वर्ण्यगणोक्तमेकं द्रव्यम् ( चसू. ४.१० ) पित्ताधिकवातरक्ते पानप्रदेहोपयोगि द्रव्यम् ( सुचि. ५.८ )

पयस्यादिक्वाथ–पु., योग० पक्वपित्तरक्तातिसारनाशनः ( सुउ. ४०.७४-७५ )

पयस्यादिलेप–पु., योग० अक्षिरागरुजाहरः ( सुउ. १७.८९ )

पर–वि., अन्यत् अतिरिक्तम् ( चचि. ४.४ )
( अ., ) अनन्तरम् परस्तात् ( चचि. ४.४ )
प्रतिवादी ( चवि. ८.१८ )
अन्यो भूतादिः ( ड. सुउ. ३९.५६ )
–तन्त्र–न., अन्यच्छास्त्रम्, शालाक्यादितन्त्रम् साङ्ख्यदर्शनम्, अन्यस्य शास्त्रम्, सुश्रुतसंहिता स्वतन्त्रमित्युच्यते, तद्भिन्नमन्यत् परतन्त्रम् ( सुशा. १.२२ ) न्यायवैशेषिकहस्तिशिक्षा-व्याकरणादि ( सुचि. २८.२७ )
–तन्त्रवृत्ति–वि., परतन्त्रा वृत्तिर्जीवनं यस्य स गर्भः, मातुराहाररसाज्जीवनमस्येत्यसौ परतन्त्रवृत्तिः ( चशा. ६.२३; असंशा. २.३२ )
–दारगमन–न., परस्त्रीसङ्गः, इदमनायुष्याणां श्रेष्ठम् ( असंसू. १३.३ )
–दाराभिगमन–न., परस्त्रीसङ्गः, इदमनायुष्याणां श्रेष्ठम् ( चसू. २५.४० ) द्र० 'परदारगमन.'
–पुष्ट–पु. वनस्पति० आम्रः ( ध. ५.१ )
पक्षि० कोकिलः ( अहसू. ३.२४ )
–भृत्–पु. पक्षि० कोकिलः ( अहसू. ७.१६ )
–भृत–पु. पक्षि० प्रतुदजातीयः कोकिलः ( सुसू. ४६.६७; असंसू. ७.७२ )
–मद–पु., रोग० मद्यपानजन्योऽयम्, असौ त्रिदोषजः, तल्लक्षणम्–ऊष्माऽङ्गगुरुता विरसाननत्वं श्लेष्माधिकत्वमरुचिमलमूत्रसङ्गस्तृष्णाशिरोरुजा सन्धिभेदश्च ( सुसू. ४७.१७ )
–रात्र–न., रात्रेः पश्चिमो यामः ( असंनि.१.१५ )
–वारि–न., अन्यकृतं तडागादि ( असंसू.३.७१ )
–विद्या–स्त्री., श्रेष्ठा विद्या, यथा–श्रीरसाङ्कुशाख्या ( र.७.२३ )
–शस्य–न., परक्षेत्रम्, परधान्यं वा (सुचि.२४.९२)
–संस्तम्भ्या–वि., परेण अन्येन प्रकृतौ स्थापनीया; न स्वयमात्मानं सत्त्वबलात् स्तम्भयति ( चक. चवि. ८.९४ )
–हित–पु., योग० सर्वकुष्ठविनाशनः ( र.२०.९१ )

**परमसूक्ष्म**–वि., अमूर्तः, प्रत्यक्षप्रमाणेनावगन्तुं न शक्यः, अनुमानग्राह्यश्चेतनावान् पुरुषः, अणुरूपेण वर्तमानोऽपि प्रत्यक्षेणानुपलब्धः (ड. सुशा. १.१६)

**परमाणु**–पु., सूक्ष्मतमः अतिसूक्ष्मोऽणुः (चशा. ७.१७; असंशा.५.१०१)

**–विभाग**–पु., परमाणूनां विभजनम्, तत्कारणं न केवलो वायुः किन्तु कर्मस्वभावपरिगृहीतो वायुः (चशा. ७.१७)

**–संयोग**–पु., परमाणूनां संयोगः, तत्कारणं न केवलो वायुः किन्तु कर्मस्वभावपरिगृहीतो वायुः (चशा. ७.१७)

**परमात्मलिङ्ग**–न., प्राणापानौ निमेषाद्या जीवनं मनसो गतिरिन्द्रियान्तरसञ्चारः प्रेरणं धारणं देशान्तरगतिः स्वप्ने, पञ्चत्वग्रहणं दक्षिणेनाक्ष्णा दृष्टस्य सव्येनावगमश्च । तथेच्छा द्वेषः सुखं दुःखं प्रयत्नश्चेतना धृतिर्बुद्धिः स्मृतिरहङ्कारश्च । परमात्मनः सद्भावज्ञापकानि लिङ्गानि नाम लक्षणानि (चशा. १.७२)

**परमान्न**–न., उत्तममन्नम्, पक्वान्नम् (चचि. ३०.२३४) न., आहारद्रव्य० पायसः (चक्र. चचि. १४.९ चवि. ७.१२)

**परमेष्ठिनी**–स्त्री., वनस्पति० ब्राह्मी (रा. ५.१४९)

**परमौषध**–न., श्रेष्ठं भेषजम् (असंसू. ९.४८)

**परम्परा**–स्त्री., पङ्क्तिः (सुसू. २९.६)

**परस्परानुग्रह**–पु., अन्योन्यसाहाय्यम् (सुशा. ३.३)

**परस्परानुप्रवेश**–पु., परस्परसंसर्गः, यथा भूजलानलवाय्वाकाशानां भूतानामन्योन्यमनुप्रवेशः (सुशा. ३.३)

**परस्परोपकार**–पु., परस्परं साहाय्यम् । यथा–भूतानामाकाशादीनामवकाशदानादिभिः (सुशा. ३.३)

**पराक्पुष्पी**–स्त्री., वनस्पति० अपामार्गः (ध. १.२६१)

**पराक्रम**–पु., सञ्चारः (चसू. ५.१००)

शौर्याख्यं मानसं बलम् (चक्र. चसू. ११.३)

**पराग**–न., वनस्पति० पद्मकेसरम् (रा. १०.२६२)

**–पुष्प**–पु., वनस्पति० कदम्बभेदः, धूलीकदम्बः; (रा. ९.१७३) द्र० 'कदम्ब'

**पराघातन**–न., वधस्थानम्, इदमन्नाश्रद्धाजननानां श्रेष्ठम् (चसू. २५.४०)

**पराचीन**–वि., दूरप्रविष्टम् (सुसू. २७.७; सुचि. ८.४; अहृसू. २८.१९)

**पराधिकार**–पु., परस्य परेषां वा विषयः (चचि.२६.१३१)

**पराभव**–पु., अपयशः, मृत्युः (चइ. १२.१८)

**पराभिसन्धान**–न., परपक्षप्रतिबन्धः (असंशा. ५.२१)

**परामर्श**–पु., ग्रहणम् (असंसू. ९.१३७)

**परायण**–न., परमश्रेष्ठं स्थानम्, परमाधारः, परं अयनं श्रेष्ठं भेषजम् (चचि.२६.२१४)

**परार्ध**–न., तुल्यप्रमाणचन्दनकुङ्कुममेलनम् । चन्दनं कुङ्कुमं तुल्यं परार्धमभिधीयते (ध.७.४४)

**परार्ध्य**–न., श्रेष्ठम् (सुचि. ६.१३)

उत्कृष्टम् (ड. सुउ. ६४.४२)

**परावर**–न., वनस्पति० परूषकम् (ध. ५.६२)

**परावरदृश्**–वि., परं आत्मानं अवराणि आत्मव्यतिरिक्तानि प्रवृत्त्यादीनि, यः पश्यति तस्य परावरदृशः (चशा. ५.२०)

**परावरान्तर**–न., प्रतिभादौ आत्मनः प्रतिवादिनश्च श्रेष्ठकनिष्ठभावः (चवि. ८.१८)

**पराशर**–पु., पुनर्वसोरात्रेयस्य शिष्यः तन्त्रकर्ताऽसौ (चसू. १.३१)

**पराश्रय**–पु., वनस्पति० अतिमुक्तकः (ध. ५.१५३)

**परासु**–वि., मृतः (चइ. ३.५; सुसू. ३१.३)

**परिकर्तन**–न., लक्षण० कृन्तनवद् वेदना (सुउ. ५५.८; सुनि. २.८)

**परिकर्तिका**–स्त्री., लक्षण० परि सर्वतोभावेन कृन्ततीव छिनत्तीव वेदना (ड. सुचि. ३४.१६) विशिष्टदेशव्यवस्थितवातवेदना परिकृन्ततीव गुदम्, जेज्जट (चचि. ३.१८६)

रोग० शूलयुक्तं कर्तनं यस्मिन् सः (का. गर्भिणीचि.) (असंशा. ११.३)

**परिकर्मिन्**–वि., परिचारकः सूपकारादिः (सुचि. ६.४; सुक. १.१४-१६)

**परिकीर्ण**–वि., लिप्तम् (चइ. ३.६)

**परिकोथन**–न., परितः शातनम्, पूतीभावः (अहृसू. ७.९)

**परिकोपक**–वि., परिकोपं कुर्वाणः (चवि. ८.१४७)

**परिक्रमण**–न., चङ्क्रमणम्, गतागतम्, सर्वतो भ्रमणम् (सुचि. ११.११)

**परिक्लिन्नवर्त्मन्**–न., नेत्ररोग० द्र० 'क्लिन्नवर्त्मन्,' प्रक्लिन्नवर्त्म, श्लेष्मजोऽयं साध्यश्च (सुउ. १.३५)

**परिक्लिष्ट**–वि., लक्षण० अत्यर्थमवसन्नः, क्रियारहितः, समन्ततो भावेन क्लेशमुपगतः (ड. सुउ. ५५.१८)

**परिक्षिप्त**–वि., वेष्टितम् (सुचि. ६.४)

**परिक्षीण**–वि., सर्वतः क्षीणम् ( सुचि. ५.३९ )
**परिक्षेप**–पु., परिणाहः ( चवि. ८.११७ )
**परिक्षेपिक**–वि., प्रतिक्षेपिकशब्दः, प्रतिक्षेपिको नाम प्रतिवादी शब्दः संज्ञा यस्य सः, प्रतिवादी इति यावत्। यस्य वादे निग्रहादिः सञ्जातः, सः (चक्र.) (चवि. ८.२०)
प्रतिवादी ( चवि. ८.२० )
**परिक्षेपिन्**–पु., रोग० भगन्दरभेदः, वातपित्तजोऽयम्, प्राकारस्य परितः परिखेव गुदं परिक्षिप्य गुदस्य परितो मण्डलाकृतिर्नाडी जायते ( असंउ. ३७ )
**परिगीत**–न., गीतम्, गायनम् ( सुउ. ६०.१० )
**परिग्रह**–पु., ममता ( चवि. ३.२४ )
आहारद्रव्याणामेकैकश्येन प्रमाणग्रहणम् ( चवि. १.२२( ४ )
शारीर० शिश्ने स्फीतदेश इति गङ्गाधरः, लिङ्गस्याग्रिमवर्तुलाकृतिभागः ( चचि. ३०.१७० )
**परिघ**–पु., अर्गलादण्डः ( सुचि. १५.९ )
रोग० मूढगर्भभेदकः, परिघ इव योनिमुखमावृत्य तिष्ठत्येतादृशो गर्भः ( सुनि. ८.४ )
**परिघट्टन**–न., परिचालनम् ( असंसू. ३८.३१ )
**परिघट्टित**–वि., समन्ततश्चालितम् ( सुउ. १५.४ )
**परिचर**–पु., परिचारकः ( सुसू. ३४.२४ )
**परिचारक**–पु., चिकित्सापादः, शुश्रूषकः पुरुषः ( सुसू. ३४.१५ ) प्रेष्यः कर्मकरः ( ड. )
( सुउ. ६०.२२ ) तल्लक्षणम्– स्निग्धोऽजुगुप्सुर्बलवान् व्याधितरक्षणे युक्तो वैद्यवाक्यकृदश्रान्तश्च ( सुसू. ३४.२४ ) अनुरक्तः शुचिर्दक्षो बुद्धिमांश्च ( अहसू. १.२९ ) सोद्यमः शुचिः शूरो बलिष्ठश्च ( र. ७. २७ )
**परिच्छद्**–पु., आसनोपरिस्थितं वस्त्रम् (चसू. १४.५७)
साधनसामग्री ( सुशा. १०.५ )
वेषः, परिच्छाद्यते शरीरमनेनेति परिच्छदो वेषः ( चशा. ८.१४ )
**परिच्छेद**–पु., विश्लेषः, पृथक्त्वम् ( सुसू. २४.११ )
**परिजाड्य**–वि., स्तिमितम्, परिपूर्णं जाड्यं स्तैमित्यं यस्मिंस्तत् ( सुउ. ७.२२ )
**परिजारण**–न., पारदसंस्कार० जारणा, गालनपातनव्यतिरेकेणाभ्रकस्वर्णादीनां ग्रासं दत्वा पूर्वावस्थापादनम् ( र. १.२८ )
**परिजिहीर्षा**–( परिव० ) स्त्री., परिहर्तुमिच्छा ( सुचि. ३७.५१ )

**परिजीर्ण**–वि., पुरातनम् ( सुसू. ४६.२९७ )
**परिणतवीर्य**–वि., कालपरिणामेन सञ्जातशक्तिकम् ( सुसू. ६.११ )
**परिणाम**–पु., कालः ( चनि. १.३; असंसू. २२.१३ )
परिपाकः ( चवि.५.३ )
पचनम्, परिणतिः ( अहसू. ९.२०; चशा.६.१४ )
भिन्नजातीयैरनेकैरेकीभावेन कार्यस्यारम्भः (ड. सुक. ८.४)
साङ्ख्यानां मूलप्रकृतिः प्रधानसंज्ञका (सुशा.१.११)
–**काल**–पु., कालपरिणामः ( चशा.२.४० )
–**वती**–स्त्री., हिध्माविशेषः यमला ( असंनि.४. )
–**शूल**–( परिव० )–पु., रोग० शूलभेदः, भुक्तान्नपचनसमये जायमानः शूलः ( र. ३.१४७ )
**परिणामोन्मुख**–वि., पच्यमानम् ( असंनि. ४.२२ )
**परिणाह**–पु., विस्तारः (चवि.७.१२; सुचि.३५.७ )
परिधः (सुचि. ४०.४; असंशा. ८.३०)
**परितमन**–(परिव०)–न., लक्षण० मोहः (सुउ.४१.२५)
**परितोष**–पु., परितुष्टिः ( सुसू.४२.९ )
**परिदग्ध**–वि., समन्ततो दग्धम् ( असंनि. २.२६ )
**परिदर**–पु., रोग० दन्तमूलगतः, पित्तासृक्कफजोऽयम्, तल्लक्षणम्–अस्मिन् दन्तमांसानि शीर्यन्ते रक्तनिष्ठीवनं च भवति ( सुनि. १६.२१ )
**परिदाह**–पु., लक्षण० समन्ततो ज्वलनवत् पीडा ( चनि. ४.४७; सुसू. २१.३२ )
**परिदृष्टकर्मन्**–वि., दृष्टं चिकित्साकर्म येन तादृशः (चवि. ८.४ )
**परिदेवन**–( परिव० ) न., शोकः ( असंउ. ९ )
**परिदेविन्**–वि., शोकाकुलः, वेदनायुक्तः ( असंनि. ४.१६ )
**परिधि**–पु., हस्तप्रमाणः होमकुण्डचतुःपार्श्वे स्थाप्यः पालाशादिदण्डः ( चवि. ८.९ ) स्थण्डिलपरितः समिध् ( चशा. ८.११ )
**परिधूपन**–न., लक्षण० सर्वाङ्गसन्तापः (ड. सुक. ४.३७)
**परिध्वस्त**–वि. नष्टम् (चड. ९.३)
**परिपक्व**–वि., समन्ततः पक्वम् ( चशा. ६.१७ )
पाकात् पूयतां गतम् ( चशा. ६.१७ )
–**गर्भशल्या**–स्त्री., परिपक्वं गर्भरूपं शल्यं यस्याःसा ( चशा. ८.३१ )
–**शरीरत्व**–न., वृद्धत्वम् ( सुसू. १४.१९ )
**परिपचन**–न., पात्र० तैलपाचनिका ( चसू. १५.७ )
**परिपाक**–पु., पचनम्, (चचि. ३.२८ )
जरणम् (सुसू. ४६.५१०;)

**परिपाटन**–( परिव० ) न., किञ्चिदवदारणम् त्वग्गात्रविदारणम्, ( सुनि. १६.५ )

**परिपालन**–( परिव० ) न., रक्षणम् ( सुचि. ३३.३ )

**परिपिष्टक**–न., खनिज० सीसकम् ( रा. १३.२० )

**परिपीडन**–न., ( परिव० ) उपक्रम० समन्तादौषधैः पचनम् ( सुचि. १.४६ )

**परिपीत**–वि., भावितम् ( चचि. १.५८; सुचि. १०.४ )

**परिपुटन**–न., त्वच उच्चटनम् ( सुसू. १६.१७ )

**परिपूत**–वि., शुद्धम् ( सुचि. २५.२६ )

**परिपूर्णशरीर**–वि., सर्वाङ्गोपचितदेहः ( चशा. ३३ )

**परिपेलव**–न., वनस्पति० कैवर्तमुस्तकम्
( चक्र. चक. १.२३; ड. सुक. २.५१ )
परिपेलवगुणाः– कटूष्णं मेध्यं कान्तिप्रदं वातकफघ्नं प्रस्वेदमलकण्डूव्रणदाहामशूलरक्तदोषघ्नं च
( ध. ३.५६; अहृसू. १५.२६ )
हिं.—केवडीमोथा.
म.—**केवटीमोथा.**
गु.—केवडीमोंथ.
बं.—केउटमुथा.
त.—नीर्मुत्तकाचु.
**वन्यकः** ( सुउ. ४७.३१ )
**जलमुस्तम्** ( असंक. १; ध. १.४३ )

**परिपेल्लु**–न., वनस्पति० परिपेलवम् ( अहृसू. १५.२६; ध. ३.५५ )

**परिपोट**–पु., चर्मदरणम् ( इन्दु. असंउ. २१ )
रोग० कर्णपाल्यां जायमानः, तल्लक्षणम्–वातात् सुकुमारे कर्णे बहुकालोपेक्षया सहसैव प्रवर्धिते सति पाल्यां सरुक् परिपोटवानरुणः स्तब्धः शोफो भवति ( सुचि. २५ ५; असंउ. २१ )
न., पुटकम् ( असंउ. ३४ )

**परिपोटन**–न., लक्षण० सर्वतस्त्वच उच्चटनम् उच्चटनवद्वा वेदनाविशेषः ( सुनि. १.२५ )

**परिप्रश्न**–पु., प्रश्नः, आशङ्का ( चसू. ३०.८७ )

**परिप्लव**–पु., नक्षत्रादीनां गतिः ( सुउ. ७.९ )

**परिप्लवन**–( परिव० ) न., इतस्ततो गमनम्
( चक्र. चक १.५ )

**परिप्लुत**–वि., रोग० रक्तगुल्मस्य प्रच्युते शोणिते सति जायमानाऽवस्था ( काखिल. ९.३७ )

**( परिप्लुता )**–स्त्री., योनिरोग० नीलपीतासृक्स्रावाख्याम तादृशशोणितपरिप्लुताद् परिप्लुतेति सुष्ठूक्तम्। पित्तलायाः पुंसङ्गतौ क्षवथूद्गारयोर्धारणात् पित्तयुक्तेन मरुता दूषिता योनिः शूना स्पर्शासहा सार्तिर्नीलपीतास्रवाहिनी श्रोणिवंक्षणरुक्तोदज्वरकृत् ( चचि. ३०.२३-२४ ) बस्तिकुक्षिगुरुत्वातिसारारोचककारिणी च भवति ( असंउ. ३८ )

**परिबर्ह**–पु., सामग्री, शयनासनपुष्पादिपरिच्छदः
( चशा. ८.१२ )

**परिबृंहण**–न., समन्ततो वर्धनम्, **अतिशयेन बृहत्त्वं** परिपुष्टिर्वा ( चसि. ३.२७ )

**परिभव**–पु., रोग० बालरोगः पारिगर्भिकः ( असंउ. २ )

**परिभूत**–वि., परिभवाख्यरोगयुक्तः ( इन्दु. असंउ. २ )
असाध्यः ( काखिल. १३.२९ )

**परिमण्डल**–पु., कीट० मशकभेदः सामुद्रकृष्णपार्वतीयादिपञ्चानामेकतमोऽयं, तद्दष्टस्य तीव्रा कण्डूर्दंशशोफश्च भवति । नखावकृष्टेऽत्यर्थं पिडकादाहपाका भवन्ति ( सुक.८.३६ )
न., वनस्पति० परूषकम् ( ध.५.६२ )
वि., वर्तुलम् परिपूर्णं मण्डलं ( सुनि.१३.६ )

**–मध्यास्थि**–न., वनस्पति० परूषकम् ( ध.५.६२ )

**परिमर्दन**–न., मर्दनं, वर्षणम् ( र.२.७६ )

**परिमर्शनीय**–वि., अध्याय० परिमर्शमरिष्टज्ञापकस्पर्शमधिकृत्य कृत इति परिमर्शनीयः ( चइ.३.१ )

**परिमाण**–न., मानम् ( चसू.२६.२९ )
परिमीयतेऽनेनेति ( सुचि.३१.८ )
सङ्ख्या परिमीयते संख्यायते इति परिमाणं संख्या परिच्छेदो वा ( चशा. ७.१४ )

**–विशारद**–वि., परिमाणं यथावज्ज्ञानिनः
( चक. १२.९७ )

**परिमार्गण**–(परिव०) न., मार्गणम् गवेषणम्
( सुचि. ३०.४० )

**परिमार्जन**–न., उद्वर्तनम् ( चसू. ५.९३ )

**परिमिताहार**–वि., अनिषिद्धाशनं भुञ्जानः, निषिद्धाशनवर्जनपूर्वकं युक्ताहारसेवी ( ड. सुउ. ५६.५ )

**परिमृष्ट**–वि., निर्मलम्, शुद्धम् ( असंसू. ३.८ )

**परिम्लान**–वि., क्षीणकायः ( चचि. ५.३८ )

**परिम्लायिन्**–पु., न., नेत्ररोग० पैत्तिकोऽयम्
( सुउ. १.३२ ) अरागप्राप्तस्य तिमिरस्य परिम्लायीति संज्ञा ( सुउ. ७.२५ ) रक्ततेजसा मूर्च्छितं पित्तं परिम्लायि तिमिरं करोति । तस्मिन् रुग्णो दिशः पीताः पश्यति । तथोद्यन्तमादित्यमिव च खद्योतैस्तेजोभिर्विकीर्यमाणान् वृक्षांश्च पश्यति
( सुउ. ७.२५-२६ )

(परिम्लायि)-त्व-न., शुष्कता ( सुसू. ३२.४ )
परिरक्षण-न., सर्वतो रक्षणम्, ( सुसू. १५.६ )
परिरक्षा-स्त्री., सर्वतो रक्षणम्, समन्ततः संरक्षणम् ( अहृसू. २५.२ )
परिलेहिन्-पु., रोग० कर्णपाल्यां जायमानः, तल्लक्षणं-कफासृक्कृमयः पाल्यां सर्षपाभा विकारिणीः स्राविणीः कण्डूदाहरुगन्विताः पिडकाः कुर्युः । कफासृक्कृमिसम्भूतोऽसौ व्याधिरितस्ततो विसर्पन् सशष्कुलीका पालीं लिह्यात् (सुचि. २५.१०-११)
परिवर्तन-न., स्वरूपान्तरम्, अन्यथाभवनम् ( चचि. १५.२१ )
विलोटनम्, पार्श्वपरिवर्तनमिति हाराणचन्द्रः ( सुसू. १९.११ )
परिवर्तिका-स्त्री., क्षुद्ररोग० मेढ्रचर्मणः प्रतिनिवर्तन-स्वरूपोऽयम् । तल्लक्षणम्-मणेरधस्तात् कोशो ग्रन्थिरूपेण लम्बते । सवेदनदाहोऽसौ क्वचित्पाकं व्रजति । मारुतागन्तुसम्भूता सा परिवर्तिका सरुजा, श्लेष्मसमुत्थिता तु कण्डूमती कठिना स्निग्धा च ( सुनि. १३.४७-५० ) सङ्ग्रहे त्वस्या नाम 'निवृत्तचर्म' इति ( असंउ. ३८ )
परिवाद-पु., दोषकथनम् तजन्या निन्दा वा ( सुचि., २४.९० )
परिवापन-न., संस्कार० अग्नौ तापयित्वा द्रावे पातयित्वा निर्वापणम् ( र. २.३८ )
परिवार-पु., सेवकजनः ( असंसू. २८.२९ )
परिविस्तर-पु., विस्तारः ( सुशा. ६.२९ )
परिवीजन-( परिव०., ) न., परितः वीजनम् ( सुशा. १०.२३ )
परिवृत्तगर्भा-स्त्री., परिवृत्तोऽवाक् परिवृत्तो गर्भो यस्याः सा । तल्लक्षणम्-गर्भो हृदयं विमुच्योदरमाविशति बस्तिशिरोऽवगृह्णाति । आव्यश्चैनां त्वरयन्ति ( असंशा. ३.२१ ) अस्यामवस्थायां प्रवाहणनियमानुरूपमुपक्रमेत (असंशा. ३.२४)
परिवृत्ति-स्त्री., क्षुद्ररोग० परिवर्तिका ( सुचि. २०.४० )
परिवेशक-वि., अन्नादेः परिवेषणे नियुक्तः सेवकः (चनि. ६.१३)
परिव्याध-पु., वनस्पति० वानीरः, ( रा. परि. ९.१७ )
कर्णिकारः ( ध. १.२२१; रा. ९.३३६ )
जलवेतसः ( इन्दु. असंशा. ४.२५; चशा. ८.२९ )
परिव्राजी-स्त्री, वनस्पति० मुण्डी ( ध. १.१५९ )
परिशुद्ध-वि., समन्तान्निर्मलम् ( सुचि. ३१.५६ )
-काय-वि., स्नेहस्वेदपूर्वकवमनादिभिर्विशुद्धशरीरः ( सुचि. २५.३५ )
-कोष्ठ-वि., निर्दोषोदरः ( ड. सुचि. ३१.५६ )
परिशुष्क-वि., आर्द्रतारहितम् ( सुशा. ८.१९; सुसू. ४६.३५३)
परिशोधन-न., वमनविरेचनबस्त्यादिना कोष्ठशोधनम् ( र. ५.५२ )
परिषद्-स्त्री., सभा, विद्वत्समूहः, सा द्विविधा ज्ञानवती मूढपरिषच्च, द्विविधाऽपि कारणविभागेन पुनस्त्रिविधा, सुहृदुदासीनप्रतिनिविष्टभेदात् (चवि. ८.२०)
परिषेक-पु., स्नानम् ( सुचि. २९.१२ ) धाराप्रसेकः (सुउ. ३९.१५६)
व्रणोपक्रमः परिसेचनम् ( सुचि. १.८; काखिल. १३.२४ )
स्वेद० तद्विधिः- वातिकोत्तरवातिकानां पुनर्मूलादीनामुत्क्वाथैः सुखोष्णैः कुम्भीर्वर्षणिकाः प्रनाडीर्वा पूरयित्वा यथार्हसिद्धस्नेहाभ्यक्तगात्रं वस्त्रावच्छन्नं परिषेचयेत् ( चसू. १४.४४ )
परिष्कृत-न., परिकल्पितम् संस्कृतम् (अहृसू. १३.२९)
परिसंवत्सर-वि., अध्ययनं स्वयमुपसंस्कृत्य पुनरध्येता, ( चक्र. ) संवत्सरं परिप्राप्तः सांवत्सरिकाध्ययनं कर्तव्यतया प्राप्तः ( चवि. ८. २० )
वर्षोषितम् ( सुसू. ४६.३३८ ) वर्षातीतम् ( चचि. ११.१४ )
परिसर-पु., उपान्त्या भूः (सुचि. २९.१२)
परिसरण-न., भ्रमणम् ( चनि. ७.७ (१) )
लक्षण० कुण्डलरूपभ्रमणम् ( चवि. ६.१८ )
परिसर्प-पु., सर्प० दर्वीकरभेदः ( सुक. ४.३४ (१) )
रोग० विसर्पः, सर्वतः सर्पणात् परिसर्पः ( चचि. २१.११ ) तल्लक्षणम्-यस्मिन् रोगे शरीरे पिडकाः स्रवन्त्यः सत्यः शनैः सर्पन्ति स परिसर्पः ( सुनि. ५.१२)
परिसर्पण-न., अङ्गादिषु प्रचालनम् ( चसू. १८.४ )
परिसर्पित-वि., परिसर्परोगयुक्तः, कारण्डादिभिः स्पर्शविशेषैः परिसर्पितः (चक्र. चसू. २६.४३ (२) )
परिसिक्थिका-स्त्री., तनु-पेया ( असंउ. ४९ )
परिसिक्थिक-न., सिक्थोदकम् ( असंउ. ४९ )
परिसिद्धिका-स्त्री., मण्डः ( काभोजनक. ५२ )
परिस्रुता-स्त्री., आसुत० सुरा ( रा. १४.३०२ )
परिस्पन्दन-न., संचलनम् ( असंशा. ५.१०)

**परिस्रव**–पु., नासारोग० तल्लक्षणम् अस्मिन् मस्तुलुङ्गाद् घनपीतपक्वः कफः स्रवति ( चचि. २६.११२; )

**परिस्राव**–पु., गालनम् ( अहसू. २८.१० ) मलानामल्पाल्पशः सरणम् ( सुचि. ३४.१७ ) दौर्बल्योदरविष्टम्भारुचिगात्रसदनानि पित्तश्लेष्मणोः सवेदनं स्रवणं च ( सुचि. ३४.१७ )

**परिस्राविन्**–वि., सर्वतः स्रोतुं शीलं यस्य तत् ( सुचि. ८.२३; असंसू. ३३ )

**(परिस्रावि)–भगन्दर**–पु., रोग० भगन्दरभेदः कफजोऽयं स्रावयोगात् परिस्रावी। तत्सम्प्राप्तिलक्षणे–वातेनाधः प्रेरितः श्लेष्मा भगे कण्डुमतीं पीटिकां जनयति। अप्रतिक्रियमाणा सा पाकमुपैति। व्रणश्च कण्डूप्रायः पिच्छिलमजस्रास्रावं स्रवति। उपेक्षितश्च वातमूत्रपुरीषरेतांसि विसृजति ( सुनि. ४.७; असंउ. ३३ )

**परिस्राव्युदर**–न., रोग० उदरभेदः, छिद्रोदरम् ( चसू. १९. ४ (१); असंनि. १२; अहनि. १२. ३२-३६ ) क्षतान्त्रमुदरमिति गयी क्षतोदरमिति ( मा. नि. ) तल्लक्षणम्–नाभेरध उदरं वृद्धिमेति। अतीव निस्तुद्यते विदह्यते च छिद्रात् परितो यस्मिन्नुदरे स्रावो भवति। तस्मिन् जलोदरादप्याशुत्वेन जलसञ्चयो भवति ( सुनि. ७.२० ) असाध्यमिदम् ( सुचि. १४.३ )

**परिस्रुत**–वि., गालितम् ( सुउ. ५८.४६ )

**(परिस्रुता)**–स्त्री., रेवतीग्रहः, तल्लक्षणम्–यस्याः कृशात्मनो नार्या योनिरभीक्ष्णं स्रवति सा परिस्रुता ज्ञेया ( कारेवतीक. )

**परिस्रुति**–स्त्री., स्रावः, पतनम् ( चशा. २.१५ ) पिच्छिलजलस्रवणम् ( इन्दु. असंउ. ३४ )

**परिहर्ष**–पु., झिनझिनिका ( चक्र. चनि. ५.७ )

**परिहार**–पु., त्यागः, वर्जनम्, ( सुचि. २७.८ ) तन्त्रयुक्तिः दोषवचनस्य परिहरणम् (चवि. ८.६० )

**–काल**–पु., पथ्यकालः ( चसि. १.४ )

**–विरुद्ध**–वि., यथा वराहादिसेवनोत्तरमुष्णसेवनं घृतादिपानोर्ध्वं च शीतसेवनं दोषप्रकोपात्परिहारविरुद्धं भवति। ( चसू. २६.९८ )

**परिहार्य**–वि., त्याज्यः; सेवनानर्हः परिहरणयोग्यः ( असंशा. ४. )

**परिहृष्टरोमता**–स्त्री., लक्षण० उद्धर्षितरोमता, उच्छून रोमता ( ड. सुउ. २४.५ )

**परीकर्त**–पु., लक्षण० कृन्तनवत् वेदना ( अहसू. ४.३ )

**परीक्षक**–पु., समीक्ष्य कर्मकर्ता श्रुतबुद्धिस्मृत्यादिगुणैरुपेतः ( चसू. २८.३६-३७ )

**परीक्षा**–स्त्री., लक्षितस्य यथालक्षणमुपपद्यते न वेति प्रमाणैरवधारणम् ( चवि. ८.१८ ) वस्तुस्वरूपनिर्णयः ( चवि. ४.७ ) आतुरभेषजादीनां लक्षणैः परीक्षणम् ( चवि. ८.७९ ) परीक्ष्यते व्यवस्थाप्यते वस्तुस्वरूपमनयेति परीक्षा प्रमाणम् ( चक्र. ) द्विविधा परीक्षा ज्ञानवतां प्रत्यक्षमनुमानं चेति ( चवि. ४.७ ) आप्तोपदेशप्रत्यक्षानुमानयुक्तिभेदेन सा चतुर्विधा ( चसू. ११.१७ )

**परीक्षित**–वि., यस्य परीक्षा कृता, तत् ( असंसू. ८.८ )

**परीक्ष्य**–वि., परीक्षणीयं परीक्षितुं योग्यम् ( चह. १.३-४ )

**–विषय**–पु., ( परिव० ) परीक्षितुं योग्या दोषौषधादिभावाः ते एते–दोषौषधदेशकालसात्म्याग्निसत्त्वौकोवयोबलानीति दश परीक्ष्या विषयाः ( चचि. ३०.३२६; अहसू. १२.६७–६८ )

**परीणाम**–पु., परिणमनम्, रूपान्तरप्राप्तिः, जारणाया अवस्थाकृतं नामान्तरम् ( र ८.७२–७३ )

**परीणाह**–पु., वर्तुलता, ( सुचि. २४.४ ) विशालता, ( र. ९.६; असंशा. ११.२० )

**परीपाक**–पु., परिणामः, ( सुनि. ७.२५ )

**परीवाप**–पु., दीर्घिका, जेन्ताकस्वेदार्थमस्याः संनिधानमुपदिष्टम् ( चसू. १४.४६ )

**परीवाह**–पु., प्रवाहः, उच्छ्वासः, ( असंसू. २६.१५ )

**परीशोष**–पु., लक्षण० परितः संशोषणम्, ( चसू. १७.५८ )

**परीषेक**–पु., उपक्रम० नेत्रादौ द्रवौषधेन सिञ्चनम् सेकः ( सुउ. ९.५ )

**परीसर्प**–पु., रोग० विसर्पः ( चसू. १.११७; अहसू. ५.३८ ) कृमि० शोणितजोऽसौ ( सुउ. ५४.१५ )

**परु**–पु., ग्रन्थिः ( रा. ७.२१९ ) न., वनस्पति० परूषकम् (ध. ५.६२)

**परुष**–पु., कीट० कुम्भीनसतुण्डिकेरीप्रभृतीनामेकतमः वायव्योऽसौ, वातरोगान् करोति ( सुक. ८.५–८; असंउ. ४३ ) वि., कर्कशम् ( सुनि. २.१५ ) अपिच्छिलम् रूक्षम् ( सुसू. १४.२१ )

**–रोमन्**–वि., रूक्षरोमयुक्तः ( चशा. ८.२१ )

**–वर्णत्व**–न., लक्षण० रूक्षवर्णता ( चनि. १.२१ )

**–वाच्**–वि., लक्षण० कर्कशवचनः ( सुउ. ६२.८ )

**परुष**–न., वनस्पति० परूषकम् (ध. ५.६२)

**परूषक**– पु., न., वनस्पति० विरेचनोपगगणोक्तमेकं द्रव्यम् ( चसू. ४.१३ )
श्रमहरगणोक्तमेकं द्रव्यम् ( चसू. ४.१६ )
ज्वरहरगणोक्तं द्रव्यम् ( चसू. ४.१६ )
वातपित्ते शस्तम् ( चसू. २७.१२८ )
पित्तशूले उपयुक्तम् ( सुउ. ४२.१०८ )
कवलग्रहोपयोगि ( सुचि. २२.६२ )
कषायरसफलेषु श्रेष्ठम्, ( सुसू. ४६.३३४ )
धन्वपत्रकः, वृक्षविटपभेदात् स द्विविधः, मृद्वल्पास्थिफलः ( ड.सुसू. ३८.४३;सुसू. ४६.१७२ )
परूषकगुणाः–आमं परूषकमत्यम्लं कटु ईषन्मधुरं कषायानुरसं लघु पित्तजननं वातघ्नं च । पक्वपरूषकं मधुरं शीतं मधुरविपाकि रक्तपित्तप्रसादनं वातपित्तघ्नं शोफघ्नं च (सुसू. ४६.१७२; ध. ५.६२ )
हिं.—फालसा, फलहे.
**म.—फालसा.**
गु.—फालसा.
बं.—परुषफलेर गाछ, फलसा.

**–पानक**–न., आहारद्रव्य० तद् हृद्यं विष्टम्भि च ( सुसू. ४६.३९० )

**परूषकादिगण**–पु., वर्ग० परूषकद्राक्षाकट्फलदाडिमराजादनकतकफलशाकफलानि त्रिफला च। अयं हृद्यो रुचिप्रदः पिपासाघ्नोऽनिलविनाशनो मूत्रदोषहरश्च ( सुसू. ३८.४३-४४; असंसू. १६.७; अहृसू. १५.१३ )

**परूषकादिगणसिद्धघृत**–न., घृत० पूयग्रख्ये शुक्रदोषे प्रशस्तम् । ( सुशा. २.९ )

**परोक्षवृत्ति**–वि., अज्ञाता वृत्तिर्यस्य ( असंसू. ८.७ )

**पर्जन्य**–पु., वर्षुको मेघः ( सुसू. ५.२४ )

**( पर्जन्या )**–स्त्री., वनस्पति० दारुहरिद्रा (धनि. १.५९)

**पर्ण**–पु., वनस्पति० पलाशः ( १०.२७४ )

**( पर्णी )**–स्त्री., वनस्पति० पृश्निपर्णी ( ध. १.९० )
शालपर्णी पृश्निपर्णी च ( असंसू. ८.२९ )
सप्तपर्णः ( र. २५.६ )
न., दलम्, पत्रम् ( र. ११.१२४ )

**–चोरक**–पु., वनस्पति० चोरकः ( रा. १२.१२८ )

**–भेदिनी**–स्त्री., वनस्पति० प्रियङ्गुः ( रा. १२.२९ )

**–मृग**–पु., वृक्षनिवासी प्राणी मद्गुमूषिकादिः मद्गुमूषिकावृक्षशायिकाऽवकुशपूतिघासवानरप्रभृतयः। तत्सामान्यगुणाः–मधुरा गुरवो वृष्याश्चक्षुष्याः शोषिणे प्रशस्ताः सृष्टमूत्रपुरीषाः कासार्शःश्वासनाशनाश्च ( सुसू. ४६.७६; धपरि. ६.८ )

**–लता**–स्त्री., वनस्पति० ताम्बूलः ( रापरि. ११.६ )

**–वल्ली**–स्त्री., वनस्पति० पलाशी ( रापरि. ३.४९ )

**–शबरी**–स्त्री.,देवता०इयमौषधीनिर्माणविधौ पूजनीया ( असंसू. ३८.२२ )

**पर्णाश**–पु., तुलसीभेदः ( असंसू. ७.१५६ )

**पर्णास**–पु. कृष्णार्जकः ( चनि. २.४ )
उत्पलपत्र इति जज्जटः ( चचि. ३.२६७ )
वनस्पति० कुठेरकः ( ध. ४.५४ )

**पर्णासक**–पु., तुलसीभेदः कृष्णार्जकवृक्षः ( चक.१.२५ )

**पर्णिका**–स्त्री., वनस्पति० पृश्निपर्णीभेदः, सर्वानुकारिणी, ( ध. १.९१ )

**पर्णिनी**–स्त्री., वनस्पति० शालपर्णी पृश्निपर्णी माषपर्णी मुद्गपर्णी वा ( असंचि. ९ अहृसू. १०.२३ )

**पर्णी**–स्त्री., ( परिव० ) वनस्पति० एरका ( असंसू. ६.२७ )

**–मूल**–न., एरकामूलम् ( असंसू. ६.२७ )

**पर्पट**–पु., कृतान्न० भक्ष्य० 'पापड' इति लोके ।
तद्गुणाः—रुच्यो लघुश्च ( असंसू. ७.३४ )
( अहृसू. ६.७६; चसू. २७.२७२ )
वनस्पति० शीतप्रियः ( अहृसू. ६.७६ )
पर्पटगुणाः–तिक्तः शीतः पित्तकफघ्नो तृष्णा ज्वररक्तदाहारुचिग्लानिमदभ्रमघ्नश्च ( असंसू. १२.७२; ध. १.४५ ) कटुपाकी ग्राही वातलश्च
( अहृसू. ६.७६; चसू. ४.१४ )
हिं.—पित्तपापडा, दवनपापडा.
**म.—पित्तपापडा.**
गु.—पीतपापडो, खडसलियो.
बं.—खेतपापडा.
त.—पर्पाटकम्.

**( पर्पटी )**–स्त्री., पारददोषविशेषः, रसगन्धपर्पटीवद् दृश्यमानः पारदस्यौपाधिको दोषः ( र. ११.२२ )
पोटबन्धः, बालोद्यखिलरोगनुदसौ ( र. ११.७३ )

**–द्रुम**–पु., वनस्पति० कुम्भीरः ( रापरि. ९.१९ )

**पर्पटक**–पु., वनस्पति० पर्पटः ( चसू. ४.१४; ) ( ध. १.४५; सुसू. ४६.२६२ )

**( पर्पटकी )**–स्त्री., वनस्पति० पर्पटः ( चसू. २७.१६२ )

**पर्पटिकारस**–पु., योग० नवज्वरारिः ( र. १२.१४४ )

**पर्यङ्क**–पु., खट्वा, परितः अङ्क्यते लक्ष्यतेऽनेनेति पर्यङ्कः, बिल्वमयी खट्वाऽपेक्ष्यते ( चशा. ८.३४; असंशा. ३.२४ )

–**पादिका**–स्त्री., वनस्पति० दधिपुष्पी (ध. १.१५३)

**पर्यङ्किका**–स्त्री., पर्यस्तिका (सुचि. २४.९४)

**पर्यवदात**–वि., विशुद्धज्ञानवान् ( चसू. १५.७ )

–**त्व**–न., वैद्यगुणविशेषः विशुद्धज्ञानवत्त्वम् (चसू. ९.६)

–**श्रुत**–वि., आचार्यगुणविशेषः विशुद्धं ज्ञानं यस्य सः ( चवि. ८.४ )

–**श्रुतता**–स्त्री., भिषग्गुणविशेषः विशुद्धज्ञानवत्त्वम् ( चवि. ८.८६ )

**पर्यसन**–न., परिक्षेपः इतस्ततः स्वच्छन्दं प्रेरणम् ( चवि. ३.३८ )

**पर्यस्तिका**–स्त्री., अल्पीयसी खट्वा, पर्यस्यते निक्षिप्यते शरीरमस्यामिति पर्यस्तिका अल्पाकारा खट्वा ( असंसू. ३.१२६ )

**पर्याकाशभूयिष्ठ**–वि., परितः सर्वत आकाशं भूयिष्ठमधिकतमं यस्मिन् सः ( देशः ) ( चक. १.८ )

**पर्यागत**–वि., परिपक्वम् ( सुसू. ४३.४ )

**पर्यादान**–( परिव० ) न. ग्रहणम् ( सुचि. ४.२९ )

**पर्याधानोद्धृत**–वि., शुष्कोद्धृतम् (चक्र. चचि. २१.१००)

**पर्याध्मात**–वि., अत्याध्मातम् ( चचि. १७.३३ )

**पर्याप्त**–वि., समाप्तम् ( चशा. ८.६ )

**पर्याप्ति**–स्त्री., निष्पत्तिः, पूर्तिः ( चशा. ६.१५ ) तृप्तिः ( चसू. २७.३२५ )

**पर्याय**–पु., उचितक्रमः ( चशा. ६.७ ) परिपाटी ( सुचि. ४०.१८ ) संज्ञान्तरम् ( असंनि. १.९ )

–**वचन**–न., संज्ञान्तरवचनम् पर्यायवाचिपदैः प्रतिपादनम् इदमर्थविज्ञानायोपपद्यते (चइ.१२.४१)

**पर्युषित**–वि., व्युष्टम् स्वकालं परित्यज्य अवस्थितम् (सुउ. ५८.३१; असंसू. ६.४९; सुसू. ४५.४१) रात्र्युषितम् ( सुसू. ४५.४१; असंसू. १० )

**पर्युषिताशन**–न., ह्यस्तनीयस्य ओदनाद्यन्नस्य सेवनम् ( असंनि. ३.२१ )

**पर्योग**–पु., पात्रविशेषः कटाहः ( चक्र. चचि. ७.२६; चसू. १५.७ )

**पर्वन्**–न., शारीर० अवयवसन्धिः ( चशा. ७.४.; सुसू. २५.३८ ) (परिव०) सन्धिकालः, पर्वकालः ( चइ. ४.१४ ) पक्षः ( रा. ७.२१९ )

**(पर्व)-पुष्पी**–स्त्री., शाक० कुक्कुटी, इयं वातपित्तनाशनी ( चसू. २७.१०८ )

–**भेद**–पु., लक्षण० ग्रन्थिस्फुटनम्, सन्धेः स्फोटः ( ड. सुचि.३४.६; सुक. ७.८–९ ) अङ्गुलिसन्धिभेदः ( चसि. २.१६ ) सन्धिपीडा ( ड. सुउ. ४४.११ )

–**भेदन**–न., लक्षण० पर्वभेदः ( अहृसू. १४.३० )

–**मरण**–(परिव०) पु., कालमृत्युः ( अहृसू. ७.७४ )

–**मूला**–स्त्री., वनस्पति० श्वेता ( रापरि. ५.४६ )

–**रुक्**–स्त्री., लक्षण० पर्वसु पीडनम्, सन्धिपीडा ( ड. सुउ.४०.१७४ )

–**वल्ली**–स्त्री., वनस्पति० दूर्वाभेदः, मालादूर्वा ( रा. ८.२३२ )

–**शूल**–पु., लक्षण० पर्वणः शूलः ( चसि. २.१६ )

–**शोष**–पु., लक्षण० पर्वणः शोषः ( चसि. २.१६ )

–**स्तम्भ**–पु., लक्षण० पर्वणः स्तब्धता ( चसि. २.१६ )

**पर्वणी**–स्त्री., शाक० पर्वशाकम्, इयं वातपित्तनाशनी ( चसू. २७.१०८ ) नेत्ररोग० नेत्रे कृष्णशुक्लसन्धौ पिडका भवति। सा च ताम्रा तनुर्दाहशूलशोफयुक्ता भवति ( सुउ. २.८ ) इयं रक्तजा, साध्या च, ( सुउ. १.३८; १५.२३–२५ ) इयं शस्त्रसाध्या ( असंउ. १३ )

**पर्वत**–पु., देवर्षिविशेषः ( सुसू. ५.३१. ) गिरिः ( रा. १२.९५ )

–**तृण**–न., वनस्पति० तृणाढ्यम् ( रापरि. ८.५३ )

**पर्वतीयहरिद्रा**–स्त्री., वनस्पति० दारुहरिद्रा, इयं आश्चोतने श्रेष्ठा ( काखिल. १३४२–४३ )

**पर्वतोद्भूत**–न., खनिज० अभ्रकम् ( धपरि. ६.३–४ )

**पर्वतोपत्यका**–स्त्री., पर्वतसमीपा भूमिः (का. विशेषकल्प)

**पर्वतोपश्लेष**–पु., गिरिसमीपे वसतिः ( असंनि. १.१९ )

**पर्वानुप्लव**–पु., बालरोग० तल्लक्षणम्–अस्मिन बालस्य हस्ताभ्यामुत्थितो वायुः शिरः पृष्ठं ततो मुष्कौ ततः पादौ च रुजेत् ( असंउ. २ )

**पर्वाभिताप**–पु., लक्षण० पर्वसु सन्तापः ( असंसू. २८.१० )

–**मोचा**–स्त्री., वनस्पति० गिरिकदली ( रा. ११.११२ )

–**वासिनी**–स्त्री., वनस्पति० आकाशमांसी ( रा. १२.९५ )

**पर्शुका**–स्त्री., अस्थि० पार्श्वस्थितमस्थि ( चशा. ७.६ )

पृष्ठभागनिबन्धनास्थि ( सुचि. ३.२९ ) तत्सङ्ख्या उरस उभयपार्श्वयोश्चतुर्विंशतिः पर्शुकाः ( चशा. ७.६ )

-भग्न-न. (परिव०) लक्षण० पर्शुकाया विनमनम् ( सुचि.३.२९ )

**पर्शुकाग्र**-न., पर्शुकाया अग्रम् ( चइ. १०. ९ )

**पल**-न., मान० कर्षचतुष्टयम् ( चक. १२.९२; सुचि. ३१.७; असंक. ८ ) "शुक्तिद्वयं पलं केचिदन्ये शुक्तित्रयं विदुः।" ( र. ११.६ )

शारीर० मांसम् ( सुउ. १.११; असंसू. ७.१०९; अहृसू. २८.४५ )

राशिः ( चक. १.१३ )

**पलक्या**-स्त्री., वनस्पति० पालक्यम् ( रापरि. ७.७२ )

**पलङ्कष**-पु., निर्यास० कणगुग्गुलुः ( रा. १२.१८६ )

वस्त्रधूपनोपयुक्तं इदं द्रव्यम् ( चशा. ८.६१ )

वनस्पति० जटामांसी ( चशा. ८.६१ )

( **पलङ्कषा** )-स्त्री., निर्यास० गुग्गुलुः ( ध. ३.१२७; ( सुउ. ३१.४. ) संज्ञास्थापनगणोक्तमेकं द्रव्यम् ( चसू. ४.१८ )

वनस्पति० जटामांसी ( चसू. ४.१८ )

गोक्षुरभेदः, क्षुद्रगोक्षुरः ( रा. ३.१३१ )

निष्पावः ( रा. १६.१७५ )

महासुण्डी ( रा. ५.२१९ )

जाङ्गम० लाक्षा ( ध. ३.८२; असंउ. ९ )

**पलल**-पु., तिलकल्कः ( सुउ. ५४.५; चक. ३.१२; असंशा. १२.४ )

न., तिलपिष्टम् ( सुउ. ३२.८; सुचि. २०.५१ )

भृष्टतिलचूर्णम्, कृमिरोगे उत्क्लेशोपयोगि ( सुउ. ४३.२० )

अलर्कविषहरमेकं द्रव्यम् ( सुक. ७.५२ )

सस्नेहस्तिलकल्कः ( ड. ) अलर्कविषे अलर्काधिपति-यक्षोद्देश्यकं बलिद्रव्यम् ( सुक. ७.६० )

मांसम् ( चनि. ४.५; र. २७.९४; असंशा. १२.४ )

**पलाण्डु**-पु., शाक० स्थूलनालाग्रपत्रो गुन्द्रालिकाभेदः गुणाः— कटुर्नारयुष्णवीर्यस्तीक्ष्णो गुरुर्वातघ्नो नातिकफावहः, किञ्चित्पित्तकरो बलावहोऽग्निविवर्धनः ( सुसू. ४६.२४६ ) पलाण्डुर्गुणै रसोनसदृशोऽपि तद्गुणन्यूनोऽस्ति ( अहृसू. ६.११२ ) विपाके मधुरः केवलोऽनिलनाशनः (ध. ४.७२; रा. ७.१०; असंसू. ७. )

क्षीरपलाण्डु राजपलाण्डु श्चेति पलाण्डुभेदः ( ध. ४.७२; रा. ७.१०२ )

हिं.—पियाज, प्याज.

**म.—कांदा.**

गु.—डुंगळी.

बं.—पेयाँज.

त.—इखेङ्कनयम्, ईरुळळी.

फा.—प्याज.

**पलार्ध**-न., मान० द्वे सुवर्णे, शुक्तिः ( चक. १२.९१ )

**पलाल**-पु., सस्यशून्यधान्यनालः ( सुचि. ३२.११ )

न., तृणम् ( चइ. १२.१९ )

-जात-न., शाक० तद्गुणाः -मधुरं मधुरविपाकं रूक्षं दोषप्रशमनं च ( सुसू. ४६.२९३ )

**पलाश**-पु., वृक्ष० त्रिपर्णः शुकतुण्डाभपुष्पो; किंशुक-नामाऽयं वसन्ते पुष्पितो भवति ( सुसू. ६.२६ ) रक्तपीतसितनीलवर्णैः कुसुमैरयं चतुर्विधः। तत्र सितो विज्ञानदः ( रा. १०.२७६-७७ ) आस्थापनोपयोगि द्रव्यम् ( चसू. २.१३ ) अस्य निर्दाहरसलेपात् कुष्ठं नश्यति। तन्निर्दाहविधिः पलाशस्य प्रधानमूले छिन्नेऽधः कुम्भं दत्त्वोपरि वृक्षदाहाद्यो गलति स्वरसः स निर्दाहरसत्वेन गृह्यते ( चसू. ३.१६ ) एतद्रसविपक्वं घृतं रक्त-पित्तप्रशमनम् ( सुउ. ४५.२९ ) एतस्मात् क्षारो विधृतो भवति ( सुसू. ११.११ ) अस्य फलनिर्यूहः पित्तातिसारघ्नः ( चचि. १९.५९ ) वृन्तमस्य रक्त-पित्ते उपयुक्तम् ( चचि. ४.८९ ) पलाशगुणाः— कषाय उष्णः सङ्ग्रहणो दीपनः सरो वातश्लेष्मघ्नः कृमिप्लीहवृद्धिगुल्मग्रहण्यर्शोघ्नश्च । बीजमस्य पामादित्वग्रोगहरम्। पुष्पमस्य उष्णं कण्डूकुष्ठार्ति नाशनं मारुतघ्नं च ( अहृसू. १५.४१; रा. १०. २७५-७६; असंसू. १६.२० )

हिं.—ढाक.

**म.—पळस.**

गु.—खाकरो.

बं.—पलाशगाछ.

त.—पलाचु, पुरचमरं.

फा.—दाराखटेपलाशा.

वनस्पति० शटी ( सुचि. ४.३२ ) द्र० 'सठी' ( 'शठी' )

न., पर्णम् ( चक. १.१० )

वनस्पति० तमालपत्रम् ( ध. २.५२ )

**( पलाशा )**–स्त्री., निर्यास० नाडीहिङ्गु ( ध. २.४० )
वनस्पति० शटी ( चक. चसि. ३.३८ ) द्र० 'सठी' ( 'शठी' )

**( पलाशी )**स्त्री., जाङ्गम० लाक्षा ( रा ६.१४२ )
वनस्पति० इयम् वल्ली अम्लपत्रा दीर्घवल्ली सुपर्णयुक्ता वर्णयुक्ता दीर्घपत्रा रसाम्ला विद्यते तथैव नागरदेशे प्रसिद्धा। तद्गुणाः– मधुराऽम्ला मुखदोषविनाशिनी पथ्या पित्तकोपकरी अरोचकहरा च ( रापरि. ३.५१ )

–**क्षार**–पु., कल्प० पलाशस्य क्षारपरिस्रावणविधिनाऽधःस्रुतं द्रव्यम् ( चचि. २३.१०१ )
पलाशभस्म, रक्तविभेदनमिदम् ( सुउ. ४२.२० )

–**गन्धा**–स्त्री., निर्यास० तवक्षीरम् ( ध. २.५८ )

–**तरुज**–पु., पलाशपल्लवः, एतत्कल्कलेपो दाहविनाशी ( सुउ. ३९.२८५ )

–**तैल**–न., पलाशबीजतैलम्, इदं मधुरं कषायं कफपित्तप्रशमनं च ( सुसू. ४५.१२१)

–**पर्णी**–स्त्री., वनस्पति० अश्वगन्धा ( रा. ४.४०१ )

–**लोहिता**–स्त्री., वनस्पति० चिल्ली, (रा. परि. ७.६६)

–**सिद्धसर्पिस्**–न., सिद्धघृत० ग्रन्थिभूतशुक्रशोधनमिदम् ( सुशा. २.८ )

**पलाशान्ता**–स्त्री., वनस्पति० गन्धपलाशः ( रा. ६.९० )

**पलाशास्थि**–न., पलाशबीजम् ( र. २०.२० )

**पलाशिका**–स्त्री., वनस्पति० पलाशी ( रापरि. ३.४९ )

**पलाशिनी**–स्त्री., वनस्पति० पद्मिनी ( ध. ४.१५७ )

**पलिक**–वि., पलसम्मितं पलमात्रम् ( चसि. १२.१६ ( २ )

**पलित**–न., वनस्पति० मरिचम् ( ध. २.८८ )
शैलेयम् ( ध. ३.७३ )
केशशुक्लत्वम् ( चवि. ८.९७ )
क्षुद्ररोग० शिरःकपालगतोऽयम् । रसप्रदोषजविकारेष्वेकः ( चसू. २८.१०; सुसू. २४.९ )
तत्सम्प्राप्तिः– क्रोधशोकश्रमकृतः शरीरोष्मा शिरोगतः सन् पित्तं केशांश्च पचति। तेन शीर्षकेशानां पाण्डुवर्णत्वं जायते ( सुनि. १३.३७ )
प्राकृतवैकृतभेदाद् द्विविधमेतत्। प्राकृतं कालजं वैकृतमकालजं च। तत्र वातात् स्फुटितं श्यावं खरं रूक्षं, पित्तात् सदाहं पीताभं ज्वलत्प्रभं च। कफात् स्निग्धं विवृद्धिमत् स्थूलं सुशुक्लं च। त्रिदोषाद् व्यामिश्रलक्षणम्। तथा शिरोरुजोद्भवं पलितं विवर्णं स्पर्शनासहं च भवति। तत्र सन्निपातजमसाध्यम् ( असंउ. २७; चचि. २६.१३२ )

**पलितोन्दुरु**–पु., मूषक० एतद्दष्टेऽस्रसम्भवा रोगा ग्रन्थिकर्णिकाश्च भवन्ति (असंउ. ४६)

**पल्ल**–पु., धान्यस्थापनार्थं वेण्वादिकृतं बृहत् कोष्ठम् ( चचि. १(२). १३ )
धान्यादिराशिः(चक. चक. ७.७२; इन्दु. असंउ. ४९)

**पल्लव**–पु., जाति० शूद्रभेदः, अयं मांसगोधूममाध्वीकशस्त्रवैश्वानरोचितः ( चचि. ३०.३१६ )
पर्णम्, पत्रम् ( चसू. १.७३ )
हस्ताभिनयः ( चसू. ११.५१ )

–**द्रु**–पु., वनस्पति० अशोकः (रा. १०.२७२)

–**यूष**–पु., यूष० न्यग्रोधाश्वत्थादिजैः पल्लवैर्निर्मितं पेयम् ( काखिल. ४.५१ )

**पल्लिवाह**–पु., वनस्पति० तद्गुणाः– पशूनां बलप्रदः ( रापरि. ८.५६ )

**पल्वल**–न., आनूपदेशजं तृणादिच्छन्नं सरः ( ड. सुसू. ४५.४ )
खातगर्तः खननाज्जलसञ्चयार्थं निर्मितो गर्तः ( ड. सुचि. २४.९१ )

**पवन**–पु., महाभूत० वायुः( सुसू. ४२.३; सुचि. ३५.३०; असंसू. ५.२७; अहसू. ३.३ )
दोषविशेषः, वायुः ( चचि. २९.२३७ )
वनस्पति० मजरः ( रापरि. ८.५२ )

**( पवनी )**–स्त्री., वनस्पति० बीजपूरकभेदः वनबीजपूरकः ( रा. ११.३४ )

–**कृत्**–वि., वातकृत् ( अहसू. ६.१२ )

–**निग्रहण**–वि. वातशमनः ( सुसू. ४२.१०(२) )

–**शोणित**–न., रोग० वातरक्तम् ( र. ३०.५० )

**पवनाधिक**–वि., वातभूयिष्ठम् ( असंसू. ६.११ ) एतद्गुणके देशे कषायमुदकं भवति ( असंसू. ६.११ )

**पवनानुलोमन**–वि., वातानुलोमनम् ( सुसू. ४२.१०(२) )

**पवनाशिन्**–पु., सर्पः, वायुभक्षकः ( असंउ. ४१ )

**पवनेन्द्रिय**–पु., लक्षण० दुष्टो वायुर्गर्भस्थस्य शुक्रस्थानं समूलं हत्वा नष्टशुक्रं करोति। स पवनेन्द्रियो नरः ( चशा. २.१७ )

**पवनेन्द्रियत्व**–न., पवनशुक्रत्वम् पवनस्य व्यवायकाले शुक्रसदृशरूपतया प्रवर्तनम्, वातहतशुक्रत्वम् ( चशा. २.१८ )

**पवनेष्ट**–पु., वनस्पति० निम्बः ( रा. ९.४४ )

**पवि**–पु., खनिज० हीरकः (ध. ६.५५; र. २६.५१)

**पवित्र**–पु., वनस्पति० पुत्रजीवः ( रापरि. ९.३१ )

**( पवित्रा )**-स्त्री., वनस्पति० हरिद्रा (रा. ६.७९)
पिप्पलभेदः अश्वत्थिका ( रा. ११.१२२ )
न., जाङ्गम० घृतम् ( ध. ६.१४४ )
मधु ( रा. १४.२७० )
**-धान्य**-न., वनस्पति० यवः ( रा. १६.१२४)
**-पूत**-वि., पवित्रमेव सत मन्त्रेण पूतम् अधिकतरं पवित्रीकृतम् ( चशा. ८.१० )
**पवित्रक**-पु., वनस्पति० पिप्पलः ( ध. ५.७८ )
उदुम्बरः ( रा. ११.१३७ )
दमनम् ( रा. १०.१२० )
शरः, ( रा. ८.२०९ )
**पशु**-पु., मृगः गवाश्वादिः ( अहृसू. १५.३४ )
**-गन्धा**-स्त्री., वनस्पति० अजगन्धा ( अहृसू. १५.३४ )
**-पति**-पु., देवता० महेश्वरः ( सुसू. १९.२३ )
**-मोहनिका**-स्त्री., वनस्पति० कटुी, ( रापरि. ३.४३ )
**पश्चात्**-( अव्य., ) पृष्ठम् ( चक. चसि. ९.८४ )
**-कर्मन्**-न., पश्चाच्चिकित्सा० आनंतर्येण सम्पाद्यमानं कर्म ( सुसू. ५.३ )
**पश्चिम**-वि. पश्चाद्भवम् अनन्तरोत्पन्नम् ( असंसू. १२.९६ )
**-याम**-पु., चतुर्थः प्रहरः (सुक.४ ३१)
**पश्चिमानिल**-पु., पश्चिमदिग्जातो वायुः । असौ मूर्च्छा-दाहतृड्विशाणि निहन्ति (सुसू.६.३१;असंसू.१२.९६)
**पश्चिमोदधिगा**-वि., पश्चिमसमुद्रं प्रति गच्छन्ती नदी ( अहृसू. ५.८ )
**पांशु**-पु. धूलिः ( सुचि. २.५७; अहृसू. ७.४५ )
वनस्पति० पर्पटः ( ध. १.४५ )
**-ज**-न., पूर्वसमुद्रजं लवणम्, तद्गुणाः-सतिक्तं कटु रोचनं पाकि संस्यनिलापहं च ( चसू. २७.३०४ )
**-बाष्प**-पु., शालि० कोरकः ( हे. अहृसू. ६.६ )
**-रागिणी**-स्त्री., वनस्पति० महामेदा ( रा. ५.१६३)
**-लवण**-न., लवण० रोमकम् (ध.२.३२)
**-वाप्य**-पु., शालि० तद्गुणाः-स्वादुरुष्णो गुरुः स्निग्धः पाकेऽम्लः श्लेष्मपित्तलः सृष्टमूत्रपुरीषश्च ( अहृसू. ६.६ )
**पांशुक**-न., खनिज० कासीसम् ( रा. १३.१७९ )
**पांसव**-न., लवण० रोमकम् ( रा. ६.४० )
**-क्षार**-न., लवण० रोमकम् ( ध. २.३२ )
**पांसु**-पु., धूलिः ( सुनि. २.१५ ) ऊष्मस्वेदोपयोगि द्रव्यम् ( अहृसू. १७.६ )
वि., धूसरम् ( ड. सुनि. २.१५ )
**-ज**-न., लवण० पांसुलवणम् रोमकम् ( अहृसू. १०.२७ )
**-वाप्य**-पु., शालि० पांशुवाप्यः ( चसू. २७.१२ )
**पांसुला**-स्त्री., वनस्पति० केतकी ( रापरि. १०.२ )
**पांसूत्थ**-न., लवण० शिलालवणम् रोमकम् ( अहृसू. ६.१४९ )
**पाक**-पु., वनस्पति० व्रीहिः ( ध. ६.७२ )
पित्तकर्म० पचनम् ( चसू. २०.१५ )
फलम्, परिणामः ( सुसू. २८.६ )
पक्वता ( सुसू. ५.७; अहृसू. ७.९; र. २४.११० )
जाठराग्नेः संयोगाज्जातं भुक्तद्रव्यस्य रसान्तरम् ( सुसू. ४०.१० )
लोहादीनां गजपुटादिभिः भस्मादिकरणार्थं पचनम् ( र. १०.४८ )
मारणं, भस्म ( र. १.२९ )
तालुगतरोग० तल्लक्षणम्-दुष्टेन पित्तेन यस्तालुनः पाकः, स पूयास्रावी महारुजश्च ( असंउ. २५ )
नेत्ररोग० स सशोफाशोफभेदेन द्विविधः । तत्र सशोफलक्षणम्-सरकैर्वातादिभिस्त्रिभिर्दोषैरतिरुग्-दाहष्ठीवनादिमान् शोफो भवति । शुक्लमण्डलं पक्वोदुम्बरसङ्काशं तथाऽश्रूष्णशीतविशद-पिच्छिलाच्छघनं जायते । अशोफे एतान्येव लक्षणानि परमल्पशोफत्वम् । सर्वगताक्षिरोगोऽयं साध्यश्च ( असंउ. १८; सुउ. १.४२ )
**-भय**-न., परिपक्वताया भयम्, पचनाद्भीतिः । ( असंसू. ३८.३ )
**-मत्स्य**-पु., कीट० सामुद्रमत्स्योऽयम् । दंष्ट्रानख-विषोऽसावग्निप्रकृतिकः । तद्दष्टे पित्तजा रोगा भवन्ति ( सुसू. ४६.११८, सुक. ८.८-१२; असंउ. ४३ )
**-हंस**-पु., पक्षि० जलचरविहंगेष्वेकः (चसू. २५.३८)
**-हंसजवसा**- ( परिव० ) स्त्री., श्वेतहंसजा वसा, इयं जलचरविहंगवसानां श्रेष्ठा ( चसू. २५.३८; असंसू. ६.११३ )
**पाकल**-पु., ज्वर० वातपित्तकफैर्वृद्धाभिहीनमध्यैर्जाय-मानोऽयं सन्निपातज्वरः ( काविशेषकल्प. ) गजा-नामयं भवति ( असंनि. १.५ )
न., वनस्पति० कुष्ठम् ( ध. ३.४९ ) दर्वीकरदंशे नस्योपयोगि ( चचि. २३.१९६; असंउ. ४२ )
कुष्ठशमनोपयोगि ( चचि. ७.१६१ )
**पाकातीत**-वि., पाककालमतीतं, व्यपगतपाककालम् ( सुसू. ४६.२१० )

**पाकात्यय**–पु.,नेत्ररोग० अक्षिपाकात्ययः ( सुउ. ५.३ )
**पाकिन्**–वि., पाककारि, ( अरु. ) पाचनम् ( हे. ) ( अहृसू. ६.१४४ )
**( पाकि )–ता**–स्त्री., पित्तकर्म० पाचनत्वम् पाककर्तृत्वम् ( अहृसू. १२.५१ )
**पाकिम**–वि., पाकेन निर्वृत्तो यः, स पाकिमः, क्षारपाकविधानोक्तः प्रतिसारणीयः पानीयश्च । ऊषरपांशुकाभिनिर्वृत्तम् । ऊषरक्षारः ( सुसू. ४६.३२४ )
**–लवण**–न., बिडलवणम् ( सुचि. १९.६२ )
**पाकार**–पु., पक्षि० प्रतुदजातीयः ( चसू. २७.५१ )
**पाक्य**–वि., क्वाथ्यम्, जेज्जटः ( चचि. ३.१९७ )
पु., शृतम्, क्वाथः (सुउ. ४९.२१; चचि. ३.१९७; सुचि. १६.११ )
क्षार० यवक्षारः ( ध. २.१७; र. ७.२२ )
लवण० पाकजम् ( चक. चचि. १५.८५ सुसू. ४२.११ )
**–क्षार**–पु., पाकेन सुश्रुताद्युक्तविधानेन कृतः क्षारः ( चक. चचि. २१.१२२ )
**–ज**–न., खनिज० काचलवणम् ( रा. ६.४४ )
**पाखण्ड**–पु., कापालिकादिः ( सुसू. २९.५; असंशा. १२.४ )
**पाङ्क**–पु., सोम ( सुचि. २९.७ )
**पाङ्गुल्य**–न., अशीतिवातविकारेष्वेकः, चलनकर्मस्वसामर्थ्यम् ( चसू. २०.११ )
**पाचक**–न., पित्तभेदः, पक्वामाशययोर्मध्यस्थं पञ्चभूतात्मकत्वेऽपि तैजसगुणोदयात् त्यक्तद्रवत्वं पाकादिकर्मणाऽनलशब्दितं पित्तमन्नं पचति सारकिट्टौ च पृथग् विभजते। शेषाणामपि पित्तानां इदं बलदानेनानुग्रहं करोति ( अहृसू. १२.१२ )
**पाचकांश**–पु., पाचको भागः ( असंसू. १९.१६ )
**पाचन**–वि., यदुपयुक्तमन्नपानौषधमपक्वानां सामानां धातूनां पाचने समर्थं तत्, पाचयति इति पाचनम् ( अरु. अहृसू. ८.२१; र. २.४४)
न., पचतोऽग्नेः पक्तुमधिकां शक्तिं यदुत्पादयति तद्द्रव्यम् ( अरु. अहृसू. १४.७ )
न., उपक्रम० अपक्वशल्यस्य पाचनद्रव्यैः पाकविधानम् ( सुसू. २७.४ )
लङ्घनस्वेदनादि–चिकित्सा यस्याञ्च दोषाः पच्यन्ते ( चसू. १६.२०; चचि. ३.१४३ )
रक्तस्तम्भनोपायेष्वेकम् ( सुसू. १४.३९ )
व्रणस्य षष्टयुपक्रमेष्वेकः उपनाहनिष्पाद्यं कर्म पाचनम् ( गयी ) आमपाचकम् ( सुचि. १.८ )

**(पाचनी)**–स्त्री., मूषा० ( र. १०.१ )
**पाची**–स्त्री., वनस्पति० तद्गुणाः–कटु-तिक्त-कषायोष्णा वातघ्नी व्रणहिता ग्रहभूतविकारत्वग्दोषशमनी च ( रापरि. १०.४६ )
**पाञ्चकर्मिक**–वि., पञ्चकर्माणि शिरोविरेचनवमनविरेकास्थापनानुवासनानि तदर्थस्तत्सम्बन्धी वा ( चसू. २.१४)
**पाञ्चप्रसृतिकी**–स्त्री., पेया० पञ्चभिः सर्पिस्तैलवसामज्जातण्डुलैः प्रत्येकं प्रसृतप्रमाणैः शृता; एषा स्नेहनी। ( चसू. १३.८९ )
**पाञ्चभौतिक**–वि., पञ्चभूतात्मकम् पञ्चमहाभूतेभ्य उत्पन्नम् तत् पञ्चविधम्–पार्थिवमाप्यमाग्नेयं वायव्यमाकाशात्मकं चेति । यद् यद्गुणभूयिष्ठं तत्तदात्मकं यथा पार्थिवादि । ( चसू. २६.१०; अहृसू. ९.२; सुसू. ४६.५-२६ )
**–तैल**–न., सिद्धतैल० इदं सर्वाक्षिनासाकर्णशिरोरोगस्रोतोदुष्ट्यादिनाशकं स्मृतिमेधावपुषां बलकरं मङ्गलकरं च। ( काषट्कल्पाध्याय ३२-४० )
**पाञ्चमूलिकी**–स्त्री., लघुपञ्चमूलसिद्धा यवागूः, सवातेऽतिसारे उपयुक्ता ( चसू. २.१९ )
**पाटन**–न., शस्त्रकर्म० शस्त्रावचारणम् ( चचि. २५.५५ ) छेदनम् ( सुचि. २.६१; अहृसू. २९.१०–११ )
लक्षण० द्विधा क्रियत इव वेदना ( सुउ. ४३.६ )
**पाटबन्ध**–पु., पारदबन्ध० पोटबन्धः ( र. ११.७६ )
**पाटल**–पु., धान्य० वर्षापाकि-व्रीहिभेदः, त्रिदोषकरोऽयम् (चसू. २७.१५; सुसू. ४६.१२; अहृसू. ६.११)
वनस्पति० पुन्नागः, ( रापरि. १०.११ )
**( पाटला )**–स्त्री., जलचर० नादेयो मत्स्यः, ( सुसू. ४६.११३ )
वनस्पति० महापञ्चमूलेष्वेकम्, ताम्रपुष्पा, ( अहृसू. ६.१६७ )
धान्य० व्रीहिः, ( रा. १६.१० )
वनस्पति० सुगन्धिपुष्पवृक्षः ( सुउ. ४७.५१ )
वनस्पति० दशमूलेष्वेकम्, अस्या मूलमास्थापनोपयोगि ( चसू. २.११–१३ )
त्वगस्या विरेचनोपयुक्ता ( सुसू. ३९.४ )
श्वयथुहरगणे उपयुक्तं द्रव्यम् ( चसू. ४.१६ )
पाटलागुणाः–तिक्ता कटुरुष्णा वातपित्तकफघ्नी वातास्रहिक्कावमिशोफारोचकाध्मानश्वासघ्नी च ( ध. १.१२० )

हिं.—पाडल, पाडरि.
**म.—पाढळ, पाडली.**
गु.—पाडल, काकच.
बं.—पारुलगाछ.
त.—पातिरिमरं.

**(पाटली)**-स्त्री., वनस्पति० पाटला ( असंसू. १४.४ )
द्र० 'पाटला'
सितपाटलिः ( रापरि. १०.१७ )
पाटलाभेदः, काष्ठपाटला ( रा. ९.१५२ )
कटभी ( रापरि. ९.३७ )
पाटलीगुणाः- गौल्या शिशिरा बल्या वृष्या पित्तहरा मूत्रकृच्छ्रमूत्राघातहरा च (रापरि. ५.४४)
न., वनस्पति० कत्तृणम् (ध. १.८०)
पुष्प० तद्गुणाः-कषायमधुरं शीतं पित्तकफास्रजिच्च ( असंसू. १२.८६; सुसू. ४६.२८७ )

**पाटला**-स्त्री., वनस्पति० ( सुचि. ४.३२ )
**-क्षार**-पु., क्षार० पाटलाक्षारो मूत्रविकारघ्नः (सुउ.५८.४६)
**-पुष्प**-न., जलस्य दुर्गन्धनाशनार्थमुपयुज्यते ( असंसू. ६.२८; सुसू. ४५.१२ )
तद्गुणाः- सुगन्धि विशदं हृद्यं श्लेष्मपित्तविषघ्नं च ( सुसू. ४६.२८७ )
**-पुष्पवर्णक**-पु., वनस्पति० पद्मकः ( ध .३.८८ )
**-भस्मन्**-न., ताम्रपुष्पाभस्म, प्रक्षेपात् सविषजलशोधकमिदम् ( असंसू. ८.८० )

**-मूल**-न., पञ्चमूलेष्वेकम्, ताम्रपुष्पामूलम् ( अहृसू. ६.१६७-१६८ )

**पाटलि**-स्त्री., वनस्पति० मुष्ककः ( रा. ११.२२० )
पाटला ( सुउ. ५८.४८; असंसू. १५.११; अहृसू. १५.१७ )
**-क्षार**-पु., पाटलाक्षारः, कुष्ठहरप्रलेपे उपयुक्तः ( चचि. ७.८९ )
**-पुष्प**-न., पाटलापुष्पम्, रक्ताभिष्यन्देऽञ्जनोपयोगि ( सुउ. १२.११ )

**पाटव**-न., वनस्पति० कुष्ठम् ( रा. १२.९८ )
सामर्थ्यम्, पटुः, समर्थः, पटोर्भावः सामर्थ्यम् ( अहृसू. ११.२; असंसू. १९.३ )

**पाटित**-वि., शस्त्रादिभिश्छिन्नम् ( अहृसू. २९.६८ )
न., रोग० भग्नभेदः, तल्लक्षणम्-अस्थ्यणु-बहुविदारितं वेदनावच्च भवति ( असंसू. ३८.४६. सुनि. १५.१० )

**पाटिनी**-स्त्री., पारददोष० इयं त्वग्विदारिणी ( का. र. ११.२२ )

**पाट्य**-वि., पाटनकर्मयोग्यो यो व्याधिः नाडीव्रणाः पक्वशोथाः क्षतगुदोदरमन्तःशल्याः शोफाः पाट्याः ( चचि. २५.५६ )

**पाठा**-स्त्री., वनस्पति० अम्बष्ठा, सिराव्यधनोत्तरम् प्रवृत्तरक्तप्रवर्तनी ( सुसू. १४.३५ )
शाक० ग्राहिणी, त्रिदोषघ्नी च ( चसू.२७.८८ )
वनस्पति० ज्वरहरगणोक्तमेकं द्रव्यम् ( चसू. ४.१६ ) स्तन्यशोधनगणोक्तमेकं द्रव्यम् ( चसू. ४.१२; सुचि. १७.४४; ) ग्रन्थ्यार्तवे उपयुक्ता, ( सुशा. २.१४; ) श्लेष्मशूलशमनी ( सुउ. ४२.१११; ) संशोधनवर्त्युपयुक्ता ( सुसू. ३७.१३; ) सर्वातिसारेषु शस्ता ( सुउ. ४०.११४ )
पाठास्वरूपम्—ईषद्रोमशा श्वेतपुष्पगुच्छा विद्धकर्णी लता ( चसू. २७.८८; सुसू. ३८.६-७ )
पाठागुणाः—तिक्ता गुरूष्णा भग्नसन्धानकृत् वृष्या त्रिदोषघ्नी विष-कुष्ठ-कण्डूच्छर्दि-हृद्रोग-ज्वरातिसार-शूलकफपित्तज्वर-वातपित्तज्वर-दाहघ्नी च । ( ध. १.७० )
हिं.—पाठ, निमुका, हरजोरि.
**म.—पहाडमूळ.**
गु.—पाड, काळीपाट.
बं.—आकनादि.
त.—वट्टतिरुप्पि.
**-पत्र**-न., पाठायाः पर्णम्, कफजव्रणे आच्छादनोपयोगि ( सुचि. १.११५ )
मधुमेहपिडकासूपयुज्यते ( सुचि. १२.९ )

**पाठिका**-स्त्री., वनस्पति० पाठा ( ध. १.७० )

**पाठिन्**-पु., वनस्पति० चित्रकः ( ध. २.८०; ) ( रा. ६.१२५ )

**पाठिन**-पु., वनस्पति० चित्रकः ( ध. २.८० )

**पाठीन**-पु., जलचर० नादेयो मत्स्यः अयमशकलो दीर्घो निर्मलश्च । तद्गुणाः- श्लेष्मलो वृष्यो रक्तपित्तदूषकः कुष्ठकृच्च ( सुसू. ४६.११६ )
रूप्योदरः कृष्णवर्णकः कण्टकमञ्जरिर्मत्स्यः ( हे. अहृसू. ६.५२ )

**पाणविक**-पु., पक्षि० प्रतुदजातीयः (असंसू.७.७२-७५)

**पाणि**-पु., शारीर० हस्तः ( सुचि. २.४३; चइ. ३.४ )
तापस्वेदोपकरणेष्वेकम् ( सुचि. ३२.४ )

**-ज**-पु., भैषज्य० नखम् ( रा. १२.१०८ )

**-जानुगम**-वि., पाणिभ्यां जानुभ्यां च गमागमनमस्येति तादृशो बालः ( काफक्कचि. १४ )

**-तल**-न., मान० कर्षः द्वौ द्रंक्षणौ ( चक. १२.९०; सुउ. ५८.५५; असंक. ८; र. ११.४ )
अङ्गुलिरहितं हस्ततलम् ( ड. सुचि. १०.९ )

**-तलसंमित**-वि., हस्ततलप्रमाणम् ( सुशा. १०.१५; असंशा. ७.३३ )

**-ताप**-पु., स्वेदभेदः तप्तहस्तेन कृतं स्वेदनम् ( सुचि. ५.२६; अहृसू. १८.३६ )

**-दाह**-पु., लक्षण० हस्तदाहः ( सुक. १.३७ )

**-पादशलाका**-स्त्री., पाणिपादे स्थिताऽस्थिशलाका प्रतिशाखं पञ्चेति मानतो विंशतिः पाणिपादशलाकाः ( चशा. ७.६. )

**-पादहृदय**-न., षट्पञ्चाशत्प्रत्यङ्गेष्वेकम् । पाणेः पादस्य च तलमध्यम् । संख्यातः चत्वारि पाणिपादहृदयानि ( चशा. ७.११ )

**-पादाङ्गुल्यस्थि**-न., हस्तपादाङ्गुलौ स्थितमस्थि तत्सङ्ख्या षष्टिः ( चशा. ७.६ )

**-मन्थ**-न., आराशस्त्रम् ( सुचि. ४.९ )

**-मर्द**-पु.,वनस्पति० करमर्दः (रा.११.१६८)

**-मर्दक**-न., वनस्पति० करमर्दः ( ध. ५.१०२ )

**-रुह**-पु., भैषज्य० नखम् ( रा. १२.१०८ )

**-शुक्ति**-स्त्री., मान० पलम् ( सुचि. १०.१५ )
शिरोविरेचने मात्राप्रमाणम्, चतुःषष्टिबिन्दवः ( ड. सुचि. ४०.२८ )

**-शोथ**-पु., रोगलक्षण० करस्य शोथः ( चचि. २३.११२ )

**पाण्डव**-पु., वनस्पति० अर्जुनः ( ध. ५.११४ )

**पाण्डविक**-पु., पक्षि० प्रतुदजातीयः ( चसू. २७.५३ )

**पाण्डु**-वि., वर्ण० श्वेतः ( सुसू. ३३.२३; सुशा.६.२६ )
पीतवर्णः ( ड. सुउ. ५२.९ )
धान्य. शालिः ( अहृसू. ६.२ )
पक्षि० प्रतुदजातीयः ( ध. १.१२ )
रोग० पाण्डुरोगः ( र. १२.१-८ )

**-कर्मन्**-न., व्रणस्य षष्ट्युपक्रमेष्वेकः, रूढानां कृष्णाव्रणानां त्वक्समानवर्णतापादनम् ( सुचि. १.८ )

**-तरु**-पु., वनस्पति० धवः ( ध. ६.८ )

**-ता**-स्त्री., रोगलक्षण० पाण्डुत्वम्. श्वेतत्वम् ( चसू. १६.१३ )

**-त्व**-न., रसप्रदोषजरोगेष्वेकः ( चसू. २८.१० )
लक्षण० श्वेतता ( अहृसू. ७.२४ )

**-पङ्कशोषण**-पु., सिद्धयोग० ताम्रपारदगन्धकादिनिर्मितः शोफपाण्डुनाशनोऽयम् ( र. १९.७८ )

**-पत्नी**-स्त्री., वनस्पति० रेणुका ( ध. ३.५१ )

**-पुत्री**-स्त्री., वनस्पति० रेणुका ( रा. ६.९९ )

**-फल**-न., वनस्पति० पटोलः ( ध. १.५० )

**(-फला)**-स्त्री., वनस्पति० चिर्भटम् ( रा. ७.२६२ )

**(-फली)**-स्त्री., वनस्पति० पाटली ( रापरि. ५.४४ )

**-राग**-पु., वनस्पति० दमनम् (ध. ३.६४)

**-रुज्**-स्त्री., पाण्डुरोगः ( र. २.५३ )

**-रोग**-पु., रोग०
तत्सम्प्राप्तिः – विरुद्धासात्म्यभोजनादिना व्यवायादीनामतिसेवया च प्रकुपितं हृदयस्थितं पित्तं बलिना वायुना प्रक्षिप्तं सत् दश धमनीः संप्राप्य त्वङ्मांसयोरन्तरं समाश्रित्य कफवातासृक्त्वङ्मांसानि च दूषयित्वा पाण्डुहारिद्रहरितरूपान् बहुविधान वर्णांस्त्वचि करोति । तेषु च पाण्डुत्वमधिकम् (चचि. १६.७–११; असंनि. १३.३; सुउ. ४४.३)
तत्सङ्ख्या – वातपित्तकफैस्त्रयः संनिपातेन चतुर्थो मृद्भक्षणात् पञ्चमः ( चचि. १६.३; असंनि. १३.९ ) सुश्रुते चतुर्विधोऽसौ । मृद्भक्षणजस्य त्रिदोषजान्तर्भूतत्वात् ( सुउ. ४४.४ ) तन्त्रान्तरेऽयमष्टविधः, पूर्वोक्ताः पञ्च द्वे कामले हलीमकश्चेति ( ड. सुउ. ४४.४ )
तत्पूर्वरूपम्–हृदयस्पन्दनं रौक्ष्यं स्वेदाभावः श्रमश्च ( चचि. १६.१२ ) त्वक्स्फोटनं ष्ठीवनं गात्रसादो मृद्भक्षणं प्रेक्षणकूटशोथो विण्मूत्रपीतत्वमविपाकोऽल्पवह्निता च (सुउ. ४४.५; असंनि. १३.१०)
तत्सामान्यलक्षणानि–कर्णक्ष्वेडो हतानलत्वं दुर्बलत्वं सदनमन्नद्वेषः श्रमो भ्रमो गात्रशूलो ज्वरः श्वासो गौरवमरुचिर्गात्रमर्दनपीडनोन्मथनानि शूनाक्षिकूटहरितत्वशीर्णलोमत्वहतप्रभत्वानि कोपः शिशिरद्वेषो निद्रालुत्वं ष्ठीवनाल्पवाक्त्वपिण्डिकोद्वेष्टनानि कट्यूरुपादानां रुजा सदनमङ्गमार्दवजो गुणक्षयश्च ( चचि. १६.१३; असंनि. १३.६-९ ) वातजलक्षणानि–वातलैराहारोपचारैश्च कुपितो वायुः कृष्णपाण्डुत्वं जनयति । तदा रूक्षारुणाङ्गताऽङ्गमर्दो रुक्तोदकम्पाः पार्श्वशिरोरुग्वर्चःशोषास्यवैरस्यशोफानाहबलक्षया भवन्ति ( चचि. १६.१७-१८ ) सिरानखविण्मूत्रनेत्राणां मुखस्य च कृष्णरूक्ष-

मरुणत्वं च ( सुउ. ४४.७; असंनि. १३.११ ) पित्तज-लक्षणानि–तृष्णा मूर्च्छा पीतमूत्रशकृत्त्वं स्वेदः शीतेच्छाऽन्नारुचिः कटुकास्यत्वं वर्चोभेदो विदाहो दौर्गन्ध्यं दौर्बल्यं तमो ज्वर उष्णाम्लयोरनुपशयश्च ( चचि. १६.१९-२० ) वदनसिरानखविण्मूत्र-नेत्राणां पीतहरितत्वं च ( सुउ. ४४.८; असंनि. १३.१२ ) कफजलक्षणानि–गौरवं तन्द्रा छर्दिः श्वेतावभासता प्रसेको लोमहर्षः सादो मूर्च्छा भ्रमः क्लमः श्वासः कासोऽरुचिरालस्यं वाक्स्वरग्रहः शुक्लशिरानखाननमूत्राक्षिवर्चस्त्वं कटुरूक्षोष्ण-कामता श्वयथुर्मधुरास्यत्वं च ( चचि. १६.२३-२५; सुउ. ४४.९ ) लवणवक्त्रत्वं च ( असंनि. १३.१३ ) त्रिदोषजे सर्वदोषलक्षणानि भवन्ति (चचि.१६.२६; सुउ. ४४.१० )

मृद्भक्षणजसम्प्राप्तिलक्षणानि–प्रायोऽसौ बालानां भवति। मृत्तिकादनशीलस्यान्यतमो मलः कुप्यति। कषाया मृन्मारुतमूषरा पित्तं, मधुरा कफं कोपयेद् रौक्ष्याद् रसादींश्च विरूक्षयेत्, स्रोतांसि पूरयति निरुणद्धि च। इन्द्रियाणां बलं तेजो वीर्यौजसी च हत्वा बलवर्णाग्निनाशनं पाण्डुरोगं च करोति ( चचि. १६.२७-२९; असंनि. १३.१५ ) तत्र गण्डाक्षिकूटभ्रूपादनाभिमेहनाननशूनत्वं कृमिकोष्ठत्वं सरक्तकफस्य मलस्यातिसरणं च ( चचि. १६.३०; असंनि. १३.१५ ) उत्साहाभावोऽग्निसादो रुधिर-स्पृहा चेति ( कासू. २५.३४ ) पित्तदुष्टस्तन्य-पानाद् बालानां पाण्डुरोगो भवति। स क्षीरजः ( चचि. ३०.२४५ ) अलसाख्यो लाघरकः पाण्डु-रोगभेदस्तस्य लक्षणम्–ज्वराङ्गमर्दभ्रमसादतन्द्रा-क्षयान्वितो लाघरकः ( सुउ. ४४.१२ ) अस्यैव कुम्भसाह्वो नाम, कुम्भकामलेति तन्त्रान्तरे नाम ( ड. सुउ. ४४.११-१२ ) हलीमकलक्षणम्–पाण्डुरोगे वातपित्तात् हरितश्यावपीतत्वं भ्रमस्तृष्णा स्त्रीष्वहर्षो मृदुज्वरस्तन्द्रा बलानलभ्रंशाश्च भवन्ति ( असंनि. १३.२० ) पानकी इति पाण्डुरोगस्य भेदोऽस्ति। तस्य लक्षणं द्र० 'पानकी' ( ड. सुउ. ४४.१२ ) पाण्डुरोगोपद्रवाः– श्वासा-तिसारारुचिकासमूर्च्छातृट्छर्दिशूलज्वरशोफदाहा-विपाकस्वरभेदसादाश्च । मूर्धरुजा हृदयपीडनं क्लमश्च ( सुउ. ४४.१३-३८ ) तदसाध्यलक्षणानि–चिरोत्पन्नः खरीभूतपाण्डुरोगः कालप्रकर्षाच्च सिध्यति। यः शूनः पीतदर्शी नरः पीतदर्शी



यश्च बद्धाल्पविट्कं सकफं हरितं चातिसरति दीनः श्वेतातिदिग्धाङ्गश्छर्दिमूर्च्छातृषार्दितः तिष्ठति यश्च पाण्डुरसृक्क्षयात् श्वेतत्वमाप्नुयात् सोऽप्यसाध्यः ( चचि. १६.३१-३३ ) हस्तपादमुखेषु शूनः कृशमध्यकायोऽथवैतद्विपरीतोऽन्ते ग्लानो मध्यशूनो गुदशेफमुष्कशूनः प्रताम्यमानो विसंज्ञकल्पोऽतिसारज्वरपीडितः पाण्डुरोग्यनुपक्रम्यः। ( सुउ. ४४.३९-४० ) पाण्डुदन्तनखनेत्रः पाण्डुसङ्घातदर्शी चासाध्यः। ( सुसू. ३३.२३ ) चिकित्सासूत्रम्–साध्यं पाण्डुरोगिणमादौ घृतेन स्निग्धमूर्ध्वमधश्च शुद्धं चिकित्सन् हरीतकीचूर्णं क्षौद्रघृतेन दद्यात्। विरेचनघृतानि च योजयेत्। अनन्तरमयोरजादिचूर्णं प्रयुञ्जीत। ( सुउ. ४४.१४-१७ )

**–रोगचिकित्सित**–न., अध्याय० ( चचि. १६.१ )

**–रोगप्रतिषेध**–पु., अध्याय० ( सुउ. ४४ )

**–संघातदर्शिन्**–वि., लक्षण० श्वेतद्रव्याणां समूहं सर्वासु दिक्षु द्रष्टुं शीलमस्येति ( सुसू. ३३.२३ )

**पाण्डुक**–पु., धान्य० शालिभेदः ( चसू. २७.८ ) अयं पाण्डुतुषः पाण्डुशूकश्च ( सुसू. ४६.४ ) सर्वप्राणिनामयं सामान्यतः पथ्यः ( सुसू. २०.५ ) वनस्पति० पटोलः (ध. १.४९)

**पाण्डुर**–पु., वनस्पति० धवः ( रा. ९.८ ) यावनालभेदः, धवलयावनालः, ( रा. १६.१६८ ) वि., श्वेतवर्णम् ( र. २.११४ ) देश० अत्रस्थमुदकं तिक्तरसतां याति (असंसू. ६.९)

**(पाण्डुरा)**–स्त्री., वनस्पति० माषपर्णी ( रा. ३.१७१ ) कीट० सौम्या लता, इयं श्लेष्मविकारदा, ( असंउ. ४४ ) तद्दंशलक्षणानि– दंशः शूनो भवति। वक्त्रशोफो गौरवं ज्वरो जृम्भा शिरोरुग् विघूर्णनं च अनुभूयते ( असंउ. ४५ )

**–द्रुम**–पु., वनस्पति० कुटजः ( रा. ९.१९ )

**–फली**–स्त्री., वनस्पति० पाटली ( रापरि. ५.४४ )

**पाण्डुरफलमूल**–न., पाटलामूलम् ( र. १७.६ )

**पाण्डुरेक्षु**–पु., वनस्पति० इक्षुभेदः, श्वेतेक्षुः ( रा. १४.१८१ )

**पाण्ड्वामय**–पु., पाण्डुरोगः ( चचि. ३०.२४५)

**पाण्ड्वामयिन्**–वि., पाण्डुरोगी ( सुउ. ४४.१४ )

**पात**–पु., पतनम् ( असंसू. ८.१४७ ) संस्कार० पातनम् "मर्दनैर्मूर्च्छनैः पातैर्मन्दः शान्तो भवेद्रसः" ( र. ११.४६ )

**–यन्त्र**–न., यन्त्र० ऊर्ध्वपातनयन्त्रम् हिङ्गुलस्थितः पारदोऽनेन यन्त्रेण आकर्षणीयः ( र. १६.५९ )

**पातन**–न., स्थापनं, निपातनम् ( अहृसू. २६.४१ ) पारदसंस्कार० तच्चोर्ध्वाधस्तिर्यग्भेदात् त्रिविधम्, अनेन संस्कारेण घटसम्पुटस्थपारदस्याग्निसंस्कारात् स्थानान्तरे आहरणं भवति। तेन च नागवङ्गादि-सम्पर्कजा दोषा नश्यन्ति (र. ८.६७) सत्त्वपातनम् ( र. २.१५१ )

**–पिष्टी**–स्त्री., चतुर्थांशसुवर्णेन सह घर्षणात् जाता पारदपिष्टी ( र. ८.८ )

**पातनाभस्मन्**–न., पारदस्योर्ध्वपातनविधिना निष्कासितं भस्म ( र. ३०.७८ )

**पातनायन्त्र**–न., यन्त्र० ऊर्ध्वपातनयन्त्रम्, उपरि तोया-धारयुक्तेन न्युब्जेन भाण्डेनाच्छादितमूर्ध्वपातन-संस्कारार्थं भाण्डम् ( र. ९.६-८ )

**पाताल**–न., लोक० अधस्तनसप्ततलेष्वेकम् ( र. १७.७ )

**( पातानी )**–स्त्री., वनस्पति० मृदुलोमशपत्रा वल्ली, पातालगारुडी, सर्वविषघ्नीयम्, ( र. ११.५५ )

**–कर्कटी**–स्त्री., वनस्पति० कर्कटीभेदः, भूमावेव प्रसरणशीला लघुकर्कटी। इन्द्रवारुणी पाताल-गारुडी वा ( र. १७.७ )

**–कोष्ठी**–स्त्री., मृण्मयकोश० मृदूनां सत्त्वपातनीयम् तत्स्वरूपम्–गर्भे पञ्चच्छिद्रयुतमृच्चक्राच्छन्नं चतुर-ङ्गुलनिम्नत्वविस्तरतः गर्तयुक्तं बहिर्भागाद् गर्ताभि-मुखनिम्नगामिनीसमुन्नतवङ्कनाल्या संलग्नं कोकिलैः पूरितकृत्स्नांशमेकभस्त्रया धमनयोग्यं कठिणभूमौ निर्मितं वितस्तिमात्रं खातम् ( र. १०.४० )

**–गरुडी**–स्त्री., वनस्पति० वत्सादनी ( रापरि. ३.३२ )

**–गारुडी**–स्त्री., वनस्पति० वत्सादनी ( र. २०.१५४ )

**–मूली**–स्त्री., वनस्पति० वत्सादनी ( र. ३०.४५ )

**–वासिनी**–स्त्री., वनस्पति० ताम्बूली ( धपरि. ३.१ )

**पातित**–वि., प्रयुक्तम् ( सुनि. १४.१६ )

**पातुकाम**–वि., स्नेहादिपानकामः ( चक्र. चसि. २.२१ )

**पात्र**–न., मान० आढकम् इदं चतुःप्रस्थपरिमितम् ( चक्र. १२.९४; सुउ. ४१.४७; असंक. ८ )

**( पात्री )**–स्त्री., पात्र० वाटी ( चसू. १५.७ )

**पात्रका**–स्त्री., मान० चतुःप्रस्थप्रमाणम् आढकम् ( र. ११.८ )

**पाथस्**–न., जलम् ( असंचि. ११; रा. १४.३१७ )

**( पाथो )**–ज–न., कमलम् ( र. ७.२९; रा. १०.२४३ )

**–रुह्**–न., वनस्पति० कमलम् ( रा. १०.२४३ )

**पाद्**–पु., शारीर० पादः ( चचि. २८.२७ )

**पाद**–पु., चिकित्साधारभूत एको भागः भिषक् द्रव्याण्युपस्थाता रोगी चेति चत्वारः पादाः ( चइ. ११.२७ ) ( अहृसू. १.२७ )
चतुर्थांशः ( अहृसू. १९.२० )
अनुयन्त्र० चरणः ( अहृसू. २५.४० )
एकादशेन्द्रियेष्वेकं गमनादिकर्मकरं कर्मेन्द्रियम् ( चशा. ७.७; सुशा. १.० ) सङ्ख्या द्वौ, प्रमाणम्–उत्सेधविस्तारायामैः क्रमशश्चत्वारि षट-चतुर्दशाङ्गुलानि ( चवि. ८.११७; सुसू. ३५.१२ )
प्रतिपादं कण्डराद्वयम् सा आपादतलात् कटिफलकं यावत् स्थिता ( सुशा. ५.११ )
न., जाङ्गम० व्याघ्रनखम् ( ध. ३.६० )

**–कूर्चास्थि**–न., अस्थि० पादकूर्चगते इमे द्वे अस्थिनी ( सुशा. ५.१९ )

**–चतुष्टय**–न., चिकित्सायाश्चत्वारो भागाः; भिष-गौषधं परिचारको रोगी चेति पादचतुष्टयम् ( अहृसू. १.२७; असंसू. २.२२ )

**–चरण**–न., पद्भ्यां सञ्चारः ( असंसू. ४.४९ )

**–चारिन्**–वि., पद्भ्यां सञ्चरणशीलः ( अहृसू. ३.४७ )

**–तल**–न., पादमध्यम्, मानतश्चतुरङ्गुलायतम् पञ्चा-ङ्गुलविस्तृतं च ( सुसू. ३५.१२ )

**–त्र**–न., उपानत् ( असंसू. १२.९३ )

**–त्रधारण**–न., उपानद्धारणम्, तद्गुणाः–चक्षुष्यं स्पर्शनहितं पादव्यसनापहं बल्यं पराक्रमसुखं वृष्यं प्रीतिवर्धनं रक्षोघ्नमोजस्यं च ( चसू. ५.१००; सुचि. २४.७१ ) तदधारणमनायुष्यमनारोग्यं चक्षुषोरुपघातकृत् ( सुचि. २४.७२ )

**–त्राण**–न. उपानत् ( अहृसू. २.३२ )

**–दारी**–स्त्री., क्षुद्ररोग० वायुना अत्यर्थरूक्षितौ पादौ दार्येतेऽस्याम् इति पाददारी विपादिका, तल्लक्षणम्–परिक्रमणशीलस्य वायुरत्यर्थरूक्षयोः पादयोस्तलदारणं विधत्ते तेन रुजा च भवति ( सुनि. १३.२९ )

**–दाह**–पु., क्षुद्ररोग० पित्तासृक्सहितोऽनिलः पादयो-र्विशेषतश्चङ्क्रमणाद्दाहं कुरुते ( सुनि. १.८०; अहृसू. २७.१६; असंनि. १५.५९ )

**–प**–पु., वृक्षः, पादैर्मूलैः पिबति जलमिति पादपः ( असंसू. ८.८४ )

–परुहा–स्त्री., वनस्पति० वृक्षादनी ( रा. ५.१४१ )
–पाद–पु., पादस्य चतुर्थांशस्य पादश्चतुर्थांशः, अतः षोडशांशः. ( अहृसू. ७.४८ )
–पीठ–न., पादाधारः ( सुक. १.२६; असंसू. ८.४३ )
–प्रक्षालन–न., पादधावनम्, तद्गुणाः–चक्षुःप्रसादनं वृष्यं पादमलरोगश्रमापहं रक्षोघ्नं प्रीतिवर्धनं च ( सुचि. २४.६९ )
–भ्रंश–पु., अशीतिवातविकारेष्वेकः, यत्र पादः स्थापयितुं क्षेप्तुं वा इष्टः, ततोऽन्यत्र तत्पतनम् ( चसू. २०.११ )
–रूप्य–न., धातु० रूप्यकम्, कृत्रिमरजतम् ( र. ५.२७ )
–रोहिण–पु., वृक्ष० वटः ( रा. ११.११४ )
–लेप–पु., चरणलेपः ( असंउ. ५० )
–शत–न., शतपदानामन्तरम्, शतं पदानि ( सुसू. ४६.४८७ )
–शलाका–स्त्री., अस्थि० शलाकावत् पादतलस्थमस्थि, तत् पञ्चसङ्ख्याकम् ( सुशा. ५.१९; ड. )
–शलाकाप्रबन्धनास्थि–न., अस्थि० (चशा. ७.६)
–शूल–न., अशीतिवातविकारेष्वेकः पादयोः शूलम् ( चसू. २०.११; असंसू. २०.१३ )
–श्रम–पु., पादयोः श्रमः ( असंसू. ३.६१ )
–संकोच–पु., पादयोराकुञ्चनम् ( असंसू. ३.६१ )
–संग्रह–पु., रोगलक्षण० पादयोर्वातपीडा, जडतादि सङ्ग्रहणं च ( चसू. १४.२३ )
–सिरा–स्त्री., पादस्थिता सिरा ( असंसू. ३६.१२ )
–सुप्तता–स्त्री., अशीतिवातविकारेष्वेकः; पादयोर्निष्क्रियत्वं स्पर्शाज्ञता वा ( चसू. २०.११ )
–सुप्ति–स्त्री., रोग० पादसुप्तता पादयोः संज्ञाराहित्यम् ( असंसू. ३.६१ )
–स्तम्भ–पु., रोग० पादयोः स्तब्धता ( असंसू. ३.६१ )
–स्फुटन–न., रोग० पादयोर्विदारणम् पाददारी ( असंसू. ३.६१ )
–हर्ष–पु., वातरोग० तल्लक्षणम्–कफमारुतकोपतश्चरणौ हृष्येते प्रसुप्तवच्च भवतः ( चसि. १२.१८-(१५); सुनि. ५.२३; असंनि. १५.५८ )
–हीन–वि.. चतुर्थभागहीनम् ( अहृसू. १९.२२ )
पादांश–पु., पादश्चतुर्थो भागः अंशोऽपि तुरीयांशः तेन पादांशः षोडशांशः ( असंसू. ९.३४ )
पादाघात–पु., पद्भ्यामङ्गविमर्दनम् ( अहृसू. ३.१० )
पादाङ्गुली–स्त्री., शारीर० चरणाङ्गुलि ( सुशा. ५.१९ )
पादाङ्गुल्यस्थि–न., चरणाङ्गुलौ स्थितमस्थि, प्रतिपादाङ्गुलि त्रीण्यस्थीनि (चशा. ७.६;सुशा.५.१९)
पादाङ्गुष्ठ–पु., शारीर० चरणाङ्गुष्ठः मानतोऽसौ नखं विहाय स्वाङ्गुलद्वयदीर्घः ( सुसू. ३५.१२ )
पादापकृष्ट– वि., आस्थापनबस्तिसम्बद्धैः यथा वयःप्रभृतिवाक्यसूचितैः त्रिभिः पादैर्हीनम् ( ड. सुचि. ३५.१८ )
पादाभ्यङ्ग–पु., उपक्रम० पादयोस्तैलविमर्दनम् तद्गुणाः–पादयोः सिरास्नायुसङ्कोचाभावकृत् निद्राकरो देहसुखकरश्चक्षुष्यः श्रमसुप्तिनुत् पादत्वङ्मृदुकारी च ( चसू. ५.९२; सुचि. २४.७१; असंसू. ३.६० )
पादार्ति–स्त्री., रोगलक्षण० पादशूलम् ( चसू. १४.२३ )
पादावकृष्ट–वि., चतुर्थभागावशिष्टम् (ड. सुचि. ३७.४) द्र० 'पादापकृष्ट'.
पादिन्–वि., पादयुक्तो कूर्मकुम्भीरकर्कटककृष्णकर्कटकशिशुमारनक्रगोधाघण्टिकाप्रभृतयः पादिनः। तद्गुणाः–स्वादुरसपाकाः शीताः स्निग्धा वर्चस्या बृंहणा बहुमलकरा वृष्या बल्या श्लेष्मवर्धनाः पित्ते हिता वातनाशकाश्च ( सुसू. ४६.१०९–११०; रा. १७.२३ )
पादुका–स्त्री., काष्ठनिर्मितं पादत्राणम् ( असंसू. ८४३ )
पान–न., द्रवद्रव्यस्य गलादधःकरणव्यापारः, पीतिः ( चसू. १.८७ )
मद्यपानम् ( सुउ. ४७.२२ )
पेयम् ( सुउ. ५७.१२ )
–कषाय–पु., अनुपानार्थमुपयुज्यमानः कषायः, तप्तलोहानां निर्वापणोपयोगी त्रिफलादिकषायः ( र. २८.३ )
–काल–पु..तृष्णा ( का. भोजनक )
–तृषा–स्त्री., मद्यातिपानजा तृट् ( चचि. २२.५१ )
–त्रिक–न., त्रिविधं पानम्, वातपित्तकफकरम् ( चचि. २४.६८ )
–प–वि., मद्यपः ( अहृसू. २९.१५ )
–विभ्रम–पु.. रोग० मद्यजोऽयं त्रिदोषजश्च तल्लक्षणानि –हृद्गात्रतोदो वमथुर्ज्वरः कण्ठधूमो मूर्च्छा कफस्रवणं मूर्धरुजा विदाहः सुरान्नविकृतेषु द्वेषश्च ( सुउ. ४७.२२; का पानात्ययचि. ५ )

**पानक**-न., पेय० पीयते इति पानकम्, तत् साम्लं सतीक्ष्णं सहिमं सकर्पूरं श्रेष्ठमस्ति। द्राक्षाखर्जूरकोलादिभिः पानकानि क्रियन्ते ( चसू. २७.२७९; सुसू. ४६.३८९; असंसू. ७.७७; अहृसू. ६.३५ )
**पानक**-पु., पानकम् ( सुसू. ३८.७६ )
**पानकि**-पु., रोग० पानकी ( सुउ. ४४.६ )
**पानकी**-पु., पाण्डुरोगभेदः, तल्लक्षणम्-सन्तापो भिन्नवर्चस्त्वं बहिरन्तःपीतता पाण्डुता नेत्ररोगश्च नेत्रयोः पाण्डुता वा ( ड. सुउ. ४४.१२ )
**पानविक**-पु., प्रतुदजातीयः पक्षी ( चसू. २७.५३ )
**पानाजीर्ण**-न., मद्यपानजो रोगः, त्रिदोषजः, तल्लक्षणम्-आध्मानमुद्गिरणाम्लरसो विदाहश्च (सुउ. ४७.२०)
**पानात्यय**-पु., रोग० मदात्ययः, अयमतिमद्यपानाज्जायते। वातपित्तकफसन्निपातजभेदादयं चतुर्विधः। वातजलक्षणम्-स्तम्भोऽङ्गमर्दो हृदयग्रहस्तोदः कम्पः शिरोरुक् च। पित्तजलक्षणम्-स्वेदःप्रलापो मुखशोषणं दाहो मूर्च्छा मुखनेत्रपीतता च। कफजलक्षणम्-वमथुः शीतकफप्रसेकश्च। सन्निपातजलक्षणम्-अस्मिन् दोषत्रयलक्षणानि स्तम्भस्वेदवमथ्वादीनि
**-चिकित्सित**-न., अध्या० ( काचि. १ )
**पानात्ययप्रतिषेधः**-पु., अध्याय ( सुउ.४७ )
**पानात्ययोद्दिष्टविकार**- ( परिव० ) पु., मदात्ययजन्यो व्याधिः, विच्छिन्नमद्यस्य सहसाऽतिमद्यसेवनाद् ध्वंसकविक्षयौ नाम विकारौ भवतः (सुउ.४७.४९)
**पानापक्रम**-पु.. रोग० मद्यपानस्य सहसा विच्छेदेनासौ भवति ( का पानात्यय चि. )
**पानीय**-न., जलम् ( सुसू. ४५.३; असंसू. ६.३०; ध. ६.३०२ )
**-क्षार**-पु., पानयोग्यः क्षारः, तिलेक्षुरकपालाशादिभिराहृतः क्षारो गुल्महरो वातरोगहरश्च काकादनी द्रवन्त्यादिभिश्च पानीयक्षारा निर्मीयन्ते। ( सुउ. ४२.४०; सुचि. १९.६३ )
**पानीयालु**-पु., वनस्पति० तद्गुणाः-सन्तर्पणकरत्रिदोषघ्नश्च ( रापरि. ७.३१ )
**पानीयाश्वा**-स्त्री., वनस्पति० बल्वजा ( रापरि., ८.४० )
**पानोष्मन्**-पु., मद्यपानजनितमौष्ण्यम् ( सुउ.४७.५४ )
**पाप**-न., शास्त्राविहितं कर्म, पातकम्, हिंसा, स्तेयम् अन्यथाकामः पैशुन्यं परुषानृतवचनं संभिन्नालापः व्यापादः, अभिध्या दृग्विपर्ययः इति दशविधं पापं कर्म ( अहृसू. २.२२ )
**-कर्मालय**-पु., पापकर्मणां गृहम्, यत्र हिंसादीनि पापकर्माणि क्रियन्ते तत् ( असंशा. १२.१९ )
**-घ्न**-पु., वनस्पति० तिलः ( ध. ६.१२२ )
**-चेलिक**-न., शाक० पाठाशाकम् ( चक्र. चचि. ३.१८९; ड. सुउ. ३९.१५१ )
**(-चेलिका)**-स्त्री., वनस्पति० पाठा ( ध. १.७०; चचि. ३.१८९ )
**-नाशिनी**-स्त्री. वनस्पति० शमी ( ध. ५.९५ )
**-रोग**-पु., पापकर्मजः पापमूलको वा रोगः, कुष्ठम् ( सुनि. ५.३०; र. ११.८३; सुचि. ९.४५ )
**पाप्मन्**-वि., दुःखहेतुत्वात् पापरूपः ( श्लेष्मा ) ( चसू. १७.११७ )
अशुभम् ( सुसू. ४.३३ )
मालिन्यम् ( सुचि. २८.३ )
पापम् ( हे. अहृसू. २.१६ )
पु., ज्वरः पापनिर्वर्त्यत्वात् पाप्मा ( चचि. ३.१३; असंनि. १.७ )
रोगः (सुचि. २८.३; र. २९.१५६)
**(पाप्म)-हर**-वि., दौर्भाग्यनाशनम् ( असंसू. ६.१४८ )
**पामा**-स्त्री., रक्तदोषजविकारेष्वेकः ( चसू. २८.१३ ) पित्तश्लेष्माधिकं कुष्ठम् ( चचि. ७.३० ) क्षुद्रकुष्ठेष्वेकम्। तल्लक्षणम्-पित्तश्लेष्माधिक्यात् श्वेतारुणश्यावाः कण्डूलाः पिडका भवन्ति ( चचि. ७.२५ ) अणुकाः सास्रावाः परिदाहकाश्चेति ( सुनि. ५.१४ का. कुष्ठचि. असंनि. १४.३० )
**-हर**-वि., खर्जूविनाशकम् (असंसू. ६.१४८)
**पायन**-न., औषधदानम् ( कासू. १९ )
**( पायना )**-स्त्री., संस्कार० कुण्ठितशस्त्रस्य तेजनं नाम तीक्ष्णत्वापादनम्, पायना त्रिविधा, क्षारोदकतैलेषु सा लौहकाराणां प्रसिद्धा। तत्र क्षारपायितं शस्त्रं शरशल्यास्थिच्छेदनेषु, उदकपायितं मांसच्छेदनभेदनपाटनेषु, तैलपायितं सिराव्यधनस्नायुच्छेदनेषु ( सुसू. ८.१२ )
**पायस**-पु., न., कृतान्न० पयसि पयसा वा संस्कृतमन्नम् ( चसू. १३.६६; र. १५.६७; अहृसू. ७.३८ ) अयं मन्थानुपानः सन् विरुद्धत्वात् श्लेष्मप्रकोपणः, ( चसू. २६.८४; असंसू. ९.१७; सुसू. ४६.३४६ ) क्षीरसिद्धास्तण्डुलाः ( ड. सुउ. ६०.१२ ) वातशूले स्वेदनायोपयुक्ताः ( सुउ. ४२.८९ ) पिण्डस्वेदोपयोगि द्रव्यम् ( चसू. १४.२५ ) पायसकृतिः-अतसतण्डुलो धौतः परिभृष्टो घृतेन खण्डयुक्तदुग्धेन पाचितः पायसो भवति ( वै. श. सि. )

पायसगुणाः- विष्टम्भी गुरुर्बल्यो मेदःकफकरश्च ( सुसू. ४६.३४५ ) व्रणिनामहितः पूयवर्धनो व्रणदुष्टिकरश्च ( सुसू. १९.१६ ) पायसजुष्टे शीतोदकमनुपानम् ( सुसू. ४६.४२४ ) सुखोदकमनुपानमिति ( सुसू. ४६.४२५ )

**पायसाह्व**-पु., सुगन्धिद्रव्य० श्रीवेष्टकः ( ध. ३.१३३ )

**पायु**-पु., शारीर० कर्मेन्द्रिय० ( चशा. ७.७ ) एकादशेन्द्रियेष्वेकं गुदम् (सुशा. १.४; असंशा. ५.४४)

**-पाक**-पु., रोगलक्षण० गुदपरिकर्तनम् ( असंशा. ११.१२ )

**-प्रमार्जनी**-स्त्री., शलाका० पायुशलाका, सङ्ख्यया द्वे आसन्नार्थे दशाङ्गुला, दूरार्थे द्वादशाङ्गुला ( अहृसू. २५.३४ )

**-शोफ**-पु., रोगलक्षण० गुदशोफः ( चसि. ७.४१ )

**-सन्ताप**-पु., रोगलक्षण० गुददाहः (असंनि. ८.१०)

**पाय्वन्तदेश**-पु., शारीर० गुदस्य पर्यन्तदेशः गुदस्यान्तः ( ड. सुनि.४.१० )

**पारद**-पु., खनिज० शम्भुरेतः ( मुचि. २५.३९ ) क्षेत्रभेदेन पारदः पञ्चविधः, रसरसेन्द्रसूतपारदमिश्रकश्चेति ( र.१.६६ ) तत्र सर्वधातूनां रसनान्नाम भक्षणाद् रसः, रसोपरसराजत्वाद् रसेन्द्रः, एतौ रसायनोपयोगिनावपर्यतिदुर्लभौ ( र.१.६८-६९ ) देहलोहसिद्धिं सूते इति सूतः ( र.१.७७ ) रोगपङ्काब्धिमग्नानां पारदानात् पारदः ( र.१.७८ ) सर्वधातुगततेजोभिर्मिश्रितत्वात् मिश्रकः ( र.१.७९ ) तेषां वर्णकर्माणि-रसो रक्तवर्णो रोगनाशकोऽमरत्वहेतुश्च, रसेन्द्रः श्यावः सर्वश्रेष्ठोऽमरत्वकरश्च, सूतः पीतो देहसिद्धिकरो जरामरणहरश्च, पारदः श्वेतो रोगनाशको जरामरणहरश्च, मिश्रकश्चित्रवर्णः सर्वव्याधिजरामरणहरश्च ( र. १.६७-७९ ) तदाहरणप्रकारः—दरददेशेऽव्ययं लभ्यते । अग्निवक्त्रतः पतितः पारदः पृथिव्यां लीनो भवति । तत्रस्थां मृत्तिकां पातनायन्त्रे क्षिप्त्वा ततः पारदं प्राप्नुवन्ति ( र.१.८९ ) हिङ्गुलादपि पारद आह्रियते । पारदस्याष्टादशसंस्काराः—स्वेदनं मर्दनं मूर्च्छनमुत्थापनं पतनं रोधो नियामनं सन्दीपनं गगनभक्षणं सञ्चारणं गर्भद्रुतिर्बाह्यद्रुतिः सूतजारणा ग्रासः सारणकर्म सङ्क्रामणं वेधकरणं शरीरयोगश्चेति, तत्र स्वेदनमारभ्य सन्दीपनपर्यन्तं उल्लेखिता अष्टौ संस्कारा रसायनोपयोगिनः, गगनभक्षणाद्योऽवशिष्टा दश संस्कारा रसायने नोपयुज्यन्ते । संस्कारसंस्कृतः पारदो दोषरहितः कर्मोपयोगी च भवति । पारदे विषवह्निमलाश्चेति नैसर्गिकास्त्रयो दोषाः, ते क्रमशो मरणसंतापमूर्च्छाप्रदाः ( र. ११.१७ ) नागवङ्गाविति यौगिकौ दोषौ, तौ जाड्याध्मानकुष्ठादौ (र. ११.१८) पर्पटीपाटिनी भेदी द्रावी मलकर्यन्धकारी ध्वांक्षी चेति सप्तकञ्चुका यथानामक्रियाकारिणः ( र. ११.२२ )

स्वेदनाद्यष्टसंस्कारविधिर्गुणाश्च—
त्र्यूषणादिभिर्दिनत्रयस्वेदनेन पारदगतमलशैथिल्यं भवति । लवणासुर्यादिभिर्मर्दनेन स्वेदनोरिक्तनदोषो नश्यति । गृहकन्यात्रिफलादिभिर्मूर्च्छनेन पारदो विषादिदोषरहितो भवति । काञ्जिकक्वाथादिभिरुत्थापनसंस्कारेण पारदस्य पूतिदोषो नश्यति । ऊर्ध्वाधस्तिर्यक्पातनेन रसायनयोग्यः शान्तश्च भवति । सृष्ट्यम्बुजादिभिः रोधनेन पारदोऽनुत्तमवीर्यो भवति । कर्कोट्यादिभिर्नियामनेन तच्चापल्यं नश्यति मरिचादिभिर्दीपनेन पारदो ग्रासार्थी भवति । एवमष्टसंस्कारसंस्कृतः पारदः सर्वरोगहरो देहलोहकरश्च भवति ( र. ११.२६-५९ )

पञ्चविंशतिसङ्ख्याकाः पारदबन्धाः । तैश्च पारदगतं चाञ्चल्यं दुर्ग्रहत्वं च नश्यति । ते चैते-हठारोटौ क्रियाहीन आभासः पिष्टिकाक्षारः खोटः पोटः कल्कबन्धः कज्जली सजीवो निर्जीवो निर्बीजः सबीजः शृङ्खला द्रुतिबन्धो बालकः कुमारकस्तरुणो वृद्धो मूर्तिबन्धो जलबन्धोऽग्निबन्धः सुसंस्कृतबन्धो महाबन्धश्चेति (र.११.६२-६४ ) पारदसेवने पथ्यवर्गः- घृतं सैन्धवं धान्याकं जीरकमार्द्रकं तण्डुलीयकं पटोलमलाब्वादिकं गोधूमो जीर्णशालिर्गव्यं क्षीरं दधि हंसोदकं मुद्गाश्चेति (र. ११.१२५-२६) तत्सेवनेऽपथ्यानि-कण्टकारीफलं काञ्जिकं कमठस्तैलं राजिका निम्बूककतककलिङ्गकफलादीनि तथा कङ्कुकन्दुककोलकुक्कुटकलक्रोडकुलत्थादीनि च ( र. ११.१२९,१३१ )

पारदव्यापत्सामान्यचिकित्सा—पारदसेवने उद्गारे सति सजीरकं दध्यन्नम्, वातक्षोभे नारायणादितैलैरभ्यङ्गः, अरतौ मस्तके शीतजलसेकः, तृष्णायां नारिकेलजलादिपानं च ( र. ११.१३३-१३७) धन्वन्तरिनिघण्टूक्ताः पारदगुणाः- मधुराम्ललवणकटुतिक्तकषायरसो योगवाहक आयुष्यो बल्यः कृमिकुष्ठादिसर्वरोगघ्नश्च ( ध. ६.३७ )

हिं.—पारा.
**म.—पारा.**
गु.—पारो.
बं.—पारा.
त.—पातरचं.
फा.—सिमाब, उसीबक.

**पारदादिवर्ति**-स्त्री., सिद्धयोग० इयं तिमिराधिमन्थार्मपिल्लशुक्रादिनेत्ररोगविनाशिनी ( र. २३.४१ )

**पारदीय**-न., खनिज० पारदः ( ध. ६.३७ ) पारा.

**पारम्पर्यानुबन्ध**-पु., पारम्पर्येण सन्तानन्यायेनानुबन्धः ( चक्र. चशा. १.९२ )

**पारशिव**-न., खनिज० लोहम् ( ध. ६.२६ )

**पारावत**-न., फल० मधुराम्लरसं गुर्वरुच्यत्यग्निनाशनम् ( चसू. २७.१३४; सुसू. ४२.११ ) पित्तश्लेष्महरं ग्राहि विष्टम्भि शीतलं वातनुच्च ( सुसू. ४६.१५८ )
पु., धान्य० व्रीहिभेदः ( सुसू. ४६.१२ )
पक्षि० प्रतुदजातीयः, पारावतगुणाः – मधुरपाकी कषायो गुरुर्विशदो रक्तपित्तप्रशमनश्च ( सुसू. ४६.७० ) स्वादुः शीतः स्निग्धो बल्यो वीर्यवर्धनः पित्तघ्नो दाहघ्नश्च ( धपरि. ६.५६; असंसू. ७.९० ) गरविषहरः ( असंउ. ४० )
द्र० 'कपोत'
हिं.—परेवा.
**म.—पारवा.**
बं.—पायरा, पारवा.

**-पदी**-स्त्री., वनस्पति० ज्योतिष्मती ( चक्र. चक. १.२३ )
ईषल्लोहितो हंसपदीभेदः ( ड. सुचि. ९.३२ )
तेजोवती ( रा. ३.३९४ )
काकजङ्घा ( ध. ४.२३ )

**-शकृत्**-न., पारावतस्य वर्चः कंठमार्गगे रक्तपित्ते ग्रथितरक्ते चोपयुक्तम् ( चचि. ४.७२ ) कर्णिकापातने लेपोपयोगि ( सुक. ८.१३६ )

**पारावतक**-पु., धान्य० व्रीहिः ( अहृसू. ६.९ )

**पारावतामिष**-न., पारावतपक्षिणो मांसम्, इदं गरविषे उपयुज्यते ( असंउ. ४० )

**पाराशरघृत**-न., सिद्धघृत० राजयक्ष्महरमिदम् ( असंचि. ७. )

**पाराशर्य**-पु., ऋषि० ( सुशा. ३.३२; कासि. ३ )

**पारिक्षि**-पु., ऋषि० रोगापहरणचिन्तनार्थं हिमवतः पार्श्वे समेतानां अगस्त्यवामदेवादीनामेकतमः (चसू.१.९)

**पारिगर्भिक**-पु., बालरोग० तल्लक्षणम्– गर्भिण्या मातुः स्तन्यं पिबतः कुमारस्य कासाग्निसादवमथुतन्द्राकार्श्यारुचिभ्रमाः कोष्ठवृद्धिश्च भवति ( मा. )

**पारिजात**-पु., वनस्पति० देवदारुः ( इन्दु. असंउ. ६ )
वनस्पति० इदम् उदकमेहे शस्यते ( सुचि.११.९ )
पारिभद्रकः, उदकमेहेऽस्य कषाय उपयुक्तः ( सुचि. ११.९ )

**( पारिजाता )**-स्त्री., तेजोवती ( ध. १.२६६ )

**पारिजातक**-पु., वनस्पति० पारिभद्रः ( रापरि. ८.१० )

**पारिभद्र**-पु., वनस्पति० निम्बः ( र. २८.१२ )
पर्वतनिम्बः ( ड. ) अयं मूत्रघातहरः, कण्टकिवृक्षो रक्तकुसुमः फलभद्रसंज्ञको रोहिणीसदृशपत्रः पूर्वदेशे प्रसिद्धः ( ड. सुउ. ५८.४८ ) सविषजलशोधकोऽयम् ( सु. क. ३.९ )
अस्य क्षारः क्षारकर्मण्युपयुज्यते ( असंसू. ३९.१० )
पारिभद्रगुणाः–कटुरुष्णः पथ्यो दीपनः कफवातनुदरोचकघ्नश्च ( रापरि. ८.१० )
हिं.—फरहद, पांगरा.
**म.—पांगारा, पानारा, पारिंगा.**
गु.—पारिंगा, फरहद.
बं.—पालदे मान्दारगाछ पालिधार.
त.—कलियाणमुरुक्कु.

**पारिभद्रक**-पु., वनस्पति० कण्टकिंशुकः ( इन्दु. असंउ. ४. )
मन्दारः ( इन्दु. असंउ. ६ )
निम्बः पारिजातः ( इन्दु. असंउ. १० )
निम्बः ( सुचि. ४.३२; ध. १.२९ )
देवदारुः ( सुसू. ११.११ )
पर्वतनिम्बः ( सुउ. ५४.२६ )
रक्तकुसुमः कण्टकी फलभद्राख्यः ( ड. सुक. ६.३ )
क्षारोपयुक्तो वृक्षः ( अहृसू. ३०.८ )
न., वनस्पति० कुष्ठम् ( ध. ३.४९ )

**पारियात्र**-पु., पर्वत० अत्र सोमनाम्नी वनस्पतिरुपलभ्यते ( सुचि. २९.२८; चसू. २७.२१२ ) अयं पर्वतो विन्ध्याद्रेः पश्चिमो भागः। अत्रैव प्रसिद्धः 'अरवली' पर्वतोऽन्तर्भूतः, केचन सिन्धोः पश्चिमदिक्स्थः पर्वत इति वदन्ति

**-जा**-वि. पारियात्रप्रभवा (नदी) अस्या उदकमारोग्यबलकरं पथ्यं च ( सुसू. ४५.२१ ) दोषघ्नं पौरुषकरं च ( अहृसू. ५.१२ )
शिरोहृद्रोगश्लीपदकुष्ठकरं चेति ( चसू. २७.२१२ )

**पारिषद्य**–वि., परिषदं समवैति परिषदि साधुर्वा पारिषद्यः, सभ्यः ( चसू. १५.७ )

**पारीक्षि**–पु., ऋषि० मौद्गल्यः, यजः पुरुषविषये विवदमानेष्वेकः ( चसू. २५.८ )

**पारुष्य**–न., रोगलक्षण० काठिन्यम् ( चनि. ५.७; चनि. ७.७(१) )
वाग्रूक्षता ( सुसू. २.६ )
रूक्षत्वम् ( हे. अहृसू.१२.५० )
अशीतिवातविकारेष्वेकः, त्वक्काठिन्यम् ( चसू. २०.११; असंसू.२०.१३ )

**पारूषकघृत**–न., सिद्धघृत० वातरक्त-क्षतक्षीण-विसर्प-पैत्तिकज्वरनाशनम् ( चचि.२९.५८–६० )

**पारेवत**–न., वनस्पति० फल० स्वाद्वम्लभेदेनैतद् द्विधा पालेवतं रैवताख्यं क्रमेण स्वादु शीतमम्लमुष्णं चेति ( अहृसू. ६.१३५ ) महदल्पभेदेन द्विधा। तद्गुणाः– मधुरं स्निग्धं हृद्यं वृष्यं रुच्यं शुक्रलं वातघ्नं कृमितृषाज्वरविदाहमूर्च्छाभ्रमश्रमविशोषघ्नं च ( रा. ११.८९ ) महापारेवतं गौल्यं बलकृद् वृष्यं मूर्च्छाज्वरादिघ्नमिति पूर्वादधिकगुणम् ( रा. ११.९१; असंसू. १७.४२; अहृसू. १०.२६ )
हिं.—पारेवत.
म.—पालेवत.
गु.—पालेवत.
बं.—पेयारा.

**पारेवतक**–न., वनस्पति० पारेवतम् ( रा. ११.८८ ) द्र० 'पारेवत'.

**पार्कार**–पु., पक्षि० प्रतुदजातीयः ( असंसू. ७.७३ )

**पार्थ**–पु., वनस्पति० अर्जुनः ( ध. ५.११४; असंसू. १६.१८ )

**(पार्था)**–स्त्री., वनस्पति० सुवर्चला ( अरु. हे. अहृसू. १५.२४) द्र० 'आदित्यभक्ता'

**पार्थिव**–न., वनस्पति० तगरम् ( रा. १०.१०३)
वि., पृथिवीविकारः, सुवर्णरजतमणिमुक्तादिः ( चसू. १.६८; सुसू. १.३२ )
पाञ्चभौतिकत्वेऽपि पृथिव्याख्यभूतोत्कर्षयुतं द्रव्यम्। ( चसू. २६.११ ) तल्लक्षणं गुणाश्च–गुरुखरकठिनमन्दस्थिरविशदसान्द्रस्थूलगन्धगुणबहुलम्। तथोपचयसङ्घातगौरवस्थैर्यकरं च ( चसू. २६.१६; अहृसू. ९.६ )
तद्भावाः– नखास्थिदन्तमांसचर्मवर्चःकेशश्मश्रुलोमकण्डरादयः (चशा. ७.१६) गन्धगन्धेन्द्रियसर्वमूर्तसमूहादयः (सुशा. १.१९; असंशा. ५.१३)

**(पार्थिवी)**–स्त्री., छाया० तल्लक्षणम्–स्थिरा स्निग्धा घना श्लक्ष्णा श्यामा श्वेता चेति ( चइ. ७.१२ )
**–प्रकृति**–वि., पृथ्वीभूतप्रकृतिः, तल्लक्षणम्–स्थिरविपुलशरीरः क्षमावांश्च ( सुशा. ४.८० )
**पार्पटक**–वि., शाक० पर्पटस्य सम्बन्धात् पार्पटकं पर्पटशाकम्, मण्डूकपर्ण्यादिगणोक्तम्, तल्लक्षणम्–तिक्तं शीतं कटुविपाकि कफपित्तहरं च। ( चसू. २७.९७ )

**पार्वत**–पु., वनस्पति० किराततिक्तः ( ध. १.३४ )

**( पार्वती )**–स्त्री., वनस्पति० सैंहलीपिप्पली ( रा. ६.११९ )
क्षुद्रपाषाणभेदा ( रा. ५.२१५ )
धातकी ( रा. ६.१५१ )
अतसी ( ध. ६.११५ )

**पार्वतीय**–पु., वनस्पति० अक्षोडः ( ध. ५.६० )
कीट० मशकभेदः, तल्लक्षणम्–प्राणहरकीटतुल्योऽयम्, येन सर्पवद् वेगास्तीव्रा वेदनाः सान्निपातिका रोगाः, दंशः क्षाराग्निदग्धवद् रक्तपीतसितारुणो भवति ( सुक. ८.३६; सुक. ८.१७–१८ )

**( पार्वतीया )**–स्त्री., वनस्पति० धातकी ( ध. ३.९० )

**पार्वतेया**–स्त्री., वनस्पति० जिङ्गिणी ( धपरि. ३.२२ )

**पार्श्व**–पु., न., शारीर० पर्शुकाप्रदेशः ( चसू. १८.२८; सुशा. ५.१९ ) पर्शुकास्थिभिरावृतः कक्षाया अधोभागः वामदक्षिणभेदेन ते द्वे ( चशा. ७.६; सुशा. ५.४; असंशा. ८.३० ) तत्प्रमाणम्– दशाङ्गुलविस्तीर्णे द्वादशाङ्गुलायामं च ( चवि. ८.११७ ) तत्र पर्शुकाः स्थालकानि स्थालकार्बुदानि च प्रत्येकं द्वादशास्थीनि। एवं प्रतिपार्श्वं षट्त्रिंशदस्थीनि। मिलित्वा पार्श्वयोर्द्विसप्ततिरस्थीनि ( चशा. ७.६; सुशा. ५.१९ )
**–ग**–वि., विद्यमानम् पार्श्वे (असंनि.२.८)
**–ग्रह**–पु., लक्षण० पार्श्वस्य ग्रहणवद् वेदना ( चचि. ११.१३; असंसू. २८.१०; अहृसू. १७.२६ )
**–भङ्ग**–पु., लक्षण० पार्श्वस्य भज्यमानत्ववद् वेदना ( सुसू. ३३.१४ )
पार्श्वशूलम् ( सुचि. ३४.१५ )
**–रुज्**–स्त्री., लक्षण० पार्श्वे वेदना ( असंसू. ७.१६०; अहृसू. ६.१०८ )
**–रुजा**–स्त्री., लक्षण० पार्श्वे वेदना ( अहृसू. १४.३० )
**–वेदना**–स्त्री., लक्षण० पार्श्वे स्तम्भतोदादिका पीडा ( सुनि. १.२३ )

**-शूल**-न., लक्षण० पार्श्वे शूलवेधवद् वेदना ( चसू. २३.२७ )

पु., रोग० अशीतिवातविकारेष्वेकः ( कासू. २७.१९ ) कफवातसमुद्भवोऽयम्–तत्सम्प्राप्तिलक्षणम्–कुक्षिपार्श्वव्यवस्थितः श्लेष्मा मारुतं रुणद्धि। संरुद्धमारुत आध्मानं गुडगुडायनं सूचीभिरिव निस्तोदं कृच्छ्रोच्छ्वासमनन्नाभिलाषं निद्रानाशं च करोति ( सुउ. ४२.११७-११९ )

**-संकोच**-पु., रोगलक्षण० पार्श्वोत्पाटनमिव वेदना ( ड. सुनि.९.२१ )

**-संग्रह**-पु., रोगलक्षण० पार्श्वग्रहः ( चसू. १४.२२)

**-संधि**-पु., मर्मस्थानम्, एतम् पृष्ठमर्म, जातितः सिरामर्म ( सुशा. ६.६-७ ) अधःपार्श्वान्तरप्रतिबद्धौ जघनपार्श्वमध्ययोस्तिर्यगूर्ध्वं च जघनात् पार्श्वसन्धी नाम सिरामर्मणी। प्रमाणं प्रत्येकमर्धाङ्गुलम्। तत्र लोहितपूर्णकोष्ठतया मरणम् कालान्तरप्राणहरं चैतत् (सुशा. ६.२६; असंशा. ७.१९)

**-संरोजन**-न., रोगलक्षण० पार्श्वयोः पीडनम् ( चनि. ६.१४ )

स्त्री., सिरा० सङ्ख्यया द्वे ( असंशा. ६.११ )

**पार्श्वापवृत्तशिरस्**-वि., मूढगर्भप्रकारेष्वेकः पार्श्वमध्यनिक्षिप्तशिराः ( ड. सुनि. ८.५ )

**पार्श्वाभिघात**-पु., पार्श्वसमीपेऽभिघातः ( सुशा. ६.३० )

**पार्श्वार्ति**-स्त्री., रोग० पार्श्वशूलः ( चचि. ३.२१२ )

**पार्श्वावनत**-वि., पार्श्वे नीचैः कृतम् (असंसू. ३७.२५)

**पार्श्वावमर्द**-पु., अशीतिवातविकारेष्वेकः, पार्श्वयोस्तोदनम् ( चसू. २०.११; असंसू. २०.१३ )

**पार्षत**-वि., पृषतस्य मृगविशेषस्य मांसादि ( असंसू. ८.१३० )

**पार्षद**-वि., सभ्यः सज्जनः ( ड. सुशा. ३.२४ )

रुद्रानुचरः ( सुशा. ३.२४ )

**पार्ष्णि**-पु., स्त्री., शारीर० पादस्य पश्चिमदेशेऽवस्थितो गुल्फाधो मांसलो भागः ( चवि. ८.१०७ ) एकमेव पार्ष्णौ अस्थि ( सुशा. ५.१९ )

पञ्चचतुरङ्गुलायतविस्तृतेयम् ( सुसू. ३५.१२ )

द्वे पार्ष्ण्योरस्थिनी ( चशा. ७.६ )

**-दहन**-न., उपक्रम० पार्ष्णौ नाम गुल्फाधोभागेऽग्निकर्म ( सुउ. ५६.१२ )

**-शूल**-न., रोगलक्षण० पार्ष्णौ शूलवद्वेदना ( चसि. २.१६ )

**-शोष**-पु., रोगलक्षण० पार्ष्णेः शोषः शुष्कता ( चसि. २.१६ )

**-स्तम्भ**-पु., रोगलक्षण० पार्ष्णेः स्तब्धता ( चसि.२.१६ )

**पार्ष्णिक**-न., शारीर० पार्ष्णिः ( अहसू. १९.२८; असंसू. २८.३२ )

**पार्ष्ण्यस्थि**-न., अस्थि० पार्ष्णेरस्थि ( चशा. ७.६; सुशा. ५.१९ )

**पालक**-पु., वनस्पति० चित्रकः ( रा. ६.१२४ )

न., शालिपर्णीभेदः ( ध. १.८८ )

कन्दविष० त्रयोदशानां कालकूटवत्सनाभप्रभृतीनामेकतमं, तेन ग्रीवादौर्बल्यवाक्सङ्गौ भवतः ( सुक. २.५-१३ )

**पालकाख्य**-पु., वनस्पति० निष्पावः ( ध. ६.११० )

**पालक्य**-न., वनस्पति० तद्गुणाः– मधुरमीषत्कटुकं शीतलं पथ्यं ग्राहि सन्तर्पणं रक्तपित्तहरं च ( रापरि. ७.७२ )

हिं.—पालक, पालंकी.

**म.—पालख.**

गु.—टांको, पालखनी भाजी.

बं.—पालङ्कशाक.

**पालङ्क्या**-स्त्री., पत्रशाक० फञ्जीचिल्ल्यादिगणोक्तेयम् ( चसू. २७.१०० ) तद्गुणाः– रूक्षा बद्धविण्मूत्रा वातकृत् पित्तकफे हिता च ( सुसू. ४६.२६१; अहसू. ६.८४ )

**पालल**-पु., कृतान्न० पललम्–गुडाद्युपेतं तिलपिष्टम्, तेन निर्मितः पाललः, श्लेष्मजननोऽयम् (सुसू.४६.४००)

**पालाश**-वि., पलाशसंबन्धि ( मूलम् ) पलाशस्य इदम् ( चशा. ८.१० )

**पालाश**-पु., सुगन्धि० शटी, ( ड. ) विदारिकारोगे लेपार्थमुपयुज्यते ( सुचि. २०.१४ )

**-यूष**-पु., ( परिव० ) यूषः पलमश्नातीति पलाशो मांसादः मांसादमांसं तत्सम्बन्धी पालाशः, रसः पित्तशूले हितः ( सुउ. ४२.१०७ )

**-शोणित**-न., किंशुकरसः ( ड. ) पलाशस्वरसम् ( सुउ.१०.७ )

**-सर्पिस्**-न., सिद्धघृत० इदं रक्तपित्तहरम् ( सुउ. ४५ २९ )

**पालि**-स्त्री., शारीर० कर्णपालिः ( सुसू. १६.२२ )

कर्णलतिका, कर्णशष्कुलिः ( सुसू. १६. १० )

**-वर्धनतैल**-न., सिद्धयोग० शतावर्यश्वगन्धादिविपक्वमेतत् कर्णपालिविवृद्धिकरम् (सुसू. १६.२१-२२)

-शोथ-पु., कर्णपालिरोग० उन्मन्थः, बलात् कर्णं वर्धयतः कफपित्ते प्रकुपिते स्तब्धमवेदनं कण्डूलं शोथं पाल्यां जनयतः ( र. २४.१ )

-शोफ-पु., कर्णपालिरोग० उन्मन्थः ( अहृउ. १७.२३ )

-शोष-पु., रोग० पाल्यामसौ भवति। तल्लक्षणम्- कर्णसिरास्थो वायुः पालिं शुष्कां करोति ( र. २४.१ )

पालिक-वि., तोलकचतुष्कात्मकपलप्रमितम्, पलमात्रम् ( सुचि. ३८.४४; र. १०.२३ )

( पालिका )-स्त्री., वनस्पति० अतसी ( ध. ६.११५ )

आलवालम् ( र. ५.३६ )

पात्र० लोहकटाहः ( र. १४.८३ )

दर्वी ( र. ७.५ )

-यन्त्र-न., यन्त्र० विशेषतो नताग्रभागमूर्ध्वदण्डं दर्वीव वर्तुलाकारं लोहमयं पात्रम्। इदं बलिजारणविधौ उपयुज्यते ( र. ९.५० )

पालित्य-न., रोग० पलितम् केशशौक्ल्यम् ( चवि. १.१७ )

पालिन्-पु., वनस्पति० चित्रकः ( ध. २.८० )

(पालिनी)-स्त्री., वनस्पति० त्रायमाणा ( रा. ५.३७९ )

पालिन्द-पु., वनस्पति० कुन्दुरुः ( ध. ३.१३१ )

पालिन्दर-पु., सर्प० मण्डली ( सुक. ४.३४-(२) )

(पालिन्दी)-स्त्री., वनस्पति० श्यामलता विषघ्नगणोक्तमेकं द्रव्यम् ( चसू. ४ (१६) ११ )

कालवल्ली ( ड. सुउ. २६.४० )

त्रिवृत् कालवल्ली ( ड. सुक. ५.७० )

श्यामा त्रिवृत्, सारिवा ( ड. सुउ. १०.७ )

श्वेतत्रिवृत् ( असंसू. ८.४९ )

त्रिवृत् ( इन्दु. असंउ. ४२; असंसू. १५.२० )

पालिन्दि-स्त्री., वनस्पति० कालवल्ली, कफविसर्पे हिता ( सुचि. १७.१५ )

पाली-स्त्री. शारीर० कर्णपाली ( कासू. २१; सुचि. २५.२७ )

खल्वस्य कोणभागः ( र. ९.८४ )

-शोष-पु., कर्णपालिगतरोग० पालिशोषः ( असंउ २१. )

पालेवत-न., वनस्पति० पारेवतम् ( ध. ५.६६ )

पाल्लविक-वि., पल्लवो विषयैकदेशः, तत्र भवः पाल्लविकः, प्रादेशिकः ( चसू. ३०.७२ )

पाल्यामय-पु., कर्णपालिगतो रोगः कर्णपाल्यामयाः पञ्च-परिपोट उत्पात उन्मथो दुःखवर्धनः परिलेही चेति ( सुचि. २५.३ )

पाल्वल-वि., पल्वलोद्भवम् ( जलम् ) तद्गुणाः— विपाके मधुरं गुरु विशेषाद्दोषलं च ( सुसू. ४५.३६ )

पावक-पु., वनस्पति० चित्रकः ( र. २०.५६; ध. २.८० )

चित्रकभेदः रक्तचित्रकः ( रा. ६.१२७ )

जठरानलः ( सुसू. ४६.४९३; अहृसू. ८.२४ )

न., वनस्पति० कुसुम्भम् ( ध. ६.११८ )

-संनिभ-वि., वर्णौष्ण्यादिभिरग्निसदृशः ( स्फोटः ) ( सुनि. १३.१९ )

-स्थान-न., शारीर० ग्रहणी, पित्तस्थानम् ( चचि. १५.२१८ )

पावकोच्छिष्ट-पु., कोकिलः ( र. ७.१६ )

पावन-पु., वनस्पति० रुद्राक्षः ( रापरि. ११.१५ )

भृङ्गराजभेदः पीतभृङ्गराजः ( रा. ४.२१ )

(पावनी)-स्त्री., वनस्पति० तुलसी ( रा. १०.७७ )

जाङ्गम० गोरोचना ( ध. ३.२० )

मूषा० ( र. १०.१ )

ग्रह० पूतना ( का. बालग्रहचि. )

-ध्वनि-पु.,जाङ्गम० शङ्खः ( रा. १३.२४३ )

पाश-पु., बन्धनहेतुको निगडादिः ( सुउ. ६२.१८ )

बन्धनम् ( सुसू. २७.२२ )

रज्जुवलयः ( सुसू. २९.७ )

जालम् ( असंशा. १२.४ )

सूच्यादिछिद्रस्थानम् ( अहृसू. २६.२०; असंसू. ३४.३० )

पाशव-वि., तामससत्त्व० तद्गुणाः- दुर्मेधस्त्वं मन्दता स्वप्ने मैथुननित्यता जुगुप्सिताऽऽचाराहारत्वं निराकरिष्णुता च ( चशा. ४.३९( १ ); सुशा. ४.९५)

-रस-पु., तृणरसः, नेत्ररोगेषूपयुक्तं द्रव्यम् ( काखिल. १३.५७ )

पाशिका-स्त्री., वृक्ष० दाक्षिणात्येषु प्रसिद्धाः ( असंउ. ६ )

पाशुपत-पु., वनस्पति० वसुकः ( रा. १०.३३ रा. परि. ५.३७ )

पाषण्ड-(परिव०) पु., कापालिकादिः (चचि. २३.१६०)

पाषाण-पु.,शिला ( चचि. २१.१३१; असंसू. ६.४६ )

-कदली-स्त्री., वनस्पति० काष्ठकदली ( ध. ४.७८ )

–गर्दभ–पु.,क्षुद्ररोग० तल्लक्षणम्–कफवाताभ्यां हनुसन्धौ स्थिरोऽल्परुजः शोथो भवति ( सुनि. १३.१३; असंउ. ३६ )

–गैरिक–न., खनिज० गैरिकम् ( ध. ३.१६७; र. ३.४७ )

–बहल–वि., प्रस्तरबहुलम् ( र. २.८२ )

–भेद–पु., वनस्पति० मूत्रविरेचनीयगणोक्तमेकं द्रव्यम् ( चसू. ४.१५(३५) वातकृच्छ्रहरं द्रव्यम् ( सुउ. ५९.१७ ) तद्गुणाः– मधुरस्तिक्तः शीतस्त्रिदोषघ्नो शूलहृद्रोगप्लीहरोगगुल्मार्शोबस्तिशुद्धिकरो मूत्रकृच्छ्रमूत्रशर्कराशिश्नशूलतृषादाहमेहाश्मरीविनाशनश्च ( ध. १.१५७; र. २९.६४; असंसू. १५.३५ )

हिं.—पाखानभेद.

म.—पाषाणभेद.

गु.—पाषाणभेद.

बं.—पाथरचूरी.

त.—चेरुपूळै.

–भेदक–पु., वनस्पति० पाषाणभेदः ( ध. १.१५७ )

–भेदादिघृत–न., सिद्धघृत० वाताश्मरीनाशनमिदम् ( सुचि. ७.५-८ )

–भेदिन्–पु., सिद्धयोग० अश्मरीनाशकोऽयम् ( र. १७.४ )

पाषाणान्तक–पु., वनस्पति० अश्मन्तकः (रा. ९.२९०)

पिक–पु., प्रतुदजातीयपक्षि० कोकिलः ( रा. परि. २३.६८; पृ. ४२६ )

–बान्धव–पु., वनस्पति० आम्रः ( ध. ५.२ )

–भक्षा–स्त्री., वनस्पति० जम्बूभेदः, भूमिजम्बूः ( रा. ११.१३४ ) द्र० 'जम्बू'

–राग–पु., वनस्पति० आम्रः ( रा. ११.३ )

पिकेक्षण–पु., वनस्पति० कोकिलाक्षः (रा. परि. ४.४९)

पिङ्ग–पु., मिश्रधातु० पित्तलम् ( ध. ६.१८ )

न., वनस्पति० वालकम् ( ध. १.४७ )

खनिज० हरितालम् ( रा. १३.६५९ )

( पिङ्गा )–स्त्री., वनस्पति० हरिद्रा ( ध. १.५४ )

वनस्पति० वंशरोचना ( रा. ६.८६ )

भैषज्य० गोरोचना ( ध. ३.२० )

लौम्यलूता० द्वयमण्डजा ( असंउ. ४४ ) तद्दष्टलक्षणानि–दंशोऽग्नि–दग्धाभो भवति । स्फोटो बहुस्रुतिस्तीव्रशोफज्वररुजाहृत्पीडादाहतृड्युक्तश्च भवति ( असंउ. ४५ )

–मूल–न., वनस्पति० गर्जरम् ( रा. ७.९८ )

–सार–न., खनिज० हरितालम् ( रा. १३.५९ )

पिङ्गाक्ष–वि., लक्षण० पिङ्गे रक्तवर्णे चक्षुषी यस्य सः ( असंशा. २.५७ )

पिङ्गभास–पु., सविषकीट० गोघेरकेष्वेकस्तेन दष्टस्य शोफो दाहरुजौ च भवतः ( सुक. ८.२८ )

पिङ्गल–पु., सर्प० मण्डली ( सुक. ४; ३४. (२)

न., वनस्पति० गर्जरम् (ध. ४.६९)

मिश्रधातु० पित्तलम् ( रा. १३.१७ )

( पिङ्गला )–स्त्री., वनस्पति० हरिद्रा ( रा. ६.८० )

भैषज्य० गोरोचना ( ध. ३.२० )

मिश्रधातु० पित्तलम् ( ध. ६.२० )

जलूका०, निर्विषाणां जलूकानामन्यतमा, किञ्चिद्रक्ता वृत्तकाया पिङ्गाऽऽशुगा च ( सुसू. १३.१२ ) द्र० 'जलौका'

पक्षि० ( असंशा. १२.९ )

कीट० मक्षिकाभेदः द्र० 'मक्षिका' ( सुक. ८.३५ )

–नामक–न., निर्यास० तुरुष्कः ( ध. ३.२३ )

–लोह–न., मिश्रधातु० पित्तलम् (रा. १३.१७)

पिचु–पु., स्त्री., स्थूलकर्पटिका ( चक. चचि. १९.४६ )

कार्पासस्य वस्त्रम् (चशा. ८.३२)

कार्पासतूला ( सुचि. १.४० )

बीजहीनः कार्पासः ( सुसू. १३.१९ )

मान० कर्षः ( चक. १२.९० )

वनस्पति० कार्पासी ( रापरि. ४.४५ )

फल० वातामादिफलवर्गोक्तः ( सुसू. ४६.१८७ )

–मन्द–पु., वनस्पति० किराततिक्तः ( ध. १.३४ )

निम्बः ( ध., १.२९; सुचि. २२.५४ )

–मर्द–पु., वनस्पति० निम्बः (चक.१,२२; सुचि.९.७)

–वर्ति–स्त्री., कार्पासवर्तिः ( अहसू. २३.३ )

पिचुक–पु., रत्नविशेषः, अयं मणिरुत्तरापथे प्रसिद्धः ( चचि. २३.२५२ )

वनस्पति० करीरफलम् ( सुचि. ७.१७ ) पिचुकः करीरः तस्य फलम्

कार्पासफलम् ( ड. सुचि. ७.१७ )

( पिचुका )–स्त्री., रत्नपुष्पेति काचिदौषधिः ( इन्दु. असंउ.४२ )

पिच्चट–न., खनिज० वङ्गम् ( ध. ६.१३ )

पिच्चिट–पु., आग्नेयकीट० ( असंउ. ४३ ) सविषकीटः, अग्निप्रकृतिकोऽयं पित्तजरोगान् करोति ( सुक. ८.८–१२ )

**पिच्चिटक**–पु., कीट० ( ड. सुक. ३.५ ) शकृन्मूत्रविषोऽयम् ( सुक. ३.५ )

**पिच्चित**–न., सद्योव्रणविशेषः पाषाणलगुडादिभिरुत्पन्नः सद्योव्रणस्य प्रकारः ( सुचि. २.९–१० ) चिप्पटीभूतम्, चिर्पितम् ( ड. सुसू. ४५.११२ ) विदलितम् (इन्दुः असंउ. ३१ ) यत् प्रहारेण पीडनेन वा गात्रमस्थियुक्तमसृङ्मज्जप्लुतं पृथुतामापद्यते तत् ( असंउ. ३१ )

अस्थिकाण्डभङ्गस्य प्रकारः, तल्लक्षणम्–यदस्थि पीडितसदृशं विस्तीर्णतां गतं भवति तत् ( सुनि. १५.१० ) द्र० ' भग्न '

**पिच्छ**–न., पक्षः ( असंचि. ११ )

**(पिच्छा)**–स्त्री. वनस्पति० शाल्मली ( ध. ५.१२६ )

शाल्मली-निर्यासः ( चक. ६.८ )

शारीर० पिच्छिलभागः ( चसू. २८.४ )

**–नलिका**–स्त्री., मयूरपिच्छजा पिच्छनाडी ( अहसू. २५.२४ )

**–नाडी**–स्त्री., पिच्छनलिका ( असंसू. ३४.१३ )

**पिच्छन**–न., अत्यर्थपीडनम् ( चसू. १८.४ )

**पिच्छलक**–पु., वनस्पति० धन्वनः ( रापरि. ९ २० )

**पिच्छला**–स्त्री., वनस्पति० शूली ( रापरि. ८.६८ )

अतसी ( रा १६.१८७ )

**पिच्छा**–स्त्री., ( ध. ५.१२६ )

**–बस्ति**–पु., बस्ति० पिच्छिलद्रव्यैः कृत आस्थापनबस्तिः ( सुउ. ४०.१११ ) द्र० ' बस्ति '

**पिच्छिल**–पु., गुण० परिपक्वश्लेष्मातकमांसबब्बूलनिर्यासप्रभृतिस्थितो दृढतरश्लेषणकरो गुणविशेषः वीर्यसंज्ञकोऽयं,अम्बुगुणभूयिष्ठश्चक्षुःस्पर्शाभ्यां ग्राह्यः ( सु.सू. ४१.११ ) विशदविपरीतो द्रव्यस्य लेपने शक्तिः (सु.सू. ४१.४१) दृढतरसंयोगजनको गुणः ( च.शा. ६.१० ) : तस्य कर्माणि–जीवनो बल्यः सन्धानः श्लेष्मलो गुरुः ( सु.सू.४६.५१७ )

वनस्पति० श्लेष्मातकः (ध. ५. ९४);

शाल्मली (ध. ५.१२७)

**( पिच्छिला )**–स्त्री., वनस्पति० शाल्मली (ध. ५.१२७)

वृश्चिका ( रा.परि. ५.४० )

उपोदिका ( रा.परि. ७.७४ )

कोकिलाक्षः ( रा.परि. ४.४९ )

**–च्छदा**–स्त्री., वनस्पति० उपोदिका ( रापरि. ७.७४ )

**–द्रव्य**–( परिव० ) न., विशदविपरीतं द्रव्यम् ( सुसू. ३७.११ )

**–बीज**–न., वनस्पति० भव्यम् ( ध. ५.३९ )

**–सार**–पु., निर्यास० मोचरसः शाल्मली ( रा. ८.२१५ )

**पिच्छोत्पत्ति**–स्त्री., पिच्छाया उत्पत्तिः, जलजन्मपूर्वरूपं पिच्छोत्पद्यते ( चक. चचि. १३.४८ )

पिच्छासदृशो भागः पिच्छा; अन्ये तु भक्तमण्डसदृशीं पिच्छामाहुः (चक. चचि. १३.४९)

**पिञ्जर**–न., वनस्पति० नागकेसरम् (रा.६.७४)

खनिज० हरितालम् ( ध. ७.११९ )

**( पिञ्जरी )**–स्त्री., खनिज० अग्नौ ध्मातं ततो द्रवेऽौषधस्वरसे निर्वापितं च सत् पाण्डुपीतप्रभं जातं लोहान्तरयुतं लोहम् ( र. ८.२२ )

**–त्व**–न., रक्तवर्णः (चसू. ५.३०)

**पिञ्जरक**–न., खनिज० हरितालम् ( ध. ७.११९ )

**पिञ्जान**–न., खनिज० सुवर्णम् ( रा. १३.२ )

**पिटका**–स्त्री., लक्षण०पिडका ( असंनि. १०.३६ )

**पिटिका**–स्त्री., लक्षण० पिडका, मधुमेहे उपद्रवस्वरूपा इयम् ( असंउ. २७. )

कपालगतरोग० कपाले जाता पिटिका ( असंउ. २७. )

बालरोग० बालानामष्टौ पिडकाः स्वशरीरदोषात् स्वदोषाच्चोत्पद्यन्ते ( का द्विव्रणीयचि. )

**पिठर**–पु., पात्र० स्थाली (चसू. १५.७)

**पिडक**–पु., रोग० पिटिका ( चसू. १७.४ )

**( पिडका )**–स्त्री., रोग० पीटिका ( चसू. १६.१३; सुनि. ६.१४) रक्तप्रदोषजरोगेष्वेकः(चसू. २८.११)

बहिर्मार्गजो व्याधिः, ग्रन्थिरूपः शोफः ( चचि. १२.८८ ) तल्लक्षणानि–यस्य त्वचि रक्ते प्रकुपितं पित्तमवतिष्ठते तस्य पिडका सरागं शोथं जनयेत् ( चसू. १८.२४ )

गुदरोग० तदवस्था द्विविधाऽभिन्ना भिन्ना च तत्राऽभिन्ना भगन्दरपूर्वरूपा, भिन्ना भगन्दरा ( सुनि. ४.३ ) द्र० 'भगन्दर'

नेत्ररोग० ( सुउ. १.४० )

**पिडकिन्**–वि., पिडका व्रणौष्ठेऽणुमांसाङ्कुराः तद्युक्तः ( सुसू. २३.१८ )

**पिडकोलिका**–स्त्री., नेत्रमलः ( चक. चनि. २.६ )

**पिण्ड**–पु., वर्तुलाकृतिः ( सुशा. ३.१८ )

अञ्जन० गुटिकाञ्जनम् (असंसू. ३२) द्र० 'अञ्जन'

सारोद्धारः, तात्पर्यम् ( चवि. ८.१५ )

पिण्डकरणं मेलनमिति यावत्, जारणाया इदम् अवस्थात्मकं द्वितीयं रूपम् ( र. ८.७२-७३ )
कवलो ग्रासः ( ड. सुउ. ६४.८० )
ग्रन्थ्याकारः ( चक्र. चशा. ४.१० )
न., भैषज्य० बोलम् ( ध. ३.६२. अ. )
खनिज० लोहम् ( ध. ६.२६ )

–कन्द–पु., वनस्पति० कन्दग्रन्थिः ( रापरि. ७.२४ )

–खर्जूरिका–स्त्री., वनस्पति०
तद्गुणाः–मधुरा, शीता, गुरुः, स्निग्धा, पुष्टिदा, संतर्पणी श्रमहारिणी, वीर्यवर्धिनी, हृद्या, पित्त-कफघ्नी, दाहास्रपित्ततृष्णाश्वासनाशिनी ( रा. ११,६८–७० )
हिं.—खजूर.
**म.—शिंदी; खर्जूरी.**
गु.—खजूरी.
बं.—पिण्डखेजूर.
ता.—खजुरपुपण्डु.
फा.—तमरुतब.

–खर्जूरी–स्त्री., वनस्पति० पिण्डखर्जूरिका, (रा. ११.६८–७०; ध. ५.५५)

–गुडूचिका–स्त्री., वनस्पति० गुडूची ( रा. ३.३ )

–तालक–न., खनिज० हरितालभेदः द्र० 'हरिताल' ( र. ३.७४)

–तैल–न., सिद्धतैल० मधूच्छिष्टमंजिष्ठा सर्जरससारिवाभिः सिद्धमिदं वातशोणितेऽभ्यङ्गार्थमुपयुज्यते ( चचि. २९.१२३ ) अपरिस्रुतं किट्टयुक्तं तैलम् ( ड. सुचि. ५.१२ )

–तैलक–पु., निर्यास० तुरुष्कः ( रा. १२.३७ )

–फला–स्त्री., वनस्पति० कटुतुम्बी ( ध. १.१७०; चक. ३.३; सुचि. १८.१३ )

–मुस्त–पु., वनस्पति० मुस्ता ( ध. १.४१ )

–मुस्ता–स्त्री., वनस्पति० मुस्ता ( रा. ६.६१ )

–मूल–न., वनस्पति० तद्गुणाः– कटूष्णं गुल्मवातादिदोषनुत् ( रा. ७.५७ )
हिं.—मुला, मूलबीज.
**म.—मुळा.**
गु.—मुरी.
बं.—मुला.
ता.—मूलाङ्गी.

–मूलक–न., वनस्पति० मूलकभेदः। द्र० 'मूलक' (रा. ७.५७)

–रोहिणक–पु., वनस्पति० विकङ्कतः ( रा. ९.५५ )

–स्वेद–पु., उपक्रम० उष्मस्वेदविशेषः पिण्डरूपः स्वेदः ( चसू. १४.२५ ) तत्र कपालपाषाणलोष्ट-लोहपिण्डानग्निवर्णान्संदंशेन गृहीत्वाऽम्भस्यम्ले वा निमज्जेत् । तैरार्द्राविकवस्त्रेण वेष्टितैः श्लेष्ममेदोभूयिष्ठं सरुजमङ्गं ग्रन्थिमद्वा स्वेदयेत् । पांसुसिकतागवादिपुरीषे धान्यबुसपुलाकपललैर्वाऽम्लोत्क्वथितैः पूर्ववद्वेष्टितैर्गवादिशकृताऽऽर्द्रेण पिण्डीकृतेनोपनाहद्रव्योत्कारिकाकृशरापायसपिण्डैर्वा वातरोगेष्विति पिण्डस्वेदः ( असंसू. २६.८ )

–हिङ्गु–न., वनस्पति० नाडीहिङ्गु ( ध. २.४० )

**पिण्डक**–पु., वनस्पति० कन्दग्रन्थिः (रा. परि.७.२४)
तुरुष्कः ( ध. ३.२३ )
न., वनस्पति० पिण्डमूलम् (रा ७.५७; पृ. १४१)
भैषज्य० बोलम् ( रा. ६.११६ )

**( पिण्डका )**–स्त्री., अङ्कुराः, प्ररोहा ( सुशा. ३.१८ )

**पिण्डलिका**–स्त्री., रोग० नाड्या असम्यक्कल्पनजातरोगाणामेकतमोऽयम् परिमण्डलयुता ( चशा. ८.४५ )

**पिण्डाञ्जन**–न., अञ्जन० बालानां वर्त्मरोगे उपयुक्तम् (असंउ. १२ )

**पिण्डातक**–पु., वनस्पति० मदनः ( ध. १.१६८ )

**पिण्डामृता**–स्त्री., वनस्पति० गुडूची ( ध. १.४ )

**पिण्डायस**–न., खनिज० तीक्ष्णलोहम् ( रा. १३.३० )

**पिण्डालु**–पु., वनस्पति० कन्दशाकम् कन्दग्रन्थिः ( रापरि. ७.२४; चचि. १४.९ )
गुडूची, ( रा.३.४ )

**पिण्डालुक**–न., शाक० (चसू. २७.१२३ ) आलुककन्दः गुरु वातकफकरम् ( सुसू. ४६.३०४ )

**पिण्डासव**–पु., आसुत० पिप्पलीगुडबिभीतकसाधितोऽयं ग्रहण्यां शस्तः ( चचि. १५.१६०–१६२)

**पिण्डाह्वा**–स्त्री., वनस्पति० नाडीहिङ्गु ( रा. ६.६४ )

**पिण्डि**–स्त्री., वनस्पति० अशोकः ( चचि. १४.१० )
तालः ( चचि., १४.१० )
खर्जूरः ( चचि. १४.१० )

**पिण्डिका**–स्त्री., वनस्पति० श्वेताम्ली ( रा. परि. ४.३७ )
शारीर० जङ्घापिण्डिका ( चइ. १०.५ )
आसनम् ( चसू. १४.४६ )

**पिण्डिकोद्वेष्टन**–न., लक्षण० पुरीषनिग्रहजलक्षणभूतं पिण्डिकाया उद्वेष्टनम्, पिण्डिका जङ्घायाः पश्चिमे

भागे पिण्डिकाकृतिर्मांसम्, तस्या उद्वेष्टनम् उद्वेष्टमानायामिव दुःखम् (अहृसू. ४.३. हे.) अशीतिवातविकारेष्वेकः ( चसू. २०.११ चसू. ७.८ )

**पिण्डित**–वि., कुण्डलीभूतः ( चनि. ३.७ )
घनीभूतम्, संहतम् ( सुशा. ८.२६ )
गोलाकारम् ( र. २.७१–७३ )
पु., वनस्पति० तुरुष्कः ( ध. ३.२२ )

**पिण्डितोष्मन्**–वि., पिण्डीभूतो नाम एकत्रीभूत ऊष्मा यस्य तत् ( असंसू. ४.१२ )

**पिण्डी**–स्त्री., यवसक्तुपिष्टमयो गोलाकारः कृतान्नविशेषः ( सुसू. ४६.४१२ )
स्त्री., शारीर० मांसपिण्डी, जङ्घापिण्डिका ( चचि. १२.९८ )
वनस्पति० मदनः ( ध. १.१६८ )

**पिण्डीत**–पु., वनस्पति० मदनः ( चचि. २६.२७२ )

**पिण्डीतक**–पु., वनस्पति० मदनः ( चक. १.२७ )
स त्रिविधः, पीत–श्वेत–कृष्णपुष्पवर्णभेदात् ( सुचि. २५.२८ )

**पिण्डीतगरक**–न., वनस्पति० तगरम् ( रा. १०.१०३ )

**पिण्डीपुष्प**–पु., वनस्पति० अशोकः ( रा. १०.२७२ )

**पिण्याक**–पु. न., तिलकल्कः ( चक्र. चचि. १४.९ )
**–तिलखलिः** (चसू. २२.२९) तैलनिष्पीडितानां तिलादीनां पिण्डिः, शुष्कतिलकल्कः ( चनि. २.४ )
तद्गुणाः—लेखनो रूक्षो विष्टम्भी, दृष्टिदूषणश्च ( सुसू. ४६.३८१ )
सर्वदोषप्रकोपकः ( सुसू. ४६.२९४ )
संयोगतः पयसा सह विषतुल्यं भवति (सुसू. २०.८)
निर्यास० तुरुष्कः ( ध. ३.२२ )
**–विकृति**–स्त्री., पिण्याकस्य विकृतिः, पिण्डवटकादिदेशीया ( हे. अहृसू. ६.३४ )

**पितामह**–पु., देवता० ब्रह्मा ( चसू. १.२४ )

**पितृ**–पु., अर्यमादिः, परलोकं गतः पूर्वजः (चनि. ७.१०)
अग्निष्वात्तादयः ( सुसू. ५.२८ )
भूताधिपति० ( असंउ. ७ )
**–ग्रह**–पु., पुरुषविग्रहग्रह० ( का. बालग्रहचि. )
नैगमेषो बालस्यान्यग्रहेभ्यो रक्षकत्वात् पितृग्रहसंज्ञामलभत ( सुउ. २७.५ ) पितृग्रहाविष्टस्य लक्षणानि–रोमहर्षो मुहुश्वासः सहसा रोदनम् ज्वरः, कासोऽतिसारो वमथुर्जृम्भा, तृट्, शवगन्धिताऽङ्गेष्वाक्षेपविक्षेपौ शोफः, स्तम्भो विवर्णता, मुष्टिबन्धोऽक्ष्णोः स्रुतिः ( असंउ. ३ )
**–ज**–वि., पितुर्जायते जातो वा इति ( चशा. ३.७; असंशा. ५ )
**–जभाव**–पु., पितुः शरीरादागतो भावः गर्भस्य केशश्मश्रुलोमास्थिनखदन्तसिरास्नायुधमनीरेतः–प्रभृतीनि स्थिराणि ( सुशा. ३.३३ )
**–जोत्तम**–पु., धान्य० माषः ( ध. ६.९९ )
**–तर्पणपवित्र**–पु., धान्य० तिलः ( ध. ६.१२२ )
**–प्रिय**–पु., वनस्पति० भृङ्गराजः ( रा. ४.२० )

**पित्त**–न., शारीरदोष० 'तप्' संतापे तेन सञ्जापहे–तुर्पित्तमिति (सुसू. २१.५) धारणाध्दातवः इत्यनेन पित्तं धातुः तस्योत्पत्तिः–आग्नेयं पित्तम् रक्तस्य मलः; ( चचि. १५.१८ ) तस्य स्वरूपम्–अग्निरेव शरीरे पित्तान्तर्गतः कुपिताकुपितः शुभाशुभानि करोति ( चसू. १२.११ ) तद्गुणाः– सस्नेहमुष्णं तीक्ष्णं द्रवं, सरं, लघ्वम्लं, कटु, विस्रं, नीलम् ( सुसू. २१.११; अहृसू. १.११) तस्य स्थानानि–नाभिरामाशयः स्वेदो लसीका रक्तं रसो दृष्टिः स्पर्शनं–त्वग् ( अहृसू. १२.२ ) तद्वृद्धिकालाः–यौवने दिवसस्य निशायाश्च मध्यकाले, भुक्तस्य मध्यकाले (अहृसू. १.८) तथा शरदि च, पित्तवृद्धिर्भवति (अहृसू. १२.२४.२५) तत्कर्माणि–साधारणं कर्माऽऽदानम् ( सुसू. २१.८ ) पक्त्यूष्मा, दर्शनं, क्षुधा, तृषा, रुचिः, प्रभा, मेधा, प्रज्ञा, शौर्यं, तनुमार्दवं च; ( अहृसू. ११.२–३ ) तद्भेदाः– पाचकं रञ्जकं भ्राजकं साधकम् आलोचकमिति पञ्चविधं पित्तम् ( अहृसू. १२।१०–१४ ) शरीरे पित्तप्रमाणं पञ्च अञ्जलयः ( चशा. ७. १५ ) पित्तदुष्टेर्लक्षणानि दोषप्रकरणात् ज्ञेयानि। द्र० 'दोष'
प्राणिजपित्त० गोपित्तं गोरोचनेति प्रसिद्धम्, ( असंउ. ४० ) श्वपित्तमपस्मारेऽञ्जनार्थं प्रयुक्तम् ( चचि. १०.५० ) सिंहव्याघ्रवृकतरक्ष्वृक्षद्वीपिमार्जारशृगालमृगगोधानां पित्तं त्रिफलादिद्रव्यैः सह जीवनेऽगदे उपयुज्यते। ( असंसू. ८.२९ )
**–कर्मन्**–न., पित्तस्य कर्माणि ( अहृसू. ११.२–३ )
**–तेजस्**–न., पित्तगत ऊष्मा, पित्तरूपोऽग्निर्वा ( चचि. ३०.२२१–२३ )
**–द्राविन्**–पु., वनस्पति० मधुजम्बीरः ( ध. ५.१८ )
**–द्रुम**–पु., वनस्पति० सरलः ( ध. ३.७८ )
**–धरा**–स्त्री., शारीर० कलाभेदः, षष्ठी पित्तधरा नाम, पक्वाऽऽमाशयमध्यस्था इयं ह्यन्तरग्न्यधिष्ठानतयाऽऽमाशयात् पक्वाशयोन्मुखमन्नं बलेन

विधार्य पित्ततेजसा शोषयन्ती पचति पक्वं च विमुञ्चति ( असंशा. ५.४० ) किंच या चतुर्विधमन्नपानमुपभुक्तमामाशयात् प्रच्युतं पक्वाशयोपस्थितं धारयति ( सुशा. ४.१८ )

**–प्रकृति**–वि., दोषप्रकृतिविशेषविशिष्टः उष्णगौरगात्रस्ताम्रनखनेत्रजिह्वौष्ठपाणिपादतलः, शिथिलसन्धिबन्धमांसउष्ट्रसमकपिलविरलमृदुकेशरोमा मध्यबलायुरल्पशुक्रव्यवायापत्यः, शूरोऽभिमानी शीघ्रवलीखलतिपलितपिप्लुव्यङ्गतीक्ष्णक्षुत्पिपासो मेधावी दुर्भगः, स्वादुतिक्तकषायशीताऽभिलाषोपशयश्च भवति ( असंशा. ८.१२ ) दयितमाल्यविलेपनमण्डनः, सुचरितः, शुचिराश्रितवत्सलो विभवसाहसबुद्धिबलान्वितो नारीणामनभिमतो धर्मद्वेषी, स्वेदनः, पूतिगन्धिर्भूर्युच्चारक्रोधपानाशनेर्ष्यः, यस्य च तनूनि, पिङ्गानि, चलानि, तन्वल्पपक्ष्माणि, हिमप्रियाणि लोचनानि, क्रोधेन मद्येन सूर्यातपेनाशु रागं व्रजन्ति । सुप्तः कर्णिकारान् पलाशान् दिग्दाहोल्काविद्युदर्कानलांश्च पश्येत । मध्यायुर्मध्यबलः पण्डितःक्लेशभीरुर्व्याघ्रर्क्षकपिमार्जारयक्षसदृशवृत्तिः ( अहृशा. ३.९०-९५ ) क्षिप्रकोपप्रसादो विगृह्य वक्ता तेजस्वी समितिषु दुर्निवारवीर्यो भयजनितनम्रतारहितः, अनतेषु कठोरवृत्तिः प्रणतेष्वपि सान्त्वनदानरुचिः ( सुशा. ४.६८-७१ )

**–प्रसेक**–पु., धान्य० मुद्गः ( ध. ६.८१ )

**–भेषज**–न., वनस्पति० मसूरिका (ध. ६.९५)

**–रक्त**–न., रोग० रक्तपित्तम् ( असंशा. ६.२४ )

**–वर्ण**–पु., लक्षण० पीतनीलादयः ( सुशा. २.४ )

**–वल्लभा**–स्त्री., वनस्पति० अतिविषा ( ध. १.११ )

**–वाहिनी**–स्त्री.,शारीर० बाहुल्येन पित्तं वहन्ती ( सिरा ) ( सुशा. ७.६ )

**–विकार**–पु., पित्तदोषजन्या रोगाः, ते चत्वारिंशत्–प्लोषो दवो दवथुर्विदाहः, असंदाहस्त्वग्दाहोऽन्तर्दाहो धूमकोऽम्लक ऊष्माधिक्यमतिस्वेदोऽङ्गगन्धोऽङ्गावयवसदनम्, शोणितक्लेदो मांसक्लेदस्त्वङ्मांसदरणम्, चर्मदरणम्, रक्तकोठो रक्तविस्फोटो रक्तमण्डलानि, रक्तपित्तम्, हरितत्वम्, हारिद्रत्वम्, नीलिका, कक्ष्या, कामला, तिक्तास्यता, लोहितगन्धास्यता, पूतिमुखत्वम्, तृषाधिक्यमतृप्तिरास्यपाको मेढ्रपाको जीवादानम्, तमःप्रवेशो हरितहारिद्रनेत्रमूत्रशकृत्त्वं च ( हे. अहृसू. १२.५३ )

**–विरुद्ध**–वि., यत् पित्तकारि तत् ( इन्दु. ) (असंचि. १.१७–१८)

**–विष**–वि., यस्य पित्तं विषमयं, तत् कीटादि–यथा शकुलीमत्स्यरक्तराजि वरकी ( वरटी ) मत्स्याश्च पित्तविषाः ( सुक. ३.५ )

**–वेदना**–स्त्री.,ऊषचोषादिका ( ड. सुक. ४.३७ )

**–संशमनवर्ग**–पु., पित्तदोषशमनद्रव्यसंग्रहश्चन्दनोशीरमंजिष्ठापयस्याविदारीशतावरीह्रीबेरगुंद्राशैवलकल्हारकुमुदोत्पलकंदकदलीदूर्वामूर्वाप्रभृतीनि काकोल्यादिः सारिवादिरंजनादिरुत्पलादिर्न्यग्रोधादिस्तृणपंचमूलमिति ( सुसू. ३९.८ )

**पित्तल**–वि., पित्तप्रकृतिपुरुषः ( चसू. ७.३९ )

न., खनिजद्रव्य० रीतिः पित्तलं वा । तद्गुणाः—तिक्तम्, लवणम्, रूक्षम्, शोधनम्, सरम्, वृष्यम्, रसायनम्, वातपित्तघ्नम्, पाण्डुविषकृमिप्लीहावृद्धिवलीपलितनाशनम् ( ध. ६.१८ )

हिं.—पीत्तल.

**म.—पितळ, सोनपितळ.**

गु.—पीतल.

बं.—पितल.

फा.—विरञ्ज.

**( पित्तला )**–स्त्री., वनस्पति० शालिपर्णी ( रा. ४.११४ )

**पित्तलक**–न., मिश्रधातु० पित्तलम् (रा.१३.१७)

**पित्तान्तक**–पु., पारदयोग० पारदाभ्रकमुण्डलोहतीक्ष्णलोहमाक्षिकादिसाधितोऽयं पित्तज्वरक्षयदाहतृष्णाभ्रमशोषनाशकः ( र. १८.२३६–३८ )

**पित्तारि**–पु., वनस्पति० पर्पटः, ( रा. ५.६६ )

बर्बरः, ( रा. १२.१७ )

लाक्षा, ( रा. ६.१४२ )

**पित्ताशय**–पु., पित्तस्थानम्, पित्ताशय आमाशयस्य अधस्तनोऽवयवविशेषः 'पक्वामाशयमध्यं पित्तस्य ( स्थानम् ) ( सुसू. २१.६ ) तत्र आमाशयः पित्ताशयस्योपरिष्टात् ( सुसू. २१.१२ ) ( चक्र. चचि. ३.१७१-७२ ) अग्निस्थानम् ( सुशा. ५.८ )

**पित्तोष्मन्**–पु., पित्तस्य ऊष्मा, पित्तजनक ऊष्मा वा ( चचि. १५.२८ )

**पित्र्य**–वि., मातापितृतः अपत्यम् आगतः पैतृकः ( चसू. २५.१७ )

पु., धान्य० माषः ( ध. ६.९९ )

न., पितुर्हितं कर्म श्राद्धदानादि ( सुशा. १०.५३ )

मघा नाम नक्षत्रम् ( ड. सुक. ३.३८ )

भैषज्य० मधु ( रा. १४.२७० )

**पिधान**–( परिव० ) न., आच्छादनम् ( सुचि. ६.४ )

**( पिधानी )**–स्त्री., आच्छादनम् ( र., २०.८६-८७ )
**–पात्र**–न., आच्छादनपात्रम् ( र. १८.१५४-५५ )
**पिनद्ध**–वि., पिहितम् ( असंशा. ५.९३ )
**पिनाक**–न., नागमण्डूकादिषु चतुर्विधेष्वभ्रकेष्वेको भेदः द्र० 'अभ्रक' ( र. २.५ )
**पिपासा**–स्त्री., लक्षण० तृष्णा ( चनि. १.२१ )
पातुमिच्छा ( सुसू. १.२५ )
रोग० तृष्णा ( चसू. २.२४ )
**–निग्रहज**–(परिव.) वि., पिपासाया निग्रहाज्जातः ( चसू. ७.२१ )
**पिपासालु**–वि., पिपासातिशयवान् ( चशा. ८.२१ )
**पिपासित**–वि., तृषितः ( काक. भोजनकल्प. ११.१२ )
**पिपीलिक**–पु., कीट० पिपीलिका (अहसू. २.२३)
**(पिपीलिका)**–स्त्री.,कृमि०बहिर्मलजोऽयं (चसू.१९.४(९) कफजक्रिमिः दर्भपुष्पमहागुदादिषु षट्प्रकारेष्वेकः ( सुउ. ५४.१२; सुचि. २७.८ )
बहुपादा,कृष्णशुक्लवर्णाऽणुस्तिलाकृतिः(चवि.७.१०)
ताः षड्विधाः-स्थूलशीर्षा, संवाहिका ब्राह्मणिका, कपिलिकाऽङ्गुलिका, चित्रवर्णा च; तस्या दष्ट-लक्षणानि – श्वयथुरग्निस्पर्शवद्दाहशोफौ भवतः ( सुक.८.३४ ) दष्टचिकित्सा–भृङ्गराजस्वरस–पिष्टकृष्णवल्मीकमृत्तिकालेपनम् (सुक. ८.५४-५५)
**पिपीलिका**–स्त्री., ( चसू. १९.४.९ अहसू. १०.३ )
**–भारहरण**–न., स्वल्पायाः पिपीलिकायाः सार-शरीरत्वेन महतो भारस्यापि नयनम् ( चक्र. चवि. ८.११५ )
**–संचार**–पु., लक्षण० पिपीलिका शरीरे संचरन्तीव वेदना ( असंसू. २७.३७ )
**–संप्रचार**–पु.,लक्षण० पिपीलिकासंचारः (चनि.३.७)
**–स्रुति**–स्त्री., लक्षण० पिपीलिकाभिः सर्पणेनेव क्रिय-माणा वेदना ( चचि. ३०.१० )
**पिप्पल**–पु., वनस्पति० क्षीरिवृक्षः मूत्रसंग्रहणीयगणे धूमपानप्रयोगे चैकं द्रव्यम् ( चसू. ४.१५,५-२२ )
**तद्गुणाः**–स्वादुः, कषायः, शीतः, कफघ्नो रक्तदोषदाहयोनिदोषरक्तपित्तघ्नः
( ध. ५.७८ ) तस्य काष्ठं दन्तधावने निषिद्धम् ( असंसू. ३.२१ ) तत्पत्रम्–सूप्यशाकम्
( चसू. २७.१०५ ) **तद्गुणाः**– मेधायुर्बलजननम् ( असंउ. १ ) तत्फलगुणाः– कषायमधुराम्लानिल वातलानि गुरूणि ( चसू. २७.१६४ )
हिं.—पीपलवृक्ष.
**म.—पिंपळ.**
गु.—पीपळो.
बं.—अश्वत्थ.
फा.—दरखतलरजा.
**( पिप्पली )**–स्त्री., वनस्पति० महाकषायवर्गे, दीपनी-यगणे, शीतप्रशमनगणे, आस्थापनोपगगणे चैकं द्रव्यम् ( चसू. ४.१७; चसू. ४.९; चवि. ११९६ )
**तद्गुणाः**– कटुर्मधुरा, तिक्ता, शीता, स्निग्धा, रसायनी, वृष्या, दीपनी, त्रिदोषघ्नी, तृड्ज्वरोदर-जन्तुश्वासकासक्षयामनाशिनी ( ध. २.७३ )
श्लेष्मशूलप्रशमनी ( सुउ. ४२.११० ) साऽऽर्द्रा शुष्का भेदेन द्विधा–आर्द्रा पिप्पली मधुरा गुर्वी स्निग्धा श्लेष्मला; शुष्का पिप्पली कटूष्णा कफ-वातघ्नी वृष्या च ( चसू. २७.२९७; सुसू. ४६.२२३ ) अस्याः फलं शिरोविरेचनार्थं वमनार्थं चोपयुज्यते ( सुसू. ३९.६ )
कण्ठ्या हिक्काघ्नी ( चसू. ४.१०-१४ )
हिं.—पीपल.
**म.—पिंपळी, लेंडी पिंपळी.**
गु.—लिंडी पिपर.
बं.—पिपुल.
ता.—पिंपिलि.
फा.—पिलपिल दराज.
कर्णरोग० तल्लक्षणम्, कर्णाभ्यन्तरे एकोऽनेको वा नीरुक् स्थिरो मांसांकुरः पिप्पलीप्रमाणः ( असंउ. २१; अहउ. १७.१६ )
**पिप्पलक**–न., शारीर० चूचुकम्, स्तनाग्रम् ( चशा. ८.५३ )
**( पिप्पलिका )**–स्त्री., वनस्पति० अश्वत्थी, पिप्पलः ( रा. ११.१२२ )
**पिप्पली**–स्त्री., वनस्पति० पिप्पली ( चसू. ४.१७ )
**–द्वय**–न., पिप्पली गजपिप्पली च ( र. २९.६५-६६ )
**–मूल**–न., वनस्पति० महाकषायवर्गे दीपनीयगणे, शूलप्रशमनगणे चैकं द्रव्यम् ( चसू. ४.९; चसू. ४.१७ ) दीपनीयपाचनीयाऽऽनाहप्रशमनानां श्रेष्ठम् ( चसू. २५.४० ) तद्गुणाः– कटूष्णं दीपनं रोचनं पित्तकरं वातकफघ्नं कृमिघ्नम् ( ध. २.७५ )
हिं.—पीपरामूल.
**म.—पिंपळमूळ.**
गु.—पीपरीमूलना गंठोडा.
बं.—पिपुलमूल.
ता.—पिप्पली, वेरुपिप्पलीदुम्य.
फा.—फल्फिल्, मोया.

**–रसायन**–न., रसायनार्थं पिप्पल्युपयुज्यते, द्र० 'रसायन' ( चचि. १(३).३२-३५ )

**–वर्धमान**–न., रसायनयोग० योगोऽयं वातव्याध्यादिनाशनो बलकरश्च ( सुउ. ३९.२१६ ) पिपल्यः क्रमशोऽस्मिन्रसायनयोगे वर्धिता भवन्ति, तत् पिप्पलीवर्धमानम् ( चचि. १. ( ३ ) ३६–४०; सुचि. ५.१२ )

**–वर्धमानक**–न., रसायनयोग० पिप्पलीवर्धमानम् द्र० 'रसायन' ( सुचि. ५.१२ )

**पिप्पल्यादि**–वि., पिप्पलीति प्रथमशब्दारब्धः द्रव्यगण० पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेरमरिचहस्तिपिप्पलीहरेणुकैलाजमोदेन्द्रयवपाठाजीरकसर्षपमहानिम्बफलहिङ्गुभार्ङ्गीमधुरसातिविषावचाविडङ्गानि कटुरोहिणी चेति, अयं कफहरः प्रतिश्यायानिलारुचीर्हन्ति तथा दीपनो गुल्मशूलघ्न आमपाचनश्च ( सुसू. ३८.२२–२३ )

**–घृत**–न., सिद्धघृत० उत्तरबस्तिद्वारा रक्तविभेदनार्थं रक्तगुल्मे समुपदिष्टम् ( सुउ. ४२.२१ ) श्वासकासहृत्पार्श्वग्रहण्यादिरोगेषु प्रशस्तम् ( चचि. १८.३६–३८ )

**पिप्पल्यादिपञ्चवर्ग**–पु.,द्रव्यगण० पञ्चकोलम्, पिप्पलीपिप्पलीमूलचव्यचित्रकनागरम्; वर्गोऽयं कृमीणां प्रकृतिविघातकः ( चवि. ७.२१ )

**पिप्पल्यासव**–पु., आसुत० अयं जङ्गालानां धन्वजानां चानुपानार्थमुपयुज्यते ( सुसू. ४६.४३३ )

**पिप्रक्षु**–वि., प्रष्टुमिच्छुः ( चचि. २१.१४६ )

**पिप्लु**–पु., त्वग्रोग० जटुला, (चक्र) यस्य पित्तं प्रकुपितं शोणितं प्राप्य शुष्यति। तस्य पिप्लवो जायन्ते ( चसू. १८.२५ )
लक्षण० पिडका ( चइ. १.११ )

**पिप्लुत**–वि., अल्पाल्पग्रन्थियुक्तम् (कासखिल अ.१५.७)

**पिम्परि**–पु., वनस्पति० प्लक्षः ( रा. ११.१२६ )

**पियाल**–पु., वनस्पति० सारद्रुमः (ड. सुसू.३८.४८-४९) द्राक्षारसप्रियः खरस्कन्धाख्यः ( अरु. ) चारः ( हे. अहृसू. १५.४१ ) प्रियालफलं गुरु शीतलं बृंहणं स्निग्धं कफशुक्रकरं दाहक्षतक्षयहरं च ( असंसू.७. )

**–ज**–न., तैल० प्रियालतैलम्, इदं गुरु शीतलं श्लेष्मलं केश्यं वातपित्तहरं च ( असंसू. ६. )

**पिलिपिच्छिका**–स्त्री., रेवतीग्रह० सा पक्षात्परे कालेऽपत्यं विनाशयति ( का. रेवतीक. अ. ४७ )

**पिल्ल**–न., नेत्ररोग० ( चचि. २६.२४९ ) दीर्घकालानुबन्धी नेत्ररोगः, ते चाष्टादश, पित्तोत्क्लिष्टवर्त्म, कफोत्क्लिष्टवर्त्म, रक्तोत्क्लिष्टवर्त्म, निचयोत्क्लिष्टवर्त्म, पोथकी, बिसवर्त्म, कुकूणकः, पक्ष्मोपरोधः, पूयालसः शुष्काक्षिपाकः, सशोफोऽम्लोषितः, पित्तकफरक्ताभिष्यन्दास्त्रयः, पित्तकफरक्ताधिमन्थास्त्रयः ( असंउ. २० ) बहुशो वर्त्माभिलेखनं रक्तस्रुतिः, आभीक्ष्ण्येन विरेचनञ्च पिल्लरोगे प्रयोज्यम् ( असंउ. २० )

**पिल्लिका**–स्त्री. नेत्ररोग० ( काखिल अ. १३.२४ )

**पिल्लिमा**–स्त्री., नेत्ररोग० ( का. षट्कल्प.१८ )

**पिशङ्ग**–वि., ताम्रवर्णः ( इन्दु. असंउ.४३ )

**पिशाच**–पु., ग्रह० पिशिताशनः ( सुसू. ५.२१ ) भूताधिपतिः ( असंउ. ७ ) देवयोनिः (चनि.७.१०) पिशाचग्रहजुष्टलक्षणानि–यो विकृतदर्शनो दुर्बलः, कर्कशो बहुजल्पको दुर्गन्धोऽत्यशुचिरतिलोलो बहुभक्षको विजनसेवी, शीताम्बुसेवी, रात्रिसेव्युद्विग्नो रुदनाटनशीलः स पिशाचाविष्ट इति ज्ञेयम् ( सुउ. ६०.१५ )

**( पिशाची )**–स्त्री., रेवतीग्रह० इयं सद्योजातमृतापत्या घोरा मांसादी च ( का. रेवतीकल्प. ४३.४४ ) वनस्पति० गन्धमांसी ( ध. ३.४७ )

**–पञ्चवर्ण**–पु., वनस्पति० करवीरः ( र. ३०.७० )

**पिशाचोन्माद**–( परिव० ) पु., रोग० तल्लक्षणानि–यः अस्वस्थचित्तः स्थानमलभमानो नृत्यगीतहासी बद्धाबद्धप्रलापी संकरकूटमलिनरथ्याचेलतृणाश्मकाष्ठाधिरोहणरतिः भिन्नरूक्षस्वरो नग्नं विधावन्तं नैकत्र तिष्ठन्दुःखान्यावेदयन्नष्टस्मृतिः स पिशाचोन्मत्तो ज्ञेयः ( चचि. ९.२० )

**–पिशित**–न., मांसम् ( सुचि. ५.७ )

**( पिशिता )**–स्त्री., वनस्पति० जटामांसी ( ध. ३.४५ )

**पिशिताशिन्**–वि., मांसादः ( खगः ) ( सुसू. ४६.१३४ )

**पिशुन**–न., वनस्पति० कुङ्कुमम् ( ध. ३.१२ )

**( पिशुना )**–स्त्री., वनस्पति० स्पृक्का ( ध. ३.६२ )

**पिष्ट**–पु., पिण्डः ( र. ८.७२-७३ )
वि., चूर्णीकृतम् ( सुचि. २७.८ ) खल्वे पेषितम् ( र. २.८७ )
खनिज० सीसकम् ( र. २३.२५ )

**( पिष्टि )**–स्त्री., समगन्धपारदस्य दुग्धेन सह पेषणाज्जाता इत्येकप्रकारका ( र. १७ ) द्वादशगुणितेन द्वादशभागेन च पारदेन सह मिश्रितो तीव्रातपे संमर्दनात् नवनीतरूपः संजातो गन्धकः ( र. ८.७ )

-पचन-न., पात्र० पिष्टं पिण्डादिरूपापन्नं पच्यते अनेन इति पिष्टपचनम्, कटाहः ( सुचि.२७.८ )
-मय-वि., पिष्टविकारः (चसू. ५.९)
-मांस-( परिव० ) न., कुट्टितं मांसम् ( सुसू. ४६.३५७-३५८ )
-मेह-पु., रोग० कफजप्रमेह० ( सुनि. ६.१० ) हृष्टरोमा पिष्टमिव सान्द्रं सितं च मेहति ( असंनि. १०.१४ ) तस्य चिकित्सा, हरिद्रादारुहरिद्राकषाय उपयुक्तः ( सुचि. ११.९ )
-विकृति-स्त्री., पिष्टजा नाम पिष्टसाधिता विकृतिर्विकारो यथा पैष्टी ( सुरा ) पिष्टमयमाहारद्रव्यम् ( चसू. ५.५ )
-स्वेदन-न., पात्र० पिष्टं शाल्यादिचूर्णं स्विद्यतेऽस्मिन्निति पिष्टस्वेदनं भाण्डम् (अरु० असंउ. ४८)
-स्वेदनविधि-पु., यथा पिष्टकं तोयपरिपूरितपात्रोपरिदत्ततृणादिसंस्थितं स्वेद्यते, तथा तत् स्वेदनीयमित्यर्थः ( चक्र. चचि. १(१)५८ )

पिष्टक-पु., नेत्ररोग० नेत्रशुक्लभागगतोऽयम् अस्मिन् रोगे शुक्लभागे पिष्टशुक्लो बिन्दुर्भवति (सुउ. ४.८ सुउ. १.३५)
न., छगणम्, ग्राम्योपलमरण्योपलम् ( र. ७.८ )

पिष्टान्न-न., तण्डुलादिपिष्टजमन्नम् (ड. सुउ.५४.४,१७)

पिष्टि-स्त्री., पिष्टी (र.८.८)
-बन्ध-( परिव० ) पु., पारदबन्ध० तीव्रातपे प्रगाढमर्दनान्नवनीतसमो जातः। प्रक्रियाऽत्र द्वादशांशं पारदमेकांशं गन्धकं च त्रुटिशो मुहुर्मुहुः खल्वे दत्वा तीव्रातपे मर्दयेत् ( र. ११.७० )

पिष्टिक-न., अरण्योपलम् ( र. १०.६६ )

( पिष्टिका )-( परिव० ) स्त्री., पारदबन्ध० पिष्टिबन्धः ( र. ११.७० )
पिण्डिका ( र. १०.५२-५३ )

पिष्टिकोद्भव-न., वनस्पति० तवक्षीरम् ( रा. ६.८८ )

पिष्टौण्डि-स्त्री., वनस्पति० श्वेताम्ली, ( रापरि. ४.३७ )

पिहित-वि., पिधानेन रुद्धम् ( सुउ. २४.६ ) आच्छादितम् ( अहसू. १९.१५ )

पीटक-न., खनिज० अभ्रकम् (ध.परि. ६.३-४)

पीठ-न., आसनम् ( अहसू. २२.२७ )
-सर्पिन्-वि., पङ्गुः (चक्र. चसि. २.२१ )

पीठोपमपाली-वि., यस्य तु पालिद्वयं मूलत एव छिन्नं भवति स पीठोपमपालिः, निर्वेधिमः पञ्चदशकर्णबन्धाकृतीनामेकतमः ( सुसू. १६.१० )



पीडन-वि., लेप० सूक्ष्मास्ये व्रणे रूक्षैः पिच्छिलैश्च पीडनो लेपो विधीयते पीड्यते निष्पीड्यते सूक्ष्मास्यव्रणवस्तु अनेनेति पीडनो ( लेपः ) ( असंउ. ३० )
न., मर्दनम् ( चसू. १८.४ ) अङ्गुल्यादिना पीडनं नाम निष्पीडनम् ( सुसू. ७.१७ ) व्रणस्य षष्ट्युपक्रमेष्वेकः ( सुचि. १.८ ) नमनोन्नमनपरिवर्तनादि ( सुचि. ३.१८ )
पीडनद्रव्यम्, ( सुचि. १.३६ )
अभिघातः ( सुनि. १५.३ )
पीडा, दुःखम् ( का. बालग्रहचि. )

पीत-वि., पीतवर्णः हारिद्राभः ( सुसू. १४.२१ )
आसवादिना भावितं, शोषितं च ( र. ३०.१-२ )
पु., खनिज० गैरिकम् ( ध.परि.६.१४ )
गौरीपाषाणभेदः द्र० 'गौरीपाषाण' ( र. ३.१३८ )
वनस्पति० शाखोटः ( रापरि. ९.३० )
अङ्कोटः ( रा. ९.३८४ )
न., पद्मकम् ( रा. १२.१४९ )
न., विष० हारिद्रं विषम् ( र. १०.८५ )
न., वनस्पति० कुसुम्भम् ( ध. ६.११८ )
पद्मकेसरम् ( रा. १०.१६२ )

( पीता ) स्त्री., वनस्पति० कुरण्टकः ( रा. १०.४१९ )
तेजोवती ( रा. ३.३९४ )
दारुहरिद्रा ( ध. १.५९ )
प्रियङ्गुः ( रा. १२.२९ )
मातुलुङ्गभेदः, वनबीजपूरकः ( रा. ११.३४ )
शिंशिपा, कुशिंशपा ( रा.९.२०१ )
सुवर्णकदली ( रा. ११.११४ )
हरिद्रा ( ध. १५४ )
भैषज्य० गोरोचना ( रा. १२.३४ )
आग्नेयी=लूता० इयं स्वेदजा वर्तते। सा पित्तविकारदा भवति ( असंउ. ४४ ) दंशलक्षणानि-विण्मूत्रदंशक्लेदाक्षिदर्शनानां पीतत्वम्, मूर्च्छाच्छर्दिशिरोदुःखज्वरारोचकशूला भवन्ति ( असंउ. ४५ )
-कर्मन्-न., पीतवर्णसुवर्णोत्पादकं कर्म ( र. २.१० )
-काष्ठ-पु., वनस्पति० हरिद्रुः ( रापरि. ९.२६ ) कालीयकम् ( ध. ३.८ )
-कीलका-स्त्री., वनस्पति० आवर्तकी ( ध. १.१९८ )
-कीला-स्त्री., वनस्पति० आवर्तकी ( रा. ३.२९६ )
-कुरब-पु., वनस्पति० किङ्किरातः ( रा. १०.४१५ )
-कुसुम-पु., वनस्पति० किङ्किरातः ( रा.१०.४१५ )
-गन्ध-न., वनस्पति० कालीयकम् ( रा. १२.१५ )

**-चन्दन**-न., वनस्पति० दारुहरिद्रा ( ध. १.५७ )
कालीयकम् ( रा. १२.१५ )
**-तण्डुल**-पु., वनस्पति० प्रियङ्गुः ( ध. ६.९० )
**( -तण्डुला )**-स्त्री., वनस्पति० बृहती, बृहती-भेदः सर्पतनुः ( रा. ४.१२३ )
**-तैला**-स्त्री., वनस्पति० तेजोवती ( रा. ३.३९४ )
**-दारु**-पु., वनस्पति० हरिद्रुः ( रा. परि. ९.२६ )
देवदारु ( चसि. ९.८; सुचि. ३१.५ )
दारुहरिद्रा ( सुचि. १९.१३; ध. १.५९ )
**-दुग्धा**-स्त्री., वनस्पति० काञ्चनक्षीरी (रा.५.३६३)
**-द्रु**-पु., वनस्पति० सरलः (रा.१२.१३६)
देवदारु ( चक्र. चचि. १०.४३-४४ असंउ. १० )
दारुहरिद्रा ( ध. १.५७ )
**-नेत्रत्व**-न., लक्षण० हारिद्रनेत्रत्वम् (सुउ.३९.३२)
**-पादक**-पु., वनस्पति० टिण्डुकः ( रा. ९.१४२ )
**-पुष्प**-पु., वनस्पति० चम्पकः ( रा. १०.२३९ )
कोविदारः ( रा. १०.२९४ )
न., वनस्पति० आहुल्यम् ( रापरि. ४.३४ )
**-(पुष्पा)**-स्त्री., वनस्पति० कोशातकी (ध. १.१८९; रा. ७.२८८ )
कारवल्ली ( रा. ७.२७८ )
झिंझिरीटा ( रापरि. ४.५३ )
आवर्तकी ( ध. १.१९८ )
आढकी ( ध. ६.९३ )
**-(पुष्पी)**-स्त्री., वनस्पति० महाबला ( ध. १.२८२ )
शणपुष्पी ( रा. ४.२९८ )
इन्द्रवारुणी ( रा. ३.३७२ )
त्रपुसम् ( रा. ७.२४६ )
**-पुष्पीका**-स्त्री., वनस्पति० वालुकम् ( रा. ७.२५० )
**-फल**-पु., वनस्पति० कर्मारः ( रापरि. ११.१३ )
**-बीजा**-स्त्री., वनस्पति० वनमेथिका ( रा. ५.१८५ )
**-भद्रक**-पु., वनस्पति० किङ्किरातः ( ध. ५.१५६ )
**-भृङ्गराज**-पु., वनस्पति० भृङ्गराजभेदः ( रा. ४.२१ ) द्र० 'भृंगराज'
**-माक्षिक**-न., खनिज० माक्षिकम् ( रा. १३.२०९ )
**-मुद्ग**-पु., धान्य० कुलित्थः ( ध.६.१०५ )
मुद्गप्रकारः ( सुसू. ४६.२७ ड. )
**-मूत्रत्व**-न., लक्षण० हारिद्रमूत्रत्वम् ( सु. उ. ३९.३२ )
**-मूलक**-न., वनस्पति० गर्जरम् ( ध. ४.६९ )
**-यूथिका**-स्त्री., वनस्पति० यूथिकाभेदः ( ध. ५.१४९ ) द्र० 'यूथिका'
**-यूथी**-स्त्री., वनस्पति० यूथिकाभेदः ( रा. १०.२५२ ) द्र० 'यूथिका'
**-रक्त**-पु., वनस्पति० पद्मकः ( ध. ३.८८ )
**-रम्भा**-स्त्री., वनस्पति० सुवर्णकदली ( रा. ११.११५ )
**-राग**-न., भैषज्य० सिक्थकम् ( रा. १३.१७४ )
**-रूपदर्शन**-न., लक्षण० सर्वेषां वस्तूनां पीताभत्वेन दर्शनम् ( ड. सुक. ४.३७ )
**-वर्ग**-पु., रसकर्मोपयोगी वर्गः तत्र च पलाशः, परिव्याधो हरिद्रा, दारुहरिद्रा ( र. १०.९२ )
**-वर्ण**-न., वनस्पति० कालीयकम् ( ध. ३.२७ )
**-वर्णक**-न., वनस्पति० शीर्णवृन्तम् ( ध. १.१७९ )
**-विद्त्व**-न., लक्षण० हारिद्रवर्चस्त्वम् ( सुउ. ३९.३२ )
**-वृक्ष**-पु., वनस्पति० टिण्डुकः ( रा. ९.१४१ )
**-सार**-पु., निर्यास० तुरुष्कः ( रा. १२.३६ )
वनस्पति० अङ्कोटः ( ध. १.२५८ )
**-सारक**-पु., वनस्पति० निम्बः ( रा. ९.४४ )

**पीतक**-पु., वनस्पति० नन्दीवृक्षः ( रा. १२.३१ )
हरिद्रुः ( रापरि. ९.२६ )
टिण्डुकः ( रा. ९.१४३ )
किङ्किरातः ( ध. ५.१५६ )
धान्य० हरिद्राभः शालिः द्र० 'शालि' ( सुसू. २०.५ )
षष्टिकभेदः द्र० 'षष्टिक' ( सुसू. ४६.८ )
न., वनस्पति० दारुहरिद्रा (ध. १.५८)
पद्मकम् ( रा. १२.१४९ )
गृञ्जनम् ( ध. ४.३७ )
गर्जरम् ( ध. ४.६९ )
कालीयकम् ( रा. १२.१५ )
लोध्रभेदः, पीतलोध्रम् ( र.२३.४० ) द्र० 'लोध्र'
काष्ठागरु ( रा. १२.४२ )
कुङ्कुम् ( ध. ३.१२ )
खनिज० सुवर्णम् ( ध.६.२ )
अभ्रकम् ( ध. परि. ६.३-४ )
माक्षीकम् ( रा. १३.२०९ )
हरितालम् ( ध. ७.११९ )
कृत्रिमधातु० पित्तलम् ( रा. १३.१७ )

**पीतिका**–स्त्री., लूता० तद्दष्टलक्षणानि–स्थिरा पिडका, छर्दिर्ज्वरः शिरःशूलमक्षिरक्तत्वं च (सुक. ८.१०७)
वनस्पति० यूथिकाभेदः ( ध. ५.१४९ )
द्र० 'यूथिका'
कूष्माण्डिका ( १.१८३ )
हरिद्रा ( ध. १.५४ )
दारुहरिद्रा ( रा. ६.८३ )
शतपुष्पा ( ध. २.१ )
खनिज० स्फटिकाभेदः पीतवर्णो स्फटिका ( र. ३.६७-६८ ) द्र० 'सौराष्ट्री'
**–चूर्ण**–न., योग० मनःशीलायवक्षारहरितालसैंधवादि-साधितम् कण्ठमुखरोगेषूपयुक्तम् ( चचि. २६.१९६-१९७ )
**–द्रुम**–पु., वनस्पति० हरिद्रुः (रा. परि. ९.२६)
**पीतनक**–पु., वनस्पति० आम्रातकः (ध. ५.१२)
**पीतसा**–स्त्री., वनस्पति० कर्कटी ( रा. ७.२'२ )
**पीताङ्ग**–पु., वनस्पति० टिण्डुकः ( रा. ९.१४२ )
**पीताभ**–न., वनस्पति० जीरकम् ( ध. २.६६ )
**पीताम्लान**–पु., वनस्पति० किङ्किरातः ( रा. १०.४१५ )
**पीताह्व**–न., वनस्पति० दारुहरिद्रा ( ध. १.५८ )
**पीनगन्धर्व**–पु., –वनस्पति० एरण्डः (र ३०.१६)
**पीनवदना**–वि., पुष्टं वदनं यस्याः सा ( सुशा. ३.७ )
**पीनस**–पु., रोग० ( चसू. ५.२७°) प्रतिश्याय-समलक्षणो नासारोगः; अनेन नासाऽऽनह्यते' विशुष्यते, क्लिद्यते, धूप्यति, नरो न गन्धरसान्वेत्ति ( चचि. २६.११३-१४ ) पक्वप्रतिश्यायः ( चक. चसि. २.२२ ) बालके पीनसपीडिते एतानि लक्षणानि भवन्ति–मुखेनोच्छ्वासो ललाटाभितापो नासास्रावः कासश्च ( कासू. २५.३७-३८ )
**पीयूष**–पु., गोदुग्ध० ( चसू. २७.२३४ ) सद्यःप्रसूताया गोःक्षीरं सप्ताहं यावत् तच्च पीयूषनाम्नाऽभिधेयं भवति। तद्गुणाः–मधुरो बृंहणो वृष्यो गुर्वातघ्नः पुंस्त्वनिद्राप्रदः ( सुसू. ४५.९१ )
**पीलु**–पु., न., वनस्पति० ( चसू. ३.४ ) औत्तरापथिकं फलम् ( चक. चसू. २७.१४५ ) उष्ट्रप्रियो गुडफलः ( सुउ. ५५.४३ ) तद्गुणाः –कटुः, कषायो मधुरोऽम्लः, सरः दीपनः, पित्तघ्नो रक्त-पित्तगुल्मार्शोघ्नः ( ध. ५.५१ ) ज्वरहरो विरेचनो-पगश्च (चसू. ४.१६,१३ ) श्लेष्माभिष्यन्दे स्वेदार्थ-मुपदिष्टः (सुउ. ११.५-६) श्वित्रघ्नः (सुचि. ९.२८)
तत्फलगुणाः–कटुकं तिक्तम् कटुविपाकि पित्तकरं सरं तीक्ष्णोष्णं सस्नेहं कफवातनाशनं च ( सुसू. ४६.१९५ ) इदं शिरोविरोचने उपयुज्यते ( चसू. २.४–५ ) अस्य काष्ठं दन्तधावने निषिद्धम् ( असंसू. ३.२१ )
हिं.—पीलु.
**म.—पीलु, किंकलेचा वृक्ष.**
गु.—जाल्य.
बं.—पीलुगाछ.
ता.—कोकु.
फा.—दर्खतेमिस्वाक्.
**–घृत**–न., सिद्धघृत० राजयक्ष्मादिसर्वरोगहरमिदं घृतम् ( का.राजयक्ष्म. )
**–पत्र**–पु., वनस्पति० मोरटः ( रा. ३.१३ )
**–पर्णिका**–स्त्री., शाक० मोरटः ( चसू. २७.१०२; असंसू. ७.१३९-१४६ )
**–पर्णी**–स्त्री., वनस्पति० बिम्बी ( ध. १.२०२ )
मधुरबिम्बी ( रा. ७.३०४ )
मूर्वा ( चचि. ३०.५०–५१; रा. ३.११ )
रास्नाभेदः, द्र० 'रास्ना' ( चचि. २७.४१)
**–पुष्प**–पु., वनस्पति० मोरटः ( ध.१.१५ )
वनस्पति० मोरटः ( चचि. १३.६७ )
**पीलुनी**–स्त्री., वनस्पति० मूर्वा ( रा. ३.१० )
**पीवर**–वि., पुष्टम्, पीनम् (अहसू. ३.१५)
**( पीवरा )**–स्त्री.,वनस्पति० अश्वगन्धा( रा. ४.४०१ )
**( पीवरी )**–स्त्री., वनस्पति० शतावरी ( ध. १.२९१ )
**पुङ्गव**–पु., वनस्पति० ऋषभः ( रा. ५.१५७ )
**पुट**–न., रसादिद्रव्यपाकानां प्रमाणज्ञापनम् (र. १०.४८)
तत्प्रयोजनम्–लोहादीनामपुनर्भवो गुणाधिक्यमग्रता जलतरत्वम्, रेखापूर्णता (र. १०.४९) तद्भेदाः–महापुटगजपुटवराहपुटकुक्कुटपुटकपोतपुटगोवरपुट-भाण्डपुटाश्च ( र. १०.४७–६३ )
वनस्पति० जातीफलम् ( ध. ३.३५ )
भैषज्य० व्याघ्रनखम् ( ध. ३.६० )
**(पुटा)**–स्त्री., वनस्पति० एलाभेदः भद्रैला (ध. २.४६)
द्र० 'एला'
**–कन्द**–पु., वनस्पति० कोलकन्दः ( रापरि. ७.३८ )
**–पाक**–पु., भैषज्यविधि० औषधिद्रव्यस्य कल्कं कृत्वा काश्मरीवटजम्ब्वादिपत्रैस्तं गोधूमपिष्टेन वा वेष्टयित्वा द्व्यङ्गुलमङ्गुष्ठमात्रं वा स्थूलं मृदा लेपयेत् ततश्चाङ्गारवर्णो यावद् भवेत् तावदग्नौ

पाचयित्वोद्धाव्य पीडयित्वा च रसं निष्कासयेत्। मात्रा–पलम्, अनुपानम् – कर्षमात्रं मधु (र. १६.६; शार्ङ्गधर उ. १३.५४) तद्भेदाः– स्नेहनो लेखनो रोपणश्च त्रिधा; पुटपाकविषयाः– अतिरूक्षनेत्रपुरुषस्य स्नेहनोऽतिस्निग्धस्य लेखनो दृष्टिबलवर्धनार्थं वातपित्तासृग्व्रणनाशनार्थं च रोपणो हितकरः (शार्ङ्ग. उ. १३.५६–५७) नेत्ररोगेषु पुटपाकोऽयं तर्पणविधिना योज्यः (अहृसू. २४.१९)

**–पाककल्पना**–स्त्री., कल्प० पुटपाकः (अहृसू.२४.१७.१९)

**–पाकविधि**–पु., भैषज्यविधि० पुटपाकविधानम् (असंसू. ३३.८)

**–यन्त्र**–न., यन्त्र० भूमौ करीषराशिं कृत्वा तत्र चुल्ल्यां वा करीषान्निक्षिप्य तदग्निना प्रहरद्वयपर्यन्त- मन्तर्निगूढरसमयघटसंपुटस्य पचनम् (र. ९.४५)

**पुटक**–न., रोग० पित्तश्लेष्मभ्यामन्तर्नासायामवरुद्धो वायुः कफं शोषयेत्। शुष्कः कफः पुटतां शुष्कत्वाच्च चर्माकृतित्वं प्राप्नोति (असंउ. २३)

**पुटालु**–पु., वनस्पति० कोलकन्दः (रापरि. ७.३८)

**पुटाह्वय**–पु., भैषज्यविधि० पुटपाकः (सुउ. १७.३५)

**पुडिका**–स्त्री. पत्रे सुबद्धौषधस्य पुटम् (र. २५.३०)

**पुण्डरीक**–पु., न., वनस्पति० श्वेतकमलम्, मूत्रविरजनीय- गणे एकं द्रव्यम् (चसू. ४.१५; सुसू. १३.१४) दिनविकासिकमलम् (सुशा. ४.३२) तद्गुणाः–मधुरं तिक्तं शीतं पित्तघ्नं दाहरक्तविकारशोषपिपासाभ्रमघ्नञ्च (ध. ४.१४८)

हिं.—कमल.

म.—कमळ.

गु.—कमळ.

बं.—पद्म, कमल.

ता.—शिवापु तमारिया.

पु., दमनम् (ध. ३.६४)

शालिभेदः (सुसू. (४६.४) द्र० 'शालि'

न., कन्दविष० (असंउ. ४०) द्र० 'विष' तेन अक्ष्णोः रक्तत्वं उदरे वृद्धिश्च भवति (सुक. २.१६)

पु., हिंस्रपशु० व्याघ्रः (र. २७.१८)

सर्प० राजिमान् (सुक. ४.३४(३))

दर्वीकरः (सुक. ४.३४(१))

पक्षि० आनूपदेशे वर्तमानः (चक. १.८) नलिन- नयनः नलिनं कमलं, तदाकारनेत्रः सङ्घातचारी पक्षी (ड. सुसू. ४६.१०५)

न., रोग० महाकुष्ठेष्वेकं कुष्ठम् (चसू. १९.(४) २) पुण्डरीकपत्रप्रकाशं कुष्ठम् (सुनि. ५.८) रक्तान्त- मन्तरापाण्डु, कण्डूदाहरुजान्वितम्, रक्तैरंशुभिरा- चितं पद्मपत्रमिवाचितम्, घनभूरिलसीकारुधिरबहु- लम् अविलम्बेन विभेदि च (असंनि. १४.२८–२९)

**–मुखी**–स्त्री., निर्विषजलौका० (सुसू. १३.१२)

**पुण्डरीकाक्ष**–पु., जलचारिपक्षि० पुण्डरः, (चसू. २७.४३) नलिननयनः पाण्डुरः (असंसू. ७.८१–८३; असंसू. ७.८१–८३)

**पुण्डरीयक**–न., वनस्पति० प्रपौण्डरीकम् (ध. ३.९२)

**पुण्डर्य**–पु., न., वनस्पति० प्रपौण्डरीकम् (ध. ३.९२)

**पुण्ड्र**–पु., वनस्पति० तिलकः (ध ५.१५८)

प्लक्षः (रा. ११.१२६)

प्रपौण्डरीकम् (असंसू. १६.६)

शालिभेदः द्र० 'शाली' (अहृसू. ६.२)

**पुण्ड्रक**–पु., वनस्पति० तिलकः (रा. १०.२६६)

**नाम्नी**–स्त्री., वनस्पति० अतिमुक्तकः (रा. १०.२६०)

**पुण्ड्राह्व**–न., वनस्पति० प्रपौण्डरीकम् (अहृसू. २०.३७)

**पुण्ड्रेक्षु**–पु., वनस्पति० इक्षुभेदः द्र० 'इक्षु' (र. २०.९४-९६)

**पुण्य**–न., पापाभावः सुकृतम् धर्माचरणम् (का. रेवतीकल्प)

**(पुण्या)**–स्त्री., वनस्पति० अश्वगन्धा (रा. ४.४०१)

**–कीर्ति**–स्त्री., ग्रह० रेवतीग्रहस्य विंशतिसंज्ञानामन्य- तमा (का बालग्रहचि.)

**–जनी**–स्त्री., रेवतीग्रह० असाध्या जातहारिणी (का. क. रेवतीक. ५१)

**–तृण**–पु., वनस्पति० दर्भः (रा. ८.२०८)

**–धूप**–पु., धूपकल्प० (का. धूपकल्पाध्याय.)

**–शब्द**–वि., पुण्यः पावनः शब्दो नाम संज्ञा यस्य सः (चसू. ७.३०)

**पुण्याहघोष**–पु., पुण्याहशब्दोच्चारः (असंसू. ८.९८)

**पुण्याहशब्द**–पु., मङ्गलशब्दः (चशा. ८.३५)

**पुत्तिका**–(परिव.) स्त्री., कीट० मशकोपममक्षिकाः कृष्णवर्णाः (सुसू. ४५. १३३)

**पुत्तिरसा**–स्त्री., वनस्पति० रास्ना (ध. १.२७०)

**पुत्र**–पु., अपत्यं पुमान्, तनयः (सुशा. २.२६) मूषिक० एतद्विषतः पाण्डुता, सादोऽङ्गे सर्वत आखुसदृशग्रन्थिसंभवः (असंउ. ४६.३६६)

तच्चिकित्सा–शिरीषेङ्गुदकल्कः समाक्षिको लेह्यः (सुक. ७.११-१२)

**–कन्दा**–स्त्री., वनस्पति॰ लक्ष्मणा (रा. परि. ७.५५)

**–कामा**–वि., पुत्रं कामयते इच्छति इति पुत्रकामा यद्वा पुत्रार्थं काम इच्छा यस्याः सा (सुशा. २.३२)

**–कामीय**–वि., पुत्रकामसम्बन्धि (असंशा. १)

**–काम्येष्टि**–(परिव॰) पु., पुत्रप्रात्यर्थं यज्ञ॰ (का. रेवतीकल्प ८)

**–घ्नी**–स्त्री., योनिरोग॰ जातघ्नी यस्या रूक्षो वायुर्जातं जातं दुष्टशोणितजं गर्भं विनाशयति (चसू. १९.४ (९); चचि. ३०-.२८-२९)

**–जीव**–पु., वनस्पति॰ तद्गुणाः– कटुर्लवणः शीतो रूक्षो वृष्यो गर्भजीवदश्चक्षुष्यः पित्तशमनः कफवातकारको दाहतृष्णानिवारणः (रापरि. ९.३१)

श्लीपदघ्नः (सुचि. १९.६१)

हिं.—जियापति, जियापोता.

**म.—पुत्रजीवक.**

गु.—पुत्रजीवक.

बं.—पुतजिया.

ता.—कारुपालि.

**–दा**–स्त्री., वनस्पति॰

तद्गुणाः–मधुरा, शीता, गर्भसंभूतिदायका, पित्तहरा, नारीपुष्पादिदोषहा, दाहभ्रमहरा (रापरि. ४.२७-२८)

हिं.—लक्ष्मणी.

**म.—लक्ष्मणा.**

ता.—कटावजटे.

फा.—मर्दामी.

लक्ष्मणा (रापरि. ७.५५)

**–दातृ**–पु., वनस्पति॰ पुत्रदात्री (रापरि. ३.४७-४८)

**–दात्री**–स्त्री., वनस्पति॰ तद्गुणाः– कटुरुष्णा, सुरभिः, पथ्या, वातघ्नी, कफापहा, वन्ध्यादोषविनाशिनी (रापरि. ३.४७-४८)

वन्ध्यकर्कोटकी (रा. ३.२७३)

**–प्रदा**–स्त्री., वनस्पति॰ सर्पतनुर्बृहतीभेदः द्र॰ 'बृहती' (रा. ४.१२३)

**–प्रिया**–स्त्री., प्रतुदपक्षि॰ (असंसू. ७.७२-७५)

**–भद्रा**–स्त्री., वनस्पति॰ जीवन्ती (रा. ३.१७९)

**–श्रेणी**–स्त्री., वनस्पति॰ आखुकर्णी (रापरि. ३.२२)

द्रवन्ती (ड. सुसू. ३८.२९; ध. १.२२९)

मेषशृङ्गी (९.११३; पान. २३)

**पुत्रक**–पु., मूषिक॰ पुत्रः तद्दष्टलक्षणानि–अङ्गसादः पाण्डुवर्णः आखुशावकनिभा ग्रन्थयश्च (सुक. ७.११-१२)

**(पुत्रिका)**–स्त्री., यन्त्रं॰ घर्षणी (र. ९.८३)

**पुत्रञ्जीवक**–पु., वनस्पति॰ पुत्रजीवः (सुचि. १९.६१)

**पुत्रिणी**–स्त्री., रोग॰ द्र॰ 'प्रमेहपिटका' (सुनि. ६.१७)

पुत्रकामा (र. २२.११)

**पुत्रीय**–विधान (परिव॰) न., गर्भाधानार्थं होमहवनादिविधानम्, पुत्रप्राप्त्यर्थमौपासनाग्नौ आज्यहोमविधिः (चशा. ८.१०-११; सुशा. २.२७)

वि., पुत्रप्राप्तये हितम् (र. २६.३८)

**पुत्रीयेष्टि**–(परिव॰) पु., पुत्रप्रदो याग॰ पुत्रकामेष्टियज्ञः (का. जातिसूत्रीय ८)

**पुद्गल**–पु., पूरणात्पुद्गलनाद् गलः 'पूरणाद् गलनाद्देहे पुद्गलाः इति न्यायकोषे। आत्मा (चशा. ४.८)

न., आकारः शरीरम् (र. २७.४७-४९)

**पुनर्**–(अव्य.) मुहुः (अहसू.४.२६)

**–नव**–पु., वनस्पति॰ पुनर्नवाभेदः रक्ता पुनर्नवा (रा. ५.४०८) द्र॰ 'पुनर्नवा'

**–(नवा)**–स्त्री., वनस्पति॰ अनुवासनोपगगणे, स्वेदोपगगणे वयःस्थापनगणे चैकं द्रव्यम् (चसू. ४.१३-१८) तद्गुणाः– तिक्तोष्णा, रूक्षा, वातकफघ्नी, शोफपाण्डुहृद्रोगकासोरःक्षतशूलविषरक्तविकारघ्नी (ध. १.२७४) सा त्रिविधा, श्वेता, रक्ता, नीला च (सुसु. ३८.४-५) तत्र श्वेता– शाकमिदं, तिक्ता, सोष्णा, शीता (चसू. २७.९४) वातकफघ्नी, कासहृद्रोगशूलास्रपाण्डुशोफविषापहा (सुसू. ४६.२५४-२५५; रा. ५.४०५) रक्ता-तिक्ता, पित्तघ्नी, सारिणी, रक्तप्रदरपाण्डुशोफनाशिनी; नीला–तिक्ता, कटुरुष्णा, रसायनी, वातकफघ्नी, हृद्रोगपाण्डुशोथश्वासघ्नी (रा. ५.४०६-११) अस्या मूलमास्थापने प्रयुज्यते (चसू. २.१२-१३)

हिं.—लाल साबुनी.

म.—**विषखापरा, रक्तवसु.**

गु.—साटोडी.

बं.—लाल साबुनी.

ता.—मुकरत्तेकिरे.

**–नवायूष**–(परिव॰) पु., यूष. दधिसर्पिःसमेतोऽयं वातघ्नः (का.खिल. ४.५३-५४)

**-भव**-पु.; पुनर्जन्म ( चशा. ७.२०; सुशा. २.५८ )
**-भू**-स्त्री., वनस्पति० पुनर्नवा (र.२.३०-३१)
**-वसु**-पु., ऋषि० आत्रेयो भरद्वाजशिष्योऽग्निवेशादिभ्यः षड्भ्य आयुर्वेदं दत्तवान् ( चसू. १.३० ) अग्निवेशस्य गुरुः, स हिमवतः पार्श्वे वसति स्म सोऽग्निवेशाय योनिव्यापच्चिकित्सामुवाच ( चचि. ३०.४-७ ) जनपदमण्डले पञ्चालक्षेत्रे द्विजातिवराध्युषिते काम्पिल्यराजधान्यां भगवान् पुनर्वसुरात्रेयो ऽन्तेवासिगणपरिवृतः पश्चिमे घर्ममासे गङ्गातीरे वनविचारमनुचरन्नग्निवेशादिशिष्यैः सहवर्तमान आसीदित्यपि उपवर्णितमस्ति ( च. वि. ३.३ )
**-विद्धा**-स्त्री.; दुष्टसिराव्यधप्रकारः, या सिरा सूक्ष्मशस्त्रेण व्यधनादेकस्थाने एव बहुशो भिन्ना सा ( सुशा. ८.१९ ) द्र० 'सिराव्यध'
**पुनरावर्तक**-वि., पुनरावर्तमानः पुनरागतः ( चचि. ३.३४३ )
**पुनरुक्त**-न., वाक्यदोष० प्रतिसंबद्धार्थमपि यद् द्विरभिधीयते तत्। तद् द्विविधमर्थपुनरुक्तं शब्दपुनरुक्तं च ( चवि. ८.५४ )
**पुनरुद्भव**-पु., पुनःसम्भवः पुनःप्रसङ्गः (अहृसू. ४.२६)
**पुन्नाग**-पु., वनस्पति० तद्गुणाः-मधुरः, सुगन्धिः शीतः, पित्तनाशनो भूतविद्रावणः ( रापरि. १०.११-१२; सुसू. ३८.२४-२५ )
हिं.—पुन्नाग.
**म.—गोडी उण्डीण, कडवी उण्डीण.**
गु.—पुन्नाग.
बं.—पुन्नागाच्छ.
ता.—पिन्नप.
**-केशर**-न., वनस्पति० पद्मकेशरम् ( सुसू. ३८.२४-२५ )
**पुन्नाट**-पु., वनस्पति० चक्रमर्दः ( रा. ४.८ )
**पुन्नाड**-पु., वनस्पति० चक्रमर्दः ( रा. ४.८ )
**पुन्नामन्**-पु., वनस्पति० पुन्नागः ( रा. परि. १०.११ ) पक्षि० ( असंशा. १२.९ )
**(पुन्नाम-)खग** ( परिव० ) पु., पुंनामधेयो पक्षी-हंसकारण्डवचक्रवाकादिः ( सुसू. २९.३६ )
**पुप्पुट**-पु., तालुगतरोग० भेद्यरोगः ( सुसू. २५.७; सुनि. १६.४४ ) श्लेष्ममेदोभ्यां दुष्टाभ्यां कोलसदृशो नीरुजः स्थिरश्च शोफः ( असंउ. २५ )
दन्तमूलगतरोग० भेद्यरोगोऽयम् ( सुसू. २५.७ ) द्र० 'दन्तपुप्पुटक'

**पुर**-पु., न., निर्यास० गुग्गुलुः (सुसू. ५.६९; ध. ३.१२७) पुष्पमस्य स्थावरजङ्गमविषे धूपार्थमुपयुज्यते ( असंसू. ८ )
वनस्पति० अगरुभेदः, दाहागरुः ( रा. १२.४३ ) द्र० 'अगरु' अगरू.
शुण्ठी ( र. २२.१६७ )
मुस्ता ( र. २२.१६७ )
**-मथनवल्लभ**-न., वनस्पति० अगरुभेदः दाहागरुः ( रा. १२.४३ ) द्र० 'अगरु'
**पुरान्तिक**-वि., नगरसमीपवर्ति ( असंसू. ३.६ )
**पुरारिवीर्य**-( परिव० ) न., खनिज० पुरारिस्त्रिपुरारिः, शिवः तद्वीर्यभूतः पारदः ( र. २०.९२-१०२ )
**पुराह्वया**-स्त्री., वनस्पति० शल्लकी ( सुउ. ५२.२४ ) गुग्गुलुः ( सुउ. ५२.२४ )
**पुरस्**-अव्य., पुरस्तात् अग्रे ( सुउ. ४१.३ )
**( पुरः- )सर**-वि., अग्रगामि तेन पूर्वरूपम् इति तात्पर्यं ग्रहीतव्यम् ( ड. सुउ. २४.५ )
**( पुरो- )गम**-वि., पूर्वरूपत्वेन अग्रेसरोऽग्रगामी वा ( सुउ. ४१.३ )
**-डाश**-पु., यज्ञान्न० कपालाकारः पिष्टमयः कपालपरिपक्वः ( सुउ. ३५.८ )
**-वात**-पु., पूर्वदिगागतो वातः ( अहृसू. २.४० )
**-हित**-पु., मन्त्रविशारदः पुरोधाः ( सुसू. ३४.७-८ )
**पुराकृत**-वि., पूर्वजन्मकृतम् ( सुशा. २.५२ )
**पुराण**-वि., प्राचीनम्, जीर्णम् ( अहृसू. ३.२० )
**-कांस्य**-न., चिरन्तनकांस्यचूर्णम् ( र. २३.४० )
**-घृत**-न., ( परिव० ) घृत० शतवर्षपर्यन्तं स्थापितम् ( चचि. ९.६०-६२ ) दशवर्षस्थितम् ( सुउ. ५१.१६; सुक. ७.५१; सूउ.९.३ )
तद्गुणाः- कटुविपाकि ( सुसू. ४५.१०७ ) शीतमुग्रगन्धि, भेदनं, व्रणशोधनं, रोपणम् दीपनं, सरम्, ( सु. ); त्रिदोषघ्नं, श्वासपीनसकासमूर्च्छाकुष्ठविषोन्मादग्रहाऽपस्मारयोनिशूलकर्णशूलाक्षिशूलशिरःशूलशोफतिमिरमदनाशकम्, ( ध. ६.१५६ )
वाताभिष्यन्दनाशकम् ( सुउ. ९.३ )
ज्वरगरशोषनाशनम् किञ्चैतत् बस्तिनस्याक्षिपूरणेषूपदिश्यते ( सुसू. ४५.१०७ )
अपस्मारग्रहोन्मादवतां विशेषतः शस्तम् ( चचि. ९.६३ )
अलर्कविषे उपयुक्तम् ( सुक. ७.५१ )
**-ज्वर**-पु., रोग० जीर्णज्वरः ( असंसू. १२.४१ ) द्र० 'ज्वर'

–पुरीष–न., चिरकालसंचितमलः ( सुशा. १०.४ )
–विष्–स्त्री., पुराणपुरीषम् ( असंशा. ३.११ )
–सर्पिस्–न., घृत० पुराणघृतम् ( सुसू. ४५.१०७ )

**पुंवराट**–पु., भैषज्य० अयं वराटीतोऽल्पगुणः पित्तलोऽस्थिरगुणकरश्च ( र.१६.१२०-२९ )

**पुंस्**– पु., पुरुषः ( चसू. १.४७ )
वनस्पति० पुन्नागः ( रापरि.१०.११ )
–कोकिल–पु., पक्षि० पिकः ( र. २७.१२५ )
–त्व–न., शुक्रम् ( सुउ. ५२.४१ )
–त्वविग्रह–पु., वनस्पति० भूतृणम् ( रापरि. ८.४३; रा. ८.७३ )
–त्वोपघात–पु., शुक्रक्षयः ( सुसू. ४२.१०-१३ ) पुरुषत्वनाशः, तद्धेतवः-मर्मच्छेदश्शुक्रवहनाडीच्छेदो मेढ्रोगो लवणरसातियोगो वा ( सुचि. २६.१३ ) तथा कटुतिक्तकषायरसानामतियोगश्च ( अहसू. १०.१६-१९-२१ )

**पुंसवन**–न., संस्कार० पुंस्त्वकारकं कर्म, वैदिकं पुत्रजनकं विधानम्, तद्विधिः–आपन्नगर्भां स्त्रियमभिसमीक्ष्य प्राग्व्यक्तीभावाद्गर्भस्य पुंसवनमस्यै दद्यात् । गोष्ठे जातस्य न्यग्रोधस्य प्रागुत्तराभ्यां शाखाभ्यां शुङ्गे अनुपहते आदाय द्वाभ्यां धान्यमाषाभ्यां संपदुपेताभ्यां गौरसर्षपाभ्यां वा सह दध्नि प्रक्षिप्य पुष्येण पिबेत्, तथैवापराञ्जीवकर्षभकापामार्गसहचरकल्कांश्च युगपदेकैकशो यथेष्टं वाऽप्युपसंस्कृत्य पयसा, कुड्यकीटकं मत्स्यकं वोदकाञ्जलौ प्रक्षिप्य पुष्येण पिबेत्, तथा कनकमयान् राजतानायसांश्च पुरुषकानग्निवर्णानणुप्रमाणान् दध्नि पयस्युदकाञ्जलौ वा प्रक्षिप्य पिबेदनवशेषतः पुष्येण, पुष्येणैव च शालिपिष्टस्य पच्यमानस्योष्माणमुपाघ्राय तस्यैव च पिष्टस्योदकसंसृष्टस्य रसं देहल्यामुपनिधाय दक्षिणे नासापुटे स्वयमासिञ्चेत् पिचुना । यच्चान्यदपि ब्राह्मणा ब्रूयुराप्ता वा स्त्रियः पुंसवनमिष्टं तच्चानुष्ठेयम् ( चशा. ८.१९ )

**पुंसंज्ञपक्षिन्**–पु., पुल्लिङ्गविशिष्टः पक्षी वर्तकादिः ( अहशा. ६.२३ )

**पुरासिनी**–स्त्री., वनस्पति० महाबला ( रा. ४.४२४ )

**पुरीष**–न., अन्नमलः ( चसू. १४.४ ) शरीरे पुरीषस्य सप्ताञ्जलयः प्रमाणम् ( चशा. ७.१५ )
–कोष्ठ–पु., पुरीषाधायसक्तकोष्ठः (चक्र. चसि. २.१२)
–क्षय–पु., पुरीषवैषम्यावस्थाविशेषः मलस्य स्वप्रमाणहानिः, तस्य लक्षणानि–हृदयपार्श्वपीडा, सशब्दस्य वायोरूर्ध्वगमनम्, कुक्षौ संचरणं च (सुसू. १५.११)
–ज–वि., पुरीषात् जातः ( क्रिमिः ) ( चवि. ७.९ )
–धरा–स्त्री., शारीर० कलाभेदः, अन्नस्य घनकिट्टं पुरीषं, तस्याऽऽधारा पञ्चमी पुरीषधरा नाम कला ( सुशा. ४.१६ )
–प्रवृत्ति–स्त्री., लक्षण० विट्प्रवृत्तिः ( सुशा. १०.७ )
–भेद–पु., लक्षण० भिन्नवर्चस्त्वम् विड्भेदः ( चवि. ७.१३ )
–मार्ग–पु., शारीर० शकृतो वहनार्थं बहिर्निर्गमनार्थं स्रोतः ( चनि. २.८ )
–वर्तवर्तन–न., लक्षण० पुरीषवेगानामप्रादुर्भावः प्रकुपितवायुकर्मविशेषः, पुरीषवर्तः नाम वृत्तपुरीषता ( का. गुल्मचि )
–वहस्रोतस्–न., शारीर० पुरीषवहनार्थं स्रोतः तन्मूलम्–पक्वाशयः स्थूलगुदं च, तद्दुष्टिलक्षणानि–कृच्छ्रेणाल्पाल्पं सशब्दं सशूलमतिद्रवमतिग्रथितमत्युपवेशनम् ( चवि. ५.८ ) विद्धस्य लक्षणानि–आनाहो दुर्गन्धता ग्रथितान्त्रता ( सुशा. ९.१२ )
–विरजनीय–पु., द्रव्यगण० महाकषायवर्गे एको गणः, पुरीषस्य विरजनं दोषसंबन्धनिरासं करोति ( चसू. ४.८ )
जम्बूशल्लकीत्वक्कच्छुरामधुकशाल्मलीश्रीवेष्टकभृष्टमृत् पयस्योत्पलतिलकणाः इति दश इमानि पुरीषविरजनीयानि ( चसू. ४.१५ )
–विवेचन–न., अन्नात् मलभावेन पृथक्करणम् इत्यत्र पित्तेन ( सुसू. २१.१० ) इत्यत्र समानेन वातेन ( सुनि. १.१६ ) इत्यत्र पित्तधराकलया ( सुशा. ४.१९ ) इत्यत्र अधोगताभिर्धमनीभिः अन्नरसात् मलभावेन विवेचनं नाम पृथक्करणं भवति ( सुशा. ९.७ ) इत्यत्र मलधराकलया मलस्य पुरीषादिमलाभिनिर्वृत्तिपूर्वकं विभजनमुक्तम् ( सुशा. ४.१७ )
–संग्रहणीयगण–पु., द्रव्यगण० मलग्राह्यौषधिगणः, महाकषायवर्गे एको गणः– प्रियंग्वनन्ताऽऽम्रास्थिकट्वङ्गलोध्रमोचरससमङ्गाधातकीपुष्पपद्मापद्मकेसराणीति ( चसू. ४.१५ )

**पुरीषाधान**–न., शारीर० पक्वाशयः ( चक्र. चशा. ३.६ ) "वातः श्रोणिगुदसंश्रयः तदुपरि अधोनाभेः पक्वाशयः" ( सुसू. २१.६ ) "मुहुश्चारी पक्वाधानगुदालयः" ( सुनि. १.९ ) "पुरीषाधानं आमाशयश्च पक्वाशयश्च..." ( चशा. ३.६ ) अनेन वचोव्रातेन पुरीषाधानपुरीषाधारपुरीषाशयावयवानां पक्वाशयात् भेदो निर्विवादः, पक्वाशयस्य

पक्वान्नसापेक्षसंज्ञत्वात् पुरीषाधारपुरीषाधानादीनां च अन्नमलसापेक्षतया व्यपदिष्टत्वाच्च

**पुरीषाधार**–पु., शारीर० पुरीषस्याधारो मलाशयः ( चशा. ७.१० ) द्र० "पुरीषाधान", "पुरीषाशय"

**पुरीषाशय**–पु., शारीर० पुरीषं आशेते अस्मिन् इति पुरीषाशयः पुरीषस्य स्थानम् ( चचि. १९.६ ) द्र० 'पुरीषाधान'

**पुरुष**–पु., पुरि भौतिके शरीरे शेते वसतीति पुरुषः जीवः ( सुशा. ३.४ ) सांख्ये पुरुषोऽनाद्यनन्तालिङ्ग-नित्यानपरसर्वगत इति सिद्धान्तितम्, तत्समा प्रकृतिः ( सुशा. १.९ ) अयं सांख्यादिमतश्चतु-र्विंशतिकः पुरुषश्चतुर्थ्यां नैष्ठिकीचिकित्साया अधिष्ठानम्

आयुर्वेदे खादयश्चेतनाषष्ठा धातवः पुरुषः स्मृतः अयं षड्धातुकपुरुषस्तु रोगनाशनीप्रकृतिस्थापनी-रसायनीति त्रिविधचिकित्साया अधिष्ठानम् ( चशा. १.१६ )

शरीरम्, अयमर्थो लक्षणया प्रकरणवशाद्वा ज्ञेयः 'अर्थः प्रकरणं लिंगं शब्दस्यान्यस्य सन्निधिः। शब्दार्थस्याव्यवच्छेदे विशेषस्मृतिहेतवः इत्यपि स्मर्तव्यम् ( अरु. अहृसू. २७.५३ )

मनुष्यजातिः ( सुसू. १.२२ )

वनस्पति० पुंनागः (रा. परि. १०.११)

मोरटः ( ध. १.१५ )

**–कर**–वि., पुरुषत्वाभिव्यक्तिकरम् ( चशा. ४.१४ )

**–कार**–पु., प्रयत्नः ( चवि. ३.२९ )

**–दन्तिका**–स्त्री., वनस्पति० मेदा (रा. ५.१६२)

**–विचय**–वि., अध्याय० पुरुषविचयमधिकृत्य कृतोऽध्यायः ( चशा. ५.१ )

**–व्यापद्**–स्त्री., पुरुषनिमित्तशुक्रदोषव्यापत् ( चशा. ४.३१ )

**–श्रेष्ठ**–पु., देवता० नारायणः वस्तुतः पुरुषश्रेष्ठ इति विशेषणत्वेऽपि विशेषणाद्विशेष्यावगतिरिति विशेष्य-नारायणबोधः (सुसू. ५.२९)

**पुरुषक**–पु., पुरुषाकृतिः ( चशा. ८.१९ )

**पुरुषायाम**–पु., पादाग्रावस्थितस्योर्ध्वबाहोः पुरुषस्य दैर्घ्यम्, सविंशमङ्गुलशतम् ( सुसू. ३५.१२ )

**पुलक**–न., खनिज० कङ्कुष्ठम् ( ध. ३.१४१ )

पाकाद्वर्णान्तरमापन्नं स्फटिकम्, वैदूर्योपलकम् ( सुउ. १५.२६ )

**(पुलका)**–स्त्री., प्राणि० गोधा ( रा. १९.१७ )

**(पुलकी)**–स्त्री., वनस्पति० कदम्बः ( रा. ९.१७२ )

**पुलस्ति**–पु., ऋषि० ( चसि. ११.४ ).

**पुलस्त्य**–पु., ऋषि० रोगापहरणचिन्तनार्थं हिमवतः पार्श्वे समेतेषु महर्षिष्वेकः ( चसू. १.८ )

**पुलाक**–पु., धान्य० क्षुद्रधान्यम् ( चक्र. चसू. १४.४२ )

अस्य पोट्टलेनार्शःस्थानं स्वेद्यम् ( चचि. १४.४० )

गवेधुकं, अप्राप्तपाकं धान्यम् ( सुसू. २२.९ )

पलालम् ( इन्दु. असंउ. ४३ )

**पुलाकोदक**–न., तण्डुलोदकम् ( चचि. ३०.१७० )

सिद्धजल० गवेधुकोदकम्, गवेधुकस्तु तृणधान्यम् ( सुसू. २२.९ )

**पुलिन**–न., स्थान० जलमध्योत्थितभूप्रदेशः ( सुउ. ६०.१० )

**पुलिन्द**–पु., न., कुरुक्षेत्राद् दक्षिणदेशः ( काखिल. २५.१३ )

**पुष्कर**–न., वनस्पति० पुष्करमूलम् (रा. ६.९२; सुचि. ३७.८)

कमलम् ( रा. १०.२४३ )

रक्तपद्मम् ( ध. ४.१५२ )

जलम् ( रा. १४.३१७ )

**–ज**–न., वनस्पति० पुष्करमूलम् ( रा. ६.९२ )

**–जटा**–स्त्री., वनस्पति० पुष्करमूलम् ( असंचि. १६.९१; ध. १.६६ )

**–नाडी**–स्त्री., वनस्पति० पद्मिनी ( रा. ५.१३३ )

**–पर्णिका**–स्त्री., वनस्पति० पद्मिनी ( रा. ५.१३२ )

**–बीज**–न., बीज० नीलकमलबीजम् ( चचि. ३.२५८ )

**–मूल**–न., वनस्पति० हिक्काश्वासकासपार्श्वशूलहराणां श्रेष्ठम् ( चसू. २५.४०; सुउ. ४२.१२० )

**तद्गुणाः**–तिक्तं कटूष्णं कफवातघ्नं ज्वरारोचक-कासशोफाऽऽध्मानश्वासहिक्कापाण्डुनाशनम् ( ध. १.६६ )

हिं.—केउ.

**म.—पोखरमूळ.**

बं.—केउ.

ता.—कोएस्तम्भ.

**–शायिका**–स्त्री., पक्षि० पद्मपत्रशायिकाप्लवेष्वेका, पुष्करे नाम पद्मपत्रे शेते इति पुष्करशायिका ( सुसू. ४६.१०५ )

**–शिफा**–स्त्री., वनस्पति० पुष्करमूलम् ( रा. ६.९३ )

**पुष्कराक्ष**–पु., पक्षि० हंसः ( चक्र. चसि. १२.१९(१) )

**पुष्कराह्व**–पु., जलचरपक्षि० सारसपक्षी (चसू. २७.४२)
न., वनस्पति० पुष्करमूलम् ( ध. १.६६ )
**पुष्करिका**–स्त्री., शूकरोग० ( सुसू. २५.७ ) पुष्करस्य कर्णिकेव पिटिकान्विता पिटिका ( असंउ. ३८ ) पित्तशोणितसंभूता पिडका ( सुनि. १४.९-१० )
**पुष्करिन्**–पु., जलाशय० पुष्करिणी ( असंसू. २६.१५ )
( **पुष्करिणी** )–स्त्री., वनस्पति० पद्मिनी (रा. ५.१३२)
**पुष्करिणी**–स्त्री., ( रा. ५.१३२ )
**–मृद्**–स्त्री., पुष्करिण्यां स्थिता मृद् रक्तपित्ते प्रलेपनार्थमुपयुक्ता ( चचि. ४.१०४ )
**पुष्कल**–पु., मोक्षः ( चसि. १२.३५-३६ )
**पुष्ट**–वि., पीनः ( अहसू. ३.१२ )
**पुष्टि**–स्त्री., पोषणम्, तृप्तिः ( चसू. २५.४० )
उपचयः ( चशा. ३.१[illegible] )
**–दा**–स्त्री., वनस्पति० अश्वगन्धा ( रा. ४.४०१ )
ऋद्धिः ( रा. ५.१८८ )
**पुष्प**–न., कुसुमम् ( सुसू. ४६.२८९; चसू. १.७३ )
खनिज० पुष्पकासीसम् ( सुक. ६.२० )
रत्न० पुष्परागः ( र. २२.१५-१६ )
नेत्ररोग० कृष्णे श्वेताः, श्वेते वा कृष्णश्यावा बिन्दवः, आद्याः शुक्रसंज्ञा अपरे च शुक्राख्याः ( र. २३.५३ )
स्त्रीणाम् ऋतुः ( सुचि. ३७.१२५ ) आर्तवदर्शनम् ( चशा. ८.५ ) युवत्या आर्तवम् ( र. १०.७७ )
( **पुष्पी** )–स्त्री., वनस्पति० अर्कः ( ध. ४.१३ )
सुवर्णकेतकी ( रापरि. १०.३ )
**–काल**–पु., स्त्रीणाम् ऋतुकालः ( सुशा. ३.१२ )
**–कासीस**–न., खनिज० कासीसभेदः, नीलकासीसम् ( चसि. ६.६४ ) तद्गुणाः–कषायमम्लं, तिक्तं, सोष्णं, नेत्र्यं, कचरञ्जनं, पित्तकफघ्नं, विषव्रणश्वित्र-नेत्रामयकुष्ठत्वग्दोषनाशनम् ( ध. ३.१२५ ) उपदंशव्रणचिकित्सायामवचूर्णनकल्पद्रव्येष्वेकम् ( सुचि. १९.४०-४१ ) प्रतिसारणार्थमुपयुज्यते ( सुउ. १४.३-४ ) सुरसारसैः भावितमेतत्पक्ष्मशातेऽञ्जनम् ( असंउ. १२ )
हिं.—पुष्पकसीस.
म.—**श्वेतनीळी.**
गु.—धोळी हीराकशी.
बं.—पुष्पकासीस.
**–केतु**–पु., खनिज० पुष्पाञ्जनम् ( ध. ३.१६२ )

**–गन्ध**–पु., वनस्पति० जूर्णी ( रा. १६.१६९ )
**(–गन्धा)**–स्त्री., वनस्पति० यूथिका ( ध. ५.१४८ )
**–घ्नी**–स्त्री., जातहारिणी-रेवतीग्रह० ( का. रेवतीक. ३३-३४ )
**–ज**–पु., वनस्पति० पुष्पद्रवः ( रापरि. १०.५४ )
**–दर्शन**–न., आर्तवदर्शनम् ( चशा. ८.२४ )
**–द्रव**–पु., वनस्पति० तद्गुणाः– कषायो मधुरः सुरभिः, सरः, शीतः, सन्तर्पणः, कफपित्तहरो दाहश्रमार्तिवमिमोहमुखामयतृष्णाऽऽर्त्यरोचकघ्नः ( रापरि. १०.५४ )
हिं.—फूल.
**म.—फूल.**
गु.—फुल.
बं.—फुल.
फा.—गुल.
**–धन्वन्**–पु., योग० वृष्ययोगोऽयं, सुवर्णरौप्यताम्र-गन्धकादियुक्तो योगः, वल्लप्रमाणोपसेवितः पुष्टिं वीर्यञ्च प्रदत्ते दीपनश्च संजायते (र. २७.११४-१६)
**–निर्यासक**–पु., वनस्पति० पुष्पद्रवः ( रापरि. १०.५४ )
**–नेत्र**–न., उत्तरबस्तिनेत्रसंज्ञा ( चक. चसि. ९.५० ) द्र० 'उत्तरबस्ति' ( ड. सुचि. ७.३३ )
**–पूर्वकासीस**–न., खनिज० पुष्पकासीसम् ( र. ३.५५ )
**–फल**–न., वनस्पति० कूष्माण्डः ( ड. सुसू. ९.४ )
**–मञ्जरिका**–स्त्री., वनस्पति० इन्दीवरी ( रा. परि. ३.२७ )
**–यूष**–पु., यूष० अयं जीर्णातीसारनाशनः ( काखिल. ४.४७-४९ )
**–रजःप्रकाश**–वि., पुष्पधूलिसदृशः ( चक. चक. १.१९ )
**–रस**–पु., न., भैषज्य० मधु ( सुउ. १२.१४; ध. ६.२३३ )
**–रसागर**–न., वनस्पति० श्वासारिः, पाठाभेदः ( ध. १.७१-७२ ) द्र० 'पाठा'
**–राग**–पु., न., रत्न० ( असंसू. १२.१९-२१ ) श्रेष्ठस्य पुष्परागस्य लक्षणम्–गुरुः, स्निग्धः, स्वच्छः, स्थूलः, समः, सर्वत्र तुल्यो मृदुः, कर्णिकार-प्रसूनाभः, श्लक्ष्णः (र. ४.२५) त्याज्यस्य लक्षणानि–निष्प्रभः कर्कशो रूक्षो वर्णतः पीतकृष्णः नतोन्नतः श्यावः पिङ्गलः पांडुश्च ( र.४.२६ ) तस्य गुणाः–

दीपनः पाचनो लघुश्च वर्तते विषच्छर्दिकफवाताग्निमान्द्यदाहकुष्ठास्रनुत् ( र. ४.२७ )

**–विष**–न., स्थावरविष० वेत्रकादम्बवल्लीजकरम्भमहाकरम्भाणि पञ्चपुष्पविषाणि; तल्लक्षणानि–छर्दिराध्मानं मोहश्च भवेत् ( सुक. २.५-८ ) द्र० ' विष '

**–शकलिन्**–पु., निर्विषः सर्पः गलगोलीशूकपत्रादीनामन्यतमः ( सुक. ४.३४ (४) )

**–शून्य**–पु., वनस्पति० उदुम्बरः ( रा. ११.१३७ )

**–सार**–पु., वनस्पति० पुष्पद्रवः ( रापरि. १०.५४ )

**–सौरभा**–स्त्री., वनस्पति० कलिकारी ( रा. ४.१८ )

**–स्वेद**–पु., वनस्पति० पुष्पद्रवः ( रापरि. १०.५४ )

**पुष्पक**–पु., निर्विषसर्प० ( असंउ. ४१ )
न., नेत्ररोगः ( चचि. १७.१२८ )
खनिज० नेत्ररोगे उपयुक्तम् (काषट्कल्पाध्याय. २९

**पुष्पाञ्जन**–न., खनिज० अञ्जनभेदः ( असंसू. १६.३१ ) रीतिपुष्पम् ( अहसू. १५.३७ ) तद्गुणाः–शीतम्, पित्तघ्नं, हिक्काक्षिरोगविषप्रदाहकासघ्नम् ( ध. ३.१६२; र. ३.१०८ )

**पुष्पाण्डक**–पु., शालि० पुष्पाणीव सुगन्धानि सुकुमाराण्यण्डानि तण्डुलानि यस्य सः पुष्पाण्डकः ( सुसू. ४६.४ ) द्र० ' शालि '

**पुष्पाभिकीर्ण**–पु., सर्प० दर्वीकरः, वैकरञ्जेभ्यस्त्रिभ्यो जातः सर्प०, अयं मण्डलिसर्पविशेषवत् ज्ञेयः ( सुक. ४.३४(१) )

**पुष्पाम्बुज**–पु., वनस्पति० पुष्पद्रवः ( रा.परि. १०.५४ )

**पुष्पावतंस**–वि., पुष्पसुगन्धीकृतम् ( सुसू. ४५.१३ )

**पुष्पासव**–न., भैषज्य० मधु ( ध. ६.२३३ )

**पुष्पाह्वा**–स्त्री., वनस्पति० शतपुष्पा ( रा.४.२ )

**पुष्पित**–वि., इष्टानिष्टपुष्पगन्धसादृश्यनिरूपितरिष्टलक्षणलक्षितः ( चइ. २.८-१० )

**( पुष्पिता )**–वि., ऋतुमती ( अहसू. १७.२४ )

**पुष्पितक**–वि., अध्याय० ( चइ. २.१ )

**पुष्पोद्रेक**–पु., पुष्पमृतुस्तस्योद्रेकोऽकालप्रवृत्तिः ( ड. सुचि. ३७.१२५ )

**पुष्पोपहार**–न., पुष्परूपम् उपायनमुत्कोचः ( असंसू. ८.९८ )

**पुष्य**–न., नभोनक्षत्र० पुंसवनकर्मणि पुष्ये नक्षत्रे भेषजं कर्तव्यमित्यायुर्वेदे उक्तम् ( चशा. ८.१९ )

**–योग**–पु., पुष्यनक्षत्रसंबन्धो, महागन्धहस्तिनाम्नोऽगदस्य गुलिकाः पुष्ययोगे कार्या इति विधिः ( चचि. २३.८१-८२ )

**पुष्यानुगचूर्ण**–(परिव०) न., योग० इदं पुष्यनक्षत्रे निर्मितम् इति पुष्यानुगम् ( चचि. ३०.९०-९६ ) पाठाशाल्मलीलोध्रजम्बूगैरिकादियुक्तम् अर्शोऽतिसारजरक्तस्रावयोनिदोषरक्तप्रदरघ्नम् ( र. २५.९९-१०३ )

**पुस्त**–न., पुत्तलम्, पुत्रिका ( अहसू. ३.३७ )

**–मयपुरुष**–पु., वस्त्रादिरचितो मनुष्यः ( सुसू. ९.४ )

**पूग**–पु., वनस्पति० पूगफलम् (रा. ११.७१ चसू. ५.७७)
समूहः ( असंक. ५ )
न., पूगीफलम् ( सुचि. २४.२१ )

**–फल**–न., वनस्पति० गुणाः– कषायं, स्वादु, रूक्षं, सरं, संमोहकृत्, रोचनं, कफपित्तघ्नं वक्त्रक्लेदवक्त्रमलहरं च ( ध. ३.३९; सुसू. ४६.२०१; असंसू. ३.३७ )

हिं.—सुपारी.
**म.—सुपारी.**
गु.—सोपारी.
बं.—शुपारी.
ता.—पाक्काया.
फा.—पोपिल.

**–वृक्ष**–पु., वनस्पति० पूगः ( रा. ११.७१ )

**पूजन**–न., अर्चनम् ( सुउ. ३९.२६५ )

**पूज्य**–वि., पूजार्हो, वन्द्यः, श्रेष्ठः ( चनि. ७.१०; अहसू. २.३३ )

**–मानक**–न., वनस्पति० जीरकम् ( ध. २.६६ )

**पूत**–पु., वनस्पति० विकङ्कतः ( रा. ९.५५ )
दर्भः ( रा. ८.२०७ )

**( पूता )**–स्त्री., वनस्पति० नीलदूर्वा ( रा. ८.२२६ ) द्र० ' दूर्वा '

**–गन्ध**–पु., वनस्पति० बर्बरः ( रा.परि. १०.४८ )

**–द्रु**–पु., वनस्पति० पलाशः ( ध. ५.१६१ )

**–धान्य**–पु., वनस्पति० तिलः ( ध.६.१२२ )

**–फल**–पु., वनस्पति० पनसः ( रा.परि. ११.१० )

**–पत्री**–स्त्री., वनस्पति० तुलसी ( रा. १०.७९ )

**पूतना**–स्त्री., वनस्पति० हरीतकी ( चचि. ९.४५ )
गन्धमांसी ( ध. ३.४७ )
बालग्रह० ( काइ. २०.२१ ) रेवतीग्रहस्य नाम ( का बालग्रहचि. ) लक्षणानि–वमनं, कम्पस्तन्द्रा, रात्रौ प्रजागरः, हिध्माऽऽध्मानं शकृद्भेदः पिपासा, मूत्रनिग्रहः, स्रस्तहृष्टाङ्गरोमत्वं, काकवत् पूतिगन्धिता ( सुउ. २७.१२; असंउ. ३ )

–केशी–स्त्री. वनस्पति० गोलोमी (चक्र.चचि.१०.३४)
–प्रतिषेध–पु., अध्यायसंज्ञा० ( सुउ. ३२.१ )
**पूति**–स्त्री., लक्षण० पूयभवनम् पूतीभावः ( चसू. ५.२९ )
दुर्गन्धः (चवि. ८.९७; सुसू.२१.११ ड.सुउ.२२.८)
वनस्पति० पूतिकरञ्जः ( र. १६.१६५ )
कत्तृणम् ( रा. ८.१०६; अहृसू. १२.३८ )
वि., विस्रगन्धि ( सुसू. २१.११ )
–करञ्ज–पु., वनस्पति० करञ्जभेदः द्र० 'करञ्ज' ( रा. ९.१८० )
–करञ्जक्षार–पु., नक्तमालस्य क्षारः, अयं प्लीहोदरे पानोपयोगी ( असंचि. १७ सुचि. १४.१३ )
–करञ्जशाक–पु.,न., पत्रशाक० कटुकं पाके, उष्णवीर्यं स्रंसनं लघु, वातकफापहं शोफघ्नं च ( सुसू. ४६.२७८ )
–कर्ण–पु., कर्णरोग० (सुउ. २०.१५-१६) कर्णस्रोतः-स्थिते श्लेष्मणि पित्ततेजसा विलीयमाने सति सवेदनोऽवेदनो वा घनः पूतिश्च स्रावः भवति कर्णात्पूयस्राव इत्यर्थः ( सुउ. २०.१५ असंउ. २१ )
(कर्णी )–स्त्री., वनस्पति० बाकुची ( ध. १.१६६ )
–कर्णिक–पु., वनस्पति० करञ्जभेदः ( रा. ९.१८० ) द्र० 'करञ्ज'
–काष्ठ–न., वनस्पति० सरलः (ध. ३.७८) देवदारु ( ध. १.७७ )
–कीट–( परि० ) पु., कीट० वर्षाकालजः शस्यादः कीटः कर्बुरकः, "तेलिनी" इति प्रसिद्धः लेपोऽस्य श्वित्रघ्नः ( सुचि. ९.१६; सुउ ५०.२३ )
–गन्ध–पु., वनस्पति० इङ्गुदी ( रा. परि. ८.१८ )
खनिज० गन्धकः ( ध. ३.१०९ )
न., खनिज० वङ्गम् ( रा. १३.१४ )
–(गन्धा)–स्त्री., सौम्यलता (असंउ. ४५) द्र० 'लता'
–( घास )–पु., पशु० वृक्षबिडालः, सुगन्धिवृषणः पर्णमृगेष्वेकः ( सुसू. ४६.७६ ) द्र० 'पर्णमृग'
–घ्राणगन्धिता–स्त्री., नासारोग० शोणितजो व्याधिः, अस्मिन् घ्राणस्य गन्धः पूतिर्भवति ( चसू. २४.११ )
–दोष–पु., पारदस्य उत्थापनसंस्कारनाश्यः पूति-लोहजो दोषः ( र. ११.३३ )
–नस्य–न., नासारोग० पूतिनासः ( र. २४.२० )
लक्षण० ( चचि. ४.२६-२७ )
–नास–पु., नासारोग० तालुमूलमाश्रित्य वातादिभि-र्दुष्टैर्वासितो वायुर्मुखान्नासिकायाश्च पूतिभावापन्नः सन् बहिर्गच्छति । सोऽयं पूतिनाससंज्ञितो रोगविशेषः ( सुउ. २२.७-८; असंउ. २३ )
–पत्र–पु., वनस्पति० टिण्डुकभेदः ( रा. ९.१४२ ) द्र० 'टिण्डुक'
–पर्ण–पु., वनस्पति० करञ्जः ( रा. ९.१७६ )
–पूयनिभ–वि., लक्षण० शटितपूयसदृशम् (शुक्रम्) ( सुशा. २.४; असंशा. १ )
–पूरक–पु., वनस्पति० अतसी ( ध. ६.११५ )
–प्रजा–वि., छिन्नाङ्गप्रत्यङ्गा म्रियमाणापत्या ( चशा. ४.३० )
–फला–स्त्री., वनस्पति० बाकुची ( ध. १.१६५ )
–भोजन–न., दुर्गन्धि भोजनम् ( चवि. ७.१२ )
–मत्स्य–पु., क्लिन्नमत्स्यः ( इन्दु. असंउ. २८ )
–मयूरिका–स्त्री., वनस्पति० अजगन्धा ( ध. २.१०० )
–मांस–न., रोग० मांसप्रदोषजोऽयम्, मांसदौर्गन्ध्यम् ( चसू. २८.१४ )
वि., अत्यर्थदुर्गन्धि मांसं यस्य स व्रणः (सुक. ५.५६)
–मांसपिडका–स्त्री., रोग० पूतिमांसवती पिडका ( चनि. ४.८ )
–मारुत–पु., वनस्पति० बिल्वः ( ध.१.१०६ )
–मुखता–स्त्री.,लक्षण० चत्वारिंशत्पित्तविकारेष्वेकः मुखदौर्गन्ध्यम् ( चसू. २०.१४ )
–मुखत्व–न., लक्षण० चत्वारिंशत्पित्तविकारेष्वेकः मुखदौर्गन्ध्यम् ( असंसू. २० )
–मेदस्–न., वनस्पति० इरिमेदः ( ध. ५.१३३ )
–योनि–स्त्री., लक्षण० दुर्गन्धियोनिः (असंशा. २.४२)
–लूता–स्त्री., सौम्यलता० ( असंउ. ४४ ) द्र० 'लुता'
–लोह–न., खनिज० नागं वङ्गं च ( र.१७.४१-४२ )
–विशीर्णमांस–न., लक्षण० दुर्गन्धिशटितमांसम् ( सुनि. १६.६३ )
**पूतिक**–पु., वनस्पति० चिरबिल्वः ( सुसू. ३७.१३ )
करञ्जः ( सुचि. ९.४०; ध. ५.१०७ )
अस्य त्वक्फलपत्राणि विरेचनार्थमुपयुज्यन्ते ( असंसू. १४.४ )
**पूतीक**–पु., वृक्ष० कण्टकीकरञ्जः ( चसू. १.११६)
वनस्पति० चिरबिल्वः ( सुसू. ३८.८-९ )
करञ्जभेदः पूतीकरञ्जः ( सुसू. ३८.१०-११ अहृसू. ३०.९ )
–पत्र–न., करञ्जवृक्षस्य पत्रम्, वातजे व्रणे आच्छादनार्थ-मुपयुज्यते ( सुचि. १.११२-११३ )

–**प्रवाल**–पु., कण्टकिकरञ्जपल्लवः तीक्ष्णक्षारनिर्माणे प्रतीवापार्थमुपयुज्यमानेषु द्रव्येष्वेकम् (सुसू. ११.१३ असंसू. ३९.१० )

**पूतीकरञ्ज**–पु., वनस्पति० करञ्जविशेषः (चचि.२६.२३) कण्टकिकरञ्जवृक्षः श्लीपदे पूतीकरञ्जपत्राणां स्वरसः शस्तः ( सुचि. १९.६० )

( वनस्पति० चिरबिल्वः ( र. १४.८३-९५ )

**पूत्यरीमेदस्**–न., वनस्पति० करञ्जभेदः पूतिकरञ्जः ( असंसू. १५.४७ )

**पूत्यास्यगंधिता**–स्त्री., लक्षण० मुखदौर्गन्ध्यम् ( चसू. २४.११ )

**पूत्यास्यता**–स्त्री., मुखरोग० दन्तकाष्ठादिविद्विषो दन्तकाष्ठादिकार्यमकृतवतः पुरुषस्य सास्रैर्मलैः पूत्यास्यनामा रोगो भवति ( असंउ. २५ )

**पूप**–पु., आहारद्रव्य० पिष्टिका ( चसू. २७. २६७ ) पूपलिका (ड. सुउ. ६०.३२–३३) सगुडः स्नेहसिद्धोऽपूपः ( इन्दुः असंउ. ४ )

–**कल्प**–पु., सूदशास्त्रोक्तपूपकल्पः ( चक. १.२४ )

–**पूपलिका**–स्त्री., आहारद्रव्य० पिष्टकः (चवि. ७.२१) चापडिका ( चसू. २७.२६७ ) पूपालिका ( सुउ. ५४.२७–२८ )

–**योग**–पु., आहारद्रव्य० गोधूमचूर्णमत्स्यहिङ्गुसैन्धवादिसिद्धा, अयं बृंहणो बलवर्धनो हर्षसौभाग्यदः शुक्राभिवर्धनश्च (चचि. २ (४)१९–२२)

–**वर्ति**–स्त्री., आहारद्रव्य० वर्त्याकारा पूपलिका ( चचि. २४.१२६ )

**पूय**–पु., व्रणे संजायमानः आप्यो भावः (चसू २६.४३(५) स द्रवः पीतवर्णः सश्वेतो दुर्गन्धयुक्तो व्रणजन्यः शारीरभावः (सुउ. ४१.२४; अहसू. २९.१२–१३; असंसू. ४०.३; र. १४.१)

'पूयस्तु रक्तजन्यो भाव इति गम्यते रक्तेन पूयभावं गतेन मरणम्' इति आगमवचनात् ( सुशा. ६.२५ ) कफादृते पूयो न संभवति इत्यागमवाक्यात् ( सुसू. १७.८ ) शोफे दोषत्रयेण पच्यमाने कफदोषो विशेषतः पूयहेतुरस्ति इति अवगम्यते

–**गर्भ**–वि., पूयो गर्भे यस्य स ( व्रणः ) अन्तर्गतपूयः ( सुचि. १.४६ )

–**दर्शन**–न., लक्षण० पूयप्राप्तिः ( सुसू. ५.७ )

–**प्रख्य**–वि., पूयसंज्ञकम् प्रख्यायतेऽनया व्यपदिश्यतेऽनया इति प्रख्या संज्ञा ( सुशा. २.९ )

–**रक्त**–न., नासागतरोग० ( चचि. २६.११६ ) पूयरक्तं दोषाऽऽगन्तुभेदेन द्विप्रकारम्–(१) जन्तोर्नासा पित्तरक्ताधिक्याद् दुष्टैर्दोषैः रक्तमिश्रं पूयं स्रवेद्यदा तदा दोषजं पूयरक्तं स्यात्; (२) ललाटदेशेऽभिहतस्य नरस्य नासाऽसृङ्मिश्रं पूयं स्रवति तदाऽऽगन्तुजं पूयरक्तं जानीयात् ( सुउ. २२.१० ) ( असंउ. २३ )

–**स्राविणी**–वि., पूयं मुहुर्मुहुः स्रवन्ती ( योनिः ) ( सुउ. ३८.२६ )

**पूयालस**–पु., नेत्ररोग० कनीनसंधौ पूयस्राव्याध्मायी सवेदनः शोफसंरम्भपूर्वकः सूक्ष्मो व्रणः (असंउ.१२) संनिपातजोऽयं साध्यश्च ( सुउ. २.४ ) स्नेहस्वेदपूर्वकमुपनाहनं तथा च रक्तमोक्षणं हितम्, नेत्रपाकवात्यान्तर्बाह्यशुद्धिकरः कृत्स्नो विधिर्विधेयः ( सुउ. १२. ४५ )

**पूयास्राव**–पु., नासारोग० पूयरक्ताभ्यां युक्तः स्रावः ( चचि. २६.१४६; र. २४.२० ) नेत्ररोग० सास्रा वातादिमला वर्त्मसंधिकनीनकार्तसास्रवर्त्माांसपाकतो मुहुः पूयं स्रावयन्ति ( सुउ. २.६; असंउ. १३ ) त्रिदोषजोऽसाध्यो नेत्रनाडीभेदः ( सुउ. २.६ )

**पूरक**–पु., वनस्पति० मातुलुङ्गः (रा. ११.२७)

**पूरण**–न.; उपक्रम० संतर्पणम् ( चवि. ३.४२ ) भरणम् ( सुसू. २२.११ ) तैलेन पूरणम् ( चवि. २६.२२१ )

**पूराम्ल**–न., वनस्पति० वृक्षाम्लम् ( रा. ६.१४३ )

**पूर्ण**–वि., पूरितम्, अरिक्तम् (असंचि.२१)

–**कोश**–पु., आहारद्रव्य० द्रव्यपूरितान्तर्भागो भक्ष्यविशेषो यथा यवपिष्टमयं भक्ष्यम् ( असंचि. २१; सुचि. १०.५ )

–**कोष्ठता**–स्त्री., लक्षण० संचितकफादिदोषेण कोष्ठस्य पूर्णत्वं व्यात्तत्वं वा ( सुसू. २१.१८ )

–**कोष्ठा**–स्त्री., वनस्पति० मुस्तभेदः नागरमुस्ता द्र० 'मुस्त' ( रा. ६.६२ )

–**चन्द्र**–पु., पारदयोग० सूताभ्रलोहशिलाजत्वादिसिद्धः बृंहणोऽयम् ( र. १८.१९० ) पारदयोग० सूतगन्धकशंखमौक्तिकादिसिद्धः, ग्रहण्यर्शःस्त्रीरोगादिहरोऽनुपानभेदेन ( र. २७.१३०-३३ )

–**बीज**–पु., वनस्पति० मातुलुङ्गः ( रा. ११.२६ )

**पूर्णक**–पु., वनस्पति० तिलकः ( ध. ५.१५८ )

**पूर्णाक्ष**–पु., महर्षि० रसाहारसम्यग्विनिश्चयार्थमुपविष्टानां आत्रेयभद्रकाप्यादीनां महर्षीणामन्यतमः ( चसू. २६.३ )

**पूर्णामृत**–पु., कश्चित प्राचीनो रसाचार्यो योगीन्द्रश्च ( र.२२.१३ )

**पूर्व**–वि., आदिमम्, अव्यवहिताग्रवर्ति ( सुसू. ५.३ )

**( पूर्वा )**–स्त्री., दिग्० ( चसू. १४.४६ )

**–काय**–पु., पूर्वं कायस्य नाम नाभेरूर्ध्वभागः ( सुचि. ६.४ )

**–जातिस्मर**–वि., पूर्वजातीनां पूर्वजन्मनां स्मर्ता ( सुशा. २.५७ )

**–देश**–पु., भारतवर्षस्य पूर्वदिशि वर्तमानो देशः पूर्वदेशस्तु मधुरः शीतलो गुरुर्विज्ञेयः ( काखिल. २५.७–१२ )

**–देहानुभूत**–वि., पूर्वजन्मन्यनुभूतः ( सुशा. ४.३६ )

**–पक्ष**–पु., तन्त्रयुक्ति० आक्षेपपूर्वकः प्रश्नः पूर्वपक्षः ( सुउ. ६५.२५ चसि. १२.४३ )

**–भक्त**–वि., भक्तस्य पूर्वम् उपयुज्यमानम् ( सुउ.९.१८ ) भैषज्यकाल० ( सुउ. ९.१८ )

**–रूप**–न., व्याधेः प्रागुत्पत्तिलक्षणम्, व्याध्युपलब्धि-कारणेषु एकम् ( चनि. १.८ ) पूर्वरूपं नाम येन भाविव्याधिविशेषो ज्ञायते, न तु दोषविशेषः तदुत्पत्स्यमानस्य व्याधेरलाभत्वाद् अव्यक्तं रूपम् ( असंनि. १.१०; सुसू. २१.३३ अहृसू. १२.६० )

**–रूपीयाध्याय**–(परिव०) पु., अध्याय० (चइ. ५.१)

**–वात**–पु., पूर्वदिग्भवो वातः ( चचि. ९.७४ )

**–वेदना**–स्त्री., पूर्वरूपम् ( कासू. २५.१३ )

**पूर्वापराधज**–वि., पूर्वकर्मजः ( अहृसू. १२.५७ )

**पूर्वाभिभाषिन्**–वि., पूर्वमभिभाषितुं शीलमस्येति प्रथम-संभाषणशीलः ( चसू. ८.१८ ) यदृच्छया सङ्गते सुहृदि तद्वचनात्पूर्वं कुशलप्रश्नादिकारी ( हे अहृसू. २.२६ )

**पूर्वाह्ण**–पु., अह्नो दिवसस्य पूर्वभागः ( सुसू. ६.१४ )

**पूषन्**–पु., देवता० सूर्यः द्वादशादित्यानामन्यतमः ( र. ३०.१२५ )

**पृथक्**–अव्य०, भिन्नम् ( ध. १.१३ )

**–त्व**–न., असंयोगः ( चसू. २६.२९ )

**–पर्णी**–स्त्री., वनस्पति० मूर्वा ( ध. १.१३ ) पृश्निपर्णी ( ध. १.९०; सुसू. ३७.२५ )

**–बीज**–पु., वनस्पति० भल्लातकः ( रा. ११.२०२ )

**पृथशिम्ब**–पु., वनस्पति० टिण्टुकः ( ध. १.११५ )

**पृथाज**–पु., वनस्पति० अर्जुनः ( रा. ९.१९३ )

**पृथिवी**–स्त्री., महाभूत० तमोबहुला इयम् (सुशा. १.२०) भूमिः ( सुशा. १.२०; चवि. ३.२४ ) देवता० घ्राणस्याधिदैवतं पृथिवी ( सुशा. १.७ )

**–रुह**–पु., वृक्षः ( सुसू. १६.२७ )

**पृथिव्यात्मक**–वि., पृथिवीगुणात्मकम् ( चशा. ४.१२ )

**पृथु**–वि., विस्तीर्णः ( सुसू. ३२.३ ) द्विकोणम् ( हे अहृसू. २८.१८ ) स्त्री., वनस्पति० हिङ्गुपत्री ( ध.२.३८ ) मसूरिका ( ध. ६.९५ ) उपकुञ्ची ( रा. ६.९१ )

**( पृथ्वी )**–स्त्री., वनस्पति० श्वेतमन्दारकः (रा. १०.३१) पुनर्नवा ( रा. ५.४०४ )

**–कन्दक**–पु., वनस्पति० गुण्ठः ( ध. १.८३ )

**–च्छद**–पु., वनस्पति० दर्भभेदशरपत्रः ( रा. ८.२०९ ) द्र० 'दर्भ' आक्षोडः ( ध. ५.६० )

**–ता**–स्त्री., विस्तीर्णता ( सुनि. १५.१० )

**–दर्शिन्**–वि., विशालदर्शी पण्डितः, आयुर्वेदीयः आचार्यः ( सुश्रुतादिः ) ( सुशा. १.११ )

**–पत्र**–पु., वनस्पति० लशुनभेदः महाकन्दः ( रा. ७.९६ ) द्र० 'लशुन'

**–पलाश**–पु., वनस्पति० सठी ( ध. १.६१ )

**–पलाशिका**–स्त्री., वनस्पति० सठी ( ध. १.६१ )

**–फल**–पु., वनस्पति० बदरभेदः राजबदरः ( रा. ११.१६० ) द्र० 'बदर'

**–बीजक**–पु., वनस्पति० मसूरिका ( रा. १६.१४९ )

**–मुख**–वि., विस्तृतमुखम् ( अहृसू. २८.२१ )

**–शिम्ब**–पु., वनस्पति० टिण्टुकः ( रा.९.१४१ )

**पृथुक**–पु., आहारद्रव्य० आर्द्रशालिधान्यं मृदुभृष्टं मुसलाघातचिप्पटीभूतावयवं 'पृथुक' इत्युच्यते सोऽयं गुरुः स्निग्धो बृंहणः कफवर्धनश्च ( सुसू. ४६.४१५ ) वनस्पति० हिङ्गुपत्री ( ह. र. ३०.५७ )

**पृथुल**–पु., वनस्पति० दर्भभेदः ख़रः ( ध. ४.१३३ ) द्र० 'दर्भ' दर्भ.

**( पृथुला )**–स्त्री., वनस्पति० गुण्डासिनी (रा.परि.८.६६) वनस्पति० हिङ्गुपत्री ( ध. २.३८ )

**–फल**–न., वनस्पति० राजबदरः ( रा. ११.१६० ) द्र० 'बदर'

**पृथ्वर्पित**–वि., अवगाढदंष्ट्रापदः दंशः (चचि. २३.१२८)

**पृथ्वीका**–स्त्री., वनस्पति० श्यामवर्णः स्थूलजीरकः ( ड. सुक. ६.१८ ) द्र० 'जीरक'
वनस्पति० हिङ्गुपत्री ( सुक. ५.७३ )
एला ( सुक. ५.७३ )
**–भट**–पु., रत्न० राजावर्तः ( र. १५.५३–५४ )
वनस्पति० ऋषभकः ( र.१५.५३–५४ )
मान० कोलम् ( ह.र. १५.५३–५४ )
धातुविष० मल्लः ( ह.र. १५.५३–५४ )

**पृथ्वीका**–स्त्री., वनस्पति० स्थूलजीरकः, धूमोपयोगि द्रव्यम् ( चसू. ५.२० )
गुणाः–कटुस्तिक्ता कटुपाका उष्णा तीक्ष्णा गन्धाढ्या रुच्या अग्निदीपनी पित्तवर्धनी कफवातघ्नी आध्मानगुल्मामदोषघ्नी च ( ध. २.५९ )
हिं.—कलौंजी.
**म.—कलौंजी जिरें.**
गु.—कलौंजी जीरुं.
बं.—मोटाकेले जीरे.
ता.—चीमैच्चीरकं.
एला ( चचि. ७.१२२ )
हिङ्गु–पत्री ( सुउ. ४२.९५; ध. २.३८ )
भद्रैला ( असंसू. १४.३; अहसू. १५.४ )
**–तैल**–न., कटुतैल० कृष्णजीरकतैलम् ( सुसू. ४५.११५ ) द्र० 'कटुतैल'

**पृथ्वीज**–न., लवण० सांभरलवणम् ( रा. ६.४७ )

**पृश्निपर्णी**–स्त्री., वनस्पति० गुणाः– कटुस्तिक्ताम्ला, ( स्वादुः–ध. ) उष्णा, त्रिदोषघ्नी, अतीसारकास-वातरोगज्वरोन्मादव्रणदाहरक्तश्वासतृषाहरा ( रा. ४.११७ ) अणुतैलद्रव्येष्वेकम् ( चसू. ५.६५ ) लघुपञ्चमूलेष्वेकम् ( चसू. २.११ ) पित्तश्लेष्मातिसारघ्नपेयायामुपयुज्यते ( चसू. २.२० ) सांग्राहिकवातहरदीपनीयवृष्याणां श्रेष्ठा ( चसू. २५.४०; असंसू. १३ )
श्वयथुहरगणे एकं द्रव्यम् ( चसू. ४.१६ )
हिं.—पिथिवन.
**म.—पिठवण.**
गु.—पिठवन.
बं.—चाकुलिया.
ता.—पेरू, मल्लिकै.

**पृषत**–पु., प्राणि० मृगभेदः, बिन्दुचित्रितहरिणः ( चक. ४.१२ ) तस्य मांसरसो जीर्णज्वरे हितः ( चचि. ३.१९१ )
चित्तलः ( ड. सुक. ५.७१ ) अयं सविषान्नदर्शने-नाश्रुक्लिन्ननेत्रः संजायते ( सुक. १.३३ )
सर्प० मण्डली ( सुक. ४.३४ (२) )
प्राणि० जङ्घालजातीयः ( ध. परि. ३ )
**–पित्त**–(परिव०) न., चित्रलमृगपित्तम् ( ड. सुउ. ६१.२४-२५ )

**पृषध्र**–पु., राज० दीर्घसत्रयाजिनानेन पश्वभावाद् गवामप्यालम्भः प्रवर्तितः ( चचि.१९.४ )

**पृष्ठ**–न., शारीर० अन्तराधेः पश्चाद्भागः इदं प्रमाणतो-ऽष्टादशाङ्गुलोत्सेधम् ( सुशा. ६.२६; चवि. ८.११७; अहसू. ५.५८ )
**–गतास्थि**–न., पृष्ठभागे स्थितमस्थि ( चशा. ७.६ )
**–ग्रह**–पु., लक्षण० पृष्ठं गृह्यते इव वेदना पृष्ठ-ग्रहणवद् वेदनाविशेषः पृष्ठस्य ग्रहः ( चचि. ११.१३; अहसू., १७.२६ )
**–दौर्बल्य**–न., लक्षण० पृष्ठभागस्य दौर्बल्यम् ( चचि. १४.१३३ )
**–पूरक**–पु., कुरुक्षेत्रात् पूर्वदेशः ( काखिल. २५.९ )
**–भङ्ग**–पु., लक्षण० पृष्ठभङ्गवत्पीडा ( काखिल. १२.१० )
**–मर्मन्**–न., पृष्ठभागस्थं मर्म, चतुर्दशपृष्ठमर्माणि, पृष्ठमर्माणि तु कटीकतरुणकुकुन्दरनितम्बपार्श्वसन्धि-बृहत्यंसफलकान्यंसौ चेति ( सुशा. ६.६ ) द्र० 'मर्म'
**–यान**–न., अश्वोष्ट्रादिपृष्ठारोहणपूर्वकं गमनम् ( सुचि. ६.२२ )
**–वंश**–पु., शारीर० पृष्ठाधारः ( सुशा. ६.२६; असंशा. ५.७५; अहसू. १९.२५ )
**–संग्रह**–पु., लक्षण० पृष्ठग्रहः ( चसू. १४.२२ )

**पृष्ठायाम**–पु., लक्षण० पृष्ठबहिर्निर्गतिः ( चक्र. चचि. २८.४४ )

**पृष्ठारुस्**–न., बालरोग० ( असंउ. २ ) द्र० 'अहिपूतन'

**पृष्ठास्थि**–न., अस्थि० पृष्ठे स्थितानि अस्थीनि ( सुशा. ५.१९ )

**पृष्ठेषिका**–स्त्री., शारीर० पृष्ठवंशः ( चक्र. चइ. ३.५ )

**पेऊ**–स्त्री., वनस्पति० गुणाः –कटुकाम्ला, रुचिकृद्बल्य-दीपनी च (रा.परि.७.२१)

**पेटकारी**–स्त्री., वनस्पति० पिटारी ( र. २५.९७ )
ज्योतिष्मती ( र. ५.२४१–४२ )
क्षुप० कुलिङ्गाक्षी ( ह. र. १७.६ )

**पेटारी**–स्त्री., बलाभेदा पिटारी ( ह. र. २४.१३३ ) द्र० 'बला'

**पेया**–स्त्री., कृतान्नपेया सिक्थसमन्विता (सुसू. ४६.३३४) क्षुत्तृष्णा-ग्लानिदौर्बल्य-कुक्षिरोग-ज्वरनाशिनी, स्वेदाग्निजननी, वातवर्चोऽनुलोमनी च (चसू. २७.२५०; चसू. २.१९; चसि. १.११) लघुर्दीपनी बस्तिशोधनी च (सुसू. ४६.३४१-३४२)

**–मण्ड**–पु. न., पेयाया उपरिस्थितो द्रवभागः (चचि. ८.१२७)

**पेयादिक्रम**–पु., पेयादिसेवनविधिः, तस्य क्रमः वमनविरेचनादिशोधनैः शुद्धो नरः सुखाम्बुना स्नातो रक्तशाल्यन्नं भुञ्जानः पेयादिक्रमं भजेत्। तद्यथा–पेयां विलेपीमकृतं कृतं च यूषमन्नकालान् क्रमेण सेवेत। उत्तमशुद्धया शुद्धः पेयादिकं त्रीन् त्रीनन्नकालान् भुञ्जीत। मध्यमशुध्या शुद्धः द्वौ द्वावन्नकालौ, अवरशुध्या शुद्ध एकैकमन्नकालं भुञ्जीत। प्रतिदिनं द्वावन्नकालौ भवत इत्युत्तमशुद्धिशुद्धः सप्तमेऽहनि प्रकृतिभोजनमागच्छेत्। पेयादिक्रमेणाल्पोऽपि जाठराग्निः क्रमेण संधुक्ष्यमाणो महान् स्थिरः सर्वपचश्च भवति (चसि. १.१०-११; अहसू. १८.२९-३०)

**पेलव**–वि., अच्छम् (सुसू. ४५-२०२)
अल्पम् (सुशा. ५.४०)
सुकुमारम् (सुउ. ३९.२९१)

**पेशल**–वि., कोमलमकठिनम् (सुचि.३३.६;अहसू.२.२६)

**–वाच्**–वि., प्रियंवदः (इन्दु. असंउ. ४९)

**पेशिक**–न., खण्डः (असंचि. ९)

**पेशी**–स्त्री., शारीर० पञ्च पेशीशतानि भवन्ति। तासां चत्वारि शतानि शाखासु, कोष्ठे षट्षष्टिः ग्रीवां प्रत्यूर्ध्वं चतुस्त्रिंशत्, एकैकस्यां तु पादाङ्गुल्यां तिस्रस्तिस्रस्ताः पञ्चदश, दश प्रपदे, पादोपरि कूर्चसन्निविष्टास्तावत्य एव, दश गुल्फतलयोर्गुल्फजान्वन्तरे विंशतिः, पञ्च जानुनि, विंशतिरूरौ, दश वङ्क्षणे, शतमेवमेकस्मिन् सक्थ्नि भवन्ति। एतेनेतरसक्थि बाहू च व्याख्यातौ, तिस्रः पायौ, एका मेढ्रे, सेवन्यां चापरा, द्वे वृषणयोः स्फिचोः पञ्च पञ्च, द्वे बस्तिशिरसि, पञ्चोदरे, नाभ्यामेका, पृष्ठोर्ध्वसन्निविष्टाः पञ्च पञ्च दीर्घाः, षट् पार्श्वयोः दश वक्षसि, अक्षकांसौ प्रति समन्तात् सप्त, द्वे हृदयाऽऽमाशययोः, षट् यकृत्प्लीहोण्डु-(न्दु)केषु, ग्रीवायां चतस्रः अष्टौ हन्वोरेकैका काकलकगलयोः द्वे तालुन्येका जिह्वायां, द्वे ओष्ठयोर्द्वे नासायां, द्वे नेत्रयोर्गण्डयोश्चतस्रः कर्णयोर्द्वे, चतस्रो ललाटे, एका शिरसीत्येवमेतानि पञ्च पेशीशतानि। भवति चात्र–"सिरास्नाय्वस्थिपर्वाणि सन्धयश्च शरीरिणाम्। पेशीभिः संवृतान्यत्र बलवन्ति भवन्त्यतः"। स्त्रीणां तु विंशतिरधिका, दश तासां स्तनयोरेकैकस्मिन् पञ्च-पञ्चेति, यौवने तासां परिवृद्धिः अपत्यपथे चतस्रः, तासां प्रसृते अभ्यन्तरतो द्वे, मुखाश्रिते बाह्ये च वृत्ते द्वे, गर्भच्छिद्रसंश्रितास्तिस्रः शुक्रार्तवप्रवेशिन्यस्तिस्र एव, पित्तपक्वाशययोर्मध्ये गर्भशय्या, यत्र गर्भस्तिष्ठति। तासां बहलपेलवस्थूलाणुपृथुवृत्तह्रस्वदीर्घस्थिरमृदुश्लक्ष्णकर्कशभावाः संध्यस्थिसिरास्नायुप्रच्छादका यथाप्रदेशं स्वभावत एव भवन्ति (सुशा.५.३७-४०)
चत्वारि पेशीशतानि (चशा .७.१४)
वनस्पति० मांसी (ध. ३.४५)

**पेषण**–न., घर्षणम् (र. २.५०)

**(पेषणी)** स्त्री., यंत्र० चूर्णनार्थं खल्वे द्रव्यविशेषं न्यस्य यया तस्य कुट्टनं क्रियते (र. ७.५-८)

**पैङ्गल्य**–न., लक्षण० पिङ्गाक्षता नेत्रयोः पिङ्गलवर्णः (सुशा. ४.८३)

**पैङ्गल्याबाध**–पु., रोग० पैङ्गल्यम् पिङ्गलनेत्रता (चशा. ८.३२)

**पैङ्गि**–पु., ऋषि० रोगापहरणचिन्तनार्थं हिमवतः पार्श्वे समेतेषु महर्षिष्वेकः (चसू. १.१२)

**पैच्छिल्य**–न., लक्षण० अतिचिक्कणता पिच्छिलभावः (सुसू. ११.१७)

**पैत्त**–वि., पित्तप्रकृतिकः (ड. सुक. ५.३८)
वि., पित्तलः पित्तजनकः (सुक. ५.३८)

**पैत्तिक**–वि., पित्तप्रकृतिः (सुशा. ४.७१)

**पैत्र्य**–वि., पितृसम्बंधि(कार्यम्) (सुसू. २९.१७-१८)

**पैशाच**–न., राजससत्त्वस्यैकः प्रकारः। तल्लक्षणम्–महाशनः स्त्रैणः स्त्रीरहस्कामोऽशुचिः शुचिद्वेषी भीरुर्भीषयिता विकृतविहाराहारशीलश्च (चशा. ४.३८(३))

**–काय**–(परिव०) पु., राजसकाय० (सुशा. ४.९३)
पैशाच पैशाचस्वभावः (सुशा. ४.९२-९३)

**पैशुन्य**–न., दोषमात्रसूचकता दौर्जन्यमिति (सुचि. २४.९०) परस्याप्रत्यक्षं तद्दोषकीर्तनम् (अहसू. २.२१)

**पैष्टिक**–वि., तण्डुलपिष्टकृतः (भक्ष्यः) ड. गुणाः–उष्णः कफपित्तप्रकोपणः, विदाही (सुसू. ४६.४०१)

वि., यवगोधूमादिपिष्टकृतं ( मद्यम् )
( अहसू. १३.२ )

वि., पिष्टसंस्कृतं पिष्टमयं वा ( अन्नम् ) (चसू.२३.४)

**पोगर**–न., अलकवत्कुटिलरेखाः, तरङ्गसदृशरेखाः ( र. ५.८१ )

**पोटगल**–पु., वनस्पति० होग्गलः ( चक.चसि. १०.३३)
नलः ( का. बालग्रह चि. ) ( ध. ४. ४१ )
वैकरञ्जेभ्यस्त्रिभ्यो जातः सर्पविशेषः, अयं राजिलेन गोनस्यां वैपरीत्येन वा जातो मातृसमोल्बणविषः मण्डलिसर्पविशेषसदृशो वर्तते (सुक. ४.३४(५) )

**पोटबन्ध**–पु., पारदबन्ध० द्रुतकज्जलीमोचापत्रके चिपिटीकृतः स पोटः ( र. ११.७३ )

**पोटलिका**–स्त्री., प्रसेविका ( इन्दु. असं.२. १ )

**पोटली**–स्त्री., पोटलिका ( र. १४.२८ )

**पोटा**–स्त्री., वनस्पति० इक्षुगन्धा ( चक. चक. १.२५ )

**पोट्टल**–पु., पोटली ( चचि. ७.५१ )

**( पोट्टली )**–स्त्री., कल्पः पोट्टलीरसादिः ( र. १६.१३७ )

**पोट्टलिका**–स्त्री., पोटली ( चशा. ८.४७ )

**पोट्टली**–स्त्री., ( र. १६.१३७ )

**पोत**–पु., वस्त्रम् ( र. १३.१३-१२ )

**–शालि**–पु., वनस्पति० सूक्ष्मशालिः ( रा. १६.९२ )
द्र० 'शालि'

**पोतका**–स्त्री., वनस्पति० पोतकी ( ध. परि. ४.५ )

**पोतकी**–स्त्री., वनस्पति० गुणाः–शीतला, स्निग्धा, श्लेष्मला, वातपित्तघ्नी च ( ध. परि. ४.५ )

**पोताश्रय**–पु., कर्पूर० ( र. १२.७६-८८ )

**पोतिका**–स्त्री., वनस्पति० मूलपोती ( रा. परि. ७.७८ )
शतपुष्पा ( रा. ४.१ )

**पोथकी**–स्त्री., नेत्ररोग० कफात् नेत्रवर्त्मनि सर्षपाभा घनाः श्वेताः शोफोपदेहरुक्कण्डूपिच्छिलाश्रुसमन्विताः पिटिका भवन्ति (असंउ. ११; सुउ. ३.११)
पोथकीं शस्त्रेणावलिखेत् ( सुउ. १३.१४-१५ )

**पोत्थकी**–स्त्री., नेत्रवर्त्मरोग० पोथकी ( असंउ. २ )

**पौंश्चल्य**–न., पुंश्चल्याः स्वैरिण्या भावः पौंश्चल्यम् व्यभिचारः ( कासू. २८ )

**पौण्डरीक**–पु., बालग्रह० ( काइ. १६.१७ )

**पौण्डर्य**–न., वनस्पति० प्रपौण्डरीकम् ( रा. १२.१५४ )

**पौण्ड्रक**–पु., इक्षुभेदः ( चसू. २७.२३८ )
गुणाः–मधुरः शीतः स्निग्धो बृंहणः श्लेष्मलः सरोऽविदाही गुरुर्वृष्यः ( सुसू. ४५.१५१; ध. ४.१२०; सुचि. २६.१७ )

**पौण्ड्रवर्धनक**–न., देश० कुरुक्षेत्रात् पूर्वदेशः ( काखिल. २५.८ )

**पातन**–पु., बालरोग० पूतनाग्रहजनितो बालरोगः मातृकादोषो वा ( असंउ. २ )
देश० मथुराप्रदेशः अयं महाशननिर्विषादिगुणवज्जलौकानां प्रभवभूमिः ( सुसू. १३.१३ )

**पौतीक**–न., वनस्पति० पूतिकरञ्जः ( काखिल. १६.३९-४० )

**पौत्तिक**–न., पुत्तिकाः पिङ्गला महत्यो मक्षिकाः, तद्भवं पौत्तिकं मधु, मधुभेदः एतद् घृतवर्णम्, (चसू. २७.२४३; सुसू. ४५.१३३-३४; असंसू. ६.९८)

**पौत्रजीविक**–न., अलङ्कार० ग्रीवायां कण्ठे वा धारणार्थे पुत्रजीवकाष्ठकृतरुचकादि आभरणम् ( सुउ. ३१.८ )

**पौपिक**–पु., पूपादिभक्ष्याणां साधकः कन्दूक इत्यर्थः, महानसे नियुक्तेषु परिचारकेष्वेकः ( सुक. १.१७-१८ )

**पौर**–न., भैषज्य० बोलम् ( ध. ३.६२ )
वनस्पति० कत्तृणम् ( ध. १.८० )

**–जनपद**–पु.,पुरी जनपदे वा कृतावस्थितिकः नागरिको जानपदश्चेत्यर्थः ( चवि. ३.२० )

**पौरुष**–न., शारीर धातु० शुक्रम् ( चवि. ३०.१३३ )
पुरुषकृतं कर्म, प्रयत्नः ( चशा. २.४४ )
शारीरं बलम् ( चसू. ११.३ )
मेढ्रम् ( ड. सुनि. ३.१९ )

**पौरुषादिनी**–स्त्री., रेवतीग्रह० यस्या अपत्यं षोडशाब्दतः प्राक् म्रियते, सा जातहारिणि साऽसाध्या ( का. रेवति. क. ५२ )

**पौरुषार्थिन्**–वि., शुक्रार्थी ( चचि. २ (२).३२)

**पौरुषेया**–वि., पुरुषोपलक्षितशुक्रवृद्धये हिता वृष्या ( सुसू. ४५.२३ )

**पौरुषोपचय**–पु., शुक्रोपचयः ( चसू. १३.१६ )

**पौरोगवर्ग**–पु., सूदशास्त्राभिज्ञः ( चचि. २४.१९ )

**पौर्वभक्तिक**–वि., भोजनात्प्राक् प्रयोजितम् ( चचि. १४.६५ )

**(पौर्वभक्तिकी)**–वि. भोजनात्प्राक् योजिता ( चचि.१४.६५ )

**पौर्वाह्णिक**–वि., पूर्वाह्णे भव उपयुज्यमानो वा इति ( चचि. १.(२).७ )

**पौष्कर**–न., वनस्पति० पुष्करमूलम् ( ध. १.६६; सुउ. ४२.६९ )

शाक० इदं तु कषायमीषद्विष्टम्भि रक्तपित्तहरं च बीजमस्य रसपाकयोर्मधुरम् ( चसू. २७.११९ ) कमलबीजम् ( सुसू. ४६.१७३ )

**पौष्कलावत**–पु., धन्वन्तरिशिष्येष्वेकः ( सुसू. १.३ ) वि., पौष्कलावतकृतं ( तन्त्रम् ) ( सुसू. ४.९ )

**पौष्टिक**–वि., संरक्षकं, पुष्टिदायकम्, पुष्टिः रक्षा वृद्धिर्वा प्रयोजनमस्येति ( चवि. ८.१४ )

**पौष्पाञ्जन**–(परिव०) न., पुष्पाञ्जनम् (चचि. २६.२५०)

**पौष्पिक**–न., खनिज० पुष्पाञ्जनम् ( ध. ३.१६२ )

**प्रकटकोष्ठी**–स्त्री., यन्त्र० अपावृताऽऽननं कोष्ठीयन्त्रम् ( र.८.७८ )

**प्रकटमूषा**–स्त्री. शरावाऽऽकारसंयुता मूषा, वृन्ताकमूषा ( र. २,८९ )

**प्रकम्पमान**–वि., प्रसारणे कम्पमानम् काण्डभग्नम् ( सुनि. १५.१० )

**प्रकरण**–न., विषयः ( चवि. ८.६८ )

**–सम**–पु., तंत्रयुक्ति० यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः, पक्ष एव हेतुर्भवति यत्र सः ( चवि. ८.५७ ) निर्णयार्थं प्रयुक्तो हेतुर्यत्र निर्णयं जनयितुमशक्तस्तुल्यबलेन परेण प्रतिबन्धात् किन्तु धर्मिणः साध्यवत्त्वं तदभाववत्त्वं वेति चिज्ञां जिज्ञासां प्रवर्तयति स प्रकरणसमः (गौ. वृ. १।२।७) तत्र प्रकरणसमो नामाहेतुर्यथा–अन्यः शरीरादात्मा, तस्मान्नित्यः; शरीरं स नित्यमतो विधर्मिणा चात्मना भवितव्यमित्येष चाहेतुः; नहि य एव पक्षः स एव हेतुरिति । द्र० 'तन्त्रयुक्ति'

**प्रकामतस्**–अव्य., स्वेच्छया ( ड. सुउ. ५५.३३ )

**प्रकाश**–वि., सदृशम् ( सुनि. २.१२ ) प्रकटः अनावृतः ( सुशा. ५.४९ ) पु., आलोकः ( अहृसू. ९.८ ) न., कृत्रिमधातु० कांस्यम् ( ध. ६.२३ )

**–क्षमता**–स्त्री., प्रभा भास्वरादिरूपसहत्वम् ( अहृसू. २४.११ )

**प्रकाशन**–न., अभिव्यक्तिः, आग्नेयद्रव्यस्य कार्यम् ( सुसू. ४१.४(३) ) ज्ञापनम् ( चवि. ८.४२ )

**प्रकीर्य**–पु., वनस्पति० उदकीर्यः ( रा. ९.१८० ) रीठाकरञ्जः ( रा. ९.१८७ ) करञ्जः ( ध. ५.१०७ ) कण्टकीकरञ्जः ( सुउ. ११.९; अहृसू. १५.१९ ) द्र० 'करञ्ज'



**( प्रकीर्या )**–स्त्री., वनस्पति० करञ्जः ( चक्र.चसि.१०.२६ ) कण्टकी विटपकरञ्जः ( सुसू. ३९.९; असंसू. १६.१३ )

**प्रकीर्यक**–पु., वनस्पति० करञ्जः ( रा. ९.१७६ )

**प्रकुञ्च**–पु., मान० पलम् ( चक्र. चचि. २८.१२४; सुचि. ३७.१०२; असंक. ८; अहृसू. १९.१८; र. १२.१२१-२२ )

**प्रकुथित**–न., प्रकोथः, पूतिभावः ( सुचि.२३.५ )

**प्रकुपित**–वि., विकृतम् (चशा. ६.१७)

**प्रकृति**–स्त्री., स्वभावः (चवि. ८.९५) दोषकृतः शरीरस्वभावः, तद्यथा–शुक्रार्तवस्थैर्दोषैर्गर्भस्याऽऽदौ जन्म भवति, तथा च तैस्तिस्रः प्रकृतयो भवन्ति । वातप्रकृतिः, पित्तप्रकृतिः, कफप्रकृतिरिति, तासु वातप्रकृतिर्हीना, पित्तप्रकृतिर्मध्या, कफप्रकृतिश्श्रोत्तमा भवति । द्विदोषजाः प्रकृतयो निन्द्या समधातुप्रकृतिः सर्वासु श्रेष्ठा भवति ( अहृसू. १.९-१० ) शुक्रशोणितप्रकृतीं, कालगर्भाशयप्रकृतिमातुराहारविहारप्रकृतिं, महाभूतविकारप्रकृतिं च गर्भशरीरमपेक्षते । एतानि हि येन येन दोषेणाऽधिकेनैकेनाऽनेकेन वा समनुबध्यन्ते, तेन तेन दोषेण गर्भोऽनुबध्यते, ततः सा सा दोषप्रकृतिरुच्यते मनुष्याणां गर्भादिप्रवृत्ता, तस्मात् श्लेष्मलाः प्रकृत्या केचित् पित्तलाः केचित्, वातलाः केचित्, संसृष्टाः केचित्, समधातवः केचिद्भवन्ति ( चवि. ८.९५ ) शुक्रशोणितसंयोगे यो दोष उत्कटो भवेत्, तेन प्रकृतिर्जायते (सुशा. ४.६३) विषजातः कीटो यथा विषेण न विपद्यते तथा प्रकृतयो मर्त्यं बाधितुं न शक्नुवन्ति ( सुशा. ४.७९ ) प्रकोपोऽन्यथाभावः क्षयो वा प्रकृतीनां स्वभावेन नोपजायते, गतायुषस्त्वन्यभावो जायते ( सुशा. ४.७८ ) प्रकृतिरोगयोश्चायं विशेषः–प्रकृतिरपथ्योपसेवया नात्यन्तं बाधते ( मा. पञ्चनिदान मधुकोशः ) तथा पुनः सप्तप्रकृतयो जातिकुलदेशकालवयोबलप्रत्यात्मसंश्रयाः ( असंशा. ८.२२ ) दोषवच्च गुणैरपि सत्वादिभिः सप्त प्रकृतयो भवन्ति । तास्तदभिनिवृत्तैरेव यथोक्तैः शौचादिभिर्जानीयात् (असंशा. ८.२१) केषांचिन्मते भौतिक्यपि प्रकृतिर्भवति । एवं पञ्चमहाभूतैः पञ्चमहाभूतप्रकृतयो भवन्ति । तत्र पवनभूतप्रकृतेर्वातप्रकृतावन्तर्भावः, दहनभूतप्रकृतेः पित्तप्रकृतौ, तोयप्रकृतेः कफप्रकृतावरोधो नाम अन्तर्भावः कृतः, पार्थिवप्रकृतिः

स्थिरविपुलशरीरः क्षमावांश्च भवति । नाभसप्रकृतिश्च महद्भिः खैर्युक्तः शुचिश्चिरजीवी च भवति ( सुशा. ४.८० ) आरोग्यम्–यतः प्रकृतिश्चारोग्यम् ( चवि. ६.१३ )

चतुर्विंशतितत्त्वेष्वेकम्–सर्वभूतानां कारणं सत्त्वरजस्तमोलक्षणमष्टरूपमखिलस्य जगतः संभवहेतुरव्यक्तं नाम । तदेव प्रकृतिरित्युच्यते सांख्यदर्शने । एका प्रकृतिर्बहूनां क्षेत्रज्ञानामधिष्ठानं समुद्र इवौदकानां भावानाम् ( सुशा. १.३ ) प्रकृतिः अनादिरनन्ता नित्या सर्वगता च, तथैवैकाऽचेतना त्रिगुणात्मका बीजधर्मिणी प्रसवधर्मिणी अमध्यस्थधर्मिणी च ( सुशा. १.९ ) यदा सत्त्वरजस्तमसां साम्यावस्था तदा न सर्गः, यदा तु सत्वादिगुणानां वैषम्यं भवति तदा सर्गः। तद्यथा–प्रकृतेर्बुद्धिस्ततोऽहङ्कारात्सात्विकादेकादशेन्द्रियाणि तामसाच्च पञ्चतन्मात्राणि तन्मात्रेभ्यः पञ्चमहाभूतान्याकाशादीन्युत्पद्यन्ते ( चशा. १.६६ ) सांख्ये मूलप्रकृतिर्बुद्धिरहङ्कारः पञ्चतन्मात्राणीत्यष्टतत्त्वानां समुदायोऽष्टधातुकी प्रकृतिरित्युच्यते ( चशा. १.१७ ) वैद्यके तु " स्वभावमीश्वरं कालं यदृच्छां नियतिं तथा । परिणामं च मन्यन्ते प्रकृतिं पृथुदर्शिनः "। इति षट् प्रकृतयः उक्ताः ( सुशा. १.११ )

वातादिदोषाणां, रसादिधातूनां च साम्यावस्था ( चसू. ५.४ )

आत्मा ( चशा. ३.२५ )

धातुसाम्यम् ( चसू. ९.४ )

स्वभावः ( चचि. ३.१२ )

सांख्यतत्त्व० अव्यक्तम् ( चशा. १.१७ )

प्राकृतस्थितिः ( चशा. ४.१४ )

स्वाभाविकः प्राणिनो निजो धर्मः ( सुसू. ३०.३ )

स्वरूपम् ( इन्दुः, असंनि. ४.१७ )

**–कल्पवित्**–वि: द्रव्यस्य स्वभावं संस्कारञ्च जानानः ( चचि. ४.३२ )

**–गत**–वि., प्राकृतावस्थां प्राप्तः ( चसि. १२.९ )

**–गन्ध**–पु., स्वाभाविकगन्धः ( सुसू. २८.९-१० )

**–गुरु**–वि., स्वभावतः गुरुगुणोपेतं द्रव्यम् (चसू.५.५)

**–ज्ञ**–वि., प्रकृतिं जानानः ( चसू. २९.७ )

**–दर्शक**–वि., स्वभावदर्शकम् ( चचि. २४.७३ )

**–भाव**–पु., साम्यम् ( चशा. ६.१८ )

**–भूत**–वि.. साम्ये स्थितः ( चशा. ६.१८ )

**–लघु**–वि., स्वभावतः लघु द्रव्यम् ( चसू. ५.५ )

**–वर्ण**–पु., देहसमानवर्णः ( चसू. १८.७ )

स्वाभाविकवर्णः ( चशा. ८.५१ )

**–विकारज्ञान**–न. प्रकृतेर्विकारः तस्य ज्ञानम् ( चसू. २९.७ )

**–विघात**–पु., प्रकृतेः कारणस्य श्लेष्मादिरूपस्य विघातः ( चवि. ७.१४ )

**–विरुद्ध**–न., स्वभावेन विरुद्धम् ( सुसू. ३५.३९ )

**–वैशेष्य**–न., स्वभावस्याऽऽधिक्यम् (चसू. १८.५३)

**–संपद्**–स्त्री., समवातादिप्रकृतिता ( चशा. ६.३० )

**–सात्म्य**–न., प्रकृतेर्यत् सात्म्यं तत् (चचि. १.२८)

**–सामान्य**–न., समानकारणता, प्रक्रियते जन्यते अनया इति प्रकृतिः हेतुः कारणं वा, अतः प्रकृतिसामान्यं समानकारणत्वम् ( चसू. १८.४३ )

**–स्थ**–वि., मरणसमीपगतम् ( भूतं प्राणी वा ) ( चसू. ९.२६ )

वि., आरोग्यवान् ( सुसू. ४६.५०७ )

मनोवाक्कायेषु स्वेन भावेनावस्थितः ( ड. सुक. ४.१८ )

**–स्थत्व**–न., दोषाणामविकृतकार्यकारित्वम् ( ड. सुउ. ३९.१६०-६२ )

**–स्थापन**–न., भेषजम्, प्रकृतौ दोषसाम्ये स्थाप्यते प्राणी अनेन इति ( चक. चवि. ६.२२ )

**–स्वप्न**–पु., स्वस्याः प्रकृतेरनतिक्रमेण यथास्वं स्वप्नः, यथा वातप्रकृतौ ससंभ्रमम् आकाशगमनं, पित्तप्रकृतौ विद्युदुल्काहुताशप्रेक्षणं, श्लेष्मप्रकृतौ च कमलहंसचक्रवाकानां मनोज्ञजलाशयानाञ्च दर्शनम् ( सुसू. २९.६७ )

**–स्वर**–पु., स्वाभाविकस्वरः ( चइ. १.१४ )

शुभदायकस्वरः ( चइ. १.१४ )

**प्रकृष्टकर्णिक**–वि., यस्य बस्तियन्त्रविशेषस्य कर्णिका त्र्यङ्गुलाधिका चतुरङ्गुला सन्निविष्टा च ( ड. सुचि. ३६.८ )

**प्रकृष्टासन्नकारण**–न., व्यवहितम् अव्यवहितञ्च कारणम्, ज्वरस्य रूक्षादि प्रकृष्टम् आसन्नं वातादि, तथा प्रकृष्टं रुद्रकोपः आसन्नं तु रूक्षादि, ज्वरादे रोगस्य समीपवर्ति दूरवर्ति च कारणम् ( चनि. १.४३ )

**प्रकोथ**–पु., पूतिभावः ( सुचि. २३.५ )

**प्रकोप**–पु., प्रकृष्टः कोपः ( चसू. १७.११४ )

प्रकोपयतीति प्रकोपः हेतुः, प्रकुप्यति दोषोऽनेनेति प्रकोपः प्रकोपहेतुरिति ( चचि. १२.३ )

दोषगति० स्थानादुन्मार्गगमनम् ( सुसू. १.३४ ) द्वितीयक्रियाकालस्तत्र दोषाणां प्रकोपात् कोष्ठतोद-संचरणाम्लीकापिपासापरिदाहाऽन्नद्वेषहृदयोत्क्लेदाश्च जायन्ते ( सुसू. २१.२७ )

**प्रकोपण**–न., दोषान् प्रकोपयति इति प्रकोपणम्, वाय्वादीनां रूक्षत्वादिप्रकर्षेण दोषाणां कुपितत्वं कुर्वाणम् ( चवि. ४.६; सुउ. २४.४ )

**प्रकोष्ठ**–पु., शारीर० मणिबन्धोपरिष्टात् कूर्परपर्यन्तो हस्तभागः अयमायामतः षोडशाङ्गुलः परिणाहतश्च द्वादशाङ्गुलः ( सुसू. ३५.१२ )

**प्रक्लिन्न**–वि., आर्द्रम् (सुउ. ६४.६)

**–काय**–वि., कुथितशरीरः ( कुष्ठिप्रभृतिः ) ( ड., सुउ. ६४.६१ )

**–वर्त्मन्**–न., नेत्ररोग० क्लिन्नवर्त्म ( सुउ. १२.५२ )

**प्रक्लिन्नात्मन्**–वि., अतितराम् आर्द्रदेहः (सुशा. ३.७-८)

**प्रक्लेदन**–वि., आर्द्रभावकरः ( द्रवगुणः ) ( सुसू. ४६.५२० )

**प्रक्षारयत्**–वि., स्थानाद् भ्रंशयत् क्षपयंश्च (चसू. १३.७१)

**प्रक्षालन**–न., उपक्रम० तोयादिभिः व्रणोत्संगादीनां क्षालनम् ( सुसू. ७.१७ )

**प्रगण्टक**–पु., कूर्परांसमध्यम् ( रा.परि. १८.३१ )

**प्रगल्भ**–वि., धृष्टः ( ड. सुक. १.१० )

**( प्रगल्भा )**–स्त्री., प्रौढस्त्री, त्रिंशद्वर्षतः पञ्चाशद्वर्षपर्यन्तं वयोवती ( र. ११.९६ )

**प्रगुण**–वि., अनुगुणः, अनुकूलः (सुनि. ३.२७ )

**प्रगुणीकरण**–न., ( परिव० ) अस्पष्टस्य स्पष्टतापादनम्, व्यक्तीकरणम् ( चचि. २६.१७ )

**प्रगे**–अव्य., प्रातः ( असंसू. ३.४९ )

**प्रग्रह**–पु., वनस्पति० आरग्वधः (चक्र. चसि. १०.३९)

कर्णिकारः ( ध. १.२२१ )

किरमालकः ( सुक. ६.३ )

**प्रघर्ष**–पु., उपक्रम० घर्षणम् ( चसू. ३.२९ )

**प्रघर्षण**–न., उपक्रम० चूर्णेन घर्षणम् ( चसि. १२.१५ (५) )

**प्रचण्ड**–पु., वनस्पति० श्वेतकरवीरः ( र. २२.१६७ )

**( प्रचण्डा )**–स्त्री., वनस्पति० श्वेतदूर्वा ( रा. ८.२२९ ) द्र० ‘ दूर्वा ’

**प्रचरण**–न., प्रचर्यते भक्ष्यते इति प्रचरणं, भिक्षामूलं तण्डुलादि ( चक्र. चवि. ८.१४९ )

**प्रचल**–वि., स्वस्थानात्मच्युतः ( अहृसू. १९.५१ )

**प्रचलक**–पु., कीट० गुणाः–सौम्यः, श्लेष्मप्रकोपणत्वात् कफविकारान् करोति (सुक. ८.१२-१५; असंउ.४३)

**प्रचलाक**–पु., पक्षि० मयूरः प्रचलति इतस्ततः पादन्यासं करोति नृत्यार्थमिति प्रचलाकः ( सुचि. १८.२८ )

**प्रचलायन**–न., घूर्णनम् ( चचि. २४.४४ )

**प्रचीबल**–पु., वनस्पति० मत्स्याक्षकः ( ड. सुउ. ३४.३ )

**( प्रचीबला )**–स्त्री., वनस्पति० काकजङ्घा ( ध. ४.२३ )

**प्रच्छन**–न., उपक्रम० ( चसू. ११.५५ )

शस्त्रधारया अल्पच्छेदनम् ( चचि. ७.४० )

**प्रच्छर्दन**–न., उपक्रम० वमनम् ( अहृसू. ५.५४ )

**प्रच्छादका**–वि., सिरास्नाय्वाद्याच्छादनकरी ( पेशी ) ( सुशा. ५.४० )

**प्रच्छान**–न., उपक्रम० क्षुरेण त्वगवच्छेदनम् ( र. १२.७६-८१ )

शस्त्रपदकरणम् ( सुचि. ९.१० )

**प्रच्छाय**–वि., प्रवृद्धच्छायः ( देशः ) ( चचि. ९.१२ )

**प्रच्छित**–वि., कृतशस्त्रपदम् ( सुक. १.४९ )

**प्रच्छिन्न**–वि., प्रकर्षेण च्छिन्नम्, छेदनाकारवेदनायुक्तत्वात् छेदनप्रकर्षोऽत्र ( चइ. १०.१२ )

**प्रच्यवन**–न., प्रस्रवणम् ( र. १.६२–६३ )

**प्रच्युत**–वि., स्थानात् च्युतम् ( चसू. २६.४३ ) चलितः ( सुचि. ३३.३७ ) स्वस्थानाद् भ्रष्टम् ( सुसू. ४२.१०(२) )

**प्रजङ्घा**–स्त्री., शारीर० जङ्घायाः अधोभागः (कासू. २८)

**प्रजनन**–न., शारीर० गुह्यप्रदेशः ( सुसू. २३.५ )

न., पुरुषस्य जननेन्द्रियम्, शेफः ( कासू. २८ )

**–काल**–पु., प्रसूतिकालः ( चशा. ८.३६ )

**–कुशला**–वि., लब्धगर्भायाः गर्भनिष्कासने कुशला ( स्त्री ) ( सुशा. १०.८ )

**प्रजा**–स्त्री., पुत्रपौत्रादयः ( सुशा. १०.५३ ) अपत्यम् ( चशा. २.२८ )

**–दा**–स्त्री., वनस्पति० पुत्रदा ( रा. परि. ४.२७ )

**–पति**–पु., दक्षः नृप० येन ब्रह्मण आयुर्वेदः अधीतः ( सुसू. १.१० )

देवता० उपस्थस्याधिदैवतं प्रजापतिः ( सुशा. १.७ )

**–सम्पद्**–स्त्री., सम्भवदपत्यगुणप्रकर्षः (चशा. ८.२१)

**–स्थापनगण**–पु., द्रव्यगण० महाकषायवर्गे एको गणः ऐन्द्रीब्राह्मीशतवीर्यासहस्रवीर्याऽमोघाऽव्यथा-शिवाऽरिष्टावाट्यपुष्पीविष्वक्सेनकांता च ( चसू. ४.१८ )

**प्रजागर**–पु., अतिजागरणम् (चनि. १.२१)

निद्रानाशरोगः चतुःषष्टिसूतिकारोगाणामेकतमः ( काखिल. ११.७-१४ )

**प्रजागरूक**–वि., अतिशयेन जागरणशीलः (सुशा. ४.६४)
**प्रजाता**–स्त्री., प्रसूता, सम्यक्काले प्रसूता ( स्त्री ) ( सुनि. ९.२६; चनि. १.२८; सुशा. १०.२२ )
प्रजातमात्रा–वि., सद्यःप्रसूता ( काखिल. ११.१८ )
**प्रजायिनी**–स्त्री., अचिरेण प्रसवमाना ( सुशा. १०.६ )
**प्रजावरण**–न., प्रजारक्षकः बन्धविशेषः (का. रेवतीक. ८०)
**प्रजिघांसु**–वि., हन्तुमिच्छुः ( चइ. १२.१२ )
**प्रजीर्ण**–वि., लक्षण० विदग्धम् अन्नम् ( चशा. १.१११ )
**प्रज्ञा**–स्त्री., बुद्धिः ( चसू. ७.५१ ) कालत्रयार्थप्रतिभासिनी कालत्रयात्मिका बुद्धिः ( ड. सुसू. ३५.१६; र. २.३ )
**प्रज्ञापराध**–पु., प्रज्ञाप्रमादजन्यं कर्म कायवाङ्मनोभेदेन त्रिविधमप्यहितं कर्म प्रज्ञापराधः ( चनि. १.३ ) " धीधृतिस्मृतिविभ्रष्टः कर्म यत्कुरुतेऽशुभम्। प्रज्ञाऽपराधं तं विद्यात्सर्वदोषप्रकोपणम् " ( चशा. १.१०२ )
**प्रणति**–स्त्री., जनप्रह्वत्वलक्षणा लोकवन्द्यता ( चचि. १.८ )
**प्रणयन**–न., प्रीतिः ( चशा. ४.१६ )
**प्रणव**–पु., ॐकारः ब्रह्म ईश्वरो वा; प्रणूयतेऽनेनेति प्रणवः, ' सत्यवाचकः प्रणवः ' इति योगसूत्रम् ( सुसू. २.४ )
**प्रणाडी**–स्त्री., नाडीयंत्र० नलिका ( चक्र. चसि. ९.१०३)
**प्रणाद**–पु., कर्णरोग० कर्णक्ष्वेडः कर्णनादः ( सुउ. २०.७)
**प्रणिधान**–न., सम्यक्स्थापनम् (सुचि. ६.४; सुचि. ३५.३२) औषधस्य स्थापनप्रवेशनादिना उपयोजनम् ( सुसू. ७.१४ )
**–मात्रा**–स्त्री., औषधप्रमाणम् यच्च निरूहबस्तौ प्रयोज्यम् ( चसि. ३.५ )
**प्रणिपात**–पु., नमस्कारः ( चनि. ७.१६ )
**प्रणिहितस्नेह**–वि., कृतस्नेहः प्रयुक्तानुवासनबस्तिः ( सुचि. ३७.६० )
**प्रतत**–वि., प्रसृतः ( चवि. ८.९८ ) विस्तीर्णम् ( सुचि. ३८.३ )
विस्फारितम् ( सुचि. २४.९६; अहसू. २.३९ )
**प्रतनुक**–वि., प्रकर्षेण तनु अल्पतरम् ( सुसू. १६.३ )
**प्रतसमांस**–( परिव० ) न., अजाजिमरिचप्रक्षेपपूर्वकमज्जारादौ पक्वं पिशितम् ( सुसू. ४६.३५६-५८ )
**प्रतमक**–पु., रोग० तमकश्वासभेदः ( मा. श्वासनि. )
**–श्वास**–पु., रोग० श्वासभेदः ( चचि. १७.६३ ) ज्वरमूर्च्छायुक्तानि तथा तमकश्वासलक्षणानि तत्र भवन्ति द्र० 'श्वास'
**प्रतमन**–( परिव० ) न., लक्षण० तमसि प्रविष्टवद् भानम् ( सुउ. ५६.७ )
**प्रतर**–पु., सन्धिप्रकार० ग्रीवापृष्ठवंशयोः प्रतरः ( सुशा. ५.२७; असंशा. ५.७७ )
**प्रतरण**–न., नद्यादीनां बाहुभ्यां तरणम् ( ड. सुचि. २४.९६ )
इदं वातप्रकोपणम् ( सुसू. २१.१९ )
**प्रतान**–पु., विस्तारः ( सुशा. ४.८ )
**( प्रताना )**–स्त्री., वनस्पति० गोजिह्वा ( रा. ४.१८० )
**प्रतानवत्**–पु., वनस्पति० सोमभेदः ( सुचि. २९.६ )
वि., विस्तारयुक्तः ( सुनि. १६.६२ )
**( प्रतानवती )**–स्त्री., स्नायुप्रकार० ( सुशा. ५.३१ ) द्र० 'स्नायु'
**प्रतानिका**–स्त्री., वनस्पति० प्रसारणी ( ध. १.२८० ) सारिवा ( ध. १.१६१ )
**प्रतान्त**–वि., लक्षण० अतिक्षीणः ( चसू. १३.५५ )
**–भोक्तृ**–वि., पौनःपुन्येन अतिशयेन वा भुंजानः ( का. भोजनकल्प २८ )
**प्रताप**–पु., वनस्पति० अर्कः ( रा. १०.२४ )
श्वेतार्कः ( रा. १०.३० )
स्वेदनम् ( चसू. १८.५ )
**–लङ्केश्वर**–पु., पारदयोग० सन्निपातादिघ्नः प्रत्येकं द्विपलयोः रसगन्धकयोः कज्जलीं कृत्वा तस्यां ताम्रभस्म गुग्गुलुमनःशिलाः प्रत्येकं त्रिपलमानं हरीतकीं कोलत्रयसंमितां षट्शाणं त्रिकटु, मधूकसारं वचारेणुकविडङ्गं मुस्तातालीसपत्रं नागकेशरमश्वगन्धां प्रत्येकं कर्षमात्रं, करञ्जबीजं वत्सनाभं चार्धकर्षं, भूधात्रीभङ्गाचूर्णमर्धकर्षं, समुद्रफलचूर्णं चार्धकर्षम् एकत्र अगस्त्यपत्रस्वरसेन त्रिकटुक्काथेन ज्वालामुखीरसेन भृङ्गराजरसेन च प्रत्येकं सप्तवारं मर्दयित्वा ततश्च पित्तपञ्चकेन पञ्चवारं मर्दयेत् करञ्जपत्रैर्वत्सनाभेन च धूपयेत्। अन्ततश्च पुनरार्द्रकस्वरसेनालोड्य तण्डुलाऽऽकारां गुटीं कुर्यात्। तामेतां मोहनेत्रप्रसुप्त्यादिलक्षणे सन्निपाते आर्द्रकस्वरसेन गुल्मे अजमोदासाहचर्येण वाते त्र्यूषणेन ग्रहण्यां च जीरकेण प्रयुञ्जीत ( र. १२.१२१ )
पु., पारदयोग० पारदगन्धकटङ्कणादिसिद्धोऽयं योगः विपादिकाख्यकुष्ठं हन्ति ( र. २०.२७ )
**प्रतापन**–पु., वनस्पति० राजार्कः ( ध. ४.१६ )
**प्रताम्यत्**–वि., प्रकर्षेण मूर्च्छन् ( सुसू. ३३.१८ )
**प्रताम्यमान**–वि., मूर्च्छन् ( सुउ. ४४.३९ )

**प्रतिकर्मन्**–न., चिकित्सा,यथा वमनादिकर्म ( चशा. १.९०; चचि. १२.६ )

( **प्रतिकर्म** )–**प्रवृत्ति**–स्त्री., चिकित्साप्रवृत्तिः ( चइ. १२.५८ )

**प्रतिकष्ट**–वि., कष्टप्रदः ( कर्मजो व्याधिः ) ( सुउ. ४०.१६५ )

**प्रतिकार**–पु., भेषजम्, प्रतिक्रियते चिकित्स्यते अवजीयते वा अनेनेति प्रतिकारो भेषजम् ( चसू. २६.१०४; सुउ. २०.८ )

**प्रतिकूल**–वि., निषिद्धम् ( ड. सुउ. ६०.५५ )

**प्रतिक्षिपत्**–वि., निष्कासयत् ( सुउ. ६.२४ )

**प्रतिखुर**–पु., मूढगर्भप्रकारेष्वेकः, निःसृतहस्तपादशिराः-कायसङ्गी प्रतिखुरः ( सुनि. ८.४ )

**प्रतिगन्धा**–स्त्री., वनस्पति० बाकुची ( रा. ४.२२७ )

**प्रतिग्रह**–पु., प्रतिगृह्णाति निष्ठीवनादिकमिति प्रतिग्रहः पात्र० ( चसू. १५.७ )

**प्रतिग्रहण**–न., ( परिव० ) आलेपनम् ( सुचि. ७.३५ )

**प्रतिच्छाया**–स्त्री., पुरुषाकृतिस्वरूपाऽऽतपे जले आदर्शे वा दृश्यमाना छायैव प्रतिच्छाया ( चइ. ७.९ )

–**मयी**–स्त्री., प्रतिच्छायारूपा ( चइ. ७.३ )

**प्रतिज्ञा**–स्त्री., तंत्रयुक्ति० प्रतिज्ञा नाम साध्यवचनं यथा " नित्यः पुरुषः " इति (चवि. ८.३०) साधनीयस्य अर्थस्य धर्मस्य वा यो निर्देशः स प्रतिज्ञा; साध्यनिर्देशः प्रतिज्ञा परिग्रहवचनं प्रतिज्ञा। ( गौ. १।१।३३ ) अत्र वात्स्यायनः–प्रज्ञापनीयेन धर्मेण धर्मिणो विशिष्टस्य निश्चयात्मकं विधानम् ( चसू. ३०.१८ )

निश्चयात्मकं विधानम् ( चसू. ३०.१८ )

–**हानि**–स्त्री., तंत्रयुक्ति० प्रतिज्ञातार्थच्युतिः यथा प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः, स्वपक्षे परपक्षधर्माभ्यनुज्ञा, स्वयं विशिष्य अभिहित-परित्यागः 'कथायां यच्च पक्षादि येन निर्दिष्टमादितः। तस्य तेन पुनस्त्यागः प्रतिज्ञाहानिरुच्यते' इति ( तार्किकरक्षायां ३.१३४ )

**प्रतिजागृवि**–वि., दत्तावधानः ( अहृसू. ७.१ )

**प्रतिज्वर**–अ., प्रतिविकारम् ( अहृसू. १२.६२ )

**प्रतितन्त्रसिद्धान्त**–पु., तंत्रयुक्ति० एकस्मिन् तन्त्रे नामशास्त्रेण प्रसिद्धः सिद्धान्तः ( चवि. ८.३७ )

**प्रतितर**–पु., प्रविष्टजलोत्क्षेपकः, नाविकः, नौकावाहकः ( सुसू. ३४.१९ )

**प्रतितूनी**–स्त्री., रोग० स्वरूपम्–गुदोपस्थोत्थिता प्रति-लोमविसर्पिणी वेदना वेगैः पक्वाशयं याति ( सुनि. १.८७ )

**प्रतिधूप**–पु., आघ्रातधूपो येन धूपेन पुनर्धूप्यते तादृशो धूपः ( काधूमकल्प. )

**प्रतिनिविष्टपरिषद्**–स्त्री., परिषद्० स्वसौहार्दाभावेन निविष्टाः सभ्या यत्र सा ( चवि. ८.२० )

**प्रतिपक्षशीलन**–न., विपरीतगुणाभ्यासः यथा सह-विधानां सहगर्भजातपीडाद्युद्भवानां रोगाणामुप-शमार्थं यथास्वं विपरीतगुणाभ्यासः ( असंसू. २२ )

**प्रतिपत्ति**–स्त्री., तंत्रयुक्ति० प्रतिपत्तिर्नाम यो यथा विकारः प्रतिपत्तव्यस्तस्य तथाऽनुष्ठानज्ञानम् ( चवि. ८.१३२ )

ज्ञानम् ( चसू. ७.५५ )

उत्पन्नायाम् आपदि झटिति कर्तव्यकरणम् ( (चक्र.) चवि. ८.८६ )

शास्त्रम् ( चवि. ८.४ )

–**ज्ञ**–वि., तदात्वे तत्कालं कर्तव्यज्ञः ( चसू. १९.७ )

**प्रतिपत्रफला**–स्त्री., वनस्पति० कुडुहुञ्ची ( रा. ७.२८० )

**प्रतिपद्**–स्त्री., प्रतिपत्तिः, बुद्धिः, धारणा ( अहृसू. २.३० )

**प्रतिपन्न**–वि., प्राप्तम् ( सुचि. ७.३५ )

–**परिग्रह**–वि., पाल्यत्वेन स्वीकृतम् ( अहृसू. ८.३७ )

**प्रतिपर्णी**–स्त्री., वनस्पति० द्रवन्ती ( रा. ५.३४७ )

**प्रतिपीत**–वि., मात्रया पीतवान् ( सुसू. १४.३१ )

**प्रतिपूरण**–न., शून्यभूतस्य पुनः पूरणम् (सुचि. २४.२६)

**प्रतिप्रसव**–पु., सामान्यतो निषेधेऽपि विशेषार्थे निषि-द्धस्य पुनर्विधानम् ( ड. सुचि. ५.३९ ) यथा ऊरु-स्तम्भे स्नेहादेर्निषेधेऽपि कफमेदसोः क्षये स्नेहादेस्तत्र विधानं क्रियते।

**प्रतिबाधक**–वि., प्रतिकारकः ( चचि. ८.१२४ )

**प्रतिबुद्धतर**–वि., अधिकतरं प्रबुद्धम् ( सुशा. ३.३० )

**प्रतिबोधन**–न., जागृतिः ( सुशा. १०.४६ )

उन्मेष ( ड. सुउ. ६.२६ )

**प्रतिभा**–स्त्री., प्रज्ञा ( चसू. २७.३४९; अहृसू. ५.६३ )

**प्रतिभान**–न., नवनवोन्मेषशालिनी बुद्धिः।

प्रतिभान ( चवि. ८.१८ )

**प्रतिभू**–पु., लग्नकः, प्रतिनिधिः प्रतिरूपः ( सुचि. २४.१०१ )

**प्रतिभोग**–पु., उपभोगः ( चसू. १५.३ )

**प्रतिभोजन**–न., अनन्तरभोजनम् ( चसि. ३.७० )

**प्रतिमर्श**–पु., नस्य० तत्प्रमाणम् द्विबिन्दुकः ( सुचि. ४०.५३ ) नित्यसेवने हितः ( चचि. २६.२७७; अहृसू. २०.३२ )

तत्सेवनकालः- तल्पोत्थितेन, प्रक्षालितदन्तेन गृहान्निर्गच्छता, व्यायामव्यवायाध्वपरिश्रान्तेन, मूत्रोच्चारकवलाञ्जनान्ते, भुक्तवता, छर्दितवता, दिवास्वप्नोत्थितेन, सायं चेति चतुर्दशकालेषु प्रतिमर्श उपादेयः ( सुचि. ४०.५१ )

गुणाः—तल्पोत्थितेनाऽऽसेवितः प्रतिमर्शः रात्रावुपचितं नासास्रोतोगतं मलमुपहन्ति मनःप्रसादं च करोति। प्रक्षालितदन्तेनाऽऽसेवितो दन्तानां दृढतां वदनसौगन्ध्यं चाऽऽपादयति। गृहान्निर्गच्छता सेवितो नासास्रोतसः क्लिन्नतया रजसा धूमेन वा न बाध्यते। व्यायाममैथुनाध्वपरिश्रान्तेनाऽऽसेवितः श्रममुपहन्ति। मूत्रोच्चारान्ते सेवितो दृष्टेर्गुरुत्वमपनयति। कवलाञ्जनान्ते सेवितो दृष्टिं प्रसादयति। भुक्तवता सेवितः स्रोतसां विशुद्धिं लघुतां चाऽऽपादयति वान्तेनाऽऽसेवितः स्रोतो-विलग्नं श्लेष्माणमपोह्य भक्ताऽऽकाङ्क्षामापादयति, दिवास्वप्नोत्थितेनाऽऽसेवितो निद्राशेषं गुरुत्वं मलं चाऽपोह्य चित्तैकाग्र्यं जनयति, सायं चाऽऽसेवितः सुखनिद्राप्रबोधं चेति (सुचि. ४०.५२) द्र० 'नस्य'। सोऽयं प्रतिमर्शः क्षामक्षततृष्णामुखशोषवृद्धबालभीरुसुकुमारेषु अपि अकालवर्षदुर्दिनेष्वपि च योज्यः ( असंसू. २९ )

उपक्रम० अङ्गुल्यादिघर्षणम्, अनवबद्धशल्योद्धरणार्थं पञ्चदशोपायेष्वेकः ( सुसू. २७.४ )

**प्रतिमार्ग**–अ., मार्गविरुद्धम् ( चनि. २.१९ )

**प्रतिमेष**–पु., योग० ब्राह्मीपलाशपित्तलादिसाधितोऽयं वल्मीकनाशी ( र. २५.६१-६५ )

**प्रतिरूपक**–पु., अन्यथारूपकारी, प्रतिरूपेण ब्रह्मचार्यादिवेशेन चरतीति प्रतिरूपकः ( चसू. २९.८ )

**प्रतिलोम**–वि., विपरीतम् यथा सर्वशल्याहरणं शल्यप्रवेशमार्गेणैव क्रियते ( सुसू. २७.६ )

विमार्गगम् ( चसू. ५.४८ )

लोमाभिमुखम् ( सुसू. १८.४ )

**-ग**–वि., विपरीतमार्गगतः ( चइ. ७.२० )

**प्रतिवचनविधि**–पु., उत्तरप्रदानप्रकारः ( चवि. ८.८२ )

**प्रतिवत्सत्**–वि., प्रवस्तुमुद्यतः, प्रविवत्सन्नाम प्रवस्तुम् इतो निर्गन्तुमिच्छन् ( चइ. १२.४३ )

**प्रतिवाक्य**–न., प्रतिवादिनो वचनम् ( चवि. ८.६७ )

**प्रतिवात**–पु., अभिमुखो वातः ( सुचि. २४.९६ )

**प्रतिवाद**–पु., प्रतिपक्षः ( चसू. २५.२७ )

**प्रतिवाप**–पु., प्रक्षेपद्रव्यम् ( सुचि. ४.२९ )

प्रक्षेपः ( र. २.१७२-७३ )

**प्रतिवापक**–पु., प्रक्षेपः ( र. २.१७२-७३ )

**प्रतिविशेष**–पु., प्रतिनियतो विशेषः, वैशिष्ट्यम् ( चचि. ४.४ )

**प्रतिविष**–न., विजातीयं विषम्, यथा स्थावरस्य जङ्गमं, जङ्गमस्य स्थावरं विषम् ( इन्दु, असंउ. ४८.३७५ )

( **प्रतिविषा** )–स्त्री., वनस्पति० अतिविषा ( चचि. १९.२२ ) अतिविषाभेदः, श्यामकन्दा ( सुउ. ४०.३७; असंसू. ८.७८; ध. १.१०; र. १६.४५ )

**प्रतिश्या**–स्त्री., रोग० प्रतिश्यायः ( चसू. १७.१३ )

**प्रतिश्याय**–पु., रोग० नासिकातः श्लेष्मस्रवणम् ( चनि. ६.१३ ) वातं प्रत्यभिमुखं श्यायो गमनम्, कफादीनां यस्मिन्, स प्रतिश्यायः ( ड., सुउ. २४.१ ) अतिस्त्रीसङ्गात् शिरःप्रतपनात् नासाप्रविष्टधूमरजोनिचयात् मूत्रादिसंधारणात् प्रतिश्यायः सद्यः समुत्पद्यते (सुउ. २४.३) तस्य पूर्वरूपाणि–शिरोगुरुत्वं छिक्काप्रवृत्तिरङ्गमर्दउद्धर्षितरोमाञ्चत्वं ज्वरारोचकादय उपद्रवा भवन्ति ( सुउ. २४.५ ) स पञ्चविधः —वातिकप्रतिश्यायलक्षणम्–नासाऽऽध्माता पूरिता च भवति। अल्प सिङ्घाणस्रावः। गलताल्वादीनां शोषः। शङ्खनामकास्थिविशेषयोस्तोदः स्वरस्याल्पप्रतिरोधः स्वरविकृतिर्वा। चिह्नान्येतानि वातप्रतिश्याये भवन्ति (सुउ.२४.६-७) पैत्तिकप्रतिश्यायलक्षणम्–घ्राणादीषत्पीतोष्णश्च स्रावो भवति।

पैत्तिकप्रतिश्यायार्दितो नरः कृशः पाण्डुस्तृट्पीडितसंतप्तश्च भवति। अकस्माद्धूमयुतवह्निवमनं नासातो मन्यते पित्तप्रतिश्यायी ( सुउ. २४.७ ) कफकृतप्रतिश्यायलक्षणम्–व्याधावस्मिन् घ्राणाच्छुक्लः शीतः कफो वारं वारं स्रवति। नरः शुक्लवदवभासते। अक्ष्णोः शोफः शिरोमुखयोर्गुरुत्वं च भवति। शिरोगलादिष्वतीव कण्डूः अनुभूयते ( सुउ. २४.९ ) रक्तजप्रतिश्यायलक्षणम्–अस्मिन् व्याधौ रक्तस्रुतिस्ताम्राक्षत्वमुरोघातपीडोच्छ्वासवदनयोर्दुर्गन्धित्वं गन्धज्ञानाऽभावः कृष्णश्वेतादिकृमिवत्त्वमित्यादीनि चिह्नानि भवन्ति। कृमिजन्यशिरोरोगसमानचिह्नोऽयं व्याधिः ( सुउ. २४.१२ ) सान्निपातिकप्रतिश्यायलक्षणम्–त्रिदोषजे प्रतिश्याये वातादिजानां प्रतिश्यायानां पीनसानां च चिह्नानि भवन्ति। व्याधिरेषः कारणाद्विना भवति; विना कारणं विनिवर्तते

च । सांनिपातिकप्रतिश्यायोऽसाध्यो, विदेहोक्तत्वात् ( सुउ. २४.११ ) प्रतिश्यायचिकित्सा–नवे प्रतिश्याये केवलसर्पिषः पानमपच्यमाने स्वेदः, पक्वे घने नस्यं विरेचनधूमपानादि कवलग्रहाश्च, किं च 'निवातशय्यासनचेष्टनानि मूर्ध्नो गुरूष्णं च तथैव वासः । तीक्ष्णा विरेकाः शिरसः सधूमा रूक्षं यवान्नं विजया च सेव्या ॥' ( सुउ. २४.२१ )

**प्रतिषेध**–पु., प्रतिषिध्यते प्रतिक्रियते इति प्रतिषेधः प्रतिकारः, चिकित्सितम् ( ड. सुउ. ९.१ )
निवृत्तिः ( सुचि. २७.११ )

**प्रतिषेधन**–न., तंत्रयुक्ति० अपदेशादिभिस्तन्त्रयुक्तिभिः परपक्षदूषणम् ( ड. सुउ. ६५.५ )

**प्रतिष्ठा**–स्त्री., कार्यकरणाऽविरोधेनाऽवस्थानम् ( चसू. ३०.५ )

**प्रतिष्ठापना**–स्त्री., तंत्रयुक्ति० परप्रतिज्ञाया विपरीतार्थस्थापना, यथा–नित्यः पुरुष इति प्रतिज्ञायामनित्यः पुरुष इति प्रतिष्ठापना ( चवि. ८.३२ )

**प्रतिष्ठित**–वि., अवस्थितम् ( सुचि. २.५० )

**प्रतिसंसर्ग**–( परिव० ) पु., आवापः कल्पादिषु द्रव्यप्रक्षेपः ( सुचि. ६.९ )

**प्रतिसंसृष्टभोजन**–( परिव० ) न., यवाग्वादिक्रमेण भोजनम् ( सुचि. ६.१८ )

**प्रतिसंस्कृत**–वि., पुनः संस्कारितम् ( चसू. १ ) समाप्तिसूत्रम्.

**प्रतिसर**–पु., माला ( का. रेवती क. ८ )

( **प्रतिसरा** )–स्त्री., कार्पाससूत्रवेणिका ( इन्दुः असंउ. ४ )

**प्रतिसारण**–न., उपक्रम० घर्षणम्, तच्च चतुर्विधम्–कल्को, रसक्रिया, क्षौद्रं, चूर्णं च, वाग्भटमते प्रतिसारणं त्रिविधम्, प्रतिसारणमङ्गुल्यग्रप्रणीतं कुर्वीत ( सुचि. ४०.६९-७०; अहृसू. २२.१३ )
(परिव०) अवचूर्णनम् ( चचि. १९.५० )
( परिव० ) लेपः ( सुचि. ३.१५ )
व्रणस्य षष्ट्युपक्रमेष्वेकः ( सुचि. १.८ )

**प्रतिसारणीयक्षार**–पु., कल्प० क्षारभेदः स त्रिविधो मृदुर्मध्यस्तीक्ष्णश्च ( ड. सुसू. ११.११ ) द्र० 'क्षार'

**प्रतिसूर्यक**–पु., सविषकीट० सरटः, पञ्चगोधेरकेष्वेकः, तेन दष्टस्य शोफो दाहरुजौ च भवतः, एतद्दष्टे सर्पदष्टवच्चिकित्सितं कार्यम् ( सुक. ८.२८ )

**प्रतिसोमा**–स्त्री., वनस्पति० सौम्या ( रा. परि. ३.३१ )

**प्रतिस्रोतस्**–न., विरुद्धदिको जलप्रवाहः ( चचि. २७.५९ )
अ., प्रवाहविरुद्धम् ( चचि. २७.५९ )

**प्रतिहास**–पु., वनस्पति० करवीरः ( ध. ४.१ )

**प्रतीकार**–पु., चिकित्साप्रयोज्यं रोगस्य शमनम् ( चसू. १५.३; सुउ. १७.३; अहृसू. १३.३६ )
**–गौरव**–न., चिकित्साकाठिन्यम् ( चवि. ३.४ )

**प्रतीकारतस्**–अव्य., चिकित्सानुसारम् ( सुचि. २३.३ )

**प्रतीघातभेद**–पु.,प्रत्याघातः ( असंनि. ३ )

**प्रतीनाह**–पु., कर्णरोग० पित्तौष्ण्येन शोषितः कर्णगतः श्लेष्मा गूथकं जनयति, स च गूथको द्रवतां गत्वा यदा घ्राणमुखमायाति शिरसश्चाभितपनं करोति, तदा प्रतीनाह इत्युच्यते (सुउ. २०.१२;र.२४.१)
नासारोग० तल्लक्षणम्–सवातः कफ उच्छ्वासमार्गं निरुणद्धि ( चचि. २६.११२ )

**प्रतीप**–वि., प्रतीपं सात्म्यविपरीतमिति गङ्गाधरः ( चचि. २०.१८; असंशा. १२ )
**–ता**–स्त्री., प्रतिकूलता, वैपरीत्यम् ( चइ. १२.५९; असंशा. १० )
**–दन्त**–( परिव० ) पु., वक्रो दन्तः ( कासू. २०.८ )

**प्रतीवाप**–पु., क्वाथादौ द्रव्याणां निक्षेपणम् ( सुचि. ३७.२१ )
कल्कः ( सुचि. २३.११; र. ८.५४ )

**प्रतुद**–पु., पक्षिगण० ( चचि. १८.१८५ ) प्रतुद्याभिहत्य भक्षयतीति प्रतुदः, ते च कपोतपारावतभृङ्गराजपरभृतकोयष्टिककुलिङ्गगृहकुलिङ्गगोक्ष्वेडकडिण्डिमाणवकशतपत्रकमातृनिन्दकभेदाशिशुकसारिकावल्गुलीगिरिशालट्टाल षकसुगृहाखञ्जरीटहारीतदात्यूहप्रभृतयः ( सुसू. ४६.६७ ) गुणाः– मधुराः कषायाः शीता मरुत्कराः पित्तश्लेष्महरा बद्धमूत्राल्पवर्चसः ( सुसू. ४६.६८ )

**प्रतूणी**–स्त्री., रोग० प्रतितूनी ( सुसू. ४६.३७३ )

**प्रतूनी**–स्त्री., वातव्याधि० प्रतितूनी 'गुदोपस्थोत्थिता सैव प्रतिलोमविसर्पिणी । वेगैः पक्वाशयं याति प्रतितूनीति सा मता ' ( सुचि. ५.२५; असंनि. ११.५०; अहृसू. ६.३३; र. १८.११६-१७ )

**प्रतोली**–स्त्री., व्रणबन्ध० चतुर्दशबन्धविशेषाणामन्यतमः अयं ग्रीवामेढ्योर्विधेयः ( सुसू. १८.१७-१८ )
द्र० 'मुतोली'

**प्रत्यक्पर्णी**–स्त्री., वनस्पति० मूषिकपर्णी ( चक. चक .११.१४ )

**प्रत्यक्पुष्पा**–स्त्री., वनस्पती० अपामार्गः ( सुसू. ४३.३; चसू. १.८२-८५ )

इयं शिरोविरेचनानां श्रेष्ठा ( चसू. २५.४० )

**प्रत्यक्पुष्पी**–स्त्री., वनस्पति० अपामार्गः ( ध. १.२६०; चक. १.१४; र. २९.११२; असंसू. १३.३; अहृसू. १५.२८ )

**प्रत्यक्श्रेणी**–स्त्री., वनस्पति० मूषिकपर्णी ( रा. परि. ३.२२ )
सुतश्रेणी ( रा. परि. ४.१६ )
दन्तीपर्यायः ( चक. १२.३ )
द्रवन्ती ( ध. १.२२९ )

**प्रत्यक्ष**–न., प्रमाण० मनसेन्द्रियैश्च चक्षुरादिभिर्यज्ज्ञानमुपलभ्यते तत् ( चवि. ८.३९; सुसू. १.१६ ) आत्मेन्द्रियमनोऽर्थानां सन्निकर्षात्तदात्वे या व्यक्ता बुद्धिः प्रवर्तते, सा प्रत्यक्षं निरुच्यते (चसू. ११.२०) इन्द्रियार्थसंनिकर्षजन्यं ज्ञानं प्रत्यक्षम्, (तर्क०सं) अक्षम् अक्षं प्रतीत्य उत्पद्यते इति प्रत्यक्षम् इति प्रशस्तपादः । तद्विषयाः–प्रत्यक्षप्रमाणेन ज्ञाता घटपटादयः ( चसू. ११.७ )

**–लक्षणफल**–वि., प्रत्यक्षार्हलक्षणफलवती (औषधिः) ( सुसू. ४०.२० )

**प्रत्यग्र**–वि., नवम् ( सुचि. २४.५; चचि. २८.१२९ )

**–धातु**–वि., विशुद्धधातुः प्रत्यग्रत्वेन आप्यायितधातुः ( सुचि. १५.३८; अहृसू. १६.४६; असंसू. २५.५)

**प्रत्यङ्ग**–न., अङ्गाऽवयवः ( चशा. ७.११; सुचि. ३.२२; असंशा. ५.३ ) अवयवं अवयवं प्रति योऽवयवः तत्प्रत्यङ्गमुच्यते ( अरु. अहृशा. ३.१ ) षट्पञ्चाशत्प्रत्यङ्गानि ( चशा. ७.११ )

**प्रत्यञ्जन**–न., उपक्रम० पश्चात् प्रशान्तदोषे यदञ्जनं क्रियते तत्प्रत्यञ्जनम्, तीक्ष्णाञ्जनदुर्बलस्य नयनस्य प्रत्याश्वासनार्थम्, यथा–कांस्यमलादिप्रत्यञ्जनम्, ( सुउ. १२.५०-५१; अहृसू. २३.३०½; असंसू. ३२.८ )

**प्रत्यनीक**–वि., विरुद्धम् ( सुसू. ४२.८ )

**प्रत्यनुयोग**–पु., तंत्रयुक्ति० उपप्रश्नः, 'नित्यः पुरुषः' इति प्रतिज्ञाते यत् परः 'को हेतुः' इत्याह, सोऽनुयोगः, अनुयोगस्यानुयोगः प्रत्यनुयोगः, यथा अस्यानुयोगस्य पुनः को हेतुरिति ( चवि. ८.५३ )

**प्रत्यय**–पु., कारणम् ( चशा. १.१०५ ) निदानम् ( चनि. १.३ )
पारदयोग० स्वर्णरजतताम्रस्रोतोऽञ्जनपारदगन्धकाभ्रकमेलनाज्जातोऽयम् उन्मादाऽपस्मारौ नाशयेत् ( र. २३.२५-२६ )

**–भूत**–वि., कारणभूतम् ( चसू. ८.४ )

**प्रत्यर**–न., जन्मतः पञ्चमं नक्षत्रम् ( असंनि. १.२१ )

**प्रत्यर्थन**–( परिव० ) न., अभ्यर्थना, याचना ( सुउ. ६०.२४ )

**प्रत्यवायकर**–वि., ह्रासकरम् ( चशा. ६.५ )

**प्रत्यष्ठीला**–स्त्री., रोग० नाभेरधस्ताज्जायमानः संचारी चलहीनो वा ग्रन्थिर्वाताष्ठीला सैव जठरे तिर्यगुत्थिता वेदनायुक्ता वातविण्मूत्राण्यवरुणद्धि इति प्रत्यष्ठीला ( सुनि. १.९१; असंनि. ११.४९; र. १८.२०७-२०९ )

**प्रत्याख्यान**–(परिव०) न. परित्यागः, वर्जनम् ( सुसू. २४.११ )

**प्रत्याख्येय**–वि., असाध्यो रोगो रोगी वा ( चचि. १३.७४; चवि. ८.३४ )

**प्रत्याख्येयता**–स्त्री., असाध्यता ( सुसू. ४.५ )

**प्रत्यागत**–वि., बहिरागतम् ( चसि. १.२३ )
व्याघुटितम्, पतितम् ( ड. सुउ. ५४.२३ )
पुनः प्राप्तम्, पुनराविर्भूतम् ( असंउ. १ )

**प्रत्यातप**–अ., आतपाभिमुखम् ( अत्र आतपाभिमुख्यमेव स्वारसिकोऽर्थः प्रत्येयः ( सुचि. २४.९६ )

**प्रत्यादित्यम्**–अव्य., आदित्याभिमुखम् ( असंसू. ३६.११ )

**–गुद**–वि., प्रत्यादित्यम् आदित्याभि-(प्रत्यादित्य ) मुख गुदं यस्य, तादृशः (आतुरः) ( सुचि. ६.४ )

**–मुख**–वि., आदित्याभिमुखवंदनः ( सुशा. ८.८ )

**प्रत्याध्मान**–रोग० तस्य लक्षणम्, आमाशयोत्थितमाध्मानमेव विमुक्तपार्श्वहृदयं कफव्याकुलितानिलं सत् प्रत्याध्मानं ज्ञेयम् ( सुनि. १.८९ ) तच्चिकित्साछर्दनमपतर्पणं दीपनानि च कर्तव्यानि ( सुचि. ५.२६ )

**प्रत्यास्थापन**–न., उपक्रम० आस्थापनं लक्ष्यीकृत्य दीयमानं बस्त्यौषधम् ( चक. चसि. ८.१५ )

**प्रत्युत्पन्न**–वि., तत्कालभवम् ( असंसू. २२.११४ )

**–मति**–वि., तदात्वे जायमाना अवस्थास्वपि अमुह्यमाना मतिर्बुद्धिर्यस्य, सः ( वैद्यः ) ( सुसू. ३४.१९-२० )

**प्रत्युत्सार**–पु., तन्त्रयुक्ति० उत्सारो निवारणम्, प्रत्युत्सारः उपपत्त्या परमतनिवारणम् ( चसि. १२.४५ )

**प्रत्युपस्थितमूत्र**–पु., लक्षण० संजातमूत्रवेगः ( ड. ) एतादृशमूत्रविधारणान्मूत्राघातः । मूत्रविधारणपूर्वकं मिथुनप्रसङ्गान्मूत्रशुक्राख्यो व्याधिविशेषो जायते ( सुउ. ५८.२० )

**प्रत्युषस्**-न., प्रभातम् ( सुसू. ६.१४ )
**प्रत्येकमर्मनिर्देश**-पु., अध्यायसंज्ञा० ( सुशा. ६.१ )
**प्रथम**-वि., आदिमः ( सुसू. ४४.३५ )
**-गर्भिणी**-वि., या स्त्री प्रथमतो गर्भिणी, सा ( का. रेवतीकल्प. ८ )
**-यवपत्रमुखी**-स्त्री., एषणीशस्त्र० ( सुसू. ८.११ ) द्र० 'शस्त्र'
**प्रदक्षिणाचारा**-वि., अनुकूलाचारा प्रदक्षिणा दाक्षिण्येन नाम परच्छन्दानुवर्तनेन युक्ता आचारा यस्याः सा ( चचि. ३.२६५ )
**प्रदक्षिणावर्ता**-वि., दक्षिणदिक्का आवर्ता यस्याम् अथवा दक्षिणदिगभिमुखावर्तयुक्ता (नाभिः) (चशा. ८.५१)
**प्रदक्षिणोदक**-वि., प्रदक्षिणमिति परितः जलं यस्य सः ( देशः ) ( चक. १.९ )
**प्रदर**-पु., स्त्रीरोग० ( चसू. १.१११ ) रक्तप्रदोषजरोगेष्वेकः ( चसू. २८.११ ) योनिगतस्रावस्वरूपः ( चसू. १८.६ ) 'रजः प्रदीर्यते यस्मात् प्रदरस्तेन वै स्मृतः' (चचि. ३०.२०९) शुद्धार्तवस्य दुष्टार्तवस्य वाऽतिप्रमाणा प्रवृत्तिः ( सुशा. २.१८ ) तस्य संप्राप्तिः-प्रकुपितो वायू रक्तं प्रमाणाधिकं कृत्वा गर्भाशयगता रजोवहाः सिराः समाश्रित्य रक्तमादाय तद्रजो यस्मादाशु विवर्धयति, रसभावात् तस्य प्रमाणाधिक्यं करोति, तं रोगं प्रदरमिति प्राहुः ( चचि. ३०.२०६-८ ) स चतुर्विधः वातपित्तकफसंनिपातभेदात् (मा.) तद्रूपाणि-सामान्यरूपाणि-सशूलः, साङ्गमर्दो रक्तातिस्रावः; तत्र वातजप्रदरे स्रुतमसृक् रूक्षारुणम्, फेनिलमल्पं, सशूलं, पिशितोदकाभम् (मा.) कटिवंक्षणहृत्पार्श्वपृष्ठश्रोणिपीडा ( चचि. ३.२१२ ) पित्तजे च सपीतनीलासितरक्तमुष्णं, भृशवेगि, पित्तार्तियुक्तम्; कफजलक्षणानि -आमं सपिच्छाप्रतिमं, सपाण्डु, पुलाकतोयप्रतिमम्; सांनिपातिकप्रदरलक्षणानि-सक्षौद्रसर्पिर्हरितालवर्णं, मज्जप्रकाशं, कुणपम् (मा.) तदुपद्रवाः-दौर्बल्यं भ्रमो मूर्च्छा, मदस्तृषा, दाहः, प्रलापः, पाण्डुत्वं, तन्द्रा, वातरोगाश्च ( सुशा. २.१९-२० ) असाध्यलक्षणानि-अतिक्लिष्टायाः प्रक्षीणशोणिताया नार्याः सर्वहेतुसमाचारादतिवृद्धो वायुः प्रत्यनीकबलं, दुर्गन्धं, पिच्छिलं, पीतं, पित्ततेजोविदग्धं कफं रक्तमार्गेण सृजति। तथा च वसां मेदश्चाप्यपत्यमार्गेण सृजति। एवं सर्पिर्मज्जवसोपमं स्रावं स्रवन्त्यास्तृष्णादाहज्वरान्वितायाः, क्षीणरक्ताया दुर्बलायाश्चासाध्यः प्रदरः ( चचि. ३०.२२१-२४ ) तच्चिकित्सासूत्रम्-रक्तपित्तवद् अस्मिन् चिकित्सा कार्या ( सुउ. ४५.४४ )



**प्रदाक्षिण्य**-न., आनुकूल्यम् ( चसू. १५.७ )
**प्रदिग्ध**-वि., शूलिकाप्रोतमङ्गारपाचितम् ( सुसू. ४६.३५६ ) अनुलिप्तः ( अहसू. ३.११ )
**प्रदूषक**-वि., विकृतिकारकः ( असंशा. ६ )
**प्रदूषण**-वि., प्रदूषयति विकृतिं जनयति इति प्रदूषणः विकृतिकारकः ( अहसू. ६.११० )
**प्रदेश**-पु., स्थानम् ( सुचि. २७.५ ) ( चक. १२.४९ ) तन्त्रयुक्ति० प्रकृतस्यातिक्रान्तेन साधनं प्रदेशो यथा 'देवदत्तस्यानेन शल्यमुध्दृतं तथा यज्ञदत्तस्याप्ययमुद्धरिष्यति' इति ( सुउ. ६५.१६ ) यद् बहुत्वादर्थस्य कार्त्स्न्येनाभिधातुमशक्यमेकदेशेनाभिधीयते ( चसि. १२.४२ )
**प्रदेशिनी**-स्त्री., शारीर० प्रदेशनी ( सुचि. ३०.५; चचि. ३०.७३ )
**प्रदेह**-पु., लेपः ( चसू. ११.५५ ) प्रलेपः ( सुक. ५.३८ ) प्रदेहः सामान्येन बहलोऽबहलश्च लेप इति गृह्यते ( चक. चचि. ३.१७४ ) तस्य गुणाः- वातश्लेष्मप्रशमनः, संधानः, शोधनो रोपणः शोफवेदनापहश्च भवति ( सुसू. १८.६ ) शीत उष्णो बहलोऽबहुरविशोषी च, व्रणशोफे पीडनार्थमुपयुज्यमानः ( सुसू. १८.६ ) प्रदेहं रात्रौ न प्रयुञ्जीत। शैत्यपिहितस्योष्मणो बहिः निस्सरणाभावाद् विकारपरिवृद्धिः स्यात् ( असंउ. ३० ) द्र० 'लेप' पाकेन घनीभूतो रसः ( ड. सुउ. ४०.१४९ )
**-स्वेद**-पु., प्रलेपस्वेदः ( कासू. २३.३४ )
**प्रदोष**-पु., रात्रिप्रथमप्रहरार्धम् ( ड. सुउ. ६४.१६; सुसू. ६.१४ ) अस्तमयादूर्ध्वं घटिकाद्वयं त्रयं वेति धर्मशास्त्रे; 'प्रदोषोऽस्तमयादूर्ध्वं घटिकाद्वयमिष्यते' इति तिथ्यादितत्त्वम्।
**प्रद्रव**-वि.,प्रकृष्टद्रवम्,(ड.) यथा प्रद्रवं द्रव्यं यवागूयूषादि ( सुउ. ४०.२७ )
**प्रद्वेष**-पु., अप्रीतिः ( चनि. १.३३ )
**प्रधमन**-न., धमनम्। उपक्रम० ( चनि. ७.८ ) नस्यभेदः, चूर्णस्य मुखेन नाड्या वा प्रध्मापनात् प्रधमनम् ( सुचि. ४०.२१ ) द्र० 'नस्य'
**-नस्य**-न., उपक्रम० नस्यभेदः ( असंसू. २९ )

**प्रधर्षण**–न., तिरस्कारः ( चसू. ११.३७ )
**प्रधान**–न., आत्मा ( चशा. ४.८; चशा. ७.१८ ) शरीरादि–प्रेरकं चेतनमित्यात्मा ( चशा. ७.१६ )
प्रकृतिः, मूलप्रकृतिः ( ड. सुशा. १.८ )
**–कर्मन्**–न., व्रणसम्बन्धिनी प्रधानचिकित्सा ( सुसू. ५.३ )
**–मर्मन्**–न., मर्म० हृदयम् ( ड. सुचि. ३४.१९ )
**–संश्रय**–वि., प्रधानमात्मैव संश्रयः यस्य तादृशः नाम आत्मसंश्रितः ( भावः ) ( चशा. ४.१४ )
**प्रध्यान**–न., प्रसंख्यानम्, प्रकृष्टं सञ्जातं वा ध्यानम् ( चसू. २४.३२ )
**–शील**–वि., लक्षण० चिन्तापरः ( ड. सुउ. ४१.१८ )
**प्रनष्टमेहन**–वि., अन्तराकृष्टलिङ्गः ( सुसू. ३२.४ )
**प्रनष्टशल्यविज्ञानीय**–वि., अध्यायसंज्ञा० प्रनष्टशल्यविज्ञानमधिकृत्य कृतः ( सुसू. २६.१ )
**प्रनाडी**–स्त्री., नाडी, नलिका ( अहसू. २०.१९ )
**प्रपचन**–न., पाकः ( चवि. ८.३६ )
**प्रपथ्या**–स्त्री., वनस्पति० हरीतकी (ध. १.२०५)
**प्रपद**–न., शारीर० पादाग्रम् ( चसि. २.१६ ) तन्मानतः चतुरङ्गुलायतं पञ्चाङ्गुलविस्तृतं च ( सुसू. ३५.१२ )
**–शूल**–पु., लक्षण० प्रपदस्य शूलः ( चसि. २.१६ )
**–शोष**–पु., लक्षण० प्रपदस्य शुष्कता ( चसि. २.१६ )
**–स्तम्भ**–पु., लक्षण० प्रपदस्य स्तम्भः ( चसि. २.१६ )
**प्रपल्लव**–पु., वनस्पति० अशोकः (रा. १०.२७१)
**प्रपाक**–पु., प्रथमपाकः 'चशब्द आदिकर्मणि' इति चक्रपाणिटीकानुसारेण पाकस्य प्राथम्यं ज्ञेयम् ( चचि. १५.९ )
**प्रपाणि**–पु., शारीर० कफोण्यधस्तनः पञ्चदशाङ्गुलो हस्तभागः ( चवि. ८.११७ )
**प्रपाणिक**–पु., शारीर० प्रपाणिः ( असंशा. १०.१५ )
**प्रपात**–पु., प्रकर्षेण पातः पतनम् अस्माज्जायते तादृशं गिरिकन्दरादिसम्बन्धि भ्रंशस्थानम् (चवि. ३.३६) निर्झरपतनम् ( सुचि. २४.९१ ) नदीतटादिः ( ड. सुक. ५.५५ )
**प्रपान**–न., पानमेव पानक्रिया ( चचि. २४.७५ )
**प्रपीडन**–न., उपक्रम० पीडनम् ( सुसू. ३७.११ )
**प्रपीत**–वि., भावितम् ( सुउ. ५४.२९ )
**प्रपुण्डरीक**–न., वनस्पति० प्रपौण्डरीकम् अनेन त्रयोदशविषाणामन्यतमेन अक्ष्णो रक्तत्वमुदरे च वृद्धिर्जायते ( सुक. २.१६ )
**प्रपुनाट**–पु., वनस्पति० चक्रमर्दः (असंसू. ७.१३९-१४३)
**प्रपुनाड**–न., वनस्पति० शाकभेदः चक्रमर्दः (चसू. ३.१३; सुसू. ३९.३ )
**प्रपुन्नाट**–पु., वनस्पति० चक्रमर्दः (ध. ४.४)
**प्रपुन्नाड**–पु., वनस्पति० चक्रमर्दः (ध. ४.५)
**प्रपूरण**–न., संभरणद्रव्यम् ( सुउ. २१.१३-१४ )
**प्रपौण्डरीक**–न.. वनस्पति० पुण्डरीकम् (चसू. ३.२६) कमलभेदः ( चसू. ५.६४ ) तद्गुणाः–मधुरं, तिक्तं, कषायं, शीतं चक्षुष्यं, पित्तघ्नं, रक्तपित्तव्रणज्वरदाहतृषानाशकम् ( ध. ३.९२ )
कन्दविष० ( सुक. २.५-१६ ) द्र० 'कन्दविष' स्वनामख्यातं यष्टिमधुद्रव्यादीषत्स्थूलं मधुररसं नेत्राऽऽश्चोतनार्हं द्रव्यम् ( सुसू. ३८.३५ )
श्रीपुष्पम् (सुसू. ३८.३५)
**प्रबन्ध**–पु., बन्धनम्, प्रकर्षेण गतिरोधः (हाराणचन्द्रः) ( सुशा. १०.९ )
**प्रबला**–स्त्री., वनस्पति० प्रसारणी ( रा. ५.४३५ )
**प्रबाहु**–पु., शारीर० अंसादर्वाक्कफोणिपर्यन्तो भागः, अयं प्रमाणतः षोडशाङ्गुलः ( चवि. ८.११७ )
**प्रबोध**–पु., अर्थः प्रबुध्यते ज्ञायते इति प्रबोधः ज्ञेयार्थः ( सुउ. ६५.७ )
**प्रबोधनी**–स्त्री., वनस्पति० धन्वयासः ( रा. ३.२० )
**प्रभद्र**–पु., वनस्पति० निम्बः ( ध. १.२९ )
**( प्रभद्रा )**–स्त्री., वनस्पति० प्रसारणी ( रा. ५.४३५ )
**प्रभव**–पु., आत्मा ( चशा. ४.८ )
कारणम्, प्रभवति जायते अस्मात् इति प्रभवः कारणं हेतुर्वा ( चशा. १.३ )
**प्रभा**–स्त्री., वर्णदीप्तिः, शरीरकान्तिस्तेजः, तस्याः संख्या–सा सप्तविधा–रक्ता, पीता, सिता, श्यावा, हरिता, पाण्डुराऽसितेति ( चइ. ७.१४-१५ )
प्रभा तु वर्णं प्रकाशयति परं विप्रकर्षाद् दूरत्वात् तेजः प्रभा एव इति लक्ष्यते ( असंशा. ९.८ )
**–युक्ता**–स्त्री., वनस्पति० बाकुची ( रा. ४.२२८ )
**–वती**–स्त्री., पारदयोग० पारदसुवर्णाभ्रकहरितालतीक्ष्णलोहमाक्षिकादिसाधितेयम् अपस्मारगुल्मशूलादिनाशिनी ( र. २१.१३९-४१ )
**–हानि**–स्त्री., लक्षण० तेजोहानिः ( अहसू. ११.१६ )
**प्रभाव**–पु., स्वभावः, सामर्थ्यम् ( चक. १.६ ) प्रकृष्टो भावः प्रभावः, शक्तिः ( चवि. १.४ ) ययोर्द्रव्ययोः रसवीर्यविपाकानां समानत्वमस्ति, कर्मणां च विशेषो लक्ष्यते तत्र विशेषकर्मकारी द्रव्यनिष्ठो धर्मः ( चसू. २६.६७ ) सर्वातिशायी द्रव्यस्वभावः ( असंसू. १७ )

**-तत्त्व**-न., प्रभावनिर्णयः ( चवि. १.९ )
**प्रभाषण**-( परिव० ) न., व्याख्यानम् ( सुसू. ४.३ )
**प्रभाषणीय**-वि., अध्यायसंज्ञा० अधीतशास्त्रस्य पुनः अर्थतो व्याख्यानं प्रभाषणम्, तदधिकृत्य कृतोऽध्यायः ( सुसू. ४.१ )
**प्रभु**-पु., स्वामी, क्षेत्रज्ञः ( सुशा. ४.३६ ) खनिज० पारदः ( रा. १३.४१ )
**प्रभूत**-वि., बहुलम्, भूरि ( सुचि ३४.५ )
**प्रभेद**-पु., भेदनवत्पीडा ( सुनि. १.२८ )
**प्रभ्रंशन**-(परिव०) न., अतीवप्रभ्रंशः, अत्यर्थमधःपतनम् ( सुउ. २२.१३ )
**प्रमत्त**-वि., प्रकर्षेणोन्मत्तः अनवहितः, अदत्तचित्तः ( चवि. ३.३६ )
**प्रमथ्या**-स्त्री., पाचनदीपनीयः कषायः (चचि. १९.१९) ' प्रमथ्या प्रोच्यते द्रव्यपलात् कल्कीकृताच्छृतात्। तोयेऽष्टगुणिते यस्याः पानमाहुः पलद्वयम् ' ( शार्ङ्गधर, अरु. अहचि. ९.५.६-७ )
**प्रमदा**-स्त्री., विलासिनी स्त्री, प्रमदयति हर्षयति पुरुषमिति यद्वा प्रमदो हर्षोऽस्ति अस्या यौवनोत्साहजनित इति प्रमदा ( सुचि. २४.११६; अहसू, ३.१५ )
**प्रमाण**-न., मानम् ( चशा. ७.१५ ) अंगुल्यादिभिरुत्सेधविस्तारायामद्रष्ट्या यन्मीयते, तन्मानम् ( चवि. ८.११७ )
परिमाणम् ( सुचि. ३५.१ )
ज्ञानम्, प्रमीयते ज्ञायते इति प्रमाणं ( ज्ञानम् ) ( चवि. ८.७ )
**प्रमाथिन्**-वि., अनुलोमनम् ( चक्र. चसू. ७.९ ) क्षोभकारि, शीघ्रकार्यकारि ( चचि. १३.१८० ) ' स्रोतांसि दोषलिप्तानि प्रमथ्य विवृणोति यत्। प्रविश्य सौक्ष्म्यात्तैक्ष्ण्याच्च तत्प्रमाथीति संज्ञितम् ॥' ( भाप्र. ) स्रोतोभ्यो दोषसंचयं निजवीर्येण निरस्यति, तत् । ( शार्ङ्ग० )
**प्रमादायतन**-वि., प्रमादोऽनवधानता आयतनमाश्रयस्थानं यस्य, तादृशः ( मदः ) ( असंनि. ६.५ )
**प्रमादिन्**-वि., प्रमादशीलः ( सुचि. ३०.४ )
**प्रमार्जन**-न., बालवस्त्रादिभिः प्रोञ्छनमनवबद्धशल्योद्धरणार्थं पञ्चदशोपायेष्वेकः ( सुसू. २७.४ ) पिचुकूर्चिकया कर्णप्रोञ्छनम् ( सुउ. २१.४१ )
**प्रमिताशन**-न., अतीतकालभोजनं स्तोकभोजनं वा यच्च कर्शनीयानां श्रेष्ठम् ( चसू. २५.४० )
**प्रमीढ**-वि., प्रमेहरोगयुक्तः ( चसू. १३.३५ )
**प्रमीलक**-पु., सततं प्रध्यानम् ( चसू. २३.७ ) लक्षण० स्तैमित्यम् ( असंउ. २७ )
**प्रमूढता**-स्त्री., प्रकर्षेणाचैतन्यम् ( ड. सुक. २.१६ ) अतिशयेन विचेतनत्वम् ( ड. सुउ. ६१.७ )
**प्रमृताशन**-न., क्षुत्तृष्णोपरमे जाते, शान्तेऽग्नौ यदशनं क्रियते तत् ( का.खिल. ५.६० )
**प्रमेय**-न., प्रमाविषयः, यथार्थज्ञानविषयः ( चशा. १.४५ )
**प्रमेह**-पु., रोग० ( चनि. ४; चचि. ६; सुनि. ६; अहनि. १० ) तस्योत्पत्तिः- पुरा दक्षाध्वरध्वंसे देहिनां हविष्प्राशात्प्रमेह उद्भूतः ( चनि. ८.११ ) स धातुक्षयजवातवृद्धिजो दोषावृतवातजश्चेति द्विविधः ( अहनि. १०.१८-१९ ) तस्य स्वरूपम्-प्रभूताविलमूत्रता ( अहनि. १०.७ ) तस्य संप्राप्तिः- नवान्नपानगुडवैकृताद्यपथ्यसेविनः अपरिपक्वा एव वातपित्तश्लेष्माणो यदा मेदसा सहैकत्वमुपेत्य मूत्रवाहिस्रोतांस्यनुसृत्याधो गत्वा बस्तेर्मुखमाश्रित्य निर्भिद्यन्ते, तदा प्रमेहान् जनयन्ति ( सुनि. ६.४ ) तस्य दूष्याः— रसासृङ्मांसमेदमज्जाशुक्राम्बुवसालसीकौजांसि त्रिदोषसहितानि त्रयोदश । तस्य मेहसंख्या विंशतिः– तत्र कफादुदकेक्षुवालिकासुरासिकताशनैर्लवणपिष्टसान्द्रशुक्रफेनमेहा दश; पित्तान्नीलहरिद्राम्लक्षारमञ्जिष्ठाशोणितमेहाः षट्; वातात्सर्पिर्वसाक्षौद्रहस्तिमेहाश्चत्वारः ( सुनि. ६.८) तस्य पूर्वरूपाणि- हस्तपादतलदाहः स्निग्धपिच्छिलगुरुता गात्राणां, मधुरशुक्लमूत्रता तन्द्रा सादः पिपासा दुर्गन्धश्च; श्वासतालुगलजिह्वादन्तेषु मलोत्पत्तिर्जटिलीभावः केशानां वृद्धिश्च नखानाम् ( सुनि. ६.५ ) तस्य लक्षणानि-तत्र कफजप्रमेहलक्षणानि- श्वेतमवेदनमुदकसदृशमुदकमेही मेहति; इक्षुरसतुल्यमिक्षुवालिकामेही; सुरामेही सुरातुल्यम्; सरुजं सिकतानुविद्धं सिकतामेही; शनैः सकफं मृत्स्नं शनैर्मेही; विशदं लवणतुल्यं लवणमेही; हृष्टरोमा पिष्टरसतुल्यं पिष्टमेही; आविलं सान्द्रं सान्द्रमेही; शुक्रतुल्यं शुक्रमेही; स्तोकं सफेनं फेनमेही मेहति । पित्तजमेहलक्षणानि-सफेनमच्छं नीलं नीलमेही मेहति; सदाहं हरिद्राभं हरिद्रामेही; अम्लरसगन्धमम्लमेही; स्रुतक्षारप्रतिमं क्षारमेही; मञ्जिष्ठोदकप्रकाशं मञ्जिष्ठामेही; शोणितप्रकाशं शोणितमेही मेहति । वातजप्रमेहलक्षणानि-सर्पिःप्रकाशं सर्पिर्मेही मेहति; वसाप्रकाशं वसामेही;

क्षौद्ररसवर्णं क्षौद्रमेही; मत्तमातङ्गवदनुप्रबन्धं हस्तिमेही मेहति ( सुनि. ६.१०-१२ ) अष्टाङ्गहृदये चतुर्विधा भिन्नाः प्रमेहभेदा वर्णिताः; तत्र द्वौ कफजप्रमेहभेदौ–शीतमेही सुबहुशो मधुरं भृशशीतलम्; लालामेही लालातन्तुयुतं पिच्छिलं प्रमेहति । पित्तमेहभेदः–कालमेही मसीनिभं प्रमेहति । वातमेहभेदः–मज्जामेही मुहुर्मुहुर्मज्जाभं मज्जामिश्रं वा प्रमेहति (अहनि. १०.१२-१४,१७) कफदोषजाऽऽलालमेहः–तन्तुबद्धमिवाऽऽलालं पिच्छिलं प्रमेहति ( चनि. ४.१० ) कालेनाऽप्रतिकारिणः सर्वे एव प्रमेहा मधुमेहत्वमायान्ति ( सुनि. ६.२७ ) सतु कारणभेदेन द्विविधः–धातुक्षयजवातवृद्धिजो दोषाऽऽवृतवातजश्च ( अहनि. १०.१८,१९ ) तस्योपद्रवाः–मक्षिकोपसर्पणमालस्यं मांसोपचयः प्रतिश्यायः शैथिल्याऽरोचकाविपाकाः कफप्रसेकच्छर्दिनिद्राकासश्वासाश्चेति श्लेष्मजानामुपद्रवाः; वृषणयोरवदरणं बस्तिभेदो मेढ्रतोदो हृदि शूलमम्लीकाज्वरातीसारारोचका वमथुः परिधूमायनं दाहो मूर्च्छा पिपासा निद्रानाशः पाण्डुरोगः पीतविण्मूत्रनेत्रत्वं चेति पैत्तिकानां, हृद्ग्रहो लौल्यमनिद्रा स्तम्भः कम्पः शूलं बद्धपुरीषत्वं चेति वातजानाम् ( सुनि. ६.१३ )

तस्य साध्याऽसाध्यत्वम्–दोषदूष्याणां समक्रियत्वात् कफजा दशमेहाः साध्याः; विषमक्रियत्वात्पित्तजाः षण्मेहा याप्याः; महात्ययिकत्वाद्वा वातजचतुर्मेहा असाध्यतमाः ( सुनि. ६.८ ) प्रमेहे तुल्यदूष्यता सुखसाध्यस्य हेतुः (असंसू. ७.२४९) सर्वे मधुमेहा असाध्याः ( सुनि. ६.२७ ) उपद्रवाविष्टमतिप्रस्रुतं पिडकापीडितं मानवं गाढं प्रमेहो हन्ति ( सुसू. ३३.८ ) बीजदोषजकुलजविकारोऽसाध्यः ( चचि. ६.५७ ) चिकित्सासूत्रम्–रूक्षं गाढमुद्वर्तनं व्यायामो रात्रिजागरादयः इत्येवमादिकां कफमेदोहरां चिकित्सां कुर्यात् ( अहचि. १२.३२ ) न चैतान्कथंचिदपि स्वेदयेन्मेदोबहुत्वादेतेषां विशीर्यते देहः स्वेदेन ( सुचि. १२.७ ) प्रमेहनिवृत्तिलक्षणम्–यदा प्रमेहिणो मूत्रं पिच्छारहितं प्रसन्नं रूक्षं भवति यदा च मूत्रस्य रसौ कटुतिक्तौ भवतः, तदा तस्य प्रमेहरोगो निवृत्त इति जानीयात् (सुचि. १२.२०) प्रमेहेऽरिष्टलक्षणानि–स्वप्ने चण्डालैः सह स्नेहपानं कुर्वाणः स्नातानुलिप्तः सन् मक्षिकाभिः गृध्यमानो नरः प्रमेहेण स्पृष्टो मरणाय कल्पते ( चइ. ५.१७; असंशा. १२ )

**–गजसिंह**–पु., पारदयोग० पारदे हेमपूतिलोहादिसाधितोऽयं प्रमेहनाशकः ( र. १७.४१-४२ )

**–चिकित्सित**–न., अध्यायसंज्ञा० ( चचि. ६.१; सुचि. ११.१ )

**–निदान**–न., अध्यायसंज्ञा० ( चनि. ४.१; सुनि. ६.१ )

**–पिटिका**–स्त्री., रोग० ( चसू. १७; सुचि. १२; सुनि. ६; असंनि. १०; अहनि. १० )

रसायनीनां दौर्बल्याच्चोर्ध्वमुत्तिष्ठन्ति प्रमेहिणां दोषास्ततो मधुमेहिनामधःकाये पिडकाः प्रादुर्भवन्ति ( सुचि. १२.८ ) प्रमेहेण विनाऽप्येता दुष्टमेदसो जायन्ते । यावद्वस्तुपरिग्रहस्तावन्नोपलक्ष्यन्ते एताः ( असंनि. १०.५० ) तत्र वसामेदोभ्यामभिपन्नशरीरस्य त्रिभिर्दोषैश्चानुगतधातोः प्रमेहिणो दश पिडका जायन्ते । तद्यथा–शराविका, सर्षपिका, कच्छपिका, जालिनी, विनता, पुत्रिणी, मसूरिकाऽलजी,विदारिका,विद्रधिका; ताश्च शरावमात्रा तद्रूपा निम्नमध्या शराविका, गौरसर्षपसंस्थाना तत्प्रमाणा सार्षपी, सदाहा कूर्मसंस्थाना कच्छपिका, तीव्रदाहा मांसजालसमावृता जालिनी, महती नीला विनता, महत्यल्पाचिता, पुत्रिणी, मसूरसमसंस्थाना मसूरिका, रक्तासिता स्फोटवती दारुणाऽलजी, विदारीकन्दवद्वृत्ता कठिना विदारिका, विद्रधेर्लक्षणैर्युक्ता विद्रधिका; तस्याः साध्यासाध्यत्वम्–गुदे, हृदि, शिरस्यंसे, पृष्ठे, मर्मणि चोत्थिताः सोपद्रवा दुर्बलाग्नेः पिडकाः परिवर्जयेत्०(सुनि. ६.१४-२०) शराविकाद्या नव पिडकाः प्रागुक्ताः, ताः प्राणवतोऽल्पास्त्वङ्मांसप्राप्ता मृद्वयोऽल्परुजः क्षिप्रपाकभेदिन्यश्च साध्याः (सुचि. १२.३) चिकित्सासूत्रम्–अपक्वानां पिडकानां शोफवत् प्रतीकारः पक्वानां तु व्रणवत्प्रतीकारो विधातव्यः, प्रमेहचिकित्सितेनैव एतासां पिडकानां शमः सिध्यति । तत्र पूर्वरूपेषु अपतर्पणं बस्तमूत्रं वनस्पतिकषायश्चोपदिष्टः ( सुचि. १२.४ )

**पिडकाचिकित्सित**–न., अध्यायसंज्ञा० (सुचि. १२.१)

**प्रमोद**–पु., धान्य० शालिभेदः द्र० ' शालि ' ( अहसू. ६.२ )

**प्रमोदक**–पु., धान्य० शालिभेदः द्र० ' शालि ' ( चनि. ४.५ ) सर्वप्राणिनां पथ्यः ( सुसू. २०.५ ) षष्टिकभेदः ( सुसू. ४६.८ )

**प्रमोदिनी**-स्त्री., वनस्पति० मल्लिका ( ध. ५.१३४ )
**प्रमोह**-पु., लक्षण० चित्तनाशः विचेतस्त्वम् ( चसू. १७.३१ )
**प्रमोहक**-पु., मूर्च्छा, मोहः, इन्द्रियापटुत्वम् ( चक्र. चसू. २.६ )
**प्रयत**-वि., पवित्रम् ( चइ. १२.१० )
प्रयोगज्ञो ( वैद्यः ) ( सुउ. २०.१६ )
**प्रयतन**-( परिव० ) न., प्रयत्नः ( सुचि. ७.३२ )
**प्रयत्न**-पु., कार्यारम्भेषूत्साहः ( ड. ) प्रेरणा ( सुशा. १.१७ ) प्रयतनम् ( चसू. १.४९ )
आत्मन आद्यं कर्म, आत्मनिष्ठो विशेषगुणः ( चसू. १.४९ )
**प्रयाण**-न., गमनम् ( असंशा. १२.३ )
**प्रयोक्तृ**-पु., शरीरादिप्रेरकं चेतनम्, प्रधानम्, आत्मा ( चशा. ७.१६ )
**प्रयोग**-पु., भेषजस्य योजना ( चनि. ८.२३ ) द्रव्याणां कालप्रकृत्याद्यपेक्षा योजना ( चसू. ४.२९ )
चिकित्सादि कर्म ( सुउ. ६०.५४ )
अभ्यासः ( चक्र. चचि. २९.८३ )
शब्दयोजना, शब्दप्रयोगः ( चवि. ६.४ )
**-धूम**-पु., उपक्रम० धूमपानभेदः, प्रायोगिकधूमः, ( चसू. ५.३७ ) द्र० 'धूमपान'
**-पान**-न., प्रायोगिकं धूमपानम् ( चसू. ५.३३ ) द्र० 'धूमपान'
**-समसाद्गुण्य**-न., समस्य समीचीनस्य प्रयोगस्य सद्गुणत्वम्, समेऽल्पकाले अल्पमात्रे च पिप्पल्यादिप्रयोगे सद्गुणा भवन्ति ( चवि. १.१६ )
**-सौष्ठव**-न., योजनासुष्ठुत्वम् भेषजोपयोगस्य समीचीनत्वम् ( चसू. १५.५ )
**प्रयोजन**-न., यदर्थमारभ्यते तत् ( चवि. ८.४४ ) यमर्थमभीप्सन् जिहासन्वा कर्म आरभते, तेन अनेन सर्वे प्राणिनः सर्वाणि कर्माणि सर्वा विद्याश्च व्याप्ताः ( १।१।१ न्यायभाष्यम् )
तन्त्रयुक्ति० यदर्थं कामयमानः प्रवर्तते ( चसि. १२.४२ )
**प्ररोह**-पु., वृक्षाङ्गभेदः अङ्कुरः ( चसू. १.७४ ) अंकुर. शाखाऽधोभागनिःसृतजटा ( ड. सुउ. ४०.८८ )
**-वती**-वि., बीजाङ्कुरजननी ( सुसू. ३६.३ )
**प्रलपन**-न., लक्षण० संगतिशून्यवचः, वातप्रकोपेण जायमानो विकारः ( र. १२.९९-१०० )
**प्रलम्ब**-पु., वनस्पति० भूस्तृणः (ध. ४.४७)

**प्रलय**-पु., नाशः ( चनि. ३.७ ) मरणम् (चशा. १.३८)
महाप्रलयः ( चशा. ४.८ )
**-काल**-पु., मृत्युकालः ( सुशा. ४.३३ )
**-हेतु**-पु., प्रलयस्य कारणम्, मरणहेतुः (चसू. २४.५३)
**प्रलाप**-पु., लक्षण० संगतिहीनं निरर्थकं वा भाषणम् ( चनि. १.३३; सुसू. ४६.५०४ )
**प्रलापक**-पु., रोग० संनिपातज्वरभेदः ( मा. ज्वर.२१ ) लक्षणम्-कम्पप्रलापपरितापनशीर्षपीडाप्रौढप्रभावपवमानपरः प्रज्ञाप्रणाशविकलः प्रचुरप्रवादः प्रलापी क्षिप्रं प्रयाति ( अश्विनीसंहिता, मा. ज्वर. २१ ) द्र० ' ज्वर '
**प्रलापिन्**-वि., लक्षण० वाचालः प्रलपनशीलः, असंबद्धभाषी ( सुशा. २.२५ )
**प्रलीयमान**-वि., क्षीयमाणः ( सुशा. १०.५७ )
**प्रलुठित**-वि., वेल्लितः, उपावृत्तः, लुठितः ( असंशा. ६.६९ )
**प्रलून**-पु., कफजकृमि० दर्भपुष्पमहापुष्पादीनां कफकोपसमुद्भवानां षण्णां कृमीणामेकतमोऽयम् ( सुउ. ५४.१२ ) द्र० ' कृमि '
वि., उद्धृतः, छिन्नः ( असंउ. २५ )
**प्रलेप**-पु., उपक्रम० लेपः द्र० ' लेप ' ( चसू. १८.५; चचि. २१.९८-१०७ )
**-विधि**- पु., लेपविधिः, द्र० ' लेप ' ( चचि. २१.९८-१०७ )
**प्रलेपक**-पु., रोग० ज्वरभेदः द्र० ' ज्वर ' ( सुउ. ३९.५४ ) तल्लक्षणम्-घर्मेण गौरवेण च गात्राणि प्रलिम्पन्निव तथा मन्दज्वरविलेपीशीतयुक्तश्च ( मानि. )
**प्रवण**-वि., उन्मुखम् ( चक. १.५ )
**प्रवर**-पु., प्रतिवादिनां मध्ये श्रेष्ठः, प्रतिवादी ( चवि. ८.१९ )
न., वनस्पति० अगरु ( कासिद्धि. ४.; ध. ३.२५)
**-सत्व**-वि., श्रेष्ठबलः सत्त्वसारः (पुरुषः) ( चवि. ८.१२१ ) द्र० ' सत्वसार '
**प्रवर्तन**-न., प्रवृत्तिः, प्रादुर्भावः ( चसू. १.१३६ )
**प्रवात**-पु., न., प्रकृष्टवातः, प्रबलवायुः (सुचि. २४.८४)
**-स्थापन**-न., वातबहुलदेशे संस्थापनम् ( सुसू. ४५.१९ )
**प्रवाद**-पु., छद्मवचनम् ( सुउ. ४१.३६ )
**प्रवाल**-पु., न., वृक्षाङ्ग० अङ्कुरः, पल्लवः ( असंक. )
भैषज्य० विद्रुमः, सामुद्रः, तद्गुणाः—मधुरोऽम्लः,

शीतः, सरो वीर्यकरः, कान्तिकरस्त्रिदोषघ्नो विषदृष्टिदोषनाशकः ( ध. ६.६४ ) श्रेष्ठप्रवालगुणाः– पक्वबिम्बफलवद्रक्तवर्णो गोलाकारो लम्बायमानो वक्रतारहितः, स्निग्धोऽव्रणकः स्थूलः ( र. ४.१९ ) निकृष्टप्रवालगुणाः–श्वेत ईषत्पाण्डुरल्पाकारः सव्रणो महाच्छिद्रयुक्तो निर्भारः, शुभ्रवर्णः ( र. ४.२० ) कफमूत्रकृच्छ्रघ्नः ( चचि. २६.५६ ) गव्यमूत्रेण सह आसेवितोऽयं पाण्डुरोगघ्नः ( सुउ. ४४.२१ ) विसर्पे प्रदेहार्थमुपयुज्यते ( चचि. २१.८२ ) इन्द्रोक्तरसायने , ब्राह्मरसायने चोपयुक्तः ( चचि. १(४).२२; चचि. १.५८ )

**–गुटिकाभासा**–वि.; लक्षण० प्रवालकृतगुटिकावद् आभासमाना ( मसूरिका ) ( चइ. ११.१४ )

**–गुलिकाभासा**–वि., लक्षण० प्रवालकृतगुटिकावद् आभासमाना ( मसूरिका ) ( असंशा. ११.४४ )

**प्रवालक**–न., भैषज्य० प्रवालम् ( र. ४.३ )

**प्रवासिनी**–स्त्री.,धान्य० व्रीहिः ( रा. १६.१०९ )

**प्रवाह**–पु., प्रवाहणम्, निकुहनम् ( ड. सुउ. ५८.१२ ) रोग० प्रवाहिका ( सुचि. ३७.६६ )

**प्रवाहण**–न., कृच्छ्रात् पुरीषादिवेगजननम् (चचि.१५.४६) प्रकर्षेण निर्वाहणम् ( सुनि. १३.६१ ) निकुन्थनम्, कुन्थनम् ( सुसू. २२.८ ) लक्षण० अतिसरणम् (सुउ. ४०.१०८) प्रवर्तनम् ( ड. सुचि. ३७.९३ )

**( प्रवाहणी )**–स्त्री., शारीर० गुदवलीत्रयेष्वेका प्रवाहणी, प्रवाहयतीति प्रवाहणी ( ड. सुनि. २.५ )

**प्रवाहिका**–स्त्री., रोग० ( चचि. १९.३०; सुउ. ४०; असंसू. ६; अहनि. ८ ) तस्याः संप्राप्तिः– अहिताशनस्य नरस्य प्रवृद्धवायुर्निचितं बलासं बहुशः प्रवाहयन्नल्पं मलाक्तं च तम् अधस्तान्नुदन् गुदेन पातयति। स रोगः प्रवाहिकेति ख्यातः ( सुउ. ४०.१३८ ) प्रवाहिकाया भेदाः–रूक्षप्रभवजा–वातकृता, सशूला; तीक्ष्णप्रभवजा–सदाहा, पित्तजा; स्नेहप्रभवजा–कफजा, सकफा; तीक्ष्णोष्णप्रभवजा, रक्तजा, सशोणिता (सुउ. ४०.१३९) अतिसारवदामपक्वलिङ्गानि विद्यात् ( सुउ. ४०.१४० ) चिकित्सासूत्रम्–लघुदीपनस्निग्धा आहारौषधयश्चोपयुक्ताः ( सुउ. ४०.१५६-५७ ) तैलेन वातशान्तिर्भवति, वातशमनेन प्रवाहिका नश्यति, तस्मात् तैलप्रयोगः कार्यः, 'वाय्वाशये सतैले हि बिम्बिसी नावतिष्ठते ( अहचि. ९.४७ ) वमनविरेचनयोः समानतया संख्यातासु त्रयोदशव्यापत्सु एका व्यापत् ( सुचि. ३४.३ )

**प्रवाहिन्**–पु., रोग० प्रवाहिका ( र. १२.१-८ )

**( प्रवाहणी )**–स्त्री., शारीर० गुदस्यान्तरे स्थिता तिर्यग्वलीसंज्ञिता गुदपेशी; प्रवाहणी, मलप्रवाहणात् प्रवाहणी, सा गुदद्वारात्तृतीया वली गुदपेशी ( असंनि. ७.५; सुनि. २.५ )

**प्रविकीर्णमात्र**–वि., विक्षिप्तमात्रम्, अल्पविस्तृतम् ( ड. सुक. ८.७९ )

**प्रविचार**–पु., पृथग्भावः, प्रविभागः ( सुउ. ६४.५६ )

**प्रविचारणा**–स्त्री., उपयोगभेदः ( चसू. १३.२५ )

**प्रविभाग**–पु., भेदः ( सुचि. ३५.१ )

**प्रविलयन**–न., द्रवीकरणम् (असंसू.३८.३)

**प्रविलायन**–वि., क्षपणम्, द्रवीकरणम् ( अहसू. २.५ )

**प्रविषम**–पु., रोग० ज्वरभेदः, विषमः ( र. १२.४०-४१ )

**प्रवृत्त**–वि., संभूतः ( सुशा. ४.४ ) स्रुतम् ( सुशा. २.१८ )

**प्रवृत्ति**–स्त्री.,प्रवर्तनं नाम शरीरेणाभिसंबन्धः(चसू.१.४४) आरम्भः ( चवि. ८.१३१ ) प्रतिकर्मसमारम्भः ( चवि. ८.१२९ ) प्रवृत्तिस्तु खलु चेष्टा कार्यार्था, सैव क्रिया, कर्म, यत्नः, कार्यसमारम्भश्च ( चवि. ८.७७ ) प्रथमाविर्भावः ( चचि. ३.१४ ) दुःखम् ( चवि. ५.८ ) संसारः ( चनि. ५.९ )

**–हेतु**–पु., उत्पत्तिहेतुः ( चसू. १६.२८ )

**प्रवेणी**–स्त्री., गोणीति प्रसिद्धा ( चक्र. चसू. ६.१५ ) ऊर्णावस्त्रम् ( चसू. ६.१५) सूचीबाणाख्यं वस्त्रम् ( अरु. अहसू. ३.१३ )

**प्रवेपन**–न., लक्षण० प्रकर्षेण वेपनम् कम्पनम् ( चसू. १७.५६ )

**प्रवेश**–पु., अन्तर्विगाहनम् ( असंशा. १२.३ )

**प्रव्यक्त**–वि., प्रकर्षेण व्यक्तः, स्फुटः ( सुशा. ३.१८ )

**–रूप**–वि., सुव्यक्तस्वरूपः ( सुउ. ३९.१०० )

**–लक्षणता**–स्त्री., लक्षणानां स्फुटत्वम् ( सुसू. २१.३४ )

**प्रव्यक्ति**–स्त्री., स्पष्टता, निरावरणता ( ड. सुचि. ३८.२१ )

**प्रव्रजित**–पु., प्रव्रज्यालक्षणतपोयुक्तः तपस्वी ( सुसू. २.८ )

**( प्रव्रजिता )**–स्त्री., गृहीतव्रता ( ड. सुचि. २४.११६ ) वनस्पति० मुण्डी ( ध. १.१५९ )

**प्रव्रज्या**–स्त्री., संन्यासः ( कासू. २८ )
**प्रशम**–पु., प्रकर्षेण शमनम् ( चसू. १७.११४ ) रोगोपघातमात्रस्योपलक्षणम्, तेन साध्यानां सिद्धिर्याप्यानां यापनं, स्वस्थवृत्तं च गृह्यते ( सुसू. १.३५ ) अन्तरिन्द्रियशान्तिः, प्रशमोऽयं सर्वपथ्यानां श्रेष्ठः ( चसू. २५.४० ) स्वयमुपशमः ( सुसू. १.३४ )
चिकित्सा, प्रशाम्यति अनेन रोग इति प्रशमः चिकित्सायां गृहीततात्पर्योऽत्र द्रष्टव्यः ( चचि. १२.३ )
**प्रशमन**–न., भेषजम् ( चचि. १.३ )
चिकित्सा ( सुसू. ३.२६ )
**प्रशस्त**–वि., प्रशंसितम्, स्तुतम् ( सुक. १.१२-१३ )
**–देश**–पु., धन्वदेशः, साधारणदेशः सन्मृत्तिका-युक्तदेशश्च ( सुसू. ३४.२२ )
**प्रशस्तार्तव**–न., अदुष्टार्तवम्, शुद्धार्तवम् ( सुशा. २.१७ )
**प्रशाखा**–स्त्री., प्रकृष्टा शाखा हस्तपादस्वरूपा ( सुचि. ३.५४ )
**प्रशात**–पु., शटनम्, उच्चाटनम्, प्रणाशः ( सुनि. १०.६ )
**प्रशातिका**–स्त्री., धान्य 'उडिका' इति प्रसिद्धा ( चसू. २१.२५ ) जलमध्ये प्रायो भवति ( चक. चचि. ४.३६ ) श्यामाकसदृशैर्गुणैः युक्ता, इयं कषायमधुरशीतलघुवातलकफपित्तघ्नसंग्राहिशोषणादिगुणा ( चसू. २७.१७ )
**प्रशान्ति**–स्त्री., अपगमः ( चसू. १८.५ )
**प्रशान्तिका**–स्त्री., धान्य० प्रशान्तिका ( चसू. २७.१७ )
**प्रशिथिलाशय**–पु., अस्तब्धपक्वाशयः ( ड. सुउ. ३९.१२७ )
**प्रश्न**–पु., अभिधानप्रयोजनादिजिज्ञासा ( चवि. ८.५२ ) पूर्वापरविरोधादिदोषशून्येन वाक्येन पृच्छा ( चसू. ३०.६९ )
**प्रश्रय**–पु., सभ्यता ( असंशा. ८.२४ )
**प्रश्वास**–पु., लक्षण० प्रकृष्टं श्वसनम् ( चवि. २.६ )
अन्तःप्रविशद्वायुः ( सुशा. ९.५ )
षड्विधरोगविज्ञानोपायेष्वेकः ( सुसू. १०.५ )
**प्रसक्त**–वि., निरन्तरम् ( चक. चचि. २०.१५; सुउ. ५२.७ )
भूयो भूयोऽनुषङ्गि ( सुउ. ४६.१८ )
अत्यासक्तम् ( सुउ. ३९.६२ )
**–च्छर्दि**–वि., लक्षण० यस्य सतता छर्दिः सः
**–वमथु**–वि., लक्षण० प्रसक्तच्छर्दिः ( अहसू. १८.४ )
**–श्वसन**–(परिव०) न., लक्षण० निरन्तरं श्वसनम् ( सुनि. १६.६१ )
**प्रसङ्ग**–पु., तन्त्रयुक्ति० प्रसङ्गो नाम पूर्वाऽभिहितस्यार्थस्य प्रकरणागतत्वादिना पुनरभिधानम् (चसि. १२.४३) प्रकरणान्तरेण समापनं प्रसङ्गो यद्वा प्रकरणान्तरितो योऽर्थोऽसकृदुक्तः समाप्यते स प्रसङ्गः ( सुउ. ६५.२२ )
अभ्यासः ( चसि. १२.३२ )
उपभोगः ( चनि. ४.५ )
मैथुनम् ( सुनि. ५.३३; मधुकोष. मा. कुष्ठ. ४२ )
सातत्यम् ( मधुकोष. सुनि. ५.३३; मा. कुष्ठ. ४२ )
**प्रसङ्गित्व**–न., आसक्तिः ( सु.शा. ४.५२ )
**प्रसङ्गिन्**–वि., संसक्तः ( ड. सुउ. ३९.११८ )
**प्रसन्न**–वि., प्रकृतिस्थम्, निर्मलम् ( सुसू. १४.५ )
**( प्रसन्ना )**–स्त्री., मद्य० सुरा ( चक. ७.१३; ध. ६.२५५ )
सुराया मण्डः, उपर्यच्छो भागः, तस्या गुणाः–छर्द्यरोचकहृत्कुक्षितोदशूलप्रमर्दनी कफवातार्शोविबन्धाऽऽनाहनाशनी च ( सुसू. ४५.१७७-७८ )
**–दोष**–वि., स्वभावाऽवस्थितवातादिकः इदमविषमनुष्यलक्षणम् ( ड. सुक. ६.३२ )
**–वदना**–वि., निर्मलमुखी ( सुशा. ३.७ )
**प्रसन्नात्मन्**–वि., संतुष्टान्तःकरणः ( सुउ. ३९.१०४-५)
**प्रसभम्**–( अव्य. ) बलात्, हठात् ( चवि. ३.२० )
**प्रसर**–पु., दोषगति० प्रसरणम्, वातपित्तश्लेष्मणां बलवद्विग्रहादिभिः प्रकुपितानां किण्वोदकपिष्टसमवाय इवोद्रिक्तानां प्रसरो भवति। तेषां वायुर्गतिमत्त्वात् प्रसरणहेतुः सत्यप्यचैतन्ये, स हि रजोभूयिष्ठः; रजश्च प्रवर्तकं सर्वभावानाम्, यथा—महानुदकसंचयोऽतिवृद्धः सेतुमवदार्यापरेणोदकेन व्यामिश्रः सर्वतः प्रधावति, एवं दोषाः कदाचिदेकशो द्विशः समस्ताः शोणितसहिता वाऽनेकधा प्रसरन्ति। तद्यथा–वातः, पित्तं, श्लेष्मा, शोणितं, वातपित्ते वातश्लेष्माणौ, पित्तश्लेष्माणौ वातशोणिते, पित्तशोणिते, श्लेष्मशोणिते, वातपित्तशोणितानि, वातश्लेष्मशोणितानि, पित्तश्लेष्मशोणितानि, वातपित्तकफाः, वातपित्तकफशोणितानीति; एवं पञ्चदशधा प्रसरन्ति। एष दोषगतौ तृतीयः क्रियाकालः ( सुसू. २१.२८ )
न., वनस्पति० एलावालुकम् ( ध. ३.७६ )

**प्रसरण**–(परिव०) न., भ्रमणम् (सुउ. ६०.१३)
**–सामर्थ्य**–न., स्थानात्स्थानान्तरगमनसामर्थ्यम् (सुचि. १.५)
**प्रसव**–पु., जन्म ( सुशा. ५.४५ )
कुसुमम् ( सुक. ६.२० )
फलम् ( सुक. ६.२० )
वनस्पति० कुरुबकः ( रा. १०.४१३ )
**–काल**–पु.,प्रसूतिकालः, गर्भजन्मकालः (चशा.४.२५)
**–धर्मिणी**–स्त्री., प्रकृतिः, महदहङ्कारादिक्रमेण चराचरस्य जगतः प्रसवित्री ( सुशा. १.९ )
**प्रसवन**–वि., प्रसूतिकारकम्, प्रसूयते अनेन सहायभूतेन इति प्रसवनं प्रसवजनकम् ( चचि. २९.१०९ )
**प्रसवमाना**–वि., प्रजायमाना ( सुशा. १०.६६ )
**प्रसह**–पु., मृगपक्षिजाति० (चसू. ६.१२; सुसू. ४६.७४) प्रसह्य भक्षयतीति प्रसहः, स द्विविधः— मांसादोऽमांसादश्च (चसू. २७.५४) तन्नामानि— गोखराश्वतरोष्ट्राऽश्वद्वीपिसिंहर्क्षवानरमार्जारमूषकव्याघ्रवृकबभ्रुतरक्षुलोपाकजम्बुकश्येनचाषोलूकश्चवायसशशघ्नीभासकुररगृध्रवेश्यकुलिङ्गकधूमिकामधुहाश्चेति ( असंसू. ७.७७–७९ ) तन्मांसगुणाः— प्रसहमांसं मधुरगुरुस्निग्धोष्णं, बलोपचयवर्धनं, वृष्यं, वातहरं, कफपित्तवर्धनं, व्यायामनित्यदीप्ताग्नीनां च हितम्, मांसाशिप्रसहमांसम् जीर्णार्शोग्रहणीदोषशोषार्तानां हितावहम् ( चसू. २७.५६ ) भस्मकरोगोन्मादशुक्रक्षयनाशकः ( धपरि. २.१४ )
**प्रसाद**–पु., प्रसन्नता ( चशा. ५.५ ) आरोग्यस्थापनः अनाबाधकरः शारीरभावः सः ( चशा. ६.७४ ) स्वच्छो मलरहितो भागः आहारप्रसादः, आहाररसः ( चचि. १५.१६ )
उपरिस्थितोऽघनो भागः ( चसि. ७.१४ )
सारभागः ( सुशा. ४.२६ )
**–भूत**–वि., प्रसादस्वरूपः ( चशा. ६.१७ )
**प्रसादन**–वि., वैशद्यकरम् ( चसू. ५.१६ ) स्वच्छतापादकम् ( चसू. १३.१४ )
**प्रसाधन**–(परिव०) न., साधनम् ( सुचि. २०.४ )
स्पष्टीकरणम्, विशदीकरणम् ( सुउ. ६५.६ )
**प्रसाधिका**–स्त्री., धान्य० व्रीहिः ( रा. १६.९८ )
**प्रसाधित**–वि., संस्कृतम् ( सुसू. ४५.१५-१६ )
**प्रसारण**–न., विस्तारणक्रिया ( सुशा. ७.३ )
**( प्रसारणी)**–स्त्री., स्वनामख्याता लता० ( चचि. २८.१६६; सुचि. १५,४४-४५ ) तस्या गुणाः– तिक्तोष्णा, गुर्वी, सरा, संधानकरी, वृष्या, तेजःप्रदा, कान्तिप्रदा, त्रिदोषघ्नी, बलप्रदा, अर्शःशोथविष्टम्भनाशिनी ( ध. १.२८९ )
हिं.—गन्धप्रसारणी.
**म.—प्रसारणी, चान्दवेल.**
गु.—प्रसारणवेल्य.
बं.—गन्धभादला.
ता.—पेनारीसंगाड्.
**प्रसारिणी**–स्त्री., लता० प्रसारणी ( रा. ५.१५९ )
लज्जालुः ( रा. ५.१५९ )
**प्रसिद्धकेश**–वि., प्रसाधितकेशः कंकतेन रचितकेशः ( चसू. ८.१८ )
**प्रसुप्तता**–स्त्री., लक्षण० स्पर्शज्ञाननाशः ( सुनि. १.३३; सुनि. १.८१ )
**प्रसुप्ति**–स्त्री., क्षुद्ररोग० वायुनोदीरितः श्लेष्मा त्वचं प्राप्य विशुष्यति। ततस्त्वक्पाण्डुः, क्रमेण विचेतनाऽल्पकण्डूरविक्लेदा च भवति। प्रसुप्तितश्चासौ व्याधिः प्रसुप्त्याख्यः ( असंउ. ३६ )
लक्षण० स्पर्शाज्ञानम् ( अहृसू. २२.२६ )
**प्रसूति**–स्त्री., अपत्योत्पत्तिः ( चचि. १२.६ )
**–ग्रह**–न., प्रसूतिनिग्रहम्, गर्भसंगम् ( र. ५.२३९ )
**–मारुत**–पु., प्रसूतिकारको वातः ( चशा. ६.२४ )
**प्रसून**–न., पुष्पम् ( र. १७.४३-४६ )
**प्रसृत**–वि., विस्तृतः ( सुचि. १.४ )
निर्गतम् ( सुशा. ९.१३ )
संयुक्तपञ्चाङ्गुलिः, ईषद्विस्तृतपाणिरेव ( सुचि. ३१.६ )
मान० पलद्वयम् ( चक. १२.९२ )
षोडशतोलकाः(र. २६.५-७)
**प्रसृति**–स्त्री., मान० पलद्वयम् ( सुचि. ६.१८ )
**प्रसेक**–पु., लक्षण० लालास्रावः ( चनि. १.२१; सुचि. २४.२३ )
प्रक्षरणम् ( परिव० ) ( सुचि. १.४७; सुक. ४.३७ )
**प्रसेचन**–न., उपक्रम० सिञ्चनम् ( चचि. ७.१५९ )
**प्रसेवक**–पु., चर्मखल्लपुटः (ड. सुसू. ९.४) 'दृतिश्चर्मप्रसेविका' इत्यमरः
**प्रस्कन्दन**–न., विरेचनम् ( चसू. १३.८० )
**प्रस्खलन**–न., आखुडनादि (ड.) अकस्मात् प्रभ्रंशः पादाऽपसरणं वा ( सुनि. ८.३ )
**प्रस्तम्भ**–पु., लक्षण० प्रकर्षेण स्तब्धता ( सुसू. ३२.३ )

**प्रस्तर**–पु., स्वेद० प्रस्तरस्वेदः ( सुचि. ४.१०; चसू. १४.२७ )

**–स्वेद**–पु., स्वेद० त्रयोदशस्वेदेष्वेकः (चसू. १४.२७,४२) सुश्रुतमतानुसारेणास्यान्तर्भावो बाष्पस्वेदे भवति। स्वेदविधिः–कोशधान्यानि वा सम्यगुपस्वेद्यास्तीर्य किलिञ्जे तत्प्रतिरूपकेऽन्यस्मिन् वा शयानं प्रावृत्य स्वेदयेत्। एवं पांशुगोशकृत्तुषबुसपलालोष्मभिः स्वेदयेत् (सुचि., ३२.११)

**प्रस्तरिणी**–स्त्री., वनस्पति० गोलोमिका ( रापरि. ५.३२)

**प्रस्तार्यर्मन्**–न., नेत्ररोग० नेत्रशुक्लगतोऽयम् सिते मृदु आशुवृद्धि अरुक् श्यावलोहितं प्रस्तारि मांसं जायते ( असंउ. १३ ) नेत्रस्य शुक्लभागे विस्तीर्णं विरलं रक्तनिभमीषन्नीललोहितं जायते स प्रस्तार्यर्माख्यो नेत्ररोगः ( सुउ.४.४ ) एष साध्यो रोगः (सुउ. १.४०) स च लेखनीयः (सुउ. १५.१७)

**प्रस्थ**–पु., मान० शरावद्वयपरिमाणम् ( सुचि. २७.१२ ) चतुष्षष्टितोलकमानम् ( र. ९.५१ ) सार्धत्रयोदशपलानि ( सुशा. ८.१६ ) कुडवचतुष्टयं वा ( र. ११.७; चक. १२.९४ )

**–कुसुम**–पु., वनस्पति० जम्बीरः ( रा.१०.८१)

**प्रस्थान**–न., प्रयाणम् ( सुसू. २९.२७ )

**प्रस्पन्द**–पु., लक्षण० स्पन्दनम् ( असंसू. १९.३ )

**प्रस्पन्दन**–न., लक्षण० शरीरस्य चलनम् ( सुसू. १५.४ ( १ )

**प्रस्रंसन**–न., स्रावः ( चचि. २६.११९ )

**प्रस्रंसिनी**–स्त्री., योनिरोग० या रतिप्रसङ्गात् क्षोभिताऽतीवार्तवं स्रवति दाहपाकादियुता दुःखेन च प्रसूयते, इयं पित्तजा ( सुउ. ३८.१३ )

**प्रस्रवण**–न., निर्झरः ( चसू. २७.२१४ ) (परिव०) जलप्रपातः ( असंउ. ४९ ) स्रावः ( चनि. ५.११ ) दुग्धम् ( ध. ६.१६१ )

**प्रस्रवणोद्भव**–वि., प्रस्रवणोद्भूतं ( जलम् ) निर्झरजलम् ( सुसू. ४५.३४ )

**प्रस्राव**–पु., मूत्रम् ( हे. अहृसू. २०.२८ )

**प्रस्रुत**–वि., गलितमदः ( भद्रहस्ती ) ( सुचि. २९.१६ ) वि., वस्त्रेण गालितम् ( चक. २.८)

**प्रस्वपन**–न., गाढनिद्रा ( चचि. १५.२३३ )

**प्रस्वेद**–पु., लक्षण० स्वेदाधिक्यम् ( र. १२.११ )

**प्रहरजाया**–स्त्री., वनस्पति० कुटुम्बिनी ( रापरि. ५.२२ )

**–प्रहर्ष**–पु., तुष्टिः ( सुसू. १५.७ )



**–जनन**–न., स्वस्थस्य शुक्रवृद्धिस्तुतिकरत्वं च ( सुसू. १.८(८))

**प्रहर्षित**–वि., स्तब्धम् ( ड. सुचि. ३७.११० )

**प्रहर्षिन्**–वि., शीतरूक्षप्रवाताम्लस्पर्शासहः (दन्तः) ( कासू. २०.८ )

**प्रहसन्ती**–स्त्री., वनस्पति० वासन्ती ( ध. ५.१३९ )

**प्रहार**–पु., आघातः ( सुनि. १५.३ ) ताडनम् ( चसू. १८.४ )

**प्रहृष्टा**–वि., प्रसन्नमनाः (सुशा. १०.३)

**प्रह्लाद**–पु., तृप्तिः ( अहृसू. ९.७ )

**( प्रह्लादी )**–स्त्री., वनस्पति० हंसपादी ( रा. ५.१६७ )

**प्रह्लादन**–न., सुखकरणम् ( सुचि. १.१६ )

**–तैल**–न., तैल० यवमञ्जिष्ठाम्लादिसिद्धमिदं तैलं दाहज्वरविनाशकम् ( सुउ. ३९.२८७ )

**प्रह्व**–वि., जानुभ्यामवनतः ( इन्दु. असंउ. ३ )

**प्रांशु**–पु., वनस्पति० तालः ( ध. ५.६८ ) वि., दीर्घाकृतिः ( असंउ. ४१ )

**प्राक्**–अव्य., पूर्वम्, आदौ, प्रथमम् ( सुसू. ३५.१८ )

**–केवल**–पु., प्रागेवोत्पन्नो व्याधिरपूर्वरूपोऽनुपद्रवश्च ( सुसू. ३५.१८ )

**–चरणा**–स्त्री., योनिरोग० ( चचि. ३०.२० ) अतिबालाया मैथुनाद्वायुः पृष्ठजङ्घोरुवङ्क्षणं रुजन् योनिं संदूषयेत् ( असंउ. ३८ ) उचितव्यवायकालात् प्राक् व्यवायाचरणात् 'प्राक्चरणा' उच्यते ( चक. चचि. ३०.२० )

**–प्रवण**–वि., प्राच्यां दिशि निम्नम्, प्रागभिमुखम् ( चशा. ८.१० )

**–शिरस्**–वि., प्राक्शीर्षः ( असंसू. २८.२९ )

**(प्राग्)–जन्माभ्यास**–पु., पूर्वजन्माभ्यासः ( असंशा. १.७१ )

**–दैहिक**–वि., पूर्वदेहभवम्, जन्मान्तरकृतम् ( चनि. १.३५ )

**–भक्त**–वि., औषधकाल० भोजनात्पूर्वमुपयुज्यमानम् ( औषधम् ) तद्गुणाः–औषधं शीघ्रं विपाकमुपयाति बलं न हिंस्यात्, आहारावृतत्वान्मुहुर्वदनान्न निरेति, वृद्धशिशुभीरुकृशाङ्गनाभ्यः प्राग्भक्तमौषधं देयम् ( सुउ. ६४.६८-६९ ) अपाने विगुणे सति प्राग्भुक्तमौषधं देयम् ( अहृसू. १३.३८ )

**–भुक्त**–न., प्रातर्भोजनम् ( सुसू. ४६.४९२ )

**–रूप**–न., पूर्वरूपम् ( असंनि. ८.१० )

**–वात**–पु., पूर्वदिगागतो वातः ( चसू. ६.४५ )

**-वातसेवा**-स्त्री., पूर्वदिगागतस्य वातस्य सेवनम् ( चचि. १४.१९ )

**-वायु**-पु., प्राग्वातः ( असंसू. १२.९५-१६ )

**-विकृत**-वि., पूर्ववर्णादन्यथाभूतो ( चइ. १.९ )

**प्राक् ( ग् )-अपीत**-वि., प्राक्-पूर्वं न पीतं येन, सः ( ड. सुचि. ३३.४४ )

**प्राक् ( ग् )-उत्पत्ति**-स्त्री., प्राक्कालोत्पत्तिः ( चचि. १९.३ )

**( प्राङ् )-मुख**-वि., संमुखः प्राचीमभिमुखीकृत्य स्थितः ( अहृसू. १८.१७ )

**प्राकार**-पु., परिसरः ( असंसू. ९.१२१ )

**प्राकाश्य**-न., प्रसिद्धिः ( सुसू. २.६ )

**प्राकृत**-वि., स्वाभाविकम् ( चसू. १८.५२ ) सहजगुणसंपन्नम् ( चचि.३०.१२६ )

**( प्राकृति )**-वि., गति० स्वाभाविकी ( चसू. १७.११५ )

**-मस्तु**-न., केवलस्य दध्नो यन्मस्तु, तत् प्राकृतमस्तु ( चचि. १२.३० )

**प्राची**-स्त्री., पूर्वदिक् ( अहृसू. ५.११ )

**-बल**-पु., वनस्पति० काकजङ्घा ( ड. सुसू. ३८.१८-१९ )

मत्स्याक्षकः ( सुसू. ३८.१८-१९ )

नदीपिप्पली ( सुसू. ३८.१८-१९ )

गण्डदूर्वा (सुसू. ३८.१८-१९)

जलपिप्पली ( सुसू. ३८.१८-१९ )

**प्राचीना**-स्त्री., वनस्पति० पाठा ( ध. १.७० )

**प्राचीनागर**-न., वनस्पति० आमलकीभेदः ( असंसू. ७.१९७ )

**प्राचीनामलक**-न., वनस्पति० आमलकीभेदः, पानीयामलकम् इति लोके ( ड. चसू. २७.१४६; सुसू. ४६.१५८; ध. १.२१८ )

**प्राचीनारङ्ग**-न., वनस्पति० प्राचीनामलकम् ( ध. १.२१८ )

**प्राचेतस्**-पु., प्रजापति० दक्षः ( असंनि. १.५ )

**प्राच्य**-पु., पौरस्त्यदेश० ( चवि. १.१७ ) तत्रत्यो जनो वा, मत्स्यसात्म्या इमे जनाः ( चचि. ३०. ३१७) प्राच्यदेशोद्भवा नद्यः अर्शांसि कुर्वते (अहृसू. ५.११)

**प्राजन**-न., शस्त्र० सूचिः प्रवीयते क्षिप्यते सन्धानार्थमिति प्राजनं सूचिरित्यर्थः, सूचिः ( असंनि. २.९ )

**प्राजापत्य**-न., नक्षत्र० रोहिणी ( इन्दु. ) ( असंउ. ५ ) ब्राह्मो वैदिकविधि० ( असंउ. १ )

**-सत्त्व**-न., शुध्दसत्त्वस्य भेदः,शुद्धसत्त्वस्याष्टमो भेदः, प्रजावन्तं, क्रियावन्तं, धर्मशीलं जगत्प्रियमनीर्ष्यमशठं शुचिं प्राजापत्यसत्त्वं विद्यात् ( कासू. २८ )

**प्राज्य**-वि., विपुलं, प्रभूतम् ( असंशा. ८.१६ )

**प्राञ्जल**-वि., सरलम् ( सुशा. १०.१० )

**प्राण**-पु., वात० ( चसू. १२.८; चचि. २८.२३४; सुनि. १.१३; असंसू. २०.४ ) पञ्चवातभेदेष्वेकः, जीविताऽऽधारः ( चसू. २९.३ ) प्राणिति श्वसिति जीवति सत्त्वं बहुकालम् अनेनेति प्राणः । प्राणयति जीवयतीति प्राणः, तेन अग्निसोमवाय्वादीनां प्राणनस्वभावात् प्राणत्वं युक्तम् ( सुशा. ४.३ ) वक्त्रसंचारी वायुः ( सुशा. १.१७ ) तस्य स्थानानि-उरः कण्ठः शिरश्च; तत्कर्माणि-बुध्दीन्द्रियहृदयमनोधमनीधारणम् ( असंसू. २०.४ ) ष्ठीवनक्षवथूद्गारनिःश्वासान्नप्रवेशनानि (अहृसू.१२.४)दुष्टप्राणवायुकर्माणि हिक्काश्वासादिरोगाः ( सुनि. १.१३-१४ )

बलम् ( सुसू. ४६.५०७ ) भारहरणादिशक्तिः ( सुसू. ४६.३७३-७४ )

प्राणाधिष्ठानं हृदयादि ( सुसू. ५.१८ )

अग्निसोमादयः प्राणाः ( सुसू. ५.२४ ) अग्निः सोमो वायुः सत्त्वं रजस्तमः पञ्चेन्द्रियाणि भूतात्मेति प्राणाः ( ड. सुसू. ५.२४ )

**-काम**-वि., प्राणान्कामयतेऽसौ ( चचि. १.(२)-३ ) आयुष्कामः ( सुचि. २७.१२ )

**-कामीय**-वि., प्राणकामशब्दमधिकृत्य कृतो ( रसायनपादः चचि. १.१ )

**-क्षय**-पु., बलक्षयः, प्राण एव बलं, तस्य क्षयः ( सुचि. ५.६ ) उत्साहापचयलक्षणो बलक्षयः ( ड. सुसू. ३३.५-६ )

**-घ्न**-वि., जीवितविनाशकम् ( सुसू. ४०.५ )

**-जनन**-वि., प्राणवर्धनः ( सुसू. ४६.३५९ )

**-द**-पु., वनस्पति० जीवकः ( ध. १.१२३ ) वि., प्राणान् ददातीति, प्राणदम् ( क्षीरम् ) ( सुसू. ४५.४८ )

**( -दा )**-स्त्री., वनस्पति० हरीतकी (ध. १.२०५)

महाराष्ट्री ( रापरि. ४.१३ )

जलपिप्पली ( असंउ. ४९ )

ऋद्धिः ( रा. ५.१८७ )

**-धरा**-स्त्री., त्वक्० षट्सु त्वक्षु एकेयम् क्रमतः षष्ठी त्वक् ( असंशा. ५.२६ )

**-नाथ**-पु., पारदयोग० पारदधत्तूरभार्गीत्रिफला-भृङ्गराजादिसाधितोऽयं चतुर्गुञ्जाप्रमाणासेवितो राजयक्ष्मनाशकः ( र. १४.५६-५९ )

**-पति**-पु., प्राणान्पाति रक्षतीति, राज्ञः प्राणाचार्यो वैद्यः ( चक्र. चवि. ६.१९ )

**-प्रकोप**-पु., प्राणस्य अतिवृद्धिः, क्षोभः, प्राणो रौक्ष्य-व्यायामलङ्घनैरत्याहाराभिघाताध्ववेगोदीरणधारणैः प्रकुपितश्चक्षुरादीनामुपघातं,पीनसार्दिततृट्कासश्वासादिबहून्व्याधीन् प्रवर्तयेत् ( असंनि. १६.२१-२२ )

**-प्रणुत्**-वि., प्राणनाशकः ( सुनि. १६.६२ )

**-प्रत्यानयन**-न., प्राणस्थापना ( असंउ. १ )

**-भृत्**-वि., प्राणान् बिभर्ति धारयति इति प्राणभृत् प्राणी, चैतन्ययुक्तः ( चनि. १.३५ )

**-यात्रा**-स्त्री., जीवितयात्रा प्राणोपलक्षितशरीर-निर्वाहः ( सुसू. १.४ )

**-वत्**-वि., बलवान्, शक्तियुक्तः ( सुचि. ६.७ )

**-वर्धन**-न., प्राणानां वर्धनम्, जीवितवर्धनम् ( चसू. ३०.१५ )

**-वह-स्रोतस्**-न., शारीर० प्राणसंज्ञकवातवहस्रोतः, ( चवि. ५.८ ) तत्संख्या द्वे; तन्मूलस्थानम्–हृदयम्; तद्वहनस्थानानि–रसवाहिन्यश्च प्राणवाहिन्यश्च, धमन्यः; तद्विद्धलक्षणानि–क्रोशनविनमन-मोहनभ्रमणवेपनानि मरणं वा ( सुशा. ९.१२ ) अतिसृष्टमतिबद्धं कुपितमभीक्ष्णमल्पाल्पं सशब्द-शूलमुच्छ्वसन्तं दृष्ट्वा प्राणवहस्रोतोदुष्टिर्ज्ञेया ( चवि. ५.८ )

**-वहा**-स्त्री., शारीर० हृदयाश्रिता धमनी प्राणवातस्य वाहिनी ( सुशा. ४.३१ )

**-वायु**-पु., वातभेद० प्राणः ( चचि. २८.६ )

**-वाहिन्**-वि., शारीर० प्राणवहम् ( स्रोतः ) ( चवि. ५.१० )

**-वाहिस्रोतस्**-न., शारीर० प्राणवहस्रोतः ( चचि. १७.१७ )

**-विलोमता**-स्त्री., लक्षण० प्राणवायोर्विपरीतगमनम् ( इन्दु. असंनि. ४.५ )

**-संशय**-पु., जीवितसंशयः जीवितस्य हानिः क्षयो वा संकटमूलकः ( सुचि. २८.२० )

**-हारक**-न., वनस्पति० वत्सनाभः ( ध. ७.१२८ )

**प्राणाचार्य**-पु.,आयुर्वेदशास्त्रपारगः शीलवान्, मतिमान्, गुरुवत्पूज्यो वैद्यः ( चचि. १(४).५१ )

**प्राणातिपात**-पु., प्राणोत्क्रमणम् ( अहसू. १२.४२ )

**प्राणानुबन्ध**-पु., बलानुबन्धः बलाविच्छेदः ( चशा. ३.१२ )

**प्राणापान**-पु., उच्छ्वासनिःश्वासौ ( चसि. ९.४ )

**प्राणाबाध**-पु., लक्षण० प्राणपीडा ( असंशा. ७.२८ )

**प्राणाभिसर**-पु., सुवैद्यः यः प्राणान् गच्छतो व्यावर्तयतीति ( चसू. ९.१८ ) योऽसौ कुलीनः पर्यवदातश्रुतो दृष्टकर्मा शुचिर्दक्षो जितहस्तः सर्वोपकरणवान् युक्तसर्वेन्द्रियः प्रकृतिज्ञः प्रतिपत्तिज्ञश्च, तथा च यः शरीराभिनिर्वृत्तिज्ञानादौ निःसंशयः सुखसाध्यादिव्याध्यवस्थानां व्याधीनां च निदानादिविज्ञाने विगतशङ्कस्त्रिविधायुर्वेदसूत्रादेः प्रवक्ता, मूल-फल-स्नेह-लवण-क्षीरिवृक्ष-मूत्र-पञ्चकर्माश्रयौषधानां प्रयोक्ता, विज्ञातस्वस्थवृत्तविहितभोजनपानादिनियमो बहुविधविधानयुक्तेषु स्नेहाद्युपचारेषु च कुशलः, शिरोरोग-विद्रधिशोफादिनानास्थानगतक्षुद्ररोगाणां लङ्घनाद्युपक्रमाणां संतर्पणापतर्पणशोणितादिजानां व्याधीनां ज्ञाता चिकित्सकश्च, तथा चावगतहिताहितस्वप्नाऽऽहारदूतादिज्ञानः, आसव-क्वाथादिसिद्धौ दक्षो धात्वाश्रयाणां रोगाणां सौषधसंग्रहाणां दशप्राणायतनानां च ज्ञाता कृत्स्नतन्त्रस्य ग्रहणधारणविज्ञानप्रयोगकर्मकार्यकालकर्तृकरणकुशलः सर्वप्राणिषु संपादितमित्रभावश्च; एतादृशो वैद्यः प्राणाभिसर उच्यते । एतद्गुणविपरीतस्तु रोगाभिसरः ( चसू. २९.७ )

**प्राणायतन**-न., प्राणस्याऽऽयतनं स्थानम्, यस्मिन्नायतने प्राणाः प्रतिष्ठिताः ( चशा. ७.९ ) तानि संख्यया दश वर्तन्ते । शङ्खौ हृदयं बस्तिः शिरः कण्ठो रक्तं शुक्रमोजो गुदं च, येषामुपघाते प्राणोपघातो भवति ( चसू. २९.१-३ ) प्राणानामग्नीषोमादीनां स्थानम् ( सुसू. १५.२१ )

**प्राणायतनसमुत्थ**-वि., प्राणायतनेभ्यः समुत्पन्नः ( चसू.,२८.७ )

**प्राणायाम**-पु., प्राणवायोरवरोधनम् ‘ यमनियमासन-प्राणायाम... ’ इति योगसूत्रोक्तानामष्टयोगाङ्गानामेकम् यच्च ‘ प्रच्छर्दनविधारणाभ्यां वा प्राणस्य ’ इत्यनेन योगसूत्रेण विवृतमुपलभ्यते ( सुसू. २६.१३ ) वायोर्निरोधः त्रिविधोऽयं रेचक-पूरक-कुंभक-भेदात् ( ड. सुउ. ५०.१६ )

**प्राणावलम्बन**-(परिव०) न., प्राणधारणम् ( सुनि. १,१३ )

**प्राणाश्रय**-पुं., प्राणाधारः ( चचि. २६.४ )
**प्राणिन्**-पु., प्राणसहितः पुरुषः ( चशा. १.७७ )
आत्मा ( चशा. १.७७ )
जीवो जन्तुर्वा ( चसू. १.४८ )
**( प्राणि )-मातृ**-स्त्री., वनस्पति० पुत्रदा ( रापरि. ४.२७ )
**प्राणेश्वर**-पु., पारदयोग० गंधकाभ्रसूत्रत्रिफलाव्योषादिसाधितोऽयं सर्वाङ्गसुन्दरः ( र. १८.८४-९० ) अभिन्यासाग्निमान्द्यग्रहणीपाण्डुरोगनाशकः ( र. १२.१२५-२६ )
**प्राणोपरोध**-पु., प्राणस्याऽवरोधः ( चचि. १७.१८ ) मरणम्, बलक्षय इत्यन्ये ( चक. चसि. २.९ )
प्राणायामः ( सुउ. १९.७ )
**-सपत्न**-पु., प्राणिशत्रुः (व्याधिः) (चचि.३.५)
ज्वरः ( चचि. ३.५-९ )
**प्रातराश**-पु. प्रातर्भोजनम्, दिवा भोजनम् ( चचि. १५.२३७ )
**प्रातिका**-स्त्री., वनस्पति० जपा ( रापरि. १०.३९ )
**प्रातिलोम्य**-वि., विपर्ययः, वैपरीत्यम् विपरीतम् इति डल्हणोक्ते भावप्रधाननिर्देशो बोध्यः तेन विपरीतं वैपरीत्यमिति प्राप्नोति ( ड. सुउ. ६५.२१ )
**प्रातुद**-वि., प्रतुदस्य ( पक्षिणः ) इदमिति प्रातुदम् ( मांसम् ) ( अहृसू. ६.५४ )
**प्राथमकल्पिक**-वि., प्रथमे श्रेष्ठे कल्पे पक्षे भवतीति प्राथमकल्पिकः, श्रेष्ठः ( चक. चसू. १३.२६ )
**प्रादक्षिण्य**-न., आनुकूल्यम् (चसू. १५.७)
**प्रादुर्भाव**-पु., उद्भवः ( असंसू. ८.११ )
**प्रादेश**-पु., मान० विस्तृतयोरङ्गुष्ठतर्जन्योरवकाशमानम् ( र. १०.३४-३९ )
**प्राधान्य**-न., आधिक्यम् ( चनि. १.१२(१) )
**-संग्रह**-पु., श्रेष्ठद्रव्यसंग्रहः, मूलविरेचनेऽरुणाभं त्रिवृन्मूलं श्रेष्ठम्, फलेषु हरीतकी, त्वक्षु तिल्वकः, तैलेष्वैरण्डजं तैलम्, स्वरसे कारवेल्लिका, पयःसु सुधापयः ( सुसू. ४४.३-४ )
द्र० 'अग्र्यसंग्रह'
**प्राप्त**-वि., युक्तम् ( सुचि. १.३३-३४; सुचि. २.३७ )
**-कारिन्**-वि., युक्तकारी ( सुशा. ४.८६ )
**प्राप्ति**-स्त्री., भेषजस्य व्याधि शरीराद्यपेक्षया सम्यग्योजना (चसू. १.१२१ )
**प्रायश्चित्त**-न., पापपरिमार्जनी क्रिया ( चनि. ७.१६; चसू. ३०.२१ ) प्राक्तनकर्मोपशमार्थं स्मृत्युक्तचान्द्रायणादिव्रतानुष्ठानम् ( सुसू. ६.२० ).
भेषजम् ( चचि. १.३ )
चिकित्सा ( सुसू. ३.२६ )
**प्रायोगिकी**-वि., नित्यप्रयोज्या ( धूमवर्तिः ) ( चसू. ५.२५ )
**प्रार्थना**-स्त्री., ईप्सितार्थयाञ्चा (चशा. ४.१९ )
अभिलाषा ( सुसू. १५.९ )
**प्रालेय**-न., हिमम् ( असंचि. ९ )
**प्रावरण**-न., आच्छादनम् ( सुचि. ३२.६ )
**प्रावार**-पु., गुरुप्रावरणं कम्बलादि ( चसू. ६.१५ )
**प्रावृष**-स्त्री., ऋतु० प्रावृडिति प्रथमः प्रवृष्टेः कालः, वर्षा ( चवि. ८.१२५ ) आषाढश्रावणौ मासौ प्रावृड्घटकौ ( चक. चशि. ६.५; सुसू. ६.१० )
**प्रावृषेण्य**-पु., वनस्पति० कुटजः ( रा.९.१९ )
कदम्बः ( रा. ९.१७२ )
**( प्रावृषेण्या )**-स्त्री., वनस्पति० पुनर्नवा ( रा. ५.४०७ )
कपिकच्छूः ( रा. ३.२०१ )
**प्रावृष्य**-पु., वनस्पति० कदम्बः ( ध. ४.१०५ )
कुटजः ( रा. ९.१८ )
विकण्टकः ( रापरि. ११.२० )
**प्राश**-पु., प्राश्यते इति प्राशः, आहारः ( सुचि. ४.५ )
**प्रासह**-वि. प्रसहस्येदमिति प्रासहम् ( मांसम् ) ( अहृसू. ६.५४ )
**प्रासाद**-पु., गृह० हर्म्यम्, देवतानरेन्द्राणामधिष्ठानम् ( सुसू. २८.१८-१९ )
प्रसादभागः, स्वच्छो भागः (र. २३.७२-७४ )
**प्रासृतयोगीया**-वि., अध्यायसंज्ञा० प्रसृतोपलक्षितान् योगानधिकृत्य कृता सिद्धिः, तेन (चसि. ८.१)
**प्रास्रवण**-वि., पर्वताश्रितम् उच्चप्रदेशप्रस्रवज्जलस्थानम् तत्सम्बन्धि ( जलम् ) (सुसू. ४५.८) द्र० 'जल'
**प्रियंवदा**-स्त्री., वनस्पति० जाती ( ध. ५.१३७ )
**प्रिय**-पु., वनस्पति० जीवकः ( रा. ५.१५४ )
उदकीर्यः करञ्ज० ( ध. ५.१०९ )
**( प्रिया )**-वि., मनोनुकूला ( सुउ. ५५.३३ )
स्त्री., वनस्पति० वार्षिकी ( ध. ५.१३६ )
प्रियङ्गुः ( ध. ३.१६ )
मल्लिका ( रा. १०.२२५ )
आसुत० सुरा ( रा. १४.३०१ )
**-जीव**-पु. वनस्पति० टिण्टुकः ( ध. १.११४ )
**-दर्शन**-वि., प्रियं दर्शनं यस्य सः, सुन्दरः ( सुशा. ४.७२. )

वनस्पति० राजादनः ( ध. ५.९१. )
–वल्ली–स्त्री., वनस्पति० प्रियङ्गुः ( ध. ३०.१६ )
–वादिन्–पु. पक्षि० चातकः ( चइ. १२.७५ )
–शत–न. प्रियाणां चाटूक्तीनां बालक्रीडनकदानादीनां च शतम् ( सुशा. १०.४६ )
–शाल–पु. वनस्पति० किराततिक्तः ( ध. १.३४ )
–शालक–पु. वनस्पति० सर्जकः ( ध. ५.१२५ )
प्रियक–पु. वनस्पति० सर्जकः (ध. ५.१२५; सुउ.४७.६१)
प्राणि० ललितकः, अजगरप्रायः श्लक्ष्णो दीर्घः ( ड. सुचि. ८.३७ )
प्रियङ्करी–स्त्री., वनस्पति० लक्ष्मणा ( रा. ४.१२५ )
जीवन्तीभेदः बृहज्जीवन्ती ( रा. ३.१७९ )
द्र० 'जीवन्ती'
बृहती ( ध. १.९९ )
प्रियङ्गु–पु., स्वनामख्यातः सुगन्धिलता० ( चसू. ३.२६ ) कुधान्य० ( सुसू. ४६.२१ ) तैलयुक्तफल० ( सुसू. १४.३६ ) तृणधान्य० ( अहृसू. ६.१२ ) संधानीय–मूत्रविरजनीयपुरीषसंग्रहणीयशोणितस्थापनगणोक्तमेकं द्रव्यम् ( चसू. ४.९,१५,१८ ) धूमप्रयोगे एकं द्रव्यम् ( चसू. ५.२० ) तद्गुणाः– तिक्तो; मधुरकषायः ( चसू. २७.१७ ) शीतो; लघुः (च) रक्तप्रसादनः; संग्राही, शोषणः (च) पित्तघ्नो मोहदाहज्वरवान्तिरक्तपित्तवक्त्रजाड्यघ्नः ( ध. ३.१६ ) श्यामाकसदृशगुणः ( चसू. २७.१७ ) हेमन्ते प्रियङ्गुलता पुष्पयुता भवति ( सुसू. ६ ) ( सुसू. ६.२२–२३ ) तस्य पुष्पमञ्जनार्थमुपयुज्यते सुसू. १७.८–१० )
हिं.—फूलप्रियङ्गु.
**म.—गव्हला.**
गु.—घउला.
बं.—गन्धप्रियङ्गु.
कुरुक्षेत्रात्पूर्वदेश० ( काखिल. २५.९ )
प्रियङ्गुका–स्त्री., वनस्पति० प्रियङ्गुः ( सुउ. ४५.१९ )
प्रियङ्ग्वादिगण–पु. द्रव्य० ( सुसू. ३८.४५ ) गणान्तर्गतौषधयः, प्रियङ्गुः पुष्पाञ्जनं, स्रोतोञ्जनं, रसाञ्जनं, भार्ङ्गी, पद्मकेसरं, मञ्जिष्ठाऽनन्ता, शाल्मली, मोचरसः समङ्गा, पुन्नागश्चन्दनं, धातकी; तद्गुणाः—पक्वातीसारनाशनः संधानीयः, पित्ते हितकरो व्रणरोपणश्च ( अहृसू. १५.३७–३९; सुसू. ३८.४५ )

प्रियात्मज–पु., प्रतुदपक्षि० शतपत्रभृङ्गराजकोयष्टिजीवंजीवकप्रभृतीनामन्यतमोऽयं पक्षी प्रतुदः, द्र० 'प्रतुद' ( चसू. २७.५० )
प्रियाम्बु–पु. वनस्पति० आम्रः ( रा. ११.३ )
प्रियाल–पु., फल० श्रमहरगणे उदर्दप्रशमनगणे चैकं द्रव्यम् ( चसू. ४.१६–१७ ) चारः ( सुसू. ४६.१५६ ) मधुरोऽम्लः शीतो गुरुः; स्निग्धः (चसू. १३.१० ); वृष्यो; बल्यो, बृंहणः ( चसू. २७.१५८ ); वातपित्तघ्नः; पित्तकफवर्धनः ( च ) पित्तदाहघ्नः ( ध. ५.७२ ); क्षतक्षीणायास्य चूर्णं क्षीरेण सह दद्यात् ( चचि. ११.३१ ); सरक्ते पवने प्रदेहार्थमुपयुज्यते ( चसू.३.२१ ); फलस्नेहः पित्तसंसृष्टे वायौ उपयोज्यः (सुचि.३१.५) तन्मज्जा–मधुरा, वृष्या, पित्तानिलापहा ( सुसू. ४६.२०५ )
हिं.— पियाल.
**म.—चारोळी, चार.**
गु.—चारोळी.
बं.—पिहाल.
ता.—चारप्परुप्पु.
फा.—नुकले, खाजा.
(प्रियाला)–स्त्री., वनस्पति० द्राक्षा ( ध. ५.५६ )
–तैल–न., प्रियालस्य तैलम् श्लेष्माभिवर्धनम् ( चसू. २७.२९१ ) शीतं, वातपित्तशमनं, सृष्टमूत्रमभिष्यन्द्यग्निसादनम् ( सुसू. ४५.१२० ) गुरु केश्यम् ( ध. ६.१४२ )
प्रीणन–वि., तृप्तिकरः, तर्पकः ( चसू. १.१०७ )
न., तृप्तिः ( अहृसू. ११.४; सुसू. १५.५ )
प्रीति–स्त्री., मनःसुखम् ( चवि. ४.८; सुचि. २६.३९ )
प्रेक्षण–न., शारीर० अक्षि, प्रेक्ष्यते दृश्यतेऽनेनेति प्रेक्षणं चक्षुः ( सुउ. ४४.५ )
–कूट–पु., शारीर० अक्षिकूटः ( सुउ. ४४.५ )
प्रेङ्खा–स्त्री., दोला ( सुचि. २४.९२ )
प्रेङ्खोलन–न., दोलनम्, हिन्दोलनम् ( सुनि. ८.३ )
प्रेत–वि., मृतम् ( सुउ. ६०.१२ )
पु., पिशाच० ( सुसू. ३१.३१ ) भूताधिपति० ( असंउ. ७ )
–गन्धिन्–वि., लक्षण० शटितमृतकगन्धतुल्यगन्धम् ( ड. सुउ. ४०.१९ )
–रूप–वि., लक्षण० प्रेतसदृशो मृत इत्यर्थः ( सुसू. ६१.१६ )

–लक्षण–न., मृतलक्षणम् ( चइ. १.१९ )
–लिङ्गानुरूपा–वि., प्रेतलक्षणसदृशी (चइ. १.७)
–सत्त्वनर–(परिव०) पु., राजससत्त्वभेदः, प्रेतस्वभावो नरः ( सुशा. ४.९३-९४ )

**प्रेत्यभाव**–पु., मरणोत्तरं पुरुषस्याऽस्तित्वम्, पुनर्जन्म ( चवि. ८.३७ )

**प्रेय**–पु., सूच्यग्रः ( चक्र. चचि १३.१८८ )

**प्रेरण**–न., चालना ( चशा. ४.१२ )
आदिकारणम् ( चसू. २०.५ )
स्वकार्ये योजनम् (चशा. १.७०)

**प्रेष्य**–पु., शुश्रूषको दासः, उपस्थाता ( चनि. २.२२ )

**प्रैतसत्त्व**–पु., प्रेतसत्त्वाधिष्ठितनरः, राजससत्त्वस्यैकः प्रकारः, तल्लक्षणं–आहारकाममतिदुःखशीलाचारोपचारमसूयकमसंविभागिनमतिलोलुपमकर्मशीलं प्रैतं विद्यात् ( चशा. ४.३८ (५) )

**प्रोक्षण**–न., उपक्रम० सिञ्चनम् (चचि. २९.१२८).
विधिपूर्वकं मारणम् ( चक्र. चचि १९.४ )

**प्रोक्षित**–वि., व्यञ्जनोदकप्रोक्षणपूर्वकम् अथर्वमन्त्रैरभिमन्त्रितम् ( सुसू. ४६.४४८ )

**प्रोत**–वि., आसक्तम्, दृढस्थापितम् ( अहृसू. ७.४४ )
पु., कर्पटः ( सुसू. ५.६ )

**प्रोद्वृत्तफलयोनि**–वि., प्रकर्षेणोद्वृत्तं फलं रजोरूपं यस्या योनेः सा (स्त्री) ( अरु. अहृसू. ३०.६ )

**प्रोन्नमन**–न , प्रकर्षेणोन्नमनम् संपीडनानन्तरमेवोन्नमनम् ( चचि. १२.१२ )

**प्रोष्ठपद**–पु., भाद्रपदो मासः ( काखिल. २३ )

**प्रौढा**–वि., कामक्षमा ( स्त्री ) ( सुउ. ४७.४४ )

**प्लक्ष**–पु., क्षीरिवृक्ष० ( सुउ. ४०.११९ ) मूत्रसंग्रहणीयगणे एकं द्रव्यम् ( चसू. ४.१५ ) धूमपानप्रयोगे एकं द्रव्यम् (चसू. ५.२२) तद्गुणाः– कटुः, कषायः, शीतः, पित्तघ्नो रक्तपित्तमूर्च्छाश्रमप्रलापभ्रमनाशकः ( ध. ५.८१ ) क्षारागदे आवापार्थमुपयुज्यते (सुक. ६.३) तस्य त्वग्योनिरोगेष्वास्रावे चूर्णपिण्डं धारणार्थमुपयुज्यते ( असंउ. ३९ ) तत्पल्लवाः शाकत्वेनोपयुज्यन्ते (चसू. २७.१०५) तत्फलगुणाः– मधुरकषायाम्लः अम्लपाकी, पित्तश्लेष्महरोवातलो गुरुः ( चसू. २७.१६४ )
हिं.—पाखर.
म.—पिम्परी, पाकरी, वस्सरी, पारोसा पिंपळ.
गु.—पीपर्य.
बं.—पाकुडगाछ.
ता.—इच्चि.

**प्लव**–पु., जलचरपक्षि० ( चसू. २७.४१; चचि. २६.२४६ )
प्लवन्ते पानीये तरन्ति ये ते प्लवाः ( सुसू. ४६.१०५-१०६ ) तत्प्रकाराः– हंससारसकारण्डवबककौञ्चशरारिकाबलाकाद्याः सकादम्बा नन्दीमुखाः । तद्गुणाः–रसपाकयोः मधुरः शीतः उष्णः ( रा. ) स्निग्धो गुरुर्वातलः श्लेष्मलो बल्यः, सरः, शुक्रलः, पित्तघ्नः ( रा. १७.२० ) रक्तपित्तहरो वातघ्नः सृष्टमूत्रपुरीषश्च ( सुसू. ४६.१०६ )
नौः ( सुसू ३४.१८-१९ )
न., वनस्पति० कैवर्तमुस्तकम् परिपेलम्, कुष्ठे प्रलेपनार्थमुपयुक्तम् (चचि. ७.१३०; ध. ३.५५; सुचि. ११.९ )
–ज–पु., पक्षि० प्रसेवकगलः चक्रः द्र० 'प्लव' ( चसि. ३.१२ )
–दला–स्त्री., वनस्पति० मण्डूकपर्णी ( र. १२.७४ )

**प्लवक**–पु., वनस्पति० प्लक्षः ( ध. ५.८१ )

**प्लवङ्ग**–पु., वनस्पति० प्लक्षः ( रा. ११.१२५ )

**प्लवन**–न. गमनम् ( चसू. २६.४१ ) नद्यादितरणम्, स्नानम्, जलप्रतरणम् (चवि. ६.१८; असंसू. १० )

**प्लवोद्वाहिन्**–पु., निर्विषसर्प० ( असंउ. ४१ )

**प्लीहन्**–पु., शारीर० पञ्चदशकोष्ठाङ्गेष्वेकम् ( चशा. ७.१० )
तत्स्थानम्–हृदयस्याधो वामतश्च ( सुशा. ४.३१ )
रञ्जकपित्तस्य स्थानम् ( सुसू. २१.१० )
रक्तधरायाः कलायाः स्थानम् ( सुशा. ४.१० )
रक्तवहस्रोतोमूलम् ( चवि. ५.८ )
प्लीहाशोणितजः ( सुशा. ४.२५ )
रोग० प्लीहावृद्धिः ( चसू. १८.२८; अहृसू. ११.८ )
(प्लीह)–घ्न–पु., वनस्पति० रोहिषः ( इन्दु. असंउ. ४८ )
–(घ्नी)–स्त्री., वनस्पति० रोहीतकः ( र. २९.७१ )
शरपुङ्खा ( र. २९.७१ )
–ज–वि., प्लीह्नि जातः ( चसू. १७.१०१ )
–जठर–पु., रोग० प्लीहोदरम् ( चचि. १३. ३८ )
–दोष–पु., प्लीहाया दोषः रोगः ( चसू. १९.३ )
–वृद्धि–स्त्री., रोग० कोष्ठानुसार्यन्तर्मार्गज एकः ( चसू. ११.४९ )
रक्तदोषजरोगेष्वेकः ( चसू. २८.१२ )

तत्संप्राप्तिः-यस्य कुपितो वातः प्लीहानमुध्दूय तिष्ठति तस्य पार्श्वं परितुदन्श्छनैः प्लीहाऽभिवर्धते (चसू.८.२८; अहृसू.५.३४) प्लीहवृद्धिर्द्विविधा-संक्षोभादिच्युतस्य प्लीह्नो वृद्धिरच्युतस्य वा शोणितवृद्ध्या वृद्धिः इति प्लीहवृद्धिद्वैविध्यम् ( चचि. १३.३६)

–शत्रु–पु., वनस्पति॰ अश्वत्थफला ( रा. ४.१३ )

**प्लीहाभिवृद्धि**–स्त्री., रोग॰ प्लीहवृद्धिः ( चनि. ८.१८; सुनि. ७.१४-१६ )

**प्लीहोदर**–न., रोग॰ उदरभेदः, विदाह्यभिष्यन्दिरतस्य रुग्णस्यात्यर्थं प्रदुष्टम् असृक् कफश्च प्लीहाभिवृद्धि नाम प्लीहोदरं करोति। तल्लक्षणानि–मन्दज्वराग्निः कफपित्तलिङ्गैरुपद्रुतः क्षीणबलोऽतिपाण्डुश्च भवति (सुनि. ७.१४-१५) तच्चिकित्सा–मणिबन्धं सकूर्चा-मयित्वा वामाङ्गुष्ठसमीरितां सिरामभितस्तेन शरेण दहेत् ( सुचि. ११.१६ )

**प्लुत**–वि., मिश्रितम् ( सुचि. ३७.४१ )

**प्लुष्ट**–न., चतुर्विधाग्निदग्धेष्वेकम् इदं वैवर्ण्यातिदाहकरम् ( सुसू. १२.१६ )

**प्लुत**–पु., कर्पटः वस्त्रपट्टिका, वस्त्रखण्डम् ( असंउ. १४; अहृसू. २७.११ )

न., वस्त्रम्, ( सुशा. ८.८ )

शुक्लवस्त्रम् ( ड. सुचि. ३३.१४ )

**प्लोष**–पु., रोग॰ चत्वारिंशत्–पित्तविकारेष्वेकः ( चसू. २०.१४ ) प्रादेशिकः स्वेदरहितः अग्न्यर्चिषेव दाहः प्लोषः ( असंसू २०. )

## फ

**फक्क**–पु., बालरोग॰ पाङ्गुल्यम्, तत्सामान्यलक्षणम्– संवत्सरवयो बालः पादाभ्यां न गच्छति स फक्कः, बहुभोजिनः प्रायः प्रदुष्टग्रहणीका बालाः फक्कत्वमाप्नुवन्ति। तेषां भुक्तमपार्थकं भवति । मन्दाग्नित्वाद् द्रवोत्सर्गाच्च बाला बहुमूत्रपुरीषिणो भवन्ति । क्षीरजगर्भजव्याधिजभेदादेष त्रिविधः, तत्र क्षीरजलक्षणम्–श्लैष्मिकदुग्धाया धात्र्या दुष्टक्षीरपानाद् बालो बहुव्याधिपीडितः कृशश्च भवति । ततः पाङ्गुल्यमवाप्नोति । गर्भजलक्षणम्–गर्भिणीमातृको बालः स्तन्यस्य विनिवर्तनात् क्षीयते म्रियते वा, स गर्भपीडितः फक्कः, गर्भिण्याः स्तन्यपानाज्जातं फक्कत्वम्, पारिगर्भिकरोगाज्जातं च, व्याधिजलक्षणम्– निजागन्तुभिर्ज्वरादिभिर्बालः क्लिश्यते तथा क्षीणमांसबलद्युतिः सुशुष्कस्फिग्बाहूरुर्महोदरशिरोमुखः पीताक्षो हृषिताङ्गो दृश्यमानास्थिपञ्जरः प्रम्लानाधरकायो नित्यमूत्रपुरीषक्लिन्नश्लेष्टाधरकायो वा पाणिजानुगमो वा भवति। दौर्बल्यान्मन्दचेष्टो मन्दत्वान्मक्षिकाकृमिकीटानां गम्य आसन्नमृत्युरुक् च भवति। विशीर्णहृष्टरोमा स्तब्धरोमा महानखो दुर्गन्धी मलिनः क्रोध्यतिविण्मूत्रदूषिकासिङ्घाणकमलोद्भवः सन् श्वसिति ताम्यति च ( काफक्कचि ) तत्र चिकित्सा–षट्पलामृतकल्याणकघृतानामन्यतमपानादनन्तरं सप्ताहापगमेन त्रिवृत्क्षीरेण शोधितकोष्ठः फक्करोगी शूद्रवर्जं ब्राह्मीघृतं पिबेत् ( काफक्कचि. ).

–चिकित्सित–न., अध्यायसंज्ञा॰ ( काफक्कचि. )

–त्व–न., रोग॰ बालपाङ्गुल्यम् ( काफक्कचि. )

–दुग्धा–स्त्री., श्लैष्मिकदुग्धा ( काफक्कचि. )

–रथक–न., बालक्रीडनकः बालशकटः ( काफक्कचि. )

**फञ्जादिशाक**–न., शाकवर्ग॰ फञ्जादिपञ्चकं, फञ्जिका जीवनी पद्मा तर्कारी चुचुकश्चेति पञ्चकं भेडा कुणजस्त्रिपुटश्चेत्येषां पत्राणां शाकम्, तद्गुणाः– दीपनं पाचनं रुच्यं बलवर्णविधायकं ग्राहि वृष्यं सुखावहं त्रिदोषशमनं च ( रा. परि. ७.९५ )

**फञ्जिका**–स्त्री., वनस्पति॰ तद्गुणाः–ग्राहिणी दीपनी रुचिदायका वातामयहरा च ( रापरि. ७.९४ )

**फञ्जी**–स्त्री., शाक॰ ब्राह्मणयष्टिका ( चसू. २७.९८ )

वनस्पति॰ भार्गी ( सुसू. ३८.१८; सुउ. ४०.११३; ध. १.६८ )

वनजपत्रशाक॰ चुञ्च्वादिवर्गोक्ता, इयमल्पबला, भार्गी ( सुसू. ४६.२५२ )

बद्धमूत्रा सरा च ( असंसू. ७.१२७ )

पाठभेदः, इयमतिसारशूलप्रणाशिनी पिच्छाबस्त्युपयुक्ता च ( सुउ. ४०.११३ )

वृद्धदारुभेदः जीर्णदारुः ( रा. ३.१५७ )

–चिल्यादिगण–पु., द्रव्यगण॰ फञ्जी–चिल्ली–कुतुम्बक-कुटिञ्जर–शण–शाल्मली–कर्बुदारादिः तद्गुणाः–मधुरो गुरुः रूक्षो विष्टम्भपूर्वकं जरणशीलः शीतवीर्यः पुरीषभेदनश्च ( चसू. २७.९८-१०३ )

**फटकी**–स्त्री., खनिज॰ सौराष्ट्री, ईषत्पीतेयं गुरुस्निग्धा विषनाशिनी व्रणकुष्ठहरा च ( र. ३.६७ )

**फटिका**–स्त्री., खनिज॰ सौराष्ट्री ( ध. ३.१०६ )

**फण**–पु., मर्म॰ फणा ( असंशा. ७.२३ )

**(फणा)**–स्त्री., मर्म॰ स्थानतः शिरोमर्म ( सुशा. ६.६ ) जातितः सिरामर्म ( सुशा. ६.७ ) सङ्ख्यया द्वे, मानम्–प्रत्येकमर्धाङ्गुलम्, घ्राणमार्गस्य द्वयोः पार्श्वयोरभ्यन्तरद्वारविवरसम्बद्धे फणे वैकल्यकरे च ते; तद्विद्धे गन्धाज्ञानम् ( सुशा. ६.२७ )

**(फणी)**–स्त्री., वनस्पति० सर्पिणी ( रापरि. ५.३९ )
**फणिज**–पु., वनस्पति० मरीचकः ( अहृसू. १५.३०; असंसू. १६.२४ )
मरुबकः, तुलसी ( र. २२.१५९ )
**फणिज्जक**–पु., वनस्पति० मरुबकः ( असंउ. २८ )
गुणाः–तिक्तः कटुः शीतो रूक्षः ( उष्णः रा. ) रुच्यो मुखसौगन्ध्यकृत् कफघ्नः कृमिकुष्ठविड्बन्धाध्मानशूलाग्निमान्द्यत्वग्दोषरक्तदोषघ्नो विषघ्नश्च ( ध. ४.५२ )
हिं.—मरुआ गोलातुलसी.
म.—मरवा.
गु.—मरवो.
बं.—गन्धतुलसी.
त.—मरुकोळुन्तु.
**फणिज्झ**–पु., वनस्पति० फणिज्झकः ( सुउ.११.५ )
निर्गुण्डी ( सुउ. १.२५ )
**फणिज्झक**–पु. वनस्पति० फणिज्जकः मरुबकः ( चक. १.२५; सुसू. ३८.१८ )
फाणिज इति लोके ( सुसू. ४६.२२१ )
पर्णासभेदः (चक. ) कुष्ठादिहरप्रदेहोपयोगी ( चसू. ३.४ ) शिरोविरेचनोपयोगी ( चसू. २.४ ) कुकूणके आश्च्योतनोपयोगी ( काखिल. १३.१७ )
**फणिन्**–पु., वनस्पति०फणिज्जक ( ध. ४.५२ )
सर्प० दर्वीकरः अयं सर्वेषामनिलकोपनः ( सुक. ४.२९ )
**( फणि )–केसर**–न., वनस्पति०नागकेसरम् ( रा. ६.७४ )
**–चम्पक**–पु., वनस्पति० नागचम्पकः ( रा. १०.२४० )
**–जिह्वा**–स्त्री., वनस्पति० शतावरीभेदः, सहस्रवीर्या ( रा. ४.४४२ ) द्र० 'शतावरी'
**–नेत्रा**–स्त्री., वनस्पति० सर्पाक्षी, गन्धनाकुली ( र. ११.४८ )
**–लता**–स्त्री., वनस्पति० ताम्बूली धपरि. ११.६ )
**–वल्ली**–स्त्री., वनस्पति० ताम्बूली ( धपरि. ११.६; र. १२.६४-७३)
**–हन्त्री**–स्त्री., वनस्पति० नाकुलीभेदः, महासुगन्धा ( रा. ७.१५३ ) द्र० 'नाकुली'
**–हृत्**–पु., वनस्पति० धन्वयासभेदः, क्षुद्रदुरालम्भा ( रा. ३.२३ ) द्र० 'धन्वयास'
**फणिर्जक**–पु., मरुवकः ( इन्दु. असंउ. ४३ )

**फम्फणा**–स्त्री., वनस्पति० इयं गर्भिणीस्नानजले निक्षेपार्थमुपयुक्ता ( असंशा. ३.१४ )
**फल**–पु., वनस्पति० मदनः ( ध. १.१६८ )
**( फला )**–स्त्री., वनस्पति० वार्ताकी ( रा. ७.१२८ )
न., यत् साध्यते तत्, परिणामः (चसू. २६.१३) उद्भिजस्यैकमङ्गम्, यथा पुष्पकाण्डादि ( चसू. १.७३ )
त्रिफला ( ड. सुचि. ३८.२४; र. २०.२४५ )
वनस्पति० मदनफलम् ( चवि. ८.१३५ ) असंसू. १६.११; अहृसू. ८.१५ )
जातीफलम् ( ध. ३.३५ ) कङ्कोलकम् ( ध. ३.३७ )
शारीर० मुष्कम् ( सुनि. १२.४ )
गर्भाशयः ( ड. सुशा. ५.४१; र. २०.२४५ )
**–कल्प**–पु., मदनफलस्य कषायादिकल्पना ( चक.१.३० )
**–कोश**–पु., शारीर० वृषणः ( असंउ. २९ )
**–कोशवाहिधमनी**–स्त्री., धमनी० यामाश्रित्य दोषः फलकोषं गच्छति ( सुनि. १२.४ ) अण्डकोषानुसारिणी धमनीति, हाराणचन्द्रः
**–कोष**–पु., शारीर० अण्डकोषः ( सुसू. २३.५ )
**–चोरक**–पु., वनस्पति० चोरकः ( ध. ३.७१ )
**–तैल**–न., तैल० बस्तिव्यापच्चिकित्सायामुपयुक्तम् ( काखिल. ८.९६ ) अनुवासनोपयोगि ( काखिल. १८.६६ ) फलबिल्वादिसिद्धं तैलम्, कफाधिकपुरुषानुवासनोपयोगि ( सुचि. ३७.४६ )
**–त्रय**–न., त्रिफला ( रा. २२.१; र. १५.५८ )
**–त्रिक**–न., त्रिफला ( रा. २२.१ )
**–दर्शन**–न., आरोग्यलाभः ( सुचि. १.७५ )
**–पाक**–पु., वृक्षस्य फले जाते पाकत्वम्, पूर्णवीर्यवत्त्वम् ( र. २९.४१ )
**–पाकान्त**–वि., फलपाकपर्यवसितं औद्भिदं द्रव्यम्, 'ओषधिःफलपाकान्ता' ( असंसू. १२.३ )
**–पिप्पली**–स्त्री., मदनफलमध्यगतं पिप्पलीसदृशं बीजम् ( चक. चक. १.१३; ड. सुसू. ४३.३ )
**–पिप्पलीक्षीर**–न., फलपिप्पल्याः क्षीरपाकविधिना साधितं क्षीरम्, अधोगरक्तपित्ते हृद्दाहे चोपयुक्तम् (चक. १.१७ )
**–पुष्पा**–स्त्री., वनस्पति० खर्जूरभेदः, पिण्डखर्जूरिका ( ध. ५.५५ ) द्र० 'खर्जूर'
**–पूरक**–पु., वनस्पति० बीजपूरकः, मातुलुङ्गम् ( चचि. २०.२६; ध. ५.२२ )

**-पूरमूल**-न., बीजपूरकमूलम्, वातजहृद्रोगे उपयुज्यते ( चचि. २६.८४ ) किंचिदं मूलं रक्तपित्तशमनार्थं शतावर्यादिघृते समुपयुज्यते (चचि.४.९५)
**-प्राशन**-न., फलभक्षणम् ( काखिल. १२.१५ )
**-प्रिया**-स्त्री., वनस्पति० प्रियङ्गुः ( रा. १२.२८ )
**-मात्रासिद्धि**-पु., अध्यायसंज्ञा० ( चसि. ११.१ )
**-मुख्या**-स्त्री., वनस्पति० अजमोदा ( रा. ६.१५२ )
**-यूष**-पु., योग० कपित्थबिल्वादिफलैः साधितः अयं जीर्णातिसारनाशनः ( काखिल. ४.४७ )
**-योनि**-स्त्री., शारीर० गर्भाशयः ( हे. अहृसू. ३०.६ )
**-रोचक**-पु., वनस्पति० चोरकः ( रा. १२.१२८ )
**-लुम्बि**-पु., फलस्तबकः ( हे. अहृसू. ३.३५ )
**-वर्ग**-पु., फलसंग्रहः, मधुरफलानि तालनारिकेलपनसादीनि, द्राक्षाकाश्मर्यखर्जूरादीनि तथा वातामाक्षोडाभिषुकप्रभृतीनि, क्षीरवृक्षफलजाम्बवराजादनफल्गुबिल्वप्रभृतीनि ( चसू. २७.१२६-१२४; सुसू. ४६.१६३-१८८; असंसू. ७.२१० ) तत्र दाडिमामलकद्राक्षाखर्जूरपरूषकराजादनमातुलुङ्गानि फलोत्तमानि ( सुसू. ४६.३३४ )
**-वर्ति**-स्त्री., कल्प० घृताभ्यक्ते गुदे क्षिप्ता श्लक्ष्णा स्वाङ्गुष्ठसन्निभा। मलप्रवर्तिनी च या सा फलवर्तिः (भा. प्र.) इयं मलवायुनिःसारणेन शूलनाशनी श्यामामदनजीमूतफलादिभिः कृता वर्तिः ( सुचि. ५.२६ ) वर्तिक्रियया विण्मूत्राधोवातानां प्रवर्तनं भवति ( अहृसू. ८.१६; सुउ. ४२.१४५ )
**-विष**-न., स्थावरविष० कुमुद्वतीवेणुकाकरम्भमहाकरम्भककर्कोटकरेणुकखद्योतकचर्मरीभगन्धासर्पघातिनन्दनसारपाकानीति द्वादश फलविषाणि, तैर्मुष्कशोफदाहान्नद्वेषाश्च भवन्ति ( सुक. २.५-८; असंउ. ४० )
**-वृक्षक**-पु., वनस्पति० पनसः ( रापरि. ११.९ )
**-शाडव**-पु., वनस्पति० दाडिमः ( ध. २.६१ )
**-शैशिर**-पु., वनस्पति० बदरम् ( ध. ५.९६ )
**-संभारी**-स्त्री., वनस्पति० काकोदुम्बरिका ( ध. ५.८८ )
**-सर्पिस्**-न., घृत० स्त्रीभिः पुष्पे सेवितं सत् फलाय प्रजोत्पादस्वरूपाय भवतीति फलसर्पिः, इदं योनिशुक्रप्रदोषादिहरं म्रियमाणप्रजानां गर्भिणीनां च प्रशस्तम् ( असंउ. ३९ )
**-साधिततैल**-न., तैल० मदनफलसिद्धं तैलम्, कफेऽनुवासनार्थमुपयुज्यते ( चसि. ३.७० )

आ. को. सं. ६९

**-सार**-पु., वनस्पति० कपित्थः ( असंउ. ४९ )
**-सारासव**-पु., आसुत० बिलेशयमांसभक्षणोत्तरमयमनुपानविशेषत्वेन कीर्तितः ( सुसू. ४६.४३२ )
**-स्नेह**-पु., फलोद्भवत्वात् स्नेहः फलयोजनया साधितः स्नेहः, यथा भल्लातकस्नेहः ( सुचि. १.९४ )
वनस्पति० अक्षोटः ( ध. ५.६० )
**-स्वादु**-पु., वनस्पति० जलमधूकः ( ध. ५.४८ )
**फलक**-पु., न., काष्ठपट्टिका ( सुचि. ६.४; अहृसू. २९.५९ )
पार्श्वम्, पट्टः ( र. २.५७ )
काष्ठपेटिका ( असंसू. ८.५९ )
शाल्मलीकाष्ठादिविरचितं पञ्चनिक्षेपणानामेकतमम् ( सुसू. ४५.१८ )
**( फलिका )**-स्त्री., वनस्पति० निष्पावी ( रापरि. ७.९९ )
**फलत्**-वि., स्फुटत् ( ड. सुउ. ५९.४ )
**( फलिनी )**-स्त्री., प्रशस्तफलवती ( ओषधिः ) सङ्ख्ययैकोनविंशतिः फलिन्यः ( चसू. १.७४ )
वनस्पति० इक्ष्वाकुः, कटुतुम्बी ( चक. ३.३ )
प्रियङ्गुः ( सुचि. ३८.२७; ध. ३.१६; असंसू. १५. ४५; अहृसू. १५.१४ )
योनिरोग० त्रिदोषजोऽयम्, तल्लक्षणम्-अतिकायगृहीतायास्तरुण्या योनिः फलिनी कथ्यते ( सुउ. ३८.१८ )
**फलाम्बु**-न., फलोदकम्, फलसिद्धमुदकम् ( असंचि. ३ )
**फलाढ्या**-स्त्री., वनस्पति० काष्ठकदली ( रा. ११.११० )
**फलादि**-वि., फलं मदनफलमादिर्यस्य तथाविधः, गणोऽयं कफजहृद्रोगे उपयुज्यते ( सुउ. ४३.१८ )
**फलाम्ल**-पु., बीजपूररसः अयं क्षारप्रक्षालनोपयुक्तः ( सुचि. ६.४ )
वनस्पति० अम्लवेतसः ( रा. ६.१४७ )
न., बीजपूरादि ( ड. सुचि. ३३.२० )
तिन्तिडिका, अम्लवेतसः ( चचि. १४.९८ )
दाडिमबीजपूरकादिभिरम्लीकृतं मद्यम्, इदं पानाजीर्णे प्रयुज्यते ( सुउ. ४७.३८ ) दाडिमादीनामम्लम्, वातविकारिणां हितम् (सुचि.४.१३-१४) अमद्यपानामनुपानम् इदं सर्वविधमांसभक्षणे (सुसू. ४६.४२८) मांसेष्वनुपानम् (असंसू.१०.४७)
**फलाम्लक**-न., वनस्पति० वृक्षाम्लम् ( रा. ६.१४४ )
**फलारिष्ट**-पु., कल्प० कृष्णात्रेयप्रोक्तो हरीतक्यामलकविशालादिसिद्धः, अयं ग्रहण्यर्शोहृत्पाण्डुरोगप्लीह-

कामलाविषमज्वरवर्चोमूत्रानिलविबन्धाग्निमार्दव-
कासगुल्मोदावर्तनाशनोऽग्निसन्दीपनश्च
( चचि. १४.१४८-१५२ )

**फलाशिन्**-वि., फलभक्षकः ( सुसू. ४६.१३४ )

**फलिन**-पु., वनस्पति० पनसः ( रापरि. ११.९ )

**फलेरुहा**-स्त्री., वनस्पति० पाटलाभेदः, काष्ठपाटला ( ध. १.१२२ ) द्र० 'पाटला'

सितपाटलिः ( रापरि. १०.१६ )

**फलोत्तमा**-स्त्री., द्राक्षाभेदः, काकलीद्राक्षा ( रा. ११.७९; ध. ५.५८ ) द्र० 'द्राक्षा'

**फलोदक**-न., फलरसः, फलसिद्धमुदकम्, रक्तपित्ते तृष्णाहरमेतत् ( चचि. ४.५१ )

**फल्गु**-पु., ज्वर० लक्षणानि-"अन्तर्दाहो बहिः शीतं तस्य तन्द्रा च बाधते। तुद्यते दक्षिणं पार्श्वमुरःशीर्ष-गलग्रहाः। निष्ठीवेत् कफपित्तं च तृष्णा कण्डूश्च जायते। विड्भेद-श्वास-हिक्काश्च बाधन्ते सप्रमीलकाः॥ विधु-फल्गू च तौ नाम्ना सन्निपातावुदाहृतौ।" (मानि.) पित्तश्लेष्माधिक-सन्निपात-ज्वरः, ( काविशेषक. )

स्त्री., वनस्पति० मलयुः ( इन्दु. असंउ. १० )
काकोदुम्बरिका काष्ठोदुम्बरिका (चक्र.चचि.१०.१९; असंसू. १५.३९; अहसू. ६.१२०)
तद्गुणाः-मधुरा गुरुः स्निग्धा विष्टम्भिनी तर्पणी च ( सुसू. ४६.१७१ )
काष्ठोदुम्बरिका ( चचि. २(१).२७; सुउ. ६१.३४ )
श्रमहरगणोक्तमेकं द्रव्यम् ( चसू. ४.१६ )
न., फल० औदुम्बरम्, तद्गुणाः-गुरु शीतलं विष्टम्भि बृंहणं तर्पणं च ( चसू. २७.१२८ )

**-वाटिका**-स्त्री., वनस्पति० काकोदुम्बरिका ( रा. ११.१४२ )

**-वृन्ताक**-पु., वनस्पति० टिण्टुकभेदः, पृथुशिम्बः ( रा. ९.१४२; ध. १.११५ ) द्र० 'टिण्टुक'

**फल्गुनी**-स्त्री., वनस्पति० काकोदुम्बरिका ( ध. ५.८८ )

**फल्गू**-स्त्री., वनस्पति० काकोदुम्बरिका ( ध. ५.८८ )

**फाणित**-पु., क्षौद्रगुडकृतः, मृदुस्नेहनः, बालवृद्धादीनां सद्यःस्नेहनकृत् ( अहसू. १६.४१ )
न., इक्षुविकारः अर्धशृत इक्षुरसः(चक्र. चक.३.१६) स्त्यानमर्धाकृति ( सुउ. ४०.९० ) तत्स्वरूपम्-किञ्चिद्गाढो बहुद्रवो यः पक्व इक्षुरसः, स फाणितमित्युच्यते (भा. प्र.) तद्गुणाः- गुरु मधुरमभिष्यन्दि बृंहणमवृष्यं त्रिदोषकृत्(सुसू.४५.१९५)
स्निग्धोष्णं चलकृच्च ( असंसू. १७.४१ )
इक्षुविकाराणामहिततममेतत् ( चसू. २७.३९; अहसू. ५.५१ )

**फाणितीभूत**-वि., फाणितीकृतम्, फेनिलम् ( चक. १.२० )

**फाण्ट**-पु., न., कल्प० कषायभेदः, भेषजमुष्णतोये क्षिप्त्वा मृदितं तत् ( चसू. ४.७; असंक. ८ ) आन्तरिक्षेण वारिणा क्वथितोऽर्धावशेषितः सकृद्वा फाणितः कषायः अल्पदोषबले बाले लघुन्याधौ च प्रशस्तोऽयम् ( काखिल. ३.४० )

**फाल**-पु., लोहफलकः, तापस्वेदे उपकरणेष्वेकम् ( अहसू. १७.१ )

**-कृष्ट**-वि., फालेन कृष्टः ( चक. १.९ )

**फाल्गुन**-पु., वनस्पति० अर्जुनः ( रा. ९.१९३ )
मास० "फाल्गुनचैत्रौ वसन्तः" ( सुसू. ६.१० )

**फिरङ्ग**-पु., रोग० अयमागन्तुजः, अस्मिन् दोषसङ्क्रमोऽनन्तरं भवति। स त्रिविधः- बाह्य आभ्यन्तरो बहिरन्तर्भवश्च, बाह्यलक्षणम्-विस्फोटसदृशोऽल्परुक् स्फुटितो व्रणवद् भवति। आभ्यन्तरलक्षणम्-असौ सन्धिषु भवति, आमवात इव व्यथां शोफं च जनयति। बहिरन्तर्भवलक्षणम्-क्षीणोपद्रवैर्युतः कार्श्यबलक्षयनासाभङ्गादियुतो बहिरन्तश्च व्याप्तः तत्र बाह्यो नवीनो निरुपद्रवश्च साध्यः, आभ्यन्तरः कष्टसाध्यः, बहिरन्तर्भवश्च क्षीणोपद्रवयुक्तोऽसाध्यः, तदुपद्रवाः-कार्श्यबल क्षयो नासाभङ्गो वह्निमन्दताऽस्थिशोषोऽस्थिवक्रता च ( माफिरङ्गनि. )

**फुप्फुस**-पु., न., शारीर० हृदयनाडिकालग्न उरःस्थोऽवयवः, असौ शोणितफेनप्रभवः ( सुशा. ४.२५; असंशा. ५.४८ ) "उदानवायोराधारः फुप्फुसः प्रोच्यते बुधैः" ( शार्ङ्गधर. पूर्वखंडे ५.४५ )

**फुल्लकी**-स्त्री., सौराष्ट्री-भेदः ( र. ३.६६ )

**फुल्लतुवरी**-स्त्री., खनिज० सौराष्ट्री-भेदः ( र. ३.६९ )

**फेन**-पु., समुद्रफेनः, अञ्जनोपयोगी ( सुउ. १०.८ )
लेखनद्रव्यम् ( सुचि. १.४०; र. १९.३९ )
मुखस्रावः ( र. २३.७ )

**(फेना)**-स्त्री., वनस्पति० सातला ( ध. १.२३८ )
न., समुद्रफेनः ( ध. ३.१५४ )
जलहासः ( सुक. १.४४ )

**-जन्मन्**-न., फेनोत्पत्तिः ( सुक. १.४४ )

**-दुग्धा**-स्त्री., वनस्पति० दुग्धफेनी ( रापरि. ५.३४ )

-पटल-न., फेनसमूहः ( असंसू. ८.११ )
-भूत-वि., फेनसदृशम् (चचि. १५.९)
-माला-स्त्री., फेनसंहतिः ( चचि. २३.१११; असंसू. ८.११ )
-मेह-पु., कफजमेहः तल्लक्षणम्-फेनमेही स्तोकं स्तोकं सफेनमच्छं मेहति ( सुनि. ६.१० ) फेनमेहिने त्रिफलारग्वधमृद्विकाकषायो मधुमधुरो देयः ( सुचि. ११.९ )
-संघात-पु. अष्टौ क्षीरदोषेष्वेकः फेनसमूहः ( चसू. १९.४(१); चचि. ३०.२४० )

**फेनक**-पु., जलविकारः समुद्रफेनः ( सुचि. २४.५५ ) भक्ष्य० गोधूमचूर्णकृतः, तत्कृतिः- "विमर्द्य विमलां शुक्लां समितां नातिशर्करां संवेष्टनाय गर्भार्थं खरपाकं घृते पचेत्" (ड) तद्गुणाः-बृंहणो वातपित्तघ्नो हृद्यो बल्यः पथ्यतमो लघुश्च ( सुसू. ४६.३९९ )

**फेनागमन**-न., लक्षण० फेनस्त्रावः (चनि. ७.७ (१)

**फेनानुविद्ध**-वि., फेनमिश्रम् (सुनि. १०.११)

**फेनाश्मन्**-न., धातुविष० मल्लः (सुक. २.५;असंसू.४०) अनेन हृत्पीडनमूर्च्छातालुदाहा भवन्ति (सुक.२.१०)

**फेनिल**-वि., फेनसहितम् ( सुसू. १४.२१ )
पु., वनस्पति० रीठाकरञ्जः ( रा. ९.१८७; र. ३०.६९)
न., वनस्पति० बदरम् ( ध. ५.९६ )

**(फेनिला)**-स्त्री., वनस्पति० उपोदिका ( चक्र. चचि. २९.११०; ड. सुउ. ३९.२८४ )
-फल-न., अरिष्टकफलम्, रीठाकरञ्जः (र. ३०.४६)

**फेनोद्गमन**-न., लक्षण० कुमारस्य ग्रहोपसृष्टस्य मुखात् फेनस्य प्रवृत्तिः ( सुशा. १०.५१ )

**फोण्डालु**-पु., वनस्पति० तद्गुणाः- कटुरुष्णो दीपनः श्लेष्मवातघ्नश्च ( रापरि. ७.३० )

## ब

**बक**-पु., पक्षि० प्लवजातीयः अयं संघातचारी पाण्डुरपक्षो जलचरश्च ( चसू. २७.४१; सुसू. ४६.१०५ )
हिं.—बगुला.
बं.—बकोट.
**म.—बगळा.**
वनस्पति० वसुकः ( रा. १०.३३ )

**बकर**-पु., पक्षि० प्लवजातीयः, अयं बकसदृशः ( अहृसू. ६.४५ )

**बकुल**-पु., वनस्पति० अयं वसन्ते पुष्पितो भवति ( सुसू. ६.२७ ) तद्गुणाः- मधुरः कषायः शीतो हृद्यो हर्षकरो विषघ्नश्च ( ध. ५.१५४ )
न., बकुलपुष्पम्, तद्गुणाः- मधुरं कषायं शीतलं स्निग्धं संग्राहि ( ध. ५.१५४ ) पित्तकफास्त्रजित् ( असंसू. १२.८६ ) रूक्षं गुरु विबन्धाध्मानजननं स्तम्भनं वातकोपनं च ( असंसू. ७.१८२ )
हिं.—बकुल.
**म.—बकुळ.**
बं.—बकुलगाछ.
ता.—मोगदम्.
बकुलफलम्, तद्गुणाः-कषायं मधुरं गुरु दन्त्यं च ( ध. ५.१५४ )

**( बकुला )**-स्त्री., वनस्पति० कटुका ( रा. ६.५४ )

**बक्कस**-पु., आसुत० जगलोऽद्रवः, किण्वौषधमात्रम्, तद्गुणाः-गुरुर्दीपनो विशदः सृष्टविण्मूत्रोऽल्पमदो विष्टम्भी वातकोपनश्च ( सुसू. ४५.१८११-८२; असंसू. ६.१२२ )

**बक्वस**-पु., आसुत० बक्कसः, अद्रवो जगलः ( सुसू. ४५.१८१ )

**बडिश**-पु., ऋषि० रोगापहरणचिन्तनार्थं हिमवतः पार्श्वे समेतेषु महर्षिष्वेकः ( चसू. १.११ ) गर्भस्य हस्तपादौ पूर्वमभिनिर्वर्तेते इति मतविशेषमास्थितः ( चशा. ६.२१ )
शस्त्र० बडिशम् ( असंसू. ३४.३१ )
न., यन्त्र० मत्स्यवेधनम् ( हे. अहृसू. २५.३१ )
मत्स्यबन्धनयन्त्रम् ( ड. सुक. ३.२९ )
शस्त्र० शल्याहरणोपयोगि, अङ्कुशवदानतं तीक्ष्णकण्टकमुखं मानतः षडङ्गुलम् ( सुसू. ८.३-११ ) गलशुण्डिकार्मादेर्ग्रहणे उपयुक्तम् ( असंसू. ३४.३१; अहृसू. २६.१६ )
-मुखा-स्त्री., शलाका० बडिशाकृतिरेषा शल्याऽऽहरणार्था ( सुसू. ७.१४; असंसू. ३४.१५ )

**बदर**-पु., वनस्पति० देवसर्षपकः ( रापरि. ९.४२ )
न., मान० शाणद्वयम् ( चक. १२.८९ )
वनस्पति० स्वेदोपगगणोक्तमेकं द्रव्यम् ( चसू. ४.१३; असंसू. १५.२७ ) उदर्दप्रशमनगणोक्तमेकं द्रव्यम् (चसू. ४.१७; असंसू. १५.४२) हृद्यगणोक्तमेकं द्रव्यम् ( चसू. ४.१०; असंसू. १५.१५ ) श्रमहरगणोक्तमेकं द्रव्यम् ( चसू. ४.१६; असंसू. १५.३९ ) विरेचनोपग-

गणोक्तमेकं द्रव्यम् (चसू. ४.१३; असंसू. १४.४) वातसंशमनवर्गोक्तमेकं द्रव्यम् (सुसू. ३९.७) पित्तश्लेष्मप्रकोपि च (चसू.२७.१३२) हिध्मा-नाशनम् (असंसू. १५.३०) वमिनिग्रहणगणोक्त-मेकं द्रव्यम् (असंसू. १५.२८) बदराणि श्वाविध-वराहमांसानि चैकध्यं नाश्नीयात् (असंसू. ९.९) कर्कन्धुकोलबदरसौवीरसिञ्चितिकेतिभेदेन पञ्चविधम् तत्सामान्यगुणाः– मधुरं स्निग्धं भेदनं वात-पित्तजित् (चसू. २७.१४१) तत्र कर्कन्धुरल्पबदरम्, कोलं मध्यप्रमाणम्, बदरं महत्, सौवीरं महत्तमम्, सिञ्चितिकाफलं मुष्टिप्रमाणं च, आमं कर्कन्धु-कोल-बदरं पित्तकफावहम्, पक्कं समधुरं स्निग्धं सरं पित्तानिलहरं च, पक्वमामं च सौवीरं मधुरं स्निग्धं वातपित्तजिच्च, सिञ्चितिकाफलमति-मधुरम्, पुरातनं बदरं तृट्शमनं लघु दीपनं श्रमघ्नं च (सुसू. ४६.१३९; ध. ५.९८) बृंहणं गुरु विष्टम्भि कफशुक्रकृच्च (अहसू. ६.१२१) राजनिघण्टौ–बदरं राजबदर-भूबदरी-लघुबदरभेदेन त्रिविधम्, तत्सामान्यगुणाः–मधुरं कषायमम्लमुष्णं कफकृत् श्रमशोषातिसाररक्तदोषघ्नं रुच्यं च, तत्र राजबदरं सुमधुरं शिशिरं वृष्यं पित्तवातघ्नं दाहार्तिशोषश्रमघ्नं च, भूबदरी–मधुराम्ला रुच्या पथ्या दीपनपाचनी किञ्चित् पित्तास्रकारिणी कफवातघ्नी च, लघुबदरं मधुराम्लं, पक्कं कफवात-नाशनं रुच्यं स्निग्धं तु जन्तुकृदीषत् पित्तार्तिदाह-शोषघ्नं च (रा. ११.१६०-६५) बदरबीजं हिक्कानिग्रहणम् (चसू. ४.१४) बदरफलं नेत्ररोगघ्नं च (रा. ११.१५९) नाडीव्रणेषु त्वग्, वर्तिद्वारा उपयुज्यते (सुचि.१७.३४) बदरमज्जा कषायमधुरः पित्तनाशनश्च (सुसू. ४६.२०६) बदरपत्रं लेपेन ज्वरदाहघ्नम् (रा. ११.१५९) बदरत्वचा विस्फोटशमनी (रा. ११.१५९) बदरकाष्ठाग्निर्मृदुः (र. १७.६९)

हिं.—बेर.
म.—बोर.
गु.—बोरडी.
बं.—कुल.
त.—इलन्तै.
फा.—कुनार.

**(बदरी)**–स्त्री., वनस्पति० वृक्षः बदरवृक्षः (चक. १.८; सुसू.३८.४८)

वनस्पति० कार्पासी (रापरि. ४.४५) कपिकच्छूः (रापरि. ३.२०१)

**–तर्पण**–न., कल्प० बदरकृतस्तर्पणः, योगः वमन-कृदसौ (चक. १.२६)

**–पानक**–न., आहारद्रव्य० बदरसिद्धं पानकम्, वमनकरमिदम् (चक. १.२६)

**–फली**–स्त्री., वनस्पति० बदरभेदः, भूबदरी (रा. ११.१६२) द्र० 'बदर'

**–मद्य**–न., आसुत० बदरसिद्धं मद्यम्, वमनकृदिदम् (चक. १.२६)

**–मांसरस**–पु., पेय० बदरयुक्तो मांसरसः वामको-ऽसौ (चक. १.२६)

**–मोदक**–पु., आहारद्रव्य० बदरकृतो मोदकः (चक. १.२६)

**–यूष**–पु., आहारद्रव्य० बदरकृतो यूषः, सम्यग्वामकः (चक. १.२६) वातशूलघ्नः (सुउ. ४२.९८)

**–राग**–पु., कल्प० बदरकृतो रागः, अरोचकघ्नः। सम्यग्वामकश्च (चक. १.२६)

**–लेह**–पु., कल्प० बदरनिर्मितो लेहः, सम्यग्वामकः (चक. १.२६)

**–षाडव**–पु.,कल्प० बदरकृतः षाडवः,षाडवो मधुराम्ल-संयोगविशेषरूपः (चक. १.२६)

**–संमित**–वि., अर्धकर्षप्रमाणम् (ड. सुउ. ५८.३७)

**बदराम्ल**–न., शूकधान्यकुधान्यशमीप्रभृतिनिर्दिष्टपूर्वान्न-समूहभक्षणोत्तरमिदमनुपानत्वेन प्रकीर्तितम् (सुसू. ४६.४३३)

**बदरिका**–स्त्री., वनस्पति० घोण्टा (रापरि. ८.२२)

**बदरिवल्ली**–स्त्री., वनस्पति० बदरभेदः, भूबदरी (रा. ११.१६२) द्र० 'बदर'

**बदरी**–स्त्री., वनस्पति० बदरवृक्षः (चक. १.८)

**–पत्र**–पु., भैषज्य० नखम् (रा. १२.१०८)

**–पल्लवोत्थ**–वि., बदरीपत्राणां मथनाज्जातं फेनादि दाहे लेपनार्थं शस्तम् (चचि. २४.१६०)

**बदरोत्कारिका**–स्त्री., आहारद्रव्य० बदरनिर्मितोत्कारिका सम्यग्वामनीयम् (चक. १.२६)

**बदुला**–स्त्री., वनस्पति० एलाभेदः, सूक्ष्मैला (ध. २.४४) द्र० 'एला'

**बद्ध**–वि., ग्रथितम् (सुचि. १४.१७)

**–गुद**–न., उदररोगः, बद्धगुदोदरम् (सुचि. १४.३)

**–गुदोदर**–न., उदररोगः, तत्सम्प्राप्तिः–सहान्नभुक्तैः पक्ष्मबालैरुदावर्तैश्च तथाऽर्शोभिरन्त्रसम्मूर्च्छनेन वा

मार्गसंरोधात् कुपितोऽपानोऽनिलोऽग्निं हत्वा वर्चः-पित्तकफान् रुध्वा बद्धगुदोदरं जनयति ( चचि. १३.४० ) तद्रूपाणि- तृष्णादाहज्वरमुखतालुशोषोरुसादकासश्वासदौर्बल्यारोचकाविपाक-वर्चोमूत्रसङ्गाध्मानच्छर्दिक्षवथुशिरोहृन्नाभिगुदशूलान्यपि चोदरं मूढवातं स्थिरमरुणं नीलराजि सिरावनद्धराजिकं वा प्रायो नाभ्युपरि गोपुच्छवदभिनिर्वर्तते ( चचि. १३.४१; असंनि. १२.३१-३४ ) हृन्नाभिमध्ये वृद्धिमेत्युदरम्, अत्र विट्समगन्धिकं प्रच्छर्दनं भवति ( सुनि. ७.१८ ) शस्त्रचिकित्स्योऽयं व्याधिः ( सुचि. १४.१७ )

**–निष्यन्द्**–वि., लक्षण॰ बद्धमूत्रं रुद्धपूयगतिकं वा ( सुसू. ३३.२२ )

**–निस्यन्द्**–वि., लक्षण॰ बद्धमूत्रम् (सुसू.४५.१८७)

**–प्रच्युतदोष**–वि., लक्षण॰ बद्धः प्रच्युतः वा पुरीषादिरूपो दोषो यस्मिन् सः ( ज्वरः ) ( चचि. ३.१६८ )

**–रसाल**–पु., ( परिव॰ ) वनस्पति॰ आम्रभेदः, राजाम्रः ( रा. ११.११ ) द्र॰ 'आम्र'

**–वर्चस्**–वि., ग्रथिताल्पपुरीषकृत् ( अहृसू. ६.४ )

**–विट्क**–वि., बद्धपुरीषम्,ग्रथितपुरीषम् (अहृसू.५.५६)

**–विट्कता**–स्त्री., लक्षण॰ शकृतः कृच्छ्रात्प्रवृत्तिः ( सुउ. ३९.३० )

**बद्धाक्ष**–वि., वस्त्रादिभिर्बद्धनेत्रः ( असंसू. ३३.९; अहृसू. २४.२१-२२ )

**बद्धाबद्धप्रलापिन्**–वि., लक्षण॰ सम्बद्धाऽसम्बद्धजल्पकः ( चचि. ९.२० )

**बद्धायन**–वि., बद्धमार्गम् ( चचि. १३.३९ )

**बद्धास्य**–वि.,लक्षण॰ आस्ये स्थितिकरत्वेन चिरकालानुबद्धः ( ड. सुउ. ५२.१४ )

**बद्धोदर**–न., उदरभेदः, बद्धगुदोदरम् (चसू. १९.४ (१); अहृसू. १९.५) द्र॰ 'उदर॰'

**बद्धोदरिन्**–वि., बद्धगुदोदरः ( चचि. १३.१०५ )

**बधिर**–पु., वनस्पति॰ भूतृणम् ( रा. परि. ८.४२; रा. ८.७३ )

कर्णरोग॰ जन्मबलप्रवृत्तो मातुरपचारजातो दौहृदापचारभवश्च ( सुसू. २४.५ ) बाधिर्यम्, तत्सम्प्राप्तिः-यदा कर्णस्रोतसि शुद्धो वायुः सकफो वा कर्णशष्कुलीपरिच्छिन्नमाकाशमाश्रित्य विविधमार्गं चावृत्य तिष्ठति, तस्य चिकित्सामकुर्वतो बाधिर्यं जायते ( सुउ, २०.८; र. २४.१ )

**–त्व**–न., लक्षण॰ स्पर्शज्ञानराहित्यम् ( र. १२.९९ ) रोग॰ बाधिर्यम् ( र. १२.९९ )

**बन्दाक**–पु., वनस्पति॰ वृक्षादनी ( सुचि. ६.१३ )

**बन्ध**–पु., व्रणबन्धनार्थमुपयुक्तं वस्त्रम्, बध्यते व्रणादि अनेन इति बन्धः ( चचि. २५.९६ )

प्रकृतिबन्धः, संसारः ( चशा. १.४१ )

विबन्धः, अवरोधः ( सुसू. ४२.९ )

लक्षण॰ स्रोतोरोधः ( अहृसू. १०.१२ )

सन्धिबन्धः ( चसू. १८.५१ )

संस्कार॰ पारदबन्धः चाञ्चल्यदुर्ग्रहत्वविनाशसहचरितं पारदस्य स्थिरीभवनम् हठारोटादयः पञ्चविंशतिः पारदबन्धाः ( र. ११.६० )

उपक्रम॰ बन्धनम्, समन्त्रारिष्टाबन्धोऽव्रणबन्धश्च ( चसू. १८.५ )

भूतादिचिकित्सायां रज्ज्वादिभिः समन्त्रैर्बन्धनम् ( सुउ. ३९.२६५ )

व्रणस्य षष्ट्युपक्रमेष्वेकः, व्रणबन्धनम्, सः त्रिविधः, सम-गाढ-शिथिलभेदात् ( सुसू. १८.२३; सुचि. १.८; असंसू. ३८.४३ ) तत्र समो नैव गाढो नैव शिथिलः, स च शाखावदनकर्णकण्ठमेढ्रमुष्कपृष्ठपार्श्वोदरोरःसु विधीयते ( सुसू. १८.२३-२४; अहृसू. २९.६३ )

गाढः पीडयन्नरुजः, स च स्फिक्कुक्षिकक्षावङ्क्षणोरुशिरःसु विधीयते ( सुसू. १८.२३-२४; अहृसू. २९.६२ )

शिथिलः सोच्छ्वासः स चाक्ष्णोः सन्धिषु विधीयते ( सुसू. १८.२३–२४; अहृसू. २९.६८ )

बन्धगुणाः–व्रणस्य शुद्धिकरो मृदुत्वकरो निःशङ्करोहणरोपणकृत् (सुचि. १.१११) अस्थिसन्धिस्थैर्यकरश्च ( सुसू. १८.३ ) वेदनोपशान्तिकरोऽसृक्प्रसादनश्च ( सुसू. १८.२८ ) बन्धाः सङ्ख्यया पञ्चदश, तत्र कोशोऽङ्गुलिपर्वसु चर्मादिकृतः, स्वस्तिकः सन्धिकूर्चभ्रूस्तनान्तरकक्षाक्षिकपोलकर्णेषु, मुत्तोली ग्रीवामेढ्रयोः, चीनमपाङ्गयोः, दामः सम्बाधे ऽङ्गे वङ्क्षणादौ, अनुवेल्लितं शाखासु, खट्वा हनुसन्धिगण्डेषु, विबन्ध उदरोरूपृष्ठेषु, स्थगिकाऽङ्गुष्ठाङ्गुलीमेढ्राग्रमूत्रवृद्धिषु, वितानं मूर्धादौ पृथुलेऽङ्गे,उत्सङ्गोऽङ्गविशेषे लम्बिनि, बाह्वादौ गोष्फणा नासौष्ठचिबुकसक्थिषु, यमको यमलव्रणेषु, मण्डलं वृत्तेऽङ्गे, पञ्चाङ्गी जत्रूर्ध्वं च एषां सर्वेषां बन्धानां स्वनामानुगताकारत्वमवबोध्यम् ( असंसू. ३८.४२; अहृसू. २९.५९ )

**-विधमन**-वि., सन्ध्यादिबन्धान् विनाशयतीति (चसू. २६.४३)

**बन्धन**-न., संस्कार० पारदस्य पर्पटी खोटादिरूपः संस्कारः (र. १.३४)
मूषातदाच्छादनयोर्बन्धः (र. १०.५)
संहत्यापादनम् (सुसू. ४१.४ (२))
यन्त्रकर्म० रज्ज्वादिना बन्धनम् (सुसू. ७.१७; असंसू. ३४.२०)
ग्रहणम् (अहसू. २६.१७)
व्रणबन्धनादौ उपयुक्तं वस्त्रादि द्रव्यम् (अहसू. २९.५७) तत्राविकाजिनकौशेयमुष्णम्, क्षौमं शीतलम्, तूलसन्तानकार्पासस्नायुवल्कजं शीतोष्णम्, मेदःकफाधिके व्रणे ताम्रायस्त्रपुसीसानि, भङ्गे च चर्मवल्ककुशादि प्रयोज्यम् (अहसू. २९.५७)
स्रोतसां बन्धः (असंसू. २०.२०)

**-गुण**-वि., बन्धनमेव बन्धनरज्जुः, तत्सदृशगुणवान् शरीरे सिरा, कण्डरा मेदात्मकः कफात्मकश्चेति चत्वारो गुणाः (असंशा. ५.५३)

**-योग्या**-स्त्री., व्रणपट्टबन्धनाभ्यासः, सा पुस्तमयपुरुषाङ्गप्रत्यङ्गेषु कर्तव्या (सुसू. ९.४)

**बन्धुक**-पु., वनस्पति० बन्धूकः (र. ५.१७४)

**बन्धुजीव**-पु., वनस्पति० बन्धूकः (रापरि. १०.३५)
पुत्रजीवकः (चक्र. चचि. २३.२४३) मूलमस्य शिरोगतविषे नस्यार्थम् (चचि. २३.१८१) मध्याह्नपुष्पकः (ड.) पुष्पमस्य वमनोपयोगि (सुसू. ३९.३; असंसू. ८.५३) मध्याह्नविकाशिकुसुमम् (र.२२.६)

**-फल**-न., बन्धूकफलम्, वमनेन मूषकविषहरम् (असंउ. ४६)

**बन्धुजीवक**-पु., वनस्पति० बन्धूकः (असंसू. १४.३)

**बन्धुर**-पु., वनस्पति० ऋषभः (ध. १. १२५)

**बन्धूक**-पु., वनस्पति० सितासितपीतलोहितपुष्पविशेषाच्चतुर्विधः, तद्गुणाः-ज्वरविविधग्रहपिशाचशमनः-सवितृप्रसादनश्च (रापरि. १०.३५) पुष्पमस्य श्लेष्मलं ग्राहि (असंसू. १२.९०) विषसंसृष्टाञ्जनेऽञ्जनार्थमुपयुज्यते (सुक. १.७२)
हिं.—दुपहरिया, गेजुलिया.
**म.—दुपारी.**
गु.—बपोरिया.
बं.—बान्धुलि फुलेरगाछ.
त.—उचित्तिलकम्.

**-पुष्पक**-पु., वनस्पति० असनः (ध. ५.१२५)

**बब्बुल**-पु., वनस्पति० बब्बूलः (र. ५.१७४)

**बब्बूल**-पु., वनस्पति० बब्बूलः, तद्गुणाः-कषाय उष्णः कफपित्तहृदामरक्तातिसारदाहार्तिनाशनः कासघ्नश्च (रापरि. ८.१२; र. १७.५६)

**बब्भुल**-पु.. वनस्पति० बब्बूलः (असंसू. ३.२०)

**बभ्रु**-पु., पक्षि० प्रतुदजातीयः (चसू. २७.५१)
प्राणि० अतिलोमशः कुक्कुरः, पर्वतोपकण्ठे भवति (चसू. २७.३५)
बृहन्नकुलः (चसू. २७.३५) जाहकः, नकुलः (अह.) अच्छभल्लः (हे. अहसू. ६.४८)
गुहाशयप्राणी (ड. सुसू. ६.७२)
वि., कपिलपिङ्गलः (सुसू. ६.३५)

**-धातु**-पु., खनिज० सुवर्णगैरिकम् (रा. १३.२३३)

**-पित्त**-न., नकुलपित्तम् (असंसू. ८.१०७)

**-वर्ण**-पु., पिङ्गलवर्ण (असंसू. ४.५१)

**बभ्रू**-पु., वनस्पति० सुनिषण्णकः (रा. ४.२०६)
प्राणि० गुहाशयः (धपरि. ३.६)

**बरिहिष्ठ**-न., वनस्पति० वालकम् (सुचि. १८.२१)

**बरुक**-पु., कुधान्य० कोरदूषकादिगणोक्तमेकं धान्यम् (सुसू. ४६.२१)

**बर्बर**-पु., वनस्पति० भार्गी (रा. ६.९५)
बर्बरगुणाः- कटुक उष्णः सुगन्धिर्विसर्पविषत्वग्दोषवान्तिनाशनश्च (रापरि. १०.४८)

**(बर्बरा)**-स्त्री., वनस्पति० अजगन्धा (ध. २.१००)
न., वनस्पति० कालीयकम् (रा. १२.१५)
बोलम् (ध. ३.६२)
खनिज० हिङ्गुलम् (रा. १३.४७)
चन्दनभेदः, बर्बरगुणाः- शीतलं तिक्तं त्रिदोषघ्नं कुष्ठकण्डूव्रणघ्नं विशेषाद् रक्तदोषघ्नम् (रा. १२.१७)
वि., कृष्णवर्णम् (र. ५.१९६)

**बर्बरक**-न., चन्दन० बर्बरम् (रा. १२.१७)

**बर्बरिक**-न., चन्दन० बर्बरम् (ध. ३.९)

**बर्बरोत्थ**-न., चन्दनभेदः बर्बरम् (रा. १२.१७)

**बर्बरोद्भव**-न., चन्दनभेदः बर्बरम् (ध. ३.९)

**बर्बुर**-पु.. वनस्पति० बब्बूलः (रापरि. ८.१२)

**(बर्बुरा)**-स्त्री., वनस्पति० तरटी (रापरि. ८.३२)

**बर्बूर**-पु., वनस्पति० बब्बूलः (र. १७.६९-७५)

**(बर्बूरी)**-स्त्री., वनस्पति० बब्बूलः (र. ३.१३१)

**बर्ह**-न., पिच्छम् (ड. सुक. ८.७२)

**बर्हण**-न., वनस्पति० तगरम् (रा. १०.१०२; असंसू. ८.२९)

**बर्हि**–पु., वनस्पति० कुशः ( ध. ४.१३३ )
**बर्हिन्**–पु., पक्षि० मयूरः ( चसू. २७.४८ )
**( बर्हि )–चूड**–न., सुगन्धिद्रव्य० स्थौणेयम् ( ध. ३.६९ )
–**( चूडा )**–स्त्री., वनस्पति०तद्गुणाः–स्वादुर्वश्यकर्मणि शस्ता मूत्रकृच्छ्रविनाशिनी बालग्रहादिदोषघ्नी च ( रापरि. ५.१३ )
–**जङ्घ**–पु., वनस्पति० टिण्टुकः ( रा. ९.१४३ )
–**पत्रभस्मन्**–न., मयूरपिच्छभस्म, इदं हिक्काशमनार्थं लेह्यम् ( सुउ. ५०.२० )
–**पित्त**–न., भैषज्य० मयूरपित्तम्, सर्वविषशमनार्थमुपयुज्यते ( चचि. २३.२१७ ) श्वित्रे लेपार्थमुपयुज्यते ( चचि. ७.१७० ) नेत्ररोगेषूपयुज्यते ( असंउ. १६ ) द्र० 'मयूर'
–**पुष्प**–न., वनस्पति० शिरीषः ( रा. ९.१८८ )
–**शब्द**–पु., बर्हिसंज्ञा नाम मयूराभिधानम् ( चचि. ८.१५० )
–**शिख**–न., सुगन्धि० स्थौणेयम् ( रा. १२.१२५ )
**बर्हिण**–पु., पक्षि० मयूरः ( सुचि. ३५.७ )
**बर्हिणाण्ड**–पु., मयूर्या अण्डम्, वाजीकरणार्थमुपयुज्यते ( असंउ. ५० )
**बर्हिष**–पु., पक्षि० मयूरः ( असंशा. ३.३६ )
वनस्पति० अपामार्गः ( असंशा. ३.३६ )
**बर्हिष्ट**–न., वनस्पति० नेत्रवालकम्, कफज्वरहरतैलोक्त द्रव्यम् ( काखिल. ११.१३६ )
**बर्हिष्ठ**–न., वनस्पति० वालकम् ( ड. ) श्लेष्माभिष्यन्देऽनुलेपार्थमुपयुज्यते ( सुउ. ११.६ )
**बल**–पु., भैषज्य० नखम् ( रा. १२.१०७ )
**( बला )**–स्त्री., वनस्पति० बल्यगणोक्तमेकं द्रव्यम् ( चसू. ४.१० ) साङ्ग्राहिकबल्यवातहराणां श्रेष्ठा ( चसू. २५.४०; असंसू. १३.३ ) सरक्तपवने प्रदेहोपयुक्ता ( चसू. ३.२१ ) मूलमस्या आस्थापने उपयुज्यते ( चसू.२.१२ ) तद्गुणाः–मधुरा अतितिक्ता ( रा. ) शीता, स्निग्धा वृष्या बल्या, ओजोवर्धिनी त्रिदोषघ्नी ( पित्तघ्नी रा. ) रक्तपित्तक्षयातिसारकफरोगघ्नी च ( ध. १.२८० )
हिं.—खिरैटी.
**म. –लघुचिकणा.**
गु.—बलादाणा.
बं.—वेडेला.
त.—चिनामुद्दि.

शाक० वातघ्न्यतिसारजिच्च ( असंसू. ७.१४८ )
मध्यमपञ्चमूलेष्वेकम्, वाट्यालकः ( हे अहृसू. ६.१६९ )
वनस्पति० ताम्बूली ( धपरि. ३.१ )
आर्तगला ( रा. १०७.४१ )
राजबला ( रा. ४.४३३ )
जटामांसी ( र. २९.७१ )
खनिज० कांस्यम् ( ध. ६.२३ )
न., हृदि स्थितमोजः, सप्तधातुधामभूतम् ( ड. सुउ. ४१.१९ )
उत्साहः ( ड. सुचि. ३३.२७ )
देहोपचयः ( सुचि. २६.३९ )
प्राणः ( अरु. अहृसू. २.१६ )
सामर्थ्यम् क्रियानिर्वर्तनक्षमता ( चसू. १३.१७; सुसू. ५.२५ ) बलं व्यायामशक्त्या परीक्षेत ( चवि. ४.८ ) बलं त्रिविधं सहजं कालकृतं युक्तिकृतं च, सहजं देहसत्त्वयोः प्राकृतम्, कालकृतं ऋतुविभागजं वयःकृतं च, युक्तिकृतमाहारविहारोत्थमूर्जस्करं योगजं च ( असंशा. ८.२८ )
विसर्गादानोपलक्षितकालकृतं च बलं हेमन्तशिशिरयोश्चाग्र्यम्, शरद्वसन्तयोर्मध्यम्, वर्षानिदाघयोर्हीनं च ( असंसू ४.४ )
–**करण**–न., बलस्य वर्धनम्, शक्त्युपचयः ( सुसू. ११.१५ )
–**क्षय**–पु., लक्षण० ओजोहानिः (सुसू. १५.२३,२८) त्रिविधबलहानिः ( सुउ. ३९.१०५)
–**त्रिक**–न., त्रिविधं शारीरं बलम् प्रवरावरमध्यभेदात् ( चचि. २४.६८ )
–**त्रैविध्य**–न., हीनमध्योत्तमभेदात् त्रिप्रकारकं बलम् ( चक. १२.६० )
–**द**–पु., वनस्पति० जीवकः ( रा. ५.११५ )
–**दा**–स्त्री., वनस्पति० अश्वगन्धा ( रा. ४.४०१ )
–**दान**–न., सामर्थ्याधानम् ( अहृसू. १२.१२ )
–**देवा**–स्त्री. वनस्पति० त्रायमाणा ( ध. १.२५४ )
–**नख**–न., भैषज्य० व्याघ्रनखम् ( रा. १२.११० )
–**पति**–पु., देव० इन्द्रः ( सुसू. ५.२५ )
–**प्रणाश**–पु., लक्षण० शक्तिहानिः ( चसू. १६.१५)
–**भद्र**–पु., वनस्पति० कदम्बभेदः, धूलीकदम्बः ( रा. ९.१७३ ) द्र० 'कदम्ब'
–**भद्रा**–स्त्री., वनस्पति० त्रायमाणा ( ध. १.२५४ )
–**भ्रंश**–पु. लक्षण० शक्तिनाशः ( अहृसू. १३.२३ )
–**वत्**–वि., उपचयशक्तिलक्षणोभययुक्तः ( सुचि. ५.६)

सर्वक्लेशसहः ( सुसू. ३४.२४ ) मनोबलयुक्तः, सत्त्वभूयिष्ठः ( सुचि. ६.४ )

(**-वती**) स्त्री., वनस्पति० एलाभेदः, सूक्ष्मैला ( रा. ६.६८ ) द्र० ' एला '

**-वद्विग्रह**-पु., बलिना सह युद्धम् ( सुसू. २६.६ )

**-वर्णहानि**-स्त्री., बलवर्णयोर्नाशः ( चशा. ४.२२ )

**-वर्धन**-वि., सामर्थ्यवृद्धिकृत् ( चसू. १.८७; चसू. ३०.१५ )

**-विभ्रंश**-पु., लक्षण० बलनाशः ( सुचि. ३४.७ )

**-विस्रंस**-पु., लक्षण० बलहानिः( सुसू. १५.२५ )

**-व्यापद्**-स्त्री., बलस्यापचयः ( ड. सुउ. ३९.१२५ ) तल्लक्षणम्- गुरुत्वमङ्गेषु स्तब्धता ग्लानिर्वर्णभेदनं तन्द्रा निद्रा वातशोफश्च ( सुसू. १५.२७ )

**-संक्षय**-पु., लक्षण० शक्तिह्रासः ( अहृसू. ७.२४ )

**-संधान**-वि., शक्तिकरम्, शरीरस्य बलेन सह सन्धानं संहतिं योगं वा करोतीति ( चसू. ५.९४ )

**-संभव**-पु., धान्य० व्रीहिः (रा. १६.१०१)

**-समाधान**-वि., बलेन सम्यगाधीयते धार्यते इति ( चनि. ६.५ )

**-साम्य**-न., बलस्य तुल्यता ( चसू. २६.७३ )

**-ह्रास**-पु., लक्षण० शक्तिक्षयः ( चचि. ३०.२४२ )

**बला**-स्त्री., ( ध.१.२८० )

**-जल**-न., बलासिद्धं शीतजलम् पित्तरक्तशमनमिदम् ( चचि. ४.७८ )

**-तैल**-न., तैल० बलागुडूचीरास्नाशटीसरलादिनिर्मितं तैलम्, तच्छ्वासकासज्वरहिक्काच्छर्दिगुल्मक्षतक्षयप्लीहशोषापस्मारालक्ष्मीघ्नं वातव्याधिविनाशनं च (चचि. २८.१४८-१५६) धन्वन्तरिसम्मतमिदं तैलं सूतिकाकृशशिशुव्रतित्रयःसुकुमारशूलिमहाग्रहगृहीतदीर्घरोगक्षपितवपुर्मर्मविद्धपतिताभिहतभग्नविश्लिष्टदेहिनां पाननावनाभ्यङ्गबस्तिषु प्रयोज्यम्, एतत् पौरुषस्मृत्यग्निमेधावीर्यौजोवर्धनम्, आक्षेपकार्धकादिविविधवातविकारनुदन्त्रवृद्धिनुद् वन्ध्यानां पुत्रदं च (असंशा. ४.५१; असंशा.३.३८; सुचि. १५.२९-३९ ) मृदिते गुह्यरोगे सेचनार्थम् ( असंउ. ३९ ) अशीतिवातविकारविंशतियोनिदोषरजोदोषग्रहशमनम् ( काधात्रीचि. ) शतपाकं बलातैलं वन्ध्यानां बस्त्यर्थमुपयुज्यते(सुचि.३८.८९) शतपाकं सहस्रपाकं वा बलातैलं जीवनं बृंहणं स्वर्यमिन्द्रियप्रसादनं वातासृग्वातरोगनुच्छुक्रासृग्दोषनाशनं श्रेष्ठं रसायनं च ( चचि. २९.११९१-२० )

**-त्रय**-न., वनस्पति० बलाऽतिबला, नागबला च ( अहृसू. १०.२३ ) तद्गुणाः-स्वादु वृष्यं स्निग्धं शीतं बलप्रदं च ( असंसू. १२.८२ )

**-द्वय**-न., बलाऽतिबला च, एतद् वायुं नाशयति ( अहृसू. १५.५ )

**-पञ्चक**-न., बलाऽतिबला नागबला महाबला राजबला च, पञ्चकमेतन्मधुरं स्निग्धं ग्राहि बल्यं वृष्यमायुष्यं पित्तवातघ्नं मूत्रकृच्छ्ररक्तप्रदरघ्नं च ( ध. १.२८७ )

**-मूल**-न., बलाया मूलम् अक्षप्रमाणोपसेवितमिदं पाण्डुरोगशमनमेतत् ( सुउ. ४४.२६ )

**-यूष**-पु., कल्प० बलातिबलाकृतः, वातघ्नोऽयम् ( काखिल. ४.५३ )

**-रसायन**-न., योग० कुटीप्रावेशिके बलामूलम् अर्धपलं पलं वा पयसाऽऽलोडितं सेव्यम्, बलकामानां शोषिणां रक्तपित्तिनां शोणितोद्वमिनां विरिच्यमाणानां च सेव्यत्वेन प्रशस्तम्(सुचि२७.१०)

**बलाका**-स्त्री., पक्षि० प्लवजातीया, सङ्घातचारिणी पवनकफप्राया (चक. १.८; सुसू. ४६.१०५ ) इयं वारुण्या कुल्माषैश्च सह संयोगेन सेवने विरुद्धा (चसू. २६.८४;सुसू.२०.१३;अहृसू.७.४२)

**-भव**-वि., बलाकायां भवं जायमानं बलाकासम्बन्धि (पक्षादि) ( सुचि २५.३० )

**-भवपत्र**-न., बलाकापक्षं इदं सम्यक्सिद्धतैलपरीक्षणोपयोगि, तैले न्यस्तं नीलवर्णं भवेत् तदा तत् तैलं सम्यक्सिध्दमिति ज्ञेयम् ( सुचि. २५.३० )

**बलाकास्थि**- न., बलाकाया अस्थि, एतदीयो धूपो विषघ्नः ( असंसू. ८.११९ )

**बलाढ्य**-पु., वनस्पति० माषः ( ध. ६.९९ )

**( बलाढ्या )**-स्त्री., वनस्पति० बला ( रा. ४.४२२ )

**बलादिघृत**-न., घृत० बलास्थिरादिसिद्धं सर्पिः, ज्वरकासघ्नं स्वर्यं चैतत् ( चचि. ८.११४-११६ )

**बलादिसर्पिस्**-न., घृत० बलाकोलादिनिर्मितं घृतम्, मूत्रदोषहरमेतत् ( सुउ. ५८.५८-६२ )

**बलाधान**-न., शक्तिसम्प्राप्तिः, बलप्राप्तिः, शक्त्याधानम् ( चक. १२.४७ )

**बलाधिष्ठान**-वि., बलमधिष्ठानं यस्य तद् (आरोग्यादि) ( चचि. ३.१४२ )

**बलामोटा**-स्त्री., वनस्पति० जयन्ती, तद्गुणाः-तिक्ता कटुरुष्णा कण्ठविशोधनी त्रिदोषघ्नी विषगलगण्डभूतघ्नी च ( धपरि. ४.१ ) कृष्णा बलामोटा रसायनी ( रा. ४.२ )

हिं.—जैत.
म.—शेवरी.
बं.—जन्ती.
त.—पीनारिचंकु.

**बलार्धलक्षण**–न., अर्धशक्तेर्व्यायामस्य लक्षणम्; यदा हृदि स्थानस्थितो वायुर्वक्त्रं प्रपद्यते तद् बलार्धलक्षणम् ( सुचि. २४.४७-७८ ) कक्षाललाटनासासु हस्तपादादिसन्धिषु प्रस्वेदो मुखशोषश्च तद् बलार्धलक्षणम् ( ड. सुचि. २४.४७ )

**बलाश**–पु., रोग० गलरोगः बलासः ( मा. मुखरोगनि. )

**बलास**–पु., दोषः, कफः ( सुउ. ६१.३३; असंसू. २८.१५ )
गलरोगः, तत्सम्प्राप्तिलक्षणम्–प्रवृद्धौ श्लेष्मानिलौ गले श्वासरुजोपपन्नं मर्मच्छिदं दुस्तरं शोफं कुरुतः, तेन कण्ठोपघातो भवति (सुनि. १६.५४; र. ३.९०)

–**क्षतजप्रसूत**–वि., श्लेष्मरक्तसम्भवं ( श्वयथ्वादि ) ( सुनि. १६.५५ )

–**ग्रथित**–न., नेत्ररोग० कफजोऽयम्, तल्लक्षणम्–नेत्रस्य सिते भागे कांस्याभोऽम्बुबिन्दुतुल्यो मृदुः अरुजः शोफो भवति ( सुउ. ४.९ ) स सवर्णो बहलो गुरुः स्निग्धश्चेति ( असंउ. १३ ) साध्योऽयम् ( सुउ. ४.४-९ )

–**जित्**–वि., कफघ्नो गणः, आरग्वधादिरर्कादिर्मुष्ककादिरसनादिर्मुस्तादिर्वत्सकादिः सुरसादिश्च ( अहृसू. १५.७ )

–**प्रकृति**–वि., कफप्रकृतिकः ( सुशा. ४.७४ )

**बलासक**–पु., विंशतिश्लेष्मविकारेष्वेकः, श्लेष्मोद्रेकान्मन्दज्वरितत्वम् ( चसू. २०.१७ )
बलक्षयः ( चसू. २०.१७ )
नेत्ररोग० बलासग्रथितम्, अस्य विदेहोक्तं लक्षणम्–मारुतात् पीडितः श्लेष्मा शुक्लभागे व्यवस्थितो जलबिन्दुरिवोच्छूनो मृदुश्च भवति ( सुउ. ४.९ )

**बलासावतत**–वि., श्लेष्मच्छन्नम् ( सुउ. ४३.८ )

**बलाहक**–पु., सर्प० दर्वीकरः ( सुक. ४.३४ (१) )

**बलाहलक**–न., कन्दविषम् ( असंउ. ४० )

**बलाह्वया**–स्त्री., वनस्पति० बला ( रा. ४.४३२ )

**बलोत्तरा**–स्त्री., वनस्पति० बला ( रा. ४.४३२ )

**बलि**–पु., व्यालाचार्यचन्द्रसेनादीनां प्राचीनरसाचार्याणामेकतमः ( र. ६.४९ )
नृप० वामनेन पाताले निहितो राजा ( र. ३.१८ )
खनिज० गन्धकः ( र. २.९४ )



अथर्ववेदे प्रोक्तानां चिकित्साविशेषाणामेकतमः, आहुतिः ( चसू. ३०.२१ )
पूजोपहारः, बल्यते दीयते देवतायै इति बलिः ( सुसू. ५.७ )
सपशुनैवेद्यः ( ड. सुक. ५.१२ )

–**भुज्**–वि., बलिं भुङ्क्ते इति बलिभुक् ( वायसादिः ) ( चइ. ११.४ )

–**भू**–स्त्री., पशुहननस्थानम् ( असंसू. ३.४४ )

–**भृत्**–वि., बलिं विधिवद्दत्तमन्नं बिभर्ति पोषणार्थे धारयति इति बलिभृत् नाम बलिभुक् (वायसादिः) ( चइ. ११.४ )

–**वत्सा**–स्त्री., खनिज० गन्धकः ( ध.३.१०९ )

–**वसा**–स्त्री., खनिज० गन्धकः ( र. ३.१९ )

**बलिका**–स्त्री., वनस्पति० अतिबला ( ध. १.२८६ )

**बलिन्**–वि., शक्त्युपचययुक्तः ( सुसू. ४६.४४५; अहृसू. २७.१८ )
खनिज० गन्धकः ( र. ३.९०; ध. ३.१०९ )
वनस्पति० कुन्दुरुः ( ध. ३.१३१ )

**बलीवर्द**–पु., पशु० वृषभः ( ध.६.४०५ )

**बल्य**–वि., बलाय नाम बलवृद्धये हितं तद् बलकरम्, बलवर्धनम् (चसू. १.१०७; र. २.३) ऐन्द्र्यृषभ्यतिरसर्ष्यप्रोक्ता पयस्याऽश्वगन्धा स्थिरा रोहिणी बलाऽतिबला चेति दशेमानि बल्यानि (चसू.४.१०)

( **बल्या** )–स्त्री., वनस्पति० अतिबला ( रा. ४.४३० )
बला ( रा. ४.४३२ )
अश्वगन्धा ( ध. १.२७२ )
प्रसारणी ( रा. ५.४३५ )

–**दशक**–पु., बलकरो दशौषधगणः, ऐन्द्र्यतिरसापयस्यादिः ( असंसू. १५.१२ )

**बल्वज**–पु., तृणविशेषः ( चशा. ८.३४; सुशा. ५.४९ )

( **बल्वजा** )–स्त्री., वनस्पति० तद्गुणाः–मधुरा शीता वातकोपनी रुच्या कण्ठशुद्धिकरी पित्तघ्नी पित्तदाहतृषापहा च ( रापरि. ८.४० )

**बस्त**–पु., पशु० ग्राम्यवर्गीय अजः, मेषः ( सुसू. ४६.८५; र. २१.६० )

–**कर्ण**–पु., वनस्पति० सर्जकः ( ध. ५.१२३ )

–**गन्धा**–स्त्री., वनस्पति० अजगन्धा (सुचि. ३७.१६) ध. २.१००; असंसू. ७.१५८ )
बोधयिका ( ड. सुउ. ३४.६ )
बोबयिका ( ड. सुउ. २१.६ )

–**गन्धित्व**–न., लक्षण० बृहत्तमबस्तसमानगन्धित्वम्, इदमश्मर्यामेकं पूर्वरूपम् ( सुनि. ३.५ )

**–मार**–पु., छगलवन्मरणम्, ग्रीवावमोटनेनाशुतम-मक्लिष्टमरणम् ( सुनि. ८.१४ )

**–मूत्र**–न., छागमूत्रम् ( सुचि. १२.४ )

**–मोदा**–स्त्री., वनस्पति० अजमोदा ( ध. २.९८ )

**–शिरस्**–न., छागमस्तकम् ( चसू. १४.२९ ) बस्त-शिरसः क्काथो नाडीस्वेदार्थमुपयुक्तः (चचि. ८.७३)

**बस्ताण्ड**–पु., न., छागाण्डम्, बस्तस्य वृषणः ( सुचि. २६.१८ ) वाजीकरणार्थमुपयुज्यते ( असंउ. ५० )

**बस्तान्त्रि**–स्त्री., वनस्पति० ( ध. परि. १.१ ) ( अरु. अहृसू. १५.४५ )

वृद्धदारुकः ( हे. अहृसू. १५.४५ )

बस्तान्त्रीगुणाः–तिक्ता कषाया मधुरा कटुः शीता लघुर्वातकोपनी बीजदा गर्भजननी कासघ्नी च

हिं.—बोकडी.

**म.—बोकडी.**

गु.—पुंगळ.

( रा. ३.३ )

वृषगन्धा ( अरु. अहृसू. १५.४५ )

**बस्ति**–पु., शारीर० पञ्चदशकोष्ठाङ्गेष्वेकम् (चशा. ७.१०) दशप्राणायतनेष्वेकम् ( चशा ७.९ ) विश्रामस्थानम् मूत्रवहानां स्रोतसां मूलम् ( चवि. ५.८ ) आशयः, मूत्राधारः, सर्वेषां मूत्ररोगाणामधिष्ठानम्, स चाधोमुखोऽपि मूत्रवहनाडीषु सूक्ष्ममुखसहस्र-निष्यन्देन मूत्राख्येनाविरतं नवो घट इवाप्सु निमग्नमुखोऽपि पार्श्वेभ्योऽम्भसा पूर्यते तैरेव च स्रोतोभिर्वातादयोऽपि दुष्टाः प्रविश्य बस्तिं यथास्वमाधातान् प्रमेहांश्च जनयन्ति (असंनि. ९.५) शुक्रवाहिस्रोतोभिः स्वकं शुक्रं विलीनं स्वस्थानाद् विच्युतं बस्तौ सम्भृत्य बहिर्निर्याति (चचि. १५.३५) बस्तिदेशः, अयं नाभिपृष्ठकटीमुष्कगुदवङ्क्षणशेफसां मध्येऽलाब्वाकृतिः शिरास्नायुपरिग्रहस्तनुत्वक्को-ऽधोमुख एकद्वारश्च (सुनि. ३.१८-२०) रक्तश्लेष्म-प्रसादाद् बस्तिः (सुशा. ४.२६-२७) तस्मिन्नभिहते सति वातमूत्रवर्चोनिग्रहवङ्क्षणमेहनबस्तिशूल-कुण्डलोदावर्तादयो भवन्ति ( चसि. ९.६ )

मर्म० अल्पमांसशोणितोऽभ्यन्तरतः कट्यां मूत्राशयो बस्तिर्नाम, स्थानत उदरमर्म जातितः स्नायुमर्म, सङ्ख्ययैकं, मानतश्चतुरङ्गुलम्, सद्यःप्राणहरं च, तस्मिन्नश्मरीव्रणादृते विद्धे सद्योमरणम्, अश्मरी-निमित्तेऽप्युभयतो भिन्ने न जीवति, एकतो भिन्ने मूत्रस्रावी व्रणो भवति यत्नेनोपक्रान्तो रोहति च ( सुशा. ६.६.,२५; असंशा. ७.९ )

यन्त्र० मूत्राशयपुटकम् ( चक. चसि. ३.१० ) मूत्रपुटकम् ( ड. सुसू. ९.४ )

उपक्रम० व्रणस्य षष्ट्युपक्रमेष्वेकः ( सुचि. १.८ ) गुदेन भेषजयुक्तजलस्य पक्वाशये उत्क्षेपणं तथा च पक्वाशयस्यान्तःपरिमार्जनम् ( चवि. ६.१६ ) वातहराणां श्रेष्ठः, तन्त्राणां श्रेष्ठः ( चसू. २५.४० ) यन्त्राणां श्रेष्ठः ( असंसू. १३.३ )

वातविकाराणां प्रधानोपक्रमः, अशीतिवातविका-राणां हन्तेत्ययं चिकित्सार्धो मतः, मारुतं पित्त-श्लेष्मविड्सहितं समूलमसौ हन्तीति संपूर्णोऽपि चिकित्सेति कायचिकित्सिते ( अहृसू. १९.८५-८६; असंसू. ३६.४ )

तन्निरुक्तिः– एणजरद्गवशूकराऽजाऽविगोमहिषादीनां मूत्राधारः तदाधारं कषायाद्यौषधिद्रव्यं च ( सुचि. ३५.१ ) बस्तिगुणा :– स्नेहादिसर्वकर्मसु बस्तिकर्म प्रधानतमम्, नानाविधद्रव्यसंयोगाद् दोषाणां संशमनसङ्ग्रहणानि करोति, क्षीणशुक्रं वाजीकरोति, कृशं बृंहयति, स्थूलं कर्शयति, चक्षुः प्रीणयति, वलीपलितमपहन्ति वयः स्थापयति च । अग्निबलवर्णमेधास्वरायुःसुखप्रदः पङ्गुरुग्णभग्न-स्तम्भशूलारोचकपरिकर्तिकादिषु हितः ( सुचि. ३५.३-४; असंसू. २८.४ ) दोषधातूनां एकलोलीभावेऽप्यसौ दोषान् निर्हरति न धातून् ( अरु. अहृसू. १९.८४ ) विधिनास्य सेवनाद् रसायनफलं लभते ( सुचि. ३७.७५ )

बस्तिप्रकाराः– नैरूहिकस्नैहिकभेदाद् द्विविधः ( सुचि. ३५.१८ ) आस्थापनानुवासनोत्तरभेदात् त्रिविधः ( असंसू. २८.५ ) कर्मकालयोगभेदाच्च त्रिप्रकारकः ( अहृसू. १९.६३ ) दोषाणामुत्क्लेशन-शोधनशमनभेदात् कल्पनया त्रिविधो बस्तिः (अहृसू. १९.६१; असंसू. २८.५३) शोधनलेखन-वाजीकरणबृंहणग्राहियापनादिभेदात् तत्तत्कर्मकरा बस्तयः ( चसि. १२.१६; सुचि. ३८.८१-८७ ) पयस्कराश्च ( कासू. १९ )

बस्तियोजना– सत्त्वभेदेनोत्तममध्यमहीनेषु क्रमा-त्तीक्ष्णमध्यमृदुभेदतस्त्रिधा ( सुचि. ३८.९० )

कालतः– शीते तीक्ष्णः, उष्णे मृदुः, वसन्त-शरदोर्मध्यमः, दोषतः– कफवाते तीक्ष्णः, पित्तरक्ते मृदुः, कफपित्ते मध्यमश्च ( सुचि. ३८.९१ )

बस्तियोग्याः— ज्वरातिसारतिमिरप्रतिश्यायशिरोरोगाऽधिमन्थाऽर्दिताऽऽक्षेपकपक्षाघातैकाङ्गरोगसर्वाङ्गरोगाऽऽध्मानोदरशुक्रार्तवस्तन्यनाशहृदामयमन्याहनुग्रहमूढगर्भप्रभृतिष्वत्यर्थमुपयुज्यते। तथा वातपित्तकफरक्तेषु संसर्गे सन्निपातेऽपि च हितकरो भवति ( सुचि. ३५.५-६ ) बस्तिनेत्रं तत्साधारणरूपं च—जारद्गवहरिणशूकराजाविगोमहिषादिष्वन्यतमजं स्नेहमुद्गविमृदितं विगतच्छिद्रशिराग्रन्थिस्कन्धं नातिवर्तुलं मृदु दृढं कषायरक्तं सुखसंस्थाप्यौषधप्रमाणं न्युब्जं विवृताननं बस्तिं विवेश्य कर्णिकयोर्दृढेन सूत्रेण घनं समं च बध्वा परिवर्त्य पुनश्चान्यद्बस्तिमुखबन्धनार्थं सूत्रमुपधायानुगुप्तं निधापयेत् ( चसि. ३.१०-११; सुचि. ३५.१३-१७; असंसू. २८.२० ) बाल्यादिमानतस्तन्नेत्रप्रमाणम्—षड्द्वादशविंशतिवर्षजातानां षडष्टद्वादशाङ्गुलसम्मितानि मुद्गसतीनकर्कन्धुवाहिच्छिद्राणि बस्तिनेत्राणि स्युः ( चसि. ३.८; सुचि. ३५.७-९ ) बस्तिप्रदानकालः— अह्नि बस्तिप्रदानं गुणकरम्, तदा दोषाः स्थानस्था भवन्ति। शरीरं च विवृतस्रोतोमुखं भवति। वह्निश्चान्नरसान्वितो भवति, ततो बस्तिद्रव्यं शरीरमनुक्रामति। बस्तिर्निषिद्धो रात्रौ, तदा प्रयुक्ते ज्वराध्मानगौरवादयो भवन्ति ( सुचि. ३७.४७-४८ )बस्तिप्रदानविधिः— तैलाक्तगात्रस्य कृतमूत्र विट्कस्य नातिक्षुधार्तस्य मनुष्यस्य समे ईषन्नतमस्तके वा नात्युच्छ्रिते स्वास्तरणोपपन्ने शयने सव्येन पार्श्वेन स्वभुजोपधानं कृत्वा सुखं शयानस्य वामं सक्थि प्रसार्य दक्षिणं सङ्कोच्य स्निग्धे गुदे स्निग्धं नेत्रचतुर्थभागं प्रणयेत्। दत्तं नेत्रं प्रपीड्य च शनैरेव ततोऽपकर्षेत् ( चसि. ३.१३-१९ ) बस्तिशीलनविधिः— अनुवासनेऽत्यभ्यस्तेऽग्निवधोत्क्लेशौ स्याताम्, निरूहेऽत्यभ्यस्ते वातजा गदा भवेयुःतस्मान्नैकमतिशीलयेत्(ड.सुचि३७.७७-७८) बस्तौ परिहार्याणि-क्रोधो मैथुनं दिवास्वाप उच्चैः सम्भाषणं यानयानं चिरासनमतिचङ्क्रमणं शीतसेवाविरुद्धाध्यशनमसात्म्यभोजनादीनि ( सुचि. ३९.२५-३७ ) बस्तिकल्पः— तत्संयोजनविधिः— अक्षप्रमाणं सैन्धवं प्रसृतद्वयमानं मधु स्नेहं च पात्रे तलेन शनैः शनैर्मथ्नीयात्। सुमथिते मदनफलेन वातादिपूचितानां सर्वद्रव्याणां पलत्रयमानं कल्कं दद्यात्। अनन्तरमन्यस्मिन् गम्भीरे भाजने तत् सर्वमपि खजेन मथ्नीयात्। तत्र पञ्चप्रसृतमानं कषायं दापयेत्। दोषावस्थामवेक्ष्य रसक्षीराम्लमूत्राणामुपयोगः कार्यः, कल्पोऽसौ न तनुर्न सान्द्रश्च विधेयः। सम्यक् सिद्धोऽयं कल्पो मूत्रं पटुत्वं कुरुते, वीर्यं चोद्भावयति स्रोतोभ्यः कफमारुतौ विष्यन्दयति पित्तं हरति च। असम्यङ्मथितो बस्तिर्नार्थाय कल्पते (सुचि.३८.३३-३६ काखिल.८.४०-४६)वातादिदोषतो बस्तिसङ्ख्या-कफजे विकारे एकं त्रीन् वा, पित्तात्मके पञ्च सप्त वा, वाते नवैकादश वा अयुग्मान् बस्तीन् दद्यात् ( चसि. १.२५ ) बस्तिप्रशस्तिः-ये स्तब्धाः सङ्कुचिताः पङ्गवो भग्नरुग्णा येषां शाखासु वाताश्चरन्ति तत्र तथाऽऽध्मापने विग्रथिते पुरीषे शूले भक्तानभिनन्दने च बस्तिः प्रशस्तः, या वातकृतोपसर्गाः स्त्रियो गर्भं न गृह्णन्ति तासु, क्षीणेन्द्रियेषु कृशेषु नरेषु च बस्तिरेव परमं प्रशस्तः, किंचासौ कायचिकित्सिते संपूर्णा चिकित्सेत्युच्यते ( चसि. १.३२-३४ )

**-कर्मन्**—न., मूत्राधारपुटकेन क्रियमाणा चिकित्सा ( सुचि. ३५.३ )

**-कर्मविभ्रम**—पु., बस्तिकर्मणि प्रमादः, अनेनार्शः समुत्पद्यते ( चचि. १४.९ )

**-कुण्डल**—न., रोग० त्रयोदशबस्तिविकारेष्वेकः, द्रुताध्वलङ्घनादिभिः स्वस्थानादुद्वृत्तो बस्तिः स्थूलो गर्भवच्च तिष्ठति, तत्र शूलस्पन्दनदाहाश्च भवन्ति, बस्तिर्बिन्दुं बिन्दुं स्रवति, पीडितस्तु संस्तम्भोद्वेष्टनार्तियुक्तः सन् धारां सृजेत्, अयं शस्त्रविषोपमो घोरो व्याधिः, तत्र पित्तान्विते बस्तिकुण्डले दाहः शूलं मूत्रविवर्णता च भवति। तथा श्लेष्मान्विते गौरवं शोफो मूत्रं घनं सितं स्निग्धं च भवति ( चसि. ९.४४-४७ )

**-जविद्रधि**—स्त्री., बस्तिप्रदेशे जातायां विद्रधौ कृच्छ्रपूतिमूत्रवर्चस्त्वं भवति ( चसू. १७. १०१ )

**-दान**—न., बस्तिप्रदानम् ( चसि. ३.२४ )

**-दारण**—न., मूत्राशयस्फुटनम्, बस्तिदारणवद्वेदना ( सुनि. ३.८ )

**-दूषण**—वि., बस्तिं दूषयति इति बस्तिदूषणं नाम मूत्राशये वातादिप्रकोपकारि ( सुसू. ४५.१६९ )

**-दोष**—पु., बस्तियन्त्रस्य आशयदोषः स पञ्चधा— बहलताऽल्पता सच्छिद्रता प्रस्तीर्णता दुर्बद्धतेति ( सुचि. ३५.३२ ) मांसलस्निग्धविषमजालवत्स्थूल-

वातलच्छिन्नक्लिन्नाश्चेत्यष्टौ दोषाः, तेभ्योगतिवैषम्य-दौर्गन्ध्यजिह्मत्वस्नुतिदुर्ग्रहफेनिलव्युत्सधार्यत्वानि भवन्ति ( चसि. ५.६-७; असंक. ७ )

**–द्रव्यदोष**–पु., बस्तिद्रव्यगतदोषः, स चैकादशधा–आमता हीनताऽतिमात्रताऽतिशीतताऽत्युष्णताऽति-तीक्ष्णताऽतिमृदुताऽतिस्निग्धताऽतिरूक्षताऽति-सान्द्रताऽतिद्रवता चेति (सुचि. ३५.३२)

**–द्वार**–न., बस्तिसमीपम् ( अहशा. २.५३ ) मूत्राशयद्वारम् ( सुशा. ४.२२ )

**–निबन्धन**–वि., बस्तिनिबन्धनप्रयोजनकम् ( चक्र. चसि-३.१० )

**–निस्तोद**–पु., रोगलक्षण० बस्तिप्रदेशे व्यथा ( अहसू. ११.१३ )

**–नेत्र**–न., बस्तिनलिका ( सुचि. ३५.१२ )

**–नेत्रदोष**–पु., बस्तिनलिकागतदोषः, सोऽष्टधा–ह्रस्व-दीर्घ-तनु-स्थूल-जीर्ण–शिथिलबन्धन–पार्श्व-च्छिद्रवक्रभेदात्, तेभ्यःक्रमात् स्नेहस्याप्राप्तिरतिप्राप्तिः क्षोभश्च कर्षणं क्षणनं स्रवो गुदपीडा स्नेहस्य जिह्मा गतिश्चेत्यष्टौ व्यापदो भवन्ति (चसि. ५.४;असंक. ७) सुश्रुते एकादश नेत्रदोषाः– अतिस्थूलं कर्कशम-वनतमणुभिन्नं सन्निकृष्टकर्णिकं विप्रकृष्टकर्णिकं सूक्ष्मच्छिद्रमतिच्छिद्रमतिदीर्घमतिह्रस्वमस्रिमच्चेति ( सुचि. ३५.३२ )

**–पाक**–पु., रोग० बस्तेः कोथनम् पूतिभावापन्नत्वम् ( चसि १२.१८-१४ )

**–पीडनदोष**–पु., बस्तिप्रपीडने दोषः, स चतुर्धा–अतिपीडनं शिथिलपीडनं भूयो भूयोऽवपीडनं कालातिक्रमश्चेति ( सुचि. ३५.३२ )

**–पीडनयोग्या**–स्त्री., बस्तिबन्धनस्य योग्या, अभ्यासः बस्तिबन्धनाभ्यासः ( असंसू. ३४.३८ )

**–पूरण**–न., मूत्राशयपूरणम् ( सुसू. १ .५ ( २ )

**–प्रणिधानदोष**–पु., बस्तिप्रदानकर्मणि दोषः, स षड्विधः–विचलितं विवर्तितं पार्श्वावपीडितमत्युत्क्षिप्त-मवसन्नं तिर्यक्क्षिप्तमिति ( सुचि. ३५.३२ )

**–प्रवर्तित**–वि., बस्तिना प्रवृत्त्युन्मुखीकृतो दोषः ( चक्र. चक्र. १२.८० )

**–भेद**–पु., लक्षण० बस्तेर्भिन्नत्वम्, बस्तौ एकपार्श्वतो भिन्ने मूत्रस्रावी व्रणो भवति, उभयतो भिन्ने नरो न जीवति ( सुशा. ६.२५ )

**–मुख**–न., मूत्राशयद्वारम् ( सुनि. ३.८ )

**–रोधन**–पु., वनस्पति० मदनः ( रा. ८.२३१ )

–विधि–पु., अध्यायसंज्ञा० ( असंसू. २८.१ )

**–वीर्य**–न., बस्तिप्रभावः ( सुचि. ३५.२५ )

**–व्यापद्**–स्त्री., बस्तिप्रदानादिभिर्मिथ्याप्रयुक्तैर्जनितो व्याधिः, व्यापदः सङ्ख्या षट्सप्ततिः, तत्र प्रणिधान-दोषाः षट्, नेत्रदोषा एकादश, बस्तिदोषाः पञ्च, पीडनदोषाश्चत्वारः, द्रव्यदोषा एकादश, शय्यादोषाः सप्त, आतुरनिमित्ताः पञ्चदश, वैद्यनिमित्ता नव, ते चायोगाध्मानपरिकर्तिकापरिस्रावप्रवाहिकाहृदयोप-सरणाङ्गप्रग्रहातियोगजीवादानभेदात्; स्नेहदोषा-श्चाष्टौ ( सुचि. ३५.३३ )

**–व्यापत्सिद्धि**–स्त्री., अध्याय० ( चसि. ७ )

**–शय्या**–स्त्री., बस्त्यर्थं शय्या ( असंक. ७ )

**–शय्यादोष**–पु., बस्तिशय्यास्थितपुरुषदोषाः, स सप्तधा, अवाक्शीर्षशयनं, उच्छीर्षशयनं, न्युब्जशयनं, उत्तानशयनं, संकुचितदेहशयनं, स्थितं, दक्षिणपार्श्वशयनं चेति, तेभ्यः क्रमान्मूत्राघातो-ऽन्त्रसम्प्राप्तिरप्राप्तिः साधुतागतिराश्वागतिर्मरुत्कोपः पक्वाशयतृप्तिश्चेति व्यापदो भवन्ति (सुचि. ३५.३२; असंक. ७ )

**–शिरस्**–न., षट्पञ्चाशत्प्रत्यङ्गेष्वेकम्, नाभेरधो बस्तेः शिरः, मूत्राशयोपरितनो भागः(ड.सुनि.३.५) मानतस्तद्दशाङ्गुलम् (चवि. ८.११७;असंशा.८.३०) सङ्ख्ययैकम् ( चशा. ७.११ )

**–शीर्ष**–न., बस्तिशिरः ( चशा. ७.११ )

**–शुद्धिकर**–वि., मूत्राशयशोधनद्रव्यम् ( हे ) कूष्माण्डादि ( अरु. अहसू. ४.२१ )

**–शूल**–पु., रोग० तल्लक्षणम्–मूत्रपुरीषादिसंरोधात् कुपितो वायुर्बस्तिमावृत्य तिष्ठति, ततो बस्तिवङ्क्षण-नाभीषु शूलो विण्मूत्रवातानां संरोधश्च भवति ( सुउ. ४२.१३३-१३४ )

न., लक्षण० बस्तौ शूलवद्वेदना ( चसू. ७.६; अहसू. ५.७९ )

**–शोथ**–पु., लक्षण० मूत्रधारशोथः ( चचि. २६.७ )

**–शोधन**–वि., मूत्रविरेककारि ( सुसू. ४६.५४; अहसू. ५.१६ )

**–सिद्धि**–स्त्री., अध्यायसंज्ञा० ( चसि. १०.१ )

**–सूत्रीयासिद्धि**–स्त्री., अध्यायसंज्ञा० (चसि. ३.१)

**–स्नेहदोष**–पु., बस्तिस्नेहगतदोषः, सोऽष्टधा–अतिमृदुरतिहिमोऽतितप्ताम्लतीक्ष्णोऽतिस्निग्धो-ऽतिरूक्षोऽल्पमात्रालवणोऽतिमात्रालवणः सान्द्रश्च ( अहसू. १९.४१-४२ )

बहल–पु., वनस्पति० शिग्रुः ( अहसू. १५.४५; ( असंसू. १६.१५ )
वि., स्थूलम्, घनम् (सुउ. १५.१८; सुसू. १४.२१)
–गन्धकृत्–पु., धान्य० व्रीहिः ( रा. १६.१२० )
–ता-स्त्री., विस्तीर्णता ( असंशा. ५.५२ )
–त्वच–पु., वनस्पति० लोध्रभेदः, शाबररोध्रः ( रा. ६.२४१ )
–पल्लव–पु., वनस्पति० शिग्रुः ( असंसू. १६.१५ )
–वर्त्मन्–न., नेत्रवर्त्मगतो व्याधिः, सर्वजोऽयम् ( सुउ. १.४२ ) तल्लक्षणम्–यस्य वर्त्म सवर्णाभिः समाभिः पिडकाभिः समन्तत उपचीयते, स बहलवर्त्माख्यः ( सुउ. ३.१६ ) अयं लेख्यः साध्यश्च ( सुउ. १३.१४; असंउ. ११ )

बहिस्–(अव्य.) बाह्यम्, बहिर्भागे ( चचि. ३.७६ )
–ताप–पु., लक्षण० बाह्यतो दाहः ( चवि. ३.७६ )
–तुङ्ग–वि., बाह्यत उन्नतम् ( चचि. ५.४२ )

( बहिः )–परिमार्जन–न., उपक्रम० बहिःस्पर्शमाश्रित्याभ्यङ्गादिभिर्व्याधीनां दूरीकरणम् (चसू. ११.५५)
वि., बाह्यतः शुद्धिकरं ( भेषजम् ) (असंसू. ३९.४)
–शीत–वि., बाह्यस्पर्शे शीतम् ( सुसू. ४२.१०(२) )
–श्रित–वि., बहिर्मार्गे शाखायामाश्रितम् ( चचि. २१.२३ )

( बहिर् )–जानु–अव्य., जान्वोः बहिः ( असंसू. ३.११ )
–निष्क्रमण–न., अटनम् (सुशा.१०-३)
–मुख–वि., बहिर्निःसरणाभिमुखम् ( चशा. ६.१७ )
–वेगज्वर–पु., ज्वरभेदः, यस्मिन् ज्वरकृद्दोषो विशेषतो बाह्यतो लक्षणानि दर्शयति, तल्लक्षणम्–बाह्योऽभ्यधिकः सन्तापस्तृष्णादीनां च मार्दवं सुखसाध्यत्वं च ( चचि. ३.४१ )

बहिरन्त्रग–वि., अन्त्राद्बाह्यगम् ( चक. चचि. १३.३० )

बहिरायाम–पु., रोग० वातरोगः आयामभेदः तल्लक्षणम्–बली वायुः पृष्ठमन्याश्रिता बाह्याः स्नायुकण्डराः सिराः संशोष्य बहिरायामसंज्ञकं हनुस्तम्भं कुर्यात्। चापवन्नाम्यमानस्य शिरः पृष्ठतो नीयते, उर उत्क्षिप्यते, मन्या स्तब्धा भवति, ग्रीवाऽवमृद्यते, दन्तानां दशनं जृम्भा लालास्रावो वाग्ग्रहश्च भवति, जातवेगोऽसौ आतुरं निहन्ति वैकल्यं वा प्रयच्छति ( चचि. २८.४५; असंनि. १५.२७-२८ ) असाध्यलक्षणम्–यस्य प्रतिबुद्धस्य हनूमन्ये तथाऽक्षिणी स्तभ्येते, अरिष्टलक्षणलक्षितत्वेन सोऽसाध्यः ( चइ. ५.२४ )

बहिरायामिन्–वि., बहिरायामार्तः पश्चान्मुखगामी ( ड. सुचि. ५.१८ ) द्र० 'बहिरायाम'

( बहिश् )–चर–वि., बहिः सञ्चरणशीलः बहिर्नाम शरीरगतरोमकूपेषु सञ्चरन्नग्निरान्तरः ( ड. सुउ. ३९.२३ )

बहु–वि., अधिकम्, बाहुल्यविशिष्टम् ( चवि. ८.९८ )

( बह्वी )–स्त्री., वनस्पति० गण्डदूर्वा ( ध. ४.१४५ )
–कण्ट–पु., वनस्पति० बदरभेदः, सूक्ष्मफलः ( रा. ११.१६४ )
( –कण्टा )–स्त्री., वनस्पति० कण्टकारी (रा. ४.७१)
–कण्टक–पु., वनस्पति० गोक्षुरभेदः, क्षुद्रगोक्षुरः ( रा.३.१३१ ) द्र० 'गोक्षुर'
वनस्पति० हिंतालः ( रा. ९.९७ )
धन्वयासः ( रा. ३.२५ )
(–कण्टका)–स्त्री., वनस्पति० अग्निदमनी(रापरि.४.३)
–कन्द–पु., वनस्पति० सूरणः ( रापरि.७.६ )
–कर्णिका–स्त्री., वनस्पति० आखुकर्णी (रापरि.३.२१)
–कूर्च–पु., वनस्पति० नारिकेलभेदः, मधुनारिकेरकः ( रा. ११.११० ) द्र० 'नारिकेल'
–क्षार–पु., लवण० सर्वक्षारः ( रा. ६.५७ )
–गन्ध–पु., वनस्पति० कुन्दरुः ( रा. १२.१९० )
( –गन्धा )–स्त्री., वनस्पति० यूथिका (रा.१०.२५०)
जीरकभेदः, कृष्णजीरकः (रा. ६.१०४)द्र०'जीरक'
चम्पककलिका ( रा. १०.२४० )
न., वनस्पति० त्वक् ( रा. ६.७७ )
–गन्धदा–स्त्री., भैषज्य० कस्तूरिका ( रा. १२.४६ )
–घातिनी–स्त्री., प्राचीना रसाचार्या योगिनी, अनया वृकोदरी गुटिका निर्दिष्टा ( र. २१.१३८ )
–च्छिन्ना–स्त्री., वनस्पति० गुडूची (ध.१.४)
–तिक्ता–स्त्री., वनस्पति० काकमाची ( रा. ४.३६ )
–दलकणिश–पु., धान्य० रागी (रा. १६.१७८)
–दुग्ध–पु., धान्य० गोधूमः ( रा. १६.१५१ )
–धार–न., खनिज० हीरकम् ( ध. ६.५६ )
–नाद–पु., भैषज० शङ्खः ( रा. १३.२४४ )
–पत्र–पु., वनस्पति० मुचकुन्दः ( रापरि. १०.२५ )
पलाण्डुः ( रा. ७.१०१ )
(–पत्रा)–स्त्री., वनस्पति० गोरक्षदुग्धी ( रापरि. ५.५३ )
जन्तुका ( रा. ३.१२७ )

तरणी ( रा. १०.२४४ )
बृहती ( असंसू. ८.५१ )
कुमारी ( रापरि. ५.१० )
मयूरशिखा ( ड. सुक. १.६७ )
(-पत्री )-स्त्री., वनस्पति० ईश्वरी ( रापरि. ३.१६ )
तुलसी ( रा. १०.७८ )
बृहती ( रा. ४.१२१ )
न., खनिज० अभ्रकम् ( रा. १३.२ )
-पत्रिका-स्त्री., वनस्पति० महाशतावरी ( ध. १.२९३ )
मेथिका ( ध. ६.१११ )
वनमेथिका ( रा. ५.१८४ )
भूधात्री ( रा. ५.१४५ )
-पर्ण-पु., वनस्पति० सप्तपर्णः ( रा. १२.१३९ )
(-पर्णी )-स्त्री., वनस्पति० अन्या दोडी ( रापरि. ४.४१ )
-पाद्-पु., वृक्ष० वटः ( ध. ५.७६ )
-पादिका-स्त्री., वनस्पति० आखुकर्णी (रापरि. ३.२२)
-पान-न., बहुमद्यपानम् निरग्निस्वेदकरमेतत् ( चसू. १४.६४ )
-पुत्रा-स्त्री., वनस्पति० शतावरी ( सुक. १.६७ )
-पुत्रिका-स्त्री., ग्रह० ( रेवती, का. बालग्रहचि. )
-पुष्प-पु., वनस्पति० पारिभद्रः ( रापरि. ८.१० )
-पुष्पिका-स्त्री., वनस्पति० धातकी ( रा. ६.१५१ )
-प्रज-वि., बह्वपत्यः ( चचि. २ (१)१९-२० ).
तृण० मुञ्जः ( रा. ८.२०५ )
-फल-पु., वनस्पती० विकङ्कतः ( रा. ९.५४ )
तेजःफलः ( रापरि. ११.१७ )
-( फला )-स्त्री., वनस्पति० शशाण्डुली (रापरि.७.१३१)
काकमाची ( रा. ४.३५ )
माषपर्णी ( रा. ३.१७२ )
बृहतीभेदः, क्षविका ( रा. ४.१२३ )
वालुकम् ( रा. ७.२५० )
मृगाक्षी ( रा. ७.२५७ )
कुडुढुञ्ची ( रा. ७.२८० )
त्रपुसम् ( रा. ७.२४६ )
-फलिका-स्त्री., बदरभेदः, भूबदरी (रा. ११.१६२) द्र० 'बदर'
-फेनरसा-स्त्री., वनस्पति० सप्तला ( चक. ११.३ )
-फेना-स्त्री., वनस्पति० सप्तला ( ध. १.२३८ )
-बीजा-स्त्री., वनस्पति० गिरिकदली (रा. ११.११२)
-मञ्जरी-स्त्री., वनस्पति० तुलसी (ध. ४.५०)
-मूल-पु., वनस्पति० शिग्रुः ( रा. ७.६० )
शरभेदः, स्थूलशरः ( रा. ८.२१२ )
( -मूला )-स्त्री., वनस्पति० शतावरी (रा. ४.४३८)
माकन्दी ( रापरि. ७.१५ )
-रन्ध्रिका-स्त्री., वनस्पति० मेदा ( रा. ५.१६१ )
-रस-पु, वनस्पति० इक्षुः ( असंसू. १६.३९; अहृसू. १५.४५ )
-( रसा )-स्त्री., वनस्पति० तेजोवती (रा. ३.३९२)
-रुहा स्त्री., वनस्पति० गुडूची ( रा. ३.३ )
-रूप-पु., निर्यास० रालः ( रा. १२.१७७ )
-लवण-न., लवण० औषरकम् ( रा. ६.५१ )
-वल्क-पु., वनस्पति० प्रियालः ( ध. ५.७२ )
-वर्ण-पु., कीट० पञ्चगोधेरकेष्वेकः, सविषोऽसौ, तेन दष्टस्य शोफो दाहरुजौ च भवतः (सुक.८.२८)
-वल्लरी-स्त्री., वनस्पति० डोडी (शानि.) जीवन्तीभेदः, शिग्रुः, तुलसी (र. १८.४७)
-वादिनी-स्त्री., वनस्पति० भङ्गा (भा. प्र. मिश्रप्रकरण)
-वाहा-स्त्री., वनस्पति० कण्टकारीभेदः (ध. १.९९)
-वीर्य-पु., वनस्पति० जम्बीरः ( रा. १०.८० )
तण्डुलीयकः ( रा. ५.१७४ )
शाल्मली ( रा. ८.२१२ )
( -वीर्या )-स्त्री., वनस्पति० भूधात्री (रा. ५.१४५)
-शल्य-पु., वनस्पति० खदिरभेदः, रक्तखदिरः ( रा. ८.३६ ) द्र० 'खदिर'
-शाख-पु., वनस्पति० स्नुही ( रा. ८.३५६ )
-शिखा-स्त्री., वनस्पति० महाराष्ट्री ( रापरि. ४.१३ )
-शूका-स्त्री., धान्य० व्रीहिः ( रा. १६.११८ )
-संपुट-पु., वनस्पति० विष्णुकन्दः ( रापरि. ७.४० )
-सार-पु., वनस्पति० खदिरः ( रा. ८.३२ )
-सुता-स्त्री., वनस्पति० शतावरी ( र. १७.३९-४० )
बह्वाशिन्-वि., लक्षण० प्रचुरभोक्ता ( सुउ. ६०.१५ )
बहुल-न., वनस्पति० मरिचभेदः, श्वेतमरिचम् ( रा. ६.१३८ ) द्र० 'मरिच'
(बहुला)-स्त्री., वनस्पति० शतपुष्पा ( रा. ४.२ )
ताम्बूली ( धपरि. ३.१ )
-गन्धा-स्त्री., एलाभेदः, सूक्ष्मैला ( रा. ६.६८ ) द्र० 'एला'
-च्छद-पु., शिग्रुभेदः, रक्तशिग्रुः ( रा. ७.६६ ) द्र० 'शिग्रु'

–वर्त्मन्–न., नेत्ररोग० बहलवर्त्म ( मा. नि. )
–वल्कल–पु., वनस्पति० प्रियालः ( ध. ५.७२ )
**बहेडक**–पु., वनस्पति० विभीतकः ( ध. १.२१२ )
**बाकुचिका**–स्त्री., वनस्पति० बाकुची ( र. ३०.४७ )
–फल–न., बाकुचीबीजम् सोमराजीफलम् ( असंउ. ४९ )
**बाकुची**–स्त्री., वनस्पति० सोमराजी अवल्गुजा क्षुपः, अस्याः बीजं सुगन्धितैलयुतं गन्धवत्त्वेन प्रसिद्धं त्वग्रोगहरं कुष्ठहरं च ( र. १३.९२ ) गुणाः– कटुतिक्ता, पाके कटुका उष्णा कृमिकुष्ठकफापहा, त्वग्दोषविषकण्डूतिखर्जूप्रशमनी, रसायनोपयुक्ता, रुचिमेधाविनाशिनी, पाके कटुका, ग्राहिकुष्ठव्रणापहा ( ध. १.१६७; रा. ४.२२९) श्वेतावल्गुजा-अस्याः फलानि मेधायुःकामार्थमुपयुज्यन्ते ( सुचि. २८.३ ) अस्याः कोमलशिम्ब्यः शाकत्वेनोपयुज्यन्ते। फञ्जी-चिल्ल्यादिगणोक्तः शाकविशेषः ( चसू. २७.१०२; चसू. २७.९६ ) शाकगुणाः– कफपित्तहरं, तिक्तं, कटुविपाकं शीतं च ( सुचि. २५.१५; सुसू. ४६.२६५; चचि. १९.३२ )
हिं.—गोवार, वायची, बावची, बकुची.
**म.—बावची.**
गु.—बावची, बावचिनावी.
बं.—हाकुच, सोमराल ( ज ).
त.—वोगी विट्ठल.
**बाकुल**–न., बकुलवृक्षसम्बन्धि ( फलम् ), तस्य गुणाः– मधुरं, कषायं, स्निग्धं, संग्राहि, दन्तानां स्थिरीकरं, विशदं च ( सुसू. ४६.१६९ ) बाकुलपुष्पं तु शाकत्वेन उपयुज्यते। पुष्पशाकगुणाः–सुगन्धि, विशदं, हृद्यं, श्लेष्मपित्तविषघ्नं च (सुसू. ४६.२८७ )
**बाढम्**–( अव्य. ) अत्यर्थम्, भूरि, सातिशयम् ( अहृसू. ५.२७ )
**बाण**–पु., वनस्पति० कुरण्टकं, नीलसहचरः ( अहृसू. १५.१७; सुसू. ६.३६; रा. १०.४२०- असंसू. १६.११ )
शरः ( ध. ४.१३५ )
( **बाणा** )–स्त्री., वनस्पति० कुरण्टकः ( रा. १०.४२० )
–पुङ्खा–स्त्री., वनस्पति० शरपुङ्खा ( रापरि. ४.६ )
–वार–न., वर्म, बाणं शरीरप्रक्षिप्तं वारयति इति बाणवारः कवचम् ( सुचि. २४.७४ )
**बाणासुर**–पु., प्राचीनो रसाचार्यः ( र. ६.५० )
**बाणाह्व**–पु., वनस्पति० मुञ्जः ( ध. ४.१३२ )
**बादर**–पु., वनस्पति० कार्पासी ( रापरि. ४.४५ )
**बादरायण**–पु., ऋषि०, रोगापहरणचिन्तनार्थं हिमवतः पार्श्वे समेतेषु सांकृत्यकाप्यबडिशबैजवापिप्रभृतिषु महर्षिषु एकः ( चसू. १.११ )
**बाधन**–न., अभेषजप्रकार एकः, तदात्वमात्रबाधकं, यथा स्वल्पमपथ्यम् द्विप्रकारके बाधनसानुबाधनाख्ये अभेषजे इदं प्रथमम् (चचि. १.५; असंसू. १२.१० )
**बाधिर्य**–न., कर्णरोग० श्रवणेऽसामर्थ्यम् ( चसू. ५.३८ ) अशीतिवातविकारेष्वेकः ( चसू. २०.११ ) संप्राप्तिः—शुद्धः कफान्वितश्च वायुः शब्दवहासु तदा नाडीषु नानाविधान्मार्गान् आवृत्य वर्तते, चिकित्साद्वेषिणो नरस्य असंशय बाधिर्य-नामा व्याधिर्भवति ( सुउ. २०.८; सुनि. १.८३; सुचि. ५.२३ ) सामान्यचिकित्सा–बाधिर्ये कर्ण-पूरणम् ( सुउ. २१.३५ )
विधुरसंज्ञितयोर्मर्मणोर्विद्धयोरिदं जायते ( सु. शा. ६.२७ )
**बार्हतबीज**–न., (परिव०) बृहत्या बीजम् (अहृसू. १५.४)
**बार्हस्पत्य**–वि., बृहस्पतिना कृतं नाम प्रणीतमिति बार्हस्पत्यम् ( 'नीतिशास्त्रम्' ) ( चवि. ८.५४ )
**बाल**–पु., ऊनषोडशवर्षीयः कुमारः, त्रिविधा बालाः— क्षीरपाः, क्षीरान्नादाः, अन्नादाः इति। तेषु संवत्सर-पराः क्षीरपाः, द्विसंवत्सरपराः क्षीरान्नादाः, परतो-ऽन्नादाः(सुसू. ३५.२९; चवि. ८.१२२) बालः मृदु-भेषजीयानां श्रेष्ठः (चसू. २५.४०; सुचि. ३५.२१)
गन्धद्रव्य० वालकः ( र. १०.२२ )
केशः ( सुचि. १.४१; सुसू. १.८ (१); ७.१५; सुसू. चवि. ३.१४ )
(**बाला**)–स्त्री., अप्राप्तयौवना स्त्री ( सु. शा. १०.५५; यो. रत्नाकरः; अहृसू. १९.८० )
–**आमरोगपूर्वरूप**–न., भविष्यदामरोगस्य बाले पूर्वरूपाणिस्तैमित्यमरुचिर्निद्रागात्रपाण्डुताऽरतिः, रमणाशनशय्यादीन् धात्रीं च द्वेष्टि नित्यशः, अस्नातः स्नातरूपश्च स्नातश्चास्नातदर्शनः दृश्यते। भविष्यतः आमस्य एतानि रूपाणि वैद्यो विद्यात् ( कासू. २५.३२,३३ )
–**क्रीडन**–न., कृत्रिमहस्त्यश्वबलिवर्दशुकादि ( सुसू. १६.३ )
–**क्रीडनक**–न., बालक्रीडनम् ( काखिल. १२.६ )
पु., भैषज० कपर्दिका ( ध. ३; परि. २४ )
–**गृह**–न., कुमारागारम् ( का. रेवतीकल्प ६९ )

–ग्रह–पु., बालरोग० आविष्टानां ग्रहाणां सामान्य-लक्षणम्–उत्त्रासजृम्भाभ्रूक्षेपदीनताः फेनस्रावोर्ध्व-दृष्ट्योष्ठदन्तदंशप्रजागराः रोदनं कूजनं स्तन्यद्वेषः स्वरवैकृतं नखैरकस्मात् स्वधात्र्यङ्गविलेखनम् (असंउ. ३; सुशा.१०.५१) तत्र बालग्रहचिकित्सा–सामान्येन स्नानवस्त्रवसामांसमद्यक्षीरगुडादि यद्येभ्यो यदा रोचते, तत्तेभ्यः प्रयच्छेत्। गन्धमाल्यानि बीजानि, रत्नानि मधुसर्पिषी, भक्ष्याश्च सर्वे सर्वविधग्रहशान्तये भवन्ति (असंउ.८)

–पत्र–पु., वनस्पति० खदिरः ( ध. १.२५ ) यासः ( ध. १.२२ )

–पुष्पा–स्त्री., वनस्पति० यूथिका (ध. ५.१४८)

–पुष्पिका–स्त्री., वनस्पति० यूथिका ( रा. १०.२५० )

–बन्ध–पु., पारदबन्ध०, समभागाभ्रकेण जारितः पारदः ( र. ११.८२ )

–बिल्व–न., अपक्वं बिल्वफलम् ( र. २२.८८ )

–भेषजमात्रा–स्त्री., बालव्याधिषु भेषजमात्राऽल्पा भवितुमर्हति। तत्र हेतुः– निवृत्तिर्वमनादीनां, मृदुत्वं, परतन्त्रताम्, वाक्चेष्टयोरसामर्थ्यं च, वीक्ष्य, बालेषु भेषजं स्वल्पमात्रं तु यथाव्याधि प्रयोजयेत् ( चचि. ३०.२८४ )

–भैषज्य–न., भैषज्य० रसाञ्जनम् ( रा. १३.२२१ )

–भोज्य–पु., वनस्पति० चणकः ( र. १६.१५६ )

–रोग–पु., बालानां व्याधयः (शार्ङ्गधर. पू. ७.१८६) तल्लक्षणानि— अङ्गप्रत्यङ्गदेशे तु रुजा यत्रास्य जायते, तं मुहुर्मुहुः स्पृशति, स्पृश्यमाने च रोदिति रोगे मूर्धस्थे सति निमीलिताक्षः सन् शिरोधारणेऽसमर्थो भवति। बस्तिस्थे मूत्रसङ्गार्तो रुजा तृष्यति मूर्च्छति च। विण्मूत्रसङ्गवैवर्ण्यच्छर्द्याध्मानान्त्रकूजनैः कोष्ठे दोषान् विजानीयात्। रोदनैः दोषान् सर्वतो व्याप्तान् जानीयात् ( सुशा. १०.३४-३६ )

–वर्ति–स्त्री., केशरचितवर्तिः ( सुचि. २.६९ ) इयं शिरसो व्रणे उपयुज्यते ( सुचि. २.७० )

–वेणी–स्त्री., केशकृता वेणी ( चशा. ८.४१ )

–व्यजन–न., केशमयं वीजनसाधनं; चामरम् ( सुचि. ४.२९; सुचि. २४.८२ )

बालक–न., वनस्पति० मरीचम् ( रा. ६.१३८ )

–प्रिया–स्त्री., वनस्पति० कदली (रा. ११.१०७) इन्द्रवारुणी ( रा., ३.३७२ )

बालाङ्गुलि–स्त्री., कनिष्ठाङ्गुलिः, अनुशस्त्रेष्वेका आवश्यके एषणकर्मणि एषण्या अनुपलम्भे बालाङ्गुलि-रङ्कुराश्च उपयोज्याः ( सुसू. ८.१५ तः १९ )

बालामलक–न., आमलकं बालम् ( असंउ. ३७ )

बालाम्र–न., आमाम्रं जाताजातबीजमपक्वाम्रम् ( र. १०.९४ )

बालेन्दुकुटिला–वि. बालचन्द्रलेखावद् वक्रा ( राजी ) ( चइ. ११.१३ )

बालेष्ट–पु., न., वनस्पति० बदरम् ( ध. ५.९६ )

बालोपचरणीय–वि., बालोपचरणमधिकृत्य कृतोऽध्यायविशेषः ( असंउ. १ )

बाल्य–न., षोडशवर्षपर्यन्तं वयोऽवस्था ( र. ११.९६; सुसू. ३५.२९ )

बाह्लीक–न., भैषज्य० कुङ्कुमम् (असंसू. ८.१०३)

बाह्लिक–पु., ऋषि० काङ्कायनबाह्लीकः ( चसू. १२.६ ) देश० ( चवि. १.१८; चचि. ३०.३१६ ) न., भैषज्य० कुङ्कुमम् ( चचि. २३.१०२; चचि. ३०.९१; सुक. ६.३ ) निर्यास० हिङ्गु ( ध. २.२६; र. ५.१२८ )

–भिषज्–पु., महर्षि० ( चसू. २६.५ )

बावन–न., वनस्पति० चन्दनम् ( रा. १२.३ )

बाष्कयणपयस्–न., बहुवारं प्रसूता प्रौढवत्सा वा गौः बष्कयणी, बष्कयिणी वा, तस्याः दुग्धम् (असंक. ८) तत्क्षीरं पुष्यं रतिप्रदं च ( असंउ. ५० )

बाष्प–न., अश्रु (चसू. ७.४) रोदनजलम् (सुसू.२१.१९)

(बाष्पी)–स्त्री., वनस्पति० हिङ्गुपत्री ( रा. ६.६२ )

–द्वय–न., वनस्पति० बाष्पिकाद्वयं, तच्च लोहितं कृष्णं च सिन्धुदेशे प्ररोहति ( सुचि. ४.३२ )

–निग्रह–पु., अश्रुनिग्रहः ( चसू. १७.१० ) द्र० 'उदावर्त'

–निग्रहण–न., अश्रुनिग्रहः ( चसू. ७.२२ )

–रोधज–वि., अश्रुनिग्रहजनितः ( व्याधिः ) (अहसू. ४.१६)

–समुच्छ्रय–पु., लक्षण० समुच्छ्रयो बाहुल्यमाधिक्यं वा, तेन बाष्पसमुच्छ्रयोऽश्रुबाहुल्यम् (सुउ. ६.७)

बाष्पावेग–पु., शोकोत्थतेजस उद्रेकः ( सुउ. ४०.१३ )

बाष्पिका–स्त्री., वनस्पति० हिङ्गुपत्री ( ध. २.३८; असंसू. १२.६४ ) जीरकभेदः ( असंचि. ६; असंचि. १६ )

बास्त–वि., बस्तोद्भवम्, बस्तसम्बन्धि, यथा–बास्तं मूत्रं नाम छागमूत्रम् ( चशा. ८.१०; चचि. १०.२६ )

बाहु–पु., ऊर्ध्वशाखा, कक्षातः अंगुल्यग्रपर्यन्तोऽवयवः, षडंगेष्वेकमंगम् ( चशा. ७.५ )

अंसकूर्परयोरन्तरम् प्रत्यङ्गमेकम् ( सुशा. ५.४; सुचि. ३.३७ )

**-द्वयप्रतिपन्न**-वि., द्वाभ्यां बाहुभ्यामुपेतः अष्टसु मूढगर्भेषु एक एवंगुणोपेतः ( सुचि. १५.९ )

**-नलक**-पु., बाह्वोः स्थितोऽस्थि० द्वौ बाहुनलकौ ( चशा. ७.६ ) द्र० 'अस्थि'

**-पिण्डिका**-स्त्री., प्रत्यङ्ग० षट्पञ्चाशत्प्रत्यङ्गेषु एका, द्वे बाहुपिण्डिके ( चशा. ७.११ )

**-भग्न**-न., लक्षण० बाहुसंधिस्खलनम् द्र० 'भग्न' ( सुचि. ३.३७ )

**-मर्मन्**-न., शारीर० ऊर्ध्वशाखाश्रितं मर्म, बाहुमर्माणि एकादश-क्षिप्र-तलहृदय-कूर्च-कूर्चशिरो-मणिबन्धेन्द्रबस्ति-कूर्पर-आणी-ऊर्वी-लोहिताक्षाणि कक्षधरं चेति ( सुशा. ६.६ ) द्र० 'मर्म.'

**-मित**-वि., बाह्वोर्द्विसंख्यात्वेन बाहुमितं नाम भागद्वययुतम् ( र. १७.१३७ )

**-मूर्धन्**-पु., शारीर० बाहुशिरः (सुशा. ६.२६)

**-वीर**-पु., वनस्पति० श्लेष्मातकः ( ध. ५.९४ )

**-शूल**-पु., लक्षण० बाहोः शूलः ( चसि. २.१६ )

**-शोष**-पु., लक्षण० बाहोः शुष्कत्वं कार्श्यं वा अशीतिवातविकारेष्वेकः ( चसू. २०.११; चसि. २.१६ ) अंसफलकमर्मणि विद्धस्य लक्षणम् ( सुशा. ६.२६ )

**-श्रुत्य**-न., बहुश्रुतस्य भावः, भूयोविद्यत्वम् ( असंसू. २.१३ )

**-स्तम्भ**-पु., लक्षण० बाहोः स्तम्भः (चसि. २.१६ )

**-स्वाप**-पु., लक्षण० ऊर्ध्वशाखायाः सुप्तता, विद्धांसफलकमर्मणो लक्षणम् ( चशा. ६.२६ )

**बाहुल्य**-न., स्थूलता ( सुउ. १.१९ )

**बाहुल्यानुशय**-पु., अनुशेते अनुबध्नाति इति अनुशयः, अनुबन्धः सम्बन्ध इति यावत्, तेन भूरिसंबंधः ( चसू. ८.६ )

**बाह्य**-वि., उपरितनम् ( सुउ. २३.५ )

आगन्तुः बाह्यनिमित्तजः ( सुउ. १.२९ )

**-ज**-वि., आगन्तुकारणोद्भूतो नेत्ररोग०, स द्विविधः-सनिमित्तोऽनिमित्तश्च, निमित्तमभिघातादि, सनिमित्तो बाह्यजो नाम अभिघाताद्युत्पन्नः, अनिमित्तो बाह्यजो नाम सुरर्षिगन्धर्वादिदर्शनाभिहतशक्तिः ( सुउ. १.४३ )

**-द्रुति**-स्त्री., बहिरेवाभ्रकसत्वादिकं द्रुतं कृत्वा विहिता पारदद्रुतिः, जार्यमाणानामभ्रकादि लोहानां बहिरेव द्रुतिं कृत्वा रसरूपाणां तेषां रसे द्वन्द्वमेलापनम् ( र. ८.८१ )

**-मल**-पु., बाह्यमलायने स्थितो मलः ( चवि. ७.१० )

**-मार्ग**-पु., बाह्यरोगमार्गः, रोगमार्गाणां त्रयाणामेकतमः, तत्र रक्तादयो धातवस्त्वक्च बाह्यरोगमार्गः; तदाश्रया व्याधयो मण्डलकुष्ठव्यङ्गगण्डालज्यर्बुदादयः (अहृसू.१२.४४ तः ४८; सुनि.५.३)

**-रोगायन**-न., बाह्यरोगमार्गः ( अहृसू. १२.४४ )

**बाह्यकी**-स्त्री., सविषकीट० अग्निप्रकृतिकोऽयं पित्तजरोगकृत् ( सुक. ८.९.१२; असंउ. ४३ )

**बाह्यायाम**-पु., रोग० बहिरायामः वातरोगोऽयं पृष्ठे देहनमनात्मकः बाह्यस्नायुप्रतानस्थो वायुः बाह्यायामं करोति ( सुनि. १.५७; चचि. २८.३५) द्र० 'आयाम'

**बिज्जुल**-न., वनस्पति० त्वक् ( रा. ६.७७ )

**बिड**-न., लवणभेदः। बिडलोण इति लोके। बिलति भिनत्ति मलं बिडम्। तैक्ष्ण्यादौष्ण्याद् व्यवायित्वादीपनं शूलनाशनम्, कफवातानामूर्ध्वाधोऽनुलोमनम ( चसू. २७.३०२ ) उष्णं तीक्ष्णं सक्षारं दीपनं सूक्ष्मं शूलहृद्रोगनाशनं रोचनं वातानुलोमनं च ( सुसू. ४६.३१६ ) कफवातघ्नं गुल्ममेहघ्नं च ( ध. २.२८ ) पारदे अभ्रकसुवर्णादीनां जारणकर्मणि सहाय्यकः कल्पः क्षारैर्यवक्षारादिभिरम्लैर्जंबीरादिभिर्गन्धाद्यैर्गन्धकादिभिर्मूत्रैर्गोमूत्रादिभिः सैन्धवादिभिर्लवणैः पारदकवलस्य जीर्णकरणार्थं यन्निर्मितं तद्बिडमिति परिकीर्तितम् ( र. ८.८५ )

**-मूषा**- स्त्री., मूषा० विविधमृद्भिर्निर्मिता विविधैर्बिडैश्च विलेपिता मूषा इयं देहलोहार्थयोगोपयोगिनी ( र. १०.१९ )

**बिडाल**-पु., उपक्रम० नेत्रलेपः (असंउ. १९ ) द्र० 'बिडालक'

प्राणि० मार्जारः ( सुचि. ४.१७ ) षट्प्रकारको मार्जारः-ग्राम्यो वन्यस्तोयजातः पक्षिमार्जारो विजकसुगन्धवृषणश्च ( सुउ. ४१.३६ ) अस्य सद्यस्कं रक्तं पिच्छिलबस्त्युपयोगि ( सुचि. ३८.८६ )

प्रमाण०, कर्षः (का. उदावर्त चि.)

न., खनिज० हरितालम् ( ध. ७.११९ )

**-पदक**-न., मान० कर्षः (असंक. ८; चचि.१३.१६०) द्वौ द्रङ्क्षणौ बिडालपदकम् ( चक. १२.९० ) निष्कचतुष्टयं बिडालपदकम् ( र. ११.४,५; का. शतपुष्पाक; सुसू. ३९. १४ )

पु., उपक्रम० बिडाललेपः ( असंउ. १४ ) द्र० 'बिडालक'

**बिडालक**–पु., नेत्रवर्त्मोपरि लेपः नेत्रबहिर्लेपः, नेत्ररोगलक्षणेष्वव्यक्तेषु पक्ष्मपरिहारेणाक्षिकोशालेपनम् ( चचि. २६.२३१; असंसू. ३२.३ )

**(बिडालिका)**–स्त्री., लक्षण० शोफभेदः, तल्लक्षणं–भृशार्तिः, सदाहरागो, गलस्य सन्धौ, चिबुके, गले, श्वासवहनाडीषु च शोफः, स कृत्स्नगलवेष्टकत्वेन वलयाकारश्चेद् असाध्यो भवति ( चचि. १२.७६ )

**बिन्दु**–पु., प्रदेशिन्यङ्गुलीपर्वद्वयान्मग्नसमुद्धृतात् यावत्पतति तावन्मात्रोऽसौ बिन्दुः ( सुचि. ४०.२८; अहृसू. २०.१०-११ )

वर्तुलच्छेदः ( असंउ. ४१)

लक्षण० बिन्द्वाकारा त्वग्विकृतिः (चचि.२३.११४)

रत्नदोष० बिन्दुवदाकारः आवर्तवर्तकभालबिन्दुयवाकृतिरूपः ( र. ४.३६ )

उपक्रम० अग्निकर्मभेदः, तत्र वलयबिन्दुविलेखाप्रतिसारणानीति दहनविशेषाः ( सुसू. १२.११ ) द्र० 'अग्निकर्म'

**–पत्र**–पु., वनस्पति० भूर्जः (रा.परि.९२२)

**–पात**–पु., आश्चोतनविधौ कनीनकदेशे औषधस्यावसेचनम् ( असंसू. ३२.४ )

**–फल**–न., मौक्तिकम् ( रा. १३.६७ )

**–राजि**–पु., सर्प० राजिमान् सर्पः ( सुक. ४.३४ ( ३ ) )

**बिन्दुल**–पु., सविषकीट० अग्निप्रकृतिकोऽयं पित्तजरोगकृत् ( सुक. ८.९; असंउ. ४३ )

**बिभीत**–पु., वनस्पति० बिभीतकः (असंउ.३.२०)

**बिभीतक**–पु., प्रसिद्धवृक्ष० बिभीतकः मुस्तादिगणे एकं द्रव्यम् ( सुसू. ३८.५४ ) ज्वरहरगणे एकं द्रव्यम् ( चसू. ४.१६ ) गुणाः– बिभीतकफलं कषायं स्वादुपाकं, उष्णवीर्यं, कफपित्तनुत्, हिमस्पर्शं भेदनं, कासनाशनं, रूक्षं, नेत्रहितं, केश्यं, कृमिवैस्वर्यनाशनं च। बिभीतकमज्जा तृट्छर्दिकफवातहरो, लघुः कषायो, मदकृच्च (भा. प्र.) स्नेहयुक्तद्रव्य० ( चसू. १३.१० ) सरं, कटु, चक्षुष्यं कफास्रहरं च (ध. १.२१४) पलितघ्नः (रा. ११.३२४)

हिं.—भैरा, बहेरा, भेरा, सागोना, भरला, बुहुरा.

**म.—बेहडा, बेहरा, बेडा, येहेला बेहेडा.**

गु.—बेरंग.

बं.—बोहेरा, बाहेरी, भैरा, बुहुरु, बोथरा.

त.—तानी, थानी, कट्टू, एलुपाय, तान् रिक्काथ्, तान्डी तोन्डा, चट्टु एलुपा, तामकै, वल्लैमुर्डे, तानिकोइ, तान्ककै.

**–तैल**–न., स्नेह० बिभीतकमज्जातैलम् ; तद्गुणाः–स्वादु, हिमं, केश्यं, पित्तानिलापहं च, मधुरतैलगणोक्तमेकम् ( सुसू. ४५.१२०; ध. ६.१३६ )

**–फल**–न., आक्षफलम् (सुसू. ४६.२००)

**–सीधु**–पु., न., आसुत० बिभीतकक्वाथगुडकृतो धातकीकुसुमादिकृतसंस्कारः सीधुः, तद्गुणाः–पाण्डुरोगघ्नो, व्रण्यः, संग्राहको, लघुः, कषायो, मधुरः, पित्तघ्नोऽसृक्प्रसादनश्च ( सुसू. ४५.१८६ )

**–सुरा**–स्त्री., आसुत० बिभीतकस्य वल्कलैः सह कृता सुरा, वल्कलीति केचित्, तद्गुणाः–रूक्षा, नातिकफा, वृष्या, पाचनी च ( सुसू. ४५.१७९ )

**बिभीषण**–पु., वनस्पति० नलः ( ध. ४.१४१ )

**बिम्ब**–न., मण्डलं नितम्बस्य, हाराणचन्द्रोऽत्र बिम्ब इति पठित्वा बिम्बः सच्छिद्रं त्रिकास्थि इति व्याख्याति ( सुशा. ५.११ )

वनस्पति० बिम्बी ( असंसू. ७ )

**बिम्बी**–स्त्री., वनस्पति० फलशाकभेदः, अस्याः फलमोष्ठोपमं रक्तवर्णमस्ति। बिम्बीफलं द्विविधं स्वादुरसं तिक्तरसं चेति । तत्र स्वादुरसं बिम्बीफलं शाकत्वेनोपयुज्यते ( चसू. २७.१४२ ) स्वादुरसबिम्बीफलगुणाः–मधुरं कषायं शीतं रूक्षं संग्राहकं कफपित्तहरं स्तन्यकृत् तृड्दाहज्वरपित्तासृक्कासश्वासक्षयापहम् (सुसू.४६.१६४) कफापहा वान्तिविषारोचकास्रपित्तघ्नी ( ध. १.२०३ ) मूलमस्या वमनकरं शिरोविरेचनं च ( चसू. १.७८ )

हिं.—कंदूरी.

**म.—रानतोंडले, तोंडली.**

गु.—घोली.

बं.—तालाकुचा.

त.—कोवाई.

फा.—कबरे हिंदि.

**–फल**–न., फलशाक० ( सुसू. ४६.१७६ ) बिम्बी

**–लोट**–पु., भिल्लोटो हिमाद्रिजो वृक्षः (सुउ. १२.११) धान्य० व्रीहिः ( रा. १६.९७ )

**–शालिक**–पु., धान्य० व्रीहिः, ( १६.९७ )

**बिम्बिशी**–स्त्री., रोग० प्रवाहिका ( र. १६.४१ )

**बिम्बिसी**–स्त्री., रोग०, प्रवाहिका ( र. ३०.३३; असंचि. ११ )

**बिम्बीतिका**–शाक० कुन्दुरिका, तस्याः पत्राणि गृह्यन्ते ( सुसू. ४६.२४९ )

**बिलशायिन्**–वि., बिलेशयः श्वाविच्छल्लकादि प्राणि० एतेषां मांसं शूलरोगे प्रशस्तम् ( सुउ. ४२.९१ )

**बिलेशय**–पु., प्राणिवर्ग०, बिले बाहुल्येन शेरते इति बिलेशयः, श्वाविच्छल्यकगोधाशशवृषदंशलोपाकलोमशकर्णकदलीमृगप्रियकाजगरसर्पमूषिकनकुलमहाबभ्रुप्रभृतयो बिलेशयाः ( सुसू. ४६.७८ ) तेषां सामान्यगुणाः–एते वर्चोमूत्रं संहतं कुर्युः, स्वादुपाका उष्णा स्निग्धा; वातं हन्युः, श्लेष्मपित्ते च कुर्युः, किञ्चैते कासश्वासकार्श्यापहाश्च (सुसू. ४६; ७९; चसू. ६.१२; सुउ. ४१.३६; सुशा. ४.४५; ध. परि. २.५)

**–वर्ग**–पु., बिलेशयप्राणिसमूहः ( अहृसू. ६.४७ )

**बिल्व**–न., मान०, ' पलम् ' द्वे पलार्धे बिल्वम् ( चक. १२.९२; असंक. ८; र. ११.६ ) पु., वनस्पति०, बृहत्पञ्चमूले एकं द्रव्यम्, आस्थापनोपगगणे, अर्शोघ्नगणे, श्वयथुहरगणे, अनुवासनोपगगणे च एकं द्रव्यम् (चसू. ४.११-१६) अणुतैलयोगे एकं द्रव्यम् ( चसू. ५.६४ ) पित्तश्लेष्मातिसारघ्नपेयायामुपयुज्यते ( चसू. २.२० ) अस्य काष्ठं दन्तधावने निषिद्धम् ( असंसू. ३.२० ) अस्य पुष्पाणि अञ्जने उपयुज्यन्ते ( सुउ. १२.११) बिल्वमूलगुणाः–मधुरं, त्रिदोषच्छर्दिशूलनुत्, लघु मूत्रकृच्छ्रहरं, त्रिदोषघ्नं च ( निघण्टुरत्नाकरे ) ( ध. १.१०४; रा. ११.१३७ ) बिल्वं सांग्राहिकदीपनीयवातकफप्रशमनानां श्रेष्ठम् ( चसू. २५.४० ) पक्वं बिल्वफलं–दुर्जरं दोषलं पूतिमारुतम्, आमं तु स्निग्धोष्णतीक्ष्णं, कफवातजित्, दीपनं च ( चसू. २७.१३८ ) अम्लं संग्राहि ( ध. १.१०८ ) गुरु (रा. ११.१३७) गुणाः–बिल्वो, मधुरो, हृद्यः, कषायः, पित्तजित्, गुरुः, कफज्वरातिसारघ्नो, रुचिकृत्, दीपनः, परः ( रा. ११.१३६ ) पक्वं बिल्वफलं–मधुरानुरसं, गुरु, विदाहि, विष्टम्भकरं, दोषकृत्, पूतिमारुतम् ( ध. १.१०९ ) कटुतिक्तकषायोष्णं संग्राहि त्रिदोषजित् ( रा. ११.१३६ )

हिं.—बेल, बील श्रीपल.

म.—**बेल.**

गु.—बिल्वफल, बिलिनुं फळ.

बं.—बेल; बील.

त.—बिल्वम्, बिल्वपझम्.

फा.—शुल्.

**( बिल्वी )**–स्त्री., वनस्पति० हिङ्गुपत्री ( रा. ६.६२ )

**–क्षार**–पु., योग० बिल्वफलदहनेन कृतः क्षारः उदरे उपयुक्तः ( चचि. १३.१७० )

**–गन्धक**–पु., वनस्पति० अर्जकः ( ध. ४.५४ )

**–ज**–न., बिल्वफलम् ( सुचि. ३८.४८ )

**–तैल**–न., तैल० बिल्वादिसिद्धं तैलम् (चसि. ७.५३) वाते बिल्वतैलानुवासनमुपयुक्तम् ( चसि. ३.७० ) बिल्वमूलमधुयष्टीमदनफलक्वाथसिद्धं तैलम् ( सुचि. ३७.४६ )

**–पर्णी**–स्त्री., शाक० बिल्वार्जकम् इदं कफं नाशयति ( चसू. २७.१०७ )

**–पत्र**–न., शाक० इदं वातं नाशयति (चसू. २७.१०७)

**–पेशिका**–स्त्री., बिल्वमज्जा ( अहृसू. १५.३८ ) बालबिल्वगिरः ( ड. सुचि. ५.७; सुसू. ३८.४६ )

**–फल**–न., बिल्ववृक्षस्य फलम् द्र० ' बिल्व ' ( सुसू. ४६.१७४ )

**–मात्र**–वि., पलमात्रम् ( अहृसू. २४.१७ )

**–मूल**–न., बिल्ववृक्षस्य मूलम् ( असंउ. ४७; अहृसू. ६.१६७ ) द्र० ' बिल्व '

**–शलाटु**–न., कोमलबिल्वफलम् ( सुउ. ४०.४४; असंशा. ४.२३ ) द्र० ' बिल्व '

**–शाक**–न., शाक० बिल्वशाकम्, सामान्यगुणाः–मधुरं तिक्तं उष्णं वातप्रशमनं च (सुसू. ४६.२५४)

**बिल्वादिगण**–पु., बृहत्पञ्चमूलम्, गणेऽस्मिन् बिल्व; अग्निमन्थः, श्योनाकः, काश्मरी, पाटला चेति द्रव्याणि ( सुचि. ८.१३ )

**बिल्वान्तर**–पु., वनस्पति० चीरवृक्षो, दीर्घमूलो, वीरवृक्षः, कृच्छ्रारिः, क्षुधाकुशलसंज्ञकः इति अस्य स्वरूपगुणबोधकानि नामानि, गुणाः– कटूष्णः, कृच्छ्रघ्नः, संधिशूलनुत् वह्निदीप्तिकरः, पथ्यो, वातामयविनाशनः ( रापरि. ८.३०-३१ )

**बिल्विका**–स्त्री., वनस्पति० हिङ्गुपत्री ( ध. २.३८ )

**बिस**–न., वनस्पति० कमलनालम्, गुरुप्रकृतित्वान्नाभ्यसेत् ( चसू. ५.१० ) कमलतन्तुः ( चचि. १४.९; सुचि. २८.१३ ) मृणालसूत्रम् ( चचि. ३.२५८ ) पद्ममूलम्, प्रमेहे शृङ्गाटकादिगणे ( सुचि. ११.१०; सुसू. ४६.३०३ ) भिषण्डकं, बिसाण्डकं वा ( सुसू. ४६.४६४; सुसू. ५४.४ ) स्थूलपद्मनालं बिसमाहुः । कन्दशाकस्य गुणाः–अविदाहि, रक्तपित्तप्रसादनं, विष्टम्भि, दुर्जरं, रूक्षं, विरसं, मारुतापहं च ( सुसू. ४६.३०३ ) मधुरं, वातकोपनं च ( ध. ४.१६२ )

पित्तदाहजित्, मूत्रकृच्छ्रविकारघ्नं, रक्तवान्तिहरं ( रा. १०.२५८ )

हिं.—कमलकी नाल, कमलकी डंडी.

**म.—कमळाचा देठ.**

बं.—पद्मेरडाटा.

**–कुसुम**–न., वनस्पति० रक्तपद्मम् ( रा. १०.२४४ )

**–ग्रन्थि**–स्त्री., पद्ममूलं, कलुषजलस्य प्रसादनं ( सुसू. ४५.१७ )

**–वर्त्मन्**–न., नेत्ररोग० यद् वर्त्म बहुभिः सूक्ष्मच्छिद्रैर्युक्तं शूनं अन्तरुदकं बिसतुल्यं च तद् बिसवर्त्म ( सुसू, ३.२८ ) साध्यो नेत्ररोग० ( सुउ. १.४२; असंउ. ११ ) तत्र चिकित्सा–पक्वं बिसग्रन्थिं स्वेदयित्वाऽनन्तरमस्य पक्वस्य बिसग्रन्थे च्छिद्राणि निराश्रयं भित्त्वा सैन्धवेन कासीसादियुक्तेनावचूर्णयेत् प्रतिसारयेद्वा, अनन्तरं संधानार्थं मधुघृतं दत्त्वा सम्यग्बंधमाचरेत् ( सुउ. १४.३-४ )

**बिसिनी**–स्त्री., वनस्पति० बिसम् ( ध. ४.१६१ )

**बीज**–न., प्रभवकारणम्, मूलकारणम्, मूलसूत्रम्, संभवहेतुः ( चशा. २.३३; सुउ. १८.८३; सुउ. ९.२५; सुसू. १.३९ )

शुक्रशोणितम् ( चशा. ३.१७; चचि. ३०.१२६; चशा. २.१८; र. १२.१; सुशा. २.३८; असंशा. २.५१; कासि. २; काशा. )

ग्रासजारणार्थं दीयमानं शुद्धं सुवर्णं रूप्यं च ( र. ८.७४ ) विशिष्टेन निर्वापणेन तत्तद्वर्णं मृदुलं चित्रसंस्कारकरणसमर्थं च जातं लोहम् ( र. ८.३१ ) चतुष्षष्टिमहाबीजानां साधारणानां सर्वबीजानामेकतमम् ( र. २८.१२-१४ )

वनस्पति० जेपालः ( ध. १.२२८ )

पुष्करमूलम् ( रा. ६.९२ )

**–कण्ठ**–पु., यत्र बीजानि बद्धानि सन्ति स बीजकण्ठः फलसम्बद्धः ( चक. ४.८ )

**–कर्कटिका**–स्त्री., वनस्पति० चीनाकर्कटी ( रा. ७.२६० )

**–गर्भ**–पु., वनस्पति० पटोलम् ( रा. ३.७४ )

**–ग्रहण**–न., योनौ निषिक्तस्य शुक्रस्यानिःसरणम् ( चशा. २.२३; असंशा. २.८ )

**–दोष**–पु., शुक्रशोणितदुष्टिः ( चचि. ३०.८; चचि. ६.५७ )

**–धर्मन्**–वि., बीजं नाम सदृशमङ्कुरं धारयति स जीव इत्यर्थः स आत्मलीनो भूतसंतानः सदृशं देहरूपं भूतान्तरसंगं कुर्वन्बीजधर्मा भवति ( चशा. २.३५ )

**–धर्मिणी**–वि., सत्त्वरजस्तमसां गुणानां साम्यावस्थायां स्थिता सर्वेषां महदादिविकाराणां बीजभावेनावस्थिता प्रकृतिः ( सुशा. १.९ )

**–धातु**–पु., शुक्रधातुर्गर्भबीजस्थः ( काशा. )

**–धान्य**–न., वनस्पति० धान्यकम् ( रा. ६.९८ )

**–पादप**–पु., वनस्पति० भल्लातकः ( रा. ११.२०२ )

**–पुष्पक**–पु., धान्य० यावनालः ( रा. १६.१६९ )

**–पूर**–पु., वनस्पति० मातुलुङ्गम् ( ध. ५.२२; र. २.१५८ )

**–पूरक**–न., वनस्पति० मातुलुङ्गम् ( सुउ. ३९.३०३ )

**–पूरकमज्जन्**–पु., बीजपूरकफलस्य बीजस्थितमृदुद्रव्यम्, तद्गुणाः–स्वादुपाकोऽग्निबलकृत् स्निग्धः, पित्तानिलापहश्च ( सुसू. ४६.२०७ )

**–पूर्ण**–पु., मातुलुङ्गम् ( ध. ५.२२ )

**–पोषण**–वि., बीजं नाम शुक्रं पुष्यति अनेन बीजं वा पुष्णाति इति बीजपोषणः शुक्रवृद्धिहेतुः ( अहसू. १.४८ )

**–फलक**–पु., वनस्पति० मातुलुङ्गम् ( रा. ११.२७ )

**–भाग**–पु., बीजस्याङ्गप्रत्यङ्गनिर्वर्तको भागः ( चशा. ३.१७, चशा. ४.३० )

**–भूत**–वि. बीजस्वरूपम् बीजान्तर्गतम् ( असंशा. ८.७ )

**–रेचक**–पु., वनस्पति० जेपालः ( ध. १.२२७ )

**–रेचनी**–स्त्री., वनस्पति० जेपालः ( रा. ६.३४३ )

**–वर**–पु., वनस्पति० राजमाषः ( ६.८४ )

**–वृक्ष**–पु., वनस्पति० असनः ( रा. ९.२०७ )

**–सार**–पु., असनसारः ( सुचि. २५.३२; असंचि. १८ )

**–साररिष्ट**–पु., आसुत० बीजकसारत्रिफलाद्राक्षालाक्षादिभिः सिद्धोऽयं पाण्डुकामलामेहहृद्रोगवातशोणितविषमज्वरारोचककासश्वासहरः (असंचि.१८)

**–स्नेह**–पु., वनस्पति० पलाशः ( ध. ५.१६२ )

**बीजकारिष्ट**–पु., आसुत० बीजसारारिष्टः पाण्डुरोगादिषूपयुक्तो योगः ( चचि. १६.१०६-११० )

**बीजांश**–पु., बीजभागः ( असंशा. २.५० )

**बीजान्त**–न., वनस्पति० जेपालः ( रा. ६.३४४ )

**( बीजान्ता )**–स्त्री., वनस्पति० इन्द्रयवः ( रा. ९.२२ )

**बीजाम्ल**–न., वनस्पति० वृक्षाम्लम् ( रा. ६.१४४ )

**बीजावर्त**–पु., यस्मिन्काले द्रावणकारणयोग्यं यद्द्रव्यं तन्निभा ज्वाला धमनकरणेऽग्नौ वाऽवलोक्यते स कालो बीजावर्त इत्युच्यते। अस्मिन्नेव काले द्रावस्योन्मुखता ज्ञेया । संप्रति सद्यो वा द्रुतिर्भाविनीति भावः ( र. ८.५९ )

**बीजाढ्य**–पु., वनस्पति० असनः ( र. १७.५२ )

**बीजिन्**–वि., बीजमस्यास्तीति सः, वृक्षादिरूपः ( सुसू. ३६.१२ )

**बीजोग्र**–पु., वनस्पति० वंशः ( असंउ. ८ )

**बीजोपघात**–पु., बीजस्य विकृतिः ( चसू. १९.४ (५) )

बीजकम् पु., वनस्पति० (ध. ५.२२) मातुलुङ्गम्

सर्जकः ( सुचि. ६.१९ )

मूढगर्भ, द्र० ' मूढगर्भ ' ( सुनि. ८.४ )

वनस्पति० असनः ( ध, ५.१२५; र. १७.३६; चचि. १६.१०६; सुचि. २७.१२; सुउ. ५८.४७ )

**बीभत्स**–वि., विकृताकृतिः ( सुचि. ३३.७ ) जुगुप्सितम् ( चचि. २०.१८ ) पूयामेध्यादि घृणाकरम् ( सुउ. ४९.५ )

**–चेष्ट**–वि., लक्षण० फेनवमनाङ्गविक्षेपणादिका बीभत्सचेष्टा यस्मिन् तथाविधः ( अपस्मारः ) ( चचि. १०.३; चनि. ८.५ )

**–त्व**–न., लक्षण० दर्शनायोग्यत्वम् ( चनि. ७.७ (३)

**बुक**–पु., वनस्पति० वसुकः ( ध. ४.१९ )

**बुक्क**–पु., हृत्प्रदेशो वक्षःप्रदेशो वा मेदोवहस्रोतसो मूलम् ( चवि., ५.८ सुनि. ९.२१ )

**बुद्धमुनि**–पु., प्राचीनो रसाचार्यः ( र. २०.१०७ )

**बुद्धि**–स्त्री., निश्चयात्मिका धीः कर्मपुरुषस्य गुणेष्वेकः ( सुशा. १.१७ ) तत्कालविषया; एकः सात्विकगुणः ( सुशा. १.१८ ) निश्चयात्मकं ज्ञानम् (चसू. १३.४३ ) ज्ञानम् ( चसू. १.४९ ) प्रज्ञा ( चसू. १.५४ )

**–कर**–वि., बुद्धिवर्धकम् ( अहसू. १४.२८ )

**–निरोध**–पु., ( परिव० ) विषयग्रहणे बुद्धेरसामर्थ्यं प्रतिहतिरूपम्, तामसगुणो हि सः (सुशा. १.१८)

**–प्रणाश**–पु.. लक्षण० बुद्धेर्विनाशः (असंसू. ५.३३)

**–प्रबोधन**–वि., बुद्धेः प्रबोधनं करोति इति । यावन्मात्रा यस्य शेमुषी नाम बुद्धिः सा तस्य स्फुटप्रतिभासा तद्योगाद्भवतीत्यर्थः ( अहसू. ५.१ )

**–प्रसाद**–पु., लक्षण० बुद्धेर्निर्मलत्वम्, बुद्धेः स्फुटं यथावद्विषयग्रहणे अकालुष्यम् । मनःशुद्धौ बुद्धिप्रसादः ( सुचि. ३३.२७ )

**–मत्**–वि., उहापोहोपलक्षितधीमान् ( सुउ. २४.४२ )

**–मेधाकरगण**–पु., बुद्धिमेधावर्धकपदार्थानां समूहः, सतताध्ययनं, वादः, परतन्त्रावलोकनं, तद्विद्याचार्यसेवा चेति बुद्धिमेधाकरो गणः ( सुचि. २८.२७ )

**–विपर्यय**–पु., लक्षण० सम्मोहः ( सुशा. ६.३६ )

**–विभ्रंश**–पु., लक्षण० बुद्धिभ्रष्टत्वम्, नित्यानित्ये हिताहिते यो विषमाभिनिवेशः सः बुद्धिविभ्रंश इति ज्ञेयः, समं बुद्धिर्हि पश्यति । उचिता बुद्धिः समं यथाभूतं पश्यति ( चक्र. चशा. १.९९ )

**–शुद्धि**–स्त्री., लक्षण० बुद्धेः निश्चयात्मकज्ञानकरत्वे पाटवम् ( चसू. १६.६ )

**–साम्य**–न., प्रस्तावविशेषे समानज्ञानम् ( चवि. ८.३४ )

**बुद्धीन्द्रिय**–न., ज्ञानेन्द्रियम् ( सुशा. १.४ ) पञ्च बुद्धीन्द्रियाणि, तद्यथा–स्पर्शनं, रसनं, घ्राणं, दर्शनं, श्रोत्रं चेति ( चशा. ७.७ )

**बुद्धीन्द्रियोपरोध**–पु., लक्षण० बुद्धेरिन्द्रियाणां रोधः ( चचि. ४.२७. )

**बुद्ध्युपघात**–पु., लक्षण० बुद्धेर्विनाशः ( चसू. ८.१५ )

**बुद्बुद**–पु., वायुना अन्तःपूरितो जलादिद्रवबिन्दुः ( अहसू. ७.६ )

शारीर० अक्षिगोलकम् ( सुउ. १.१० ) द्र० ' नेत्र '

न., नेत्ररोग० अहिताचारहेतुको व्यधदोषभवो वा रोगः ( सुउ. १७.८५-८६ )

**बुधरत्न**–न., रत्न० मरकतम् ( ध. ६.४९ )

**बुभुक्षा**–स्त्री., भोक्तुमिच्छा ( सुचि. ३४.४ )

**बुभुक्षित**–वि., क्षुधायुक्तः ( का. भोजनकल्प. ११ )

**बुस**–न., कणकं, तुषम्, धान्यपलालम् ( चइ. १२.१९; सुचि. ३२.११ )

**बुसोषित**–वि., बुसमध्ये स्थितम् ( अरिष्टादि ) ( सुउ. ४२.४८ )

**बूक**–पु., वनस्पति० वसुकः ईश्वरमल्लिका ( अरुणदत्त ) बकपुष्पः ( हेमाद्रि ) ( अहसू. १५.२४ )

**बृंहण**–वि., न., उपक्रम० ( चसू. २२.४२ ) धातुपुष्टिकरं शरीरवृद्धिकरं देहोपचयकरं वा (सुसू. ४५.११२; सुसू. ३८.३६; सुचि. १.८; चसू. २६.४३. (१) ) बृंहणं यद्देहस्य बृहत्त्वाय भवति। प्रायः बृंहणं द्रव्यं भूम्युदकात्मकम् ( असंसू. २४.४; असंसू. १७.८ )

प्रायो बृंहणं द्रव्यं गुरु, शीतं, मृदु, स्निग्धं, बहलं, स्थूलपिच्छिलं, मन्दं, स्थिरं, श्लक्ष्णं च (चसू. २२.१०) सन्तर्पणापरपर्यायः बृंहणयोग्या नराः व्याधिभैषज्यमद्यस्त्रीशोककर्शितान्, भाराध्वोरःक्षतक्षीणरूक्षदुर्बलवातलान्, गर्भिणीसूतिकाबालवृद्धान् ग्रीष्मेऽपरानपि बृंहयेत् (अहृसू. १४.८) बृंहणद्रव्याणि—मांसक्षीरसितासर्पिर्मधुरस्निग्धबस्तयः, तथैव स्वप्नशय्यासुखाऽभ्यङ्गस्नाननिर्वृतिहर्षणानि (अहृसू. १४.९-३४) सामान्येन मधुरो रसः बृंहणः (चसू. २६.४३ (१))

–बस्ति–पु., उपक्रम० बृंहणद्रव्यनिःक्वाथास्तत्कल्कस्नेहसैन्धवैः युक्ताः खजप्रमथिता बस्तयो बृंहणा मताः (सुसू. १५.३३) द्र० 'बस्ति'

–रोगिन्–पु., यस्य बृंहणं शस्तं, स रुग्णः (असंसू. २४.४२) द्र० 'बृंहण'

**बृंहणीय**–वि., (चसू. ४.८)
द्रव्यगण०–महाषड्के महाकषायवर्गे एको गणः क्षीरिणीराजक्षवकाऽश्वगन्धाकाकोलीक्षीरकाकोलीवाट्यायनीभद्रोदनीभारद्वाजीपयस्यर्ष्यगन्धा इति दशेमानि बृंहणीयानि भवन्ति (चसू. ४.९; असंसू. १५.७; सुउ. ५८.५९)

**बृंहित**–वि., बृंहणोपक्रमेण चिकित्सितः (अहृसू. १४.१६)

–लक्षण–न., बृंहितस्य लक्षणम्। बृंहिते सति बलं, पुष्टिस्तत्साध्यामयसङ्क्षयश्च (असंसू. २४.१६)

**बृंह्य**–वि., बृंहणार्हः, कर्तव्यबृंहणविधिकः, बृंहणयोग्यः इति (असंसू. २४.१०-१२)

**बृहत्**–वि., महत् (रापरि. ७.४०)
उपचितम् (अहृसू. १४.२)

–कन्द–पु., वनस्पति० विष्णुकन्दः (रापरि. ७.४०)

–कोशातकी–स्त्री., वनस्पति० कोशातकी (रा. ७.२८४)

–ताल–पु., वनस्पति० हिन्तालः (रा. ९.९८)

–तिक्ता–स्त्री., वनस्पति० पाठा (ध. १.७०)

–त्व–न., बृहतो भावः, महत्त्वम् (असंसू. ७.९९)

–त्वच्–स्त्री., वनस्पति० सप्तपर्णः (रा. १२.१३९)

–पत्र–पु., वनस्पति० हस्तिकन्दः (रापरि. ७.३५)
लोध्रः (चक. ९.३)

–पत्री–स्त्री., वनस्पति० तिलकन्दः (रापरि. ७.५३)

–पर्ण–पु., लोध्रः (ध. ३.१७७)

–पारेवत–न., वनस्पति० पारेवतम् (रा. ११.९०)

–पाली–स्त्री., वनस्पति० जीरक० (ध. २.७२)

–पीलु–पु., वनस्पति० पीलुभेदः (रा. ११.६३)

–पुष्पा–स्त्री., वनस्पति० कुब्जकः (ध. ५.१४६)

–पुष्पी–स्त्री., वनस्पति० शणपुष्पी (ध. १.२००)

–फला–स्त्री., वनस्पति० कूष्माण्डम् (ध. १.१८३)
इन्द्रवारुणी (रा. ३.३७६)
जम्बूभेदः (रा. ११.१३०) द्र० 'जम्बू'
महाबला (ध. १. २८२)
कटुतुम्बी (रा. ३ व २३४)

–सरोरुह–न., बृहत्कमलम् (चक. १.१९)

(**बृहच्**)–**चञ्चु**–स्त्री., वनस्पति० गुणाः–कटुः, कषाया, उष्णा, मलरोधनी, रसायनी, गुल्मशूलोदरार्शोर्तिविषघ्नी (रा. परि. ४.२२)

–छद–पु., वनस्पति० अक्षोटः (रा. ११.८२)

–छिम्बी–स्त्री., वनस्पति० असिशिम्बी (रापरि. ७.९७)

–छुक–पु., प्रतुदपक्षि० (धपरि. ६.१२)
द्र० 'प्रतुद.'

(**बृहज्**)–**जीवन्ती**–स्त्री., वनस्पति० जीवन्तीभेदः (रा. ३.१७९) द्र० 'जीवन्ती'

–जीवा–स्त्री., वनस्पति० जीवन्ती (रा. ३.१७९)

(**बृहद्**)–**दल**–पु., वनस्पति० हिन्तालः (रा. ९.९७)
लोध्रभेदः (रा. ६.२४०) द्र० 'लोध्र'

–बल्क–पु., वनस्पति० लोध्रभेदः (रा. ६.२४०)

–वारुणी–स्त्री., वनस्पति० इन्द्रवारुणी (रा. ३.३७६)

**बृहती**–स्त्री., वनस्पति० बृहत्पञ्चमूले, श्वयथुहरगणे, हिक्कानिग्रहगणे, महाकषायवर्गे, कण्ठ्यगणे, अङ्गमर्दप्रशमनगणे चैकं द्रव्यम् (चसू. ४.१७)
अणुतैलद्रव्येष्वेकं द्रव्यम् (चसू. ५.६५)
आमलकीफलाकारफला क्षुद्रवार्ताकः व्रणशोधनतैले उपयुज्यते (सुसू. ३७.१८) अस्याः पुष्पाणि अञ्जने उपयुज्यन्ते (सुउ. १२.११) बृहत्यौ वा बृहतीद्वयमित्यनेन कण्टकारी बृहती चेति वनस्पतिद्वयं गृह्यते। विदारीगन्धादिगणे (सुसू. ३८.४) गर्भिण्यवस्थायां गर्भस्रावपरिहारार्थमुपयुज्यते (सुशा. १०.६१) शूलहरक्काथे उपयुज्यते (सुउ. ४२.१२८) बृहती द्विधा–सिंही व्याघ्री च (अहृसू. ६.७६) बृहत्यादिगणे उल्लिखितं बृहतीद्वयम् बृहती कण्टकारिका च (सुसू. ३८.३१) गुणाः– कफवातघ्नी, श्वासशूलज्वरापहा, छर्दिहृद्रोगमन्दाग्न्यामदोषनाशनी च, सोष्णा पाचनी च (ध. १.९४) कटुतिक्ता, कासघ्नी, अरोचकश्वासहृद्रोगहारिणी च (रा. ४.१२२)

हिं.—बान्हंटा, बिर्हाटा.
**म.—डोरली, मोतीरिंगणी.**
गु.—उभी रिंगणी.
बं.—व्याकुरा.
त.—करीमुल्लि, पप्परामुल्लि.

–**द्वय**–न., वनस्पति० बृहती कण्टकारी च ( सुसू. ३८.६६; असंसू. ७. )

–**फल**–न., बृहतीद्वयस्य फलम् फलशाकविशेषः, तच्च कटु, तिक्तं, लघु, वातकफहरं, कण्डू-कुष्ठ-कृमिघ्नं च ( सुसू. ४६.२६७ )

–**मर्मन्**–न., शारीर० पृष्ठमर्म, स्तनमूलादृजूभयतः पृष्ठवंशस्य बृहत्यौ नाम मर्मणी, तत्र विद्धे सति शोणितातिप्रवृत्तिनिमित्तैरुपद्रवैर्म्रियते, सिराममर्णी अर्धांगुले, कालान्तरप्राणहरे च ( सुशा. ६.२६ )

**बृहत्यादिगण**–पु., सन्निपातज्वरापहो गणः, बृहत्यौ-पौष्करं, भार्ङ्गी, शटी, शृङ्गी, दुरालभा, वत्सकस्य बीजानि, पटोलं, कटुरोहिणी च, अयं बृहत्यादिगणः सन्निपातज्वरापहः तथैव सोपद्रवेषु सर्वेषु कासादिषु दातव्यः ( चचि. ३.२१३-२१४ ) बृहती, कण्टकारिका, कुटजफलं, पाठा मधुकं चेति, अयं बृहत्यादिगणः पाचनीयः, पित्तानिलापह-कफारोचकहृद्रोगमूत्रकृच्छ्ररुजापहः ( सुसू. ३८.३१-३२ )

**बृहदेला**–स्त्री., एलाभेदः ( ध. २.४६ ) द्र० ' एला '

**बृहस्पति**–पु., ऋषि० विषहरयोगप्रणेता कश्चिद् ऋषिः ( असंसू. ८.१०२ )

**बैजवापि**–पु., ऋषि० बीजवापस्य अपत्यं पुमानिति बैजवापिः रोगापहरणचिन्तनार्थं हिमवतः पार्श्वे समेतेषु महर्षिष्वेकः ( चसू. १.११ )

**बैडाल**–वि., ( सुउ. ३९.२६३ )

**बैभीतक**–वि., बिभीतकसम्बन्धि ( तैलादि ) ( सुचि. ९.१७ )

–**तैल**–न., बिभीतकमज्जायास्तैलं बिभीतकफलोत्थ-तैलं वा ( सुचि. ९.१७ )

–**मज्जा**–स्त्री., बिभीतकस्य मज्जा, तद्गुणाः–मदकरः कफमारुतनाशनः ( सुसू. ४६.२०५ )

–**रस**–पु., बिभीतकस्य रसः ( चक. १२.१५ )

**बैभीतकीसुरा**–स्त्री., आसुत० बिभीतकवल्कलयुक्त-शालिपिष्टकृता सुरा, नातितीव्रमदा, लघ्वी, पथ्या च। व्रणे पाण्डुरोगे कुष्ठे चोपयोक्तव्या ( अहृसू. ५.६९ )

**बैल**–पु., बिलेशयप्राणिविशेषः, बिले निवसति इति बैलः बिलेशयः ( चसू. २४.७; चचि. १८.१८५; असंचि. ४ )

**बैल्व**–वि., बिल्वस्येदमिति बैल्वं नाम बिल्वसम्बन्धि, यथा बैल्वकाष्ठं नाम बिल्वस्य काष्ठम् ( चशा. ८.३३ )

**बोकडी**–स्त्री., वनस्पति० बस्तान्त्रिः ( रा. ३.२ )

**बोट**–न., वनस्पति० शालिपर्णीभेदः ( ध. १.८९; असंचि. ५ ) द्र० ' शालिपर्णी '

**बोदारशृङ्गक**–न., खनिज० मृद्दारशृङ्गकम्. सदलं पीत-वर्णं च गुर्जरमण्डले भवेत्। अर्बुदस्य गिरेः पार्श्वे बोदारशृङ्गकं जातम्, गुणाः–शीतं, वातश्लेष्मशमनं पुंस्त्वदायकमुत्कृष्टं रसबन्धनम् उत्तमं केशरंजनं च ( धपरि. ६.२३ )

हिं.—मुरदासिंग.
**म.—मुरदाडशिंग.**
गु.—बोदार कॉंकरो.
बं.—मुरदोसिंग.
त.—मुदारसिंगु.
फा.—मुरदासिंग.

**बोद्धृ**–पु., आत्मा, जगद्बोधयिता बोद्धा इत्युच्यते ( चशा. ४.८ )

**बोधक**–पु., रसनस्थः सम्यग् रसबोधनात् बोधकश्लेष्मा पञ्चप्रकारेषु श्लेष्मस्वेकः ( असंसू. २०.६; अहृसू. १२.१७ )

**बोधन**–न., जागृतिः ( सुशा. ४.३५ )

**बोधना**–स्त्री., वनस्पति० कर्कोटकी ( रा. ७.२७६ )

**बोधलब्धि**–स्त्री., लक्षण० मूर्च्छाक्षेपान्मुक्तिः, संज्ञा-लाभश्च ( र. १२.९० )

**बोधि**–पु., वनस्पति० पिप्पलः (असंउ. ४४; र. ५.१६७,

–**कुवल**–न., विकसितकमलम्, बोधो ज्ञानं विकासो वा, बोधिविकसितम्

–**वृक्ष**–पु., वनस्पति० पिप्पलः ( ध. ५.७८; चचि. २९.१५८ )

**बोल**–पु., न., भैषज्य० उग्रगन्धघनरसः, रसगन्धो, गन्धरसश्च, गुणाः–बोलं, तिक्तं, हिमं, उद्रिक्तरक्तं हन्ति, कफपित्तामयान् हन्ति, तथैव प्रदरादिरुजा-पहम् ( ध. ३.६३ ) कटु कषायं तिक्तोष्णं, रक्तदोषनुत् ( रा. ६.११८ )

हिं.—बोल, हीराबोल, बीजाबोल.
**म.—बोळ.**

गु.—हिराबोळ.
बं.—गंधरस, बोल, हिराबोल, खुनखारापी.
त.—वेळ्ळइप्पोलम्.
फा.—मुर.

**-बद्धरस**-पु., पारदयोग० रसभस्म वत्सनाभौ समौ गन्धको द्विगुणः, बोलो हरितालभस्म हिङ्गु कर्कोटीमूलं माक्षिकभस्म हरिद्रा कण्टकारी यवक्षारो लाङ्गली स्वर्जिका सैन्धवं मधूकसार-श्लेतानार्द्रकस्वरसेन सप्ताहं संमर्द्य बदराकारां गुटिकां कुर्यात्। श्लेष्मकासश्वासपाण्डुनाशनोऽयं योगः ( र. १३.४१-४३ )

**बोष्काणदेश**-पु., देश० काबेलः, बोष्काणदेशजं हिङ्गु श्रेष्ठम् ( असंसू. १२.६७ )

**ब्रध्न**-पु., चर्मलता, मांसपेशीति केचित् (चवि.७.१२ )
शारीर० गुदम् ( चचि. १९.६ )
रोग० वङ्क्षणसंधिषु यदा कुपितो दोषो ग्रन्थिवत् शोथं करोति तदा ज्वरशूलाङ्गसादैर्युक्तं तं ब्रध्नमिति निर्दिशेत् ( चइ. ११.१५; चनि. ३.७ )
रोग० वातादिलिङ्गैर्वृषणे अन्त्रं निरेति । तम् अन्त्रवृद्धिलक्षणं ब्रध्नमिति निर्दिशेत् । तथैव मूत्रेण पूर्णं स्यात् तत् पूर्णं मृदु च; मेदसा चेत् शोथं, स्निग्धं, कठिनं च विद्यात् (चचि. १२.९४)

**ब्रह्मन्**-न., वेदः ( सुसू. २९.३० )
तत्त्वज्ञानम् ( चचि. २०.३ )
मोक्षः ( चशा. ५.१९ )
आत्मा ( चशा. ४.८ )
परमात्मा ( चशा. ५.४ )
ओङ्कारः ( चचि. १ (३).११; चचि. १.८० )
पु., आदिदेवो ब्रह्मा; आयुर्वेदस्याऽऽद्यस्मरणकर्ता ( सुसू. १.२०; सुसू. ३४.८; चसू. १.४ )
श्लेष्मप्रकृतिदेव० ( सुशा. ४.६७ ) बुद्धेरधिदैवतं ब्रह्मा ( सुशा. १.७ ) ब्रह्मा आत्मानं पातु ( सुसू. ५.२९ )
रससिद्धिप्रदायकः सप्तविंशतिसंख्याकेष्वन्यतमः ( र. १.२-५ )

**( ब्रह्माणी )**-स्त्री., कृत्रिमधातु० पित्तलम् ( ध. ६.२० )

**-कन्यका**-स्त्री., वनस्पति० ब्राह्मी ( रा. १५.१४८)

**-काय**-वि., चित्तप्रकृति० सात्विककायः, यस्मिन् मनुष्ये शौचमास्तिक्यं वेदाभ्यासो गुरुपूजनम्, अतिथिप्रियत्वं याग इत्यादयो दृश्यन्ते, स ब्रह्मकायो ज्ञेयः ( सुशा. ४.८१ )

**-काष्ठ**-न., वनस्पति० तूलम् ( ध. ५.६४ )

**-कोशी**-स्त्री., वनस्पति० अजमोदा ( रा. ६.१५१ )

**-गर्भा**-स्त्री., वनस्पति० अजगन्धा ( रा. ४.१५३ )

**-घोष**-पु., वेदध्वनिः ( चसि. १२.१९(१) )

**-घ्नी**-स्त्री., वनस्पति० कुमारी ( रापरि. ५.११ )

**-चर्य**-न., वेदाध्ययनमिन्द्रियसंयमो वा ( सुचि. २८.२८ ) कामकर्मवर्जनम्, अमैथुनम् अयमेकान्ततः पथ्यतमविहारः ( सुसू. २०.६ ) ब्रह्मचर्यमायुष्यकराणां श्रेष्ठम् ( चसू. २५.४० ) त्र्युपस्तम्भेष्वेकः ( चसू. ११.३४ )

**-चारिण**-न., वनस्पति० तूलम् ( ध. ५.६४ )
स्त्री., करुणी ( रापरि. १०.२७ )

**-चारिन्**-वि., अष्टविधमैथुनोपलक्षितस्त्रीसंगरहितः ( सुशा. २.२८ )

**(-चारिणी )**-स्त्री., ब्रह्मचर्यव्रतमाचरन्ती स्त्री ( सुशा. २.२८; सुनि. १२.७ )

**-जटा**-स्त्री., वनस्पति० दमनम् ( ध. ३.६४ )

**-ज्योतिष्**-पु., प्राचीनो रसाचार्यः ( र. ९.६४ )

**-दत्ता**-स्त्री., वनस्पति० श्वग्रहजुष्टे प्रदेहार्थमुपयुज्यते ( असंउ. ६ )

**-दारु**-न., वनस्पति० तूलम् ( ध. ५.६४ )

**-द्वार**-न., शिरसि ब्रह्मरन्ध्रस्थानम् ( र. १२.९९ )

**-पत्री**-स्त्री., वनस्पति० वाराहीकन्दः (रा. ७.१३४)

**-पवित्र**-पु., वनस्पति० कुशः दर्भः ( रा. ८.२०७ )

**-पादप**-पु., वनस्पति० विकङ्कतः ( रा. ९.५५ )

**-बीज**-न., पलाशबीजम् ( र. ७.२०२ )

**-मूल**-न., पलाशमूलम् ( र. ३.८२ )

**-मेखल**-पु., वनस्पति० मुञ्जः ( ध. ४.१३२ )

**-राक्षस**-पु., भूताधिपति० ( असंउ. ७ )

**-रीति**-स्त्री., कृत्रिमधातु० पित्तलम् ( ध. ६.२० )

**-वर्चसिन्**-वि., ब्रह्मतेजोयुतः ( सुचि. २८.४ )

**-विद्**-वि., ब्रह्मवेत्ता, मुक्तः ( चशा. १.१५५ )

**-वृक्ष**-पु., वनस्पति० पलाशः ( र. २०.६८ )

**-वृक्षक**-पु., वनस्पति० पलाशः(ध. ५.१६१)

**-सुवर्चला**-स्त्री., वनस्पति० हिरण्यक्षीरा, पुष्कर-सदृशपत्रा, द्रोणी प्रावेशिकरसायनेष्वेकौषधिः ( चचि. १ (४) ७; चचि. १.५८ ) तस्या उत्पत्ति-स्थानं देवसुन्दे ह्रदवरे तथा सिन्धौ महानदे जला-न्तेषु च मेध्या ब्रह्मसुवर्चला दृश्यते ( सुचि. ३०.३१ ) महौषधि० सोमसमवीर्या,

सक्षीरा, पद्मिनीप्रख्या अरत्निमात्रक्षुपका, ह्यङ्गुलसम्मितैः पत्रैर्नीलोत्पलाकारपुष्पैरंजनसन्निभैः फलैश्च, देवी ब्रह्मसुवर्चलेति जानीयात् (सुचि. ३०.२१-२२)

ब्राह्मी (ध. ४.१००)

**-सुवर्चसा**-स्त्री., वनस्पति० भार्ङ्गी (ध. १.६८)

**-स्वन**-पु., वेदघोषः, अयं प्रस्थाने प्रशस्तः (सुसू. २९.३०)

**ब्रह्मण्य**-पु., वनस्पति० मुञ्जः (रा. ८.२०४)
न., तूलम् (ध. ५.६४)

**ब्रह्मर्षिपुत्र**-पु., सुश्रुतः विश्वामित्रस्य पुत्रः, 'विश्वामित्रो हि राजर्षिरेव ब्रह्मर्षित्वं तपसा गतः' (सुनि. ७.३)

**ब्रह्मादनी**-स्त्री., वनस्पति० हंसपादी (रा. ५.१६७)

**ब्रह्मोपनेतृ**-पु., वनस्पति० पलाशः (रा. १०.१७४)

**ब्राह्म**-न., ब्रह्मणा प्रोक्तम् (असंउ. ४९)
पु., योग० कटुकालाबुमूलानि गवां पित्तेन कल्कीकुर्यात् योगोऽयं मणिवत् सन्निधधारणेनाऽपि विषहन्ता तथा च सर्वकर्मसु पूजितः (असंउ. ४०)
न., चित्तप्रकृति० शुद्धसात्त्विकप्रकृतिः, शुचिं सत्याभिसंधं, जितात्मानं, संविभागिनं, ज्ञानविज्ञानवचनप्रतिवचनसंपन्नं, स्मृतिमन्तं, कामक्रोधलोभमानमोहेर्ष्यामर्षापेतं, समं सर्वभूतेषु ब्राह्मं विद्यात् (चशा. ४.३७ (१))

**-कन्द**-पु., वाराहीकन्दः (रा. ७.१३६)

**-धूप**-पु., धूपकल्प० सर्वरोगेषूपयुक्तः

**-मुहूर्त**-पु., रात्रेरुपान्त्यो मुहूर्तो ब्राह्मः, मुहूर्तो नाडिकाद्वयम्, स्वस्थ आयुषो रक्षार्थं ब्राह्मे मुहुर्ते उत्तिष्ठेत्। अत्र रात्रेश्चतुर्घटिकावशेषे समुत्थानं कार्यमिति स्थितम्। ब्राह्मश्च पश्चिमयामस्य नाडिकाद्वयम्, रात्रेश्चतुर्दशो मुहूर्तो ब्राह्मो मुहूर्तः (अहृसू. २.१) 'रात्रेश्च पश्चिमे यामे मुहूर्तो ब्राह्म उच्यते' इति हलायुधकोशे

**-रसायन**-न., जराव्याधिशमनार्थं रसायन० आमलकायसं ब्राह्मरसायनम्-करप्रचितानां यथोक्तगुणानामामलकानामुद्धृतास्थ्नां शुष्कचूर्णितानां माघे फाल्गुने वा मासे त्रिःसप्तकृत्वः स्वरसपरिपीतानां पुनः शुष्कचूर्णीकृतानामाढकमेकं ग्राहयेत्। अथ जीवनीयानां बृंहणीयानां स्तन्यजननानां शुक्रवर्धनानां वयःस्थापनानां षड्विरेचनशताश्रितीयोक्तानामौषधगुणानां चन्दनागुरुधवतिनिशखदिरशिंशपाऽसनसाराणां च खंडशः कृतानामभयाबिभीतकपिप्पलीवचाचव्यचित्रकविडंगानां च समस्तानामाढकमेकं दशगुणेनाम्भसा साधयेत्। तस्मिन्नाढकावशेषे रसे सुपूते तान्यामलकचूर्णानि दत्त्वा गोमयाग्निभिः वंशविदलशरतेजाग्निभिर्वा साधयेत् यावदपनयाद्रसस्य, तमनुपदग्धमुपहृत्यायसीषु पात्रीष्वास्तीर्य शोषयेत्। सुशुष्कं तत् कृष्णाजिनस्योपरि दृषदि श्लक्ष्णपिष्टमयःस्थाल्यां सम्यक् निधापयेत्। तच्चूर्णम् अयश्चूर्णाष्टभागसंप्रयुक्तं मधुसर्पिर्भ्यामग्निबलमभिसमीक्ष्य प्रयोजयेदिति। इदं रसायनं जराव्याधिप्रशमनं बुध्दीन्द्रियबलप्रदमस्ति (चचि. १(३).३-६)
प्रथमं ब्राह्मरसायनम्-पञ्चानां पञ्चमूलानां प्रतिद्रव्यं दशपलोन्मितान्भागान्, हरीतकीसहस्रं नवं त्रिगुणामलकं च गृहीत्वा, दशगुणेऽम्भसि पाचयेत्। दशभागावशेषं ग्राहयेत्। हरीतकीनामामलकानां निरस्थिकल्कं ग्राहयेत्। तस्मिन् निर्यूहे मण्डूकपर्ण्याः पिप्पल्याः शङ्खपुष्प्याः प्लवस्य मुस्तस्य, विडङ्गस्य, चन्दनाऽगुरुणोस्तथा मधुकस्य, हरिद्रायाः, वचायाः कनकस्य, सूक्ष्मैलायास्त्वचः, प्रत्येकं चतुष्पलं भागं चूर्णं दापयेत्। तुलयाऽधिकं सितोपलाचूर्णं दापयेत्। तैलस्य द्व्याढकं,सर्पिषस्त्रीणि गृहीत्वा, तत्सर्वमौदुम्बरे पात्रे मृदुनाऽग्निना पाचयेत्। शीतं लेह्यं च ज्ञात्वा स्नेहार्धप्रमाणं क्षौद्रं संसृजेत्। तस्य मात्रां प्रयोजयेत्। इदं ब्राह्मरसायनं भुंजानो दीर्घमायुर्वयश्चाग्र्यं कामांश्चेष्टान् समश्नुते (चचि. १.४१-५७)
द्वितीयं ब्राह्मरसायनम्-यथोक्तगुणानामामलकानां सहस्रं पिष्टस्वेदनविधिना पयस ऊष्मणा सुस्विन्नमनातपशुष्कमनस्थि चूर्णयेत्। तदामलकसहस्रस्वरसपरिपीतं स्थिरापुनर्नवाजीवन्तीनागबलाब्रह्मसुवर्चलामण्डूकपर्णीशतावरीशंखपुष्पीपिप्पलीवचाविडङ्गस्वयंगुप्तामृताचन्दनागुरुमधुकमधूकपुष्पोत्पलपद्ममालतीयुवतीयूथिकाचूर्णाष्टभागसंयुक्तं पुनर्नागबलासहस्रपलस्वरसपरिपीतमनातपशुष्कं द्विगुणितसर्पिषा क्षौद्रसर्पिषा वा क्षुद्रगुडाकृतिं कृत्वा शुचौ दृढे घृतभाविते कुम्भे भस्मराशेरधः स्थापयेत् अन्तर्भूमेः पक्षं कृतरक्षाविधानमथर्ववेदविदा, पक्षात्यये चोद्धृत्य कनकरजतताम्रप्रवालकालायसचूर्णाष्टभागसंयुक्तमर्धकर्षवृद्ध्या यथोक्तेन विधिना प्रातः प्रातः प्रयुञ्जानोऽग्निबलमभिसमीक्ष्य, जीर्णे च षष्टिकं पयसा ससर्पिष्कमुपसेवमानो यथोक्तान्गुणान् समश्नुत इति। इदं महर्षिगणसेवितं ब्राह्मं रसायनं प्रयुञ्जानो महाबलो दीर्घायुररोगः प्रजानां प्रियः

सिद्धार्थश्चन्द्रादित्यसमद्युतिः, स्मृतिमान्, विक्रमशालि धरणीधरसारो वायुसमविक्रमो गात्रे विषमपि अविषवत् प्राप्नुवन् जीवति ( चचि. १.५८-६१ )

**ब्राह्मण**–पु., ब्राह्मणसदृशः ये च पन्नगा मुक्ता रूप्यप्रभाः कपिलाः, सुगन्धयः, सुवर्णाभाश्च भवन्ति, ते जात्या ब्राह्मणाः स्मृताः (सुक.४.२५)

द्विजः, विप्रः ( सुसू. २.३ )

**( ब्राह्मणी )**–स्त्री., वनस्पति० स्पृक्का ( ध. ३.६२ )

कृत्रिमधातु० पित्तलम् ( रा. १३.१८ )

**–यष्टि**–स्त्री., वनस्पति० भार्ङ्गी ( ध. १.६८ )

**–यष्टिका**–स्त्री., वनस्पति० भार्ङ्गी ( ध. १.६८ )

**ब्राह्मणिका**–स्त्री., आग्नेयकीट० (सुक. ८.९; असंउ.४३) पिपीलिकाभेदो, वरटी, तया दष्टे संति दंशस्थाने श्वयथुरग्निस्पर्शवद्दाहशोफौ च भवतः (सुक. ८.३४)

वनस्पति० स्पृक्का ( रा. १२.११३ )

**ब्राह्मणेष्ट**–न., वनस्पति० तूलम् ( ध. ५.६४ )

**ब्राह्मिका**–स्त्री., वनस्पति० ब्राह्मी ( र. २७.१०० )

**( ब्राह्मी )**–वि., ब्राह्मी विभूतिः, आत्मविशेषस्य जगत्स्रष्टुर्विभूतिः, यथा खलु ब्राह्मी विभूतिर्लोके तथा पुरुषेऽप्यान्तरात्मिकी विभूतिः ( चशा. ५.५ )

स्त्री., तेजोवती ( रा. ३.३९३ )

अजगन्धा ( रा. ४.१५३ )

रेवतीग्रह० ( का.चि. बालग्रह )

वनस्पति० ब्रह्मसुवर्चला ( असंउ. १ )

वनस्पति० मण्डूकपर्णी (सुचि.७.२४; सुउ.६२.३०)

प्रजास्थापनगणे एका ( चसू.४.१८ ) अतत्त्वाभिनिवेशाख्ये मानसविकारे अस्याः स्वरसः उपयुक्तः (चचि. १० ६२)

एतद्रससाधितं घृतं कुष्ठेषूपयुज्यते ( असंचि. २१ )

गुणाः–रसे तिक्ता कषाया हिमा शोफपाण्डुज्वरापहा, दीपनी, कुष्ठकंडूघ्नी, वातकफजित्, प्लीहरोगघ्नी, आयुष्या, मेध्या, लघुः, स्वर्या, स्मृतिप्रदा, कुष्ठपाण्डुमेहास्त्रकासजित् ( ध. ४.१०१-१०२ ) बुद्धिप्रज्ञावर्धिनी च

हिं.—ब्राह्मी, ब्रह्ममाण्डूकी, वरंभी, चेरली, खुलकुदी.

**म.—ब्राह्मी.**

गु.—ब्राह्मी, विद्याब्राह्मी, खड भरामी.

बं.—ब्रह्मीशाक, अधवर्णी, थुलकुडि, थालकुनि, ब्रह्ममण्डूकी.

त.—वीमी, वल्लरीकेरी, बबस्सा.

फा.—जरनव.

द्वितीया ब्राह्मी–वयःस्था, मत्स्याक्षी, मीनाक्षी, सोमवल्लरी इति अपरनामभिः प्रसिद्धा, ग्रन्थे चोल्लिखिता गुणाः– शिशिरा, रुच्या, व्रणदोष-क्षयापहा ( रापरि. ५.४१ )

**ब्राह्मी**–स्त्री., वनस्पति० ब्रह्मसुवर्चला ( असंउ. १ )

**–घृतरसायन**–न., योग० ब्राह्मीस्वरसप्रस्थद्वये घृतप्रस्थं विडङ्गतण्डुलानां कुडवं द्वे द्वे वचामृतयोः द्वादश हरीतक्यामलकबीभितकानि श्लक्ष्णपिष्टान्याधाप्यैकध्यं साधयित्वा स्वनुगुप्तं निदध्यात्। ततः पूर्वविधानेन मात्रां यथाबलमुपयुञ्जीत, जीर्णे पयः सर्पिरोदन इत्याहारः, एतेनोर्ध्वमधस्तिर्यक् क्रमयो निष्क्रामन्ति। अलक्ष्मीरपक्रामति। पुष्करवर्णः, स्थिरवयाः श्रुतनिगादी, त्रिवर्षशतायुर्भवति। एतदेव कुष्ठविषमज्वराऽपस्मारोन्मादविषभूतग्रहेष्वन्येषु च महाव्याधिषु संशोधनमादिशन्ति ( सुचि. २८.६ )

**–रसायन**–न., योग०, मलरहिते पलाशोलूखले ब्राह्मी संकुट्य तद्रसमाढकमात्रं गृह्णीयात्। तत्र च प्रस्थमात्रं गोघृतं संमिश्र्य पाठाऽऽमलकीहरिद्रात्रिवृतां कल्केन घृतपाकं कुर्यात्। अनुपानं–विडङ्गपिप्पलीसैन्धवजटामांसीनां चूर्णम्, मर्यादा सप्तरात्रं पक्षो मासो वा ( र. २६.४८ )

**–स्वरसरसायन**–न., योग०, हृतदोष एवाऽगारं प्रविश्य प्रतिसंसृष्टभक्तो ब्राह्मीस्वरसमादाय सहस्रसंपाताभिहुतं कृत्वा यथाबलमुपयुञ्जीत। जीर्णौषधश्चापराह्णे यवागूमलवणां पिबेत्। क्षीरसात्म्यो वा पयसा भुञ्जीत। एवं सप्तरात्रमुपयुज्य ब्रह्मवर्चसी मेधावी भवति। द्वितीयं सप्तरात्रम् उपयुज्य ग्रन्थमीप्सितमुत्पादयति नष्टं चास्य प्रादुर्भवति। तृतीयं सप्तरात्रमुपयुज्य द्विरुच्चारित शतप्यमवधारयति। एवमेकविंशतिरात्रमुपयुज्याऽलक्ष्मीरपक्रामति। मूर्तिमती चैनं वाग्देव्यनुप्रविशति। सर्वाश्चैनं श्रुतय उपतिष्ठन्ति। श्रुतधरः पञ्चवर्षशतायुर्भवति ( सुचि. २८.५ )

## भ

**भक्त**–पु., ओदनः ' सुधौतांस्तण्डुलान्स्फीतांस्तोये पञ्चगुणे पचेत्' इति वैद्यकशब्दसिन्धुः ( सुसू. २.४ ) भोजनम् ( सुचि. ३७.६९ )

**–द्वेष**–पु., अन्नद्वेषः ( र. २०.२३२; सुसू. ३२.४ )

**–रुचि**–स्त्री., आहाररुचिः ( सुसू. ४२.९ )

**–श्रद्धा**–स्त्री., भक्तेच्छा ( असंसू. २६ )

**भक्तानभिनन्दन**–न., रोग० भोजनारोचनम् अरोचकः ( चसि. १.३३ )

**भक्तायन**–न., अन्नवहस्रोतः ( सुउ. ५७.३ ) (चसू. १७.५६)

**भक्तारुचि**–स्त्री.; लक्षण० अरोचकः अनन्नाभिलाषः ( सुचि. ३४.१५ )

**भक्ताश्रद्धा**–स्त्री., लक्षण० भोजनेऽरुचिः

**भक्ति**–स्त्री., श्रद्धा इच्छा (चइ. १.३)

–**निश्चय**–पु., इच्छा निश्चयः ( चसू. २७.३०८ ) इयत्तानिश्चयः ( चसू. २७.३०८ )

**भक्तोपघात**–पु., उपघात इच्छाप्रतिरोधोऽनभिलाषो वा तेन भक्तोपघातः अनन्नाभिलाषः अरोचकः ( सुउ. ५७.३ )

**भक्तोपरि**–अ., (परिव०) भोजनान्ते, दशौषधकालेष्वेकः कालः, अधोभक्तम् इति सुश्रुतेन निर्दिष्टः ( सुउ. ९.८ )

**भक्तोपरोधतृषा**–स्त्री., अन्नाऽनभिलाषादन्नमार्गस्य रुद्धत्वाद्वा तृषा भक्तच्छेदजन्या तृषा ( चचि. २२.५२ )

**भक्षक**–पु., वनस्पति० गोक्षुरः ( ध. १.१०२ )

**भक्षटक**–पु., वनस्पति० गोक्षुरः ( ध.१.१०२ ) गोक्षुर० क्षुद्रक्षुरः ( रा. ३.१२१ )

**भक्ष्य**–वि., भक्षणार्हः, भक्षणीयः कृतान्न० मोदकशष्कुल्यादिः ( चसू. २७.२६८ ) फलमांसादिसंयोगसाधितभक्ष्यविशेषगुणाः– बल्यो गुरुर्बृंहणो हृदयप्रियश्च (सुसू. ४६.४०७-४०८) गोधूमपिष्टविकृतिरूपो यः क्षीरेणाऽऽलोड्य क्रियते, स बल्यो वृष्यो हृद्यः सुगन्धिकोऽदाही पुष्टिकरो दीपनः पित्तनाशनश्च ( सुसू. ४६.३९२-३९३ ) घृतपक्वभक्ष्यगुणाः– हृद्यः सुगन्धिर्लघुर्वातहरो बल्यो वर्णदृष्टिप्रसादनः ( सुसू. ४६.४०५ ) तैलपक्वभक्ष्यगुणाः– विदाही गुरुः पाके कटुरुष्णो मारुतघ्नो दृष्टिघ्नः पित्तलस्त्वक्प्रदूषणश्च ( सुसू. ४६.४०५-६ ) माषपिष्टकृतभक्ष्यगुणाः– विष्टम्भी पित्तसमः श्लेष्मघ्नो भिन्नवर्चा बल्यो वृष्यो गुरुश्च ( सुसू. ४६.४०२-४०३ ) विरूढधान्यभक्ष्यगुणाः– गुरुर्विदाह्युत्क्लेशकरो रूक्षो दृष्टिप्रदूषणो वातपित्तलश्च ( सुसू. ४६.४०४ )

–**कल्प**–पु., अपूपादिविधानम्, अत्र कल्पशब्दो विधानार्थो न तु प्रत्ययरूप इति बोध्यम्

–**पत्री**–स्त्री., वनस्पति० नागवल्ली ( रापरि. २१.६ )

–**बीज**–पु., वनस्पति० प्रियालः ( रा. ११.१०२ )

–**संविधि**–पु., भक्ष्यभक्षणम्, संविधिः संविधानम् आयोजनं विधानं वा (चसू.२७.३३२)

**भग**–पु., शारीर० योनिः ( चवि. ८.११७ ) वृषणगुदयोर्मध्यभागः ( र. २४.१०९ ) देवता० द्वादशादित्यानामेकतमोऽयम् (र.३०.१२५)

–**विस्तार**–पु., भगरन्ध्रम् तस्य परिणाहो द्वादशाङ्गुलः इदं तु भगप्रमाणं चतुर्विधस्त्रीपरिगणित–हस्तिनी-जातिस्त्रियाः ज्ञेयम् ( सुसू. ३५.१२ )

**भगन्दर**–पु., रोग० भगस्थानस्य रोगः, भगगुदबस्तिदेशदारणाच्च भगन्दरः, अयं भगस्थानसंश्रितः पिडकारम्भो गुदभगबस्तिदारणो व्रणात्मको महाव्याधिः ( सुनि. ४.३ ) तस्याऽधिष्ठानं मांसधरा नाम त्वक् ( सुशा. ४.४ ) स्वहेतुभिः प्रकुपितो दोषः संनिवृत्तः स्थिरीभूतो गुदमभितोऽङ्गुलेद्व्यङ्गुले वा मांसशोणिते प्रदूष्य पिडकां जनयति ( सुनि. ४.५ ) पञ्च भगन्दरा भवन्ति (सुनि. ४.३) पूर्वरूपाणि–कटिकपालवेदना–कण्डूर्दाहः शोफश्च गुदस्य; लक्षणानि–वातजभगन्दरेऽरुणवर्णाः पिडका तोदादिवेदनायुक्ता भवन्ति। अप्रतिक्रियमाणा च पाकमुपैति मूत्राशयाऽभ्यासगतत्वाच्च व्रणः प्रक्लिन्नः शतपोनकवद् अणुमुखैश्छिद्रैराऽऽपूर्यते । तानि च्छिद्राणि चाजस्रमच्छं फेनानुविद्धमधिकमास्रावं स्रवन्ति । व्रणश्च ताड्यते भिद्यते छिद्यते सूचिभिरिव निस्तुद्यते गुदं चावदीर्यते । उपेक्षितश्च वातमूत्रपुरीषरेतसामप्यागमस्तैरेव च्छिद्रैर्भवति। तं भगन्दरं शतपोनकमित्याचक्षते। पित्तजः–पित्तं तु प्रकुपितमनिलेनाधः प्रेरितं पूर्ववदवस्थितं रक्तां तन्वीमुच्छ्रितामुष्ट्रग्रीवाकारां पिडकां जनयति । साऽऽस्यशोषादीन् वेदनाविशेषान् जनयति । अप्रतिक्रियमाणा च पाकमुपैति । व्रणश्चाग्निक्षाराभ्यामिव दह्यते दुर्गन्धमुष्णमास्रावं स्रवति। उपेक्षितश्च वातमूत्रपुरीषरेतांसि जनयति । तं भगन्दरमुष्ट्रग्रीवमित्याचक्षते । कफजः–श्लेष्मा तु प्रकुपितः समीरेणाधः प्रेरितः पूर्ववदवस्थितः शुक्लावभासां स्थिरां कण्डूमतीं पिडकां जनयति। सा कण्ड्वादीन् वेदनाविशेषान् जनयति । अप्रतीकारे सति पाकमुपैति। व्रणश्च कठिनः संरम्भीकण्डूप्रायः पिच्छिलमजस्रमास्रावं स्रवति । उपेक्षितश्च वातमूत्रपुरीषरेतांसि विसृजति, तं भगन्दरं परिस्राविणमाचक्षते । वायुः प्रकुपितः प्रकुपितौ पित्तश्लेष्माणौ परिगृह्याऽधो गतः पूर्ववदवस्थितः

पादाङ्गुष्ठप्रमाणां सर्वलिङ्गां पिडकां जनयति । सा तोददाहकण्ड्वादिवेदनाविशेषान् जनयति । अप्रतिक्रियमाणा च पाकमुपैति । व्रणश्च नानाविधवर्णमास्रावं स्रवति । पूर्णनदीशम्बूकावर्तवच्चात्र समुत्तिष्ठन्ति वेदनाविशेषाः तं भगन्दरं शम्बूकावर्तमित्याचक्षते । मूढेन मांसलुब्धेन यदस्थिशल्यमन्नेन सहाभ्यवहृतं यदाऽवगाढपुरीषोन्मिश्रमपानेनाऽधः प्रेरितमसम्यगागतं गुदमपक्षिणोति, तदा तत्क्षतनिमित्तः कोथ उपजायते । तस्मिँश्च क्षते पूयरुधिरावकीर्णमांसकोथे भूमाविव जलक्लिन्नप्रक्लिन्नायां क्रिमयः संजायन्ते । ते भक्षयन्तो गुदमनेकधा पार्श्वतो दारयन्ति । तस्य तैर्मार्गैः क्रिमिकृतैर्वातमूत्रपुरीषरेतांस्यभिनिस्सरन्ति । तमुन्मार्गिणं भगन्दरमित्याचक्षते (सुनि. ४) वातपित्तजो भगन्दरः परिक्षेपिसंज्ञः । तत्र परिक्षेपिणि प्राकारस्य परितः परिखेव गुदं परिक्षिप्य गुदस्य परितो मण्डलाकृत्या नाडी समुपजायते । वातकफादृजुर्नामा भगन्दर उपजायते। तत्र ऋज्व्या गत्या गुदः अवदीर्यते । स्वकारणैः प्रथममुत्पन्नमर्शं आश्रिताभ्यां कफपित्ताभ्यामर्शोमूले जनितः कण्डूदाहादिमान् शोफस्तन्मूलक्लेदनेन गतिभिर्नाडीभिरजस्रमविच्छेदेन पूयं स्रवति। अयमर्शोभगन्दरः (असंउ. ३३) रिष्टलक्षणानि – वातमूत्रपुपुरीषाणि क्रिमयः शुक्रमेव यस्य भगन्दरात् प्रस्रवन्ति तं परिवर्जयेत्। चिकित्सासूत्रम्–छेद्यरोगः (सुसू. २५.३) तत्राऽग्निकर्मचिकित्सा कार्या, (सुसू. १२.१०) भगन्दरपिडका यद्यपक्वाः स्युस्तर्हि विरेचनान्तेनापतर्पणाद्येकादशप्रकारेणोपक्रमेत (सुचि. १.११) शस्त्रकर्म-तत्र भगन्दरपिडकोपद्रुतमातुरमपतर्पणादिविरेचनान्तेनैकादशविधेनोपक्रमेणोपक्रमेतापक्वपिडकं पक्वेषु चोपस्निग्धमवगाहस्विन्नं शय्यायां संनिवेश्याऽर्शसमिव यन्त्रयित्वा भगन्दरं समीक्ष्य पराचीनमवाचीनं वा, ततः प्रणिधायैषणीमुन्नम्य साशयमुद्धरेच्छस्त्रेण। अन्तर्मुखे चैवं सम्यग्यंत्रं प्रणिधाय प्रवाहमाणस्य भगन्दरमुखमाद्यैषणीं दत्त्वा शस्त्रं पातयेद् क्षारमाद्य वाऽग्निं क्षारं चेति; एतत्सामान्यं सर्वेषु (सुचि. ८.४)

**–चिकित्सित**–न., अध्यायसंज्ञा० (सुचि. ८.१)

**–निदान**–न., अध्यायसंज्ञा० (सुनि. ४.१)

**–पिडका**–स्त्री., लक्षण० पिटिकाविशेषः, सा गूढमूला, ससंरम्भा, रुगाढ्या रूढकोपिनी भवति (सुचि. ८.४; असंउ. ३३)

**–यन्त्र**–न., नाडीयन्त्र० भगयन्त्रे द्वे, एकमेकच्छिद्रमपरं द्विच्छिद्रं, तदर्शोयन्त्रमेवापनीतौष्ठम् 'मुखाच्छिद्रस्य पार्श्वभाग ओष्ठः' (अहसू. २५.१६-१९)

**भगास्थि**–न., भगस्य समंतात् स्थितमस्थि० भगास्थ्येकमेव (चशा. ७.६)

**भग्न**–न., रोग० (सुनि. १५) पतनपीडनप्रहाराक्षेपणव्यालमृगदशनप्रभृतिभिरभिघातविशेषैरनेकविधम् अस्थ्नां भङ्गमुपदिशन्ति, तद् द्विविधम् संधिमुक्तं काण्डभग्नं च, तत्र षड्विधं संधिमुक्तं द्वादशविधं काण्डभग्नं च । तत्रापि संधिमुक्तमुत्पिष्टं विश्लिष्टं विवर्तितमवक्षिप्तमतिक्षिप्तं तिर्यक्क्षिप्तं च । तत्र प्रसारणाऽऽकुञ्चनविवर्तनाक्षेपणाशक्त्युग्ररुजत्वं स्पर्शासहत्वं च सामान्यं संधिमुक्तलक्षणम् । तत्रोत्पिष्टे संधावुभयतः शोफो वेदनाप्रादुर्भावो विशेषतश्च नानाप्रकारा वेदना रात्रौ प्रादुर्भवन्ति । विश्लिष्टेऽल्पः शोफो वेदनासातत्यं संधिविक्रिया च । विवर्तिते संधिपार्श्वापगमनाद्विषमाङ्गता वेदना च । अवक्षिप्ते संधिविश्लेषस्तीव्ररुजत्वं च। अतिक्षिप्ते द्वयोः संध्यस्थ्नोरतिक्रान्तता वेदना च । तिर्यक्क्षिप्ते एकास्थिपार्श्वापगमनमत्यर्थं वेदना च । काण्डभग्नस्य भेदाः— कर्कटकमश्वकर्णं चूर्णितं पिच्चितमस्थिच्छल्लितं काण्डभग्नं मज्जानुगतमतिपातितं वक्रं छिन्नं पाटितं स्फुटितं च; तत्र श्वयथुबाहुल्यं स्पन्दनविवर्तन–स्पर्शासहत्वमवपीड्यमाने शब्दः स्रस्ताङ्गता विविधवेदनाप्रादुर्भावः सर्वास्ववस्थासु न शर्मलाभ इति समासेन काण्डभग्नलक्षणम् । विशेषतस्तु संमूढमुभयतोऽस्थिमध्ये भग्नं ग्रन्थिरिवोन्नतं कर्कटकम् । अश्वकर्णवदुद्गतमश्वकर्णम् । स्पृश्यमाने शब्दवच्चूर्णितम् । पिच्चितं पृथुतां गतमनल्पशोफम् । पार्श्वयोरस्थिहीनोद्गतमस्थिच्छल्लितम् । वेल्लते प्रकम्पमानं काण्डभग्नम् । अस्थ्यवयवोऽस्थिमध्यमनुप्रविश्य मज्जानमुन्नह्यतीति मज्जानुगतम् । अस्थिनिःशेषतश्छिन्नमतिपातितम् । आभुग्नमविमुक्तास्थि वक्रम् । अन्यतरपार्श्वोऽवशिष्टं छिन्नम् । पाटितमणुबहुविदारितं वेदनावच्च शूकपूर्णमिवाध्मातं विपुलं स्फुटितमिति । तेषु स्फुटितं चूर्णितच्छिन्नाऽनुपातितमज्जानुगतानि कृच्छ्रसाध्यानि कृशवृद्धबालानां क्षतक्षीणकुष्ठिश्वासिनां सन्ध्युपगतं चेति । रिष्टलक्षणम्–भिन्नं कपालं कट्यां संधिमुक्तं च्युतं जघनं पिष्टमसंश्लिष्टं

कपालं ललाटे चूर्णितं स्तनान्तरे भग्नं शङ्खे पृष्ठे मूर्धनि विवर्जयेत् ( सुनि. १५ ) अल्पाशिनोऽनात्मवतः सोपद्रवस्य वातप्रकृतेर्भग्नं कृच्छ्रेण सिध्यति ( सुचि. ३.३ ) चिकित्सा– शरीरे चलानचलानपि संधीन् आञ्छनैः पीडनैः संक्षेपैर्बन्धनैर्वा स्थापयेत् ( सुचि. ३.१८-१९ ) उत्पिष्टं विश्लिष्टं संधिं न चालयेत् । शीतान् परिषेकान् प्रदेहाँश्चावचारयेत् । अभिघाते हते सति संधिं प्रकृतिमापन्नं घृतदिग्धेन पट्टेन वेष्टयित्वा पट्टोपरि कुशान् दत्त्वा बन्धमाचरेत् ( सुचि. ३.२०-२२ ) अङ्गुलिभग्नचिकित्सा–भग्नां संधिमुक्तां वाऽङ्गुलिं समां स्थापयित्वाऽणुपट्टेनाऽऽवेष्ट्य घृतसेकं प्रदापयेत् ( सुचि. ३.२४ ) तलभग्नचिकित्सा–कुशोत्तरं पादतलभग्नं सर्पिषाऽभ्यज्य वस्त्रपट्टेन बध्नीयात्। व्यायामं च नाऽऽचरेत् ( सुचि. ३.२५ ) जङ्घोरूभग्नचिकित्सा–जङ्घामूरूमायम्याऽभ्यज्य शीतवृक्षत्वचो दत्त्वा वस्त्रपट्टेन वेष्टयेत्, जङ्घोरूभग्नानां कपाटशयनं हितम् ( सुचि. ३.२६ ) ऊर्वस्थिनिर्गमनचिकित्सा– चक्रयोगेन निर्गतमूर्वस्थि आञ्छेत् । पूर्ववद्बध्नीयात् ( सुचि. ३.२७ ) कटिभग्नचिकित्सा– ऊर्ध्वगतमस्थि बध्नीयादधः कृत्वाऽधो गतमूर्ध्वं कृत्वा बध्नीयात् । अनन्तरं स्नेहबस्तिभिरुपाचरेत् ( सुचि. ३.२८ ) पर्शुकाभग्नचिकित्सा– घृताभ्यक्तस्य तिष्ठतः कवलिकां दत्त्वा दक्षिणासु अथवा वामासु निबन्धनीर्वेष्टयेत् । अनन्तरं तैलपूर्णे कटाहे द्रोण्यां वा शाययेत् ( सुचि. ३.२९-३० ) स्कन्धभग्नचिकित्सा– विसंहतस्कन्धं मुसलेनोत्क्षिप्य प्रकृतौ स्थापयित्वा स्वस्तिकबन्धविशेषेण बध्नीयात् । कूर्परसंधिभग्नचिकित्सा– कौर्परसंधिमङ्गुष्ठेनानुमार्जयेत् पीडयेच्च, प्रसार्याकुञ्चयेत् स्नेहसेकं च दापयेत् । जानुनि गुल्फ मणिबन्धे भग्ने सति च विधिरयं कार्यः ( सुचि. ३.३२-३३ ) हस्ततलभग्नचिकित्सा– तलभग्नस्योभयतले समे कृत्वा बध्नीयात् आमतैलेन परिषेकं कारयेत् । अनन्तरं हस्ततले पूर्वं मृत्पिण्डमनन्तरं लवणं च धारयेत् जातबले हस्ते तु पाषाणधारणं कुर्यात् । ( सुचि. ३.३४-३५ ) अक्षकभग्नचिकित्सा–अधः प्रविष्टं मुसलेनोन्नमयेत् । स्विन्नमुन्नतं मुसलेनाधः पीडयेत् । अनन्तरं गाढमेव बध्नीयात् । बाहुभग्ने–ऊरुभग्नवच्चिकित्सा– कर्तव्या (सुचि. ३.३६-३७) वक्राया ग्रीवाया हन्वोश्च गृहीत्वोन्नमयेत् कुशां समां दत्त्वा नातिगाढं नातिशिथिलं वेष्टयेत् ( सुचि. ३.३७-३८ ) हनुभग्नचिकित्सा–विसंहते हनुसंधौ हन्वस्थीनि समानीय स्वेदयित्वा सम्यक् स्थितेषु तेषु पञ्चाङ्गी वितरेत् । अनन्तरं वातघ्नमधुरैः सिद्धं सर्पिर्नस्यार्थे उपयोजयेत् । दन्तभग्नचिकित्सा–तरुणस्य सरक्तानभग्नाँश्चलितान् दन्तानवपीडयेत् । बहिः शीतैरालेपयेत् । अम्बुभिः सिक्त्वा शीतैः संधानीयैरुपाचरेत् । उत्पलनालेन क्षीरपानं कुर्यात्, वृद्धस्य चलितान् दन्तान् वर्जयेत् । नासाभग्नचिकित्सा–अभिघातेनान्तःप्रविष्टां नासां शलाकयोन्नम्य वक्राम् ऋजूकृत्य पृथङ्नासिकयोर्नाड्यौ द्विमुख्यौ संप्रवेशयेत् । ततः पट्टेन संवेष्ट्य घृतसेकं कुर्वीत ( सुचि. ३.४३-४४ ) कर्णभग्नचिकित्सा–भग्नं कर्णं घृतप्लुतं समं कृत्वा बध्नीयात् पश्चात् सद्यःक्षतविधानं कुर्यात् ( सुचि. ३.४५ ) कपालभग्नचिकित्सा–मस्तुलुङ्गाद्विना भिन्ने कपाले मधुसर्पिषी दत्त्वा निबध्नीयात् । ततः सप्ताहं घृतं पिबेत् (सुचि. ३.४६) ऊर्ध्वकाये भग्नानां शिरोबस्तिः कर्णपूरणं च हितम्, घृतपानं नस्यं च हितम्; प्रशाखास्वनुवासनम् ( सुचि. ३.५४ ) गयी; सम्यग्रूढलक्षणानि– अनाकुलमनुन्नतं सुखेनाऽऽकुञ्चनप्रसारणादिकम् ( सुचि. ३.७० ) भग्ने पाकः कृच्छ्रसाध्यस्य लक्षणम् ( सुचि. ३.६९ )

**–ग्रीव**–वि., नतग्रीवः ( सुसू. ३२.४ )

**–चिकित्सित**–न., अध्यायसंज्ञा० ( सुचि. ३ )

**–निदान**–न., अध्यायसंज्ञा० ( सुनि. १५ )

**–परिषेक**–पु., स्वेदनोपक्रमः ( सुचि. ३.११ )

**–पाक**–पु., लक्षण० भग्नस्थाने मांसशिरास्नाय्वादीनां पाकः ( सुचि. ३.६९ )

**–बन्ध**–पु., भग्ने उपयुक्ते बन्धप्रकारः ( सुचि. ३.९,१० )

**–रुग्ण**–वि., भग्नकायसंधिमुक्तः ( चसि. १.३२ चक्र. )

**–लेपन**–न., भग्ने आलेपनार्थं द्रव्याणि ( सुचि. ३.७ )

**–विधि**–पु., भग्नाऽभिहितो बन्धसेकरूक्षभोजनादिः ( सुचि. २.७६ )

**–व्रणबन्धनकाल**–पु., सौम्येषु ऋतुषु सप्ताहैर्बन्धनं परिवर्तयेत, साधारणेषु ऋतुषु पञ्च-पञ्चदिनान्तरेण व्रणबन्धनं कार्यमुष्णकाले त्रिभिस्त्रिभिर्दिनैर्व्रणबन्धनं परिवर्तनीयम् ( सुचि. ३.८ )

**–संधानकृत्**–वि., भग्नसंधानकरः ( अहृसू. ६.१२ )

**-संधिस्थैर्य**-न., बाल्ये मासेनैव संधिः स्थिरो भवति प्रथमे वयस्यपि, मध्यमे वयसि पूर्वद्विगुणो द्विमासात्मकः काल आवश्यकः, वार्धके तु प्रथमात् त्रिरावृत्तस्त्रिमासात्मकः कालः ( सुचि. ३.१६-१७ )

**-साधन**-वि., भग्नसंधानकरः ( अहसू. १५.४२ )

**भङ्ग**-पु., लक्षण० भग्नम् ( सुनि. १५.३ )
पल्लवः ( सुउ. १७.६१-६३ )
पत्रभङ्गः ( ड. सुउ. ११.५ )
वक्रता ( अहसू. १२.५० हे. )

**(भङ्गा)**-स्त्री., वनस्पति० गुणाः–तिक्ता ग्राहिणी पाचनी लघुस्तीक्ष्णोष्णा कफहरा पित्तला मोहमदवाग्वर्धिनी वह्निवर्धिनी च ( भाप्रमिश्रप्रकरण )
हिं.—भांग, भंग, बूटी.
म.—भांग.
गु.—भांग्य.
बं.—सिद्धी.
त.—पांगा, कांजा, गांजा.
फा.—फनव, वंग.

**( भङ्गी )**-स्त्री., वनस्पति० भङ्गा ( ध. १.१३० )
**-जात**-न., अस्थिभङ्गसमूहः ( सुनि. १५.४ )

**भङ्गुरा**-स्त्री., वनस्पति० प्रियङ्गुः ( रा. १२.२९ )
अतिविषा ( ध. १.१० )

**भञ्जन**-न. जर्जरीकरणम् ( चसू. १८.४ )
भङ्गः ( सुसू.७.१७ )
अर्कः ( रा. १०.२५ )

**( भञ्जनी )**-स्त्री., औषधपचनावसरे द्रवेण द्रव्येण वा वह्नेर्न्यूनताऽऽपादनम् ( र. ८.४९-५० )

**भञ्जनक**-पु., दन्तरोग० यस्मिन् वक्त्रं वक्रं भवति दन्तभङ्गश्च तीव्ररुक्; कफवातजोऽयं व्याधिः ( सुनि. १६.३१ )

**भण्टाकी**-स्त्री., वनस्पति० बृहती ( रा. १.१२० )

**भण्टिका**-स्त्री., वनस्पति० बृहती ( ध.१.१०१ )

**भण्डिक**-पु., वनस्पति० शिरीषः ( ध. ५.११२ )

**भण्डी**-स्त्री., शाक० वातपित्तनुत् ( चसू. २७.१०७ )
मञ्जिष्ठा ( ध. १.१८ )

**भण्डीर**-पु., तण्डुलीयकः ( ध. ४.११६ )
नद्याम्रः ( रापरि. ४.१ )

**( भण्डीरी )**-स्त्री., वनस्पति० मञ्जिष्ठा ( रा. ६.१७ )

**भद्र**-न., वनस्पति० नीलपद्मम् ( ध. ४.१५० )
पु., वनस्पति० स्नुही ( रा. ८. ३५६ )

**(भद्रा)**-स्त्री., वनस्पति० दूर्वा० श्वेतदूर्वा ( रा. ८.२२९ )
द्र० ' दूर्वा '
जीवन्ती ( रा. ३.१७७ )
मुस्ता ( रा. ६.५८ )
शमी ( रा. ८.१५३ )
बला ( रा. ४.४२२ )
कट्फलम् ( ध. १.७३ )
नीलिनी ( रा. ४.३४९ )
काश्मरी ( रा. ९.१४६ )
दन्ती ( रा. ६. ३३८ )
वचा ( रा. ६.८ )
हरिद्रा ( रा. ६.८१ )
सारिवा कृष्णमूली ( ध.१.१६२ )
ताम्बूली ( धपरि. ३.१ )
वनस्पति० गम्भारी, प्रसारणी ( र. २२.११४ )

**( भद्राणी )**-स्त्री., वनस्पति० दन्ती ( रा. ६.३३९ )
**-कण्टक**-पु., वनस्पति० गोक्षुरः ( रा. ३.१३० )
**-काप्य**-पु., महर्षि० यज्ञःपुरुषीये विवदमानानां एकतमः ( चसू. २५.१८; चसू. २६.३ )
**-काली**-स्त्री., रेवतीग्रह० सा दशमे दिवसेऽपत्यं विनाशयति ( कारेवती. ४६ )
**-काष्ठ**-न., वनस्पति० हरितालविषबाधायां लेहार्थं उपयुज्यते ( असंउ. ४० )
देवदारुः ( ध. १.७७ )
**-कासी**-स्त्री., वनस्पति० मुस्ता ( रा. ६.५८ )
**-जा**-स्त्री., वनस्पति० इन्द्रयवः ( रा. ९.२१ )
**-तरणी**-स्त्री., वनस्पति० कुब्जकः ( ध. ५.१४६ )
**-दन्तिका**-स्त्री., वनस्पति० दन्ती अरणी ( रा. ६.३४१ )
**-दारु**-पु., न., वनस्पति० देवदारुः ( सुसू. ३८.२६ )
**-पर्णी**-स्त्री., वनस्पति० प्रसारणी ( ध. १.२८९ )
काश्मरी ( रा. ९.१४६ )
**-पीठ**-न., देवासन० ( असंशा. १२.८ )
**-बला**-स्त्री., वनस्पति० बला ( रा. ४.४२२ )
प्रसारणी ( रा. ५.४३५ )
**-मुस्त**-पु., वनस्पति० मुस्ता ( चचि. १४.१६० )
**-मुस्ता**-स्त्री., वनस्पति० मुस्ताविशेषः (चसू. २१.२२)
**-यव**-पु., वनस्पति० इन्द्रयवः (ध. २.१५)
**(-यवा)**-स्त्री., वनस्पति० इन्द्रयवः ( ध. २.१५. )
**-लता**-स्त्री., वनस्पति० हरिद्रा ( ध. १.५५ )

माधवी ( रापरि. १.२९ )
-वती-स्त्री., वनस्पति० कट्फलम् ( ध. १.७३ )
-वल्ली-स्त्री., वनस्पति० मल्लिका ( रा. १०.२२५ )
-शौनक-पु., ऋषि० ( चसि. ११.९; चशा. ६.२१ )
-श्री-पु., वनस्पति० श्वेतचन्दनम् ( ३.२५८; चचि. ४.१०२ )
भद्रैला-स्त्री., वनस्पति० एला० स्थूलैला ( ध. २.४६ ) द्र० 'एला'.
भद्रोदय-न., अञ्जनविशेषः ( सुउ. १८.९४-९७ )
भद्रोदुम्बरी-स्त्री., वनस्पति० काष्ठोदुम्बरिका ( सुचि. ९.१५ )
भद्रौदनी-स्त्री., वनस्पति० बला ( रा. ४.४२७ ) पीतबला ( चसू. ४.९ ) द्र० 'बला'
भमूलक-पु., वनस्पति० कत्तृणविशेषः गुण्ठः (ध.१.८३)
भय-न., भीतिः मनो विकारविशेषः (चनि ७.४; सुसू. ४६.५००)
-जज्वर-पु., आगन्तुभेदःभीतिसमुद्भूतो ज्वरः ( सुउ. ३९.७९ )
-दा-स्त्री., वनस्पति० भूधात्री ( रा. ५.१४५ )
-नाशिनी-स्त्री., वनस्पति० त्रायमाणा (रा.५.३७९)
भयातिसार-पु., भयेन समुत्पन्नोऽतिसारः, वातातिसारवदस्य लक्षणानि ( चचि. १९.११ )
भरणी-स्त्री., वनस्पति० घोषा ( वैशसिं ) नक्षत्र० ( असंनि. १ )
भरत-पु., राज० यत्पुत्रा राजतैलोपयोगेन आयुर्बलगतिसुखभाजो बभूवुः ( का. फक्करोगचि. )
भरद्वाज-पु., ऋषि० रोगापहारचिन्तनार्थं हिमवत्पार्श्वसमेतर्षीनामेकतमः ( चसू. १.९, चसू. १.५ ) इन्द्रादायुर्वेदं गृहीत्वाऽस्मृषिभ्यः सामस्त्येन प्रोक्तवान् ( चसू. १.२६ ) कुमारशिरा भरद्वाजो वातगुणदोषविवेचकानामन्यतमः ( चसू. १२.५ )
भरभरायण-न., कीटे कर्णे प्रविष्टे सति वेदनाविशेषः ( असंसू. ३७.२५ )
भर्मन्-न., सुवर्णम् ( रा. १३.२ )
भर्त्सन-न., निन्दा ( असंसू. १२ )
भल्लक-पु., वनस्पति० टिण्टुकः पृथुशिम्बः (रा. ९.१४१)
भल्लात-पु., वनस्पति० भल्लातकः ( असंसू. १५ )
भल्लातक-पु., वनस्पति० गुणाः- कटुस्तिक्तो मधुरः कषाय उष्णः ( ध. ३.१४३ ) कटुविपाकी ( सुसू. ४६.१९६ ) वृष्यः ( असंउ. ४९ ) कफवातघ्नः कृमिगुल्माऽर्शोग्रहणीकुष्ठोदराऽऽनाहप्रमेहनाशनः ( ध. ३.१४३ ) ज्वरोदावर्तघ्नः ( सुसू. ४६.१९६ ) वृन्तोऽस्य विष्टम्भी दुर्जरो रूक्षः शीतलो वातकरो मधुरविपाकी रक्तपित्तसादनश्च ( सुसू. ४६.१९० )
हिं.—भेला, भिलवा.
बं.—भेला, भेलातुकी.
म.—बिब्बा.
गु.—भियामु.
त.—शेनकोट्टइ, शायरंग.
फा.—बिलादुर, बेहदूर.
( भल्लातकी )-स्त्री., भल्लातकः ( र. १५.३४-३६ )
-क्षौद्र-न., भल्लातकैः सिद्धं क्षौद्रम् ( चचि. १ ( २ ) १६ )
-घृत-न., घृत० द्विपलं भल्लातकानां पञ्चमूलं पलोन्मितं तथा विदारीगन्धादिगणं सलिलाऽऽढके आपोथ्य पादशेषे रसे पिप्पलीं नागरं वचां विडङ्गं सैन्धवं हिङ्गुं यावशूकं बिडं शटीं चित्रकं मधुकं रास्नां च कर्षसमं पिष्ट्वा प्रस्थं च पयसो लब्ध्वा घृतप्रस्थं विपाचयेत् । एतद् घृतं कफगुल्महरं प्लीहपाण्ड्वाऽमयश्वासग्रहणीकासनाशनं च (चचि. ५.१४३-४६)
-तर्पण-न., भल्लातकैः कृतं तर्पणम् (चचि.१(२)१६)
-तैल-न., स्नेह० भल्लातकोत्थं तैलम्, गुणाः—कटु तीक्ष्णं तिक्तं वातकफकुष्ठमेदोमेहकृमिहरम् ( ध. ६.१३८ ) तिक्तानुरसं मधुरं च ( सुसू. ४५.१२२ )
-त्वच्-स्त्री., गुणाः-स्वादुः शीता बृंहणी ( अहसू. ६.१३४ )
-पलल-न., भल्लातकैः सिद्धं पललम् (चचि.१(२)१६)
-पुष्प-न., भल्लातकस्य पुष्पमञ्जनार्थमुपयुज्यते ( सुक. १.६९-७१ ) आगन्तुशोथकरमिदम् ( चसू. १८.४ )
-मांस-न., भल्लातकस्य मांसम्, गुणाः-बृंहणं स्वादु शीतलम् ( अहसू. ६.१३४ ).
-यूष-पु., भल्लातकैः सिद्धो यूषः (चचि. १(२).१६)
-रसायन-न., योग० भल्लातकान्यनुपहतान्यनामयान्यापूर्णरसवीर्याणि पक्वजाम्बवप्रकाशानि शुचौ शुक्रे वा मासे संगृह्य यवपल्ले माषपल्ले वा निधापयेत्; तानि चतुर्मासस्थितानि सहसि सहस्ये वा मासे प्रयोक्तुमारभेत शीतस्निग्धमधुरोपस्कृतशरीरः पूर्वं दशभल्लातकान्यापोथ्याऽष्टगुणेनाऽम्भसा

साधु साधयेत्। तेषां रसमष्टभागाऽवशेषं पूतं सपयस्कं पिबेत् सर्पिषाऽन्तर्मुखमभ्यज्य। तान्येकैक-भल्लातकोत्कर्षापकर्षेण दश भल्लातकान्यात्रिंशतः प्रयोज्यानि, नातः परमुत्कर्षः। प्रयोगविधानेन सहस्रपर एव भल्लातकप्रयोगः। जीर्णे च ससर्पिषा पयसा शालिषष्टिकाशनमुपचारः प्रयोगान्ते च द्विस्तावत् पयसैवोपचारः। अस्य प्रयोगाद्वर्षशतं अजरं वयस्तिष्ठतीति ( चचि. १ (२). १३ )

**–लवण**–न., भल्लातकैर्युक्तं लवणम् (चचि. १.(२)१६)

**–विधान**–न., भल्लातकविधिः। अयं दशप्रकारो भल्लातकसर्पिर्भल्लातकक्षीरं भल्लातकक्षौद्रं गुडभल्लातकं भल्लातकतैलं भल्लातकयूषो भल्लातकपललं भल्लातकसक्तवो भल्लातकलवणं भल्लातकतर्पणं चेति ( चचि. १(२).१६ ) अयं च प्रकारस्त्रिविधः शतान्तः प्रवरः, सप्तत्यन्तो मध्यमस्त्रिंशदन्तोऽधम-श्चेति ( ड. सुचि. ६.१७ ) कषायविधिना सिद्धस्य भल्लातकस्य सेवनसमये मुखस्यान्तर्भागो जिह्वा-ताल्वोष्ठरूपो घृताभ्यक्तः स्यात्। अन्यथाऽतितीक्ष्ण-त्वात्कषायस्य मुखदाहः स्यात् ( सुचि.६.१७ )

**–सक्तु**–पु., भल्लातकैः सिद्धा यवाः (चचि. १(२).१६)

**–सर्पिस्**–न., भल्लातकघृतम् ( चचि. १(२).१६ )

**–स्नेह**–पु., भल्लातकतैलम् ( सुचि. ६.१८ )

**भल्लातकादितैल**–न., तैल० इदं कफजनाडीव्रणेषु समुपयोज्यम् ( सुचि. १७.४१-४२ )

**भल्लातकारिष्ट**–पु., योग० भल्लातकचित्रकविडङ्ग-बृहतीफलानि पृथग्द्विप्रस्थांशान्यच्छधान्याऽम्लद्रोणे गोमयाग्निना त्रिभागशेषमवतारयेत्। तत्पूतशीतं मस्तुकलशेन सितोपलातुलया च युक्तमग्निक-मागधिकाकल्कलिप्ते दृढे भाण्डे समावाप्य वैहायसे सुगुप्तं स्थापयेत्। ततो दशाहस्थितोऽयमुपयुक्तो भल्लातकारिष्टः शोफोदरार्शोभगन्दरग्रहणीकृमिकुष्ठ-मेहकार्श्यकिक्कसघ्नः ( असंचि. १९.१०८ )

**भल्लातकास्थि**–न., भल्लातकफलम् महाकषायवर्गे दीपनीयगणे द्रव्यम् ( चसू. ४.९ ) इदमग्निसमं दाहपाककरं मेध्यं कफवातहरं च ( हे. अहसू. ६.१३४ )

**भल्लुक**–पु., वनस्पति० टिण्टुकः ( सुचि. ७.६ )

**भल्लूक**–पु., कपर्दकः, अन्ये शम्बूकभेदमाहुः ( ड ) कोशस्थमत्स्यः ( सुसू. ४६.१०८ )

**भव**–पु., उत्पत्तिः, संभवः ( सुउ. ५७.१६ ) वनस्पति० भव्यम् ( ध. ५.३९ )

**–दारु**–पु., वनस्पति० देवदारुः ( रा. १२.१०३ )

**–बीज**–न., वनस्पति० धत्तूरः ( र. १७.३९-४० )

**भवाभीष्ट**–पु., वनस्पति० गुग्गुलुः ( रा. १२.१८३ )

**भविष्य**–न., वनस्पति० भव्य ( ध. ५.३९ )

**भव्य**–पु., वनस्पति० कर्मरः, कर्मरङ्गफलम् ( असंचि. ९ ) निम्बः ( असंचि. ९ ) तालोपमं केवलवल्कलसंहतिमात्रं फलम् ( ड. सुसू. ४६.१३९ ) इदमुत्तरापथजम् ( सुउ. ४७.४१ ) आरुकमिति कार्तिकेयपुरे प्रसिद्धम् (सुसू.४६.१३९)

फल० गुणाः–अम्लमधुरमुष्णं पिच्छिलं वक्त्रशोधनं रुच्यम् ( ध. ५.३९ ) ग्राहि ( चसू. २७.१३१ ) वातघ्नं च ( ध. ५.३९ )

हिं.—चल्ता.

**म.—करंबेळ; मोठा कर्मल.**

बं.—चल्ता.

त.—उवा.

**भसलानन्द**–पु., वनस्पति० कुरुबकः ( रा. १०.४१३ )

**भसित**–न., भस्म ( र. ४.५० )

**भस्मन्**–न., दग्धकाष्ठादिक्षारः ( सुसू. २९.९-१५ ) रक्षा ( चसू. १.७३ ) अङ्गुष्ठतर्जनीभ्यां मर्दितं सत् यद्धातुभस्म तद्रेखान्तरे प्रविशति तद्रेखापूर्णं उच्यते ( र. ८.२७ )

**–गर्भ**–पु., वनस्पति० तिनिशः ( रापरि. ९.२४ )

**–(गर्भा)**–स्त्री., वनस्पति० शिंशपा० ( ध. ५.१२१ )

**–ता**–स्त्री., भस्मीभूतत्वम् विनाशः ( चचि. ३.२३ )

**–प्रहरण**–वि., भस्मैव प्रहरणं यस्य स यद्वा भस्मनो विक्षेपणं करोतीति ( चचि. ३.२३ )

**–रोहा**–स्त्री., वनस्पति० दग्धा ( रापरि. ९.२८ )

**–शर्करा**–स्त्री., दह्यमानार्द्रकाष्ठरसाच्छर्करैवान्योन्य-संहता क्षारद्रव्यसमवायिनी ( सुसू. ११.११ ड. )

**भस्मक**–पु., रोग० अस्मिन् रोगे सर्वाण्यपि भक्षितानि झटिति भस्मीभवन्ति ( र. २५.५५ )

**भस्माख्य**–पु., रोग० मूत्रशुक्रम् ( सुनि. ३.१३ )

**भस्त्र**–न., यन्त्र० अग्निसंधुक्षणार्थं चर्मनिर्मितं यन्त्रम् ( असंसू. ४०.५ )

**भस्त्रिका**–स्त्री., भस्त्रम् ( र. ७.५-७ )

**भा**–स्त्री., प्रभा ( असंसू. ४ ) कान्तिः ( असंसू. ९.८ )

**भागन्दरी**–वि., भगन्दरकरी ( पिडका ) इयं पायोर्ध्यङ्गुले देशे भवति ( सुनि. ४.११ )

**भाजन**–न., मान० आढकम् ( असंक. ८ )
भेषजस्थापनस्थानम् ( चक. १.७ )
भाण्डम् ( र. ९.९ )

**भाण्टाकी**–स्त्री., वनस्पति० बृहती ( ध. १.१०१ )

**भाण्ड**–न., उपकरणद्रव्यम् ( सुसू. २९.४९ )

**(भाण्डी)**–स्त्री., वनस्पति० मञ्जिष्ठा (ध. १.१७)
वनस्पति० 'भाण्डनी' इति लोके प्रसिद्धो विटपोऽयं भाण्डधावनार्थमासुतीवलाः–आसुतीवला नाम आसुतीं मद्यसंधानं कुर्वन्ति इति आसुतीवलाः मद्यसंधानकारिणः समाहरन्ति ( ड. सुचि. ३१.५)

**–पुट** न., मध्यस्थितमूषे तुषापूर्णे स्थूलभाण्डे दीयमानं पुटम् ( र. १०.६१ )

**भाण्डारलतिका**–स्त्री., वनस्पति० मञ्जिष्ठा (रा. ६.१८)

**भानु**–पु., सूर्यः, सूर्यकिरणः ( र. २०.८६ )
ताम्रम् ( र. ५.४५ )
अर्कः ( र. २२.१५९ )
द्वादशसंख्या, भानूनामादित्यानां द्वादशकत्वेन भानुशब्दोऽपि द्वादशसंख्यार्थको ज्ञायते (र.११.१०३)

**–दुग्ध**–न., अर्कक्षीरम् ( र. २४.६६ )

**–फला**–स्त्री., वनस्पति० कदली ( रा. ११.१०७ )

**–लोह**–न., खनिज० ताम्रम् ( र. ५.१ )

**भार**–पु., गुरुत्वम् ( सुशा. ५.३४ )
मान० विंशतिस्तुलाः ( सुचि. ३१.७ ) गोणी ( चक. १२.९६ ) द्विसहस्रपलानि ( असंक. ८. )
मान० चत्वारिंशत्तुलाः ( र. ११.९ )

**–कर्शित**–वि., भारेण कर्शितः क्षामः (चसू. १३.४७)

**–वाही**–स्त्री., नीलिनी ( ध. १.२३२ )

**–हत**–वि., भारेण श्रान्तः ( चसि. २.८ )

**भारङ्गी**–स्त्री., वनस्पति० भार्गी ( रा. ६.९६ )

**भारती**–स्त्री., वनस्पति० ब्राह्मी ( रा. ५.१४९ )

**भारद्वाज**–पु., वनस्पति० कार्पासी ( र. ५.१६८ )
अगस्त्यः ( र. ५.१६८ )
वनकार्पासी ( र. ५.१६८ )

**( भारद्वाजी )**–स्त्री., वनकार्पासी ( चसू. ४.९ )

**भारार्त**–वि., भारेणार्तः ( चचि. २९,१०८ )

**भार्गव**–पु., ऋषि० रोगापहरणचिन्तनार्थं हिमवत्पार्श्वसमेतेषु ऋषिष्वेकः चसू. १.१० )
न., खनिज० हीरकम् ( ध. ६.५५ )

**( भार्गवा )**–स्त्री., वनस्पति० भार्गी (ध. १.६८)

**(भार्गवी)**–स्त्री., वनस्पति० दूर्वा० श्वेतदूर्वा (ध. ४.१४४) द्र० 'दूर्वा'

**भार्गवक**–न., हीरकम् ( ध. ६.५६ )

**भार्गी**–स्त्री., वनस्पति० गुणाः–तिक्ता कटुरुष्णा कटुविपाका कफवातघ्नी श्वासगुल्मज्वराऽसृग्वातयक्ष्मपीनसकासशोफव्रणक्रिमिदाहघ्नी च ( ध. १.६८ ) स्तन्यदोषघ्नी ( सुचि. १७.४४ ) अपस्मारे वराहकल्पत्वेन उपयुज्यते ( सुउ. ६१.३८ ) अस्याः क्षारः कफजेऽनिलजे वा कासे उपयुक्तः (असंचि. ४)
हिं.—भारंगी.
म.—भारंगी.
गु.—भारंगी.
बं.—भुईजाम, बामनपटी.

**भार्यावृक्ष**–पु., वनस्पति० चन्दन० कुचन्दनम् ( रा. १२.१२ ) द्र० ' चंदन '

**भालविभूषणसंज्ञ**–पु., वनस्पति० तिलकः ( रा. १०.२६७ )

**भालुकिन्**–पु., ऋषि० ( र. २.१४३ )

**भाल्लातक**–वि., भल्लातकसम्बन्धि ( काष्ठम् ) ( चशा. ८.३३ )

**भाव**–पु., अभिप्रायः ( सुउ. ४७.१० )
पदार्थः ( सुउ. ५७.१६ ) भवन्ति सत्तामनुभवन्ति इति भावाः द्रव्यगुणकर्माणि ( चसू. १.४४ )
प्राणः, भवति शरीरमनेन स्थितेन इति भावः
पञ्चमहाभूतानि शरीररूपाणि ( चइ. ४.१६ )
स्वभावः ( सुसू. २१.३८ )

**–विशेष**–पु., भवतीति भावः विशिष्टो भावः भावविशेषः पदार्थः ( चशा. ४.१३ )
उत्पत्तिमान् विशेषः, भावोऽत्र उत्पत्तिवाचकः ( चवि. ५.३ )

**–स्वभाव**–पु., पदार्थगुणः ( चसू. ३०.२७ )

**भावन**–न., वनस्पति० भव्यम् ( ध. ५.३९ )

**( भावना )**–स्त्री., स्वरसादिसंयोगः ( चवि. १.२१ (२ ) ( परिव० ) संयोजना ( सुशा. ९.११ )

**भावित**–वि., व्याप्तम् द्रवेणाभिमिश्रितविमर्दितम् ( सुचि. १३.१७-१९; र. २.४५ )

**भाष्य**–न., भाषणम् ( अहृसू. ७.५७ )

**भास्**–स्त्री., शरीरवर्णः प्रभा ( चशा. ७.१६ )
प्रतिभा भान्ति प्रकारान्ते अर्था अस्यामिति भाः प्रतिभा ( चशा. १.३९ )

**भास**–पु., प्रसहजातीयपक्षि० गोकुलचारी गृध्रः, अयं भस्मवर्णः ( चसू. २७.३६ ) श्वेतशिखावान् ( सुसू. ४६.७४ ) स्वल्पतुण्डः ( सुसू. २०.१४ )
**–मुखयन्त्र**–न., यन्त्र० स्वस्तिकयन्त्रम् ( सुसू. ७.१० )
**भासुर**–वि., अतिदीप्तम्, तेजस्वी ( अहसू. १२.३६ )
**–पुष्पा**–स्त्री., वनस्पति० वृश्चिकाली ( रापरि. ९.९ )
**भास्कर**–न., ताम्रभस्म ( र. १४.६१ )
अर्कः ( ध. ४.१३ )
द्वादशसंख्या ( ध. ४.१३ )
सुवर्णम् ( रा. १३.१ )
पु., द्वादशरसप्रदायकेष्वेकः ( र. १.२-५ )
**भास्करेष्टा**–स्त्री., वनस्पति० सुवर्चला ( रा. ४.१४५ )
**भास्वत्**–न., खनिज० ताम्रम् ( र. २१.१४-१८ )
**–दर्शन**–न., तैजसद्रव्यदर्शनम् ( असंसू. ३३ )
**भिक्षु**–पु., वनस्पति० मुण्डी ( ध. १.१५९ )
ऋषि० यज्ञःपुरुषविषये विवदमानानामेकतमः आत्रेयः ( चसू. २५.२४ )
**–संघाटी**–स्त्री., वनस्पति० श्रमणककन्था ( असंउ. ६; इन्दु. )
**भिण्ड**–पु., वनस्पति० भेण्डा ( रापरि. ४.२५ )
**भिण्डातिका**–स्त्री., वनस्पति० भेण्डा ( रापरि. ४.२५ )
**भिदुर**–पु., वनस्पति० प्लक्षः भिनत्ति भित्त्यादिकं प्ररोहार्थे इति भिदुरः ( रा. ११.१२६ )
न., खनिज० हीरकम् ( ध. ६.५५ )
**भिद्यमान**–वि., अनेकप्रकारैर्विभज्यमानम् ( चवि. ६.३ )
**भिन्न**–न., सद्यो व्रण० भेदः ( सुसू. ४२.१०.(२) )
वि., मर्दितम् ( सुचि. ३०.१४ )
**–कोष्ठ**–वि., यस्याऽन्त्रादौ भेदः संजातः सः, कोष्ठभेदयुक्तः ( सुसू. १२.१४ )
**–दला**–स्त्री., वनस्पति० मूर्वा ( ३.१० )
**–पात्र**–न., भग्नपात्रम्, विदीर्णपात्रम् ( २४.९८ )
**–पुरीष**–वि., द्रवमलः ( काखिल. १२.२१ )
**–मूर्ति**–वि., विद्धशरीरः, भिन्नकायः ( सुउ. ५५.१० )
**–रोमन्**–वि., च्युतरोमा ( असंउ. ४४ )
**–वर्चस्**–वि., भिन्नपुरीषः ( सुउ. ४६.४०९ )
**–वर्चस्क**–वि., भिन्नपुरीषः ( सुउ. ५५.४२ )
**–वर्ण**–वि., वर्णदुष्टियुक्तः ( सुउ. ४१.२६ )
**–स्वर**–वि., पु., भिन्नपात्रध्वनिसदृशो ध्वनिर्यस्य ( मा. नि. )
अनवस्थित स्वरः ( सुउ. ५३.४ )
**भिन्नाञ्जन**–न., स्फुटितं अञ्जनम् ( सुचि. ३०.१४ )

**भिराटिका**–स्त्री., वनस्पति० काकमाची ( ध. ४.३१ )
**भिल्लतरु**–पु., वनस्पति० लोध्रः ( रा. ६.२३८ )
**भिल्लभूषणी**–स्त्री., वनस्पति० काकमाची ( रा. ३.४७ )
**भिल्लिन्**–पु., वनस्पति० लोध्रः ( ध. ३.१७५ )
**भिल्लोट**–पु., हिमवदासन्नभूमिजः ककुभानुकारिफलो वृक्षः ( सुउ. १७.४० )
**भिल्लोटक**–पु., वनस्पति० लोध्रः ( सुचि. २४.१५ )
**भिषज्**–पु., वैद्यः ( चसू. २५.४० ) यो भिषज्यति, यः सूत्रार्थप्रयोगकुशलः यस्य चायुः सर्वथा विदितं, स भिषक् ( चवि. ८.८६ ) भिषज्यति चिकित्सति ( चक. चवि. ८.८६ )
**( भिषक् ) छद्मचर**–वि., भिषग्वेषचरः, वैद्यब्रुवोऽज्ञः धूर्तः ( चसू. ११.५० )
**–पाश**–वि., वैद्याधमः, निन्दितवैद्यः ( र. ३०.११७ )
**–प्रिया**–स्त्री., वनस्पति० गुडूची ( रा. ३.२ )
**( भिषग् )–जित**–न., चिकित्सितम् ( चसू. १०.२४ )
**(–जिता )**–स्त्री., वनस्पति० गुडूची ( ध.१.४ )
**–ब्रुव**–वि., आत्मानं केवलं भिषगिति ब्रूते इति भिषग्ब्रुवः अवैद्यः, कुवैद्यः ( अहसू. १२.७० )
**–वरा**–स्त्री., वनस्पति० हरीतकी ( रा. ११.३०६ )
**–विद्**–वि., निष्णातवैद्यः भिषक्च असौ विज्ञाम वेत्ता च इति कर्मधारयत्वाद् भिषग्वित्समासः ( चवि. ३.४१ )
**भिषङ्–) मातृ**–स्त्री., वनस्पति० वासकः ( ध. १.२३ )
**भी**–स्त्री., भीतिः ( असंशा. ८ )
**भीम**–पु., वनस्पति० अम्लवेतसः ( ध. २.९६ )
भयङ्करम् वि., ( सुउ. ६०.२२ )
**–पराक्रम**–पु., सिद्धौषधिविशेषः अयं वल्लद्वयप्रमाणोपसेवितः सन् सर्वमेहघ्नः ( र. १७.६९-७७ )
**भीमाकार**–वि., रौद्ररूपः ( सुउ. ६२.१७ )
**भीरु**–वि., कातरः भयशीलः ( चसि. २.४ )
स्त्री., वनस्पति० शतावरी ( ध. १.२९३ )
लज्जालुः ( सुउ. ३९.२२८ )
**–त्व**–न., कातरत्वं, सभयत्वम् ( चवि. ८.१८ )
**–शिफा**–स्त्री., वनस्पति० शतावरी ( र. २५.१०५ )
**भीरुक**–पु., इक्षुभेदः पौण्ड्रकवद्गुणाः अस्य ( सुसू. ४५.१५१ ) द्र० 'इक्षु'
**( भीरुका )**–स्त्री., रेवतीग्रह० सा सप्तमेऽहन्यपत्यं विनाशयति ( काकरेवतीकल्प ४५. )
**भीषण**–पु., वनस्पति० कुन्दुरुः ( ध. ३.१३१ )
हिन्तालः ( रा. ९.९७ )

भुक्त–वि., कृत आहारः, निगीर्णमन्नम् (हे. अहृसू. १.८)
(भुक्ता)–स्त्री., वनस्पति० दीप्या ( पिण्डखर्जुरिका ) ( रा. ११.७३ )
–भक्त–वि., भुक्तवान्, भुक्तभोजनः कृताहार इति ( अहृसू. २०.१२ )
–मात्र–वि., सद्योभुक्तम्, अचिराद्भुक्तभोजनः ( सुसू. ४६.५११ )
भुक्तेरित–वि., भोजनेन प्रेरितम् ( सुसू. ४६.४८४ )
भुग्नदृश्–पु., संनिपातज्वरः भुग्ननेत्रः ( मा ज्वर. १९ )
भुग्ननेत्र–पु., संनिपातज्वरः लक्षणम्–ज्वरबलापचयः स्मृतिशून्यता श्वसनभुग्नविलोचनमोहितः प्रलपनभ्रमकम्पनशोफवान् भुग्नदृक् जीवितमाशु त्यजति ( मा ज्वर. ३.१९ )
भुज–पु., शारीर० बाहुः ( सुशा. ३.८ )
–ग–पु., प्राणि० सर्पः ( सुउ. ३९.२५९ )
खनिज० सीसकम् ( र. २३.३७ )
(–गी–)स्त्री., वनस्पति० सर्पिणी ( रापरि. ५.३९ )
–गदृष्टि–स्त्री., गन्धनाकुली ( र. २७.११७ )
–गपतिशिरस्–न., द्विमुखसर्पशिरः अस्य धूमो विषघ्नः ( चचि. २३.९९ )
–गलता–स्त्री., वनस्पति० नागवल्ली ( रापरि. ११.६)
–गाख्यवल्ली–स्त्री., वनस्पति० ताम्बूली (र.१२.५०)
–स्तम्भ–पु., भुजस्य स्तम्भः बाहुस्तैमित्यम् ( चचि. १ (४). ४२ )
भुजङ्ग–पु., बिलेशय० सर्पः, नागः ( सुशा. ४.७१ )
–जिह्वा–स्त्री., वनस्पति० बला ( रा. ४.५३२ )
–पुष्प–न., वनस्पति० नागकेशरम् ( सुउ. ४६.१७ )
–पुष्पादियोग–पु., योग० नागकेशरं मरिचमुरं कोलमज्जा समप्रमाणाः शीततोयेन पिबेच्चेत् मूर्च्छाशमनं भवति ( सुउ. ४६.१७ )
भुजङ्गम–पु., ग्रह० यः कदाचिद्भूमौ सर्पवत्क्रमति, जिह्वया सृक्किण्यौ विलेढि निद्रालुर्गुडमधुदुग्धपायसेप्सुश्च यो भवति; स भुजङ्गमग्रहाविष्टो ज्ञेयः ( सुउ. ६०.१३ )
बिलेशय० भूनागः ( र. ५.२३३-३४ )
न., खनिज० सीसकम् ( ध. ६.२१ )
भुवन–न., जलम् ( रा. १४.३१८ )
भू–स्त्री., पृथ्वी ( चसू. ८.९ )
स्फटिका तुवरी वा ( र. ११.४९)
वनस्पति० रक्तपुनर्नवा ( र. २४.१४४ )
अभ्रकम् ( र. २६.५४-५६ )

–कदम्ब–पु., वनस्पति० भूमिकदम्बः, मुण्डी ( र. १६.७०-७९ )
महाश्रावणिका ( रा. ५.२२१ )
–कदम्बक–पु., वनस्पति० यवानी ( रा. ६.१४० )
–कन्द–पु., वनस्पति० भूस्फोटः, प्रावृड्भवः प्रसिद्ध एव ( अरु. अहृसू. ६. ११४ )
–कम्प–पु., भुवः कम्पः, इदम् अरिष्टलक्षणम् ( चइं.१२.६९ )
–कर्बुदार–पु., वनस्पति० श्लेष्मातकः ( रा. ११.१५० )
–कूष्माण्ड–पु., महाकन्द० विदारी ( र. २७.५२ )
–कूष्माण्डी–स्त्री., वनस्पति० विदारिका (रा.७.१९४)
–क्षार–न., वनस्पति० मूलकम् ( रा. ७.५० )
–खर्जूरी–स्त्री., वनस्पति० खर्जूरी ( रा. ११.७३ )
–गृह–न., भूस्वेदार्थं गृहम् ( चसू. १४.२८ )
–घ्नी–स्त्री., खनिज० सौराष्ट्री ( रा. १३.१६४ )
–जम्बू–स्त्री., वनस्पति० भूमिजम्बूः ( रा. ११.१३४ )
–तला–स्त्री., वनस्पति० स्पृक्का ( र. २४.१२० )
–तलिका–स्त्री., वनस्पति० स्पृक्का ( रा. १२.११३ )
–ताली–स्त्री., वनस्पति० मुसलीकन्दः (रापरि. ७.५८)
भूपाटली ( रापरि. ५.४३ )
–तुम्बी–स्त्री., अलाम्बुनी ( रा. ७.२४१ )
–तृण–पु., वनस्पति० गुणाः– कटुस्तिक्त उष्णो लघू रूक्षः कफवातघ्नो जन्तुभूतग्रहविषनाशनश्च ( ध. ४.४७ )
हिं.—रूआघस, गन्धबेन, अगयघस, रोशेल.
म.—रोहिस गवत.
बं.—रूआघस, गन्धबेन, अगयघस, रोशेल.
ता.—शकनहपिल्लु.
–दार–पु., वराहकन्दः, मुस्तकः, सूकरः ( र.१८.१८३ )
–दारु–पु., वनस्पति० देवदारुभेदः ( र. १८.१८३ )
–धरपुट–न., भूमौ द्व्यङ्गुलादधो निखन्य तत्र मूषां स्थापयित्वा दीयमानं पुटम् ( र. १०.६३ )
–धरयन्त्र–न., यन्त्र० राजहस्तमात्रगम्भीरे हस्तमात्रायामविस्तारे चतुरस्रे गर्ते रसान्वितां पारदगर्भितां मल्लमूषां वालुकागूढसर्वाङ्गां निधाय गर्तकण्ठपर्यन्तं वालुकया प्रपूर्योपरि किञ्चित् पार्श्वे च दीप्तवन्योपलैराच्छादयेत्। एवं वह्निदानपूर्वकं पुनः पुनः पचनं कार्यम्। उपरि सन्ततमृद्वग्नेरावश्यकता। अस्य यन्त्रस्य गन्धकजारणायां

पारदस्य पाकमूर्च्छनमारणाद्यनेककर्मसु सुखेनोपयोगो भवति (र. ९.४४)

**-धात्री**-स्त्री., वनस्पति० भूम्यामलकी (ध. ३.८४)
गुणाः- मधुरा तिक्ता (कषायाम्ला) (रा.) शीता पित्तकफघ्नी रक्तदोषदृष्टिदाहप्रमेहमूत्ररोगघ्नी च (ध. ३.८४)
हिं.—जराम्ला, निरूरी.
**म.—भुईआवळी.**
बं.—भुईअम्ल.
ता.—किझकेनेल्ली.

**-नाग**-पु., क्षुद्रप्राणिविशेषः गण्डूपदः (र. २.१३९-४०) तस्य सत्त्वपातनविधिः- क्षालितभूनागमृत्तिकां भृङ्गराजस्वरसैर्दिनत्रयपर्यन्तं मर्दयेत् एवं दिनत्रयपर्यन्तं निम्बुद्रवैस्तथा निर्गुण्डीस्वरसैः मृत्तिकां मर्दयेत्। ततस्तां भूनागमृत्तिकां द्रावणगणेन सह संमर्द्य पिण्डाकारं कुर्यात्, तदनन्तरं तत्पिण्डं मूषायां निरुध्य घटिकाद्वयपर्यन्तं दृढं प्रधमेत्। ततः स्वाङ्गशीतं कृत्वा तत्समाहृत्य काष्ठपट्टके चिक्कणशिलायां वा स्थापयित्वाऽतिभारवतो राजिकाकारान् रेणून् गृह्णीयात्। अनन्तरं द्वादशांशताम्रसंयुक्तान् रवकान् राजिकातुल्यान् धमित्वा काञ्जिकेन पचेत्। ततः रवकान् अतिभराऩ्वितान् काञ्जिकेन क्षालयित्वा गृह्णीयात्। तेन भूनागसत्त्वेन यथेप्सितं वज्रादिद्रावणं कुर्यात्। इदं खरसत्त्वश्रेष्ठं रसायनम् (र. ५.२२८-३२)

**-निम्ब**-पु., वनस्पति० भूमिकदम्बः (रा. ९.१७४)
किराततिक्तः (ध. १.३३)

**-पति**-पु., खनिज० ऋषभकः (रा. ५.१५७)

**-पदी**-स्त्री., वनस्पति० मल्लिका (ध. ५.१३४)

**-पाटली**-स्त्री., वनस्पति० अस्या गुणाः—कटुरुष्णा पारदसंस्कारोपयुक्ता च (रा. परि. ५.४३)

**-पालावर्त**-पु., खनिज० राजावर्तः (र. १७.७८-७९)

**-बदरी**-स्त्री., बदरभेदः (रा. ११.१६२) द्र० 'बदर'

**-बाष्प**-न., भुवो बाष्पम् ऊष्मा (अरु. अहृसू. ३.४३)

**-भुज्**-पु., नृपः (असंसू. ८.३)

**-भुजङ्ग**-पु., भूनागः (र. ५.२३३)
द्र०-'भूनाग.'

**-रुह**-पु., उद्भिज्जम् भुवो रोहति इति भूरुहः (काखिल. २२.५)

**-लग्ना**-स्त्री., वनस्पति० शङ्खपुष्पी (रा. ३.१७१)

**-वेश्मन्**-न., भूम्यन्तर्वर्ति गृहम् (अहृसू. ३.१६)

**-शय**-वि., बिलेशयः (चसू. २७.५४)

**-शर्करा**-स्त्री., शर्करा, वाराहीकन्दः (र.१८.४७-५२)

**-शिरीष**-पु., कृष्णशिरीषः (र. ३०.४३)

**-शेलु**-पु., भूकर्बुदारः (र. ११.१५०)

**-स्वेद**-पु., स्वेद० पुरुषायाममात्रां भूमिं खनित्वा तां भूमिं च खादिरकाष्ठैर्दग्ध्वा क्षीरधान्याऽम्लवारिभिर्दग्धां भुवं सिक्त्वा च वातघ्नैरेरण्डपल्लवैराच्छाद्य तत्र पुरुषं शाययित्वा स्वेदयेत् (सुचि. ३२.८-९)

**भूत**-न., प्राणी (अहृसू. २.२०)
पिशाचादिः (असंसू. ३२.७)
ग्रहः (अहृसू. ४.३१)
देवादिः, तानि च अष्टौ देवासुरप्रभृतीनि (सुउ. १८.९३)
स्थावरजङ्गमादिः स्वर्गः, पृथिव्यादि (सुशा. १.३)
बिभीतकः (र. १३.६७)
हरितालः (र. १३.६७)
अफूकम् (ध. ६. १२१)
पारदः (ध. ३.३७)

**-कृत**-वि., पिशाचकृतम् (चवि. ८.३७)

**-केशी**-स्त्री., वनस्पति० शुक्लशेफालिका (ध. ४.८३)
शुक्लाङ्गी (रा. ४.१२१)
मांसी (सुउ. ६०.४७)
गन्धमांसी (ध. ३.४७)
शुक्ला निर्गुण्डी (असंउ. ८)

**-ग**-पु., भूतविज्ञानीयभूतप्रतिषेधाख्याध्यायद्वयम् (अहृसू. १.४५)

**-गुण**-पु., आकाशादिमहाभूतस्य शब्दादिगुणः (चसू. १.५६) द्विविधोऽयं पृथिव्यपां गुरुत्वं तेजोवाय्वाकाशानां लघुता (सुसू. ४०.१०)

**-ग्रह**-(परिव०)-पु., भूतानां पिशाचादीनां ग्रहो नाम आवेशः (अहृसू. १.४५)

**-ग्राम**-पु., प्राणिसमूहः स चतुर्विधः स्वेदजजरायुजाण्डजोद्भिज्जभेदात् (सुसू. १.२२) पञ्चमहाभूतसमूहः (सुशा. १.१२)

**-घ्न**-पु., वनस्पति० लशुनः (रा. ७.९४).
भूर्जः (रापरि. ९.२३)

**(-घ्नी)**-स्त्री., वनस्पति० तुलसी (ध.४.५०)

–जटा–स्त्री., वनस्पति० गन्धमांसी ( रा. १२.९१ )
–त्रासनविद्या–स्त्री., भयोत्पादनपूर्वकं पिशाचादीनां विद्रावणम् तन्मन्त्रविद्या वा ( र. ७.३२ )
–द्राविन्–पु., वनस्पति० क्षुवकः ( रापरि. ९.४० )
–द्रुम–पु., वनस्पति० श्लेष्मातकः ( रा. ११.१४९ )
–नाशन–पु., वनस्पति० रुद्राक्षः ( रापरि. ११.१५ )
सर्षपः ( ध. ४.४२ )
हिङ्गुः ( ध. २.२६ )
–निग्रह–पु., भूतप्रेतादीनां दण्डादिना रोधनम् ( र. ७.३१ )
–प्रकृति–स्त्री., खादीनि बुद्धिरव्यक्तमहङ्कारस्तथाष्टम इति भूतप्रकृतिः ( चशा. १.६३ )
–भविष्यदीश–वि., भूतस्य भविष्यतश्च अव्याहृतज्ञानवत्त्वेन ईशः प्रभुः, त्रैकालिकदृष्टिः (चचि.५.३)
–मातृ–स्त्री., रेवतीग्रह० ( काबालग्रहचि. )
–राव–न., घृत० इदं ग्रहघ्नम् ( असंउ. ८ )
–लोक–पु., अमानुषसृष्टिः, अष्टादश भूताधिपतयः सुरासुरगन्धर्वोरगयक्षब्रह्मराक्षसराक्षसपिशाचप्रेतकूष्माण्डककालादौकिरवेतालपितरः ऋषिगुरुवृद्धसिद्धाश्च ते पुनः पृथक्कोटिपरिवाराः। तेषामपि चाऽपरिसंख्येयः परिवार इत्यनन्तो भूतलोकः ( असंउ. ७ )
–वन्ध्या–स्त्री., भूतबाधया वंध्यत्वमापादिता स्त्री ( र. २२.२ )
–वास–पु., वनस्पति० विभीतकः ( ध. १.२१२ )
–विद्या–स्त्री., भूतानां राक्षसानां वा ज्ञानार्थं प्रशमार्थं च विद्या (चसू. ३०.२८) तस्या अमानुषोपसर्गप्रतिषेधोऽपस्मारप्रतिषेध उन्मादप्रतिषेध इत्यङ्गानि ( सुसू. ३.४१ )
–विनाशनी–स्त्री., वनस्पति० कत्तृणम् ( ध. १.८२ )
–वृक्ष–पु., वनस्पति० शाखोटः ( रापरि. ९.३० )
–संघ–पु., देवता० ( अहसू. १८.१६ )
–संघात–पु., भूतसमूहः ( अहसू. ९.३ )
–सत्त्व–न., राजससत्त्वस्य भेदः ( कासू. २८ )
–समवायसंभव–पु., भूतसमुदायारब्धत्वम् ( असंसू. १७ )
–सार–पु., वनस्पति० टिण्टुकः ( रा. ९.१४१ )
–हन्त्री–स्त्री., वनस्पति० दूर्वा ( रा. ८.२२७ )
–हर–पु., वनस्पति० गुग्गुलः ( रा.१२.१८३ )
–हारिन्–न., वनस्पति० देवदारुः ( रा. १२.१०३ )

भूताग्नि–पु., भौतिकाग्निः ( असंशा. ६ ) भौमाप्याग्नेयवायव्याख्यपञ्चविधो भौतिकाग्निः पञ्चाऽऽहारगुणान् पार्थिवादीन् पचति जठराग्नेः समीपस्थः ( चचि. १५.१३ ) उक्तं च जाठरेणाग्निना संधुक्षितबलाः पार्थिवादिद्रव्यव्यवस्थिताः भूताग्नयः पञ्च स्वं स्वं द्रव्यं पचन्ति ( चक. चचि. १५.१३ )
भूताङ्कुश–पु., वनस्पति० क्षुवकः ( रापरि. ९.४० )
शङ्खो, धत्तूरः, हरितालभस्म ( र. १३.३७-४० )
भूताङ्कुशरस–पु., भैषज्य० पारदगन्धकताम्रहरितालवत्सनाभशंखभस्मयुक्तः, श्वासकासक्षयनाशनः ( र. १३.३७-४० )
भूतात्मन्–पु., आत्मा ( चशा. १.५७ ) चेतनाहेतुः, क्षेत्रज्ञः ( सुशा. ४.३६ ) जीवः, प्राणेष्वेकः ( सुशा. ४.३ )
भूतादि–पु., अहंकारभेदः तामसाऽहंकारः( सुशा.१.४ ) भूतं पृथिव्यादिकम् आदिर्मूलकारणं यस्य तादृशः, आदत्ते जनिमत्स्यादिति आदिर्मूलकारणम् ( सुशा. १.१४ )
भूताधिपति–पु., अष्टादशभूताधिपतयः सुरासुरगन्धर्वप्रभृतयः ( असंउ. ७ )
भूताभिषङ्ग–पु., ग्रहावेशः ( सुउ. ३९.६८ )
भूताभिषङ्गजज्वर–पु., आगन्तुज्वरः, लक्षणम्— हास्यं कम्पनं रोदनं उद्वेगश्च (सुउ. ३९.८० )
भूतारि–पु., वनस्पति० हिङ्गुः ( रा. ६.५९ )
भूतावेश–वि., भूतानामावेशो यस्मिन्सः ( ज्वरः ) ( चचि. ३.१२३ )
भूति–स्त्री., वनस्पति० कत्तृणम् ( ध. १.८० )
भूतृणम् ( रापरि. ८.४२ )
ऋद्धिः ( रा. ५.१८८ )
भस्म ( र. २१.१९-२१ )
कल्याणम् ( काइ.३५ )
–द–न., वनस्पति० कत्तृणम् ( ध.१.८० )
भूतिक–पु., वनस्पति० अजमोदा ( असंशा. ४ )
भूतृणम् ( रापरि. ८.४२ )
कत्तृणम् ( रा. ८.१०६ )
भूतीक–पु., वनस्पति० यवानी शीतप्रशमनगणोक्तमेकं द्रव्यम् ( चसू. ४.१७ )
कत्तृणम् (चचि. १९.२०; चसि. ४.४)
भूतौदन–पु., मांसमिश्र ओदनः ( असंउ. ४ )
भूमि–स्त्री., देशः, तत्प्रकारास्तु–अश्मवती स्थिरा गुर्वी श्यामा कृष्णा वा स्थूलवृक्षसस्यप्राया, स्वगुण-

भूयिष्ठा, स्निग्धाशीतलाऽऽसन्नोदका स्निग्धसस्यतृण-कोमलवृक्षप्राया शुक्लाऽम्बुगुणभूयिष्ठा;नानावर्णा लघ्व-श्मवती प्रविरलाऽल्पपाण्डुवृक्षप्ररोहाऽग्निगुणभूयिष्ठा, रूक्षा भस्मरासभवर्णा तनुरूक्षाल्परसकोटरवृक्षप्राया वायुगुणभूयिष्ठा मृद्वी समा श्वभ्रवत्यव्यक्तरसजला सर्वतोऽसारवृक्षा महापर्वतवृक्षप्राया श्यामा चाऽऽकाशगुणभूयिष्ठा ( सुसू. ३६.३-४ )
पृथ्वी महाभूतम् ( सुसू. ४२.३ )
कृष्णमृत्तिका ( सुक. ५.८४-८६ ड. )

**–कदम्ब**–पु., वनस्पति० कदम्बः ( र. ९.१७४ )
**–कम्प**–पु., भूमेः कम्पः, उत्पातः ( चवि. ३.७.(३))
**–कोष्ठी**–स्त्री., भूम्यन्तर्गतगर्तारूपा कोष्ठी ( र. ६.७)
**–खर्जूरी**–स्त्री., वनस्पति० दीप्या ( रा. ११.७३ )
**–गन्धिक**–न., वनस्पति० शालिपर्णी ( ध. १.८८ )
**–गृह**–न., भूम्यन्तर्वर्ति गृहम् ( चचि. ४.१०६ )
**–चरी**–स्त्री., वनस्पति० आखुकर्णी ( रापरि. ३.२२ )
**–ज**–पु., निर्यास० गुग्गुलुः (रा. १२.१८८)
भूमिकदम्बः (रा. ९.१७४)
लोहम् ( र. ५.८२ )
**–जम्बू**–स्त्री., जम्बूभेदः (रा. ११.१३४) द्र० 'जम्बू'
**–जोद्भिद**–न., शाक० तद्गुणाः– गुरु नातिवातलं च ( सुसू. ४६.२९३ )
**-परीक्षा**–स्त्री., श्वभ्रशर्कराऽश्मविषमवल्मीक-श्मशानाऽऽघातनदेवताऽऽयतनसिकताभिरनुपहतां अनूषरामभङ्गुरामदूरोदकां स्निग्धां प्ररोहवतीं मृद्वीं स्थिरां समां कृष्णां गौरीं लोहितां वा भूमिमौषधग्रहणाय परीक्षेत। तस्यां जातमपि कृमिविषशस्त्राऽऽतपपवनदहनतोयसम्बाधमार्गै-रनुपहतमेकरसं पुष्टं पृथ्ववगाढमूलमुदीच्यां चौषध-माददीतेत्येष भूमिपरीक्षाविशेषः सामान्यः ( सुसू. ३६.३ )
**–प्रविभागीय**–वि., अध्यायसंज्ञा० ( सुसू. ३६.१ )
**–मण्डपभूषणी**–स्त्री., वनस्पति० माधवी ( रापरि. १०.२९ )
**–रजस्**–न., रत्न० वैक्रान्तम् ( ध. ६.४४ )
**–लग्ना**–स्त्री., वनस्पति० विष्णुक्रान्ता ( ध. ४.११५ )
**–सह**–पु., वनस्पति० शाकः (ध. ५.३ परि.)
**–सार**–पु., भूमेः सारः उत्कृष्टांशः (काखिल. २२.७)
न., खनिज० पारदः ( र. १७.६७-६८ )
तीक्ष्णलोहम् ( र. १७.६७-६८ )
शुद्धशिलाजतु ( र. १७.६७-६८ )

**भूम्यामलक**–पु., वनस्पति० तामलकी ( र. १७.४-५ )
**भूम्यामली**–स्त्री., तामलकी (रा. ५.१४४)
**भूम्याहुल्य**–न., वनस्पति० ( रापरि. ४.३६ ) गुणाः– तिक्तं ज्वरकुष्ठाऽऽमसिध्मनुत् ( रापरि. ४.३६ )
**भूयस्**–( अव्य० ) पुनः, भूरि अतिशयेन (सुउ.५५.२७)
**भूरि**–वि., खनिज० सुवर्णम् ( र. १६.६७-७५ )
**–गन्धा**–स्त्री., वनस्पति० मुरा ( ध. ३.६७ )
**–तेजस्**–न., खनिज० सुवर्णम् ( रा. १३.२ )
**–दुग्धा**–स्त्री., वनस्पति० वृश्चिकाली ( रापरि. ९.८)
**–पत्र**–पु., वनस्पति० उखलः ( रापरि. ८.४६ )
**–पान**–न., बहुमद्यपानम् ( अहृसू. १७.२८३ )
**–पुष्पा**–स्त्री., वनस्पति० शतपुष्पा ( रा. ४.३ )
**–फली**–स्त्री., वनस्पति० पाटली ( रापरि. ५.४४ )
**–बला**–स्त्री., वनस्पति० अतिबला ( ध. १.२८६ )
**–मल्ली**–स्त्री., वनस्पति० अम्बष्ठा ( रा. ४.१७१ )
**–श्लेष्मन्**–वि., श्लेष्माधिक्ययुक्तम् श्लेष्मबहलम् ( अहृसू. १६.३७ )
**भूर्ज**–पु., वनस्पति० तद्गुणाः–कटुः कषाय उष्णः पथ्यो दुष्टकौटिल्यनाशनस्त्रिदोषघ्नो भूतरक्षाकरश्च ( रापरि. ९.२२ )
हिं.—भुजपत्र.
**म.—भोजपत्र.**
बं.—भूर्जपत्र.
**–ग्रन्थि**–पु., भूर्जपत्रस्य ग्रन्थ्याकारमङ्गम् ( चचि. २६.२२७ )
**–पत्र**–पु., वनस्पति० शाखोटः ( रापरि. ९.३० )
**–पत्रक**–पु., वनस्पति० भूर्जः ( रापरि. ९.२२ )
**–पत्रधूम**–पु., भूर्जपत्रस्य धूमः ( चशा. ८.३८ )
**भूषण**–न., अलङ्कारः ( सुक. १.७४-७५ )
फटकी, उपरसवि० ( र. ६.४२ )
**–क्षमा**–वि., भूषणधारणार्थं समर्था ( सुचि. २५.२८)
**भूषणार्ह**–न., खनिज० सुवर्णम् ( ध. ६.२ )
प्रवालम् ( ध. ६.६४ )
**भूषणार्हतम**–न., भैषज्य० मौक्तिकम् ( ध. ६.६२ )
**भूस्तृण**–पु., वनस्पति० गन्धतृणः, कटुरूक्षोष्णः वक्त्र-शोधनः पुंस्त्वघ्नश्च (चसू. २७.१७२)
कृमिहरतृणः ( चवि. ७.१७ )
गुदाकनामधेयो द्रोणपुष्पसदृशो, रोहिषमिति केचित् ( ड. सुसू. ३८.१८-१९ ) तस्य गुणाः– कफघ्नो लघुः रूक्षस्तीक्ष्ण उष्णः पित्तवर्धनः पाकेन रसेन च कटुः ( सुसू. ४६.२३५ )

भृकुटी–प्राणि० मण्डूकभेदः तेन दष्टस्य दाहश्छर्दिर्मूर्च्छा-कण्डूश्च भवति, मुखात्पीतफेनागमश्च असाध्यो-ऽयम् ( सुक. ८.३१ ) द्र० ' मण्डूक '

भृगु–पु., ऋषि० रोगापहरणचिन्तनार्थं हिमवत्पार्श्वे-समेतानामृषीणामेकतमः ( चसू. १.८ )

भृङ्ग–न., वनस्पति० त्वक् ( ध. २.५० )
भृङ्गराजः ( ध. ४.११ )
गुडत्वक् ( चक. ७.३४ )
अभ्रकम् ( रा. १३.२ )

( भृङ्गा )–स्त्री., श्लेष्मविकारकारिणी लूता ( असंउ. ४४ )
दंशलक्षणानि–भ्रमरवर्णः, दंशस्थाने पिडका दाहः कोठानि च ( असंउ. ४५ )

–जा–स्त्री., वनस्पति० भार्ङ्गी ( ध. १.६८ )

–प्रिय–पु., वनस्पति० धूलि कदम्बः ( रा. ९.१७३ )
कदंबः ( ध. ५.१०४ )

(–प्रिया)–स्त्री., वनस्पति० माधवी (रापरि. १०.२९)

–मारी–स्त्री., वनस्पति० भ्रमरारिः ( रापरि.१०.४१ )
केविका ( रापरि. १०.३३ )

–मूलिका–स्त्री., वनस्पति० भृङ्गाह्वा ( रापरि. ७.२० )

–मोहिन्–पु., वनस्पति० चम्पकः ( रा. १०.२३८ )

–रज–पु., वनस्पति० भृङ्गराजः (. ध ४.११ )

–रस–पु., मार्कवस्वरसः– (सुक.८.५६)

–राज–पु., वनस्पति० गुणाः-तिक्तोष्णः रूक्षश्चक्षुष्यः केशरञ्जनः कफघ्नः शोफामपाण्डुहृद्रोगविषघ्नश्च ( ध. ४.११ )
हिं.—भुंग्रा मोत्रन्द.
म.— माका.
गु.—भांग्रा; मार्कव.
बं.—केसूरिया; केसुती.
ता.—कैकेशी.
प्रतुदपक्षि० भ्रमरवर्णः (चसू. २७.५० )
आनूपदेशे वर्तमानः पक्षिविशेषः भ्रमरः(चक.१.८)
सविषान्नं दृष्ट्वाऽयं कूजति ( असंसू. ८ )

–राजतैल–न., श्वासकासविनाशि तैलम्, तदिदं भृंग-राजस्य दशगुणे शुभे रसे सिद्धं भवति समूचित-विचारणात्स्नेहमच्छपानं वा योजयेत् (सुउ.५१.३०)

–राजमुखयन्त्र–न., स्वस्तिकयन्त्र० अस्थिविदष्ट-शल्योद्धरणार्थमुपदिष्टम् ( सुसू. ७.१० )

–रेणु–पु., वनस्पति० भृंगराजः (ध. ४.११)

–वल्लभ–पु., वनस्पति० धाराकदम्बः (रा. ९.१७२)
भूमिकदम्बः ( रा. ९.१७४ )

–( वल्लभा )–स्त्री., वनस्पति० भूमिजम्बूः (रा. ११.१३४)
तरणी (रा. १०.२४४)

–वृक्ष–पु., वातहरबिल्वादिवृक्षः (सुउ. ३५.४ ड. )

भृङ्गाङ्गी–स्त्री., वनस्पति० लवङ्गम् (रा. १२.८५)

भृङ्गानन्दा–स्त्री., वनस्पति० यूथिका ( रा. १०.२५० )

भृङ्गाभीष्ट–पु., वनस्पति० आम्रः (रा. ११.२)

भृङ्गार–पु., वनस्पति० भृङ्गराजः ( ध. ४.११ )
लवङ्गम् ( ध. ३.४१ )
न., सुवर्णपात्रम्, भद्रपात्रम् (चसू. १५.७)

भृङ्गारक–पु., वनस्पति० भृङ्गराजः ( ध. ४.११ )

भृङ्गारि–स्त्री., वनस्पति० भ्रमरारिः ( रापरि. १०.४१ )
केविका ( रापरि. १०.३३ )

भृङ्गाह्व–पु., वनस्पति० भृङ्गराजः ( रा. ४.२० )

(भृङ्गाह्वा)–स्त्री., वनस्पति० गुणाः– कटुस्तिक्तोष्णा दीपनरोचनी च ( रापरि. ७.२० )

भृङ्गिन्–पु., वनस्पति० भृङ्गराजः ( र. २४.८५ )
रसमण्डपे पूजनीयो देवता० ( र. ६.२५ )

भृङ्गेष्टा–स्त्री., वनस्पति० काकजम्बूः ( रा. ११.१३२ )
कुमारी ( रापरि. ५.११ )
तरणी ( रा. १०.२४४ )

भृत–वि., भटित्रीकृतम् मांसम् ( चसू. १३.८६ )

भृतिक–पु., वनस्पति० भूतृणः (ध. ४.४७)

भृशम्–( अव्य ) अत्यन्तम् (सुचि. ८.८)

(भृश)–दुर्ग–न., प्रतिवादिनोऽविदितत्वेन दुर्गमिव दुर्गम् (प्रकरणम्) ( चवि. ८.९५ )

–पत्रिका–स्त्री., वनस्पति० महानीली (रा. ४.३५३)

–वातल–वि., अतिवातकृत् ( अहसू. ६.१२७ )

–स्निग्ध–वि., अतिशयेन स्निग्धः ( सुचि. ३१.५४ )

भृष्ट–वि., भर्जितम् ( सुसू. ४६.३४८ )

–तण्डुल–पु., भर्जिततण्डुलः, गुणाः–लघुः सुगन्धिः कफहा च ( ४६.३४८ )

–मृद्–स्त्री., दग्धमृत्तिका ( चसू. ४.१५ )

–यन्त्र–न., तिर्यगाकारचुल्ल्यां तिर्यङ्मुखं घटं स्थापयित्वा मुखं विहाय सर्वो घटो विलिप्यते, तस्मिँश्च नागभस्म विधीयते, एतदेव भृष्टयन्त्रम् ( र. ५.१८१ )

भेक–पु., भूमिशयप्राणि० मण्डूकः ( चसू. २७.३८ )
बिलेशयानामहिततमः ( चसू. २५.३९ )

–वर्ण–वि., भेकस्य वर्ण इव वर्णो यस्य सः ( चचि. १६.३५ )

भेड–पु., ऋषि० पुनर्वसोरात्रेयस्य शिष्यः भेड-संहिताकारः ( चसू. १.३१ )
पशु० मांसगुणाः– मधुरं शीतं गुरु विष्टम्भि बृंहणं सर्वदोषकरम् ( रा. ६.३८८ )
( भेडा )–स्त्री., वनस्पति० पद्मबीजम् ( ध. ४.१५९ )
फञ्जादिशाकवर्गे शाकः ( रापरि. ७.९५ )
भेण्डा–स्त्री., वनस्पति० गुणाः– अम्लोष्णा ग्राहिका रुचिकारिका च ( रापरि. ४.३३७ )
हिं.—लोटलोटी, कुंजिया.
**म.—वनभेण्डा, रानतुपकाडा, वागडु भेण्डी.**
बं.—बेन ओचरा.
भेत्तृ–वि., विभागकर्ता ( पुरुषः ) ( चवि. ६.४ )
भेद–पु., वेदना० भिद्यमानत्व इव पीडा (चवि. २८.२०)
भेदनम्, वायोरेकं वैकृतं कर्म (चसू. २०.१२)
स्फोटनम् ( सुउ. ३९.८७ )
विरेचनम् ( र. १९.४-६ )
क्षणनम् ( सुउ. ४५.९ )
कुठारेण विदारणवद् वेदनाविशेषः ( सुनि. ११.४ )
विशेष, प्रकारः ( चक. १.३ )
सर्गः, श्लथप्रवृत्तिः ( चसू. २८.२२ )
विकृतिः ( चचि. ११.६१ )
–प्रकृति–स्त्री., भेदकारणम् ( चवि. ६.४ )
–प्रकृत्यन्तरीय–वि., भेदकारणान्तरभवम् ( चवि. ६.४ )
भेदक–पु., वनस्पति० अम्लवेतसः (ध.२.९६)
भेदन–न., वनस्पति० हिङ्गुः ( रा. ६.६० )
सूक्तम् ( ध. ६. २४६ )
अम्लवेतसः ( रा. ६.१४७ )
उपक्रम० आशयविदारणम् ( चसू. ११.१५ )
भेदनवद् वेदना ( अहृसू. १२.४९ )
त्वग्विदारणमिव वेदना ( सुसू. २२.११ )
वृध्दिपत्रादिभिः शस्त्रैः स्फोटनम् ( सुसू. २७.४ )
भेदनीय–वि., भेदनाय हितम् ( चसू. ४.८ ) महाकषायवर्गे एको गणः (चसू. ४.९ ) सुवहाऽर्कोरुबकाऽग्निमुखीचित्राचित्रकचिरबिल्वशङ्खिनीशकुलादनीस्वर्णक्षीरिण्य इति ( चसू. ४.९ )
भेदाग्र–न., भेदानां परिमाणं संख्या इति यावत् ( चवि. ६.४ )
भेदाशिन्–पु., प्रतुदपक्षि०
गुणाः–सर्वदोषकरो मलदूषकश्च ( सुसू. ४६.६९ )

भेदिन्–पु., वनस्पति० अम्लवेतसः ( रा. ६.१४७ )
जयपालः ( र. २०.२६ )
रन्ध्रकरः पारदस्य कञ्चुकाख्यो दोषः (र. ११.२२)
( भेदिनी )–स्त्री., वनस्पति० कृष्णजीरकः (रा. ६.१०४)
भेद्य–वि., विभाज्यो ( विषयः ) ( चवि. ६.४ )
अष्टविधशस्त्रकर्मस्वेकम् ( सुसू. ५.५ )
–योग्या–स्त्री., भेदनकर्माभ्यासः ( सुसू. ९.४ )
–रोगप्रतिषेध–पु., अध्यायसंज्ञा० ( सुउ. १४.१ )
भेरी–स्त्री., वाद्य० दुन्दुभिः ( चइ. १२.७९ )
भेल–पु., ऋषि० ( कासिद्धि. १ )
पुनर्वसोरात्रेयस्य शिष्यः, तन्त्रकर्ता ( चसू. १.३३ )
भेषज–न., औषधम्, रोगनिवारकं द्रव्यम् (चसू. १.६२)
' भिषग्विज्ञाननेयत्वाद्भेषजं भिषजो विदुः ' ( काखिल. ३.२८ )
–चिकित्सा– ( चसू. १०.३ )
–क्षपित–वि., शोधनकर्शितः ( अहृसू. ४.२८ )
–योग–पु., औषधस्य तदर्थसंपादनसामर्थ्यम् ( अहृसू. १.२४ )
–विकारयुक्ति–स्त्री., भेषजस्य विकारेण समं युक्तिः ( चइ. १.३ )
–संवृत्ति–स्त्री., भेषजस्य संपादनम् ( चइ. १.३ )
भेषजचतुष्क–न., चरकसूत्रस्थानस्य प्रथमे चत्वारोऽध्यायाः (चचि. ३.२१५)
भेषजागार–न., भेषजसंग्रहस्थानम् ( सुसू. ३६.१७ )
भेषजापमानिन्–वि., भेषजद्वेषी ( सुचि. ३०.४ )
भैक्षचर्यार्थ–न., भिक्षावृत्त्यर्थम् ( चशा. ५.१२ )
भैरव–वि., भयानकम् ( चवि. ८.११९ )
पु., रसरत्नसमुच्चयकर्ता सिंहगुप्तसूनुना यस्य तंत्रं आलोचितं तस्य कर्ता ( र. १.५-९ )
श्रीशङ्करकिङ्करभेदः ( र. ७.२३-२४ )
भैरवानन्दयोगिन्–पु., प्राचीनो रसाचार्यः ( र. १६.१३०-३५ )
भैषज्य–न., भेषजमेव भैषज्यम्, औषधम् (चसू. १.१३४)
–कर्शित–वि., औषधैः कृशत्वं प्राप्तः (अहृसू. १४.८)
–काल–पु., भैषज्यावचारणोचितः (चचि. ३०.२९८)
–मात्रा–स्त्री., औषधमात्रा ( अहृसू. १८.१५ )
द्र० 'औषध'
भैषज्यागार–न., भैषज्यसंग्रहस्थानम् ( असंसू. ८. )
भोग–पु., सर्पस्य फणा ( चचि. २३.१३० )
–वती–स्त्री., वनस्पति० समङ्गा ( असंउ. ४० इन्दु )
( भोगी )–स्त्री., वनस्पति० सर्पिणी ( रापरि. ५.३९ )
भोगिन्–पु., सर्पः ( सुक. ३.३९ )

भोगिगन्धिका–स्त्री., वनस्पति० नाकुली (ध. ४.१०३)
भोगिवल्लभ–न., वनस्पति० चन्दनम् (रा. १२.३)
भोजन–न., आहारः (सुसू. ४६.४७१) द्र० 'आहार'
–विधि–पु., आहारविधिः (अहसू. ८.३५-३८)
–वारिवर्जिन्–वि., भोजनं जलं च येन त्यक्तं त्यक्तव्यं वा सः (चचि. १२.२६)
भोज्योपरोध–पु., लक्षण० भोजनस्य गले संगः (सुउ. ५२.७)
भौतिक–वि., भूतसंबन्धि (चशा. ८.४९) भूतहरम् (चशा. ८.४९)
मौक्तिकम् (रा. १३.६६)
–पक्तृ–पु., पार्थिवाद्यंशपाचको भूताग्निः, स पञ्चविधः (चचि. १५. ३८)
–प्रकृति–स्त्री., महाभूतकृतस्वभावः नराणां भौतिकीं प्रकृतिं पूर्वाचार्या आहुः तत्र पवनप्रकृतेर्वातप्रकृतौ, दहनप्रकृतेः पित्तप्रकृतौ, तोयप्रकृतेः कफप्रकृतौ, अन्तर्भावो सुश्रुतेन कृतोऽस्ति। पार्थिवप्रकृतिस्तु नरः स्थिरविपुलशरीरः क्षमावांश्च । नाभसप्रकृतिस्तु नरः शुचिश्चिरजीवी महद्भिः खैर्युक्तो भवति (सुशा. ४.८०)
भौतिकेन्द्रिय–न., आकाशादिमहाभूतजन्यश्रोत्रादि-ज्ञानेन्द्रियमित्यायुर्वेदीयाः (सुशा. १.१४)
भौम–पु., वनस्पति० पुनर्नवा (रा. ५.४०८)
सर्पभेद० त्रिविधा एते दर्वीकरमण्डलिराजिमद्भेदात् (असंउ. ४)
भूमेर्विकारोऽथवाभूमेरिदमिति भूमिविकारः, पार्थिवम् (चसू. १.६८)
–जल–न., भूमिप्राप्तं जलम्, तच्चाकाशगुणबहुलं ग्राह्यं, तत्तु सप्तविधं–कौपं नादेयं सारसं ताडागं प्रास्रवणमौद्भिदं चौण्ट्यं चेति (सुसू. ४५.७) द्र० 'जल'
–रत्न–न., भैषज्य० प्रवालम् (रा.१३.७३)
भौर्ज–वि., भूर्जपत्रसम्बन्धि (चसू. ३.४)
भ्रंश–पु., दूरगतिः (चसू. २०.१२)
भ्रंशथु–पु., नासागतरोग० लक्षणम्–मूर्ध्नि पूर्वसंचितः श्लेष्मा पित्तेन तप्तस्त्वमापन्नः सन् सदा नासाद्वारेणैव सान्द्रविदग्धो लवणगन्धवान् भूत्वाऽतिशयेनाधः स्रवति तदाऽयं रोगो ज्ञेयः (सुउ. २२.१३-१४)
भ्रम–पु., रोग० अल्पसंज्ञत्वम्, अशीतिवातविकारेष्वेकः (चसू. २०.११) लक्षण० (चक. ७.४४)
मनोविकारः (चनि. १.२१) मज्जप्रदोषजरोगेष्वेकः (चसू. २८.१७) चक्रस्थितस्येव संवेदनम् (चचि. ३.३९-४०) रजःपित्तानिलाद्भ्रमः (सुशा. ४.५६)
भ्रमण–न., चलनम् (सुशा. ६.२४)
भ्रमर–पु., कीट० शूकतुण्डविषः (सुक. ३.५) अग्नि-प्रकृतिकः, अयं पित्तजरोगान् करोति (सुक. ८.८-१२)
खनिज० लोहम् (ध. ६.२६)
(भ्रमरा)–स्त्री., वनस्पति० भृङ्गाह्वा (रापरि. ७.२०)
(भ्रमरी)–स्त्री., वनस्पति० पुत्रदात्री (रापरि. ३.४७)
भ्रमरारिः (रापरि. १०.४१)
वनस्पति० जन्तुकारी (रा. ३.१२८)
–च्छल्ली–स्त्री., वनस्पति० भृङ्गाह्वा (रापरि. ७.२०)
–बान्धवा–स्त्री., वनस्पति० वासन्ती (ध. ५.१३९)
भ्रमरातिथि–पु., वनस्पति० चम्पकः (रा. १०.२३८)
भ्रमरानन्द–पु., वनस्पति० बकुलः (रा. १०.२६२)
(भ्रमरानन्दा)–स्त्री., अतिमुक्ता (रा. १०.२६०)
भ्रमराभ–वि., भ्रमरवन्नीलवर्णः (सुचि. २५.३६)
भ्रमरारि–स्त्री., वनस्पति० गुणाः–तिक्ता, वातश्लेष्मज्वर-शोफकण्डूतिकुष्ठव्रणदोषास्थिदोषनुत् (रापरि. १०.४१)
भ्रमरेष्ट–पु., वनस्पति० टिण्टुकः (रा. ९.१४३)
(भ्रमरेष्टा)–स्त्री., वनस्पति० भार्ङ्गी (रा. ६.९६)
जम्बू, वेतसी (ध. ५.८४)
भूमिजम्बूः (रा. ११.१३४)
भ्रमरोत्सव–पु., वनस्पति० अतिमुक्ता (ध. ५.१५३)
(भ्रमरोत्सवा)–स्त्री., वनस्पति० माधवी (रापरि. १०.२९)
भ्रष्ट–वि., स्थानच्युतम् (अहसू. १७.२३)
–गुद–न., स्वस्थानाद्बहिरागतं च तद् गुदम् (सुचि.६.८)
–ब्रध्न–वि., भ्रष्टगुदः (चसू. १४.१७)
–योनि–स्त्री., रोग० स्वस्थानाच्च्युता योनिः (चसू. १३.१६)
भ्राजकाग्नि–पु., भ्राजकपित्तम् 'यत्तु त्वचि पित्तं तस्मिन् भ्राजकोऽग्निरिति संज्ञा सोऽभ्यङ्गपरिषेका-वगाहावलेपनादीनां क्रियाद्रव्याणां पक्ता च्छायानां च प्रकाशकः' (सुसू. २१.१०)
भ्राजन–न., प्रकाशनं, दीपनम् (अहसू. १२.१४)
भ्राजिष्णुता–स्त्री., दीप्तिमत्त्वम् (सुशा. ७.१०)
भ्रान्तत्व–न., भ्रमणम्, रिष्टलक्षणम् (सुसू. ३२.४)

**भ्रान्तप्रेक्षिन्**–वि.,सर्वपदार्थानामयथार्थं दर्शनं कुर्वाणः, सर्वपदार्थायथार्थदर्शी ( सुउ. ३९.३९ )

**भ्रामक**–न., कान्तलोहप्रकारेष्वन्यतमम् ( र. ५.८९ )

**भ्रामर**–न., भ्रमरोद्भवं श्वेतं मधु ( चसू. २७.२४३ ) तद्गुरु पिच्छिलं स्वादु च ( सुसू. ४५.१३३-१३५ ) कान्तलोहप्रकारः ( ध. ६.२९ )

**भ्रू**–स्त्री., प्रत्यङ्ग० भ्रूदेशः, द्वे भ्रुवौ ( चशा. ७.११ ) अक्षिकूटोपरि रोमराजी ( सुसू. १२.९ )

–**कुटीमुख**–पु., सर्प० दर्वीकरसर्पः (सुक.४.३४(१);

–**व्युदास**–पु., रोग० भ्रुवो भङ्गः, अशीतिवातविकारेष्वेकः ( चसू. २०.११ )

**भ्रूणहन्तृ**–वि., गर्भघातकः, भ्रूणहा ( चसू. ८.१९ )

**भ्राष्ट्र**–न., खर्पर ( अहसू. ६.४२ )

**भ्वामलकी**–स्त्री., वनस्पति० तामलकी ( ध. ३.८४ )

## म

**मकर**–पु., जलचरप्राणि०, मत्स्यः, मनुष्यं कृणाति हिनस्ति, मं विषं किरति वा इति मकरः वारिशयप्राणी(चसू. २७.४०)हिंस्त्रदंष्ट्रकः(सुसू.४६.११८-९; अहसू. ६.५३; असंउ. ४३.१ )

**मकरन्द**–पु., वनस्पति० कुन्दः ( रा. १०.२५६ ) न., पद्मकेसरम् ( ध. ४.१६५ )

–**वास**–पु., वनस्पति० धूलीकदम्बः ( रा. ९.१७३ )

**मकुष्टक**–पु., धान्य० कलायभेदः ( अहसू. ७.३२ )

**मकुष्ठ**–पु., धान्य०वैदलभेदःकृमिकरोऽयम्(सुसू.४६.२७; असंसू. ७.२६ )

**मकुष्ठक**–पु., धान्य० गुणाः–मधुरो ग्राही रूक्षः शीतलो रक्तपित्तज्वरादिषु शस्तः कृमिकरः कफपित्तहरः लघुः ( चसू. २७.२७; सुसू. ४६.३० )

हिं.—मठ.
**म.—मटकी.**
गु.—मठ.
बं.—मुगानि.

( **मकुष्ठका** )–स्त्री., धान्य० गुणाः–कषाया मधुरा, लघुर्वातला, ग्राहिणी, रुच्या, कफपित्तघ्नी, रक्तपित्तज्वरदाहहरा ( ध. ६.९२ )

हिं.—माठ.
**म.—रानमूग.**
गु.—माठ.
बं.—भनमूग.
ता.—तुल्कापायरे.

**मकूलक**–पु., वनस्पति० दन्ती(ध.१.२२३)

**मकेरुक**–पु., पुरीषजः क्रिमिः ( चसू. १९.४ ( ९ ); असंनि. १४.५७ )

**मक्कल्ल**–पु., लक्षण० शूलोऽयं, प्रसूताया वायुरसृगारोध्य बस्तिशिरः प्रभृतिषु शूलं करोति (ड. सुनि. ८.६) चतुःषष्टिसूतिकारोगेष्वेकः ( काखिल. ११.७-१४; असंशा. ३.३५) चिकित्सा–मक्कल्लरोगस्योपचरणम्, तच्च वीरतर्वादिसिद्धं जलम् ( क्काथः ) ऊषकादिकल्कमिश्रितं सर्पिषा सुखोष्णेन लवणचूर्णेन वा यथादोषं पाययेत् ( सुशा.१०.२२ )

–**संज्ञितविद्रधि**–पु., मक्कल्लशूलविशेषरोगात्पश्चात् कुक्षौ विद्रधिर्जायते ( सुवि. ९.२७ )

**मक्षिका**–स्त्री., कीट० ( चइ. २.२१ ) सविषमक्षिका (चचि. २३.१५८) सा षड्विधा–कान्तारिका, कृष्णा, पिङ्गला, मधूलिका, काषायी, स्थालिकेत्येवं षट्, ताभिर्दष्टस्य कण्डूशोफदाहरुजो भवन्ति, स्थालिकाकषायीभ्यां कण्डूशोफादिसहिताः श्यावपिडकोत्पत्तिरुपद्रवाश्च ज्वरादयो भवन्ति, काषायी स्थालिका च प्राणहरे (सुक.८.३५; सुचि.२४.८२ ) नीलमक्षिका ( ड. सुउ. २०.१३ ) गृहमक्षिका ( सुउ. ४९.३१; असंसू. ७.२६०; अहसू. ७.१४ ) वनस्पति० लक्ष्मणा ( रापरि. ७.५५ )

–**कान्त**–न., मक्षिकाप्रियम् ( चचि.१९.९ )

–**क्रान्त**–न., मक्षिकापरीतम् ( चचि. १९.९ )

–**दंश**–पु., प्रायेण मक्षिका नेत्रे दशन्ति, मक्षिकादंशः श्वयथुबहुलो दाहकण्डूमांश्च भवति ( असंउ. ४३ ) ( सुक. ८.५४-५५ )

–**मल**–न., वनस्पति० सिक्थकम् ( रा, १३.१७३ )

–**विष्**–स्त्री., मक्षिकाविशेषस्य पुरीषम् छर्दिनिग्रहणार्थमुपयुक्तम् ( चचि. २०.२९ )

–**शकृत्**–न., मक्षिकापुरीषम् इदं सिताचन्दनमधुयुतं छर्दिषु शमनार्थं लेहयेत् ( सुउ. ४९.३१ )

**मक्षिकाश्रय**–न., प्राणिज० सिक्थम् ( ध. ३.११९ )

**मक्षिकोपसर्पण**–न., मक्षिकाणामनुसरणम्, श्लेष्मजप्रमेहाणामुपद्रवः ( सुनि. ६.१३ )

**मख**–पु., यज्ञः ( असंशा. १२.८ )

**मगध**–पु., देश० प्राचीनः प्रसिद्धो देशविशेषः स कुरुक्षेत्रात् पूर्वदेशः ( काखिल. २५.८ )

( **मगधा** )–स्त्री., वनस्पति० पिप्पली ( सुउ. ५२.३४ ) कटुकद्रव्यस्कन्धे मगधा श्रेष्ठा ( असंसू. १८.२८ )

**मगधा**–स्त्री., ( सुउ, ५२,३४ )

–फल–न., वनस्पति० पिप्पली ( सुउ. ४७.३८ )
**मगधोद्भवा**–स्त्री., ( सुउ. ११.१४ )
( रा. ६.११०; र. २३.६४ )
**मङ्गल**–न., देवतानमस्कारादिनिर्विघ्नकार्यसमाप्त्यर्थं यत् क्रियते तत् ( चनि. ७.१६ )
प्रशस्तौषधमणिधारणादि ( सुसू. ६.२० )
अथर्ववेदे चिकित्सा ( चसू. ३०.२१ )
गीतादि ( सुसू. १६.३; अहृसू. १८.१३ )
स्वस्तिकपूर्णकुम्भादि ( ड. सुसू. १०.४ )
**मङ्गला)**–स्त्री., वनस्पति० हरिद्रा ( रा. ६.८० )
नीलदूर्वा ( रा. ८.२२६ )
**–च्छाय**–पु., प्लक्षः ( रा. ११.१२६ )
**–प्रद**–पु., भैषज्य० शङ्खः ( रा. १३.२४४ )
**मङ्गलाष्टशत**–न., प्रस्थानगमनप्रवेशेषु दधिमधुघृतलाजपुष्पाऽक्षतोदुम्बराश्वत्थमुक्तामणिच्छत्रदूर्वांकुशाऽऽदर्शकन्याध्वजस्यन्दनाऽष्टापदाऽक्षनृपश्रीतरुभद्रपीठानि सस्यानि मत्स्या, हया हंसश्चाषो वृषः केसरी दक्षिणावर्तशङ्खाऽब्जसिद्धार्थका रोचना स्वस्तिकस्तोरणं कीचका वेणवो वरुणमधुमदसिक्तगण्डगजस्तोयलम्बोऽम्बुदः पूर्णकुम्भो हरिद्राऽद्रिरिन्द्रः फलान्यार्द्रमांसं सितं चामरं गौः सवत्साऽङ्गना पुत्रिणी मानुषं वर्धमानं सहस्रं नराणां प्रयुक्तानि यानानि धन्वन्तरिर्वामनो ब्राह्मणो भूमिरभ्युध्दृता सिद्धमन्त्रं वराहश्च तोयोत्थितस्त्रिनयनमधुसूदनस्कन्दपद्मासना लोकपालाः सुराः खं दिशोऽग्निः सरांसि स्रवन्त्यः समुद्रा मखा मारुतो ज्योतिषं धर्मशास्त्राणि तीर्थानि काव्यं धर्मार्थकामाऽऽश्रितं वालखिल्यादयो वेदवाक्यं निधिः कौस्तुभः काञ्चनं मणिभद्रः सुमेरुः प्रियङ्गुः प्रदीपो वचामोदकौ दितिरदितिररुन्धती बुद्धिः साविञ्युमाऽऽकाशगङ्गा शची देवसेना सुधा शान्तिर्लक्ष्मीःसरस्वत्यपत्यक्षमा स्वस्तिशब्दो वषट्कार ॐकारपुण्याहधर्मक्रियाश्चैतदष्टोत्तरं मङ्गलानां शतं दर्शनात्स्पर्शनात्कीर्तनाच्चाऽशुभानि व्यपोह्याऽर्थसिद्धिं दिशन्त्युत्तमाम् ( असंशा. १२.८; असंसू. ३.२३ )
**मङ्गल्य**–पु., वि., मंगलाय हितम् ( सुसू. ४५.६५ )
पाण्डुवर्णः मसुरः ( सुसू. २०.५ )
वनस्पति० रीठाकरञ्जः ( रा. ९.१८६ )
पिप्पलः ( ध. ५.७८ )
जलमधूकः ( रा. ११.५९ )
नारिकेलः ( रा. ११.१०४ )
कपित्थः ( रा. ११.१५५ )
जीवकः ( रा. ५.१५४ )
मसूरिका ( रा. १६.१४९ )
चन्दनम् ( रा. १२.१ )
वैदलभेदः ( ड. सुसू. ४६.२७ )
खनिज० सुवर्णम् ( रा. १३.३ )
भेषजद्रव्य० सिन्दूरम् ( रा. १२.१६१ )
**( मङ्गल्या )**–स्त्री., वनस्पति० ऋद्धिः ( रा. ५.१८८ )
वनस्पति० माषपर्णी ( रा. ३.१७० )
जीवन्ती ( रा. ३.१७७ )
प्रियङ्गुः ( रा. १२.२९ )
हरिद्रा ( रा. ६.८० )
शमी ( ध. ५.९५ )
वचा ( रा. ६.८ )
गोरोचना ( रा. १२.३३ )
श्वेतवचा ( रा. ६.१० )
अगरुभेदः ( रा. १२.४५ )
**मङ्गल्यकघृत**-न., घृत० विषमज्वरनाशनं सिद्धघृतम् ( काखिल. ११.१६७-६८ )
**मज्जन्**–पु., अस्थिविवरगतोऽतिस्निग्धधातुः ( अहृसू. १.१३; चचि. १५.१६; सुसू. १४.१० ) मज्जवहस्रोतांसि मज्ज्ञः स्थानं, मज्जवहस्रोतसामस्थीनि मूलं संधयश्च ( चवि. ५.८ ) अस्थ्नो मज्जा जायते ( चचि. १५.१६ ) मेदसोऽस्थिषु पूरणात् मज्जा जायते इत्यप्युक्तम् ( चचि. १५.३२ ) पञ्चविंशतितमे दिने मज्जा प्रजायते (सुसू. १४.१०) अस्थ्नो मज्जोद्भवे पञ्चदिनान्यावश्यकानि ( सुसू. १४.१० ) अतिस्निग्धो गुरुश्चेति मज्ज्ञः स्वरूपम्। मज्जसारलक्षणम् – अकृशोत्तमबलः स्निग्धगम्भीरस्वरः सौभाग्योपपन्नो महानेत्रश्च ( सुसू. ३५.१६ ) मज्ज्ञमानमेकोऽञ्जलिः ( अहृशा. ३०.८० ) अस्थिपूरणं मज्ज्ञः श्रेष्ठ कर्म ( अहृसू. ११.४ ) मज्जास्नेहं बलं शुक्रपुष्टिमस्थ्नां पूरणं च करोति ( सुसू. १५–५–१ ) केशाः मज्ज्ञः उपधातुः (शार्ङ्गधरः) अक्षित्वग्विशां स्नेहो मज्जमलः ( अहृशा. ३.६४ ) मज्जा वृद्धो नेत्रयोरङ्गानां च गौरवं कुर्यात् ( अहृसू. ११.११ ) मज्जनि क्षीणेऽस्थ्नां सौषिर्यं भ्रमादिश्च ( अहृसू. ११.१९ ) तमोदर्शनमूर्च्छाभ्रमपर्वस्थूलमूलारुर्जन्मनेत्राभिष्यन्दप्रभृतयो मज्जदोषजाः विकाराः ( सुसू. २४.९ ) मांसमज्जाऽस्थिस्नेहसंयुतं स्वाद्वम्लसंयुतं द्रव्यं मज्जक्षीणोऽभिकाङ्क्षति (ड. सुसू. १५.२९-३१)

स्थूलास्थिषु विशेषेण अभ्यन्तराश्रितो मज्जा (सुशा. ४.१३) यस्य फलस्य मज्जाऽस्ति तस्य फलस्य वीर्यमिव मज्ज्ञो वीर्यम् (सुसू. ४६.२०८) अस्थिगतधातुविशेषः, गुणाः—मधुरो बृंहणो वृष्यो बल्यश्च। तस्य शैत्योष्णे यथासत्त्वं बोद्धव्ये (चसू. २७.२९५)

**(मज्ज)-परिपाक**-पु., लक्षण० अस्थिमध्यस्थः मज्जापाकः (सुनि. ९.३४)

**-मेह**-पु., रोग० वातजोऽयम्, मज्जमिश्रं मज्जानं वा मेहति (असंनि. १०.२७; चनि. ४.३९)

**-वाहिस्रोतस्**-न., स्रोतो० उत्पेषात्यभिष्यन्दाभिघातप्रपीडनैर्विरुद्धानां सेवनेन दुष्यति (चवि. ५.१८; असंशा. ६.४३)

**-सार**-पु., मृद्वङ्गाः बलवन्तः स्निग्धवर्णस्वराः स्थूलदीर्घवृत्तसंधयश्च मज्जसाराः ते दीर्घायुषो बलवन्तःश्रुतवित्तविज्ञानाऽपत्यसंमानभाजश्च भवन्ति (चवि. ८.१०८; सुसू. ३५.१६) द्र० 'मजन्'

**मज्जर**-पु., वनस्पति० तद्गुणाः- मधुरो धेनुदुग्धकरः (रापरि. ८.५२)

**मज्जा**-स्त्री., अस्थ्नः शुद्धस्नेहभागः (चशा. ७.१५)

चतुर्षु स्नेहेष्वेकः (चसू. १.८६)

फलमज्जा (चक. ८.७)

**-ज**-पु., वनस्पति० भूमिजः (रा. १२.१८९)

**-सार**-न., वनस्पति० जातीफलम् (रा. १२.६७)

**मञ्जिपत्र**-न., वनस्पति० सुरपर्णकम् (रापरि. १०.५०)

**मञ्जरि**-स्त्री., पुष्पशाखा (असंसू. १६.१८)

**मञ्जरी**-स्त्री., वनस्पति० सुरसा (रा. १०.७८)

**-नम्र**-पु., वनस्पति० वेतसः (ध. ५.११६)

**मञ्जारी**-स्त्री., सार्धपादद्वयम् (र. २२.१२३)

**मञ्जिष्ठ**-न., रक्तवर्णं मूलम् (र. १०.९१)

**(मञ्जिष्ठा)**-स्त्री., वनस्पति० मञ्जिष्ठा मधुरा तिक्ता कषाया स्वरवर्णकृत्। गुरुरुष्णा विषश्लेष्मशोथयोन्यक्षिकर्णरुक्। रक्तातीसारकुष्ठास्त्रवीसर्पव्रणमेहनुत् (भा. प्र.)

हिं.—मञ्जीठ.

**म.—मंजिष्ठ.**

गु.—मजीठ.

बं.—मंजिष्ठा.

ता.—मञ्जिहि.

रक्तवर्णा वनस्पतिः (र. ३.६६)

महाकषायवर्गे वर्ण्यादिगणेषु एकं द्रव्यम् (चसू. ४.१०)

लता, पित्तसंशमनवर्गे प्रोक्ता (सुसू. ३९.८)

मूषिकविषहरा तज्जनितकर्णिकापातनी च (असंउ. ४६; असंसू. १५.३८)

**-मेह**-पु., पित्तनिमित्तः प्रमेहभेदः (चसू.१९.४; (९) (सुचि. ११.९)

लक्षणानि-अस्मिन् मञ्जिष्ठोदकसंकाशं भृशं विस्रं च पित्तस्य परिकोपात् प्रमेहति (चनि. ४.३३)

**मञ्जिष्ठादिकषाय**-पु., मञ्जिष्ठामुस्तकदेवदारुखदिरश्रेष्ठावचाबाकुचीपाठापर्पटाऽऽरग्वधकटुकीमधुयष्टीमूर्वाहरिद्रात्रायमाणाकिटिमारविडङ्गवासाऽमृतागुडूचीवत्सककाकोलीधन्वयासा इति मञ्जिष्ठाऽऽदिकषायगणः अयं कुष्ठघ्नः (र. २०.३१-३२)

**मञ्जिष्ठादिसर्पिस्**-न., घृतं० इदं योनिशूलं शुक्रदोषं च नाशयेत् (र. २५.८२-८४)

**मञ्जिष्ठोदक**-पु., लोहितवर्णसदृशः मञ्जिष्ठक्वाथः (सुनि. ६.११)

**मञ्जुका**-स्त्री., वनस्पति० मञ्जिष्ठा (ध. १.१७)

**मञ्जूलीयक**-पु., प्रतुदपक्षिः (असंसू. ७.७२-७५)

**मञ्जूषमूषा**-स्त्री., एषा मण्डूकमूषायाः अपरां सञ्ज्ञा (र. १०.३१)

**मञ्जूषा**-स्त्री., वनस्पति० मञ्जिष्ठा (रा. ६.१६)

**मणि**-पु., रत्न० यस्य धारणेन भूतादीनामुपशमो भवति (चनि. ७.१७; सुसू. ४५.१७) मरकतचन्द्रकान्तपद्मरागादि (अ. चवि. ६.१८)

सर्पफणोद्भतो मणिः (इन्दुः; असंउ.४२; अहृसू.१३.५)

अवयव० लिङ्गस्याऽग्रभागः (चचि. ३०.१७५; सुउ. ५८.१५)

**-कुट्टिम**-न., मणियुक्ता भूः (अहृसू. ३.२४)

**-चूर्ण**-न., स्फाटिकादिचूर्णम्, व्रणस्य सवर्णप्रयोगे उपयुक्तम् (सुचि. १.१००)

**-च्छिद्रा**-स्त्री., वनस्पति० मेदा (ध. १.१२७)

**-तुण्डिक**-पु., जलचरप्राणिविशेषः (असंसू. ७.८१-८३)

**-पर्पटी**-स्त्री., भैषज्य० नासिकारोगविनाशकरी (र. २४.२६-३०)

**-बन्ध**-पु., शारीर० संधिः (सुचि.३.३३)

मर्मविशेषः (असंशा. ७.६) अस्मिन् विद्धे कुण्ठता (सुशा. ६.२४)

पाणिमूलम् (सुचि. ५.४)

**-बन्धकूर्परान्तर**-न., प्रमाणम्, षोडशाङ्गुलम्, दीर्घायुःपुरुषलक्षणम् (सुसू. ३५.१२)

–बीज–पु., फल० दाडिमः ( रा. ११.९४ )
–भद्र–पु., देवयोनि० यज्ञः ( असंशा. १२.८ )
–भाजन–न., रत्नखचितं पात्रम्, शिशिरवारिपूर्णं गुल्मदेशोपरि धारणार्थम् ( असंचि. १६; सुउ. ४२.१०५ )
–मन्थ–न., भैषज्य० सैन्धवम् (ध. २.२५;असंउ.८)
–मयपात्र–न., (परिव०) रत्नखचितं पात्रम् ( सुसू. ४५.१३ )
–रत्न–न., पद्मरागमहानीलपुष्परागविदूरकमुक्ताविद्रुमवज्रेन्द्रवैडूर्यस्फटिकादि ( असंसू. १२.२१ )
–राग–न., खनिज० हिङ्गुलम् (रा. १३.४८)
–रागकर–न., खनिज० हिङ्गुलम् (ध. ६.४०)
–शिला–स्त्री., खनिज० मनःशिला ( र. १२.९९ )

**मणिक**–पु., गोलकः भाण्डविशेषो वर्तुलाकारः ( चसू. १५.७ )
भुजास्थि ( चशा. ७.६ )
करबाहुसन्धिः ( चइ. ३.५ )

**मण्ड**–पु., आहारद्रव्य० सिक्थैर्विरहितो मण्डः ( सुसू. ४६.३४४ ) मस्तुकः ( सुसू. ४५.९० ) अग्निदीपनो वातानुलोमनः स्वेदजननः स्रोतोमृदुत्वकारी लङ्घितविरिक्ततृषितानां प्राणधारणश्च ( चसू. २७.२५३ ) स चतुर्विधः, तद्यथा–मण्डः पेया विलेपी यवागूश्च ( सुसू. ४६.३४४; अहृसू. ६.२६-२७; असंसू. ७.४०-४१ )
दधिमण्डः ( चसू. २७.२२८ )

**( मण्डा )**–स्त्री., सुरा ( ध. ६.२५५ )

**मण्डक**–पु., व्रीहि० ( रा. १६.९७ )
आहारद्रव्य० गोधूमपिष्टकृतं पक्वान्नम् ( र. २७.९४-९६ )

**मण्डन**–पु., अतिमुक्तः ( ध. ५.१५३ )

**मण्डपारोह**–पु., वनस्पति० मुखालुः (रा. परि. ७.२२)

**मण्डपी**–स्त्री., वनस्पति० निष्पावी ( रा परि. ७.९९ )
क्षुद्रोपोदकी ( रापरि. ७.७६ )

**मण्डल**–पु., वेष्टनाकारव्रणबन्धः बाहुपार्श्वोदरोरुपृष्ठादिके वृत्तेऽङ्गे मण्डलबन्धो विधेयः ( सुसू. १८.१७-१८; असंसू. ३८.४२; अहृसू. २९.६० )
न., वर्तुलं, चक्राकृतिः ( चसू. १९.४ )
रोग० सप्तकुष्ठेष्वेकम् ( चसू.१९.४ (२) कफाधिक्यात् मण्डलाकारं कुष्ठं भवति। तत्र श्वेतं रक्तं स्थिरं स्त्यानं स्निग्धमुत्सन्नमण्डलमन्योन्यसंसक्तं चेति मण्डलस्वरूपं तच्च कृच्छ्रसाध्यम् (चचि. ७.१६; चसू. १९.४ (२)
लेख्यरोगोऽयम् ( सुसू. २५.९-१० )
शारीर० वर्तुलाकारो नेत्रभागः, पक्ष्मवर्त्मश्वेतकृष्णदृष्टीनां पञ्च मण्डलानि नेत्रे बाह्यतो मध्यपर्यन्तं क्रमेण भवन्ति ( सुउ. १.१५ )
संधि० मण्डलाकृतिसंधिः ( सुशा. ५.२७ ) कण्ठनेत्रहृदययकृत्क्लोमनाडीषु मण्डलसंज्ञाः ( असंशा. ५.७७ )
काल० द्वाचत्वारिंशदष्टचत्वारिंशद्वा दिनानि ( र. १४.५२ )

**( मण्डला )**–स्त्री., रोग० क्षुद्ररोगः विपुलोत्सन्ना सरागा पिटिकाऽऽचिता पिटिका ( असंउ. ३६ )

**( मण्डली )**–स्त्री., वनस्पति० स्वादुपत्रफला ( रा. ७.७६ )
वनस्पति० गुडूची (ध. १.३) वटः (रा. ११.११३)
–पत्रिका–स्त्री., वनस्पति० कूरः ( रा. ५.४०६ )
–पर्णिका–स्त्री., वनस्पति० शिंशपा (इन्दु. असंउ. ४४)
–पुच्छक–पु., कीट० प्राणनाशनः ( असंउ. ४३ ) तेन दष्टस्य वेगज्ञानं सर्पवद्भवति तास्ताश्च तीव्रा वेदना भवन्ति। तथा सांनिपातिका रोगा भवन्ति, दंशस्तु वर्णेन रक्तपीताऽसितारुणः क्षाराग्निदग्धवच्च ( सुक. ८.१६-१८ )

**मण्डलाग्र**–न., शस्त्र. अतन्मुखसंज्ञितमग्रेऽर्धचन्द्राकारं शस्त्रम् ( सुचि. १५.१२ ) वर्त्मरोगे छेदनार्थमुपयुज्यते ( असंउ. १२; अहृसू. २६.५; असंसू. ३४. २४ )

**मण्डलिन्**–वि., सर्प० अस्य विषं पित्तप्रकोपणमित्याहुः ( चचि. २३. १२४ ) मण्डलयुक्तः सर्पः ( चचि.२३. १२५ ) मण्डलिनः द्वाविंशतिर्ज्ञेयाः –आदर्शमण्डलः, श्वेतमण्डलो, रक्तमण्डलश्चित्रमण्डलः, पृषतो, रोध्रपुष्पो, मिलिन्दको, गोनसो, वृद्धगोनसः, पनसो, महापनसो, वेणुपत्रकः, शिशुकोमदनः, पलिन्दरः, पिङ्गलः, पुष्प० पाण्डुः, षडङ्गोऽग्निको बभ्रुः, कषायः, कलुषः पारावतो, हस्तभरणश्चित्रक एणीपदः ( सुक. ४. ३४ )

**( मण्डलि )**–दंश–पु; मण्डलिसर्पस्य दंशः (सुक.५.७)
–विष–न., तल्लक्षणम्–त्वगादीनां पीतत्वं शीताभिलाषा परिधूपनं दाहस्तृष्णा मदो मूर्च्छा ज्वरः शोणितागमनमूर्ध्वमधश्च मांसानामवशातनं श्वयथुर्दंशकोथः पीतरूपदर्शनमाशुकोपस्तास्ताश्च पित्तवेदना भवन्ति ( सुक. ४.३७ )

**मण्डितुण्डिका**–स्त्री., पक्षि० सुश्रुते प्लववर्गे डल्हणेन निर्दिष्टः पक्षि० ( सुसू. ४६.१०५ )

**मण्डूक**–पु., जलचरप्राणि० अस्य दंशाद्विषबाधा भवति। मण्डूकैः सविषैर्दष्टलक्षणम् छर्दिर्निद्रा च ( चचि. २३.१५४; ध. ६.४८३ ) भेकः, स चाष्टविधः—कृष्णः, सारः, कुट्टको, हरितो, रक्तो, यववर्णाभो, भृकुटी, कोटिकश्च ( सुक. ८.३१; माविषरोग. ५१; र. ५.२१ )

न., चतुर्विधाभ्रकाणामन्यतमम् ( र. २.५ )

( **मण्डूकी** )–स्त्री., वनस्पति० ब्राह्मी ( र. २२.४४-४८; सुउ. २१.४५; रा. ५.१४८ )

आदित्यभक्ता ( ध. ४.९८ )

मण्डूकपर्णी ( र. २७.९७-१०१ )

भैषज्य० मुक्तानां शुक्तिः नेत्ररोगे लेखनार्थमुपयुक्ता ( सुउ. १५.२५-२८ )

**–पर्ण**–पु., वनस्पति० पृथुशिम्बः ( रा. ९.१४२ )

**(–पर्णी )**–स्त्री., वनस्पति० ब्राह्मी, गुणाः–कषाया पित्ते हिता स्वादुपाकरसा हिमा, लघ्वी च ( सुसू. ४६.२६२ ) क्षतक्षीणे उपयोज्या ( चचि. ११.९२ )

हिं.—ब्रह्ममाण्डूकी.

म.—ब्राह्मी.

गु.—कडब्राह्मि.

बं—थुलकुडि.

त.—वल्लारै.

शाक० ( चसू. २७.९५; र. ११.५२-५७ )

आदित्यभक्ता ( ध. ४.९८ )

मञ्जिष्ठा ( रा. ६.१६ अहसू. ६.७६; असंसू. १५.४९ )

वयःस्थापनगणे एकं द्रव्यम् ( चसू. ४.१८ )

**–पर्ण्यादिगण**–पु., शाकगण० ( चसू. २७.९५-९७ ) द्र० 'वर्ग'

**–पर्ण्यादिवर्ग**–पु., द्रव्यगण० तिक्तरसप्रायाणि शाकानि, मण्डूकपर्णीसप्तलासुनिषण्णकसुवर्चला-पिप्पलीगुडूचीगोजिह्वाकाकमाचीप्रपुन्नाडाऽवल्गुज-सतीनबृहतीकण्टकारिकाफलपटोलवार्ताककारवेल्लक-कटुकिकाकेबुकोरुबूकपर्पटककिराततिक्तकर्कोटकारि-ष्टकोशातकीवेत्रकरीराऽऽटरूषकाऽर्कपुष्पीप्रभृतीनि। रक्तपित्तहराण्याहुर्हृद्यानि सुलघूनि च, कुष्ठमेहज्वर-श्वासकासाऽरुचिहराणि च ( सुसू. ४६.२६२-६३ )

**–मातृ**–स्त्री., वनस्पति० ब्राह्मी ( रा. ५.१४८ )

**–मूषा**–स्त्री., मूषाविशेषः ( र. १०.३१ )

**मण्डूकोत्पत्ति**–स्त्री., मण्डूकानामुत्पत्तिः, तद्यथा–प्रावृट्काले वर्षमाणे महोरगः शुक्रं सृजेत्, ततः शरत्प्रतप्तायां भूमौ जलस्य मण्डो भवति, तस्मिन् मण्डोदके जाता मण्डूकाः, तेन संज्ञिता मण्डूका इति ( ड. सुक. ८.३१ )

**मण्डूर**–न., लोहकिट्टम् ( चचि. १६.७२ ) गुणाः– मधुर-कटूष्णं, कृमिवातनुत्, पक्तिशूलमरुच्छूलमेहगुल्मार्ति शोफनुत् ( ध. ६.३५ ) तस्य निर्माणविधिः–प्रथमतो गोमूत्रेण त्रिफला क्वथनीया। ततस्तत्क्वाथे सम्यक्परितप्तं लोहकिट्टं शनैस्तावत्सेचयेत्, यावत् स्वयं जीर्णतामाप्नोति। पश्चात्तच्चूर्णं पेषणयोग्यं जायते। एतत् त्रिफलाक्वाथसिञ्चितं लोहकिट्टं मण्डूर-नाम्ना समाख्यातम् ( र. ५.१५९ ) इदं पाण्डु-रोगशमनम् ( सुउ. ४४.२३ )

**–वटक**–पु., योग० पाण्डुरोगे उपयुक्तः, गुडनागर-मण्डूरतिलांशान्मानतः समान् गृहीत्वा पिप्पलीं द्विगुणां गृहीत्वा च गुटिकाः च कृत्वा पाण्डुरोगिणे दद्यात्। त्रिफलात्रिकटुमुस्तविडङ्गचव्यकचित्रकदार्वी-त्वङ्माक्षिकग्रन्थिकदेवदारूणां पृथक्पृथग्भागानां द्विपलिकानां चूर्णं कुर्यात्। तदनन्तरं मण्डूरं गृहीत्वा शुद्धमञ्जनसन्निभं चूर्णं कृत्वाऽष्टगुणे गोमूत्रे पक्त्वा तस्मिन् तच्चूर्णं प्रक्षिपेत्। अनन्तरमुदुम्बर-समान् वटकान् भोजने उपयुञ्जीत। एते वटकाः पाण्डुरोगिणां प्राणदास्तथा कुष्ठाऽजीर्णशोथो-रुस्तम्भाऽर्शःकामलामेहप्लीहादिरोगेषु चोपयुज्यन्ते ( चचि. १६.७२-७७ )

**मतङ्ग**–पु., ऋषि० ( काकरेवतीक. ८० ) अनेन कनी-यसा कश्यपपुत्रेण मातङ्गी नाम विद्या पितामहादेवात् प्राप्ता।

**मति**–स्त्री., बुद्धिः ( सूसू. २.३ )

**–दा**–स्त्री., वनस्पति० ज्योतिष्मती ( रा. ३.३९५ ) सिगृडी ( रापरि. ४.३१ )

**–मत्**–वि., ऊहापोहवित् ( ड. सुउ. ६३.५ )

**मत्कुण**–पु., कीट० अस्य रुधिरं वज्रद्रावणाख्यमूषा-लेपनार्थमुपयुज्यते ( र. १०.२१-२२; असंउ. १ )

**मत्त**–वि., मदयुक्तः ( चसि. २१.४ )

पु., वनस्पति० धत्तूरः ( र. २६.८-१०; असंसू. ३८.१३; अहसू. २९.१५ )

( **मत्ता** )–स्त्री., सुरा ( रा. १४.३०१ )

**मत्ताक्ष**–पु., पक्षि० कोकिलः मत्तस्येव रक्ते अक्षिणी यस्य सः च ( चसि. १२.१९ (१) )

**मत्सरिन्**-वि., परगुणासहनशीलः ( सुशा. ४.६४ )
**मत्स्य** -पु., जलचरप्राणि० मीनः, अस्य दंशेन विषबाधा भवति (चचि. २३.१५५) गुणाः-स्निग्धो वृष्यो बहुदोषो गुरूष्णो मधुरो बल्यो बृंहणः पवननाशनश्च ( चसू. २७.८२; सुसू. ४६.११८-१२५)
हिं.—मछली.
म.—मासा.
बं.—माछ.
ता.—मीन्.
**( मत्स्या )**-स्त्री., वनस्पति० पोतकी ( धपरि. ४.५ )
**-गन्धा**-स्त्री., वनस्पति० जलपिप्पली ( ध. ४.६४ ) महाराष्ट्री ( रापरि. ४.१२ )
**-ताल**-पु., मत्स्यशकलः ( सुसू. ७.१२; अहसू. २५.१० )
**-निस्तलनस्नेह**-पु., मत्स्या भृज्यन्ते येन स्नेहेन सः, तत्र साधिताः पिप्पलीस्त्यजेत् ( अहसू. ७.३७ )
**-निस्तालन**-न., पात्र० मत्स्या निस्ताल्यन्ते पच्यन्ते यस्मिन् तत् पात्रमथवा निस्तालनं नाम मत्स्यस्य वसा ( चसू. २६.८४ )
**-पचन**-न., पात्र० मत्स्याः पच्यन्ते यस्मिन् भाण्डे तत् ( अहसू. ७.३६; असंसू. ९.१० )
**-परिपचन**-न., मत्स्याः पच्यन्ते यस्मिन् भाण्डे तत् मत्स्यपरिपचनं तत्र, सिद्धां काकमाचीं नाद्यात्, संस्कारविरुद्धत्वात् ( सुसू. २०.१४ )
**-पित्ता**-स्त्री., वनस्पति० कटुका ( ध. १.३७ )
**-मेदिनी**-स्त्री., वनस्पति० कटुका ( रा. ६.५५ )
**-मांस**-न., मत्स्यानां मांसम् मांसमेतद्गर्भिण्या निषिद्धम्, भक्षणाच्च सा चिरनिमेषं स्तब्धाक्षं वा सुतं सूते ( असंशा. २.६१ (५८) )
**-मांसनित्या**-स्त्री., मत्स्यमांसस्य नित्यसेवनं कुर्वाणा सा स्तब्धाक्षमपत्यं जनयति ( चशा. ८.२१ )
**-शकला**-स्त्री., वनस्पति० कटुका ( ध. १.३७ )
**-शकलोपम**-वि., मत्स्यत्वक्सदृशम् (चचि. ७.२१)
**-सत्त्व**-पु., अनवस्थित्यादिभिर्मत्स्यसत्वोपलक्षितैरुपेतः पुरुषः ( सुशा. ४.९६ )
**-सात्म्य**-वि., अभ्यासान्मत्स्यसात्म्यतां गतः ( चचि. ३०.३१७ )
**मत्स्यक**-स्त्री., ह्रस्वमत्स्यः ( चशा. ८.१९ )
**मत्स्यण्डिका**-स्त्री., गुडस्य संस्कारः, द्रवखण्डः गुणाः-शीताः स्निग्धा गुरुतरा मधुरतरा वृष्याः रक्तपित्तप्रशमनास्तृष्णाप्रशमनाश्च ( सुसू. ४५.१६२; चसू. २७.२४० ) शर्कराभेदः, मन्दं स्यन्दमानः पक्व इक्षुरसः ( भा. प्र. ) भेदिनी, बल्या, लघ्वी च ( र. १७.४८-५०; ध. २.१०४; असंचि. ४; अहसू. ५.४९ )
**मत्स्याक्षक**-पु., वनस्पति० ब्राह्मी (सुशा. १०.६८-७०)
**(मत्स्याक्षिका)**-स्त्री., मीननेत्रसमाकारा तिक्तसूक्ष्मपत्रा भूमौ किञ्चित्प्रसरणशीलाऽतिक्षुद्रक्षुपा पल्वल-संनिहितदेश उत्पद्यते ( र. २.१९ ) वनस्पति० गण्डदूर्वा ( ध. ४.१४५ )
**मत्स्याक्षी**-स्त्री., वनस्पति० ब्राह्मी ( रापरि. ५.४१ ) मीनाक्षी ( र. ११.५२-५७ ) गडण्दूर्वा -(रा. ८.३४) गुणाः-तिक्ता कषाया स्वाद्वी कटुविपाकिनी लघुः शीता ग्राहिणी कुष्ठपित्तकफरक्त-हारिणी च ( र. १९.१०३-१०६ ) काकमाची ( रा. ४.३६ )
**मत्स्याख्यक**-पु., वनस्पति० ऐन्द्रीभेदः ( चचि. १.(३).२४ )
**मत्स्याण्ड**-न., मत्स्यस्याण्डम् ( सुचि. १८.२५ )
**मत्स्याण्डजाल**-न., मत्स्याण्डजालनिभमिति उपमार्थे गृहीतम् (असंउ. ३५) शारीरविकृतघटक० मत्स्याण्डजालनिभं मेदः
**मत्स्यादनी**-स्त्री., वनस्पति० जलपिप्पली ( ध. ४.६४ ) महाराष्ट्री ( रा. परि. ४.१२ )
**मत्स्यान्त्रशब्द**-पु., मत्स्यान्त्रमिति नाम कृत्वा अर्थात् तच्छन्दापदेशेन गण्डूपदानि देयानि ( चचि. ८.१५१ )
**मत्स्याशिविहङ्ग**-पु., अस्य मांसं पित्तकरम् ( सुसू. ४६.१३५ )
**मत्स्येन्द्रमातृ**-स्त्री., वनस्पति० अग्निदमनी (रा. ४.४१)
**मथन**-न., मन्थनवद् वेदना ( असंनि. २०.९ )
**मथित**-न., आहारद्रव्य० तक्रम् ( ध. ६.२१२ ) दधि ( ध. ६.१८९ ) निर्जलतक्रम् ( र. १७.१२१ ) मन्थनवद्वेदना ( चनि. १.२१ )
**मथितान्न**-न., तक्रौदनः ( र. १६.११८ )
वि., बलीयसा केनचिद् विलोडितः ( सुचि. २.७७ )
**मथ्य**-न., मन्थनकाष्ठयन्त्रकम् ( चक्र. चसू. ११.२४ )
**मद**-पु., मत्तता ( चसू. १७.८ ) पूगफलेनेव मत्तता ( सुउ. ४५.९ ) विषमद्यशोणितोत्थो विकारः ( सुसू. ११.९ ) उन्मत्तावस्था विषरुधिरमद्यजास्त्रयो मदाः ( सुसू. ४५.१०७ )

शोणितजव्याधिः, तत्संप्राप्तिः–यदा कुपिता मला रक्तरससंज्ञावहानि च, स्रोतांसि प्रतिहत्याऽवतिष्ठन्ते तदा मलिनाऽऽहारस्य रजोमोहाऽऽवृतस्य नरस्य मदाऽऽख्यो व्याधिर्जायते ( चसू. २४.२५-२७ ) संख्या–पृथक्दोषैः सर्वैश्च रक्तमद्यविषैरपि मदः सप्तधा जायते ( अहृनि. ६.२६ )

वातजे पुरुषः– सक्तानल्पद्रुताभाषश्चलः स्खलितचेष्टितः रूक्षश्यावारुणतनुर्वातोद्भवे मदे भवति। पित्तजे पुरुषः पित्तेन क्रोधनः रक्तपीताभः कलहप्रियो भवति। कफात् स्वल्पसंबद्धवाक् पाण्डुः ध्यानपरोऽलसो भवति। संनिपातजः सर्वदोषलक्षणो भवति। रक्तात् स्तब्धाङ्गदृष्टिता पित्तलिङ्गानि भवन्ति मद्येन विकृतेहास्वराङ्गता भवति। विषेण कम्पोऽतिनिद्रा च भवति। विषजो मदः सर्वमदेभ्योऽधिको भवति ( अहृनि. ६.२६-२९ ) मदेषु वातपित्तघ्नी चिकित्सा कार्या ( अहृचि. ७.१०० )

वनस्पति॰ महानिम्बः ( रा. ९.४६ )

हस्तिमदः ( रापरि. ६.२० )

कस्तूरिका ( रा. १२.४७ )

**–करी**–स्त्री., वनस्पति॰ सुरा ( ध. ६.२५५ )

**–कारिणी**–स्त्री., वनस्पति॰ यवानी ( ध. २.९४ )

**–गन्धा**–स्त्री., वनस्पति॰ अतसी ( रा. १६.१८७ ) सुरा ( रा.१४.३०२ )

**–घ्नी**–स्त्री., वनस्पति॰ जम्बूः ( रापरि. ५.२४ )

**–द्रु**–पु., वनस्पति॰ माडः ( ध. ५.७० )

**–पातन**–न., कामशान्तिः ( र. २७.१३ )

**–मत्त**–पु., वनस्पति॰ अङ्गारवल्ली ( रा. ९.१८३ )

**–मादिनी**–स्त्री., वनस्पति॰ गणिकारी ( रापरि. १०.३१ )

**–शाक**–पु., वनस्पति॰ उपोदकी ( रापरि. ७.७४ )

**–शौण्ड**–न., वनस्पति॰ जातीफलम् ( ध. ३.३५ )

**–हस्तिनिका**–स्त्री., वनस्पति॰ उदकीर्यः ( ध. ५.१०९ )

**–हस्तिनी**–स्त्री., वनस्पति॰ अङ्गारवल्ली ( रा. ९.१८१ )

**मदन**–न., वनस्पती॰ वमने उपयुक्तं भेषजम् ( चसू. २.७-८ ) गुणाः–कटुः, तिक्तमुष्णं कफवातघ्नं व्रणज्वरप्रतिश्यायगुल्मविद्रधिशोफहरं च ( ध.१.१६८ ) अस्य फलं गलगण्डरोगे सुराम्लपिष्टैः असकृल्लेपार्थमुपयुज्यते ( सुचि. १८.४५ )

हिं.—मेन्दफल.

**म.—गेळा, गेळफळ.**

गु.—मींढोल.

बं.—मयनाफल.

ता.—मरुक्क.

वनस्पति॰ आस्थापनोपगगणे एकं द्रव्यम्, अस्य फलमुपयुज्यते ( चसू. ४.१३; असंसू. १४.३ )

पु., पिण्डीतकः (सुसू. ३८.२०-२१) शुक्लकृष्णपीतपुष्पभेदात्स त्रिविधः तत्र फलं ग्राह्यम् ( सुसू. ३९.३; अहृसू. १५.१-३ )

सिक्थम् ( असंसू. ७.२१९; र. ३.१०६-१०७ )

वनस्पति॰ बकुल ( रा १०.२६३ )

अङ्कोट ( रा. ९.३८३ )

न., वनस्पति॰ दमनकः धत्तूरः ( र. २७.१२६-२७ )

**( मदनी )**–स्त्री., वनस्पति॰ कस्तूरिका ( ध. ३.२८ ) सुरा ( रा. १४.३०२ )

अतिमुक्तः ( रा. १०.२६० )

**–कल्प**–पु., अध्यायसंज्ञा॰ मदनकल्पविषयकोऽध्यायः ( चक. १.१ )

**–कामदेव**–पु., पारदगन्धकौ समभागिकौ त्रिकटुक्वाथेन संमर्द्य गोलं कृत्वा भूकूष्माण्डान्तरवस्थितं तेनैव पिधाय द्व्यङ्गुलमितं माषपिष्ट्या लेपयेत् घृते च पाचयेत्। ततस्तस्मादाहृत्य पलसंमिते गोलके तुलस्याश्चूर्णं पलद्वयं, विजया–शतावरी–पिप्पलीकपिकच्छूफलतिलानां चूर्णं प्रत्येकं पलं, यवचूर्णं पञ्चपलं कदलीफलानि पञ्चपलानि, मधुयष्टी पलद्वयं, वंशलोचनं च द्विपलिकं संमिश्र्य महाबलानागबलाद्राक्षापिप्पलीक्ष्वामलकीद्रावैः सप्तसप्तधा भावयेद्दन्तपात्रे च निवेशयेत्, अयं मदनकामदेवरस आर्तवदोषं नाशयेत्, वीर्यं वर्धयेत्, ध्वजभङ्गभयमपनयेदिति उत्तमं वाजीकरणं ज्ञेयम् ( र. २७.५२-५८ )

**–कोद्रव**–पु., धान्य॰ मदोत्पादकाः कोद्रवाः ( सुचि. १७.३७ )

**–तण्डुल**–पु., मदनफलशस्यम् (चक्र. चचि. १४.५४)

**–पुष्प**–न., मदनफलम् ( सुसू. ४३.३ )

**–फल**–न., फल॰ मदनवृक्षस्य फलम् ( चसू. २५.४०; र. १२.११९-२०; सुसू. ४३.३ )

**–फलमज्जन्**–पु., मदनफलमध्यस्य स्निग्धो भागः ( ड. सुसू.४३.३ )

–बीज–न., मदनस्य बीजभक्षणहेतुको मोहः स्यात्, तत्र (१) शीतपयः पिबेत् (२) शिशिरं गुडोदकं पिबेत् ( काक. भोजनकल्प )

–मञ्जरी–स्त्री., वनस्पति० जिङ्गिनी ( ध. परि. ३.२२ )

–मोदक–पु., भैषज्य० अयं वातश्लेष्मकासशूलवली-पलिताऽऽमवातसंग्रहग्रहणीनाशनः अत्यन्तं वृष्यो-ऽयम् ( र. २७.१०६-११२ )

–वलय–न., कामवर्धनं भूषणं रत्यर्थमुपयोगि कटकं, यद्रतिसमये हस्त उपस्थे वा धार्यते कामवर्धनार्थम् ( र. ११.११०-११ )

–संजीवन–पु., पारदादियोगः सर्वव्याधिहरः ( र. २७.९८-१०५ )

–सुन्दररस–पु., पारदयोग० अयं वृष्यत्वमापादयति ( र. २७.३१ )

**मदनक**–पु., मदनफलम् ( असंउ. ४० )
पु., वनस्पति० धत्तूरः ( ध. ४.७ )
न., सिक्थकम् ( ध. ३.११९ )

**मदनाग्रज**–पु., वनस्पति० कोद्रवः ( ध. ६.१३७ )

**मदनायुध**–पु., वनस्पति० कामवृद्धिः ( रापरि. ४.५१ )

**मदनाह्व**–पु., वनस्पति० मदनः ( रा. ८.२३२ )

**मदनीयहेतु**–पु., धातुकी (अ.,) धातकी ( हे. ) ( अहसू. १५.३७ )

**मदनीया**–स्त्री., वनस्पति० मल्लिका ( ध. ५.१३४ )

**मदनेच्छाफल**–पु., चक्रलताम्रः ( रा. ११.१२ )

**मदनोद्भवा**–स्त्री., मधुशर्करा ( ध. २.१०६ )

**मदनोन्मदरस**–पु., पारदयोग० अयं मदनोज्वलनः नाम कामोद्दीपनः ( र. २७.३४; ३४-३६ )

**मदयन**–( परिव० ) न., मनोभ्रमणम् ( सुउ. ६२.३ )

**मदयन्तिका**–स्त्री., वनस्पति० मल्लिका ( सुक. १.६५ ) मेहंदीति लोके, यस्याः पिष्टैः पत्रैर्नखानां रागं स्त्रिय उत्पादयन्ति ( सुचि. २५.४३ ) गुणाः— वान्ति-कृमिकुष्ठकफनाशिनी कटूष्णा नेत्रमुखरोगान्विष-व्रणाँश्चापहरति ( र. २४.९५; असंसू. ८.४०; -चचि. ८.१२९ )

हिं.—मेहंदी.
**म.—मेंदी.**
गु.—मेंदी.
बं.—मेंदी.
ता.—ऐवनं.

**मदात्यय**–पु., रोग०मद्यपानजो मदः, मद्यं लघूष्णतीक्ष्ण-सूक्ष्माम्लव्यवाय्याशुगं रूक्षं विकाशि विशदं दशगुणं स्मृतम् ( चचि. २४.३० ) मद्यं हृदयमाविश्य दशभिः स्वगुणैरोजसो दश गुणान् संक्षोभ्य चेतो-विक्रियां नयति ( चचि. २४.२९ ) हृदि मद्यगुणाविष्टे हर्षस्तर्षो रतिः सुखमिति चित्रा राजसतामसा विकारा यथासत्त्वं भवन्ति मद्यस्याऽतिसेवनान्मोहनिद्रावसाना जायन्ते स मद्यविभ्रमो "मद" इत्यभिधीयते, मद्यस्य प्रथममदः प्रहर्षणः पानान्नगुणदर्शकः प्रीतिकरः कथावाद्यगीतप्रहासानां प्रवर्तकः सुखनिद्राप्रबोधश्च स न बुद्धिस्मृतिहरो न चाऽक्षमताकरः एष सुखदो भवति ( चचि. २४.४२-४३ ) मध्यमे मदे तु स्मृतिर्मोहो वाग-व्यक्ता च मुहुर्मुहुः सज्जति । तथैव संबद्धा-ऽसंबद्धवचनत्वं घूर्णनं स्थानपानान्नसांकथ्ययोजना सविपर्यया; एतान्यपि मध्यममदलक्षणानि ( चचि. २४.४४-४५ ) तृतीयं मदं प्राप्तः पुरुषः मदमोहाऽऽवृतमना भग्नवृक्ष इव निष्क्रियो भवति। जीवन्नपि मृतैः समः सः । स रमणीयान् विषयान् सुहृज्जनं यदर्थं मद्यं पीयते तां रतिं च न विन्दति। सुखं दुःखं कार्याऽकार्यं लोके यच्च हिताऽहितं तदपि स न जानाति। स सर्वभूतानां दूष्यो निन्द्योऽग्राह्यश्च । स व्यसनित्वादुत्तरकाले व्याधि-मश्नुते ( चचि. २४.४६-५१ ) अतिकर्शितो रूक्षा ऽल्पप्रमिताशी स्त्रीशोकभयभाराध्वकर्मभिः रूक्षं परिणतं मद्यं निशि निद्रां विहत्य च पिबति तस्य तच्छीघ्रं वातप्रायं मदात्ययं करोति ( चचि. २४.८९-९० ) बहुप्रलापस्य हिक्काश्वास-शिरःकम्पपार्श्वशूलप्रजागरैर्वातप्रायं मदात्ययं विद्यात् (चचि. २४.९१) अत्यातपप्रियोऽम्लोष्णतीक्ष्णभोजी क्रोधनो यस्तीक्ष्णोष्णमम्लं मद्यं चातिमात्रं निषेवते तस्य वातोल्बणस्य पित्ताद्विशेषेण मदात्यय उप-जायते स आशु प्रशमं याति हन्ति वा । हरित-वर्णस्य तृष्णादाहज्वरस्वेदमूर्च्छातीसारविभ्रमैः पित्तप्रायं मदात्ययं विद्यात् ( चचि. २४.९२.९४ ) मधुरस्निग्धगुर्वाशी अव्यायामदिवास्वप्नशय्या-सनसुखे रतश्च यस्तरुणं मधुरप्रायं गौडपैष्टिकं वा मद्यं पिबति, स शीघ्रं कफप्रायं मदात्ययमधिगच्छति शीतपरीतस्य छर्द्यरोचकहृल्लासतन्द्रास्तैमित्यगौरवैः कफप्रायं मदात्ययं विद्यात् ( चचि. २४-९५-९७ ) सान्निपातमदलक्षणानि–बलवच्छरीरदुःखं, संमोहो, हृदयव्यथाऽरुचिः, प्रतता तृष्णा, ज्वरः शीतोष्णे

शिरःपार्श्वास्थिसंधीनां विद्युत्तुल्या वेदनाऽतिबला जृम्भा स्फुरणं वेपनं श्रम उरोविबन्धः कासो हिक्का श्वासः प्रजागरः शरीरकम्पः कर्णाक्षिमुखरोगस्त्रिकग्रहश्छर्द्यतीसारहृल्लासा भ्रमः प्रलापोऽसतां रूपाणां दर्शनं तृणभस्मलतापर्ण पांशुभिश्चाऽवपूरणं विहङ्गैः प्रधर्षणं व्याकुलानामशस्तानां स्वप्नानां च दर्शनानि। एतानि सर्वाणि मदात्ययस्य रूपाणि लक्षयेत् ( चचि. २४.१०१-१०६ ) चिकित्सा–मद्यमेवाल्पप्रमाणेन दीयते ( चचि. २४.११३ ) यद्यच्छीतस्पर्शं शीतवीर्यं तत्तत् पित्तशान्त्यर्थं दद्यात् ( चचि. २४.१५६ ) वातशान्त्यर्थं पैष्टिकमद्यलवणं दद्यात् उल्लेखनोपवासाभ्यां मदात्ययं जयेत् ( चचि. २४.१५७ )

**मदाढ्य**–पु., फल० आम्रः ( रा. ११.२ )

**मदातुर**–पु., मदरोगी ( चसू. १३.५५ )

**मदापह**–वि., मदो विषमद्यशोणितोत्थो विकारः तन्नाशकः ( सुसू. ४६.२५९ )
वृक्ष० तालः ( रा. रा. ९.९२ )
वनस्पति० कदम्बः ( रा. ९.१७० )

**मदार्त**–वि., मदयुक्तः ( अहसू. २.७ )

**मदोदय**–पु., मदोत्पत्तिः ( अहसू. ७.१६ )

**मदोद्भव**–पु., फल० आम्रः ( ध. ५.१ )

**मदोत्कटा**–स्त्री., वनस्पति० अतसी ( रा. १६.१८७ )
सुरा ( रा. १४. ३०४ )

**मदिरा**–स्त्री., आसुत० सुरामण्डः, हिक्काश्वासप्रतिश्यायकासवर्चोग्रहारुचिवम्यानाहविबन्धेषु हिता, वातघ्नी च ( चसू. २७.१८०; सुचि. २६.८-९ )
पिष्टसुरा ( सुउ. १७.१९-२१ )
सुरा ( ध. ६.२५५ )

**–सख**–पु., फल० आम्रः ( ध. ५.१ )

**मदिराग्र**–न., मदिराया उपर्यच्छो भागः ( सुउ. १७.४१ )

**मद्गु**–पु., जलचरपक्षि० जलकाकः ( चक. १.८; सुसू. ४६.१०५-१०६; अहसू. ६.५२ )
मालुयासर्पः ( सुसू. ४६.७६ )

**–मूषिक**–पु., मालुयासर्पः ( सुसू. ४६.७६ )
पर्णमृगः, काकुलीमृगः ( सुसू. ४६.७६ )

**मद्गुर**–पु, पक्षि. मद्गुः ( र. २८.७७ )

**मद्गुलि**–पु. कीट० प्राणनाशनः ( असंउ.४३ )

**मद्य**–न., आसुत० द्राक्षादिसन्धानं मद्यमुच्यते। पैष्टिकं मार्द्वीकं गौडं चेति त्रिविधम् ( सुसू. ४५.१७०-७१ )
मद्यस्वरूपम्–लघूष्णतीक्ष्णसूक्ष्माम्लव्यवाय्याशुगमेव च रूक्षं विकाशि विशदमिति मद्यस्य दशगुणाः ( चचि. २४.३०; सुउ. ४७.३ ) मद्यगुणाः–हृद्यं दीपनं रोचनं स्वरवर्णप्रसादनं प्रीणनं बृंहणं बल्यं भयशोकश्रमापहं स्वापनं नष्टनिद्राणां मूकानां वाग्विबोधनमतिनिद्राणां बोधनं विबद्धानां विबन्धनुत् वधबन्धपरिक्लेशदुःखानामबोधनं मद्योत्थानां रोगाणां प्रबाधकं च ( चचि. २४.६४ ) बलिनः कृताहारा महाशनाः स्निग्धाः सत्त्ववयोयुक्ता मद्यनित्या मेदःकफाधिका मन्दवातपित्ता दृढाग्नयो मद्यपकुलोत्पन्ना इत्येतेषां मद्यमबाधकं भवति ( असंनि. ६.१३ ) सर्वं मद्यं पित्तकरमम्लं रोचनं दीपनं भेदनं कफवातघ्नं हृद्यं बस्तिविशोधनं पाके लघूष्णं तीक्ष्णमिन्द्रियबोधनं विकासि सृष्टविण्मूत्रं च ( सुसू. ४५.१७०-७१ ) नवं मद्यं गुरु दोषकोपनं च, जीर्णं मद्यं स्रोतसां शोधनं दीपनं लघु रोचनं हर्षणं प्रीणनं भयशोकश्रमापहं प्रागल्भ्यवीर्यप्रतिभातुष्टिपुष्टिबलप्रदं च ( चसू. २७.१९३-९५ ) चिरस्थितं मद्यं जातरसं दीपनं कफवातजित् रुच्यं प्रसन्नं सुरभिमदावहं च ( सुसू. ४५.२०३-२०४ ) सूतासु दुष्प्रजातासु योनिभ्रंशेऽतिमैथुने, बालानां दन्तजन्मनि, पिपासया पीडितेषु, तालुकण्ठौष्ठशोषे रोदितेऽतिप्रजागरे वातश्लेष्माऽऽत्मके व्याधौ मद्यं हितम् ( काचि पानात्यय. ) सौमनस्यजननानां श्रेष्ठम् ( चसू. २५.४० ) मांसोचितानां मद्यमनुपानार्थं शस्तम् ( चसू. २७.३२४ )
मद्यनिषेधः–सर्पविषे मद्यमहितकरम् ( सुक. ५.१८ ) व्रणिनामहितम् ( सुसू. १९.१९ )
मद्यस्य विकारकर्तृत्वं क्रुद्धभीतपिपासितशोकाऽभितप्तबुभुक्षितव्यायामभाराऽध्वपरिक्षतवेगरोधाऽभिहताऽत्यम्लभक्ष्याऽवततोदराऽजीर्णभुक्ताऽबलोष्णाभितप्तेत्यादिभिः सेव्यमानं मद्यं विविधान् विकारान् करोति ( सुउ. ४७.१५-१६; अहसू. ५.६२-६४; र. १८.१२६; सुउ. ४७.३ )

**–कर्मन्**–पु., मद्यमौष्ण्याच्छीतोपचारं हन्ति, तैक्ष्ण्यान्मनोगतिं हन्ति, सौक्ष्म्यादवयवान् विशति, वैशद्यात्कफशुक्रनुत्, रौक्ष्यात् मारुतं कोपयेत्, आशुत्वादाशु कर्मकृत्, व्यवायित्वाद्विसर्पतीति कर्म ( सुउ. ४७.४-५ )

**–गन्ध**–पु., वनस्पति० बकुलः ( ध. ५.१५४ )

**–दोष**–पु., मोहो भयं शोकः क्रोधो मृत्युरुन्मादो

मदो मूर्च्छायोऽपस्मारोऽपतानकश्चेत्याद्या मद्य दोषाः ( असंनि. ६.१० )

-द्रुम-पु., वनस्पति० माडः ( ध. ५.७० )

-नित्य-वि., मद्यसेवनं नित्यं कर्म यस्य सः स्नेहयोग्यः ( चसू. १३.५२ ) मद्यसात्म्यः ( चसू. १४.१६ )

-प-पु., मद्यपानशीलः, मद्यशीलः ( सुसू. १९.१८ )

-पान-न., अभ्यङ्गोत्सादनस्नानवासोधूपाऽनुलेपनैः स्निग्धोष्णैश्चान्नैर्भावितो वातिको मद्यं पिबेत् ( चचि. २४.२१ ) शीतोपचारैर्विविधैर्मधुरस्निग्ध-शीतलैश्चान्नैर्भावितः पैत्तिकः पिबन्मद्यं न सीदति ( चचि. २४.२२ ) उपचारैरशिशिरैर्धन्वजैर्मांसै-र्मारिचकैः सह यवगोधूमभुक् श्लैष्मिकः मद्यं पिबेत् ( चचि. २४.२३ ) श्लेष्मिकानल्पपित्तांश्च स्निग्धान् मात्रोपसेवितांश्च मद्यमबाधाकरं, विपरीतं बाधा-करम् ( सुउ. ४७.१३ )

-पानजदाह-पु., तत्र मद्यपानजदाहे मनोऽनुकूलानां पीनाङ्गीनामार्द्रवसनानामबलानां श्लेषो दाहशमन-करः ( सुउ. ४७.६३-६४ )

-पानजविकार-पु., पानात्ययः परमदः पानाजीर्णं पानविभ्रम इति मद्यपानजाः चत्वारो विकाराः ( सुउ. ४७.१७ )

-पुष्पा-स्त्री., वनस्पति० धातकी ( रा. ६.१५३ )

-प्रसंग-पु., मदात्ययः ( चचि. २४.५४ )

-रुजा-स्त्री., रोग० मदात्ययः ( सुसू. ४६.४२६ ) द्र० 'मद्यप्रसंग'

-रोग-पु., मद्यप्रवृत्तो रोगस्त्रिविधः, तद्यथा-पानात्ययः, पानविभ्रमः, पानाऽपक्रमश्च ( कासंचिपानात्यय चि. )

-वासिनी-स्त्री., वनस्पति० धातकी ( ध. ३.९० )

-विकारिन्-वि., मद्यजव्याधिविशेषवानस्वेद्योऽयम् ( चसू. १४.१७ )

-सात्म्य-वि., यस्य मद्यं सुखावहं भवति, सः ( चचि. ३.१९४-९५ )

-सेवन-न., सहसाविच्छिन्नमद्यस्यातिमद्यसेवया पानात्ययरोगा जायन्ते (सुउ.४७.४९) तस्य विधिः-स्निग्धैरन्नैर्मांसैर्भक्ष्यैश्च सह सेवितं मद्यमायुः-प्रकर्षकरं बलकरं पुष्टिकरं च भवति ( सुउ. ४७.७ )

-हत-वि., मदात्ययार्तः, यथा कस्यचिन्नरेन्द्रोपहतस्य तत एव प्रसादो भवति, नान्यत एवं मद्यहतस्य नरस्य मद्यत एव प्रसादो भवति, नान्यत इति कृत्वा मदात्यये मद्यमेव विधिवद्देयम् ( सुउ. ४७.४८ )

मद्याक्षेप-पु., मद्यजो विकारः ( चसू. २५.४०; असंसू. १३.३ )

मद्यानुरस-पु., मद्यस्य चत्वारोऽनुरसाः ते मधुरः कषायस्तिक्तः कटुकश्चेति ( चचि. २४.११५ )

मद्यामोद-पु., वनस्पति० बकुलः ( रा. १०.२६३ )

मद्यार्ति-स्त्री., मद्यविदाहः ( सुसू. ४६.४२५ )

मद्योत्थज्वर-पु., रोग० मद्यपानजो ज्वरः (चचि. ३.१४४ )

मद्योद्भव-पु., मदात्ययः ( र. १२.१-८ )

मधु-न., भैषज्य० मधु तु मधुरं कषायानुरसं रूक्षं शीतमग्निदीपनं वर्ण्यं स्वर्यं लघु सुकुमारं लेखनं हृद्यं वाजीकरणं संधानं शोधनं रोपणं ( संग्राहि ) चक्षुष्यं प्रसादनं सूक्ष्ममार्गानुसारिपित्तश्लेष्म-मेदोमेहहिक्काश्वासकासातिसारच्छर्दितृष्णाक्रिमिविष-प्रशमनं च, तत्तु लघुत्वात्कफघ्नं पैच्छिल्या-न्माधुर्यात्कषायभावाच्च वातपित्तघ्नम् ( सुसू. ४५.१३२ ) मधुजातयः-पौत्तिकं, भ्रामरं क्षौद्रं, माक्षिकं, छात्रमार्घ्यमौद्दालकदालमित्यष्टौ ( सुसू. ४५.१३३; चसू. २७.२४३ ) नवं मधु छर्दिमेहप्रशमनं, मधु रूक्षं दलोद्भवं नाति-श्लेष्महरं बृंहणीयं च (सुसू. ४५.१४०) पुराणं मधु मेदःस्थौल्यापहं ग्राह्यतिलेखनं च, पक्वं मधु दोषत्रयहरमाममम्लं त्रिदोषकृत् (सुसू. ४५.१४१) मधुनो योगवाहित्वम्-नानाद्रव्यात्मकत्वा-द्विविधैर्योगैर्बहूनामयान् निहन्यात् (सुसू.४५.१४२; चसू. २७.२४९ )

मधुनः विरुद्धाऽविरुद्धत्वम्-नानाद्रव्यरसगुणवीर्य-विपाकविरुद्धानां पुष्परसानां मक्षिकासंभवत्वाच्चा-ऽनुष्णोपचारम्। उष्णैर्विरुध्यते सर्वं विषान्वयतया मधु। उष्णार्तमुष्णैरुष्णे वा तन्निहन्ति यथा विषम्। तत्सौकुमार्याच्च तथैव शैत्यात् नानौषधीनां रस-संभवाच्च। उष्णैर्विरुध्यते विशेषश्च तथा-ऽऽन्तरीक्षेण जलेन चापि ( सुसू. ४५.१४३-४५; चसू. २७.२४७-४८ ) उष्णेन मधु संयुक्तं वमने-ष्ववचारितम्। अपाकादनवस्थानान्न विरुध्येत पूर्व-वत् ( सुसू. ४५.१४६ ) मध्वामात्परस्त्वन्यदामं कष्टं न विद्यते। विरुद्धोपक्रमत्वात्तत् सर्वं हन्ति यथा विषम् ( सुसू. ४५.१४७; चसू. २७.२४७ ) वमनोपगगणे एकं द्रव्यम् ( चसू. ४.१३ )

शोणितस्थापनगणे एकं द्रव्यम् ( चसू. ४.१८ )
श्लेष्मपित्तप्रशमनानां श्रेष्ठम् ( चसू. २५.४० )
भैषज्य० छर्दि हिक्काश्वासकासशोषादिषु समुपयोज्यम् (ध. ६.२३३)
मास० चैत्रः ( च. चसि. ६.५; सुसू. ६.६ )
फल० आम्रः ( ध. ५.३ )
सुरा ( रा. १४.३०२ ) मधुप्रधान आसवः, तदिदं मधु विबन्धघ्नं कफघ्नं लघु अल्पमारुतं च ( चसू. २७.१८९; सुउ. ४४.३६ )
मार्द्वीकं, मार्द्वीकं पानकं श्रेष्ठम् (सुसू. ४६.३३८)
वनस्पति० पुष्परसः ( सुसू. २९.५९ )
हिं.—मधु.
म.—मध.
गु.—मध.
बं.—मधु.
ता.—तेन्.

**–कर्कटिका**–स्त्री., वनस्पति० मधुखर्जूरिका ( रा. ११.७१ )

**–कर्कटी**–स्त्री., मातुलुङ्ग० गुणाः–स्वादु शीता, वृष्या, रुच्या, दुर्जरा, त्रिदोषघ्नी, रक्तपित्तदाहहरा ( ध. ५.३१ )

**–क्रोड**–पु., पाकघनीभूतमधुगर्भो भक्ष्य० ( चसू. २७.२६७ ) मातुलुङ्गत्वचा चैव वेष्टितो मधुशीर्षकः मधुशीर्षक एव मधुक्रोडः (ड. चसू. २७-२६७)

**–खर्जूरी**–स्त्री., पिण्डखर्जूरी ( रा. ११.७१ )

**–गण्डूषधारण**–न., मधुना गण्डूषधारणम् ( असंसू. ७१.७४; अहृसू. २२.८ )

**–गन्ध**–पु., वनस्पति० बकुलः ( ध. ५.१५४ )

**–गन्धिन्**–वि., माक्षिकगन्धि ( सुशा. २.११-१२ )

**–ज**–न., वनस्पति० सिक्थम् ( ध. ३.११९ )

**(–जा )**–स्त्री., माध्वी सिता ( रा. १४.१६८ )

**–जम्बीर**–पु., वनस्पति० जम्बीर० ( ध. ५.१८ )

**–जम्बीरफल**–पु., मधुजम्बीरः ( ध. ५.१८ )

**–जम्भ**–पु., वनस्पति० मधुजम्बीरः ( रा. ११.२० )

**–जाति**–स्त्री., मधुप्रकाराः–अष्टौ मधुजातयः, तद्यथा पौत्तिकं, भ्रामरं, क्षौद्रं माक्षिकं छात्रमार्घ्यमौद्दालकं दालं चेति ( सुसू. ४५.१३३ )

**–ताल**–पु., वृक्ष० श्रीतालः ( रा. ९.९५ )

**–तृण**–पु., वनस्पति० इक्षुः ( रा. १४.१८० )

**–त्व**–न., मधुरत्वम् ( र. १२.९ )

**–दला**–स्त्री., वनस्पति० मूर्वा ( रा. ३.१० )

**–द्रव**–पु., वनस्पति० मधुशिग्रुः ( असं का चि. ४ )

**–धातु**–पु., हेममाक्षिकम् ( ध. ३.१४८ )

**–धूलिका**–स्त्री., वनस्पति०मूर्वा ( रा. ३.१० )

**–नारिकेरक**–पु., नारिकेलम् ( रा. ११.११० )

**–नालिकेर**–न., वनस्पति० गुणाः–मधुरं शिशिरं स्निग्धं रुच्यं कान्तिकरं बलपुष्टिकरं वीर्यविवर्धनं दाहतृषार्तिपित्तहारि दुर्जरं जन्तुकारि वाताऽतिसारश्रमशमनमग्निमांद्यकरमामश्लेष्मप्रकोपकरं स्थैर्यकरं घनमदनकलावर्धनं च (रा. ११.१११-१२) द्र० नारीकेल '

**–पर्णिका**–स्त्री., वनस्पति० मधुपर्णी (सुशा. १०.६१) जीवन्ती ( इन्दु. असंशा. ४.५५ )

**–पर्णी**–स्त्री., वनस्पति० गुडूची ( चसू. ४.९; ध. १.३ )
काश्मरी ( ध. १.११७; चसू. ४.१३ )
यष्टिका ( र. २२.९२-९६ )
विकङ्कतः ( च. चचि. २९.७२ )
मधुकर्कटी ( रा. ११.३१ )
क्रीतनकं जलजम् ( ध. १.१४४ )

**–पर्ण्यादितैल**–न., योग० वातशोणिते उपयुक्तम् ( चचि. २९.८८-९५ )

**–पाक**–पु., मधुवज्जायमानोऽवलेहः ( र. २०.१६३.६५ )

**(–पाका )**–स्त्री., वनस्पति० षड्भुजा (रा. ७.२५५)

**–पीलु**–पु., वनस्पति० बृहत्पीलुः ( रा. ११.६३ )

**–पुष्प**–पु., वनस्पति० बकुलः (रा.१०.२६२)
शिरीषः ( रा. ९.१८९ )
जलमधूकः ( ध. ५.४९ )
अशोकः ( रा. १०.२७० )

**(–पुष्पा )**–स्त्री., वनस्पति० दन्ती ( रा. ६.३३९ ) नागदन्ती ( रा. परि. ५.२६ )

**(–पुष्पी)**–स्त्री., वनस्पति० दन्ती (र. २०.१५३-५४)

**–पुष्पिक**–पु., वनस्पति० जलमधूकः ( ध. ५.४९ )

**–फल**–न., मधूकवृक्षफलम् ( र. १२.९९ )
वनस्पति० पालेवतम् ( रा. ११.८८ )
फल० मधुनारिकेरः ( ध. ११.११० )
वनस्पति० आम्रः ( ध. ५.३ )

**–( फला )**–स्त्री., वनस्पति० षड्भुजा (रा. ७.२५५) उत्तरापथिका ( रा. ११.७६ )

**–फलिका**–स्त्री., वनस्पति० मधुखर्जूरी (रा. ११.७१)

–बहला–स्त्री., वनस्पति० वासन्ती (रा. १०.२३४)
–बिम्बी–स्त्री., वनस्पति० मधुरबिम्बी (रा. ७.३०४)
–बीज–पु., फल० दाडिमः (रा. ११.९४)
–भवा–स्त्री., वनस्पति० मधुशर्करा (ध. २.१०६)
–मज्जन्–पु., वनस्पति० आक्षोडः (रा. ११.८२)
–मती–स्त्री., वनस्पति० काश्मरी (रा. ९.१४८)
मूर्वा (रा. ३.१०)
–मस्तक–पु., आहारद्रव्य० समितावेष्टिक पाकघनीभूता मधुरा घृतोदरा मधुमस्तकाः, ते एव मधुशीर्षका उच्यन्ते, केचिन्मधुमस्तकशब्देन खजकमाहुः (ड. सुसू. ४६.३९५-३९६)
–मेह–पु., रोग० प्रमेहः (चसू. १९.४(९) द्र० 'प्रमेह'
–मेहता–स्त्री., पारिभाषिकी संज्ञा, मधुमेहत्वम् (सुचि. १२-६)
–यष्टिका–स्त्री., वनस्पति० यष्टीमधु (ध. १.१४२)
–यष्टी–स्त्री., वनस्पति० यष्टीमधु (ध., १.१४२)
–रस–पु., वनस्पति० तालः (रा. ९.९२)
(–रसा)–स्त्री., उत्तरापथिका ध. ५५८. चचि ३.२५८)
वनस्पति० मूर्वा (सुउ. १९.१४) स्तन्यदोषहरणार्थमुपयुज्यते (सुचि. १७.४४; ध. १.१३)
क्लीतनकम् (रा. ६.१८४)
–रेणु–स्त्री., वनस्पति० कटभी (रापरि. ९.३७)
–वल्ली–स्त्री., वनस्पति० यष्टीमधु (रा. ६.१८२)
उत्तरापथिका (रा. ११.७६)
वनस्पति० मधुकर्कटी (ध. ५.३१)
क्लीतनकम् (रा. ६.१८४)
–वृक्ष–पु., वनस्पति० मधुकः (ध. ५.४५)
–व्रत–पु., कीट० भ्रमरः (र. २७.५८)
–शर्करा–स्त्री., शर्कराभेदः पाकात्कालान्तरशोषणाद्वा घनीभूताऽवयवं मधु शर्करातुल्यत्वात् 'मधुशर्करा' इत्युच्यते (सुसू. ४५.१६६) गुणाः–रूक्षा वम्यतिसारनाशनी छेदनी च (चसू. २७.२४२; ध. २.१०६; अहसू. ५.५३)
वनस्पति० निष्पावः (रा. १६.१७५)
माध्वी सिता (रा. १४.१६८)
–शिग्रु–पु., वनस्पति० शोभाञ्जनः च (चवि. ७.१७)
लोहितकुसुमाल्पविटपः शोभाञ्जनकभेदः (सुसू. ४६.२२१)
गुणाः– सरस्तिक्तः शोफघ्नो दीपनः कटुश्च (सुसू. ४६.२३७)
पत्रशाकः, रक्तशोभाञ्जनकः (सुसू. ३८.१०-११)
–शिग्रुक–पु., वनस्पति० शिग्रुः (ध. ४.४०; रा. ७.६४)
–शिग्रुकरीर–न., मधुशिग्रुः रक्तशोभाञ्जनकः, तस्य करीरं कोमलं नालम् (सुसू. ४६.२८९)
–शिग्रुकुसुम–न., रक्तशोभाञ्जनस्य पुष्पम्; गुणाः– पाके कटु वातहरं सृष्टमूत्रपुरीषं च (सुसू. ४६.२८३)
–शुक्त–न., जम्बीररसकृतः सन्धानविशेषः (सुउ. ३९.२९८; चचि. २६.२२७)
–शेष–न., वनस्पति० सिक्थकम् (ध. ३.११९)
–श्रेणी–स्त्री., वनस्पति० मूर्वा (रा. ३.१०)
–संज्ञ–पु., वनस्पति० उदुम्बरः (रा. ११.१३७)
–संभव–न., वनस्पति० सिक्थकम् (रा. १३.१७३)
–सत्ता–स्त्री., वनस्पति० अङ्गारवल्ली (रा. ९.१८२)
–सिता–स्त्री., वनस्पति० निष्पावः (रा. १६.१७५)
–स्रव–पु., वनस्पति० मोरटः (ध. १.१५)
मुरङ्गी (अ., अहसू. १५.१५)
मधुकः (ध. ५.४५)
(–स्रवा)–स्त्री., वनस्पति० दीप्या (ध. ५.५५)
मूर्वा (रा. ३.११)
यष्टीमधु (ध. १.१४२)
हंसपादी (रा. ५.१६६)
–हन्–पु., मधु हन्तीति, प्रसहजातीयभेदः (चसू. २७.३६; अहसू. ६.५०)

**मधुक**–पु., वनस्पति० मधूकः मधुवृक्षः (ध. ५.४५)
गुणाः– मधुरः शीतः पित्तघ्नो दाहश्रमहरश्च (ध. ५.४५)
यष्टिमधु (चसू. ५.२१) महाकषायवर्गे कण्डूघ्नगणे एकं द्रव्यम् (चसू. ४.११)
हिं––जंगली मोह.
**म.––मोहडा.**
गु.––महूडा.
बं.––महू.
ता.––कट्टिलिपी.
वमनोपगगणे एकं द्रव्यम् (चसू. ४.१३)
आस्थापनोपगगणे एकं द्रव्यम् (चसू. ४.१३.)
शोणितस्थापनगणे एकं द्रव्यम् (चसू. ४.१८)
चक्षुष्यवृष्यकेश्यकण्ठ्यवर्ण्यविरजनीयरोपणीयानां श्रेष्ठम् (चसू. २५.४०)
वाजीकरणार्थमुपयुज्यते (असंउ. ५०; अहसू. १५,३; सुचि, १५,४४-४५)

वनस्पति० क्लीतनकम् ( रा. ६.१८४; र. १३.८२-९१ )
सिक्थकम् ( ध. ३.११९ )
(मधुका)–स्त्री., वनस्पति० यष्टीमधु ( रा. ६.१८२ )
–तैल–न., तैल० गुणाः–मधुरं कषायं कफपित्तप्रशमनं च ( सुसू. ४५.१२१; चचि. २९.११५-११८ )
मधुर–पु., वनस्पति० राजाम्रः ( रा. ११.८)
मधुकर्कटी ( ध. ५.३१ )
सूक्ष्मफलः ( रा. ११.१६४ )
रस० सन्तानिकागोदुग्धादिकः (ड., सुउ. ६३.१६)
गुणाः—स्वादुः सौम्यो वातघ्नः पित्तघ्नः शीतः स्निग्धो गुरुश्च ( सुसू. ४२.४-७ )
वनस्पति० गुडः ( ध. ४.१२८ )
जीवन्तः ( रापरि. ७.८९ )
जीवकः ( र. २०.५४-५५; ध. १.१२३ )
राजमाषः ( रा. १६.१३५ )
निष्पावः ( रा. १६.१७५ )
रक्तशिग्रुः ( रा. ७.६६; असंउ. १९ )
रक्तेक्षुः ( १४.१८९ )
न., खनिज० वङ्गम् ( रा. १३.१४ )
वनस्पति० गृञ्जनम् ( ध. ४.३७ )
कुरी ( रा. १६.१७९ )
(मधुरा)–स्त्री., वनस्पति० काकोली ( ध. १.१३२ )
मेदा ( रा. ५.१६१ )
बृहज्जीवन्ती ( रा. ३.१७९ )
मधुखर्जूरी ( रा. ११.७१ )
पालक्यम् ( रा. परि. ७.१२ )
व्रीहिः ( रा. १६.९८ )
शतावरी ( रा. ४.४३९ ) मसूरिका ( ध. ६.९५ )
–कर्कटी–स्त्री., वनस्पति० मधुकर्कटी ( रा. ११.३१ )
–खर्जूरी–स्त्री., वनस्पति० मधुखर्जूरी ( रा. ११.७१)
–गण–पु., "घृतहेमगुडाक्षोडमोचचोचपरूषकम्। अभीरुवीरापनसराजादनबलात्रयम् । मेदे चतस्रः पर्णिन्यो जीवन्ती जीवकर्षभौ। मधूकं मधुकं बिम्बी विदारी श्रावणीयुगम्। क्षीरशुक्ला तुगाक्षीरी क्षीरिण्यौ काश्मरी सहे । क्षीरेक्षुगोक्षुरक्षौद्र-द्राक्षादिर्मधुरो गणः" ( अहसू. १०.२२-२५ )
–जम्भल–पु,. वनस्पति० मधुजम्बीरम् ( रा. ११.२० )
–त्रय–न., घृतं गुडो मधु चेति ( र. १०.७३ )
–त्रिफला–स्त्री., वनस्पति० स्वादुत्रिफला, मधुराणि द्राक्षाकाश्मर्यखर्जूरीफलानि त्रीणि ( रा. २२.२ )
–त्वच–पु., वनस्पति० धवः ( रापरि. ९.८ )
–पटोली–स्त्री., वनस्पति० स्वादुपत्रफला ( रा. ७.७६ )
–प्रभाव–न., मधुररसस्य यत्कर्म तथैव यस्य मधुर-रसकर्मसदृशकर्मैवत् इति भावः, तत् ( चवि. ८.१३८ )
–फल–पु., मांसलफलः ( रा. ७.२७१ )
वनस्पति० राजबदरः ( रा. ११.१६० )
(–फला)–स्त्री., वनस्पति० मधुकर्कटी ( रा. ११.३१ )
वालुकम् ( रा. ७.२५० )
–बिम्बी–स्त्री., वनस्पति० बिम्बी ( रा. ७.३०४ )
–बीजपूर–पु., वनस्पति० मधुकर्कटी ( रा. ११.३१ )
–मृत्तिका–स्त्री., मृत्तिका ( चक. १.९ )
–रस–पु., रस० मधुरो रसः शरीरसात्म्याद्रसरुधिर-मांसमेदोऽस्थिमज्जौजःशुक्राभिवर्धन आयुष्यः षडिन्द्रियप्रसादनो बलवर्णकरः पित्तविषमारुतघ्न-स्तृष्णादाहप्रशमनस्त्वच्यः केश्यः कण्ठ्यो बल्यः प्रीणनो जीवनस्तर्पणो बृंहणः स्थैर्यकरः क्षीणक्षत-सन्धानकरः स्निग्धः शीतो गुरुश्च ( चसू. २६.४२ (१) ) मधुरो रस एवाऽत्यर्थमुप-युज्यमानः स्थौल्यं मार्दवमालस्यमतिस्वप्नं गौरव-मनन्नाऽभिलाषमग्नेर्दौर्बल्यमास्यकण्ठयोर्मांसाभिवृद्धिं श्वासकासप्रतिश्यायाऽलसकशीतज्वराऽऽनाहाऽऽस्य-माधुर्यवमथुसंज्ञाप्रणाशस्वरप्रणाशगलगण्डमाला-श्लीपदगलशोफबस्तिधमनीगलोपलेपाऽक्ष्यामयाऽभि-ष्यन्दान् इत्येवमादीन् कफजान् विकारानुपजनयति ( चसू. २६.४२ (१); सुसू. ४२.१० (१) द्र० 'रस'
–लता–स्त्री., वनस्पति० क्लीतनकम् ( रा. ६.१८४ )
–वर्ग–पु., मधुररसद्रव्यसंग्रहः, तद्यथा–काकोल्यादिः क्षीरघृतवसामज्जशालिषष्टिकयवगोधूममाषशृङ्गाटक-कसेरुकत्रपुसैर्वारुकर्कारुकालाबुकालिन्दकतक-गिलोड्यपियालपुष्करबीजकाश्मर्यमधूकद्राक्षाखर्जूर-राजादनतालनालिकेरेक्षुविकारबलाऽतिबला-ऽऽत्मगुप्ताविदारीपयस्यागोक्षुरकक्षीरमोरटमधूलिका-कूष्माण्डप्रभृतीनि समासेन मधुरो वर्गः ( सुसू. ४२.११ )
–स्कन्ध–पु., द्रव्यगण० जीवकर्षभकौ जीवन्ती वीरा तामलकी काकोली क्षीरकाकोली मुद्गपर्णी माष-पर्णी शालपर्णी पृश्निपर्ण्यसनपर्णी मधुपर्णी मेदा

महामेदा कर्कटशृङ्गी शृङ्गाटिका छिन्नरुहा छत्राऽतिच्छत्रा श्रावणी महाश्रावणी सहदेवा विश्वदेवा शुक्ला क्षीरशुक्ला बलाऽतिबला विदारी क्षीरविदारी क्षुद्रसहा महासहा ऋष्यगन्धाऽश्वगन्धा वृश्चीरः पुनर्नवा बृहती कण्टकारिकोरुबूको मोरटः श्वदंष्ट्रा संहर्षा शतावरी शतपुष्पा मधूकपुष्पी यष्टीमधु मधूलिका मृद्वीका खर्जूरं परुषकमात्मगुप्ता पुष्करबीजं कशेरुकं राजकशेरुकं राजादनं कतकं काश्मर्यं शीतपाक्योदनपाकी तालखर्जूरमस्तकमिक्षुरिक्षुवालिका दर्भः कुशः काशः शालिर्गुन्द्रेत्कटकः शरमूलं राजक्षवक ऋष्यप्रोक्ता द्वारदा भारद्वाजी वनत्रपुष्यभीरुपत्री हंसपादी काकनासिका कुलिङ्गाक्षी क्षीरवल्ली कपोलवल्ली सोमवल्ली गोपवल्ली मधुवल्ली चेति ( चवि. ८.१३९ )

**मधुरक**–न., धूमपानप्रयोगे एकं द्रव्यम्, जीवनीयानि जीवकर्षभकादीनि द्रव्याणि ( चसू. ५.२६ )

**( मधुरिका )**–स्त्री., वनस्पति० मिश्रेया ( रा. ४.६ ) राजिका ( रा. १६.९० )

**मधुराग्रजा**–स्त्री., वनस्पति० खर्जूरी ( ध. ५.५३ )

**मधुरान्वयता**–स्त्री., ( परि० ) मधुद्रव्यप्रभवता ( सुसू. ४५.१७२ )

**मधुरीभूत**–वि., प्रकरणाद् वराहस्य लालास्रावमूर्च्छादिभिः विषीभूतम् ( सुउ. ६१.३९ )

**मधुरौषध**–न., जीवनीयगणोक्तद्रव्यजातम् ( चशा. ८.४ )

**मधुलिका**–स्त्री., वनस्पति० गुडूची ( ड. सुउ. २४.२८) मर्कटकः ( सुसू. ४२.११ )

**मधुष्ठील**–पु., वनस्पति० मधुकः ( ध. ५.४५ )

**मधूक**–पु., वनस्पति० यष्टिमधु ( चसू. १३.१० )
वनस्पति० दाहप्रशमनगणे एकं द्रव्यम् ( चसू. ४.१७ )
पु., क्षुद्रगुडविशेषः मधूकपुष्पोत्थफाणितगुणाः— रूक्षं, वातपित्तकृत् कफघ्नं पाके मधुरं कषायं बस्तिदूषणं च ( सुसू. ४५.१६९ ) शिरोविरेचनार्थमुपयुज्यते ( सुसू. ३९.६; असंसू. १६.५; अहृसू. १५.४१ )
न., वनस्पति० मोहः ( चसू. ३.२१ )
फल० इदं वातपित्ते शस्तम् ( चसू. २७.१२८ )
–ज–पु., वनस्पति० गुडपुष्पः ( सुउ. ३९.१७५; ( अहृसू. ६.११९ )
–जतैल–न., स्नेह० ( ध. ६.१४१ )
–तैल–न., गुणाः– वातपित्तहरं केश्यं श्लेष्मलं गुरु शीतलं च ( असंसू. ६.१०९-११० )
–पुष्प–न., मधूकस्य पुष्पम् ( सुसू. ३८.३९-४० )
–युगल–न., वनस्पति० यष्टिमधु मधूकश्च ( र. १७.३९-४० )
–सार–पु., मधूकवृक्षस्यान्तरभागः, तस्य मधूकस्य सार० ( सुचि. १८.२३; र. १३.४१-४३ )

**मधूकादिलेह**–पु., लेह० वमिकफप्रसेकाद्युपद्रवनाशकः ( सुउ. ३९.३००-३०१ )

**मधूकासव**–पु., आसुत० मधुकपुष्पविडंगयुक्तः अयं ग्रहण्यां शस्तः ( चचि. १५.१४६-४९ )

**मधूक्षित**–वि., ईषन्मात्रमधुयुक्तम् (ड.सुउ.४०.७६-७७)

**मधूच्छिष्ट**–न., वनस्पति० सिक्थकम् ( चसू. ५.२५; सुसू. ९.४; ध. ३.११९ )

**मधूच्छिष्टविग्रह**–पु., सिक्थकेन मृत्तिकायां निर्मितसञ्चकरूपविग्रहः ( चशा. ३.१६ )

**मधूत्थ**–न., वनस्पति० सिक्थकम् ( रा. १३.१७४ )

**मधूत्थित**–न., वनस्पति० सिक्थकम् ( ध. ३.११९ )

**मधूत्पन्ना**–स्त्री., माध्वी सिता ( रा. १४.१६८ )

**मधूत्सव**–पु., वनस्पति० कुरुबकः ( रा. १०.४१३ )

**मधूदक**–न., मधुसहितमुदकम् ( चसू. २७.३२३ ) (सुसू. ४६.४२९; असंसू. १०.५१; अहृसू. १४.२१)

**मधूल**–पु., वनस्पति० क्लीतनकम् ( रा. ६.१८४ )

**( मधूली )**–स्त्री., वनस्पति० उत्तरापथिका (रा. ११.७६)
फल० आम्रः ( रा. ११.२ )
गोधूमभेदः, मधुरा स्निग्धशीतला च ( चसू. २७.२२ )

**मधूलक**–पु., गोधूमविशेषः ( चनि. २.४ )
वनस्पति० पाणमोहा इति लोके प्रसिद्धा ( चवि. ८.१३६ )

**( मधूलिका )**–स्त्री., जलदः ( ध. ५.४८ )
मर्कटहस्ततृणम् ( चवि. ८.१३९ )
आसुत० मधूलिका श्लेष्मला, अन्ये गुणास्तु यवतण्डुलकृतसुरावत् ज्ञेयाः ( चसू. २७.१९०; रा. १४.३०३ )
वनस्पति० जलयष्टी ( ड. सुउ. ३९.३०० )
मर्कटकः ( ड. सुउ. ५२.३४ )
तृणजातिः ( ड. सुउ. ५१.२१ ) गुडतृणः ( इ. असंउ. २ ) गुणाः–शीतवीर्या, विशेषेण स्निग्धा, वृष्या च ( असंसू. ७.१९ )

क्लीतनकम् ( ध. १.१४४ )
मूर्वा ( र. २१.१९०-९७ )
कीट० मक्षिकाभेदः ( सुक. ८.३५ )
कुधान्य० ( सुसू. ४६.२१ )

**मधूषित**–न., वनस्पति० सिक्थकम् ( रा. १३.१७४ )

**मध्य**–न., प्रकरणादिदं जम्ब्वाम्रयोरष्ठीलामध्यमिति जज्जटः ( चचि. ३०.९० )

**( मध्या )**–स्त्री., वनस्पति० ब्राह्मी (रा.५.१४९)

**–काल**–पु., भैषज्यकाल० मध्यभोजनः ( चचि. ३०.२९९ )

**–भक्त**–न., भैषज्यकाल० मध्येभक्तम् ( असंसू. २३.१५ )

**मध्यन्दिन**–पु., वनस्पति० बन्धूकः ( रापरि. १०.३५ )

**मध्यमपञ्चमूल**–न., बला-पुनर्नवा-एरण्डशूर्पपर्णीद्वयं च ( ध. ७.१८; अहसू. ६.१६९ )

**मध्यमा**–( पादस्य )–स्त्री., शारीर० प्रदेशिन्याः सकाशान्मध्यमाऽङ्गुलीपञ्चमभागहीना ( सुसू. ३५.१२ )

**मध्यमाङ्गुलि**–स्त्री., पञ्चसु मध्यमा, अङ्गुष्ठात् तृतीयाङ्गुलिः ( सुचि. ३५.७ )
तस्याः प्रमाणं पञ्चाङ्गुला, इदं दीर्घायुःपुरुषलक्षणम् ( सुसू. ३५.१२ )

**मध्याह्न**–पु., दिनमध्यभागः ( सुसू. ६.१४ )

**मध्येभक्त**–न., यद् भक्तस्य नाम भोजनस्य मध्ये पीयते इदं अविप्रसरणस्वभावात्कोष्ठगतान् रोगान् हन्ति ( सुउ. ६४.७१-७२ )

**मध्वरिष्ट**–पु., योग० विडङ्गपिप्पलीत्वक्क्षीरीकेशरमरिचादियुक्तः ग्रहण्यां शस्तः (चचि. १५.१६३-१६७)

**मध्वाम**–न., मधुनः आमम्, मध्वाममुपक्रमविरोधित्वान्मानवं सद्यो हन्ति। आमे उष्णा क्रिया क्रियते तत् मध्वामे विरुद्धा; यत्तु शीतं तदामे विरुद्धं, तस्माद्दारुणं मध्वामम्। महात्ययं दुश्चिकित्स्यं च ( चसू. २७.२४७ )
मध्वजीर्णम् ( सुसू. ४५.१४७ )

**मध्वाम्र**–पु., वनस्पति० चक्रलताम्रः (रा. २१.११)

**मध्वालुक**–न., कन्दशाकः, तच्च रोमशं मधुराऽऽस्वादं, गुणाः– रक्तपित्तहरं शीतं मधुरं गुरु बहुशुक्रं स्तन्यवृद्धिकरं च ( सुसू. ४६.२९८-९९ )

**मध्वावास**–पु., आम्रः ( र. ११.३ )

**मध्वासव**–पु., आसुत० ( चसू. २७.१८७ ) गुणाः– लघुश्छेदी मेहकुष्ठविषाऽपहस्तिक्तः कषायः शोफघ्नस्तीक्ष्णः स्वादुः अवातकृच्च (सुसू.४५.१८८-८९;अहसू.५.७५; असंसू.१०.४८)

**मनस्**–न., अतीन्द्रियम् ( चसू. ८.४ ) तत्तु सत्त्वसंज्ञकम् तदर्थात्मसंपदायत्तचेष्टं चेष्टाप्रत्ययभूतमिन्द्रियाणाम् ( चसू. ८.४ ) मन आत्मना इन्द्रियैश्च सह संयुक्तं ज्ञानकारणमस्ति। तद्यथा–आत्मा मनसा संयुज्यते मन इन्द्रियेण, इन्द्रियमर्थेनेति ( चक्र. चसू. ८.१२ ) एवं मनसो वैवृत्याज्ज्ञानस्याभावस्तत्सांनिध्याच्च ज्ञानमिति वैवृत्यान्नाम वृत्यभावादसन्निधेरिति यावत्. ज्ञानं ज्ञानाभावश्च मनसो लक्षणम् ( चशा. १.१८-१९ ) मनसो द्वौ गुणावणुत्वमेकत्वं चेति युगपज्ज्ञानानुदयान्मनसोऽणुत्वमेकत्वं च सिद्धे भवतः (चक्र. चशा. १.१८-१९) चिन्त्यं विचार्यमूह्यं ध्येयं संकल्प्यं चेति मनोविषयाः। यत्किञ्चिन्मनसो ज्ञेयं तत्सर्वमेव मनोविषय इति संज्ञितम् (चशा. १.२०) तत्र कर्तव्यतयाऽकर्तव्यतया वा यन्मनसा चिन्त्यते तच्चिन्त्यम्। उपपत्त्यनुपपत्तिभ्यां यद्विमृश्यते तद्विचार्यम्, एवमेतद्भविष्यतीति संभावनया यदूह्यते तदूह्यम्, भावनाज्ञानविषयं ध्येयम्, गुणवत्तया दोषवत्तयाऽवधारणविषयं संकल्प्यमिति मनोविचाराणां स्वरूपम् ( चक्र. चशा. १.२० ) मनसः कर्माणीन्द्रियाभिग्रहः स्वस्य च निग्रह ऊहो विचारश्चेति ( चशा. १.२१ ) मनःपुरःसराणीन्द्रियाण्यर्थग्रहणसमर्थानि भवन्ति ( चसू. ८.७ ) मनस्तु नवद्रव्येष्वेकम् ( चसू १.४८ ) मनोऽर्थाव्यभिचरणेन परीक्षेत ( चवि. ४.८ )
खनिज० मनःशिला ( र. १२.१२१-२२ )

**–कर**–वि., मनोगुणकरणम् ( चक्र. चसू. १.१०७ )

**–कान्त**–वि., मनःप्रियम् ( सुसू. ३४.२२-२३ )

**–(मनः)–पुरःसर**–वि., मनोऽधिष्ठितम् (चसू. ८.७)

**–प्रसाद**–पु., चित्तप्रसन्नता ( असंसू. २७.१९ )

**–शय**–पु., मनसि शेते इति मनःशयः मनसिजः कामः ( चचि. २.(१). १० )

**–शिला**–स्त्री., खनिज० तद्गुणाः–कटुस्तिक्तोष्णा स्निग्धा, लेखनी, सर्वरसायनाग्र्या, कफवातहन्त्री, विषभूताऽऽवेशभयोन्मादनाशिनी ( ध. ३.९६ ) कुष्ठादिहरप्रदेहे दद्रुप्रभृतित्वग्रोगहरणेऽवचूर्णनार्थं चोपयुज्यते ( चसू. ३.५,१० ) उपदंशविसर्पाणां शान्तिकारिणी ( सुचि. १९.४६-४७ ) व्रणेपूत्सन्नमांसेपु मांसस्फोटनार्थं, व्रणसंशोधनवर्तिकल्कघृततैलेषूपयुज्यते ( सुसू. ३७.१४,३१-३३ ) नेत्ररोगे बर्त्यञ्जनाद्युपदिष्टानामेकतमं द्रव्यम् (सुउ.११.८)

मनःशिलादोषाः—बलमांद्यं, पाण्डुतां, मूत्ररोधं, शर्करां च करोति( ध. ३.१०० ) अशुद्धमनःशिलासेवनेनाऽश्मरीमूत्रकृच्छ्राऽग्निमांद्यमलावरोधाभवन्ति ( र. ३.१०२ ) तद्भेदाः—श्यामिकाकणवीरकाखण्डपूर्विकाश्चेति (र. ३.९६) तस्याः शोधनम्—अगस्त्यपत्ररसेन, शृङ्गवेररसेन वा सप्तवारं भाविता मनःशिला शुध्यति ( र. ३.१०३-४ ) तत्सत्त्वपातनविधिः—साऽष्टमांशेन लोहकिट्टेन गुडगुग्गुलसर्पिषा च युक्ता कोष्ठ्यां रुध्वा दृढं ध्माता सत्त्वं मुञ्चेत् ( र. ३.१०५-७ )

**–शुद्धि**–स्त्री., लक्षण० मनसः इन्द्रियार्थग्रहणे पाटवम् ( चसू' १६.६ )

**–संकल्प**–पु., चिन्तनम्, मनसः कर्म ( ड. सुशा. १.१७ )

**–संताप**– पु., मानसदुःखम्, त्रासः ( चचि. ३०. २३३;३६ )

**( मनो )–गुप्ता**–स्त्री., खनिज० मनःशिला ( ध. ३.९६ )

**–जव**–पु., मनसा जवते गच्छतीति मानसवेगः ( चशा. २.३१ )

**–जवृद्धि**–स्त्री., वनस्पति० कामवृद्धिः ( रापरि. ४.५१ )

**–ज्ञ**–वि., मनःप्रियम् (चचि. ८.१६२) मनोऽनुकूलम् ( सुशा. ४.४६ )

पु., वनस्पति० कुन्दः ( रा. १०.२५६ )

न., वनस्पति० जीरकम् ( ध. २.६६ )

**(–ज्ञा)**–स्त्री., वनस्पति० आवर्तकी ( रा. ३.२९६ )

उपकुञ्ची ( रा. ६.९१ )

कर्कोटकी ( ध. १.१८७ )

जाती ( ध. ५.१३७ )

वन्ध्यकर्कोटकी ( ध. १.१८५ )

आसुत० सुरा ( रा. १४.३०३ )

खनिज० मनःशिला ( ध. ३.९६ )

**–ज्वर**–पु., रोग० मानसो ज्वरः ( असंशा. ४.५१ )

**–दैन्य**–न., लक्षण० क्लिष्टचित्तत्वम्, विषण्णमनस्त्वम् ( सुउ. ५७.१७ )

**–दोष**–पु., मानसावगुणाः ( अहृसू. १.२६ )

**–धात्री**–स्त्री., खनिज० मनःशिला ( र. १२.१२१,२२ )

**–रम**–वि., रुचिजनकम् ( सुसू. ४६.४५४ )

**(–रमा)**–स्त्री., भैषज्य० गोरोचना ( रा. १२.३४ )

**–वह**–वि., मनोवाहि ( स्रोतः ) ( चनि. ७.४ )

**–वहस्रोतस्**–न., मनोवहनमार्गः, मनोवहानि स्रोतांसि यद्यपि पृथङ्नोक्तानि तथाऽपि मनसः 'केवलं चेतनावच्छरीरमयनभूतं' इत्यभिधानात्सर्वशरीरस्रोतांसि गृह्यन्ते, विशेषेण तु हृदयाश्रितत्वान्मनसस्तदाश्रिता दश धमन्यो मनोवहाः अभिधीयन्ते ( चक्र. चइ. ५.४१ ) हृदयदेशसंबन्धिधमनी विशेषेण मनोवहा ( चचि. ९.५ )

**–विकार**–पु., रोग० उन्मादोऽपस्मारश्च ( चक्र. चचि. ३.३०९ )

**–विपर्यय**–पु., लक्षण० मनोवैपरीत्यम् ( सुशा. ६.३६-३७ )

**–व्याकुलन**–वि., मनःशान्त्यपहारकम्, मनोव्याकुल्यतेऽनेनेति मनोव्याकुलनम् (सुशा. ४.४७)

**–समाधि**–पु., मनसः समाधिः चित्तैकाग्र्यलक्षणा वृत्तिः, निषेधरूपा वा शान्तिः ( चचि. २४.५२ )

**–हर**–पु., वनस्पति० कुन्दः ( ध. ५.१५० )

न., खनिज० सुवर्णम् (रा. १३.१)

**–( हरा )**–स्त्री., वनस्पति० जाती (रा. १०.२३१) यूथिका ( रा. १०.२५२ )

**–ह्वा**–स्त्री., खनिज० मनःशिला ( ध. ३.९६; सुचि. २५.३८ )

**मनस्विन्**–वि., प्रशस्तं मनो यस्य सः ( चवि. ८.१०४ )

**( मनस्विनी )**–स्त्री., वनस्पति० कर्कोटकी ( रा. ७.२७६ )

**मनीषिन्**–पु., विवेकशाली मुनिः ( चइ. ९.१८ )

**मनु**–पु., प्रजापतिः ( सुसू. ५.२५ )

वनस्पति० स्पृक्का ( रा. १२.११३ )

**मनुष्य**–पु., मानवः ( चशा. ३.१५ )

**–बिम्ब**–पु. न., मनुष्याकारः ( चशा. ३.१६ )

**–विग्रह**–पु., पुरुषदेहो, मानवदेहः ( चशा. ३.१६ )

**मनोऽभिताप**–पु., मनःसंतापः ( चशा. २.७ )

**मन्तृ**–पु., आत्मा ( चशा. ४.८ )

**मन्त्र**–पु., उपक्रम० मन्त्रोपचारः ( चसू. १८.५ )

अथर्ववेदे चिकित्सा ( चसू. ३०.२१ )

अक्षरसमूह० यस्योच्चारेण व्याधिरुपशाम्यति देवादयश्च प्रसन्ना भवन्ति ( चनि. ७.१६ ) सर्पविषे मन्त्रप्रयोगः क्रियते ( सुक. ५.१० )

**–कोविद**–पु., मन्त्रज्ञः पुरुषः ( ड. सुक. ५.८ )

**–देवता**–स्त्री., मन्त्रस्य देवता ( असंसू. ९.१२१ )

**–पूताम्बु**–न., मन्त्रेण पवित्रीकृतं जलं, तस्य प्रोक्षणाद्विषशमनं भवति ( चचि. २३.२२३ )

**-विशारद**-वि., मन्त्राणामृग्यजुःसामोक्तानामथर्ववेदोक्तानां च पण्डितः ( ड. सुसू. ३४.७ )

**मन्त्राभिमन्त्रित**-वि., मन्त्रैरभिमन्त्रितम् (अहृसू.१८.१५)

**मन्थ**-पु., कल्प० ( चचि. ४.५९ ) जलघृताक्तसक्तुः ( ड. सुउ. ६४.४४ ) सर्पिषाऽभ्यक्ताः शीतवारिपरिप्लुता नातिद्रवा नातिसान्द्रा सक्तवो मन्थ इत्युपदिश्यते । स च सद्योबलकरः पिपासाश्रमनाशनः ( सुसू. ४६.३८५-३८६ ) तद्गुणाः-शीतः, पित्तघ्नो दाहारुचिमूर्च्छाश्रमनाशनः ( ध. ७.४७ ) तृष्णाजोदावर्तशमनः ( सुउ. ५५.३४ )
वनस्पति० अग्निमन्थः ( र. १२.७४ )
नेत्ररोग० अधिमन्थः ( सुउ. १.३७ )

**-हृत**-वि., खजविलोडितम् ( सुउ. ४१.५२ )

**मन्थन**-पु., वनस्पति० अग्निमन्थः ( ध. १.१११ )
न., लक्षण० शरीरमन्थनवद् वेदना ( चचि.६.७७; सुउ. ६.१२ )

**मन्थनोद्भव**-न., आहारद्रव्य० नवनीतम् (ध. ६.२२९)

**मन्थान**-पु., मन्थनदण्डः ( चसू. ११.२४ )
वनस्पति० आरग्वधः ( रा. ९.३३३ )

**-भैरव**-पु., पारदयोग० पारदताम्रतालहिंग्वादिसाधितोऽयं कफरोगादिघ्नः ( र. १३.७६-७८ )
प्राचीनरसाचार्यः (र.१८.१७२)
रसरत्नसमुच्चयकर्त्रा सिंहगुप्तसूनुनाऽऽलोचिततन्त्रकर्ता ( र. १.५-९ )

**मन्थानक**-पु., वनस्पति० तद्गुणाः-मधुरः, स्निग्धो दोग्धा, बहुवीर्यकः तृणविशेषः ( रापरि. ८.५५ )

**मन्द**-पु., गुण० तीक्ष्णविपरीतः शनैः कार्यकारी गुणः (चशा. ६.१०) अस्य शमने शक्तिः (अहृसू. १.१८)

**-कफ**-वि., लक्षण० न्यूनकफः ( चसि. १.९ )

**-कर्मन्**-वि., अलसः ( सुसू. ४६.४४४ )

**-गन्ध**-पु., वनस्पति० सप्तपर्णः ( रा. १२.१३९ )

**-चेष्टता** स्त्री., लक्षण० मन्दकायव्यापारता ( सुसू. १५.७ )

**-जरस्**-वि., लक्षण० यस्य वार्धक्यं मन्दं चिरेण जायते सः पुरुषः ( चवि. ८.१११ )

**-ता**-स्त्री., लक्षण० जिह्मता,कौटिल्यम् (सुशा.४.९५)

**-तेजस्**-वि., लक्षण० मन्दतेजस्कम्, अल्पप्रभावम् ( अहृसू. ७.१७ )

**-रुज्**-वि., लक्षण० मन्दवेदनम् ( चचि. २८.३६ )

**-लवण**-वि., ईषल्लवणम् ( चचि, १७,१०७ )

**-वार**-पु.,शनिवासरः ( र. २०.१९६ )

**-विकार**-वि., अल्पविकारयुक्तः ( चवि. ८.१११ )

**-विभ्रंशा**-वि., मन्दं स्वल्पो विभ्रंशो कर्षणम् यस्यां, सा मन्दविभ्रंशा मात्रा,मध्यमा मात्रा(चसू.१३.३७)

**-सरण**-न., ( परिव० ) शनैर्विसर्पणम् (सुनि.१०.६)

**-स्तनित**-वि., मधुरशब्दो मेघादिः 'स्तनितं मेघगर्जितम्' इति कोशात् ( असंसू. ४.४१ )

**-हुतभुज्**-वि., मन्दाग्निः ( र. १६.१६२ )

**मन्दक**-पु., न., आहारद्रव्य० दधिभेदः ( चचि. २१.१८ ) क्षीरविकृतिः, यदा क्षीरं विक्रियामापन्नं घनत्वं न याति, तदा तन्मन्दकम्, त्रिदोषकरमिदम् ( चसू. २७.२२८ )

**मन्दाग्निता**-स्त्री., लक्षण० अग्निमान्द्यम् (सुसू. १५.९) द्र० 'अग्निमांद्य'

**मन्दानल**-वि., लक्षण० मन्दाग्निः ( सुसू. ४६.४४४ )

**मन्दार**-पु., वनस्पति० पारिभद्रः ( रापरि. ८.१०; असंउ. ४२ )
राजार्कः ( ध. ४.१६ )

**मन्दारोग्य**-वि., रोगी ( सुसू. ४६.४४४ )

**मन्दाशित**-वि., अल्पाशितः ( का भोजनकल्प. )

**मन्दोष्मता**-स्त्री., मन्दौष्ण्यम् ( सुसू. १५.७ )

**मन्मथानन्द**-पु., वनस्पति० राजाम्रः ( रा. ११.११ )

**मन्मथालय**-पु., वनस्पति० आम्रः ( रा. ११.२ )

**मन्मथावास**-पु., वनस्पति० राजाम्रः ( रा. ११.९ )

**मन्मथोद्भवन**-पु., वनस्पति० राजाम्रः ( ध. ५.११ )

**मन्या**-स्त्री., शारीर० धमनीमर्म० ( सुशा. ६.२७ ) ग्रीवासिराद्वयम् ( चक. चचि. ९.८४ ) ग्रीवापश्चिमभागस्था धमनी ( ड. सुनि. ११.१० )

**-ग्रह**-पु., लक्षण० मन्यास्तम्भः ( चसू. १७.१४; सुनि. १.७२ ) द्र० 'मन्यास्तम्भ'

**-शूल**-पु., लक्षण० ग्रीवायाः पश्चाद्भागो मन्या, तत्र भवः शूलः ( चनि. ३.७ )

**-स्तम्भ**-पु., रोग० मन्यायाः क्रियाहानिः अशीतिवातविकारेष्वेकः ( चसू. २०.११; सुनि. १.६७ ) तत्संप्राप्तिः- मन्ये संश्रितो वातो यदा अन्तर्नाडीः प्रपद्यते, तदा मन्यास्तम्भं कुर्यात् (चचि. २८.४३) अयं श्लेष्मणाऽऽवृतेन वातेन जन्यते ( मा. चसू.५.५९ ) अयं शिरोविरेचनार्हः ( चसि. २.२२ )

**मयष्ट**-पु., वनस्पति० मकुष्ठकः ( रा. १६. १४५ )

**मयूर**-पु., पक्षि० बर्ही ( चसू. २७,६५ )

तन्मांसगुणाः-मधुरं, कषायं, लवणं, सुस्निग्धं, शुक्रलं, बल्यं, मेधाकरं, स्वर्यम् ( ध. ६.४४५ ) त्वच्यं, केश्यमरुचौ हितमग्निदृक्श्रोत्रेन्द्रियदार्ढ्यकृत् ( सुसू. ४६.६४-६५ )
वनस्पति० अपामार्गः ( र. ५.१७१-७२)

**-कण्ठप्रतिम**-वि., मयूरकण्ठतुल्यः ( सुक. १.२९,३० )

**-कण्ठाभ**-वि., मयूरकण्ठतुल्यः ( असंसू. ८.२४)

**-ग्रीवक**-न., खनिज० तुत्थकम् ( ध. ३.१४५ )

**-चन्द्रिका**-स्त्री. मयूरपिच्छस्थितः चित्रविचित्रवर्णः ( र. १.७२ )

**-चूड**-न., वनस्पति० स्थौणेयम् ( रा. १२.१२५ )

**-जङ्घ**-पु., वनस्पति० टिण्टुकः (ध. १.११४ )

**-तुत्थ**-न., खनिज० तुत्थकम् ( रा., १३.२०५ )

**-पादनाल**-न., मयूरपिच्छस्यैव नालम् ( चचि. १७.११७ )

**-पिच्छ**-न., चन्द्रको नाम मयूरस्य पिच्छम् ( र. २३.६ ) भस्मीकृतं श्वासकासयोः केवलं वा धूपनार्थे प्रयुज्यते ( र. २१.६०-६२ )'

**-वसा**-स्त्री., मयूरस्य वसा सेयं नेत्ररोगेष्वञ्जनार्थमुपयुज्यते ( असंउ. १६)

**मयूरक**-पु., वनस्पति० अपामार्गः ( चचि. १२.२३; सुचि. ५.७; ध. १.२६० )
अजमोदा ( असंचि. २४ )
वायव्यः कीट० ( असंउ. ४३ )

**( मयूरिका )**-स्त्री., कीट० तद्गुणाः-वायव्या, वातकोपना सती वातरोगान् करोति ( सुक. ८.५-८ )
वनस्पति० अम्बष्ठा ( रा. ४.१७० )

**-सुतुत्थक**-न., खनिज० मयूरतुत्थकम् ( र. १४.१-१० )

**मरक**-पु., जनपदोध्वंसकरः रोगः ( सुसू. ६.१७ )

**मरकत**-पु. न., रत्न० ( चचि. २३.२५२-५३ )
गारुत्मतम् ( ध. ६.४९ ) हरिन्मणिः ( र. २.६२)
अयं श्वेतारुणपीतनीलभेदाच्चतुर्विधः ( ध. ६.५२ )
तद्गुणाः-मधुरं, शीतं, रुच्यं, पुष्टिदं, विषघ्नं, आमपित्तहरं भूतनाशनं च ( ध. ६.५० )

**-पत्री**-स्त्री., वनस्पति० पाची ( रापरि. १०.४६ )

**मरण**-न., मृत्युः ( चसू. ३०.२५ )
(परिव०) भस्मीभवनम् ( र.२.६८-६९ )
वनस्पति० वत्सनाभः ( ध. ७.१२८ )

**मरणाख्यलिङ्ग**-न., (परिव०) रिष्टलिङ्गम् (चइ.१२.६५)

**मरणोदय**-वि., मरणकारणम् ( चइ. १.२५ )

**मरालिका**-स्त्री., वनस्पति० सातला ( ध. १.२३८ )

**मरिच**-न., वनस्पति० महाकषायवर्गे दीपनीयगणे, कृमिघ्नगणे, शिरोविरेचनोपगगणे, शूलप्रशमनगणे चैकं द्रव्यम् ( चसू. ४.९,११,१३,१७ ) तद्गुणाः-कटु तिक्तमुष्णम्; नात्यर्थमुष्णम् (च.), लघु, दीपनं, रुचिकरं, पित्तकृत्, अवृष्यम् ( चसू. २७.२९८ ) कफवातघ्नं, जन्तुहृद्रोगनाशनम् ( ध. २.८८ ) कुष्ठहरप्रदेहे उपयुज्यते ( चसू. ३.१२ ) तत्र आर्द्रमरिचगुणाः-कटु स्वादुपाकि उष्णं, गुरुश्लेष्मप्रसेकि शुष्कगुणाः-लघु अवृष्यं कफवातजिच्च ( सुसू. ४६.२२४ ) तत्र शुक्लमरिचगुणाः-रसे पाके च कटुकं, नात्युष्णं, नातिरूक्षं, तीक्ष्णं, दीपनं, रोचनं, पित्तकोपकरं, अवृष्यं, रसायनं, विषघ्नं, दृष्टिरोगघ्नं, भूतनाशनम् ( रा. ६.१३९; चचि. २३.१९३-१९४; सुसू. ४६.२२५)पिष्टकाख्यनेत्ररोगेऽञ्जनार्थमुपयुज्यते ( सुक. ड. ११.१३ )
तत्फलं-शिरोरेचनार्थमुपयुज्यते ( सुसू. ३९.६ )
हिं.—मिरच.
म.—मिरी, मिरे पांढरे.
गु.—मरी.
बं.—मरिच.
ता.—मिलगु.
फा.—पिलपिले.

**-षोडशावर्ति**-स्त्री., नेत्रवर्ति० पथ्यातुत्थकयष्टीमरिचादिनिर्मितेयं सर्वनेत्ररोगघ्नी (सुउ. १८.१०५)

**मरिचोपदंश**-वि., मरिचावचूर्णितं व्यञ्जनम् ( सुउ. ४०.१४९ )

**मरीच**-पु., वनस्पति० जम्बीरः ( रा. १०.८१ )

**( मरीची )**-स्त्री., वनस्पति० मरुबकभेदः श्वेतमरुबकः द्र० ' मरुबक ' ( र. ३०.४७-४९ )
अर्कमूलम् ( र. ३०.४७-४९ )

**मरीचि**-पु., महर्षि० ( चसू. १२.११ )
मान० षड्ध्वंश्यो मरीचिः ( चक. १२.८७ )
मेघज्योतिः ( चइ. ४.१२ )
मृगतृष्णा ( ड. सुउ. ७.८ )

**मरु**-पु., वनस्पति० जम्बीरः ( ध. ४.५२ )

**-ज**-पु., वनस्पति० भृष्टयवः ( चक्र. चक. ९.७; इन्दु. असंउ. २ )
खदिरभेदः विट्खदिरः द्र० ' खदिर ' (रा. ८.३८)

**(-जा)**-स्त्री., वनस्पति० मृगाक्षी ( रा. ७.२५८ )

–देश–पु., देशसंज्ञा० ( ड. सुसू. ४५.२३ )
–देश्य–पु., निर्यास० गुग्गुलुः ( रा. १२.१८४ )
–बक–पु., वनस्पति० तद्गुणाः–कटुतिक्तोष्णो रुच्यो मुखसुगन्धकृत्कफघ्नः कृमिकुष्ठविड्बन्धाध्मानशूल-मान्द्यत्वग्दोषनाशनः (ध. ४.५२-५३; रा.१०.८३)
हिं.—गोला तुलसी.
म.—मरुबक.
बं.—गन्धतुलसी.
फणिज्जकः ( ध. ४.५२ )
–भू–स्त्री., मरुदेशः, आरोग्यदेशानां श्रेष्ठोऽयम् ( चसू. २५.४० )
–भूमि–स्त्री., देशसंज्ञा० मरुदेशः ( असंसू. १३.३ )
–वक–पु., वनस्पति० मरुबकः ( चक. १.२३ ) द्र० ' मरुबक '
–संभव–न., वनस्पति० चाणाख्यमूलम् (ध. ४.३५)
(–संभवा)–स्त्री., वनस्पति० धन्वयासः (रा.३.२२)
–स्था–स्त्री., वनस्पति० धन्वयास (रा.३.२२ )
मरुत्–पु., वातः (सुनि. १.१२)
( मरुच् )–छम–पु., वातोपशमः ( अहृसू. २०.३० )
( मरुद् )–भव पु., वनस्पति० धन्वयासः ( ध. १.२२ )
पद्मकः ( ध., ३.८८ )
–( भवा)–स्त्री., वनस्पति० कार्पासी (रापरि. ४.४६)
मरुत्तक–पु., वनस्पति० जम्बीरः (ध. ४.५२ )
मरुव–पु., वनस्पति० जम्बीरः ( रा. १०.८० )
मर्कट–पु., वृक्षचरप्राणि०तन्मांसगुणाः–कषायं सन्तर्पणं, वृष्यं, बल्यं, बद्धविण्मूत्रकरं, कफकरं, कफवातघ्नं-श्वासामवातमेदःपाण्डुकृमिनाशनम् (ध. ४४३-४४)
(मर्कटी)–स्त्री., वनस्पति० कपिकच्छुः (ड. सुक. २९.७; ध. १.१५१ )
अपामार्गः ( ध. १.२६१ )
अजमोदा ( रा. ६.१५० )
शूकशिम्बी ( चचि. ९.४५ )
–तिन्दुक–पु., तिन्दुकः ( ध. ५.४१ )
मर्कटक–पु., कन्दविष० ( असंउ. ४० ) द्र० 'कन्दविष'
मर्जिका–मज्जिका–स्त्री., कृतान्न० शिखरिणी रसाला (ध. ६.३०१; ध. ६.३०१ (२५५) )
मर्दक–वि., पीडाकरः ( सुचि. ४२.१३५ )
पु., वनस्पति० चक्रमर्दः ( चचि. १४.९ )
घर्षकः ( र. ९.८६-८७ )
द्रुतद्रव्यपेषणोपयोगी लोहदण्डः ( र. ७.५९ )
मर्दन–न., खल्वे पेषणम् ( र. ८.६३ )
पारदसंस्कार० द्रवद्रुतस्य द्रव्यस्य खल्वे शोषणं यावद्घर्षणम् ( र. २.२०-२१ ) द्र० ' पारद '
उपक्रम० अङ्गमर्दनम् ( अहृसू. १३.१ )
मर्दनक–न., तैलम् ( ध. ६.१२५ )
मर्मन्–न., शारीरस्थान० ( चसू. ११.४८ ) मारयतीति मर्म (ड. सुशा. ६.१) मरणकारित्वान्मर्म, मरण-सदृशदुःखदायित्वाद्वा ( अरु. अहृशा. ४.६८ ) मर्माणि नाम मांससिरास्नाय्वस्थिसन्धिसंनिपाताः; तेषु स्वभावत एव विशेषेण प्राणास्तिष्ठन्ति। तस्मान्मर्मस्वभिहतास्तांस्तान्भावानापद्यन्ते ( सुशा. ६.१५ ) तत्संख्या – सप्तोत्तरशतम्, तेषामेकादशैकस्मिन् सक्थ्नि भवन्ति। उदरोरसोर्द्वादश चतुर्दश पृष्ठे, ग्रीवां प्रत्यूर्ध्वं सप्तत्रिंशत् ( सुशा. ६.५ ) आश्रयानुसारेण मर्मणां प्रकाराः संख्या च,मांसमर्माण्येकादश, सिरामर्माण्येकचत्वारिंशत्, स्नायुमर्माणि सप्तविंशतिः, अस्थिमर्माण्यष्टौ, सन्धिमर्माणि विंशतिः, तत्र सक्थिमर्माणि क्षिप्रतलहृदयकूर्चकूर्चशिरोगुल्फेन्द्रबस्तिजान्वाण्युर्वि-लोहिताक्षाणि विटपं चेति, एतेनेतरसक्थि व्याख्यातम्। उदरोरसोस्तु गुदबस्तिनाभि-हृदयस्तनमूलस्तनरोहितापलापान्यपस्तम्भौ चेति। पृष्ठमर्माणि तु कटीकतरुणकुकुन्दरनितम्बपार्श्व-सन्धिबृहत्यंसफलकान्यंसौ चेति। बाहुमर्माणि तु क्षिप्रतलहृदयकूर्चकूर्चशिरोमणिबन्धेन्द्रबस्तिकूर्प-राण्यूर्विलोहिताक्षाणि कक्षधरं चेति; एतेनेतरो बाहुर्व्याख्यातः। जत्रुण ऊर्ध्वं चतस्रो धमन्योऽष्टौ मातृका द्वे कृकाटिके द्वे विधुरे द्वे फणे द्वावपाङ्गौ द्वावावर्तौ द्वावुत्क्षेपौ द्वौ शङ्खावेका स्थपनी पञ्च सीमन्ताश्चत्वारि शृङ्गाटकान्येकोऽधिपतिरिति; तत्र तलहृदयेन्द्रबस्तिगुदस्तनरोहितानि मांसमर्माणि, नीलधमनीमातृकाशृङ्गाटकापाङ्गस्थपनीफणस्तनमूला-पलापापस्तम्भहृदयनाभिपार्श्वसन्धिबृहतीलोहिता-क्षोर्व्यः सिरामर्माणि, आणीविटपकक्षधरकूर्चकूर्च-शिरोबस्तिक्षिप्रांसविधुरोत्क्षेपाः स्नायुमर्माणि, कटीकतरुणे नितम्बांसफलकशङ्खास्त्वस्थिमर्माणि, जानुकूर्परसीमन्ताधिपतिगुल्फमणिबन्धकुकुन्दरावर्त-कृकाटिकाश्चेति सन्धिमर्माणि; परिणामानुसारेण मर्मणां प्रकाराः–सद्यःप्राणहराण्येकोनविंशतिः, कालान्तरप्राणहराणि त्रयस्त्रिंशत्, विशल्यघ्नानि त्रीणि, वैकल्यकराणि चतुश्चत्वारिंशत्, रुजाकरा-ण्यष्टौ; तत्र सद्यःप्राणहराणि सप्तरात्राभ्यन्तरान्त-

रान्मारयन्ति, कालान्तरप्राणहराणि पक्षान्मासाद्वा, तेष्वपि क्षिप्राणि कदाचिदाशु मारयन्ति, विशल्यप्राणहराणि च कदाचिदत्यभिहतानि मारयन्ति। तत्र सद्यःप्राणहरमन्ते विद्धं कालान्तरेण मारयति, कालान्तरप्राणहरमन्ते विद्धं वैकल्यमापादयति, विशल्यप्राणहरं च; वैकल्यकरं कालान्तरेण क्लेशयति, रुजां च करोति, रुजाकरमतीव्रवेदनं भवति (सुशा. ६.३-८, २३,२२) तत्र सद्यःप्राणहराण्याग्नेयानि, अग्निगुणेष्वाशु क्षीणेषु क्षपयन्ति। कालान्तरप्राणहराणि सौम्याग्नेयानि, अग्निगुणेष्वाशु क्षीणेषु क्रमेण च सोमगुणेषु कालान्तरेण क्षपयन्ति; विशल्यप्राणहराणि वायव्यानि, शल्यमुखावरुद्धो यावदन्तर्वायुस्तिष्ठति तावज्जीवति, उद्धृतमात्रे तु शल्ये मर्मस्थानाश्रितो वायुर्निष्क्रामति, तस्मात्सशल्यो जीवत्युद्धृतशल्यो म्रियते, पाकात्पतितशल्यो वा जीवति; वैकल्यकराणि सौम्यानि, सोमो हि स्थिरत्वाच्छैत्याच्च प्राणावलम्बनं करोति; रुजाकराण्यग्निवायुगुणभूयिष्ठानि, विशेषतश्च तौ रुजाकरौ; पाञ्चभौतिकीं च रुजामाहुरेके (सुशा. ६.१६). तेषां प्रधानमर्माणि—हृद्बस्तिशिरांसि, तन्मूलत्वाच्छरीरस्य (चसि. ९.३) मर्मविद्धलक्षणानि—देहप्रसुप्तिर्गुरुता संमोहः शीतकामिता स्वेदो मूर्च्छा वमिः श्वासः (असंशा. ७.२७) शस्त्रक्रियाकाले मर्मस्थानं परिवर्जनीयम् (सुशा. ६.३०) ये रोगा मर्मस्थाने भवन्ति, ते प्रायेण कृच्छ्रतमा भवन्ति (सुशा. ६.४३)

हृदयम् (चक्र. चचि २१.२६)

**(मर्म)—ग**—वि., मर्मणि गतः (अहसू. १.३०)

**—घट्टन**—न., लक्षण० हृदयमंथनम् (असंनि. ४.२५)

**—च्छिद्**—वि., प्राणायतनहृदयमर्मच्छिद् (मधुकोशः सुनि. १६.५४)

**—च्छेद**—पु., लक्षण० मर्मविद्धवत्पीडा (चचि. ३.८१; सुउ. ३९.८८; सुचि. २६.१२)

**—च्छेदन**—न., मर्मच्छेदः (असंनि. २.८६)

**—जात**—वि., मर्मण्युत्पन्नः (सुचि. १८.१४)

**—त्रय**—वि., त्रीणि प्रधानमर्माणि, शिरो हृदयं बस्तिश्च (चसू. २९.३)

**—संरोध**—पु., मर्मणां रोधः (चसू. १७.१११)

**—सदन**—न., मर्मस्थानम् (सुशा. ६.३०)

**—हत**—पु., मर्मसु हृदयादिषु हतः (सुचि. २.७८)

**मर्मरिका**—स्त्री., कर्णस्थसिरा० तद्व्यधोपद्रवाः—वेदना ज्वरो ग्रन्थयश्च (सुसू. १६.५)

**मर्मरी**—स्त्री., कर्णगतसिरा० (असंउ. १)

**मर्माभिघात**—पु., मर्माघातः (असंशा. ७.३६)

**मर्माश्रय**—मर्मस्थानम् (असंशा. ७.३६)

**मर्मोपघात**—पु., मर्माघातः (चचि. १२.६) द्र० 'मर्म'

**मर्मोपहासिन्**—वि., मर्म-व्यङ्गं, न्यूनं, तदुपहासकः (चसू. ७.५६)

**मर्यल**—पु., ऋषि० प्राचीनो रसाचार्यः (र. १९.७-९)

**मर्यादा**—स्त्री., सीमा (सुशा. ४.५)

**—विभक्त**—वि., समसीमान्यवस्थापितः (चइ. १.९)

**मर्श**—पु., नस्यभेदः (अहसू. २०.९-२१) द्र० 'नस्य'

**मल**—पु., त्याज्यांशः, किट्टस्वरूपः, शरीरस्याऽबाधकरः, तद्यथा—शरीरच्छिद्रेषूपदेहाः पृथग्जन्मानो बहिर्मुखाः परिपक्वाश्च धातवः, प्रकुपिताश्च वातपित्तश्लेष्माणो ये चान्येऽपि केचिच्छरीरे तिष्ठन्तो भावाः शरीरस्योपघातायोपपद्यन्ते, सर्वांस्तान्मले सञ्चक्ष्महे (चशा. ६.१७) द्र० 'किट्ट'

पुरीषम् (सुनि. ७.१७)

वातादिदोषः (चसू. २८.३१)

खनिज० लोहमलः शिलाजत्वादिः (चसू. १.७०)

न., भैषज्य० समुद्रफेनम् (सुउ. ११.८; ध. ३.१५४)

**—करी**—स्त्री., कफपित्तादिदोषवर्धकः कञ्चुकाख्यः पारददोषः (र. ११.२२)

**—क्षय**—पु., (परिव०) लक्षण० मलस्य क्षीणत्वम्, स देहपीडनो भवति (अहसू. ११.२५)

**—ग्रह**—पु., लक्षण० मलावरोधः (अहसू. १०.२२)

**—घ्न**—पु., वनस्पति० शाल्मलीकन्दः (रापरि. ७.४६)

**—ज**—वि., मलाज्जात इति (चवि. ७.९)

**—(जा)**—स्त्री., ग्रह० पूतनाग्रहः (का. चि.)

**—जित्**—वि., मलहरः (अहसू. ३.५२)

**—द्राविन्**—पु., वनस्पति० जयपालः, दन्तीबीजं (ध. १.२२७)

**—धरा**—स्त्री., शारीर० पुरीषधरा कला (सुशा. ४.१७)

**—नाशिनी**—स्त्री., वनस्पति० जातिपत्री (ध. ३.३३)

**—निग्रह**—पु., लक्षण० मलावरोधः (र. २१.१३०-३३)

**—पाचन**—वि., दोषपाचनम् (असंचि. १.२२-२३)

**—पू**—स्त्री., वनस्पति० काकोदुम्बरिका (चचि. १.६२; सुचि. ८.५०)

काष्ठोदुम्बरिका (ड. सुचि. ९.१५)

**—बन्ध**—पु., लक्षण० मलावरोधः (३.१०२)

-बन्धन-न., (परिव०) मलावरोधः ( र. २.५-६ )
-भूत-वि., मलस्वरूपः ( चशा. ६.१७ )
-शुद्धि-स्त्री., पुरीषोत्सर्जनम् ( र. २०.११५-१७ )
-संकर-पु., मलमिश्रणम् ( अहृसू. ५.४४ )
-संक्षय-पु. मलस्य क्षयः (चसू.७.४३)
मलस्य स्वमानादपि क्षयः ( चसू. ७.४३ )
-सङ्ग-पु., लक्षण० मलावरोधः ( अहृसू. १३.२४ )
-हन्तृ-पु., वनस्पति० शाल्मलीकन्दः ( रापरि. ७.४६ )
**मलय**-पु., देश० नन्दनवनम् ( सुसू. ६.२५-२९ )
पर्वत० अत्र 'चन्द्रमा' इति सोमविशेष उपलभ्यते हिमवत्यर्बुदे सह्ये महेन्द्रे मलयेऽपि तथैव ( सुचि. २९.२७ )
वनस्पति० पद्मकः ( ध. ३.८८ )
( **मलया** )-स्त्री., वनस्पति० बाकुची ( र. २०.२०५ )
-ज-न., वनस्पति० चन्दनम् (ध.३.१; सुउ.४७.५५)
श्वेतचन्दनम् ( र. १८.२११ )
-वासिन्-वि., मलयदेशस्थितः जनः ( चचि. ३०.३१ )
**मलयज**-न., वनस्पति० चन्दनम् (रा. १२.३)
**मलयू**-स्त्री., वनस्पति० काकोदुम्बरिका ( ध. ५.८८; असंचि. २२ )
**मलयोत्थ**-न., वनस्पति० कालीयकम् ( ध. ३.८ )
**मलयोद्भव**-न., वनस्पति० चन्दनम् ( रा. १२.१ )
**मलयोद्भूता**-वि., मलयपर्वतोद्भवा ( अहृसू. ५.१० )
**मलाक्तता**-स्त्री., लक्षण० पङ्कमलोपदिग्धता ( अरु. अहृसू. ७.११ )
**मलाधार**-पु., शारीर० मलस्याधारः, आशयः, स्थानम् ( सुनि. ३.२० )
**मलाधिक्य**-न., लक्षण० विंशतिश्लेष्मविकारेष्वेको विकारः, मलवृद्धिः ( चसू. २०.१७)
**मलानुलोमनी**-वि., वातादीन् स्वमार्गेस्थान् कुर्वाणा ( अहृसू. ६.२९ )
**मलापहा**-स्त्री., वनस्पति० कुलत्था ( ध. ३.१५६ )
**मलायतन**-न., मलस्थानम् ( सुसू. २४.९ )
**मलायन**-न., शारीर० मलस्थानं मलमार्गो वा ( चसू. ७.४२; अहृसू. २.३१ )
**मलारि**-पु., लवण० सर्वक्षारः ( रा. ६.५७ )
**मलिन**- वि., समलम् ( सुउ. ५४.३ )
कलुषम् (अरु.) नीलम् ( हे अहृस. २७.४१ )
खनिज० टङ्कणः ( रा. ६.२९ )

( **मलिना** )-स्त्री., वनस्पति० कण्टकारीभेदः द्र० 'कण्टकारी' ( ध. १.९९ )
**मलिनाङ्गी**-स्त्री.,वनस्पति०कण्टकारीभेदः,द्र०'कण्टकारी' ( ध. १.९९ )
**मलिनाहार**-पु., पूतिद्विष्टामेध्यपर्युषित आहारः ( सुउ. ६१.४ )
**मलीमस**-न., खनिज० पुष्पकासीसम् ( ध. ३.१२५ )
वि., मलिनम्
**मलोचितत्व**-न., मलस्य सहजसात्म्यता अभ्यस्तमलत्वम् ( अहृसू. ११.२५ )
**मलोत्पत्ति**-स्त्री., मलप्रादुर्भावः ( सुनि. ६.५ )
**मलोत्सर्ग**-पु., पुरीषमलस्य विसर्जनम् ( र. २८.८० )
**मलोद्भव**-न., खनिज० लोहकिट्टं मण्डूरम् (ध. ६.३५)
**मलोपघात**-पु., मलस्योपघातो नाम नाशः(चवि.७.१०)
**मलय**-न., नेत्ररोग० मलदिग्धाक्षिता ( चचि. १७.१२८ )
**मल्ल**-पु., शरावः ( र. ९.६८ )
पर्णम् ( र. २५.९८ )
( **मल्ली** )-स्त्री., वनस्पति० मल्लिका ( रा. १०.२२५ )
-मूषा-स्त्री., मूषा० शरावमूषा ( र. १७.९४,९८ )
**मल्लक**-पु., जलचरपक्षि० मलिनचञ्चुचरणहंसभेदः ( असंसू. ७.८१-८३ )
मत्स्य० ( का. धात्रीचि. )
-संपुट-पु., संपुट० शरावमुखयोः संपुटीकृतपात्रम् ( चचि. २६.१३६ ) पातव्यधूमनिर्गमार्थमूर्ध्वच्छिद्रसंपुटः ( चचि. १७.७९ )
**मल्लारिप्रा**-स्त्री., वनस्पति० पाची ( रापरि. १०.४६ )
**मल्लिक**-पु., जलचारिपक्षि० मलिनचञ्चुचरणहंसभेदः ( असंसू. ७.८१-८३ )
( **मल्लिका** )-स्त्री., वनस्पति० तद्गुणाः-कटुस्तिक्तोष्णा, चक्षुष्या, पित्तवातघ्नी, मुखरोगनेत्ररुजामुखपाककुष्ठविस्फोटकण्डूतिविषव्रणनाशिनी, च ( ध. ५.१३४ )
वृत्तमल्लिका ( रा. परि. १०.२३ )
मङ्गल्या ( रा. १२.४५ )
मेथिका ( ध. ६.१११ )
-पुष्प पु., वनस्पति० कुटज० ( ध. २.१३ )
न., शाक० तद्गुणाः-तिक्तं, पित्तनाशनं सौरभ्यात् ( सुसू. ४६.२८६ )
**मल्लिकाक्ष**-पु., शुक्लशबलो हंसभेदो मलिनचञ्चुचरणहंसभेदः ( ड. सुसू. ४६.१०५ )

**मशक**-पु., क्षुद्रकीट० ( चचि. २३.१५७ ) मक्षिका० ( सुसू. १८.२९ ) तद्दष्टलक्षणम्-कण्डूमान् मन्दवेदनः, शोथः ( मा विषरोग० ५४ ) सविषकीट० स च पञ्चविधः-सामुद्रः परिमण्डलो हस्तिमशकः, कृष्णः, पार्वतीयः, तैर्दष्टस्य तीव्रां कण्डूर्दंशशोफश्च, पार्वतीयस्तु कीटैः प्राणहरैस्तुल्यलक्षणः, तेन नखावकृष्टेऽत्यर्थं पिडका दाहपाका भवन्ति ( सुक. ८.३६ ) असाध्यमशकक्षतमिति पञ्चसु मशकेषु पार्वतीयकृतमसाध्यमाहुः ( चक. चचि. २३.१५७ ) तच्चिकित्सा-गोमूत्रयुक्ता कृष्णवल्मीकमृत्तिकालेपनम् ( सुक. ८.५५ ) क्षुद्ररोगभेदः रक्तदोषजविकारेष्वेकः तस्याऽधिष्ठानं तृतीया श्वेता नाम त्वक् (सुशा. ४.४) तच्चिकित्सा-प्रतिसारणीयः क्षार उपयुज्यते ( सुसू. ११.७ ) द्र० 'मषक'

**मष**-पु., क्षुद्ररोग० त्वक्स्थास्तिलाभाः कृष्णा अवेदना उन्नताश्च पिटिकाः ( असंउ. ३६ )

**( मषी )**-स्त्री., दग्धत्वात्कृष्णतां यातं द्रव्यम्, भस्म, कज्जलम् ( र. ५.२३३-३६ )

**मषक**-पु., बहिर्मार्गजः क्षुद्ररोग० ( चसू. ११.४९ ) माषवदुत्सन्नः पिटकाविशिष्टो रोगः ( सुनि. १३.४२ ) मषकं समुत्कृत्य क्षारेणाऽथवा वह्निना युक्त्या प्रदहेत् ( सुचि. २०.३२-३३ ) द्र० 'मशक'

**-लेख्यदल**-पु., वनस्पति० श्रीतालः ( रा. ९.९५ )

**मसार**-पु., रत्न० मरकतरत्नम् ( इन्दु. असंचि. ६ )

**मसी**-स्त्री., मस्म, रक्षा, दग्धाऽवशिष्टं कज्जलम् ( सुउ. ५१.३८ )
कज्जली ( र. १२.१२१-२२ )
कृष्णभस्म ( र. २३.२९ )

**मसूर**-पु., शिम्बीधान्य० ( चसू. २७,२८; अहसू. ६.१७ ) तद्गुणाः-मधुरः, शीतो, लघुः, संग्राही, वातरोगकरः, कफपित्तघ्नो, मूत्रकृच्छ्रघ्नः ( ध. ६.९५; रा. १६.१४९ ) स च द्विविधः-कृष्णः पाण्डुरश्च; तत्र कृष्णवर्णो मसूराभिधानाः, पाण्डुवर्णो मङ्गल्यकाऽभिधानाः (ड. सुसू. ४६.३०)
हिं.—मसूर.
म.—मसूरा, चणई.
गु.—मसुर.
बं.—मसूरी, मसुरिकलाय.

**( मसूरा )**-स्त्री., वनस्पति० त्रिवृच्छयामा (ध. १.२४३)

**( मसूरी )**-स्त्री., वनस्पति० श्यामाभेदः त्रिवृच्छयामा ( रा. ६.३६९ )

**-दलमात्रा**-वि., मसूरदलप्रमाणा ( सुउ. ७.३ )

**-दलमुखा**-वि., मसूरदलवन्मुखं यस्याः सा (शलाका) ( असंसू. ३४.१५ )

**-विदलप्रख्य**-वि., मसूरपर्णसंनिभः ( असंशा. ११.४५ )

**-विदला**-स्त्री., वनस्पति० श्यामलता ( चक. चक. ११.१४ )
निस्तुषमसूरा ( चचि. ७.१३७ )

**मसूरक**-पु., शिम्बीधान्य० मसूरः ( रा. १६.१४९ )

**मसूरिका**-स्त्री., रोग० ( चइ. ११.१४; सुनि. १३.३८ ) तत्संप्राप्तिः-शोणितसंसृष्टं पित्तं यदा त्वचं दूषयति तदा सर्वगात्रेषु मसूरमुद्गमाषतुल्याः पिडकाः करोति ( मधुकोश, मा. मसूरिका ) तत्पूर्वरूपाणि-ज्वरः, कण्डूर्गात्रभङ्गोऽरतिर्भ्रमो वैवर्ण्यं, नेत्ररोगः शोथः; तत्पञ्चभेदाः-वातजमसूरिकालक्षणानि-श्यावारुणा रूक्षास्तीव्रवेदनयाऽन्विताः कठिनाश्चिरपाकाश्च स्फोटा भवन्ति। सन्ध्यस्थिपर्वभेदः, कासः, कम्पोऽरतिः क्लमस्ताल्वोष्ठजिह्वाशोषस्तृष्णाऽरुचिः; पित्तजलक्षणानि-रक्ताः पीतसिताः सदाहास्तीव्रवेदनयाऽन्विताः, शीघ्रपाकाश्च स्फोटा भवन्ति। अङ्गमर्दो विड्भेदो दाहस्तृष्णाऽरुचिर्मुखपाकोऽक्षिरागस्तीव्रज्वरः, रक्तजमसूरिकालक्षणानि-पित्तजवल्लक्षणानि; कफजमसूरिकालक्षणानि-श्वेताः स्निग्धा भृशं स्थूलाः कण्डूरा मन्दवेदनाश्चिरपाकाः स्फोटा भवन्ति। अरुचिर्निद्राऽऽलस्यं स्तैमित्यं, शिरोरुग्गात्रगौरवं, हृल्लासः; सान्निपातिकमसूरिकालक्षणानि- चर्मदलमसूरिकालक्षणानि-नीलाश्चिपिटविस्तीर्णाः, मध्ये निम्नाः, महारुजश्चिरपाकाः पूतिस्रावाः, प्रभूताः स्फोटाः, कण्ठरोधाऽरुचिस्तम्भाऽरतिप्रलापाश्च ( मा. मसूरिका. )

**मसृण**-वि., गुण० चिक्कणः, श्लक्ष्णः ( र. २.५७ ) मृदुः ( र. ३.४९ )
न., खनिज० सुवर्णगैरिकम् ( ध. ३.१७० )

**मस्कर**-पु., वनस्पति० वंशः (रा. ७.२१६; ध.४.१३७)

**मस्त**-न., शारीर० मस्तकम् ( रा. २४.३१ )

**मस्तक**-न., शारीर० प्रत्यङ्गेष्वेकम्, शिरः (सुसू.३५.१२) शीर्षोर्ध्वभागः ( सुशा. ५.४ )

**-मज्जन्**-पु., तालादीनामग्रभागे या मज्जा भवति सा (सुसू. ४६.३१०) द्र० 'ताल, नालिकेर, खर्जूर'

**-शालिनी**-स्त्री., यशोदायिनी ( र. १२.१०४ ) गोलाकारा ( १२.१०४)

**मस्तिष्क**-पु., न., शारीर० शिरोगतस्नेहः ( चक्र. ) शिरसि मस्तिष्कस्याऽर्धाञ्जलिः प्रमाणम् (चशा. ७.१५) शिरःस्थो मज्जा (चक्र.चसि. ९.७९) मस्तुलुङ्गस्रुतावन्यजीवजान्मस्तिष्कान्खादेत् ( असंउ. ३१ )

**-स्नेह**-पु., ( परिव० ) उपक्रम० शिरोभ्यङ्गः ( सुचि. ३१.३ )

**मस्तिष्क्य**-न., शिरोबस्तिप्रकारः सच स्नेहाऽक्तपिचुप्लोतादिभिः क्रियते ( सुचि. ३.५४ )

**मस्तु**-न., दधिजलम् ( रा. १५.२४५ ) दध्न उपर्यच्छो भागः, 'उक्तं दधि द्विगुणवारियुतन्तु मस्तु' ( अहकोश० चसू. १३.६६; सुचि. ५.८ ) तद्गुणाः– अम्लं, कषायं, मधुरं, लघु, स्रोतोविशोधनं, बल्यं, प्रह्लादनं, प्रीणनं तृष्णाक्लमहरं कफवातापहं ह्लाद्मल-भेदनं भक्तच्छंदकृच्च ( सुसू. ४५.८१-८२ )

**-लुङ्ग**-पु., न., शारीर० शिरसो बलाधानं स्त्यानघृताकारमस्तुलुङ्गमुच्यते ( ड. सुचि. २.७० ) मज्जा० ( इन्दु. असंउ. २ ) कपालमज्जा ( इन्दु. असंउ. ३१ ) अर्धविलीन–घृताकारो मस्तकमज्जा ( सुसू. २३.१२ ) कपालपूरणम् ( इन्दु. असंउ. २९ )

**-लुङ्गक्षय**-पु., रोग० मस्तुलुङ्गक्षयात्तात्वस्थिवायुर्नामयेत्तेन च रुग्णः तृड्दैन्ययुक्तो भवति, तत्र मधुरकैः शृतं घृतं पानाभ्यञ्जनयोर्योज्यम्, शीताम्बुचुलकैरासेचनात्त्रासनं कार्यम् ( सुशा. १०.४२-४३ )

**-लुङ्गदर्शन**-न., मस्तकमज्जादर्शनम्, भिन्ने वा शिरःकपाले यत्र मस्तुलुङ्गदर्शनं तत्र व्रणस्यासाध्यत्वम् ( सुसू. २३.१२ )

**-लुङ्गस्राव**-पु., मस्तुलुङ्गस्य बहिरागमनम् ( सुसू. २३.१२ )

**-लुङ्गस्रुति**-स्त्री., मस्तुलुङ्गस्रावः, मस्तुलुङ्गस्रुतावन्यजीवजान्मस्तिष्कान्खादेत । शल्ये हृतेऽन्यस्मादङ्गात्स्नेहवर्ति निधापयेत् ( असंउ. ३१ )

**-लुङ्गोपम**-वि., मस्तुलुङ्गप्रतिमम् ( सुउ. ४०.१९ )

**मस्तुक**-न., दधिजलम् मस्तु ( असंसू. २५.७४ )

**मस्त्वारनालवसन**-न., मस्त्वारनालस्तिमितं वसनम् ( चक्र. चचि. २२.३७ )

**महत्**-पु., पञ्चविंशतितत्त्वेष्वेकम् ( सुशा. १.४ ) न., शारीर० हृदयम् ( चसू. ३०.३ )

**( महती )**-स्त्री., वनस्पति० बृहती ( ध. १.९३ ) वार्ताकी ( रा. ७.१२८ )

**( महत् )-तमस्**-न., मरणरूपं तमः ( चइ. ११.५ )

**-पञ्चमूल**-न., बृहत्पञ्चमूलम् ( चसू. २६.४८; ( सुसू. ३८.६८-६९ ) द्र० 'पञ्चमूल'

**-स्रोतस्**-न., शारीर० स्रोतो० महास्रोतः ( सुनि. १३.५५ )

**(महा)-जाली**-स्त्री., वनस्पति० आवर्तकी (रा.३.२९६)

**( महा )-कटभी**-स्त्री., वनस्पति० कटभी, श्वेता ( रापरि. ९.३८ )

**-कनकसुन्दर**-पु., पारदयोग० कान्तं काञ्चनं च पारदसमभागं जारयित्वा गन्धकं च जारयेत् । ततः भस्मीकृतं तं पारदं चतुर्निष्कमितं सुवर्णं च निष्कमितं कान्तपात्रे प्रक्षिप्य पञ्चाशन्निष्कमितं गन्धकं तत्राऽन्धमूषायां बदराग्निना जारयेत् । श्लक्ष्णीकृत्य मधुपूर्णे घृतभाण्डे निक्षिपेत् । अमुनैव प्रकारेण पथ्यानां षष्टिसंयुक्तं त्रिशतं साधयेत् यत्नात् । तद्गुणाः–पाण्डुग्रहणीप्रमेहकुष्ठशूलाऽऽमयादिनाशनः ( र. २७.७७-८८ )

**-कन्द**-पु., वनस्पति० राजपलाण्डुः द्र० 'पलाण्डु' ( रा. ७.१०४ ) लशुनभेदः ( ध. ४.६६ ) मुखालुः ( रापरि. ७.२२ ) न., चाणाख्यमूलम् ( रा. ७.५३ ) मूलकम् ( ध. ४.३३ )

**-कपिल**-पु., मूषिक० दुष्टलक्षणम्–रक्तजान् विकारान्कुरुते । ग्रन्थिमण्डलकर्णिकाः पिडकादारुणशोफाश्च ( सुक. ७.२५-३० )

**-कपोत**-पु., सर्प० दर्वीकरः ( सुक. ४.३४ (१) )

**-करम्भ**-पु., स्थावरविषभेदः, यस्य पत्रपुष्पफलानि च विषमयानि भवंति ( सुक. २.५; असंउ. ४० )

**-कल्क**-पु., पारदाभ्रककम्पिल्लकादिसाधितोऽयं दिव्यामृतरस इत्यपरपर्यायः, दृढदीपनपाचनः, श्वासकासक्षयपाण्डुरोगविनाशकः(र.२७.१३७-५४)

**-कल्याणकघृत**-न., घृत० स्थिरानतरजनीसारिवाप्रियङ्गुकानीलोत्पलादिभिः साधितमिदं बृंहणीयं, सन्निपातहरमुन्मादचिकित्सायामुपयुक्तम् ( चचि. ९.४२-४४; सुउ. ३९.२३८ )

**-कषाय**-पु., दशसंख्यावच्छिन्नस्यैककार्यकरणार्थोपात्तस्यौषधगणस्य संज्ञा ( चक्र. ) चरकमहर्षिनिर्दिष्टाः पञ्चाशन्महाकषायाः ( चसू. ४.८ )

–कषायसंग्रह–पु., महाकषायाणां संग्रहः (असंसू. १५.५१)

–काल–पु., रसमण्डपे पूजनीयो नन्दीभृङ्गीप्रभृती–नामेकतमः, देवता० ( र. ६.२५ )

(–काली)–स्त्री., वनस्पती० कृष्णकठिनसारमयो वृक्षः गृहधारणः कृष्णकार्पासी, कृष्णराजिका, बकायनः ( र. १०.७३-७६ )

–कुमुदा–स्त्री., वनस्पती० काश्मरी (रा. ९.१४८)

–कुम्भा–स्त्री., वनस्पती० कट्फलम् (ध. १.७३)

–कुष्ठ–न., रोग० कुष्ठभेदः ( सुनि. ५.९ ) सप्तभेदाः– कापालमौदुम्बरं, मण्डलमृष्यजिह्वं, पुण्डरीकं, सिध्मं, काकणञ्च ( चचि. ७.१४-२० ) द्र० 'कुष्ठ'

–कुष्ठचिकित्सित–न., अध्याय० (सुचि. १०.१)

–कुह–पु., कफजकृमि० ( असंनि. १४.५१ ) द्र० 'कृमि'

–कृष्ण–पु., सर्प० दर्वीकरः ( सुक. ४.३४(१) ) मूषिक० तद्दष्टलक्षणम्–क्रुद्ध पित्तजविकारान्कुरुते। दंशे ग्रन्थिमण्डलकर्णिकाः पिडकादारुणशोफाश्च (सुक. ७.२५-३०)

–कोशातकी–स्त्री., वनस्पति० धामार्गवभेदः ( ध. १.१९० )

–क्षार–पु., लवण० सर्वक्षारः ( रा. ६.५७ )

–खदिरघृत–न., घृत० खदिरशिंशपाकरंजारिष्ट-वेतसादिसिद्धमिदं कुष्ठविकारे उपयुक्तम् ( चचि. ७.१५२-५६ )

–गद–पु., अतत्त्वाऽभिनिवेशाख्यो व्याधिः द्र० 'अतत्त्वाभिनिवेश' ( चचि. १०.६० ) मारणात्मकत्वादसाध्यत्वाच्च महत्त्वं येषां ते गदाः– वातव्याधिः, प्रमेहः, कुष्ठमर्शो भगन्दरमश्मरी, मूढगर्भ इत्यष्टौ (सुसू. ३३.४) राजयक्ष्मा ( चचि. ८.२७ )

–गन्ध–पु., वनस्पति० कुटजः ( रा. ९.१९ ) न., हरिचन्दनम् ( रा. १२.१९ ) भैषज्य० बोलम् ( रा. ६.११७ )

–गन्धा–स्त्री., वनस्पति० केविका (रापरि. १०.३३)

–गन्धहस्तिन्–पु., योग० पत्रागरुमुस्तैलाचन्दन-स्पृक्कादिसाधितोऽयं विषादिहतेषु शमनार्थमुपदिष्टः ( चचि. २३.७७-८९ )

–गुण–वि., कायवाक्चित्तगुणवान् ( सुशा. ३.३५ ) सत्वं रजस्तमश्च ( असंसू. १ )



–गुद–पु., क्रिमि० कफजोऽयम् ( चसू. १९.४(९) ) द्र० 'कृमि'

–गुल्मा–स्त्री., वनस्पति० सोमवल्ली ( रापरि. ३.३; रापरि. ३.२९ )

–गुहा–स्त्री., वनस्पति० पृश्निपर्णी ( रा. ४.११७ )

–ग्रह–पु., राहुः ( असंउ. ७ )

–ग्रहोपगमन–न., चन्द्रसूर्यग्रहणम् ( चसू. ८.२४ )

–घृत–न., पुराणघृतम्, एकादशोत्तरशताधिकं वार्षिकघृतम्, तद्गुणाः–कफघ्नं, बल्यं, पवित्रं, मेध्यं, विशेषेण तिमिरापहं, सर्वभूतहरम् ( सुसू. ४५.१०९-१११ ) द्र० 'घृत'

–घोषा–स्त्री., वनस्पति० कर्कटशृङ्गी ( ध. १.८५ )

–चञ्चु–स्त्री., वनस्पति० बृहच्चञ्चुः (रापरि. ४.२०)

–चतुष्पाद–पु., अध्याय० ( चसू. १०.१ )

–चूत–पु., वनस्पति० राजाम्रः ( रा. ११.१० )

–च्छिद्रा–स्त्री., वनस्पति० महामेदा (रा. ५.१६४)

–छाय–पु., वनस्पति० वटः ( रा. ११.११३ )

–जटा–स्त्री., वनस्पति० रुद्रजटा ( रापरि. ३.२५ )

–जम्बू–पु., वनस्पति० जम्बूः ( ध. ५.८३; रा. ११.१३० )

–जव–वि., शीघ्रगति० ( अहृसू. १२.६ )

–जाति–स्त्री., वनस्पति० वासन्ती ( रा. १०.२३४ )

–जालिनि–स्त्री., वनस्पति० धामार्गवः ( चक. ४.३ ) पीतकोशातकी ( चक. चक. ३.१७ )

–जाली–स्त्री., वनस्पति० आवर्तकी ( ध. १.१९८ ) कोषातकी ( ध. १.१८९ )

–ज्वराङ्कुश–पु.,पारदयोग०पारदगंधकधत्तूरव्योषादि-साधितोऽयं सर्वदोषजज्वरघ्नः ( र. १२.४३-४६ )

–तालेश्वर–पु., पारदयोग० पारदतालताप्यशिला-दिभिः कृतोऽयं सर्वकुष्ठानां विनाशकः ( र. २०.१४४-४९ )

–तिक्त–पु., वनस्पति० महानिम्बः ( रा. ९.४६ ) किराततिक्तः ( ध. १.३५ )

–( तिक्ता )–स्त्री., वनस्पति० शङ्खिनी (रा. ३.३८०)

–तिक्तघृत–न., घृत० सप्तच्छदातिविषाशम्याक-तिक्तरोहिण्यादिसाधितमिदं पाण्डुरोगे उपयुक्तम् ( चचि. १६.४२ ) पैत्तिकेऽसृग्दरे प्रशस्तम् ( चचि. ३०.९९ )

–तिक्तकघृत–न., घृत० अपस्मारभगंदरोदरप्रदर-ज्वरघ्नम् (असंचि. २१) द्र० 'महातिक्तघृत'

–तिक्तकसर्पिस्–न., घृत० महातिक्तघृतम् ( सुचि. ९.८ )

**–तेजस्**–न., खनिज० पारदः ( रा. १३.४० )
**–त्रैफल**–न., घृत० मधुयष्टीकाकोलीद्वयव्याघ्रीकृष्णा-त्रिफलादिसिद्धमिदं दृष्टिविकारघ्नम् ( असंउ. १६ )
**–दण्डा**–स्त्री., वनस्पति० नागबला ( रा. ४.४२८ )
**–दशन**–वि., महादन्तः ( सुसू. ३५.४ )
**–दारु**–पु., वनस्पति० देवदारुः (ध. १.७६)
**–दूषक**–पु., धान्य० शालिः ( सुसू. ४६.४ )
**–देव**–पु., रसरत्नसमुच्चयकर्त्रा सिंहगुप्तसूनुना-ऽऽलोचितस्तन्त्रकर्ता ( र. १.५-९ )
**–द्रोण**–न., रत्न० श्वेतवैकुण्ठम् ( इन्दु. असंउ. ४२ )
**–( द्रोणा )**–स्त्री., वनस्पति० तद्गुणाः–कटुस्तिक्ता, मेध्या, पारदशोधनी, कफघ्नी, वातार्तिभूतनुद्, अग्निमान्द्यापहा ( रा. ५.५० )
हिं.—गोमा मधुपति.
म.—बहुफूल.
गु.—कुलांबुफूल.
बं.—दरुनाफूला.
ता.—तुम्बे कीरे.
**–(द्रोणी)**–स्त्री., वनस्पति० महाद्रोणा (रापरि.५.५०)
**–धन**–वि., विपुलधनशाली ( सुचि. ११.११ )
**–नल**–पु., वनस्पति० नलभेदः तद्गुणाः–अतिमधुर ईषत्कषायः शीतो रुच्यो दीपनो वृष्यः(ध.४.१४२; रा. ८.२२५)
**–निद्रा**–स्त्री., लक्षण० अतिनिद्रा ( असंनि. २.२३ ) ( चसू. ११.४८; असंसू. २२.१५ )
**–निम्न**–न., शारीर० कोष्ठः, महास्रोतः
**–निम्ब**–पु., वनस्पति० निम्बभेदः, तद्गुणाः–तिक्तः शीतः पित्तकफघ्नः कुष्ठरक्तविकारविषूचिकानाशकः ( ध. १.३१ )
हिं—महानिम्ब.
म.—बकाणा लिम्ब; विलायती निम्ब.
बं.—गोरानिम.
ता.—मलाय०हेम्बु.
फा.—ताक.
**–नील**–पु. न., रत्न० इन्द्रनीलम् ( असंसू. १२.१९-२१ )
वनस्पति० नीलभृङ्गराजः 'द्र० भृङ्गराज' (रा.४.२२)
तैल० वटप्ररोहपिण्डीतमूलत्वक्कृष्णसैर्यककेतकीस्तन-निर्यासादिसिद्धमिदं तैलं केशरञ्जकम् (र. ३०.५८-६१)
**(–नीला )**–स्त्री., वनस्पति० महाजम्बूः द्र० 'जम्बू' ( रा. ११.१३० )
गिरिकर्णी ( रा. ३.१२५ )
**(–नीली )**–स्त्री., वनस्पति० द्र० 'नीली' ( रा. ४.३५३ )
**–नीलघृत**–न., घृत० त्रिफलात्रिकटुसुरसामदयंतिका-ऽऽरग्वधादिसिद्धमिदं, भगन्दरकृम्यर्शोनाशकम् ( सुचि. ९.३४-३८ )
**–नीलतैल**–न., तैल० बैभीतकतैले आदित्यवल्ली-कृष्णसैरेयकसुरसमार्कबकाकमाच्यादिसाधितमिदं शिरोरोगेषु पाननस्यक्रियादिभिरुपयुज्यते ( चचि. १६.२६८-७५ )
**–पञ्चगव्यघृत**–न., घृत० पञ्चमूलद्वयत्रिफलारजनी-कुटजसप्तपर्णादिसिद्धमिदं अपस्मारविनाशनम् ( चचि. १०.१८-२४ )
**–पञ्चमूलासव**–पु., आसुत० अयं मण्डूकपर्ण्यादीनां शाकानामनुपानत्वेन विहितः ( सुसू. ४६.४३३ )
**–पञ्चाङ्गुल**–पु., वनस्पति० स्थूलैरण्डः द्र० 'एरण्ड' ( रा. ८.४४९ )
**–पत्र**–पु., वनस्पति० टिण्टुकः ( चक. चचि. १४.१२४ )
**–( पत्रा )**–स्त्री., वनस्पति० नागबला (रा. ४.४२७)
**–पद्म**–पु., रोग० विसर्पभेदः द्र० ' विसर्प ' ( असंउ. २ )
सर्प० दर्वीकरः ( सुक. ४.३४ ( १ )
**–पद्मतैल**–न., तैल० पद्मवेतसयष्टीमधुफेनिलापद्म-कादिसिद्धमिदं वातशोणिते ज्वरे च उपयुज्यते ( चचि. २९.११०,१३ )
**–पनस**–पु., सर्प० मण्डली ( सुक. ४.३४ ( २ )
**–पाणि**–वि., आजानुबाहुः ( सुसू. ३५.४ )
**–पाद्**–वि., उक्ताङ्गुलिप्रमाणात्किञ्चिदायततरपाद-युक्तः ( सुसू. ३५.४ )
**–पारेवत**–न., वनस्पति० पारेवतभेदः द्र० 'पारेवत' ( रा. ११.९० )
**–पार्श्व**–वि., उक्ताङ्गुलिप्रमाणाधिकपार्श्वयुक्तः ( सुसू. ३५.४ )
**–पालेवत**–न., वनस्पति० पारेवतभेदः द्र० 'पारेवत' (ध. ५.६६)
**–पाशुपत**–पु., वनस्पति० वसुकः (ध. ४.१९)
**–पिण्डिन्**–पु., वनस्पति० कषाय उष्णस्त्रिदोषशमन-श्रमैरोगरक्तदोषजित् (रा. ९.३३)
**–पिण्डीतक**–पु., वनस्पति० महापिण्डी (रापरि. ९.३३) द्र० ' महापिण्डिन् ' वाराहमदनः (रापरि. ८.२८)

**–पीलु**–पु., वनस्पति० बृहत्पीलुः द्र० 'पीलु' (रा. ११.६३)

**–पुट**–न., पुट० द्विहस्तनिम्ने द्विहस्तचतुरस्रे खाते–कुण्डे–वनोपलसहस्रेण पूरणं कुर्यात्, तत्र क्रौञ्च्यां प्रयत्नेन रुद्धं पुटनौषधं पिष्टिकोपरि निक्षिपेत्। अनन्तरं वनोपलसहस्रार्धं क्रौञ्चिकोपरि विन्यसेत् वह्निं च प्रज्वालयेत् (र. १०.५२-५३)

**–पुरुषदन्ता**–स्त्री., वनस्पति० शतावरी (चचि. ९.४६)
महामेदा (इन्दुः, असंउ. ९)
सहस्रवीर्या, शतावरीभेदः (ध. १.२९३)

**–पुरुषदन्तिका**–स्त्री., वनस्पति० शतावरीभेदः, सहस्रवीर्या द्र० 'शतावरी' (रा. ४.४४१)

**–पुष्प**–न. वनस्पति० कोविदारः (रा. १०.२९४)
कफजक्रमि० दर्भपुष्पमहापुष्पप्रभृतीनां षण्णामेकतमः (सुउ. ५४.१२)

**–पृष्ठ**–वि., उक्ताङ्गुलिप्रमाणात्किञ्चिदधिकपृष्ठयुक्तः (सुसू. ३५.४)

**–पैशाचिकघृत**–न., घृत० जटिलाकेशीपूतनामर्कटीवचात्रायमाणादिसाधितमिदं उन्मादग्रहापस्मारनाशनंबुद्धिस्मृतिकरं च (चचि. ९.४५-४८)

**–प्रकृति**–स्त्री., सत्वरजस्तमःकृतः स्वभावः, चित्तप्रकृतिः (ड. सुशा. ४.९९)

**–प्रसवशक्तित्व**–न., अतिप्रजोत्पादनसामर्थ्यम् इदं कौबेर-कायलक्षणम् (सुशा. ४.८४)

**–फल**–पु., वनस्पति० बिल्वः (ध. १.१०६)
पीलुभेदः बृहत्पीलुः, द्र० 'पीलु' (रा. ११.६३)

**(–फला)**–वि., शारीर० हृदयमूला धमनी (चसू. ३०.३)
स्त्री., वनस्पति० कोशातकी (ध. १.१९०)
नीलिनी (रा. ४.३५०)
इन्द्रवारुणी (ध. १.२५०)
नागबला (रा. ४.४२७)
क्षीरतुम्बी (रा. ७.२३८)
कटुतुम्बी (ध. १.१७०)
जम्बूभेदः महाजम्बूः, द्र० 'जम्बू' (रा. ११.१३०; ध. ५.८३)
मधुकर्कटी (ध. ५.३१)
मातुलुङ्गभेदः, वनबीजपूरकं, द्र० 'मातुलुङ्ग' (रा. ११.३४)

**–बन्ध**–पु., पारदबन्ध० (र. ११.९३) 'द्र० पारद'

**–बभ्रु**–पु., प्राणि०नकुलभेदः बिलेशयवर्गीयाणामेकतमः (सुसू. ४६.७८)

**–बल**–पु., वनस्पति० वंशः (रा. ७.२१५)
धन्वनः (रा. परि. ९.२०)
तमालः (रा. परि. ९.१५)
प्लक्षः (रा. ११.१२५)

**(–बला)**–स्त्री., वनस्पति० नीलिनी (रा. ४.३५१)
वत्सादनी (रापरि. ३.३३)
बला० तद्गुणाः–शुक्रवृद्धिकरी, बल्या, वातघ्नी, हृद्रोगाऽर्शःशोफविषमज्वरनाशिनी (ध. १.२८२)
हिं.—खिरिटी.
**म.—सादेव; चिकणाभेद.**
गु.—बाणमेथी.
ता.—अथिबल्लाचेडी.
फा.—शाम्बीडेबारी.

**–बलबला**–स्त्री., वनस्पति० बलाभेदः (ध. १.२८७)

**–भद्रा**–स्त्री., वनस्पति० काश्मरी (रा. ९.१४७)

**–भल्लाततैल**–न., तैल० इदं सर्वकुष्ठानि नाशयति (र. २०.१६३-१६५)

**–भूत**–न., प्रकृतेर्विकार० विशेषगुणयुक्तमाकाशादिद्रव्यम्, खं वायुरग्निरापः पृथिवी–इत्येतानि पञ्च महाभूतानि तद्गुणाः–शब्दस्पर्शरूपरसगन्धाश्च (चशा. १.२७) तत्र अप्रतिघातचलत्वौष्ण्यद्रवत्वकाठिन्यानि यथाक्रमं लिङ्गानि ज्ञेयानि (असंशा. ५)

**–भूतराव**–न., घृत० नतमधुककरञ्जलाक्षापटोलीसमङ्गादिसिद्धमिदं ग्रहोन्मादकुष्ठज्वरनाशनम् (असंउ.८)

**–भूतविकारप्रकृति**–स्त्री., महाभूतविकाराणां स्वभावो दोषप्रकृतिहेतुः (चवि. ८.९५)

**–भूताग्नि**–पु., भूताग्निः (असंशा. ६.५९)

**–भृङ्ग**–पु., वनस्पति० नीलभृङ्गराजः, द्र० 'भृङ्गराज' (रा. ४.२२)

**–भेरी**–स्त्री., वनस्पति० वचा (र. ३०.५७)
इन्द्रवारुणी (र. ३०.५७)

**–मन्दार**–पु., वनस्पति० अर्कः (र. १२.४८)

**–मर्मन्**–न., मर्म० शिरोहृदयबस्तय इति त्रीणि महामर्माणि (चसि. ९.७) मूर्धजिह्वबन्धनकण्ठहृदयनाभिबस्तिगुदा इति सप्त महामर्माणि (असंशा. ५)

**–मांसी**–स्त्री., वनस्पति० रुदन्ती (रापरि. ५.१५)

**–मायूरघृत**–न., सिद्धघृत० जीवन्तीत्रिफलामेदामृद्विकापरूषकादिसिद्धं पक्षपित्तान्त्रादिवर्जितमयूरा-

वयवेषु साधितमिदम् अखिलशिरोरोगकासश्वास-मन्याग्रहपृष्ठग्रहशोषशुक्रदोषाऽऽदिविकारेषु नस्य-पानाऽभ्यङ्गबस्त्यादिभिरुपयुक्तम् ( चचि.२६.१६७-१७४ )

**-मायूरी**-स्त्री., विद्या० ( असंउ. १ ) चतुःसहस्री ( इन्दु: असंउ. १ )

**-मार्तण्डतैल**-न., तैलं० निम्बाङ्कोलवन्हिराजवृक्षा-क्षस्नुगादिसाधितमिदं कुष्ठकण्डूकृमिनाशनम् ( र. २०.१६९-७२ )

**-मीन**-पु., सामुद्रमत्स्य० ( सुसू. ४६.११८ )

**-मुण्डनिका**-स्त्री., वनस्पति० महामुण्डी ( रा. ५.२२० )

**-मुण्डी**-स्त्री., वनस्पति० स्वनामख्याता, तद्गुणाः-तिक्तोष्णा, स्वरकृद्रोचनी, मेहकृद्रसायनी' च ( रा. ५.२२२ )

हिं.—मुण्डी.
**म.—बरसवोडी, बोंडथरा.**
गु.—मुण्डी.
बं.—मुण्डी.
ता.—कोट्टक.

**-मुनि**-पु., ऋषि० राजर्षिप्रमुखो धन्वन्तरिः ( सुसू. ४६.५३२)

वनस्पति० तुम्बरुः (ध. २.४२)

**-मूल**-वि., गम्भीरमूलम् ( सुनि. ९.५ )

**(-मूला )**-वि., महद् नाम हृदयं मूलं यस्याः, सा धमनी ( चसू. ३०.३ )

स्त्री., हिध्मा० द्र० 'हिक्का' ( असंनि. ४.२६ )

**-मूषा**- स्त्री., मूषा० तले कूर्परसन्ध्याकारा क्रमेणो-परिभागे विस्तृता स्थूलवृन्ताकवच्च स्थूला मूषा, अयोऽभ्रकसत्त्वादेर्द्रावणे पुटे चोपयुक्ता ( र. १०.३० )

**-मृग**-पु., मृगसमूह० वराहमहिषन्यङ्कुरुरुरोहित-वारणसृमरश्रमरखड्गगवयाश्चेति दश महामृगाः ( अहृसू. ६.५१ ) मांसगुणः-शीतवीर्यः (असंसू. ७.९६) न्यङ्कुः महामृगेषु श्रेष्ठः (असंसू. ७)

**-मेदा**-स्त्री., वनस्पति० मेदाभेदः, स्वादुः, शीता, कफपित्तवर्धनी, वातघ्नी, दाहरक्तपित्तज्वरक्षय-नाशिनी (ध., १.१२७; चसू. ४.९) द्र० 'मेदा'

**-मोह**-पु., लक्षण० जन्ममरणकालिकः अतिशयेन संज्ञानाशः ( चनि. १.३५ )

**-यमलपत्रक**-पु., वनस्पति० कोविदारः ( ध. १.१९६ )

**-योगेश्वरी**-स्त्री., वनस्पति० बलामोटा ( धपरि. ४.३ )

**-योनि**-स्त्री., योनिरोग० तत्संप्राप्तिः-दुःखशय्यायां मैथुनात्कुपितो वायुर्योन्यास्यं गर्भकोष्ठं च विष्टभ्य योनिं विवृतां स्थानस्रस्तां वातिक्याख्यव्यापदमिव दुःखितामुत्सन्नमांसां महारुजां च कुरुते ( चचि.३०.३५-३७; सुउ. ३८.१९; असंउ. ३८ )

**-रक्त**-न., भैषज्य० प्रवालम् ( ध. ६.६४ )

**-रजत**-न., खनिज० सुवर्णम् ( रा. १३.१ )

**-रत्न**-न., रत्नवर्ग० पञ्चमहारत्नानि-पद्मरागमरकत-वज्रेन्द्रनीलपुष्परागाश्चेति ( र. ४.५ )

**-रस**-पु., रसशास्त्रे श्रेष्ठत्वेन स्वीकृतान्यष्टखनि-जानि द्रव्याणि, अधस्तनोक्तानि द्रव्याणि महा-रसत्वेनाद्यतने काले संमतानि-अभ्रं, वैक्रान्तं, माक्षीकं, विमलं, सस्यकमद्रिजं, चपलो रसकश्चेति, महारसत्वेन राजनिघण्टौ वर्णितानि-दरदः, पारदः, सस्यो वैक्रान्तमभ्रकं, माक्षिकं विमलं चेति ( रा. २२,१; र. ६.४३ )

पु., न., खनिज० पारदः ( ध. ६.३७ )

न., असुत० काञ्जिकम् ( ध. ६.२४९ )

**-राजगिरि**-पु., वनस्पति० आरग्वधः (र. ५.१७७)

**-राजचूत**-पु., वनस्पति० राजाम्रः ( रा. ११.९ )

**-राजद्रुम**-पु., वनस्पति० आरग्वधः ( रा. ९.३३४)

**-राजफल**-पु., वनस्पति० राजाम्रः ( रा. ११.१० )

**-राजाम्रक**-पु., वनस्पति० राजाम्रः ( रा. ११.९ )

**-राष्ट्र**-न., महद्राष्ट्रम्, कुरुक्षेत्रात्पूर्वदेश० अत्र मगधासु महाराष्ट्रमिति मगधस्य महाराष्ट्रत्वेन निर्देशः कौशल्यदेशस्योल्लेखश्चास्ति ( का उपोद्घात काखिल )

**-( राष्ट्री )**-स्त्री., वनस्पति० तद्गुणाः-कटुः कषाया, तीक्ष्णा, मुखशोधनी, व्रणकीटादिदोषघ्नी रसदोष-निबर्हणी ( रापरि. ४ )

जलपिप्पलिका ( र., ११.५२-५७ )

कण्टकारी ( र., ११.५२-५७ )

**-राष्ट्रिक**-न., वनस्पति० जलपिप्पलिका(र.,२४.३६) महाबृहती ( र. २४.३६ )

**(-राष्ट्रिका )**-स्त्री., वनस्पति० जलपिप्पलिका(र.२४.३६) महाबृहती ( र., २४.३६ )

**-रोग**-पु., रोगसमूह० वातव्याधिरश्मरीकुष्ठं प्रमेह उदरं, भगन्दरोऽर्शांसि ग्रहणी चेत्यष्टौ रोगा महारोगाः प्रकीर्त्यन्ते ( असंनि. ८.३२ )

–रोगाध्याय–पु., अध्यायसंज्ञा० ( चसू. २०.१ )
–ललाट–वि., उक्ताङ्गुलिप्रमाणात्किञ्चिदधिकललाटयुक्तः ( सुसू. ३५.४ )
–लोह्–न., खनिज० कान्तलोहम् ( रा. १३.२७ )
–वज्रकतैल–न., तैल० सिद्धार्थककरञ्जद्वयहरिद्राद्वयरसाञ्जनादिसिद्धमिदं, कुष्ठे उपयुज्यते ( सुचि. ९.५७-६४ )
–वज्रकसर्पिस्–न., घृत० वासामृतानिम्बवरापटोलादिसाधितमिदं, कुष्ठश्वित्रप्लीहवध्माऽश्मगुल्मघ्नम् ( असंचि. २१ )
–वदन–वि., उक्ताङ्गुलिप्रमाणात्किञ्चिदधिकवदनयुक्तः ( सुसू. ३५.४ )
–वर्षाभू–पु., वनस्पति० पुनर्नवाभेदः, द्र० 'पुनर्नवा' ( ध.१.२७६ )
–वल्ली–स्त्री., वनस्पति० कट्टी ( रापरि. ३.४३ )
क्षीरतुम्बी ( रा. ७.२३९ )
माधवीलता, श्वेतालाबुः ( असंचि. २३ )
कटुवल्लिका ( असंचि. २३ )
–वसु–न., खनिज० रौप्यम् ( ध. ६.६ )
–वात–पु., रोग० वातव्याधिरयं, धावनप्रलापाऽऽक्षेपकादिवातविकाराः ( र. १२.६४-७३ )
–वातव्याधिचिकित्सित–न., अध्यायसंज्ञा० ( सुचि. ५.१ )
–विकार–पु., रोगसमूह० ( असंसू. २०.१८ ) द्र० 'महारोग'
–विद्या–स्त्री., पारदयोग० पारदाभ्रनागकान्तादिसाधिता इयं प्रमेहनाशिनी ( र. १७.४३-४७ )
–विष–पु., प्राणि० गोधा ( ध. परि. ६.३९ )
न., विष० कालकूटशृङ्ग्यादिमारकं विषम् ( र. २९.१ )
कन्दविष० तल्लक्षणम्, महाविषेण हृदये ग्रन्थिशूलोद्गमौ भृशं भवतः ( सुक.२.५-१७, असंउ. ४० ) द्र० 'कन्दविष'
–विषवृश्चिकदंश–पु., तीक्ष्णवृश्चिकदंशः द्र० 'वृश्चिक' ( असंउ. ४३ )
–वीर–पु., वनस्पति० एकवीरः ( रापरि. ८.८ )
करवीरः ( रा. १०.१ )
पारदयोग० पारदतुत्थविषतीक्ष्णगंधमौक्तिकादिसाधितोऽयं ग्रहणीक्षयादिहरः ( र. १४.७१-७४ )
–वीर्य–पु., वनस्पति० गृष्टिः, वाराहीकन्दः ( रा., ७. १३१ )
(–वीर्या )–स्त्री., वनस्पति० सहस्रवीर्या, शतावरीभेदः द्र० 'शतावरी' ( रा., ४.४४२ )
–वृक्ष–पु., वनस्पति० स्नुही ( चवि. ८.१३६; ध. १.२३५ )
पीलुभेदः बृहत्पीलुः, द्र० 'पीलु' ( रा., ११.६३ )
–वृक्षक्षीर–न., स्नुह्याः क्षीरम् ( सुशा. १०.२१ )
–वृक्षपयस्–न., स्नुहीक्षीरम् ( सुउ. ४१.४८ )
–वेगवती–स्त्री., वनस्पति० सोमसमवीर्या महौषधिः अस्या उत्पत्तिस्थानम्, नलसेतुर्मलयश्च ( सुचि. ३०.५-३६ )
–व्याहृति–स्त्री., शब्दसमुदाय० 'भूः, भुवः, स्वः' इति ( सुसू. २.४ )
–व्रीहि–पु., धान्य० द्र० 'व्रीहि' ( चनि. ४.५; ( ध. ६७२ )
–शङ्ख–पु., भैषज्य० बृहच्छङ्खनाभिः ( र. २५.१९ )
शारीर० मनुष्यकपालम् ( र. २५.१९ )
–शण–पु., वनस्पति० शणपुष्पी ( ध. १.२०० )
–शतावरी–स्त्री., वनस्पति० स्वनामख्याता सहस्रवीर्या, तद्गुणाः–मधुरा, तिक्ता, शीता, वृष्या, त्रिदोषघ्नी, महाश्रेष्ठरसायनी ( रा. ४.४४१ )
हिं.—शतावर.
म.—शतमूळी, आसवली.
गु.—शतावरी.
बं.—शतमूली.
ता.—तण्णीर, चतावरि.
फा.—गुर्जदस्ति.
–शब्दा–वि., लक्षण० महान्तं शब्दं कुर्वाणा (हिध्मा) ( असंनि. ४.२६ )
–शर–पु., वनस्पति० द्र० 'शर' ( रा. ८.२१२ )
–शाखा–स्त्री., वनस्पति० नागबला ( रा. ४.४२७ )
–शालि–स्त्री., धान्य० शालिवर्गे एकः शालिः द्र० 'शालि' ( चसू. २७.८; सुसू. ४६.४; ध. ६.६९-७१ ) स्थूलशालिः ( रा. १६.९० )
व्रीहिः ( रा. १६.१०५ )
–शिम्बी–स्त्री., वनस्पति० असिशिम्बी ( रापरि. ७.९७ )
–शिरा–स्त्री., सर्प० दर्वीकरभेदः ( सुक. ४.३४(१) )
–शुण्डी–स्त्री., वनस्पति० हस्तिशुण्डी ( रापरि. ५.२० )
–शुभ्र–न., खनिज० रौप्यम् ( रा. १३.७ )
–शूक–पु., धान्य० शालिभेदः द्र० 'शालि' ( सुसू. ४६.४ )

-शृङ्ग-पु., पशु० अष्टपादः, शरभः ( ध.परि.६.३६; २९३ )
-शौण्डी-स्त्री., वनस्पति० कटभी ( रापरि. ९.३८ )
-शौषिर-पु., दन्तमूलगतरोगः, दन्तमांसस्य सर्वदोषजश्चायं सप्तरात्रान्मारयति। अस्मिन् वेष्टेभ्यो दन्ताश्चलन्ति, ताल्वोष्ठदन्ता अप्यवदीर्यन्ते, दन्तमांसानि पच्यन्ते, मुखं च परिपीड्यते ( सुनि. १६.१९-२० )
-श्यामा-स्त्री., वनस्पति० वृद्धदारुकः ( सुसू. ३८.२९-३० )
शिंशपा ( ध. ५.१२१ )
-श्रावणिका-स्त्री., वनस्पति० महामुण्डी ( ध. १.१६०; रा. ५.२१९ )
-श्रावणी-स्त्री., वनस्पति० अलम्बुषा ( चक्र. ) शीतपुष्पा ( चचि. १(४).६ ) सोमसमवीर्या महौषधिः ( सुचि. ३०.५ )
बृहन्मुण्डितिका ( चक्र. चचि. २८.१६० )
-श्वास-पु., ( परिव० ) रोग० श्वासभेदः ( चचि. १७.४६-४८; सुउ. ५१.१२ ) द्र० 'श्वास'
-श्वेता-स्त्री., वनस्पति० गिरिकर्णी ( सुसू. ३८.१६-१७; ध. ४.८५; असंउ. ४ )
कटभी ( चसू. ४.१३; रापरि.९.३८)
वन्ध्याकर्कोटिका ( सुसू. ३८.१६-१७ )
-षष्टिक-पु., षष्टिकभेदः, द्र० 'षष्टिक' (सुसू.४६.८)
-समङ्गा-स्त्री., वनस्पति० महाबला ( रा. ४.४३२; ध. १.२८० )
-सरस्वतीचूर्ण-न., योग० अश्वगंधाजमोदावचाकुष्ठादिसाधितमिदं चूर्णं मूकत्वं, बुद्धिजाड्यं च हरति ( र. २४.७१-७३ )
-सर्ज-पु., वनस्पति० असनः ( ध. ५.१२५ )
पनस ( रा परि. ११.९ )
-सर्प-पु., सर्प० दर्वीकरभेदः ( सुक. ४.३४ (१) )
-सह- वनस्पति० कुब्जकः ( ध., ५.१४६ )
-( सहा )-स्त्री., वनस्पति कुब्जकः ( ध., ५.१४६ )
मुद्गपर्णी ( चक. ४.१६ )
माषपर्णी ( सुसू.३३.४-५; ध. १.१८६ )
राजतरणी ( रा. १०.२४६ )
-सार-पु., वनस्पति० खदिरभेदः विट्खदिरः, द्र० 'खदिर' ( रा., ८.३८ )
-सुगन्ध-पु., योग० प्रपौण्डरीकसरलदेवदारुकुटन्नटादिपञ्चाशीत्यौषधिसिद्धोऽयं सर्वविषहरः ( असंउ. ४७ )
-( सुगन्धा )-स्त्री., वनस्पति० रास्ना ( इन्दु ) ( असंउ. ४५ )
उत्पलसारिवा ( ड. ) सर्पसुगन्धा (ड.सुउ.२६.४०)
नाकुली ( ध. ४.१०५ )
-सुगन्धि-पु., योग० चंदनागरुकुष्ठतगरतिलपर्णिकादिसिद्धोऽयं, सर्वविषे उपयुक्तः ( सुक. १.७५-७७; सुक. ६.१४-२७ )
-सुषिर-पु., दन्तरोग० सुषिरे वर्तमानः शोफः संनिपातज्वरयुक्तः सपूयरुधिरस्रावी विश्लिष्टदन्तबन्धनो नाम्ना महासुषिर इत्युक्तः(असंउ.२५)
-सेना-स्त्री., ग्रहमातृ० ( असंउ. ४ )
-सोम-सोम० ( सुचि. २९.६ ) द्र० 'सोम'
-स्कन्ध-वि., उक्ताङ्गुलिप्रमाणात्किञ्चिदधिकस्कन्धयुक्तः महास्कन्धत्वमिदं दीर्घायुर्लक्षणानामेकतमं ज्ञेयम् ( सुसू. ३.५४ )
(-स्कन्धा)-स्त्री., वनस्पती० जम्बूः (ध. ५.८३)
-स्तनाग्र-वि., विशालस्तनाग्रः (सुसू. ३५.४)
-स्नेह-पु., स्नेहचतुष्टयम्, भूरिस्नेहवद्द्रव्यम्, घृततैलवसामज्जाख्याश्चत्वारो महास्नेहाः (चसू. १.७५; अहसू. १६.४)
-स्फिच्-वि., महती स्फिक् कटिपश्चाद्भागो यस्य सः (शुक्रसारपुरुषः) (चवि. ८.१०९)
-स्रोतस्-न., शारीर० कोष्ठः ( चवि. ५.८ )
-स्वेद-पु., लक्षण० अतिस्वेदः (असंनि. २.२४)
-हिक्का-स्त्री., रोग० हिक्काभेदः, तत्संप्राप्तिः-अनिलः सकफः प्राणोदकान्नवाहीनि स्रोतांसि मर्माणि संरुध्य हिक्कां करोति। तल्लक्षणानि-उच्चैर्घोषवतीं भृशं हिक्कां करोति। ऊष्माणं संरुध्य संज्ञां मुष्णाति, स्तम्भं जनयति, अन्नपानानां मार्गं रुणद्धि, उपहतस्मृतिः, साश्रुविप्लुतनेत्रः, स्तब्धशङ्खच्युतभ्रूसक्तजल्पप्रलापः, अशान्तचित्तः ( चचि. १७.२२-२६ ) वेगेन देहमायम्य घोषयति सर्वगात्रप्रकम्पिनी अतितृषाकरी च (सुउ. ५०.१४) सा महामूला, महावेगा, महाशब्दा, महाबला, सद्यःप्राणहरा च विद्यते ( चचि. १७.२६ ) द्र० 'हिक्का'
महागद-पु., योग० त्रिवृत्विशल्यामधुकहरिद्रादिसिद्धोऽयं विषघ्नः ( सुक.५.६१-६३ )
महाङ्ग-पु., वनस्पति० गोक्षुरः ( रा. ३.१३० )
चित्रकः ( रा. ६.१२७ )
महात्मन्-वि., राजसदृशः महापुरुषः (सुसू. ४६.५३२)

**महात्यय**–वि., गम्भीरः ( ड. सुउ. ३९.१२४ )
**महात्ययिकत्व**–न., शीघ्रविनाशकारित्वम् (सुनि. ६.८)
**महाद्रि**–पु., वनस्पति० आरग्वधः (रा.९.३३४)
**महानन्दा**–स्त्री., आसुत० सुरा ( रा.१४.३०३-२५४ ) वनस्पति० आरामशीतला ( रापरि. १०.५२ )
**महानस**–न., पाकशाला रसवती इति लोके, ( सुसू. ४६.४५३ ) तच्च आप्तैराश्रितमसंकटं शुचि स्यात् । तत्राऽऽप्तैर्गुणसंपन्नं, भक्ष्यं, सुसंस्कृतमन्नं सुसंगुप्तं शुचौ देशे स्थापयेत् । तच्च प्रशस्तदिग्देश-कृतं, शुचिभाण्डं, महच्छुचि, सजालकं, गवाक्षाढ्य-माप्तवर्गनिषेवितं, सवितानं, विकक्षसृष्टसंसृष्टं, कृतार्चनं. परीक्षितस्त्रीपुरुषं भवेत् ( सुक. १.१२-१३ ) तत्र कुलीनधार्मिकत्वा-दिभिर्युक्तं, वैद्यगुणान्वितमध्यक्षं नियुञ्जीत ( सुक. १.१४ )
**महाभिष्यन्दिन्**–वि., अतीवाभिष्यन्दकारी, तद्यथा–ये मृगाश्च विहङ्गाश्चाऽतीवाऽऽसन्नसलिया ग्रामा-सन्नगृहाः समीपोदकगोचराश्च ते (सुसू. ४६.९२)
**महाभ्रसत्व**–न., पारदयोग० कृष्णाभ्रकधान्याभ्रभृङ्गा-म्बुतुत्थकपारदादिसिद्धमिदं अखिलार्तिनुत् ( र. २७.६७-७० )
**महामय**–पु., महारोगाः ते च वातव्याध्यश्मरीकुष्ठ-प्रमेहादयोऽष्टौ ( र. १९.९-१३ )
**महामोद**–पु., वनस्पति० कुन्दः ( रा. १०.२५६ )
**महारम्भ**–वि., महद्भिर्बलवद्भिः पूर्वरूपरूपैर्युक्तः ( अरु ) तीव्रसंरम्भः ( हे. अहृसू. १२.५८ ). न., लवण० साम्भरलवणम् ( रा.६.४७ )
**महारिष्ट**–पु., वनस्पति० महानिम्बः ( रा. ९.४८)
**महार्ह**–न., वनस्पति० चन्दनम् ( ध. ३.१ )
**महावरोह**–पु., वनस्पति० प्लक्षः ( रा. ११.१२६ )
**महाशना**–स्त्री., वनस्पति० महाशतावरी (रा. ४.४४२)
**महाहव**–पु., महासंग्रामः (इन्दु. असंउ. ७)
**महाहिगन्धा**–स्त्री., वनस्पति० नाकुली ( रा. ७.१५४ )
**महिला**–स्त्री., वनस्पति० रेणुका ( रा. ६.९९ )
**महिष**–पु., पशु० महामृगजातीयाऽऽनूपपशुः (चसू. २७.३९) तन्मांसगुणाः–तिक्तं, मधुरमुष्णं, स्निग्धं, गुरु, निद्राकरं, शुक्रलं, बल्यं, तर्पणं, वृष्यं-मांसदार्ढ्यकरं, पित्तघ्नम् ( ध. ६.४०१ ) स्तन्य वर्धनम् ( सुसू. ४६.९८ ) शालिवर्गे एकः, द्र० 'शालि' ( सुसू. ४६.४ )
 –**प्लीहन्**–पु., भैषज्य० भक्षणादिकर्मद्वारा नेत्ररोगे-षूपयुज्यते ( असंउ. १६ )
 –**यकृत्**–न., भैषज्य० भक्षणादिकर्मद्वारा नेत्ररोगे-षूपयुज्यते ( असंउ. १३ )
 –**वल्ली**–स्त्री., वनस्पति० सौम्या ( रापरि. ३.३० )
 –**वसा**–स्त्री., भैषज्य० आनूपमृगवसानामहिततमा ( चसू. २५.३९ )
 –**शालि**–स्त्री., शालि० द्र० 'शालि' ( अहृसू. ६.२ )
**महिषाक्ष**–पु., निर्यास० गुग्गुलुः ( ध. ३.१२७ )
**महिषाक्षक**–पु., निर्यास० गुग्गुलुः ( रा. १२.१८४ )
**महिषाक्रान्ता**–स्त्री., वनस्पति० आस्फोतोऽर्कः ( इन्दु. असंउ. ४४ )
**महिषामिष**–न., महिषमांसम् द्र० ' महिष ' ( अहृसू. ८.४० )
**महिषासुरसंभव**–पु., भूमिजः गुग्गुलुभेदः, द्र० ' गुग्गुलु ' ( रा. १२.१८८ )
**महिषी**–स्त्री., ( चसू. १.९३ )
 –**कन्द**–पु., वनस्पति० शुभ्रालुः ( रापरि. ७.३३ )
 –**क्षीर**–न., दुग्ध० महिषीदुग्धं, स्वप्नजननानां श्रेष्ठम् ( चसू. २५.४० )
 –**घृत**–न., घृत० तद्गुणाः–मधुरं, सुशीतं, गुरु, कफ-करं, बल्यं, वर्ण्यं, दीपनं, चक्षुष्यं, वातपित्तघ्नं, रक्तपित्तार्शोग्रहणीनाशकम् ( ध. ६. १४७ )
 –**दधि**–न., दधि० तद्गुणाः–मधुरं, स्निग्धं श्लेष्मकृ-द्बल्यं, वृष्यं, शोधनं, रक्तपित्तश्रमनाशनम् ( ध. ६.१९३ )
 –**दुग्ध**–न., दुग्ध० तद्गुणाः–मधुरं, शीतं, स्निग्धतरं, गुरु, वह्निनाशनं, निद्राकरं, बलकरं, पुष्टिदं, वृष्यं, पित्तघ्नं, दाहरक्तविकारघ्नम् ( चसू. २७.२१९ )
 –**पयस्**–न., दुग्ध० महिषीदुग्धम् ( चसू. २७.२१९; ध. ६.१७० )
 –**प्रिया**–स्त्री., वनस्पति० शूली ( रापरि. ८.६८ )
 –**मूत्र**–न., मूत्र० तद्गुणाः–कटूष्णम्, अर्शोदरशूल-कुष्ठमेहाऽऽनाहशोफगुल्मपाण्डुक्षिदोषकण्डूति-नाशनम् ( ध., ६.४९२ )
**मही**–स्त्री., वनस्पति० कटुकी ( र. २९.८९-९२ )
 –**कदम्ब**–पु., वनस्पति० मुण्डी ( सुउ. ४१.४७ ) अलम्बुषा ( ड. सुचि. १७.१५ ) भूकदम्ब ( ड. सुचि. १७.१५ )
 –**ज**–न., वनस्पति० आर्द्रकम् ( ध. २.८४ )
 –**सह**–पु., वनस्पति० सागः ( रापरि. ९.६ )
**महेन्द्र**–पु., पर्वत० अत्र ' चन्द्रमा ' सोमविशेष उप-लभ्यते ( सुचि. २९.२७; अहृसू. ५.११ )

**महेन्द्रकन्या**–स्त्री., वनस्पति० इन्द्रवारुणी (र. २४.१३९)

**महेन्द्रवारुणी**–स्त्री., वनस्पति० इन्द्रवारुणी (रा. ३.३७५)

**महेरणा**–स्त्री., वनस्पति० सल्लकी (ध. ३.१३५)

**महेश्वरकोपप्रभव**-वि., रुद्रकोपसंजातः (ज्वरः) (चनि. १.३५)

**महेश्वरबीज**–न., खनिज० पारदः (र. १६.६९)

**महेश्वरी**–स्त्री., कृत्रिमधातु० पित्तलम् (ध. ६.१९)

**महैरण्ड**–पु., वनस्पति० स्थूलैरण्डः द्र० 'एरण्ड' (रा. ८.४४९)

**महैला**–स्त्री., वनस्पति० भद्रैला द्र० 'एला' (रा. ६.७०)

**महोटिका**–स्त्री., वनस्पति० वृन्ताकी (रा. ७.१२७) बृहती (ध. १.९३)

**महोत्पल**–न., वनस्पति० कमलम् (रा. १०.२४४)

**महोत्सव**–पु., शक्रोत्सवादिः (सुसू. २.१०)

**महोदयप्रत्ययसार**–पु., पारदयोग० रसगंधकाभ्रताम्रादिसाधितोऽयं सर्वरोगहरः (र. १५.४४-५२)

**महोदया**–स्त्री., वनस्पति० बलामोटा (रा. ४.४२७)

**महोदर**–न., रोग० जलोदरम् द्र० 'उदर' (र. २.१२२)

**महोदरत्व**–न., लक्षण० दुष्प्रजातायाः सूतिकारोगः चतुःषष्टिसूतिकारोगेष्वेकः (काखिल. ११.७-१४)

**महर्षभी**–स्त्री., वनस्पति० कपिकच्छूः (ध. १.१५१)

**महर्षिसंघ**–पु., महर्षीणां समुदायः (चसि. ३.३)

**महौजसी**–स्त्री., वनस्पति० तेजोवती (ध. १.२६६)

**महौदनी**–स्त्री., वनस्पति० शतावरी (रा. ४.४३९)

**महौषध**–न., वनस्पति० भूम्याहुल्यम् (रापरि. ४.३६)
वत्सनाभः (ध.७. १२८)
लशुनः (ध. ४.६६)
शुण्ठी (चसू. ४.१२; सुसू. ४४.७–८; ध. २.८२)
अञ्जनम् (सुउ. ९.२३)

**(महौषधी)**–स्त्री., वनस्पति० नीलदूर्वा, द्र० 'दूर्वा' (रा. ८.२२७)
कटुका (रा. ६.५५)
अतिविषा (रा. ६.७)
लक्ष्मणा (ध. १.९७)
ब्राह्मी (ध. ४.१००)

**महौषधि**–स्त्री., वनस्पति० वाराहीकन्दः (रा. ७.१३६) सोमसमवीर्या महौषधिः, ता एता महौषधयः– श्वेतकापोती, कृष्णकापोती, गोनसी, वाराही, अजगरी, कन्या, छत्राऽतिछत्रा, करेणुरजा, चक्रकाऽऽदित्यपर्णिनी, ब्रह्मसुवर्चला, श्रावणी, महाश्रावणी, गोलोमी, अजलोमी, महावेगवती; तासां सोमवत्क्रियाशीःस्तुतयः शास्त्रेऽभिहिताः (सुचि. ३०.५) ' महेन्द्ररामकृष्णानां ब्राह्मणानां गवामपि । तपसा तेजसा वाऽपि प्रशाम्यध्वं शिवाय वै ॥ ' इत्यनेन मन्त्रेण महौषधीनामुद्धरणं करणीयम् (सुचि. ३०.२७)

**मांस**–न., धातु० सप्तधातुष्वेकम् (असंसू. १.३१) दशप्राणायतनेष्वेकम् (चशा. ७.९) मांसवहानां स्रोतसां मूलं स्नायुस्त्वक् च (चवि. ५.८) मांसधराकलायामधिष्ठिते मांसे सिरादीनां प्रताना भवन्ति (सुशा. ४.८) रक्तस्य सारांशात् मांसस्य उत्पत्तिः, (असंशा. ६.६६) मांसवहस्रोतस्सु मांसधात्वग्निना मांसोत्पत्तिर्भवति (चचि. १५.१६) रसोत्पत्त्यनन्तरं तृतीयेऽहनि मांसोत्पत्तिः इति केचित्, दशमेऽहनि इति च अपरे (सुसू. १४.१४; चचि. १५.२९) पिच्छिलं घनं श्लक्ष्णमीषद् रक्तमिति मांसस्य स्वरूपम् । मांससारः पुरुषः अच्छिद्रगात्रो गूढास्थिसन्धिमांसोपचितः, शङ्खललाटकृकाटिकाक्षिगण्डहनुग्रीवास्कन्धोदरकक्षवक्षःपाणिपादसंधयः स्थिरगुरुशुभमांसोपचिता मांससाराणाम् (चवि. ८.१०५; सुसू. ३५.१६) मांस-कर्म-मांसं शरीरपुष्टिं करोति (सुसू. १५.५(१)) लेपनं मांसस्य श्रेष्ठं कर्म (अहृसू. ११.४) मांसाद् वसा तथा षट् त्वच इत्युपधातवः संभवन्ति । शरीरच्छिद्रेषु मलः– खमल इति संज्ञितो मांसधातोर्मलः (चचि. १५.१७; सुसू. ४६.५२९) मांसावयवः संघातः परस्परं विभक्तः पेशी इत्युच्यते (ड. सुशा. ५.३९) मांसक्षयलक्षणम्–इन्द्रियदौर्बल्यं गण्डस्फिक्शुष्कता सन्धिषु वेदनाश्च मांसक्षये भवन्ति (अहृसू.११.१८) दधिसिद्धान्यम्लानिषाडवकानि स्थूलक्रव्यादमांसानि मांसक्षीणोऽभिकांक्षति (ड. सुसू. १५.२९) मांसवृद्धिलक्षणम्– गण्डार्बुदग्रन्थिगण्डोरूदरवृद्धिता कण्ठेष्वधिमांसं च मांसवृद्धौ भवन्ति (अहृसू. ११.१०) अधिमांसार्बुदं कीलं, गलशालूकशुण्डिके पूतिमांसालजी– गण्डगण्डमालोपजिह्विकाः इति मांसाश्रयान् मांसप्रदोषजान् विकारान् विद्यात् (चसू. २८.१३-१५) मांसजविकारेषु संशोधनं शस्त्रक्षाराग्निकर्म च कर्तव्यम् (अहृसू. ११.३०)

प्राणिजद्रव्य० अन्नद्रव्य० प्राणिनां मांसमन्नद्रव्यत्वेनोपयुज्यते; अष्टधा मांसं-मृगविष्किरप्रतुद-बिलेशय-प्रसह-महामृग-जलचर-मत्स्यभेदेन ( हे. अहृसू. ६.४३ ) मांसं बृंहणीयानां श्रेष्ठम् ( चसू. २५.४० ) मध्यमे वयसि स्थितस्य पश्वादेः मांसं श्रेष्ठम् (सुसू. ४६.३३६-३९) मांसपरीक्षायां प्राणिनः चरो नाम भक्ष्यं विहारश्च, शरीरावयवाः स्वभावो धातवः क्रियाः लिङ्गं प्रमाणं संस्कारः मात्रा च परीक्ष्यते ( सुसू. ४६.१३८ ) फलाशिनां विहङ्गानां मांसम् अतीव रूक्षं, पिशिताशिनां तु अत्यर्थं बृंहणं, मत्स्याशिनां पित्तकरं, धन्वचारिणां वातघ्नम् अभक्ष्यमांसं-मृतं कृशमतिमेदुरं वृद्धं बालं विषहतमगोचरभृतं सर्पव्याघ्रादिभिः सूदितं मांसं न भक्षणीयम्, अस्माद् विपरीतं दोषरहितं मांसं बृंहणं बलवर्धनं च ( चसू. २७.३११-१२ )

**–कच्छप**–पु., रोग० कच्छपरोगः ( सुनि. १६.४०-४३ )

**–कन्दी**–स्त्री., मांसाङ्कुरः ( सुसू. ५.१५ )

**–कुद्वर्ग**–पु., भैषज्य० मञ्जिष्ठा-सैन्धव-क्षौद्रनाग-दन्ती-त्रिवृत्-तिलाः, रसाञ्जनं द्विरजनी तेजोह्वा निम्बपल्लवाः । अयं वर्गः भगन्दरे उपयुक्तः ( असंउ. ३३ )

**–कोथ**–पु., लक्षण० मांसस्य पूतीभावः ( सुसू. २५.३-५ )

**–क्लेदः**–पु., रोग० मांसस्य क्लेदनं, चत्वारिंशत्पित्तविकारेष्वेकः ( चसू. २०.१४ )

**–क्षय**–पु., लक्षण० मांसस्याऽपचयः ( सुसू.३३.५ )

**–गुटिका**–स्त्री., कल्प० एषा शुक्रवर्धनी ( चचि. २.( ४ ) ११-१४ )

**–चक्षुस्**–न.,चर्मचक्षुः ( का. भोजनकल्प )

**–च्छेद**–पु., लक्षण० मांसस्य च्छेदनम् ( अहृसू. २९.४६ )

**–जाल**–न., मांसस्य, मांसकृतं वा जालम् मांसजालानि चत्वारि–तान्येकैकस्मिन् मणिबन्धे गुल्फे च संश्रितानि ( सुशा. ५.१२ )

**–तान**–पु., रोग० गलरोग० प्रतानवान् लम्बनशीलः श्वयथुः क्रमेण गलोपरोधं कुरुते; अयं सुकष्टः प्राणप्रणुत् सर्वदोषजो विकारः ( सुनि. १६.६ २)

**–तोय**–न., मांसधावनोदकम् ( सुउ. ४०.१० )

**–दग्ध**–पु., रोग० अग्निदग्धे अवस्था० लक्षणम् कपोतवर्णत्वमल्पशोफरुजता शुष्कसंकुचितव्रणता च ( असंसू. ४.६ )

**–दरण**–पु., रोग० मांसस्याऽवदरणं शीर्णतेति यावत् । चत्वारिंशत्–पित्तविकारेष्वेकः ( असंसू. २०.१४ )

**–दाह**–पु., उपक्रम० मांसस्य दहनम् ( अहृसू. ३०.४३ )

**–द्राविन्**–पु., वनस्पति० अम्लवेतसः ( रा. ६.१४८ )

**–धरा**–स्त्री., शारीर० सप्तसु कलास्वेका, सप्तानां कलानां प्रथमा मांसधरा नाम, यस्यां मांसे सिरास्नायु धमनी स्रोतसां प्रताना भवन्ति (सुशा. ४.८) सप्तसु त्वक्ष्वेका सप्तमी मांसधरा नाम व्रीहिद्वयप्रमाणा भगन्दरविद्रध्यर्शोऽधिष्ठाना ( सुशा. ४.४ )

**–धावन**–न., मांसप्रक्षालनोदकम् ( चचि. १९.९ )

**–पाक**–पु., रोग० चत्वारिंशत् पित्तविकारेष्वेकः ( कासू. २७.१९-३५ ) शूकदोषजरोगेष्वेकं लक्षणम्–मांसानि-शीर्यन्ते त्रिदोषजाश्च वेदना भवन्ति ( सुनि. १४.१४-१५ )

**–पुष्पिका**–स्त्री., वनस्पति० भ्रमरारिः ( रा. १०.४१)

**–पेशिका**–स्त्री., मांसपेशी ( असंसू. ३४.३९ )

**–पेशी**–स्त्री., मांसवर्तिः ( सुसू. ९.४ ) मांसखण्डः (सुचि. १.१२२) पेशी 'चत्वारि मांसपेशीशतानि' ( काशा )

**–प्ररोह**–मांसाङ्कुरः ( सुनि. २.४ )

**–भेषजकल्क**–पु., कल्प० ( अहृसू. २४.१७ )

**–मर्मन्**–न., शारीर० मर्म० तलहृदयेन्द्रबस्तिगुदस्तनरोहितानि मांसमर्माणि । तत्र एकादश मांसमर्माणि, चत्वारि तलहृदयानि, चत्वारि इन्द्रबस्तीनि एकं गुदं, द्वे बस्तरोहिते एवमेकादश ( सुशा. ६.७) मांसमर्मविद्धलक्षणम्–स्पर्शं न जानाति, विपाण्डुवर्णश्च स्यात् ( सुसू. २५.४० )

**–मासा**–स्त्री., वनस्पति० माषपर्णी ( ध. १.१३६ )

**–रज्जु**–स्त्री., शारीर० मांसनिबन्धनस्नायुः, पेशीनिबन्धनार्थं प्रयुक्तः । महत्यो मांसरज्जवश्चतस्रः पृष्ठवंशमुभयतः, द्वे बाह्ये द्वे चाभ्यन्तरे ( सुशा. ५.१४ )

**–रस**–पु., मांसस्य रसः, मांसयूषः, तस्य पाकविधिः –प्रस्थेऽम्भसि पलं मांसं साध्यं, पादस्थितो रसः ( अहृको ) मांसरसगुणाः—सर्वभूतानां प्रीणनो हृद्यो बहुरोगप्रशमनः स्वर्यो वयोबुद्धीन्द्रियायुर्बलकरो व्यायामस्त्रीमद्यनित्यानां च हितकरः । कृशव्याधिमुक्त–शुष्क–बलार्थि–वर्णार्थिक्षीणरेतसां च हितावहः ( चसू, २७.३१२-३१५ ) प्राणजननो वात-

पित्तश्रमहरः श्वासकासक्षयापहः स्मृत्योजःस्वरहीनानां ज्वरक्षीणक्षतोरसां भग्नविश्लिष्टसंधीनां च हितः ( सुसू. ४६.३५९-६१ )

**-रुहा**-स्त्री., वनस्पति० मांसरोहिणी (रा. १२.१३८)

**-रोहा**-स्त्री., वनस्पति० मांसरोहिणी ( ध.. ४.९४ )

**-रोहिका**-स्त्री., वनस्पति० मांसरोहिणी ( रा. १२.१३९ )

**-रोहिणी**-स्त्री., वनस्पति० गुणाः-कटुस्तिक्ता, कषायोष्णा, ग्राहिणी, वर्ण्या, पित्तघ्नी, स्वरसादरक्तपित्तघ्नी च ( ध. ४.९४ )

**-रोही**-स्त्री., वनस्पति० मांसरोहिणी (रा. १२.१३८)

**-वहस्रोतस्**-न., शारीर० स्रोतो०मांसवहानां च स्रोतसां स्नायुर्मूलं त्वक् च (चवि.५.८) मांसवहे द्वे, तयोर्मूलं स्नायुः, त्वक्, रक्तवहाश्च धमन्यः, तत्रविद्धस्य श्वयथुर्मांसशोषः सिराग्रन्थयो मरणं च ( सुशा. ९.१२ ) स्थूलगुर्वभिष्यन्दिभोज्यानि जग्ध्वा निरतिशयं दिवास्वापसुखमनुभवतां मांसवहं स्रोतो दुष्यति ( चवि.५.१५ )

**-वाहिस्रोतस्**-न., शारीर० मांसवहं स्रोतः ( चवि. ५.१५ )

**-शात**-पु., मांसक्षरणम् ( सुचि. ९.५१ )

**-संघात**-पु., रोग० तालुगतरोग० ताल्वन्तःस्थं मांसं श्लेष्मणा दुष्टं नीरुजं मांससंघात इति व्यपदिष्टः सन् ( सुनि. १६.४४ ) मुखरोगेषु मांसोपचयः मांसदोषजविकारेष्वेकः ( सुसू. २४.९ ) छेद्यरोगोऽयं ( सुसू. २५.३-५ )

**-संरब्ध**-वि., मांसोपचितम् ( सुउ. ६.१२ )

**-सात्म्य**-वि., यस्य मांसं सुखावहं भवति सः। अनुभूयमानमांससात्म्यसुकरम् (चचि. ३.१९१)

**-सार**-पु., धातुसार० शंख-ललाट-कृकाटिकाऽक्षिगण्डहनुग्रीवास्कन्धोदरकक्षवक्षःपाणिपादसंधयः स्थिरगुरुशुभमांसोपचिता मांससाराणाम्। सा सारता क्षमां धृतिम् अलौल्यम् वित्तं विद्यां सुखमार्जवमारोग्यं बलमायुश्च दीर्घमाचष्टे ( चवि., ८.१०५ )

**-सिराप्रणाश**-पु., लक्षण० मांसस्य सिराणां च नाशः ( सुनि., १०.६ )

**मांसल**-पु., वनस्पति० मांसलफलः ( रा. ७.२७१ ) धान्य० माषः ( ध. ६.९९ ) बस्तिदोष० अस्मिन् विस्रत्वं भवति ( चसि. ५.६ )

**-फल**-पु., वनस्पति० कलिङ्गः ( रा. ७.२७१ )

**-( फला )**-स्त्री., वनस्पति० वृन्ताकी (रा. ७.१२७)

**मांसाङ्कुर**-पु., लक्षण० मांसस्य प्ररोहः ( सुसू. ५.१५; डल्हण )

**मांसादमांस**-न., मांसाशिनः व्याघ्रादेः मांसम्। इदं विशेषतः मांसवर्धनं बृंहणं च ( असंसू. २४.५९ )

**मांसावगाढ**-वि., मांसान्तर्गतम् ( सुसू. २७.५ )

**मांसार्मन्**-न., नेत्ररोग० शुक्रवदस्य लेखनाञ्जनाभ्यामुपचारः ( ड. सुउ. १५.१७ )

**मांसावृतवात**-पु., रोग० तस्य लक्षणम्-विवर्णः, कठिनः शोफः तथैव पिटिकाः, हर्षः, पिपीलिका सञ्चारवद्वेदनाविशेषः ( चचि. २८.६४-६५ )

**मांसिनी**-स्त्री., वनस्पति० जटामांसी ( रा. १२.९० )

**मांसी**-स्त्री., वनस्पति० जटामांसी ( चसू. ५.२१; सुसू. ३८.२४; ध. ३.४५ )

**मांसोचित**-वि., मांससात्म्यः, अभ्यासात् मांसं सात्म्यं संजातं यस्य, सः ( चचि. ३०.३१६ )

**मांसोदक**-न., मांसरसस्य अच्छो भागः सौरावाख्यः ( ड. सुउ. ४८.२८ )

**मांसोद्गम**-पु., मांसाङ्कुरः ( सुनि. १६.३७ )

**मांसोन्नति**-स्त्री., रोग० उन्नतमांसम्। अयं रोगविशेषो लेख्यः ( सुउ. २५.९-१० )

**मांसोपचय**-पु., लक्षण० मांससङ्घातः ( सुनि. ११.१३-१४ )

**मांसोपदंश**-पु., मांसभक्षणे व्यञ्जन० ( सुउ. ४१.३८)

**मांसपाक**-पु., गुह्यरोग० सन्निपातजोऽयम्। सर्ववेदनो मेढ्रमांसशातनश्च ( असंउ. ३८.३२० )

**मा**-स्त्री., वनस्पति० लवङ्गम् ( र. १८.४७-५२ )

**माकन्दः**-पु., वनस्पति० आम्रः ( र. २२.१२६; ध. ५.२ )

**( माकन्दी )**-स्त्री., वनस्पति० तस्याः गुणाः- कटुका, तिक्ता, मधुरा, दीपनी, रुच्याऽल्पवातला पथ्या च ( रा. ७.१५ )

**माकुलि**-पु., सर्प० वैकरञ्जः, कृष्णसर्पेण गोनस्यां जातः। अथवा गोनसेन कृष्णसर्पिण्यां जातः ( सुक. ४.३४ (५) )

**माक्षिक**-पु., न., खनिज० उत्पत्तिः तापीकिरातचीनेषु यवनेषु च सुवर्णशैलप्रभवः काञ्चनो रसः विष्णुना विनिर्मितः। सूर्यांशुसन्तप्तस्ताप्यो माधवे मासि दृश्यते। मधुरः अम्लः काञ्चनाभासः रजतसंनिभः। द्विविधो माक्षिकः स्वर्णमाक्षिकस्तारमाक्षिकश्च। तत्र कान्यकुब्जोत्थं स्वर्णमाक्षिकं तापीतीरसम्भूतं

पञ्चवर्णं सुवर्णवत् । शोधनम्- तप्तं वराक्काथे क्षिप्तं माक्षिकं शुद्धिमायाति । मारणम्-मातुलुंगाम्ल-गन्धाभ्यां पिष्टं मूषोदरे स्थितं पञ्चकोलपुटे ध्मातं माक्षिकं म्रियते । गुणाः- कटु, तिक्तं, मधुरम् ( रा. १३.२११ ) उष्णं, रसायनं, वृष्यं, चक्षुष्यं; त्रिदोषशमनं बस्तिरोगार्शःशोफोदरक्षयविषापहम् ( ध. ३.१४८; रा. १३ ) श्रमहृल्लासमूर्च्छाश्वास-कासघ्नम् कफापहं च(रा. १३.२११) माक्षिकधातु-तापीजममृतोपमम् काञ्चनाभासं मधुरं अम्लं वा रजतप्रभं पिबतः जराकुष्ठमेहपाण्ड्वामयक्षयाः नश्यन्ति ( सुचि. १३.१७-१८ ) स्वर्णमाक्षिकं नेत्ररोगे प्रतिसारणार्थमुपयुज्यते ( सुउ. १३.६-८ ) पाण्डुरोगे उपयुक्तम् ( चचि. १६.७३ )

हिं.—सोनामाखी.

**म.—माक्षिक.**

गु.—सोनामखी.

ता.—पौन्निमिळै.

मधु ( चसू. २.२५ ) पिङ्गलवर्णा महत्यो मक्षिकाः तद्भवम् ( सुसू. ४५.१३३ ) गुणाः-लघुतरं रूक्षं श्रेष्ठं श्वासादिरोगेषु विशेषतः प्रशस्तम् ( सुसू. ४५.१३६ )

**( माक्षिकी )**-वि., मक्षिकायाः इयम् (चचि. १७.१३२)

-**ज**-न., सिक्थकम् ( रा. १३.१७४ )

-**धातु**-पु., खनिज धातु० स्वर्णमाक्षिकम्, माक्षिकम् ( चचि. ७.७० )

-**फल**-पु., वनस्पति० मधुनारिकेरः ( रा. ११.२१० )

**माक्षीक**-न., खनिज० माक्षिकम् ( र. १.१; रा. १३.२०९ )

-**शर्करा**-स्त्री., मधुशर्करा ( ध. २.१०६; रा. १४.१६८ )

**मागध**-पु., वनस्पति० जीरकम् ( ध. २.६६; रा. ६.१०० )

**( मागधी )**-स्त्री., वनस्पति० पिप्पली ( सुचि. ८.४२; ध. २.७३; रा. १०.२५० )

**मागधिका**-स्त्री., वनस्पति० पिप्पली ( सुउ. ११.१३ )

-**विधान**-न., पिप्पलीरसायनम् ( सुउ. ४१.५७ )

**मागधिकादिसिद्धतैल**-न., तैल० पिप्पल्यादिक्वाथ-कल्काभ्यां सिद्धं तैलम्, इदं कफजगलगण्डनाशकम् ( सुचि. १८.४८-४९ )

**माङ्गल्य**-स्त्री., धान्य० मुद्गः ( ध. ६.८१ )

**( माङ्गल्या )**-स्त्री., वनस्पति० गोरोचना ( ध. ३.२० ) जीवन्ती ( ध. १.१४० )

**माङ्गल्याह्वा**-स्त्री., वनस्पति० त्रायमाणा ( रा. ५.३७९)

**माचिका**-स्त्री., वनस्पति० अम्बष्ठा, तद्गुणाः-कषाया, वातकफघ्नी, पित्तप्रकोपशमनी, व्रणशोधनरोपणी ( ध., ३.११६ )

**माचीक**-पु., वनस्पति० देवदारुः ( चवि. ८.१४४ )

**माञ्जारिक**-पु., वनस्पति० अपामार्गः ( रा. ४.३८८ )

**माञ्जिष्ठ**-वि., माञ्जिष्ठायाः इदम्, मञ्जिष्ठासम्बन्धि ( चनि. ४.२५ )

-**कल्क**-पु., ( परिव० ) भैषज्य० मञ्जिष्ठायाः कल्कः ( सुउ. ४०.१२१ )

-**चूर्ण**-न., भैषज्य० मञ्जिष्ठाचूर्णम्, रक्तातिसारे उपयुक्तम् ( सुउ., ४०.१२१ )

-**मेह**-पु., रोग० प्रमेह० नरः पित्तस्य परिकोपात् मञ्जिष्ठोदकसंकाशं भृशं विस्रं प्रमेहति ( चनि. ४.२५ )

**माठर**-पु., ऋषि० ( कासंसि. १.११ )

-**माड**-पु., वनस्पति० कषायः, शिशिरो, रुच्यो, दाह-करो, वातपित्तश्लेष्मकृत्, तृष्णापहः, श्रमहृत् ( ध. ५.७० )

-**द्रुम**-पु., वनस्पति० माडः ( ध. ५.७० )

**माणिका**-स्त्री., मान० अष्टौ पलानि, द्विकुडवम् ( चचि. १८.४३ )

**माणिक्य**-न., रत्न० पद्मरागम् ( र. ४.६ ) गुणाः-दीपनं, वृष्यं, कफवातक्षयार्तिनुत्, भूतवेतालपापघ्नं, कर्मजव्याधिनाशनम् (र. ४.१३) माणिक्यं द्विविधं,-पद्मरागाख्यं नीलगन्धि च तत् तु वृत्तायतं समं गात्रं श्रेष्ठमुच्यते ( र. ४.९-१० )

-**तिलक**-पु., पारदयोग० पारदगन्धकमाक्षिकाभ्रका-दीनि समभागिकानि शतावरीरसेन मञ्जिष्ठादि-कषायेण च संमर्द्य विशोष्य च पक्वमूषायां पचेत् । अयं कुष्ठनाशनः ( र. २०.८२-८५ )

**माणिभद्रक**-पु., गुडयोग० अर्शसश्चिकित्सायामुपयुक्तः ( असंचि. १० )

**माणिमन्थ**-न., सैन्धवम् ( र. १८.१३९-४१ )

**माण्डव्य**-पु., ऋषि० सप्तविंशतिसंख्याकेष्वन्यतमो रस-सिद्धिप्रदायकः ( र. १.२-५ )

**मातङ्ग**-पु., देश० कुरुक्षेत्रस्य पूर्वप्रदेशे विद्यमानः ( काखिल. २५.९ )

**( मातङ्गी )**-स्त्री., रेवतीग्रह० सा नवमेऽहनि अपत्यं विनाशयति ( का. रेवतीक. )

मन्त्रविद्या० मतङ्गेन महर्षिणा कश्यपपुत्रेण कनीयसाऽऽसादिता, सा दुःस्वप्नकलिरक्षोघ्न्य-भिशापनाशनी च ( काकरेवती. )

**मातंगजचर्मन्**-( परिव० ) न., हस्तिनश्चर्म, इदं श्वित्रे लेपार्थमुपयुज्यते ( सुचि. ९.१६ )

**मातरिश्वन्**-पु., वातः ( सुशा. ६.१९ )

**मातुलक**-पु., धत्तूरः ( रा. १०.११ )

**मातुलिङ्ग**-पु., वनस्पति० मातुलुङ्गः ( रा. ११.२२ )

**मातुलिङ्गिका**-स्त्री., वनस्पति० वनबीजपूरकः ( रा. ११.३४ ) अम्ला, कटुरुष्णा, रुचिप्रदा, वातविनाशनी, कफापहा, अम्लदोषा, कृमिनाशकारी, श्वासनिषूदनी ( रा. ११.३४ )

**मातुलुङ्ग**-पु., फल०, गुणाः-अम्लः, कटुः, उष्णः, लघुः, कण्ठशोधनः, दीपनः, हृद्यः, पाचनः, श्वासकासाऽरुचितृष्णाहरः (ध. ५.२२) छर्दिनिग्रहणः (चसू. ४.१४) प्रलेपाद्वातशोफजित् (सुसू. ३७.३) मातुलुङ्गत्वक् तिक्ता, दुर्जरा, वातकफापहा, क्रिमिघ्नी च, मातुलुङ्गमांसं स्वादु शीतं गुरु स्निग्धं मेध्यं मारुतपित्तजित शूलवातजच्छर्द्यरोचकनाशनम् । मातुलुङ्गकेसरं लघु दीपनं संग्राहि गुल्मार्शोघ्नं च ( सुसू. ४६.१४९-१५१ ) विबन्धमंदाग्नि मद्यविप्लव-हिक्का-श्वास-कास-वर्चोगदघ्नं च ( चसू. २७.१५४ ) मातुलुङ्गरसः शूलाऽजीर्णविबन्धेषु मन्देऽग्नौ, अरुचौ कफमारुतयोश्च विशेषेण उपदिश्यते (सुसू. ४६.१५२) मातुलुङ्गमम्लफलेषु श्रेष्ठम् (सुसू. ४६.३३४) मातुलुङ्गबीजं तिक्तं पथ्यं कफशमनं अर्शःश्वयथुनाशनम् ( रा. ११.३० ) मातुलुङ्गमूलं कृमीन् हन्ति ( ध. ५.३० )
( ध. ५.३० ) मातुलुङ्गपुष्पं गुल्मजित्
हिं.—बिजोरा, माफल.
**म.—महाळुंग.**
गु.—बालंक, बिजौरा, बिजोरु लिंबू.
बं.—छोलोंगो नेबू.
फा.—तुरंज.

**मातुलुङ्गाम्ल**-न., मातुलुङ्गरसः ( सुचि. ५.२८ )

**मातुलुङ्गासव**-पु., आसुत० अयं सामुद्रमत्स्यानामनुपान० ( सुसू. ४६.४३३ )

**मातुलुङ्गी**-स्त्री., वनस्पति० सुरभिफलोऽरण्यबीजपूरकः, तत्पुष्पम् शिरोविरेचनार्थमुपयुज्यते ( सुसू. ३९.६ ) मधुकर्कटी ( सुउ. ४५.३६ )

**मातृ**-स्त्री., जननी ( सुशा. ३.३१ )
ग्रहमातृ० सेना सुसेना माता च महासेना यशस्विनी ( असंउ. ४ )
रेवतीग्रहस्य नाम ( कासं. बालग्रहचि. )
कफजकृमि० ( असंनि. १४.५४-५५ )
वनस्पति० हरीतकी ( काकल्प. )
मांसी वनस्पति० ( रा. १२.९१ )
वनस्पति० इन्द्रवारुणी ( रा. ३.३७१ )
वनस्पति० महामुण्डी (रा. ५.२२०)
वनस्पति० मूषककर्णी ( रापरि. ३.२२ )

**-ज**-वि., मातुः शरीरादागतः ( अवयवविशेषः ) गर्भस्य मातृजानि अंगानि-त्वक् च लोहितं च मांसं च मेदश्च नाभिश्च हृदयं च क्लोम च यकृच्च प्लीहा च वृक्कौ च बस्तिश्च पुरीषाधानं चामाशयश्च पक्वाशयश्चोत्तरगुदं चाधरगुदं च क्षुद्रान्त्रं च स्थूलान्त्रं च वपा च वपावहनं चेति ( चशा. ३.६ ) मज्जा मातृजः (सुशा.३. ३३) आमाशयगर्भाशयक्लोमानि मातृजानि ( असंशा. ५.१४ )

**-नन्दिन्**-पु., वनस्पति० गुच्छकरञ्जः (रा. ९.१८४)

**-निन्दक**-पु., प्रतुदपक्षि० प्रियात्मकः, पुत्ररञ्जक इति ( ड. सुसू. ४६.६७ )

**-हृदय**-न., शारीर० मातुः हृदयम् (चशा. ४.१५)

**मातृक**-पु., वनस्पति० ऋषभः ( ध. १.१२५ )

**-केश**-पु., गोकेशः, अयं धूपनार्थमुपयुज्यते ( का. धूपकल्प. )

**( मातृका )**-स्त्री., सिरा० ( असंशा. ७.२३ )

**-दोष**-पु., बालरोग० मलोपलेपात् स्वेदाद्वा गुदे रक्तकफोद्भवस्ताम्रो व्रणो जायते स कण्डूमान् अन्तर्भागे भवति भूर्युपद्रवश्च ( असंउ. २ )

**-मर्मन्**-न., मर्म० ऊर्ध्वजत्रुगतं ग्रीवायां चतुरङ्गुलप्रमाणम् ( सुशा. ६.२७ ) इदं सिरामर्म ( सुशा. ६.७ ) सद्यःप्राणहरम् ( सुशा. ६.९ ) अष्टौ मातृकामर्माणि ( सुशा. ६.६ ) ग्रीवाया-मुभयतश्चतस्रश्चतस्रःसिरा मातृकाः (सुशा. ६.२७)

**मात्रा**-स्त्री., अनपायिपरिमाणम् ( चसू. १३.५ )
प्रमाणम् ( सुचि. ३१.२५ )
कालमान० ( अहृसू. २२.३३ ) निमेषोन्मेषकालेन समं यावत्कालं हस्ताग्रं दक्षिणं जानुमण्डलं पर्येति, सा तु मात्रा स्मृता ( अहृसू. २२.३३ )
आक्षिनिमेषः ( असंसू. ४.५ ) पुंसां यावत्काले

निमेषोन्मेषणं भवति अङ्गुलेर्वा स्फोटनं लघोर्वाप्यक्षरस्य उच्चारणं भवेत्, सा मात्रा इत्युच्यते (ड. सुचि. ४.२०)

आहारस्याऽनपायि परिमाणम् तत्र कुक्षेरपीडनं, पार्श्वयोरविपाटनमन्नेन हृदयाऽऽबाधो जठरस्य तु गौरवं, चक्षुरादीनां प्रीणनं क्षुत्पिपासयोः शमनमुच्छ्वासश्वासहास्यादिकथासु सुखवर्तनमन्ने भुक्ते दिवा निशि च सुखेन परिणाम इति लक्षणान्याहारमात्रया भवन्ति

(सुसू. ४६.४६५-४६६) मात्रां द्रव्याण्यपेक्षंते, गुरुद्रव्याणामल्पा मात्रा लघुद्रव्याणां यावत्तृप्तिर्मात्रोक्ता, तथा मात्रा अग्निमपेक्षते (चसू. २७.३४१) अल्पत्वम् ( असंसू. २५. ४०-४१ )

**-गुरु**-वि., यद् मात्रया गुरु तत्, अतिमात्रमित्यर्थः (चसू. ६.९)

**-प्रमाण**-न., मात्रायाः प्रमाणम् ( चसू. ५.४ )

**-बस्ति**-पु., उपक्रम० अनुवासनबस्तेर्भेदः (सुचि. ३५.१८) स्नेहपानस्य ह्रस्वया मात्रया समो योजितः स्नेहः मात्राबस्तिरिति स्मृतः, स बाल वृद्धाऽध्वभारस्त्रीव्यायामाऽऽसक्तचिन्तकैर्वातभग्नाऽबलाऽल्पाग्निनृपेश्वरसुखात्मभिः सदा शीलनीयः, यश्च निष्परीहारो दोषघ्नो बल्यः सृष्टमलः सुखश्च (अहसू. १९.६७-६९)

**-विकल्पज्ञ**-वि., अन्नादिद्रव्याणां गुरुलघुगुणाऽपेक्षया प्रमाणज्ञः ( चचि. ३.१९३-१९४ )

**मात्राशितीय**-वि., मात्राशितमधिकृत्य कृतोऽध्यायसंज्ञाविशेषः ( चसू. ५.११ )

**मात्राशिन्**-वि., मात्रया अशितुं शीलं यस्य, सः ( चसू. ५.३ )

**मात्सर्य**-न.,परगुणेष्वमाध्यस्थ्यं क्रौर्यं वा (सुसू.१.२५(३))परगुणासहिष्णुत्वम् (अहसू.४.२४)

**मात्स्य**-वि., मत्स्यस्य इदं, मात्स्यम् (चसू. १३.८३)

न., चित्तप्रकृति० तामससत्त्वस्यैकः प्रकारः भीरुमबुधमाहारलुब्धमनवस्थितमनुषक्तकामक्रोधं सरणशीलं तोयकामं मात्स्यं सत्त्वं विद्यात् (चशा. ४.३९(२)

**मादन**-पु., वनस्पति० मदनः ( रा. ८.२३१ )

न., मत्तताकरणम् (सुसू. ४०.५)

**(मादनी)**-स्त्री., वनस्पति० माकन्दी (रा. ७.१५)

**मादिका**-स्त्री., वनस्पति० भङ्गा (ध. १.१३०)

**मादु**-स्त्री., वनस्पति० भङ्गा (ध. १.१३०)

**माद्री**-स्त्री., वनस्पति० अतिविषाभेदः कृष्णाऽतिविषा (वैशसिं.)

**माधव**-पु., वैशाखमासः ( चसू. १३.१८; सुसू. ६.६ )

पु., वनस्पति० मुद्गः ( ध. ६.८१ ) कृष्णमुद्गः (असंचि. ७)

पु., वनस्पति० मधुकः ( ध. ५.४५ )

पु., मद्य० मधुकृतं मद्यम् ( सुउ. ५७.१४-१५ ) अरोचकघ्नम्, मध्वरिष्टम् ( असंचि. ७ )

वि., मधुना संस्कृत० ( अहसू. ३.२२ )

**( माधवी )**-स्त्री., वनस्पति० अतिमुक्ताख्यो लता० ( अहसू. ३.३४; ध. ५.१५३ )

स्त्री. वनस्पति० वासन्ती ( ध. ५.१३९; ( रा. १०.२३४ )

स्त्री., मधुशर्करा ( ध. २.१०६ )

स्त्री., वनस्पति० वाराही ( ध. ४.९२ )

स्त्री., वनस्पति० लता० गुणाः-कटुतिक्तकषाया मदगन्धिका, पित्तघ्नी कासव्रणदाहशोकनाशिनी ( रापरि. १०.२९ )

स्त्री., वनस्पति० शतपुष्पा ( ध. २.१ )

स्त्री., सुरा ( ध. ६.२५५ )

**-द्रुम**-पु., वनस्पति० आम्रः ( रा. ११.१ )

**-प्रथम**-वि., माधवो वैशाखः, तस्य प्रथमः नाम तदादौ भवः ( चैत्रः ) ( चसू. ७.४६ )

**-प्रिय**-न., वनस्पति० कालीयकम् ( रा. १२.१५ )

**माधवेष्टा**-स्त्री., वनस्पति० वाराही ( रा. ७.१३४ )

**माधवोचित**-न., वनस्पति० कङ्कोलकम् ( ध. ३.३७ )

**माधवोद्भव**-पु., वनस्पति० क्षीरी ( रा. ११.१४६ )

**माधुतैलिक**-पु., बस्ति० अस्मिन् बस्तौ मधु तैलं च प्राधान्येन प्रदीयते इत्यसौ माधुतैलिक इत्युच्यते ( सुचि. ३८.१०१ ) माधुतैलिकस्य पर्यायः, यापनो युक्तरथो दोषहरः सिद्धबस्तिरिति ( सुसू. २८.५ ) माधुतैलिकबस्तियोग्या मृदुकोष्ठाः सुखिनोऽल्पदोषा नित्यस्निग्धाश्च ( सुचि. ३८.११७ )

**माधुमेहिक**-वि., मधुमेहजम् ( चसू. १७.७ )

**माधुर्य**-न., मधुरता ( चनि. ४.४७ )

**माधूक**-वि., मधुकस्येदम् ( अहसू. १५.४ )

**माध्वी**-स्त्री., शर्कराविशेषः ( रा. १४.१६८ ) गुणाः-बल्या, वृष्या, तर्पणी च ( रा. १४.१६८ )

स्त्री., वनस्पति० पिण्डखर्जूरिका ( रा. ११.७१ )

**माध्वीक**-वि., मधूद्भवम् ( चसू. ६.२६ )

न., सुरा ( १४.३०२ )

न., मधुयोनिमद्यम् चिरसंस्थितं च (ड.,) द्राक्षासवः (जेज्जट,) प्रमेहेषु पानार्थमुपयुज्यते (सुचि. ११.११)

**(माध्वीका)**–स्त्री., धान्य० श्वेतनिष्पावः (रा. १६.१७५)

**–फल**–पु., वनस्पति० मधुनारिकेरः (रा. ११.११०)

**मान**–न., प्रमाण० त्रिविधं मानम्–तुलामानं, प्रस्थमानं, अङ्गुलीमानं चेति। 'मानं तुलाङ्गुलीप्रस्थैः' इत्यमरः (अमर. २; वैश्यवर्ग. ८५) पुनश्च द्विविधं कालिङ्गं मागधं चेति। तत्र कालिङ्गात् मागधं श्रेष्ठम् (चक. १२.१०५) चरकोक्ता मानपरिभाषा–षड् ध्वंश्यो मरीचिः स्यात्, षण्मरीच्यः सर्षपः, अष्टौ रक्ताः सर्षपास्तण्डुलः, तण्डुलद्वयं धान्यमाषः, धान्यमाषद्वयं यवः, चत्वारो यवाः अण्डिका, चतस्रः अण्डिका माषकः, माषकत्रयं शाणः (षाणः) (चत्वारो माषकाः शाणः) (असंक. ८) द्वौ शाणौ द्रंक्षणः, द्वौ द्रंक्षणौ कर्षः, द्वौ कर्षौ शुक्तिः, द्वे शुक्ती पलं, द्वे पले प्रसृतं, प्रसृतद्वयं कुडवः, द्वौ कुडवौ मानिका, मानिकाद्वयं अर्थात् चत्वारः कुडवाः प्रस्थः, चतुःप्रस्थमाढकम्, प्रस्थाऽष्टकं कंसः (चक. १२.८७-९४) चत्वारि आढकानि द्रोणः, चत्वारो द्रोणा वहः (असंक. ८) शतं पलानि तुला (चक. १२.९७) तुलाविंशतिः, द्विसहस्रपलानि वा भारः (असंक. ८) सुश्रुतोक्ता मानपरिभाषा– पलकुडवादीनामतो मानं तु व्याख्यास्यामः– तत्र द्वादश धान्यमाषा मध्यमाः सुवर्णमाषकाः ते षोडश सुवर्णम्, अथवा मध्यमनिष्पावा एकोनविंशतिर्धरणं, तान्यर्धतृतीयानि कर्षः, ततश्चोर्ध्वं चतुर्गुणमभिवर्धयन्तः पलकुडवप्रस्थाऽऽढकद्रोणा इत्यभिनिष्पद्यन्ते, तुला पुनः पलशतं, ताः पुनर्विंशतिर्भारः, शुष्काणामिदं मानम्, आर्द्राणांद्रवाणां च द्विगुणमिति (सुचि. ३१.७) रसरत्नसमुच्चयोक्ता मानपरिभाषा–षट् त्रुटयः एका लिक्षा, षट् लिक्षा यूका, षट् यूका रजः, षट् रजांसि सर्षपः, षट् सर्षपा यवः, षट् यवा गुञ्जा, तिस्रो गुञ्जाः वल्लः, षट् गुञ्जा माषः, द्वादशमाषास्तोलः अष्टौ तोलाः पलम्। रसरत्नसमुच्चये रसोपयोगिनी मानपरिभाषा–षड्वंशत्रुटिः, षट् त्रुट्यो लिक्षा, षड् लिक्षा यूका, षड् यूका रजः, षड् रजांसि सर्षपः, षट् सर्षपा यवः, षड् यवा गुञ्जा, गुञ्जाद्वयं निष्पावः, गुञ्जात्रितयं वल्लः, द्वौ वल्लौ माषः, द्वौ माषौ धरणम्, द्वे धरणे शाणः स एव निष्कः, निष्कद्वयं वटकः, स एव कोलः, कोलत्रितयं तोलः। निष्कचतुष्टयं कर्षः, द्वौ कर्षौ शुक्तिः द्वे शुक्ती पलम्, केचित् शुक्तित्रयं पलं विदुः। पलद्वयं प्रसृतम्, द्वे प्रसृते, कुडवः, सा एव अञ्जलीः, द्वौ कुडवौ मानिका, द्वे मानिके प्रस्थः, प्रस्थद्वयं शुभं शुभद्वयं पात्रकं, पात्रकद्वयमाढकं, चत्वारि आढकानि द्रोणः। पलानां शतं तुला, चत्वारिंशत्तुला भारः (र. १.११-१३) वाग्भटस्तु शाणं पाणितलं मुष्टिं कुडवप्रस्थमाढकम्। द्रोणं वहं च क्रमशो विजानीयाच्चतुर्गुणम् (अहृक. ६.२२) भावमिश्रस्तु 'मागधपरिभाषायां षड्रक्तिको माषश्चतुर्विंशतिरक्तिकष्टङ्कः, षण्णवतिरक्तिकः कर्षः। अयं चरकसम्मतः। सुश्रुतमते तु पञ्चरक्तिको माषः, विंशतिरक्तिकष्टङ्कः, अशीतिरक्तिकः कर्षः। अयमेव कालिङ्गपरिभाषायामपि। यतस्तत्राष्टरक्तिको माषो द्वात्रिंशद्रक्तिकष्टङ्कः, सार्धटङ्कद्वयमितः कर्षः॥' कलौ नराणां मन्दाग्नित्वात् ह्रस्वत्वात् हीनसत्त्वत्वात् च तद्योग्या सुज्ञसम्मता मानपरिभाषा, भावमिश्रमतेन प्रोच्यते, द्वादश गौरसर्षपाः यवः, यवद्वयं गुञ्जा, त्रिगुञ्जो वल्लः, अष्टगुञ्जाः माषः, क्वचित् सप्तगुञ्जाः माषः, माषचतुष्टयं शाणः, षण्माषको गद्याणः, दशमाषकः कर्षः, कर्षचतुष्टयं पलं, दशशाणमितं पलं, चतुष्पलं कुडवः, शेषं पूर्ववत् वाग्भटमतानुसारेण ज्ञेयम् (भा. प्र.) सर्वत्रोत्कर्षेणाऽऽत्मनो ज्ञानम् (सुसू. २.६) आत्मनि उत्कर्षबुद्धिः (ड. सुशा. १.१८) प्रभावादिः विशेषः (चवि. १.३)

**–तुण्डक**–पु., जलचरप्राणि० (चसू. २७.४१)

**–द्रुम**–पु., वनस्पति० शाल्मली (अहृसू. १५.३७)

**–विकल्पज**–वि., वातादेः क्षयसमतावृद्धिस्वरूपस्य मानस्य परस्परसम्बन्धाऽसम्बन्धकृतः भेदः (चसू. १७.३)

**–विरुद्ध**–वि., प्रमाणतो विरुद्धम् (सुसू. २०.१५)

**–मानक**–न., कन्दशाक० महापत्रम् यथापूर्वमधःपत्रपरिस्यागि (ड.), मानकन्दः, माणक इति नाम्ना प्रसिद्धः, तद्गुणाः–स्वादु, कटु, ईषत् कषायं शीतं, रुक्षं, गुरु, (लघु-भाप्र) विष्टम्भि, कफवातलं, पित्तहरं, (रक्तपित्तघ्नं, शोथहृत्) (रानि. सुसू. ४६.३०६-३०७)

हिं.—सालिब मिस्री, गोरूमा.

**म.—भुईकाकली, अम्बरकन्द.**

गु.—सालुम, मानकन्द.

बं.—संग मिस्रि.

फा.—संग मिस्रि.

(मानिका)–स्त्री., मान० कुडवद्वयम् (चक. १२.९३)
मानस–वि., मनसः इदम्, मनःसम्बन्धि (चसू. ११.४५)
न., मनः अमर—
मनःसंबंधि, मनोविषयकम् (सुचि. २४.९८)
(मानसी)–स्त्री. ब्राह्मी (असंउ. ४२)
–रोग–पु., मनोरोगः (चसू. ११.४५)
–व्याधि–पु., मनोरोगः (सुसू. १.४)
मानुष–वि., मनुष्यस्य इदमिति मानुषम् (चसू. २७.२२४)
–पयस्–न., स्त्रीदुग्धम्, स्तन्यम् (चसू. २७.२२४)
–मूत्र–न., मानवमूत्रम् तद्गुणाः–तिक्तं, लवणमुष्णं, रूक्षं, रोचनं, पित्तकफवातघ्नं रक्तपित्तकृमिमोहविषाऽऽमव्रणभूतरवग्दोषघ्नम् (ध. ६.४९७)
मानुषीपयस्–न., दुग्ध० नारीस्तन्यम्, तद्गुणाः–मधुरं, कषायं, शीतं, स्निग्धं, लघु, स्थैर्यकरं, चक्षुष्यं, बल्यं, जीवनं, बृंहणं, तर्पणं, दीपनं, पाचनं, रुच्यम् (ध. ६.१७५) सात्म्यं, स्नेहनं, रक्तपित्ते नावनं, अक्षिशूलिनां तर्पणम् (चसू. २७.२२४)
मान्द्य–न., मन्दता, क्षयः (चसू. ७.४९)
न., जठराग्निमन्दता (र. १५.४३)
माया–स्त्री., परबन्धनबुद्धिः ((ड) सुक. १.९)
–फल–न., वनस्पति० तद्गुणाः–कटु, उष्णं, शैथिल्यसंकोचकं केशकार्ण्यकरम्, वातहरम् (रा. ६.२२)
हिं.—माजुफल.
म.—मायफळ.
गु.—मैफळ.
बं.—माजुफल.
मायि–वनस्पति० मायाफलम् (रा. ६.२२)
–फल–न., वनस्पति० मायाफलम् (रा. ६.२२)
मायिका–स्त्री., वनस्पति० मायाफलम् (रा. ६.२२)
मायूर–वि., मयूरस्येदम्, मयूरसम्बन्धि (चसू. १३.८३)
(मायूरी)–स्त्री., विद्या० लघुमायूरी सप्तशती (इन्दु. असंउ. १)
स्त्री., वनस्पति० अजमोदा (र. ६.१५१)
–घृत–न., घृतयोग० मयूरं पक्षपित्तान्त्रशकृत्तुण्डाऽङ्घ्रिवर्जितं दशमूलादिभिर्जले पक्त्वा तस्मिन् क्षीरसमं घृतप्रस्थं पचेत्; तदूर्ध्वजत्रुगदेषूपयुक्तम् (चचि. २६.१६३-६४)
मारक–न., खनिज० हिङ्गुलम् (रा. १३.४८)
मारण–न., संस्कार० भस्मकरणम्, सर्वलोहानां पारदभस्मना मारणं श्रेष्ठम्, मूलीभिर्मारणं मध्यमम्, गन्धकादिभिश्च मारणं कनिष्ठं भवति । अरिलोहेन तु मारणं दुर्गुणप्रदं भवति (र. ५.१६)
मारिचक–वि., मारिचसंस्कृतम्, संस्कृतमिति सूत्रेण मरिचकैः संस्कृतमित्यर्थे मारिचकम् (चचि. २४.२३)
मारिष–शाक० फञ्जीचिल्ल्यादिगणोक्तः, श्वेतरक्तभेदेन स द्विधा । तद्गुणाः–मधुरः शीतवीर्यो गुरुर्विष्टम्भ्यजरणशीलो रूक्षः पुरीषभेदनश्च (चसू. २७.१००; असंसू. ७.१३९) रक्तमारिषो नातिक्षारमयः सरः श्लेष्मलः स्वल्पदोषः कटुपाकी च (र. २८.९१)
तण्डुलीयभेदः (हर. २८.९१)
मारीच–पु., ऋषि० कश्यपः रोगापहरणचिन्तनार्थं हिमवतः पार्श्वे समेतेषु महर्षिष्वेकः (चसू. १.१२; (का भोजनकल्प.)
न., वनस्पति० कङ्कोलम् (ध. ३.३७; रा. १२.६९)
–पत्रक–पु., वनस्पति० सरलः (ध. ३.७८)
मारीचि–पु., ऋषि० मरीचेरपत्यं पुमानिति मारीचिः कश्यपः (चशा. ६.२१)
मारीष–पु., पत्रशाक० मारिषः (र. १२.१२९)
मारुत–पु., दोष० वातः (चसू. १.५९; अहसू. १.१५)
शमनचिकित्सा० वायुसेवनम् (असंसू. २४.९; अहसू. १४.७)
–ज–वि., वातजम् (सुउ. ५५.२०)
–पर्यय–पु., नेत्ररोग० वातपर्यायः (सुउ.१.३०-३१)
–प्रकृति–वि., वातप्रकृतिः (सुशा. ४.६४-६६)
–मूढता–स्त्री., वातस्य प्रतिलोमता (अरु.) वायोर्विमार्गगतिः (हे. अहसू. ८.३०)
–रोगिन्–वि., वातव्याध्यातुरः (अहसू. १६.९)
–सङ्ग–वि., लक्षण० वातावरोधः (चसि. ३.६०)
मारुतापह–पु., वनस्पति० वरुणः (ध. ५.११९)
मारुतार्त–वि., वातव्याधिपीडितः (चसू. १६.१०)
मारुताशय–पु., वाताशयः (चचि. २१.४६)
पक्वाशयाधःशरीरम् (चक. चचि. २१.४६)
मार्कण्डी–स्त्री., वनस्पति० भार्ङ्गी (र. १७.२९)
भूम्याहुल्यम् (र. १७.२९)
मार्कण्डीय–न., वनस्पति० भूम्याहुल्यम् (रापरि. ४.३६)
मार्कण्डेय–पु., ऋषि० रोगापहरणचिन्तनार्थं हिमवतः पार्श्वे समेतेषु महर्षिष्वेकः गर्भागमसम्भवविषये विवदमानानामेकः (चसू. १.९; सुशा. ३.३२)

**मार्कव**–पु., वनस्पति० भृङ्गराजः (चवि. ७.२१; सुचि. ७.२४; ध. ४.११; र. ११.४८ )

**मार्ग**–पु., शरीरच्छिद्र० स्रोतः (चवि.५.९; असंशा. ६.५०) रोगमार्गः, बाह्यमध्याभ्यन्तरभेदेन त्रयो रोगमार्गाः (असंसू. २२.१५ )

मकरादिराशिपरिच्छन्न आकाशभागः रवेः मार्गः ( असंसू. ४.७ )

वनस्पति० अपामार्गः (र. २०.२२२ )

वि., मृगस्येदं मार्गम् मृगसम्बन्धि (चचि. १९.७४; सुशा. ३.२७ )

**–ग**–वि., मार्गेण गच्छन् (चवि.५.९)

**–परिगृहीत**–वि., मार्गसम्बद्धः सूर्यो वायुः सोमो वा (चसू. ६.५ )

**–विशोधन**–न., यन्त्रकर्म० मूत्रपुरीषसङ्गे स्रोतः शोधनम् ( सुसू. ७.१७ )

वि., मूत्रनाडीव्रणादिमार्गाणां शुद्धिकरम् ( सुसू. ४२.१०(३))

**–विहित**–(परिव०) वि., विधिविहितम् (चसू.१६.२६)

**–शुद्धि**–स्त्री., यन्त्रकर्म० स्रोत्रःशुद्धिः (अहसू. २५.४१ )

**–शोधन**–न., यन्त्रकर्म० मार्गविशोधनम् (असंसू. ३४.२० )

**–स्थ**–स्रोतोगतम् (असंशा. ६.५१ )

**मार्गावरण**–(परिव०) न., मार्गावरोधनम्, मार्गरोधः (सुचि. ५.७ )

**मार्गोपरोध**–पु., मार्गस्यावरोधः (चसू. २६.८२ ) स्रोतसां रोधः। अयं रसदोषजविकारेष्वेकः (सुसू. २.४९ )

**मार्जन**–पु., लोध्रभेदः, पट्टिकारोध्रः ( रा. ६.२४१)

**(मार्जनी )**–स्त्री., गृहमार्जनी ( असंशा. १२.४ )

**मार्जार**–पु., प्राणि० प्रसहमृग० (अहसू. ६.४८) बिडालः, मार्ष्टिमुखम् ( चसू. २७.३५ ) दंष्ट्रानखविषोऽयम् (सुक. ३.५ ) अस्य मूत्रपित्तशकृल्लोमनखचर्माण्युन्मादादिषु सेकाञ्जननस्यधूमार्थमुपयुज्यन्ते (चचि. ९.७४-७५) अस्य सर्पविषं नातिबाधते ( सुक. ४.४५ ) पित्तमस्य सर्वविषहरम् (सुक. ५.६८-७३; असंसू. ८.२९) इदं ग्रहचिकित्सायामुपयुज्यते (सुउ. ६०-४० )

गुहाशय० अरण्यबिडालः (सुसू. ४६.७२; धपरि.६)

वनस्पति० चित्रकभेदः, रक्तचित्रकः (रा. ६.१२७)

**( मार्जारी )**–स्त्री., सुगन्धि० कस्तूरिका ( ध. ३.२८ )

**–गन्धिका**–स्त्री., वनस्पति० मुद्गपर्णी (ध. १.१३८ )

**–मुख**–न., स्वस्तिकयन्त्र० मार्जारमुखसदृशं यन्त्रम्, इदमस्थिनिमग्नशल्योद्धरणार्थमुपयुज्यते ( सुसू. ७.१० )

**मार्जाली**–स्त्री., सुगन्धि० कस्तूरिका (रा. १२.४६ )

**मार्जित**–वि., सुघृष्टम् ( चचि. २ ( २ ) २५ )

**मार्तण्डवल्लभा**–स्त्री., वनस्पति० आदित्यभक्ता ( रा. ४.१४५ ) सूर्यभक्ता, सूर्यपुष्पी.

**मार्तण्डेश्वर**–पु., योग० गन्धकताम्रमाक्षिकादिसिद्धः अयं वाताद्यष्टमहारोगश्वासकासक्षयहलीमकपाण्डुसन्निपातज्वरनाशनस्त्रीवदीपनो वन्ध्यत्वनाशनश्च (र., २१.९६-१०२)

**मार्तिक**–वि., मृत्तिकाया इदम्, मृत्तिकानिर्मितं वा मृत्तिकाभवम् ( चचि., १ ( २ ).४ )

**मार्दव**–न., मृदुत्वम् ( चसू. २६.४३ (१); चशा. ४.१४) सौकुमार्यम् ( अहसू. ११.३ )

**–कर**– वि., शरीरकोमलतोत्पादकम्, सौकुमार्यकरम् (सुसू. ४६.४३५-४३७ )

**मार्द्वीक**–न., आसुत० द्राक्षोद्भवं मद्यम् ( सुचि. ८.१७ ) तद्गुणाः–मधुरं कषायानुरसं लघु लघुपाकि सरं शोषविषमज्वरनाशनं च ( सुसू. ४५.११७-१७३ ) लेखनं हृद्यं नात्युष्णमल्पपित्तानिलं पाण्डुमेहार्शःक्रिमिनाशनं च (अहसू. ५.७० )

पानक० द्राक्षारसोद्भवम्, तद्गुणाः– श्रमहरं मूर्च्छादाहतृषापहं च ( सुसू. ४६.३९० )

**–शुक्त**–न., आसुत० मार्द्वीकम् ( असंसू. ६.१३६ )

**मार्ष**–पु., शाक० मारिषः ( असंसू. ७.१३९-१४३ )

**माल**–न., उपरिभागः ( इन्दु. असंउ. ४४ )

**( माला )**–स्त्री., सुगन्धि० वृक्ष० स्पृक्का ( र. १७.३४ )

**मालती**–स्त्री., वनस्पति० पाठा ( ध. १.७० )

जाती ( चचि. ३०.५९; सुसू. ३८.६४; असंसू. ३०.१४; ध. ५.१३८ )

मालतीनाम्ना प्रसिद्धा काचित् नदी, यत्तीरसम्भवं श्वेतटंकणम् ( रा. ६.३१ )

**–कुसुम**–न., जातीपुष्पम्, इदं नेत्रयोः स्पर्शनान्नेत्रशैत्यकरम् ( असंसू. ३३.९ )

**–कोरक**–पु., जातीपल्लवः, अस्य क्षारः श्वित्रे लेपार्थमुपयुज्यते ( असंचि. २२ )

जातीपुष्पम्, इदं तिमिरेऽञ्जनार्थमुपयुज्यते ( सुउ. १७.३७ )

**–तीरसम्भव**–न., टङ्कणभेदः श्वेतटङ्कणम्, (रा.६.३१)

–पत्र–न., जातीलतायाः पत्रम्, स्वेदोपयोगिद्रव्येष्वेकम् ( असंसू. २६.६ )
–पत्रिका–स्त्री., वनस्पति० जातिपत्री ( ध. ३.३३ )
–पुष्प–न., शाक० जातीपुष्पम् (ड. सुचि. ३७.१०१) सुमनाः (अरु. अहृसू. २४.२१½) इदं शाकत्वेनोपयुज्यते। तद्गुणाः–तिक्तं मारुतजित् सौरभ्यात् पित्तनाशनं च (सुसू. ४६.२८६; ( असंसू. १२.८७-८८ )
–फल–न., वनस्पति० जातीफलम् ( ध. ३.३५ )
–रससम्भव–पु., क्षार० टङ्कणक्षार ( ध. २.२२ )
मालय–न., वनस्पति० पद्मकः (रा.१२.१४९)
मालविका–स्त्री., वनस्पति० त्रिवृत्श्यामा (ध. १.२४३)
मालवी–स्त्री., वनस्पति० पाठा (रा.६.१००)
माला–स्त्री.,
–कण्ट–पु., वनस्पति० अपामार्गः ( रा. ४.३८८ )
–कन्द–पु., वनस्पति० तद्गुणाः–सुतीक्ष्णो दीपनो वातश्लेष्माऽपकर्षणो गण्डमालागुल्मघ्नश्च ( रापरि. ७.४४ )
–गुणा–स्त्री., लूता० उपपादिका ( असंउ. ४४ ) तद्दंशलक्षणम्–दंशो रक्तो धूमगन्धो विशीर्यमाणश्च भवति। दाहो मूर्च्छा ज्वरश्च जायते (सुक.८.१२७) तथाऽन्तर्दाहो बहिः शैत्यमाध्मानं मूत्रकृच्छ्रता मूर्च्छाप्रलापाऽतीसारज्वराश्च भवन्ति (असंउ. ४५)
–ग्रन्थि–स्त्री., दूर्वाभेदः, मालादूर्वा (रा. ८.२३२)
–तृण–पु., वनस्पति० भूतृणः (ध. ४.४७) न., वनस्पति० भूतृणम् (रापरि. ८.४२)
–दूर्वा–स्त्री., दूर्वाभेदः (रा. ८.२३२)
मालालिका–स्त्री., वनस्पति० स्पृक्का (रा. १२.११३)
मालाली–स्त्री., वनस्पति० स्पृक्का (ध. ३६२)
मालुविटपिन्–पु., वनस्पति० कुम्भीरः (रापरि. ९.१९)
मालूक–पु., वनस्पति० अर्जकभेदः (रा. १९.८६)
मालूर–पु., बिल्वफलम् ( र. २२.१५७ ) वनस्पति० कपित्थः ( रा. ११.१५५ )
माल्य–न., पुष्पमाला, पुष्पम् (चक. ३.१२; सुक.५.१२)
–परिक्लेशन–न., लक्षण० पुष्पादिष्वप्रीतिः ( चनि. १.३३ )
–पुष्प–पु., वनस्पति० शणः ( रापरि. ४.१० )
–( पुष्पी )–स्त्री., वनस्पति० शणपुष्पी (ध. १.२००)
–पुष्पिका–स्त्री., वनस्पति० शणपुष्पी (रा. ४.२९८)
माष–पु., शिम्बीधान्य० स्वेदोपगगणोक्तमेकं द्रव्यम् ( चसू. ४.१३; असंसू. १५.२७ ) अयं शमीधान्यानां हीनतमः (चसू. २५.३९; अहृसू.६.२५) श्लेष्मपित्तजननानां श्रेष्ठः ( चसू. २५.४०; असंसू. १३.३ ) विप्रेभ्यो माषदानमशुभस्वप्नापत्तिहरम् ( सुसू. २९.७१-७२ ) तद्गुणाः–वृष्यो वातहरः स्निग्धोष्णो मधुरो गुरुर्बहुमलो बल्यः पुंस्त्वदायी च ( चसू. २७.२४ ) तथा भिन्नपुरीषमूत्रः सन्तर्पणः स्तन्यकरश्च ( सुसू. ४६.३४ ) श्लेष्मपित्तकरः स्वादुपाकः ( असंसू. १७.४० ) शुक्रवृद्धिविरेककृच्च ( अहृसू. ६.२१-२२ ) तथा रक्तपित्तप्रकोपणो रोचनश्च ( रा. १६.१५४ )
हिं.—उडद, उरीद.
म.—उडीद.
गु.—अडद.
बं.—माषकलाय.
त.—उलुन्तु.
फा.—माष.
मान० वल्लद्वयम् ( र. ११.३ ) षड्गुञ्जामानम् ( रा. १३.११-१२ )
शिम्बीधान्य० राजमाषः ( ध. ६.८४ )
–कल्क–पु., चूर्णितमाषाणामार्द्रा पिष्टिः। अयं शिरोबस्तौ वस्त्रोपरि बद्धे चर्मपट्टे लेपार्थमुपयुज्यते ( अहृसू. २२.२९ )
–चूर्ण–न., माषपिष्टम्, इदं सूक्ष्ममुखव्रणप्रपीडनार्थमुपयुज्यते ( सुसू. ३७.११ ) व्रणमुखे विकिरणार्थमुपयुज्यते ( अहृसू. २७.४८ ) सिराव्यधविधौ असृक्स्थापनाय चोपयुज्यते ( असंसू. ३६.१० )
–पत्रिका–स्त्री., वनस्पति० माषपर्णी ( रा. ३.१७१ )
–पर्णभृत्–वि., हरितमाषपर्णानि पोषणार्थं बिभर्ति धारयति खादति वा इति हरितमाषपर्णभृद् ( गवादिः ) ( सुचि. २६.३७ )
–पर्णी–स्त्री., वनस्पति० जीवनीयवर्गोक्तमेकं द्रव्यम् ( चसू. ४.९; असंसू. १५.६; अहृसू. १५.८ ) शुक्रजननगणोक्तमेकं द्रव्यम् ( चसू. ४.१२ ) तद्गुणाः–तिक्ता शीता वृष्या शुक्रवृद्धिकरी बल्या पुष्टिकरी वातपित्तघ्नी रक्तपित्तदाहज्वरनाशनी च ( ध. १.१३६ ) तथा जीवनी स्तन्यश्लेष्मकरी च ( सुसू. ३८.३५-३६ )
हिं.—माषोणी, वनउडद.
म.—रानउडीद.
गु.—जंगली अडद.
बं.—माखानी, माषानी.
त.—पेरुवीट्टुकोकु.

–पिष्ट–न., माषपिष्टिः, इदं शिरोबस्तौ वस्त्रोपरि लेपनार्थमुपयुज्यते ( असंसू. ३१.१९ )

–पूपलिका–स्त्री., भक्ष्य० माषस्य कृता माषमयी पूपलिका ( चचि. २४.१२६ )

–मिश्रक–पु., माषतण्डुलकृतमन्नम् (चसू. १३.८९)

–यूष–पु., कृतान्न० माषाणां मण्डः, वृष्योऽयम् ( चचि. २ (१). ४७ ) आभ्यन्तरमलवर्धनश्च (असंसू. ७.४९ )

–वर्णा–वि., माषयूषप्रभा, कृष्णकपिला ( सुसू. ८.१३ )

–विकृति–स्त्री., माषनिर्मितं भक्ष्यादि ( अहृसू. ३.१२ )

–विदल–न., माषस्य विदलीभूतं धान्यम्, माषदाली ( चसू. २.३२ )

–षष्टिकपायस–पु., कृतान्न० क्षीरचतुर्गुणे विदार्याः रसे माषैः षष्टिकैश्च साधितो घृताढ्यः पायसः। अयमतिवृष्यः ( चचि., २(३).१४ )

–सूप–पु., कृतान्न० माषाणां यूषः, मूलकेन सह माषसूपाभ्यवहारो विरुद्धः ( असंसू. ९.९; अहृसू. ७.३३ )

माषक–पु., मान० अण्डिकाचतुष्टयम् ( चक. १२.८८; असंक. ८ )

शाक० वास्तुलः ( अरु. ) तद्गुणाः–रूक्षो ग्राही हिमो गुरुश्च ( अहृसू. ६.९२ )

मास–पु., न., काल० शुक्लकृष्णेतिपक्षद्वयात्मको मासः। चैत्रादयो द्वादशमासाः (सुसू. ६.५; असंसू. ४.५)

–स्वरूप–न., मासानां लक्षणम् ( असंसू. ४.६३ )

मासानुमासिक–वि., मासानुक्रमेण प्रतिमासं दीयमानम् ( सुशा. १०.५८ )

मासान्त–वि., मासं यावत् मासावसानम्, मासावधिकम् ( असंशा. ९.२१ )

मासार्धमासस्थ–वि., अतीतसार्धमासम् ( अरिष्टादि ) ( चक. ८.१५ )

मासूरी–स्त्री., मसूरदलधारा तन्वी, भेदनानां शस्त्राणां धाराप्रमाणमिदम् ( ड. सुसू. ८.१०; असंसू. ३४.३५ )

माहिष–वि., महिषस्य महिष्या वा सम्बन्धि ( चसू. १.१०२; सुसू. ४५.९९ )

–पञ्चक–न., महिष्याः क्षीर-दधि-घृत-मूत्र-शकृद्रसाः ( र. १०.७८ )

–बस्ति–पु., महिषस्य बस्तिः, अयं बस्तियन्त्रार्थमुपयुज्यते ( चसि. ३.१० )

–रस–पु., माहिषमांसरसः, दधिदाडिमसहितो घृताढ्योऽयं परं वृष्यः ( चचि. २(४).१५-१६ )

माहिषाम्बु–न., महिषीमूत्रम्, इदं रसकर्मण्युपयुक्तम् ( र. १०.७८-७९ )

माहिषाम्ल–न., माहिषदधि, माहिषतक्रं वा ( काश्यपगर्भिणीचि. )

माहेन्द्र–वि., आन्तरिक्षं जलम् ( चसू. ५.६६ ) इदं राजयक्ष्मणि परिषेकार्थमुपयुज्यते ( चचि. ८.८६ ) इदं सर्वेषामनुपानानां श्रेष्ठम् ( सुसू. ४६.४३४ )

( माहेन्द्री )–स्त्री., वनस्पति० इन्द्रवारुणी ( रा. ३.३७५

–काय–वि., सात्त्विकप्रकृतिभेदः, यस्मिन् पुरुषे महाशयत्वं शौर्यमाज्ञा शास्त्रबुद्धिसातत्यं भृत्यभरणमित्येवमादयो दृश्यन्ते स माहेन्द्रकायः ( सुशा. ४.८२ )

–सलिल–न., आन्तरिक्षोदकम् ( असंसू. ४.७ )

माहेश्वर–पु., सिद्धधूप० श्रीवेष्टकदेवदारुहिङ्गुमुस्ताकटुकावचादीनि द्रव्याणि छागमूत्रे मर्दितव्यानि। योगोऽयं धूपनाद् ग्रहपीडाहरः (र. २१.६०-६२) घृतगुग्गुलुबिल्वदेवदारुनमेरुयवयुक्तो धूपः। ग्रहापहोऽयम् ( काधूपकल्प. )

अगद० सगोमूत्राऽजगन्धा सगुग्गुलुर्गृहधूमश्च। योगोऽयं सर्वविषहरः ( असंउ. ४० )

(माहेश्वरी)–स्त्री., वनस्पति० शङ्खिनी ( रा. ३.३८१ )

मित–वि., परिमितम् ( असंसू. ३.८८ )

मित्र–पु., देवता० सूर्यः, पायोरधिदैवतम् (सुशा. १.७) न., वयस्यः, सुहृद् ( असंसू. ८.३ )

–विन्दा–स्त्री., इष्टि० आयुष्कामस्येयमिष्टिर्विहिता ( असंसू. ९.११५ )

मिथुन–न., मधुसर्पिषी, द्वयम् यथा मधुसर्पिषोः ( सुउ. ६५.३४ )

मिथुनीकृत–वि.,मिथुनभावापन्नम्, मैथुने सम्यक्संयुक्तम् ( चशा. २.३ )

मिथ्या–अव्य., असम्यक् अविध्यर्हम् ( चसू. १.५४ )

–प्रणिहित–वि., असम्यग्रीत्या प्रणिहितम् ( चसि. ४.३ )

–प्रतिकर्मन्–न., मिथ्याकृतं वमनादिकं पञ्चकर्म ( चचि. ५.५ )

–युक्त–वि., असम्यक्प्रयुक्तम् स्नेहवमनादि ( सुउ. ४०.४ )

–योग–पु., असात्म्ययोगः ( चसू. ८.१५ ) अनुचितो योगः ( चसू. ११.३९ ) सम्यग्योगादन्यस्त्रिविधो योगः । मिथ्यातियोगो हीनयोगश्च ( चसू. ८.३७; अहसू. १२.३६ ) यथा विकृतबीभत्सरूपादिदर्शनं चक्षुषो मिथ्यायोगः ( चसू. ८.१५ ) सेव्यत्वेन निषिद्धविषयस्य सेवनम् । यथा परुषेष्टविनाशादि-श्रवणं शब्दस्य मिथ्यायोगः ( सुउ. ६१.४ ) अयं व्याधिकराणां श्रेष्ठः (चसू. २५.४०; असंसू.१३.३)

–विहार–पु., अयथाबलमारम्भः ( सुचि. ५.५ )

–संसर्जन–न., पेयविलेप्यादीनां मिथ्यायोगः, अविधिप्रयोगः ( चवि. १३.१२; चनि. १.२८ )

**मिथ्यारम्भ**–पु., मिथ्यायोगः (चक्र.) अयथाबलं प्रयत्नः ( चशा. १.१०४ )

**मिथ्याहार**–पु., देशकालप्रकृत्यादिविरुद्धः संयोगविरुद्ध-श्चाहारः ( सुचि. ५.५ )

**मिथ्योपचरित**–वि. असम्यक्चिकित्सितः ( चवि. ३.३८ )

**मिन्मिण**–पु., रोग० मिम्मिनः (सुनि. १.८५) गेंगाणा.

**मिन्मिन**–वि., मिम्मिनः, अस्पष्टनासागतशब्दोच्चारवान् ( चवि. ८.८, सुसू. २४.५ )

**मिम्मिण**–वि., सानुनासिकाऽव्यक्तस्वरः ( असंशा. २.५४ )

**मिम्मिन**–पु., रोग० सानुनासिकशब्दत्वम्, तल्लक्षणम्– सकफो वायुः शब्दवाहिनीर्धमनीरावृत्य नरान् मिम्मिनांस्तथा मूकगद्गदांश्च करोति ( चशा. ३.१५; सुनि. १.८५ )

**मिलिन्दक**–पु., सर्प० मण्डलिजातीयः ( सुक. ४.३४ (२)

**मिशि**–स्त्री., वनस्पति० शतपुष्पा ( अहसू. १५.३; र. २२.११०; ध. २.१ )

मिश्रेया ( ध. २.४ )

**मिशी**–स्त्री., वनस्पति० जटामांसी ( ध. ३.४५ ) शतपुष्पा ( र. १६.६७ )

**मिश्र**–पु., वनस्पति० चाणक्यमूलकम् ( असंक. ३ ) चाणक्याख्यमूलम् ( ध. ४.३५ )

–पुष्पा–स्त्री., वनस्पति० वनमेथिका ( रा. ५.१८५)

–लोह–न., पित्तलं कांस्यं वर्तं चेति धातुत्रयम् ( र. ५.१-४ )

–वर्ण–पु., इक्षुभेदः, पुण्ड्रकः ( रा. १४.१८३ )

–वर्णफला–स्त्री., वनस्पति० वार्ताकम् (रा. ७.१२८)

**मिश्रक**–पु., कृतान्न० तण्डुलावरान्नोदनः (इंदु. असंउ. ४) पारदभेदः, सर्वधातुगतं तेजो यत्र मिश्रितं तिष्ठतीति मिश्रकः ( र. १.८९ )

न., लवण० औषरकम् ( रा. ६.५.१ )

वङ्गप्रकारयोरन्यतरत् ( र. ५.१६१-१६२ )

वि., अध्यायसंज्ञा० सुश्रुतस्य सूत्रस्थानगतः सप्तत्रिंशत्तमोऽध्यायः, अस्मिन् शोफस्य व्रणस्य च मिश्रयोगाः कथिताः । तथा व्रणषष्ट्युपक्रमेषु विम्लापनाद्यष्टौ उपक्रमा मिश्रीकृत्य कथिताः ( सुसू. ३७ )

–चिकित्सित–न., अध्यायसंज्ञा० सुश्रुत-संहितायां चिकित्सास्थानगतः पञ्चविंशतितमो-ऽध्यायः ( सुचि. २५ )

–स्नेह–पु., सिद्धस्नेह० त्रिवृत्त्रिफलादन्तीदशमूलानि पञ्चदशपलानि चतुर्गुणे जले पक्त्वा चतुर्भागस्थितं तद्रसं सर्पिरेरण्डतैलं क्षीरं चैकत्र साधयेत् । स्नेहोऽयं कफगुल्मनुत् तथा कफवातविबन्धेषु कुष्ठप्लीहोदरेषु योनिशूलेषु च हितः ( चचि. ५.१४९-१५१; असंचि.१६ )

पैत्तिकोन्मादहरश्च ( चचि. ९.७६ )

पिप्पल्यामलकद्राक्षाश्यामाभिः पलोन्मिताभिरेरण्ड-तैलसर्पिषोः प्रस्थौ षड्गुणे क्षीरे पचेत् । स्नेहोऽयं गुल्मिनां स्रंसनस्तथा वातव्याधिविद्रधिवृद्धिहरश्च ( असंचि. १६; अहचि. १४.८९-९०)

कृष्णतिलभल्लातकानां तैले सर्पिश्च प्रत्येकं द्रोण-प्रमाणेन द्रोणत्रयम्, आमलकरसशालसारादिकषायौ च द्रोणद्वयम्, एतेषु कल्कीकृतैस्त्रिफलात्रिकटु-विडङ्गादिभिः स्नेहपाकविधानेन स्नेहं विपचेत् । अयं सर्वकुष्ठनाशकः दीर्घायुर्दः सर्वव्याधिहरश्च ( ड. सुचि. १०.१५ )

**मिश्रेया**–स्त्री., वनस्पति० तद्गुणाः–तिक्ता स्वादुः ( कटुः ) ( रा. ) हिमा स्निग्धा वृष्या बल्या वातपित्तघ्नी ( कफघ्नी ) (रा.) अर्शःक्षयक्षतक्षीणाऽस्रदोषप्लीहघ्नी तथा जन्तुघ्नी च ( ध. २.४ )

हिं.—सोवा.

**म.—शेपू.**

गु.—सुवानुं बी.

बं.—सूलफा.

त.—शटकु पिवराई.

**मिसि**–स्त्री., वनस्पति० शतपुष्पा ( सुचि. ३८.४४ )

**मिहिका**–स्त्री., सुगन्धि० कर्पूरः ( रा. १२.५६ )

**मीन**–पु., जलचर० मत्स्यः ( र. २८.७७ )

-तैलनिषेवण-न., मूर्धतैलसेवनं, तच्च निद्रानाशे हितम् ( सुशा. ४.४३ )
-तैलिक-वि., मूर्धतैलसंबन्धि ( सुउ. १८.४९ )
-रुज्-स्त्री., शिरोवेदना ( असंसू. ५.३३ )
-रोग-पु., शिरोरोगः (अहृसू. १२.४९; चसि.२.२२)
-विरेचन-न., चिकित्सा० शिरोविरेचनम्; नस्यम् ( चचि. ३.१७३ )
-विरेचनगण-पु., शिरोविरेचनगणः, वेल्लन्तरादिगणः ( अहृसू. १५.४; अहृसू. २१.१८ )

**मूर्धाभिघातिन्**-वि., मूर्धगतरोगी, विकृतमस्तिष्कः ( सुशा. १०.९ )

**मूर्धरेचन**-पु., नस्यभेदः, शिरोविरेचनम् (अहृसू. २०.७)

**मूर्धावरण**-न., लिङ्गमणेरावरणं यथा दाक्षिणात्याः कृत्रिममणिं कारयन्तीति जेज्जटः पाठः ( सुचि. २४.१२० )

**मूर्धास्थिरुज्**-स्त्री., शिरोऽस्थिवेदना, सान्निपातिकज्वरलक्षण० ( सुउ. ३९.३६ )

**मूर्वा**-स्त्री., वनस्पति०, चोरस्नायुः, धनुर्गुणोपयोग्या, 'दूधउड' इति लोके (सुसू. ३८.६) आरग्वधादिगणे उल्लिखिता; यथा पूर्वदेशे गुणान्कुर्वन्ति धनुषाम्। मूर्वातानैर्व्रणं सीव्येत् ( सुसू. २५.२१ ) मूर्वादिसिद्धं सर्पिः अग्निदग्धव्रणानां रोपणम् ( सुसू. १२.२७-२८ ) महाकषायवर्गे तृष्णिघ्नगणे स्तन्यशोधनगणे चैकं द्रव्यम् ( चसू. ४.११-१२ ) हस्तिमेहे उपयुज्यमानतिन्दुकादिकषाये द्रव्यमेकम् ( सुचि. ११.९ ) मूत्रदोषनिवारकं द्रव्यम् ( सुउ. ५८.३६ ) अनुवासनकर्मणि उपयुक्तं द्रव्यम् ( सुचि. ५.१२ ) पटोलादिगणे द्रव्यमेकम् ( सुसू. ३८.३३ ) तीक्ष्णचाकचक्यविशिष्टत्रिदलपत्रा वल्ली. 'चुरनहार,' 'मोरवेल' इति लोके प्रसिद्धा। कुष्ठामयघ्नगणे द्रव्यमेकम्( र. २०.३३) गुणाः—स्वादुरसोष्णा, हृद्रोगकफवातजित्कुष्ठकण्डूवमीमेहविषमज्वरनाशिनी ( ध. १.१३; पृ. ९ ) तिक्ता कषायोष्णा ( रा. ३.१२; पृ. ९ )
हिं.—मूर्वा मुर्हरी चुरनहार चूर्णहार.
**म.—मोरवेल.**
गु.—मुरवेल.
बं.—मुर्वा मुर्गा मुरहा शोचमुखी वोडाचक.
त.—मरुलकलङ्ग.
-पत्र-न., मूर्वालतायाः पत्रं, कफजव्रणे उपयुक्तम् ( सुचि. १.११५ )

**मूल**-न., प्रधानकारणम् "दोषधातुमलमूलं हि शरीरम्" ( सुसू. १५.३ ) कारणम् ( अहृसू. ११.१ चचि. ३०.५; चसि. ९.३ )
संभवहेतुः ( सुसू. १.२८ )
प्रभवस्थानं, प्रारम्भस्थानं वा, यथा प्राणवहानां स्रोतसां हृदयं मूलं महास्रोतश्च ( सुशा. ९.१२; चवि. ५.८; सुसू. १.१० )
वनस्पत्यंग० शिफा "मूलत्वक्सारनिर्यासनालस्वरसपल्लवाः क्षारः क्षीरं फलं पुष्पं भस्म तैलानि कण्टकाश्च ( चसू. १.७३ )
वनस्पति० मूलकम् ( र. ११.२६ )
गर्जरम् ( ध. ४.६९ )
पिप्पलीमूलम् ( ध. २.७५ पृ. ८४. )
पुष्करमूलम् ( ध. १.६६ )
ग्रहणस्थानं, यथा शलाकामूलम् ( अहृसू. २५.३७ ) धूमनेत्रस्य वर्तिसंवरणस्थानं धूमनेत्रमूलमिति ( सुचि. ४०.५ )
रोग० गुदार्शः ( र. २२.२७; २.१३२; २०.११८ )

**( मूली )**-स्त्री., मूलकम् ( र. २४.५१ )
-कुठारक-पु., योग०, वरनागोऽभ्रकसत्त्वं ताम्रं तीक्ष्णलोहं सर्वं समभागं त्रिगुणेन हरितालेन मेलयित्वा पारदेन सह संमर्द्य पिष्टिं कुर्यात्। तां पिष्टीं भल्लातकवृक्षमूले खातं कृत्वा स्थापयेन्मासपर्यन्तम्। ततस्तां गोदुग्धे ततश्च भल्लातकतैले लौहभाण्डे च स्थापयेत्। तैलमेतत्प्रस्थमात्रं भवेत्। तस्मिंस्तां पिष्टिं पचेत्। तत्तैलेन च गन्धकं मर्दयित्वा तेन सह भस्मक्रियां कुर्यात्। ततश्च कार्तिकमासोत्थकुरण्टकपत्रजेन रसेन सह पारदं मर्दयित्वा भस्मतां नयेत्तच्च भस्म समभागिकेन पूर्वरसेन सह मेलयेत्। ततश्च वन्यसूरणनिर्गुण्डीमहाराष्ट्रीगजकर्णिकावज्रवल्लीचित्रकाणां रसेन मर्दयित्वा शोषयेत्। पुनश्च त्रिवारं भृङ्गराजरसेन मर्दयेत् अयं वल्लमात्रोपसेवितोऽनुपानत्वेन ससर्पिष्कयवानीचित्रकविडङ्गत्रिफला-पूर्णसहितः अर्शांसि मुखनासिकाऽऽमयान् प्लीहग्रहणीगुल्मयकृदग्निमान्द्यकुष्ठानि च नाशयेत् ( र. १५.३४-४२ )
-ग्रन्थि-स्त्री., दूर्वा०, मालादूर्वा ( रा. ८.२३२; पृ. १६३ )
-ज-न., आर्द्रकम् ( ध. २.८४; पृ. ८७ )
-पुष्कर-न., पुष्करमूलम् ( रा. ६.९३; पृ. १९ )

–पोती–स्त्री., वनस्पति०, गुणाः—त्रिदोषघ्नी, वास्तुकभेदः वृष्या, बल्या, लघ्वी, बलपुष्टिकरी, रुच्या, जठरानलदीपनी च ( रापरि. ७.७८,७९-३५३ )

–फलद–पु.; पनसः ( रापरि. ११.९-३७३ )

–विरेचन–न., विरेचनकरं मूलं, यथा त्रिवृन्मूलम् ( सुसू. ४४.३ )

–विष–न., स्थावरवृक्षलतादिमूलानां विषम् ( चचि. २३.१२३; १३.१३२ ) अष्टौ मूलविषाणि–वलीतकाश्वमारगुञ्जासुगन्धगर्गरककरघाट विद्युच्छिखाविजयाधीत्यष्टौ मूलविषाणि तस्य लक्षणं-मूलविषैरुद्वेष्टनं प्रलापो मोहश्च भवेत् (सुक. २.७) विषचिकित्सायामस्य प्रमाणं–चतुर्भिर्यवैर्हीना मात्रा। षड्भिर्यवैर्मध्यमा मात्रा। अष्टाभिर्यवैरुत्तमा मात्रा। मूलविषस्य यथायथं यथाविधि मात्रा प्रयोज्या। तत्र कीटदष्टस्य द्वौ यवौ। वृश्चिकदष्टस्य तिलमात्रम्। असृक्स्थे विषे नैव प्रयुञ्जीत। लूतादष्टस्य पाने विषं नेष्यते। किंतु लेपादिकर्मणि प्रशस्तम्। दष्टानां पानलेपयोर्मूलविषं प्रशस्तम् ( असंउ. ४८.३७५ )

–शाक–न., शाकभेदः यथा नवनीतेन मूलशाकं विरुध्यते ( असंसू. ९.९ )

–सन्नियम–पु., मूलसंख्याविनिश्चयः; मूलस्थानविनिश्चयः ( सुशा. ९.३ )

–सिरा–स्त्री., शारीर० प्रधानसिरा, मूलस्थानाश्रिता सिरा, एताः संख्यातः चत्वारिंशत् ( सुशा. ७.६ )

–हेतु–पु., प्रकृतिहेतुः. यथा शोफस्य मारुतः दाहस्य पित्तं, शैत्यस्य कफः ( काखिल. १७.२४ )

मूलक–न., पिप्पलीमूलम् ( सुउ. ४२.७२ )

गजैरम् ( ध. ४.६९; पृ. १४७ )

वनस्पति०, स्वनामख्यातमूलशाक०, ग्रन्थिविसर्पे शुष्कमूलककल्को लेपार्थमुपयुज्यते ( असंचि. २० ) नाडीस्वेदार्थमुपयुक्तं द्रव्यम् ( चसू. १४.३१ ) गुणाः–बालमूलकमव्यक्तरसं, किंचित्क्षारं, सतिक्तकं, दोषहरं, लघूष्णं, गुल्मकासक्षयश्वासव्रणनेत्रगलामयान् स्वराग्निसादोदावर्तपीनसांश्च नियच्छति। यत् महत् तद्रसे पाके च कटुकमुष्णवीर्यं त्रिदोषकृत् गुर्वभिष्यन्दि च। तदेव स्निग्धस्विन्नं वातजिद्भवति। शुष्कमूलकं तु वातश्लेष्महरम्। महच्छुष्कमार्द्रं चानग्निपक्वं चेद्दोषलं भवति ( अहसू. ६.१०२-१०५; सुसू. ४६.२४१; चसू. २७.१६८; सुसू. ४०.५ ) कृमिहरशाक० ( चवि. ७.१७ ) गुरु, विष्टम्भि, तीक्ष्णमामत्रिदोषनुत्, स्निग्धस्विन्नं तदेव कटूष्णं कफवातनुत्; शुष्कं तु त्रिदोषशमनं, विषदोषहरं, लघु च (ध.४.३४; पृ. १४० ) दीपनं, हृद्रोगनाशनं, रुचिदं च (रा.७.५२) मूलकन्दजाः शिंबाः रसे विपाके च मधुराः बलप्रदाः पित्तनिबर्हणाश्च ( सुसू. ४६.४६-४७ )

हिं.—मूली, छोटी मूली, मुरई.

म.—मुळा.

गु.—मूला, नाहानी मुळी.

बं.—मूला, चणकमूली.

त.—मुलंगि.

फा.—तुख, तुर्ब.

कन्दविषभेदः, विषलक्षणानि–वैवर्ण्यं, छर्दिः, हिक्का, शोफः, प्रमूढता च ( सुक. २.५; असंउ. ४०; र. २९.१७ )

( मूलिका )–स्त्री., सर्पाक्ष्यादीनां मूलम् ( र. ११.५१ )

–तैल–न., मूलकबीजानां तैलम्। गुणाः–तीक्ष्णं, कटु अस्रपित्तकृत् अर्शःकुष्ठकृमिश्लेष्मशुक्रमेदोऽनिलापहम् ( असंसू. ६.१०६ ) कटुतैले उल्लिखितं शिरोरोगापहरं च ( सुसू. ४५.११५ )

सिद्धतैलं, रास्नाशिरीषयष्टिमधुशुण्ठीसहचरामृतास्योनाकदेवदारुशम्पाकाश्वगन्धात्रिकण्टकानां दश पलान् भागान् कषायमुपकल्पयेत्। ततस्तेन कषायेण सर्वगन्धैश्च कार्षिकैः दध्यारनालमाषाम्बुमूलकेक्षुरसैः पृथक्प्रस्थोन्मितैः सार्धं तैलप्रस्थं विपाचयेत् एतन्मूलकतैलाख्यं वर्णायुर्बलवर्धनं तथा प्लीहमूत्रग्रहश्वासकासवातरोगनुत् ( चचि. २८.१७२-१७५ )

–पर्णी–स्त्री., गुग्गुलुः ( चचि. ३.२६७ )

शिग्रुः ( ४.३९, पृ. १४२ )

–पोतिका–स्त्री., शाक०, बालमूलकम्। गुणाः–शाकवर्गे श्रेष्ठा, चक्षुष्या, कटुतिक्तरसा, हृद्या, रोचनी, वह्निदीपनी, सर्वदोषहरा, लघ्वी, कण्ठ्या च (सुसू. ४६.२४०; सुउ. १७.५०)

–फल–न., मूलकशिंबिः, मूलकफलानि उष्णानि, शोथपाचनानि च ( सुसू. ३७.९ )

–यूष–पु., बालशुष्कमूलयूषः। अयमपि मुद्गादिसहितो ज्ञेयः। जेज्जटस्तु यद्यपि बालमूलकं त्रिदोषघ्नं तथापि तस्य न यूषकरणे श्रुतिरस्तीत्याह। गुणाः– श्वासकासप्रतिश्यायप्रसेकारोचकज्वरांस्तथा कफमेदोगलामयान्हन्ति ( सुसू. ४६.३७२; काखिल. ४.४० )

**मूलाकरोद्भव**–वि., मूलभूतं खनिसंभूतम् लवणभेदः, मूलभूतः आकरो मूलाकरः, प्रशस्यतरतुरङ्ग-मोत्पत्तिभूमिस्तत्रोद्भवं लवणम्। तल्लवणं कटुकं छेदि च (सुसू. ४६.३२१)

**मूलामय**–पु., गुदार्शः (र. ५.७२)

**मूलारिष्ट**–वि., अरिष्ट० (असंचि. १४)

**मूलार्ति**–स्त्री., गुदपीडा, गुदार्शः (र. २.११०)

**मूलासव**–पु., आसुत० ग्रहण्यां शस्तस्तथैव दीपनो रक्त-पित्तजित् आनाहकफहृद्रोगपाण्डुरोगाङ्गसादनुच्च (चचि. १५.१५६-५९)

**मूलाह्व**–न., मूलकम् (रा. ७.५०; पृ० १४०)

**मूलिनी**–वि., मूलं प्रशस्ततमं यस्याः सा। षौडशैकोना मूलिन्यः (चसू. १.७४)

**मूषक**–पु., प्राणि० द्र० 'मूषिक' (चवि. ३.७ (३) ध. ५.१३२; पृ. १९६; ध. ६.४३३; पृ. २७४) वनस्पति० मुष्कक (ध. ५.१३२; पृ. १९६) सोमलः, गौरीपाषाणः (र. ३.१३९)

**–कर्णी**–स्त्री., वनस्पति० (चसू. ४.११) मूषककर्णी गुणाः–कटुः उष्णा पाचनी कफपित्तहरा आनाह-ज्वरशूलार्तिनाशिनी (रापरि. ३.२३) एतत्कोमल-पल्लवाः रोगे उपयुज्यन्ते (असंचि. २२)

हिं.—मूषाकानी.

**म.—उंदीरकानी.**

गु.—उंदरकनी.

बं.—इंदूरकानी.

त.—चवरियारकुन्तल.

फा.—गोरोमुष, सतर.

**–मारी**–स्त्री., सुतश्रेणी (रापरि. ४.१६; पृ. ३३६)

**मूषा**–स्त्री., मृत्तिकालोहनिर्मितः पात्रविशेषो योऽग्नितापन-योगाद्धातूनां दोषमोक्षणेन नाम निरसनेन सत्व-निपाताय साह्ययो भवति (र. १०.१; (सुउ. १८.८६)

**मूषाप्यायन**–न., मूषाक्षिप्तस्य द्रावणयोग्यद्रव्यस्य द्रुति-समये मूषायाः अग्नितः क्षणमात्रमुद्धरणम् (र. १०.३२)

**मूषिक**–पु., प्राणी०, मूषकः, आखुः, प्रसहवर्गे, प्रोक्तः (चसू. २७.३५) भूमिमूषिकः बिलेशयवर्गे कीर्तितः (सुसू. ४६.७८) अयं जङ्गम–सविषप्राणिविशेषः, सुश्रुते अष्टादशप्रकारकाः–लालनः, पुत्रकः, कृष्णः, हंसिरः, चिक्कि(की)रः, छुछुन्दरः, अलसः कषायदशनः, कुलिङ्गः, आजितः चपलः, कपिलः, कोकिलः, अरुणसंज्ञः, महाकृष्णः, महाश्वेतः, कपि-लाखुः, कपोनाभश्च इत्यष्टादश (सुक. ७.३-६) अष्टाङ्गसङ्ग्रहे–लालनः, चपलः, पुत्रः, हसिरः, चिक्किरः, अजिरः कषायदन्तः, कुलकः, कोकिलः, कपिलः, असितः, अरुणः, शबलः, श्वेतः, कपोतः, पलितोन्दुरः (रुः), छुछुन्दरः रसालः (रसालाख्यः), इत्यष्टादशभेदाः (असंउ. ४६) मूषिकाः पञ्चधा विषं क्षिपन्ति, शुक्रेण, पुरीषेण, मूत्रेण, नखैर्दंष्ट्रा-भिश्च। तथा च गर्भिण्या मूषिकया दष्टेऽम्लादि-दोहदः, ऋतुमत्या दष्टे रक्तमेहनमाध्मानं रतिशील-ता च (सुक. ७.७ ड.) मूषिकाण्डं वृष्यघृतसिध्य-र्थमुपयुज्यते (सुचि. २६.३१)

मूषिकविषेऽगदः—कुष्ठं, त्रिकटुकं, दार्वी, मधुकं, लवणद्वयं, मालती, नागपुष्पं च एतानि कपित्थरस-पिष्टानि शर्कराक्षौद्रसंयुतानि अद्यात्। अयं सार्व-कामिकनामाऽगदः (सुक. ५.८२-८३) वृक्षमूषि-कोऽपि मूषिकसंज्ञयोल्लिखितः, स च पर्णमृगेष्वेकः (सुसू. ४६.७६)

**(मूषिका)**–स्त्री., मूषा (र. १०.९)

निर्विषाणां जलौकानामन्यतमा जलौका, मूषिका-कृतिवर्णाऽनिष्टगन्धा च (सुसू. १३.१२)

**(मूषिक)–कल्प**–पु., अध्यायसंज्ञा० (सुक. ७.१)

**–दंश**–पु., आगंतुरोग० मूषकस्य दंशः (सुक. ७.३३) द्र० 'मूषकविष'

**–पर्णिका**–स्त्री., वनस्पति० पुत्रश्रेणीति ख्याता, शोथे उन्मर्दनार्थमुपयुक्ता (चचि. १२.७२)

**–पर्णी**–स्त्री., वनस्पति०, दन्तीपर्यायः (चक. १२.३; सुउ ५४.२७) मूषिककर्णीख्यं द्रव्यान्तरमिति केचित् (सुउ. ५४.२७)

**–विष**–न., मूषकविषम्। मूषिकाणां विषमभ्रदर्शने प्रकुप्यति। किंवा मूषिकविषं यद्दोषाधिकं तत्तस्य वृद्धिहेतुषु कालेषु प्रकुप्यति। तत्र वमनविरेचन-शिरोविरेचननयनाञ्जनादिः दूषीविषापहश्च विधिः कार्यः (असंउ. ४६; सुक. ७.४१) मूषिकाणां शुक्रं यस्मिन्नङ्गे पतति वा ते शुक्रदिग्धैरङ्गैर्यदङ्गं स्पृशंति तेन रक्तं दूषितं भूत्वा पाण्डुतामापद्यते। ततो ग्रन्थयः श्वयथुः कोठो मण्डलानि भ्रमोऽरुचिः शीतज्वरोऽतिरुक्तोदो वेपथुः पर्वभेदनं च रोमहर्षः स्रुतिर्मूर्च्छा तथा श्लेष्मानुबद्धबह्वाखुपोतकच्छर्दनं च सकृद्भवति। मूषिकविषप्रभावान्मूषिकबालाकार-मांसखण्डानां छर्दनं सकृद्भवतीति। मूषिकविषं

व्यवायि कृच्छ्रं भूयोभूयः कुप्यमानं कालान्तरप्रकोपि दीर्घकालानुबन्धि चास्ति। एतज्जुष्टस्य यदा मूर्च्छाऽङ्गशोफो वैवर्ण्यं क्लेदः शब्दाश्रुतिः ज्वरः शिरोगुरुत्वं लालासृक्छर्दिश्च भवति तदाऽसाध्यमाखुविषम्। तथा च शूनबस्तिर्विवर्णौष्ठो मूषिकाभैः ग्रन्थिभिः व्याप्तः छुछुन्दरसगन्धो भवत्याखुदूषितः सोऽप्यसाध्यः ( असंउ. ४६ )

न., मूषकदंशलक्षणानि- ग्रन्थयः, शोफाः, मण्डलानि, पीडकोपचयश्चोग्रः विसर्पाः, किटिभानि च जायन्ते। तथैव पर्वभेदः तीव्रा रुजः, मूर्च्छाऽङ्गसादनं, ज्वरः, दौर्बल्यमरुचिः, श्वासो वमथुर्लोमहर्षणं च ( सुक. ७.८-९ ) चिकित्सा च-अग्नितप्तेन घृतेन दहेत्। तथा च विस्रावयेत्, प्रलेपयेच्च शिरीषरजनीकुष्ठकुङ्कुमैरमृतायुतैः ( सुक. ७.३३ ) शुकाख्यकोषवत्यांश्च मूलं मदनं देवदालीफलं च दध्ना पाययेत्। पीत्वा स रुग्णो विषं वमेत्। अनन्तरं फलं, वचा, देवदाली, कुष्ठं, गोमूत्रपेषितं दध्ना सह लेह्यम्। सर्वमूषिकदष्टानां एष सुखावहो योगः ( सुक. ७.३४-३६ )

**मूषिका**-स्त्री., प्राणि० अस्याः शरीरेण सिद्धं तैलं गुदभ्रंशे पानाभ्यङ्गार्थमुपयुज्यते मूषिका निर्गतान्त्रां कृत्वा महत्पञ्चमूलस्य प्रस्थं क्षीरप्रस्थे त्रिगुणितजले विपचेत्। क्षीरप्रस्थेऽवशिष्टे तैलकुडवं दत्वा भद्रदार्वादिकल्कपाकं कृत्वा तैलं साधयेत् ( सुचि. २०.६२ )

**मूषिकाह्वया**-स्त्री., द्रवन्तीभेदः ( चक. १२.३; ध. १.२२९; पृ. ५४ )

सुतश्रेणी ( रापरि. ४.१६; पृ. ३३६ )

**मूषोदर**-न., शरावसंपुटम्

**मृक्षण**-न., तैलम् ( ध. ६.१२५; पृ. २३३ )

**मृग**-पु., प्राणि० हरिणः ( चसू. १३.११ ) मृगमांसम् गुणाः-एतन्मांसं हिमं रुच्यं ग्राहि दोषत्रयापहं षड्रसं, बलदं पथ्यं, लघु, हृद्यं, कफास्त्रजित् ( ध. ६.४००; पृ. २७० )

**( मृगा )**-स्त्री., महाबला ( रा. ४.४२५; पृ. ६५ )

**( मृग )-गामिनी**-विडङ्गम् ( ध. २.११; पृ. ७१ )

**-चर्मज**-वनस्पति० जवादि (रापरि.१२.६; पृ.३७५)

**-चारिन्**-पु., प्राचीनो रसाचार्यः ( र. ८.७७ )

**-चारिमुनीन्द्र**-पु., प्राचीनो रसाचार्यः ( र. १७.१०० )

**-चिर्भिटी**-स्त्री., वनस्पति० मृगाक्षी (रा. ७.२५८; पृ. ४२ )

**-तृणिका**-स्त्री., मृगजलम् ( चक. १.८ )

**-दूर्वा**-स्त्री., दूर्वा० गण्डदूर्वा, श्वेतदूर्वा, नीलदूर्वा ( र. ११.५२ )

**-द्विज**-पु., मृगपक्षी (चचि.१७.९३) पशु आणि पक्षी.

**-नाभि**-स्त्री., भेषजद्रव्य० कस्तूरिका (ध. ३.२८; पृ. १००; र. २१.१९०)

**-पित्त**-न., हरिणस्य द्रवपित्तम्, इदं विषहरम्, जीवननामागदेष्वेकं द्रव्यम् ( असंसू. ८.२९ )

**-प्रिय**-न., वनस्पति० तृणाढ्यम् ( रापरि. ८.५३; पृ. ३६१)

**-प्रियक**-पु., सर्प० गोनसः, बिलेशयेष्वेकः; वातरोगेऽयं पथ्यः ( सुसू. ४६.७८-८२ )

**-भक्षा**-स्त्री., वनस्पति० गन्धमांसी ( रा. १२.९१; पृ. १०५ )

**-भोजिनी**-स्त्री., वनस्पति० इन्द्रवारुणी ( सुचि. १७.३७ )

**-मद**-पु., भेषजद्रव्य० कस्तूरिका ( ध. ३.२८; र. १७.१२८; पृ. १०० )

**-मातृका**-स्त्री., स्वल्पा पृथूदरा हरिणजातिः जाङ्गलमृग० ( चसू. २७.४५; चसू. १५.७ ) अल्पा पृथूदरा चतुरङ्गस्त्री 'भेदली' इति लोके; जङ्गालवर्गे, अस्याः मांसं सर्वप्राणिनामाहारार्थे हितम्, गुणाः- शीता असृक् पित्तशमनी सन्निपातक्षय, श्वासकासहिकाऽरुचिप्रणुत् ( सुसू. ४६.५८; सुसू. २०.५ )

**-रसा**-स्त्री., महाबला ( रा. ४.४२५ पृ.६५ )

**-लिण्डिक**-न., भेषजद्रव्य० मृगविट्सदृशं कर्कटाख्यम् ( अहृसू. ६.१३८ )

**-(लिण्डिका)**-स्त्री., वनस्पति० बिभीतकः आसवोपयुक्तेषु फलेष्वेका ( चसू. २५.४९ )

गाङ्गेरुकीफलम् ( शिवकोष १२७ )

**-वर्ग**-पु., मांसवर्गे प्राणिनः, एणकुरङ्गहरिणशशशम्बरचारुष्कशरभाद्याः मृगाः स्मृताः ( अहृसू. ६.४३ )

**-विषाण**-न., मृगशृङ्गं हरिणशृङ्गं वा (र. २३.१७)

**-व्यालविदष्ट**-वि., दुष्टमृगभक्षितम् (सुसू. ४५.११२)

**-शिरस्**-न., नक्षत्र० मृगशीर्षम् ( असंसू. ८.९२ )

**मृगाक्षी**-स्त्री., वनस्पति० इन्द्रवारुणीभेदः (ध.१.२५२; पृ.५९. )

त्रपुस० (रा. ७.२५७; पृ. ४३)

**मृगाङ्कपोटलीरस**-पु., पारदयोग० षोडशनिष्कपरिमितान् शङ्खनाभीन् गोदुग्धेन पेषयित्वा मूषां कुर्यात्। तत्रार्धनिष्कं सूतभस्म निष्कत्रयं च गन्धकं निक्षिप्य रोधयेन्मृदा च लिप्त्वा गजपुटेन पचेत्। मूषया सह चूर्णयेत् एवमेतद्रसायनं सिद्धं भवति। मात्रा-गुञ्जा परिमिता। फलं-क्षयनाशः (र. १४.२३-२५)

**मृगाण्डजा**-स्त्री., भेषजद्रव्य० कस्तूरिका (ध. ३.२८; पृ. १०० )

**मृगादनी**-स्त्री., वनस्पति० चिर्भट० (सुचि. ९.५८) इन्द्रवारुणी (सुउ. २८.७; असंउ. ४२; रा. ७.२५७; पृ. ४२) ध. १.२४८; पृ. ५८; १.२५२; पृ. ५९) कर्कटिका (सुक. ५.६९) महाबला (रा. ४.४२४; पृ. ६५)

**मृगादिनी**-स्त्री., वनस्पति० गवाक्षी (असंउ.६; इन्दु.)

**मृगारि**-पु., वनस्पति० शिग्रुभेदः (रा.७.६६; पृ. १४२)

**मृगेक्षणा**-स्त्री., वनस्पति० कर्कटी (रा. ७.२५७; पृ.४२)

**मृगेन्द्रवारुणी**-स्त्री., वनस्पति० इन्द्रवारुणी (असंसू. १४.३)

**मृगेन्द्राणी**-स्त्री., वनस्पति० आटरूषः (रा. ४.२९; पृ. ११)

**मृगेर्वारु**-पु., वनस्पति० इन्द्रवारुणीभेदः (ध. १.२५२; पृ. ५९) कर्कटीभेदः (रा. ७.२५७; पृ. ४२)

**मृगेर्वारुक**-पु., प्राणि० मृगभक्ष्यः, शृगालाकृतिः, गुहाशयेष्वेकः (सुसू. ४६.७२)

**मृगेष्ट**-पु., वनस्पति० मुद्गर (रापरि. १०.२२; पृ. ३६९)

**मृगैर्वारु**-स्त्री., वनस्पति० इन्द्रवारुणी (सुउ. ३०.६; (असंसू. ८.४२)

**मृगैर्वारुकमुख**-न., स्वस्तिकयन्त्र० मृगैर्वारुकमुखसदृशं यन्त्रम् (सुसू. ७.१०)

**मृगोर्वारु**-स्त्री., वनस्पति० गवाक्षी (असंउ, ४)

**मृग्य**-वि., मृगस्येदं, मृगसम्बन्धिमांस०, अष्टविधमांसेषु एकं मृग्यमांसम् (अहसू. ६.५४)

**मृङ्क्षण**-न., म्रक्षणम्। तैलघृतनवनीतादिनाऽभ्यङ्गः (र.२५.३८)

**मृजा**-स्त्री., परिमार्जनम् (चसि. ११.२९) उद्वर्तनम् (चनि. ४.५) शुद्धप्रभा (सुचि. २४.३०) शुद्धिः (चवि. ७.१०; सुचि. २४.३९)

**-वर्जन**-न., शुद्धिकरस्नानादिवर्जनम् (चवि. ७.१०)

**मृडः**-पु., श्रीशङ्करः मृडयति सुखयति शं करोति इति मृडः (र. १३.१२)

**मृणाल**-न., बिसम् (ध. ४.१६१; पृ. १६७, सुउ. ३९.३११-१६७; सुचि. ५.८) भोजनस्य पूर्वं योज्यं, न तु भुक्ते कदाचन (सुसू. ४६.४६४) पद्ममूलात्स्थूलप्ररोहः (सुशा. ९.१०) पद्मनालम् (सुसू. ४६.२९८) तनुकमलतन्तुः (चचि.१४.९) वनस्पति० उशीरम् (सुचि. २.४०; ध.३.१४; पृ. ९६)

**(मृणाली)**-स्त्री., (बिसम् ध.४. १६१; पृ. १६७) कमलभेदः (चचि. ८.१२९)

**(मृणाल)-कण्ठ**-पु., जलचारिपक्षि० (चसू. २७.४२; असंसू. ७.८२) प्लववर्गीयः पक्षि० (सुसू. ४६.१०५ ड.)

**-वलया**-वि., मृणालनिर्मितवलयवती, कमलनालस्य कङ्कणानि धार्यते यया सा (कान्ता) (असंसू. ४.३६)

**मृणालक**-न., बिसम् (ध. ४.१६१; पृ. १६७)

**(मृणालिका)**-स्त्री., बिसम् (ध. ४.१६१; पृ. १६७)

**मृणालासव**-पु., आसुत० नादेयमत्स्यभक्षणोत्तरमनुपानत्वेन विहितोऽयम् आसवः (सुसू. ४६.४३३)

**मृणालिनी**-स्त्री., बिसम् (रा. १०.२५८; पृ. १६७)

**मृत**-वि., त्यक्तप्राणः 'शोधयित्वामृतंसम्यग्द्रष्टव्योऽगविनिश्चयः।' (सुशा. ५.४७) अत्र मृतपदम् आसन्नमरणवाचकम् इत्यवधेयम्, मृतस्य चिकित्साविषयाभावात्; वृक्षप्रपातविषमपतितं मृतमम्भसि। उद्बद्धं च मृतं सद्यश्चिकित्सेन्नष्टसंज्ञवत् (सुक. ५.५५) भस्मरूपं प्राप्तः (पारदः) लोहं वा (र. १.३४; (र. ८.२७) न., वाराहीकन्दः (र. २७.११७) वत्सनाभः (र. २७.११७)

**(-गर्भा)**-स्त्री., मृतो गर्भो यस्याः सा स्त्री, मृतगर्भायाः स्त्रियः लक्षणानि- यस्याः अन्तःकुक्षौ गर्भो म्रियते तस्याः स्तिमितं स्तब्धमुदरमाततं शीतमश्मान्तर्गतमिव भवत्यस्पन्दनश्च गर्भः अस्याः शूलमधिकमुपजायते, न चाव्यः प्रादुर्भवन्ति, योनिर्न प्रस्रवति, अक्षिणी चास्याः स्रस्ते भवतः, किं च असौ ताम्यति, व्यथते, भ्रमते, श्वसिति, अरतिबहुला च भवति, न चास्या वेगप्रादुर्भावो

यथावदुपलभ्यते, इत्येवंलक्षणां स्त्रियं मृतगर्भां विद्यात् ( चशा. ८.३०; असंशा. ४.२८ )

**–जीविन्**–पु., तिलकः (रा. १०.२६६)

**–वत्सका**–स्त्री., जातमात्रं मासात्पक्षाद्वर्षाद्वित्रिवर्षैर्वा यस्या अपत्यं म्रियते, सा स्त्री ( र. २२.५६ )

**–संजीवन**–पु., योग० सूचिकाऽऽभरणापरपर्यायो रसः ( र. १२.७६-७९ )

योग० पारदलोहत्रिकटुककङ्कुष्ठमनःशिलाहरितालकुम्भीचित्रकभृङ्गराजमारीषतण्डुलीयकमाक्षिकहस्तिशुण्डीस्तुल्यभागास्तदर्धभागौ च पारदगन्धौ दिनत्रयमार्द्रकरसेन भावयित्वा वालुकाग्निना पचेत् । ततश्च वालुकायन्त्रावस्थायामेव भङ्गाजम्बीरनिर्गुण्डीचाङ्गेरीणां पृथग्रसं चतुर्दशदिनं यावन्निक्षिपेत् स्वाङ्गशीतं पुनरार्द्रकरसेन मर्दयित्वोपयोजयेत्। वल्लप्रमाणोपसेवितोऽयं सन्निपातादिरोगान् अपहन्ति ( र. १२.१२९-३२ )

योग०, पारदगन्धौ एकद्विभागौ वत्सनाभहरितालकङ्कुष्ठमनःशिलाहिङ्गुलोहचित्रकत्रिकटुभृङ्गराजस्वर्णमाक्षिकाभ्रकहस्तिशुण्ड्यतिविषाकुम्भीतण्डुलीयकताम्रभस्मानि प्रत्येकं भागैकमित्येतत्सर्वमार्द्रकरसेन त्रिदिनं मर्दयेत्। ततश्च काचकूप्यां पाचयेत्पाचनावसरे च जम्बीरत्रिफलानिर्गुण्डीनां रसं प्रत्येकं पलत्रयमात्रं चाङ्गेर्याश्च पलमात्रं कूप्यां प्रक्षिपेत्। सप्तदिनपर्यन्तं च पाचयेत्। ततःस्वाङ्गशीतलमुद्धृत्याऽऽर्द्रकरसेन मर्दयित्वा शोषयेत्। गुञ्जाद्वयमात्राप्रयुक्तोऽयं सन्निपातज्वरजिद्वरः(र.१२.१३३-१३९)

अगद०, स्पृक्काप्लवस्थौणेयकादिः सुगन्धबहुलैर्द्रव्यैः कृतः विषशमनो योगः ( चचि. २३.५४-६०; असंउ. ४० )

न., भेषज० मृतस्य मृतकल्पस्य वा अमृतवत् संजीवकं भेषजम् ( चचि. २३.३७ )

**–( संजीवनी )**-स्त्री., वनस्पति० गोरक्षदुग्धी ( रापरि. ५.५३; पृ. ३४४ )

योग० कान्तलोहाभ्रकमाक्षिकाणां सत्वानि हीरकस्वर्णपारदानां भस्मानि च सप्ताहं निम्बुकाद्यम्लरसेन पिष्ट्वा गोलकीकृत्य च गोजिह्वा काकतुण्डीहरीतकीनिर्गुण्डीमधुसैन्धवैर्लेपयित्वा भूधरयन्त्रे पचेत्। एवं पक्षपर्यन्तं कुर्यात्ततो यवचिञ्चापलाशबिभीतकसर्षपकार्पासतण्डुलैर्लिप्तायां मूषायां स्वल्पं स्वल्पं टङ्कणं श्वेतकाचं च दत्वा शोषयेत्तदनन्तरं बिडयोगेन समभागं स्वर्णं जारयेत् । इयं वटी संवत्सरपर्यन्तं मुखे धारिता सती शुक्रस्तम्भं कुरुते जरां च हरति ( र. ३०.१०१-१०५ )

**मृताजीवी**–स्त्री., गोरक्षदुग्धी (रापरि. ५.५३; पृ. ३४४)

**मृतालक**–न., तुवरी (सौराष्ट्री) (ध. ३.१०५; पृ. ११६)

**मृतोत्थापन**–पु., योग० अभ्रताम्रलोहानां प्रत्येकं पलं घृते दुग्धे च पचेत् तस्मिन् विडङ्गत्रिफलाचित्रकत्रिकटूनां प्रत्येकं पलमात्राणां चूर्णं क्षिपेन्मर्दयेच्च । मात्रा–एकमाषतः आरभ्य क्रमादष्टमाषपर्यन्तम् । अनुपानं–घृतं मधु मद्यं दुग्धं नारिकेलोदकं वा। पथ्यं–शर्कराशाल्यन्नमांसरसादि । फलं–हृच्छूलपार्श्वशूलगुल्मशिरःशूलामवातकटिग्रहाग्निमान्द्यक्षयकुष्ठकासश्वासविचर्चिकाश्मरीकृच्छ्राणां नाशः ( र. १८.१२२.३० )

**मृत्तिका**–स्त्री., तुवरी ( ध. ३.१०६; पृ. ११६ )
गुडूची ( ध. १.४; पृ. ८ )

**मृद्**–कृष्णमृत्तिका गुणाः– पावनी रससिद्धिविधायिका, लेपेन योजिता चेत् दंशादिसर्वशोफानां हन्त्री ( ध. ३; परि. ३१; पृ. १३३ )

**–क्षार**–न., मूलकम् ( ध. ४.३३; पृ. १४० )

**–पञ्चक**–न., रसप्रयोगकुशलैः कीर्तिताः पञ्च मृत्तिकाः । ताश्च इष्टिका गैरिकं लवणं भस्म वल्मीकमृत्तिका चेति ( र. १०.८४ )

**–वर्धमानक**–पु., कुरुक्षेत्रात्पूर्वदेश० ( काखिल. २५.८ ) देवीपुराणे षट्चत्वारिंशेऽध्याये वङ्गसमीपवर्तिवर्धमानदेशोल्लेखः समुपलभ्यते(काउ.)

**मृत्यु**–पु., शरीरेन्द्रियात्ममनसां वियोगः ( सुसू. १.२५ ( ४ )) मरणम्, द्विप्रकारको मृत्युर्दोषागंतुजभेदेन ( सुसू. ३४.७ )

अथर्ववेदविदः एकोत्तरं मृत्युशतं प्रचक्षते । तत्रैकः कालमृत्युः, शेषाः सर्वे आगन्तवः ( अपमृत्यवोऽकालमृत्यवो वा ) स्मृताः । अपरं च जलमग्निर्विषं शस्त्रं स्त्रियो राजकुलानि चैतेऽकालमृत्यवः ( सुसू. ३४.६; चशा. ६.२८; असंसू. ९.११३ )

ज्वरः, मृत्युकारणान्मृत्युः ( चचि. ३.१३; सुउ. ३९.९५)

**–काल**–पु., प्रतिपुरुषनियतो मृत्युकालः ( चशा. ६.२८ )

**–नाशन**–पु., खनिज० पारदः ( रा. १३.४२; पृ. २१४ )

**–वारि**–न., मृत्युरेव वारि ( चइ. ११.११ )

**–सामान्य**–न., मृत्युजनकदैवसाम्यम् (चवि. ३.१३)

–हर–वि., मृत्युञ्जयः मृत्युनिवारकः ( सुसू. १.२१ )

–हारिन्–पु., योग० चतुरङ्गुलानि तिलोत्सेधमयःपत्राणि धान्या रसे एकविंशतिवारं प्रतप्य निर्वापयेत्ततश्च शतपलं स्थाल्यां क्षिप्त्वा तदुपरि धान्यरसं प्रक्षिप्य भस्मराशौ निधापयेत्। प्रतिमासं लोहदण्डेन तदवघट्टयेत्। रसेऽशुष्यमाणेऽन्यरसं प्रक्षिपेत्। वत्सरादनन्तरमायसपत्राणि द्रवीभवन्ति। ततश्च तं द्रावमायसेन चालनीसदृशपत्रेण लोहभाण्डेऽवगाल्यावलेहत्वोदयं यावत्पाचयेत्। अनुपानम्–समांशे मधुसर्पिषी। जीर्णे औषधे मांसरसक्षीररसाज्यषष्टिकौदनादीनां भोजनम्। एवमेकवर्षपर्यन्तम् आचरेत्। वर्षमन्यत्कुटीं प्रविशेत्। फलम्–एवमनेन रोगजरामृत्युशस्त्राग्निविषजलैरनभिगम्यो भवेद्वर्षशतं च सर्वभावेष्वतीन्द्रियो जीवेत् ( र. २८.९४-१०१ )

**मृत्युञ्जय**–पु., पारदयोग० हरितालताम्रभस्मपारदगन्धकाभ्रकजेपालान् प्रत्येकं शाणमात्रान् टङ्कणमनःशिलामाक्षिकाणि शाणद्वयमितानि वत्सनाभं च द्विशाणपरिमितं मिलित्वा चित्रकरसेन च भावयित्वा जायते। अयं सर्वज्वरविनाशनः ( र. १२.४७ )

सिद्धौषधि० क्षारद्वयं त्रिकटु लवणपञ्चकं मिश्रितैतेषां समभागं पटचूर्णं कृत्वा तत्समां पारदगन्धकयोः कज्जलिकां प्रक्षिप्य सर्वमेकत्र दिनत्रयं मर्दयेत्। मात्रा–पञ्चगुञ्जा। फलं–सन्निपातनाशनम्। अनुपानं–चित्रकार्द्रकसैन्धवानां चूर्णम्। पथ्यं–दध्योदनः ( र. १९.७-१५ )

योग० माक्षिकहरितालताम्रवत्सनाभमनःशिलाजयपालपारदगन्धका मुशलीरसेन मर्दिताः–कुक्कुटपुटेन च पाचिता मृत्युञ्जय इति ख्यातिं भजन्ति। अयं योगो नवज्वरं सान्निपातिकज्वरं च नाशयति। तत्र बल्लद्वयं प्रमाणं दधिभोजनं च पथ्यम् ( र. १२.१०९-११ )

**मृत्सा**–स्त्री., मृत्तिका ( ध. परि. ३.३०; पृ. १३३ )

भेषजद्रव्य० सौराष्ट्री ( ध. ३.१०५; पृ. ११६ )

**मृत्स्न**–वि., पिच्छिलम् (सुनि. ६.१०; सुचि. १५.९)

( **मृत्स्ना** )–स्त्री., खनिज० तुवरी ( ध. ३.१०५; पृ. ११६ )

मृत्तिका ( धपरि. ३.३०-१३३ )

**मृत्स्नांशुक**–न., मृत्कर्पटम् चिक्कणमृदा लिप्तं कर्पटम्, रसपूरितघटमुखस्य कुपिकायाश्च पार्श्वस्यावलेपनार्थमुपयुज्यते ( र. १७.१३७ )

**मृद्**–स्त्री., भेषजद्रव्य० मृत्तिका छर्दिनिग्रहगणे एकं द्रव्यम् ( चसू. ४.१४ ) अतिमात्रेण मृद्भक्षणं श्वयथुमापादयति ( सुचि. २३.४ ) पाण्डुरोगेमृद्द्वेषणाय तल्लौल्यतृप्त्यर्थं विडङ्गेनातिविषया पाठ्या निम्बपल्लवैर्वार्ताकैः कटुरोहिण्या मूर्वया कौटजैर्भाविता मृत्तिकोपयोज्या ( असंचि. २१ ) कृष्णमृत्तिका ( सुचि. २.४६ ) केदारमृत्तिका इयं रक्तपित्तशमनी ( सुउ. ४५.३३ )

खनिज० सौराष्ट्री ( ध. ३.१०६; पृ. ११६ )

–भक्षण–न., मृत्तिकाभक्षणम् पाण्डुरोगस्य पूर्वरूपेषु मृद्भक्षणेच्छा दृश्यते ( सुउ. ४४.५ ) मृद्भक्षणेन जाताः रोगाः पाण्डुच्छर्दिश्वयथुश्वासकासातिसारजन्तवः मृच्छाग्निसदनस्तन्यद्वेषाङ्गरुग्भ्रमाः च ( असंउ. १ )

–भाजन–न., मृत्तिकापात्रम् ( चक. ७.२४ )

–भृष्टलोष्टनिर्वापित–वि., अग्निना भृष्टो मृत्खण्डो यस्मिन्निर्वापितः, तादृक् जलं, तृष्णाच्छर्दतियोगप्रशमनानां श्रेष्ठम् ( चसू. २५.४० )

–भृष्टलोष्टप्रसाद–पु., मृद्भृष्टलोष्टनिक्षेपणेन प्राप्तो जलप्रसादो नाम जलनैर्मल्यम् ( असंसू. १३ )

( **मृत्** )–कपाल–न., खर्परम्, शोणितस्थापनगणे एकं द्रव्यम् ( चसू. ४.१८ )

–कर्मसंपन्न–वि., मृदा भित्तिलेपनं यत्र सम्यक्कृतं तत् ( चसू. १४.४६ )

–कुश्चा–स्त्री., तिलवातामादीनां दृषदि पिष्टानामुष्णोदकमृदिता पिण्डा, 'उत्कारिका' इत्यन्ये ( चचि. १५.२२७ )

–पिण्डी–स्त्री., लोष्टम् ( असंसू. ३.८ )

( **मृन्** )–मयपात्र–न., मृद्विकारभूतं पात्रम्

( **मृल्** )–लेपन–न., मृदा लेपनम् ( असंसू. ३३.८ )

**मृदङ्ग**–पु., वाद्य० ( सुशा. ४.७३ )

**मृदङ्गफल**–न., कोशातकी ( चक. ६.३ )

**मृदङ्गफलिका**–स्त्री., कोशातकी (ध. १.१९२; पृ. ४६)

**मृदित**–न., गुह्यरोग० शूकजन्यरोगेष्वेकः शूकपाकानन्तरं पीडितं मेढ्रं वातकोपतः सशोफं भवति ( सुनि. १४.७; असंउ. ३८ )

लक्षण० पार्श्वावमोटितम् ( चनि.१.२१ )

–चिकित्सा–स्त्री., मृदितनाम्नः शूकरोगविशेषस्य चिकित्सा। ईषदुष्णेन बलातैलेन परिषेचनं कार्यम्। मधुरैः घृतस्निग्धैरुपनाहैर्मृदितमुपनाहयेत्। मधुराणि काकोल्यादीन्यश्नीयात् ( सुचि. २१.८ )

वि., मर्दिताङ्गः ( अहृसू. १७.१५ )

**मृदु**–स्त्री., वनस्पति० कुमारी (रापरि. ५. १०; पृ.३४०)
न., मुण्डाख्यलोहप्रकारस्योपप्रकारः, एतत् द्रुतद्रावि चिक्कणमविस्फोटं मृदु च; मुण्डं त्रिविध-मुच्यते, मृदु कुण्ठं कडारं च ( र. ५.७४ )
सीसकम् ( रा. १३.२१ )
वि., सुसह्यम्, अल्पबलम्, कोमलम्, सुकुमारम्, अतीक्ष्णम् ( चक. १२.६८; चनि. १.१२ (४); चक. १२.१०४; सुचि. २४.१३; सुसू. १५.२१; सुशा. ५.४०; चक. १२.५६; सुसू. ३२.३; सुसू. ३९. ११; सुउ. ३९.९८ )
पु., गुण० कठिनविपरीतः, तोयाकाशगुणभूयिष्ठ-स्त्वगिन्द्रियग्राह्यगुणः (चशा.६.१०; सुसू. ४१.११) श्लथने शक्तिः ( अहसू. १.१८; सुसू. ४६.५१८ )

**(मृद्वी)**–स्त्री., द्राक्षा, मृद्वीका (रा. ११.७७; पृ. १८०)

**–कर्मन्**–न., मृद्वीकरणम्, तच्च मधुरस्निग्धकोष्ण-लवणैरन्तर्बहिश्च क्रियमाणैर्लेपादिभिः । व्रणस्य षष्ट्युपक्रमेष्वेकः ( सुचि. १.८ )

**–कील**–वि., शिथिलबन्धनम् ( सुसू. ७.१९ )

**–कोष्ठ**–वि., स्वल्पौषधविरेचनयोग्यो मृदुवीर्यौषध-विरेचनयोग्यो वा (सुसू. ३९.१३) प्रायेण बहुपित्तः ( चसू. १३.७ )

**–क्षार**–पु., त्रिविधक्षारेष्वेकः ( सुसू. ११.११ )

**–ग्रन्थि**–पु.,वनस्पति०मज्जरः (रापरि.८.५२;पृ.३६१)

**–च्छद**–पु., वनस्पति० नलः (रा. ८.२२२;पृ.१६२)
फोण्डालुः ( रापरि. ७.३०; पृ. ३४९ )
श्रीतालः ( रा. ९.९५; पृ. १८२ )

**–( च्छदा )**–स्त्री., वनस्पति० शिल्पिका ( रापरि. ८.४९; पृ. ३६१ )

**–ज्वर**–पु., रोग० सौम्यज्वरः ( चचि. १३.३८ )

**–दर्भ**–पु., वनस्पति० दर्भः ( कुशः ) ( ध. ४.१३३; पृ. १६१ )

**–पत्र**–पु.,वनस्पति०नलः (रा.८.२२२;पृ.१६२)
भूर्जः ( रापरि. ९.२३; पृ. ३६५ )

**–पत्री**–स्त्री., वनस्पति० शाक० चिल्ली ( रापरि. ७.६६; पृ. ३५३ )

**–पर्वक**–पु., वेत्रः ( रापरि. ७.१४; पृ. ३४८ )

**–पाक**–पु., स्तोकाग्निसंयोगसाध्यः पाकः ( चसू. २७.२७५; सुचि. ३१.११ )

**–पाश**–वि., तनुपाशम् ( यन्त्रम् ) ( सुसू. ७.१९ )

**–पुष्प**–पु.,शिरीषः (ध.११२;पृ.१९२)

**–पुष्पक**–पु., शिरीषः ( रा. ९.१८८; पृ. १९२ )

**–फल**–पु., करीरः ( ध. ५.९९; पृ. १८९ )
नारिकेल० मधुनारिकेलकः (रा. ११.११०;पृ.१८४)
विकण्टकः ( रापरि. ११.१९; पृ. ३७४ )
विकङ्कतः (ध. ५.४३; पृ. १७७)

**–भृष्ट**–वि., अल्पभर्जितम् ( सुसू. ४४.३८ )

**–मांस**–वि., कोमलमांसम् ( अहसू. २८.२ )

**–मुख**–वि., यन्त्रदोष० शल्यपीडनासहमुखम् ( सुसू. ७.१९ )

**–लता**–स्त्री.,वनस्पति०शूली (रापरि.८.६८;पृ.३६३)

**–वहा**–वि., मन्दवहा ( चसू. २७.२११ )

**–विवृत**–वि., अगम्भीरम् ( मनः) चवि. ८.९४ )

**–वीर्य**–वि., अतीक्ष्णवीर्यम् ( सुशा. १०.६७ )

**–संमत**–वि., मृदुरिति संमतः ( चसू. १८.३८ )

**–संशोधन**–न., अतीक्ष्णं विरेचनम् ( अहसू. १३.१)

**–सार**–न., वनस्पति० तूलम् (रा. ९.८७; पृ. १८१)

**मृदारशृङ्ग**–न., बोदारशृङ्गम् (र.,३.१३४)

**मृदारशृङ्गक**–न., उपरस० बोदारशृङ्गकम् ( धपरि. ६.२३; पृ. २९२ )

**मृद्वग्नि**–पु., तैलसाधनार्थं प्रयुक्तो नातितीव्रो वह्निः (चचि.३.२५८)

**मृद्वग्निता**–स्त्री., अग्नेरल्पबलत्वम् ( चनि. १.२७ )

**मृद्वीका**–स्त्री., शुष्का कपिला द्राक्षा ( ध., ५.५८; पृ. १७९ ) काकोल्यादिगणे एकं द्रव्यम् ( सुसू. ३८.३५ ) स्नेहोपगगणे एकं द्रव्यम् ( चसू. ४.१३ ) अस्या उदकं सशर्करं पित्तशूल-शमनं भवति ( सुउ. ४२.१०८ ) वातहराऽपि कोष्ठे वातकृत्त्वं स्वभावसिद्धम् अस्याः ( असंसू. ७.२४० ) रसाद्यैस्तुल्याऽपि मधुकस्य च मृद्वीकाऽतिशायिद्रव्यस्वभावयोगाद्विरेचनी भवति ( असंसू. १७.४६ ) फलानामग्र्या ( चसू. २५.३८ ) गुणाः–मधुरा शीतला स्निग्धा बृंहणी वृष्या तृष्णादाहज्वरश्वासरक्तपित्तक्षत-क्षयवातपित्तोदावर्तस्वरभेदमदात्ययतिक्तास्यता-ऽऽस्यशोषकासनाशिनी च ( चसू. २७.१२६ ) मृद्वीका श्वेता च द्राक्षा काश्मीरभवा ज्ञेया। सा बीजविवर्जिता मृद्वीका प्रोच्यते ( चचि. २४.१८० )

**मृद्वीकेक्षुरसासव**–पु., आसुत० मृद्वीकेक्षुरसाभ्यां मिलित्वा कृत आसवः माध्वीकसमो गुणैः, कफघ्नः मृद्वीकेक्षुरसासवोऽप्येवम्, परं नात्युष्णः ( चसू. २७.१८८; असंसू. ६.१३२ )

**मृष्ट**–वि., निर्मलम् ( चचि. ८.१३६ ) वदनप्रियम् ( चसू. २७.१९८ )

**मृष्टक**–न., वनस्पति० राजिका ( चसू. २७.१७० )

**मेखला**–स्त्री., क्षुद्रसुवर्णघण्टिकायुक्तः कटिदोरकः ( सुउ. ४७.६४ )

वनस्पति० पृश्निपर्णी ( रा. ४.११७ पृ.२४ )

**मेघ**–पु., वनस्पति० मुस्ता ( ध. १.४०पृ.१५ )

**( मेघा )**–स्त्री., वनस्पति० मुस्ता ( रा. ६.५८ पृ. १५)

**–नाद**–पु., शाक० तण्डुलीयकः ( र. १८.२१२; र. १२.२१; ध. ४.११६ पृ. १५७ )

**–( नादी )**–स्त्री., तण्डुलीयकः ( र. २५.१२१ )

**–नादरस**–पु., वातादिज्वरघ्नो योग०, समगन्धपारदपादांशं कांस्यपित्तलताम्रभस्मभिः साकं तण्डुलीयरसेन मर्दयित्वा एकमेवपुटं दत्वा अयं क्रियते। अयं रसोऽनिलादिज्वरेषु माषप्रमाणेन दातव्यः ( र. १२.२१ )

**–पुष्प**–पु., वनस्पति० वेतसः (ध.५.११७;पृ. १९३)

**–प्रसव**–न., जलम् ( रा. १४.३१८; पृ. २५८ )

**–मोदिनी**–स्त्री., वनस्पति० जम्बूः ( रा. ११,१२८; पृ. १८६ )

**–राव**–पु., मेघनादः। अम्बुचारिपक्षि० (चसू.२७.४३) चातकः । मेघरावः संघातचारिप्लवेष्वेकः ( सुसू. ४६.१०५-१०६ )

**–सार**–पु., भेषजद्रव्य० चीनकर्पूरः ( रा. १२.६३; पृ.१०१ )

**–स्तनितोद्भव**–पु., वनस्पति० विकण्टकः ( रापरि. ११.२०; पृ. ३४७ )

**मेघागमप्रिय**–पु., वनस्पति० कदम्ब० धाराकदम्बः ( रा. ९.१७२; पृ. १९० )

**मेचक**–पु., वर्ण० कृष्णस्य वस्त्रादेः ससारगन्धकादिभिर्मसृणीकृतस्य यो वर्णः, सः ( चचि. ४.१२ ) श्यामलवर्णः ( सुनि. ६.२६ )

न,, अञ्जनम् ( ध. ३.१५१; पृ. १२५ )

**( मेचका )**–स्त्री., वायुरोगदा वायवी लूता । इयमुद्भिदा वर्तते ( असंउ. ४४ ) दंशलक्षणानि-दंशमध्ये जतुकणोपमा पिटका ज्वरः शोफश्च जायते ( असंउ. ४५ )

**मेचकाभ**–वि., स्निग्धकृष्णम् ( चचि. १९.९ )

**मेचकाभिधा**–स्त्री., वनस्पति० वत्सादनी (रापरि.३.३२; पृ. ३३२ )

**मेढ्र**–पु., पशु० उरभ्रः, 'मेंढा' इति लोके ( र. १०,९७ )

न., शारीर० उपस्थम्, शेफः तच्च षडङ्गुलदीर्घं पञ्चाङ्गुलपरिणाहं च ( चवि. ८.११७ ) बहिर्मुखस्रोतोविशेषः ( सुशा. ५.१० ) ग्रीवाहृदयनिबन्धिनीनामधोभागगतानां कण्डराणां मेढ्रमग्रप्ररोहः (सुशा. ५.११ ) मूत्रवेगरोधान्मेढ्रवेदना जायते ( अहसू. ४.४ )

**–पाक**–पु., रोग० रक्तप्रदोषजविकारेष्वेकः ( चसू. २८.१२, सुसू. २४.९ ) चत्वारिंशत्पित्तविकारेष्वेकः ( चसू. २०.१४ )

**–प्रमर्द**–पु., लक्षण० मेहनस्य प्रकर्षेण मर्दनम् ( सुनि. ३.१० )

**–रोग**–पु., शिश्नरोगः ( सुचि. २६.१२ )

**–शुद्धि**–स्त्री., मेढ्रशोधनम् ( अहसू. २५.३९ )

**मेण्ढ्र**–न., मेढ्रम् (असंशा. ५.८१; ९.१६; ८.३०)

**–पाक**–पु., लक्षण० शेफसः पाकः (असंसू. २०.१४)

**–स्तम्भ**–पु., लक्षण० शेफसः स्तब्धता ( असंसू. २०.१३ )

**मेथा**–स्त्री., वनस्पति० वनमेथिका, द्र० 'मेथिका' ( रा. ५.१८५ )

**मेथिका**–स्त्री., वनस्पति० शाकभेदः, 'वातपित्तहरा तिक्ता लघ्वी श्लेष्माविरोधिनी' मेथिका तत्समं किञ्चिद् हिस्फिरथं पुष्टिदं गुरु ( ड. सुसू. ४६.२५६ ) मेथिका कटुरुष्णा दीप्तिकरी रक्तपित्तप्रकोपनी वातप्रणाशिन्यरोचकहरा च (ध. ६.११२) अहित्थस्तु वनमेथिका, मेथिकासदृशः परन्तु तदल्पगुणः ( ध. ६.११३ ) अश्वबला तुरुष्कदेशे बृहत्पत्रा मेथिकाभेद एव। 'हिस्फिरथ' इति लोके। मेथिकाहिस्फिरथयोर्गुणसादृश्यमस्ति। वनमेथिका वाजिनां बल्या, तेषामर्थे एव विशेषेण पूजिता ( भा. प्र. )

हिं.—मेथी,
**म.—मेथी.**
गु.—मेथी.
बं.— मेथी.
त.—वेन्दायाम.
फा.—शामलिता.

**मेथिनी**–स्त्री., वनस्पति० मेथिकाभेदः वनमेथिका, द्र० 'मेथिका' ( रा. ५.१८४ )

**मेथी**–स्त्री., वनस्पति० वनमेथिका, इयं शाकत्वेन उपयुज्यते ( रा. ५.१८४; पृ. २३१ )

**मेदक**–पु., जगलः, सुरादीनामधःस्थितो घनो भाग ( चनि, २.४; चचि, ७,९०; चक. १.१२,

श्वेतसुरा जगलाख्या ( चसू. २५.४९ )
मद्यम् ( ध. ६.२५६; पृ. २५१)

**मेदज**–पु., गुग्गुल० ( रा. १२.१८८ )

**मेदस्**–न., शारीर० रसादिसप्तधातुष्वेकः ( चसू. २६.४३ (५) ) मांसात् परिणतो धातुः। स्नेहनं कार्यं करोति ( सुसू. १५.५(१); सुसू. १४.१० ) प्रकृतिस्थस्य मेदसः प्राकृतं कर्म–स्नेह–स्वेदौ दृढत्वं पुष्टिमस्थ्नां च । शारीरे मेदसः प्रमाणं द्वावञ्जली ( चशा. ७.१५ ) अण्वस्थिषु मेदः स्थूलास्थिषु तु विशेषेणाभ्यन्तरस्थितः पीतो रक्तश्च मज्जा वर्तते, इतरेषु सर्वेषु सरक्तं मेद उच्यते ( सुशा. ४.१३ ) मेदःक्षयलक्षणम्–कट्याः स्वपनं प्लीह्नोर्वृद्धिः कृशाङ्गता, संधिशून्यता, रौक्ष्यं मेदुरमांसप्रार्थना च ( सुसू. १५.९; अहृसू. ११.१८; असंसू. १९.१० ) मेदोवृद्धिलक्षणम्–अल्पे चेष्टिते श्रमः श्वासश्च तथैव स्फिक्स्तनोदरलम्बनं च, मांसवृद्धिलक्षणानि च भवन्ति ( असंसू. ११.१०; असंसू. २४.२३ ) आमरसवदतिस्निग्धमसम्यक्परिणतं मेदः प्रमेहाञ्जनयति ( सुनि. ६.४ ) मेदःक्षीणो नरः मेदः-सिद्धानि मांसानि ग्राम्यानूपौदकानि च सक्षाराणि च विशेषेणाभिकाङ्क्षति ( सुसू. १५.२९-३१ ) जांगमद्रव्य० सामान्यगुणाः—वातघ्नं बलपित्तकफप्रदं वसामज्ज्ञोः सदृशस्वरूपं च ( अहृसू. ५.६१) ग्राम्यानूपौदकानां च वसामेदोमज्जानो गुरूष्णमधुरा वातघ्नाः जाङ्गलैकशफक्रव्यादादीनां लघुशीतकषायाः रक्तपित्तघ्नाः प्रतुदविष्किराणां श्लेष्मघ्नाः। तत्र घृततैलवसामेदोमज्जानो यथोत्तरं गुरुविपाका वातहराश्च ( सुसू. ४५.१३१ )

**–क्षीण**–वि., क्षीणमेदोधातुमान् (नरः) ( सुसू. १५.२९-३१ ) द्र० 'मेदस्'

**–पुच्छ**–पु., ग्राम्यपशु० एडकः, मांसगुणाः– वृष्यं मेषसदृशम् ( सुसू. ४६.८८ ) दुम्बक इति प्रसिद्धः ( ड. सुसू. ४६.८८ )

**–संश्रय**–वि., अतिस्थूलः ( चक्र. चसू. २८.१५ )

**–सार**–वि., यस्मिन् मेदोधातुः सारत्वेन वर्तते, तादृशः पुरुष० वर्णस्वरनेत्रकेशलोमनखदन्तौष्ठमूत्रपुरीषेषु विशेषतः स्नेहवान्। सा सारता वित्तैश्वर्यसुखोपभोगप्रदानान्यार्जवं सुकुमारोपचारतां चाचष्टे ( चवि. ८.१०६ ) बृहच्छरीरः स्निग्धमूत्रस्वेदस्वरआयासासहिष्णुश्च ( सुसू. ३५.१६ )

**–सारा**–स्त्री., वनस्पति० मेदा ( रा. ५.१६१; पृ. ३१ )

**–स्थ**–वि., मेदोधातुगतः ( चचि.३.७९ )

**( मेदो )–ग्रन्थि**–पु., रोग० मेदोजग्रन्थिः, प्रवृद्धमेदो वायुना मांसेऽथवा त्वचि नीतं ग्रन्थिं कुरुते। लक्षणानि–शरीरवृद्धिक्षयवृद्धिहानिः स्निग्धो महान् कण्डूयुतोऽरुजो ग्रन्थिर्भवति। भिन्नं पिण्याकसर्पिःप्रतिमं मेदः स्रवति ( सुनि. ११.७; र. २४.१२६ )

**–दोष**–पु., मेदोधातुदुष्टिः ( अहृसू. १५.२० )

**–दोषज**–वि., मेदोधातुदुष्टिजन्यः ( विकारः ), ग्रन्थिवृद्धिगलगण्डार्बुदमेदोजौष्ठप्रकोपमधुमेहातिस्थौल्यातिस्वेदप्रभृतयो मेदोदोषजाः ( विकाराः ) ( सुसू. २४.९ )

**–द्रवा**–स्त्री., वनस्पति० मेदा (रा. ५.१६१; पृ. ३१)

**–धरा**–स्त्री., कला० तृतीया मेदोधरा नाम, मेदो हि तस्यामुदरेऽण्वस्थिषु च सरक्तं भवति तदेव च शिरसि कपालप्रतिच्छन्नं मस्तिष्काख्यं मस्तुलुङ्गाख्यं च, स्थूलास्थिषु च मज्जा ( असंशा. ५.३७; ( सुशा. ४.१२ )

**–युतानिल**–पु., मेदावृतो वातः ( डल्हणः; सुचि. ५.३० )

**–रोग**–पु., रोग० मेदोधातुदुष्टिजन्यरोगः ( मा. )

**–वर्ति**–स्त्री., शारीर० अतीव तरलं स्तरचतुष्टयात्मकमान्त्राच्छादनं वपानाम्ना प्रसिद्धम् ( सुचि. २.४५ )

**–वहस्रोतस्**–न., शारीर० मेदोवहे द्वे स्रोतसी तयोर्मूलं कटी वृक्कौ च, तत्र विद्धस्य स्वेदागमनं स्निग्धाङ्गता तालुशोषः स्थूलशोफता पिपासा च ( सुशा. ९.१२ ) मेदोवहानां स्रोतसां वृक्कौ ( वृक्कौ ) मूलं वपावहनं च (चवि. ५.१६ ) अव्यायामाद् दिवास्वप्नान्मेद्यानामतिभक्षणाद् वारुण्याश्चातिसेवनान् मेदोवाहीनि स्रोतांसि दुष्यन्ति (चवि. ५.१६)

**–वहा–(सिरा)**स्त्री., शारीर० मेदोधातुवहनार्थं सिरा यत्रस्थो दोषः अन्येद्युष्कं ज्वरं करोति (चचि.३.६३-६४)

**–वाहिस्रोतस्**–न., मेदोवहस्रोतः ( चवि. ५.१६ )

**–वृद्धि**–स्त्री., रोग० मेदोजमुष्कवृद्धिरोगभेदः, लक्षणम्–इयं मृदुः स्निग्धा कण्डूमत्यल्पवेदना तालफलवर्णा च भवति ( सुनि. १२.६ )

**मेदा**–स्त्री., वनस्पति० शुक्रजननगणे, स्नेहोपगगणे जीवनीयगणे चैकं द्रव्यम् ( चसू. ४.९-१३ ) जीवनीयपञ्चमूलेष्वेकं द्रव्यम् ( चचि. १.४४ ) मेदा महामेदा चेति मेदाद्वयं जीवनीयगणे वर्तते ( असंसू. १५.६ ) गुणाः– स्वादुः शीता क्षयदाहज्वरापहा पित्तघ्नी कफवर्धिनी च । महामेदा शीता स्वादुः कफपित्तविवर्धिनी दाहास्रपित्तक्षयवातज्वरान् हन्ति ( ध. १२८-१२९; पृ. ३० ) वातदोषकरी, महामेदा तु लताजातः कन्दः, तद्गुणाः–शीतारुच्या कफशुक्रप्रवृद्धिकृत् दाहास्रपित्तक्षयवातज्वरघ्नी च ( रा. ५. १६२,१६४; पृ. ३१ )

**–द्वय**–न., मेदा, महामेदा चैतद्द्वयं जीवनीयगणे प्रोक्तम् ( अहृसू. १५.८ )

**मेदिनी**–स्त्री., वनस्पति० मेदा (रा.५.१६१;पृ.३१) काश्मरी ( रा. ९.१४४; पृ. २९)

**–सार**–पु., योग० लोहताम्रभस्मनां प्रत्येकं पलत्रयं भृङ्गराजरसगोमूत्रत्रिफलाक्वाथैः पृथक् त्रिवारं संमर्द्याम्लकाञ्जिकं तस्मिन् निक्षिप्य प्रहरचतुष्टयं यावत्पचेत् । ततश्च समभागगन्धकं संमिश्र्य विंशतिवारं पुटेत् ततश्च पलमात्रं पारदं तद्द्वादशांशं वत्सनाभं सर्वैः समं च कटुत्रयं प्रक्षिप्य पेषयेत्स्थापयेच्च । मात्रा–वल्लः, अनुपानम्–घृतयुक्तं त्रिकटुचूर्णम्, फलम्–अयं सर्वेषां कुष्ठानां श्वित्रस्य हन्ता सन् गुल्मप्लीहकुक्ष्युरोगोदावर्तमहावातमन्दाग्नितागलग्रहमहोन्मादकर्णदन्तरोगसर्पलूतादिविषभगन्दरविद्रध्यन्त्रवृद्धिशिरःशूलान्नाशयति ( र. २०.१२२-२९ )

**मेदुर**–वि., मेदस्वी ( चसि. १.३६; सुचि. १०.३; असंसू. २५.६५ )

**( मेदुरा )**–स्त्री., वनस्पति० काकोली (रा.३.१६६;पृ.३१)

**मेदोर्बुद**–पु., न., रोग० मेदसोऽर्बुदम् (सुचि. १८.४१)

**मेद्य**–वि., मेदुरम्, मेदोजनकम् ( चचि. १५.२३३; सुनि. ६.३ ) मेद्यो नाम स्थूलः सान्द्रः पुष्टो मेदोभवो मेद एव वा ( चचि. ३०.८८ )

**–मांसोपदंश**–पु., मेदुरप्राणिनां मांसस्योपदंशः, उपदंशो नाम भोजनमध्ये सेव्यमानो रुचिजनको भक्ष्यविशेषः ( असंशा. ४.२४ )

**मेधा**–स्त्री., धारणावती धीः ( चसू. २७.३५०; सुशा. ३.३३ ) पित्तस्य कार्यम् (सुसू. १५.४. (२)) सात्त्विकगुणोऽयम् ( सुशा. १.१८ ) मेधां ग्रन्थादिधारणेन परीक्षेत ( चवि. ४.८ )

**–कर**–वि., धारणाशक्तिवर्धकम् ( अहृसू. १४.२८ )

**–कृत्**–पु., वनस्पति० शितिवारः (रा.४.२०७;पृ.३६)

**–विन्**–वि., बुद्धिमान् ( सुचि. २८.४ )

**–(विनी)**–स्त्री., वनस्पति० तेजस्विनी ( रा. ३.३९४; पृ. ६१ )

**मेधायुष्कामीय**–वि., मेधायुष्काममधिकृत्य कृतः, ( अध्यायसंज्ञाविशेषः ) अध्याय० (सुचि. २८.१)

**मेधावी**–स्त्री., मद्यम् ( रा. १४.३०२, पृ. २५४ )

**मेध्य**–पु., धान्य० यवः ( रा. १६.१२४; पृ.२२३)
वनस्पति० खदिरः ( रा. ८.३२; पृ.१२ )
वि., यज्ञियम् पु., मेधो यज्ञः विशेषणाद् विशेष्यावगतिरिति तदर्हो मेदुरो बस्तः । तस्य स्त्यानं रक्तं घृततैलभृष्टं प्रवाहिकायां पिबेत् ( सुउ. ४०.१४८ )
वि., मेधाकरं, मेधाजनकम् ( चसू. ५.९८ )

**(मेध्या)**–स्त्री., वनस्पति० केतकी (रा. १०.१; पृ.२०४)
गोरोचना ( ध. ३.२०; पृ. ९८)
ज्योतिष्मती ( रा. ३.३९५; पृ. ६१)
तेजोवती ( रा. ३.३९४; पृ. ६१ )
श्वेतवचा, वचा० ( ध. २.६; पृ. ७० )
शङ्खपुष्पी ( ध. ४.११३ पृ. १५६)
शमी ( रा. ८.१५२; पृ. १८८ )

**( मेध्य )–रसायन**–न., मेधाजनकं रसायनम्, मण्डूकपर्ण्याः स्वरसः यष्टीमधुकस्य चूर्णं क्षीरेण सह, गुडूच्या रसः शङ्खपुष्प्याः समूलपुष्प्याः कल्कः एतानि मेध्यरसायनानि रोगनाशकानि बलाग्निवर्णस्वरवर्धनानि सन्ति । शंखपुष्पी विशेषेण मेध्या ( चचि. १.(३)३०,३१ )

**मेरु**–पु., पर्वत० सौवर्णः पर्वतः ( र. ५.७ )

**मेलक**–वि., धात्वादिमेलनकरः (पुरुषः) ( र. ६.५५ ) .

**–लवण**–न., औषरकम् ( रा. ६.५१ पृ. ७६ )

**मेलन**–वि., कठिनलोहमृदुस्वर्णयोरिव परस्परविरुद्धयोः धात्वोः संमेलनकारकः (माक्षिकधातुः) (र. २.८५)

**मेला**–स्त्री., वनस्पति० महानीली ( रा. ४.३५३ पृ.५५ )

**मेष**–पु., ग्राम्यवर्गे पशु० 'मेंढा' इति लोके ( चसू.१५.७; सुसू. ४६.८५ ) मेषस्य मूत्राशयः बस्तियन्त्रार्थे प्रशस्तः ( सुचि. ३७.१०७ ) शरद्यस्य मांसमिष्टम् (चसू. ६.४३) मेषमांसगुणाः–वातहरं दीपनं कफपित्तलं, सर्वग्राम्यमांससदृशगुणमेव ( ध. वर्गेतराणि १६ ) मेषरोम्णामन्तर्धूमदग्धं भस्म क्षौद्रोपेतं हिक्काशमनार्थं लेह्यम् ( सुउ. ५०.२० ) मेषस्य

शृङ्गमञ्जनद्रव्येषूपयुज्यते ( असंसू. ८.९६ ) मेषी-मूत्रगुणाः–कटु तिक्तमीषत्क्षारमुष्णं वातघ्नं कासप्लीहोदरश्वासशोषवर्चोग्रहेषु हितम् ( रा. १५.५०२; ध. ६.४९१; पृ. २८७ )

**( मेषी )**–स्त्री., मेषस्य स्त्री, छागी ( र. ३.१६० )
वनस्पति० अजशृङ्गी ( र. २७.३८ )
वनस्पति० जटामांसी ( रा. १२.९१; पृ. ११५ )

**–विषाण**–न., मेषविषाणसदृशं मेषशृङ्गीफलम् मेषशृङ्गीक्राथकल्कपक्वं घृतं तिमिरेषूपयुज्यते ( सुउ. १७.३१ )

**–शृङ्ग**–न., वनस्पति० अजशृङ्गी, स च पुत्रञ्जीवकसदृशतरुविशेषः ( ड. सुसू. ३८.८-९ )

**–( शृङ्गी )**–स्त्री., वनस्पति० अजशृङ्गी ( सुसू. ३९.६-७ )

**–शृङ्गीपुष्प**–न., पुष्प० विषसंसृष्टेऽन्नार्थमुपयुज्यते ( सुक. १.६९-७१ )

**मेषक**–पु., वनस्पति० जीवन्तः (रापरि. ७.८९; पृ. ३५५)

**मेषाक्ष**–पु., वनस्पति० चक्रमर्दः ( ध. ४.५; पृ. १३४)

**मेषाक्षिकुसुम**–पु., वनस्पति० चक्रमर्दः ( ध., ४.४; पृ. १३४)

**मेषान्त्रि**–पु., वृषमेधा; बस्तान्त्रिः ( ध. १ वर्गेतर १; रा. ३.२; पृ. ६८ )

**मेषास्य**–पु., ग्रह० अयं पुरुषशरीरग्रहः ( असंउ. ३ )

**मेषाह्वय**–पु., वनस्पति० चक्रमर्दः ( रा. ४.८; पृ. १३५)

**मेषिन्**–पु., वनस्पति० तिनिशः ( रापरि. ९.२४; पृ. ३६५ )

**मेषीमूत्र**–न. आविकमूत्रम् ( ध. ६.४९१; पृ. २८३ )

**मेह**–पु., रोग० प्रमेहः ( चचि. ६.५; सुनि. ६.८ ) द्र० 'प्रमेह'

**–कर्तनरस**–पु., पारद० पारदस्तत्तुल्यं नागं पञ्चभागं च कार्पासनिर्यासं दत्त्वाऽगस्त्यस्य बीजशतं क्षिप्त्वा सर्वं चैतत्कार्पासबीजमज्जायुते तक्रे पिष्ट्वा माषमिता गुटिकाः कार्याः; मात्राप्रत्यहमेका गुटिका; अनुपानं कपित्थनिर्यासो माषैकं मधु च; फलं–प्रमेहगणनाशः ( र. १७.१२१ )

**–गद**–पु., प्रमेहरोगः ( चचि.६.१३-१४ )

**–तिष्यारि**–पु., वनस्पति० तिक्तखदिरः (र.१७.६७) करञ्जः ( र. १७.६७ )

**–ध्वान्तविवस्वत्**–पु., पारद योग० समभागेन पारदगन्धकाभ्रकभस्मानि जम्बीररसेन संमर्द्य तस्मिंस्ताम्रभस्मार्धभागं प्रक्षिप्य गोदुग्धखर्जूरशर्कराहंसपादीद्रावेण गुडूचीसत्त्वयुक्तेन तथा च मांसीहरीतकीकर्कटशृंगीनिर्मलीदन्तीनां क्वाथेन संमर्दयेत्। मात्रा–वल्लः, अनुपानं– शुक्रमेहे शाल्मलीक्वाथः अर्शसि मधु, अश्मर्यां मधु, सर्वमेहेषु गोदुग्धम् ( र. १७.४८ )

**–बद्ध**–पु., पारदयोग० पारदभस्मकान्तभस्ममुण्डभस्मशिलाजतुमाक्षिकमनःशिलात्रिकटुत्रिफलाऽङ्कोलबीजकपित्थमज्जाहरिद्राः सर्वाणि एतानि त्रिंशद्वारं भृङ्गरसेन मर्दयित्वा संशोष्य च मधुयुक्तं माषमात्रम् लिह्यात्। फलं सर्वमेहनाशः। अनुपानं षण्महानिम्बबीजानि तण्डुलोदकेन पिष्ट्वा माषद्वयं घृतं संमिश्र्य पिबेत् ( र. १७.१४०-४३ )

**–मर्दनरस**–पु., योग० सीसभस्माभ्रकभस्मना सह सप्तवारं मर्दयित्वा सप्तवारं पुटेत्। ततस्तत्र कान्तभस्म समभागं क्षिप्त्वा गोमूत्रकशिलाधातुद्रवेण परिमर्दयेत्। शोषयित्वा नागकरण्डके स्थापयेत्। मात्रा–गुञ्जाद्वयम् । अनुपानं निम्बामलकरसः, फलं–सोपद्रवमेहनाशः ( र. १७.८३-८७ )

**–व्रण**–पु., मेहहेतुको व्रणः ( सुचि. २.९४ )

**–शत्रु**–पु., योग० कान्तलोहाभ्रकमण्डूरभस्मानि हरीतकीचूर्णं च क्रमेण पंचषट्पञ्चदशतोलकानि त्रिफला चत्वारिंशत्तोलका एतत् सर्वमेकत्र मर्दयित्वा गुटिकाः कार्याः । फलं–मेहनाशनम् ( र. १७.६५ )

**–हर**–योग० गन्धकसाहाय्येन सिद्धं राजावर्तभस्म तद्भस्मना मारितमभ्रकं कान्तलोहं चैताभ्यामभ्रककान्ताभ्यां च मारितः सूतः पारदसमो गन्धकश्च एतत् सर्वमेकत्र संमील्य त्रिदिनं–संमर्द्य पुटयेत्। स्वाङ्गशीतमाकुलीबर्बूरगुञ्जामूलानां क्वाथेनाष्टवारं मर्दयित्वा शुष्कं पटचूर्णं कुर्यात्। अयं सकलमेहनाशं करोति ( र. १७.१०२-८ )

**मेहन**–पु., वनस्पति० मुष्ककः (रा. ११.२२०; पृ. १९६)

**मेहारि**–पु., पारदयोग० अर्धभागयुक्तगन्धकेन पारदस्य कज्जलीं कृत्वा कृष्णधत्तूररसेनैकाहं मर्दयेत्। मृत्कर्पटविलिप्तायां परिपूर्य यामचतुष्टयं लवणयन्त्रे पाचयेत्। स्वाङ्गशीते पारदेऽर्धभागमभ्रकभस्म लोहभस्म च मर्दयेत्। मात्रा–वल्लः। सितामधुयुतं गुडूचीसत्त्वमनुपानम्। समधुपिप्पलीकं चूर्णं वा। फलं–राजयक्ष्मपाण्डुमेहादिनाशः ( र. १७.१३७-३९ )
न., योनिः ( अहसू. ७.६९ )
मेढ्रम् ( सुसू. ३५.१२ )

**मैण्मिण्य**–न., सानुनासिकशब्दविशिष्टः शब्दवहधमनीविकारः ( चसू. २६.८४ )
**मैत्र**–पु., काल० अनुकूलो मुहूर्तः ( चवि. ८.९ )
**मैत्रेय**–पु., ऋषि० रोगापहरणचिन्तनार्थं हिमवतः पार्श्वे समेतेषु महर्षिष्वेकः ( चसू. १.१३ )
**मैथिल**–पु., तन्त्रकार० रसरत्नसमुच्चयकर्त्रा सिंहगुप्तसूनुनाऽऽलोचितस्तन्त्रकर्ता ( र. १.५-९ )
**मैथुन**–न., स्त्रीपुरुषयोः संयोगः, व्यवायः (सुशा. २.४८)
**मैथुनासहिष्णुत्व**–न., लक्षण० मैथुनेऽसहत्वम् ( सुशा. ९.१२ )
**मैमतायनि**–पु., ऋषि० रोगापहरणचिन्तनार्थं हिमवतः पार्श्वे समेतेषु ऋषिष्वेकः ( चसू. १.१३ )
**मैरेय**–पु., न., आसुत० सुरासवयोः प्रत्येकं निष्पादितयोरेकीकृत्य पुनःसंधानात् मैरेयः ( सुसू. ४५.१८९-१९०; चक. १.१२ ) गुणाः–मधुरो वृष्यः सन्तर्पणो गुरुः ( असंसू. ६.१३१ ) तीक्ष्णः ( चसू. २७.१८७ ) प्रमेहेषु वर्ज्यम् ( सुचि. ११.५ ) व्रणिनामहितम् ( सुसू. १९.१८ ) षड्धान्यासवेष्वेकम् ( चसू. २५.४९ )
**मोक्ष**–पु., मुक्तिः, पुरुषस्य संसारजन्ममरणादिभिरसंयोगः ( चवि. ८.३७; चशा. ३.९ )
विसर्गः ( अहृसू. २१.१२ )
वनस्पति० मुष्ककः ( र. २.७१ )
( कृष्ण ) पाटला ( र. २.७१ )
–**काल**–पु., मुक्तिकालः ( असंनि. २.९४ )
–**शास्त्रिकसमय**–पु., मोक्षशास्त्रं सांख्यादिकं तस्मिन्नस्य शब्दस्यायमर्थं इति संकेतः सिद्धान्तविशेषो वा ( चवि. ८.५४ )
**मोक्षक**–पु., वनस्पति० मुष्ककः ( ध. ५ १३२; पृ. १९६ )
**मोक्षण**–न., मोचनम् ( अहृसू. २९.६४ )
**मोघ**–वि., निष्फलम् ( सुसू. ३१.३२ )
**( मोघा )**–स्त्री., वनस्पति० सितपाटलिः (रापरि. १०.१६; पृ. ३६९; रा. ९.१५२; पृ. २९)
**मोच**–न., फल० कदलीफलम् ( अहृसू. ६.११९; असंसू. ७.१७६-७७; चसू. २७.१४३; सुचि. ३१.५ ) द्र० 'कदलीफल'
पु., मोचरसः ( रा. ८.२१५; पृ. १९६ )
**( मोचा )**–स्त्री., वनस्पति० शल्लकी ( अहृसू. १५.२६ ) कदली (र.१७.१२८; ध. ४.७५; पृ. १४८) नीलिनी ( ध. १.२३२; पृ. ५५ ) शाल्मली ( ध. ४.१२७; पृ. १९५ )
–**चूर्ण**–न., मोचरसचूर्णम् ( असंशा. १.३६ )
–**निर्यास**–पु., मोचरसः ( र. १६.११०; रा. ८.२१५; पृ. १९६; ध. ५.१२६; पृ. १९५ )
–**निर्यासक**–वनस्पति० ( ध. ५.१२६; पृ. १९५ )
–**फल**–न., कदलीफलम् ( र. २७.५२-५४ )
–**रस**–पु., शाल्मलीवृक्षस्य निर्यासः महाकषायवर्गे संधानीयगणे एकं द्रव्यं तथैव शोणितस्थापनगणे पुरीषसंग्रहणीयगणे वेदनास्थापनगणे चैकं द्रव्यम् ( चसू. ४.९-१८ ) प्रियङ्ग्वादिगणे एकं द्रव्यं ( सुसू. ३८.४५ ) गुणाः–कषायः कफवातहरो रसायनो ग्राही बलपुष्टिवर्णवीर्यप्रज्ञायुर्देहसिद्धिदः शाल्मलीतुल्यगुणश्च ( रा. ८.२१६; पृ. १९६ ) शाल्मली ( ध. ५.१९५; पृ. १९५ )
–**सार**–पु., मोचरसः(रा.८.११५;र.१६.१५;पृ.१९६)
–**स्राव**–पु., मोचरसः ( ध. ५.१२६; पृ. १९६ )
**मोचक**–पु., वनस्पति० मुष्ककः (रा. ११.२२०; पृ.१९६)
**(मोचकी)**–स्त्री., वनस्पति० शाल्मली, व्रणरोपणतैले उपयुज्यते ( सुचि. २.५४; असंसू. ३.२१ )
**मोटा**–स्त्री., वनस्पति० बला ( रा. ४.४२२; पृ. ६४ )
**मोदक**–पु., बृहद्गुटिका ( चक. ७.३६; र. १७.६७ ) भक्ष्य० लड्डुकः, गुणाः–बृंहणाः, सुदुर्जराश्च ( सुसू. ४६.३९५-३९६ )
**( मोदकी )**–स्त्री., जिङ्गिणी ( ध. ३.२२; पृ. १३२ )
–**कल्प**–पु., सूदशास्त्रोक्तमोदकपाकविधिः ( चक. १.२३ )
–**मोदक**–पु., तवराजशर्करा (रा. १४.१६५ पृ. ९२)
**मोदनी**–स्त्री., वनस्पति० यूथिका(रा.१०.२५०;पृ.२००)
**मोदयन्ती**–स्त्री., वनस्पति० मल्लिका ( सुचि. २५.३३ )
**मोदा**–स्त्री., वनस्पति० अजमोदा (ध. २.९८; पृ.८९)
**दामोढ्या**–स्त्री., वनस्पति० अजमोदा (रा. ६.१५१; पृ. ९९ )
**मोदिनी**–स्त्री., वनस्पति० मल्लिका (रा. १०.२२५; पृ. १९७; रापरि. १०.२३; पृ. ३६९ )
मल्लिका० वृत्तमल्लिका (रा. १०.२२७; पृ. १९७) अजमोदा (रा. ६.१५१ पृ. ९०)
मद्यम् ( रा. १४.३०३; पृ. २५४ )
**मोरट**–पु., न., सद्यःप्रसूतायाः गोः क्षीरं, सप्ताहं यावत् पीयूषः, तदेव सप्ताहात्परतो यावत्प्रसन्नतां न गच्छति तावन्मोरट इत्युच्यते, गुणाः–मधुरो बृंहणो वृष्यश्च ( सुसू. ४५.९१ ) दीप्ताग्नीनामनिद्राणां

सुखप्रदम्, तथा गुरु, तर्पणं, वृष्यं, पवननाशनं च ( चसू. २७.२३४ )
वनस्पति० मूर्वा० (ध. १.१५; पृ. ९)
इक्षुमूलम् ( र. २.७१; सुचि. ७.९ )
अङ्कोलपुष्पः 'मोइहर' इति लोके (डल्हणः) हस्तिकर्णपलाशः वरुणादिगणे वीरतर्वादिगणे चैकं द्रव्यम् ( सुसू. ३८.१०-११ )

**(मोरटा)**–स्त्री., वनस्पति० मूर्वा ( ध. १.१३; पृ. ९ )

**मोरण**–पु., क्षीरसदृशः किलाटिकः; दध्ना तक्रेण वा सह पाकात् पृथग्भूतं घनद्रवभागं क्षीरं–कूर्चिका। सैव पाकाद्विना क्षीरशाकः। तयोर्घनभागः पृथग्भूतः–किलाटः, द्रवभागो मोरणः; गुणाः– शुक्रनिद्राकफकरः विष्टम्भिगुरुदोषलः ( अहसू. ५.४१ )

**मोह**–पु., अज्ञानं, तमः, मनोविकार०; मोहमविज्ञानेन परीक्षेत ( चवि. ४.८; चनि. ७.४ )
लक्षण० मनसो वैचित्यम् ( सुउ. ६२.६ )
उच्छ्वासजोदावर्तलक्षणम् ( सुउ. ५५.१७ )
कार्याकार्यानभिज्ञत्वम्, विचाराशक्तिः ( अहसू. १.१ )
रोग० मूर्च्छा, सुखदुःखसंज्ञानाशः ( सुउ. ४६.७; सुनि. १.२३ )

**–धूप**–पु', मोहकरधूपकल्पविशेषः

**मोहन**–पु., वनस्पति० धत्तूरः (रा. १०.१२; पृ. १३५)

**–वल्लिका**–स्त्री., वनस्पति० वटपत्रा, वटपत्रिका ( सुउ. ६०.४८ )

**–वल्ली**–स्त्री., वनस्पति० ब्राह्मी ( असंउ. ८ ) शिरीषः ( असंउ. ८ )

**मोहनिका**–स्त्री., वनस्पति० पुत्रजीवः (सुचि. २८.२२) वनस्पति० 'अवाक्‌पुष्पी' ( सुचि. २८.२२)

**मोहांश**–पु., मोहो विपरीतज्ञानं तस्यांशः, मूढतांशः (चशा. ४.३९ )

**मोहिनी**–स्त्री., वनस्पति० उपोदकी ( रापरि. ७.७४; पृ. ३५३ )
रेवतीग्रह० इयं ज्ञानहारिणी ( कारेवतीकल्प ३९ )

**मौकिरण**–पु., भूताधिपति० अष्टादशानामेकतमोऽयम् ( असंउ. ७ )

**मौक्त**–वि., मुक्ताया इदम् ( सुउ. १०.१५ )

**मौक्तिक**–न., प्राणिजद्रव्य० मौक्तिकयोनयः शुक्तिः शङ्खो गजः क्रोडः फणी मत्स्यो दर्दुरो वेणुश्चेत्यष्टौ ( र. ४.१४ ) तत्र मौक्तिकं शुक्तिजं श्रेष्ठम्; उत्तमं तथा शुभं मौक्तिकमाकारेण महद्गोलाकारं ह्लादि श्वेतं लघु स्निग्धं रश्मिवन्निर्मलं तोयप्रभं च (र. ४.१४) यत्तु रूक्षाङ्गं निर्जलं श्यावं ताम्राभं लवणोपममर्धशुभ्रं विकटाकारं ग्रन्थिलं च तत्त्याज्यम् ( र. ४.१५ ) नवरत्नेष्वेकम् ( र. ४.५ )
गुणाः– मधुरं शीतं सरं वीर्यकृत् बल्यं पुष्टिकरं पित्तघ्नं दृष्टिरोगविषदाहराजयक्ष्ममुखरोगघ्नं च ( ध. ६.६२; पृ. २१८ ) मधुरं लघु हिमं कान्तिदृष्ट्यग्निपुष्टिकरं भेदि विषनाशनं वीर्यप्रदं कफपित्तनाशनं कासश्वासक्षयाग्निमान्द्यनाशनं दाहघ्नमायुष्यं च ( र. ४.१५ ) विसर्पे सर्पिषा सह प्रदेहार्थमुपयुज्यते ( चचि. २१.८१ )

**–तण्डुल**–पु., वनस्पति० धवलयावनालः धान्यविशेषः ( रा. १६.१६८; पृ. २२९ )

**मौक्तिकेय**–न., प्राणिजद्रव्य० मौक्तिकम् ( रा. १३.६६; पृ. २१८ )

**मौच**–वि., मोचस्येदमिति मौचं ( कदलीफलम् ) मोचफलमित्यर्थः, कदलीफलम्, गुणाः–स्वादुरसं कषायं नातिशीतलं रक्तपित्तहरं वृष्यं रुच्यं श्लेष्मकरं गुरु च ( सुसू. ४६.१८१ )

**मौञ्जीतृण**–न., वनस्पति० मुञ्जः (रा. ८.२०४;पृ. १६०)

**मौञ्जीपत्रा**–स्त्री., वनस्पति० बल्वजा ( रापरि. ८.४०; पृ.३६० )

**मौढ्य**–न., मूढता, अज्ञानम् ( असंशा. १२.१९ ).

**मौत्रकृच्छ्रिकी**–वि., मूत्रकृच्छ्रे प्रोक्ता तदुपयोगिनी वा, ( चिकित्सा ) ( चवि. ५.२८ )

**मौद्गरस**–पु., मुद्गयूषः ( असंसू. ६.४८, अहसू. ६.३३ )

**मौद्गल्य**–पु., ऋषि० यज्ञःपुरुषविषये विवदमानानामेकतमः पारिक्षिः ( चसू. २५.८ )

**मौलिन्**–वि., मुकुटधारी, मौलिर्मुकुटम् तद्वान् ( सुचि. ३०.७ )

**मौस्तकषाय**–पु., मुस्ताया अयमिति मौस्तः, मुस्तकाथः पक्वानीसारे उपयुक्तः ( सुउ. ४०.७२ )

**मौहूर्तिक**–पु., मुहूर्तः ज्योतिःशास्त्रोपलक्षणम्, तज्जानाति इति मौहूर्तिकः ज्योतिर्विद् ( असंशा. १.५४ )

**म्रक्षण**–न., आलेपनम् ( सुचि. ९.१८ )
**म्रक्ष्ण**–न., लेपनम् ( असंउ. २४ )
**म्रदिमन्**–पु., मृदुत्वम् ( असंसू. ८.१२ )
मृदुशब्दादत्र इमानिच्प्रत्ययो ज्ञेयो भावार्थे ।
**म्लान**–पु., वनस्पति० राजतरणी ( रा. १०.२४६ )
–**ता**–स्त्री., ग्लानिः ( असंसू. ३२ )
**म्लानाङ्ग**–न., शुष्कं शुष्यद् वा अङ्गम् ( सुचि. ५.७ )
**म्लानि**–स्त्री., म्लानता किंचिच्छुष्कत्वम् ( अहसू. ७.९ )
**म्लायिन्**–वि., क्षययुक्तम् ( सुउ. ७.२८ )
**म्लेच्छ**–न., खनिज० हिङ्गूल ( ध.६.४०; पृ. २१४ )
खनिज० ताम्रम् ( र. १२.१२१-२२ )
–**कन्द**–पु., वनस्पति० लशुन ( ध. ४.६६; पृ. १४७ )
–**भोजन**–पु., वनस्पति० गोधूमः ( ध. ६.९७, पृ. २२७ )
–**मुख**–न., खनिज० ताम्रम् ( ध. ६.९; पृ. २०७ )
**म्लेच्छक**–न., खनिज० ताम्रप्रकार० ( र. ५.४९ )

# आयुर्वेदीय - शब्दकोशः

## य



**यकृत्**–न., शारीर० पञ्चदशकोष्ठाङ्गेष्वेकम्, दक्षिणकुक्षेरधःस्थशरीरावयवः ( चशा. ७.१० ) रञ्जकपित्ताधारः शोणितवहानां स्रोतसां मूलम् (च. वि. ५.८) दक्षिणपार्श्वस्थं कालखण्डम्, रक्तधराकलायाः पुरीषधराकलायाश्च स्थानम् ( सुशा. ४.१०;ड.१७) उत्पत्तिः–तच्छोणितजम् ( सुशा. ४.२५ ) तस्य स्थानम्–हृदयस्य दक्षिणतो यकृत् क्लोम च ( सुशा. ४.३१ ) रसधातुः यकृत् प्लीहानौ प्राप्य रागमुपैति। यकृतः रक्तधराकलायां शोणितं भवति। तत्रस्थं शोणितं शेषाणां शोणित स्थानानां बलदानेनानुग्रहं करोति ( सुसू. १४.४; सुशा. ४.१० )

–**पिण्ड**–पु., शारीर० यकृत् ( सुउ. ६.१४ )

–**प्रकाश**–वि., यकृत्खण्डसंनिभं कृष्णलोहितम् ( सुनि. २.११ )

( **यकृज्**–)ज–वि., यकृति जातः ( चसू. ७.१०१ )

( **यकृद्**–) **दालिन्**–यकृन्नाशकम्, दोषैर्यकृद्भेदयति, दालयतीति ( मानि. सुनि. ७.१६ )

–**दाल्युदर**–न., रोग० उदरभेदः तस्योत्पत्तिं प्लीहोदरवद्विजानीयात् । तल्लक्षणानि–आतुरो विशेषतः सीदति । मन्दज्वराग्निः कफपित्तलिङ्गैरुपद्रुतः क्षीणबलोऽतिपाण्डुश्च भवति । दक्षिणे पार्श्वे यकृद् वृद्धिमेति ( सुनि. ७.१६ )

–**रस**–पु., छागल्यादिकालखण्डरसः ( ड. सुउ. १७.१७-१८ )

**यक्ष**–पु., देवयोनि० ( ड. सुक. ७.६१-६२; चनि. ७.१० ) कुबेरादयः (सुसू. ५.२१) भूताधिपतिः (असंउ. ७) वनस्पति० वटः ( र.११.३९ ) निर्यास० रालः ( र. ११.३९ )

( **यक्षी** )–स्त्री., रेवतीग्रह० सा द्वितीये दिवसेऽपत्यं विनाशयति ( कारेवतीक. ४४ )

–**कर्दम**–पु., सुगन्धिद्रव्यगण० कुङ्कुमागरुः महासुगन्ध इत्यपरपर्यायः, कर्पूरः, कस्तूरी, चन्दनम्, तद्गुणाः–शीतः, सुगन्धिः, कान्तिप्रदो त्वग्दोषशिरोर्तिविषनाशनः ( ध. ७.४५ )

–**गुहा**–स्त्री., वनस्पति० पृश्निपर्णी ( काखिल. अ. ११.९७ ) शालिपर्णी ( काखिल. अ. ११.९७ )

–**ग्रह**–पु., ग्रह० यक्षाऽऽविष्टलक्षणानि–रक्तनेत्रः कमनीयसूक्ष्मरक्तवस्त्रधारी, प्रचुरसत्वो द्रुतमतिरल्पवक्ता, क्षमाशीलस्तेजस्वी केनापि अभिलषितं वस्तु ददामि इति भाषिता ( सुउ. ६०.११ )

–**तरु**–पु., वनस्पति० वटः ( रा. ११.११४ )

–**दिश्**–स्त्री., यक्षराट्कुबेरस्य दिशा 'उदीची' ( र. ७.१-२ )

–**धूप**–पु., निर्यास० रालः ( ध. ३; ध. ३.१२१ ) वनस्पति० सर्जकः ( रा. ९.२०५ )

–**लोचन**–पु., वनस्पति० पूतिकरञ्जः ( र. ११.३७-३९ )

**यक्षाक्ष**–पु., वनस्पति० पूतिकरञ्जः ( र. ३०.६९ )

**यक्षावास**–पु., वनस्पति० वटः ( रा. ११.१४४ )

**यक्षोन्माद**–पु., रोग० ( चवि. ९.२० )

**यक्ष्मन्**–पु., रोग० राजयक्ष्मा ( चइ. ५.८ ) रोगः ( चनि. १.५ ) ज्वरः दोषः ( चवि. ६.४ )

**यक्ष्मिन्**–वि., यक्ष्मरोगी ( सुउ. ४१.३१ )

**यजुस्**–न., यजुर्वेदः, चतुर्णां वेदानामेकः (चसू.३०.२०)

**यज्ञःपुरुषीय**–वि., अध्यायसंज्ञा० ( चसू. २५.१ )

**यज्ञ**–पु., यज्ञदेवता ( चक. चवि. ३.२४ )

–**नेत्री**–स्त्री., वनस्पति० सोमवल्ली ( धपरि. ४.४ )

–**भूषण**–पु.,( परिव० ) वनस्पति० दर्भः ( रा. ८.२०७ )

–**योग्य**–पु., वनस्पति० उदुम्बरः ( रा. ११.३६ )

–**वल्ली**–स्त्री., वनस्पति० सोमवल्ली ( रापरि. ३.३ )

–**वृक्ष**–पु., वनस्पति० वटः ( रा. ११.११६ )

–**श्रेष्ठा**–स्त्री., वनस्पति० सोमवल्ली ( रापरि. ३.३ )

**यज्ञाङ्ग**–पु, वनस्पति० उदुम्बरः ( ध. ५.८६ ) खदिरः ( रा. ८.३१ )

( **यज्ञाङ्गा** )–स्त्री., वनस्पति० सोमवल्ली ( रापरि. ३.३ )

**यज्ञिय**–पु., वनस्पति० विकङ्कतः ( रा.९.५५ ) उदुम्बरः ( ११.१३६ )

**( यज्ञिय )-पत्रक**-पु., वनस्पति० दर्भः ( रा. ८.२०७ )
**यज्ञीया**-स्त्री., सुरा ( चचि. २४.५ )
**यज्ञौही**-स्त्री., यज्ञं वहतीति; अनेन लौकिकयज्ञान्तराण्यपि सुरया क्रियन्ते इत्युच्यते ( चक्र. चचि. २४.४ )
**यतवाच्**-वि., वाक्संयमी वाग्यतः ( असंसू. ३ )
**यत्त**-वि., यत्नपरः ( सुसू. ३४.७-८ )
**यथा**-अ., यादृक् ( चसू. २५.४० )
**-काल**-अव्य., कालमनतिक्रम्य ( सुशा. ४.१९ )
**-चित्र**-अव्य., यथाविन्यासम् ( चवि. ६.५ )
**-न्याय**-अव्य., यथागमम् ( चसू. १४.५ )
**-प्रधान**-अव्य., प्रधानं नाम प्राधान्यम्, प्राधान्यमनतिक्रम्य इति यथाप्रधानम् ( सुचि. ३१.५ )
**-प्रयोजन**-अव्य., प्रयोजनस्यानतिक्रमेण (सुचि. ३१.५)
**-सात्म्य**-अव्य., हस्तपादादीनां सात्म्यविरोधि यथा स्यात्तथा ( चसू. २५.४० )
**यथाग्नि**-अव्य., अग्निमनतिक्रम्य ( चसू. २५.४० )
**यथार्थ**-अव्य., यथाप्रयोजनम्, अर्थः प्रयोजनम्, तेन यथार्थं यथाप्रयोजनम् ( सुशा. ४.२८ )
**यथोद्देश**-अव्य., उद्देशमनतिक्रम्य ( चशा. ४.४१ )
**यदृच्छा**-स्त्री., अलक्षिता, अतर्कितोपनतत्वम् (सुशा. १.११)
**-सिद्धि**-स्त्री., अकस्मात्सिद्धिः ( चसि. २.२८ )
**यन्त्र**-न., पारदादेरेकत्र स्थिरीकरणार्थं साधनम्, बार्तिकैः स्वेदनादिकर्मार्थं निर्मितं दोलायन्त्रादिकम् ( र. १.९-१० )
शल्यानामाहरणोपायः; एतादृशानि यन्त्राण्येकोत्तरशतम्। अन्ये तु शतशब्दस्य संख्यामात्रत्वादसंख्यानि यन्त्राणीत्याहुः ( सुसू. ७.३ ) लोहवेणुवृक्षसूत्रशृङ्गवल्कलतृणानि स्नायुप्रताना अश्मानश्चेतेभ्यो यन्त्राणि निष्पाद्यन्ते तानि च स्वस्तिकयन्त्राणि संदंशयन्त्राणितालयन्त्राणि नाडीयन्त्राणि शलाकायन्त्राण्युपयन्त्राणि चेति पुनरपि षोढा ( सुसू. ७.५ ) यन्त्रकर्माणि चतुर्विंशतिः-निर्घातनपूरणबन्धनव्यूहनवर्तनचालनविवर्तनविवरणपीडनमार्गविशोधनविकर्षणाहरणाञ्छनोन्नमनविनमनभञ्जनोन्मथनाचूषणैषणदारणर्जूकरणप्रक्षालनप्रधमनप्रमार्जनानि ( सुसू. ७.१० ) अतिस्थूलाऽसाराऽतिदीर्घाऽतिह्रस्वाऽग्राहिविषमग्राहिवक्रशिथिलात्युन्नतमृदुकीलमृदुमुखमृदुपाशभेदेन यन्त्रदोषा द्वादश ( सुसू. ७.१९ ) तत्र यन्त्रमूलं नाम यन्त्रमुष्टिः ( अहृसू. २५.६ )
शरीरसंधिः ( चसु. १२.८ )
**-निपीडन**-पु., रज्ज्वादिबन्धनम् (अहृसू. २७.५१)
**-विधि**-पु., यन्त्रकल्पनं यन्त्रभेदो वा ( सुसू. ७.१ )
**-विध्यध्याय**-पु., अध्यायसंज्ञा० ( सुसू. ७.१ )
**यन्त्रण**-न., पट्टग्रन्थैर्बन्धनं तच्चोर्ध्वादिभेदेन त्रिधा ( सुसू. १८.१९ )
**( यन्त्रणा )**-स्त्री., व्रणबन्धः यन्त्रणवदियमपि त्रिधा ( सुसू. १८.३६ )
**-शाटक**-न., रुग्णस्य नियन्त्रणार्थमुपयुज्यमानो वस्त्रविशेषः ( सुचि. ६.४ )
**यन्त्रोपाय**-न., यन्त्रणप्रकारः ( सुशा. ८.८ )
**यम**-पु., देहेन्द्रिययोर्निरोधः ( सुचि. २९.१० )
अहिंसा सत्यमस्तेयं ब्रह्मचर्यमपरिग्रहश्चेति पञ्च योगसूत्रोक्ताः यमाः ( ड. सुचि. १.१३३ )
ज्वरः यम्यते नियम्यते अन्तं नीयते जीवितमनेनेति यमो ज्वरः ( सुउ. ३९.९५-९६ )
युग्मम् ( चशा. ३.११ )
**-कुल**-न., यमगृहम्, मृत्युगृहम् ( काजातिसूत्रीय. )
**-क्षय**-पु., यमगृहम् ( चइ. ४.१८ )
**-ज**-वि., यमयोर्गर्भयोरेकः यमलः ( कारेवती ).
**-द्रुम**-पु., वनस्पति० शाल्मली ( रा. ८.२१२ )
**-राष्ट्र**-न., यमालयः ( सुसू. ३१.२३ )
**-सत्त्व**-वि., चित्तप्रकृतिः प्राप्तकारी दृढोत्थानो निर्भयः शुचिः स्मृतिमान् रागमोहमदद्वेषरहितश्च पुरुषो यमसत्त्ववान् ( सुशा. ४.८६ )
सात्त्विककायलक्षणेष्वेकम् ( सुशा. ४.८६ )
**यमक**-पु., घृततैले स्नेहद्वयम् ( चसू. २.२७ )
व्रणबन्धः, द्वयोर्व्रणयोः संयमनो बन्धः ( सुसू. १८.१७-१८ )
**(यमिका)**-स्त्री., रोग० हिक्काप्रकारः, अयं यमलवेगेन जायते (चचि.१७.४३)
रेवतीग्रहस्य नाम ( काबालग्रहचि. )
**यमल**-वि., युग्मजम्, सद्वितीयम् (सुउ. ५०.१०-११ )
**(यमला)**-स्त्री., हिक्कारोगः; यमिका (सुउ.५०.१०-११)
**-च्छद**-पु., वनस्पति० कोविदारः (रा. १०.२९३)
**-पत्रक**-पु., वनस्पति० अश्मन्तकः ( ध. ४.९४ )
**-वेग**-पु., हिक्काया वारद्वयं बहिःप्रवर्तनम् ( सुउ. ५०.१०-११ )
**यमानी**-स्त्री., वनस्पति० अजमोदा ( चचि. ८.१२६ )

–षाडव–न., चूर्णकल्प० यवानीषाडवम्
(चचि. ८.१४१-१४४)

**यव**–पु., मान० षट्सर्षपमितः (र. ११.२) धान्यमाषद्वयम् (चक. १२.८८) गुञ्जायाः षष्ठांशः (र.३. १२७-१२९)

धान्य०, गुणाः–मधुरः कषायस्तिक्तः (कटुविपाकी) (सुसू. ४६.४१-४२) मधुरविपाकी (रा. १६) शीतो रूक्षो गुरुः सरः ग्राही (रा. १६) वृष्यो वातघ्नः (सुसू. ४६.४१-४२) वातकरः कफपित्तघ्नो मेदप्रमेहपीनसश्वासकासोरुस्तम्भकण्ठामयत्वग्रोगघ्नश्च (ध. ६.७८) स्वरवर्णकृल्लेखनस्तृषाहरः प्रसादनः (सुसू. ४६.४१-४२) स्वेदोपगच्छर्दिनिग्रहणगणे श्रमहरगणे चैकं द्रव्यम् (चसू. ४.१३,१४,१६) वातसंशमनवर्गे एकं द्रव्यम् (सुसू. ३९.७) पुरीषजननानां श्रेष्ठः (असंसू. १३.३) यवकल्को व्रणे प्रशस्तः
(सुचि. १.६९)

हिं.—जौ, जवे.

**म.—जव.**

बं.—यव.

त.—यवैक्कोतुमै, पार्लियरिचि.

**–कोलकुलत्थयूष**–पु., आहारद्रव्य० अयं कण्ठ्योऽनिलापहश्च (सुसू. ४६.३७५)

**–क्षार**–पु., भैषज्य० (ध. २.१७) गुणाः–कटुरुष्णो रूक्षस्तीक्ष्णः सरो दीपनो रक्तदूषणः पित्तदूषणः कफवातघ्न उदरामजशूलाश्मरिमूत्रकृच्छ्रविषदोषघ्नश्च (ध. २.१७) वह्निसमः शुक्रश्लेष्मविबन्धार्शोगुल्मप्लीहविनाशनः (सुसू. ४६.३२३)

**–क्षारघृत**–न., यवक्षारसहितं घृतम्; कासे उपयुज्यते
(चचि. १८.१६६)

**–चिञ्चा**–स्त्री., वनस्पति० 'यवेची' 'काटेधोतरा' इति प्रसिद्धा (र. २५.२२)

**–चित्रा**–स्त्री., वनस्पति० क्षीरिणी, काञ्चनक्षीरी
(रा. ५.३६३)

**–ज**–पु., यवक्षारः (ध. २.१७)

यवानी (रा. ६.१४१)

न., निर्यास० पलाशगन्धा (रा. ६.८८; पान ८१)

**–जा**– निर्यास० वंशरोचना (ध. २.५६)

**–तिक्ता**–स्त्री., वनस्पति० शङ्खिनी (ध. १.२५६) यवक्षेत्रेषु जायते तिक्तसप्ताष्टपत्रा चेति यवतिक्तेति नाम्ना प्रथिता (सुसू. ४५.१२५)

**–तिक्तातैल**–न., यवतिक्ताजन्यं तैलम्, गुणाः– सर्वदोषप्रशमनमीषत्तिक्तमग्निदीपनं लेखनं मेध्यं पथ्यं रसायनं च (सुसू. ४५.१२५) रेचनं सुरभि च
(ध. ६.१४३)

**–पङ्क्ति**–स्त्री., हस्तरेखा कुमारहस्ते अच्छिन्नेयं प्रशस्या
(कासू. २८)

**–पल्ल**–पु., यवस्थापनकोष्ठी (सुचि. १२.१६)

**–प्रख्या**–स्त्री, क्षुद्ररोग० कफवातोत्था मांससंश्रिता यवाकारा कठिना ग्रथिता च पिडका (सुनि. १३.५) चिकित्सा–एताम् आदौ स्वेदयेत् परिपाकगतां भित्त्वा व्रणवत्समुपाचरेत् (सुचि. २०.५-६)

**–फल**–पु., वनस्पति० वंशः (ध. ४.१३७)

कुटजः (रा. ९.१९)

वंशफलः (असंउ. ६ इन्दु)

**–(फला)**–स्त्री., वनस्पति० दुग्धिका (डल्हण)
(सुक. ६.१५)

**–फलाङ्कुर**–पु., वनस्पति० वंशाग्रम् (रा. ७.२१९)

**–भस्मन्**–न., भैषज्य० यवक्षारः (सुउ. ४३.१२)

**–शाक**–पु., शाक० क्षेत्रवास्तुकम्, फञ्जीचिल्लियादिगणे (चसू. २७.१०२)

**–शूक**–पु., भैषज्य० यवक्षारः (रा. ६.२४)

**–शूकज**–पु., वनस्पति० मुण्डशालिः (रा. १६.८९)

द्र० 'शालि'

यवक्षारः (अहसू. ६.१५०)

**–संभवा**–स्त्री., वनस्पतिनिर्यास० वंशरोचना
(ध.२ .५६)

**–सुरा**–स्त्री., आसुत० गुणाः–विष्टम्भिनी गुर्वी रूक्षा त्रिदोषकृत (अहसू. ५.७०)

**–सूचक**–पु., भैषज्य० यवक्षारः (रा. ६.२४)

**–स्वेद**–पु., स्वेद० अनग्निस्वेदः (असंचि. ५)

**यवक**–पु., वनस्पति० शालिभेदः (ड. सुसू. ४६.४)

द्र० 'शालि.'

गोधूमः (ध. ६.९७)

व्रीहिः (ध. ६.७२)

धान्य० (चसू. २७.१२) अल्पयवः (चसू. २१.२५) गुर्वाहारद्रव्यम् (चसू. ५.११) शूकधान्यानामपथ्यत्वेनाग्र्यतमः (चसू. २५.३९) गुणाः–मधुरः, पाकेऽम्ल उष्णो गुरुः, स्निग्धः, श्लेष्मपित्तलः, सृष्टमूत्रपुरीषश्च (अहसू. ६.६-७)

**यवन**–पु., यवनदेशीयः यश्च मांसादिसात्म्यः
(चचि. ३०.३१६)

गोधूमः वनस्पति० ( रा. १६.१५१ )
-द्विष्ट-पु., निर्यास० गुग्गुलुः ( रा. १२.१८३ )
**यवनाल**-पु., वनस्पति० जूर्णा (व. १६.१०८) धान्य० यावनालनिभः खरपत्रो नदीजो दृढत्वक्, गुणाः-ईषन्मधुरो रुच्यः शीतः पित्ततृषाघ्नः पशूनामहितश्च ( ध. ८.३८ )
**यवनेष्ट**-न., खनिज० सीसकम् ( ध. ६.२१ )
मरिचम्, वनस्पति० ( ध. २.८८ )
गृञ्जनम् ( रा. ७.५५ )
लशुनः ( रा. ७.९६ )
पलाण्डु० राजपलाण्डुः ( रा. ७.१०३ )
पलाण्डुः ( ध. ४.७१ )
**( यवनेष्टा )**-स्त्री., वनस्पति० खर्जूरी ( रा. ११.६५; पान. १७८ )
**यवस**-पु.. वनस्पति० बुसम् ( सुसू. ३४.५ )
**यवसाह्व**-पु., वनस्वति० यवानी ( ध. २.९१ )
**यवागू**-स्त्री., आहारद्रव्य० ( सुउ. ४०.९२ ) तण्डुलादिकृता पेया ( चचि. ३.१४२ ) 'यवागूर्विरलद्रवा' ( सुसू. ४६.३४५ ) यवागूं षड्गुणे जले पचेत् (ड. सुसू. ४६.३४५)
**यवाग्रज**-पु., भैषज्य० यवक्षारः ( चचि. २६.६४ )
यवानीक्षुपः ( चचि. २६.६४ )
न., भैषज्य० तुषोदकम् ( ध. ६.२५१ )
वनस्पति० यवानी ( ध. २.९१ )
**यवाङ्कुर**-पु., यवस्याङ्कुरो मन्त्रकर्मण्युपयुज्यते ( असंसू. ८ )
**यवाढक**-न., मान० चतुष्षष्टिपलानि ( सुउ. ५२.४३ )
**यवानक**-पु., न., वनस्पति० यवानी ( असंचि. ८ )
**( यवानिका )**-स्त्री., वनस्पति० यवानी ( ध. २.९१ )
**यवानी**-स्त्री., वनस्पति० गुणाः-कटुस्तिक्तोष्णा दीपनी वातकफघ्नी शूलाध्मानार्शःकृमिच्छर्दिघ्नी गुल्मोदरनाशिनी च ( ध. २.९३ ) पाचनी लघुस्तीक्ष्णा पित्तला शुक्रष्लीहानाहनाशिनी च ( र. १६.५६ ) हृद्याऽऽस्वादनीयपित्तोत्क्लेशकरी च (चसू.२७.१७०) दौर्गन्ध्यनाशिनी ( चसू. २७.३०७ )
हिं.—अजवाइन, अजमान.
**म.—ओवा.**
गु.—अजमो.
बं.—यमानी योयान.
त.—अमन.
फा.—नानुखा.

यवानीभेदः तुरुष्काऽऽरुया ( ध. २.९४ ) गुणाः— रूक्षा ग्राहिणी मदकारिणी कटुः ( ध. २.९४ )
-**षाडव**-न., योग० यवानीतिन्तिडीकनागराम्लवेतसदाडिमबदरवृक्षाम्लानि कर्षप्रमाणानि धान्यसौवर्चलाजाजीवराङ्गान्यर्धकर्षप्रमाणानि पिप्पलीनां शतं मरीचानां द्वे शते शर्करायाः चत्वारि पलान्येकत्र चूर्णयेत्। गुणाः-जिह्वाविशोधनं हृद्यं हृत्प्लीहपार्श्वशूलघ्नं रोचनं विबन्धानाहनाशनं कासश्वासहरं ग्राहि ग्रहण्यर्शोविकारनुत् ( चचि. ८.१४१-१४४ )
**यवान्नविकृति**-स्त्री., यवकृतान्नविशेषः ( सुउ. ३९०.२७० )
**यवापत्य**-न., भैषज्य० यवक्षारः (रा. ६.२४)
**यवापूप**-पु., आहारद्रव्य० यवकृतोऽपूपः (चसू. २७.२६५)
**यवाम्लज**-न., भैषज्य० तुषोदकम् ( रा. १५.२९७ )
**यवालक**-पु., पक्षि० यवगुड्डुरुकः विष्किरवर्गीयाणामेकतमोऽयम् ( सुसू. ४६.५९ )
**यवास**-पु., वनस्पति० यासः (चचि. ४.६८)
-**शर्करा**-स्त्री., वनस्पति० यासशर्करा ( सुसू. ४५.१६७ )
**यवासक**-पु., वनस्पति० यासः ( ध. १.२२ )
**यवाह्व**-पु., भैषज्य० यवक्षारः ( सुचि. २०.१९,२० )
**यवोत्थ**-न., भैषज्य० तुषोदकम् ( ध. ६.२५१ )
**यवौदन**-पु., यवकृताहारः ( सुउ. १७.४९ )
**यव्य**-पु., भैषज्य० यवक्षारः ( ध. २.१७ )
**यशस्**-न., निर्मलगुणकीर्तनम् ( सुसू. ३४.१३ )
-**करी**-स्त्री., वनस्पति० जीवन्तीभेदः बृहज्जीवन्ती ( रा. ३.१७९ ) द्र० 'जीवन्ती'
जीवन्ती ( ध. १.१४० )
यवतिक्ता ( रा. १.२५६ )
-**विनी**-स्त्री., वनस्पति० यवतिक्ता ( रा. ३.३८१ )
वनस्पति० तेजस्विनी ( रा. ३.३९४ )
**( यशो )-द**-पु., खनिज० पारदः ( र. १.२-५ )
ग्रहमातृ० ( असंउ. ४ )
-**धन**-पु., सप्तविंशतिरससिद्धिप्रदायकेष्वेकः ( र. १.२-५ )
**यशस्या**-स्त्री., वनस्पति० ऋद्धिः (रा. ५.१८७)
जीवन्ती ( रा. ३.१७७ )
**यष्टि**-स्त्री., वनस्पति० भार्ङ्गी ( रा. ६.९६ )
-**कर्ण**-पु., पञ्चदशकर्णबन्धेष्वेकः ( सुसू. १६.१० )

सच ग्रथितमांसस्तब्धसिरासन्ततसूक्ष्मपालियुक्तः ( सुसू. १६.१० )
-मधुकान्वितघृत-न., यष्टिमधुमिश्रं घृतम्, व्रणे वेदनाशमनार्थमुपयुज्यते ( सुसू. ५.४२ )
-मार्कव-पु., नलिका-भृङ्गराजः ( असंउ. २८ )
-लता-स्त्री., वनस्पति० भ्रमरारिः (रापरि. १०.४१)
**यष्टिक**-पु., वनस्पति० यष्टीमधु ( चसू. ४.१४ )
**( यष्टिका )**-स्त्री., प्रतुदपक्षि० ( चसू. २७.५२ )
**यष्टिकाभ्रामण**-न., यन्त्रयष्ट्यादिना भ्रामणम्, जलशीती-करणानामेकतममिदम् ( सुसू. ४५.१९ )
**यष्टी**-स्त्री., वनस्पति० यष्टीमधु ( ध. १.१४२ )
-मधु-न., वनस्पति० गुणाः- मधुरमीषत्तिक्तं शीतं वृष्यं चक्षुष्यं रुच्यं पित्तघ्नं शोषक्षयविषच्छर्दितृष्णा व्रणघ्नं च ( ध. १.१४२ ) मेध्यरसायनप्रयोगेऽस्य चूर्णं क्षीरेण सहोपयुज्यते ( चचि. १(३).३४ )
हिं.—मुलहटी, मीठी लकरी, मुलैठिका.
म.—ज्येष्ठमध, जेष्ठमध.
गु.—जेठीमधनो मूळ.
फा.—वेखमेहेकूमङ्कु.
-मधुक-न., वनस्पति० यष्टीमधु ( सुउ. ४५.२४ )
-मधुकपायस-न., आहारद्रव्य० यष्टीमधुक-साधितक्षीरसिद्धास्तण्डुलाः यष्टीमधुकान्वितं पायसं वा ( सुउ. ५३.१३ )
**यष्टीक**-न., वनस्पति० यष्टीमधु ( ध. १.१४२ )
**यष्टृ**-वि., यज्ञकर्ता ( चसू. ८.१८ )
**यष्ट्याह्व**-न., वनस्पति० यष्टीमधु ( ध. १.१४२ )
**यस्यश्यावनिमित्तीय**-वि., यस्य श्यावरूपमधिकृत्य कृतोऽध्यायसंज्ञाविशेषः ( चइ. ९.१ )
**याक्षसत्त्व**-न., चित्तप्रकृतिः, राजससत्त्वभेदः, दान-शय्याऽत्यलङ्कारपानभोजनमैथुनैर्नित्योपेतं प्रमुदितम् ( कासू. २८ )
**याचनक**-पु., वनस्पति० एरण्डभेदः रक्तैरण्डः ( रा. ८.४४७ ) द्र० 'एरण्ड'
**याज्ञिक**-पु., वनस्पति० पलाशः ( ध. ५.१६१ )
पिप्पलः ( रा. ११.११८ )
खदिरभेदः, ताम्रकण्टकः ( रा. ८.३६ ) द्र० 'खदिर'
-समय-पु., याज्ञिकसिद्धान्तः, पूर्वमीमांसाशास्त्रीय-सिद्धान्तः ( चवि. ८.५४ )
**यातुक**-पु., शाक० शुक्ला शाकपर्णी, फञ्जीचिल्ल्यादिगणे प्रोक्तेयम् ( चसू. २७.१०२ )
**यातुघ्न**-पु., निर्यास० गुग्गुलुः ( रा. १२.१८४ )
**यात्राकर**-वि., यापनाकरम् ( चसू. १८.३९ )
**यादृच्छिक**-वि., यदृच्छया नाम स्वैरतया स्वच्छंदं वा कर्म कुर्वन् ( चसि. २.५ )
**यान**-न., गमनम् ( सुसू. ४६.४९० )
वाहनम् ( सुसू. २.१० )
-क्लान्त-वि., यानेन रथादिना क्लान्तः ( चसि. २.१४ )
-यान-न., यानेन गमनम् ( अहृसू. १६.२७ )
**यान्त्रिक**-वि., यन्त्रपीडितः ( चसू. २७.२३७ )
**यान्त्रिकेक्षुरस**-पु., यन्त्रपीडित इक्षुरसः, गुणाः-गुरु-विदाही विष्टम्भी ( सुसू. ४५.१५८ )
**यापन**-वि., धारणम् ( सुनि. १.१२ )
पोषणम् ( सुसू. १४.३ )
रोगशमनम् ( सुचि. ६.१३ )
-बस्ति-पु., निरूहबस्ति० ( सुचि. ३५.१८ ) क्लैब्ये उपक्रमविशेषः ( चचि. ३०.२०३-२०४ ) अति-योगे लक्षणम्- शोफाग्निनाशपाण्डुताशूलार्शःपरि-कर्तिकाज्वरातिसाराः ( चसि. १२.३०-३१ ) तत्र वर्जनीयम्-व्यायामो मैथुनं मद्यं शिशिराम्बु संभो-जनं रथक्षोभो मधु च ( चसि. १२.२३ )
**यापनीय**-वि., याप्यः ( सुसू. २३.१० )
**याप्य**-वि., असाध्यम्, 'याति नाशेषतां व्याधिरसाध्यो याप्यसंज्ञितः' ( चचि. ८.३४ ) आयुषः शेषत्वा-दसाध्योऽपि पथ्यसेवया लब्धाल्पसुखो व्याधिः ( चसू. १०.१७ )
-ता-स्त्री., कृच्छ्रसाध्यता ( सुसू. ४.५ )
**याम**-पु., प्रहरः ( र. ३.२९ )
**यामिनी**-स्त्री., रात्रिः ( सुचि. २६.८ )
**यामुन**-न., खनिज० अञ्जनम् ( रा., १३.२१४ )
**यामुनेय**-न., खनिज० अञ्जनम् ( रा. ३.१५१ )
**याम्य**-वि., दाक्षिणदिग्देशीयम् ( र. ७.३ )
न., नक्षत्र० भरणी ( सुक. ३.३८ )
शुद्धसत्त्वप्रकारः ( चशा. ४.३७(४) ) लेखास्थवृत्तः प्राप्तकारी स्मृतिमानसंप्रहार्यउत्थानवानैश्वर्यवान् व्यपगतरागेर्ष्याद्वेषमोहश्च याम्यः (चशा.४.३७(४)
सन्निपातज्वरभेदः वातहीनकफमध्यपित्ताभिवृद्धिजः द्र० 'ज्वर' ( काकविशेषकल्क )
**( याम्या )**-स्त्री., भरणीनक्षत्रम् ( असंउ. ४१ )
रेवतीग्रह० साऽष्टमे दिनेऽपत्यं विनाशयति ( कारेवती. ४६ )

**याम्योद्भूत**-पु., वनस्पति० श्रीतालः ( रा. ९.९५ )
**यायावर**-वि., गमनशीलः, नैकत्र कृतावस्थितिकत्वात् आभीक्ष्ण्येन विचरणशीलः ( चचि. १(४).३ )
**याव**-पु., यवपृथुकः ( चसू. २७.२७३ )
**( यावी )**-स्त्री., वनस्पति० शङ्खिनी ( रा. ३.३८१ )
**-शर्करा**-स्त्री., भैषज्य० यवासशर्करा ( ध. २.१०७ )
**-शाक**-न., शाक० केचिच्छङ्खिनीमाहुः (असंसू. ७)
**-शूक**-पु., भैषज्य० यवक्षारः ( सुचि. १.४० )
**-शूकज**-पु., भैषज्य० यवक्षारः ( ध. २.१७ )
**यावक**-वि., यवकृतः ( चइ. १२.७२ ) घृतमिश्रं यवकृतं तर्पणम् अन्न० ( चचि. ८.६५ )
**यावन**-पु., वनस्पति० तुरुष्कः ( ध. ३.२२ )
**( यावनी )**-स्त्री., वनस्पति० यवानी ( ध. २.९४ )
इक्षुभेदः करङ्कशालिः ( रा. १४.१८५ ) द्र० 'इक्षु'
**-प्रिया**-स्त्री., वनस्पति० नागवल्ली ( धपरि. ३.२ )
**यावनाल**-पु., वनस्पति० गुणाः- ईषन्मधुरः शीतो रुच्यः पित्तघ्नः पित्ततृषाघ्नश्च ( रापरि. ८.३८ )
जूर्णः ( रा. १६.१६७ )
यवक्षारः ( सुउ. १५.११,१२)
**( यावनाला )**-स्त्री., वनस्पति० जूर्णा ( ध. ६.१०८ )
**( यावनाली )**-स्त्री., शर्कराभेदः ' हिमजा ' ' गुडजा ' इति प्रसिद्धा, गुणाः-स्वादुस्तिक्तात्पोष्णा पिच्छिला सारिका रुच्या दाहकरी रक्तविकारकरी वातघ्नी च ( रा. १४.१६३ ) द्र० ' शर्करा '
**-जभस्मन्**-न., भैषज्य० यवक्षारः ( सुउ. ४२.४०-४४ )
**यास**-पु., वनस्पति० धन्वयासः ( ध. १.२२ )
**-शर्करा**-स्त्री., दुरालभाक्वाथकृता शर्करा, सतिक्ता कषायमधुरा शीता च ( चसू. २७.२४१ )
**युक्त**-वि., निपुणः ( सुसू. ३४.२४ )
**( युक्ता )**-स्त्री., वनस्पति० रास्ना ( असंसू. १५.४९ )
**-मात्र**-वि., योग्यप्रमाणम् ( सुसू. ३४.२२-२३ )
**-रथ**-पु., निरूहबस्ति०, रथेषु युक्तेषु हस्त्यश्वे कल्पिते वा यो बस्तिर्दातुं शक्यते स युक्तरथो बस्तिः (सुचि. ३८.११५) तत्रैरण्डमूलक्वाथमधुतैलसैन्धव-वचापिप्पलीफलानि द्रव्याणि ( सुचि. ३८.११५ )
**-रसा**-स्त्री., वनस्पति० रास्ना (ध.१.२७०)
**-सेन**-वि., युक्ता सज्जा सेना यस्य सः (सुसू. ३४.३)
**-सेनीय**-वि., युक्तसेनमधिकृत्य कृतोऽध्यायसंज्ञाविशेषः ( सुसू. ३४.१ )
**-स्नेह**-वि., अल्पस्नेहः ( ड. सुचि. ३७.५६ )
**युक्तार्थ**-पु., युक्तः प्रमाणोपपन्नः अर्थः (सुउ.१.७)
**युक्ति**-स्त्री., तन्त्रयुक्तिः ( सुउ. १.७ )
प्रमाण० ( चसू. ११.२५ ) बहुकारणयोगजभावस्य त्रिकालसाधकं ज्ञानम् ( चसू. ११.७ )
योजना ( चचि. २४.६९ )
अविनाभावरूपः सम्बन्धः ( चवि. ४.४ )
योगः ( चसू. ५.७ )
उपायः ( चसू. २६.१२ )
**-ज्ञ**-वि., युक्तिं योगं जानाति इति योगज्ञः ( चचि. ३.२५४ )
**-दर्शन**-न., उपपत्तिदर्शनम् ( चवि. ८.३ )
**-भृष्ट**-वि., ईषद्भृष्टम् ( चसू. २७.३१० )
**-युक्त**-पु., वनस्पति० तुरुष्कः (ध.३.२३)
**-विशेष**-पु., योजनाविशेषः ( सुसू. ४१.५ )
**-व्यपाश्रय**-वि., युक्तिर्योजना योगो वा एव व्यपाश्रयः यस्य तद् ( चचि. ८.८७ )
**युग**-न., पञ्चसंवत्सरात्मकः कालः ( सुसू. ६.९ ) कृतत्रेताद्वापरकलिनामानः क्रमेण सत्त्वरजस्तमस्स्वभावाश्चत्वारः कालाः ( काशा. )
ऋद्धिः वनस्पति० ( ध. १.१४५ )
**-( युग )-षट्क**-न., आदियुगं देवयुगं कृतयुगं त्रेतायुगं द्वापरयुगं कलियुगं चेति षड्युगानि, तत्र युगभेदेन शरीरस्वरूपभेदः-कृतयुगे नारायणं नाम देहिनां संहननं शरीरमुत्पद्यते। तस्य घनं निष्कपालं शिरोऽस्थीनि च सत्वासपदान्याकृतयो वज्रगरीयस्यः, हृदि चास्य महाशिरा दशैव, त्वगस्य शिरश्चाभेद्यमच्छिद्यं सर्वतोऽस्य शुक्रं, योजनं चोत्सेधः सप्तरात्रं चास्य गर्भवासः, सद्योजातस्य चास्य सर्वकर्माणि शक्यानि, न चास्य क्षुत्पिपासाश्रमग्लानिशोकभयेर्ष्याऽधर्मचिन्ताव्याधिजरा बाधन्ते, नच स्तन्यवृत्तिर्भवति, धर्मज्ञानविज्ञानतपस्स्थितियुक्तयश्च भवन्ति। तस्य पलितोपमार्धमायुरुत्कृष्टमाहुः। अथ त्रेतायामर्धनारायणं नाम देहिनां शरीरमुत्पद्यते। तस्यैकास्थिप्रायं शरीरमाकुञ्चनप्रसारणवर्ज्यं गर्भवासोऽष्टमासिकः स्तन्यजीविका च द्वे शिरःकपाले पार्श्वयोरेकैकः संधिरुरसि च, त्र्यस्थि पृष्ठं, कोष्ठस्य सिरा विंशतिः, शुक्रं च पलितोपम (?) चतुर्भागमायुरुत्कृष्टं पूर्वोक्तार्धगुणावसर्पणमिति। अथ द्वापरे कौशिकसंहननं शरीरमुत्पद्यते केशमात्राणुसुषिरास्थि अतिक्षिप्तसंधिर्महाहृस्तिबलः सिरानुवेष्टितगात्रं गात्रसन्धिष्वस्य शुक्रं पलितोपमा (?)

ष्टभागमायुरुत्कृष्टं पूर्वाचार्धगुणावसर्पणमिति। अथ कलियुगे प्रज्ञप्तिपिशितं संहननं शरीरमुत्पद्यते। पृथग्दन्तजन्म दशमासं गर्भवासः संवत्सरादूर्ध्वं प्रतितिष्ठति वाचं च विसृजति व्याध्याबाधानां बाहुल्यं च ( काशा. )

**युगन्धरा**–स्त्री., वनस्पति० जूर्णा ( ध. ६.१०८ )

**युगपत्**–अव्य० एककालम् ( सुनि. १.२१ )

**युगलाक्ष**–पु., वनस्पति० बर्बुरः ( रापरि. ८.१२ )

**युग्म**–वि., समसंख्याकम् ( चशा. ८.५ )

पर्वसंधिः ( चसि. ३.२९ )

युगलम् ( सुशा. ३.३४ )

–**पत्र**–पु., वनस्पति० कोविदारः ( रा. १०.२९४ )

–**फला**–स्त्री., वनस्पति० इन्दीवरी ( रापरि. ३२७ )

वृश्चिकाली ( रापरि. ९.९ )

–**शुक्र**–न., नेत्रकृष्णभागगतं सव्रणं शुक्रयुगलम् ( सुउ. ५.५ )

**युवति**–स्त्री., वनस्पति० नवमालिका ( चचि. १.५८ )

**युवतीष्टा**–स्त्री., वनस्पति० सुवर्णयूथा ( रा. १०.१५१ )

**युवानपिडका**–स्त्री., क्षुद्ररोगः यूनां मुखे भवाः कफमारुतरक्तजाः पिडका मुखदूषिकाः शाल्मली-कण्टका युवानपिडका चेति ख्याताः ( मानि. )

**यूक**–पु., कीट० ( चइ. २.२१ ) केशकीटः स्वेदजः ( सुचि. २७.८ ) बाह्यकृमि० ( असंनि. १४ ) बहिर्मलजः ( चसू. १९.४-९ ) अणुस्तिलाकृतिर्बहु-पादयुक्तः–कृष्णः शुक्लो वा, तस्य स्थानं केशश्मश्रु-लोमपक्ष्मवासांसि ( चचि. ७.१० )

मान० षड् लिक्षाः एका यूका ( र. ११.१ )

**यूथिका**–स्त्री., वनस्पति० पुष्पलता० ( ध. ५.१४८ )

गुणाः–मधुरा ( कषाया ) ( असंसू. ७ ) शीता सुगन्धिः पित्तघ्नी शर्करापित्तदाहतृषात्वग्दोषघ्नी च ( ध. ५.१४८ )

हिं.—जाति.

म.—चमेली.

गु.— चमेली.

बं.—चमेली.

त.—मल्लिगइ.

**यूप**–न., वनस्पति० तूलम् ( ध. ५.६४ )

–**द्रुम**–पु., वनस्पति० खदिरभेदः ताम्रकण्टकः (रा. ८.३६ ) द्र० 'खदिर'

**यूपक**–पु., न., वनस्पति० तूलम् ( ध. ५.६४ )

**यूष**–पु., धान्यादिक्काथः ( चसू. १३.२२ ) आहारद्रव्य० मुद्गमसूरचणकादिकृतः ( सुउ. ४०.२७ )

गुणाः–रोचनो दीपनो वृष्यः स्वरवर्णबलाग्निकृत् प्रस्वेदजननस्तुष्टिपुष्टिसुखप्रदः (काखिल. ४.१५-१७)

भेदाः–मुद्गयूषो विरसिकायूषो दाडिमयूषश्चि-त्रकयूष आमलकयूषः पञ्चकोलयूषो धान्ययूषः कुलत्थयूषः फलयूषः पुष्पपत्रयूषो वल्कयूषः पल्लवयूषो महायूषो रास्नायूषश्चाङ्गेरीयूषो मूलक-यूषः पुनर्नवायूषोऽतिबलायूषो गुडकाम्बलिकायूष-स्त्रिकटुयूषो लशुनयूषो वास्तुकयूषश्च ( काखिल. ४.१९-२३ )

**योग**–पु., सम्यक्प्रवृत्तिः ( चसि. ६.३१ )

संबन्धः ( चसू. १.५४ )

योजना युक्तिः ( चसू. २५.४० )

तन्त्रयुक्ति० योगो नाम योजना, व्यस्तानां पदाना-मेकीकरणम् ( चसि. १२.४१ ) येन वाक्यं युज्यते स योगः ( सुउ. ६५.९ )

प्रयोगः ( चसू. १.८७ )

विषयव्यावृत्तस्य मनस आत्मन्येव समाधानमव-स्थितिर्वा ( चशा. ५.१७ )

औषधसमूहः ( सुचि. ६.१३ )

संयोगः ( अहसू. ६.३२ )

–**क्षेम**–पु., अलब्धलाभलब्धपरिपालनपूर्वकं जीवित-निर्वाहः ( चवि. ३.३६ )

–**ज**–पु., वनस्पति० अगरु ( ध. ३.२५ )

–**धर**–वि., बुद्ध्यादीनां योगं मेलकं धारयति, यद्वा बुद्ध्यादियोगस्य धारक इति ( चशा. १.३५ )

–**बस्ति**–पु., बस्ति० त्रयो निरूहास्त्रीणि चानुवासनानि तथा चाद्यन्तयोर्द्वौ स्नेहबस्ती इत्येवम् अष्टौ बस्तयो योग इत्युच्यते ( चसि. १.४९ )

–**मूषा**–स्त्री., भस्मीकृतकोकिलतुषसंयुक्ता कृष्णामृत्ति-का वल्मीकमृत्तिका विविधं बिडं चेत्येतेषां संयो-गाज्जाता विविधबिडेन च लिप्ता मूषा ( र. १०.११-१२ )

–**रङ्ग**–पु., वनस्पति० नारङ्गः ( रा. ११.२४ )

–**राज**–पु., कल्प० पाण्डुरोगे उपयुक्तः, त्रिफलाया-स्त्रयो भागास्त्रिकटुकस्य च त्रयो भागा विडङ्गचित्रक-मूलस्य भागैकः शिलाजतुरूप्यमलानां पञ्चभागाः माक्षिकलौहस्य च पञ्चभागाः, अष्टौ भागाः सिता-याश्चेत्येतत् सर्वं माक्षिकेणाऽऽप्लुत्याऽऽयसे भाजने स्थापयित्वोदुम्बरसमां मात्रां सेवेत, तत्र काक-माचीकुलत्थकपोतकानि वर्ज्यानि, इदं सर्वरोगहरं श्रेष्ठं रसायनम्। तथाऽयं कल्पविशेषः पाण्डुरोगविष-

कासयक्ष्मविषमज्वरकुष्ठाजीर्णमेहशोषश्वासारोचकापस्मारकामलाशोंनाशनश्च ( चचि. १६.८०-८६ )

**-राजगुग्गुलु**-पु., भैषज्य० पिप्पलीपिप्पलीमूलचव्यचित्रकशुण्ठीपाठाविडङ्गेन्द्रयवहिङ्गुभारङ्गीवचासर्षपातिविषाजीरकरेणुककृष्णजीरकगजपिप्पलीकटुकाजमोदामूर्वाभ्यः समभागिकाभ्यः चूर्णिताभ्यो द्विगुणां त्रिफलामादाय तत्र च शुद्धगुग्गुलुं प्रक्षिप्य यथावन्मर्दयित्वा तद्वटिकाः कुर्यात्। अनुपानं-मधु; समयः-प्रातः; फलम्-अर्शोवातगुल्मपाण्डुरोचकनाभिशूलोदावर्तप्रमेहवातरक्तकुष्ठक्षयाऽपस्मारहृद्रोगग्रहणीश्वासकासभगन्दराग्निमान्द्यवीर्ययोनिदोषाणां शमनम्, निष्परीहारं पानभोजनयोः तत्कृतान् सतताभ्यासाद्वलीपलितं नश्यति वर्षशतत्रयं आयुर्जायते क्षीरघृतपरिप्लुताहारश्चास्य विशेषेण भक्षणीयः ( र. २१.७४-८३ )

**-वाह**- वि., एतादृशः वायुः, येन स योगाद्योगिनो गुणं वहतीति; तेजसा युक्तो दाहकृत्, सोमयुक्तः चेत् शीतकर इति ( चचि. ३.३८-३९ )

**-वाहिन्**-वि., यत् संयुक्तस्य द्रव्यस्य रसं वहति, तत् ( चसू. २७.२४९ ) यादृग्द्रव्येण संयुज्यते तादृग्द्रव्यस्य कर्म करोतीति, योगवाहिषु श्रेष्ठं मधु ( सुसू. ४५.१४२ )

**योगर**-पु., खनिज० सूक्ष्मताराणि ( र. ५.८२ )

**योगाञ्जन**-न., अञ्जन० कासीससामुद्ररसाञ्जनजातिकोरकादिभिः कृतम् ( सुउ. ११.१५-१६ )

**योगावह**-वि., योग्यम् ( चनि. २.१४ )

**योगिन्**-पु., वनस्पति० नारङ्गः ( ध.५.२० )
रसरत्नमुच्चयकर्त्रा सिंहगुप्तसूनुना प्रमाणत्वेन स्वीकृतः तन्त्रकर्ता ( र. १.५-९ )
योगः समाधिः स यस्य विद्यते सः ( सुसू. ३.१७)

**-दण्ड**-पु., वनस्पति० वेत्रः ( रा.परि. ७.१४ )

**योगीश्वरी**-स्त्री., वनस्पति० वन्ध्यकर्कोटकी ( ध. १.१८६ )

**योगीष्ट**-न., खनिज० सीसकम् ( ध. ६.२१ )

**योग्या**-स्त्री., वनस्पति० ऋद्धिः ( ध. १,१४५ )
सम्यक्कर्माभ्यासः ( सुसू. ९.१ )

**-सूत्रीय**-वि., योग्यासूत्रमधिकृत्य कृतोऽध्यायसंज्ञाविशेषः ( सुसू. ९.१ )

**योग्यार्ह**-वि., यस्य कर्मणो यस्मिन् द्रव्ये साम्यं भवति तत्कर्माभ्यासयोग्यम् ( सुसू. ९.५ )

**योजन**-न., चत्वारः क्रोशाः ( सुचि. ३०.३५ )

**( योजना )**-स्त्री., प्रयोगः योजनम् ( अहसू. ४.७ )

**-वल्ली**-स्त्री., वनस्पति० मंजिष्ठा (ध. १.१७)

**-सिद्धि**-स्त्री., योजनायां सत्यां सिद्धिः ( चइ. १२.८२ )

**योज्य**-न., खनिज० पुष्पकासीसम् ( ध. ३.१२५ )

**योनला**-स्त्री., वनस्पति० जूर्णा ( ध.६. १०८ )

**योनि**-स्त्री., कारणम् ( चचि. २४.६ ) हेतुः (सुसू. १५.८) उत्पत्तिस्थानम् ( सुनि. १०.२१-२२ ) आधारकारणम् ( चसू. २६.९ ) अभिव्यक्तिकारणम् ( चसू. १२.८ ) तत्तज्जन्मग्रहणोचिता जातिः ( चशा. १.६ ) जन्म, चेतनशरीराणां जातिभेदः ( चसू. ११.११ )
शारीर० शंखनाभ्याकृतिरावर्तत्रययुक्ता (सुशा.५.४३) अपत्यपथः(चचि. ३०.१५) गर्भाशयः(सुसू.११.२८) योनिमुखम् ( सुशा. ५.४५ ) अपत्यपथे चतस्रः पेश्यस्तासां प्रसृतेऽभ्यन्तरतो द्वे मुखाश्रिते बाह्ये च वृत्ते द्वे गर्भच्छिद्रसंश्रितास्तिस्रः शुक्रार्तवप्रवेशिन्यस्तिस्रः एव पित्तकफाशययोर्मध्ये गर्भशय्या यत्र गर्भस्तिष्ठति (सुशा. ५.३९) 'पुंसां पेश्यः पुरस्तात्राः प्रोक्ता लक्षणमुष्कजाः । स्त्रीणामावृत्य तिष्ठन्ति फलमन्तर्गतं हि ताः ॥' ( सुशा. ५.४१)

**-कन्द**-पु., रोग० यो यौनौ पूयशोणितसंकाशं निकुचाकृति. संनिभं कन्दं जनयति. स एव योनिकन्दः ( मा. )

**-गद**-पु., स्त्रीष्वपत्यमार्गे जातो रोगः ( चचि. ३०.३७ )

**-गुल्म**-पु., रोग० योनिस्थो गुल्मः ( काखिल. १०.१४६ )

**-च्छेद**-पु., लक्षण० योनिविदारणम् तस्य च्छेदाद्रुजा प्रादुर्भवति ( सुचि. ७.३६ )

**-दोष**-पु., रोग० योनिरोगः ( चचि. ३०.९५ )

**-पुट**-न., अपत्यपथः ( असंउ. १ )

**-प्रदोष**-पु., रोग० योनिरोगः ( चसू. १३.९५ )

**-प्रस्रवण**-न., लक्षण० योनिस्रावः ( काजातिसूत्रीय )

**-भ्रंश**-पु., योनिरोगः योनिबहिर्गमनम् (सुनि. ८.६)

**-रोग**-पु., रोग० योनिसहितगर्भाशयस्य विंशतिसंख्याकेष्वन्यतमो रोगः ( र. २.१७५ )

**-वात**-पु.,योनिरोगःयोनिस्थवातदोषः(चचि.३०.५४)

**-विरेचन**-न., उत्तरबस्तिः ( चचि. ५.१७४ )

**-विशोधन**-वि., योनेर्विशेषेण शोधनं नामशुद्धिकरणम् ( चसू. १३.१५ )

**–व्यापद्**–स्त्री., योनिरोगः ( चचि. ३०.७ ) तत्र चरके विंशतिर्योनिव्यापदः ताश्च–वातजा पित्तजा कफजा त्रिदोषजाऽसृग्जाऽरजस्काऽचरणाऽतिचरणा प्राक्चरणोपप्लुतोदावर्तिनी कर्णिनी पुत्रघ्न्यन्तर्मुखी सूचीमुखी शुष्का वामिनी षण्डी महायोनिश्च ( चचि. ३० ) सुश्रुतेऽपि विंशतिः, उदावर्ता वन्ध्या विप्लुता परिप्लुता वातला रुधिरक्षरा वामिनी स्रंसिनी पुत्रघ्नी पित्तलाऽत्यानन्दा कर्णिन्यचरणाऽतिचरणा श्लैष्मिका षण्डी फलिनी महती सूचिवक्त्रा सर्वजा च ( सुउ. ३८.६-९ ) संग्रहे लोहितक्षयाऽधिका ( असंउ. ३८ ) तत्र वातजायां योनौ तोदशूलस्तम्भकार्कश्यानि पिपीलिकाविसर्पणमिव वेदना, सशब्दरुक् फेनतनुरूक्षार्तवम् ( चचि. ३०.९-११ ) पित्तजायां योनौ दाहपाकज्वरोष्णनीलपीतार्तवाभृशोष्णकुणपस्रावाः ( चचि. ३०.१२ ) कफजा योनिः पिच्छिला शीता कण्डूग्रस्ताऽल्पवेदना पाण्डुवर्णा पाण्डुपिच्छिलार्तववाहिनी च ( चचि. ३०.१३,१४ )

**–व्यापच्चिकित्सित**–न., अध्यायसंज्ञा० ( चचि. ३०.१ )

**–व्यापत्प्रतिषेध**–पु., अध्याय० ( सुउ. ३८.१ )

**–व्रण**–पु., लक्षण० योनौ त्वग्विदरणम् (असंसू. ३४)

**–व्रणेक्षणयन्त्र**–न., यन्त्र० इदं मध्यभागे सुषिरं दैर्घ्येण षोडशाङ्गुलं तथा मुद्रिकया ऊर्मिकयाऽसंचारिण्या युक्तं, तत्र चत्वारि पत्राणि, चतस्रः शलाका वर्तन्ते, तस्य मुखं मुकुलसदृशम्; इदम् मूले आक्रान्तं मूलशलाकाक्रमणान्मुखे प्रसरेत् ( अहृसू. २५.२२ )

**–शूल**–पु., लक्षण० योनिवेदना ( सुनि.८.३ )

**–शोष**–पु., योनेः शुष्कता ( चसि. २.१६ )

**–संवरण**–न., योनिरोगः, योनिसंकोचः (सुनि. ८.६)

**–संवृति**–स्त्री., लक्षण० योनिसंकोचः (सुसू. ३३.१३)

**–स्तम्भ**–पु., लक्षण० योनेः स्तम्भः ( चसि. २.१६ )

**–स्रवण**–न., लक्षण० योनिस्रावः ( असंशा. ४.११ )

**योषा**–स्त्री., नारी ( र. ११.१०५ )

**योषित्**–स्त्री., वनिता ( सुउ. १०.५ )

**–क्षीर**–न., स्त्रीस्तन्यम् ( सुउ. १०.५ )

**–प्रसङ्ग**–पु., योषिता सह प्रसंगः, व्यवायः ( सुचि. २६.४ )

**( योषिद् ) विविक्तरति**–वि., योषित्सु विविक्ते एकान्ते च रतिर्यस्य सः ( सुउ. ६२.१० )



**यौगिक**–वि., युक्तिं प्रमाणीकृत्य कृतम्, औषधकल्पनादिषूपयुक्तम् ( चवि. ८.१४९ )
युक्तम् ( अवि. ८.४५ )
पारदे नागस्य वङ्गस्य वा संयोगाज्जायमानो (दोषः) ( र. ११.१७-१८ )

**यौवन**–न., आत्रिंशद्वर्षं वयोवस्थाविशेषः (सुसू.३५.२९)

**–पिडका**–स्त्री., क्षुद्ररोग० मुखदूषिका पिडका ( सुनि. १३.३ )

## र

**रकसा**–स्त्री., रोग० क्षुद्ररोगः, शरीरे कण्डून्विता संस्रावहीना या पिडका, सैव रकसा ( सुनि. ५.१५)

**रक्त**–वि., रक्तवर्णयुक्तम् ( सुसू. ३८.५२ )
पु., वर्ण० ताम्रवर्णः ( सुसू. ३२.३ )
न., रजः (चचि. १५.१७) आर्तवम् (सुसू. १४.६)
न., सप्तधातुष्वेकः ( अहृसू. १.१३ ) दशप्राणायतनेष्वेकम् ( चसू. २९.३ ) आगमे रक्तनामानि शोणितलोहितासृग्रुधिरक्षतजादीनि; स्थानमस्य यकृत्प्लीहानौ, तत्रस्थमेव शेषाणां शोणितस्थानानामनुग्रहं करोति ( सुसू. २१.१६ ) रक्तोत्पत्तिः–द्वितीया रक्तधरा कलामांसस्याभ्यन्तरतस्तस्यां शोणितं विशेषतश्च सिरासु यकृत्प्लीह्नोश्च भवति ( सुशा. ४.१० ) तत्राग्निरेव रसं रक्ततां नयति ( चचि. १५.२८ ) ‘ स्वस्थानस्थस्य कायाग्नेरंशा धातुषु संश्रिताः तेषां सादातिदीप्तिभ्यां धातुवृद्धिक्षयोद्भवः ॥ ’ ( अहृसू. ११.१४; चचि.१५.३८-३९ ) उत्पत्तिकालः रसः किलैकाहेनैव संपद्यते तदनन्तरं ये–षड् धातवस्ते प्रत्येकं पञ्चभिरहोभिः संपद्यन्ते ( सुसू. १४.१५; ड ) स्वभावः–तत्राम्बुशारीरमहासारभूतं रसाख्यमविकृतमविकृतेन तेजसा रञ्जितमिन्द्रगोपाकारं च शशशोणितगुञ्जाफलालक्तकपद्मसुवर्णवर्णं धौतं च विरज्यमानं मधुरमीषल्लवणं च स्निग्धमशीतोष्णं गुरु पित्तैकचयकोपोपशमनं सौम्याग्नेयं प्रकृत्या रक्तमाहुस्तदा दूष्यम्। दोषमिति केचित्। उभयात्मकमित्यन्ये ( असंसू. ३६.६ ) द्रवरूपो धातुः (चचि. १५.३६) पाञ्चभौतिकगुणाः–विस्रता द्रवता रागः स्पन्दनं लघुता च ( सुसू. १४.९ ) अनुष्णशीतं मधुरं स्निग्धं वर्णतो रक्तं गुरु विस्रं च ( सुसू. २१.१७ ) रक्तसारतायां स्निग्धताम्रनखनयनतालुजिह्वौष्ठपाणिपादतलम् ( सुसू. ३५.१६ )

कर्ण...ललाटमेहनं स्निग्धरक्तवर्णं श्रीमद्भ्राजिष्णु रक्तसाराणाम्। सा सारता सुखमुद्धतां मेधां मनस्वित्वं सौकुमार्यं अनतिबलमक्लेशसहिष्णुत्वमुष्णासहिष्णुत्वमाचष्टे (चवि. ८.१०४) प्रमाणम्–अष्टावञ्जलयः (चशा. ७.१५) कर्म–वर्णप्रसादो मांसपुष्टिर्जीवनं धातूनां पूरणं, असंशयं स्पर्शज्ञानं च (सुशा. ७.१४; सुसू. १५.५(१)) यकृत्प्लीहानौ शोणितजौ, शोणितफेनप्रभवः फुफ्फुसः शोणितकिट्टप्रभव उण्डुकः (सुशा. ४.२५) अवयवजनकत्वं–यकृत्प्लीहानौशोणितजौरक्तफेनप्रभवः फुफ्फुसः रक्तकिट्टप्रभावात् उण्डुकः तथैव च आंत्रं, गुदं, बस्ति, जिव्हा, वृक्कौ, वृषणौ हृदयं चापि रक्तात् तथैवान्येषां धातुघटकानां सारान् भवति (सुसू. ४२६.३१) उपधातवः–असृजः कण्डराः सिराः (चचि.१५.१७) मलः–पित्तम् (चचि. १५.१८; सुसू. ४६.५२९) प्रशस्तिः–रुधिरं देहस्य मूलं तेनैव स धार्यते, तस्माद्यत्नेन तत्संरक्ष्यम् (सुसू. १४.४४) केचिद्रक्तं चतुर्थं दोषं मन्यन्ते (अरु. अहृसू. १.६,) रक्तवृद्धिलक्षणानि– विसर्पप्लीहावृद्धिविद्रधिकुष्ठवातरक्तगुल्मोपकुशकामलाव्यङ्गाग्निनाशसंमोहरक्तत्वङ्नेत्रमूत्रताः (अहृसू. ११.८-९) रक्तक्षयलक्षणानि–अम्लशिशिरप्रीतिः सिराशैथिल्यं रूक्षता च (अहृसू. ११.१७) रक्तप्रकोपहेतुः–पित्तप्रकोपणैरेव चाभीक्ष्णं द्रवस्निग्धगुरुभिराहारैर्दिवास्वप्नक्रोधानलातपश्रमाभिघाताजीर्णविरुद्धाध्यशनादिभिश्च (सुसू. २१.२५) रक्तरोगाः–कुष्ठविसर्पपिडकामशकनीलिकातिलकालकन्यच्छव्यङ्गेन्द्रलुप्तप्लीहविद्रधिगुल्मवातशोणितार्शोऽर्बुदाङ्गमर्दासृग्दररक्तपित्तप्रभृतयो रक्तदोषजाः (सुसू. २४.९) दुष्टरक्तलक्षणम्–वातादरुणाभं विशदं फेनिलं तनु च, पित्तात् पीतासितं रक्तं औष्ण्यवशात् चिरेण स्त्यानं, कफादीषत्पाण्डुपिच्छिलं तन्तुमद् घनम्, संसर्गात् त्रिलिङ्गं सांनिपातिकम् (चसू. २४.२०-२१) मृगादिप्राणिनां रक्तं भेषजत्वेनोपयुज्यते (अहृसू. २७.४३; असंउ. ३९)

न., खनिज० हिङ्गुलम् (रा. १३.४७)
सिन्दूरम् (रा. १२.१६०)
वनस्पति० मञ्जिष्ठा (र.२९.१३२)
रक्तशिग्रुः (र. २९.१३२)
रक्तचन्दन (र. २९.१३२)
पद्मकः (रा.२२.१४९)
कुङ्कुमम् (ध.३.१२)
अपामार्गः (ध.१.२६३)
व्रीहिः (रा. १६.७९)
हिङ्गुलः (रापरि. ८.७०)
भैषज्य० प्रवालम् (ध. ६.६४)

(रक्ता)–स्त्री., वनस्पति० मञ्जिष्ठा (सुचि.३७.३१)
मांसरोहिणी (ध. ४.९४)
गुञ्जा (रा. ३.४७)
उष्ट्रकाण्डी (रापरि. १०.४३)
भैषज्य० लाक्षा (ध. ३.८२)
लूताभेदः, वायव्यलूता; दंशलक्षणानि–पाण्डुपिडकाज्वरश्वेतातिसारश्वासदाहसरक्तक्लेदाः (असंउ. ४५)
शारीर० कर्णगतसिरा (असंउ. १)

–कन्द– वनस्पति० पलाण्डुभेदः राजपलाण्डुः (रा. ७.१०८) द्र० 'पलाण्डु'
रक्तपिण्डालुः (रापरि. ७.२६)

–कर्मन्–न., सुवर्णोत्पादकं पारदादिरञ्जकं कर्म (र. २.१०)

–काण्डा–स्त्री., वनस्पति० पुनर्नवा (रा. ५.४०६)

–काष्ठ–न., वनस्पति० चन्दनभेदः, कुचन्दनम् (ध. ३.६) द्र० 'चंदन'

–कुसुम–पु., वनस्पति० पारिभद्रः (रापरि. ८.१०)
धन्वनः (रापरि. ९.१९)

–केसर–पु., वनस्पति० पारिभद्रः (रापरि. ८.१०)

–कोठ–पु. चत्वारिंशत्पित्तविकारेष्वेकः, त्वचि दद्रुवद्रक्तमण्डलोत्पत्तिः (चसू. २०.१४)

–क्षय–पु., रक्तस्य प्रमाणहानिः (सुनि. ११.१७)

–क्षीण–वि., क्षीणरक्तः (ड. सुसू. १५.२९-३१)

–ख्यातक–पु., वनस्पति० अपामार्गः (ध.१.२६३)

–गन्ध–पु., रक्तधातुनिष्ठो विस्रो गन्धः, तेन मूर्च्छा संजायते (सुउ. ४६.९-१०)

–गन्धक–पु., निर्यास० बोलम् (रा. ६.११६)

–गुल्म–पु., रोग० असौ स्त्रिया एव भवति। या ऋतुमती नवप्रसूता योनिरोगिणी वा वातलानि यदाऽऽसेवते तदाऽस्या वायुः प्रकुपितः सन् योन्या मुखमनुप्रविश्यार्तवमुपरुणद्धि। तदुपरुध्यमानं मासे मासे कुक्षिमभिनिवर्तयति गर्भलिङ्गानि च तन्द्राऽङ्गसाददौर्हृदस्तन्यदर्शनादीनि चाभिनिर्वर्तयति। वायुसंसर्गात्पुनः पित्तैकप्रकोपकतया वातपित्तगुल्म-

रूपाणि क्रमाद्गुल्मस्तम्भदाहानीसारादीनि गर्भाशये च सुतरां शूलं योन्यां दौर्गन्ध्यमास्रावं च करोति। गुल्मसर्वाङ्गैर्गर्भ इव न स्फुरति पिण्डीभूत एव चिरेण सशूलं स्पन्दते। गुल्म एव वर्धते न कुक्षिः (असंनि. ११) रक्तगुल्मगर्भयोः समानलक्षणेऽपि भेदाः– (१) गर्भोऽङ्गप्रत्यङ्गवान् विचेष्टते रक्तगुल्मस्तु लोष्टवद्विचेष्टते (२) गर्भो व्याविद्ध परिवर्तते, गुल्मोऽव्याविद्धं विवर्तते (३) गर्भोऽहन्यहनि मासि मासि च तां तामवस्थां प्रतिपद्यते। गुल्मस्तु मन्दं मन्दं विवर्धते। (४) गर्भिणी अनिमित्तं दह्यते ज्वर्यते वा। गुल्मिनी दह्यते ज्वर्यते च (काखिल. ९.५६-६१) उपद्रवाः– ज्वरारुचिश्वासकासशोषकार्श्यारतिशोफाः (काखिल. ९.७४) चिकित्सा– 'मासे व्यतीते दशमे चिकित्स्यः' (चचि. ५.१९) कालपरिणामतो रक्तगुल्मस्याऽऽदशमान्मासात् परं परिपाको भवति। परिपाकतो नातिदुरुपक्रमोऽयं व्याधिः (काखिल. ९.५३-५४) शस्त्रसाध्योऽयं व्याधिः (सुउ. ४२.२१)

–ग्रन्थि–पु., रोग० बस्तिगतविकारस्य प्रकारः, अश्मरीसमशूलत्वं लक्षणं भवति (चसि. ९.४२)

–चन्दन–न., वनस्पति० चन्दनस्य प्रकारः, गुणाः– तिक्तं शीतं रक्तोघ्नं पित्तकफघ्नं रक्तोद्रेकचक्षुर्दोषरक्तदोषकासज्वरभ्रान्तिजन्तुकृमितृष्णाघ्नं च (ध. ३.४) नारीपयःपिष्टं रक्तचन्दनं हिक्कां शमयेत् नस्यतो दत्तम् (सुउ. ५०.१७-१८)

हिं.—रक्तचन्दन.

**म.—रक्तचन्दन.**

बं.—रक्तचन्दन.

गु.—रतनीली.

ता.—शेनचन्दनम्.

फा.—सन्दलेसुर्ख.

–चित्र–पु., वनस्पति० चित्रकः, कालः (रा. ६.१२७)

–चूर्णक–पु., वनस्पति० कम्पिल्लकः (ध. ३.१३८)

–च्छेद–पु., उपक्रम० रक्तमोक्षः (चसि. २.९)

–जम्बीर–न., वनस्पति० पक्वजम्बीरम् (र. ११.११४)

–तृणा–स्त्री., वनस्पति० गोमूत्रिका (रापरि. ८.४८)

–दला–स्त्री., वनस्पति० नलिका (रा. १२.८८)

–धरा–स्त्री., शारीर० द्वितीया कला, रक्तधारिणी; तस्याः स्थानं मांसस्याभ्यन्तरतस्तस्यां शोणितं विशेषतश्च शिरासु यकृत्प्लीह्नोश्च भवति (सुशा. ४.१०)

–धातु–पु., भैषज्य० गैरिकम् (ध. ३.१६७) खनिज० ताम्रम् (ध. ६.९)

–धातुक–न., खनिज० ताम्रम् (ध. ६.९)

–नाल–पु., वनस्पति० जीवन्तः (रापरि. ७.८९)

–पत्र–पु., वनस्पति० फोण्डालुः (रापरि. ७.३०)

–पत्रिका–पु., वनस्पति० नाकुली (रा. ७.१५२) पुनर्नवाभेदः क्रूरः (रा. ५.४०६,२४)

–पद्म–न., वनस्पति० कमलभेदः, गुणाः–तिक्तं मधुरं कटु (रा.) शीतं वृष्यं सन्तर्पणं कफपित्तघ्नं (वातघ्नं) (रा.) सन्तापरक्तविकारघ्नं च (ध. ४.१५२)

हिं.—निलोफर, छोटा कन्वल, कृष्ण कमल.

बं.—सुलक, रक्तोत्पल.

**म.—लाल कमल.**

गु.—निलोपल.

ता.—वेलम्बल, इन्दिरावचम्, अल्लितमरै.

–पल्लवक–पु., वनस्पति० अशोकः (रा. १०.२७१)

–पाक–पु., लक्षण० पक्वं रक्तम् (अहसू. २९.८-१०)

–पादा–स्त्री., सौम्यलताभेदः तस्या दंशलक्षणानिर्देशः आपाण्डुपिटकः शोफयुक्तश्च भवति रक्तस्रावश्च (असंउ. ४४) इयं श्लेष्मविकारदाऽण्डजा च भवति (असंउ. ४४) द्र० 'लूता'

–पादी–स्त्री., वनस्पति० लज्जालुः (ध. ४.१०९)

–पान–न., रुधिरप्राशनम् (अहसू. २७.४३)

–पालेवत–न., वनस्पति० पारेवतम् (ध. ५.६६)

–पिण्डक–पु., वनस्पति० रक्तपिण्डालुः (रापरि. ७.२६)

–पिण्डालु–पु., वनस्पति० गुणाः– मधुराम्लो गुरुर्वृष्यः शीतो बल्यः पित्तघ्नः श्रमदाहघ्नः (रापरि. ७.२६)

हिं.—रताल, पिण्डालु कोंदु, शकरकन्दी.

**म.—लाल रताळे, पांढरे रताळे.**

गु.—रताल, शकरकन्द, श्वेताल.

बं.—लालपिण्डालु, गोलआलु, चुवडिआलु.

त.—यामस्कोलं.

फा.—जरदाक लाहोरी.

–पित्त–न., रोग० निरुक्तिः–संसर्गाल्लोहितप्रदूषणाल्लोहितगन्धवर्णानुविधानाच्च पित्तं लोहितपित्तमित्याचक्षते (चनि. २.५) उत्पत्तिकथा–रक्तपित्तप्रकोपस्तु खलु पुरा दक्षयज्ञोध्वंसे रुद्रकोपामर्षाग्निना प्राणिनां परिगतशरीरप्राणानामभवज्ज्वरमनु (चनि. २.१०) संप्राप्तिः–स्वहेतुभिः प्रकुपितं

पित्तं शरीरमनुसर्पद्यदैव यकृत्प्लीहप्रभवाणां लोहितवहानां च स्रोतसां लोहिताभिष्यन्दगुरूणि मुखान्यासाद्य प्रतिरुन्ध्यात् तदैव लोहितं दूषयति (चनि. २.४) तत्रिविधमूर्ध्वगमधोगमुभयमार्गगं च (चनि. २.८) पूर्वरूपाणि–अनन्नाभिलाषो, भुक्तस्य विदाहः, शुक्ताम्लगन्धरसोद्गारश्छर्देरभीक्ष्णमागमनं छर्दितस्य बीभत्सता स्वरभेदो गात्रसदनं परिदाहो मुखाद्धूमागम इव लोहलोहितमत्स्यामगन्धित्वमिव चास्यस्य रक्तहरितहारिद्रत्वमङ्गावयवशकृन्मूत्रस्वेदलालासिङ्घाणकास्यकर्णमलपिडकोलिकापिडकानामङ्गवेदना लोहितनीलपीतश्यावानामर्चिष्मतां च रूपाणां स्वप्ने दर्शनमभीक्ष्णम् (चनि. २.६) लक्षणम्–ऊर्ध्वगरक्तपित्तस्य–बहुश्लेष्मणि शरीरे श्लेष्मसंसर्गादूर्ध्वं प्रतिपद्यमानं कर्णनासिकानेत्रास्येभ्यः प्रच्यवतेऽधोगे तु बहुवाते शरीरे वातसंसर्गादधः प्रतिपद्यमानं मूत्रपुरीषमार्गाभ्यां प्रच्यवते। उभयगे तु बहुश्लेष्मवाते शरीरे श्लेष्मवातसंसर्गाद् द्वावपि मार्गौ प्रतिपद्यते। तौ मार्गौ प्रतिपद्यमानं सर्वेभ्य एव यथोक्तेभ्यः खेभ्यः प्रच्यवते शरीरस्य (चनि. २.८)

उपद्रवाः–दौर्बल्यारोचकाविपाकश्वासकासज्वरातीसारशोफशोषपाण्डुरोगाः स्वरभेदश्च (चनि. २.७) रिष्टलक्षणानि–यत्कृष्णमथवा नीलं शक्रधनुष्प्रभं वा तथा यद्वाससो रञ्जनमतिमात्रं पूतिभृशं सर्वोपद्रवयुक्तबलमांसक्षयसहितं तदसाध्यम् (चनि. २.२३-२६) चिकित्सासूत्रम्–सन्तर्पणोत्थं बलिनो बहुदोषस्य नरस्य रक्तपित्तमूर्ध्वगं विरेकेण साधयेदधोगतं तु वमनेन, अपतर्पणोत्थं रक्तपित्तं दुर्बलस्याल्पदोषस्योर्ध्वगं शमनैरधोगं बृंहणैरुपाचरेदूर्ध्वगे तिक्तकषायकौ रसौ शमनार्थे प्रयुञ्जीत। अधोगे मधुरो रसो बृंहणार्थे देयः (अहृचि. २.५-७)

**–पित्तचिकित्सित**–न., अध्यायसंज्ञा० (चचि. ४.१; अहृचि. २)

**–पित्तनिदान**–न., अध्यायसंज्ञा० (चनि. २; अहृनि. ३)

**–पित्ताङ्कुश**–पु., योग० पारदो हिङ्गुलः कुक्कुटाण्डरसो टङ्कणं गन्धकश्चेति सर्वं समभागं घृतेन परिमर्दयेत्। अनुपानं जीरकक्वाथः। मर्यादादिनत्रयम्। मात्रा–माषः, अयं ग्रहणीरक्तपित्तघ्नः (र. १३.९-१३)

**–पुष्प**–पु., वनस्पति० करवीरः (ध. ४.२)
अपामार्गः (ध. १.२६३)
अगस्त्यः (र. २७.३३)
बन्धूकः (रापरि. १०.३५)
पुंनागः (रापरि. १०.११)
पलाशः (ध. ५.१६१)|

**–(पुष्पा)**–स्त्री., वनस्पति० शाल्मली (ध. ५.१२७)

**–(पुष्पी)**–स्त्री., वनस्पति० आवर्तकः (रा. ३.२९३)
जपा (र. १५.२५-२८)
करुणी (रापरि. १०.२७)
उष्ट्रकाण्डी (रापरि. १०.४३]

**–पुष्पक**–पु., वनस्पति० पर्पटः (रा. ५.६६)
शाल्मली (ध. ५.१२७)

**–(पुष्पिका)**–स्त्री., वनस्पति० विष्णुक्रान्ता (ध. ४.११५)
पुनर्नवाभेदः क्रूरः (रा. ५.४०७) द्र० 'पुनर्नवा'
भूपाटली (रापरि. ५.४३)
पाटला (रा. ९.१५०)

**–पूरक**–न., वनस्पति० वृक्षाम्लम् (ध. २.९५)

**–प्रतिषेध**–पु., अध्याय० (सुउ. ४५)

**–प्रसव**–पु., वनस्पति० कुरुबकः (रा. १०.४१२)
मुचुकुन्दः (रापरि. १०.२५)

**–फल**–पु., वनस्पति० शाल्मली (रा. ८.२१२)
वटः (ध. ५.७६)

**–(फला)**–स्त्री., वनस्पति० बृहतीभेदः बृन्ताकी (रा. ७.१२८) द्र० 'बृहती'
बिम्बी (ध. १.२०२)

**–बिन्दु**–पु., वनस्पति० अपामार्गः (रा.४.३९०)

**–बिन्दुचिताङ्ग**–वि., रक्तबिन्दुव्याप्तशरीरः (बालः) जन्तुकार्दितबालस्य लक्षणम् (कासू. २५.३९)

**–बीज**–पु., वनस्पति० दाडिमः (ध.२.६१)

**–बीजका**–स्त्री., वनस्पति० तरटी (रापरि. ८.३२)

**–भेदन**–न., रक्तस्रावणम् (सुउ. ४२.२०)

**–मण्डल**–न., लक्षण० रक्तवर्णं मण्डलम् (सुचि. ५.४) चत्वारिंशत्पित्तविकारेष्वेकः (चसू. २०.१४)
पु., मण्डलिसर्पः (सुक. ४.३४ (२)

**–(मण्डला)**–स्त्री., कीट० गलगोलिका (सुक. ८.२९)

**–मत्ता**–वि., रक्तपानेन मत्ता (जलौका) (अहृसू. २६.३९)

**–मद**–पु., रोग० रक्तजन्यो मदः (अहृसू.२६.४४)

**-मारिष**-पु., शाक॰ रक्तश्वेतभेदाद्विविधः, गुणाः- मधुरः शीतो विष्टम्भी गुरुः पित्तनुद्विषमाग्निजित् ( र. १८.१३९-४१ )

**-मार्ग**-पु., शारीर॰ रक्तस्य मार्गः, सिरास्रोतोधमन्यादिः ( चचि. २९.३५ )

**-मूलक**-पु., वनस्पति॰ देवसर्षपकः ( रापरि. ९.४२ )

**-मूला**-स्त्री., वनस्पति॰ लज्जालुः ( रा. ५.१६१ )

**-मूली**-स्त्री., वनस्पति॰ समङ्गा ( चसि. १०.३१ )

**-मेह**-पु., रोग॰ प्रमेहः, शोणितजो व्याधिः ( चसू. २४.१२ )

**-मोक्षण**-न., रक्तस्रावविधिः ( चसू. ७.१५ ) उपक्रम॰ ( चसू. २३.८ ) दुष्टरक्तनिर्हरणार्थमुपयुज्यते, तस्य साधनानि सिराव्यधो विषाणमलाबुर्जलौका शस्त्रपदं च; उत्तानं दुष्टरक्तं पदैरवगाढं जलौकोभिरवगाढतरं तुम्बैरवगाढतमं विषाणेन, सार्वाङ्गिकमवगाढतमं सिराव्यधेन च निर्हरेत् ( सुशा. ८.२५ ) तस्य महती मात्रा प्रस्थप्रमाणा प्रस्थश्चात्र सार्धत्रयोदशपलप्रमाणः ( सुक. ५.३१-३२ ड. )

**-यष्टिका**-स्त्री., वनस्पति॰ मञ्जिष्ठा ( ध. १.१७ )

**-यष्टी**-स्त्री., वनस्पति॰ मञ्जिष्ठा ( ध. १.१७ )

**-यावनाल**-पु., वनस्पति॰ यावनालभेदः, तुवरयावनालः ( रा. १६.१७१ )

**-योनि**-स्त्री., योनिरोग॰ असृग्दरः ( चचि. ३०.८६,८७ )

**-रजस्**-न., भैषज्य॰ सुवर्णगैरिकम् ( ध. ३.१७० )

**-राजि**-पु., कीट॰ तस्य गुणाः-वायव्यो वातकोपनो वातविकारकारी ( सुक. ८.५-८ )

**-राजिमत्स्य**-पु., लोहितराजियुक्तो मत्स्यः ( सुक. ३.५ )

**-राजी**-स्त्री., कीट॰ गलगोलिका (सुक. ८.२९)

**-रेणु**-पु., खनिज॰ सिन्दूरम् ( ध. ३.१०१ ) वनस्पति॰ पुंनागः ( रापरि. १०.११ )

**-रैवतक**-न., वनस्पति॰ पारेवतभेदः, महापारेवतम् ( रा. ११.९० ) द्र॰ 'पारेवत'

**-लक्षण**-न., लक्षण॰ शुद्धार्तवलक्षणम् ( सुशा. २.१८ )

**-ला**-स्त्री., वनस्पति॰ काकादनी ( रा. ३.४३ ) मूर्वा (रा. ३.१०)

**-वर्ग**-पु., द्रव्यगण॰ कुसुम्भं खादिरो लाक्षा मञ्जिष्ठारक्तचन्दनं रक्तशिग्रुर्बन्धुजीवः कर्पूरगन्धिनी स्वर्णमाक्षिकं चेति ( र.१०.९१ )

**-वर्त्मक**-पु., पक्षि॰ कुक्कुभभेदः स्थूलकुक्कुभः ( चसू. २७.४७ )

**-वर्षाभू**-स्त्री., वनस्पति॰ पुनर्नवाभेदः, वसुकः ( रा. ५.४०७ ) द्र॰ 'पुनर्नवा'

**-वहस्रोतस्**-न., शारीर॰ रक्तधातुवहस्रोतः रक्तवहे द्वे स्रोतसी, तन्मूलस्थानं यकृत्प्लीहानौ, वहनस्थानं रक्तवाहिन्यश्च धमन्यः, विद्धस्य लक्षणं-श्यावाङ्गता ज्वरो दाहः पाण्डुता शोणितागमनं रक्तनेत्रता च ( सुशा.९.१२ ) दुष्टिहेतुः-विदाह्यन्नपानस्निग्धोष्णद्रवान्नपानातपानलाः ( चवि. ५.१४ )

**-वात**-पु., रोग॰ तल्लक्षणानि पादयोरभितापः शोथश्च शरीरे च रक्तच्छाया ( र. २१.४४ )

**-वारिज**-न., वनस्पति॰ रक्तपद्मम् ( रा.१०.२४१ )

**-वाहिनी**-स्त्री., शारीर॰ सिराभेदः रक्तस्य वाहिनी स्थानं यकृत्प्लीहानौ, संख्या पंचसप्ततिशतम् ( सुशा. ७.६; सुशा. ९.१२ )

**-विद्रधि**-पु., स्त्रीरोग॰ आर्तवजन्यविद्रधिः, स्त्रीणामप्रजातानां प्रजातानां वा अहितसेवनात्कुक्षौ दाहज्वरयुक्तो विद्रधिः ( सुनि. ९.२६ )

**-विस्फोट**-पु., रोग॰ चत्वारिंशत् पित्तविकारेष्वेकः, रक्तजा पिडका ( चसू. २०.१४ )

**-विस्रावण**-न., उपक्रम॰ रक्तमोक्षः, सर्पविषे श्रेष्ठ उपक्रमः ( सुक. ५.१४-१५ )

**-वृक्ष**-पु., वनस्पति॰ रक्तचन्दनवृक्षः, तत्पुष्पशाकगुणाः-कफपित्तहरं कुष्ठघ्नं च ( सुसू. ४६.२८४ )

**-वृद्धि**-स्त्री., रोग॰ मुष्कवृद्धिरोगभेदः, लक्षणम्-कृष्णस्फोटावृतां पक्वोदुम्बरसंकाशां ज्वरदाहोष्मवतीमाशुसमुत्थानपाकां रक्तवृद्धिं वदन्ति ( सुनि. १२.६ )

**-शाकिनी**-स्त्री., वनस्पति॰ रक्तसहचरी, रक्तपुनर्नवा, रक्तदण्डपत्रं मारीषशाकं वा ( र. १८.१०७ )

**-शालि**-पु., वनस्पति॰ शालिः ( ध. ६.६९ ) शूकधान्यश्रेष्ठः ( सुसू. २०.५ ) व्रीहिविशेषः ( रा. १६.८७ )

**-शाल्य**-पु., वनस्पति॰ व्रीहिः ( रा. १६.१०४ )

**-शिग्रु**-पु., वनस्पति॰ शिग्रुः ( रा. ७.६६ )

**-शीर्षक**-पु., जलचरपक्षिविशेषः, सारसभेदः ( चसू. २७.४४)

**-ष्ठीवन**-न., ( परिव॰ ) लक्षण॰ लोहितस्य थूत्करणम् ( सुनि. १६.२०-२१ )

**–ष्ठीविज्वर**–पु., रोग० संनिपातज्वरभेदः, तल्लक्षणम्– ज्वरवमितृषामोहशूलातिसारहिक्काऽऽध्मानभ्रमण- दवथुश्वाससंज्ञाप्रणाशाः रसना च विकृता श्यामा रक्ता मण्डलोत्थानरूपा; मर्यादा–दश दिनानि; व्याधिरयमसाध्यः ( मानिज्वर. २० ).

**–सर्षपक**–पु., वनस्पति० राजिका ( ध. ४.६० )

**–सहाख्य**–पु., वनस्पति० कुरुबकः (रा.१०.४१२)

**–सार**–पु., धातुसारविशेषः, अयं स्निग्धताम्रनख- नयनतालुजिह्वौष्ठपाणिपादतलः(सुसू. ३५.१६; चवि, ८.१०६ )
 वनस्पति० अम्लवेतसः (रा. ६.१४७)
 खदिरः ( ध. १.२५ )
 रक्तचन्दनम् ( ध. ३.४ )

**–सारमुख**–पु., वनस्पति० व्रीहिः ( ध. ६.७२ )

**–स्थापन**–वि., रक्तं प्रच्युते रक्षति इति रक्तस्तम्भकम् ( चचि. ३०.८७ )

**–स्रव**–पु., नेत्ररोग० रक्तात्ताम्रं बहूष्णं चाश्रु संस्रवेत् ( असंउ. १३ )

**–स्राव**–पु., नेत्ररोग० रक्तस्रावः ( सुउ. १.३६ )

**–स्राविन्**–पु., वनस्पति० अम्लवेतसः ( ध. २.९६ )

**–स्रुति**–स्त्री., लक्षण० रक्तस्रावः ( अहसू. ११.३० )

**रक्तक**–पु., वनस्पति० चन्दनभेदः, रक्तचन्दनम् (रा. १२.१२ ) द्र० 'चन्दन'
 शिग्रुः ( ध. ४.४० )
 रक्तशिग्रुः (रा. ७.६६)
 अशोकः ( ध. ५.१५९ )
 न., प्राचीनामलकम् ( ध. १.२१८ )
 न., खनिज० ताम्रम् ( ध. ६.९ )

**रक्ताक्ष**–वि., लक्षण० रक्तनेत्रः ( असंशा. २ )

**रक्तागम**–पु., रक्तनिर्गमनम् ( सुउ. ४१.१२)

**रक्तागस्त्य**–पु., वनस्पति० अगस्त्यः ( र. १८.४७-५२)

**रक्ताङ्कुर**–पु., भैषज्य० प्रवालम् ( रा. १३.७३ )

**रक्ताङ्ग**–पु., वनस्पति० अग्निमन्थः (ध. १.१११)
 कम्पिल्लकः ( ध. ३.१३८ )
 भैषज्य० प्रवालम् (रा. १३.७३ )

**( रक्ताङ्गी )**–स्त्री., वनस्पति० मञ्जिष्ठा ( ध. १.१८ )

**रक्ताङ्कुल**–न., वनस्पति० व्रीहिः (रा. १६.१०७ )

**रक्तातिसार**–पु., रोग० सरक्तपुरीषातिविसर्गलक्षणः ( चसू. २.२१ ) पित्तातिसारिणोऽतिमात्रपित्तलान्न- पानादिसेवनाद्रक्तातिसारः प्रभवति, ततश्च ज्वर- शूलतृड्दाहा गुदपाकश्च जायते ( चचि. १९.७० )

**रक्तात्मक**–पु., रोग० रक्तजशिरोरोगः ( सुउ. २५.८ )

**रक्तानिलार्ति**–स्त्री., रोग० रक्तवातप्रधानो रोगः ( चसू. ३.२२ )

**रक्तानुगत**–वि., दुष्टरक्तसंबद्धः ( सुचि. ३.२३ )

**रक्तान्तनेत्र**–वि., नेत्रस्य प्रान्तभागे रक्तवर्णो यस्य, सः ( सुशा. ४.७४ )

**रक्तापामार्ग**–पु., वनस्पति० अपामार्गः ( र. ५.२५० )

**रक्तावह**–न.,वनस्पतिनिर्यास० बोलम् ( रा. ६.११६ )

**रक्ताभिपन्न**–पु., नेत्ररोग० रक्ताभिष्यन्दः। लक्षणानि– ताम्राश्रुता लोहितनेत्रता समन्तादतिलोहितराज्यश्च दाहप्रपाकः शिशिराभिनन्दा धूमायनमुष्णाश्रुता पीतनेत्रता च ( सुउ. ६.९ )

**रक्ताभिष्यन्दप्रतिषेध**–पु., अध्याय० ( सुउ. १२ )

**रक्तामलान्तक**–पु., वनस्पति० कुरुबकः ( रा. १०.४१२ )

**रक्तामृत**–न., विषभेदः; शुभ्रं वर्णे यथोक्तवर्णं गन्धरस- स्पर्शसंपत्तिविशिष्टं नूतनं महाविषं रक्तशृङ्गीकमिति केचिद्वदन्ति ( र. २१.११७-२० ) द्र० 'विष'

**रक्ताम्भोज**–न., वनस्पति० रक्तपद्मम् ( रा. १०.२४१ )

**रक्ताम्र**–पु., वनस्पति० क्षुद्राम्रः ( रा. ११.६ )

**रक्ताऽम्लान**–पु., वनस्पति० कुरुबकः ( रा. ४१२ )

**रक्तालु**–पु., वनस्पति० रक्तपिण्डालुः ( रापरि. ७.२६ )

**रक्तालुक**–न., वनस्पति० रक्तपिण्डालुः (सुसू. ४६.२९८)

**रक्तावसेक**–पु., उपक्रम० रक्तनिर्हरणम् (चचि. ५.३२)

**रक्ताशय**–पु., आशयविशेषः शोणितस्थानभूतौ यकृत्प्लीहानौ ( सुसू. २२.९; सुशा. ५.८ )

**रक्तास्राव**–पु., नेत्ररोग० सरक्तोष्णप्रभूतनाति- सान्द्रस्रावयुक्तः; असाध्योऽयम् ( सुउ. २.७ )

**(रक्तिका)**–स्त्री., वनस्पति० काकमाचीभेदः चूडामणिः ( रा. ३.४७ ) द्र० 'काकमाची'
 राजिका ( रा. १६.९० )

**रक्तिन्**–वि., रक्तदोषी (चसू. ५.४२)

**रक्तेक्षु**–पु., वनस्पति० इक्षु० (रा.१४.१८९)

**रक्तेर्वारु**–स्त्री., वनस्पति० इन्द्रवारुणी ( रा. ३.३७३ )

**रक्तैरण्ड**–पु., वनस्पति० एरण्डविशेषः ( ध. १.२९६ )

**रक्तैरण्डतैल**–न., अस्मिंस्तैक्ष्ण्यौष्ण्यादिगुणा एरण्डतैला- पेक्षया तीव्रतराः ( अहसू. ५.५८ )

**रक्तोत्पल**–न., रोग० रक्तपद्मम् (रा. १०.२४१)

**रक्तोदर**–न., रोग० रक्तगुल्मः ( र. १८.७१ )

**रक्तोदरकुठार**–पु., योग० पारदजेपालादियुक्तः ( र. १८.७१ )

रक्तोपसृष्ट-वि., रक्तदूषितः ( मुनि. १६.९ )
रक्षणी-स्त्री., वनस्पति० त्रायमाणा ( रा. ५.३७९ )
रक्षस्-न., योनि० रक्षांसि रावणानुचरादीनि ( सुसू. ३१.३१ ड. )
पु., प्राणि० गवयः ( ध. ६.३५ )
(रक्षो-)ग्रह-पु., ग्रह० दुष्टलक्षणम्-मांसरक्तमाध्वीकादिनानासुराविकारास्वादनेच्छा निर्लज्जत्वमतिनैष्ठुर्यं शौर्यं निद्रा बलं निशाविहारोऽशुचित्वं च ( सुउ. ६०.१४ )
-घ्न-वि., रक्षसां विध्वंसकरम् (सुचि. ३०.१४-१५ )
पु., वनस्पति० सर्षपः ( रा. १६.६८ )
श्वेतसर्षपः ( सुउ. ६०.४९ )
-घ्नधूप-पु., वचादिद्रव्याणां धूपः, व्रणे बालरोगे चोपयुज्यते, शयनादावपि दौर्गन्ध्यनाशनार्थमुपयुज्यते ( सुसू. ५.१७ )
-(घ्नी)-स्त्री., वनस्पति० वचा ( रा. ६.८ )
सर्षपभेदः ( चचि. २३.७९ )
-भय-न., राक्षसभयम् ( सुसू. ५.२० )
-हन्-पु., निर्यास० गुग्गुलः ( रा. १२.८४ )
रक्षा-स्त्री., रक्षणविधिः ( चशा. ८.४७ )
स्वस्त्ययनम् ( सुउ. २८.१० )
-कल्प-पु., रक्षया सहितः कल्पः ( सुक. १.१ )
-विधान-न., निशाचरेभ्यो रक्षणम् ( सुचि. १.८. चशा. ८.४७ )
-शक्ति-स्त्री., मन्त्रितद्रव्य० ( असंसू. ८ )
रङ्ग-पु., वनस्पति० खदिरः ( रा. ८.४१ )
नारङ्गः ( रा. ११.२४ )
न., खनिज० वङ्गम् ( ध. ६.१३ )
( रङ्गा )-स्त्री., वनस्पति० मेदा ( रा. ५.१६१ )
-काष्ठ-न., वनस्पति० कुचन्दनम् ( रा. १२.१२ )
-कुड्मक-पु., वनस्पति० हिमावली ( रापरि. ६.१८ )
-क्षार-पु., खनिज० टङ्कणः ( रा. ६.२८ )
-द-पु., खनिज० टङ्कणः ( रा. ६.२८ )
निर्यास० खदिरसारः ( रा. ८.४१ )
-दायक-न., खनिज० कङ्कुष्ठम् ( रा. १३.२०० )
-नायक-न., खनिज० कङ्कुष्ठम् ( ध. ३.१४१ )
-पत्री-स्त्री., वनस्पति० नीलिनी ( रा. ४.३५१ )
-पुष्पी-स्त्री., वनस्पति० नीलिनी ( रा. ४.३५१ )
-मातृ-स्त्री., वनस्पति० लाक्षा (ध. ३.८२)
-योग-पु., रङ्गयोजना ( सुचि. २७.४ )

रङ्गक-पु., वनस्पति० भृङ्गराजः ( रा. ४.२० )
रङ्गिणी-स्त्री., वनस्पति० शतावरीभेदः ( रा. १.२९३ )
हरिद्रा ( ध. १.५५ )
रङ्गुलता-स्त्री., वनस्पति० आवर्तकी ( रा. ३.२९६ )
रजत-न., खनिज० रौप्यम्, तत् त्रिविधं-सहजं खनिजातं कृत्रिममिति तत्र पूर्वपूर्वमुत्तमम् ( र. ५.२४; चचि. १.५८; ध. ६.५ )
-प्रभ-पु., वनस्पति० सोमभेदः (सुचि. २९.५ )
रजतोपल-पु., खनिज० रौप्यमाक्षिकम् ( र. ३०.३५ )
रजनक-पु., वनस्पति० कम्पिल्लकः ( अहसू. १५.४५ )
रजनी-स्त्री., वनस्पति० हरिद्रा (सुचि. २८.३; ध.१.५४)
-चर-पु., योनि० निशाचरः ( चशा. २.१० )
-द्वय-न., वनस्पति० पिण्डहरिद्रा दारुहरिद्रा च ( ड. सुउ. ३९०.२३० )
-पुष्प-पु., वनस्पति० करञ्जः, उदकीर्यः, (रा. ९.१८०)
रजन्यादियोग-पु., योग० वृश्चिकदंशे प्रच्छिते रजनीसैन्धवव्योषशिरीषफलपुष्पैश्चूर्णैर्दुष्टरक्तप्रवर्तनार्थं प्रतिसारणम् ( सुक. ८.६७-६८ )
रजस्-न., क्रिया आर्तवम् ( चशा. ४.७ )
प्रकृतेस्त्रिगुणेष्वेको गुणः, अयमप्रीत्यात्मको दुःखरूपः प्रवृत्तिकर उपष्टम्भकश्चलो गुणः (सुशा. १.३)
मानसदोषयोरेकः ( चसू. १.५७ )
अयोरजः ( चचि. १६.८२ )
मान० षड्यूकाः=१ रजः ( र.११.१ )
चूर्णम् ( र. २.४९ )
धूलिः ( सुउ. ५०.३ )
क्षाररजो: रजः ( र. १५.६९ )
अष्टरूपायाः प्रकृतेर्गुणः, प्राणेष्वेकः ( सुशा. ४.३ )
वनस्पति० पर्पट ( ध. १.४५ )
-( रजस् )-वला-स्त्री., मासिकरजःस्रावयुता स्त्री ( चचि. ३०.१६५ ) दृष्टार्तवा ( सुउ.६१.५ )
-( रजः ) क्षय-पु., लक्षण० आर्तवक्षयः ( चशा. २.३ )
-पथ-पु., शारीर० योनिमार्गो योनिर्वा ( असंउ. ३८.३१९ )
-शूल-पु., लक्षण० आर्तवशूलः ( र. २.१७५ )
( रजो ) दोष-पु., आर्तवदोषः ( चचि. ३०.९५ )
( रजो ) नाश-पु., लक्षण० स्त्रीणां पुष्पनाशः, आर्तवनाशः ( अहसू. १९.३ )
( रजो ) बहुल-वि., रजोगुणप्रबलः रजोगुणभूयिष्ठः ( सुनि. १.८ )

**( रजो ) वहसिरा**–स्त्री., शारीर० सिरा० गर्भाशयगता रजोवाहिनी नाडी ( चचि. ३०.२०७ )

**रजोद्भव**–पु., वनस्पति० सर्जकः (रा. ९.२०४.)

**रज्जु**–स्त्री., मुञ्जबल्वजादिनिर्मिता व्रणबन्धनद्रव्येष्वेका, सूत्रम् (सुसू. १८.१६)

**रञ्जक**–न., रञ्जनकारकम् पञ्चपित्तेष्वेकम् ( असंसू. २०.५ )

यकृत्प्लीन्होःपित्तं रञ्जकोऽग्निः स रसस्य रागकृत् ( सुसू. २१.१० )

आमाशयाश्रितं पित्तं रञ्जकम् ( अहसू. १२.१३ )

खनिज० हिङ्गुलम् ( १३.४८ ) 'पित्त'

खनिज० कान्तलोहभेदः (ध. ६.२९)

**(रञ्जिका)**–स्त्री., वनस्पति० भङ्गा ( ध.१.१३० )

**–पित्त**–न., पञ्चपित्तेष्वेकम् ( अहसू. १२.१३ ) द्र० 'दोष', 'पित्त'

**रञ्जन**–पु., वनस्पति० कम्पिल्लकः (ध. ३.१८)

मुञ्जः ( रा. ८.२०५ )

न., रागद्रव्यम् ( चशा. ८.१७ )

खनिज० हिङ्गुलम् ( रा. १३,४७ )

यथाविधिसाधितेन सुवर्णादिबीजधातूनां जारणेन जायमानस्य पारदस्य पीतादिवर्णः ( र. ८.८६ )

**( रञ्जनी )**–स्त्री., वनस्पति० जंतुकारी ( ध. ४.८८ )

ताम्बूली ( ध. परि. ३.३ )

नीली ( ध. १.२३२ )

हरिद्रा ( रा. ६.७९ )

**रञ्जनक**–पु., वनस्पति० कट्फलम् ( रा. ८.१०१ )

**रञ्जिनी**–स्त्री., वनस्पति० हरिद्रा ( ध. १.५४ )

**रणप्रिय**–न., वनस्पति० उशीरम् ( ध. ३.१४ )

**रण्डा**–स्त्री., वनस्पति० दन्ती ( चक. १२.४ )

**रत**–वि., तत्परः, मग्नः, आहितचित्तः ( सुचि. ३७.६२ )

**(रती)**–स्त्री., मान० एका गुञ्जा ( र. १८.२०८ )

**रतिकाम**–वि., रतिरूपस्य काम्यार्थस्य प्रार्थिता ( चचि. ९.२३ )

**रत्न**–न., मणिः ( सुचि. २४.६५ ) नवरत्नानि–मुक्ताफलं, हीरकं, वैडूर्यं, पद्मरागकं, पुष्परागं, गोमेदं, नीलं, गारुत्मतं, प्रवालम् ( ध. ७.८९ ) उत्पत्तिस्थानानि–खनिः सागरादयश्च ( र. ४.३६-३७ ) तेषां शोधनम्–माणिक्यं जम्बीरादिनाऽम्लेन, मौक्तिकं जयन्त्यारसेन, विद्रुमं यवक्षारादि–क्षारवर्गेण, तार्क्ष्यं गोदुग्धैः, पुष्परागं कुलत्थक्वाथयुक्तैः काञ्जिकविशेषैः, वज्रं–हीरकं तण्डुलीयजलैः, नीलमणिर्नीलिनीरसेन, गोमेदं गोरोचनाभिः, वैदूर्यं त्रिफलाक्वाथैः शुध्यति ( र. ४.६१-६५ ) तेषां मारणम्, वज्रं विनाऽष्टौ शेषरत्नानि समभागशिलागन्धकतालकैः सह लकुचद्रावेण संमर्दितैरष्टपुटैर्म्रियन्ते । ( र. ४.६६ ) वज्रं मत्कुणरक्तेन सप्तवारं विलिप्तं विशोषितं कासमर्दरसपूर्णलोहपात्रे निवेशितं सप्तवारं परिध्मातं सत् म्रियते । ( र. ४.४४-४५ ) तेषां प्रतिविधानम्– रामठादिसर्वं यत्नतः संमर्द्य गोलकं कृत्वा तन्मध्ये जातान्युत्तमानि नवरत्नानि क्षिपेत् । ततस्तं गोलकं भूर्जपत्रे स्थापयित्वा सूत्रेणावेष्ट्य पुनश्च वस्त्रेण सम्यग्वेष्टनं कृत्वा समस्ताम्लपदार्थसहितेन काञ्जिकेन पूर्णे घटे गोलकं दोलायन्त्रे स्थापयित्वा दिनत्रयपर्यन्तं तीक्ष्णाग्निना स्वेदयेत्, ततो दोलायन्त्राद् गोलकं गृहीत्वा, काञ्जिकेन क्षालयेत् । अनन्तरं तस्माद् रत्नाद् द्युतिमाहरेत् । सा द्युतिः रत्नतुल्यप्रभा । यस्य रत्नस्य या द्युतिः, सा तद्रत्नवर्णा भवति ( र. ४.६७-७२ ) प्रतिरत्ननियतनवग्रहनामानि–माणिक्यं रविः, मुक्ता सोमः, विद्रुमं भौमः, तार्क्ष्यं बुधः, पुष्पं गुरुः, भिदुरं शुक्रः, नीलं शनिः, गोमेदकं राहुः, वैडूर्यं केतुः ( र. ४.६ ) रत्नधारणगुणाः–रक्षोघ्नमौजस्यमुत्तमं सौभाग्यकरं प्रीतिवर्धनं च ( सुचि. २४.६४-६५ ) तथा धन्यं मङ्गल्यं श्रीमद् आयुष्यं व्यसनसूदनं हर्षणमोजस्यं काम्यं च ( चसू. ५.९७ )

खनिज० हीरकम् ( ध. ६.५६ )

प्रवालम् ( र. २३.४० )

मौक्तिकम् ( र. २३.४० )

**–करण्डक**–पु., पारदयोग० भूनागाभ्रकसत्वकान्तादिसिद्धः, अयं शूलज्वरग्रहणीकासनाशकः ( र. १३.३६ )

**–केतुधारिणी**–स्त्री., मंत्रविद्या० रत्नकेतुनाम्ना धारिणीति सौगतादीनां नाम बौद्धादीनां या प्रसिद्धा सा ( इन्दुः असंउ. १ )

**–कोश**–पु., सप्तविंशतिसंख्याकेष्वन्यतमो रससिद्धिप्रदायकः आचार्यः ( र. १.२-५ )

**–घोष**–पु., प्राचीनो रसाचार्यः अयं सप्तविंशति रसाचार्याणामेकतमः ( र. ६.४९-५३ )

**रत्नाकर**–पु., भैषज्य० समुद्रफेनः ( र. २३.३९ )

**रत्नाभरणधारण**–न., रत्नालङ्कारधारणम् इदं धन्यत्वादिकरम् ( चसू. ५.९७ ) 'द्र० रत्न'

**रथ**–पु., यानम्, प्रवहणम् (असंसू. ८.४३)
वनस्पति० तिनिशः ( रापरि. ९.२४ )
–**कार**–पु., लोहकारः ( सुचि. ५.१८ )
–**क्षोभ**–पु., यानयात्राजन्यक्षोभः ( चसि. १२.१४(४) )
–**चर्या**–स्त्री., रथेन गमनं नाम पर्यटनम् ( सुचि. ११.११ )

**रथाक्ष**–पु., रथस्य चक्राधारः ( असंसू. ३.५७ )

**रथाङ्ग**–पु., वनस्पति० तिनिशः (रापरि. ९.२४)
न., चक्रम् ( सुक. ४.२२ )
वनस्पति० ऋद्धिः ( ध. १.१४५ )

**( रथाङ्गी )**–स्त्री., वनस्पति० ऋद्धिः ( ध. १.१४५ )

**रथक**–न., त्रिचक्रयुक्तो बालरथः स च बालानां गमनाभ्यासोपयोगी ( काचि. फक्कचि. )

**( रथिका )**–स्त्री., वनस्पति० तिनिशः ( रापरि. ९.२४ )

**रथ्या**–स्त्री., मार्गः ( चचि. ९.२० )

**रदन**–पु., शारीर० दन्तः ( असंशा. ११.३ )

**रदित**–न., दंश० अयं विलिखितोऽनवगाढश्च सर्पदंशः ( ड. सुक. ४.१७ )

**रन्ध्रकण्ट**–पु., वनस्पति० जालबर्बुरः (रापरि. ८.१४)

**रन्ध्रण**–न., बन्धनम् ( र. १०.५ ) पारदादिबन्धनम् ( र. ९.६७ )

**रन्ध्रपत्र**–पु., वनस्पति० नलः ( रा. ८.२२२ )

**रन्ध्रवंश**–पु., वनस्पति० वंशः (रा. ७.२१६)

**रन्ध्राण**–न., बन्धनम् ( र. १०.५ )

**रन्ध्री**–स्त्री., वनस्पति० नलः ( ध. ४.१४१ )

**रपक्ष**–पु., वनस्पति० भृङ्गराजः ( रा. २०.२२२ )

**रमण**–पु., वनस्पति० कैडर्यनिम्बः ( रा. ९.४८ )

**रम्भा**–स्त्री., वनस्पति० कदली (ध. ४.७५; र. २०.१७६)

**रम्यक**–पु., वनस्पति० महानिम्बः ( सुसू. ३८.२९-३०, ध. १.३१ )
न., पटोलमूलम् ( सुसू. ३९.४ )

**रम्यपुष्प**–पु., वनस्पति० शाल्मली ( रा. ८.२१२ )

**रम्यफल**–पु., वनस्पति० कारस्करः ( रापरि. ९.३५ )

**रम्या**–स्त्री., वनस्पति० विशाला ( रा. ३.३७५ )
पद्मिनी ( रा. ५.१३२ )

**रल्लक**–पु., प्राणि० अस्य जिह्वामुखमण्डितिकाजुष्टस्य धारयितुमुपयुज्यते ( इन्दु. असंउ. ६०.५७ )

**रव**–पु., वनस्पति० तिन्दुकः ( रा. ११.४० )



**रवक**–पु., रेणुः सत्वकणः ( र. २.३४; र. ५.२३० )

**रवि**–पु., खनिज० ताम्रम् ( र. ५.१६६ )
वनस्पति० अर्कः ( ध. ४.१३ )
–**जधर**–पु., भैषज्य० रविजो यमः तं धरति धारयति इति रविजधरो महिषः तत्पर्यायत्वात् महिषो गुग्गुलुर्ज्ञेयः महिषः गुग्गुलुः ( र. ३०.५७ )
–**तप्ततोय**–न., रविणा तप्तं जलम् (चचि. १२.६७)
–**ताण्डव**–पु., पारदयोग० पारदगंधकताम्रादिसिद्धोऽयं भगन्दरनाशकः ( र. २४.१२४ )
–**प्रिय**–न., वनस्पति० रक्तपद्मम् ( रा. १०.२४१ )
–**लौह**–न., खनिज० ताम्रम् ( रा. १३.११ )
–**वल्ली**–स्त्री., वनस्पति० आदित्यवल्ली (असंउ. १.१४)

**रवीष्ट**–पु., वनस्पति० नारङ्गः ( रा. ११.२४ )

**( रवीष्टा )**–स्त्री., वनस्पति० सुवर्चला आदित्यभक्ता ( रा. १४.४ )

**रश्मि**–पु., किरणः ( र. २.३२ )
–**जाल**–न., खनिज० रौप्यम् ( ध. ६.६ )

**रस**–पु., जलम् ( रा. १४.३१८ )
क्वाथः ( चचि. ७.१३१ )
स्वरसः ( र. २.१९ )
मांसरसः ( चसि. १.११ )
अभिरुचिः ( १.५७ )
वनस्पति० इक्षुरसः, इक्षुः ( चसू. २७.२३७ )
जातिपत्ररसः, जातिपत्रं ( ड. सुउ. १७.१२-१३ )
आमलकीपत्ररसः, आमलकी (सुउ. १७.१२-१३)
भैषज्य० बोलम् ( ध. ३.६२; चचि. २८.१५२ )
खनिज० पारदः ( र. १.६६ )
रसकम् ( र. १२.१६० )
सिल्हकम् ( र. २२.१६७ )
शिलारसः ( र. २२.१६७ )
आहाररसः ( चसू. २८.४ )
शारीरधातु० सप्तधातुष्वेकः, रसधातुः ( चसू. १३.१४ ) अन्नजन्यः प्रथमो देहधातुः ( चचि. १५.१७ )
रसनाग्राह्यो गुणस्तस्य जलं योनिः ( सुसू. ४२.३ ) मधुराम्ललवणतिक्तकटुकषायाः षड्रसाः;
तदुत्पत्तिः–पृथिव्युदकाभ्यामुल्बणाभ्यां मधुररसस्य, तेजःपृथिवीभ्यामम्लस्य, उदकतेजोभ्यां लवणस्य, वाय्वाकाशाभ्यां तिक्तस्य, तेजोवायुभ्यां कटुकस्य, वायुपृथिवीभ्यां कषायस्योत्पत्तिर्भवति ( अहसू. १०.१ ) तेषां रूपाणि–तत्र मधुररसरूपम्–वक्त्र-

मनुलिम्पत्यास्वाद्यमानो देहस्य ह्लादनोऽक्षप्रसादनः पिपीलिकादीनां प्रियः च; अम्लरूपम्– मुखक्षालनः रोमहर्षणो दन्तहर्षणोऽक्षिभ्रुवनिकोचनः; लवणरूपम्–आस्यं स्यन्दयति कपोलगलदाहं च करोति; तिक्तरूपम्–आस्यं विशदयति, रसनां प्रतिहन्ति; कटुरूपम्–जिह्वाग्रमुद्वेजयति, चिमिचिमां कुर्वन्नक्षिनासास्यं स्रावयति, कपोलौ दहति; कषायरूपं–जिह्वां जडयेत्, कण्ठस्रोतोविबन्धं च कुर्यात् (अहसू.१०.२-६) तद्विपाकाः–मधुरलवणयोर्मधुरो विपाकः; अम्लस्य अम्ल एव, कटुतिक्तकषायाणां कटुः (अहसू. ९.२१) तेषां वीर्याणि–शीतवीर्यरसाः–मधुरस्तिक्तः कषायश्च; उष्णवीर्याः अम्लो लवणः कटुः; तेषां गुणाः–स्निग्धरसाः–मधुराम्ललवणाः, रूक्षरसाः–तिक्तकटुकषायाः; गुरुरसाः–मधुरलवणकषायाः, लघुरसाः– अम्लकटुतिक्ताः (अहसू. १०.३७-३९) तेषां कर्माणि–मधुररसस्य कर्माणि–सप्तधातुवर्धनः ओजः स्तन्यवर्धनश्चक्षुष्यः केश्यो वर्ण्यो बलकृत् संधानो रसरक्तप्रसादनो बालवृद्धक्षतक्षीणहितस्तृष्णामूर्च्छादाहप्रशमनः षडिन्द्रियप्रसादनः कृमिकरश्च; अम्लकर्माणि–जरणो दीपनः पाचनः पवननिग्रहणोऽनुलोमनः कोष्ठविदाही, बहिःशीतः क्लेदनः प्रायशो हृद्यश्च; लवणकर्माणि–संशोधनः पाचनो विश्लेषणः क्लेदनः शैथिल्यकृदुष्णः सर्वरसप्रत्यनीको मार्गविशोधनः सर्वशरीरावयवमार्दवकरश्च; कटुकर्माणि–दीपनः पाचनो रोचनः शोधनः स्थौल्यालस्यकफकृमिविषकुष्ठकण्डूप्रशमनः सन्धिबन्धविच्छेदनोऽवसादनः स्तन्यशुक्रमेदसामुपहन्ता च; तिक्तकर्माणि–छेदनो रोचनो दीपनः शोधनः कण्डूकोठतृष्णामूर्च्छाज्वरप्रशमनः स्तन्यशोधनो विण्मूत्रक्लेदमेदोवसापूयोपशोषणश्च; कषायकर्माणि–संग्राहको रोपणः स्तम्भनः शोधनो लेखनः शोषणः पीडनः क्लेदोपशोषणश्च (चसू. २६.४३; सुसू. ४२.१०) तेषामतियोगलक्षणानि–मधुरातियोगः–कासश्वासालसकवमथुवदनमाधुर्यस्वरोपघातकृमिगलगण्डानापादयति तथाऽर्बुदश्लीपदबस्तिगुदोपलेपाभिष्यन्दप्रभृतीञ्जनयति। अम्लातियोगः– दन्तहर्षनयनसंमीलनरोमसंवेजनकफविलयनशरीरशैथिल्यान्यापादयति, तथा क्षताभिहतदग्धदष्टभग्नशूनप्रच्युतावमूत्रितविसर्पितच्छिन्नभिन्नविद्धोत्पिष्टादीनि पाचयत्याग्नेयस्वभावात्परिदहति कण्ठमुरो हृदयं चेति। लवणातियोगः– गात्रकण्डूकोठशोफवैवर्ण्यपुंस्त्वोपघातेन्द्रियोपतापमुखाक्षिपाकरक्तपित्तवातशोणिताम्लीकाप्रभृतीनापादयति रोगान्। कटुरसातियोगः–भ्रममदगलताल्वोष्ठशोषदाहसंतापबलविघातकम्पतोदभेदकृत् करचरणपार्श्वपृष्ठप्रभृतिषु च वातशूलानापादयति। तिक्तातियोगः– गात्रमन्यास्तम्भाक्षेपकार्दितशिरःशूलभ्रमतोदभेदच्छेदास्यवैरस्यान्यापादयति। कषायातियोगः–हृत्पीडास्यशोषोदराध्मानवाक्यग्रहमन्यास्तम्भगात्रस्फुरणचुमुचुमायनाकुञ्चनाक्षेपणप्रभृतीन् जनयति रोगान् (चसू. २६.४३; सुसू. ४२.१०) मधुरादिरसगणाः– द्राक्षामधूकेक्षुक्षौद्रगुडदुग्धादिर्मधुरो गणः; आमलकीमातुलुङ्गाम्लीकाम्लवेतसदाडिमदधितक्रादिरम्लो गणः, सौवर्चलसामुद्रसैन्धवादिर्लवणो गणः, भूनिम्बनिम्बकटुकीचन्दनहरिद्रादिः तिक्तो गणः, हिङ्गुमरिचपंचकोलादिः कटुर्गणोः, हरीतकीखदिरोदुम्बरमुक्ताप्रवालादिः कषायो गणः (चवि. ८.१३९-१४४; अहसू. १०.२२-३२) षण्णां रसानां संयोगात् त्रिषष्टिः रसभेदाः भवन्ति (सुसू. ४२.१२)

**(रसा)**–स्त्री., वनस्पति० रास्ना (ध. १.२७०) सुरा, मद्यम् (ध. ६.२५५)

**–क्रिया**–स्त्री., कल्प० घनीभूतरसस्य संज्ञा (चचि. २६.२०२) माक्षिकादिना यद् द्रवीक्रियते द्रव्यं, सा रसक्रिया (अरु.) अवलेहः (हे अहसू. २२.१३) फाणिताकृतिः, 'गृहीत्वा क्वाथकल्केन क्वाथं पूतं पुनः पुनः। क्वाथयेत्फाणिताकारमेषा प्रोक्ता रसक्रिया (ड. सुउ. १०.७) सम्यक्सिद्धलक्षणम् नातितनुर्नातिघनां शलाकोपलेपक्षमा अङ्गल्युपलेपक्षमा वा (सुउ. १८.१०६) सा च उपक्रमत्वेन शोधनरोपणभेदेन द्विधा (सुचि. १.८)

**–क्रियाकल्पन**–न., कल्प० रस क्रिया (सुचि.१.७३)

**–क्षय**–पु., लक्षण० रसधातुयुक्तप्रमाणहीनत्वं द्र० 'रसधातु' (सुसू. १५.९)

**–गन्ध**–न., भैषज्य० बोलम् (रा. ६.११७)

**–गन्धक**–पु., खनिज० गन्धकः (रा. १३.१६७)

**–गर्भ**–न., खनिज० रसाञ्जनम् (ध. ३.१५८) भैषज्य० रसाञ्जनम् (ध. ३.१५८) खनिज० हिङ्गुलम् (रा. १३.४८)

**–घ्न**–पु., खनिज० टङ्कणः (रा. ६.२८)

-चिन्तक-वि., रसवेत्ता ( भिषक् ) (चसू. २६.२४)
-ज-वि., रसात् जायते इति ( चशा. ३.३ )
रसदोषेण जातः ( चसू. २८.२५ )
आहारद्रव्य० गुडः (रा. १४.१९८)
-जभाव-पु., रसेभ्यः परिणतेभ्यः संजातः भावः तेन गर्भस्य शरीरोपचयो बलं वर्णःस्थितिर्हानिश्च (सुशा. ३.३३)
-जात-न., खनिज० रसाञ्जनम् ( ध. ३.१५८ )
-तन्मात्र-न., पञ्चतन्मात्रेष्वेकम् तच्च रसतन्मात्रम् अनुद्भूतो रसः सूक्ष्मं जलम् ( सुशा. १.४ )
-दालिका-स्त्री., वनस्पति० इक्षुभेदः करङ्कशालिः (रा. १४.१८५)
-देश-पु., रसतो देशभेदः, स च जाङ्गलानूप-साधारणभेदात् त्रिधा ( असंसू. १८.२८ )
-दोष-पु., पारददोषः ( र. ११.१७-२० )
जलदोष, द्र० 'जल' ( सुसू. ४५.११ )
-दोषज-वि., दोषदूषितरसजाता विकाराः तेच अन्नाश्रद्धाऽरोचकोऽविपाकोऽङ्गमर्दो ज्वरो हृल्लास-स्तृप्तिर्गौरवं हृद्रोगः, कार्श्यंवैरस्याङ्गसादाकाल-वलीपलितदर्शनानि ( सुसू. २४.९ ) तन्द्रा तमः पाण्डुत्वं स्त्रोतोरोधः क्लैब्यम् अग्निनाशश्च (चसू. २८.९-१०)
-दोषसन्निपात-पु., रसानां दोषाणां चान्तःशरीर-मेलकः ( चवि. १.७ )
-धातु-पु., खनिज० पारदः (रा. १३.४२)
शारीरधातु० सप्तधातुष्वेकः, अहरहर्गच्छतीत्यतो रसः ( सुसू. १४.१३ ) पाञ्चभौतिकस्य चतुर्विधस्य षड्रसस्य द्विविधवीर्यस्याष्टविधवीर्यस्य वाऽनेक-गुणस्योपयुक्तस्याऽऽहारस्य सम्यक्परिणतस्य यस्तेजोभूतः सारः परमसूक्ष्मः, स रस इत्युच्यते। तस्य हृदयं स्थानं, स हृदयाच्चतुर्विंशति-धमनीरनुप्रविश्योर्ध्वगा दश दशाधोगामिन्यश्चतस्रश्च तिर्यग्गाः कृत्स्नं शरीरमहरहस्तर्पयति वर्धयति धारयति यापयति चादृष्टहेतुकेन कर्मणा। तस्य शरीरमनुसरतोऽनुमानाद्गतिः उपलक्षयितव्या क्षयवृद्धिवैकृतैः । स खलु द्रवानुसारी स्नेहनजीवन-तर्पणधारणादिभिर्विशेषैः सौम्य इत्यवगम्यते ( सुसू. १४.३ ) स सर्वरसानां प्रीणयिता, तस्मात् पुरुषं रसजं विद्यात्। ततोऽच्चाऽन्नपानादाचार रसं प्रयत्नतो रक्षेत् ( सुसू. १४.१२ ) त्रीणि त्रीणि कलासहस्राणि पञ्चदश च कलाः स एकैकस्मिन् धाताववतिष्ठते। एवं मासेन रसः शुक्रं, स्त्रीणां चार्तवं भवति ( सुसू. १४.१४ ) रसकर्माणि-तुष्टिः, प्रीणनं, रक्तपुष्टिश्च ( सुसू. १५.५ ) रसक्षय-लक्षणानि-हृत्पीडाकम्पशून्यतास्तृष्णा( सुसू. १५.९) रौक्ष्यं, श्रमो, ग्लानिः, शब्दासहिष्णुता च ( अहृसू. ११.१७ ) रसवृद्धिलक्षणानि-हृदयोत्क्लेदः प्रसेकश्च ( सुसू. १५.१४ ) गौरवालस्यश्वास-कासातिनिद्रताः श्वैत्यशैत्यश्लथाङ्गत्वमग्निसदनम् ( अहृसू. ११.७ ) रसनिमित्तमेव स्थौल्यं कार्श्यं च ( सुसू. १५.३२ )
-नाथ-पु., खनिज० पारदः (रा. १३.४० )
-नाभ-न., खनिज० रसाञ्जनम् (रा. १३.२२२ )
-निगम-पु., रसग्रन्थ० ( र. ८.९९ )
-पङ्क-पु., पारदयोग० गन्धकादिधातुभिः सह मेलनेन द्रवेण मर्दिता पारदस्य कज्जली ( र. ८.६ )
-पत्रिका-स्त्री., वनस्पति० पालक्या ( र. १०.८१ )
चुक्रम् ( र. १०.८१ )
कपित्थम् ( र. १०.८१ )
-पाकज-पु., आहारद्रव्य० गुडः (ध. ४.१२८)
-पुष्प-पु., वनस्पति० जलदः ( ध. ५.४९ )
-प्रदोषज-वि., रसप्रदोषेण जनितः रसदोषजः (चसू. २८.११ )
-प्रभाव-पु., रसस्य कर्मविशेषकारित्वम् (चवि. १.१२ )
-प्रलेपिन्-वि., रसप्रलेपनरूपतया निर्वृत्तं रसप्रलेह इति यावत् ( चक्र. चचि. २४.१२८ )
-प्रवाहिन्-वि., रसवहम् स्रोतः ( सुउ. ३९.१७ )
-प्रसाद-पु., रसस्य सारः, 'रसस्य प्रसन्नो भागः' (सुनि. १०.१८)
-फल-पु., वनस्पति० नारिकेलः ( ध. ५.७४ )
-बोधन-न., रसस्य रसनया ज्ञानम् (अहृसू. १२.१७)
-भस्म-पु., पारदयोग० पारदभस्म ( र. ३०.११-१३ )
-भावित-वि., मांसरसभावितम् (सुउ. १७.१३-१४)
-भेद-पु., रसस्य भेदो नाम प्रकारः ( सुउ. ६३.३ )
-भेदविकल्प-पु., अध्यायसंज्ञा० ( सुउ. ६३.१ )
-भैरव-पु., पारदस्य शिवलिङ्गम् (र. ७.३)
-मण्डप-न., रसशालासमीपस्थं ध्वजच्छत्रवितानाढ्यं पारदनिर्मितशिवलिङ्गस्य स्थानम् (र. ६.१३)

**-मूर्च्छित**-वि., रससंयुतः (सुउ. ४२.१३१-१३२)

**-यवागू**-स्त्री., मांसरसयवागुः दन्तहर्षविकारे उपयुक्ता ( सुचि. २२.३५ )

**-योनित्व**-न., द्रवसंबन्धादेवाम्लादीनामुपपन्नम् (चसि.१०.१४)

**-रञ्जन**-न., रसस्य रञ्जनम् ( अहृसू. १२.१३ )

**-रत्नसमुच्चय**-पु., रसग्रंथ० सिंहगुप्तसूनुना वाग्भटेन विरचितो रसोपरसधातूपधातुविषयको ग्रन्थः,अयमेव सिंहगुप्तसूनुर्वाग्भटअष्टाङ्गहृदयकाराद् वाग्भटात् अर्वाक्कालभवः इति ज्ञेयम् (र.१.८)

**-राज**-पु., खनिज० पारदः (रा. १३.४०)

**-लिङ्ग**-न., पारदशिवलिङ्गम् (र. १.२४)

**-लोह**-पु., न., खनिज० पारदः ( ध. ६.३७ )

**-वर्त्मन्**-न., आहाररसस्य संचारमार्गः, मार्गेणैतेन धातुपोषणं भवति ( सुउ. ४१.९ )

**-वह**-वि., रसवहं ( स्रोतः ) ( चनि. १.२० )

**(-वहा)**-स्त्री., रसवहस्रोतः ( असंशा. ४ )

**-वहस्रोतस्**-न., शारीर० स्रोतो० रसधातोः प्रभवस्य वहनस्य च स्थानम् (चवि. ५.७) रसवहानि बहूनि स्रोतांसि चरकमते, सुश्रुतमते तु रसवहे द्वे स्रोतसी ( सुशा. ९.१२ ) रसवहानां स्रोतसां हृदयं मूलं दश च धमन्यः ( चवि. ५.८ ) रसवहस्रोतोद्वयस्य मूलं हृदयं रसवाहिन्यश्च धमन्यः ( सुशा. ९.१२ )

गुरुशीतमतिस्निग्धमतिमात्रं समश्नतां रसवहानि स्रोतांसि दुष्यन्ति, तथैव चिन्त्यानामतिचिन्तनादपि तद्दुष्टिः संभवति ( चवि. ५.१३ ) रसधातुप्रदोषजा रोगा एव रसवहस्रोतसां रोगा विज्ञेयाः ( चसू. २८.९-११ ) रसवहस्रोतोविद्धस्य लक्षणानि प्राणवहस्रोतोविद्धवद्भवन्ति, तानि तु क्रोशनविनमन-मोहनभ्रमणवेपनानि मरणं वेति ( सुशा. ९.१२ )

**-वाहिन्**-वि., शारीर० रसवहम् ( स्रोतः ) ( असंशा. ६.४३ )

**-वाहिनी**-स्त्री., शारीर० गर्भपोषणार्थं मातृहृदयगर्भ-नाभिप्रतिबद्धा नाडी (चशा.४.१५)

**-वाहिस्रोतस्**-न., शारीर० रसवहस्रोतः ( चवि. ५.१३ )

**-वाहि-धमनी**-स्त्री., रसवहस्रोतःसंबन्धिनी धमनी (सुशा. ९.१२ ) अत्र वृत्तौ पुंवद्भाव इति रस-वाहिनीशब्दस्थाने रसवाहिपदनिवेशो युक्त एव ।

**-विकल्पज्ञ**-वि., रसविकल्पं जानानः (चसू. २६.२७)

**-विमान**-न., अध्यायसंज्ञा० ( चवि. १.१ )

**-विरुद्ध**-वि., रसतो विरुद्धम् ( सुसू. २०.१६ ) द्र० ' विरुद्ध '

**-विशारद**-वि., रसवीर्यविपाकविशारदः, विषविशारदः ( सुसू. ३४.७ )

**-विशेष**-पु., रसनेन्द्रियविज्ञेयःप्रमेहादिषु माक्षिका-पिपीलिकाद्युपसर्पणेनानुमेयो मधुरादिरसविशेषः ( सुसू. १०.५ )

**-विशेषविज्ञानीय**-वि., रसविशेषविज्ञानमधिकृत्य कृतः (अध्यायसंज्ञा०) ( सुसू. ४२.१ )

**-वेदिनी**-स्त्री., शा० सिराविशेषः, जिह्वायां वर्तमाना सिरा ( असंशा. ६.१७ )

**-वैद्यक**-न., रसशास्त्रम् ( र. ७.२८ )

**-व्यापद्**-स्त्री., मधुरादिरसजन्यविकारः (सुसू. ६.३)

**-शुक्त**-न., आसुत० इक्षुरसादिकृतं शुक्तम् ( सुसू. ४५.२१२ )

**-शेषाजीर्ण**-न., रोग० अजीर्णभेदः ( अहृसू. ८.२९ ) तल्लक्षणम्-आहारस्यैव पक्वस्योर्वरितो रसो रसशेषस्तद्भवमजीर्णम्, तत्रोद्गारशुद्धावपि भक्त-काङ्क्षा न जायते, हृद्गुरुता लालास्रावश्च भवति ( सुसू. ४६:४९९-५०३ )

**-संपद्**-स्त्री., रससंपत्तिः ( सुसू. ६.३ )

**-संयोग**-वि., रसे स्नेहार्थीकरसे उचितः संयोगो येषां, ते रससंयोगाः ( चक. चसू. १३.८४ )

**-संयोगसंग्रह**-पु., रससंयोगानां संग्रहणम् ( चसू. १३.८४ )

**-संवहन**-न., रसप्रेरणम् ( सुनि. १.१७-१८ ) द्र० ' रसधातु '

**-संसर्ग**-पु, षण्णां मधुरादिरसानां परस्परेण मेलनम् ( सुउ. १.७ )

**-सात्म्य**-न., सेवितः सन् यो रसः सुखकारणं आरोग्यकारणं भवति, तत् रससात्म्यम् ( सुसू. ३५.३९-४० )

**-स्थान**-न., रसस्याऽश्रयो हृदयम् ( सुशा. ९.७ )

**-स्थानाभिपूरण**-न., हृदयाभिपूरणम्, आमपक्वा-शयेऽधोनाभेरेवैवमन्नरसो वर्तुलीकृतो रसस्थान-स्य पूरणं ततश्चोर्ध्वगाभिस्तिर्यग्गाभिश्च धमनीभिः तत्र तत्रोपनीयते इति सकलशरीरतर्पणमधोगतानामेव कर्म, रसस्थानं च हृदयं तत्पूरणं च (ड.सुशा.९.७)

**-हारिणी**-वि., रसवाहिनी ( धमनी ) (असंशा. २.१७)

**रसक**-पु., खनिज० खर्परः (र.२.१५४) तद्भेदाः—सदलो दर्दुरः निर्दलः कारवेल्लश्च। तद्गुणाः—लोहपारदरञ्जनः पित्तकफघ्नः सर्वमेहनेत्ररोगक्षयघ्नः (धपरि.६.२५) अमृतम् (र. १२.१२४)

**रसन**-न., ज्ञानेन्द्रिय० (चशा. ७.७) रसनेन्द्रियम्, रसना (चशा. ४.१२; चशा. ७.७) आस्वादनं भक्षणं वा; रसीभवनं द्रवीभवनं वा (र. १.७५)

**(रसना)**-स्त्री., रसनेन्द्रियम् (चसू. १.६४) वनस्पति० रास्ना (ध. १.२७०)

**रसनेन्द्रिय**-न., इंद्रिय० रसना, जिह्वा (सुशा. १.१९)

**रसयितृ**-वि., रसज्ञापकः, आस्वादयिता (सुशा. ३.४)

**रसाग्रज**-न., खनिज० रसाञ्जनम् (रा. १३.२२१)

**रसाग्र्य**-न., खनिज० रसाञ्जनम् (ध. ३.१५८)

**रसाङ्कुश**-पु., रसरत्नसमुच्चयकर्तुः प्राक्तनस्तन्त्रकर्ता, यस्य तन्त्रमालोच्य सिंहगुप्तसूनुना वाग्भटेन स्वीयः संग्रहः कृतः (र. १.५) वनस्पति०नन्दिका, पत्राकारा, शम्बरी महौषधी—इयं पारदस्य भावनस्वेदादौ उपयुक्ता (र. ११.५४-५८) खनिज० टङ्कणक्षारः (र. ११.५४)

**(रसाङ्कुशी)**-स्त्री., मंत्रविद्या० ॐ कामराजशक्तिबीज-रसाङ्कुशाय आज्ञेया विद्यां रसाङ्कुशीमिति (र.६.२३)

**रसाङ्क**-पु., वनस्पति० श्रीवेष्टकः (रा. १२.१९२)

**रसाज्ञत्व**-न., लक्षण० जिह्वा रसं न चेतयत इत्यर्थः (अरु.अहृसू. ७.२१)

**रसाञ्जन**-न., दारुहरिद्रा क्वाथकृतमञ्जनम् (चचि. ७.६१) दार्वीक्वाथसमं क्षीरं पादावशेषघनद्रव्यम् (सुसू. १४.३६) तस्य शोधनम्, सूर्यावर्तादिगण-भावनया रसाञ्जनं दोषरहितं भवति (र. ३.११८) तद्गुणाः—तिक्तं, कटु, शीतमुष्णं, वर्ण्यं, चक्षुष्यं, हृत्प्रसादनं पित्तकफघ्नं, रक्तपित्तहिध्माश्वास-मुखरोगविषच्छर्दिनाशनम् (ध. ३.१५८) नेत्ररोगे वर्त्यञ्जनार्थमुपदिष्टम् (सुउ. ११.९) सिरा-व्यधनानन्तरमतिप्रवृत्ते रक्ते तत्स्तम्भनार्थमुपयुज्यते माषायवगोधूमचूर्णैः शनैः शनैर्व्रणमुखमवचूर्ण्या-ङ्गुल्यग्रेणावपीडयेत् (सुसू. १४.३६) तद्द्वि-विधम् स्रोतोऽञ्जनं कृष्णपाषाणाकृति धातुद्रव्यम्, अन्ये दारुहरिद्राक्वाथेन कृत्रिमं पीतलोहितम्, अत्र सौवीराञ्जनसाहचर्याध्दातुद्रव्यमेव (ड. सुसू. ३८.४१-४२)

**रसाढ्य**-पु., वनस्पति० आम्रातकः (ध. ५.१३)

**(रसाढ्या)**-स्त्री., वनस्पति० रास्ना (रा. ३.३९७)

**रसात्यय**-पु. अत्ययो नाशः, तेन रसनाशः (असंसू. १२.३९)

**रसाधिक**-पु., खनिज० टङ्कणक्षारः (रा. ६.२८)

**रसान्तर**-न., अन्यो रसः (अहृसू. ९.२०)

**रसाभितर्पण**-न., रसधातोः पोषणम् (सुशा. ९.९)

**रसाभिधा**-स्त्री., वनस्पति० पिण्डखर्जूरिका (ध. ५.५५)

**रसाम्ल**-पु., वनस्पति० अम्लवेतसः (ध. २.९६) न., आसुत० शुक्तम् (अहृसू. ५.७६) वनस्पति० वृक्षाम्लम् (रा. ६.१४४)

**(रसाम्ला)**-स्त्री., वनस्पति० पलाशी (रापरि. ३.५०)

**रसायन**-न., आयुर्वेदाङ्ग० (चसू. ३०.२८) जराव्याधि-नाशकमौषधम्, "स्वस्थस्यौजस्करं यत्तु तद्वृष्यं तद्रसायनम्" (चवि. ३.१४) शस्तानां रसादीनां सप्तधातूनां लाभोपायः (चचि. १.(१)-८) तद्गुणाः—दीर्घमायुः स्मृतिर्मेधाऽऽरोग्यं, तरुणं वयः प्रभावर्णस्वरौदार्यं, परं देहेन्द्रियबलं वाक्सिद्धिः प्रणतिः कान्तिश्च (चचि. १.८) कानिचिदु-दाहरणानि—वर्धमानपिप्पलीरसायनम्—प्रथमदिने दशपिप्पलीः सदुग्धं सेवेत। अनन्तरं प्रतिदिनं दशदशपिप्पलीनां क्रमेण वर्धनाद् दशदिनं दुग्धेन सह सेवेत। तथैव क्रमशः प्रतिदिनं दशदशपिप्पलीरपनयेत्। एवमेकोनविंशतितमे दिने सहस्रपिप्पल्यो भवन्ति। एतद्रसायनं परमायुष्यं वयसः स्थापनं बृंहणं स्वर्यं, मेध्यं, प्लीहोदर-विनाशनं च भवति (चचि.१.(३)३६-४०) लशुनो-ऽपि रसायनविधिनोपयुज्यते। शीतवातहिम-दग्धतनूनां स्तब्धभग्नकुटिलव्यथितास्थ्नां पवनो-पहतानां च लशुनः परमं भेषजम्। लशुनं शीते शीलयेत्। कफोल्बणो वसन्तेऽपि तथा वातार्तो वर्षास्वपि स्निग्धशुद्धतनुः शीतमधुरोपस्कृताशयो लशुनं सेवेत (अहृउ. ३९.११३-१४) भल्लातक-मामलकादिभिरुपयुक्तं प्रशस्तशरीरकरणं तथा मेध्यमायुष्करं च सर्वकफरोगेषु तथा विबन्धेषु च प्रयुञ्जीत। तद् भल्लातकरसायनं शीघ्रमग्निबलप्रदम् (अहृउ. ३९.८० ८२) गोक्षुरामलकगुडूचीनां चूर्णं सघृतं मधुभागमिश्रं लिह्यात्। तेन दीर्घायुः केशानां कृष्णत्वं च भवति (अहृउ. ३९.१५९) तथा

शिलाजतुरसायनम्, तद्विधिश्च–शिलाजतु कोष्णे वातहरादिक्वाथे प्रक्षिप्य रौद्रे शोषयेत् ततः क्वाथाद् उद्धृतं पुनरपि तद्रसे क्वाथे प्रक्षिपेत् अनेन विधानेन लोहैः सह चूर्णीकृतं शिलाजतु पयसा पिबेत्। पलमर्धपलं कर्षो वेति अस्य त्रिधा मात्रा। अस्य प्रयोगः सप्तसप्ताहाभिव्यापकः परो भवति, त्रिसप्ताहात्मको मध्यः, एकसप्तकोऽवरो भवति। अस्य सेवनेन दीर्घमायुर्लभते। जराव्याधिप्रशमनं भवति, परं देहदार्ढ्यं जायते। नरः मेधास्मृतियुक्तो भवति। शिलाजतुप्रयोगेषु विदाहिगुरुपदार्थान् सर्वकालं वर्जयेत्, विशेषतः कुलत्थान् परिवर्जयेत्। ते परमश्मनो भेदनाः सन्ति। अतस्तेषामत्यन्तविरुद्धत्वात् तान् परिवर्जयेत्। पयांसि, तक्राणि रसः यूषास्तोयं समूत्रा विविधाः कषायाः गिरिजस्यालोडनार्थं शस्ताः। भुवि साध्यरूप एकोऽपि रोगो नास्ति, यः शिलाह्वयेन न सिद्ध्येत् तस्य विधिभिः कालयोगैः च कृतः प्रयोगो विपुलामूर्जां ददाति ( चचि. १ ( ३ ) ५१-५४; ६२-६५ )

**(रसायनी)**–स्त्री., रसवाहिनी, रसस्रोतः (चचि.२०.१०)
धमनी० ( सुचि. १२.८ )
वनस्पति० गोरक्षदुग्धी ( रापरि. ५.५३ )
काकमाची ( ध. ४.२१ )
जटामांसी ( रा. १२.१३९ )
गुडूची ( ध. १.४ )

**रसायनतन्त्र**–न., आयुर्वेदस्याष्टाङ्गेष्वेकम् ( सुसू. १.७ ) वयःस्थापनमायुर्मेधाबलकरं रोगापहरणसमर्थं तन्त्रम् ( सुसू. १.९(७) )

**रसायनपर**–वि., स्वभावव्याधिनिवारणविशिष्टौषधचिन्तकः रसवीर्यौषधप्रभावेण मरणनिवारकः (सुसू. २८.५)

**रसायनपाद**–पु., अध्यायपाद० ( चचि. १.१ )

**रसायनवरा**–स्त्री., वनस्पति० काकमाची ( ध.४.२१ )

**रसायनविधान**–न., रसायनविधिः, रसायनप्रयोगः ( चचि. १.(२)३)

**रसायनविधिभ्रंश**–पु., रसायनविधौ प्रमादः, एतस्माद् व्याधयो भवन्ति। तत्र रसायनं मुक्त्वा यथास्वमौषधं देयम् ( असंउ. ४९; चचि. १(४)-२९ )

**रसायनश्रेष्ठ**–पु., खनिज० पारदः ( रा. १३.४३ )

**रसायनसमाश्रय**–न., आहारद्रव्य० दुग्धम् ( ध. ६.१६१ )

**रसायनाधिकार**–पु., रसायनस्य प्रकरणम्, अधिक्रियतेऽस्मिन्निति अधिकारः, प्रकरणम् ( चवि, ३.३६ )

**रसायनायोग्य**–वि., रसायनोपयोगानर्हः, अनात्मवानलसो दरिद्रः, प्रमादी, व्यसनी, पापकृद्, भेषजापमानी रसायनायोग्यो मतः ( सुचि. ३०.४ )

**रसार्णव**–पु., रसग्रन्थ० आयुर्वेदे रसशास्त्रस्य कश्चित् प्रधानो ग्रन्थः ( र. ११.१० )

**रसाल**–पु., वनस्पति० इक्षुः ( पौण्ड्रकः ) ( ध. ४.१२० )
धान्य० गोधूमः ( रा. १६.१५१)
वनस्पति० आम्रः ( ध. ५.१ )

**( रसाला )**–स्त्री., वनस्पति० द्राक्षा ( ध. ५.५६ )
आहारद्रव्य० शिखरिणी ( ड. सुसू. ४६.३८४ ) करमथितेन मरीचशर्करादियुक्तेन दध्ना कृता (अरु.) तद्गुणाः–बृंहणी, बल्या, स्निग्धा, वृष्या, रुचिप्रदा ( चसू. २७.२७८ ) प्रतिश्यायघ्नी ( अहृउ. ४०.५१ )

**( रसाली )**–स्त्री., वनस्पति० इक्षुः ( करङ्कशालिः ) ( रा. १४.१८५ )

**रसालाख्य**–पु., मूषिक० एतद्विषतो ग्रीवास्तम्भो दंशमण्डले वेदना च जायते ( असंउ. ४६ )

**रसावेष्ट**–पु., वनस्पति० श्रीवेष्टकः ( १२. १९३ )

**रसिक**–वि., मधुररसम् ( चइ.२.२२ )
धान्य० गोधूमः ( ध. ६.९७ )
नीवारः ( ध., ६.८७ )

**( रसिका )**–स्त्री., रोग० क्षुद्रकुष्ठभेदः, कण्डूवर्तियुक्ता स्रावहीना पिडका ( र. २९.७५ )

**रसेक्षु**–पु., वनस्पति० इक्षुः ( पौण्ड्रकः ) ( रा. १४.१८३ )

**रसेन्द्र**–पु., खनिज० पारदः ( ध. ६.३७ )

**रसेन्द्रचूडामणि**–पु., पारदयोग० पारदयुक्तवृष्ययोगः ( र. २७.१२५ )

**रसेन्द्रतिलक**–पु., ग्रन्थकार० रसरत्नसमुच्चयकर्त्रा सिंहगुप्तसूनुना निर्दिष्टः कश्चित् रसतन्त्रकारः ( र. १.७ )

**रसेन्द्रनाग**–पु., पारदयोग० पारदसीसादिसाधितोऽयं प्रमेहकुष्ठवातनाशनः ( र. १७.६४ )

**रसेन्द्रवेध**–पु., पारदस्य द्रुतलोहादौ लेपक्षेपादिरूपेणान्तःप्रवेशः ( र. ५.५ )

**रसोत्तम**–पु.,न., खनिज० पारदः ( ध. ६.३७; चचि. २५.११६ )
वनस्पति० मुद्गः ( ध. ६.८० )
न., घृतम् ( चक. चचि, २५.११६ )

**रसोद्भव**–न., खनिज० रसाञ्जनम् ( ध. ३.१५८; रा. १३.२२१ )
हिङ्गुलम् ( रा. १३.४८ )
**रसोद्भूत**–न., खनिज० रसाञ्जनम् ( रा. १३.२२१ )
**रसोन**–पु., वनस्पति० लशुनः (चचि. ३.३०४; ध.४.६६)
**रसोनयोग**–पु., योग० लशुनरसायनम् ( सुउ.४१.५७ )
द्र० ' रसायन '
**रसोपचय**-पु., ( परिव० ) रसपोषणम् (सुशा. ९.१०)
**रसौदन**–पु., मांसरसेन सिद्ध ओदनः (चचि. १९.२५)
**रसौषधि**–पु., रसायनौषधिः ( र. ३०.८२ )
**रस्या**–स्त्री., वनस्पति० रास्ना ( ध. १.२७० )
**–रसांश**–वि., षड्भागम् रसानां षट्संख्याकत्वेन रसपदं षडर्थकम्, अतः रसांशं नाम षड्भागम् ( र. १७.६५ )
**रहस्**–न., एकान्तः ( चशा. २.३ )
**( रहः )–कामता**–स्त्री., लक्षण० एकान्तप्रियत्वम् ( चनि. ७.७ )
**राक्षस**–पु., राजससत्त्वस्यैकः प्रकारः ( चशा. ४.३८ )
योनि० रावणादिः ( सुसू. ५.२१; चनि. ७.१० )
भूताधिपति० ( असंउ. ७ )
पारदयोग० ताम्रपारदगंधकादिसाधितोऽयं मन्दाग्नि-नाशनः ( र. १६.१६२ )
**(राक्षसी)**–स्त्री., वनस्पति० कार्पासी (र. १७.४१)
**–काय**–चित्तप्रकृति० राजसकायः (सुशा. ४.९१.९२) राक्षससत्त्वभावः, तल्लक्षणम्–एकान्त–ग्राहिता रौद्रा-सूया धर्मबाह्यता तमोयुक्तत्वं च (सुशा.४.९१.९२)
**–वक्त्रवत्**–वि., दिव्यौषधिसमायोगेन प्रकटकोष्ठ्यां ध्मानादखिललोहादिभक्षणे सामर्थ्यं प्राप्तः ( पारदः) महासुखवानित्यर्थः ( र. ८.७८ )
**राक्षसोन्माद**–पु., रोग० उन्मादभेदः तल्लक्षणम्–शस्त्रशोणितमांसरक्तमाल्याभिलाषित्वं सन्तर्जकत्वं च ( चचि. ९.२० ) द्र० 'उन्माद'
**राग**–पु., केशरञ्जकद्रव्यम् ( चचि. २६.२८२ )
व्यञ्जन० अन्नरोचनार्थमुपयुज्यमानः, कपित्थादि-द्रव्यकृतः ( चक. चचि. २०.३६ )
सितारुचकसिन्धूत्थैः सवृक्षाम्लपरूषकैर्जम्बूफलरसै-र्युक्तो राजिकया कृतः, तद्गुणाः–लघुर्बृंहणो वृष्यो हृद्यो रुच्यो दीपनः, श्रमघ्नस्तृष्णामूर्च्छाभ्रमच्छर्दिघ्नः ( सुसू. ४६.३८३ )
पानकभेदः, मधुराम्ललवणं पानकम् ( चसू. २७.२८१ )

रक्तिमा ( असंसू. २०.२० ) रक्तता तेजोगुणः ( सुसू. १४.९ )
रूपम् ( सुउ. ७.२६ )
रञ्जनम् ( सुसू.१४.४ ) आप्यस्य रसस्य यकृत्प्लीह्नो प्राप्तस्य रक्तीभवनम्, शुद्धस्य चेतसो रजस्तमोभ्यां रञ्जनम् ( हे. अहृसू. १.१ )
रक्तवर्णं ताम्रपत्रम् ( र. १२.१०४ )
मनोभाव० कामः ( र. १.१ )
वनस्पति० अलक्तकः ( रापरि. ६.१२ )
**–खाडव**–पु., आहारद्रव्य० मुद्गयूषस्य संयोगा-न्तरेण नामान्तरम्, मुद्गयूषो दाडिममृद्वीकायुक्तः, तद्गुणाः–रुच्यो लघुपाको दोषाणामविरोधकृत ( सुसू. ४६.३६७ )
**–दालि**–स्त्री., वनस्पति० मसूरिका ( रा. १६.१४९ )
**–पुष्प**–पु., वनस्पति० बन्धूकः ( रापरि. १०.३५ )
**–प्रसव**–पु., वनस्पति० कुरण्टकः ( रा. १०.४१३ )
**–षाडव**–पु., व्यंजन० रागप्रधानः षाडवः ( चक. चक. ७.३३ ) तत्तु क्वथितं, गुडोपेतं, नवं सहकारफलं तैलनागरसंयुक्तम्; तद्गुणाः-कट्वम्लस्वादु-लवणो लघुः मुखप्रियो हृद्यो रोचनो दीपनश्च ( चसू. २७.२८१ )
**–सर्षपतैल**–न., तैल० बालानां प्लीहोदरनिवर्तनार्थम् उपयुज्यते
( काककट्वतैलक. २५.२६ ) द्र० ' पीतसर्षपतैल '
**रागाङ्गी**–स्त्री., वनस्पति० मञ्जिष्ठा ( रा. ६.१८ )
**रागाढ्या**–स्त्री., वनस्पति० मञ्जिष्ठा ( रा. ६.१७ )
**रागिन्**–वि., रञ्जनशक्तिमान् रागिद्रव्यम्, तच्च लेपौ-षधं वर्णान्तरं नयतीत्यर्थः ( हे अहृसू. २९.३ )
पु., वनस्पति० अशोकः ( ध. ५.१५९ )
धान्य० तद्गुणाः–तिक्तो मधुरः, कषायः, शीतो बल्यो रक्तपित्तघ्नः ( रा. १६.१७८ )
हिं.—मका.
**म.—नाचणी.**
गु.—बवटो.
बं.—मुरोआ.
ता.—इरागी.
**राजन्**–पु., नृपः ( ध. ६.६० )
खनिज० हीरकभेदः राजावर्तः ( ध. ६.६० )
**( राज्ञी )**–स्त्री., वनस्पति० राजक्षवकः ( सर्षपः ) ( रा. १६.७० )
कृत्रिमधातु० पित्तलम् ( ध., ६.१९ )

वनस्पति० नीलिनी ( रा. ४.३४९ )

**( राज )-कन्या**-स्त्री., वनस्पति० केविका ( रापरि. १०.३३ )

**-कशेरुक**-पु., वनस्पति० मुस्ता ( चसि. १०.३७; ध. १.४० )

**-कसेरु**-पु., वनस्पति० मुस्ता ( ध. १.४० )

**-कसेरुक**-पु., वनस्पति० मुस्ता ( असं. कल्प. ४ )

**-कृष्णा**-स्त्री., वनस्पति० जन्तुका ( रा. ३.१२८ )

**-कोल**-पु., वनस्पति० राजबदरः ( रा. ११.१६० ) द्र० 'बदर'

**-कोशातकी**-स्त्री., वनस्पति० कोशातकीभेदः, धामार्गवः(चक. ४'३; ध. १.१८९)द्र० 'कोशातकी'

**-क्षव**-पु., शाक० दुग्धिका, लघुर्ग्राही त्रिदोषघ्नो ग्रहण्यर्शोविकारघ्नः ( हे. असंसू. ७.११३.११४ )
राजशाकम् ( अरु. अहसू. ६.७२ )
वनस्पति० राजसर्षपकः ( र.२८.७६-७७ )

**-क्षवक**-पु., शाक० दुग्धिका, राजक्षकः (चसू.४.९)
वनस्पति० राजसर्षपकः ( ध. ४.४३)

**-क्षवकशाक**-न., शाक० राजसर्षपकः ( सुसू. ४६.२७६ )

**-खर्जूरी**-स्त्री., वनस्पति० खर्जूरी ( रा. ११.६८ )

**-गिरि**-पु., धान्य० राजाद्रिः, शीतो रुच्यः पित्तघ्नः ( रा. ७.१८२ पृ. २३० )

**-गेह**-न., राजगृहम् ( सुसू. ३४.१२ )

**-जम्बू**-पु., वनस्पति० महाजम्बूः द्र० 'जम्बू' ( रा. ११.१३० )

**-तरणी**-स्त्री., वनस्पति० कषाया, सुरभिः, चक्षुष्या, हृद्या, कफकारिणी ( रा. १०.२४६ )

**-तरु**-पु., वनस्पति० आरग्वधः ( सुउ. ५७.१४; रा. ९.३३३ )

**-तैल**-न., तैलयोग० एरंडांशुमतीयवकोलादिसिद्धम्। तरफकरोगे उपयुक्तम् ( का. चि. फक्करोगचि. )

**-दन्त**-पु., शारीर० मध्यदन्तस्य संज्ञा (कासू. २०.४)

**-द्रुम**-पु., वनस्पति० आरग्वधः ( सुक. ३.९-१० )

**-द्विष्ट**-वि., राज्ञो द्विष्टः राज्ञोऽप्रियः (चवि. ८.१३)

**-धान्य**-न., धान्य० श्यामाकः ( ध. ६.८८ )
धान्य० व्रीहिः ( रा. १६.८१ )

**-नामा**-स्त्री., वनस्पति० पटोलम् ( ध. १.५० )

**-नीलिका**-स्त्री., वनस्पति० महानीली (रा. ४.३५३)

**-पत्री**-स्त्री., वनस्पति० रेणुका ( ध. ३.५१ )

**-पर्णी**-स्त्री., वनस्पति० प्रसारणी ( रा. ५.४३५ )

**-पलाण्डु**-पु., वनस्पति० पलाण्डुः ( रा. ७.१०३ )

**-पिण्डा**-स्त्री., वनस्पति० राजखर्जूरी ( रा. ११.६८ )

**-पीलु**-पु., वनस्पति० बृहत्पीलुः ( रा. ११.६३ ) द्र० 'पीलु'

**-पुत्र**-पु., वनस्पति० राजाम्रः ( ध. ५.११ )

**-(पुत्री)**-स्त्री., वनस्पति० जाती ( ध. ५.१३७ )
वनस्पति० रेणुका ( रा. ६.९९ )
कटुतुम्बी ( रा. ३.२३४ )
कृत्रिमधातु० पित्तलम् ( ध. ६.१९ )

**-पुष्पी**-स्त्री., वनस्पति० करुणी ( रापरि. १०.२७ )

**-प्रस्तर**-पु., रत्न० राजावर्तः ( ध. ६.६० )

**-प्रिय**-पु., वनस्पति० राजपलाण्डुः ( रा. ७.१०३ ) द्र० 'पलाण्डु'

**( -प्रिया )**-स्त्री., धान्य० व्रीहिः ( रा. १६.११२ )
वनस्पति० करुणी ( रापरि. १०.२७ )
द्र० 'राजपुष्पी.'

**-फल**-पु., वनस्पति० राजाम्रः ( रा. ११.८ )
राजादनः ( रा. ११.१४६ )

**( -फला )**-स्त्री., वनस्पति० जम्बूः ( रा. ११.१२८ )

**-बदर**-पु., वनस्पति० बदरः ( रा. ११.१६० )

**-बला**-स्त्री., वनस्पति० बलापञ्चकेब्वेका (ध.१.२८ )
प्रसारणी ( ध. १.२८९ )

**-भावा**-स्त्री., धान्य० व्रीहिः ( रा. १६.१०९ )

**-मात्र**-पु., राजसदृशः, ऐश्वर्ययुक्तः (चसू.२७.२०८)

**-माष**-पु., शिम्बीधान्य० कषायो मधुरः, शीतो रुच्यो वातकृद्बलदायकः, कफपित्तघ्नः (चसू.२७.२५; ध. ६.८४ )

हिं.—लोविया.
**म.—चवळी.**
गु.—चोळा.
बं.—वरवटीकलाय.
फा.—लोविया.

**-मुद्ग**-पु., धान्य० मुद्गः, (कृष्णमुद्गः) (ध. ६.८३)

**-मृगाङ्क**-पु., पारदयोग० सुवर्णरजतकान्तताम्रादिसाधितोऽयं क्षयग्रहणीपाण्डुज्वरनाशकः (र.१७.१००)

**-यक्ष्मन्**-पु., रोग० राज्ञो नाम चन्द्रमसो यक्ष्मा रोग इति राजयक्ष्मा, राजा चासौ यक्ष्मा, राजयक्ष्मा, रोगराडित्यर्थः ( अहनि. ५.२-३ ) पूर्वं दक्षनामा प्रजापतिरभूत्। तस्य बह्व्यो दुहितरो बभूवुः। तेन च सप्ताधिका विंशतिः कन्यकाश्चन्द्राय विवोढे नाम वराय दत्ताः। स चन्द्रमास्तासु मध्ये

रोहिण्यामेवानुरक्तो बभूव । ततश्च सशोका-भिरश्विन्यादिभिर्दुहितृभिरात्मपिता दक्षो रोहिणी-विषयकं चन्द्रासङ्गवृत्तं श्रावितः । ततो दक्षेण दुहितॄणां वार्तामाकर्ण्य, चन्द्रमाहूय, सर्वास्वपि निजपुत्रीषु समतया वर्तनाय चन्द्रोऽभिहितः । स च तथेति स्वीकृत्यापि स्वगुरोर्वचनमनादृत्य न तासु समवर्तत । ततो दक्षप्रजापतेः क्रोधो निश्वासरूपेण मूर्तिमान् भूत्वा निःसृत्य यक्ष्मरूपेण रोहिण्यामति प्रसङ्गेनाविलं चन्द्रमाविशत् । ततोऽसौ तेन रोगेणाभिभूतः सन् गतप्रभो गतोत्साहश्च संजातः न गुरुवचनातिक्रमेण आत्मानं कृतागसं मत्वा तमेव दक्षनामानं गुरुं शरणं गतवान् । ततो देववैद्याभ्या-मश्विभ्यां स उपचारितः । ततः प्राप्तबलश्चन्द्रो लब्धगुरुप्रसादोऽश्विभ्यां चिकित्सितोऽभूत् ( ड. सुउ. ४१.४.५ ) तस्य राजयक्ष्मणः स्वरूपं-शोषरूपो व्याधिः, तस्य हेतवः-सप्तधातुक्षयो वातमूत्रपुरीषादिवेगप्रतीघातो विषमाशनम् साहसं इति प्रधानहेतुचतुष्टयम् (सुउ.४१.८-९, चनि.६.३) संप्राप्तिः-कफप्रधानैर्दोषै रसवर्त्मसु रुद्धेषु अति-व्यवायिनो वा क्षीणे रेतस्यनन्तराः सर्वे धातवः क्षीयन्ते । ततो मानवः शुष्यति (सुउ. ४१.९-१०) पूर्वरूपाणि— श्वासाङ्गमर्दकफसंस्रवतालुशोषवम्यग्नि-सादमदपीनसकासनिद्राः शुक्लेक्षणत्वं च (सुउ. ४१.२९) स्त्रीमद्यमांसप्रियता, नख-केशातिवृद्धिर्बलक्षयः (अहृनि, ५.९-११) स्वप्नेषु काकशुकशल्लकिनीलकण्ठगृध्रकपिकृकलासकैरुह्य-मानमात्मानमीक्षते जलरहिता नदीः शुष्कान् पवनधूमदवार्दितांस्तरूंश्च पश्येत् ( चनि. ६.१३; सुउ. ४१.३० ) तल्लक्षणानि-राजयक्ष्मणो भेदाः— त्रिरूपः षड्रूप एकादशरूपश्चेति; त्रिधा, तत्र त्रिरूपः-अंसपार्श्वाभितापः, करपादसंतापः, सर्वा-ङ्गगज्वरः, स्वरवर्चोगदः कासोऽरुचिर्ज्वरो पार्श्वशूलं च ( चचि. ८.४६; चचि. ८.५२ ) षड्रूपः-भक्तद्वेषो ज्वरश्वासकासरक्तष्ठीवनं स्वरभेदः, एकादशरूपः शिरसः परिपूर्णत्वं, कासः, श्वासः, स्वरभेदः, श्लेष्मणश्छर्दनं शोणितष्ठीवनं, पार्श्व-संरोजनमंसावमर्दो ज्वरोऽतीसारोऽरोचकश्चेति ( चनि. ६.१४ ) वातजन्यलक्षणानि— शूलः स्वरभेदोंऽसपार्श्वसंकोचः, पित्तजानि-ज्वरो दाहो-ऽतिसारो रक्तागमः, कफजानि-शिरसः परिपूर्णत्वम-भक्तच्छन्दः कासः कण्ठोद्ध्वंसः (सुउ. ४१.११-१३)



उपद्रवाः-पीनसाद्येकादशरूपिणो राजयक्ष्मणः कण्ठोद्ध्वंस उरोरुजा जृम्भाऽङ्गमर्दो निष्ठीवो वह्निसाद आस्यपूतिता इत्येवमाद्य उपद्रवा भवन्ति ( असंनि. ५.१६ ) असाध्यलक्षणानि— मांसबलक्षयोऽतिसारः शूनमुष्कोदरत्वमन्नद्वेष ऊर्ध्वश्वासः कृच्छ्रेण बहुमूत्रता (मा राजयक्ष्मा८-१२) ज्वरानुबन्धरहितं बलवन्तं क्रियासहमात्मवन्तं दीप्ताग्निमकृशं नरमुपक्रमेत् ( मा. १३ )

**–यक्ष्मचिकित्सित**–न., अध्यायसंज्ञा० अध्याय० ( चचि. ८.१ )

**–राजिका**–स्त्री., वनस्पति० राजक्षवकः ( रा. १६.७० )

**–रीति**–स्त्री., कृत्रिमधातु० पित्तलम् ( ध. ६.१९ )

**–रोग**–पु., रोग० राजयक्ष्मा ( र. १४.१ )

**–वल्लभ**–पु., वनस्पति० राजादनः ( रा. ११.१४७ ) बदर० राजबदरः ( रा. ११.१६० )

**–वृक्ष**–पु., वनस्पति० आरग्वधः (चक.८.३) कर्णिकारः ( ध. १.२२१ )

**–शाक**–पु., वनस्पति० वास्तुकम् ( रापरि. ७.६२ )

**–शाकिनी**–स्त्री., वनस्पति० राजगिरिः ( रा. ७.१८२ )

**-शेखरवटी**–स्त्री., पारदयोग० पारदवत्सनाभ-गंधकादिसिद्धा, इयं अर्शःशूलपाण्डुनाशिका ( र. १६.१५४ )

**–सर्षप**–पु., वनस्पति० राजसर्षपकः ( ध. ४.४३ )

**–सर्षपक**–पु., वनस्पति० कटुस्तिक्तः, कटुपाक्युष्णो रुच्यो दीपनो दृष्टिबस्तिप्रदूषणः, पित्तलः, कफ-वातघ्नः, कण्ठरुक्कृमिनाशनो गुल्मकण्डूकुष्ठव्रणापहो वातशूलनुत्, पित्तदाहप्रदः ( रा. १६.७१ )
हिं.—राई.
म.— मोहरी.
गु.—राई.
बं.—राजसर्षा.
ता.—वर्णाछ.
फा.—खरदल.

**–हंस**–पु., पक्षि० प्लवजातीयोऽयम् ( चसि. १२.(१) १८; चसू. २७.४१; सुसू. ४६.१०५ )

**–हर्षण**–न., वनस्पति० तगरम् ( र.१०.१०२)

**–हस्त**–पु., मान० सपादहस्तात्रिंशदङ्गुलपरिमाणो वा ( र. २.४ )

**राजत**–वि., रजतमयम् (पात्रम्) ( सुचि. २९.१० )
-**चूर्ण**–न., रजतस्य यत् चूर्णं तत्, सूक्ष्मं शुक्तिकाख्य-नेत्ररोगेऽञ्जनार्थमुपयुज्यते ( सुउ. १०.१५ )
-**पात्र**–न., रौप्यपात्रम् ( असंसू. १०.३५ )
-**भाजन**–न., रौप्यपात्रम् ( सुउ. ४२.१०५ )
**राजन्य**–पु., वनस्पति० राजादनः ( ध. ५.९१ )
**राजस**–वि., रजोगुणयुक्तः, रजोगुणेनाधिष्ठितः ( सुशा. १.१८ )
-**काय**–पु., चित्तप्रकृति० रजोगुणयुक्तः पुरुषः, तद्भेदाः षट् आसुरसार्पशाकुनराक्षसपैशाचप्रैतसत्त्वाः ( सुशा. ४.९४ ) तल्लक्षणानि— दुःखबहुलताऽटनशीलताऽधृतिरहंकार आनृतिकत्वमकारुण्यं दम्भो मानो हर्षः कामः क्रोधश्च ( सुशा. १.१८ ) अनार्यत्वं शौर्यं मात्सर्यममितभाषित्वं लोलुपत्वम् ( असंशा. ५ ) मध्यममनोबलयुक्तोऽन्यैः पुरुषैरवष्टभ्यमानो दुःखं सहते, रजसि मध्यमं मनोबलम् ( सुसू. ३५.३८ )
**राजादन**–पु., न., वनस्पति० स्वादुफलवृक्षः ( चसू. २७.१४३; सुसू. ४२.११ ) स्वादुः कषायः (च) शीतलोऽम्लो रुच्यस्तर्पणो वृष्यो हृद्यो वातः-पित्तघ्नो मेहघ्नः ( ध. ५.९१ ) तत्फलगुणाः— स्वादु, कषायं, स्निग्धं, गुरु ( सुसू. ४६.१६६ )
हिं.—खिरनी.
**म.—खिरणी.**
गु.—रायण.
बं.—क्षीरिणी.
ता.—पल्ला.
वनस्पति० चारः ( हे. अहसू. १०.२३; सुउ. ४८.२६ )
**( राजादनी )**–स्त्री., धान्य० व्रीहिः ( रा. १६.१०९ )
**राजाद्रि**–पु., धान्य० राजगिरिः ( रा. ७.१८२ )
**राजाद्रि**–पु., रत्न० राजावर्तः ( ध. ६.६० )
**राजानुज्ञात**–वि., राज्ञोऽभिमतः (वैद्यः) ( सुसू. १०.३ )
**राजान्न**–न., धान्य० व्रीहिः ( रा. १६.७९ )
**राजाम्र**–पु., वनस्पति० आम्रभेदः, राजाम्रयुगलम्:— राजाम्रो महाराजाम्रश्च; कोमलफलस्य गुणाः— कट्वम्लं, पित्तकफास्रपवनश्वासार्तिदाहप्रदम्; सुपक्वफलस्य गुणाः—मधुरं शीतं गुरु वृष्यं पुष्टिवीर्यबलप्रदं त्रिदोषशमनं तृष्णाविदाहश्रमश्वासारोचकनाशकं च ( ध. ५.११ )
**राजाम्ल**–पु., वनस्पति० अम्लवेतसः ( रा. ६.१४७ )
**राजार्क**–पु., वनस्पति० तद्गुणाः–कटुस्तिक्तोष्णः, कफवातघ्नो मेदोविषकुष्ठव्रणशोफकण्डूविसर्पनाशकः ( ध. ४.१६ )
**राजार्ह**–पु., धान्य० व्रीहिः ( रा. १६.८१ )
**( राजार्हा )**–स्त्री., वनस्पति० जम्बूः ( रा. ११.१२८ )
**राजावर्त**–पु., रत्न० द्र० 'हीरक' ( ध. ६.६० ) आवर्तमणिः (र. ३.११९) तस्य शोधनम्–शिरीषपुष्परसैस्तथा च शृङ्गवेररसै राजावर्तः शुद्धो भवति ( र. ३.१६९ ) तस्य मारणम्–जम्बीररसगन्धकसहितो राजावर्तः सप्तवारेण पुटनात् म्रियते ( र. ३.१७० ) तस्य सत्वपातनविधिः– राजावर्तस्य चूर्णं तु खदिराङ्गारैर्ध्मापितं सत्त्वं मुञ्चति ( र. ३.१७१ ) तद्गुणाः– कटुः शीतः स्निग्धः पित्तघ्नः ( ध. ६.६० )
**राजावर्तरस**–पु., पारदयोग० पारदशुल्बमधुकराजावर्तादि साधितोऽयंसर्वमदात्ययहरः ( र. १४.१०४ )
**राजाह्व**–न., वनस्पति० कर्णिका (अरु. अहसू. १५.१३) राजादनः ( हे. अहसू. १५.१३ ) आरग्वधः ( अरु. असंसू. १६.७ )
**राजि**–स्त्री., पङ्क्तिः ( असंसू. ८.११ )
-**चित्र**–पु., सर्प० राजिमान् (सुक. ८.३४-(४) )
-**चित्रक**–पु., सर्प० वैकरञ्जेभ्यस्त्रिभ्यो जातः सर्पः ( सुक. ४.३४ ) द्र० ' राजिमत '
-**फल्गु**–पु., वनस्पति० काकोदुम्बरिका ( ध. ५.८८ )
**राजिका**–स्त्री., वनस्पति० तद्गुणाः–कटुस्तिक्तोष्णा, निद्रा दाहपित्तकरी, कफवातघ्नी, कुष्ठगुल्मशोफग्रहविकारप्लीहाशूलकृमिव्रणनाशनी च (ध. ४.६०)
हिं.—राई.
**म.—मोहरी.**
गु.—राई.
बं.—राजसर्षा.
ता.—वर्णाल्लु.
काकोदुम्बरिका ( रा. ११.१४२)
राजसर्षपकः ( ध. ४.४३ )
क्षुद्ररोग० घर्मस्वेदपरीतेऽङ्गे जायमानाः सरुजो घना राजिकाकारवर्णाः पिटिकाः ( र. २५.१ )
-**पत्र**–न., वनस्पति० तद्गुणाः–कटु, स्वादूष्णं वह्निदीपनं वातकफापहं, कृमिकण्ठामयहरम् ( रा परि. ७.८४)
-**फल**–पु., वनस्पति० सर्षपः ( ध. ४.४२ )
**राजिकाह्वया**–स्त्री., क्षुद्ररोग० राजिका ( असंउ. ३६ )

**राजिमत्**-पु., सर्प० बिन्दुलेखाभिरस्याङ्गं चित्रितमस्तीति राजिमान् ( चचि. २३.१२५ ) रेखायुक्तः फणावर्जित ईषद्विषः ( ड. सुक. ४.१० ) तस्य च राजिमतो दंशः पिच्छिलः स्थिरशोफकरः स्निग्धः पाण्डुः सान्द्रासृक्श्लेष्मव्याधिकरः ( चचि. २३.१२९ ) द्वादशभेदाः-पुण्डरीको राजिचित्रो बिन्दुराजिः कर्दमकोऽङ्कुलराजिस्तृणशोषकः सर्षपकः श्वेतहनुर्दर्भपुष्पश्चक्रको गोधूमकः किकिसादः (सुक. ४.३४३) तद्विषलक्षणानि-त्वगादीनां शुक्लत्वं, शीतज्वरो रोमहर्षो गात्राणां स्तब्धत्वं, सान्द्रकफप्रसेकश्चादंशशोफोऽभीक्ष्णमक्ष्णोः कण्डूश्छर्दिः कण्ठे श्वयथुर्घुर्घुरक उच्छ्वासनिरोधः तमःप्रवेशः तास्ताश्च कफवेदनाः ( सुक. ४.३७ )

**राजिलफला**-स्त्री., वनस्पति० चीणाककर्कटी (रा. ७.२६० )

**राजी**-स्त्री., सूत्रवद्रेखा ( चइ. ११.१३ )
वनस्पति० राजिका ( ध. ४.६० )
वनस्पति० बाकुची ( रा. ४.२२७)
**-जन्मन्**-न., लक्षण० व्यक्तसिरात्वम्, राजीनां जन्म नाम अभिव्यक्तिः ( चचि. १३.१९ )
**-फल**-पु., वनस्पति० पटोलम् (ध. १.५०)

**राजीमत्**-वि., लक्षण० नीलपीतादिरेखायुक्तम् (ड सुउ. ४०.२०)
पु., भौमसर्प० राजिमान् ( असंउ. ४१ )

**(राजीमती)**-स्त्री., शालिशूकाभराज्यावृतेव तारा दृष्टिर्वा ( असंउ. १७ )

**राजीव**-पु., मत्स्य० नादेयोऽयम् ( सुसू. ४६.११३) सामुद्रोऽयं, वज्राभो बह्वायतोऽसौ ( सुसू. ४६.११८-११९ )
प्राणि० जङ्गाल ( जातीयः ) ( ध. २.३; पृ. २८६ )
न., वनस्पति० रक्तपद्मम् ( ध. ४.१५२ )
कमलम् ( रा. १०.२४४ )
**-मत्स्य**-पु., मत्स्य० नादेयोऽयम्, आलाल ( र ) विषः( सुक. ३.६; सुसू. ४६.११३; सुसू. ४६.११८-११९ )

**राजेष्ट**-पु., वनस्पति० राजपलाण्डुः ( रा. ७.१०४ ) द्र० 'पलाण्डु'
न., धान्य० व्रीहिः ( रा. १६.८१ )

**(राजेष्टा)**-स्त्री., वनस्पति० कदली ( रा. ११.१०७ )
राजखर्जूरी ( रा. ११.६८ ) द्र० 'खर्जूरी'

**राजोद्वेजन**-पु., वनस्पति० क्षुवकः ( रापरि. ९.४० )

**राट**-पु., वनस्पति० मदनः ( ध. १.१६८ )

**राठ**-पु., वनस्पति० मदनः ( चक. १.२७ )

**राडुर्त**-पु., रत्न० राजावर्तः ( र. १७.८९ )

**राढ**-पु., वनस्पति० मदनः (चचि. २६.१४)

**रात**-पु., वनस्पति० मदनः (असंक. १)

**रात्रि**-स्त्री., रजनी ( सुशा. ४.३८ )
वनस्पति० हरिद्रा ( सुचि. ९.१२; र. ५.११७ )
**-जागरण**-न., रात्रौ जागरणम्, तेन वातपित्तनिमित्ताः कासश्वासप्रतिश्यायादयोरोगा भवन्ति ( सुशा. ४.३८ )
**-बलिन्**-वि., रात्रौ बलवान् ( चचि. १२.१४ )

**रात्रिक**-पु., वृश्चिक० साध्यसंज्ञोऽयं वृश्चिकः रात्रिविचरणाद् रात्रिकः ( असंउ. ४३ )

**रात्र्यन्ध**-न., नेत्ररोग० नक्तान्ध्यम् द्र० 'नक्तान्ध्य' ( र. २३.६३ )

**रात्र्यन्धहराञ्जन**-न., अञ्जन० इदं रात्र्यन्धत्वनाशनम् (र. २३.६१)

**रात्र्यान्ध्य**-न., लक्षण० कफविदग्धदृष्टिः, रात्रावन्धत्वम् ( सुउ. १७.१६-२६ )

**रानकदली**-स्त्री., वनस्पति० काष्ठकदली ( ध. ४.७८ )

**राम**-पु., प्राणि० महामृगः, हिमालयवासी जाङ्गलमृगः ( चसू. २७.४५ ) जङ्गालमृगः ( ड. सुसू. ४६.५४ )
न., वनस्पति० तमालपत्रम् (ध.२.५२)
कुष्ठम् (ध. ३.४९)

**(रामा)**-स्त्री., स्त्री ( र. ११.१०१ )
वनस्पति० आरामशीतला ( रा. परि. १०.५२ )
वनस्पति० कुमारी ( रा. परि. ५.११ )
लक्ष्मणा ( रा. ४.१२४ )
भैषज्य० गोरोचना ( रा. १२.३४ )
**-काण्ड**-पु., वनस्पति० अपर्वदण्डः ( रापरि. ८.३६)
**-तरणी**-स्त्री.,वनस्पति० तरणी (ध. ५.१४५)
सैर्यकः ( इन्दु. असंउ. २८ )
**-बाण**-पु., वनस्पति० अपर्वदण्डः ( रापरि. ८.३६ )
पारदयोग० पारदतारनागस्वर्णादिसाधितोऽयं सर्वप्रमेहनाशकः ( र. १७.८८९-९३ )
**-वल्लभ**-न., वनस्पति० त्वक् ( रा. ६.७६ )
**-शर**-पु., वनस्पति० अपर्वदण्डः ( रापरि. ८.३६ )
**-शीतलिका**-स्त्री., वनस्पति० आरामशीतला (र.१३.१३-१९)

—सेनक–पु., वनस्पति० किराततिक्तः ( ध. १.३३ )

रामठ–न., निर्यास० हिङ्गु ( ध. २.३६ )

( रामठी )–स्त्री., वनस्पति० नाडीहिङ्गु, हिङ्गुपत्री ( ध. २.४० )

रामण–पु., वनस्पति० कैडर्यनिम्बः(रा.९.४८) वनस्पति० तिन्दुकः ( ध. ५.४० )

रामा–स्त्री., ( र. ११.१०१ )

—वामाङ्घ्रिघातक–पु., वनस्पति० अशोकः ( रा. १०.२७२ )

रामालिङ्गनकाम–पु., वनस्पति० कुरुबकः ( रा. १०.४१३ )

रामेषु–पु., वनस्पति० अपर्वदण्डः ( रापरि. ८.३६ )

राल–पु., निर्यास० शालवृक्षस्य निर्यासः, तद्गुणाः–मधुरः कषायः तिक्त उष्णः ( शीतः–(रा) ) स्तम्भनो व्रणरोपणो वातपित्तघ्नः स्फोटकण्डूतिव्रणनाशनो विषादि·भूतहन्ता भग्नसंधानकृत् ( ध. ३.१२१; रा. ९.२०४ ) अयं सुरभिर्धूपः ( ध. ३.१२१ )
हिं.—साल.
म.—साल. राळेचा वृक्ष.
बं.—साल.

(राला)–स्त्री., वनस्पति० शालनिर्यासः, रालः ( ध. ३.१२१ )

रालक–पु., निर्यास० रालः ( असंसू. ७ )

राशि–पु., समुदायः ( चशा १.३५ ) प्रमाणम्, परिमाणं वा ( चक. चवि. १.२२ )

राष्ट्रिका–स्त्री., वनस्पति० बृहती ( ध. १.९३ )

रासभ–पु., पशु० गर्दभः ( सुचि. ७.१८-१९ )

—वर्चस्–न., गर्दभपुरीषम्, तदिदं मूत्ररुजापहम् ( सुउ.५८.३५ )

रासायन–वि., रसायनस्यायं रासायनः, रसायनसम्बन्धी ( सुचि. २७.४ )

रास्ना–स्त्री., वनस्पति० तृणविशेषः, अनुवासनोपगगणे एकं द्रव्यम् ( चसू. ४.१३ ) शीतापनयनप्रलेपनानां श्रेष्ठा ( चसू. २५.४० ) तद्गुणाः–तिक्तोष्णा गुरुः पाचनी, कफघ्नी; वातहराणां श्रेष्ठा ( च ), विषवातरक्तकासशोफकम्पोदरनाशिनी ( ध. १.२७० ) पार्श्वरुजाघ्नी ( चसू. ३.२५ ) श्वासशूलज्वराशीतिवातविकारहृत् ( भाप्र ) आमवातनाशिनी ( र. १३.७४-७५ )
वनस्पति० सुरभी (ड. सुसू. ३८.१६-१७)
सुरसा ( सुचि. ५.७ )
लक्ष्मणा ( रा. ४.१२५ )
शाक० ( असंसू. ७.१४८ )

—यूष–पु., यूष० वातघ्नोऽयम् (का खिल. ४.५३-५४)

राहु–पु., वनस्पति० मदनः (रा. ८.२३०)

—च्छत्र–न., वनस्पति० आर्द्रकम् (ध. २.८५)

—दर्शन–न., राहोर्दर्शनम् ( चइ. १२.६९ )

रिक्त–वि., तुच्छम्, स्नेहादिगुणशून्यम् ( चक. चचि. २८.१८ ) निष्फलम् (चइ.१२.६९)

रिङ्गिणी–स्त्री., वनस्पति० मुद्गपर्णी ( ध. १.१३८ ) कण्टकारी (र. १६.७३ ) कैवर्तिका ( रा. परि. ३.३५ )

रिपु–पु., वनस्पति० चोरकः ( ध. ३.७१ )

रिष्ट–न., लक्षणम् ( चसू. ३०.२५ ) भविष्यतो मृत्योर्लक्षणम् । रिष्टेन विना मरणं नास्ति, रिष्टदर्शने जीवितं नास्ति। स्थाय्यस्थायि भेदेन द्विविधं रिष्टमिति कृष्णात्रेयः ( अहृ. ) दोषाणां बाहुल्याद्रिष्टाभासो भवति । दोषशमे तच्छमनमिति तदस्थायि, स्थायित्वमवश्यं मृत्यवे कल्पते ( अहृशा. ५.३ ) रूपमिन्द्रियस्वरच्छाया-प्रतिच्छायाक्रियादिष्वन्येष्वपि प्राकृतेषु भावेष्वनिमित्ततो विकृती रिष्टमिति सामान्यतो बोध्यम् । कानिचिद्रिष्टलक्षणानि–यस्य केशरोमाणि निरभ्यंगानि अपि अभ्यक्तानि इव ईक्ष्यन्ते । नेत्रलक्षणानि–अत्यर्थं चले स्तब्धान्तर्गतनिर्गते जिह्मे विस्तृतसंक्षिप्ते संक्षिप्तविनतभ्रूलते उद्भ्रान्तदर्शने हीनदर्शने नेत्रे। अत्यर्थविवृता संवृता वा पिटिकाचिता शोथाक्रान्ता स्फुटिता म्लाना नासिका। पक्वजम्बूफलनीलौ ओष्ठौ। सशर्कराः श्यावास्ताम्राः पुष्पितपङ्क्तिा दन्ताः सहसैव पतेयुर्वा। जिह्वा विसर्पिणी शूना शुष्का गुरुः श्यावा लिप्ता सुप्ता सकण्टका जिह्वा ( अहृशा. ५.६-११ ) यस्य सततोष्मसु गात्रेषु भृशमौष्ण्यमहेतुकः स्वेदः स्तम्भो वोपलक्ष्यते। निर्निमित्तं बलवर्णहानिः स्वरभेदो वा ( अहृशा. ५.३९.४० ) रिष्टज्ञानो वैद्य आदरणीयः आयुर्वेदविदि वैद्ये आयुर्वेदफलं सकलं प्रतिष्ठितं । तस्माद्रिष्टज्ञानादतो भिषग्भवेत् (अहृशा. ५.१३१)

—लक्षण–न., लक्षण० भविष्यतो मृत्योर्लक्षणम् ( चइ. ८ )

—विज्ञान–न., रिष्टज्ञानम् ( असंशा. १०.३२ )

रिष्टाभास–पु., आभासरूपं रिष्टलक्षणम् ( असंशा. १०.३४ )

रीठा–वनस्पति० रीठाकरञ्जः ( रा. ९.१८६ )
–करञ्ज–पु., वनस्पति० करञ्जभेदः तद्गुणाः– तिक्तः कटुरुष्णः स्निग्धो वातकफघ्नः कुष्ठकण्डूतिविषविस्फोटनाशनः ( रा. ९.१८६ )
हिं.—रिठा.
म.—रिठा, रीठा.
बं.—बारारिठा.
ता.—पूनन कोट्टाई.
फा.—राथोह.
रीति–स्त्री., कृत्रिमधातु० पित्तलम् जसदम् (चसू. ५.७४)
–कुसुम–न., खनिज० पुष्पाञ्जनम् ( ध. ३.१६२ )
–ज–न., खनिज० पुष्पाञ्जनम् ( ध. ३.१६२ )
–पुष्प–न., खनिज० पुष्पाञ्जनम् ( ध. ३.१६२ )
रीतिक–न., खनिज० पुष्पाञ्जनम् ( रा. १३.२२४ )
(रीतिका)–स्त्री., कृत्रिमधातु० पित्तलम् ( ध. ६.१८ )
रुक्–स्त्री., लक्षण० वेदना (चसू. २८.१७)
रुक्म–न., खनिज० सुवर्णम् ( ध. ६.१ )
वनस्पति० नागकेसरम् ( रा. ६.७४ )
–लोह–न., खनिज० तीक्ष्णलोहम्, सुवर्णसदृशसारलोहम् ( र. २८.४८-५१ )
–सार–खनिज० सुवर्णस्य प्रसादभागः ( सुशा. ४.२६-२७ )
रुक्मिणी–स्त्री., वनस्पति० काञ्चनक्षीरी ( रा. ५.३६५ )
रुग्ण–वि., आतुरः रोगी ( सुसू. ४२.१०(२); चसि. १.३२ )
रुचक–पु., वनस्पति० मातुलुङ्गः ( ध. ५.२३ )
न., लवण० सौवर्चलम् ( ध. २.३० )
अस्थि० दशना रुचकानि ( सुशा. ५.२० )
कण्ठभूषणम् ( चइ. १२.७७; सुउ. ३१.७ )
–भूषणा–वि., मूले धृताङ्गुलीयका ( हे. अहसू. २५.९ )
रुचि–स्त्री., भैषज्य० गोरोचना ( ध. ३.२० )
अन्नास्वादः ( चसू. १६.५ )
प्रीतिः ( अहसू. ११.३ )
–कारिणी–स्त्री., वनस्पति० द्राक्षाभेदः, काकलीद्राक्षा ( रा. ११.७९ )
–द–वि., रुचिकारकम् ( अहसू. ४.२९ )
–रञ्जन–पु., वनस्पति० शिग्रुः ( रा. ७.६२ )
रुचिर–न., खनिज० रौप्यम् ( ध. ६.५; रा. १३.७ )
वनस्पति० लवङ्गम् ( रा. १२.८४ )
मूलकम् ( रा. ७.५१ )
( रुचिरा )–स्त्री., भैषज्य० गोरोचना ( ध. ३.२० )
–फला–स्त्री., वनस्पति० मधुर-बिम्बी ( रा. ७.२०४ ) द्र० 'बिम्बी',
रुचिष्य–न., वनस्पति० मूलकम् ( ध. ४.३३ )
रुच्य–पु., वनस्पति० कतकम् ( रा. ११.२३५ )
जीरकम् ( ध. २.६६ )
धान्य० व्रीहिः ( रा. १६.७८ )
न., बीज० निर्मलीबीजम् ( र. १७.४८-५० )
( रुच्या )–स्त्री., वनस्पति० कृष्णजीरकः ( रा. ६.१०४ ) द्र० 'जीरक'
–कन्द–पु., वनस्पति० सूरणः ( रापरि. ७.६ )
रुच्यक–न., लवण० सौवर्चलम् ( रा. ६.३८ )
रुज्–स्त्री., रोगः ( अहसू. १२.४९ ).
रुजा, पीडा ( र. २.३ )
लक्षण० वेदना ( चसू. २८.१७ )
वनस्पति० कुष्ठम् ( सुउ. ४२.२९ )
रुजा–स्त्री., वनस्पति० कुष्ठम् ( ध. ३.४९ )
लक्षण० वेदना ( सुनि. ९.१०-११ )
–कर–वि., वेदनाकरः (सुशा. ६.१४; असंसू. १६.१५)
वनस्पति० हिन्तालः ( अहसू. १५.२१ )
–सह–पु., वनस्पति० धन्वनः ( रापरि. ९.२० )
रुजापह–वि., रुजानाशकः ( सुचि. २४.३१ )
पु., वनस्पति० धन्वनः ( रापरि. ९.२० )
रुज्जा–स्त्री., क्षुद्ररोग० कपालगतोऽयम्, इन्द्रलुप्तम् ( असंउ. २७ )
रुज्या–स्त्री., क्षुद्ररोग० इन्द्रलुप्तम् ( सुनि. १३.३३-३४)
रुणशालि–पु., वनस्पति० व्रीहिः ( रा. १६.१०४ )
रुणाली–स्त्री., वनस्पति० व्रीहिः ( रा. १६.१०४ )
रुदन्तिका–स्त्री., वनस्पति० रुदन्ती ( र. २०.६८-७४ )
रुदन्ती–स्त्री., वनस्पति० तद्गुणाः– कटुस्तिक्तोष्णा, रसायनी, कफघ्नी, क्षयकृमिरक्तपित्तश्वासमेहहारिणी ( रापरि. ५.१५; र. ४.६८ )
रुदित–न., रोदनम् ( सुशा. ९.५ )
रुद्ध–वि., प्रतिहतम् ( असंशा. १२.११ )
–गुद–पु., न., क्षुद्ररोग० सन्निरुद्धगुदम् ( असंउ. ३६ )
–मणिक–पु., रोग० निरुद्धमणिः (असंसू. ३४.१३)
–शब्द–पु., लक्षण० रुद्धशब्दोच्चारणम् (सुसू. २९.४३)
रुद्र–पु., देवताविशेषः (सुशा. ४.७६ )
एकादशो भागः ( र. ४.५० )

**( रुद्रा )**–स्त्री., वनस्पति० रुद्रजटा (रापरि. ३.२४)

**( रुद्राणी )**–स्त्री., वनस्पति० रुद्रजटा ( रापरि. ३.२५ ) द्र० 'रुद्रा'.

**–कोप**–पु., रुद्रस्य क्रोधः ( चचि. ३.१४ )

**–गण**–पु., देवता० शिवगणाः येषामपचितिरपस्मारशमनी ( सुउ. ६१.२६ )

**–ज**–पु., खनिज० पारदः ( रा. १३.४२ )

**–जटा**–स्त्री., वनस्पति० तद्गुणाः– कटुः श्वासकासहृद्रोगनाशिनी, भूतरक्षोनिबर्हिणी नाम भूतराक्षसनशिनी ( रापरि. ३.२४ )

हिं.—इशरमूल.

**म.—सापसन्धि.**

गु.—रुहिमूला.

बं.—इशरमूल.

ता.—पेरुमरिन्दु.

फा.—झखन्दहिन्दी.

**–पत्नी**–स्त्री., वनस्पति० अतसी ( ध. ६.११४ )

**–पूजा**–स्त्री., शिवपूजनम् ( सुउ. ६१.२६ )

**–भाग**–पु., रोगिक्रीतस्य द्रव्यस्य मूल्याद्य एकादशांशो वणिजा वैद्याय दीयते, स रुद्रभागः इति कथ्यते ( र. ८.३ )

**–रेतस्**–न., खनिज० पारदः ( ध. ६.३७ )

**–लता**–स्त्री., वनस्पति० रुद्रजटा (रापरि ३.२४ ) द्र० 'रुद्रा'.

**रुद्रवत्**–पु., वनस्पति० देवदारुः ( रा. १२.१०३ )

**रुद्रांश**–पु., एकादशभागः ( र. १२२.२४ ) द्र० 'रुद्रभाग'.

**रुद्राक्ष**–पु., वनस्पति० स्वनामख्यातः (रापरि .११.१५) अम्ल उष्णो वातघ्नः कफघ्नः रुच्यः शिरोर्तिशमनः भूतग्रहनाशनश्च ( रापरि. ११.१६ )

**रुद्रोपमा**–वि., रुद्रसदृशम् (र. १२.१०४)

**रुधिर**–न., रक्तम् ( सुसू. १४.४४ )

वनस्पति० कुङ्कुमम् ( ध. ३.१२; चसू. ४.१८ )

**–स्राव**–पु., रक्तस्य स्रवणम् ( सुनि. ११.१५-१६ )

**रुधिरावसेचन**–न., उपक्रम० रक्तावसेचनम् (असंसू. ३६.१८ )

**रुधिरोक्षित**–वि., रक्तप्रोक्षितः ( असंशा. १२.२३ )

**रुबु**–पु., वनस्पति० रक्तैरण्डः द्र० 'एरण्ड' (ध. १.२९६ )

**रुबुक**–पु., वनस्पति० रक्तैरण्डः द्र० 'एरण्ड' (ध. १.२९६ )

**रुरु**–पु., आनूपपशु० बहुशृङ्गो हरिणः (चसू. २७.३९) अयं शरदि शृङ्गत्यागी, तन्मांसगुणाः– मधुरं, कषायानुरसं, गुरु, वातपित्तोपशमनं, शुक्रविवर्धनम् ( सुसू. ४६.९९ )

पशु० रोहिणः (ध. परि. ६.३४ )

**–पित्त**–न., भैषज्य० रुरुहरिणस्य पित्तम्, नेत्ररोगेषूपयुज्यते ( असंउ. १६ )

**रुषित**–न., क्रोधः ( सुचि. ४०.१३ )

**रुहा**–स्त्री., वनस्पति० श्वेतदूर्वा ( ध. ४.१४४ ) द्र० 'दूर्वा'

वनस्पति० मांसरोहिणी ( ध. ४.९४ )

समङ्गा, ( जज्जटः चचि. ३.२६७ )

वृक्षरुहा ( चक्र. चचि. ३.२६७ )

**–पत्र**–न., शाक० उदग्रशाकम् (चक्र.चचि.१४.१२४)

**रूक्ष**–वि., गुण० रौक्ष्यम् वीर्यसंज्ञको गुणः, स्निग्धविपरीतगुणो विशेषात् स्तम्भनः खरश्च ( सुसू. ४६.५१६ ) तैजसद्रव्यगुणो वायुगुणभूयिष्ठः श्लेष्मघ्नः, चक्षुषा ग्राह्यः ( सुसू. ४१.११ ) शोषणे शक्तिः ( हे. अहृसू. १.१८ ) निर्द्रवं निःस्नेहं शोषणं च द्रव्यम् ( र.१३.१ )

लक्षण० यद्युक्तः अस्वेद्यो भवति ( चसू. १४.१६ )

न., वनस्पति० मरिचम् ( रा. ६.१३५-३७ )

पु., वनस्पति० धन्वनः ( रापरि. ९.२० )

मकुष्ठकः ( रा. १६.१४४ )

**( रूक्षा )**–स्त्री., वनस्पति० दन्ती ( रा. ६.३३८)

**–गन्धक**–पु., निर्यास० गुग्गुलुः (रा. १२.१८४)

**–च्छवि**–वि., लक्षण० अस्निग्धकान्तिः ( सुउ. ६२.८ )

**–ज्वर**–पु., रौक्ष्यप्रधानो ज्वरो, वातज्वर इत्यर्थः ( र. १६.६१-६४ )

**–दर्भ**–पु., वनस्पति० शरपत्रः ( रा. ८.२०९ )

**–सात्म्य**–वि., रूक्षं यस्योपशेते सः (चवि.८.११८)

**–स्वेद**–पु., उपक्रम० स्वेदभेदः, अस्नेहः स्वेदः ( चचि. १७.८५ ) द्र० 'स्वेद'

**रूक्षण**–वि., रौक्ष्यं खरत्वं वैशद्यं यत् कुर्यात्तद्धि रूक्षणम् ( चसू. २२.१० )

न., स्नेहविपरीतं कर्म ( चसू. १३.५३ )

**रूक्षणात्मक**–पु., वनस्पति० करालः ( ध. ६.१०९ )

**रूक्षाग्नि**–वि., रूक्षगुणभूयिष्ठो वातदुष्टाग्निः ( पुरुषः ) ( चसि. २.१९ )

श्लेष्मशूलप्रशमनी (सुउ.४२.१११; असंसू.१६.४०) उग्रगन्धा ( र. १२.१२१-२२ )

-युज्-स्त्री., वनस्पति० वचाद्वयम्, वचा पारसीकवचा चेति ( र. २३.६५-६८ )

**वचादिगण**-पु., द्रव्यगण० वचामुस्तातिविषाभयाभद्रदारूणि नागकेशरं चेति । तद्गुणाः-स्तन्यशोधन आमातीसारनाशन आमसंसृष्टदोषाणां पाचनश्च ( सुसू. ३८.२६-२८ )

**वचाम्बु**-न., वचाक्वाथः, वातजारोचके वमनार्थमसौ योज्यः ( सुउ. ५७.६ )

**वज्जर**-न., खनिज० तीक्ष्णलोहप्रकारः ( ध. ६.२८ )

**वज्र**-न., खनिज० नरजातिकं वज्रमष्टास्रमष्टकोणमष्टफलकमष्टपार्श्वं षट्कोणमतिदेदीप्यमानं मेघयुक्तेन्द्रधनुर्वत् प्रकाशमानं तथा वारितरं नामातिलघु वर्तते (र. ४.२९) स्त्रीजातिकं वज्रमाकारेण चिपिटाकारं गोलाकारमायतं लम्बायमानं वा वर्तते । ( र. ४.३० ) नपुंसकजातिकं वज्रमाकारेण वर्तुलाकारं तथा कुण्ठितकोणाग्रभागं गुरु च वर्तते ( र. ४.३१ ) नरादिकं तद् वज्रमेकैकं प्रत्येकं चतुर्विधं वर्तते । श्वेतरक्तपीतकृष्णभेदेन तद् ब्राह्मणक्षत्रियवैश्यशूद्राभिधं वर्तते । (१) श्वेतो-विप्रः (२) रक्तः-क्षत्रियः (३) पीतो-वैश्यः (४) कृष्णः -शूद्रः । वज्रं निजनिजवर्णफलप्रदम् ब्राह्मणो ब्राह्मणस्य, क्षत्रियः क्षत्रियस्य फलप्रदं भवति । अयं साधारणो नियमः । परं श्रेष्ठश्रेष्ठजातिकं वज्रं नीचनीचवर्णफलप्रदं भवति । विप्रहीरकं सर्वत्र फलदमिति भावः ( र. ३३.३४ ) तस्य भेदाः- नर-नारी-नपुंसकभेदेन त्रिविधं वर्तते । रसेन विपाकेन वीर्येण च पूर्वं पूर्वं वज्रं श्रेष्ठं वर्तते ( र. ४.२९ ) तस्य गुणाः- आयुष्प्रदं शीघ्रमुत्तमगुणप्रदायि वृष्यं पौष्टिकं सर्वदोषप्रशमनं समस्तरोगहरं, पारदस्य बन्धनं मारणं दीपनं मृत्युहरं च ( र. ४.३५ ) तस्य प्रयोगः- त्रिगुणेन पारदेन सह वज्रं संमर्द्य ततो गुटिकीकृतं तद् योजनीयम्, मुखे धृता गुटिका चलद्दन्तविबन्धनं करोति । ( र. ४.४८-४९ ) तस्य शोधनम्-कुलत्थक्वाथे कोद्रवक्वाथे वा एकप्रहरपर्यन्तं दोलायन्त्रेण स्वेदितं वज्रं शुद्धं भवति ( र. ४.३८ ) तस्य मारणविधिः- मत्कुणरक्तेन वज्रं चतुर्वारं प्रथमतो भाव्यम् । मदनफलरसेन भूनागान् पिष्ट्वा तेन कल्केन वज्रं लिप्त्वा विंशतिवारं पुटं ( गजं वाराहं वा ) दद्यात् अनेन वज्रं भस्मीभवति- ( र. ३९.४७ ) तस्योपयोगः- पुंजातिकं पुंसि स्त्रीजातिकं स्त्रियां नपुंसकजातिकं च नपुंसके योज्यम् । एतन्नियमभङ्गात् वज्रं फलप्रदं न भवत्यन्यत्र पुंवज्रात्, पुंवज्रं सर्वत्रैव योजनीयम् ( र. ४.३२ )

हि.—हिरा.

म.—हिरा.

गु.—हिरो.

बं.—हिरे.

धातु० ( चचि. ७.७२ )

वनस्पति० कोकिलाक्षः ( रापरि. ४.४९ )

कुशः ( रा. ८.२०७ )

वालकम् ( ध. १.४७ )

स्नुही ( र. २०.१५९ )

खनिज० वैक्रान्त ( ध. ६.४४ )

रत्न० विषापहः ( चचि. २३.२५२; सुसू. ४६.३२९-३० )

हीरकम् ( र. २.५५-५६; ध. ६.५५ )

चतुर्विधादभ्रकादन्यतमम् ( र. २.५ )

**( वज्री )**-स्त्री., वनस्पति० स्नुही ( र. २१.९२ ) अस्थिसंहारिका ( र. २४.१०७ )

-कण्टक-पु., वनस्पति० स्नुक्; सेहुण्डः ( ध. १.२३५ )

कोकिलाक्षः (रापरि. ४.४८ )

-कन्द-पु., वन्यः सूरणः (र. २.१०५ )

-कन्दक-पु., सूरणः, शूकरकन्दाख्यो वा ( र. २९.८९ )

-कपाट-पु., पारदयोग० ग्रहणीगदहरः ( र. १६.४८ )

-कारक-न., भैषज्य० व्याघ्रनखम् ( ध. ३.६० )

-क्षार-पु., भैषज्य० सामुद्रसैन्धवकाचयवक्षारसौवर्चलटंकणयुक्तः, अयं सर्वोदरगुल्मशोफशूलानां नाशकः ( र. १९.२६-३१ )

-तैल-न., सर्वान्कुष्ठान्मर्दनान्नाशयेत् ( र, २०.१५५-५९ )

-द्रावणका-स्त्री., मूषाविशेषः ( र. १०.१३-१४ )

-धर-पु., पारदयोग० पारदगन्धकताम्राभ्रकभस्मादियुक्तः पक्तिशूलादिनाशनः ( र. १६.१०५ )

-धार-पु., पारदयोग० पारदवज्राभ्रकसुवर्णादियुक्तोऽयं सर्व कुष्ठ नाशकः ( र. २०.१४० )

–पञ्जर–पु., पारदयोग० व्याधिवार्धक्यमृत्युप्रभृतिहरः (र. ३०.८४-८७)
–पात्र–वज्रमयं पात्रं, रागखाण्डवसट्टकान् वज्रवैडूर्यविचित्रेषु पात्रेषु निदध्यात् (असंसू. १०.३६)
–पुष्पा–स्त्री., वनस्पति० शतपुष्पा (रा. ४.२)
–प्रोक्ता–स्त्री., वनस्पति० सुधा (इ. असं. ३.८)
वज्रकन्दः (सुउ. ६०.४८)
–बीजक–पु., वनस्पति० लताकरञ्जः (रा. परि. ८.२४)
–मूली–स्त्री., वनस्पति० माषपर्णी (रा. ३.१७१)
–मूषा–स्त्री., मूषाविशेषः (र. १०.१०)
–रस–पु., पारदयोग० क्षयनाशनः (र. १४.६८-६९)
–लता–स्त्री., अस्थिसन्धाना (र. २८.१३)
–वल्ली–स्त्री., वनस्पति० अस्थिसन्धाना, त्रिचतुष्कोणकाण्डा सूक्ष्मबहुपर्वका वृक्षोपर्युत्पद्यमाना ओषधिः (र. ४.७४)
–वृक्ष–पु., वनस्पति० स्नुक् (रा. ८.३५६)
–शल्य–स्त्री., वनस्पति० कुटुम्बिनी (रा परि. ५.२१)
–शेखर–पु., पारदयोग० क्षयकुष्ठहरोऽयं मासं यावत् मात्रासेवितः (र. २.७४)

**वज्रक**–न., खनिज० वैक्रान्तम् (ध. ६.४४)
भैषज्य० लवणम् (रा. ६.५५) गुणाः–उष्णं तीक्ष्णं रोचनं सरं गुल्मोदरविष्टम्भशूलहरं च (रा. ६.५५)
सिद्धसर्पि० इदं सर्पिः विसर्पज्वरकामलास्रकुष्ठापहम् (असंचि. २१)
–क्षार–खनिज० वज्रकम् (रा. ६.५५)
–तैल–न., सिद्धतैल० कुष्ठचिकित्सार्थम् (सुचि. ९.५४-५७)

**वज्राभिधाना गुटिका**–स्त्री., योग० पाण्डुरोगहृद्रोगगलरोगगरोदरासृग्दरभगंदरगुल्मवर्ध्मशुक्रमूत्रदोषहरा (असंचि. १८)

**वज्रास्थिशृङ्खली**–स्त्री., वनस्पति० कोकिलाक्षः (रापरि. ४.४८)

**वज्रिणी**–स्त्री., वनस्पति० वज्री (रा. २८.५८-५९)

**वञ्चना**–स्त्री., धूर्तता (र. ७.३५)

**वञ्जुल**–पु., वनस्पति० वेतसः (ध. ५.११६, (सुचि. ५.८; असंसू. १६.३५; अहसू. १५.४१)
–द्रुम–पु., वनस्पति० अशोकः (रा. १०.२७०)

**वट**–पु., वनस्पति० (ध. ५.७६) गुणाः–कषायो मधुरः शीतो रूक्षः स्तम्भनः कफपित्तघ्नस्तृष्णाच्छर्दिमूर्च्छारक्तपित्तज्वरदाहमोहव्रणशोफहरः (ध. ५.७६)
हिं.—बड.
म.—वड.
गु.—वड.
बं.—बट.
निष्प्ररोहो वटः (चचि. ३.२५८; असंसू. १५.३३)
न्यग्रोधः (र. २.२७-२८)
अस्य काष्ठं दन्तपवनार्थमुपदिष्टम् (अहसू. २.२)
(वटी)–स्त्री., वनस्पति० नदीवटः (रा. ११.११६)
गोलाकारा गुटिका (र. २.७४)
–त्वच्–स्त्री., वटत्वचा, कषायोऽस्य योनिरोगेषु सेचनार्थमुपयुज्यते (असंउ. ३९)
–पत्र–पु., वनस्पति० सितार्जकः (रा. १०.८५)
कुठेरकः (ध. ४.५४; अहसू. २४.१८)
–पत्रा–स्त्री., वनस्पति० वृत्तमल्लिका (रा. १०.२२७)
मल्लिका (रापरि. १०. २३)
–पत्री–स्त्री., पाषाणभेदकः (रा.५.२११)
–प्रवाल–पु., वटस्य कोमलपत्रम् (सुचि. १७.३५-३६)
–प्लव–पु., वनस्पति० प्लक्षः (ध. ५.८१)
–बीज–न., वटस्य बीजम् (असंचि. ४)
–शुङ्ग–पु., अविकसितनववटपल्लवः (चचि. ४.८६-८७)
पुंसवनद्रव्येष्वेकं द्रव्यम् (सुशा. २.३२ असंशा. १.६१)
वटाङ्कुरः (इन्दुः असंउ. ४२)
–सौगन्धिक–पु., खनिज० गन्धकः (रा. १३.१६६; ध. ३.११४) कटुः उष्णो लोहसंहारः सूतहननो रसायनस्त्वग्दोषकुष्ठविसर्पहरः (ध. ३,११४)
–हन्– पक्षि० प्रतुदवर्गीयोऽयम् (चसू. २७.५१; असंसू. ७.७२-७५)

**वटक**–पु., वनस्पति० नदीवटः (रा.११.११६)
पिष्टकासमर्दककूष्माण्डकमूलकादिकृतः मुद्गादिकृतः वटकः (सुसू. ४६.२९५)
मान० कोलः स च निष्कद्वयमितः (असंक. ८; र. ११.४)
गुटिका, गुटी, मोदकः (र. ८.२)

**वटभ**–पु., कीट० सौम्यकीटः श्लेष्मप्रकोपणः (असंउ. ४३)

**वट्टलोह**–न., खनिज० वर्तलोहम् (ध. ६.३३)

**वट्टलोहक**–न., खनिज० वर्तलोहम् (रा. १३.३४)

**वडवा**-स्त्री., अश्वा ( चइ.१२.७५ )
**-मुख**-पु., वडवानलः ( असंशा. ५.५६ )
**-(मुखी)**-स्त्री., रेवतीग्रह० ( काकरेवतीक. ५६ )
योग० श्लेष्मजव्याधिनाशिनी सर्वरोगहरा च ( र. १६.१३८ )

**वडवाग्नि**-पु., पारदयोग० पारदादिभस्मयुतोऽयं स्थौल्यं तुन्दं च नाशयति ( र. १८.१९३-९४ )
वडवानलः, समुद्रोदरमधिष्ठितोऽग्निः ( र. १६.१२५ )
तीव्राग्निः ( र. २७.७८ )

**वडवाग्निमल**-पु., भैषज्य० अग्निजारः ( रा. ६.१४ )

**वडवानल**-पु., बिड० पारदयोग० पारदादिभस्मयुतोऽयं धनुर्वातदण्डवातशृङ्खलाकम्पवातानां नाशकः ( र. २१.१४५-४८ )

**वडवानलगुटिका**-स्त्री., योग० हरितालमाक्षिकस्वर्णादियुक्तोऽयं शूलकृम्यग्निवैषम्यग्रहणीशोथपाण्डुगुल्मार्शोवातकफरोगहरः श्वासकासज्वराणां नाशकः ( र. १८.१६२-६५ )

**वत्सक**-न., वनस्पति० कुटजः 'बृहत्फलः श्वेतपुष्पः स्निग्धपत्रः पुमान् भवेत्। श्यामा चारुणपुष्पा स्त्री फलवृन्तैस्तथाऽणुभिः ( चक. ५.४; ध. २.१३ )
वनस्पति० वत्सकबीजभूतः इन्द्रयवः ( रा. ९.२१ )
खनिज० पुष्पकासीसम् ( ध. ३. १२५; अहृसू. १०.२८ )
**-कल्प**-पु., अध्यायसंज्ञा० ( चक. ५.१ )
**-फल**-न., वनस्पति० इन्द्रयवः कुष्ठे आलेपनार्थमुपयुक्तम् ( चचि. ७.१३२; असंउ. ४० )
**-बीज**-न., वनस्पति० इन्द्रयवः (ध. २.१५)

**वत्सकादिगण**-पु., द्रव्यगण० वत्सकमूर्वाभार्ङ्गीकटुकामरिचं घुणप्रिया च गण्डीरम्। एला पाठाऽजाजीकट्वङ्गफलाजमोदसिद्धार्थवचाः इत्येष वत्सकादिगणो हि वातार्शःप्रभृतिगदान् निहन्ति ( अहृसू. १५.३३-३४ )

**वत्सनाभ**-पु., विषविशेषः, तद्गुणाः-अतिमधुर ईषदुष्णः पित्तसंशोधनो, वातकफघ्नः, कण्ठरुजाकर्णरुजासंनिपातहरः ( ध. ७.१२८ ) कन्दविषम्, स्निग्धघनगुरुकर्मण्यगुणम् ( असंउ. ४८; सुक. २.५; र. १०.८५ )
हिं.—बचनाग.
**म.—बचनाग.**
गु.—वछनाग.
बं.—अमृतविष.

**वत्सर**-पु., संवत्सरम् ( अहृसू. १९.१८ )

**वत्सादनी**-स्त्री., वनस्पति० गुणाः-मधुरा, वृष्या, संतर्पणी, रुच्या, पित्तनुत्, दाहास्रदोषविषदोषविनाशिनी ( रापरि. ३.३४; चसू. २७.१०६ )
गुडूची ( सुसू. ३९.७ ) गुणाः-उष्णा, तिक्ता, वातप्रशमनी ( सुसू. ४६.२५४-५५; ध. १.१, र. १७.१३८-३९; असंसू. ७.१४९ )

**वदद्ग्धक**-न., वनस्पति० कत्तृणम् ( रा. ८.१०६ )

**वदन**-न., मुखम् ( सुशा. ५.१० )
**-जिह्मत्व**-न., मुखवक्रता ( चसि. ९.६ )

**वदनोपचय**-पु., मुखपुष्टिः ( चसू. ५.७८ )

**वदान्य**-वि., उदारः, दानशीलः, ( र. ७.३४ )

**वद्रपञ्चमूल**-न., महत् पञ्चमूलम्, बृहत्पञ्चमूलम् ( असंउ. ४ )

**वध**-पु., अद्रव्यभेषजेष्वेकोपायः। वधोऽत्र न साक्षान्मृत्युरपितु वधस्याभिनयो वधभयं वा (चवि. ८.८७)
उन्मादोपक्रमविशेषः ( चनि. ७.८; अहृसू. ११.४५)

**वधू**-स्त्री., वनस्पति० स्पृक्का ( ध. ३.६२ )
सठी ( ध. १.६१ )
प्रियङ्गुः सारिवा वा ( र. २१.१२९ )

**वध्र**-न., अनुयन्त्र० ( अहृसू. २५.४० )

**वन**-न., भैषज्य० जलम् ( रा. १४.३१७ )
**-कदली**-स्त्री., वनस्पति० काष्ठकदली (रा.११.११०)
**-कन्द**-पु., वनस्पति० सितसूरणः ( रापरि. ७.८ )
धरणीकंदः (रापरि.७.४२)
**-कोद्रव**-पु., वनस्पति० कोद्रवः ( ध. ६.८६ )
**-खण्डा**-स्त्री., वनस्पति० पद्मिनी ( ध. ४. १५७ )
**-गोक्षीरज**-पु., निर्यास० वंशलोचनाभेदः, वनस्पति० पलाशगन्धा ( रा. ६.८९ )
**-चन्द्रिका**-स्त्री., वनस्पति० मल्लिका (रा. १०.२२५)
**-च्छाण**-न., वन्योपलम् ( र. ४.२४.२५-२६ )
**-ज**-पु., वनस्पति० नागचम्पकः ( रा. १०.२४२ )
तुम्बुरुः ( ध. २.४२ )
सितसूरणः ( रा. ७. परि. ८ )
वनबीजपूरकः ( रा. ११.३३ )
**( -जा )**-स्त्री., वनस्पति० मिश्रेया ( रा. ४.५ )
मुद्गपर्णी ( ध. १.१३८ )
गन्धपलाशः ( रा. ६.८९ )
कासघ्नी ( ध. १.९८ )
अश्वगन्धा ( रा. ४.४०० )
अरण्यकार्पासी ( रापरि. ४.४७ )
शेफालिका ( ध. ४.८३ )

**–जमूर्धजा**–स्त्री., भैषज्य० कर्कटशृङ्गी (ध. १.८६)

**–तिक्तक**–न., शाक० पथ्यसुन्दरम्; कफपित्तहरं तिक्तं शीतं कटुविपाकि च (चसू. २७.९५)
वनस्पति० वत्सकः (अहसू. ६.७७)

**–दमन**–पु., वनस्पति० दमः (रा. १०.१२२)

**–दीप**–पु., वनस्पति० चम्पकः (रा. १०.२४०)

**–पुष्पा**–स्त्री., वनस्पति० शतपुष्पा (रा. ४.३)

**–पुष्पोत्सव**–पु., वनस्पति० आम्रः (ध. ५.२)

**–पूरक**–पु., वनस्पति० वनबीजपूरकः (रा. ११.३३)

**–प्रिय**–न., वनस्पति० त्वक् (ध. २.५०)

**–बर्बर**–पु., वनस्पति० शालुकः (रा. १०.८६-१४५)

**–बर्बरिका**–स्त्री., वनस्पति० सुमुखः (रा. १०.८८-१४६)

**–बीज**–पु., वनस्पति० वनबीजपूरकः (रा. ११.३३)

**–बीजपूरक**–पु., वनस्पति० मातुलुङ्ग० (रा. ११.३३)

**–मल्लिका**–स्त्री., वनस्पति० ग्रैष्मी (रा. १०.२३६)

**–मालिका**–स्त्री., वनस्पति० ग्रैष्मी (ध. ५.१४०)

**–मालिनी**–स्त्री., वनस्पति० वाराही (ध. ४.९२)
ग्रैष्मी (ध. ५.१४०)

**–मुद्ग**–पु., वनस्पति० मकुष्ठका (ध. ६.९२)
वैदलभेदः मुद्गिका (सुसू. ४६.२७)

**–(मुद्गा)**–स्त्री., वनस्पति० मुद्गपर्णी (रा. ३.१७५)

**–मेथिका**–स्त्री., वनस्पति० मेथिकाविशेषः (ध. ६.११३)

**–मोचा**–स्त्री., वनस्पति० काष्ठकदली (रा. ११.११०)

**–रम्भा**–स्त्री., वनस्पति० गिरिकदली (रा. ११.११२)

**–लक्ष्मी**–स्त्री., वनस्पति० कदली (रा. ११.१०७)

**–वल्लरी**–स्त्री., वनस्पति० निश्रेणिका (रापरि. ८.५०)

**–वासक**–पु., वनस्पति० शाल्मलीकन्दः (रापरि. ७.४६)

**–वासिन्**–पु., वनस्पति० शाल्मलीकन्दः (रापरि. ७.४६)
शुभ्रालुः (रा परि. ७.३३)

**–वासी**–स्त्री., वनस्पति० ऋषभः [रा. ५.१५८)
वाराही (रा. ७.१३५)
मुष्ककः (रा. ११.२२१)

**–विलासिनी**–स्त्री., वनस्पति० शङ्खपुष्पी (ध. ४.११३)

**–वृन्ताकी**–स्त्री., वनस्पति० बृहती (रा. ४.१२१)

**–शालि**–स्त्री., वनस्पति० व्रीहिः (रा. १६|९९)

**–शृङ्गाटक**–पु., वनस्पति० क्षुद्रगोक्षुरः (रा. ३.१३२)

**–सूरिका**–स्त्री., वनस्पति० कपिकच्छूः (रा. ३.२०२)

**–स्था**–स्त्री., वनस्पति० अश्वत्थी (रा. ११.१२२)
अत्यम्लपर्णी (रा परि. ३.३९)

**–हरिद्रा**–स्त्री., वनस्पति० शोली (रा. ७.१७)

**–हास**–पु., वनस्पति० कुन्दः (रा. १०.२५६)

**वनक**–पु., धान्य० वनकोद्रवः (चसू. २६.८४)

**वनस्पती**–स्त्री., पुष्परहितो फलद्रुमः (चक. १.८)
वनस्पति० वटः (ध. ५.७६)
वटप्लक्षपिप्पलोदुम्बरादयो वनस्पतयस्तेषां कषायः पित्तजग्रन्थौ धावनार्थमुपयुज्यते (सुचि. १८.११; असंसू. ८.६८)

**–कषाय**–पु., न्यग्रोधादिकषायः (सुचि. १२.४)

**–देवता**–स्त्री., ये वनस्पतीन् हिंसन्ति परिगृहीतानपरिगृहीतान् वा, तेषां वनस्पतिदेवता अभिक्रुध्यन्ति अग्निर्वैश्वानरो नाम, सोमः पितृमन्नाम, स्वधितिः शिवो नाम, आपो वरुणो नाम, भूमिर्निर्ऋतिर्नाम, गौर्वियन्नाम, गौः श्लोको नाम, देव पवमानो नाम, आदित्यः पूषा नाम, दिशः काष्ठा नाम, इन्द्रो वरुणो नाम, वायुः प्राणो नाम, ता वै द्वादश वनस्पनीनां देवताः। एता एव वनस्पतीन् घ्नन्तं कमपि घ्नन्ति। (काक रेवतीकल्प. ६९)

**–प्रसव**–पु., उदुम्बरादिक्षीरवृक्षादीनां नूतनपल्लवः। गुणाः– कषायः शीतः संग्राही रक्तपित्तातिसारिणां शस्तः (सुसू. ४६.२४९)

**–सिद्धघृत**–न., स्नेह० क्षीरिवृक्षसिद्धघृतम्, कफजतिमिरे तर्पणार्थमुपयुज्यते (सुउ. १७.४२)

**वनान्तपवन**–पु., आम्रादिवाटिकासमीपवातः अस्य सुखस्पर्शेन मद्यपानजदाहस्योपशमो भवति (सुउ. ४७.५७)

**वनाम्र**–पु., वनस्पति० क्षुद्राम्रः (रा. ११.६)

**वनार्द्रका**–स्त्री., वनस्पति० वनजार्द्रका. (रा परि. ७.२१)

**वनितास्तन्य**–न., स्त्रीदुग्धम् मानुषदुग्धमामं सद् हितम् (असंसू. ६.६२)

**वनेज्य**–पु., वनस्पति० राजाम्रः (रा. ११.११; पृ. १७०)
**वनोद्भव**–पु., वनस्पति० तिलाः ( ध. ६.१२२ )
**( वनोद्भवा )**–स्त्री., वनस्पति० मुद्गपर्णी (रा. ३.१७५)
अरण्यकार्पासी ( रापरि. ४.४७ )
वनबीजपूरकः ( रा. ११.३३ )
**वनौकस्**–पु., मर्कटः ( ध. परि. ८ )
**वन्दका**–स्त्री., वनस्पति० वृक्षादनी ( ध. ४.९७ )
**वन्दनीय**–पु., वनस्पति० पीतो भृङ्गराजः (रा. ४.२१)
**(वन्दनीया)**–स्त्री., भैषज्य० गोरोचना ( ध. ३.२० )
**वन्दाक**–पु.. वनस्पति० वृक्षादनी
( इंदुः, असंउ. रा. ६.१४१ )
**वन्ध्य**–वि., अनपत्यकः ( पुमान् ) ( र. २२.३ )
**(वन्ध्या)**–स्त्री., निरपत्या स्त्री (सुक. ६.११) आदिवन्ध्या रक्तवन्ध्या वातवन्ध्या पित्तवन्ध्या श्लेष्मवन्ध्या संनिपातवन्ध्या भूतवन्ध्या देववन्ध्याऽभिचारवन्ध्या चेति नव वन्ध्याः ( र. २२.३ )
वनस्पति० वन्ध्यकर्कोटकी ( रा. ३.२७३, र. २०.५४-५५ )
**–कर्कोटकी**–स्त्री., लता० तिक्ता, कटुवी कफापहोष्णा, स्थावरादिविषनाशिनी रसायनी चेति (र.१७.१६) त्रपुविशेषः ( ध. १.१८५ )
**–कर्कोटी**–स्त्री., वनस्पति० कर्कोटकी (रा. ७.२७६ )
**वन्ध्यात्व**–न., स्त्री., रोग० अशीतिवातरोगेष्वेकः अनपत्यता ( कासू. २७.१९-२९ )
**वन्य**–पु., वनस्पति० सितसूरणः ( रा. ७; परि. ८ )
महानलः ( ध. ४.१४२ )
त्वक् ( रा. ६.७६ )
परिपेलम् ( ध. ३.५५ )
गृष्टिः (रा. ७.१३५ )
कैवर्तमुस्तकम् ( चक. चसू. ३.८ )
वनाकम् ( चचि. ३.२५८; अहृसू. १५.६ )
**( वन्या )**–स्त्री., वनस्पति० राजखर्जूरी ( रा. ११.६८ )
मुस्ता ( रा. ६.५९ )
मिश्रेया ( रा. ४.६ )
गन्धपलाश ( रा. ६.८९ )
चूडामणिः ( रा. ३.४७ )
मुद्गपर्णी ( रा. ३.१७५ )
कुरण्टः ( रा. १०.४१९ )
गोपालकर्कटी ( रा. ३.२६४ )
**–कुक्कुट**–पु., ताम्रचूडः वनजातः कुक्कुटः, गुणाः–स्निग्धः उष्णो वृष्यः स्वेदस्वरबलवहो बृंहणो गुरुर्मयूरतुल्यगुणश्च ( सुसू. ४६.६५-६६ )



**–कुलत्थ**–पु., धान्य० गुणाः–आनाहमेदो–गुदकील–हिक्काश्वासापहः शोणितपित्तकृच्च, कफस्य हन्ता, नयनामयघ्नश्च ( सुसू. ४६.३८ )
**–जीर**–पु., वनस्पति० बृहत्पाली ( ध. २.७२ )
**–वृक्ष**–पु., वनस्पति० पिप्पलः ( ध. ५.८० )
**वन्यादिपिप्पली**–स्त्री., वनस्पति० चविका (रा. ६.१२२) गुणाः–उष्णा, तीक्ष्णा, रुच्या, दीपनी
( रा. ६.१२२ )
**वन्यारिष्टा**–स्त्री.; वनस्पति० शोली ( रापरि. ७.१७ )
**वपाटिका**–स्त्री., रोग० क्षुद्ररोग० अवपाटिका
( सुचि. २०.४२ )
**वपावहन**–न., मेदःस्थानम् ( चशा. ७.१० )
वपोदरस्था स्निग्धवर्तिका, यां जनास्तैलवर्तिकेत्याहुः ( चवि. ५.८ )
**वपुस्**–न., शरीरम् ( सुचि. २४.५३ )
**वमथु**–पु., लक्षण० छर्दिः ( सुउ. ५१.८; सुसू. ४६.५०४; अहृसू. २.४ )
**वमन**–न., उपक्रम० यदूर्ध्वभागेन मुखेन दोषहरणं करोति ( चक. १.४ ) वमनं श्लेष्महराणां श्रेष्ठम् ( चसू. २५.४० ) प्रशस्तिः–श्लेष्मणि वमनं कुर्यात् संयोगे च कफाधिके । आमाशयगताऽन्नशल्यनिर्हरणार्थमुपयुज्यमाना चिकित्सा ( सुसू. २७.४ ) वमनार्हाः–" नवज्वरातिसाराधःपित्तासृग्राजयक्ष्मिणः । कुष्ठमेहापचीग्रन्थिश्लीपदोन्मादकासिनः । श्वासहल्लासवीसर्पस्तन्यदोषोर्ध्वरोगिणः । अवाम्या–गर्भिणी, रूक्षः क्षुधितो नित्यदुःखितः । बालवृद्ध–कृशस्थूलहृद्रोगिक्षतदुर्बलाः । प्रसक्तवमथुप्लीहतिमिरक्रिमिकोष्ठिनः । ऊर्ध्वप्रवृत्तवाय्वस्रदत्तबस्तिहतस्वराः । मूत्राघात्युदरी गुल्मी दुर्वमोऽत्यग्निरर्शसः ॥ उदावर्तभ्रमाष्ठीलापार्श्वरुग्वातरोगिणः । ऋते विषगराजीर्णविरुद्धाभ्यवहारतः । प्रसक्तवमथोः पूर्वे प्रायेणामज्वरोऽपि च । धूमान्तैः कर्मभिर्वर्ज्याः सर्वैरेव त्वजीर्णिनः ( अहृसू. १८.१-७ ) विधिः–अथातुरं स्निग्धं स्विन्नमभिष्यन्दिभिराहारैरनवबद्धदोषमवलोक्य श्वो वमनं पाययिताऽस्मीति संभोजयेत्तीक्ष्णाग्निं बलवन्तं बहुदोषं महाव्याधिपरीतं वमनसात्म्यं च । अथापरेद्युः पूर्वाह्णे साधारणे काले वमनद्रव्यकषायकल्कचूर्णस्नेहानामन्यतमस्य मात्रां पाययित्वा वामयेद्यथायोगं कोष्ठविशेषमवेक्ष्य, असात्म्यबीभत्सदुर्गन्धिदुर्दर्शनानि च वमनानि विदध्यात्, अतो विपरीतानि विरेचनानि, तत्र

सुकुमारं कृशं बालं वृद्धं भीरुं वा वमनसाध्येषु विकारेषु क्षीरदधितक्रयवागूनामन्यतममाकण्ठं पाययेत्, पीतौषधं च पाणिभिरग्नितप्तैः प्रताप्यमानं मुहूर्तमुपेक्षेत, तस्य च स्वेदप्रादुर्भावेन शिथिलतामापन्नं स्वेभ्यः स्थानेभ्यः प्रचलितं कुक्षिमनुसृतं जानीयात्, ततः प्रवृत्तहृल्लासं ज्ञात्वा जानुमात्रासनोपविष्टमाप्तैर्ललाटे पृष्ठे पार्श्वयोः कण्ठे च पाणिभिः सुपरिगृहीतमङ्गुलीगन्धर्वहस्तोत्पलनालानामन्यतमेन कण्ठमभिस्पृशन्तं वामयेत्तावद्यावत् सम्यग्वान्तलिङ्गानीति। क्षीरादयो वमनद्रव्यसंस्कृता ज्ञेया अथवा क्षीरादीन् पूर्वं पाययेत्, अनन्तरं मात्रया-वमनद्रव्यमिति (सुचि. ३३.५-७) कफे तीक्ष्णोष्णकटुकैर्द्रव्यैर्वमेत्। पित्ते स्वादुशीतैर्द्रव्यैर्वमेत् स्निग्धाम्ललवणैर्वायुना युक्ते कफे वमेत् (अहृसू. १८.२१) मर्यादा—यावत् पित्तस्य दर्शनं स्यात्, कफस्य वा छेदोऽन्तः स्यात् तावद्वमेत्। हीनयोगे—नरः कणाधात्रीसिद्धार्थलवणोदकैरसकृद्वमेत्। सम्यग्योगे कफपित्तानिलाः क्रमेण निर्विबन्धं-निःसङ्गं प्रवर्तन्ते। अतियोगे—पुनः फेनचन्द्रकरक्तवद्वमितं भवति। सम्यग्योगेन वमिते सति मुहूर्तमाश्वास्य धूमत्रयात् अन्यतममेकं पाययेद्वैद्यः, अनन्तरं स्नेहाचारमादिशेत्। ततः सायं प्रभाते बुभुक्षित उष्णोदकेन स्नातो रक्तशाल्यन्नं भुञ्जानः पेयादिकं क्रमं भजेत्, यथा प्रधानशुध्या शुद्धो नरो द्वावन्नकालावेकस्मिन् दिने पेयां भजेत्। द्वितीयेऽह्न्येकमन्नकालं विलेपीम् आद्रियेत। तृतीये वासरे द्वावन्नकालौ विलेपीमेव। चतुर्थे दिवसे अकृतं शुण्ठीलवणाद्यसंस्कृतं यूषं, कृतं शुण्ठीलवणादिसंस्कृतं यूषं च द्वावन्नकालौ भजेत्, पञ्चमेऽह्नि प्रथमेऽन्नकाले च अमुमेव सेवेत। त्रिष्वपि कालेष्वकृतं कृतं च यूषं भजेत् विभज्य तावद् गम्यते। एवं कालत्रयं कृताकृतं रसं विभज्य भोजयेत्। सप्तरात्रेण प्रकृतिभोजनं क्रमेण सेवेत। तथैव मध्यशुद्धिशुद्धस्यावरशुद्धिशुद्धस्य च यथास्वं योजना कार्या (अहृसू. १८.२९) वमने आन्तिकी वैगिकी मानिकी लैङ्गिकी चेति चतुर्विधा शुद्धिरुच्यते। आन्तिकी शुद्धिः पित्तान्तत्वं वमनमिति मर्यादा। वैगिकी शुद्धिश्चतुर्भिर्वेगैर्जघन्यं वमनम्। यत्तु षड्भिस्तन्मध्यमम् यत्त्वष्टाभिस्तत् प्रवरम्। (चसि. १.१३-१४) मानिकी शुद्धिः विरेकादनन्तरं वमितदोषस्य प्रस्थमानमुक्तम्। लैङ्गिकी शुद्धिः सम्यग्वमनलक्षणं पित्तान्तत्वाद् बोध्यम् (चसि.१.१३) वमने मदनफलं श्रेष्ठम्, वमनावसरे तत्कषायं मृदितगालितं सूत्रोदितेन विधिना पिबेत्। तेन साधु बमेत् (अहृक. १.१-८) 'मदनमधुकलम्बानिम्बबिविशालात्रपुसकुटजमूर्वादेवदालीकृमिघ्नम्। विदुलदहनचित्राः कोशवत्यौ करञ्जः कणलवणवचैलासर्षपाश्च्छर्दनानि।' इति मदनादिगणः प्रयुज्यते (अहृसू. १५.१) मृदुकोष्ठेन क्षुद्वताऽल्पकफेन वा पीतमतितीक्ष्णं हिमं स्तोकं तथाऽजीर्णे दुर्बलेन वा पीतं वमनमधः प्रयाति। तेन इष्टहानिर्दोषप्रकोपाश्च भवन्ति। अस्यां व्यापादितं नरं स्निग्धं कृत्वा पूर्वमतिक्रमं स्मरन् वामयेत् (अहृक. ३.१-२) अतिवमतो वायुना यस्य हृदयं पीड्यते तस्मै स्निग्धाम्ललवणं दद्यात्। पित्ताधिक्ये मधुरशीतादिकं कफाधिक्ये रुक्षकटुतिक्तादिकं दद्यात्। तथाऽतिवमने रेचनं दद्यात्, शीताम्बुपरिषेचनं च कुर्यात्। फलरसैः सघृतक्षौद्रशर्करं मन्थं पिबेत् (अहृक. ३.१-३०) वमनप्रक्रिया वमतोऽन्तःप्रविष्टजिह्वायां हृद्या यूषमांसरसाः स्निग्धाम्ललवणाः कवलग्रहा हिताः, किंच तस्य पुरतः अन्ये नरा अम्लानि फलानि भक्षयेयुः उष्ण-तीक्ष्ण-सूक्ष्म-व्यवायि-विकाशीन्यौषधानि स्ववीर्येण हृदयमुपेत्य धमनीरनुसृत्य स्थूलाणुस्रोतोभ्यः केवलं शरीरगतं दोषसङ्घातमाग्नेयत्वाद् विष्यन्दयन्ति, तैक्ष्ण्याद् विच्छिन्दन्ति, स विच्छिन्नः परिप्लवन् स्नेहभाविते काये स्नेहाक्तभाजनस्थमिव क्षौद्रमसज्जन्नणुप्रवणभावादामाशयमागम्योदानप्रणुन्नोऽग्निवाय्वात्मकत्वादूर्ध्वभागप्रभावादौषधमूर्ध्वमुत्क्षिप्यते (चक. १.५) वमनप्रशस्तिः सम्यग्वमनेन के दोषाः न प्रादुर्भवन्ति ते यथा कास उपलेपःस्रोतःसु मलवृद्धिः स्वरभेदो निद्रा तन्द्राऽऽलस्यदौर्गन्ध्यं विषोपसर्गाः शीतलिकादयः कफप्रसेकः ग्रहणीरोगश्च न भवन्ति (सुचि. ३३.१२)

वनस्पति० शणः (रापरि. ४.१०)

**(वमनी)**—स्त्री., वनस्पति० शणपुष्पी (ध. १.२००; असं. रक्तपित्त चि. ३)

—द्रव्य—न., वामकं द्रव्यम् फलजीमूतकेक्ष्वाकुधामार्गवकुटजकृतवेधनफलानि। फलजीमूतकेक्ष्वाकुधामार्गवपत्रपुष्पाणि (चवि. ८.१३५) गुणाः—वमनद्रव्यं सरं सूक्ष्मं तीक्ष्णमुष्णं विकाशि च भवति। वमनद्रव्यं विरेचनगुणैः समं वर्तते। परं

प्रभावात् वमनद्रव्यस्योर्ध्वगामित्वं वर्तते
( सुचि. ३३.३३ )

**-द्रव्यविकल्पविज्ञानीय**-वि., अध्यायसंज्ञा० वमनद्रव्यविकल्पविज्ञानमधिकृत्य कृतोऽध्यायः
( सुसू. ४३.१ )

**-मात्रा**-स्त्री., वमनद्रव्यकषायमात्राः- प्रधानमध्यमाऽधमभेदात्तन्त्रान्तरोक्ताः कथ्यन्ते। यदाह चक्षुष्यः- क्वाथपाने नवप्रस्था ज्येष्ठा मात्रा प्रकीर्तिता । मध्यमा षण्मिता प्रोक्ता त्रिप्रस्था च कनीयसी
( सुचि. ३३.७ )

**-विरेचनव्यापत्सिद्धि**-स्त्री., अध्यायसंज्ञा०
( चसि. ६.१ )

**वमनीपुष्प**-न., वनस्पति० शणपुष्पी ( असंचि. ३ )

**वमनीयधूम**-पु., स्नायुचर्मखुरप्रभृतिभिः कृतो धूमः
( ड. सुउ. ६४.८२ )

**वमनोपग**-वि., वमनोपयोगि ( चसू. ४.८ )

**वमनोपगगण**-पु., द्रव्यगण० मधुमधुककोविदारककर्बुदारनीपविदुलबिम्बीशणपुष्पीसदापुष्पाप्रत्यक्पुष्पा इति दशेमानि वमनोपगानि भवन्ति (चसू. ४.४-१३) महाकषायवर्गे एको गणः ( चसू. ४.४-१३ )

**वमायिनी**-स्त्री., वनस्पति० अङ्गारवल्ली (रा. ९.१८२)

**वमि**-स्त्री., वमनम् ( र. १२.१० )

**-निग्रहणवर्ग**-पु., द्रव्यगण० लाजाम्रबदरदाडिमयवषष्टिकमातुलुङ्गसेव्यानि जाम्बवाम्रपल्लवानि वमिनिग्रहणानि मृत्स्ना च ( असंसू. १५.२८ )

**वयस्**-न., शरीरावस्थाविशेषः, तारुण्यम्, वयस्त्वेति कालप्रमाणविशेषापेक्षिणी हि शरीरावस्था वयोऽभिधीयते। तद्वयो यथास्थूलभेदेन त्रिविधम्-बालं मध्यं, जीर्णमिति। तत्र बालमपरिपक्वधातुमजातव्यञ्जनं सुकुमारमक्लेशसहमसंपूर्णबलं श्लेष्मधातुप्रायमाषोडशवर्षं, विवर्धमानधातुगुणं पुनः प्रायेणानवस्थितसत्त्वमात्रिंशद्वर्षमुपदिष्टम् मध्यं पुनःसमत्वागतबलवीर्यपौरुषपराक्रमग्रहणधारणस्मरणवचनविज्ञानसर्वधातुगुणं बलस्थितमवस्थितसत्त्वमविशीर्यमाणधातुगुणं पित्तधातुप्रायमाषष्टिवर्षमुपदिष्टम्, अतः परं हीयमानधात्विन्द्रियबलवीर्यपौरुषपराक्रमग्रहणधारणस्मरणवचनविज्ञानं भ्रश्यमानधातुगुणं वायुधातुप्रायं क्रमेण जीर्णमुच्यते आवर्षशतम्। वर्षशतं खल्वायुषः प्रमाणमस्मिन् काले, सन्ति च पुनरधिकोनवर्षशतजीविनोऽपि मनुष्याः, तेषां विकृतिवर्ज्यैः प्रकृत्यादिबलविशेषैरायुषो लक्षणतश्च प्रमाणमुपलभ्य वयसस्त्रित्वं विभजेत्
( चवि. ८.१२२ )

तत्रोनषोडशवर्षीया बालाः। ते त्रिविधाः- क्षीरपाः क्षीरान्नादा अन्नादा इति। तेषु संवत्सरपराः क्षीरपाः, द्विसंवत्सरपराः क्षीरान्नादाः, परतोऽन्नादा इति। षोडशसप्तत्योरन्तरे मध्यं वयः। तस्य विकल्पो-वृद्धिर्यौवनं संपूर्णता परिहाणिरिति। तत्र आविंशतेर्वृद्धिः आत्रिंशतो यौवनम्, आचत्वारिंशतः सर्वधात्विन्द्रियबलवीर्यसंपूर्णता, अत ऊर्ध्वमीषत्परिहाणिर्यावत् सप्ततिरिति। सप्ततेरूर्ध्वं क्षीयमाणधात्विन्द्रियबलवीर्योत्साहमहन्यहनि वलीपलितखालित्यजुष्टं कासश्वासप्रभृतिभिरुपद्रवैरभिभूयमानं सर्वक्रियास्वसमर्थं जीर्णागारमिवाभिवृष्टमवसीदन्तं वृद्धमाचक्षते ( सुसू. ३५.२९ )

पक्षी ( असंसू. ८.२३ )

**( वयः )-परिणाम**-पु., वयसः परिणतिः पक्वता वा
( सुसू. १४.१८ )

**-परीक्षा**-स्त्री., वयः कालेन कालविशेषेण परीक्षेत
( चवि. ४.८ )

**-सात्म्य**-न., वयसः सात्म्यम् ( चवि. १.२८ )

**-स्तम्भन**-वि., अवस्थाविशेषस्थापकम् (र. ५.१४५)

**-स्थ**-वि., तरुणः ( ड., सुउ. २४.२४; अहृसू. ६.६८ )

**(-स्था)**-स्त्री., वनस्पति० गुडूची ( सुउ.३६.६)

ब्राह्मी ( चवि. ८.१५१; असंसू. १५.४७ रा परि. ५.४१ )

काकोली ( ध. १.१३२ )

क्षीरकाकोली ( ध. १.१३४ )

आमलकम् ( ध. १.२१५ )

हरीतकी ( ध. १.२०५; र. २२.९६; सुउ. ३२.४)

**-स्थापन**-वि., वयः तारुण्यं स्थापयति इति यौवनकरम् ( चसू. ४.८ ) ( सु. सू. १. (७)८ )

**-स्थापनगण**-वि., द्रव्यगण० पञ्चके महाकषायवर्गे एको गणः, वयस्तरुणं स्थापयतीति ( चसू. ४.८ ) अमृताऽभया धात्रीमुक्ताश्वेताजीवन्त्यतिरसामण्डूकपर्णीस्थिरापुनर्नवा इति दशेमानि वयःस्थापनानि भवन्ति ( चसू. ४.१८ )

वर्षशतमायुःस्थापनम् ( सुसू. १.८(७) )

घृतगुणेष्वेकः, यावदेवायुः प्रमितं तावदेवायुः स्थापयत्यनाबाधम् ( सुसू. ४५.९६ )

कुङ्कुमम् ( ध. ३.१२ )

**वर**–न., वनस्पति० त्वक् ( रा. ६.७७ )
खनिज० सैन्धवम् ( अहसू. १०.२७ )
आर्द्रकम् ( ध. २.८४ )
**(वरा)**–स्त्री., वनस्पति० काकमाची (रा. ४.३६)
त्रिफला (र.१२.५१-५२;र.२.८६ अहसू.१५.३२)
गुडूची ( रा. ३.१ )
मेदा ( रा. ५.१६१ )
ब्राह्मी ( रा. ५.१४९ )
पाठा ( ध. १.७० )
हरिद्रा ( रा. ६.७९ )
विडङ्गम् ( रा. ६.१६ )
वन्ध्यकर्कोटकी ( रा. ३.२७४ )
शतावरी ( चचि. १९.६२ )
आसुत० सुरा ( ध. ६.२५५ )
**(वरी)**–स्त्री., वनस्पति० शतावरी (सुउ.१७.३४; अहसू. २०.३७; र. २०.७१ )
**–करण्डक**–पु., करण्डकः ( र. १७.८१ )
**–तरु**–पु., वनस्पति० भल्लातकः ( रा. ११.२०२ )
**–तिक्त**–पु., वनस्पति० कुटजः ( रा. ९.१९ )
निम्बः ( रा. ९.४४ )
पर्पटः ( ध. १.४५ )
**–( तिक्ता )**–स्त्री., वनस्पति० पाठा (ध. १.७० )
**–तिल**–पु., तिलभेदः, कृष्णतिलः ( र. ३०.४८-४९ ) द्र० 'तिल'
**–त्वच**–पु., वनस्पति० किराततिक्तः ( ध. १.३४ )
**–दा**–स्त्री., वनस्पति० सुवर्चला ( ध. ४.९८ )
**–दारु**–स्त्री., न., स्थावरविष०पत्रविषम् ( असंउ. ४०; सुक. २.५ )
**–नाग**–न., अग्नौ ध्मानेन बहुशो दृढं मृदु कृष्णं द्रुतद्रावं च जातं नीलाञ्जनोपेतं तीक्ष्णलोहम् ( र. ८.३९ )
**–पोत**–पु., पशु० जाङ्गलमृगः ( चसू. २७.४६ )
**–मूषा**–स्त्री., मूषा० इयं प्रहरावधिमग्निं सहते ( र. १०.१६ )
**–लोहक**–न., सगन्धलकुचद्रवे बहुवारं निक्षिप्य पुनः पुनर्निष्कासितं तीक्ष्णलोहयुक्तं द्रुतं ताम्रम् ( र. ८.१२ )
**–वर्णिनी**–स्त्री., वनस्पति० हरिद्रा ( ध. १.५४ )
**–वर्णी**–स्त्री., वनस्पति० हरिद्रा ( र. ११.१०४ )
**–वार्तिक**–पु., रसशास्त्रतत्त्वज्ञः, वृत्तिष्टीका, तां जानाति इति वार्तिकः, वरः श्रेष्ठश्चासौ वार्तिकः, वरवार्तिकः ( र. ८.७२ )

**वरक**–पु., धान्य० षष्टिकभेदः, ततोऽल्पान्तरगुणो वा ( चसू. २७.१४ )
वनस्पति० कृष्णमुद्गः ( ध. ६.८३ )
प्रियङ्गुः ( रा. १६.१४४ )
विष्किरपक्षिविशेषः ( असंसू. ७.७१ )
श्यामबीजम् ( चसू. २७.१८; सुसू. ४६.२१ )
**वरट**–पु.; पक्षि० हंससदृशः ( अहसू. ६.४६ )
**(वरटी)**–स्त्री., कीट० शूकतुण्डविषः अग्निप्रकृतिकः पित्तरोगकृच्च ( सुक. ३.५; सुक. ८.८-१२ )
वरटी–स्त्री., ( सुक. ३.५ )
**–पत्र**–पु., कीट० आग्नेयः ( असंउ. ४३ )
**–मत्स्य**–पु., मत्स्यः अयमस्थिविषः ( सुक. ३.५ )
**वरण**–न., आवरणम् ( चचि. २३. ४७; असंसू. २६.६)
वरुणवृक्षः ( असं. राजयक्ष्मचि. ७; र. २९.१२३)
**–बन्ध**–पु., प्रजारक्षणबन्धः ( कारेवती क. ८० )
**वरणादिगण**–पु., द्रव्यगण० 'वरणसैर्येकयुग्मशतावरी–दहनमोरटबिल्वविषाणिकाः।' द्विबृहतीद्विकरञ्ज–जयाद्वयं बहलपल्लवदर्भरुजाकराः ( असंसू. १६.१५-१६ )
**वराङ्ग**–पु., वनस्पति० अम्लवेतसः ( का सिद्धि ४ )
न., वनस्पति० गुडत्वक् ( चक्र. चचि. १२.१९ ( ३ )
त्वक् ( ध. २.५०; अहसू. २१.१४ )
वनवासिका त्वक् ( ड. सुक.६.३ )
**( वराङ्गी )**–स्त्री., वनस्पति० हरिद्रा (रा. ६.७९)
दन्तीभेदः, अरणी ( ध. १.२२५ ) द्र० 'दन्ती'
**वराङ्घ्रि**–स्त्री., त्रिकालमूलम् ( र. ३०.६९ )
**वराट**–पु., भैषज्य० कपर्दिका ( ध. ३ परि. २४ )
**वराटिका**–स्त्री., भैषज्य० कपर्दिका ( ध. ३ परि. २४ )
कपर्दी ( र. ३.१४५-४६ )
**वराम्ल**–पु., वनस्पति० मातुलुङ्गः (ध. ५.२३)
**वरारुह**–पु., वनस्पति० बिल्वः ( ध. १.१०७ )
**वरासव**–पु., आसुत० त्रिवृत् तिल्वको हरीतकी एरण्डः कारवेल्लिका, सुधापयः इत्येवमादिप्रधानविरेचन-द्रव्यकृतोऽयम् आसवो वरासवः सेहुण्डवर्जितः ( सुसू. ४४.३० )
**वराह**–पु., पशु० सूकरः, तन्मांसं स्नेहनं बृंहणं वृष्यं श्रमघ्नमनिलनाशनं बल्यं रोचनं गुरु स्वेदनं च ( चसू. २७.७८-७९; अहसू. १४.३४ )
कुरुक्षेत्राद् दक्षिणदिग्वर्ती देशविशेषः ( कासंखिल. २५.१४ )

न., खनिज० हीरकम् ( ध. ६.५५ )
( वराह )-स्त्री., वनस्पति० मुस्ता ( ध. १.४० )
(वाराही)-स्त्री., ( रा. ७.१३४ )
–कन्द–पु., कन्दशाकविशेषः, बकालुकः, गुणाः– श्लेष्मघ्नो रसपाकतः कटुको मेहकुष्ठकृमिहरो बल्यो वृष्यो रसायनश्च ( सुसू. ४६.३०९ )
वनस्पति० गृष्टिः ( रा. ७.१३६ )
–कर्णी–स्त्री., वनस्पति० अश्वगन्धा ( रा. ४.४०० )
–दन्त–पु., वराहस्य दन्तः ( चचि. ७.१६० )
–दशन–पु., सूकरदन्तः, क्षतशुक्रकाख्यनेत्ररोगहरवर्त्युपयोगिद्रव्यम् ( असंउ. १४ )
–पत्री–स्त्री., वनस्पति० अश्वगन्धा ( रा. ४.४०२ )
–मांसप्राया–वि., वराहमांसस्य नित्यसेवनं कुर्वाणा ( गर्भिणी ) ( चशा. ८.२१ )
–मेदस्–न., शूकरमेदः इदं नेत्ररोगेषु नस्य–शिरोबस्त्यादिभेषजेषूपयुज्यते (असंउ.१९;सुचि.२६.१७)
–वसा–स्त्री., इयं आनूपमृगवसानां श्रेष्ठतमा ( चसू. २५.३८; अहृसू. ७४२. )
–विष्ठा–स्त्री., सूकरशकृत् सुदग्धा च मषीरूपा सर्वनाडीविनाशिनी ( असंउ. ३५ )
वराहिका–स्त्री., वनस्पति० कपिकच्छूः ( रा. ३.२०२ ) अश्वगन्धा ( रा. ४.४०० )
वरी–स्त्री., ( ध. १.२९१ )
–मूल–न., शतावरीमूलम् ( सुचि. १५.४५ )
वरीयसी–स्त्री., वनस्पति० शतावरी ( रा. ४.४४० )
वरु–स्त्री., धान्य० ( असंसू. ६०.१५ )
वरुक–पु., वनस्पति० शणबीजम् श्यामाकदृशः कषायमधुरलघुवातलशोषणादिगुणः ( चसू. २७.१८ )
वरुण–पु., वनस्पति० गुणाः–तिक्तः कटुः शीतः स्निग्धो वातघ्नो विद्रधिजन्तुरक्तदोषशीतवातहरश्च ( ध. ५.११९ )
हिं.—वरना.
म.—वायवरणा.
गु.—बायवरणो.
बं.—वरुणगाछ.
वनस्पति० तमालः ( अरु. अहृसू. १५.२१; र. १६.१०५ )
न., वनस्पति० जीरकम् ( ध. २.६६ )
देवता० ( सुसू. ५.२६-२७ )
तिक्तशाकद्रुमः ( सुसू. ३९.७ )
( वरुणा )–स्त्री., वनस्पति० वरुणः ( र. १८.२ )

–शाक–न., शाक० वरुणपत्राणां शाकत्वेनोपयोगः ( सुसू. ४६.२७१ )
वनस्पति० वरुणः, तस्य पत्राणि शाकत्वेनोपयुज्यन्ते ( सुसू. ४६.२७१ )
वरुणात्मजा–स्त्री., आसुत० सुरा ( ध. ६.२५५ )
वरुणादिगण–पु., द्रव्यगण० वरुणादिभेषजद्रव्यसमूहः, वरुणार्तगलशिग्रुमधुशिग्रुतर्कारीमेषशृङ्गीपूतीकनक्तमालमोरटाग्निमन्थसैरेयकद्वयबिम्बीवसुकवसिरचित्रकशतावरीबिल्वाजशृङ्गीदर्भा बृहती चेति ( सुसू. ३८.१०-११ )
वरुणाम्ल–न., वनस्पति० वरुणः ( र. २०.१६७ )
वरुणालय–वि., सामुद्रम् ( जलम् ) समुद्रो वरुणालयः, वरुणालयोद्भवमेव वरुणालयम् ( चसू. २७.२१६ )
वरेण्य–न., वनस्पति० कुङ्कुमम् ( रा.१२.२१ )
वरोहशाखिन्–पु., वनस्पति० प्लक्षः ( रा. ११.१२४ )
वर्चस्–न., पुरीषम् ( चशा. ७.१६; सुशा. ६.२५; अहृसू. ६.४; र. ३.१२४ )
( वर्चः )–कीट–पु., सविषकीटः अयमग्निप्रकृतिकः पित्तजरोगकृच्च ( सुक. ८.८-१२ )
–क्षय–पु., वर्चसः पुरीषस्य क्षयः ( चचि. १९.४१ )
–संग–पु., वर्चसो ग्रहः ( चचि. १३.४१ )
–सांग्राहिक–वि., वर्चसः संग्रहकारकः ( चसि. ६.५० )
–स्थान–न., पुरीषोत्सर्गार्थं कृतः स्थानविशेषः ( चसू. १५.६ )
( वर्चो )–ग्रह–पु., शकृद्विबन्धः ( चचि. १३.३८ )
–ग्राहिन्–वि., मलग्राही ( सुचि, ३४.१२ )
–निरसनी–स्त्री., धमनीभेदः ( असंशा. ६.३२ )
–निरोध–पु., लक्षण० पुरीषस्याप्रवर्तनम् ( सुउ. ५६.८ )
–भेद–पु., द्रवमलत्वम् ( असंनि. १३.१३ )
–वाहिस्रोतस्–न., स्रोतोभेदः ( चवि. ५.२१ ) द्र० 'स्रोतस्'
वर्चीवा–स्त्री., वनस्पति० पुनर्नवाभेदः ( कासं खिल. १४ ) द्र० 'पुनर्नवा'
वर्चोऽप्रवर्तन–न., लक्षण० पुरीषवेगधारणहेतुकरपुरीषाप्रवृत्तिः ( चसू. ७.८ )
वर्ज्य–वि., अनुपक्रम्यः अचिकित्सनीयः (सुचि. ८.३३)
वर्ण–पु., अक्षरम् ( चवि.८.३८ )
शरीरकान्तिः ( सुशा. ४.४ )
जातिः ब्राह्मणक्षत्रियादिः ( सुसू. २९.५ )
कला ( र. ५.९ )

**-दात्री**-स्त्री., वनस्पति० हरिद्रा ( रा. ६.७९ )

**-नाश**-पु., लक्षण० वर्णहानिः ( चचि. ४.२७ )

**-पञ्चक**-न., शुक्लादि पञ्चवर्णाः-शुक्ल-हरित-कृष्ण-पीत-रक्ताः पञ्च ( सुनि. ६.२६ )

**-पुष्पी**-स्त्री., वनस्पति० उष्ट्रकाण्डी (रा परि. १०.४३)

**-पूरक**-पु., वनस्पति० शालि ( ध. ६.७१ )

**-प्रणाश**-पु., वर्णनाशः ( चसू. १६.१५ )

**-प्रसाद**-पु., शरीरकान्तिः ( सुसू. १५.५ )

**-प्रसादन**-न., वनस्पति० काष्ठागरु ( रा. १२.४२ )
वि., वर्णवैशद्यकरः ( सुसू. ३८.२५; अहसू. १५.४४ )

**-भेद**-पु., गौरादिवर्णान्यत्वम् ( सुसू. १५.२६ )

**-भेदिनी**-स्त्री., वनस्पति० प्रियङ्गुः ( ध. ३.१६ )

**-मूषा**-स्त्री., मूषा० एषा वर्णोत्कर्षकरी ( र. १०.१७ )

**-वती**-स्त्री., वनस्पति० हरिद्रा ( ध. १.५४ )

**-विलासिनी**-स्त्री., वनस्पति० (हरिद्रा ध. १.५५)

**-वृद्धा**-स्त्री., वर्णश्रेष्ठा, यथा शूद्रो न वैश्यम् परिणयेत उपेयाद्वा वैश्यो न क्षत्रियां, क्षत्रियो न ब्राह्मणीमिति ( ड. सुचि. २४.११५ )

**-शुद्धि**-स्त्री., लक्षण० सम्यक् विरिक्तस्यैकं लक्षणम् ( चसू. १६.५ )

**-स्वरीय**-वि., अध्यायसंज्ञा० वर्णस्वरावधिकृत्य कृतोऽध्यायः ( चइ. १.१ )

**वर्णक**-पु., वर्णकरं द्रव्यम् ( चचि. ७.९२ )
त्वचो वर्णकरं चूर्णम्, दुष्टवर्णकेन त्वग् दूष्यते, ( चचि. २३.११८ )
वनस्पति० कम्पिल्लकः ( सुचि. २५.३९ )
वनस्पति० चन्दनम् ( सुचि. २५.३८ )
रोचनिका, अस्यास्त्वक् नारीक्षीरेण पिष्ट्वा पित्ताभिष्यन्देऽञ्जनम् ( सुउ. १०.१० )

**(वर्णिका)**-स्त्री., धातुवादोद्दिष्टो विशिष्टो वर्णः ( र. ८.४९-५० )

**वर्णाधिकार**-पु., वर्णानधिकृत्य यदुच्यते तत्प्रकरणम् ( चइ. १.८ )

**वर्णिनी**-स्त्री., वनस्पति० हरिद्रा ( रा. ६.८० )
ब्रह्मचारिणी (अहसू. ७.७)

**वर्ण्य**-वि., वर्णकरम्, वर्णाय हितम् इति वर्ण्यम् ( चसू. १.८७ )
साध्यम् ( चवि. ८.३४ )
साध्यधर्मो यत्र वर्ण्यते स, पक्षः दृष्टान्तश्च वर्ण्य इति ( चवि. ८.५७; अहसू. १५.२७; र. ३.११० )

**-पुष्पक**-पु., वनस्पति० राजतरणी ( रा. १०.२४६ )

**-वर्ग**-पु., द्रव्यगण० चन्दनतुङ्गपद्मकोशीरमधुकमंजिष्ठासारिवापयस्यासितालता इति दशेमानि वर्ण्यानि भवन्ति ( चसू. ४.१० )

**-सम**-पु., तन्त्रयुक्ति० हेत्वाभासभेदः वर्ण्येन साध्येन दृष्टान्तोऽसिद्धत्वेन सम इति वर्ण्यसमः ( चवि. ८.५७ )

**वर्त**-न., वर्तुलीकरणम्, वायोरेकं कर्म ( चसू. २०.१२ )
वर्तलोहम् ( र. ५.३-४ )

**-तीक्ष्ण**-न., खनिज० वर्तलोहम् ( रा. १३.३४; र. ५.२२३ )

**-मान**-वि., क्रियाविशेषवान् ( सुसू. २.६ )
वि., प्रवर्तमानम् ( सुशा. ३.११ )

**-लोह**-न., खनिज० वर्तलौहम् ( ध. ६.३३ )

**-लौह**-न., खनिज० वर्तलोहम्, गुणाः-अम्लकटुकं शीतं रूक्षं कफपित्तकृमिघ्नं रुच्यं त्वच्यं मलशुद्धिकरं च ( र. ५.२२१ ) तस्य निर्माणविधिः-वर्तलौहं 'भर्त' इति ख्यातं वर्तते। कांस्यार्करीतिलोहादिजातं वर्तलोहं वर्तते। वर्तलोहं पञ्चलोहाख्यं पञ्चलोहपर्यायं भवति। ( र. ५.२२० ) तस्य शोधनम्-भर्ताख्यो धातुरग्निना द्रावितः सन् अश्वमूत्रे प्रक्षिप्तश्च विशुध्दयति। सप्तधेति संप्रदायः ( र. ५.२२३ ) तस्य मारणम्-गन्धकहरितालाभ्यां पुटितं वर्तलौहकं क्रियते ( र. ५.२२४ )

**वर्तक**-पु., विष्किरपक्षी० गुणाः-कषायः कटुर्लघुः मेध्याग्निवर्धनवृष्यग्राहिवर्णप्रसादकरो वातघ्नश्च ( ध. ६.७५; असंसू. ७.७० )
हिं.—बटेर.
**म.—गांजीणपक्षी.**
बं.—बाटेर.
वर्तीरभेदः (ड. सुसू. ४६. ५९; अहसू. ६. ५०; ध. वर्गेतराणि. १० )
खनिज० वर्तलौहम् ( ध. ६.३३ )

**(वर्तिका)**-स्त्री., पक्षि० वर्तकसदृशः कश्चित्पक्षी ( चसू. २७.४८ )
वर्तीरभेदः ( ड. सुसू. ४६.५९; अहसू. ६.४५ )
भैषज्य० अजशृङ्गी ( ध. १.८७ )

**वर्तन**(परिव०)-न., यापनम्, रक्षणम् ( अहसू. १.७ )
वर्तुलीकरणम् ( सुसू. १.१७; असंसू. २०.२० )

**-स्तम्भिता**-वि., वर्तनेन कठिनीकृता ( गुलिका ) ( चचि. २(४)-१२ )

**वर्तमान**–वि., अङ्गुलिपीडनात् वर्तितां आपद्यमानः ( चक्र. चक. १२.१०३ )
**वर्ति**–स्त्री., फलवर्तिः पुरीषनिस्सरणार्थी ( चवि. २.१३ )
यष्टिः ( चसू. ५.२३ )
वातनिग्रहजे विकारे उपयुज्यते ( चसू. ७.१३ )
नेत्ररोगशमनार्थं कृतौषधिद्रव्याणां गुटिका ( सुउ. ११.१० )
विकेशिका ( सुसू. ५.१७; र. २४.९९; अहसू. १९.१५ )
कफवर्तिः लालारूपकफवर्तिः ( ड. सुक. ३.४२-४३ )
**–क्रिया**–स्त्री., चतुर्गुणेन क्वाथेन पाकाद्वर्त्याकारता कर्तव्या ( चक. १.२१ )
**–प्रयोग**–पु., उपक्रम॰ धूमवर्तिप्रयोगः ( सुउ. ५५.२९ )
**वर्तित**–वि., वर्तीकृतम् ( चचि. १८.१४५ )
**वर्ती**–स्त्री., वर्तिः ( सुउ. ११.१० )
**वर्तीर**–पु., विष्किरपक्षिविशेषः ( ध. परि. १० )
कपिञ्जलानूकः नाम कपिञ्जलसदृशः पक्षी ( सुसू. ४६.५९; अहसू. ६.४४ )
**वर्तीरक**–पु., पक्षि॰ ( चसू. २७.४७ )
**वर्तुल**–वि., वृत्तः ( र. १८.२६ )
पु. वनस्पति॰ गुण्ठः ( ध. १.८३ )
कलायः ( ध. ६.१०३ )
न., गृञ्जनम् ( रा. ७.५५ )
खनिज॰ टङ्कणः ( रा. ६.२९ )
( **वर्तुली** )–स्त्री., वनस्पति॰ श्रेयसी, पिप्पलीभेदः ( रा. ६.११८ ) द्र॰ 'पिप्पली'
**–खल्व**–पु., यन्त्र॰ मर्दनेऽतिसुखप्रदोऽयम् ( र. ९.८६ )
**वर्तुलोह**–न., खनिज॰ वर्तलोहम् ( ध. ६.३३ )
**वर्त्मन्**–न., नेत्रपुटम् ( र. २३.३१ )
मार्गः ( असंसू. ३.५० )
नेत्राच्छादनम् ( सुसू. १२.९; सुउ. १.२२ )
( **वर्त्म** )–**कर्दम**–पु., रोग॰ नेत्ररोगविशेषः ( सुउ. ३.१९ )
**–कोष**–पु., नेत्रपुटकोषः ( सुउ. १.२२ )
**–गतरोगविज्ञानीय**–वि., अध्यायसंज्ञा॰ वर्त्मगतरोगविज्ञानमधिकृत्य कृतोऽध्यायः ( सुउ. ३.१ )
**–पटल**–न., नेत्ररोग॰ नेत्रे वर्त्माख्यस्य विभागस्य त्वक्सदृशो भागः ( सुउ. १.१७ )
**–मण्डल**–न., नेत्ररोग॰ पक्ष्मणोऽन्तर्भागः ( सुउ. १.१५; असंशा. ५.५२ )
**–रोग**–पु., रोग॰ नेत्रावरणान्तर्भागीयो रक्तवर्णो व्याधिः ( सुउ. ३.८ ) वर्त्मसंश्रया एकविंशतिविकाराः– उत्सङ्गिनी कुम्भीका पोथकी वर्त्मशर्कराऽर्शोवर्त्म शुष्कार्शोऽञ्जननामिका बहलवर्त्म वर्त्मावबन्धकः क्लिष्टवर्त्म कर्दमवर्त्म श्याववर्त्म प्रक्लिन्नवर्त्मापरिक्लिन्नवर्त्म वातहतवर्त्म अर्बुदं निमिषं शोणितार्शो लगणो बिशं पक्ष्मकोपः ( सुउ. ३.८ )
**–वातहत**–न., नेत्ररोग॰ असाध्यो वातजो नेत्ररोग॰ ( सुउ. १.२९-३० )
**–शर्करा**–स्त्री., नेत्ररोग॰ नेत्रवर्त्मनि सूक्ष्मपिडकावृता स्थूला पिडका ( सुउ. ३.१२ )
**–संकोच**–पु., नेत्ररोग॰ वर्त्मनः संकोचः, उभयनिमेषयोः संकुचितत्वम् अशीतिवातविकारेष्वेकः ( चसू. २०.११; असंसू. २०.१३ )
**–स्तम्भ**–पु., नेत्ररोग॰ वर्त्मनः स्तम्भः अशीतिवातविकाराणामेकतमः उभयोर्निमेषयोर्मध्ये विद्यमानो जलादेर्बहिर्निर्गमनमार्गस्यावरोधः ( चसू. २०.११ )
**वर्त्मावबन्ध**–पु., नेत्ररोग॰ अयं साध्यो नेत्ररोगः ( सुउ. १.४० )
लेख्यवर्त्मरोगः ( सुउ. १३.१४-१५ )
**वर्त्मोपलेपिन्**–वि., वर्त्मोपलेपनयोग्यम् ( अञ्जनम् ) तच्च अङ्गुल्यैव प्रयोज्यम् ( सुउ. १८.६५ )
**वर्धन**–पु., दन्तरोग॰ ( सुनि. १६.२४-२५ )
न., छेदनम् ( इन्दु. असंउ. १ )
वृद्धिकरणम् ( सुसू. १४.३ )
**वर्धमान**–पु., वनस्पति॰ एरण्डः ( चचि. १७.८०; सुक. ६.३ )
शरावः ( चइ. १२.७३; सुसू. २९.२८-३१ )
अलङ्कारः ( इन्दु. असंशा. १२.८ )
भैषज्य॰ अयं पारदादिभस्मयुतः सूतिकारोगनाशनः ( र. २२.४० )
( **वर्धमाना** )–स्त्री., वनस्पति॰ मधुकर्कटी ( ध. ५.३१ )
**वर्धमानक**–पु., वनस्पति॰ एरण्डः ( चसि. १०.१९; असंशा. ३.१४ )
**वर्धिका**–स्त्री., रेवतीग्रह॰ सा द्वादशे दिवसेऽपत्यं विनाशयति ( कारेवतीक ४६ )
**वर्ध्म**–न., रोग॰ वृद्धिः ( अहसू. १९.३; ) ( र. १८.११-१३ )
**वर्मन्**–न., लोहादिकृतं शरीररक्षकमाच्छादनम् ( चचि. २३.११९ )

**( वर्म )–कण्टक**–पु., वनस्पति० पर्पटः ( ध. १.४५ )

**वर्मिन्**–पु., मत्स्य० मत्स्येषु श्रेष्ठः ( सुसू. ४६.३३३ )
सर्पाकारो मत्स्यः (सुसू. ४६.११३; अहृसू. ६.५३)

**( वर्मि )–मत्स्य**–पु., उरगाकृतिर्दीर्घो मत्स्यः ( सुसू. १३.११ )

**वर्य**–पु., भैषज्य० कपर्दिका ( ध. ३.२४ )

**वर्याञ्जन**–न., खनिज० रसाञ्जनम् ( रा. १३.२२३ )

**वर्ष**–पु., न., पर्जन्यवृष्टिः ( चचि. १५.३७ )
स्रावः ( चसू. ५.५६ )
काल० संवत्सरः ( असंसू. ४ )

**( वर्षा )**–स्त्री., ऋतुर्वर्षालक्षणः ( चवि. ८.१२७ )
षड्ऋतुष्वेकः ( चसू. ६.४ )
वनस्पति० जीरकभेदः, कृष्णः ( ध. २.७८ )
द्र० 'जीरक'
भार्ङ्गी ( रा. ६.९५ )
श्रावणभाद्रपदमासद्वयात्मकः कालविभागः ( सुसू. ६.६; अहृसू ३.१ )

**–केतु**–पु., वनस्पति० क्रूरः ( ध. १.२७६ )

**–गणानुबन्धिन्**–वि., चिरकारी ( सुनि. ११.१२ )

**–पुष्पा**–स्त्री., वनस्पति० महाबला ( ध. १.२८२ )

**–शत**–न., वर्षाणां शतम्, तथाहि आयुः शतवर्षमर्यादमस्ति इति ( चवि. ८.१२२ )

**वर्षा**–स्त्री., षड्ऋतुष्वेकः ( चसू. ६.४ )

**–चर्या**–स्त्री., आदानकालेन ग्लानशरीरा नरा भवन्ति, एवंविधानां नराणां पूर्वमेव सन्नोऽग्निर्वर्षासु दोषैरधिकतरं सीदति। सतुषारेण सहसा शीतलेन मारुतेन, भूबाष्पेणाम्लपाकेन मलिनेन च जलेन मन्देन च वह्निना सर्वदोषाणां प्रकोपो भवति, विशेषतस्तु वातस्य। अस्मिन् काले यच्च वातादीनां सर्वेषां दोषाणां प्रशमनं यच्च जाठराग्नेस्तेजनं तत्सर्वं सेव्यम्। आस्थापनं कार्यम्। जीर्णधान्यं तथा स्नेहशुण्ठ्यादियुतान् रसान् मुद्गदाडिमादिकृतान् भजेत्। जाङ्गलं पिशितं चिरन्तनं मध्वरिष्टं च सेवेत। सौवर्चललवणाढ्यं च मस्तु पिबेत्। पञ्चकोलावचूर्णितं दिव्यं कौपं शृतं जलं पिबेत्। व्यक्ताम्ललवणस्नेहं संशुष्कमन्नं सेवेत। सततमपादचारी धूपिताम्बरः सुरभिः स्यात्। बाष्पशीतशीकरवर्जिते हर्म्यपृष्ठे वसेत्। नदीजलादीन् त्यजेत्। ( अहृसू. ३.४२-४४ )

**–जलवहा**–वि., वर्षासु जलं वहन्ती ( नदी ) ( चसू. २७,२१३ )

**–नादेय**–वि., वर्षासु नदीस्थं जलम् (चसू. २५.३९)

**–निल**–पु., वृष्टिसंयुक्तो वातः ( सुसू. १२.३८ )

**–भव**–पु., वनस्पति० क्रूरः ( रा. ५.४०८ )
वि., वर्षाभागान्तोपलक्षिताः ( चवि. ८.१२७ )

**–भू**–स्त्री., वनस्पति० पुनर्नवा, गुणाः– रूक्षा, कफानिलापहा, गुल्मप्लीहशूलघ्नी मान्द्यघ्नी च ( रापरि. ७.९३ ) द्र० 'पुनर्नवा'
श्वेतपुनर्नवा ( सुचि. २२.३९; र. ५.१६५ )
रक्तपुनर्नवा ( सुउ. ४२.४६; अहृसू. ६.९७ )

**–भ्वादिक्षीर**–न., वर्षाभू-यष्टिमधुमधूक-लाक्षा-त्वक्-कर्बुदाराङ्कुर-जीरकाणि द्राक्षा-कृष्णाकेशराणि च क्षीरे समालोड्य पानात्ययविकारे इदं क्षीरं प्रयुञ्ज्येत ( सुउ. ४७.४६ )

**वर्षान्त**–पु., हेमन्तग्रीष्मवर्षाऋतुत्रयम् ( संशोधनाय अयोग्यम् ) ( चवि. ८.१२७ )

**वर्षाहिक**–पु., निर्विषसर्पः ( सुक. ४.३४(४); असंउ. ४१ )

**वर्षोषित**–वि., संवत्सरजीर्णम् ( असंसू. ७.३८ )

**वलक्ष**–न., भैषज्य० मौक्तिकम् ( रा. १६.६६ )

**वलभ**–पु., कीट० सविषकीटः तस्य गुणाः–सौम्यः, श्लेष्मप्रकोपणः तेन कफविकारकृच्च (सुक.८.१२-१५)

**वलभिका**–स्त्री., कीट० शूकतुण्डविषा ( सुक. ३.५ )

**वलभीयन्त्र**–न., यन्त्र० खलचरीयन्त्रम् ( र. ९.४९ )

**वलय**–न., ध्वजभङ्गे लक्षणम् ( चचि. ३०.१७० )
गोलाकृतिः दहनः ( सुसू. १२.११ )
कटकम् अलङ्कारविशेषः ( र. ११.१०८ )
कण्ठगतव्याधिः ( असंउ. २५; असंसू. ४०.५ )

**वलयास्थि**–न., अस्थिप्रकारः, पाणिपादपार्श्वपृष्ठेषु वलयानि ( असंशा. ५.७२ )

**वलयीकृत**–वि., वलयाकारा ( बिडालिका ) ( चचि. १२.७६ )

**वलाहक**–पु., निर्विषसर्पः ( असंउ. ४१)

**वलि**–स्त्री., त्वक्-संकोचः (इन्दुः असंउ. २८; सुशा. ४.६८ )
गुदवलिः ( चसि. ३.२४-२५ )
वर्त्मनः पक्ष्मसमीपस्थो भागः ( सुउ. १६.७ )
वार्धक्यलक्षणानामेकम् ( र. ३.६२-६५; अहृसू. १०.१३ )

**–भक**–पु., कीट० प्राणनाशनः ( असंउ. ४३ )

**वलिभ**–वि., वलियुक्तम् ( ललाटम् ) ( चशा. ८.५१ )

**वली**–स्त्री., रोग० त्वग्रोगः ( चवि. ८,९९ )

लवणरसस्यातियोगोद्भव एको विकारः
( चसू. २६.४३(३)
गुदस्था पेशी ( असंनि. ७.४ )
त्वक्संकोचः ( सुनि. ७.७; असंसू. ३.२९ )
**–नाश**–पु., उदरस्थितानां वलीनां नाशः
( चचि. १३.१९ )
**–पलितघ्न**–पु., भैषज्य० ( र. २६.८-१० )
**–पाक**–पु., गुदवलीपाकः ( चचि. १९.१०१-१०२ )
**–विनाश**–पु., त्वक्संकोचनाशः ( सुनि. ७.७ )

**वल्क**–न., वृक्षादित्वक् ( ड. सुक. ५.३-४ )
वल्कलं त्वगपि ( र. १६.१४ )
**–तरु**–पु., वनस्पति० पूगफलम् (रा.११.७१)
**–द्रुम**–पु., वनस्पति० भूर्जः ( रापरि. ९.२२ )
**–पत्र**–पु., तालभेदः वनस्पति० हिन्तालः
( रा. ९.९७ )
**–यूष**–पु., दाडिमादिवल्कानां यूषः अयमतिसारघ्नः
( कासंखिल. ४.५०-५१ )

**वल्कल**–पु., वनस्पति० क्रमुकः ( ध.३. १७७ )
न., त्वक् ( रा. ६.७६ )
पलाशोदुम्बरादीनां भग्नादिबन्धनयन्त्रार्थम्
( सुसू. ७.१५ )
व्रणसीवनार्थमुपयुज्यते ( अहृसू. २९.५३ )

**( वल्कला )**–स्त्री.,वनस्पति० श्वेतशिला (रा. ५.२१३)
तेजस्विनी ( ध. १.२६६ )
अतसी ( ध. ६.११४ )

**वल्गुजा**–स्त्री., वनस्पति० बाकुची ( रा. ४.२२७ )

**वल्गुली**–पु., कीट० गुणाः–प्राणनाशनस्तेन दष्टस्य वेगज्ञानं सर्पवत् भवति, तास्ताश्च वेदना भवन्ति, तथा च सान्निपातिका रोगाः जायन्ते, दंशस्तु वर्णेन रक्तपीतसितारुणः क्षाराग्निदग्धवच्च
( सुक. ८.१५-१८ )

**वल्गुली**–स्त्री., पक्षि० प्रतुदभेदः गदुलिका इति डल्हणः
( सुसू. ४६.६७ )

**वल्मीक**–पु., कृमिशैलकम् ( सुचि. २४.९१ )
क्षुद्ररोगः ( र. २५.१; सुचि. २०.४८-५५;
असंउ. ३७ )
छेद्यरोगः ( सुसू. २५.३-५ )
न., पिपीलिकागृहम् ( र. १०.८४; चक. १.९;
र. २५.६५; असंसू. ३.६ )
**–मृत्तिका**–स्त्री., वल्मीकस्य मृत्तिका, अस्या ऊरुस्तम्भव्याधौ प्रलेपनं कुर्यात् ( चचि, २७,४९ )

आ. को. सं. ९२

हृदयावरणार्थं कृष्णा वल्मीकमृत्तिका सर्पविषे हिता
( सुक. ५.१७-१८ )
**–शीर्ष**–न., खनिज० स्रोतोञ्जनम् ( रा. १३.२२६ )
**–संभवा**–स्त्री., वनस्पति० भूतुम्बी ( रा. ७.२४१ )

**वल्ल**–पु., मान० गुञ्जात्रितयं वल्ल इति
( र. ११.३; अहृसू. ७.३२ )
न., खनिज०तीक्ष्णलोहप्रकारः ( ध. ६.२८ )

**( वल्ली )**–स्त्री., वनस्पति० चविका ( रा. ६.११५ )
नीलपुष्पा ( ध. ४.८५ )
**–ज**–न., वनस्पति० इन्द्रयवः ( ध. २.१५ )

**वल्लकि**–स्त्री., वीणा ( असंचि. २.८२ )

**वल्लकी**–स्त्री., वीणा ( असंचि. २.८२ )
वनस्पति० सल्लकी ( ध. ३.१३५ )

**वल्लर**–न., वनस्पति० कालेयकम् ( रा. १२.४१ )

**( वल्लरी )**–स्त्री., वनस्पति० चित्रकः ( ध. २.८० )
मेथिका ( ध. ६.१११ )
वनमेथिका ( रा. ५.१८५ )
मालादूर्वा ( रा. ८.२३२ )

**वल्लि**–स्त्री., वनस्पति० अजमोदा ( ध. २.९८ )
**–कण्टारिका**–स्त्री., वनस्पति० अग्निदमनी
( रापरि. ४.३ )
**–दूर्वा**–स्त्री., वनस्पति० मालादूर्वा ( रा. ८.२३२ )
द्र० 'दूर्वा'
**–सूरणा**–स्त्री., वनस्पति० अत्यम्लपर्णी
( रापरि. ३.३९ )

**वल्ली**–स्त्री., चविका ( रा. ६.११५ )
**–कर्ण**–पु., पञ्चदशकर्णबन्धेष्वेकः ( सुसू. १६.१० )
**–ज**–न., विषभेदः, पुष्पविषम् ( असंउ. ४० )
वनस्पति० मरिचम् ( ध. २.८८ )
**–पाषाणसंभव**–न., भैषज्य० प्रवालम् (ध. ६.६४)
**–पुष्प**–विषभेदः ( सुक. २.५ )
**–फल**–न., वनस्पति० जीमूत-इक्ष्वाकुप्रभृतीनि फलमात्रासिद्धिपठितानीति ( चचि. २०.२२ )
कर्कटीप्रभृतीनि ( सुचि. १४.८, असंसू. ७.१३४ )
**–बदरी**–स्त्री., वनस्पति० भूबदरी ( रा. ११.१६२ )
**–मुद्ग**–पु., वनस्पति० मकुष्ठका ( रा. १६.१४५ )
**–वृक्ष**–पु., वनस्पति० सर्जकः ( रा. ९.२०४ )
**–शिम्बी**–स्त्री., शुकशिम्बी (सुसू. ४६.४६-४७)
**–संज्ञ**–पु., गण० पञ्चानां मूलानां समाहारः, गुणाः–रक्तपित्तहरः, शोफत्रयविनाशनः, सर्वमेहहरः, शुक्रदोषविनाशन इति ( सुसू. ३८.७२ )

**वल्लूर**–न., शुष्कमांसम् ( चसू. ५.१०; सुउ. ४२.७५-७६ )
**वल्लूरक**–पु., पञ्चदशकर्णबन्धेष्वेकः ( सुसू. १६.१० )
**वशङ्कर**–वि., वशीकरणम् ( र. ११.१०७ )
**वशिक** वि., शून्यम् ( चनि. ६.८ )
**वशित्व**–न., योगिनामष्टविधसिद्धीनामेकेयं सिद्धिः 'वशित्वं चाष्टसिद्धयः' इति ( चशा. १.३९ )
**वशिन्**–पु., स्वाधीनप्रवृत्तिः आत्मा ( चशा. १.७८ )
**वशिर**–पु., वनस्पति० चविका ( रा. ६. ११५ )
रक्तपुष्पः ( ध. १.२६३ )
न., सामुद्रलवणम् ( असंचि. १३ )
सूर्यावर्तः ( चसू. ४.१५; असंसू. १५.३५ )
मर्कटसंज्ञस्तृणजातिः ( सुचि. ७.५ )
अपामार्गः ( ध.१.२६१ )
**वशिष्ठ**–पु., ऋषि० आयुर्वेदज्ञः, अयं हिमालये इन्द्रादेशात् रसायनप्रयोगं कृतवान् ( चचि. १.(४)-३ )
**वश्यकर**–वि., वश्यताकरम्, वशीकरणम् (र. २७.१३)
**वश्यता**–स्त्री., आधीनत्वम् ( चवि. ४.८ )
**वश्या**–स्त्री., रेवतीग्रहः, साऽसाध्या जातहारिणी ( का रेवती क. ४९ )
**वश्यात्मन्**–वि., वश्येन्द्रियः (वैद्यः) ( चसू. ८.१८ )
**वषट्कार**–पु., वषट्कृतिः ( असंशा. १२.८ )
**वस**–पु., वनस्पति० वसुकः ( रापरि. ५.३७; पृ. ३४३ )
**वसन**–न., वस्त्रम् ( अहृसू. १७.१ )
वनस्पति० तमालपत्रम् ( रा. ६.८०; पृ. ८० )
**वसन्त**–पु., ऋतु० षड्ऋतुष्वेकः ( चसू. ६.६; सुसू. ६.६; असंसू. ४.५; अहृसू. ३.१ ) मासद्वयात्मकः कालविभागः। चैत्रवैशाखौ (सुसू. ६.६) मधुमाधवौ वसन्तः। मधुश्चैत्रो माधवो वैशाखः। गङ्गाया दक्षिणदेशे भाद्रपदाश्वयुजौ मासौ वर्षाघटकौ आमनन्ति सुश्रुताचार्याः (सुसू. ६.१०) अस्मिन् ऋतौ कषायरसो बलवान्भवति। कफस्य च प्रकोपो भवति ( सुसू. ६.११ )
वसन्तचर्या— शिशिरे सञ्चितः कफः वसन्तऋतौ सूर्य-सन्तापेन प्रविलीनः सन् कुपितो भवति। स जाठराग्निं हत्वा विकारान् कुरुते, अतः तं त्वरया जयेत्। तीक्ष्णैः वमनैः नस्याद्यैः उपक्रमैः तथा लघुरूक्षैर्भोजनैः व्यायामोद्वर्तनैः आघातैश्च उल्बणं कफं जयेत्। स्नातः सन् कर्पूरचन्दनागुरुकुंकुमैः अनुलेपनं कुर्वीत। पुराणयवगोधूमान्, क्षौद्रं, जाङ्गलं शूल्यं च मांसं भुञ्जीत। सहकाररसमिश्रितान् मनःप्रसादादिकरान् हृद्यान् निर्दोषान् आसवादीन् वयस्यैः परिवेष्टितः सन् पिबेत्। सीधुमार्द्वीकमाधवान् सेवेत। अपिच शृङ्गबेराम्बु, साराम्बु, मध्वम्बु, च पिबेत्। दक्षिणानिलशीतेषु, परितः जलवाहिषु अदृष्टसूर्येषु काननेषु मध्याह्नं गमयेत्। वसन्ते गुर्वन्नं शीतं दिवास्वप्नं स्निग्धाम्लमधुरांश्च भोज्यपदार्थान् त्यजेत् ( अहृसू. ३.१८-२६ )
–**कुसुमाकर**–पु., पारदयोग० पारदहेमाभ्रकलौहादिसाधितोऽयं प्रमेहक्षयकासतृष्णाश्वासरक्तपित्तविषहरः ( र. १७.१२८-३४ )
–**जा**–स्त्री., वनस्पति० वासन्ती (ध. ५.१३९ पृ.१९८)
–**दूत**–पु., वृक्ष० आम्रः ( रा. ११.२; पृ. १७० )
–**दूती**–स्त्री.,वनस्पति०वासन्ती (रा.१०.२३४पृ.१९८)
गणिकारी ( रापरि. १०.३१; पृ. ३७० )
पाटला ( ध.१.१२०; पृ. २९ )
–**पादप**–पु., वृक्ष०, आम्रः ( ध. ५.३, पृ. १६९ )
–**पुष्प**–पु., वनस्पति०, धूलिकदम्बः, द्र० 'कदम्ब' ( रा. ९.१७३; पृ. १९१ )
**वसन्तक**–पु., वनस्पति० स्योनाकभेदः, पृथुशिम्बः, टिण्टुकः ( रा. ९.१४२; पृ. २८ )
**वसन्तोत्सवमण्डन**–न., खनिज० सिन्दूरम् ( ध. ३.१०१; पृ. ११५ )
**वसन्तोद्भव**–वि. वसन्ते उद्भूतः वासंतिकः, यथा-ज्वरः कफजः वसन्ते उद्भूतः प्राकृतज्वरः, स सुखसाध्यः ( चचि. ३.४२तः४७ )
**वसा**–स्त्री., शारीर० उपधातुः, मांसस्योपधातुः ( चचि. १५.१७ ) 'सर्पिस्तैलं वसा मज्जा स्नेहो दिष्टश्चतुर्विधः' ( चसू. १.८६, चसू. १.६८; चसू. १३.११ ) स्नेहेषु इयं प्रवरा ( असंसू. २५; अहृसू. १६.२ ) शुद्धमांसस्य स्नेहः, 'शुद्धमांसस्य यः स्नेहः सा वसा परिकीर्तिता।' (सुशा. ४.१३) मांसनिर्यासः ( ड. ) सुसू. २३.१२ ) शरीरे प्रमाणम्–वसायास्त्रयोऽञ्जलयः (चशा. ७.१५) सामान्यगुणाः–मधुरा बृंहणी, वृष्या, बल्या च। तस्याः शैत्योष्णे यथासत्त्वं ज्ञातव्ये ( चसू. २७.२९५ ) उष्णाप्यग्निसादिनी (असंसू. १७) मांसानुगुणस्वरूपा ( अहृसू. ५.६१-६२ ) विशेषगुणाः–प्रतुदानाम् आनूपसत्त्वानां महिषादीनां औदकानां मत्स्यादीनां च वसा मधुरा, गुर्वी, उष्णा, वातघ्नी च। क्रव्यादव्याघ्रादीनाम् एणादीनां अश्वादीनां च कषाया, लघ्वी, शीता, रक्तपित्तघ्नी च। ग्राम्याणां तु गवोष्ट्र-

बस्तादीनां मधुरा, गुर्वी, उष्णा, वातघ्नी विष्किराणां लावादीनां वसा श्लेष्मघ्नी ( सुसू. ४५.१३१ ) चुलुकस्य तथा मत्स्यस्य वसा वातरोगे उपयुक्ता नक्रकूर्म-वसा वातरोगे विशेषेण उपयुक्ता ( चचि. २८ १२८ ) विविधोपयोगाः-सेयं शीतस्वभावकाले हेमन्तशिशिराख्ये भोजने उपयुक्ता ( अहृसू. ३.१३ ) लवणान्विता सद्यःस्नेहनार्थम् ( असंसू. २५.७३-७७ ) सिंहस्य वसा ससैन्धवा नस्येन विषमज्वरशमनार्थमुपयुज्यते ( चचि. ३.३०६ ) गृध्रोरगताम्रचूडजा वसा मधुकान्विता एकशो द्विशः समस्ता वा वातजतिमिरेऽञ्जनार्थे हिताः ( सुउ. १७.३५ ) ऋक्षवसा नेत्ररोगेषु तर्पणादिकर्मसूपयुक्ता (असंउ.१६) चूर्णाञ्जनयोगे उपयुक्ता(सुउ.१८.८८) विविधरोगेषु बाह्याभ्यन्तरोपयोगाः-सन्ध्यस्थिमर्मकोष्ठरुजासु दग्धाहतभ्रष्टयोनिकर्णशिरोरुजि तथा पौरुषोपचये व्यायामे च ( चसू. १३.१६; असंसू. २५ ) जम्बूकमण्डूककच्छपगोसूकरनरकर्कोटशिंशुमाराजोष्ट्रखरमेषमहिषाणां वसा रसकर्मणि उपयुज्यन्ते ( र. १०.७६ )

खनिज० गन्धकः ( र. २०.१०३ तः ५ )

वनस्पति० मेदा ( रा. ५.१६०; पृ. ३१ )

**-गन्धिन्**-वि., वसावद्यस्य गन्धः तद् यथा कफदूषितं रक्तम् ( असंसू. ३६ )

**-मेह**-पु., रोग० मांसस्नेहः वसा तत्सदृशमूत्रत्वात् ( सुनि. ६.१२ ) वातनिमित्तप्रमेहभेदः ( चसू. १९.४(९) ) लक्षणम्—नरो वसामिश्रं वसाभं वा मुहुर्मेहति ( चनि. ४.३९ ) वसामिश्रं वसां वा मेहति ( असंनि. १० ) चिकित्सा-अग्निमन्थकषायं शिंशपाकषायं वा पाययेत् ( सुचि. ११.९ )

**-योग्य**-वि., स्नेहनार्थं वसापानयोग्यः ते च-व्यायामकर्शिता महारुजःशुष्करेतोरक्ताः महाग्निमारुतप्राणाश्च वसायोग्याः ( सुचि. ३१.१७ )

**-सगन्धि**-वि., लक्षण० वसातुल्यगन्धिकः, वसासमगन्धित्वं नैगमेषजुष्टलक्षणम् (सुउ.२७.१६)

**-सात्म्य**-वि., वसापानमनुकूलं यस्य, सः ( चसू. १३.४९ )

**वसादनी**-स्त्री., वनस्पति० आटरूषः ( रा. ४.२८; पृ. ११ )

**वसिर**-पु., क्षुप० अपामार्गः ( सुसू. ३८.१० ) वशीरः, तृणजातिः, मर्कटपिप्पलीपर्यायः ( रा. ४.३८७ ) सूर्यावर्तफलम् ( सुसू. ४६.१९० ) तद्गुणाः-विपाके मधुरं शीतलं विष्टम्भि दुर्जरं रूक्षं वातकोपनम् रक्तपित्तप्रसादनम् ( सुसू. ४६.१९०-१९१; सुसू. ३८.१० )

**वसिष्ठ**-पु., ऋषि० रोगापहरणचिन्तनार्थं हिमवतः पार्श्वे समेतेषु भृगुकश्यपजमदग्निप्रभृतिमहर्षीषु एकः ( चसू. १.८ )

**वसु**-पु., संख्यासङ्केत० वसूनामष्टत्वात् वसुपदम् अष्टसंख्याभिधायकत्वेन प्रयुज्यते अष्टौ (र. २०.२२२) यथा वसुमितं नाम अष्टौ इति संख्या (र.१८.१६०)

देवता० 'पुरासन्वसवः आसन् तेषामष्टमो ध्रुवो नामाऽभवत् ।' सोमः धरः ( धवः ) अग्निः वायुः प्रभासः प्रत्यूषः आपः ध्रुवश्च इति अष्टौ ( का क रेवती. ६ ) 'आपो ध्रुवश्च सोमश्च धरश्चैवानिलोऽनलः । प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥' महाभारते

रत्नम् ( सुचि. ३०.४० )

लवण० औद्भिदलवणम् ( ध. २.३२; पृ. ७४ )

वनस्पति० ऋद्धिः ( ध. १.१४५; पृ. ३४ )

वसुकः ( रापरि. ५.३७; पृ. ३४३ )

चित्रकः ( र. २०.२२२ )

बकुलः ( र. १७.२-३ )

पाषाणभेदः ( र. १७.२-३ )

**-गुण**-वि., अष्टभागिकम् अष्टगुणम् ( र. ४.५० )

**-च्छिद्रा**-स्त्री., वनस्पति० महाभेदा ( ध. १.१२७; पृ. ३० )

**-तर्का**-स्त्री., वनस्पति० अतसी (ध.६.११४;पृ.२३१)

**-धाखर्जूरिका**-स्त्री., वनस्पति० खर्जूरीभेदः भूखर्जूरी द्र० 'खर्जूर' (रा. ११.७३; पृ. १७९)

**-भल्लुक**-पु., वनस्पति० श्वेतपुनर्नवा, द्र० 'पुनर्नवा ( र. ५.१२५ )

**-श्रेष्ठ**-न., खनिज० रौप्यम् ( ध. ६.५ पृ. २०६)

**वसुक**-पु., धान्य० मुद्गः ( ध. ६.८१पृ.२२४ )

वनस्पति० राजार्कः (ध.४.१६ पृ.१३७)

क्षुप० ( चसू. ४.१२ ) बुकः, केदारगिरौ 'बगहूल' इति प्रसिद्धः ( ड. सुसू. ४६.४३३ ) बकः ( सुसू. ३८.१० ) 'बकपुष्प' इति लोके ( ड. सुसू. ३८.१० ) शिवमल्लिकापर्यायः ( सुसू. ३९.७ ) ईश्वरमल्लिका ( असंचि. १३; ध. ४.१९; पृ. १३८ ) स च सितरक्तभेदेन द्विधा ( रापरि. ५.३७; पृ. ३४३ ) शुक्रशोधनगणे

**वामाचार**-वि. विपरीतव्यवहारवान् । यथा-गर्हितदूतः (सुसू. २९.९-१५)

**वामावर्ता**-स्त्री., वनस्पति० आवर्तकी (रा.३.२९७,पृ.४७)

**वामिन्**-वि., वामकम्, यथा-मदनवचादि (र. ५.४९)

**( वामिनी )**-स्त्री., रोग० विंशतियोनिव्यापत्सु एका (चसू. १९.४ (९)) सम्प्राप्तिः लक्षणं च-निषिक्तं शुक्रं गर्भाशयात्सरुजं नीरुजं वा मरुत् षडहात्सप्तरात्राद्वा बहिर्निरस्येत् (चचि. ३०.३३-३४; असंउ ३८) याऽऽर्तवमिश्रं सवातं शुक्रमुद्वमति दाहपाकादियुता च सा वामिनी योनिः (सुउ. ३८.१२)

**वाम्य**-वि., वमनार्हम् । अवाम्यं बमनाऽनर्हम् । वाम्याः- विष-शोष-स्तन्य दोष- मन्दाग्नि- उन्माद-अपस्मार-श्लीपद-अर्बुद-विदारिका-मेदो- मेह-गर- ज्वर-अरुचि-अपची-आमातीसार- हृद्रोग- चित्तविभ्रम-विसर्प-विद्रधि-अजीर्ण- मुखप्रसेक-हृल्लास -श्वास-कास-पीनस-पूतीनास- कण्ठौष्ठवक्त्रपाक- कर्णस्राव-अधिजिह्वा-उपजिह्विका-गलशुण्डिका अधोगरक्तपित्त-कफस्थानजाः विकाराः (सुचि. ३३.१८ चसि. २.१०) अवाम्याः-वमनानर्हाः-पुष्पिणी-ऋतुमती-कुटीगता- गर्भिणी-अल्पक्षीरा-लघुक्षीरा क्षीरच्छर्दनपुत्रा-प्रच्छर्दिनी-सुभगा पण्डितमानिनी-जाठरी-वातज्वरी- स्थूलः अक्षिरोगी-तृष्णालुः-मूर्च्छावान् निरूढानुवासितौ-क्षतक्षीणः-अतिबालः अतिवृद्धः-गुल्म- प्लीहोर्ध्वरक्तपित्तलोमव्यापत्कर्णरोगशिरःकम्पार्दिताः -अर्धावभेदक- सूर्यावर्त- रेवतीपौण्डरीक- शकुनि पूतनामुखमण्डिकार्ताश्च इत्येते न वाम्याः (कासि. ७; चसि. २.८)

**वायवाल**-न., रत्न० गारुत्मतम् (ध. ६.४९; पृ. २१६)

**वायवी**-स्त्री., छाया० रूक्षा श्यावारुणा हतप्रभा छाया वायवी ज्ञेया । सा अकस्मादुत्पन्ना विनाशाय, सहजा तु क्लेशाय कल्पते (चइ. ७.११-१३)

**वायवीय**-वि., वायुगुणभूयिष्ठं (द्रव्यं कर्म वा) (चशा. ७.१६; सुसू.४१.४(४)) द्र०'वायव्यद्रव्यम्

**वायव्य**-वि., वायवीयम्, वातजः (रोगादिः) (चनि. १.४) यथा गुणाः-वायव्यास्तु स्पर्शः स्पर्शनेन्द्रियं सर्वचेष्टासमूहः सर्वशरीरस्पन्दनं लघुता च (सुशा. १,१९)

**( वायव्या )**-स्त्री., वनस्पति० करञ्जभेदः अङ्गारवल्लिका (ध. ५.११०; पृ. १९१)

**-द्रव्य**-न., पाञ्चभौतिकमपि वायुगुणभूयिष्ठं द्रव्यम् । वायव्यद्रव्यस्य गुणाः- लघुशीतरूक्षखरविशदसूक्ष्म- स्पर्शगुणबहुलम्; तत्कर्म-रौक्ष्यग्लानिविचारवैशद्य- लाघवकरम् (चसू. २६.११; अहृसू. ९.८)

**-मर्मन्**-न., यत्र मर्मसु वातः भूयस्त्वेन अवतिष्ठते । तद्विशेषः- शल्यमुखावरुद्धो यावदन्तर्वायुस्तिष्ठति तावज्जीवति । उद्धृतमात्रे तु शल्ये मर्मस्थानाश्रितो वायुः निष्क्रामति तस्मात्सशल्यो जीवति, उद्धृतशल्यो म्रियते । पाकात्पतितशल्यो वा जीवति (सुशा. ६.१६)

**वायस**-पु., पक्षि० प्रसहवर्गीयः (सुसू. ४६.७५ अहृसू. ६.४९) वय एव वायसः । वयते वा (चसू. २७.३६)

**( वायसी )**-स्त्री., वनस्पति० काकमाची (चक. चचि. १२.६३; सुचि. ९.२९; र. ३०.४७ ध. ४.२१; पृ. १३८)
काकादनी (रा. ३.४४; पृ. १३९)
काकनासा (रा. ३.४०; पृ. १३९)
काकजङ्घा (रा. ४.३८. पृ. १३९)
काकोदुम्बरिका (इन्दु. असंउ. ४४)
काकतिक्ता (सुचि. ९.२९)
तेजोवती (रा. ३.३९३; पृ. ६१)
शाक० काकमाचीशाकम् (असंचि. ४)

**-तुण्ड**-पु., अस्थिसन्धिभेद० वायसतुण्डाकृतिः सन्धिः । यथा हनुसन्धिः (सुशा. ५.२७; असंशा. ५)

**-पीलुक**-पु., वनस्पति० काकाण्डः, काकनन्दी । सैव वायसपीलुक इति जज्जटः (चचि. २३.२१७) गुञ्जा (इन्दु. असंउ. ४३)

**वायसादनी**-स्त्री., वनस्पति० तेजोवती (रा. ३.३९३; पृ. ६१)
काकादनी (रा. ३.४३; पृ. १३९)

**वायसाह्वा**-स्त्री., वनस्पति० काकमाची (रा. ४.२५; पृ. १३८)
काकनासा (रा. ३.४१; पृ. १३९)

**( वायसी )-शाक**-न., शाक० काकमाचीशाकम् (असंचि. ४)

**वायुसेक्षुक**-पु., वनस्पति० काशः (ध. ४.१३०; पृ. १६०)

**वायसोलिका**-स्त्री., वनस्पति० काकोली (रा. ३.१६६; पृ. ३१)

**वायसोली**–स्त्री., वनस्पति० काकोली
( ध. १.१३२; पृ. ३१ )

**वायु**–पु., वातः ( चचि. २८.१४; चचि. ३०.२३; सुशा. ३.४ ) केवलवायुः अनावृतवातः । केवलं वायुमुद्दिश्य केचिद्गदाः वेपथ्वादय उक्ताः । तथा चावृतं वातमुद्दिश्य केचिद्गदाः (चक्र. चचि. २८.१४) पित्तसम्मूर्च्छितो वायुः पित्तेन सह एकतां प्राप्तः दाहादीन् करोति ( चचि. ३०.२३ )

**–कोण**–पु., वायव्यदिक्कोणः, रसशालायाः वायव्ये कोणे शोषणकर्म करणीयम् ( र. ७.३-४ )

**–कोप**–पु., वातप्रकोपः ( असंसू. ३५ )

**–चय**–पु., वातस्य सञ्चयः ग्रीष्मजातः
( अहृसू. १२.२४ )

**–धातु**–पु., दोष० वात एव । शरीरधारकः वायवीयः शारीरभावः ( चवि. ८.१२२ )

**–निर्वाहिन्**–वि., व्रण० यस्माद्वायुर्बहिर्निर्गच्छति, सः ( असंसू. ३८ ) वायुनिर्गमद्वारभूतः
( अहृसू. २९.५२ )

**–परमाणु**–पु., वायोरत्यन्तः सूक्ष्मो विभागः
( काजातिसूत्रीयशा. ३ )

**–पिण्डक**–पु., नपुंसक० वातपिण्डकः । यदा पुंगर्भस्य वाय्वग्निदोषाद्वृषणनाशस्तदा वायुपिण्डकाख्यो नपुंसको भवति ( असंशा. २ )

**–प्रकोप**–पु., वातप्रकोपः वर्षासु वातः प्रकुप्यति
( अहृसू. १२.२४ )

**–प्रशम**–पु., वातस्य शमनम्, शरदि वातस्य शमनं भवति ( अहृसू. १२.२४ )

**वाय्वात्मक**–वि.. वायुरूपम्, वायवीयम् । यथा–स्पर्शनम्
( चशा. ४.१२ )

**वाय्वामय**–पु., वातरोगः ( अहृसू. १८.२६ )

**वार्**–न., जलम् ( रा. १४.३१८; पृ. २५८ )

**वारङ्ग**–न., शस्त्रनालम् ( सुसू. २७.१२ )
ग्रहणस्थलम् यथा स्वस्तिकयन्त्रस्य ( सुसू. ७.१० )
शस्त्रमस्तके शिखाकारोऽवयवः ( अहृसू. २८.२९ )

**वारड**–पु., पक्षि० विष्किरजातीयोऽयम् (चसू. २७.४९)
द्र० 'विष्किर'

**वारण**–पु., प्राणि० गजः ( असंचि. ९; अहृसू. ६.५० )
न., निवारणोपायः ( सुचि. २७.५ )

**–काष्ठ**–न., पुन्नागकाष्ठम्, वरुणकाष्ठम्, सूतिकागारार्थमुपयुज्यते । ( चशा, ८.३३ )

**–केशर**–न., वनस्पति० नागकेशरम् (सुउ. ५०.२३)

**–मौक्तिक**–न., वारणस्य मस्तकोद्भूतं मौक्तिकम्
( असंउ. ४२ )

**वारणक**–पु., वनस्पति० करञ्जभेदः कण्टकीकरञ्जकः द्र० 'करञ्ज' ( अहृसू. १७.७ )

**वारपत्नी**–स्त्री., वनस्पति० धरणीकन्दः (रापरि. ७.४२; पृ. ३५० )

**वाराह**–वि., वराहसम्बन्धी यथा वाराहरसः, वराहस्य मांसरसः ( चसू. १३.८३ )

**–कर्णी**–स्त्री., वनस्पति० अश्वगन्धा ( ध. १.२७२; पृ. ६२ )

**–पित्त**–न., भैषज्य० वराहस्येदमिति वाराहम्, वराहस्य पित्तम् ( चचि. ३०.७१ )

**–पुट**–न., पुट० वराहसंज्ञितं पुटम्; तत्र अरत्निमात्रनिम्नविस्तारे चतुरस्रे खाते दीयमानं पुटम्
( र. १०.५४-५५; र. २.४१-४२ )

**–मदन**–पु., वनस्पति० महापिण्डीतक–स्निग्धपिण्डीतकभेदाद्द्विविधः । गुणाः–कटुः तिक्तः छर्दनः पक्वामाशयशोधनः कफरोगहृद्रोगहरः
( रा. ८.२८; पृ. ३५९ )

**वाराहिकंद**–पु., वाराही ( सु. चि. १७.३६ )

**वाराही**–स्त्री., कन्द० महाकन्दशाकम्
(सुचि. ७.१०; र. १२.१२५)
वाराहीकन्दः
महौषधि० सोमसमवीर्या । तस्याः प्राप्तिस्थानम्–काश्मीरस्थं क्षुद्रकमानसं सरः । तत्र वसन्ततौ दृश्यते 'वसन्ते कृष्णसर्पाख्या गोनसी च प्रदृश्यते' ( सुचि. ३०.५; सुचि. ३०.३२-३४)

**वाराही**–स्त्री., कन्द० गृष्टिकाकन्दः । गुणाः–तिक्तः कटुः शीतः हृद्यो बल्यः रसायनो वृष्यः कफपित्तघ्नः कुष्ठकृमिगरविषमेहघ्नः ( ध. ४.९२; पृ. १५२ )
हिं.—गेंठी, भिवोंलीकन्द.
म.—डुकरकन्द.
गु.—वाराहीकन्द, सुअरिआ, सालीवणावेल्य.
बं.—चामाळु, चुवडिआळु.

**–मूल**–न., वाराहीकन्दः ( वाराही ) (सुचि. २७.११)
वाराहीमूलरसायनम्–वाराहीकन्दकल्कं क्षीरचतुर्गुणं घृतद्रोणं पचेत् । अनेन क्रमेण शतपाकं घृतं द्रोणसंमितमुपयुज्य वर्षशतायुर्भवति । अन्ये पुनः अनुक्तं जलमेव चतुर्गुणमाहुः । यद्यपि स्नेहपानानन्तरं स्नेहभोजनं निषिद्धं तथाप्यत्र वाराह्या

शतपाकसंस्कृतस्य स्वभावतः शमनीयरूपस्य सर्पिषः पानाऽनन्तरं रसायनविधिना सर्पिषा भोजनं युज्यते इति न दोषः ( ड. सुचि. २७.११ )

**वारि**-न., द्रव्य० जलम् ( ध. ६.३०२ पृ. २५५ )
वनस्पति० वालकम् ( ध. १.४७; र. २१.१९० पृ. १६ )
कल्प० क्वाथः । यथा त्रिफलावारि त्रिफलाक्वाथः ( सुचि. ५.४२ )

**-कोष्ठ**-न., पाषाणादिविरचितं कुशूलाकारं जलपात्रम्; तदिदम् अवगाहार्थमुपयुक्तम् ( सुउ. ६४.२५ )

**-ज**-न., वनस्पति० कमलम्, रक्तपद्मम् ( चचि. ४.१०४ )
लवण० द्रौणेयम् ( द्रोणीलवणम् ) ( रा. ६.४९ पृ. ७६ )
वि., जलोद्भवम् । यथा जलोद्भवानां मांसम् ( अहृसू. १७.८ )

**-तर**-वि., वारिणि जले तर्तुं शीलमस्येति वारितरम्, यथा मृतं लोहम् ( र. ८.२६ )
वनस्पति० उशीरम् ( रा. १२.२६ पृ. ९७ )

**-दा**-स्त्री., वनस्पति० मुस्ता ( रा. ६.५८ पृ. १५ )

**-भव**-पु., भैषज्य० शङ्खः ( ध. ३.१७९ पृ. १३० )
न., खनिज० स्रोतोञ्जनम् ( रा. १३.२२६ पृ. १२७ )

**-रुह**-न., वनस्पति०रक्तपद्मम् ( रा. १०.२४४ पृ. १६५ )

**-वल्लभा**-स्त्री., वनस्पति० विदारिका ( रा. ७.१९४ पृ. ३५ )

**-वाह**-पु., वनस्पति० मुस्ता ( र. २७.११७ )

**-सम्भव**-पु., धान्य० यावनालः ( रापरि. ८.३८; पृ. ३६० )
न., वनस्पति० लवङ्गम् ( ध. ३.४१, पृ. १०४ )
खनिज० अञ्जनम् ( रा. १३.२१५; पृ. १२५ )

**-सात्म्य**-न., आहारद्रव्य० दुग्धम् ( ध. ६.१६१; पृ. २३९ ) दूध.

**वारुण**-पु., वनस्पति० वरुणः (चसू.१४.३१ )
वि., पश्चिमदिग्देशीयः प्रतीच्यः, यथा कोणः, रसशालायाः पश्चिमे कोणे प्रक्षालनादिकं कर्म करणीयम् ( र. ७.३-४ )
न., जलम् ( ध. ६.३०२; पृ. २५५ )
न., वि., सत्त्व० शुद्धसत्त्वस्य प्रकारः लक्षणम् ( सुशा. ४.८३ )

**(वारुणी)**-स्त्री., बालग्रह० रेवत्या विंशतिनामसु एकम् ( का बालग्रहचि ) जातहारिण्या रेवत्या अपरंनाम ( काक रेवती० ७ ) सा पञ्चमेऽहनि अपत्यं विनाशयति ( काक रेवती० ४५ )
वनस्पति० इन्द्रवारुणी ( रा. ३.३७२; पृ. ५८ )
करुणी ( रा परि. १०.२७; पृ. ३७० )
श्वेतपुष्पी, नागदन्ती ( ध. १.२५२; पृ. ५९ )
गण्डदूर्वा, 'हरियाळी' इति ख्याता, द्र० 'दूर्वा' ( ध. ४.१४५; पृ. १६३ )
आसुत० ( ध. ६.२५५; पृ. २५१ ) सुरा ( सुउ. ४२.१०२ ) प्रसन्नापर्यायः ( अहृसू. ७.४२ )
श्वेतसुरा सा च श्वेतपुनर्नवादिमूलयुक्तेन शालिपिष्टेन क्रियते। गुणाः—लघुस्तीक्ष्णा हृद्या शूल-कास-वमि-श्वास-विबन्ध-आध्मान-पीनसघ्नी ( अहृसू. ५.६८ ) वातशूलशमनी ( सुउ. ४२.१०२ )

**-काय**-पु., चित्तप्रकृति०सात्त्विकोऽयम् (सुशा.४.८३) लक्षणम्—शीतसेवा, सहिष्णुत्वं पिङ्गलाक्षता पिङ्गलकेशत्वं प्रियवादित्वमित्येतानि वारुणकायलक्षणानि ( सुशा. ४.८३ )

**-काष्ठ**-न., पुन्नागकाष्ठम्, वरुणकाष्ठं वा ( चशा. ८.३३ )

**-धूप**-पु., धूपकल्प० शकुनी-पौण्डरीक-रेवती ग्रहरोगेषु प्रशस्तः ( काक धूपकल्पा० १ )

**-पुष्पा**-स्त्री., वनस्पति० विशाला ( इन्द्रवारुणी ) (असंउ. ४५ )

**-वायु**-पु., पश्चिमदिग्वायुः । 'बर्षासु ( वर्षाऋतौ ) वारुणो वायुः वाति । ' ( असंसू. ४ )

**-सत्वं**-वि., ( परिव० ) शुद्धसत्त्व० 'लक्षणम्—शूरं धीरं शुचिमशुचिद्वेषिणं यज्वानमम्भोविहाररतिमक्लिष्टकर्माणं स्थानकोपप्रसादं वारुणं विद्यात् ' ( चशा. ४३७(५) )

**( वारुणी )-प्रसाद**-पु., वारुणी श्वेतसुरा ( हे. अहृसू. ५.६८ ) तस्या उपरितनः स्वच्छभागः अयं यक्ष्मिणः पीनसादिलक्षणेषु उपयुक्तः ( चचि. ८.६९ )

**-मण्ड**-पु., वारुण्या उपरिस्थितो भागः ( चचि. ८.१६४ )

**वार्क्ष**-वि., वृक्षस्येदम् वृक्षमयं वा यथा वल्कलादि ( सुचि. २४.१३ ) यथा वृक्षभवं वल्कलम्

व्रणबन्धनद्रव्येषूपयुक्तम् (चचि.२५.९६) वृक्षकाष्ठमयम् ( अहृसू. २५.२१ )

**–पट्ट**–पु., ( परिव० ) वल्कलम् । व्रणबन्धनद्रव्येषूपयुक्तम् ( चचि. २५.९६ )

**–शल्य**–न., वृक्षकाष्ठमयं शल्यम् अनिर्हृतं तच्छल्यं रक्तं मांसं पचति क्षिप्रम् ( सुसू. २७.१९ )

**वार्क्षि**–पु., ऋषि० रोगापहरणचिन्तनार्थं हिमवतः पार्श्वे समेतेषु महर्षिषु एकः ( चसू. १.१० )

**वार्ज**–न., वनस्पति० कमलम्, रक्तपद्मम् ( रा. १०.२४३; पृ. १६५ )

**वार्तलक्षण**–न., आरोग्यलक्षणम् । अनिर्वेदो वार्तलक्षणानां श्रेष्ठं लक्षणम् ( चसू. २५.४० )

**वार्ता**–स्त्री., रोग० या स्त्र्याकृतिबाहुल्यात्स्त्री, स्त्री-कार्याकरणाच्च स्त्री ( इन्दु. असंशा. २ ) स्त्रीकराणांच शरीरबीजभागानाम् एकदेशः प्रदुष्टो भवति तदा वार्ता समुत्पद्यते ( चशा. ४.३० )

अवस्था ( अहृसू. २९.८० )

**वार्ताक**–पु., पक्षि० वर्तीकः वनचटकः ( र. १८.४३ )

फलशाक० ( चसू. २७.९७ ) वर्तुलफलः ( सुसू. ४६.२६९ ) वृन्ताकपर्यायः ( हे. अहृसू. ६.७७ ) तकारी, श्वेतवार्ताकिनी ( इन्दु. असंउ. ४३ ) गुणाः– स्वादु ( कटुतिक्तम् ) ( चसू. २७.१६२; असंसू. ७.१ ) तीक्ष्णोष्णं लघु ( वृद्धं गुरु ) कटुविपाकं दीपनं शुक्रलं ( हृद्यं रुच्यं ) ( असंसू. ७ ) वातकफघ्नम् ( वातघ्नं ) ( चसू. २७.१६२ ) बालं कफपित्तघ्नं जीर्ण–वृद्धं सक्षारपित्तलम् ( सुसू. ४६.२६९ ) ज्वरहिक्काकासघ्नम् ( भाप्र. शाकवर्ग )

हिं.—बैंगन, भंटा, भटा.

**म.—वांगे.**

गु.—रिंगणा, रिंगणी.

बं.—वेगुनगाछ.

त.—कुठिरेकइ.

फा.—वादंगान्.

**(वार्ताकी)**–स्त्री., फलशाक० वार्ताकम्(रा.७.१२७;पृ.२६)

वनस्पति० बृहती ( ध. १.९३ पृ. २४ )

**–फल**–न., फल० वार्ताकम् ( असंसू. १४ )

**वार्ताकिनी**–स्त्री., वनस्पति० कासघ्नी कण्टकारी ( ध. १.९८; पृ. २५ )

**वार्ताकु**–पु., फलशाक० वार्ताकम् ( चसि ९५८; सुचि. ४.३१ )

वनस्पति० बृहती ( सुउ. २१.५२ )

**वार्तिक**–पु., वार्तासु लोकश्रुतवृत्तान्तेषु विषये स्मरणकुशलः, समस्तशास्त्रतत्त्वज्ञः ( र. ७.२५ )

**वार्तिका**–पु., पक्षि० वार्तिकः, विष्किरवर्गीयः (अहृसू. ६. ४४ ) वनचटकः, स्वल्पः संघातचारी ( सुसू. ४६.५९; चसू. २७.४७ )

**वार्तीका**–स्त्री., फलशाक० वार्ताकम् (ध.१.१०१ पृ.२६)

**वार्धक**–पु., ग्रहरोग० वार्धकग्रहजुष्टः, लक्षणम्–यश्च पर्वत–गज–वृक्षादिभ्यः पतनाद् वार्धकेन संसृष्टो भवति, स विस्फारितनेत्रः त्वरितगतिः स्वफेनलेही निद्रालुः अति पतति अति कम्पते च। एतादृशलक्षणो न जीवति, तस्मादसाध्यः ( सुउ. ६०.१६ )

न., वयोवस्था० जरा ( र. २६.४ )

वनस्पति० कुरी ( रा. १६.१७९; पृ. २३० )

**वार्धिफेन**–न., भैषज्य० समुद्रफेनः ( ध. ६.२१७; पृ. १२६ )

**वार्धिभव**–न., लवण० द्रोणीलवणम् (रा. ६.४९ पृ. ७६)

**वार्धेय**–न., लवण० द्रोणीलवणम् ( रा. ६.४९ पृ. ७६ )

**वार्यमाण**–वि., प्रतिषिध्यमानः निवार्यमाणः यथा वार्यमाणः परगृहे न प्रविशेत् ( इन्दु. असंसू. ३ )

**वार्यवसेचन**–न., शीतोदकपरिषेकः, नेत्रे विलम्बिनि शिरसि वार्यसेवचनं कार्यम् ( सुउ. १९.८ )

**वार्योकस्**–स्त्री., जलकीट० जलौकाः ( सुक. ५.५९-६० )

**वार्योविद**–पु., राजर्षिविशेषः ( चसू. २६.४ )

वातगुणदोषविवेचने विवदमानानामेकतमः ( चसू. १२.८ )

यज्ञःपुरुषविषये विवदमानानामन्यतमः ( चसू. २५.१२ )

रोगभेदे तस्य मतम् 'द्वौ रोगौ निजागन्तुश्च इति' ( कासू. २७.३ ) आयुर्वेदज्ञः ( कासि. ३ )

**वार्ष**–वि., वृषो नाम वृषभः, वृषस्येदं वार्षम्, यथा वृषभवं मूत्रम्, अपस्मारचिकित्सायां घृते सिध्द्यर्थमुपयुक्तम् ( चचि. १०.२६ )

**वार्षिक**–वि., वर्षासु भवम्, यद्वा वर्षर्तौ वृष्टं तत् यथा जलम् । गुरु अभिष्यन्दि मधुरं च ( चसू. २७.२०३ )

न., वनस्पति० त्रायमाणा ( ध. १.२५४; पृ. ५९ )

**( वार्षिकी )**–स्त्री., वनस्पति० वर्षोद्भवा ( वनमल्लिका ) गुणाः–शीता सुगन्धा हृद्या त्रिदोषघ्नी विषस्फोटकृमि–आमहरा ( ध. ५.१३६ ) मुखपाकहरा ( शालिग्राम )

हिं.—बेला, मोतिया, घुघुरुमोतिया, वन मोगरा; मोगरा.

**म.—मोगरी, रानमोगरी, बटमोगरा, सोटई मोगरी.**

गु.—बेल्य, डोलर, जंगली चिखलयो, रान मोगरो.

बं.—बेलफुलगाछ, मल्लिकाफुलरेगाछ, मल्लिकाभेद.

ता.—मल्लिगाइ.

फा.—झाम्बक, गुले सुपाद.

**–रसायन**–न., सिद्धयोग० वर्षपर्यन्तं सेव्यं रसायनम्। तस्य सेवनेन शुभ्रकेशानां कालिमा जायते। दीर्घायुष्यं पुष्टिर्वीर्यं दिव्यदृष्टिश्च जायते ( र. २६.३२ )

**वाल**–पु., चामरः ( असंसू. ३८; अहृसू. २९.४१ )

**–खिल्य**–पु., ऋषि० ( चचि. १.५४ ) रोगापहरण-चिन्तनार्थं हिमवतः पार्श्वे समेतेषु महर्षिषु सम्मिलिताः स्वल्पप्रमाणाः महर्षयः ( चक. चसू. १.१३; असंशा. १२ )

**–वर्ति**–स्त्री., केशानां सन्धिग्रन्थिविरहिता वर्तिः स्नुते च मस्तुलुङ्गे वर्तिरेषा प्रवेश्यते ( असंउ. ३१ )

**वालक**–न., तृण० ( चसू. ३.२९; ड. सुचि. १७.१०-१३; सुउ. ५२.२४ ) गुणाः–तिक्तं शीतं केश्यं पित्तकफघ्नं ज्वर-विसर्प-रक्तरोग-कण्डू-कुष्ठ-दाहच्छर्दि-तृषा-अतिसार-श्वित्र-व्रणघ्नम् ( ध. १.४७; पृ. १६ )

हिं.—खस, खसबेना.

**म.—वाळा.**

गु.—वाळु.

बं.—खसखस.

ता.—वट्टिवेर.

वनस्पति० उशीरम् ( ध. ३.१४; पृ. १६ )

सुगन्धवालकम्, नेत्रवालकम् ( असंसू. १२. असंसू. १५ )

विष० कन्दविषम्। गुणाः–स्निग्धघनगुरुकर्मण्यम् ( असंउ. ४८ )

**वालु**–न., वनस्पति० वालुकम् ( ध. १.१७८ पृ. ४१ )

**वालुक**–न., वनस्पति० एलावालुकम् ( ध. ३.७६; पृ. १११ )

त्रपुसभेदः, गुणाः–मधुरं शीतं, गुरु, ( अपक्वम् ), लघु ( पक्वम् ), भेदि, अग्निकृत् ( पक्वम् ), रुच्यं कासपीनसकरम् ( रा. ७.२५१ )

रक्तपित्तघ्नम् ( ध. १.१७८; पृ. ४१ )

हिं.—तुती फुट.

**म.—वाळुक.**

बं.—फुती.

त.—कक्रि.

विष० तद्वालुकानिभम् ( र. २९.१६ )

**( वालुका )**–स्त्री., सिकतगुणाः–मधुरा शीता वातघ्नी सन्ताप-श्रम-शाखाशैत्यहरा ( धपरि. ६.१८ पृ. २९१)

**( वालुकी )**–स्त्री., वनस्पति० वालुकम् ( रा. ७.२५० पृ. ४१ )

**–पर्ण**–पु., वनस्पति० अश्मन्तकः ( ध. १.१९४ पृ. ४६ )

**–पुट**–न., पुट० उपर्यधस्तस्या वालुकया दीयमानं पुटम् ( र. १०.६२ )

**–प्रक्षेपण**–न., जलशीतीकरणार्थमुदकपात्रस्य वालुकामध्ये प्रक्षेपणम् ( सुसू. ४५.१९ )

**–यन्त्र**–न., यन्त्र० वालुकापूरितं खर्परं यत्र वालुका-मज्जिताया रसयुक्तकूपिकायाः पचनं विधीयते चुल्लिस्थेनाऽग्निना ( र. ५.३९-४० ) अन्तर्द्वि-भागरसपूरिताङ्गुलपरिमाणमृद्वस्त्रावगुण्ठितकाचकूपी-पचनार्थं निर्मितं वालुकायुक्तं वितस्तिगम्भीरं कल-शेनाऽऽच्छादितं भाण्डम् ( र. ९.३६-३९ )

**वालुकादिकासीस**–न., भैषज्य० कासीसभेदः, वालुका-समानवर्णः । गुणाः– लवणाम्लमुष्णं धूमसदृशं केशरञ्जकं विषश्वित्रघ्नम् ( र. ३.५५ )

**वालुकैलवण**–न., लवण० 'वालुका सिकता ताभि-र्युक्ता इला पृथिवी वालुकैला, तत्र संभवं लवणं वालुकैलम्।' गुणाः– कटुकं छेदि ( ड. सुसू. ४६.३२१ )

**वाल्कपट्ट**–पु., वल्कलमयः पट्टः । अनग्निस्वेदार्थमुपयुक्तः ( सुचि. ४.१७ )

**वाल्मीकी**–वि., वल्मीकं पिपीलिकागृहं तस्माज्जाता वाल्मीकी मृत्तिका। सा मूषायोग्या (र. १०.६-७)

**वाल्लभ्य**–न., वल्लभस्य भावः। प्रियत्वं, प्रियकरत्वम् ( सुचि. २६.४ )

**वास**–पु., निवासस्थानम्, गृहम्। यथा शरीरिणः निवासस्थानं शरीरम् ( चइ. ११.२३ )

**वासक**–पु., वनस्पति० आटरूषः ( ध. १.२३; पृ. ११)

**वासन**–न., संस्कार० गन्धनम् ( चवि. १.२२(२) ) सौगन्ध्यादिकरम् ( असंसू. ७ )

परिव० न., स्थापनम् ( सुचि. २.७८ )

**( वासनी )**-स्त्री., वनस्पति० वत्सादनी ( रापरि. ३.३३; पृ. ३३२ )

**वासन्त**-पु., वनस्पति० बिभीतकः ( ध. १.२१२; पृ. ५० )

तिलकः ( रा. १०.२६७; पृ. २०२ )

**वासन्ती**-स्त्री., वनस्पति० जाती० तद्गुणाः-शीतला सुगन्धा हृद्या स्वेदनाशनी श्रमहारिणी ( ध. ५.१३९; पृ. १९८ )

गणिकारी ( रापरि. १०.३१ )

**वासन्तकवसा**-स्त्री., भैषज्य० वासन्तः उष्ट्रकः तस्य वसा ( चचि. १४.५६ )

**वासव**-पु., इन्द्रः ( असंशा. ३ )

**वासस्**-न., वस्त्रम् ( सुचि. २७.४ )

वनस्पति० तमालपत्रम् ( ध. २.५२; पृ. ८० )

**(बासा)**-स्त्री., वनस्पति० आटरूषः ( चसू. १४.३१; सुउ.४५.३३; असंसू.२६; अहृसू.६.७७; ध.१.२३; पृ. ११ )

**वासुकि**-पु., सर्प० दिव्यः सर्पः ( असंउ. ४१ ) अस्य विषमतिघोरम् (चचि. २३.१९८-१९९) निःश्वासदृष्टिविषः ये तक्षकादयस्तेऽसङ्ख्येयाः तेषु वासुकिः श्रेष्ठः ते ऽजस्रं गर्जन्ति वर्षन्ति तपन्ति च ( सुक. ४.५-७ ) देवदानवैः समुद्रमन्थनार्थमुपयुक्तः सर्पराजः ( र. ३.१७-१९ )

**वासुदेव**-पु., प्राचीनो रसाचार्यः ( र. १६.६१ ) रसरत्नसमुच्चयकर्त्रा सिंहगुप्तसूनुनाऽऽलोचितस्तन्त्रकर्ता ( र. १.५-९ )

**(वासुदेवी)**-स्त्री., वनस्पति० शतावरी ( ध. ४.४०; पृ. ६७ )

**वास्तिका**-स्त्री., वनस्पति० वनमेथिका ( ध. ६.११३ पृ. २३१ )

**वास्तु**-पु., न., अधिष्ठानम् ( सुनि. १४.१३ ) प्रदेशः। तस्य प्रशस्तत्वम्-प्राङ्निम्नत्वमुदङ्निम्नत्वं कृष्णमृत्तिकत्वं सुवर्णमृत्तिकत्वमित्यादिकम्। 'प्रशस्त वास्तुनि गृहे शुचौ आतपवर्जिते। निवाते न च रोगाः स्युः शारीरागन्तुमानसाः॥' ( सुसू. १९.३-४ )

न., शाक० वास्तुकम् ( रापरि. ७.६२; पृ. ३५२)

**-निवास**-वि., गृहभूमिनिवासी ( सुसू. ५.२२ )

**-परिग्रह**-पु., स्थानसंश्रयः ( चसू. १७.१०४ )

**-विद्या**-स्त्री., शास्त्र० वास्तु गृहं तस्य रचनाशास्त्रम्, वास्तुशास्त्रम् ( असंशा. ३ )

**-विद्याकुशल**-पु., वास्तुविद्यावेत्ता ( सुसू. १५.६ )

**-विद्याहृदय**-न., वास्तुविद्यातत्त्वम् ( चशा. ८.३३ )

**वास्तुक**-पु., न., पत्रशाक ( असंचि. १०; सुसू. २०.५; सुचि. ६.८; चचि. १९.३१ ) तस्य भेदः कङ्कवास्तुकः ( हे. अहृसू. ६.७२; ड. सुचि. ६.८; च. २७.८८ ) शाकवर्गे श्रेष्ठः ( सुसू. ४६.३३५ ) गुणाः-मधुरः क्षारः ( कटुविपाकः सुसू. ४६.२६० भाप्र. ) सुशीतलः ( लघुः ) ( भाप्र ) ( दीपनंपाचनम् ) ( भाप्र. ) वर्चोभेदी ( असंसू. ७ ) रोचनः मेधावर्धनः ( सु. ४६.२६० ) मलमूत्रशुद्धिकृत् ( शुक्रबलप्रदः भाप्र ) त्रिदोषजित् ज्वरार्शोनाशनः ( प्लिहक्रुमिहरः) ( भाप्र. ) ( रापरि. ७.६२; पृ. ३५२ )

हिं.—बथुआ, बडा, बथुआ, चन्दन, बेट्ठ.

**म.—चाकवत, चकवत, चिम्बिल, चिखिल)**

गु.—बथुओ, टांको, चीलो.

बं.—बेतुया, बेत्तोशाक.

ता.—परुप्पु.

फा.—मुसेलेसा, सरमक, सलमह.

**( वास्तुका )**-स्त्री., वनस्पति० चिल्ली ( रापरि. ७.६६; पृ. ३५३. )

**( वास्तुकी )**-स्त्री., वनस्पति० चिल्ली ( रापरि. ७.६६; पृ. ३५३ )

**-बीज**-न., टङ्कवास्तुकबीजम्। चूर्णमस्य रक्तपित्तशमनम् ( सुउ. ४५.३१ )

**वास्तूक**-पु., वनस्पति० वास्तुकम् ( सुसू. ४६.२६०; रापरि. ७.६२; पृ. ३५२)

**वाह**-पु., वाहनयोग्यः पशुः। यथाश्वादिः ( असंसू. ३ ) मान० द्वात्रिंशत् शूर्पाणि ( चक. १२.९७ )

**वाहक**-पु., कीट० सविषः कीटोऽयम्। गुणाः-प्राणनाशनः, येन दष्टस्य वेगज्ञानं सर्पदंशवद्भवति, तास्ताश्च तीव्रा वेदना भवन्ति, सन्निपातिकरोगकरः किंचायं दंशः वर्णेन रक्तपीतसितारुणः क्षाराग्निदग्धवच्च ( सुक. ८.१५-१८; असंउ ४३ )

**वाहन**-न., उह्यते अनेन इति वाहनम्। यथाऽश्वादि ( सुनि. ८.३ ) यथा रथाश्वादि ( सुसू. ४६.४९०; अहृसू. ८.५५ )

न., कर्म० प्रवाहणम् ( असंउ. ३८ )

**-श्रम**-पु., प्रवाहणजन्यः श्रमः ( काखि. ११.४४ )

**वाहमाना**-वि., प्रवाहणं कुर्वन्ती ( चचि. ३०.२७ )
( **वाहिका** )-स्त्री., रोग० प्रवाहिका ( काखि. १०.९५ )
**विंशतिगुण**-वि., गुरुलघ्वादिविंशतिगुणयुक्तः आहारः ( चसू. २५.३६ )
**विकक्षस्तृष्टसंसृष्ट**-वि., विगततृणस्थानसंपर्कम् (महानसम् ) ( सुक. १.१२-१३ )
**विकङ्कत**-पु., वनस्पति० फल० तद्गुणाः-तिक्ताम्लमधुरः शीतो लघुः पाके मधुरो दीपनः पाचनः कफपित्तघ्नः शोफकामलारक्तपित्तघ्नः (रा. ९.५४)
हिं.—कंटाई बिलांग्रा बिलांगुरा.
**म.—भेकळ, वेहकळ, वेहळी.**
गु.—विकलो.
बं.—वैइंच.
ता.—हलुमाणिका मालेगु.
(**विकङ्कता**)-स्त्री., वनस्पति० बलिका ( रा. ४.४३ )
**विकच्छा**-स्त्री., वनस्पति० महाश्रावणिका ( रा. ५.२१९ )
**विकट**-वि., विस्तीर्णः ( सुउ. ४७.४३ )
पु., वनस्पति० साकुरुण्डः ( रा. ६.१६ )
पु., गौरीपाषाणभेदः ( र. ३.१३८ )
वि., विषमम्, ग्रन्थिलम् ( र. ४.१५ )
**विकटोरु**-वि., विस्तीर्णौ ऊरू यस्याः, सा ( सुउ. ४७.४३ )
**विकण्टक**-पु., वनस्पति० तद्गुणाः- कषायकटुको रूक्षो रुचिप्रदो दीपनो वस्त्ररङ्गविधायकः कफघ्नः (रा. ११.१९ )
**विकत्थन**-वि., आत्मश्लाघित्वात् निन्दितः ( चइ. ७.१९ )
( **विकत्थना** )-स्त्री., पीडा श्लाघा, स्वगुणप्रशंसा ( असंचि. ९ )
**विकर्ण**-पु., वनस्पति० स्थौणेयकम् ( ध. ३.६९ )
**विकर्तिका**-स्त्री., लक्षण० गुदे कर्तनवत्पीडा ( चचि. २६.७ )
**विकर्षण**-न., यन्त्रकर्म० निर्हरणम् ( सुसू. ७.१७)
**विकलत्व**-न., वैगुण्यम् ( सुशा. ६.३४)
**विकलस्वरता**-स्त्री., गद्गदादिस्वरत्वम् ( सुसू. ३२.४ )
**विकल्प**-पु., प्रयोगः ( सुसू. ४३.१ )
व्याधिगणनारूपः सम्प्राप्तिभेदः ( चनि. १.१२ )
अंशांशकल्पना ( चसू. २०.३ )
तन्त्रयुक्ति० ( सुउ. ६५.३९ )
प्रकारः, भेदः ( सुसू. ४५.९५ )
न्यूनाधिकता ( चवि. ७.५ )



**विकल्पन**-न., तन्त्रयुक्ति० विकल्पः पाक्षिकाभिधानम् यथा सारोदकं वाऽथ कुशोदकं वा इत्यादि ( चक्र ) ( चसि. १२.४४ )
( परिव० ) अवधारणम् ( सुउ. ३९.९९ )
(**विकल्पना**)-स्त्री., विशेषकल्पना ( चसि. ११.२३ )
**विकसा**-स्त्री., वनस्पति० मांसरोहिणी (ध. ४.९४)
वनस्पति० मञ्जिष्ठा ( ध. १.१७ )
**विकस्वरा**-स्त्री., वनस्पति० पुनर्नवाभेदः रक्तपुनर्नवा ( रा. ५.४०७ )
**विकाणा**-स्त्री., वनस्पति० क्षीरकाकोली (इन्दु.असंउ.८)
**विकाणिका**-स्त्री., क्षीरकाकोली ( ड. सुउ. ६०.४७ )
**विकार**-पु., रोगः (चसू. १२.६२)
दुःखम्। धातुवैषम्यम् (चसू. ९.४)
दोषवैषम्यम् ( अहसू. १.२० )
दोषः ( चवि. ६.४ )
ज्वरः ( चचि. ३.११ )
अव्यक्तप्रकृतेः कार्यं तत् षोडशसंख्याकं पञ्च बुद्धीन्द्रियाणि पञ्च कर्मेन्द्रियाणि समनस्काश्च पंचार्थाः ( चशा. १.६४ )
परिणाम० ( चसू. ८.१४ )
**-चिह्न**-न., रोगलक्षणम् ( असंसू. ८.१५४ )
**-जात**-न., विकारसमुदायः ( अहसू. १२.३३ )
**-नामाकुशल**-वि., विकारनामानभिज्ञः ( वैद्यः ) (अहसू. १२.६४)
**-परिमाण**-न., विकाराणां संख्या ( सुसू. २४.१२ )
**-प्रकृति**-स्त्री.,रोगहेतुः(अहसू.१२.६६)
**-प्रभाव**-पु., विकारस्य कर्मविशेषकार्यत्वम् (चवि.१.१२)
**-विद्**-वि., विकारं जानाति इति विकारविद् ( वैद्यः ) ( सुचि. ३८.११२ )
**-सामान्यगुण**-पु., विकारस्य सदृशो गुणो यस्य सः ( देशकालादिः ) (चइ. १२.१५)
**विकाशिन्**-वि., गुण० शैथिल्यकारकम् (सुचि. ३३.३३) यो धातुभ्यः ओजश्च विशोष्य सन्धिबन्धान् शिथिलान् करोति । यथा क्रमुककोद्रवद्रव्याणि ( चक. १.५ )
**विकासिन्**-वि., विकसनशीलम् ( चसू. २६.७९ )
क्लेदच्छेदनः ( चसू. २६.४३ (३)
**-त्व**-न.. हिंसनशीलत्वम् यथा विषस्य प्राणघ्नत्वात् ( चचि. २३.२६ )
**-भाव**-पु., विकसनशीलत्वम् ( चचि. २४.३३-३४)

**विकिर**–न., जलाशय० निर्झरः वालुकादि विकीर्य गृह्यमाणोदकस्थानम् ( सुसू. ४५.४ )
**विकिरण**–न., इतस्ततः प्रसरणम् ( सुनि. ३.७ )
**विकीरण**–पु., वनस्पति० अर्कः ( ध. ४.१३ )
**विकीर्णरोमन्**–न., वनस्पति० सुगन्धि० स्थौणेयकम् ( रा. १२.१२५ )
**विकुटा**–स्त्री., रेवतीग्रह० ( कारेतीक. ३४.३५ )
**विकुर्वाण**–वि., विकृतिं गच्छन् ( अहृसू. १२.६२ )
**विकूजन**–न., अन्त्रभागे जायमानो 'गुरगुर्' इति शब्दः ( र. १८.४४ )
अव्यक्तशब्दकरणम् ( सुउ. ५६.७ )
**विकूणन**–न., लक्षण० संकोचनम् ( असंउ. १८ )
**विकृत**–वि., विकृतिमापन्नम् ( अहृसू. १.७ )
**–व्याधि**–पु., गलत्कुष्ठादिरोग० ( सुसू. २९.९-१५ ) द्र० 'कुष्ठ'
**–स्वरता**–स्त्री., स्वाभाविकस्य स्वरस्य वैपरीत्यम् ( सुसू. ३२.४ )
**विकृतक**–पु., मणि० वैक्रान्तः ( र. २.७४ )
**विकृताकृति**–वि., अमानुषाकृतिगर्भः ( सुशा. २.५० )
**विकृति**–स्त्री., व्याधिः ( चचि. १५.३७ )
विकृतस्थितिः ( चशा. ४.१४ )
**–बल**–न., रोगस्य बलम् ( चवि. ८.१२३ )
**–विषमसमवेत**–वि., विकृत्या हेतुभूतया विषमः प्रकृत्यननुगुणः समवायः यस्य, सः ( रसः दोषो वा ( चवि. १.१० )
**विकृतेक्षण**–वि., पुष्पितनेत्रादिः ( सुसू. २९.९-१५ )
**विकृन्तन**–वि., विशेषेण कृन्तनम्। सर्वधातूनां स्वगुण-प्रकर्षेणाधःपातनम् ( र. २.६१ )
**विकृष्टकाल**–पु., चिरकालः विप्रकृष्टकालः ( सुउ.५०.११-१२ )
**विकेशिका**–स्त्री., तिलकल्कमधुघृताक्तवस्त्रस्य सूत्रस्य वा वर्तिः ( सुसू. १८.२१ )
**विकेशिकौषध**–न., विकेशिकायां उपलिप्तं औषधम् यत् व्रणेषु उपयुज्यमानम् ( सुसू. १८.२१ )
**विकोथ**–पु., पूतिभवनम्, दुर्गन्धीभवनम् ( सुउ. २०.१५ )
**विक्रान्त**–न., खनिजद्रव्य० वैक्रान्तम् ( रा. १३.५० )
वि., विक्रमी ( सुचि. ३०.६ )
**( विक्रान्ता )**–स्त्री., वनस्पति० द्रवन्ती ( रा. ५.३४७ )
वनस्पति० हंसपादी ( रा. ५.१६६ )
वनस्पति० विष्णुक्रान्ता ( रा. ५.१७३ )
वनस्पति० सुवर्चला ( रा. ४.१४५ )
वनस्पति० वस्त्रादनी ( रा. ३.३२ )
वनस्पति० अपराजिता ( रा. ४.१ )
**विक्रियमाणा**–वि., रूपान्तरमापद्यमाना ( चवि. ८.७१ )
**विक्रोशन**–(परिव०) न., रोदनम् ( सुउ. ६२.८ )
**विक्लव**–वि., भीतः, कातरः, स्तोकक्लेशाभिभवनीयम् ( मनः ) ( चवि. ८.९४; सुचि. ७.३० )
**विक्लित्ति**–स्त्री., विक्लेदनम्, शुष्कत्वनिवृत्तिः ( अहृसू. ८.५२ )
**विक्लिति**–स्त्री., द्रव्यान्तरसंयोगः ( चवि. ८.१३६ )
**विक्लेद**–पु., क्लेदः ( सुसू. १५.५(२)
**विक्षय**–पु., रोग० मद्यजव्याधि० त्यक्तमद्यस्य पुनः सहसा अनुचितमद्यसेवनेन वातात् कष्टतमोऽसौ व्याधिर्भवति, विशेषतः दुर्बलस्य। तल्लक्षणानि– हृत्कण्ठरोगः, संमोहः, छर्दिः, अंगरुजा, ज्वरः तृष्णा कासः शिरःशूलश्चेति ( चचि. २४.२०२ )
हृत्कण्ठरोधः ( असंनि. ६.२३ )
**विक्षिप्यमाण**–वि., प्रसार्यमाणः प्रेर्यमाणः ( ड. सुउ. ३९.२३ )
**विक्षीर**–पु., वनस्पति० अर्कः ( ध. ४.१३ )
**विक्षेप**–पु., प्रेरणम् ( सुसू. २१.८ )
व्यानस्य कर्म, रसधातोः शरीरे वहनं प्रक्षेपणं च ( चचि. १५.३६ )
अङ्गविक्षेपः। अवयवानाम् इतस्ततः क्षेपणम् ( सुउ.३९.८५ )
**–संघातकर**–वि., वियोगमेलककरः ( चक्र. चसि. १.३९ )
**विक्षेपण**–न., प्रेरणवद् वेदनाविशेषः ( सुसू. २२.११ )
**विगत**–वि., गतम् ( चनि. १.४४ )
**–ज्वर**–वि., मुक्तज्वरः सन्तापरहितः ( चनि. १.४४)
**–लक्ष्मी**–वि., निःशोभः अश्रीकः ( चचि. २३.१०७ )
**विगतोन्मादलक्षण**–न., नष्टोन्मादस्यलक्षणम् ( चचि. ९.९७ )
**विगन्ध**–वि., विगतः पूतिगन्धः यस्य सः ( चक्र. चसि. ३.११ ) विशिष्टगन्धवत् ( विस्रगन्धम् ) विकृतगन्धम् ( सुशा. ३.१० )
**विगन्धक**–पु., वनस्पति० इङ्गुदी ( रा. ८.१८ )
**( विगन्धिका )**–स्त्री., वनस्पति० हपुषा ( रा. ४.१२ )
वनस्पति० अजगन्धा ( ध. २.१०० )
**विगीत**–वि., विपरीतत्वेन ज्ञातम् निन्दितम् ( चइ. ४.७ )

**विगीति**-स्त्री., विरुद्धकोटिकार्थसमावेशात्मक-विरुद्ध-कथनम् ( चवि. ६.४ )
**विगुण**-वि., संकुचितम् ( सुनि. १२.६ )
कुपितम् ( सुउ. १.२०-२१ )
दुष्टम् ( सुउ. ७.६ )
विपरीतम् ( सुचि. ३८.१८-१९ )
**विगुणानिल**-पु., उन्मार्गगामी वायुः ( सुउ. ५६.२० )
**विगृह्यवक्तृ**-वि., परवाक्यमुच्छिद्य वक्तुं शीलः ( सुशा. ४.६८-७० )
**विगृह्यसंभाषा**-स्त्री., जल्पवितण्डास्वरूपं संभाषणम् ( चवि. ८.१६ )
**विग्रथित**-वि., सम्यक् अनङ्कुरितः, ग्रन्थिभूतः ( व्रणः ) ( सुसू. ५.३६ ) विषमसंस्थानः (अहसू. २९.४४)
**विग्रह**-पु., शरीरम् ( चशा. ४.९ )
वादः, वाग्युद्धम् ( चवि. ८.२० ) कलहः ( अहसू. २.४२ )
**विघट्टन**-वि., विविधप्रकारेण चालनम् ( सुउ.४६.२३ )
**विघण्टिकाभिध**-पु., वनस्पति० गुच्छाह्वकन्दः ( रा. ७.६१ )
**विघात**-पु., वर्जनम् ( चशा. ४.४१ )
**विघुष्ट**-वि., शब्दितम् ( अहसू. ३.२४ )
**विघूर्णन**-वि., भ्रमणम् ( असंउ. ४५ )
**विघृष्ट**-वि., घर्षितम् व्रणप्रकारेष्वेकः ( असंशा. ११.४७)
**विघ्नेशानकान्ता**-स्त्री., वनस्पति० श्वेतदूर्वा ( रा. ८.२२९ )
**विचक्षण**-वि., चतुरः ( सुचि. ८.३७ )
**( विचक्षणा )**-स्त्री., वनस्पति० नागदन्ती ( रा. ५.२६)
**विचर्चिका**-स्त्री., रोग० कुष्ठभेदः, अयं कफप्रायः, तल्लक्षणानि-गात्रेषु अतिकण्डूर्तिरुजः रूक्षा राजयश्च भवंति ( सुनि. ५.१३; चचि. ७.३० )
**विचर्ची**-स्त्री., क्षुद्ररोग० विचर्चिका ( सुनि. १३.२८ )
**विचार**-पु., संकल्पनम्, तच्च मनसः एकं कर्म ( चशा. १.२१ )
गतिः, विचरणम् ( चक्र. चसू. २६.११ )
विविधाश्चेष्टाः ( अहसू. ९.९ )
**विचारण**-न., गतिविशेषकरम्, विधारणम्, मनसोऽनेकविकल्पकारणम् ( सुसू. ४१.४(४)
**विचारणा**-स्त्री., द्रव्यान्तरासंयुक्तस्नेहपानं वर्जयित्वा कृतः स्नेहोपयोगः ( चसू. १३.४ )
ऊहापोहाभ्यां वस्तुविमर्शः ( सुशा. १.१७ )
**विचार्य**-वि., विचारयितुं योग्यम्; मनोविषयाणां एकः। उपपत्त्यनुपपत्तिभ्यां यद्विमृश्यते तत् (चशा.१.२०)

**विचिकित्सा**-स्त्री., सन्देहः ( चसू. ११.७ )
**विचित्त**-वि., नष्टमनस्कः ( सुउ. ४८.१५ )
**विचित्र**-न., वनस्पति० शीर्णवृन्तम् ( ध. १.१७९ )
पु., वनस्पति० अशोकः ( ध. ५.१५९ )
**( विचित्रा )**-स्त्री., वनस्पति० मृगाक्षी ( रा. ७.२५८ )
**-प्रत्ययारब्ध**-वि., परस्परविलक्षणैः कारणैरारब्धम् ( अहसू. ९.२८ )
**-प्रत्ययारब्धद्रव्य**-वि., परस्परविलक्षणमहाभूत-संघाताऽऽरब्धं द्रव्यम्, क्वचिद्द्रव्ये यादृगेव भूत-संघातो द्रव्यस्याऽऽरम्भकस्तादृगेव रसादीनाम् तत्समान-प्रत्ययाऽऽरब्धम्, तत्सामान्यगुणान्नाऽति-क्रामति । क्वचिदन्यादृग्भूतसंघातो द्रव्यस्या-ऽऽरम्भकोऽन्यादृग्रसस्याऽन्यादृग्गुणस्येत्यादि, तद्वि-चित्रप्रत्ययाऽऽरब्धम् तत्सामान्यगुणानतिक्रामति। यथा 'स्वादुर्गुरुश्च गोधूमो वातजिद्वातकृद्यवः। उष्णा मत्स्याः पयः शीतं कटुः सिंहो न शूकरः ( अहसू. ९.२८ )
**विचित्रक**-पु., वनस्पति० भूर्जः ( रापरि. ९.२२ )
**विचिन्तित**-वि., कल्पितम् ( चइ. १२.५८ )
**विचिलक**-पु.,सविषकीट० तद्दंशपरिणामाः प्राणनाशनाः, वेगज्ञानं सर्पवद्भवति, तास्ताश्च तीव्राः वेदनाः भवन्ति, तथा सान्निपातिकाः रोगा भवन्ति, दंशास्तु वर्णेन रक्तपीतसितारुणः क्षाराऽग्निदग्धतुल्यः ( सुक. ८.१५-१८ )
**विचूर्णन**-( परिव० ) न., चूर्णीकरणम् ( र. २.३४ )
**विचेय**-वि., चयनार्हः, गवेषणीयः ( सुचि. ३०.३७ )
**विचेष्टन**-न., विगतकायपरिस्पन्दनम् विरुद्धचेष्टनं कर-चरणादिक्षेपाऽऽदिकम् ( सुसू. २५.३४-३५ )
**विच्छिन्न**-वि., अन्तराऽन्तरा वेगितम् ( चचि. २०.९ )
सविरामम् ( असंनि. ४ ) अल्पाऽल्पप्रवर्तकम् ( ड. सुउ. ४०.१७ )
**-मद्य**-वि., त्यक्तमद्यः ( पुरुषः ) ( ड. सुउ. ४७.४९ )
**विच्छेद**-पु., खण्डः ( असंसू. ६ )
**विजन**-पु., एकान्तः विविक्तदेशः जनरहितस्थानम् ( सुसू. ४६.४५८ )
**विजयधूप**-पु., सिद्धौषधि० शिलाजतुकणगुग्गुल-महिषाक्षगुग्गुल श्वेतकरवीरचोरकसरलकुन्दुरुकुष्ठ-रोहिषतृणरालाबोलानां धूपः, अयं सुभगत्वबुद्धि-विजयप्रदः पिशाचादिग्रहनाशनो जीर्णज्वरे च विहितः ( र. २२.१६७-६८ )
**विजयन्तिका**-स्त्री., वनस्पति० बिल्वः ( ध. १.११० )

**विजयभैरवतैल**-न., सिद्धतैल० हरितालमनःशिलागन्धकपारदान्समभागिकान् धान्याम्लेन पेषयित्वा वस्त्रे विलेप्य तद्वर्तिकामुद्दीपयेद्येन तैलं पतति। अस्य पानविलेपनाभ्यां कम्पवातप्रमुखानां वातरोगाणां विनाशो भवति ( र. २१.१६१ ) बाहुकम्पशिरःकम्पजानुकम्पैकांगवातादिवातविकाराणां विनाशनम् ( र. २१.१६२-६३ )

**विजया**-स्त्री., वनस्पति० हरीतकी ( ध. १.२०५ )
वनस्पति० नीलिनी ( ध. १.२३३ )
वनस्पति० वचा ( रा. ६.८ )
वनस्पति० श्वेतवचा ( रा. ६.१० )
वनस्पति० मञ्जिष्ठा ( ध. १.१८ )
वनस्पति० अग्निमन्थः ( रा. ९.१३६ )
वनस्पति० क्षुद्राग्निमन्थः ( रा. ९१.३८ )
वनस्पति० मेदा ( ध. १.१३० )
वनस्पति० भङ्गा ( र. १२.१२१-२२ )
वनस्पति० शुक्राङ्गी ( रा. ४.१२१ )
वनस्पति० शान्ता ( रा. ८.१५५ )
वनस्पति० अपराजिता ( ध. ४. परि. १ )
वनस्पति० नीलदूर्वा ( रा. ८.२२७ )
वनस्पति० बला ( चचि. २५.४७ )

**-गुटिका**-स्त्री., सिद्धौषधि० हरीतकीचित्रकौ प्रत्येकं पलत्रयं एलात्वक्पत्रमुस्तानामर्धपलं रेणुकाऽर्धपलं नागकेसरमर्धपलं, त्रिकटुपिप्पलीमूलवत्सनाभाः प्रत्येकं पलं, पारदः पलमात्रकः तत्समश्च गन्धकः इत्येतानि सूक्ष्माणि चूर्णयित्वा तुलार्धे पुराणे गुडे विनिक्षिपेद्धृतहस्तश्च बदरास्थिप्रमाणेन गुटिकाश्चरेत मात्रा-एका गुटिका। समयः रात्रौ। फलं शोथपाण्डुनाशनम् ( र. १९.९४-९८ )

**-वटिका**-स्त्री., पारदादियोग० पारदभस्म गन्धकं विशाला कुष्ठं वत्सनाभो रेणुका पिप्पलीमूलं बाकुची विषमुष्टिरश्वगन्धा पलाशबीजं त्रिकटु त्रिफला त्रिजातकं वचा इत्येषां गृहीत्वा चूर्णं समभागिकेन गुडेन गुटिकाः कुर्यात्। अनुपानं मधु। पथ्यं सिताघृतक्षीरशाल्यन्नं यवौदनो वा। विहारः ब्रह्मचर्यम्। फलम्-सप्तकुष्ठानां विनाशः ( र. २०.१९-२० )

**विजला**-स्त्री., वनस्पति० चञ्चुः ( रापरि. ४.१८ )

**विजुल**-पु., वनस्पति० शाल्मलीकन्दः (रापरि. ७.४६)

**विजृम्भक**-पु., व्याधिलक्षण० बहिरायामः ( चसू. १४.२१ )

**(विजृम्भिका)**-स्त्री., रोग० अशीतिवातरोगेष्वेकः, जृम्भा ( कासू. २७.१९-२८ ) नाड्या असम्यक्कल्पनजेयमस्ति मुहुर्मुहुर्वृद्धिमती ( चशा. ८.४५ )

**विजृम्भण**-न., जृम्भणम् ( अहसू. २.३५ )

**विज्जल**-वि., पिच्छिलम् ( चचि. १९.५ )

**विज्जुलिका**-स्त्री., वनस्पति० जन्तुकारी (रा. ३.१२९)

**विज्ञान**-न., शास्त्रस्य विस्तृतं सविशेषं वा ज्ञानम् ( चवि. ८.१८ )
प्रवृत्तिविशेषात्तुमेयं ज्ञानम् ( चक्र. चवि. ४.८ )
शिल्पशास्त्रादिबोधः ( सुशा. १.१७ )
लक्षणम् विज्ञायते सम्यक्परिचीयते अनेनेति विज्ञानं लक्षणम् ( ड.सुचि.३५.३३; चइ. ९.२३ )

**-तैलगर्भ**-पु., वनस्पति० अङ्कोटः ( रा. ९.३८५ )

**विज्ञानोपाय**-पु., ज्ञापकसाधनम् ( सुसू. १०.४ )

**विज्वर**-वि., सन्तापरहितः नीरोगः ( चचि. ३.३ )

**विज्वरत्व**-न., लक्षण० ज्वरशान्तिः ( चचि. ३.१७० )

**विटक**-पु., खनिजद्रव्य० गौरीपाषाणः (ध. ६ परि. १४)

**विटप**-न., मर्म० ( असंशा.७.४ ) वंक्षणवृषणयोर्मध्यस्थं

**-मर्मन्**-न., वंक्षणवृषणयोरन्तरे विटपं नाम मर्म, तत्र विद्धस्य षाण्ढ्यमल्पशुक्रता वा भवति (सुशा. ६.२४) सक्थिमर्म ( सुशा. ६.६ ) स्नायुमर्म ( सुशा. ६.७ ) वैकल्यकरं मर्म ( सुशा. ६.१२-१३ ) विटपमर्मणी द्वे वामदक्षिणभेदेन ( सुशा. ६.१२ ) मानम्-एकाङ्गुलम् ( सुशा. ६.२८ )

**( विटपिन् )**-पु., वनस्पति० वटः (रा. ११.११३ )

**विटप्रिय**-पु., वनस्पति० मुद्गरः ( रा. १०.५१ )

**विटवल्लभा**-स्त्री., वनस्पति० पाटला ( रा. ९.१५० )

**विड**-न., लवणम् ( ध. २.२८ ) पञ्चलवणेष्वेकम् ( चसू. १.८८ )

**विडङ्ग**-न., वनस्पति० तद्गुणाः-कटु-ईषत्तिक्तम्-उष्णं-रूक्षं-लघु-( शिरोविरेचनम् ( चसू. ४.११ ) वमनम् ( सुसू. ३९.३ ) विरेचनम् (चसू. १.८१ ) वातकफघ्नम्; विषकृम्यग्निमान्द्यारुचिभ्रान्तिहरम् ( कुष्ठघ्न ) ( चसू. ४.११ )
हिं.—वायविडङ्ग.
**म.—वावडिंग.**
गु.—वावडिंग, करकनाओ.
बं.—विडङ्ग.
ता.—वायुविलङ्गम्.
फा.—वारंगफावली.

**–तण्डुलरसायन**–न., रसायनकल्प० तस्य विधिः– द्रोणमात्रान् विडङ्गतण्डुलान् पात्रे पिष्टवत् उपस्वेद्य, विगतकषायं स्विन्नम् अवतार्य शिलायां पिष्ट्वा अनंतरं लोहकुम्भे मधूदकोत्तरं प्रावृषि अन्तर्गृहे भस्मराशौ चतुर्मासपर्यन्तं स्थापयेत्। अनंतरं तम् उद्धृत्य विशुद्धशरीरः सहस्रसंपाताभिहुतं कृत्वा प्रातः प्रातः बलानुसारेण उपयुंजीत। जीर्णे सति घृतवन्तम् ओदनं मुद्गामलकयूषेणालवणेन सह अश्नीयात्। शयनार्थं पांशुशय्या एव उपयोक्तव्या। एवं कृते सति मासादूर्ध्वं सर्वांगेभ्यः कृमयः निष्क्रामन्ति, तानणुतैलेनाभ्यक्तस्य वंशकंबिकया अपहरेत्। द्वितीये मासि पिपीलिकाः, तृतीये यूकाः ता अपि तथैवापहरेत्। चतुर्थे दन्तनखरोमाणि अवशीर्यन्ते। पञ्चमे प्रशस्तगुणलक्षणानि जायन्ते, अमानुषम् आदित्यप्रकाशं वपुः प्राप्नोति, दूराच्छ्रवणानि दर्शनानि च तमुपनमन्ति,। स च रसायनोपयोक्ता रजस्तमसी चापोह्य सत्त्वमधितिष्ठति, श्रुतनिगाद्यपूर्वोत्पादी गजबलाऽश्वजवः पुनर्युवाऽष्टौ वर्षशतानि आयुः अवाप्नोति। तस्य पुरुषस्य अभ्यङ्गार्थम् अणुतैलम् उत्सादनार्थं अजकर्णकषायः स्नानार्थं सोशीरं कूपोदकं चंदनम् उपलेपनार्थं च उपयोक्तव्यम्। आहारपरिहारौ भल्लातकविधानवत् ज्ञेयौ (सुचि. २७.८)

**–तैल**–न., कृमिहरसिद्धतैल० अन्यगुणाः–अनिलकफकृमिकुष्ठप्रमेहशिरोरोगापहरम् (सुसू.४५.११५)

**–सार**–पु., विडङ्गबीजम् (सुसू. ४४.९) विडङ्गतण्डुलः (र. २६.१६)

**–सिद्धतैल**–न., विडङ्गैरण्डादिद्रव्यसिद्धं तैलम् तत् कुष्ठकृमिमेहार्शोग्रहणीक्लैब्यविषमाग्निनाशनम् इदं पानाभ्यङ्गानुवासनैः उपयुज्यते (चसि ४.१८-२४)

**विडाल**–पु., प्रमाण० कर्षः (काचि.) (उदावर्तचि.)

**(विडाली)**–स्त्री., वनस्पति० विदारिका (ध. १.१४७)

**विडालिका**–वनस्पति० विदारिका (ध. १.१४७)

**वितण्डा**–स्त्री., वादप्रकारः वितण्डा नाम परपक्षे दोषवचनमात्रमेव; स्वपक्षस्थापनाशून्यः परपक्षदोषवचनपरो वादो वितण्डा (चवि. ८.२८)

**वितत**–वि., विस्तृतम् (सुचि. २९.१३)

**वितथ**–न., अयथार्थम्, असत्यम् (सुउ. ६०.८) निष्फलम् व्यर्थम् (सुसू. २०.२२)

**वितर्क**–पु., सम्भावनात्मकं ज्ञानम् (चवि. ४.४) विशिष्टस्तर्को वितर्को नाम अव्याप्त्यतिव्याप्त्यादिदोषरहितम् अनुमानम् (चवि. ८.८)

**वितस्ता**–स्त्री., नदी०, सिन्धुदेशे विद्यमानायाः कस्याश्चित् नद्याः नाम। अधुना झेलम बितस्ता बिहटइत्यादिभिर्नामभिः प्रसिद्धेयं नदी। यवनैस्तु अस्या एव हैडास्पेस बिडास्पेस (टोमेनी) इति नाम कृतम्। अस्याः नद्याः काश्मीरदेशे उत्पत्तिरस्ति (सुचि. २९.२८)

**वितस्ति**–स्त्री., मान० विस्फारितकरस्याङ्गुष्ठाग्रात्कनिष्ठिकाग्रं यावन्मानम् (र. १०.३४-३९)

**वितान**–पु., बन्ध० शिरस्त्राणाकारेण विस्तारो व्रणबन्धविशेषः, स च मूर्धनि विधेयः (सुसू. १८.१७)

**वितानक**–पु., वनस्पति० माडः (ध. ५.७०) दण्डधृतविस्तीर्णं परिपट्टम्, उल्लोचः(असंसू.६.६१)

**वितुन्नक**–पु., वनस्पति० धान्यकम् (ध. २.६३)

**(वितुन्निका)**–स्त्री., वनस्पति० तामलकी (रा. ५.१४४)

**वितुन्नभूता**–स्त्री., वनस्पति० तामलकी (ध. ३.८४)

**वितुन्ना**–स्त्री., वनस्पति० तामलकी (रा. ५.१४४)

**वितुष**–वि., विगतः तुषः यस्य, निस्तुषम् (असंसू. ६.१४० )

**वितूर्णक**–न., मुस्ता०कैवर्तमुस्तकम् (काखिल. १५)

**वितोद**–पु., लक्षण० सूच्यादिभिस्तुद्यमानमिव विविध-वेदना (सुउ. ४८.७)

**वित्रासन**–न., उपक्रम० विशेषेण त्रासो भीतिजननम् (चनि. ७.८) भयोत्पादनम् (चवि. ६१८)

**विदग्ध**–वि., पक्वापक्वम् (चचि. १५.१०) अपक्वम् (चचि. १९.१४) अपक्वम् (चचि. १९.१४) विरुद्धपरिणतिं प्राप्तः (ड.) सुउ. २२.१०)

**–व्रध्न**–वि., विदग्धगुदः (चसू. १४.१७)

**विदग्धाजीर्ण**–न., रोग० विदग्धेऽजीर्णे भ्रमतृण्मूर्च्छाः, पित्ताच्च विविधा रुजः, धूमाम्लः उद्गारः, दाहः स्वेदश्च जायते (असंसू. ११.५७)

**विदग्धाहार**–पु., अम्लीभूताहारः (सुसू. ४६.५२७)

**विदर्भ**–पु., दन्तरोग० अभिघातजोऽयं रोगः। दन्तमांसेषु दन्तकाष्ठादिना घृष्टेषु महान् संरंभो जायते। यस्मिन् सति दन्ताश्च चलन्ति; अयं विदर्भसंज्ञः रोगः (असंउ. २५)

**विदल**–न., धान्यप्रकार० शमीधान्यावयवः (सुसू. ४६.३४८)

काष्ठचूर्णम् ( चचि. १(३).३ )

**( विदला )**–स्त्री., वनस्पति० श्यामा ( रा. ६.३६५ )

**विदष्ट**–वि., अत्यासक्तम् ( सुसू. २७.१४ )

**–जिह्वाग्र**–पु., संलग्नजिह्वाग्रः ( सुशा. ८.८ )

**विदारक**–न., औषधिद्रव्य० लवणभेदः वज्रकम् ( रा. ६.५५ )

**( विदारिका )**–स्त्री., रोग० कफमारुतेभ्यः कक्षावंक्षणेषु कठिनो मंदवेदनायुक्तो ज्वरान्वितो यो ग्रन्थिः उत्पद्यते, सा विदारिका ( चचि. १२.८९ ) सैव ' विदारी ' ( असंउ. ३६ )

प्रमेहपिटका० ( असंनि. १०.४१ )

कर्णरोग० संनिपातात् यः श्वयथुः सवर्णादिस्वरूप उपेक्षितश्च पक्वः सन् कटुतैलनिभं तत्सदृशं वा स्रावं स्रवेत् कृच्छ्रेण च रोहति; बहुकालप्रयुक्त-भैषज्यसंस्कारात् रूढो भवति, सः श्वयथुः विदा-रिकेति व्यपदिश्यते सा विदारिका रूढा लब्धास्पदा सती अवश्यं कर्णशष्कुलीं संकोचयेत् (असंउ. २१;)

वनस्पति० विदारी ( ध. १.१४७ )

**विदारण**–न., नखादिभिरवदारणवद् वेदनाविशेषः ( सुसू. २२.११ )

वि., शोफादिपाटनः ( क्षारः ) (हे.अहृसू.६.१५१)

**विदारि**–स्त्री., वनस्पति० विदारी ( असंसू. १६.३ )

**–कन्द**–पु., शाक० अयं जीवनः, बृंहणः, वृष्यः, कण्ठ्यः, रसायने शस्तः, बल्यः, मूत्रलः स्वादु-शीतलः च ( चसू. २७.१२१ )

**–गन्धा**–स्त्री., वनस्पति० शालिपर्णी ( ध. १.८८ )

**–गन्धादिगण**–पु., द्रव्यगण० अयं व्याधिप्रत्यनीकः, तत्र द्रव्याणि विदारिगन्धा विदारी विश्वदेवा सहदेवा श्वदंष्ट्रा पृथक्पर्णी शतावरी सारिवा कृष्णसारिवा जीवकर्षभकौ महासहा क्षुद्रसहा बृहत्यौ पुनर्नवैरण्डो हंसपादी वृश्चिकाल्यृषभी चेति । विदारीगन्धादिरयंगणः पित्तानिलापहः शोषगुल्माङ्गमर्दोर्ध्वश्वासकासविनाशनः ( सुसू. ३८.४-५ )

**–गन्धादिघृत**–न., सिद्धघृत० विदारिगन्धादिगण-सिद्धं काकोल्यादिगणकल्कप्रतिवापं पयोमधुसिता-युक्तं घृतं पैत्तिके अपस्मारे शमनार्थं पाययेत् ( ड. सुउ. ६१.२९ )

**–गन्धाद्यगण**–पु., अस्मिन् गणे विदारिगन्धा बृहती पृश्निपर्णी निदिग्धिका श्वदंष्ट्रा चेत्येतानि द्रव्याणि भवन्ति ( चचि. १.४२ )

**विदारिणी**–स्त्री., वनस्पति० काश्मर्यः ( रा. ९.१४७ )

**विदारी**–स्त्री., वनस्पति० सच गुणतः मधुरा शीता गुरुः स्निग्धा बल्या वृष्या वातपित्तघ्नी रक्तपित्तघ्नी च ( ध. १.४८; रा. ७.१९५ )

हिं.—बिल्लैयाकन्द, बिलाइकन्द, विदारीकन्द, बिलारी.

**म.—भुईकोहळा, बेन्द्रीचा वेल.**

गु.—फगबेलानो कन्द, भोकोळुं.

बं.—भुइकुमडा, श्वेतभूंइकुमड, कालभूइकुमड.

ता.—फालमोडिका.

रोग० पित्तेन अन्तर्गले रागदाहतोदपूतिविशीर्ण-मांसयुतः यः श्वयथुः उत्पद्यते सः विदारीति नाम्ना प्रसिद्धः ( सुनि. १६.६३ )

क्षुद्ररोग० कक्षवङ्क्षणयोः विदारीकन्दवत् कठिना या पिटिका जायते सा (असंउ. ३६) द्र० 'विदारिका'

**–कन्द**–पु., कन्दशाक० शाकगुणाः–मधुरः बृंहणः, वृष्यः, शीतः स्वर्यः अतिमूत्रलः, बल्यः पित्तवात-हरश्च ( सुसू. ४६.३०० )

**–गणसिद्धतैल**–न., विदारीगणेन सिद्धं तैलम् । इदं वृश्चिकदंशे सेचनोपयोगि ( सुक. ८.७० )

**–गन्धा**–स्त्री., वनस्पति० शालिपर्णी अंगमर्दप्रशमन-द्रव्यगणोक्तमेकं द्रव्यम् ( चसू. ४.१७ )

**विदार्य**–पु., वनस्पति० विदारी ( असंसू. १५.१४ )

**विदार्यादिगण**–पु., द्रव्यगण० अस्मिन् गणे विदारी एरण्डः मेषशृङ्गी क्षुद्रवर्षाभूः सुरदारु मुद्गपर्णी माषपर्णी कपिकच्छूः अभीरू वीरा जीवन्ती जीवक ऋषभकः सारिवा हंसपादी चेत्येतानि द्रव्याणि वर्तंते ( अहृसू. १५.९-१० )

**विदाह**–पु., लक्षण० विशेषेण सर्वाङ्गदहनमिव चत्वारिंशत्-पित्तविकारेष्वेकः ( चसू. २०.१४ )

रक्तादिविदाहः, उपनाहस्वेदजन्यः ( चसू. १४.३८ )

अन्नस्य विदग्धत्वम्, उदरे, उरसि वा तस्य संज्ञा जायते ( चचि. १५.५५ )

अम्लपाकः (ड.सुउ.६४.१०)

पाकावस्था ( इन्दु. असंउ. २८ )

**विदाहिन्**–पु., गुण० यत् अम्लोद्गारदाहतृष्णाप्रभृती-नुदीर्य कृच्छ्रात् पाकमुपगच्छति, पित्तं च प्रकोपयति तद् ( द्रव्यम् ) ( सुसू. २१.२१ ) ' द्रव्यस्वभा-वादथ गौरवाद्वा चिरेण पाकं जठराग्नियोगात् । पित्तप्रकोपं विदहत् करोति तदन्नपानं कथितं विदाहि ( डल्हण. सुसू. ४५.१५८ )

विदाहकराणि द्रव्याणि यथा मरीच-सर्षपमद्य-प्रभृतीनि ( सुउ.५०.३ )

**विदितवेदितव्य**–वि., विदितानि वेदितव्यानि ज्ञेयतत्त्वानि यस्य येन वा सः ( चवि. ७.४ )

**विदितागम**–वि., ज्ञातभोजनादिशास्त्रः हेयोपादेयार्थाव-धारणार्थं परिशीलितशास्त्रः ( सुसू. ४६.४६५; सुउ. ५६.५ )

**विदुर**–वि., स्थायी ( चइ. २.१६ )

**( विदुल )**–पु., वनस्पति० वेतसः (ध. ५.११७ )

**( विदुला )**–स्त्री., वनस्पति० सातला ( ध. १.२३८ )

**विदूरक**–न., मणि० वैडूर्यरत्नम् ( र. ४.५ )

**विदेहाधिप**–पु., निमिः इति नाम्ना प्रसिद्धः विदेहदेशस्य राजा यः शालाक्यतन्त्रं चकार ( सुउ. १.५ )

**विद्ध**–न., सद्योव्रण० आशयेन विना यत्स्थानं निर्गतशल्यं वा स्यात् उन्नमितमुखं वा स्यात् तं विद्धं व्रणं विद्यात् ( सुचि. २.१९-२० ) इदमष्टविधम्–अनुविद्धम्, उत्तुण्डितम्, अति-विद्धम् निर्विद्धम्, अनुभिन्नम् भिन्नोत्तुण्डितम्, अतिभिन्नम्, निर्भिन्नम् ( असंउ. ३१ ) सुश्रुते पञ्चप्रकाराः– सिराविद्धः स्नायुविद्धः सन्धिविद्धः अस्थिविद्धो मर्मविद्धश्च ( सुसू. २५.३६-४० )

**( विद्धा )**–स्त्री., क्षुद्ररोग० वातपित्ताभ्यां पद्मकर्णिकाकारा पिटिकाभिः आचिता पिटिका ( असंउ. ३६ )

**विद्या**–स्त्री., ज्ञानम् आयुर्वेदः ( चसू. ३०.३१ )

**–धर**–पु., पारदादियोग० गन्धक–तालक–माक्षिक–ताम्रमनःशिला–पारदभस्मानि समभागानि दिनत्रयं पिप्पल्याः कषायेण स्नुहीक्षीरेण भावयित्वा निष्कार्ध–प्रमाणेन मधुना प्रातर्भक्षयेत् । तदनु च गोमूत्रं पिबेत् । असौ गुल्मं प्लीहानं च नाशयेत् ( र. १८.६६-६८ )

देवयोनिविशेषः ( सुसू. ६.२५ तः २८ )

**( –धरी )**–स्त्री., देवयोनिविशेषजन्या स्त्री (र. ३.३)

**–धरयन्त्र**–न., यन्त्र० चतुर्मुख्यां चुल्ल्यां स्थापितं रसपचनार्थं निर्मितं स्थाली–द्वितय–संपुटम् 'कोष्ठीयन्त्रम्' इत्यपराभिधम् ( र. ९.२७-२८ )

**विद्युत्**–स्त्री., तडित् ( सुसू. ५.२५ )

**–तुल्यवेदना**–स्त्री., लक्षण० विद्युद्वत्क्षणमात्र-स्थायिनी वेदना ( चचि. २४.१०२ )

**–पुञ्जवती**–स्त्री., आटरूषः ( र. १३.६८ ) ब्राह्मी ( र. १३.६८ )

**–प्रभा**–स्त्री., विद्युत्प्रकाशः ( सुशा. १०.४६ )

**–सम्पात**–पु., विद्युतः पतनम्, तडित्पातः ( असंसू. ३२.७ )

**( विद्युच्)–छिका**–स्त्री., स्थावरविषान्तर्गतमूलविष० ( सुक. २.५ )

**(विद्युज्)–ज्वाला**–स्त्री., वनस्पति० कलिकारी ( रा. ४.१८ )

**विद्रधि**–पु., स्त्री., रोग० शीघ्रविदाहित्वात् विद्रधि-रित्यभिधीयते ( चसू. १७.९० ) रक्तदोषज-विकारेष्वेकः ( सुसू. २४.९ ) एकदेशोत्थितः उत्सेधप्रधानः आशुकारी शस्त्रकर्मसाध्यो रोगः ( सुनि. ९.१ ) तस्याधिष्ठानं मांसधरा नाम त्वक् ( सुशा. ४.४ ) सम्प्राप्तिः–प्रकुपिताः दोषाः त्वग्रक्तमांसमेदांसि प्रदूष्य अस्थि समाश्रित्य महामूलं रुजावन्तं वृत्तं घोरं शोफं जनयन्ति तं विद्रधिमाहुः ( सुनि. ९.४-५ ) बाह्याभ्यन्तर भेदेन द्विधा, दोषादिभेदेन अयं षड्विधः, वातजः पित्तजः श्लेष्मजः सान्निपातिकः क्षतजः ( अभिघातजः ) रक्तजश्चेति ( सुनि. ९.६ ) सामान्यलक्षणः–महामूलं रुजावन्तं वृत्तम् अथवा आयतं शोफं विद्रधिं वदन्ति ( सुनि. ९.४-५ ) तत्र वातजः, कृष्णारुणपरुषात्यर्थवेदनः चित्रोत्थान-प्रपाकश्च ( सुनि. ९.७ ) पित्तजः, पक्वोदुम्बरसङ्काशः श्यावः ज्वरदाहवान् क्षिप्रोत्थानप्रपाकश्च ( सुनि. ९.८ ) कफजः–शरावसदृशः पाण्डुः शीतः स्तब्धः अल्पवेदनः चिरोत्थानप्रपाकः सकण्डुश्च ( सुनि. ९.९ ) सान्निपातिकः–नानावर्णरुजास्रावः घाटालः विषमः महान् विषमपाकी च (सुनि. ९.१०-११) अभिघातजः–तैस्तैर्भावैरभिहते क्षतेः अपथ्यसेविनः वा वायुविसृतः क्षतोष्मा सरक्तं पित्तमीरयेत् । तदा ज्वरतृष्णादाहादीनि लक्षणानि भवन्ति, अयं अभिघातजः क्षतजः वा पित्तविद्रधिलक्षणयुक्तः आगन्तु-विद्रधिः इत्यु-च्यते ( सुनि. ९.११ तः १३ ) रक्तजः–कृष्ण-स्फोटावृतः श्यावः तीव्रदाहरुक्ज्वरयुक्तः पित्तविद्रधि-लक्षणयुतश्च ( सुनि. ९.१३-१४ ) आभ्यन्तर-विद्रधिः- गुर्वसात्म्यविरुद्धान्नशुष्कसंसृष्टभोजनातिः व्यायामव्यवायवेगाघातविदाहिभिः पृथक् सम्भूय वा कुपिताः दोषाः गुल्मरूपिणं वल्मीकवत् समुन्नद्धमन्तः गुदे बस्तिमुखे नाभ्यां कुक्षौ वंक्षणयोः वृक्कयोर्यकृति प्लीन्हि हृदये क्लोम्नि वा विद्रधिं

कुर्वन्ति । तेषां लक्षणानि आमपक्वावस्था च बाह्यविद्रधिवत् जानीयात् । अधिष्ठानविशेषेण तस्य लिङ्गानि; यथा-गुदे वातनिरोधः, बस्तौ अल्पकृच्छ्रमूत्रता, नाभ्यां हिक्काऽऽटोपः, कुक्षौ मारुतकोपनम् वंक्षणोत्थे विद्रधौ तीव्रकटीपृष्ठग्रहः, वृक्कयोः पार्श्वसङ्कोचः प्लीह्नि उच्छ्वासावरोधनम्, हृदि तीव्रसर्वाङ्गग्रहः दारुणशूलः, यकृति श्वासः तृष्णा च क्लोमजे-अधिका पिपासा ( सुनि. ९.१९ तः २२ ) साध्यासाध्यता-यः विद्रधिः मर्मोत्थः यदि आमः पक्वः वा महान् अल्पो वा सः कष्टसाध्यः ( सुनि. ९.२३ ) नाभेरुपरिजाः प्लीहयकृतक्लोमकुक्षिहृदयजाः पक्वाः ऊर्ध्वं स्रवन्ति, इतरे गुदबस्तिवृक्कवंक्षणजाः अधो यान्ति । एषु चाधोनिःसृतेषु जीवति नोर्ध्वनिःसृतेषु । हृन्नाभिबस्तिजान् वर्जयित्वा येऽन्ये गुदकुक्षिवंक्षणवृक्कप्लीहयकृत्क्लोमजास्तेष्वन्तर्विद्रधिषु बाह्यतो भिन्नेषु कदाचिद्दैववशाज्जीवेत् न पुनरितरेष्वभ्यन्तरतो भिन्नेष्वित्यर्थः ( सुनि. ९.२४-२५ ) त्रिदोषजः विद्रधिः हृन्नाभिबस्तिजः पक्वः असाध्यः ( सुनि. ९.३४ ) सर्वविद्रधयो वातादिना यदाऽस्थ्याश्रित्य जायन्ते उपेक्षणादनन्तरं तद्गतमज्जा च परिपच्यते । सः यदि भिन्नः तदा मेदःप्रभं स्निग्धं शुक्लं पूयं स्रवेत् (सुनि. ९.३८) उपद्रवाः-आध्मानं बद्धमूत्रता छर्दिः हिक्का तृष्णा रुक् श्वासश्च (सुनि. ३३.२२) चिकित्सासूत्रम्-अयं भेद्यो रोगः ( सुसु. २५.५ ) बाह्ये तु विद्रधौ अमर्मजाते पाचनपाटनशोधनादिरुपचारः करणीयः । आभ्यन्तरविद्रधौ वरुणादिक्वाथ ऊषकादिकल्कं च पिबेत् रक्तनिमित्तजे तथा आगन्तुजे पित्तविद्रधिवत् चिकित्सां कुर्यात् ( सुसू. १६.२७-३४ ) अपक्वे मधुशिग्रुः ।

**विद्रावणी**-स्त्री., वनस्पति० काकमाची ( रा. ४.३६ )

**विद्रुम**-पु., प्रवालम् ( सुनि. २.१३ )

**-लता**-स्त्री., वनस्पति० नलिका ( ध. ३.४३ )

**-लतिका**-स्त्री., वनस्पति० नलिका ( ध. ३.४३ )

**विद्वेष्य**-न., वनस्पति० कङ्कोलकम् (रा.१२.६९)

**विधान**-न., तन्त्रयुक्ति० प्रकरणानुपूर्व्या अभिहितं विधानम्, यथाक्रममुक्तमित्यर्थः ( सुउ. ६५.२९; चसि. १२.४३ )

विधिः, क्रिया ( सुउ. १०.३ )

यज्ञकर्म ( चवि. ३.२४ )

**विधारण**-न., संधारणम्, निग्रहः ( चसू. ७.१६ )

**विधार्यवेग**-पु., संधारणीयवेगः ( चवि. ३.३८ ) यथा साहसम् अशस्तमनोवाक्कायकर्माणि, लोभशोकभयक्रोधमानवैलेज्ज्येर्षातिरागाभिध्यायाश्च ( चसू. ७.२६-२७ )

**विधि**-पु., चिकित्सा ( सुचि. २२.७२ )

सम्प्राप्तिभेदः, विधिश्च प्रकारो भेदः इत्यर्थः, यथा द्विविधा व्याधयो निजागन्तुभेदेन त्रिविधास्त्रिदोषभेदेन, चतुर्विधाः साध्यासाध्यमृदुदारुणभेदेन ( चनि. १.१२.( ४ )

विधानम्, कल्पना ( चसू. २८.४२ )

यज्ञविधायको वेदः ( चक्र. चवि. ३.२४ )

प्रयोगः ( सुसू. ३७.५ )

**-कोविद्**-वि., विधिज्ञो ( वैद्यः ) ( सुउ. ६२.३२ )

**-ज्ञ**-वि., विधिं जानाति इति ( चसि. ३.१२ )

**-नियमित**-वि., विधिः शास्त्रोक्तो नियमः तेन नियमितम् ( अहृसू. ८.५५ )

**-भेद**-पु., विधि० ( चवि. ८.८१ )

**-वत्**-अ., विधिः नाम शास्त्रम् । विधिवन्नाम शास्त्रपूर्वकं शास्त्रार्हं वा ( चशा. ६.३४ )

**-विभ्रंश**-पु., विधिव्यापत् ( असंसू. ३३.१० )

**-विरुद्ध**-वि., नियमविरुद्धम् शास्त्रविरुद्धम् ( चसू. २६.१०१ )

**-विशेष**-पु., विधानभेदः, उपक्रमभेदः (सुचि.१.४)

**-विहित**-वि., विधिना विहितम् शास्त्रविहितम् ( चसू. २७.३ )

**-शोणितीय**-वि., अध्यायसंज्ञा० ( चसू. २४.१ )

**विधुर**-न., मर्म० ( असंशा. ७.२३ )

**( विधुरा )**-स्त्री., ग्रीवागतसिरा० ( असंशा. ६.१५ )

**-मर्मन्**-न., मर्म० ऊर्ध्वजत्रुगतमर्म ( सुशा. ६.६ ) शिरोमर्म, 'कर्णपृष्ठतोऽधःसंश्रिते' ( सुशा. ६.२७ ) स्नायुमर्म, 'विधुरोत्क्षेपाः' स्नायुमर्माणि (सुशा. ६.२७) वैकल्यकरमर्म (सुशा. ६.१२-१३) विधुरे द्वे ( सुशा. ६.६ ) मानम्-अर्धांगुलमितम् (सुशा. ६.२९)

**विधूपन**-न., ( परिव० ) धूमायमानत्वम् ( सुउ. २२.६ )

**विधूमाग्नि**-पु., निर्धूमाग्निः ( कासू. २३.२७ )

**विधृत**-वि., धृतम् ( अहृसू. १३.३२ )

**विधृति**-स्त्री., धारणम् ( अहृसू. ५.४४ )

**विध्मापन**-वि., नाशनः नाम नाशकरः (हे.अहृसू.१०.१२)

**विध्वंसरस**-पु., सिद्धौषधि० टङ्कणेन सह गन्धकं जातीफलस्य क्वाथेन सप्तवारान्मर्दयेत् विसूचि-

नाशकोऽयम्, मात्रा नवगुञ्जा। अनुपानं–सिता। पथ्यं–तक्रौदनः वास्तुकशाकं च ( र. १६.११६ )

**विनता**–स्त्री., रोग० प्रमेहपिटका० महती नीला अवगाढरुजाक्लेदा पृष्ठोदरान्यतराधिष्ठाना च भवति ( चसू. १७.८३ )

**विनमन**–न., आनतपृष्ठत्वम्, विशेषेण नमनम् ( सुशा. ९.१२ )

यन्त्रकर्म० ऊर्ध्वं प्रविष्टशल्यस्य अधोनयनम् ( सुसू. ७.१७ )

**विनम्र**–न., वनस्पति० तगरम् ( रा. १०.१०२ )

**विनय**–पु., इन्द्रियवशित्वम् ( सुसू. २.३ )

**विनयोपपन्न**–वि., जितेन्द्रियः ( सुनि. ७.३ )

**विनाम**–पु., विनमनम्, वक्रता ( चनि. १.२१ ) व्यथया शरीरनमनम् ( चनि. १.३३ )

**विनामक**–वि., रोगलक्षण० शरीरविनमनकारी ( चसू. १४.२१ )

( **विनामिका** )–स्त्री., रोगलक्षण० अन्तोच्छूना मध्यनिम्ना नाभिः ( चशा. ८.४५ )

**विनाशन**–वि., मूलच्छेदनः ( ड. सुसू. ३८.९ )

**विनासिका**–स्त्री., तन्नामकसविषकीट० तद्गुणाः–अग्निप्रकृतिकः, अयं पित्तरोगान् करोति (सुक. ८.८-१२)

**विनिदाघ**–पु., निदाघः। उष्णोपगमः दाह इति यावत् ( र. १७.५८-५९ )

**विनिर्दहती**–स्त्री., चित्रकः ( सुउ. ४४.२८ )

**विनिर्मथन**–न., (परिव०) मथनम् ( सुचि. ३८.३७ )

**विनिविष्ट**–वि., प्रविष्टः ( असंसू. ३४.३ )

**विनिःश्वसन**–न., शब्दकरणम् ( चचि. १९.५ )

**विनीत**–वि., विनययुक्तः। शक्तिमान् इत्यर्थः ( ड. सुक. १.१४ )

वनस्पति० दमनम् ( रा. १०.१२० )

**विनोदविद्याधर**–पु., पारदादियोग० पारदगन्धकटङ्कणानि तत्समभागानि जयपाल–बीजानि गृहीत्वा मर्दयित्वा च सम्पादितोऽयं योगः। तत्र अनुपानं–दुग्धं गुडश्च। सम्यग्विरेचनाभावे मुद्गक्वाथं तदाधिक्ये वा तक्रं बब्बूलीक्वाथं वा पिबेत्। फलं–ज्वरोदरार्शःशूलानां नाशः ( र. १९.४,६ )

**विन्ध्य**–पु., पर्वत० अत्र 'चन्द्रमा' इति सोमविशेष उपलभ्यते ( सुचि. २९.२८ )

**विपक्वता**–स्त्री., पक्वता ( चसू. १३.५९ )

**विपक्ष**–वि., हेतुविपरीतः ( भेषजादिः ) ( हे. अहृसू. १२.५९ )

**विपद्**–स्त्री., वैगुण्यम् ( चसू. २५.२९ )

**विपत्कर**–न., जन्मतः तृतीयं नक्षत्रम् ( असंनि. १.२१ )

**विपरिणमत्**–वि., परिणमनमानम् ( असंसू. ४.३ )

**विपरिधावन**–न., लक्षण० विशेषेण समन्तात्–गमनम् ( ड. सुउ. ५६.७ )

**विपरीत**–वि., विरुद्धम् ( अहृसू. १.१४ )

**–गुण**–वि., विपरीतः गुणः यस्य सः ( आहारादिः ) ( चवि. १.७ )

**–गुणभूयिष्ठ**–वि., विपरीताः गुणाः भूयिष्ठाः यस्मिन् सः ( आहारादिः ) ( चवि. १.७ )

**–व्यवाय**–न., विपरीतमैथुनम् ( पुरुषायितम् ) ( असंसू. ९.७० )

**–स्वलक्षण**–वि., यत्र स्वस्य लक्षणं विपरीतमस्ति, विद्यमानं नास्ति इति यावत्, तत् ( अहृसू. १२.३९ )

**विपरीताभिनिवेश**–पु., विपर्ययेण ज्ञानम् ( चशा. ५.१० )

**विपरीताविपरीतव्रणविज्ञानीय**–वि., अध्यायसंज्ञा० ( सुसू. २८.१ )

**विपरीताविपरीतस्वप्ननिदर्शनीय**–वि., अध्यायसंज्ञा० ( सुसू. २९.१ )

**विपरीतेन्द्रियार्थ**–वि., रूपाद्यर्थाग्रहणभ्रान्तः ( सुनि. ८.६ )

**विपर्णाङ्कित**–वि., विगलितपत्रैः चिह्नितः ( सुसू. ६.३० )

**विपर्यय**–पु., क्षयः ( अहृसू. १.१४ )

तन्त्रयुक्ति० यद् यत्र अभिहितं, तस्य प्रातिलोम्यं विपर्ययः। विपर्ययेण विपरीतमेव गम्यते, अर्थापत्त्या अविपरीत एव अर्थः प्रतीयते इति विपर्यय–अर्थापत्त्योः भेदः ( सुउ. ६५.२१; चसि. १२.४३ )

**विपश्चित्**–वि., विद्वान्, ज्ञाता (सुचि. ३८.९-१० )

**विपाक**–पु., जाठराग्निना संयोगाद्रसपरिणामान्ते यद् रसान्तरमुत्पद्यते स विपाकः ( अहृसू. ९.२० ) चरके त्रिधा विपाकः वर्तते कट्वम्लः मधुरश्च। तत्र कटुतिक्तकषायरसानां विपाकः, प्रायशः कटुर्भवति, अम्लस्य अम्लो, मधुरः स्वादुलवणयोः ( चसू. २६.५७-५८ ) सुश्रुते 'आगमे हि द्विविध एव पाको मधुरः कटुकश्च। तयोर्मधुराख्यो गुरुः कटुकाख्यो लघुरिति। तत्र पृथिव्यप्तेजोवाय्वाकाशानां द्वैविध्यं भवति गुणसाधर्म्याद्गुरुता लघुता च भवति, पृथिव्यापश्च गुर्व्यः, शेषाणि लघूनि तस्माद् द्विविध एव पाक इति ( सुसू. ४०.१० )

**विषान्वय**–वि., विषयुक्तः, विषेण अन्वयः सम्बन्धो यस्मिन् सः ( असंसू. ६.९३ )

**विषान्वयता**–स्त्री., विषाहारमक्षिकाणां प्रसोतृत्वेन सम्बन्धो नाम तादृशमक्षिकाजनकत्वम् ( सुसू. ४५.१४४ )

**विषान्वित**–वि., सविषः (अहसू. २९.७३; सुक. १.५१)

**विषापह**–पु., वनस्पति॰ मुष्ककः ( रा. ११.२२१ )

**( विषापहा )**–स्त्री., वनस्पति॰ इन्द्रवारुणी ( रा. ३.३७३ )

तिलकन्दः ( रापरि. ७.५३ )

**विषाभ्यङ्ग**–पु., अभ्यञ्जनद्रव्यं तैलादि, तैः कृतोऽभ्यंगो विषान्वितः सन् पिच्छिलो घनो विवर्णो वा भवति ( सुक. १.५१ ) अभ्यङ्गप्रयुक्ते नाम अभ्यंगमाचरितवति नरे त्वग्दाहस्वेदपाकस्फोटाऽवदरणान्युपपन्नन्ति ( असंसू. ८.४१ )

**विषाभ्यास**–पु., विषपरिशीलनम् ( असंसू. ८.५७ )

**विषारि**–स्त्री., वनस्पति॰ करञ्जः ( रा.९.१७८ )

बृहच्चञ्चुः ( रापरि. ४.२० )

**विषार्त**–वि., विषपीडितः, तस्य चिकित्सा–विषवेगप्राप्तौ सत्यां मुखेन वमनार्थं मांसरसादिपानं कार्यम्। उष्णवर्ज्यो विधिः कार्यस्तत्र स्वेदो न क्रियते, परं कीटविषं शीतेनाऽभिप्रवर्धते ( सुक. ६.२८ )

**विषाशिन्**–वि., विषमशितुं शीलमस्येति अभ्यस्तविषो नरः, विषगरभूतभुजङ्गाऽऽखुगणजराऽकालमृत्युग्रहपाप्मानो न बाधन्ते विषसात्म्यं नरम् ( असंउ. ४८ )

**विषूचिका**–स्त्री., रोग॰ विसूचिका ( र. १२.१-८ )

**विषूची**–स्त्री., रोग॰ द्र॰ 'विसूचिका' ( र. १२.१-८ ) द्र॰ 'विसूचिका'

**विषोपसर्ग**–पु., सर्पादिदंशेन विषसंबन्धः (सुशा. ८.५)

**विषोपक्रम**–पु., उपक्रम॰ विषचिकित्सा, मन्त्राऽरिष्टोत्कर्तननिष्पीडन–चूषणाऽग्निपरिषेकाऽवगाहरक्तमोक्षणवमनविरेकोपधानहृदयाऽऽवरणाऽञ्जननस्यधूमलेहौषधप्रशमनप्रतिसारणप्रतिविषसंज्ञासंस्थापनलेपमृतसंजीवनानि, इति चतुर्विंशतिविषोपक्रमभेदाः ( चचि. २३.३५-३७ )

**विषोपहत**–वि., विषमिश्रितम् ( चनि. १.२८ )

विषेण मृतः ( सुशा. ५.४९ )

**विषौषध**–न., खनिजम्, विशेषतो हरितालसोमलमनःशिलाताम्राऽऽदिकमुद्भिज्जं वत्सनाभाहिफेनविषमुष्ट्यादिकं प्राणिजं वा सर्पवृश्चिकादिकानां साक्षाद्विषम् ( र. १२.५५ )

**विष्कम्भ**–पु., स्तम्भः, स्थूणा ( सुसू. २३.११ )

मूढगर्भ॰ ( अहशा. २.३० )

**विष्किर**–पु., पक्षिवर्ग॰ विकीर्य यो धान्यादिकं भक्षयति (चसू. २७.५५; सुसू. १६.१९) लाववर्तीकवार्तीररक्तवर्त्मकककुभाः कपिञ्जलोपचक्राख्यचकोरकुरुबाहवो वर्तको वर्तिका, तित्तिरः क्रकरः शिखी, ताम्रचूडाख्यवरकगोनर्दगिरिवर्तिकाः सारपदेन्द्राभवरटाश्चेति विष्किराः ( असंसू. ७.६९-७१) तन्मांसगुणाः–मधुरं, कषायं, शीतं, कटु, लघु, बल्यं वृष्यं, पथ्यं, रुच्यं, त्रिदोषघ्नम् ( धपरि. २.१० ) सर्पविशेषः, दर्वीकरः ( सुक. ४.३४ ( १ )

**–वर्ग**–पु., पक्षिवर्ग॰ द्र॰ 'विष्किर' (अहसू. ६.४६)

**विष्टब्ध**–वि., प्रतिरुद्धः स्थिरः ( अहसू. ८.२६ )

**विष्टब्धाजीर्ण**–न., रोग॰ अजीर्णभेदः द्र॰ 'अजीर्ण' (असंसू. ११.५६)

**विष्टम्भ**–पु., अप्रचलनरूपतयाऽवस्थानम् ( चक्र. चचि. १५.४५ )

विबन्धः ( सुचि. ३४.१६ )

गुडगुडाशब्दः ( ड. सुउ. ५४.१० )

मलाऽवरोधः ( र. १३.२४ )

सवाततोदशूला मलस्याऽप्रवृत्तिः (सुसू. ४५.१५८; सुसू. ४६.२९५)

**विष्टम्भिन्**–वि., विष्टम्भकम् विष्टम्भकारकम् ( र. ११.१२७-२८ )

**( विष्टम्भिनी )**–स्त्री., विष्टम्भकारिका (असंसू. ६.१२४) द्र॰ 'विष्टम्भिन'

**विष्टरुहा**–स्त्री., वनस्पति॰ सुवर्णकेतकी द्र॰ 'केतकी' ( रापरि. १०.३ )

**विष्ठिका**–स्त्री., वनस्पति॰ शणपुष्पी ( रा. ४.३०० )

**विष्ठन**–न., ( परिव॰ ) मलोत्सर्जनम् ( र. ५.१९९ )

**विष्ठा**–स्त्री., ( परिव॰ ) पुरीषमलः ( र. ५.१९९ )

**विष्णु**–पु., देवता॰ ( सुशा. १.७ )

**–कन्द**–पु., वनस्पति॰ तद्गुणाः–मधुरः, शीतो रुच्यः सन्तर्पणः पित्तघ्नो दाहशोफहरः ( रापरि. ७.४० )

**–क्रान्ता**–स्त्री., वनस्पति॰ तद्गुणाः–कटुस्तिक्ता कफवातघ्नी च ( ध. ४.११५ )

हिं.—शङ्खपुष्पी.

**म.—शंकावली, विष्णुक्रांता.**

ता.—विष्णुक्रान्ती.

बलामोटा ( र. २०.६८-७६ )

–गुप्त–पु., वनस्पति० विष्णुकन्दः ( रापरि. ७.४० )
द्र० 'विष्णुकंद'
न., चाणक्यमूलम् ( ध. ४.३५ )
–गुप्तक–न., वनस्पति० चाणक्यमूलम् ( ध.४.३५ )
द्र० 'विष्णुगुप्त'
–वल्लभा–स्त्री., वनस्पति० तुलसी ( रा. १०.७७ )
विष्यन्द–पु., स्रवणम्, स्रावः ( अहृसू. ९.७ )
पु., सर्पिःक्षीरगुडाऽन्वितमामगोधूमचूर्णं । हृद्यं सुगन्धिवल्यादिगुणकरम् (सुसू. ४६.३९८)
घृतभृष्टतण्डुलः ( सुसू. ४६.३९८ )
न., विलयनम् ( चसू. २८.३३ )
स्रवणम् ( सुचि. ४.३३ )
विष्यन्दनाख्यतैल–न., तैल० सुधासेलुत्रिवृत्प्रभृति-द्रव्यसिद्धमिदं शोधनं रोपणं च ( असंउ. ३३ )
विष्यन्दिन्–वि., स्रावी, स्रुतिमान् ( अहृसू. ३०.२४ )
विष्वच्–वि., सर्वगतः, सर्वत्र स्थितः (चचि. २६.१११)
( विष्वक् )–पथस्थ–वि., सर्वत्र संचारी ( चचि. २६.१११ )
–सेनकान्ता–स्त्री., वनस्पति० वाराहीकन्दः ( ध. ४.९२ )
प्रियङ्गुः ( चसू. ४.१८ )
–सेना–स्त्री., वनस्पति० प्रियङ्गुः ( सुसू. १५.४८ )
–स्थित–वि., सर्वत्र स्थितः ( चसि. १.२८ )
विसंख्योपगत–वि., विपरीतसंख्यायुक्तम् (चइ. ४.१७)
विसंज्ञ–वि., विपरीतसंज्ञः ( सुउ. ६२.१३ )
विगतसम्यग्ज्ञानः ( ड. सुक. ३.२५-२७ )
–ता–स्त्री., लक्षण० संज्ञानाशः ( चसू. १३.७५ )
विसंवादिन्–वि., असंगतार्थी ( अहृसू. २.२६ )
विसंहत–वि., विघट्टितः ( सुनि. १६.३५ )
विश्लिष्टम्, स्वस्थानाच्च्युतम् ( सुचि. ३.३९ )
विसरण–न., प्रसरणम् ( सुचि. ५.६ )
विसर्ग–पु., सर्जनम्, बलादिजननम् ( सुसू. २१.८ )
मलादिविसर्जनम् ( चशा. १.२६ )
ज्वरमुक्तिः ( चचि. ३.५९-६० )
–काल–पु., विसृजति जनयति सोमांशं प्राणिनां च बलमिति विसर्गः ( चसू. ६.४ ) शरद्हेमन्त-शिशिराख्य ऋतवो विसर्गकालः (चचि. ३.४५ )
विसर्जनी–स्त्री., शारीर० विसृजतीति विसर्जनी, गुदस्य बाह्याभ्यन्तरवलिमध्यस्था विसर्जनीसंज्ञितगुदपेशी ( सुनि. २.५ )

विसर्प–पु., रोग० बहिर्मार्गजान्तर्मार्गजश्च कोष्ठानुसारी रोगः ( चसू. ११.४९ ) विशेषेण सर्पतीति विसर्पः ( चसू. १८.२३ ) तत्संप्राप्तिः–त्वङ्मांसशोणित-गताः कुपिता दोषाः सर्वाङ्गसारिणमास्थितं विस्तृतम-नुन्नतमाशु शोफं कुर्वन्ति, तं सर्वतो विसरणाच्च विसर्पमाहुः ( सुनि. १०.३ ) तत्स्थानं–वेदिनी नाम त्वक् ( सुशा. ४.४ ) त्रयः, दूष्याणि दोषाः, त्वङ्मांसं रक्तं लसीकाश्च (चचि. २१.१५) तत्संख्या-संप्राप्तिः-वातजः, पित्तजः, कफजो, वातपित्तजोऽग्नि-विसर्पः, कफवातजो ग्रन्थिविसर्पः, कफपित्तजःकर्दम-विसर्पः, संनिपातजोऽभिघातजश्च (असंनि. १३.४५) तत्पूर्वरूपाणि– रक्तमण्डलकोत्पत्तिस्तृष्णाज्वरारति-दाहाः, स्वादुशीतोपशायित्वम् (कासू.२५.२५) तल्लक्षणानि–तत्र वातजानि– भ्रमदवथु-पिपासानिस्तोदशूलाङ्गमर्दोद्वेष्टनकम्पज्वरतमककासा-स्थिसंधिभेदविश्लेषणवेपनारोचकाविपाकाश्चक्षुषो-राकुलत्वमस्रागमनं पिपीलिकासंचार इव चाङ्गेषु यस्मिंश्चावकाशे विसर्पो विसर्पति सोऽवकाशः श्यावा-रुणाभासः श्वयथुमान् निस्तोदभेदशूलायामसंकोच-हर्षस्फुरणैरतिमात्रं प्रपीड्यते; पित्तजानि–ज्वरस्तृष्णा-मूर्च्छा मोहश्छर्दिररोचकोऽङ्गभेदः स्वेदोऽतिमात्रम-न्तर्दाहः प्रलापः शिरोरुक् चक्षुषोराकुलत्वमस्वप्नो-ऽरतिर्भ्रमः शीतवातवारितर्षोऽतिमात्रं, हरितहारिद्र-नेत्रमूत्रवर्चस्त्वं हरितहारिद्ररूपदर्शनं च यस्मिंश्चा-वकाशे विसर्पोऽनुसर्पति सोऽवकाशस्ताम्रहरितहारि-द्रनीलकृष्णरक्तानां वर्णानामन्यतमवर्णं पुष्यति । कफ-जानि-शीतकः शीतज्वरो गौरवं निद्रातन्द्राऽरोचकाः, मधुरास्यत्वमास्योपलेपो निष्ठीविका छर्दिरालस्यं स्तैमित्यमग्निनाशो दौर्बल्यं च, यस्मिंश्चाऽवकाशे विसर्पोऽनुसर्पति सोऽवकाशः श्वयथुमान्पाण्डुनाति-रक्तः स्नेहसुप्तिस्तम्भगौरवैरन्वितोऽल्पवेदनः कृच्छ्र-पाकैश्चिरकारिभिर्बहुलत्वगुपलेपैः स्फोटैश्च श्वेतपाण्डु-भिरनुबध्यते, प्रभिन्नस्तु श्वेतं पिच्छिलं तन्तुमद्घन-मनुबद्धं स्निग्धमाऽऽस्रावं स्रवति, ऊर्ध्वं च गुरुभिः स्थिरैर्जालाऽवततैः स्निग्धैर्बहुलत्वगुपलेपै-र्व्रणैरनुबध्यतेऽनुषङ्गी च भवति, किंचात्र श्वेतन-खनयनवदनत्वङ्मूत्रवर्चस्त्वम्
( चचि. २१.३०, ३२, ३४ )
अभिघातजविसर्पः–बाह्यहेतोः क्षतात् क्रुद्धो मारुतः सरक्तं पित्तमीरयन्कुलत्थसदृशैश्चितं स्फोटैः, शोफ-ज्वररुजादाहाढ्यं श्यावलोहितं विसर्पं कुर्यात्

( असंनि. १३.६७-६८ ) तत्साध्याऽसाध्यत्वम्–बहिर्मार्गाऽऽश्रितं साध्यमुभयाऽऽश्रितमसाध्यमन्तराऽऽश्रितं दारुणं विसर्पं कृच्छ्रसाध्यम् विद्यात् ( चचि. २१.२४ )
तद्रिष्टलक्षणानि–कासवैवर्ण्यज्वरमूर्च्छाऽङ्गभङ्गभ्रमाऽस्यशोफहृल्लासदेहसादाऽतिसाराः ( असंशा. ११.३० ) तत्सामान्यचिकित्सा–लङ्घनोल्लेखनं तिक्तसेवनं रुधिरस्याऽवसेकश्च (चचि. २१.४३-४९) संशोधनमेव श्रेयसी चिकित्सा ( सुचि. १७.१६-१७ )
–कुष्ठ–न., रोग० कुष्ठभेदः द्र० 'कुष्ठ' ( सुनि. ५.११ )
–चिकित्सित–न., अध्यायसंज्ञा० ( चचि. २१.१ )
–जित्–पु., पारदादियोग० योगोऽयं विसर्पनाशकः ( र. २०.१ )
–नाडीस्तनरोगचिकित्सित–न., अध्यायसंज्ञा० ( सुचि. १७.१ )
–नाडीस्तनरोगनिदान–न., अध्यायसंज्ञा० ( सुनि. १०.१ )
**विसर्पिणी**–वि., बहिर्निर्गता (प्रेतजिह्वा) ( चइ. ८.१४ ) स्त्री., वनस्पति० शङ्खिनी ( ध. १.२५६ )
**विसर्पित**–न., स्पर्शविषाणां जन्तूनां विसर्पितसङ्गः ( सुसू. ४२.१०(२) )
**विसारिणी**–स्त्री., वनस्पति० माषपर्णी ( रा. ३.१७१ )
**विसारिभाव**–पु., विप्रसरणस्वभावः (ड. सुउ. ६४.७२)
**विसूचि**–स्त्री., रोग० विसूचिका ( अहृसू. ८.१७ )
**विसूचिका**–स्त्री., रोग० ( चसू. १८.६ ) कोष्ठाऽनुसार्यन्तर्मार्गज आमदुष्टिजन्यच्छर्द्यतिसाराऽऽदिभिरूर्ध्वमधश्च दोषं प्रच्यावयन् रोगः (चसू. ११.४९; चवि. २.१३ ) तन्निरुक्तिः– यस्यामनिलोऽजीर्णेन गात्राणि सूचीभिस्तुदन्निव संतिष्ठते, सा विसूचिकेति निगद्यते । (सुउ. ५६.३-४) तल्लक्षणानि–मूर्च्छाऽतिसारश्छर्दिः पिपासा शूलो भ्रम उद्वेष्टनं, जृम्भा, दाहो वैवर्ण्यं कम्पो हृद्रुजा शिरोविदारणमिव वेदनाश्च (सुउ.५६.६) तद्भेदाः–तत्र वातजा शूलाऽऽनाहाऽङ्गमर्दमुखशोषप्रलापकम्पमूर्च्छाभ्रमजृम्भोद्वेष्टनाऽक्षिप्रवेशशिरोहृदयाऽतिरुक्शिराऽऽकुञ्चनस्तम्भनानि करोति । पित्तजा पुनर्ज्वराऽतिसाराऽन्तर्दाहवैवर्ण्यतृष्णामदभ्रमप्रलपनानि, कफजा छर्द्यरोचकप्रसेकाङ्गसादाविपाकशीतज्वरगात्रगौरवाणि जनयति ( अहृसू. ११.१६ ) असाध्यलक्षणानि–श्यावा दन्ताः, श्यावा नखाः, मन्दा चेतना, श्यावौ अधरौ, छर्दितत्वं क्षीणदृष्टित्वं क्षीणस्वरत्वं शिथिलाऽखिलसंधित्वम् ( सुउ. ५६.११ ) बालेषु विसूचिकाया विशेषलक्षणानि–दाहो हृत्शूलः (कासू. २५.२६)
–प्रतिषेध–न., अध्यायसंज्ञा० ( सुउ. ५६.१ )
**विसृति**–स्त्री., विसरणम् ( चनि. ४.८ )
**विस्तर**–पु., परिणाहो विशालता ( र. १०.३४-३९ )
**विस्तार**–पु., परिमाण० वर्तुलाऽगारस्य व्यासः ( चसू. १४.४६ ) देहविस्तारः ( चवि. ८.११७ ) परिणाहो विशालता ( र. १०.३४-३९ )
**विस्तीर्ण**–वि., विस्तृतत्वेन प्रशस्तम् ( सुसू. ३५.४ )
–दृष्टि–स्त्री., नेत्ररोग० विस्तीर्णं मण्डलं यस्य तन्नयनम् ( सुउ. १९.६-७ )
–भ्रू–वि., उक्तप्रमाणात्किञ्चिद्विस्तृततरभ्रूयुक्तः ( सुसू. ३५.४ )
–स्तनान्तर–वि., उक्ताऽङ्गुलिप्रमाणाद्विस्तीर्णस्तनाऽन्तरयुक्तः इदं दीर्घायुष्ट्वलक्षणम् ( सुसू. ३५.४ )
**विस्तीर्णोरस्क**–वि., विस्तृतवक्षोयुक्तः इदं दीर्घायुलक्षणम् ( सुसू. ३५.४ )
**विस्तृत**–वि., विस्तीर्णः ( सुनि. १०.३ )
**विस्फ**–पु., क्षुद्ररोगः ( र. २५.१ )
**विस्फुटित**–वि., विपुलस्फुटितम् ( सुनि. १५.१० )
**विस्फुलिङ्ग**–पु., अग्निकणः ( सुउ. ७.३ )
**विस्फुलिङ्गाभा**–वि., विस्फुलिंगसदृशी, विस्फुलिङ्गः सूक्ष्मोऽग्निकणः स यथा तैजसोऽपि न दहति तद्वत्तैजसी दृष्टिरपि न दहति ( सुउ. ७.३ )
**विस्फूर्जितदेह**–वि., आयामितमध्यशरीरः (सुशा. ८.८)
**विस्फूर्जितपृष्ठ**–वि., आयामितं पृष्ठं येन सः (सुशा. ८.८)
**विस्फोट**– पु., पित्तश्लेष्माऽधिकं कुष्ठम् (चचि. ७.३०) पु., क्षुद्ररोग० मसूरिकाभ्योऽपि कष्टतरा महारुजा घनाः स्फोटाः ( असंउ. ३६ ) तल्लक्षणानि– विद्रुमसंनिभा अन्तर्वक्रा किणाभाश्च पिटिका ( असंशा. ११.४५-४६ ) ज्वरदाहः ( र. २५.१ ) तं विसर्पवदुपक्रमेत ( काखिल. १४ )
–कुष्ठ–न., रोग० क्षुद्रकुष्ठभेदः द्र० 'विस्फोट' ( चचि. ७.२५ )
**विस्फोटक**–पु., क्षुद्ररोग० सस्फोटो रोगः ( चचि. १२.९०; चसू. २६.१०२ ) पित्तरक्तता कचित्सर्वत्र वा देहेऽग्निदग्धनिभाः सज्वराः स्फोटाः जायन्ते (सुनि. १३.१८) तत्र चिकित्सा–पित्तजस्य

विसर्पस्य क्रियया एनं साधयेत्। मधुरौषधसिद्धेन च घृतेन रोपयेत् ( सुचि. २०.७-८ )
**विस्मापन**–न., विस्मयजननम् ( चसू. २४.५१ )
आश्चर्योत्पादनमुन्मादोपक्रमः ( चनि. ७.८ )
अद्रव्यभेषजेष्वेक उपायः ( चवि. ८.८७ )
**विस्मारण**–न., विस्मृतिकरणम् ( चनि. ७.८ )
**विस्मृति**–स्त्री., रोग० अपस्मारः ( र. २९.१३८-१५१ )
**विस्यन्दिन्**–वि., श्लेष्मस्रावी, एतेन श्लेष्मणो जनक-प्रवर्तकत्वमुक्तम् ( ड. सुसू. ४६.२९१ )
**विस्रंस**–पु., स्थानाच्च्युतिः ( सुसू. १५.२६.२७ )
क्षीणता ( सुचि. ३४.११ )
**विस्रंसन**–न., रेचनम् ( चवि. १.१८ )
**विस्र**–वि., गुण० आमगन्धः ( चसू. २०.१५ )
पूतिगन्धम् ( चनि. ४.४७ )
**–ता**–स्त्री., आमगन्धिता रक्तगतभूमिगुणानामन्यत-मोऽयम् ( सुसू. १४.९ )
**विस्रस्त**–वि., शिथिलः ( सुसू. ४६.५३१ )
**विस्रावण**–न., स्रावः ( सुचि. १.८ ) रक्तमोक्षणम् ( सुक. ५.३६ )
**विस्राविता**–वि., निःसारितपूर्वपानीया ( वापी ) ( ड. सुउ. ४७.५८-५९ )
**विस्राव्य**–न., अष्टविधशस्त्रकर्मस्वेकं तच्च विस्रावणीयम् ( सुसू. ५.५ )
**विहङ्ग**–पु., मांसादो जलचरश्च पक्षी ( ड. सुउ. २७.१० )
**विहत**–वि., उद्वेजितः ( सुसू. ४६.४१९ )
निरुद्धगतिः, ( वायुः ) ( सुनि. १३.५५ )
**–मनस्**–वि., प्रतिहतचित्तः ( सुशा. १०.४६ )
**–मुख**–वि., विहतं नाम विगतरसं मुखं यस्य, सः ( चचि. १९.९ )
**विहतार्चिस्**–वि., ज्वालाशून्यः ( चचि. २३.१०९ )
**विहरण**–न., गमनम् ( सुशा. १.५ )
**विह्वल**–वि., विकलः ( सुउ. ६१.१३ )
**विहायस्**–पु., न., आकाशः ( सुउ. ६४.६-१३ )
**विहार**–पु., ( परिव० ) कायविहारश्चतुर्विधः- गमन-चङ्क्रमणस्थानासनभेदेन ( ड. सुचि. २९.१० )
**–चपल**–वि., चपलगतिः ( सुशा. ४.८९-९० )
**विहारिन्**–पु., वनस्पति० भूकूष्माण्डः ( र. १७.२० )
**वीचीतरङ्ग**–पु., ऊर्मिपरम्परा ( सुचि. १३.२०-२१ )
**वीटिका**–स्त्री., विशिष्टाकारं खर्परम् ( र. २५.३०-३१ )
**वीतंस**–पु., पक्षिबन्धनोपायजालादिः ( चसू. २९.१० )
**वीततुष**–वि., अपनीतत्वक् निस्तुषः ( असंचि. १,१०१ )
**वीतरोग**–वि., नीरोगः ( चक्र. चचि. २८.४ )
**वीतीभाव**–पु., अतिक्षीणत्वम् ( चइ. ३.४ )
**वीर**–पु., वनस्पति० तण्डुलीयकः ( रा. ५.१७५ )
वाराहीकन्दः ( रा. ७.१३६ )
न., वनस्पति० आरुकम् ( ध. ५.३८ )
उशीरम् ( ध., ३.१४ )
मरिचम् ( रा. ६.१३६ )
आसुत० काञ्जिकम् ( रा. १५.२९४ )
खनिज० लोहम् ( ध. ६.२६ )
**( वीरा )**–स्त्री., वनस्पति० क्षीरकाकोली ( चचि.९.४३; धनि., १.१३४ )
वृद्धिः ( चचि. २९.६५ )
विदारी ( चचि. ११.६२ )
शालपर्णी ( चक्र. चचि. ९.४५ )
कटुकी ( चक. ४.१३ )
कृष्णातिविषा, द्र० 'अतिविषा' ( चक. ४.१३; रानि. ६.८ ).
बृहद्दला ( चक. ४.१३ )
कुमारी ( रापरि. ५.११ )
शतावरी ( चचि. २८.१६१ )
महाशतावरी ( रानि. ४.४४१ )
भूधात्री ( असंचि. १०; रानि. ५.१४५ )
ब्राह्मी ( रानि. ५.१४९ )
काकोली ( असंउ. ९; रानि. ३.१६६ )
गम्भारी ( र. ३०.६६-६७ )
पृश्निपर्णी ( असंचि. ५; वैशसिं. )
तालमूली ( असंचि. ५; वैशसिं. )
आमलकी ( असंचि. ५; वैशसिं. )
एलवालुकः ( असंचि. ५; वैशसिं )
रम्भा ( असंचि. ५; वैशसिं. )
सुरामांसी ( असंचि. ५; वैशसिं. )
शिंशपावृक्षः ( असंचि. ५; वैशसिं. )
भूम्यामलकी ( असंचि. ५; वैशसिं. )
जटामांसी ( असंचि. ५; वैशसिं. )
आसुत० सुरा ( रानि. १४.३०२ )
लूता० सौम्यलूता० तद्दंशलक्षणानि-अस्या दंशः पिटकाजालकाऽऽवृतो चित्रमण्डलवान्शिरोरुगङ्गद्वेष-शीतज्वरकरश्च ( असंउ. ४५ )
**–तर**–पु., न., वनस्पति० उशीरम् ( धनि. ३.१४ )
शरः ( ड. सुउ. ९.२० )
**–तरादिगण**–पु., द्रव्यगण० तद्द्रव्याणि-वेल्लन्तरा-

ऽरणिकबूकवृषाऽश्मभेदगोकण्टकेत्कटसहाचरबाण-काशवृक्षादनीनलकुशद्वयगुण्ठगुन्द्राभल्लूकमोरट-कुरण्टकरम्भपार्थाः, तद्गुणाः—अश्मरीशर्करामूत्र-कृच्छ्राऽऽघातरुजाहरो वातव्याधिनाशनश्च ( अहसू. १५.२४ ) मूत्रविरेचनः ( असंसू. १६.१८-१९ )

**-तरु**-पु., वनस्पति० अर्जुनः ( ड. सुचि. १५.४४-४५ )

भल्लातकः ( धनि. ३.१४३ )

कोकिलाक्ष (ड. सुचि. १५.४४-४५)

शबरा ( सुसू. ३८.१२-१३ )

बिल्वनासिका ( ड. सुसू. ३९.७ )

शरः ( ड. सुसू. ३९.७ )

बिल्वः गीलको ( सुउ. ४०.४१ )

**-तर्वादिगण**-पु., द्रव्यगण० ( सुसू. ३८.१२-१३ )

**-तर्वादिसिध्दजल**-न., क्वाथविशेषः ( सुशा. १०.२२ )

**-द्रु**-वनस्पति० अर्जुनः ( रानि. ९.१९२ )

भल्लातकः ( र. २८.१३ )

**-पत्रिका**-स्त्री., वनस्पति० चञ्चुः ( रापरि. ४.१८ )

**-पर्णी**-न., वनस्पति० सुरपर्णः ( रापरि. १०.५० )

**-पुष्प**-पु., वनस्पति० सिन्दूरी ( रापरि. १०.१९ )

**-रजस्**-न., खनिज० सिन्दूरम् ( रानि. १२.१६० )

**-वृक्ष**-पु., वनस्पति० बिल्वान्तरः ( रापरि. ८.३० )

**-वेतस**-पुं., वनस्पति० अम्लवेतसः ( धनि. २.९६ )

**-सेन**-न., वनस्पति० आरुकम् ( धनि. ५.३८ )

**वीरक**-पु., वनस्पति० करवीरः ( रानि. १०.२ )

**वीरण**-पु., न., वनस्पति० उशीरम् ( रानि. १२.२५; चसू. ४.१२; असंसू. १५.२२ )

तृण० ( इन्दु. असंशा. ४.२५ )

**-मूलक**-न., वनस्पति० उशीरम् ( धनि. ३.१४ )

**वीरल्ल**-पु., जलचरप्राणि० 'सुश्रुते' 'चिरल्लिः' 'चिल्लः' प्राणि० ( काचि बालग्रहचि. )

**वीरानक**-न., वनस्पति० आरुकम् ( धनि. ५.३८ )

**वीरान्तक**-पु., वनस्पति० अर्जुनः ( धनि. ५.११४ )

**वीरास्य**-पु., वनस्पति० लताकरञ्जः ( रापरि. ८.२४ )

**वीरिणीमूल**-न., वनस्पति० उशीरम् ( धनि. ३.१४ )

**वीरुध्**-स्त्री., प्रतानयुक्तौद्भिदविशेष० लतागुल्मादिः ( चसू.१.७ १-७२ )

विस्तृतलता ( चक. १.८ )

विस्तारवल्यो गुल्मिन्यश्च वीरुधः ( सुसू. १.२९ )

**वीर्य**-न., गुण० शरीरे येन द्रव्यगुणेन या क्रिया क्रियते तद्वीर्यम् ( चसू. २६.७० ) नाऽवीर्यं किञ्चित्कुरुते यस्मात्सर्वा क्रिया वीर्यकृता एव । वेद्यके रसविपाक-प्रभावव्यतिरिक्ते प्रभूतकार्यकारिणि गुणे वीर्यमिति संज्ञा ( चक्र. चसू. २६.७० ) मृदुतीक्ष्णगुरु-लघुस्निग्धरूक्षोष्णशीतलमित्यष्टविधं वीर्यमिति केचित्; अन्येषां मते शीतोष्णमिति द्विविधमेव वीर्यमग्निषोमीयत्वाज्जगतः, उक्तं च नाना-ऽऽत्मकमपि द्रव्यमग्निषोमौ महाबलौ, व्यक्ता-ऽव्यक्तं जगदिव नाऽतिक्रामति जातुचित् ( अहसू. ९.१७) शीतमुष्णं स्निग्धं रुक्षं विशदं पिच्छिलं मृदुतीक्ष्णं चेत्यष्टविधं वीर्यम्; एतानि वीर्याणि स्वबलगुणोत्कर्षाद्रसमभिभूयाऽऽत्मकर्म कुर्वन्ति । यथा तावन्महत्पञ्चमूलं कषायतिक्ता-नुरसं वातं शमयति, उष्णवीर्यत्वात्; तथा कुलत्थः कषायः, कटुकः पलाण्डुः, स्नेहभावाच्च, मधुरश्चे-क्षुरसो वातं वर्धयति, शीतवीर्यत्वात्; कटुका पिप्पली पित्तं शमयति, मृदुशीतवीर्यत्वात्, अम्ल-माऽऽमलकं लवणं सैन्धवं च; तिक्ता काकमाची पित्तं वर्धयति उष्णवीर्यत्वात्, मधुरा मत्स्याश्च कटुकं मूलकं श्लेष्माणं वर्धयति, स्निग्धवीर्यत्वात् अम्लं कपित्थं श्लेष्माणं शमयति, रूक्षवीर्यत्वात्, मधुरं क्षौद्रं च; तदेतन्निदर्शनमात्रमुक्तम् ( सुसू. ४०.५ ) द्रव्याणि येन गुणेन कर्माणि कुर्वन्ति तद्वीर्यम् ( चसू. २६.१३ ) 'समग्रगुण-सारेषु, शक्त्युत्कर्षविवर्तिषु व्यवहाराय मुख्यत्वाद्ब-ह्वग्रग्रहणादपि गुर्वादिष्वेवाऽष्टासु वीर्याख्याऽन्वर्थेति' एतद्धेतुचतुष्टयविपरीतत्वाद्रसाद्येषु वीर्यसंज्ञा नास्ति ( अहसू. ९.१४-१६ ) वीर्योपलब्धिः—द्रव्यस्य निपाताच्छरीरे यावदधिवासाच्च वीर्यमुपलभ्यते ( चसू. २६.७१ ) उष्णवीर्यलक्षणम्– वातकफयोः शमनं करोति, भ्रमतृड्ग्लानिस्वेददाहाऽऽशुपाकितां च करोति । शीतवीर्यलक्षणम्– ह्लादनं जीवनं स्तम्भं–स्वेदाऽपनयनम्, रक्तपित्तयोः प्रसादं च करोति ( अहसू. ९.१८-१९ )

शक्तिः ( सुउ. ४१.१९ )

प्रभावः ( ड. सुचि. ३५.२५ )

अचिन्त्यक्रियाहेतुः ( सुसू. ४५.११ )

उपचयशक्तिलक्षणम् ( सुसू. ३५.१३ )

आरब्धदुष्करकार्येष्वव्यावृत्तिर्मनसः ( चवि. ४.८ )

**-गर्भप्रतान**-पु., वनस्पति० पटोलम् ( धनि. १.५० )

-वत्-वि., शक्तिमान् सबलः ( सुशा. ३.१८ )
-सम-अन्योन्यानुपहतसामर्थ्यः ( द्रव्यभागः ) ( चक्र. चसि. १०.१८ )

**वीर्याविरुद्ध**-वि., वीर्येणाविरुद्धम्, अनुकूलम् ( चवि. १.२४ )

**वीसर्प**-पु., रोग० विसर्पः ( चसू. २८.११ )

**वीसर्पागमन**-न., विसर्पोत्पत्तिः ( चनि. ५.७ )

**वृक**-पु., क्षुद्रव्याघ्र० कुक्कुराऽनुकारी पशुशत्रुः ( चक्र. चसू. २७.३५ )
कुकुरसदृशः पशुः, गुहाशयेष्वेकः ( ड. सुसू. ४६. ७२; धपरि. ६ )
वातश्लेष्मात्मके उन्मादे वृकस्य मूत्रपित्तशकृल्लोमनखैश्चर्मभिश्च सेकाऽञ्जनं प्रधमनं नस्यं धूमं च कारयेत् ( चचि. ९.७४-७५ )

**(वृकी)**-स्त्री., वनस्पति० पाठा ( धनि. १.७० )
-धूमक-पु., शाक० भूमिशिरीषः ( चसू. २७.१०१ )
-पित्त-न., वृकस्य पित्तम्, विषहरमिदम् ( असंसू. ८. २९ )
-मुख-न., यन्त्रविशेषः, कुक्कुरसदृशः पशुः. क्षुद्रो वृकः, तन्मुखं यन्त्रम् ( सुसू. ७.१० )
-विष-न., वृकस्य विषम्, व्यालविषवत्कण्डूनिस्तोदवैवर्ण्यसुप्त्यादीनि लक्षणानि वृकविषाद्भवन्ति ( असंउ. ४६.३६६ )

**वृकोदरी**-स्त्री., पारदादियोग० इयं गुटिका अशेषवातरोगमन्दाऽग्निताग्रहण्यादिनाशनी ( र. २१.१३५-३८ )

**वृक्क**-पु., शारीर० कुक्षिगोलकपिण्डः, मेदोवहानां स्रोतसां मूलं च ( चवि. ५.८ ) पञ्चदशकोष्ठाङ्गेष्वेकम् ( चशा. ७.१०; अहसू. ६.७१ ) शरीरे द्वौ वृक्कौ-एको वामपार्श्वस्थितो, द्वितीयो दक्षिणपार्श्वस्थितः ( ड. सुनि. ९.१८ ) तदुत्पत्तिः-रक्तमेदःप्रसादद्वृक्कौ जायेते ( सुशा. ४.३१ )
-ज-वि., वृक्के जातः ( विद्रधिः ) ( चसू. १७.१०१ )

**वृक्ष**-पु., वनस्पति० लोध्रः ( रानि. ६.२३८ )
कुटजः ( सुउ. ४०.६९ )
पुष्पफलवदुद्भिद० द्रुमः ( सुसू. १.२९ )
-ज-वनस्पति० इन्द्रयवः ( सुउ. ४२.७१ )
-त्वच्-स्त्री., न्यग्रोधादिशीतवृक्षाणां त्वक ( सुचि. ३.२६ )
-धूप-पु., निर्यास० सुगन्धिधूपः द्र० 'श्रीवेष्टक' ( रानि. १२.१९२ )
-पतित-वि., वृक्षात्पतितः ( सुक. ५.५५ )
-बीज-न., वनस्पति० इन्द्रयवः ( सुउ. ४२.५० )
-मर्कटिका-स्त्री., पर्णमृगविशेषः ( रापरि. ८; पृ. २८६ )
-मार्जार-पु., पर्णमृगविशेषः ( धपरि. ८ )
-रुहा-स्त्री., वनस्पति० वृक्षादनी ( चसू. ४.१२ )
जन्तुका ( रा.३.१२९ )
-शायिक-पु., निर्विषसर्पविशेषः ( असंउ. ४१ )
(-शायिका ) स्त्री., वृक्षमर्कटिका पर्णमृगविशेषः गिली इति लोके ( सुसू. ४६.७६ )

**वृक्षक**-पु., वनस्पति० कुटजः ( चचि. ७.९७ )
-तैल-न., कुटजबीजतैलम् अनिलकफकृमिकुष्ठदिरोगहरमिदम् ( सुसू. ४५.११५ )
-त्वच्-स्त्री., कुटजत्वक् ( र. २२.७८ )
-बीज-न., वनस्पति० इन्द्रयवः ( सुउ. ३९.१९१ )

**वृक्षादनी**-स्त्री., वनस्पति० मूत्रविरेचनीयगणे हिक्कानिग्रहणगणे, शुक्रजननगणे च प्रोक्तमेकं द्रव्यम् ( चसू. ४.१२, १४, १५,; सुशा. १०.६० )
तद्गुणाः-तिक्ता, कषाया, शीता, ग्राहिणी, व्रणरोपणी, वृष्या, रसायनी, कफपित्तघ्नी, श्रमनाशिनी च ( ध. ४.९७ )
हिं.—वन्दा, बन्दाल, बदाक, वादा.
**म.—वांडगुळ, कामरुख.**
गु.—वांदो.
बं.—वाँदु, परगाछा, मान्दडा.
अशोकः ( सुउ. ४०.४१ )
वृक्षकलम्बुका ( सुउ. ९.१८ ड. )
कामवृक्षकः ( ३८.१२-१३ अरु. )

**वृक्षादन्यादिघृत**-न., घृत० वाताभिष्यन्दे उपयुज्यते ( सुउ. ९.१८.१९ )

**वृक्षाम्ल**-न., वनस्पति० महाकषायवर्गे हृद्यगणे प्रोक्तम् एकं द्रव्यम् ( चसू. ४.१० ) तद्गुणाः-अम्लं, कटु, कषायमुष्णं, लघु, रूक्षम् ( चसू. २७.१५१ ) ग्राहि, रुचिकृत्, कफघ्नम् ( चसू. २७.१५१ ) वातघ्नमर्शस्तृष्णोदरहृद्रोगगुल्माऽतीसारव्रणदोषघ्नं च ( ध. २.९५ )
हिं.—विषाम्बिल, तत्तडीक.
**म.—अमसूल, कोकम्बसोल.**
गु.—कोकम.
बं.—महादा.
अम्लकुटा, चुका, तेन्तुल.

**वृक्षाम्लफल**–न., वनस्पति० वृक्षाम्लम् (रा. ६.१४४)
**वृक्षारुहा**–स्त्री., वनस्पति० बला ( रा. ४.४३२ )
**वृक्षारुहाख्या**–स्त्री., वनस्पति० अमृतस्रवा ( रापरि. ३.४५ )
**वृक्षेशय**–पु., निर्विषसर्पविशेषः ( सुक. ४.३४.(४)
**वृत्त**–वि., वर्तुलम् ( अरु. अहृसू. १९.७१ ) कोणरहितम् ( हे. अहृसू. २८.१८ )
न., आचारः ( सुउ. ६४.१ ड. )
पु., वनस्पति० यावनालः, धवलयावनालः ( रा. १६.१६८ ) द्र० 'यवनाल'
कूर्मः ( र. २३.४३-४५ )
**(वृत्ता)**–स्त्री., वर्तुला ( सुशा. ५.४० )
स्त्री., वर्तुलाकृतिः स्नायुः ( सुशा. ५.३१ )
वनस्पति० रेणुका ( रा. ६.१०० )
निष्पावः ( रा. १६.१७५ )
प्रियङ्गुः ( ध. ३.१६ )
धामार्गवः ( रा. ७.२८४ )
मांसरोहिणी ( ध. ४.९४ )
जम्बूः ( रापरि. ५.९४ )
झिञ्झिरीटा (रापरि. ४.५३ )
**–कर्कटी**–स्त्री., वनस्पति० षड्भुजा ( रा. ७.२५५ )
**–कोश**–पु., वनस्पति० देवदाली ( ध. १.१७३ )
**(–कोशा)**–स्त्री., वनस्पति० देवदाली ( ध. १.१७३ )
**–गर्भा**–वि., वृत्तो गर्भो यस्याः सा ( चशा. २.२४ )
**–गुण**–पु., वनस्पति० गुण्डः ( ध. १.३ )
**–गुण्ड**–पु., वनस्पति० गुण्डः ( रापरि. ८.६१ )
**–तण्डुल**–पु., धान्य० जूर्णा ( रा. १६.१०८ )
**–पत्रा**–स्त्री., वनस्पति० पुत्रदात्री ( रापरि. ३.४७ )
**–पत्रिका**–वनस्पति० बस्तान्त्री वृषगंधा ( रा. ३.२ पृ. ६८ )
**–पर्णी**–स्त्री., वनस्पति० पाठा ( रा. ६.९९ )
**–पुष्प**–पु., वनस्पति० कदम्बः ( ध. ५.१०४ )
भूमिकदम्बः ( रा. ९.१७४ )
वानीरः ( रापरि. ९.१७ )
कुब्जकः ( रा. १०.२४८ )
**–(पुष्पा)**–स्त्री., वनस्पति० मल्लिका ( रा. १०.२२७ )
जम्बूः ( रापरि. ५.२४ )
**–पुष्पक**–पु., वनस्पति० धूलिकदम्बः द्र० 'कदम्ब' ( ध. ५.१०५ )
**–फल**–पु., वनस्पति० मांसलफलः त्रपुसभेदः, द्र० 'त्रपुस' ( रा. ७.२ ७१ )
बदरम् ( रा. ११.१५७ )
दाडिमः ( रा. ११.९४ )
न., मरिचम् ( रा. ६.१३५ )
**(–फला)**–स्त्री., वनस्पति० बृहतीभेदः, वृन्ताकी द्र० 'बृहती' ( रा. ७.१२८ )
आमलकम् ( रा. ११.३२६ )
**–बीज**–पु., वनस्पति० राजमाषः ( रा. १६.१३५ )
भेण्डा ( रापरि. ४.२६ )
**–(जावी)**–स्त्री., वनस्पति० आढकी ( ध. ६.९३ )
**–बीजका**–स्त्री., वनस्पति० पाटली ( रापरि. ५.४४ )
**–मल्लिका**–स्त्री., वनस्पति० अर्कः ( शुक्लार्कः ) ( रा. १०.२९ )
मल्लिका (रापरि. १०.२३; रा. १०.२२७)
**–सौष्ठव**–न., साधुवृत्तम् आचारप्राशस्त्यम् ( चवि. ८.१४ )
**वृत्ति**–स्त्री., चिकित्सा ( चचि. १८.१३८ )
उपचारविधानम् ( चसू. १३.७ )
स्वभावः ( सुक. ३.२५-२७ )
शरीरधारणम्, उपजीविका ( सुउ. ६४.६४ )
वर्तनम् ( असंसू. ६.३१ )
**–कर**–वि., निर्वाहकरम् उपजीविकावहम् ( सुसू. १.१९ )
**वृत्तेर्वारु**–स्त्री., वनस्पति० षड्भुजा ( रा. ७.२५५ )
**वृत्र**–पु., असुर० ( असंसू. ८.१०१ )
**वृध्द**–वि., स्थविरः, जरठः (चसू. २५.४०) सप्ततेरूर्ध्वम् ( सुसू. ३५.२९ ) नवत्यूर्ध्वं वृद्धः (सुचि.३५.२१)
पु., वनस्पति० वृद्धदारुः (ध. ४.१०७)
भूताधिपति० ( असंउ. ७ )
न., वनस्पति० शैलेयम् ( ध. ३.७३ )
**–काश्यप**–पु., ऋषि० अयं बालौषधविषये मतविशेषमास्थितः ( कासिद्धि. ३ )
**–गोनस**–पु., मण्डलिसर्पः ( सुक. ४.३४( २ )
**–जीवक**–पु., आयुर्वेदज्ञो महर्षि० काश्यपस्य शिष्यवरः रोगाणामपरिसंख्येयत्वं मन्यमानः ( कासूलेहाध्याय )
**–जीवकीयतन्त्र**–न., काश्यपसंहिता (काकल्पाध्याय)
**–ज्वरांशुक**–पु., पारदयोग० रसहिंगुलजेपालयुक्तः ज्वरघ्नः ( र. १२.४२ )
**–दारक**–पु., वनस्पति० वृद्धदारुः (र. २८.४३–४७)
वनस्पति० महिषवल्लिः, वेलरिका (असंउ. ४९)

–दारु–पु., वनस्पति० गुणाः– कटुस्तिक्तो, मधुरः (राज) उष्णः पिच्छिलो बल्यः कफवातघ्नः शोथ-कृमिरक्तमेहरक्तविकारमेहवातोदरनाशनश्च (ध. ४.१०८)

–दारुक–पु., वनस्पति० वृद्धदारुः ( ध. ४.१०७ )

–फल–पु., वनस्पति० करञ्जः ( रा. ९.१७६ )

–बन्ध–पु., पारदबन्ध० षड्गुणाभ्रकेण जारितः पारदः ( र. ११.८५ )

–रुहा–स्त्री., वनस्पति० शतावरी ( चसू. ४.१२ )

–वत्स–पु., एकवर्षाऽऽत्मको वत्सः (सुचि. २६.३७)

वृद्धि–स्त्री., पु., रोग० वर्ध्म, मेदोजविकारेष्वेकः ( सुनि. १२; असंनि. ११; अहृनि. ११ ) संप्राप्तिः– क्रुद्धो रुद्धगतिर्वायुः शोफशूलकरः सन् चरन् वंक्षणतो मुष्कौ प्राप्य फलकोशाऽभिवाहिनीर्धमनीः प्रपीड्य फलकोशयोः, फलकोशस्य वा वृद्धिं करोति ( असंनि. ११.२२-२३ ) संख्या सप्तविधा–वातजा, पित्तजा, कफजा, रक्तजा, मेदोजा, मूत्रजा, अन्यजा, ( असंनि. ११.२४ ) पूर्वरूपाणि–बस्तिकटिमुष्क-मेढ्रवेदना, मारुतनिग्रहः, फलकोशशोफः ( सुनि. १२.५ ) लक्षणानि– वातजवृद्धिः– वात-पूर्णदृतिस्पर्शो रूक्षोऽहेतुरुक् च; पित्तजः– वृद्धिरोगः पक्वोदुम्बरसङ्काशो दाहोष्मपाकवान्; कफजः–शीतो गुरुः, स्निग्धः, कण्डूमान्, कठिनोऽल्परुक्; रक्तजः कृष्णस्फोटाऽऽवृतः पित्तवृद्धिलिङ्गश्च; मूत्रजः– मूत्र-धारणशीलस्य मूत्रजवृद्धिर्भवति । गच्छतोऽम्भः-पूर्णदृतिवत्क्षोभं याति । मूत्रकृच्छ्रम् मृदु सरुक् फलकोशयोर्वेलयं च स्यात् । मेदोजः मृदुस्तालफलोपमः कफजवृद्धिलक्षणश्च ( असंनि. ११.२५.२८ ) आन्त्रजवृद्धेर्लक्षणानि संप्राप्तिश्च–वातकोपिभिराहारैः शीततोयाऽवगाहनै-र्धारणेरणविषमाऽङ्गप्रवर्तनाऽऽदिभिः क्षोभणैश्चेष्टितैः कुपितो वायुर्यदा क्षुद्राऽन्त्रावयवं स्वस्थाना-द्विगुणीकृत्य, संकुचीकृत्याऽधो नयेत्तदा वंक्षणसंधि-स्थो वायुर्ग्रन्थ्याऽऽभं शोथं कुर्यात् । तत्र ग्रन्थि-रूपेण स्थित्वा कालान्तरेण फलकोषं गच्छति । तां मुष्कवृद्धिमाऽऽध्मानरुक्स्तम्भवतीमुपेक्षमाणस्य पुरुषस्य प्रपीडितः । सशब्दमूर्ध्वमुपैति, विमुक्तश्च वायुः पुनराऽऽध्मायते ( अहृ नि. ११.२८-३१; मधुकोष. मा. वृद्धिः )

वर्धनम् ( चसू. २८.३३ )

वनस्पति० ऋद्धिः ( ध. १.१४५; सुचि. ३७.१२ )

कन्द० महाश्रावणी ( सुसू. ३८.३५-३६; अरु. अहृसू. १५.१२ )

–कर्णिका–स्त्री., वनस्पति० पाठा ( रानि. ६.९८ )

–कृत्–वि., वर्धनकारकम् ( असंशा. ८.३६ )

–द–पु., वनस्पति० गृष्टिः ( रानि. ७.१३६ ) जीवकः ( रानि. ५.१५५ )

–दात्री–स्त्री., वनस्पति० ऋद्धिः ( रानि. ५.१८८ )

–पत्र–न., छेदनशस्त्र० ( सुचि. १५.१६ ) क्षुरा-ऽऽकारम्, तच्च द्विविधम्–एकमञ्चिताऽग्रं द्वितीयं प्रयताग्रं, द्वेऽपि सप्ताङ्गुलप्रमाणे (ड. सुसू. ८.३-४)

–बला–स्त्री., वनस्पति० बला ( रानि. ४.४३२ )

–रोग–पु., रोग० वृद्धिः ( सुनि. १२.३ ) 'द्र० वृद्धि'

वृध्द्युपदंशश्लीपदचिकित्सित–न., अध्यायसंज्ञा० ( सुचि. १९.५ )

वृध्द्युपदंशश्लीपदनिदान–न., अध्यायसंज्ञा० ( सुनि. १२.१ )

वृन्त–न., पुष्पदण्डः ( र. ११.९९-१०१ ) प्रसवबन्धनम् ( सुनि. ८.३ )

(वृन्ता)-स्त्री., वनस्पति० वृन्ताकी, बृहतीभेदः द्र० 'बृहती' ( धनि. १.१०१ )

वृन्तक–पु., धान्य० शालिः ( धनि. ६.७० )

वृन्ताक–पु., न., शाक० वार्ताकी ( र. १२.१५०.५१ )

( वृन्ताकी )–स्त्री., वनस्पति० बृहतीभेदः ( धनि. १.१०१ )

–मूषा–स्त्री., मूषा० धत्तूरपुष्पवदूर्ध्वनालवती वृन्ताका-ऽऽकारा मूषा, खर्परादिमृदुद्रव्यसत्वहरणार्थ-मेषोपयुज्यते ( र. २.१६१-६२ )

वृन्द–पु., कण्ठरोग० भेद्यरोगः ( सुसू. २५.५-७; सुनि. १६.५६ ) तल्लक्षणानि–वृत्तोन्नतो गल-पार्श्वगो दाहज्वरकरः शोफः ( असंउ. २५ )

वृन्दारक–पु., धान्य० शालिः ( धनि. ६.६९ )

वृश्चा–स्त्री., वनस्पति० अलिपत्रिका ( र. २९.१२७ )

वृश्चिक–पु., विषयुक्तकीट० ( चचि. २३.१५०; सुक. ३.५) वृश्चिकस्य विषं तीक्ष्णमाशुकारि, तद्दंश-समये एवाऽग्निरिव दहति, आश्वेव तद्दंशव्रणादूर्ध्व-देहमारोहति पश्चात्तद्दंशव्रणमाश्रित्य तिष्ठति, ततो दंश आश्वेवाऽधिकवेदनायुक्तः श्याववर्णस्तोद-युक्तः स्फुटनप्रतीतियुक्तश्च भवति ( असंउ. ४३ ) वृश्चिकास्तु त्रिविधाः, मन्दमध्यमहाविषभेदेन

( सुक. ८.५६ ) गवादिशकृत्कोथजा मन्दविषा वृश्चिकास्ते रोमबहुला बहुसंध्युपेतपुच्छाः रक्ता उदरे पाण्डुरवर्णाश्च भवन्ति ( असंउ. ४३) मन्दविषा द्वादश वृश्चिकाः – कृष्णः श्यावः कर्बुरः पाण्डुवर्णो गोमूत्राऽऽभः कर्कशो मेचकः पीतो धूम्रो रोमशः शाड्वलाभो रक्तश्च ( सुक. ८.५७-६० ) मध्यविषास्त्रयः वर्णतः – रक्त- पीत- कपिलाः उदरेण धूम्राः, पुच्छदेशे पर्वत्रययुताः सर्पमूत्रोच्चारपूत्यण्डेभ्य उद्भवन्ति

( सुक. ८,५७,५८,६१-६३ ) सर्पकोथजा वृश्चिका महाविषास्ते वर्णेन ताम्रा नानावर्णा विचित्रवर्णा रक्तवर्णाश्च भवन्ति ( असंउ. ४३ ) सर्पादीनां मृतशरीरक्लेदाद्वृश्चिकोत्पत्तिः, सर्पादयो वृश्चिकैर्दष्टाः सद्य एव जीवितं त्यजन्ति ( असंसू. ७.२५७-५८ ) तत्र सर्पदष्टवच्चिकित्सा कार्या–वृश्चिकदंशमादौ स्वेदितं पश्चात्प्रच्छितं रजन्यादि चूर्णैर्दुष्टरक्तप्रवर्तनार्थं प्रतिसारयेत्, सुरसाग्रजं मातुलुङ्गाऽम्लगोमूत्रपिष्टं लेपनार्थम्, सुखोष्णं गोमयं स्वेदनार्थम्, पानार्थं क्षौद्रयुतं गोघृतं, तथा च बहुशर्करं क्षीरम् उपयुंजीत ( सुक. ८.६७-६९ )

**वृश्चिकर्णी**–स्त्री., वनस्पति० आखुकर्णी ( रापरि. ३.२१)

**वृश्चिका**–स्त्री., वनस्पति० तद्गुणाः–अम्ला, पिच्छिला, अन्त्रवृध्यादिदोषनुत् ( रापरि. ५.४० )

–**विष**–न., वृश्चिकदंशविषम् ( सुक. ८. ७२-७३ )

**वृश्चिकाली**–स्त्री., वनस्पति० तद्गुणाः–कटुस्तिक्तोष्णा, हृद्वक्त्रशुद्धिकृत्, बल्या, रक्तपित्तविबन्धारोचकाऽपहा च ( रापरि. ९.७ )

हिं.—बर्हन्त.

**म.—खाजकोलती.**

बं.—बिछुती.

ता.—काञ्जुरी.

मेषशृङ्गी ( ध. १.८७; असंचि. १७ )

चक्रा ( इन्दु. असंउ. ९ )

उष्ट्रधूमकः ( इन्दुः असंउ. ९ )

वृश्चिकपत्री ( चचि. ९.४७ )

**वृश्चीर**–पु., वनस्पति० श्वेतपुनर्नवा (चक्र. चक. ४.१६; ध. १.२७४ )

**वृश्चीव**–पु., वनस्पति० श्वेतपुनर्नवा ( सुउ. ३९.२०२ )

**वृश्चीवाद्यरिष्ट**–पु., अरिष्ट० अयं गुल्मघ्नः ( सुउ. ४२.४६-४८ )

**वृष**–वि., शुक्रोपचयवान् ( चक्र. चसि. १२.२८ )

पु., वनस्पति० आटरूषः ( सुउ. ३९.१९५ )

ऋषभः ( ध. १,१२५ )

कफप्रकृतिप्राणिविशेषः ( सुशा. ४.७६ )

ग्राम्यपशुविशेषः वृषभः ( धपरि. १६ )

बिलेशयप्राणि० ग्राममार्जारः वनमार्जारो वा ( असंसू. ७.७६-७७ )

बलीवर्दः ( चचि. ३.३०२-३ )

**( वृषा )**–स्त्री., वनस्पति० द्रवन्ती ( रा. ५.३४६ )

आटरूषः ( र. १३.३ )

आखुकर्णी ( रापरि. ३.२२ )

–**कर्णी**–स्त्री., वनस्पति० आखुकर्णी (अहृसू. १५.३०)

–**गन्धाख्या**–स्त्री., वनस्पति० बस्तान्त्री ( रा. ३.२ )

–**घृत**–न., घृत० इदं कासश्वासयक्ष्मापाण्डुनाशनम् ( सुउ. ४१.४३-४४ )

–**ता**–स्त्री., वृष्यता ( अहृसू. ७.५४ )

–**त्वक्कृत्**–वि., शुक्रवृद्धिकृत् ( चसि. ८.११ )

–**दंश**–पु., प्राणि० बिडालः ( चचि. ३.३०२) मार्जारो वनमार्जारो वा ( सुसू. ४६.७८ )

–**ध्वाङ्क्षी**–स्त्री., वनस्पति० मुस्ता ( रा. ६.६२; ध. १.४१ )

–**पर्णिका**–स्त्री., वनस्पति० फञ्जिपत्रिका ( चसू. ४.११ (१५ )

–**पुष्प**–न., शाक० गुणाः–कफपित्तहरं तिक्तं कटु शीतं च ( चसू. २७.९६ )

–**मुष्टिका**–स्त्री., वनस्पति० ( असंसू. ७ )

–**मूलादितैल**–न., तैल० ( चचि. २८.१७०-७१ )

–**वर्चस्**–न., वृषभपुरीषम्, इदं रक्तपित्तघ्नम् ( सुउ. ४५.३१ )

**वृषक**–पु., वनस्पति० आटरूषः ( चसू. २३.१५; सुचि. ३७.१९ )

पाषाणभेदः ( असंक. ५ )

–**बीज**–न., शाकबीजम् ( असंचि. ३१.७८ )

**वृषण**–पु., न., शारीर० अण्डकोशः, मुष्कः, पुंदेहे षट्पञ्चाशत्प्रत्यङ्गेष्वेकम्, संख्यातः, द्वौ वृषणौ ( चशा. ७.११ )

शुक्रवहानां स्रोतसां मूलं च ( चवि. ५.८ ) मांसरुधिरकफमेदसां सारादुत्पद्यते ( चसू. १८.३० )

–**कच्छू**–स्त्री., क्षुद्ररोग० कण्डूलस्त्वग्विकारः कफरक्तजन्यः ( सुनि. १३.५९-६० )

**–नाश**–पु., मुष्कनाशः ( असंशा. २.४६ )
**वृषणाक्षेप**–पु., रोग० वृषणस्याक्षेपः, अशीतिवातविकारेष्वेकः ( चसू. २०.११ )
**वृषभ**–पु., पशु० बलीवर्दः, तन्मांसगुणाः–स्निग्धं गुरु बृंहणं. बल्यं कफपित्तकरं पीनसकरं वातघ्नं कार्श्यमन्दाऽग्निनाशनं च ( ध. ६.४०५ )
वनस्पति० ऋषभः ( ध. १.१२५ )
**( वृषभी )**–स्त्री., वनस्पति० दधिपुष्पी ( ध. १.१५३ )
**वृषभाक्षी**–स्त्री., वनस्पति० इन्द्रवारुणी (ध. १.२४८)
**वृषस्यन्ती**–वि., रतार्थिनी ( स्त्री ) ( सुशा. २.४७ )
**वृषा**–स्त्री., वनस्पति० आखुकर्णी ( रापरि. ३.२२ )
आटरूषः ( र. १३.३ )
**–कपि**–पु., शङ्करः, अग्निः ( चचि. २३.९२ )
**वृषाकर**–पु., धान्य० माषः ( ध. ६.९९ )
**वृषाणिन्**–पु., वनस्पति० ऋषभः ( रा. ५.१५७ )
**वृष्टि**–स्त्री., वर्षा, पर्जन्यः ( अहसू. ३.६ )
**वृष्य**–वि., शुक्रवृद्धिकरम् ( चसू. १.१०७ ) पुंस्त्वकरम् ( असंउ. ५० ) वाजीकरम् ( चचि. १.५ ) यत्किञ्चित् स्निग्धं मधुरं बृंहणं गुरु मनसो हर्षणं च तत्सर्वं वृष्यम् ( चचि. २(४).३६ )
पु., वनस्पति० इक्षुः ( रा. १४.१८० )
न., आमलकम् ( ध. १.२१५ )
**(वृष्या)**–स्त्री., वनस्पति० बलाभेदः, बलिका, द्र० 'बला' ( ध. १.२८६ )
भूधात्री ( रा. ५.१४५ )
**–कन्दा**–स्त्री., वनस्पति० विदारी ( ध. १.१४७ )
**–गन्धा**–स्त्री., वनस्पति० बलाभेदो बलिका, द्र० ' बला ' ( ध. १.२८६ )
**–गन्धिका**–स्त्री., वनस्पति० बलाभेदो बलिका, द्र० ' बला ' ( ध. १.२८६ )
**–योग**–पु., वाजीकरयोगः ( अहसू. ४.२७ )
**–वल्लिका**–स्त्री., वनस्पति० विदारी ( ध. १.१४७ )
**–वल्ली**–स्त्री., वनस्पति० विदारी ( ध. १.१४७ )
**वेक**–पु., ग्राम्यवर्गे डल्हणेन निर्दिष्टः प्राणिविशेषः ( ड. सुसू. ४६.८५ )
**वेग**–पु., प्रवृत्त्युन्मुखत्वम् ( चसू. ७.३ ) गतिदायको गुणः ( सुनि. १.८७ )
ज्वरादीनामाऽऽविर्भावः, संचारः ( चचि. ३.७० )
शरीरगतस्य वातादेर्गतिः ( असंनि. १५.३१ )
शरीरे रसायनौषधिपाकसमये जायमानं दाहमूर्च्छाऽऽक्षेपादिकम् ( र. १२.७९-८९ )



**–धारण**–न., गतिविरोधः तच्चानारोग्यकराणां श्रेष्ठम् ( असंसू. ५.२६ )
**–नामन्**–न., शाक० काकादनी (सुसू.४६.२३८)
**–निग्रहशील**–वि., वेगनिग्रहरतः ( ड. ) नित्यं वेगधारणं कुर्वाणः ( सुउ. ६१.५ )
**–प्रवर्तन**–न., शारीरवेगानां प्रवृत्तिः (चसू.१६.५)
**–रोधिन्**–वि., वेगधारणशीलः ( असंसू. ९.७९ )
द्र० ' वेगनिग्रहशील. '
**–वत्**–वि., प्रसरणशीलः ( ड. सुउ. ३९.२३ )
**–विघात**–पु., वेगावरोधः ( सुचि. ९.३ )
द्र० 'वेगधारण.'
**–विधारण**–न., वेगधारणम् ( असंसू. ९ )
**–विधारिन्**–वि., वेगावरोधकः ( अहसू. ८.१० )
द्र० 'वेगनिग्रहशील.'
**–संधारण**–न., वातविण्मूत्रादिवेगानामवरोधः ( चसू. २५.४० )
द्र० 'वेगधारण.'
**–हानि**–पु., वेगनाशो वेगनिर्गमनम् (सुउ. ३९.७४)
**वेगागम**–पु., वेगप्राप्तिर्वेगस्याऽऽगतिः ( सुउ. ३९.७३ )
**वेगाघात**–पु., वेगधारणम् ( सुउ. ५०.४ )
द्र० ' वेगधारण. '
**वेगान्तर**–न., अन्यो वेगः ( सुक. २.४४ )
**वेगापाय**–पु., वेगहानिः ( सुउ. ३९.१४५-१४६ )
द्र० 'वेगहानि'.
**वेगाभिघातशील**–वि., वेगनिग्रहणकरः ( असंसू. २७.३३ )
द्र० 'वेगनिग्रहशील'.
**वेगित**–वि., वेगयुक्तः ( अहसू. २.१९ )
**वेगिन्**–पु., रोग० बाह्यायामः ( असंनि. १५.२९ )
**( वेगिनी )**–स्त्री., रोग० हिध्मा, यमलापरपर्यायाः ( असंनि. ४.२४ )
**वेगोदीरण**–न., वेगोत्पत्तिः ( अहसू. १२.४१ )
**वेड**–न., सार्द्रविच्छिन्नचन्दनः ( काखिल. १५.१६ )
**वेणागमूलक**–न., वनस्पति० उशीरम् ( रा. १२.२६ )
**वेणिका**–स्त्री., गुणत्रयग्रथितउपयन्त्र० ( सुसू. ७.१५ ) विषवारणिका रज्जुः, विषदष्टस्य दंशोपरि बन्धनार्थं प्रयुक्ता ( चचि. २३.३८ )
**वेणी**–स्त्री., वनस्पति० देवदाली ( चक. चक. २.३, ध. १.१७३ )
**वेणु**–पु., वनस्पति० वंशः ( ध. ४. १३७; चसि. ३.७ )
वाद्य० वंशी ( सुचि. ३४.१२ )

–करीर–पु., वंशमूलाऽङ्कुरः शाकः, तद्गुणाः–गुरुः कफमारुतकोपनश्च ( सुसू. ४६.३०५ )
–गह्वर–न., वंशनलिकाऽभ्यन्तरम् ( सुउ. १७. १९-२१ )
–ज–पु., वनस्पति० वेणुयवः ( रा. १६.१२६ )
–जात–न., शाक० कषायं वातकोपनं च ( सुसू. ४६.२९३ )
–नाडी–स्त्री., नाडीभाजनविशेषः (सुउ. १७.८-१०)
–निर्लेखन–न., वंशतक्षणं, वंशत्वक् (सुचि. १९.८)
–निस्वन–पु., वनस्पति० इक्षुः (ध. ४.१२०)
–पत्रक–पु., सर्प० मण्डली ( सुक. ४.३४(२) )
(–पत्रिका)–स्त्री., वंशपत्रम् ( सुक. १.५२-५४ )
–पत्री–स्त्री., निर्यास० नाडीहिङ्गु ( ध. २.४० )
–पर्णी–स्त्री., तृणधान्य० ( असंसू. ७.१५ )
–पर्वन् न., वेणुग्रन्थि, ग्रन्थ्यादिषु विमर्दनोपयोगि ( असंउ. ३५ )
–बीज–पु., वनस्पति० वेणुयवः ( रा. १६.१२६ )
–यव–पु., वनस्पति० वंशफलम् ( चसू. २७.२० ) वंशतण्डुलः ( सुसू. २०.५ ) तद्गुणाः–कषायोऽनुरसो मधुरः; कटुपाकी, रूक्ष उष्णः; शीतः (रा) बद्धमूत्रो वातकोपनः, कफहरः ( सुसू. ४६.२६ ) पित्तघ्नो वीर्यवृद्धिकरो बल्यः, प्रमेहक्रिमिविषनाशकः ( रा. १६.१२६ ) द्र० 'वंश'

**वेणुका**–स्त्री., तन्नामकफलविषभेदः ( सुक. २.५ )

**वेत**–पु., वनस्पति० वेत्रः ( रापरि. ७.१४ )

**वेतस**–पु., वनस्पति० तद्गुणाः–तिक्तः ईषत्कषायः, कटुः, स्वादुः, शीतो रक्षोघ्नो भूतनाशनो रुच्यो दीपनः कफपित्तघ्नो व्रणशुद्धिकरो रक्तपित्तनाशनश्च ( ध. ५.११६ )
हिं.—बेंत.
म.—**वेत, थोरवेत.**
गु.—नेतर.
बं.—वेत.
फा.—वेत.
सुगन्धिमूलम् ( चक. चचि. ३.२५८ )
वेत्रः ( चसू. ३.२७ )
अम्लवेतसः ( र. १५.६६ )
शस्त्र०वेतसपत्राकारं शस्त्रम्, तद्व्यधनार्थमुपयुज्यते ( अहसू. २६.९ )

**( वेतसी )**–स्त्री., वनस्पति० जम्बूः ( ध. ५.८४ )
–पत्रक–न., व्यधनोपयोगिशस्त्रमङ्गुलविस्तारं चतुरङ्गुलमायतं, चतुरङ्गुलं वृन्तं; कैशिकी धारा ( सुसू. ८.४ )
–शाक–न., शाक० इदं कटुतिक्ताम्लं वातलमधोमार्गप्रवर्तनं च ( चसू. २७.१०९ )

**वेतसाम्ल**–न., वनस्पति० अम्लवेतसः ( चचि. १२.५५; ध. २.९६ )

**वेताल**–पु., भूतयोनिविशेषः ( चचि. २३.८८ ) भूताधिपतिविशेषः ( असंउ. ७ )

**वेत्र**–पु., न., वनस्पति० कषायः, शीतः, पित्तघ्नो भूतघ्नश्च ( रापरि. ७.१४ ) निर्वापणप्रदेहे उपयुज्यते ( चसू. ३.२६ ) तस्य पुष्पं विषाऽन्वितमस्ति ( सुक. २.५ )
–करीर–पु., वेत्राङ्कुरः ( सुसू. ४२.११ )
–फल–न., पद्मबीजसमं फलम् ( ड. सुसू. ४६.१३९ )

**वेत्राग्र**–न., शाक० वेत्रकरीरम्, तद्गुणाः–कफपित्तहरं तिक्तं शीतं कटुविपाकि च ( चसू. २७.४; सुसू. ४६.२७० )

**वेत्राम्ल**–न., वनस्पति० अम्लवेतसः ( सुउ. १२.१७-१८ )

**वेद**–पु., ऋग्वेदादिः ( चसू. ३०.२१ ) ज्ञानम्, वेत्ति इति वेदः ज्ञानम् ( अमरकोश ) आयुर्वेदः ( सुसू. ३.४ ) संख्यासंकेतविशेषः, चत्वारो वेदाः, तेन वेदपदस्य चतुःसंख्याभिधायकत्वम् ( र. २९.२३-२४ )

**( वेदी )**–स्त्री., आसनम्, पिण्डिका ( चशा. ८.१० )
–भूरुहा–स्त्री., वनस्पति० गन्धपलाशः ( रा. ६.९० )
–यितृ–पु., मनसो ज्ञापयिता ( सुशा. ३.४ )
–वादिन्–पु., वेदप्रतिपाद्यैकानुवादकः, वेदसिद्धान्तानुगामी, आयुर्वेदवादी ( ड. सुशा. ५.१८ )
–विद्–वि., आयुर्वेदज्ञः ( चसू. १.७६ )

**वेदना**–स्त्री., लक्षण० दुःखम् ( चशा. १.८६ ) सुखदुःखोपलब्धिः ( चशा. ४.१५ ) रोगः ( चशा. १.८६ ) लक्षण० शूलः ( सुशा. १०.७ ) आविः, प्रसववेदना ( असंशा. ३.३० )
–घ्न–न., शूलघ्नः ( धूपः ) ( सुसू. ५.१७ )

**वेदनाश्रयसंज्ञक**–वि., वेदनाकारणत्वेन व्यपदिष्टम्, कारणत्वेनोक्तं कालाद्ययोगादि ( चशा. १.३५ )

**वेदनास्थापन**–वि., वेदनोच्छेदपूर्वकं शरीरस्य प्रकृतौ स्थापनम् ( चसू. ४.१८ )

**वेदनास्थापनगण**-पु., द्रव्यगण० महाकषायवर्गे एको गणः, वेदनायां संभूतायां तां निहत्य शरीरं प्रकृतौ स्थापयति । शालकट्फलकदम्बपद्मकतुम्बमोचरस-शिरीषवञ्जुलैलवालुकाशोका इति दशेमानि वेदना-स्थापनानि ( चसू. ४.१८ )

**वेदयितृ**-पु., मनसो ज्ञापयिता ( सुशा. ३.४ )

**वेदाङ्ग**-न., शिक्षा कल्पो व्याकरणं छंदो ज्योतिषं निरुक्तं चेति षड्वेदाङ्गानि ( काखिल. २.३ )

**वेदिका**-स्त्री., विवाहादिनिमित्तमामेष्टकादि रचित-श्चतुरकः ( सुसू. २९.३२ )

**वेदितृ**-पु., आत्मा, जगद्वेदयतीति वेदिता ( चशा. ४.८)

**वेदिनी**-स्त्री., त्वग्विशेषः, पञ्चमी त्वक्, व्रीहेः पञ्चभाग-प्रमाणा ( सुशा. ४.४ )

**वेदोत्पत्ति**-स्त्री., आयुर्वेदोत्पत्तिः ( सुसू. ३.४ )
अध्यायसंज्ञा० ( सुसू. १.१ )

**वेध**-पु., व्यवायिगुणैरौषधैः सहितः मूषाद्रुतताम्ररजता-दिद्रव्ये क्षिप्तः पारदः ( र. ८.८८ ) किमियानाम्ना प्रसिद्धः संस्कारः वेधविद्या रसार्णवाऽऽदौ दल-विधाननाम्ना प्रसिद्धा ( र. ५.११ )

**-कर्मन्**-न., वेधादिकं कर्म किमिया ( र. ७.३-४ )

**-मुख्य**-पु., वनस्पति० कर्चूरः ( ध. ३.९४ )

**(-मुख्या)**-स्त्री., भैषज्य० कस्तूरिका ( ध. ३.२८ )

**वेधक**-पु., वनस्पति० अम्लवेतसः ( रा. ६.१४६ )
न., वनस्पति० धान्यकम् ( रा. ६.९८ )

**वेधनी**-स्त्री., वनस्पति० वनमेथिका ( रा. ५.१८४ )

**वेधिन्**-पु., वनस्पति० अम्लवेतसः ( रा. ६.१४६ )

**वेध्य**-न., अष्टविधशस्त्रकर्मस्वेकम्, अल्पमुखैः शस्त्रै-र्व्यधनीयं सिरादि (ड. सुसू. ५.५) वेध्यविषयाः-बहुविधाः सिरा मूत्रवृद्धिर्दकोदरम् (सुसू. २५.१०)

**वेपक**-पु., वेपनम्, कम्पनम्, तेन वेपको रोगत्वेन कम्प-नम् ( सुचि. ३६.४५ )

**वेपथु**-पु., लक्षण० कम्पः, वेपनम् ( चनि. १.२१; सुचि. २४.८७ )
रोग० अशीतिवातविकारेष्वेकः ( चसू. २०.११ )

**वेपन**-न., वातरोग० कम्पः ( चचि. २८.१३४; सुशा. ६.२४ )

**वेपमान**-वि., कम्पमानः ( सुउ. ६१.११ )

**वेला**-स्त्री., कालः ( सुउ. ३९.७२ )
कूलमर्यादा, तीरम् ( सुचि. ३५.३० )

**वेल्ल**-पु., न., वनस्पति० विडङ्गः ( असंउ. ४७; अहृसू. १५.४ )
मरिचम् ( र. २.७५ )

**वेल्लन्तर**-पु., वनस्पति० वालकम् ( अहृसू. १५.२४ )

**वेल्लरिका**-स्त्री., वनस्पति० वृद्धदारुः ( असंउ. ४९ )

**वेल्लितक**-पु., वैकरञ्जेभ्यस्त्रिभ्यो जातः सर्पविशेषः अयं मण्डलिसर्पविशेषवद्वर्तते ( सुक. ४.३४ )
न., सीवनप्रकारेष्वेकः, तच्च कुटिलं तिर्यक् प्रणि-हितया सूच्या सूत्रेणैकेनावेष्ट्य संपादितम् ( सुसू. २५.२१ )

**वेल्लितबन्ध**-पु., बन्ध० तिर्यक्स्थे शाखाघाते घनवास-साऽसौ प्रसंपाद्यः ( असंउ. ३१ )

**वेशवार**-पु., संस्कृतमांसविशेषः निरस्थि पिशितं पिष्टं स्विन्नं घृतगुडाऽन्वितं कृष्णामरिचसंयुक्तम्, तद्गुणाः-गुरुः स्निग्धो बलोपचयवर्धनः ( चसू. २७.२६९; सुचि. २.२५ )
शाकादिषु व्यञ्जनार्थमुपयुक्तं धान्यजीरकादियुक्तं चूर्णम्, उपस्करः ( चसू. १४.४२ ) व्यञ्जनम् ( सुचि. ३२.१२ )

**वेशवारोपनाह**-पु., उपक्रम० स्वेदविशेषः ( सुचि. ३२.१२ )

**वेश्मन्**-न., गर्भिणी यत्र वसति तत्स्थानम् ( का. जातिसूत्रीय )

**( वेश्म )-कुलिङ्ग**-पु., गृहकुलिङ्गस्तद्गुणाः- रक्तपित्त-हरोऽतिशुक्रलश्च ( सुसू. ४६.७१ )

**-धूम**-पु., अगारधूमः, गृहधूमः ( चचि. २६.१४ )

**वेश्य**-पु., वेश्म ( असंसू. ७.७९ )
द्र० 'वेश्मन्'.

**वेष**-पु., नेपथ्यम् ( अहृसू. २.३१ )

**वेष्ट**-पु., निर्यास० श्रीवेष्टकः ( रा. १२.१९२ )
न., वेष्टनम्, दन्तवेष्टनम् ( सुनि. १६.२१-२३ )

**-सार**-पु., निर्यास० श्रीवेष्टकः ( रा. १२.१९३ )

**वेष्टक**-पु., वनस्पति० शाल्मली ( ध. ५.१२६ )
श्रीवेष्टकः ( रा. १२.९२ )

**वेष्टन**-न., अग्रन्थिबन्धनं सर्पादिभिः ( चसू. १८.४ )
लक्षण० उद्वेष्टनम् ( चसू. १७.३१ ) वलनम् (हे.)
प्रथनमिवाऽङ्गस्य ( अरु. अहृसू. १२.५० )

**वेसवार**-पु., संस्कृतमांसविशेषः वेशवारः (चसू. ३.१९)
द्र० 'वेशवार'.
खिन्नपिष्टमुद्गादिकल्कः ( सुसू. ४६.४०० )

**वेसवाराम्बुरूप**-वि., वेसवारसंमिश्रजलसदृशम् ( सुउ. ४०.१९ )
द्र० 'वेशवार'.

**वैकरञ्ज**–पु., सर्प० संकीर्णजातः पृथग्जातीयसर्पिणीपृथग्जातीयसर्पाभ्यां जातो वैकरञ्जः ( सुक. ४.९-१० ) वैकरञ्जास्त्रयः–तद्यथा–माकुलिः पोटगलः स्निग्धराजिरिति, तत्र कृष्णसर्पेण गोनस्यां वैपरीत्येन वा जातो माकुलिः, राजिलेन गोनस्यां वैपरीत्येन वा जातः पोटगलः, कृष्णसर्पेण राजिमत्यां वैपरीत्येन वा जातः स्निग्धराजिरिति, तेषामाद्यस्य माकुले, पितृवद्विषोत्कर्षः, द्वयोर्मातृवदित्येके ( सुक. ४.३४)(५)

**वैकरञ्जोद्भव**–वि., वैकरञ्जाज्जातः, वैकरञ्जेभ्यस्त्रिभ्यो जातः तद्यथा–दिव्येलकः, रोध्रपुष्पकः, राजिचित्रकः, पोटगलः, पुष्पाभिकीर्णः, दर्भपुष्पः, वेल्लितकश्चेति, तेषामाद्यास्त्रयो राजिलवत् शेषाः मण्डलिवत् ( सुक. ४.३४ )

**वैकल्यकर**–वि., वैकल्यं कर्मासमर्थत्वम्, तत्करम् ( सुशा. ६.२२ )

**–मर्मन्**–पु., मर्म० चतुश्चत्वारिंशद्वैकल्यकराणि मर्माणि ( सुशा. ६.८ ) तानि लोहिताक्षादीनि ( सुशा. ६.१२-१३ )

वैकल्यकराणि सौम्यानि, सोमो हि स्थिरत्वाच्छैत्याच्च प्राणाऽवलम्बनं करोति ( सुशा. ६.१६ )

**वैकारिक**–वि., विकृतिभवम् ( चशा. ४.२५ )

**( वैकारिकी )**–स्त्री., विकारभवा निद्रा ( सुशा. ४.३३ )

**–वर्ण**–पु., विकृतवर्णः, नीलश्यावताम्रहरितशुक्लाश्च वर्णाः, शरीरस्य वैकारिका भवन्ति ( चइ. १.९ )

**–स्वर**–पु., विकृतस्वरः विकारजनितः स्वरो वा एडककलग्रस्ताऽव्यक्तगद्गदक्षामदीनाऽनुकीर्णास्त्वातुराणां स्वरा वैकारिका भवन्ति ( चइ. १.१४ )

**वैकारिकाहंकार**–पु., अहंकारभेदः, सात्त्विकः अहंकारः ( सुशा. १.४ )

**वैकिर**–न., जल० सिकतां विकीर्य यज्जलमाऽऽपद्यते तत्, तस्य गुणाः–कटु, सक्षारं, श्लेष्मघ्नं, लघु दीपनं च ( सुसू. ४५.३५ )

**वैकुण्ठ**–पु., वनस्पति० अर्जकः ( रा. १०.८५ )

**वैकृत**–न., विकारः विकृतिरेव वैकृतम् ( सुसू. १४.३ ) स्वभावतः प्रकृतितो यद्वैकृतमन्यथात्वं तत् ( सुसू. २८.८ )

वि., विकारभवः ( असंशा. ८ )

**( वैकृती )**–वि., विकृतिमूला ( चसू. १७.११५ )

**वैकृत्य**–न., अन्यथात्वम् ( सुउ. ३९.११६ )

**वैक्रान्त**–पु., न., रत्न० महारसेष्वेकं, खनिजोपल० गुणाः– आयुष्यं बल्यं वर्ण्यमतिवृष्यं दीपनं रसायनम् । प्रमेह–वार्धक्य–क्षय–ग्रहणी–कासघ्नश्च ( ध. ६.४४ ) तस्य द्रुतिविधानम्–अम्लवेतसरसेन भावितं शुक्लवर्णं वैक्रान्तं तीव्रातपे सप्ताहात् द्रवतां गच्छति। केतकीस्वरसः सैन्धवं स्वर्णपुष्पिकेन्द्रगोपश्चैतत् सर्वं भाण्डे विनिक्षिपेत् । तस्मिन्भाण्डे सप्तदिनपर्यन्तं वैक्रान्तं स्वेदयेत् । एवं सप्तदिनस्वेदनाऽनन्तरं तद् द्रवतां गच्छति ( र. ४.७५ )

**वैखानस**–पु., ऋषि० रोगाऽपहरणचिन्तनार्थं हिमवतः पार्श्वे समेतेषु महर्षिषु एकः ( चसू. १.१३ )

**वैगन्धिक**–पु., शुद्धगन्धकः ( चक्र. ) त्रिजातकश्चतुर्जातकः । जज्जटः ( चचि. २३.२२३ )

**वैगुण्य**–न., विगुणस्य भावः, विषमो गुणः ( चवि. ३.१९ )

वक्रता ( सुचि. १५.४ )

**वैचित्त्य**–न., विकृतचित्तत्वं, क्षुब्धमनस्त्वम् ( चचि. ३.३६ )

उन्मादादिमानसविकारः ( सुचि. ३९.१४ )

**वैजयन्तिका**–स्त्री., वनस्पति० अग्निमन्थः (रा. ९.१३६)

**वैजयन्ती**–स्त्री., वनस्पति० अग्निमन्थः ( सुचि. ४.३२ ) मुक्तकः ( इन्दु. असंउ. २२ )

टाहकळा इति भाषायामिति ( इन्दुः असंचि. १४ )

**वैडुर्यप्रभराज**–पु., देवता० (अहृसू.१८.१७३)

विदूरगिरिसंभवम् ( सुउ. १५.२६ )

**वैडूर्य**–पु., न., रत्न० ( असंसू. ८.९६ ) शुभवैडूर्यलक्षणम्–श्यामवर्णं शुभ्रवर्णं श्वेतवर्णं वा । सर्वतः समानाऽऽकारं समं प्रकाशमानम् । निकृष्टवैडूर्यलक्षणम्–श्याम-तोयसमच्छायं चिपिटं लघ्वल्पभारं कठिनं रक्तवर्णगर्भितं रेखासहितम् । वैडूर्य–गुणाः–रक्तपित्तघ्नं प्रज्ञाऽऽयुर्बलवर्धनं दीपनं मलमोचनं पित्तप्रधानरोगघ्नं च ( र. ४.६१-६२-६३ ) अक्षिरोगनुत् ( चचि. २६.२४६ ) विषघ्नम् ( चचि. २३.२५२-२५३ ) लेखनम् ( सुसू. ४६.३२९ )

**वैणव**–वि., वेणुमयम् वेणुभवं वेणुकृतं वा ( सुसू. २६.१९ )

**वैतरण**–पु., धन्वन्तरिशिष्येष्वेकः ( सुसू. १.३ )

**वैदर्भ**–पु., दन्तमूलरोगः दन्तमूलेषु जायमानो रोगः, तत्र दन्ताश्चला भवन्ति, अयमभिघातजवैदर्भ इत्युच्यते ( सुनि. १६.२३-२४ )

**वैदल**–वि., मुद्गादि० माषकुलत्थादयो हि न वैदलत्वेन निर्दिष्टाः, शिम्बिदलयोर्विभजनात् वैदलत्वं मुद्गादीनाम्। मुद्गवनमुद्गकलायमकुष्ठमसूरमङ्गल्यचणकसतीनत्रिपुटकहरेण्वाढकीप्रभृतयो वैदला- ( सुसू. ४६.२७ ) तत्कृतभक्ष्यम्, गुणाः–कषायं सृष्टमारुतं लघु च ( सुसू. ४६.४०२ ) वैदलानां सामान्यगुणमाह कषायमधुराः शीताः कटुपाकाः वातकरा बद्धमूत्रपुरीषकराः पित्तश्लेष्महराश्च ( सुस. ४६.२८ )

कीट० तद्गुणाः–वायव्योऽसौ वातरोगान् करोति ( सुक. ८.५-८ )

**वैदूर्य**–पु., न., रत्न० वैडूर्यम् ( चचि. २३.२५२-५३; र. ४.६१ )

**–पात्र**–न., ( परिव० ) वैदूर्यरत्नरचितं भाजनम् ( असंसू. १०.३६ )

**वैदेहनिमि**–पु., ऋषि० ( कासू. २७.३ )

**वैदेहिका**–स्त्री., वनस्पति० पिप्पली ( असंउ. ४७ )

**वैदेही**–स्त्री., लूता० संकीर्णा लूता० तस्याः दंशलक्षणानि–अग्निदग्धनिभो भृशवेदनायुक्तो गम्भीरो हृत्पीडातीक्ष्णज्वरमोहयुक्तश्च ( असंउ. ४५ )

वनस्पति० पिप्पली ( रा. ६.१०९ )

**वैद्य**–पु., भिषक्, विद्यायोगाद्वैद्यत्वम् (चचि.१.(४).५२-५३) वैद्यगुणाः–पर्यवदातश्रुतता, परिदृष्टकर्मता, दाक्ष्यं, शौचं, जितहस्तता, उपकरणवत्ता, सर्वेन्द्रियोपपन्नता, प्रकृतिज्ञता, प्रतिपत्तिज्ञता च ( चवि. ८.८६ ) वैद्यश्च तत्त्वाधिगतशास्त्रार्थः स्वयंकृती लघुहस्तः शुचिः, शूरः, सज्जोपस्करभेषजः प्रत्युत्पन्नमतिर्धीमान् व्यवसायी विशारदः, सत्यधर्मपरः ( सुसू. ३४.१९-२० ) कुलीनो धार्मिकः स्निग्धः सुभृतः सततोत्थितः अलुब्धोऽशठो भक्तः कृतज्ञः प्रियदर्शनः क्रोधपारुष्यमात्सर्यमायाऽऽलस्यविवर्जितो जितेन्द्रियः क्षमावान् शीलदयान्वितः असंभ्रान्तोऽनुरक्तः हितैषी प्रगल्भो निपुण आलस्यवर्जितः ( सुक. १.८-११ ) रसविशारदः स्यात् ( सुसू. ३४.७ )

वैद्यस्य शस्त्रकर्मणि गुणाः–शौर्यमाशुक्रिया शस्त्रतैक्ष्ण्यमस्वेदवेपथुरसम्मोहश्च (सुसू.५.१०) द्विविधो वैद्यः–प्राणाऽभिसरः रोगाऽभिसरः ( चसू. २९.५ )

**–नाथ**–पु., योग० शङ्खभस्म निष्कमात्रं कपर्दिकाभस्म चतुर्निष्कं मयूरतुत्थं कर्षांशं हरितालगन्धकटङ्कणानि कर्षमात्राणि रौप्यनागपारदभस्मान्यर्धकार्षिकाणि चित्रकक्वाथेन संमर्द्य वराटमण्डूरचूर्णेन तद्गोलकं विलिप्य गजपुटे पचेत्। मात्रा–अर्धमाषा। अनुपानं–ताम्बूलरसमर्दितं मरिचचूर्णं ताम्बूलपत्राऽवलिप्तं मधुना हैयंगवीनेन घृतेन वा युक्तम्। मर्यादा–द्वाचत्वारिंशदष्टचत्वारिंशद्वा दिनानि। अयं योगः क्षयनाशकः ( र. १४.५२ )

**–मानिन्**–वि., अवैद्यमप्यात्मानं वैद्यं मन्यमानः ( चवि. ३.४५ )

**–वाक्यकृत्**–वि., वैद्यवाक्यमविकल्पम् आचार्यत्वेन अनुरुध्यमानः परिचरगुणेष्वेकः ( सुसू. ३४.२४ )

**–वाक्यस्थ**–वि., वैद्यवचनकरः, व्याधितगुणेष्वेकः गुणः ( सुसू. ३४.२१-२२ )

**–विदग्ध**–वि., वैद्यमानी, वैद्यंमन्यः ( चसि. २.५ )

**–समूह**–पु., वैद्यसमुदायः, स च निःसंशयकराणां श्रेष्ठः ( चसू. २५.४० )

**वैद्युत**–वि., वैद्युतो नाम दिव्याग्निभेदः (सुचि.३.२६-२७) वि., विद्युत्सम्बन्धी ( असंशा. ५.५६ )

**वैद्रुम**–वि., विद्रुमसम्बन्धि ( चूर्णम् ) ( सुउ. १०.१५ )

**वैधर्म्य**–न., विरुद्धो धर्मः ( चवि. ८.३६ ) विसदृशो धर्मः ( सुशा. १.९ ) विधर्मो नाम विरुद्धधर्मो विपरीतधर्मो वा, तद्भत्त्वं वैधर्म्यम्

**वैधात्री**–स्त्री., वनस्पति० ब्राह्मी ( रा. ५.१४७ ) आमलकी ( र. २३.६४ )

**वैनतेय**–पु.. देवता० विनतात्मजो गरुडः ( असंसू. ८.९४ )

**वैपादिक**–न., रोग० क्षुद्रकुष्ठेष्वेकम्, तत्र लक्षणम्–पाणिपादस्फुटनं तीव्रवेदनम् ( चचि. ७.२२ )

**वैपादिका**–स्त्री., रोग० वैपादिकम् ( सुचि. २५.४२ ) द्र० 'वैपादिक'.

**वैमल्य**–वि., विमलता, शुद्धिः ( अहसू. ४.३० )

**वैयाघ्र**–वि., व्याघ्रस्येदं नाम व्याघ्रसम्बन्धि यथा तच्चर्मादि ( चशा. ८.१० )

**वैरस्य**–वि., लक्षण० विरसता ( चसू. ५.७२ ) अनिष्टरसता (चइ. २.१९) उचिताद् आहाररसादन्यथात्वम् (चक. चसू. २८.९-१०) रसदोषजविकारेष्वेकः ( सुसू. २४.९ )

**वैराटक**–पु., कन्दविषभेदः, लक्षणम्–अङ्गदुःखं शिरोरोगश्च जायते ( सुक. २.५ )

**वैरान्तक**–पु., वनस्पति० अर्जुनः ( रा. ९.१९१ )

**वैरूप्य**–वि., विरूपस्य भावो नाम विरूपता ( चशा. ८.३२ )

**वैरेकीयद्रव्य**–न., विरेको विरेचनम्, विरेकस्येदमिति वैरेकीयं, तच्च द्रव्यम् विरेचनद्रव्यम् ( सुसू. ४४.१२ )

**वैरेचन**–वि., विरेचनोपयोगि विरेचनसम्बन्धि ( सुसू. ४४.५ )

**–धूम**–पु., धूमविशेषः असौ दन्तमूलगताधिमांसे वातश्लेष्मजकासे च प्रयोज्यः ( सुचि. २२.२५ )

**वैरेचनिक**–वि., विरेचनसम्बन्धी ( योगः ) ( सुउ. ४४.१५ )

**वैरेच्य**–वि., वैरेचनिकः, यथा धूमविशेषः ( चसू. ५.३७ )

द्र० 'वैरेचन धूम'.

**वैरोधिकत्व**–न., विरोधकत्वं नाम द्रव्याणां परस्पर-गुणविरुद्धत्वम् ( चसू. २६.८० )

**वैरोधिकनिमित्त**–वि., विरुद्धाऽशननिमित्तः ( विकारः ) ( चसू. २६.११३ )

**वैवर्ण्य**–वि., वर्णहीनता ( चनि. ५.७ ) विवर्णता ( सुनि. १.२५ )

**वैवस्वत**–पु., देवता० यमः ( सुसू. ३१.२४ )
वि., यमाधिष्ठितः, याम्यः यथा पाशः ( चचि. १(४).६० )

**–क्षय**–पु., यमगृहम् (चचि. १.(४).६०)

**वैवादिक**–वि., विवादं कुर्वाणः विवादे नियुक्तो वा ( चसू. २९.९ )

**वैशद्य**–वि., अच्छत्वं, पिच्छिलगुणस्य विनाशको गुण-विशेषः ( चवि. ८.९८ ) निर्मलता. ( सुचि. २४.९-१० )

**वैशल्य**–न., विगतशल्यत्वं नाम शल्यराहित्यम् ( चशा. ८.३१ )

**वैशाखी**–स्त्री., वनस्पति० पुनर्नवाभेदः क्रूरः ( रा. ५.४०७ ) द्र० 'पुनर्नवा'

**वैशारद्य**–न., पाण्डित्यम् । परवचनाभिभवपाण्डित्यम् ( चवि. ८.१५ )

**वैशीजाता**–स्त्री., वनस्पति० पुत्रदात्री ( रा. ३.४७ )

**वैशेषिक**–वि., विशिष्टः, परस्परव्यावृत्तः इति यावत् ( चशा. ४.१४; सुचि. ९.११ )

**वैश्मिक**–वि., वेश्म गृहम्, तत्र भवो नाम गृहप्रतिष्ठितः ( चइ. १२.३५ )

**वैश्य**–पु., सर्पजातिः तल्लक्षणम्–अमी सर्पाः कृष्ण-लोहितवर्णाः, वज्रनिभा धूम्राः पारावताऽऽभाश्च ( सुक. ४.२७ )

**वैश्रवण**–पु., कुबेरः ( चचि. २३.८१ )

**वैश्रवणावास**–पु., वनस्पति० वटः ( ध. ५.७६ )

**वैश्वदेवी**–स्त्री., पूतनाग्रहस्याऽपरं नाम (का–बालग्रहचि.)

**वैश्वरूप**–न., विश्वरूपस्येदम् विश्वरूपसंबन्धि ( असंसू. २२.१० )

**वैश्वरूप्य**–न., नाना प्रकारं रूपं यस्य स विश्वरूपः, तस्य भावः। विश्वरूप्यम् यथा दोषाणाम् ( सुउ. ६१.१८-१९ )

**वैश्वानर**–पु., देवता० अग्निः ( सुसू. ५.२९ )
पारदयोग० विष्णुक्रान्ता जेपालं लाङ्गली देवदाली इत्येभ्यो द्विगुणं गन्धकं पारदं चादाय सर्वानेतान् यवक्षारयुक्तचिञ्चाफलक्राथेन पक्षमात्रं मर्दयेत्, पुटयेच्च । मात्रा–गुञ्जात्रयम् । अनुपानम्–उष्णाम्बु घृतसैन्धवानि च। फलं–गुल्मनाशः ( र. १८.७४ )
पारदादियोग० पारदगन्धकताम्रशिलाजतुकान्त-लोहचित्रकत्रिकटुकुष्ठनिर्गुण्डीमुसलीवत्सनाभा-ऽजमोदानां चूर्णं निम्बक्वाथेनैकविंशतिवारं भृङ्गराज-रसेन च सप्तवारं मर्दयित्वा ततो गुटिकाः कुर्यात् । अनुपानं मधु। समयो रात्रिः। फलं–जलोदरविनाशः ( र. १९.३२-३५ )

**–पोटली**–पु., पारदादियोग० पारदगन्धककपर्द-भस्मानि गोदुग्धेन संमर्द्य गजपुटे पचेत् । अनुपानं –एकोनविंशतिमरिचानां चूर्णं मधु घृतं च । मात्रा –वल्लम् । पथ्यं–दधिभक्तः घृततक्रौदनो मध्याह्ने; रात्रौ च दुग्धौदनः। परिहारः– विदाहि विदलं भूरिलवणं तैलपाचितं बिल्वं कारवेल्लं वृन्ताकं काञ्जिकं च वर्जयेत्। अयं योगस्तीव्रतरमग्निदीपनः ( र. १६.१३०-१३७ )

**वैश्वानरोचित**–वि., वैश्वानरोचितो नाम अग्निसेवा-सात्म्यः यथा बाल्हीकादिजनः ( चचि. ३०.३१६ )

**वैश्वामित्र**–पु., विश्वामित्रस्याऽपत्यं वैश्वामित्रः सुश्रुतः ( सुउ. १८.३ )

**वैषम्य**–वि., विषमस्य भावः, विषमता (चसू. १७.५४)

**–गमन**–वि., विषमावस्थाप्राप्तिः, वृद्धिर्ह्रासगमनमिह वैषम्यं ज्ञेयम् ( ड. चशा. ६.४ )

**वैष्किरिक**–वि., विष्किरस्येदम् वैष्किरिकम् ( मांसादि ) ( अहृसू. ६.५४ )

**वैष्टम्भ्य**–वि., विष्टम्भित्वम्, स्तम्भनम् (सुसू. ४२.८(१))

**वैष्णवी**–स्त्री., निद्रा विष्णुमायारूपत्वेन विष्णोरियं वैष्णवी इति ( सुशा. ४.३३ )
वनस्पति० शतावरी ( रा. ४.४४० )

निर्यास० वंशरोचना ( ध. २.५५ )
-सेना-स्त्री., हरितालम् ( र. १२.१०४ )
वैसर्प-वि., विसर्पचिकित्सितोक्तम् ( सुउ. २६.१४ )
वैस्वर्य-न., रोग० विकृतस्वरत्वम्, विकृतस्वरः ( चसू. ५.३० )
वि., विस्वरत्वोत्पादकम् ( सुसू. ४५.२१०-२११ )
वैहायस-न., अन्तरिक्षम् ( चचि. १२.३१ )
वोडिक-पु., कोशस्थवर्गे डल्हणेन निर्दिष्टः प्राणिविशेषः ( ड. सुसू. ४६.१०८ )
वोद्द-पु., वेष्टिकर्मकरः, परिवेष्टा ( सुक. १.१७-१८ )
वनस्पति० ऋषभः ( रा. ५.१५७ )
व्यक्त-वि., इन्द्रियग्राह्यम्, 'व्यक्तमैन्द्रियकं चैव गृह्यते तद्यदिन्द्रियैः' ( चशा. १.६२ ) महदादि तत्त्वम् ( चशा. १.६० )
-कर्मन्-वि., वायुः, प्रकटक्रियोऽव्यक्तो वायुः स्वकर्मोत्पादनेन व्यक्तो भवति तस्माद् व्यक्तकर्मा ( सुनि. १.७ )
-गन्धा-स्त्री., वनस्पति० गिरिकर्णी ( रा. ३.१२५ ) यूथिका ( रा. १०.२५१ )
-त्रिवर्ण-वि., व्यक्ताः स्फुटाः अक्ष्णोः रक्तशुक्लकृष्णवर्णाः यस्मिन् तद् ( असंसू. ३.२६ )
-रसता-स्त्री., रसनेन्द्रियग्राह्यमधुरादिरसता ( सुसू. ४५.११ )
-लक्षण-न., (परिव०) सुस्पष्टं चिह्नम् (सुशा.१.२१)
व्यक्ति-स्त्री., व्याधिव्यक्तिः ( सुसू. २१.३६ )
-दर्शक-वि., आकारदर्शकः ( चक्र. चचि. २४.७३ )
-व्यवसायार्थ-वि., पूर्वोक्तार्थवैशद्यहेतुकम् ( चनि. १.४१ )
व्यक्तीभाव-पु., अभिव्यक्तिः ( चशा. ८.१९ )
व्यग्र-वि., व्याकुलः ( चसि. २.४ )
व्यङ्ग-न., रोग० क्षुद्ररोगः, रक्तदोषजविकारेष्वेकः; क्रोधाऽऽयासप्रकुपितो वायुः पित्तेन संयुतो मुखमागत्य नीरुजं तनुकं श्यावं मण्डलं विसृजति अतस्तं व्यङ्गमाऽऽदिशेत् । ( सुनि. १३.४५-४६ )
तस्याऽधिष्ठानं द्वितीया लोहिता नाम त्वक् ( सुशा. ४.४ ) बहिर्मार्गजो व्याधिः ( चसू. ११.४९ )
व्यजन-न., तालवृन्तकम् ( सुसू. ४५.१९ )
व्यजनानिल-पु., तालवृन्तवायुः, तद्गुणाः-अयं शोषदाहश्रमस्वेदमूर्च्छाघ्नः ( सुचि. २४.८२ )
व्यञ्जन-न., भुज्यमानाऽन्नस्य रोचनार्थमार्द्रकलशुनादिना निर्मितं द्रव्यम् ( र. ५.२२०-२२ )
चिह्नम् ( चसू. १८.५ )
शरीरे व्यज्यमानं श्मश्रुस्तनादि ( चशा. ४.१४ )
-केशी-स्त्री., वनस्पति० नीलिनी ( रा. ४.३५० )
व्यञ्जित-वि., प्रकटितम् ( सुनि. ७.५-६ )
व्यतिकर-पु., संयोगः मिश्रणम् ( सुनि. १०.१२ )
व्यतिक्रान्तपाक-वि., अतिशृतः, अतिपाचितः ( चसु. २७.२७५ )
व्यत्यास-पु., विरुद्धक्रमं, परिवर्तनम् क्रियापरिवर्तनम् ( चचि. १५.१९६ )
अमेलकः, समाहाराभावः ( चचि. १९.९ )
वैपरीत्यम् ( सुशा. ६.२७ )
व्यथन-न., वेदनाविशेषः ( चनि. ८.६ )
व्यथान्तक-पु., वनस्पति० कर्णिकारः ( ध. १.२२१ )
व्यथापूर्व-वि., व्यथात्पुरःसरः, यस्मिन् व्यथा भवति सः ( चनि. १.३० )
व्यथितास्य-वि., व्यथितमुखः ( सुशा. ४.६८-७८ )
व्यध-पु., लक्षण० विद्धत्वम् ( चसू. १७.२९ ) ताडनमिव मुद्गरादिना ( अरु. ) सूचीविद्धस्येव व्यथा ( हे. अहृसू. १२.४९ )
व्यधन-न., वेधः तीक्ष्णाग्रशस्त्रेण छिद्रीकरणम् ( सुचि. १.८ ) शल्यतन्त्रे उपक्रमविशेषः ( चसू. ११.५५ )
व्यधनीयप्रदेश-पु., व्यधनकर्मयोग्यः प्रदेशः ( असंसू. ३६.१२ )
व्यध्य-वि., व्यधनीयः, व्यधनकर्मार्हः ( व्याधिः ) ( चचि. २५.५७ )
व्यन्तर-पु., सर्प० दर्वीकरादीनां संकरात् स्त्रीपुंसमिश्रीभावात्समुत्पन्नः सर्पः ( असंउ. ४१ )
व्यपगतसंदेह-वि., निःसंदेहः संदेहरहितः ( चसू. २९.७ )
व्यपदेश-पु., निर्देशः मुख्यव्यवहारः ( अहृसू. ९.२ )
व्यपरोपित-वि., रोपितमात्रः ( चशा. ६.२६ )
व्यभिचरण-न., एकं परित्यज्य अन्यस्य ग्रहणम् ( चसू. ८.५ )
व्यभिचारः, अनैकान्तिकः हेत्वाऽऽभासः ( चवि., ८.४५ )
व्यभ्र-वि., अनभ्रम्, मेघरहितम् ( दिनम् ) ( सुचि. ६.४ )
व्यम्ल-वि., विदग्धं पक्वापक्वम् ( अहृसू. २९.४८ )
-ता-स्त्री., विदाहः ( चचि.५.३७ )
व्यवसाय-पु., निश्चयः ( चवि. ८.४७ )

प्रवृत्तिः ( चवि. ४.८ )
ज्ञानेन निर्धारणम् ( सुचि. ३३.९ )
**व्यवसायिन्**-वि., अयं विषमाऽवस्थास्वपि चिकित्सां कुर्वन्न मुह्यति। अन्ये उत्साहीति मन्यते ( सुशा. ३४.१९-२० )
**व्यवस्थित**-वि., स्थिरम् ( सुसू. ४०.३ )
**व्यवहार**-पु., शब्दप्रयोगः ( अहसू. ९.१५ )
**व्यवहारोपजीविन्**-वि., व्यवहारं व्यवहारोपलभ्यं धनादि आलंब्य जीवन्, वृत्तिजीवी ( चवि. ३.२० )
**व्यवाय**-पु., स्त्रीसेवा। विषयोपभोगः, मैथुनम् ( सुचि. २६.३ )
**-शील**-( परिव० ) वि., व्यवायी, मैथुनोपसेवी ( सुचि. २६.११ )
**-शोष**-पु., रोग० शोषभेदः, तत्र लक्षणानि शुक्रक्षयलिङ्गानि पाण्डुदेहत्वं प्रतिलोमं धातुक्षयश्च ( सुउ. ४१.१७ )
**व्यवायिन्**-वि., गुण० यत्सर्वं देहं व्याप्य पश्चात्पाकं याति तद् ( सुउ. ४७.३ )
**व्यसन**-न., व्याधिः। पीडा ( चसू. ५.१०० )
मरणम् ( चचि. १५.२३४ )
वस्त्रादीनां स्फुटनादिरूपो भ्रंशः ( चइ. १२.२७-३० )
सर्पपिशाचाद्यभिघातः ( चसू. ५.९७ )
दुःखम् ( सुसू. ३५.३७ )
**-सूचक**-वि., संकटसूचकः (शब्दः) ( चशा. १.११९ )
**व्यसनिन्**-वि., द्यूतमद्यवेश्यादीनि व्यसनानि सन्ति यस्य सः ( सुचि. ३०.४ )
संकटप्राप्तः ( चइ. १२.२१-२२ )
अतिदुःखी ( असंशा. १२.१३ )
**व्यस्त**-वि., अन्यत्र गतम् ( चइ. ३.५ )
असमस्तम् ( सुउ. १०.६ )
**-हनु**-वि., विघटितमुखसंधिः ( सुशा. १०.९ )
**व्याकरण**-न., विवरणम् ( सुशा. ४.१ )
**व्याकुल**-परिव० वि., लक्षण० अस्वस्थचित्तः ( सुसू. ३.५४ )
**व्याकुलित**-वि., आवृतः ( सुनि. १.८९ )
**व्याकृति**-वि., विकृताकारम् ( असंशा. १०.५ )
**व्याख्या**-स्त्री., विवरणम् ( सुसू. १.३९ )
**व्याख्यान**-न., तन्त्रयुक्तिः व्याख्यानं नाम यत्सर्वबुद्ध्यविषयं व्याक्रियते ( चसि. १२.४३ )
**व्याघातक**-पु., आरग्वधः ( काखिल. १४ )
**व्याघ्र**-पु., प्रसहजातीयमृगः ( चसू. २७.३५ ) गुहाशयेष्वेकः ( सुसू. ४६.७२ ) तन्मांसगुणाः- मधुरं-उष्णं-स्निग्धं-लघु-दीपनं-बल्यं-वृष्यं रुच्यं वातपित्तघ्नं च ( ध. ६.३९१ )
वनस्पति० एरण्ड० रक्तैरण्डः ( ध. १.२९६ )
द्र० 'एरण्ड'
**( व्याघ्री )**-स्त्री., वनस्पति० कण्टकारी ( अहसू. १०.३०; ध. १.९९ )
**-करज**-पु., प्राणिजद्रव्य० नखी ( चक. चचि. २६.१८४ )
**-चर्मन्**-न., व्याघ्रचर्म ( असंउ. ४ )
**-तल**-न., भैषज्य० व्याघ्रनखम् ( ध. ३.६० )
**-दंश**-पु., हिंस्रपशुविशेषस्य व्याघ्रादेः दंशः ( सुक. ७. ४३-४५ )
**-दल**-पु., वनस्पति० एरण्डभेदः, रक्तैरण्डः ( ध. १.२९६ ) द्र० 'एरण्ड'
**-नख**-पु., वनस्पति० स्नुही ( रा. ८.३५६ )
वनस्पति० नखी ( चचि. १२.७२ )
भैषज्य० तद्गुणाः-तिक्तः कषाय उष्णः वर्ण्यः सौगन्ध्यदः कफ-वात-ग्रह-भूत-कच्छु कुष्ठ-व्रणघ्नश्च ( ध. ३.६० )
**-पदी**-स्त्री., वनस्पति० शार्दूलपदिका ( इन्दुः असंउ. ४४ )
**-पाद**-पु., वनस्पति० विकङ्कतः ( ध. ५.४३ )
वनस्पति० विकण्टकः ( रा. ११.१९ )
**(-पादी )**-स्त्री., वनस्पति० विकङ्कतः कण्टकारी ( र. ११.९० )
**-पादप्रजा**-स्त्री., वनस्पति० वन्ध्यकर्कोटकी ( ध. १.१८६ )
**-पित्त**-न., भैषज्य० विषहरद्रव्येष्वेकम् ( असंसू. ८.२९ )
**-मुखयन्त्र**-न., व्याघ्रमुखेन सदृशं यस्य मुखं तत् स्वस्तिकयन्त्र० ( सुसू. ७.१० )
**-वसा**-स्त्री., भैषज्य० नेत्ररोगेष्वञ्जनार्थमुपयुज्यते ( असंउ. १६ )
**-विष**-न., लक्षणानि व्यालविषवत् कण्डूनिस्तोदवैवर्ण्यविदाहरागरुक्पाकादीनि भवन्ति ( असंउ. ४६ )
**व्याघ्रायुध**-न., भैषज्य० व्याघ्रनखम् ( ध. ३.६० )
**व्याडि**-पु., सप्तविंशत्यतिसांकेष्वन्यतमो रससिद्धिप्रदायकः ( र. १.३ )
**व्यात्तानन**-वि., विवृताऽऽस्यम् ( चचि. २८.१०२ )

**व्याधि**-पु., रोग० विविधं दुःखम् आदधातीति दुःखः; कायवाङ्मानसी पीडा, पुरुषस्य दुःखाय संयोगो येषां ते दुःखसंयोगा व्याधय उच्यन्ते ( सुसू. १.२३-२४;चनि. १.४ )
दोषः ( चक. चसि. १०.१८ )
ज्वरः ( चचि. ३.११ )
वनस्पति० कुष्ठम् ( ध. ३.४९ )
**-कर्शित**-वि., व्याधिक्षीणः ( अहृसू. १४.८ )
**-काल**-पु., भैषज्यकाल० ( चचि. ३०.२९६-३१२ )
**-क्षमत्व**-न., व्याधिसहत्वम् ( चसू. २८.७ )
**-घात**-पु., वनस्पति० आरग्वधः ( अहृसू. १५.४५ )
कर्णिकारः ( ध. १.२२१ )
वानीरः ( रा. ९.१७ )
**-घातक** पु., वनस्पति० आरग्वधः ( असंचि. १० )
**-जन्मन्**-न., रोगसंभवः ( सुशा. १०. २८ )
**-ज्ञान**-न., रोगज्ञानम् ( कासंखि. ३.१६ )
**-त्रिक**-न., व्याधित्रयम्, त्रिविधो व्याधिः, मृदुमध्यतीव्रभेदेन सौम्याऽऽग्नेयवायव्यभेदेन वा ( चचि. २४.६८ )
**-निग्रह**-पु., रोगनाशः, रोगप्रतिकारः ( सुचि. ३८.१४ )
**-निर्घातकर**-वि., व्याधिनाशकरम् (चचि. १(१)१३)
**-प्रतिद्वन्द्व**-वि. व्याधिप्रत्यनीकम् ( चसू. ७.४४ )
**-बल**-न., व्याधेर्बलम् ( चसू. १३. ७७ )
दोषबलं रोगबलं वा ( सुसू. ३९.१० )
**-भेद**-पु., रोगप्रकारः ( सुउ. ४०.१६२ )
**-मार्दव**-न., व्याधेर्मृदुत्वम्, मृदुर्व्याधिः ( अहृसू. १४.१८ )
**-मुख**-न., रोगकारणम् ( असंसू. १३.३ )
**-मोक्ष**-पु., व्याधिमुक्तिः ( अहृसू. २९.४३ )
**-रिपु**-पु., वनस्पति० कर्णिकारः ( रा. ९.३३६ )
**-रूप**-न., रूप्यते लक्ष्यतेऽनेनेति रूपं लक्षणम्, तेन, रोगलक्षणम् ( चवि. ७.५ )
**-लिङ्ग**-न., व्याधिलक्षणम् ( चनि. ८.४३ )
**-वश**-पु., व्याधिबलम् व्याध्यनुरूपम् ( सुशा. ८.८ )
**-विपरीत**-वि., व्याधिविरुद्धः ( असंसू. १२.७ )
**-विपर्यय**-पु., व्याधिनाशः ( अहृसू. ८.२३ )
**-विभ्रम**-पु., कोष्ठादिक्षोभः ( सुचि. ३४.७ )
**-वेगसमुद्भमित**-वि., व्याधिबलेन अप्रकृतिस्थितः ( चनि. ७.४ )
**-संकर**-पु., व्याधिमेलकः ( चनि. ८.२६-२९ )
**-संस्थान**-न., व्याधेः लक्षणम्, आकृतिः वा (अहृसू. १२.६९)
**-समुत्थान**-न., व्याधेः उद्भवः ( चवि. ४.८ )
**-समुद्देशीय**-वि., अध्यायसंज्ञा० ( सुसू. २४.१ )
**-समुद्भव**-पु., व्याध्युत्पत्तिः ( सुउ. ६१.१९,२१ )
**-समूह**-पु., लक्षणसमूहः ( चचि. ८.३२ )
**-सात्म्य**-वि., उपशयात्मकम् ( सुशा. १०.२० )
**-हतमांस**-न., व्याधिना मृतशरीरस्य मांसम् ( सुसू. ४६.१२७ )
**-हन्**-पु., वनस्पति० आरग्वधः ( ध. १.२१९ )
**-हन्तृ**-पु., वनस्पति० वाराही ( रा. ७.१३६ )
**-हर**-न., भेषजम् ( चचि. १.३ )
**-हेतु**-पु., रोगहेतुः ( चनि. ८.२४ )
**व्याधित**-पु., रोगी (सुसू. ३४.२१-२२ )
**-रूप**-वि., व्याधितसदृशः ( चवि. ७.३ )
**-रूपीय**-वि., अध्यायसंज्ञा० ( चवि. ७.१ )
**व्याध्यवस्था**-स्त्री., व्याधेः सामाद्यवस्था ( अहृसू. १.२४ )
**व्याध्युपलब्धि**-स्त्री., रोगस्य ज्ञानम् ( असंनि. १.७ )
**व्याध्युपसृष्ट**-पु., व्याधियुक्तः, रोगी ( सुसू. ३४.१५ )
**व्यान**-पु., वायुः, व्यानो हृद्यवस्थितः कृत्स्नदेहचरः शीघ्रतरगतिप्रसारणाऽऽकुञ्चनोत्क्षेपाऽवक्षेपनिमिषोन्मेषणजृम्भणाऽन्नस्वादनस्रोतोविशोधनस्वेदाऽसृक्स्रावणाऽऽदिक्रियो योनौ च शुक्रप्रतिपादनो विभज्य चान्नस्य किट्टात्सारं तेन क्रमशो धातूंस्तर्पयति ( असंसू. २०.४; चचि. १५.३६; चचि. २८.९; सुनि. १.१७ )
**-प्रकोप**-पु., अतिगमनध्यानक्रीडाविषमचेष्टितविरोधिरूक्षभीहर्षविषादाद्यैः प्रकुपितो व्यानः पुंस्त्वोत्साहबलानां भ्रंशं शोफचित्तोत्प्लवज्वरसर्वाऽङ्गरोगनिस्तोदरोमहर्षाङ्गसुप्तत्वकुष्ठविसर्पादीन् सर्वाङ्गगव्याधींश्च करोति ( असंनि.१६.२५-२६ )
**व्यापद्**-स्त्री., अन्यथाऽऽपत्तिः ( सुसू. १५.२७ )
संकटम् ( सुचि. ३४.१ )
व्याधिः ( चसू. १५.३ )
विकृतिः, विकारः ( चसू. १३.७ )
**व्यापन्न**-वि., दोषाऽऽक्रान्तम् ( सुसू. ४५.११ )
विकृतम् ( सुनि. १.४; चसू. १५.३ )
**व्यापाद**-पु., प्राण्युपघातचिन्ता परानिष्टचिन्तनम् ( अहृसू, २.२२ )

**व्यापादन**–( परिव० ) न., हिंसनम् ( सुनि. ७.४४; सुसू. १२.१६ )

**व्यापार**–पु., कर्म ( असंनि. १५.६)

**व्यापिन्**–न., व्यापकः ( अहृसू. १.७ )

**व्याप्ति**–स्त्री., व्यापकता ( अहृसू. ६.५२.८-७ ) सर्वस्रोतोऽनुसरणम् ( हे. ८. ५२ )

**व्याप्य**–न., वनस्पति० कुष्ठम् ( असंसू. ३.१६ )

**व्याभुग्न**–वि., वक्रम् ( असंशा. ४.३८ )

**व्याम**–पु., तिर्यग्विस्तृतबाहुद्वयप्रमाणम् (चसू. १४.४३)

**व्यामार्धमात्रा**–स्त्री., अर्धव्यामप्रमाणम् (सुचि. ३२.७ )

**व्यामिश्र**–वि.. संमिश्रम् ( अहृसू. ६.५४ )

**व्यायच्छमान**–वि., व्यवायं आचरतः ( चनि. ६.८ )

**व्यायाम**–पु., कर्म० शरीराऽऽयासजननं कर्म, शरीरचेष्टा ( अहृसू. २.१० ) स्थैर्यकराणां श्रेष्ठः ( चसू. २५.४० ) अनग्निस्वेदः ( सुचि. ३२.१५ ) व्यायामाच्छरीरस्य सम्यक्पुष्टिः,सुघटितत्वं, कान्तिः, अग्निदीप्तता, अनाऽऽलस्यं, स्थिरत्वं लाघवं, मृजा–(शुद्धिः), श्रमक्लमपिपासोष्णशीतादीनां सहिष्णुता, आरोग्यञ्चोपजायते । व्यायामसदृशं स्थौल्याऽपकर्षणं किंचिन्नास्ति । व्यायामिनोऽरिभयं नास्ति। व्यायामी सहसा जरां न प्राप्नोति । तस्य मांसं स्थिरीभवति । व्यायामस्विन्नगात्रस्य पद्भ्यामुद्वर्तितस्य व्याधयो न भवन्ति । वयोरूपगुणैर्हीनाऽपि पुरुषाः व्यायामेन सुदर्शना भवन्ति । व्यायामिनो विरुद्धं भोजनं विदग्धमविदग्धं वाऽन्नं निर्दोषं पच्यते । बलिनां स्निग्धभोजिनां च व्यायामः सदा पथ्यो भवति । व्यायामादग्निदीप्तौ सत्यां सर्वरोगोपशमः ( सुचि. २४.३८-४५ ) अतिव्यायामजा रोगाः–क्षयस्तृष्णाऽरुचिश्छर्दिः रक्तपित्तं भ्रमः क्लमः कासः शोषः ज्वरः श्वासश्च ( सुचि. २४.४९-५० ) वर्षाकाले मृदुव्यायाममाचरेदित्युक्तम् । स च शरीरक्लेशदोषशोषाऽर्थं वह्निसंधुक्षणार्थं च ( सुउ. ६४.६-१० )

**–कर्मन्**–न., कर्म० धनुराकर्षणनियुद्धप्रभृतिः ( सुउ. ५०.४ )

**–नित्य**–वि., व्यायामकर्म नित्यं यस्य सः नित्यव्यायामी ( चसू. १३.५२ )

**–नियम**–पु., नित्यव्यायामः । स्निग्धभोजिनां बलिनां पुरुषाणां कृते व्यायामस्तु सदैव हितकरः. आत्महितैषिभिर्जनैः सर्वेष्वृतुष्वहरहः स्वबलार्धेन व्यायामः कर्तव्योऽन्यथा स एव व्यायामो मनुजं हन्यात्, यावत्कालपर्यन्तं हृदि स्थितो वायुर्वक्त्रतां न प्रपद्यते तावत्कालपर्यन्तमेव व्यायामः करणीयः, 'हृदि स्थानस्थितो वायुर्यदा वक्त्रं प्रपद्यते । व्यायामं कुर्वतो जन्तोस्तद्बलार्धस्य लक्षणम् ॥' वयोबलशरीरकालाशनदेशाऽनुसारेणैव व्यायामः कर्तव्योऽन्यथा स एव व्यायामः व्याधिजनकः स्यात् ( सुचि. २४.४५-४९ )

**–शक्ति**–स्त्री., शरीराऽऽयासजननं कर्म व्यायामस्तत्करणे सामर्थ्यम् ( चवि. ८.१२१ )

**–शोष**–पु., शोषभेदः, तल्लक्षणानि–व्यायामशोषी स्रस्ताङ्गः, संभृष्टपरुषच्छविः, प्रसुप्तगात्राऽवयवः, शुष्कक्लोमगलाऽननः, पीतरक्ताऽसिताऽरुणच्छर्दिः, संतप्तवक्षा अत्यर्थदूयनात्परिताम्यन्दुर्गन्धवदनोच्छ्वासः भिन्नवर्णस्वरश्च स्यात् (सुउ. ४१.२२)

**–सात्म्य**–वि., व्यायामेन सात्म्यम् (सुसू. ३५.३९)

**व्यायामायोग्य**–वि., व्यायामं कर्तुमयोग्यः, यथा–रक्तपित्ती कृशः शोषी श्वासकासक्षयाऽऽतुरो भुक्तवान्व्यवायक्षीणो भ्रमाऽऽर्तश्च ( सुचि. २४.५०-५१ )

**व्यायोजिम**–पु., बन्ध० पञ्चदशकर्णबन्धाकृतिष्वेकः स च स्थूलाणुसमविषमपालिः ( सुसू. १६.१० )

**व्याल**–पु., हिंस्रपशुः (चचि. २३.१७६) यथा श्रृगालाऽश्वतराऽश्वऋक्षद्वीपिव्याघ्रवृकादिर्दंष्ट्राप्रहारिणः ( असंउ. ४६ )

सर्पः ( ड. सुउ. ६२.१७ )

वनस्पति० चित्रकः ( धनि. २.८० )

क्षीरविष० ( असंउ. ४० )

**–खड्ग**–पु., भैषज्य० व्याघ्रनखम् (रानि. १२.१११)

**–गन्धा**–स्त्री., वनस्पति० नाकुली ( रानि. ७.१५३ )

**–जिह्वा**–स्त्री., वनस्पति० बला ( रानि. ४.४३२ )

**–दंश**–पु., व्यालादीनां दंशनम्, तल्लक्षणानि–हृच्छिरोरुग्ज्वरस्तम्भतृषामूर्च्छाः ( चचि. २३.१७६)

**–दंष्ट्र**–पु., वनस्पति० गोक्षुरः ( धनि. १.१०३ )

**–दंष्ट्रक**–पु., व्यालदंष्ट्रः ( धनि. १.१०३ )

**–नख**–पु., भैषज्य० व्याघ्रनखम् (रानि. १२.१११)

**–पत्रा**–स्त्री., वनस्पति० उर्वारुः ( धनि. १.१७६ )

**–पाणिज**–पु., भैषज्य० व्याघ्रनखम् ( रानि. १२.१११ )

**–बल**–पु., भैषज्य० व्याघ्रनखम् ( रानि. १२.१११ )

**–विष**–न., हिंस्रपशूनां विषम्, एतेन कण्डूनिस्तोदवैवर्ण्यसुप्तिक्लेदज्वरभ्रमाः विदाहरागरुक्पाकाः शोफग्रन्थिविकुञ्चनं दंशाऽवदरणं स्फोटाः

कर्णिका मण्डलानि च भवन्ति। निर्विषे दंशे एतद्विपरीतं लिङ्गं नाम कण्डूनिस्तोदाद्यभावः (असंउ. ४६)

**व्यालाचार्य**–पु., रसरत्नसमुच्चयकृदुद्दिष्टानामन्यतमः प्राचीनो रसाचार्यः ( र. ६.४९-५३ )

**व्यालायुध**–पु., भैषज्य० व्याघ्रनखम् ( रानि. १२.१११ )

**व्यालीढ**–न., सर्पदंशभेदः, अयं निर्विषो भवति ( असंउ. ४१ )

**व्यालुप्त**–न., सर्पदंशभेदः, अयं सविषः ( असंउ. ४१ )

**व्यावर्तक**–पु., वनस्पति० चक्रमर्दः ( धनि. ४.५ )

**व्यावर्तन**–न., यन्त्रकर्म० ( अहृसू. २५.४१ )

**व्याविग्न**–वि., उद्विग्नः ( सुउ. ६०.१५ )

**व्याविद्ध**–वि., वक्रम् ( सुउ. ७.१८-१९ )

**व्यावृत्ति**–स्त्री., उद्वृत्तिः यथा चक्षुषोः (सुचि. ३४.१२)

**व्यास**–पु., विस्तारः ( चसू. ३०.१८ )

**–योगिन्**–वि., अमेलकयोगिन् ( चसू. १३.२७ )

**व्याहन्यमान**–वि., अवरुध्यमानः ( सुउ. ५५.४ )

**व्याहार**–पु., उक्तिः ( असंशा. ८.१६ )

**व्याहृति**–स्त्री., उच्चारणम्; यथा भूर्भुवःस्वरादिः ( काजातिसूत्रीय. ८ )

**व्युपद्रव**–वि., विगताः उपद्रवा यस्य सः, उपद्रवरहितः ( सुचि. २.५५ )

**व्युषित**–वि., विशेषेणोषितम् ( सुसू. ४६.४७५-७७; अहृसू. ५.१८ )

रात्रिमतिक्रान्तम् ( चक. १.१४ )

**व्युष्टा**–वि., परिसमाप्ता ( रात्रिः ) ( चवि. ७.१६ )

**व्युष्टाजीर्ण**–न., रोग० प्रभातकालिकमजीर्णम् ( काखिल. ५.६१ )

**व्यूढ**–वि., विशालम् ( सुचि. ३८.३ )

**( व्यूढा )**–वि., शोभनोन्नता ( शय्या ) ( सुचि. ३८.३ )

**व्यूह**–पु., समूहः ( चवि. ६.११ )

**व्यूहन**–न.. ( मांसादीनां ) यथास्थानं स्थापनम् ( अहृसू. २५.३१ )

छित्त्वोत्तुण्डितस्योद्धरणार्थमूर्ध्वीकरणम् ( डः सुसू. ७.१४ )

**व्योमन्**–न., महाभूत० आकाशम् ( सुशा. १.४ )

खनिज० अभ्रकम् ( रानि. १३. २ )

**( व्योम )–वल्लिका**–स्त्री., वनस्पति० खवल्लीः ( रापरि. ३.१९ )

**व्योमोदक**–न., भैषज्य० दिव्योदकम् ( रानि. १४.३२० )

**व्योष**–पु., न., त्रिकटु यद्वा शुण्ठीमरीचपिप्पल्यः नागरमरीचपिप्पल्यः ( चसू. १३.८४; ध. ७.६ )

**–गर्भ**–वि, व्योषः गर्भे यस्य तत् ( असंसू. २५.७४ )

**व्रण**–पु., वृणोतीति व्रणः अथवा रूढेऽपि व्रणवस्तु न नश्यतीति व्रणः ( सुसू. २१.४० ) द्वौ व्रणौ भवतः–शारीर आगन्तुश्च। तयोः शारीरः पवनपित्तकफशोणितसंनिपातनिमित्तः; आगन्तुरपि पुरुषपशुपक्षिव्यालसरीसृपप्रपतनपीडनप्रहाराऽग्निक्षारविषतीक्ष्णौषधशकलकपालशृङ्गचक्रेषुपरशुशक्तिकुन्ताद्यायुधाभिघातनिमित्तः। सर्वस्मिन्नेवाऽऽगन्तुव्रणे तत्कालमेव प्रसृतस्य क्षतोष्मणः उपशमार्थं पित्तवच्छीतक्रियावचारणविधिविशेषः सन्धानार्थं च मधुघृतप्रयोग इत्येतद्विकारणोत्थानप्रयोजनम्, उत्तरकालं तु दोषोपप्लवविशेषाच्छारीरवत् प्रतीकारः। दोषोपप्लवविशेषः पुनः समासतः पञ्चदशप्रकारः, प्रसरणसामर्थ्यात् यथोक्तो व्रणप्रश्नाधिकारे; शुद्धत्वात् षोडशप्रकार इत्येके। तस्य लक्षणं द्विविधं–सामान्यं, वैशेषिकं च। तत्र सामान्यं लक्षणं रुक्स्वरूपम् 'व्रण' गात्रविचूर्णने, व्रणयतीति व्रणः। विशेषलक्षणं पुनर्वातादिलिङ्गविशेषरूपम्। तत्र वातात् श्यावारुणाभस्तनुः शीतः पिच्छिलोऽल्पस्रावी रूक्षश्चटचटायनशीलः स्फुरणायामतोदभेदवेदनाबहुलो निर्मांसश्चेति। पित्तात् क्षिप्रजः पीतनीलाभः किंशुकोदकाऽऽमोष्णस्रावी दाहपाकरागविकारकारी पीतपिडकाजुष्टश्चेति। कफात् प्रततचण्डकण्डूबहुलः स्थूलौष्ठः स्तब्धसिरास्नायुजालाऽवततः कठिनः पाण्डुवभासो मन्दवेदनः शुक्लशीतसान्द्रपिच्छिलास्रावी गुरुश्चेति। रक्तात् प्रवालदलनिचयप्रकाशः कृष्णस्फोटपिडकाजालोपचितस्तुरङ्गस्थानगन्धिः सवेदनो धूमायनशीलो रक्तस्रावी पित्तलिङ्गश्चेति। वातपित्ताभ्यां तोददाहधूमायनप्रायः पीतारुणाभस्तद्वर्णस्रावी चेति। वातश्लेष्मभ्यां कण्डूयनशीलः सनिस्तोदो रूक्षो गुरुर्दारुणो मुहुर्मुहुः शीतपिच्छिलाल्पस्रावी चेति। वातशोणिताभ्यां रूक्षस्तनुस्तोदबहुलः सुप्त इव च रक्ताऽरुणाभस्तद्वर्णाऽऽस्रावी चेति। पित्तशोणिताभ्यां घृतमण्डाभो मीनधावनतोयगन्धिर्मृदुर्विसर्प्युष्णकृष्णस्रावी चेति। श्लेष्मशोणिताभ्यां रक्तो गुरुः, स्निग्धः पिच्छिलः कण्डूप्रायः स्थिरो सरक्तपाण्डुस्रावी चेति। वातपित्तशोणितेभ्यः स्फुरणतोददाहधूमायनप्रायः

पीतस्तनुरक्तस्रावी चेति । वातश्लेष्मशोणितेभ्यः कण्डूस्फुरणचुमचुमायमानप्रायः पाण्डुघनरक्तास्रावी चेति । पित्तश्लेष्मशोणितेभ्यः दाहपाकरागकण्डूप्रायः पाण्डुघनरक्तास्रावी चेति । पवनपित्तकफेभ्यः त्रिविधवर्णवेदनास्रावविशेषोपेतः। पवनपित्तकफशोणितेभ्यः निर्दहननिर्मथनस्फुरणतोददाहपाकरागकण्डूस्वापबहुलो नानावर्णवेदनास्रावविशेषोपेतश्च । जिह्वातलाभः सुव्यवस्थितो निरास्रावश्चेति शुद्धो व्रण इति । व्रणवर्णाः– भस्मकपोताऽस्थिवर्णः परुषोऽरुणः कृष्ण इति मारुतजस्य; नीलः पीतो हरितः श्यावः कृष्णो रक्तः पिङ्गलः कपिल इति रक्तपित्तसमुत्थयोः; श्वेतः स्निग्धः पाण्डुरिति श्लेष्मजस्य; सर्ववर्णोपेतः सान्निपातिक इति ( सुसू. २२.१२ ) दुष्टव्रणलक्षणानि–अतिसंवृतोऽतिविवृतोऽतिकठिनोऽतिमृदुरुत्सन्नोऽवसन्नोऽतिशीतोऽत्युष्णः कृष्णरक्तपीतशुक्लादीनां वर्णानामन्यतमवर्णो भैरवः पूतिपूयमांससिरास्नायुप्रभृतिभिः पूर्णः पूतिपूयास्राव्युन्मार्ग्युत्सङ्ग्यमनोज्ञदर्शनगन्धोऽत्यर्थं वेदनावान् दाहपाकरागकण्डूशोफपिडकोपद्रुतोऽत्यर्थं दुष्टशोणितास्रावी दीर्घकालानुबन्धी चेति ( सुसू. २२.७ ) व्रणारिष्टानि–मुमूर्षूणां व्रणाः मद्यागुर्वाज्यसुमनःपद्मचन्दनचम्पकगन्धाः श्ववाजिमूषिकध्वाङ्क्षपूतिवल्लूरमत्कुणगन्धाः पङ्कगन्धाश्च स्मृताः । पित्तवर्णे सति पित्तवेदनाभूतानां दाहादीनाम् अभावश्चेत्तद् वैकृतं वर्णस्य ज्ञेयम्; यः कफनिमित्तः कण्डूमान् स्थिरः श्वेतः स्निग्धस्तस्य दाहरुजे वर्णवैकृतम् । यः वातजः कृष्णः तनुस्रावी मर्मतापी किन्तु स्वल्पमपि रुजं न करोति, तं परिवर्जयेत् । ये व्रणाः क्ष्वेडन्ति ज्वलन्ति, घुर्घुरायन्ते, त्वङ्मांसस्थाश्च सशब्दं पवनं विसृजन्ति; ये च मर्मस्वसंभूता अत्यर्थं वेदनाः जनयन्ति, ते ते गर्हिताः । ये व्रणाः अन्तः अत्यर्थं दह्यन्ते, बहिःशीताश्च भवन्ति तथा ये बहिरत्यर्थं दह्यन्ते अन्तश्च शीतलाः भवन्ति, तान् परिवर्जयेत् । येषु व्रणेषु ध्वजपताकादण्डाः शोभन्ते प्रासादाकृतिश्च प्रतिभाति तथा ये चूर्णावकीर्णा इव भान्ति, तान् परिवर्जयेत् । येषां मर्मसु व्रणाः प्रवृद्धपूयरुधिरास्तथा ये प्राणमांसक्षयश्वासकासाऽरोचकपीडिताः सन्ति तान् परिवर्जयेत् । ये व्रणाः सम्यगारब्धाः क्रियाभिर्न सिध्यन्ति, तानपि वर्जयेत् ( सुसू. २८.१०-२१ ) शुद्धव्रणलक्षणानि– त्रिभिर्दोषैरनाक्रान्तः श्यावौष्ठः, समः, पिडकी, अवेदनः निरास्रावश्च ( सुसू. २३.१८ ) रोहद्व्रणलक्षणानि– यस्यान्ताः क्लेदवर्जिताः कपोतवर्णप्रतिभाः स्थिराश्च पिटिकावन्तः स रोहतीति आदिशेत् ( सुसू. २३.१९ ) सम्यग्रूढव्रणलक्षणानि– यं समतलं त्वक्सवर्णं रूढवर्त्मानमग्रन्थिमशूनमरुजं, तं व्रणं सम्यग्रूढमिति विद्यात् ( सुसू. २३.२० )

तस्य व्रणस्य षष्टिरुपक्रमा भवन्ति । तद्यथा– अपतर्पणमालेपः परिषेकोऽभ्यङ्गः स्वेदो विम्लापनमुपनाहः पाचनं विस्रावणं स्नेहो वमनं विरेचनं छेदनं भेदनं दारणं लेखनमेषणमाहरणं व्यधनं विस्रावणं सीवनं सन्धानं पीडनं शोणितास्थापनं निर्वापणमुत्कारिका कषायो वर्तिः कल्कः सर्पिस्तैलं रसक्रियाऽवचूर्णनं व्रणधूपनमुत्सादनमवसादनं मृदुकर्म पाण्डुकर्म प्रतिसारणं रोमसञ्जननं लोमापहरणं बस्तिकर्मोत्तरबस्तिकर्म बन्धः पत्रदानं कृमिघ्नं बृंहणं विषघ्नं शिरोविरेचनं नस्यं कवलधारणं धूमो मधु सर्पिर्यन्त्रमाहारो रक्षाविधानमिति । तेषु कषायो वर्तिः कल्कः सर्पिस्तैलं रसक्रियाऽवचूर्णनमिति शोधनरोपणानि, तेष्वष्टौ शस्त्रकृत्याः; शोणितास्थापनं क्षारोऽग्निर्यन्त्रमाहारो रक्षाविधानं चोक्तानि, स्नेहस्वेदनवमनविरेचनबस्त्युत्तरबस्तिशिरोविरेचननस्यधूमकवलधारणान्यन्यत्र वक्ष्यामः; यदन्यदवशिष्टमुपक्रमजातं तदिह वक्ष्यते ( सुचि. १.१.९ ) कुष्ठिनां विषजुष्टानां शोषिणां मधुमेहिनां च व्रणाः कृच्छ्रेण सिध्यन्ति (असंउ. २९) चरके विंशतिर्व्रणाः– कृत्योऽकृत्यो-दुष्टोऽदुष्टो–मर्मस्थितोऽमर्मस्थितः– संवृतोऽसंवृतो–दारुणोऽदारुणः– स्राव्यस्रावी–सविषो–निर्विषो–विषमस्थित समस्थित उत्सङ्ग्यनुत्सङ्ग्युत्सन्नोऽवसन्नः इति ( चचि. २५.२०-२१ ) शुद्धव्रणलक्षणम्– नातिरक्तो नातिपाण्डुर्नातिश्यावोऽल्पवेदनायुक्तो नोत्सन्नो न चोत्संगी रोप्यश्चेति ( चचि. २५.८६ ) अशुद्धव्रणलक्षणम्–स पूतिगन्धो विवर्णो बहुस्रावो महारुक्चेति ( चचि. २५.८३ ) तत्र श्यावः स्तब्धः कठिनसंस्पर्शो मंदस्रावस्तीव्रवेदनायुक्तः व्रणो मारुतसंभवः ( चचि. २५.११ ) तृष्णा–मोहज्वरस्वेददाहदुष्ट्यवदारणयुक्तः पूतिस्रावगन्धश्च व्रणः पित्तसम्भवः ( चचि. २५.१३ ) बहुपिच्छो

गुरुः स्निग्धः स्तिमितो मन्दवेदनः पाण्डुवर्णोऽल्पक्लेदश्चिरकारी व्रणः कफसम्भवः
( चचि. २५.१५ ) द्वादशप्रदुष्टा व्रणाः–श्वेतोऽवसन्नवर्त्माऽतिस्थूलवर्त्माऽतिपिञ्जरो नीलः श्यावोऽतिपिडको रक्तः कृष्णोऽतिपूतिको रोप्यः कुम्भीमुखश्चेति ( चचि. २५.२४-२५ ) व्रणोपद्रवाः –विसर्पः पक्षघातः सिरास्तम्भोऽपतानको मोहोन्मादव्रणरुजो ज्वरस्तृष्णा हनुग्रहः कासश्छर्दिरतीसारे । हिक्का श्वासो वेपथुश्चेति
( चचि. २५.२९-३१ ) षट्त्रिंशद् व्रणोपक्रमाः–'शोफघ्नं षड्विधं शस्त्रकर्म अवपीडनं निर्वापणं सन्धानं स्वेदनं शमनमेषणमिति, शोधनौ रोपणौ कषायौ सप्रलेपनौ, तद्गुणे द्वे तैले, छादने पत्रं, बन्धने पत्रं, भोज्यमुत्सादनं सावसादनो दाहो द्विविधः, काठिन्यमार्दवकरे शुभे धूपनालेपने व्रणावचूर्णनं वर्ण्यरोपणं लोमरोहणं चेति
( चचि. २५. ४०-४३ ) सर्पिस्तैलवसापूयरक्तश्यावाम्लपूतिकाः व्रणगन्धाः प्रकीर्तिताः
( चचि., २५.२७ )

**–केतु**–स्त्री., वनस्पति० दुग्धफेनी ( रा. ५.३४ )

**–कोविद्**–वि., व्रणविद्वान्, व्रणज्ञः ( सुसू. १८.३५ )

**–गन्धज्ञ**–पु., यो व्रणस्य गन्धं जानाति सः
( चचि. २५.२७ )

**–ग्रन्थि**–स्त्री., व्रणयुक्तो ग्रन्थिः ( सुसू. २३.८ )

**–घ्नी**–स्त्री., कन्दगुडूची, कुमारी ( र. ११.३७,३९ )

**–चिन्तक**–पु., व्रणचिकित्सकः, शस्त्रकर्मज्ञः
( चचि. २५.३१ )

**–दोष**–पु., पूयः ( सुसू. २७.५ )

**–धूपन**–पु., व्रणस्य धूपेनाऽनुयोजनम् षष्ठ्युपक्रमाणामेकतमः ( सुचि. १.८ )

**–धूम**–पु., व्रणार्थं धूपः; शरावसंपुटोपनीतेन नेत्रेण व्रणधूपं व्रणमानयेत् । तस्य गुणाः–धूपनात् वेदनोपशमो व्रणवैशद्यमास्रावोपशमश्चेति
( सुचि. ४०.१९ )

**–नेत्र**–न., व्रणयन्त्रम्, तदष्टाङ्गुलं प्रकीर्तितम्
( सुचि. ३५.११ )

**–प्रच्छादन**–न., व्रणच्छादनम् ( चचि. २५.९५ )

**–प्रश्नाध्याय**–पु., अध्यायसंज्ञा० ( सुसू. २१.१ )

**–यन्त्र**–न., नाडीयन्त्र० तच्च व्रणच्छिद्रायामपरिणाहम्
( सुसू. ७.१३ )

**–रोपणकषाय**–पु., व्रणस्य रोपणं यः करोति सः कषायः; यथा न्यग्रोधोदुम्बराश्वत्थकदम्बप्लक्षवेतसकरवीरार्ककुटजसिद्धाः कषाया व्रणरोपणाः
(चचि.२५.८७)

**–रोपणतैल**–न., व्रणरोपणार्थं तैलम्, चन्दनं पद्मकं रोध्रमुत्पलं प्रियङ्गुर्हरिद्रा मधुकं पयः इत्येतद्द्रव्यसिद्धं तैलं व्रणरोपणं ज्ञेयम् (सुचि.२८.३८-३९)

**–वर्ण**–पु., व्रणस्य वर्णः; तद्यथा भस्मकपोतास्थिवर्णः परुषोऽरुणः कृष्ण इति मारुतजस्य; नीलः पीतो हरितः श्यावः कृष्णो रक्तः कपिलः पिङ्गल इति रक्तपित्तसमुत्थयोः; श्वेतः स्निग्धः पाण्डुरिति श्लेष्मजस्य; सर्ववर्णोपेतः सान्निपातिक इति वर्णज्ञानं विधातव्यम् ( सुसू. २२.१२ )

**–वर्त्मन्**–न., व्रणमुखम् ( सुसू. १८.२१ ) व्रणगताश्चत्वारः पार्श्वाः वाच्याः ( ड. सुचि. १.३९ )

**–वस्तु**–न., व्रणाधिष्ठानम्; अष्टौ व्रणवस्तूनि त्वङ्मांसं सिरा स्नायु अस्थि सन्धिः कोष्ठो मर्म चेति ( सुसू. २२.३ ) व्रणचिह्नम्
( ड. सुसू. २१.४० )

**–शुद्धि**–स्त्री., व्रणस्य दोषदुष्टिनिवृत्तिः
( सुसू. १८.६ )

**–शोधन**–वि., व्रणशुद्धिकरः ( चचि. २५.८५ )

**–शोफ**–पु., व्रणस्य पूर्वरूपम् ( चचि. २५.४४ )

**–शोष**–पु., रोग० शोषभेदः रक्तक्षयाद्वेदनाभिस्तथाऽहारयन्त्रणात् व्रणशोषः भवति । अयमसाध्यतमः ( सुउ. ४१.२३ )

**–शोषिन्**–वि., व्रणनिमित्तं क्षीणः ( सुचि. १.३० )

**–संनिवेश**–पु., व्रणाऽवस्थानम् (सुसू. २२.३ )

**–संरोह**–पु., लक्षण० व्रणरोपणम् ( असंउ. २९ )

**–संस्थान**–न., व्रणाऽऽकृतिः ( असंसू. ३७.१३ )

**–स्थान**–न., व्रणवस्तु ( चचि. २५.२६ )

**–स्राव**–पु., व्रणस्य स्रावः; चतुर्दश व्रणस्रावाः, लसीकाजलपूयाऽसृग्धारिदारुणपिञ्जराः, कषायनीलहरितस्निग्धरूक्षसिताऽसिता इति रूपैः समुद्दिष्टाः ( चचि. २५.२८-२९ )

**–हारक**–पु., वनस्पति० भूमिकदम्बः ( रा. ९.१७४ )

**–हृत्**–पु., वनस्पति० कलिकारी ( रा. ४.१८ )

**व्रणाकृतिसमास**–पु., दोषजव्रणाऽऽकृतीनां संक्षेपः, ताश्चत्वार आयताश्चतुरस्रा वृत्तास्त्रिपुटकाः इति
( सुसू. २२.५ )

**व्रणान्त**–पु., व्रणैकदेशः ( सुचि. ३.५३ )

वनस्पति० बोलम् ( रा. ६.११७ )

**व्रणायतन**–न., आयतनं नाम स्थानम्, अङ्गप्रत्यङ्गादिकं व्रणस्थानम् ( सुसू. १८.२२ ) द्र० 'व्रणवस्तु'.

**व्रणायाम**–पु., रोग० वातव्याधिविशेषः ( असंनि. १५.२९ )

**व्रणारि**–पु., वनस्पति० अगस्त्यः ( रा. १०.१३ )

**व्रणितोपासनीय**–वि., अध्यायसंज्ञा० ( सुसू. १९.१ )

**व्रण्य**–वि., व्रणेभ्यः हितः, यथा पटोलादिगणः ( सुसू. ३८.३४ )

**व्रत**–न., शास्त्रोदितविधिना भोजनादि नियमादि ( ड. सुउ. ६०.२१ )

**व्रीहि**–पु., धान्य० तद्गुणाः–मधुरोऽम्लपाकः पित्तकरो गुरुर्बहुमूत्रपुरीषोष्मा च ( चसू. २७.१५ ) तद्भेदाः–यथा कृष्णव्रीहिशालामुखजतुमुखनन्दीमुखलावाक्षकत्वरितकुक्कुटाण्डकपारावतकपाटलाप्रभृतयो व्रीहयः ( सुसू. ४६.१२ ) सुश्रुते तद्गुणाः–वीर्यतो अहिमः कषायः अल्पाभिष्यन्दी बद्धवर्चाः षष्टिकगुणतुल्यश्च ( सुसू. ४६.१३ )
मान० यवः ( ड. सुशा. ४.४ )

**–धान्यक**–पु., वनस्पति० व्रीहिः ( रा. १६.१०० )

**–पर्णिका**–स्त्री., वनस्पति० शालिपर्णी (रा. ४.११४)

**–प्रमाण**–न., मान० यवः ( असंशा. ७.३४ )

**–मात्र**–वि., यवमात्रम् ( सुशा. ८.९ )

**–मुख**–न., शस्त्र० व्यधनोपयोगि शस्त्रम् षडङ्गुलायतं द्व्यङ्गुलं वृन्तं चतुरङ्गुलं फलं व्रीहिविस्तारं तनुसंगू– ( मू. ) ढकण्टकं च मुखम् ( सुसू. ८.४; ड. ) अमांसलेषु स्थानेषु सिराव्यधनार्थमुपयुज्यते ( सुशा. ८.९ )

**–वक्त्र**–न., व्रीहिमुखम् ( अहृसू. २६.११ )

**–श्रेष्ठा**–स्त्री., वनस्पति० व्रीहिः ( रा. १६.७८ )

**व्रीहिक**–पु., वनस्पति० व्रीहिः ( रा. १६.१०० )

# श



**शक**-पु., तन्नामकः लोकः ( चचि. ३०.३१६ )
**शकट**-पु., वनस्पति० तिनिशः ( रापरि. ९.२४ )
**शकटाक्ष**-पु., वनस्पति० धवः ( ध. परि ५.४ )
**शकल**-न., वनस्पति० त्वक् ( ध. २.५० )
**( शकली )**-स्त्री., लघ्वामलकफलम् ( र. ३०.५८-५९ )
**शकलिन्**-पु., मत्स्य० ( चसू. २६.८३ ) नयनाऽऽमये तस्य स्पर्श उपयुक्तः ( काखिल. १३.७५ )
निर्विषसर्प० ( असंउ. ४१ )
**शकुन**-पु., पक्षि० वामो दक्षिणो वा शुभसूचकोऽयम् ( सुसू. २९.३३ )
पु., न., शुभाशुभविज्ञानसाधनम् (सुसू. २९.३ )
पक्षिविशेषप्रशस्तवाक्यादि (ड. सुसू. १०.४ )
**( शकुनी )**-स्त्री., बालग्रह० नवग्रहेष्वेकः (सुउ. २७.१०)
क्षीरदुष्टिहेतुकारको ग्रहः ( कासू. १९ )
**शकुनाहृत**-पु., धान्य० शालिभेदः द्र० ' शालि ' ( चसू. २७.८; सुसू. २०.५ )
**शकुनि**-स्त्री., स्त्रीशरीरग्रह० ( असंउ. ३ ) रेवतीग्रह-गृहीतरूपम् ( का रेवतीकल्प. ७ ) तल्लक्षणानि-स्रस्ताङ्गत्वमतिसारो जिह्वातालुगले व्रणाश्च भवन्ति। दाहादियुक्ताः स्फोटाः सन्धिषु पुनः पुनर्निशि स्युस्ते चाह्नि प्रविलीयन्ते। मुखपाको गुदपाको भयं, शकुनिगन्धत्वं, ज्वरः ( असंउ. ३ )
**शकुनी**-स्त्री., ( सुउ. २७.१० )
**-प्रतिषेध**-पु., अध्याय० ( सुउ. ३०.१ )
**शकुन्द**-पु., वनस्पति० करवीरः (रा. १०. १)
**शकुलाक्षिका**-स्त्री., वनस्पति० गण्डदूर्वा, द्र० 'दूर्वा' ( ध.४.१४५ )
**शकुलाक्षी**-स्त्री., वनस्पति० गण्डदूर्वा, द्र० ' दूर्वा ' ( रा. ८.२३५ )
**शकुलादनी**-स्त्री.,वनस्पति० कटुका(चसू.४.९;ध.१.३८)
महाराष्ट्री ( रापरि. ४.१२ )
जलपिप्पली ( ध. ४.६४ )
शाक० तद्गुणाः-तिक्ता, कटुविपाका, शीता, कफपित्तहरा च ( चसू. २७.९६ )
**शकुलीमत्स्य**-पु., मत्स्य० ( सुक.३.५ )
**शकृत्**-न., मलः, पुरीषम् ( सुचि. ७.२१ )
अधोनिर्दिष्टप्राणिजपुरीषाणि औषधार्थमुपयुज्यन्ते-गोमहिषीगजाश्वाजाविखरोष्ट्राः, विष्किरमृग-महामृगजलचारिप्रसहाः ( असंसू. ६.१४५-४७ )
दक्षादिपक्षिणः ( अहसू. ३०.१७ ) छागः ( सुउ. ४४.२२ )
**( शकृद् )-ग्रह**-पु., लक्षण० विड्ग्रहः, पुरीषग्रहः ( अहसू. १८.१० )
**-दर्शन**-न., पुरीषदर्शनम् ( अहसू. २८.९ )
**-भेद**-पु., लक्षण० विड्भेदो द्रवपुरीषत्वम् ( चइ. १० .२०; सुउ. ५४.११ )
**-रस**-पु., पुरीषोत्थरसः ( चचि. १७.११६; सुउ. ३९.२४० ) गोगजाऽश्वाऽव्यजानां शकृद्रसा यक्ष्मनिवारकाः ( सुउ. ४१.४४ )
**-रसघृत**-न., सिद्धघृत० यक्ष्मनिवारणम् ( सुउ. ४१.४४-४६ )
**-वमन**-न., लक्षण० पुरीषच्छर्दिः ( सुउ. ५६.२४ )
**-वाहिन्**-वि., पुरीषवहम् (स्रोतः) (असंशा. ६.४३) द्र० ' स्रोतस् '
**-विष**-न., पुरीषविषम्, चिपिटपिच्चिटककषाय-वासिकसर्षपकतोटकवर्चःकीटकौण्डिन्यकाः शकृद्विषा भवन्ति ( सुक. ३.५ ) द्र० ' विष '
**( शकृन् )-मार्ग**-पु., शारीर० गुदम् (ड. सुउ. ५८.७)
**शक्ति**-स्त्री., उत्साहशक्तिः, सामर्थ्यम् ( सुसू. २.३ )
आयुध० ( सुसू. २८.१८-१९ )
**-विनिश्चय**-पु., आतुरशक्तेर्विनिश्चयः ( सुसू. ४३.१० )
**शक्तु**-पु., भृष्टानां निस्तुषयवानां चूर्णम्, सक्तवः, (हे.) तद्गुणाः-बृंहणा वृष्यास्तृष्णापित्तकफापहाः सद्यो-बलकरा भेदिनः पवनापहाश्च ( सुसू. ४६.४११ )
शोफपाचकं द्रव्यम् ( सुसू. ३७.९ ) सक्तूनां लेह आशु जीर्यते ( सुसू. ४६.४११-१२ )
**शक्त्युकर्ष**-पु., सामर्थ्योत्कर्षः ( अहसू. ९.१५ )
**शक्य**-वि., साध्यः ( चचि. १७.१४९ )
**शक्र**-पु., इन्द्रः ( चसू. १.५ )
वनस्पति० कुटजः ( चक. ५.४; रा. ९.१८ )
**-गोप**-पु., कीट० इन्द्रवधूः, इन्द्रगोपकः ( सुसू. ६.३२ )

**-नील**-न., रत्न० इन्द्रनीलम् ( र. ४.५१-५३ )
**-पादप**-पु., वनस्पति० कुटजः ( रा. ९.१८ )
**-बीज**-न., वनस्पति० इन्द्रयवः ( रा. ९.२१ )
**-मातृ**-स्त्री., वनस्पति० भार्ङ्गी ( ध. १.६८ )
**-यव**-पु., वनस्पति० इन्द्रयवः (ड.सुउ. ३९.२२७)
**-वल्ली**-स्त्री., वनस्पति० इन्द्रवारुणी ( रा. ३.३७३ )
**-सदन**-न.. इन्द्रगृहम् ( सुचि. २९.१७ )
**-सलोकता**-स्त्री., मरणोत्तरम् इन्द्रसालोक्यम्, इन्द्रसमानलोकता ( सुसू. १.४१ )

**शक्राह्व**-पु., वनस्पति० इन्द्रयवः ( ध. २.१५ )

**शक्व**-वि., प्रियवाक् ( असंसू. २.४ )

**शङ्कर**-वि., सुखकरम्, कल्याणकरम् ( चचि. २६.९६; सुचि. २४.७६ )

**( शङ्करी )**-वि.. सुखकरी ( इन्दु. असंउ. ४३ )
स्त्री., वनस्पति० शमी ( ध. ५.९५ )

**शङ्करादि**-पु., वनस्पति० श्वेतार्कः द्र० 'अर्क' ( रा. १०.२९ )

**शङ्काविष**-न., शङ्कया यस्य बाधा भवति तत्, अत्र निर्विषदंशेनाऽपि शङ्कया विषलक्षणानि भवन्ति। ज्वरच्छर्दिमूर्छादाहग्लानिमोहाऽतिसारा अपि वा भवेयुः ( चचि. २३.२२१-२२ )

**शङ्कित**-पु., वनस्पति० चोरकः ( ध. ३.७१ )

**शङ्कु**-पु., तीक्ष्णाऽग्रो लोहादिमयःशस्त्रविशेषः (चनि.३.७) यन्त्र० आकुञ्चिताऽऽकारो बडिशविशेषः ( सुचि. १५.१२ )
**-फला**-स्त्री., वनस्पति० शमी ( ध. ५.९५ )
**-फलिका**-स्त्री., वनस्पति० शमी (रा.८.१५२)
**-मुखी**-स्त्री., निर्विषजलूका० सा च यकृद्वर्णा, शीघ्रपायिनी, दीर्घतीक्ष्णमुखी च ( सुसू. १३.१२ ) द्र० ' जलौका '
**-स्फोटन**-न., लक्षण० कीलकाहननवत्तीव्रवेदना ( सुउ. ४२.८१ )

**शङ्ख**-पु., भैषज्य० जलस्थकीटशरीरघटकं द्रव्यम् (चचि.३.२६१) तद्गुणाः-स्वादुः, (कटुः) (रा) कटुविपाकी, उष्णः, (शीतः)(रा) चक्षुष्यः, पुष्टिवीर्यबलप्रदः, पित्तघ्नः, परिणामशूलरक्तपित्तगुल्मशूलश्वासविषनाशकः ( ध. ३.१७९; रा. १३.२४५ ) रक्तसंग्राहकः ( चचि. १९.८२ ) रक्तपित्ते दाहपिपासानाशकः ( चचि. ४.७३ ) विसर्पे प्रदेहार्थमुपयुज्यते ( चचि. २१.८२ ) पाण्डुरोगनाशकः (सुउ.४४.२१) नखम् ( ध. ३.५८ ) जलचरकीटक० (चसू. २७.४०) वारिशयपदार्थः ( सुउ. १२.२९-३० )
शारीर० कर्णसमीपस्थाऽस्थिविशेषः ( चशा. ७.६; भ्रूकर्णमध्यम् ( इन्दु. असंउ. २७ )
दशप्राणायतनेष्वेकम् ( चसू. २९.३ ) मर्म० ( असंशा. ७.२३ ) द्र० ' मर्मन् '
**-कपाल**-पु., सर्प० दर्वीकरभेदः (सुक.४.३४-(१))
**-केशान्तसन्धि**-पु., शङ्खेन केशान्तेन च समं सन्धिः ( चक्र. चचि. ९.७७ )
**-चूर्ण**-न., सुदग्धशङ्खचूर्णम् ( ड. सुउ. ३१.६ )
**-द्राविन्**-पु., वनस्पति० मधुजम्बीरः ( ध. ५.१८ ) अम्लवेतसः ( रा. ६.१४८ )
**-नक**-पु., भैषज्य० क्षुद्रशङ्खः, शङ्खनकः ( ड. सुसू. ४६.१०८ )
**-नाभि**-पु., भैषज्य० शङ्खस्य नाभिः (अहसू.३०.१६) वनस्पति० अस्य लेपो वेदनाशान्त्यर्थं श्वित्रे उपयुक्तः ( असंचि. २२ )
सुगन्धिद्रव्य० अर्जुनाह्वनेत्ररोगे माक्षिकेण युक्तेयमञ्जनोपयोगिनी ( असंउ. १४ )
क्षारः ( ड. सुसू. ११.११ )
**-नाभ्याकृति**-वि., अल्पमुखाऽन्तर्महासुषिरा ( योनिः ) ( सुशा. ५.४३ )
**-पुष्पिका**-स्त्री., वनस्पति० विष्णुक्रान्ता ( ध. ४.११५ )
शङ्खपुष्पी ( र. ११.५४-५७ )
श्वेतपुष्पा ( रा ११.५२-५७ )
**-पुष्पी**-स्त्री., वनस्पति० ( चचि. १०.६२ )
तद्गुणाः-कटुस्तिक्ता; ( कषाया ) ( सु. ); ( उष्णा ) ( ध.सु. ); ( शीता ) ( रा. ); मेध्या, रसायनी, स्वर्या, सरा, वृष्या, स्मृतिकान्तिबलाग्निदा ( सु. ); पित्तकफघ्नी, कासविषाऽपस्मारभूतग्रहनाशिनी, मानसरोगहृच्च ( ध. ४.११३; रा. ३.१७२; सुउ. ५२.४२ )
हिं.—शङ्खिनी.
**म.—शङ्खपुष्पी.**
बं.—डङ्कुनी.
हपुषा ( सुउ.५२.४२ )
चिरिण्टी ( इन्दुः; असंउ. ४८ )
वीरटिः ( इन्दुः, असंउ. १ )
**-भेद**-पु., लक्षण० शङ्खस्य ललाटास्थिविशेषस्य भेदवत्स्फुटनम्; अशीतिवातविकारेष्वेकः ( चसू. २०.११; असंनि. ४ )

-मर्मन्-न., भ्रुवोः पुच्छान्तयोरुपरि कर्णललाटयोर्मध्ये शङ्खौ नाम मर्मणी, तत्र विद्धे सद्योमरणम् ( सुशा. ६.२७ ) द्र० 'मर्मन्'

-मालिनी-स्त्री., वनस्पति० शङ्खपुष्पी ( रा. ३.१७१ )

-मूल-न., वनस्पति० मूलकम् ( रा. ७.५१ )

-यूथिका-स्त्री., वनस्पति० श्वेतयूथिका द्र० 'यूथिका' ( ध. ५.१४९ )

-शूल-पु., लक्षण० ललाटाऽऽस्थिशूलम् ( चति. ३.७ )

शङ्खक-पु., शिरोरोग० पित्तप्रधानैः सरक्तैर्वाताद्यैर्दोषैः शङ्खे दारुणः शोफो भवति । अत्र शोफे तीव्रदाहरुजारागप्रलापज्वरतृड्भ्रममूर्च्छा भवन्ति । आस्यं तिक्तं वदनं पीतं च भवति । अयं रोगः त्रिरात्राज्जीवितं हन्ति ( चसि. ९.७२; सुउ. २५.१६-१७; असंउ. २७ ) दुश्चिकित्स्योऽयं व्याधिः, नस्यार्थं, पानार्थं च क्षीरयुक्तं घृतं देयम् । शीतपरिषेकश्च कार्यः ( सुउ. २६.३८-३९ )

शङ्खालुक-न., कन्दशाक० ( सुसू. ४६.२९८ )

शङ्खावर्तसंधि-पु., अस्थिसन्धिप्रकार० श्रोत्रश्रृङ्गाटकेषु शङ्खावर्ताः ( सुशा. ५.२७; असंशा. ५.७७ )

शङ्खाह्वा-स्त्री., वनस्पति० शङ्खपुष्पी ( ध. ४.११३ )

( शङ्खिका )-स्त्री., वनस्पति० शङ्खपुष्पी ( र. २१.७१-७३ )

भैषज्य० क्षुद्रशङ्खः ( र. ७.२२ )

शङ्खिनी-स्त्री., लता० महाकषायवर्गे भेदनीयगणे एकं द्रव्यम् ( चसू. ४.९ ) कटुतिक्ताऽम्ला, गुरुः, स्निग्धा, विशोधनी, दीपनी, रुच्या, त्रिदोषशमनी, कृमिविषकुष्ठशोथोदरनाशिनी, रक्तदोषघ्नी च ( ध. १.२५६; रा. ३.३८० ) स्नेहविरेचने उपयुक्ता ( सुचि. ३१.५ ) व्रणशोधनी ( सुसू. ३७.१२ ) तत्सिद्धतैलं दुष्टव्रणशोधनम् ( सुसू. ४५.१२४ )

हिं.—शङ्खिनी.

**म.—यवोची, टिटवी.**

गु.—शङ्खहेल्य आख्युफुटामाणा.

बं.—यवेची.

श्वेतबुध्ना ( चक. चसू. १.८१-८५; ड. सुसू. ३८.२९-३० )

-फल-पु., वनस्पति० शिरीषः ( ध. ५.११२ )



शङ्खेश्वर-पु., पारदयोग० शंखवराटकनीलतुत्थपारदादिसाधितोऽयं राजयक्ष्महरः ( र. १४.२०-२२ )

शची-स्त्री., इन्द्रजाया ( असंशा. १२.८ )

-पति-पु., इन्द्रः ( चसू. १.१८ )

शटिका-स्त्री., वनस्पति० सटी ( रा. ६.८६ )

शटी-स्त्री., वनस्पति० सटी ( चसू. २७.८८ )

आम्रहरिद्रा ( चचि.१९.२७ )

-शाक-न., पत्रशाक० तद्गुणाः-शीतं, लघु, संग्राहि, दोषापहं च ( सुसू. ४६.२७६ )

-सिद्धसर्पिस्-न., सिद्धघृत० ( सुशा. २.८ )

शट्यादिचूर्ण-न., सिद्धौषधि० ( चचि. १७.१२३-१२४ )

शट्यादितैल-न., सिद्धतैल० ( सुचि. ३७.८-१० )

शट्यादिकवर्ग-पु., द्रव्यगण० शटी, पुष्करमूलं, दुरालभा, व्याघ्री, शृङ्गी, गुडूची, नागरं, पाठा, कटुरोहिणी, किरातम्, एष गणः संनिपातज्वरापहः ( चचि. ३.२११-२१२ )

शठ-वि., क्रूरः ( चक. चसू. ७.५६ )

पु., वनस्पति० धत्तूरः ( ध. ४.७ )

तगरम् ( ध. ३.५३ )

न., वनस्पति० कुङ्कुमम् ( रा. १२.२१ )

खनिज० तीक्ष्णलोहम्, द्र० 'लोह' (रा. १३.३०)

( शठी )-स्त्री., वनस्पति०सठी (ध.१.६१;अहसू.६.७२)

शठाम्बा-स्त्री., वनस्पति० अम्बष्ठा ( रा. ४.१७० )

शण-पु., वनस्पति० क्षुपोऽयम् (सुसू. ३७.९) तद्गुणाः-अम्लः, कषायो मलगर्भास्रपातनो वान्तिकृद्वातकफनुत्तीव्राङ्गमर्दजित् ( रापरि. ४.१०-११ ) अस्य काष्ठं दन्तधावने निषिद्धम् ( असंसू. ३.२१ )

हिं.—अम्बाडी.

**म.—अम्बाडी.**

गु.—अम्बाडी.

बं.—मेस्टापत.

ता.—ओलीभांजी.

-घण्टिका-स्त्री., वनस्पति० शणपुष्पी ( ध.१.२०० )

-जसूत्र-न., शणनिर्मिता रज्जुः व्रणौष्ठसीवनार्थमुपयुज्यते ( सुसू. २५.२०-२१ )

-तूल-पु., तूल० ( सुसू. २३.१२ ) शणाख्यस्य द्रव्यस्य सूक्ष्मरोम ( इन्दु. असंउ. २९ )

-पुष्प-न., शाक० ( चसू.२७.९९ ) इदं बन्धनार्हत्वचः शणस्य पुष्पम् तद्गुणाः-मधुरं, मधुरविपाकं, रक्तपित्तहरम् ( सुसू. ४६.२८१ )

**(-पुष्पी)**-स्त्री., वनस्पति० वमनोपगगणे एकं द्रव्यम् (चसू. ४.२३; सुसू. ३९.३) तद्गुणाः—तिक्ता, कषाया, वमनकरी, त्रिदोषघ्नी, कण्ठमुखहृद्रोग-ज्वराऽजीर्णरक्तदोषघ्नी च (ध. १.२००; रा. ४.२९८-९९)
हिं.—जन्जानिया.
**म.—तागी.**
बं.—जन्जानिया.
ता.—वेट्टाकिल्ल.
सं.—घंटालक.

**शणक**-पु., चुच्चवादिवर्गे शाक० (सुसू. ४६.२४९)
**(शणिका)**-स्त्री., वनस्पति० शणपुष्पी (रा. ४.२९८)
**शणल**-न., वनस्पति० शणम् (र. १०.१०)
**शण्डक**-पु., बिलेशयप्राणि० (असंसू. ७.७६-७७)
**शत**-न., संख्या० (ध. ४.१३७)
**-कुन्द**-पु., वनस्पति० करवीरः (रा. १०.१)
**-कुलीरक**-पु., वायव्यः कीट० तद्गुणाः—असौ वात-कोपनो वातजरोगान् करोति (सुक. ८.५-८; असंउ. ४३)
**-कुसुमा**-स्त्री., वनस्पति० शतपुष्पा (चक. चसि. १२.१६ (१)
**-कोटि**-पु., रत्न० हीरकम् (ध. ६.५६)
**-क्रतु**-पु., देव० शतमखः इन्द्रः (चसू. १.२३)
**-ग्रन्थि**-स्त्री., वनस्पति० नीलदूर्वा, द्र० 'दूर्वा' (रा. ८.२२६)
**-घ्नी**-स्त्री., आयुध० कण्टकान्विता यष्टिः (इन्दु) अयःकण्टकाच्छन्ना महती शिला (सुनि. १६.५७, असंउ. २५)
कण्ठरोग० प्रभूतैर्मांसाङ्कुरैः परिवृता तीव्रतृड्ज्वरमूर्द्धरुग्युक्ता कण्ठस्रोतसि समन्ताद्व्याप्ता या वर्तिरतिरुक्करी भवति सा रुजयाऽऽकृत्या च शतघ्नी-सादृश्यात् शतघ्नीत्युच्यते (असंउ. २५)
**-दारुक**-पु., कीट० अयं मुखसन्दंशविशर्धितमूत्र-पुरीषविषः (सुक. ३.५)
**-धौत**-वि., शतवारं धौतम्, धावितं प्रक्षालितं वा (चशा. ८.२४)
**-धौतघृत**-न., शतवारं धौतं घृतम् (चशा. ८.२४) शतवारान् शीतजलेन धौतं फेनिलं घृतं एतज्ज्वरेषु दाहविनाशने नितरामुपयुक्तम् (सुउ. ३९.२८३)
**-धौताज्य**-न., शतधौतघृतम् (अहृसू. २६.४७)
**-नेत्रिका**-स्त्री., वनस्पति० शतावरी (रा. ४.४३९)

**-पत्र**-पु., प्रतुदपक्षि० काष्ठकुक्कुटकः (चसू. २७.५०) द्र० 'प्रतुद'
आनूपदेशे वर्तमानः पक्षि० मयूरः, शुकः, सारसः, (चक. १.८) विष्किरपक्षि० दार्वाघाटः (ड. सुसू. ४६.५९) द्र० 'विष्किर'
न., वनस्पति० कमलम् (चसू. ४.१५; रा. १०.२४४)
रक्तपद्मम् (ध. ४.१५२)
**-(पत्रा)**-स्त्री., वनस्पति० तद्गुणाः— तिक्ता, कषाया, सुरभिः, रुच्या, पित्तघ्नी, कुष्ठमुखस्फोटपित्तजदाह-नाशिनी च (ध. ५.१५१-१५२)
हिं.—कानवाल.
**म.—कमल.**
बं.—पद्म.
ता.—तमाराइ.
**-(पत्री)**-स्त्री., वनस्पति० शतपत्रा (ध. ४.१५२)
**-पत्रक**-पु., प्रतुदपक्षि० राजशुकः (ड. सुसू. ४६.६७) द्र० 'प्रतुद'
**-(पत्रिका)**-स्त्री., वनस्पति० शतपत्रा (ध. ५.१५१)
शतपुष्पा (रा. ४.२)
**-पदी**-स्त्री., बहुपदयुक्तकीट० कारुण्डा (चक. चचि. २३.१५६,२१५) कर्णजलूकिका (इन्दु.असंउ.४३) सा चाष्टधा परुषा, कृष्णा, चित्रा, कपिला, पीतिका, रक्ता, श्वेताऽग्निप्रभा तद्दंशलक्षणानि—शोफो वेदना हृदयदाहः, श्वेताग्नि-प्रभाभ्यामेतदेव, लक्षणम्—दाहो मूर्च्छा श्वेतपिडको-त्पत्तिश्च (सुक.८.३०) अस्या विषे स्वर्जिकाक्षारा-दीनामागदो योज्यः (चचि. २३.२१५)
वनस्पति० शतावरी (ध. १.२९१)
**-पद्विष**-न., शतपद्या विषम् (सुक. ८.४९) द्र० 'शतपदी'
**-पर्वक**-पु., वनस्पति० जलगण्डीरः (सुउ. ५८.४४) इक्षु० द्र० 'इक्षु' (अहृसू.५.४६)
**-पर्वा**-स्त्री., वनस्पति० श्वेतदूर्वा द्र० 'दूर्वा' (चचि. ३.२५८; चक.)
**-(पर्विका)**-स्त्री., वनस्पति० नीलदूर्वा (रा. ८.२२६; अहृसू. ७.२५) द्र० 'दूर्वा'
कटुका (ध. १.३८)
वंशः (ध. ४.१३७)
नीलदूर्वा, द्र० 'दूर्वा' (ध. ४.१४३)

-पाक-वि., शतशः कृतः पाकसंस्कारो यस्य, सः (चवि. ६.१७)

-पाकतैल-न., सिद्धतैल० ओषधीभिः शतवारं सिद्धं तैलम्, इदं योनिरोगे प्रशस्तम् (चचि. ३०.१०५; सुचि. ४.२९)

-पाकबलातैल-न., सिद्धतैल० तिलतुल्यबलामूलाष्टगुणसलिलाष्टांशशेषितकषाय-भावितानां तिलानां तैलमादाय सामान्यक्वाथ-परिभाषाक्वाथेन चतुर्गुणेन शतशः पचेत्। एतस्य सेवनेन पुरुषः सर्वपापैर्विनिर्मुक्तः शतायुर्भवेत् (सुचि. १५.४०-४३)

-पादक-पु., आग्नेयकीट० सविषोऽसौ कीटः पित्तज-रोगान् करोति (सुक. ८.८-१२)

-पादी-स्त्री., वनस्पति० कटभी (रापरि. ९.३८)

-पुष्पा-स्त्री., वनस्पति० अनुवासनोपगगणे आस्था-पनोपगगणे चैकं द्रव्यम् (चसू. ४.१३) तद्गुणाः- कटुस्तिक्तोष्णा स्निग्धा; तीक्ष्णा, दीपनी (भाप्र मिश्रप्रकरण) कफवातघ्नी, ज्वरनेत्रदोष-व्रणातिसारनुत् सेयं बस्तिकर्मणि शस्यते (ध. २.१; रा. ४.१-४) उपनाहस्वेदे उपयुक्ता (चसू. १४.३६) ऋतुप्रवर्तनी, योनिशुक्रविशोधनी, पुत्रप्रदा, वीर्यकरी (का शतपुष्पावरी क)
हिं.—सोया.
म.—बाळंतशोप.
गु.—सुवानी भाजी-सुवादाना.
बं.—शुल्फा.
फा.—शुत-तुख्मेशूत.
मिश्रेया (चचि. ३.२५०; सुचि. ३.५८)
मृगाक्षी (रा. ७.२५७)

-पुष्पादल-न., वनस्पति० (रापरि. ७.८२) तद्गुणाः- मधुरं, सोष्णं, दीपनं, पथ्यं, रुचिप्रदं, पित्तकृद्वातघ्नं, गुल्मशूलजिच्च (रापरि. ७.८२)

-पुष्पिका-स्त्री., वनस्पति० मिश्रेया (र. १९.७-९)

-पोनक-न., चालनिका, तितउः (असंउ. ३३)
रोग० वातजभगन्दरः, शतपोनकवद्भगस्थाने बहुच्छिद्रयुतो व्रणः (सुनि. ४.५; असंउ. ३३) द्र० 'भगन्दर'
गुह्यरोग० शूकदोषजविकारेष्वेकः, वातशोणित-कोपेन मेहनं सर्वतोऽणुमुखैश्छिद्रैश्चितं भवति (सुनि. १४.१२) तच्चिकित्सा-शतपोनकस्य लेखनं कृत्वा शोधनार्थं शोधनद्रव्यकृताया रसक्रियाया उपयोगः करणीयः, तथा रोपणकाले रोपणकषाय-द्रव्यकृताया रसक्रियाया उपयोगः करणीयः। किं च रोपणार्थं पृथक्पर्ण्यादिसिद्धतैलमप्युपयोक्तव्यम् (सुचि. २१.१४) अग्निना स्रावमार्गदहनाऽनन्तरं रुजास्रावापहं स्वेदमाशु कुर्वीत। स्वेदार्थं च यथो-क्तानि स्वेदद्रव्याणि, कृशरां, पायसं वोपयुंजीत। एवमेव ग्राम्यमानूपमौदकं वा मांसं स्वेदार्थमुप-योजयेत् (सुचि. २१.१२-१९)

-प्रसूना-स्त्री., वनस्पति० शतपुष्पा (रा. ४.२)

-बाहु-पु., वायव्यः कीटविशेषः वातरोगान् करोति (सुक. ८.५-८)

-भावित-वि., शतधा भावितम् (चचि. १.(४)१९)

-भिषज्-स्त्री., नक्षत्र० शततारका (असंसू. ८.९२)

-मूला-स्त्री., वनस्पति० शतावरी (रा.४. ४३९)
नीलदूर्वा द्र० 'दूर्वा' (रा. ८.२२७)

-मूलिका-स्त्री., वनस्पति० द्रवन्ती (रा. ५.३४६)

-मूली-स्त्री., वनस्पति० शतावरी (र. २०.८२-८५)

-वल्ली-स्त्री., वनस्पति० नीलदूर्वा, द्र० 'दूर्वा' (ध. ४.१४३)

-विषाणिका-स्त्री., वनस्पति० शतावरी (चक. चचि. १०.४२)

-वीर्या-स्त्री., वनस्पति० शतावरी (सुसू. १९.२९; रा. ४.४३९)
महाशतावरी (रा. ४.४४२)
दूर्वा (चसू. ४.१८)
नीलदूर्वा, द्र० 'दूर्वा' (सुसू. १९.२९)
उत्तरापथिका, द्राक्षाभेदः, द्र० 'द्राक्षा' (रा. ११.७७)
शतमूली (असंचि. ७)

-वेधिन्-पु., वनस्पति० अम्लवेतसः (ध. २.९६)

शतारु-न., क्षुद्रकुष्ठ० इदं पित्तश्लेष्माधिकं, तल्लक्षणम्- रक्ताः श्यावा दाहयुक्ताः पीडाकरा बहवो व्रणाः (चचि. ७.२६-३०)

शतारुष्क-न., कुष्ठरोग० (का. कुष्ठ. चि.)

शतावरी-स्त्री., वनस्पति० (चसू. ५.६५)
शाक० वातपित्तसंशमनवर्गे चैकं द्रव्यम् (सुसू. ३९.७-८; अहृसू. १५.२१) तद्गुणाः- तिक्ता, मधुरा; शीता, स्निग्धा, वर्णौजोबल-वर्धनी, स्मृतिमेधामतिकरी (का शतावरी कल्प) वृष्या, रसायनवरा, वातपित्तघ्नी, क्षयाऽस्र-विकारघ्नी च (ध. १.२९१-९२; रा. ४.४३७-४०)

महदल्पभेदेन सा द्विविधा, तत्र महती, सहस्रवीर्या ( सुसू. ४६.३०१ )
हिं.—सतावर.
म.—शतावरी, आसवली.
गु.—शतावरी.
बं.—शतमूली.
फा.—गुर्जदस्ति.
सहस्रवीर्या, महाशतावरी ( ध. १.२९३ )
-करीर-न., शतावर्यङ्कुरम्, तद्गुणाः-सतिक्तं लघु, चक्षुष्यं, वृष्यं, दोषत्रयप्रणुत् ( असंसू. ७.१२७ )
-घृत-न., सिद्धघृत० वृष्ययोगोऽयम् ( चचि. २.(३)-१८ ) योनिरोगे उपयुक्तम् ( चचि. ८.१०५ ) रक्ताऽतिसारचिकित्सायामुपयुक्तम् ( चचि. १९.९८ )
-पायस-पु., पायस० शतावरीमूलश्रुतेन पयसा कृत आहारः, असौ तिमिरनाशनः ( सुउ. १७.४९ )

**शतावर्यङ्कुर**-पु., कन्दशाक० शतावर्या अङ्कुरः, तद्गुणाः-तिक्तः, कफपित्तहरश्च ( सुसू. ४६.३०२ )

**शताह्वक**-न., वनस्पति० फल० सेह इति 'शरका' इति च ख्यातम्, इदं दोषघ्नं-गरहारि च ( चसू. २७.१४५ )

**शताह्वया**-स्त्री., वनस्पति० शतावरी ( रा. ४.४३८ )

**शताह्वा**-स्त्री., वनस्पति० शतपुष्पा (सुचि.३७.८;ध.२.१) शतावरी ( रा. ४.४३८ )
मिश्रेया ( चसू. ३.२० )

**शत्रुकण्टक**-पु., वनस्पति० घोण्टा ( रापरि. ८.२२ )

**शत्रुपत्र**-न., वनस्पति०, अम्लवेतसपत्रम्, इदमक्षिरोगे परिषेकोपयोगि ( काखिल. १३.५९ )

**शत्रुभङ्ग**-पु., वनस्पति० मुञ्जः ( रा. ८.२०५ )

**शदन**-न., शातः, पातः ( अरु. अहृसू. ७.११ )

**शनैर्मेह**-पु., रोग० कफजप्रमेहभेदः (चसू. १९.४-(९) ) शनैः शनैर्मन्दं मन्दं कृच्छ्रं मूत्रयति (सुनि. ६.१०) द्र० 'प्रमेह'

**शफ**-पु., भैषज्य० नखम् ( ध. ३.५८ )

**शफर**-पु., जलचरप्राणि० नादेयमत्स्यवर्गे डल्हणेन निर्दिष्टः ( ड. सुसू. ४६.११३ ) तद्गुणाः- तिक्तः, कटुः, स्वादुः, शुक्रलः, कफवातजिच्च (र. २८.७७) द्र० 'नादेयमत्स्य'

( **शफरी** )-स्त्री., मत्स्य० ( चचि. २ ( ४ ) १७ )

**शबरकन्द**-पु., वनस्पति० गृष्टि; वाराहीकन्दः ( रा. ७.१३५ )

**शबरोद्भव**-पु., वनस्पति० रोध्रम् ( र. ३०.६४-६५ )

**शबल**-वि., नानावर्णः, चित्रविचित्रः (इन्दु, असंउ. ४३) पु., मूषिक० एतद्विषतः पित्तजा रोगा ग्रन्थयः कर्णिकाश्च जायन्ते ( असंउ. ४६ ) द्र० 'मूषिक' वनस्पति० चित्रकः ( रा. ६.१२५ )
-वर्ण—पु., कर्बुरवर्णो मिश्रवर्णो वा ( सुनि. ६.२६ )

**शब्द**-पु., सार्थो वर्णसमूहः, संकेतबलादर्थप्रकाशिका वर्णमाला (चक.) स चतुर्विधः दृष्टार्थोऽदृष्टार्थः सत्योऽनृतश्च ( चवि. ८.३८ )
आकाशस्य गुणः, स च श्रोत्रग्राह्यो ध्वनिवर्णात्मकः, ( चशा. ४.१२; सुशा. १.४ )
( परिव० ) नादः ( सुनि. ७.२१-२३ )
-तन्मात्र-न., पञ्चतन्मात्रेष्वेकम् अनुद्भूतस्वरूपः सूक्ष्मशब्दः ( सुशा. १.४ )
-पुनरुक्त-न., वाक्यदोष० तस्यैव शब्दस्य पुनरभिधानम्। यथा घटो घट इति ( चवि. ८.५४ )
-प्रादुर्भाव-पु., सशब्दता शब्दायितम् ( सुसू. १२.८ )
-वहस्रोतस्-न., शारीर० स्रोतोभेदः, कर्णशष्कुलीपरिच्छिन्नमाकाशम् ( मा मधुकोष.; सुनि. १.८३ )
-वाहिनी-वि., शारीर० वाग्वाहिनी ( धमनी ) ( सुनि. १.८५ )
स्त्री., कर्णगता सिरा० ( असंशा. ६.२८ )
-वेध-पु., संस्कार० मुखस्थितपारदेन नलिकया लघुधमनेन लोहादेर्धातोः सुवर्णरौप्यत्वसंजननम् ( र. ८.९४ )
-श्रव-पु., शारीर० कर्णः ( चइ. ८.१२ )

**शब्दादिजरोग**-पु., रोग० अहितशब्दरूपादिजन्यो विकारः ( चसू. २५.१४ )

**शब्दासहत्व**-न., लक्षण० शब्दो न सह्यते इति ( चनि. १.३३ )

**शब्दासहिष्णुता**-स्त्री., लक्षण० शब्दासहत्वम् ( अहृसू. ११.१७ )

**शब्दिता**-स्त्री., वनस्पति० धातकी ( ध.३.९० )

**शब्देन्द्रिय**-न., शारीर० श्रवणेन्द्रियम् श्रोत्रम् ( सुशा. १.१९ )

**शम**-पु., विकारासम्भवः, विकाराणामुपशमः ( असंसू. २०.१० )

**( शामी )**–स्त्री., वनस्पति० ( चक. १.८ ) तद्गुणाः– कषाया, स्वादुस्तिक्तोष्णा ( शीता ) (र. १८.१०६) गुरुः; (लघुः ) रेचनी (र. १८.१०६ ) केशनाशिनी, रक्तपित्ताऽतीसारनाशिनी ( ध. ५.९५ ) कासश्वासभ्रमकुष्ठाऽर्शःकृमिनाशिनी (र. १८.१०६-८) अस्य कल्को विषजरक्ताऽऽस्रावे पाने उपयुज्यते ( असंउ. ४७ ) अस्य काष्ठं दन्तधावने निषिद्धम् ( असंसू. ३.२१ )

हिं.—समी.

म.—शामी.

गु.—खिजडी.

बं.—शौङ्.

शिम्बीधान्य० एतस्याः कृष्णपीतरक्तश्वेतकुशिम्बीभेदेन विविधा जातयस्ताश्च मधुराः शीतला गुर्व्यो बलघ्न्यो रुक्षणात्मिका बलिभिः सस्नेहभोज्याश्च ( चसू. २७.३४ )

**शमन**–न., उपक्रम० ( चसू. १.१०९; सुसू. २०.२१ ) यदौषधं वातादिदोषान्न शोधयति तथा स्वप्रमाणस्थान्नोदीरयति विषमांश्च समीकरोति, तत् शमनम्, तत्सप्तविधम्–पाचनं, दीपनं क्षुत्तृड्व्यायामातपमारुताः ( अहसू. १४.६-७ )

**–गण्डूष**–पु., उपक्रम० गण्डूषभेदः, चतुर्विधप्रकारेष्वेकः, तिक्तकषायमधुरशीतैः पटोलाऽरिष्टजम्ब्वाम्रमालतीपल्लवोत्पलमधुकाथसितोदकक्षौद्रक्षीरेक्षुरसघृतादिभिः शमनः (असंसू. ३१.४)

**–धूम**–पु., उपक्रम० धूमभेदः, त्रिविधधूमप्रकारेष्वेकः, प्रायोगिको मध्यमश्चेत्यपरनाम्नी, स्वस्थकर्मणि वातकफसंसर्गे च उपयुज्यते ( असंसू. ३०.४,१८ )

**–नस्य**–न., उपक्रम० नस्यभेदः, नस्य, नीलिकाव्यङ्गकेशदोषाऽक्षिराजिषु शमनं नस्यं हितम् ( अहसू. २०.४ )

**–स्नेह**–पु., स्नेहप्रकारेष्वेकः स्नेहः ( अहसू. १६.१९)

**शमनीय**–वि., शमने हितम्, व्याधिशामकम् ( चचि. ३.१६०-१६१ )

**–द्रव्यगण**–पु., औषधिसमूह० (काखिल. २.५७-५८) दशमूलशटीरास्नावयस्थापंचकोलशार्ङ्गेष्टारोहिणीपाठासरलदेवदारुमुस्ताऽमृतावृश्चिकालीकर्कटादुरालभात्रायन्ती इत्येवमादीनि शमनीयानि

**शमल**–न., पापम् ( इन्दु. असंउ. ९.३ ) शकृत्, शमलशिथिलभावः, द्रुतपुरीषत्वम् ( इन्दु. असंउ. ४९ )

**शमी**–स्त्री., ( चक. १.८ )

**–पत्रा**–स्त्री., वनस्पति० लज्जालुः ( ध. ४.१०९ )

**–फल**–न., फल० तद्गुणाः–मधुरमुष्णं, गुरु, रूक्षं, केशघ्नम् ( चसू. २७.१६०; सुसू. ४६.१९३ )

**–यन्त्र**–न., यन्त्र० अर्शोयन्त्रसमं किन्तु छिद्ररहितं यन्त्रम्, तच्च अर्शःप्रपीडनार्थमुपयुज्यते ( अहसू. २५.१९ ) द्र० 'यन्त्र'

**शम्पाक**–पु., वनस्पति० आरग्वधः ( चचि. १०.१९-२२; सुउ. ३९.२४५ )

चतुरङ्गुलः ( चक. चसि. ३.६१ )

किरमालकः ( ड. सुचि. ३१.५ )

**शम्बर**–पु., वनस्पति० अर्जुनः ( रा. ९.१९१ )

लोध्रः ( रा. ६.२३८ )

जङ्गालप्राणि० ( धपरि. ३ )

जाङ्गलमृग० असौ लघुप्रकृतिः ( चसू. ५.५ ) अस्य मांसरसो गर्भस्थापनार्थमुपयुज्यते ( चशा. ८.२४ )

हिं.—साम्बर, बारहसिंगा.

म.—साम्बर.

बं.—शम्बर.

न., जलम् ( रा. १४.३१७ )

**( शम्बरी )**–स्त्री., वनस्पति० दन्ती ( चक. १२.३ )

द्रवन्ती ( ध. १.२२९ )

मूषककर्णी ( रापरि. ३.२२ )

सुतश्रेणी ( रा. ४.१६ )

**–पादप**–पु. वनस्पति० लोध्रः ( ध. ३.१७५ )

**शम्बुक**–पु., कीट० कोषस्थजन्तुः, तद्गुणाः–प्राणनाशनः, तेन दष्टस्य वेगज्ञानं सर्पवच्चवर्ति; तथा च सान्निपातिका रोगा भवन्ति, दंशस्तु क्षाराग्निदग्धवत्, वर्णेन रक्तपीतसितारुणः ( सुक. ८.१५-१८; असंउ.४३ )

**शम्बूक**–आवर्तकोशः, 'साङ्कला' इति लोके ( ड. सुसू. ४६.१०८.११० ) दंष्ट्रानखविषः ( सुक. ३.५ )

आवर्तयुक्तो मत्स्य० ( सुसू. ४६.१०८-११० )

भैषज्य० क्षुद्रशङ्खः, लघुशङ्खः ( सुनि. ४.८; रा. १३.२४६ )

**शम्बूकादिवर्ति**–स्त्री., पारदयोग० सिध्दाञ्जन० शुक्रार्मतिमिरपिल्लान्हन्ति ( र. २३.५९-६० )

**शम्बूकावर्त**–पु., रोग० भगन्दरभेदः, वायुः प्रकुपितः प्रकुपितौ पित्तश्लेष्माणौ परिगृह्याऽधो गत्वा पूर्ववदवस्थितः पादाङ्गुष्ठाग्रप्रमाणां सर्वलिङ्गां पिडकां जनयति, साऽस्य तोददाहकण्ड्वादीन् वेदनाविशेषाञ्जनयति, अप्रतिक्रियमाणा च पाकमुपैति, व्रणश्च नानाविधवर्णमास्रावं स्रवति, पूर्णनदीशम्बूकावर्तवच्चात्र समुत्तिष्ठन्ति वेदनाविशेषाः, तं भगन्दरं शम्बूकावर्तमित्याचक्षते ( सुनि. ४.८ ) द्र० ' भगंदर '

**शम्भु**–पु., ऋषि० आदिमचन्द्रसेनादिषु सप्तविंशतिसंख्याकेष्वन्यतमो रससिद्धिप्रदायको रसाचार्यः ( र. १.२-५ )

**–ज**–पु., खनिज० पारदः ( र. १.६६ )

**–वल्लभ**–न., वनस्पति० पुण्डरीकम् ( ध. ४.१४८ )

**शम्या**–स्त्री., दक्षिणहस्तेन वादनम् ( चनि. ७.७ (१ )

**शम्याक**–पु., वनस्पति० कर्णिकारः ( ध. १.२२१; अहृसू. १५.२ )

आरग्वधः ( असंचि. १.६३-६४ )

**–मज्जा**–स्त्री., आरग्वधमज्जा ( सुसू. ४६.२०७ )

**शयन**–न., ( परिव० ) स्वापः ( सुसू. ४६.५०५ )

शय्या, तच्च सपादपीठं, नात्युच्छ्रितं नातिनीचपादं, प्रधानमृद्वास्तरणोपपन्नं, प्राक्शीर्षकं, शुक्लपटोत्तरीयं प्रशस्तम् ( चसि. ३.३३-३४ )

**शयनेप्सु**–वि. स्वप्तुमिच्छुः, सुषुप्सुः ( सुउ. ३९.४३ )

**शय्या**–स्त्री., शयनम् ( अहृसू. १४.१० )

**–दोष**–पु., शयनस्य दोषः ( सुचि. ३६.२९-३० )

**शय्यासन**–न., शय्या एवाऽऽसनम् ( सुचि. २४.८१ )

**शर**–पु., वनस्पति० ( चचि. १(३).३; सुसू. १२.४ )

तद्गुणाः–मधुरस्तिक्तोऽल्पोष्णो बल्यो वीर्यकरोऽल्पवातकरः, कफघ्नो भ्रान्तिमदनाशकः (ध. ४.१३५) मूत्रकृच्छ्राऽश्मरीदाहास्रक्षयपित्तजरोगजित् ( भाप्रमिश्र. ४.१६१-१६२ )

हिं.—रामशर.

**म.–शर.**

बं.—शर.

शल्य० लोहादिनिर्मितो बाणः, स च द्विविधः कर्णी, श्लक्ष्णश्च ( सुसू. २६.५-७ )

**–काण्ड**–पु., शरैषिका ( सुशा. ४.७२; असंशा. ८.१५ )

**–पत्र**–पु., वनस्पति० कुशः ( रा. ८.२०९ )

**–पुङ्ख**–पु., शरगुणसन्धानस्थानम् ( सुसू. ७.१४ )

यन्त्र० शरपुङ्खाऽऽकारा शल्यचालनार्था शलाका ( सुसू. ७.१४ )

न., यन्त्र० शरकर्तरी ( अहृसू. २५.३१ )

**–( पुङ्खा )**–स्त्री., वनस्पति० तद्गुणाः– कटुस्तिक्ता, कषाया ( भाप्र. ) उष्णा ( लघुः ) ( भाप्र. ) वातरुजापहा, कृमिघ्नी; यकृत्प्लीहगुल्मव्रणविषापहा, विशेषतस्तु प्लीहनाशिनी ( भाप्र. मिश्र. ४.२१०; रापरि. ४.६) तद्बीजं सतक्रपीतं मूषिकविषनाशनम् ( असंउ. ४६ )

हिं.—सरफोंका.

**म.—उन्हाळी.**

बं.—बननील.

ता.—कोल्लुक्कवकेळपि.

**–पुङ्खमुख**–न., शलाकायन्त्र० ( असंसू. ३४.१५ )

**–( पुङ्खमुखा )**–स्त्री., शलाकायन्त्र० ( असंसू. ३४.१५ ) द्र० 'शरपुंखमुख'.

**–पुङ्खमुखयन्त्र**–न., शलाकायन्त्र० ( अहृसू. २५.३३ )

द्र० 'शरपुंखमुख'.

**–लोमन्**–पु., ऋषि० रोगापहरणचिन्तनार्थं हिमवतः पार्श्वे समेतेषु महर्षिष्वेकः ( चसू. १.११ ) यज्जःपुरुषीयाध्याये विवदमानानामेकतमऋषिः ( चसू. २५ ८ )

**शरण**–न., गृहम् (चशा. ८.९; सुचि. ५.१५ )

**शरण्या**–स्त्री., रेवत्या विंशतिनाम्नामेकतमं नाम ( का बालग्रहचि. )

**शरद्**–स्त्री., ऋतु० (चसू.६.७) आश्विनकार्तिकौ, कार्तिकमार्गशीर्षौ वा शरद्घटकौ मासौ (सुसू. ६.६-१०) कन्यातुले शरद् ( हे.अहृसू. ३.१-२ ) अत्र लवणरसो बलवान् भवति ( सुसू. ६,६-१० ) शरदि आचरणविधिः ( सुउ. ६४.१३-१८ ) वर्षाशीतोचिताङ्गानां शरदारम्भे सूर्यसंतापेन सहसा तप्तानां नराणां वर्षासंचितं पित्तं शरदि कुप्यति। तत्र पित्तजयार्थं तिक्तघृतं विरेचनं रक्तमोक्षं च कुर्वीत। क्षुधितः सन् लघु तिक्तं स्वादु कषायं चान्नं भजेत्। शालयो मुद्गः सितो आमलकं, पटोलं, मधु, जाङ्गलं च मांसं सेवनीयम्। पानादिष्वमृतोपमं हंसोदकं नाम निर्मलं, दोषघ्नं जलमुपयोक्तव्यम्। एतद् हंसोदकं सूर्यकिरणैर्दिवा-तप्तं चन्द्रकिरणैर्निशि शीतीकृतं तथैवाऽगस्त्योदयनिर्विषमस्ति; तन्नाऽभिष्यन्दि न वा रूक्षम्।

**–ग्राहिन्**–वि., लक्षण० शिरोग्रहणवद् वेदनया युक्तः (चचि. ३.७१)

**–ग्रीव**–न., शिरश्च ग्रीवा च शिरोग्रीवम् (चशा.७.५)

**–धरा**–स्त्री., शारीर० मन्या (चवि.८.११७) ग्रीवा (सुशा. ७.२२; असंशा. ८.३२)

**–न्यास**–पु., शिरसः पार्श्वतो गमनम् (चचि. २३.२२९)

**–बस्ति**–पु., उपक्रम० शिरसि प्रभूततैलधारणस्वरूपः तस्य विधिस्तु–शुद्धाक्तस्विन्नदेहस्य जानुसमे मृदुनि पीठे उपविष्टस्य पुरुषस्य सायाह्ने द्वादशाङ्गुलविस्तीर्णं गव्यं माहिषं वा चर्मपट्टं शिरःसममाकर्णबन्धनस्थानं बध्नीयात् । तस्योपरि वस्त्रमाऽऽवेष्ट्य चैलवेणिकया बद्ध्वा माषकल्केन तत्स्थानं लेपयेत् । ततश्च यथाव्याधि शृतं स्नेहं कोष्णं कृत्वा शिरसः उपरि निषेचयेत् । तच्च निषेचनं स्नेहस्य केशभुव ऊर्ध्वमङ्गुलिप्रमाणं यावत् कर्तव्यम् । स च स्नेहः यावत् वक्त्रनासिकास्रुतिः स्यात् तावत् विधार्यः (अहसू. २२.२७-३०) शिरोरोगे नेत्ररोगेषु च अयमुपयुज्यते (सुउ. ९.५) दन्तहर्षविकारे च हितकरः (सुचि. २२.३६; अहसू. २२.२६)

**–बस्तिकोश**–पु., बस्त्यर्थं शिरस उपरितनो भागो यः पट्टचेलिकामाषचूर्णादिभिः सम्यग्बध्यते (सुउ. १८.४९-५०)

**–बस्तिविधि**–पु., शिरसश्चर्मपट्टेन परितो बद्ध्वा बहुतैलेन शिरसि तैलादिपूरणम् (अहसू. २२.२७-३०; असंसू. ३१.१९) द्र० 'शिरोबस्ति'

**–भेद**–पु., रोगलक्षण० शिरोविदारणमिव वेदना, विसूचिकालक्षणेष्वेकं लक्षणम् (सुउ. ५६.६)

**–भ्रम**–पु., लक्षण० चक्रस्थितिवत् शिरसि भ्रमः (चचि. २२.१२)

**–भ्रमण**–न., लक्षण० शिरोभ्रमः, शिरसि भ्रमः (र. २१.१८६-८७)

**–रुज्**–स्त्री., लक्षण० (चसू. १३.१६) शिरसो रुक्, तोदनम्, पीडा (चसू. २०.११; सुउ. ३९.३०; असंसू. २०.१३)

**–रुजा**–स्त्री., शिरोरोगः, शिरोरुक् (चसू. ३.२३; चसू. ७.६)

**–रुह**–पु., केशः (चचि. २६.१३२; सुक. १.२२; असंसू. ३.७३)

**–रेक**–पु., उपक्रम० शिरोविरेचनत्वेनोपयोज्यं नस्यम् (अहसू. १४.५; असंसू. २४.७)

**–रोग**० पु., रोग० शिरसि जायमानो व्याधिः । प्राणभृतां प्राणाः, सर्वेन्द्रियाणि च यत्र श्रिताः तदङ्गानामुत्तमाऽङ्गं शिर इत्यभिधीयते । संग्रहः–अर्धावभेदको वा स्यात् सर्वं वा रुज्यते शिरः । प्रतिश्यामुखनासाक्षिकर्णरोगशिरोभ्रमाः अर्दितं, शिरसः कम्पो गलमन्याहनूनां ग्रहः विविधाश्चापरे वातादिक्रिमिसंभवा रोगाः भवन्ति (चसू. १७.१३) स च वातपित्तकफसन्निपातकृमिभेदात् पञ्चविधः, तत्र वातजे शिरोरोगे वृद्धो वायुः शिरोगताः सिरा आविश्य कुप्यति । ततस्तस्य महच्छूलं जायते । शङ्खौ निस्तुद्येते, घाटा संभिद्यते, सभ्रूमध्यं ललाटं चाऽतिवेदनमिव तपति, स्वनतः श्रोत्रे वध्येते, अक्षिणी निष्क्रिष्येते, शिरो घूर्णति, सिराजालमतिस्फुरति शिरोधरा स्तभ्यते, स्निग्धोष्णं चोपशेते, (चसू. १७.१८-२१) पित्तजलक्षणम्–कट्वम्ललवणक्षारमद्यक्रोधाऽऽतपाऽनलैः शिरसि संदुष्टं पित्तं शिरोरोगाय कल्पते । तेन शिरो दह्यते, सज्यते, शीतं सुषूयते, नाम शीतमिच्छति चक्षुषी दह्येते, तृष्णा भ्रमः स्वेदश्च जायते (चसू. १७.२२-२३) कफजलक्षणम्–स्वप्नसुखैर्गुरुस्निग्धातिभोजनैरास्यासुखैः शिरसि संदुष्टः श्लेष्मा शिरोरोगाय कल्पते । तेन शिरो मन्दरुजं सुप्तं स्तिमितभारिकं च भवति । तथाऽऽलस्यमरोचकस्तन्द्रा उत्पद्यते । त्रिदोषजे शिरोरोगे वाताच्छूलं भ्रमः कम्पः, पित्ताद्दाहो मदस्तृषा, कफाद्गुरुत्वं तन्द्रा च जायते (चसू. १७.२४) कृमिजलक्षणम्–तिलक्षीरगुडाजीर्णपूतिसंकीर्णभोजनाद्दोषलस्याऽसृक्कफमांसानां क्लेद उपजायते ततः शिरसि संक्लेदात् पापकर्मणः पुरुषस्य जाताः क्रिमयो जनयन्ति शिरोरोगम्; किं च रुजाकण्डूशोफदौर्गन्ध्यदुःखितं क्रिमिरोगाऽऽतुरं विद्यात्, क्रिमीणां दर्शनेन च क्रिमिरोगाऽऽतुरं विद्यात् (चसू. १७.२७-२९) सान्निपातिकलक्षणम्–शिरोऽभितापे दोषत्रयप्रवृत्ते सर्वाणि लिङ्गानि समुद्भवन्ति । रक्तजलक्षणम्–रक्ताऽऽत्मकः पित्तसमानलिङ्गः तत्र शिरसः स्पर्शासहत्वं भवेत् । क्षयजः शिरोरोगः–शिरोगतानामसृग्वसाश्लेष्मसमीरणानां संक्षयेण अस्य प्रादुर्भावः भवति सस्वेदनच्छर्दनधूमनस्यैः कफक्षयः, नागरादितीव्रधूमेन वसामस्तिष्कादिक्षयः, सिरामोक्षाऽऽदिभिरसृक्क्षयः अत एवैतैः संस्वेदनादिभिः क्षयजस्य रोगवृद्धिः (मा. शिरोरोगनि. ४.६) नवशिरोरोगसामान्य-

चिकित्सा-मध्वादियुक्तैः शिरोविरेचनद्रव्यैः शिरोविरेकः। ततः सर्षपतैलेन नस्यम्। अशान्तेषु शिरोरोगेषु स्नेहस्वेदान् कृत्वाऽनन्तरं सिराणां मोक्षणं कर्तव्यम् ( सुउ. २६.४२-४४ )
द्र० 'शिरस्ताप'

-रोगप्रतिषेध-पु., अध्यायसंज्ञा० ( सुउ. २६.१ )

-रोगविज्ञानीय-वि., अध्यायसंज्ञा० शिरोरोगविज्ञानमधिकृत्य कृतः ( सुउ. २५.१ )

-रोगारि-पु., ( परिव० ) पारदादियोग० पारदाऽभ्रकतीक्ष्णलोहकान्तताम्राणां भस्मानि स्नुहीक्षीरैः संमर्द्य तेषां पिण्डानि कुर्यात्। मात्रा-माषमात्रम्। फलम्-सूर्याऽऽवर्तादिशिरोरोगविनाशः (र.२४.९२)

-विरेक-पु., नस्यम् ( ड. सुउ. ६४.३८-३९ )

-विरेचनद्रव्य-न., नस्यद्रव्याणि, एतानि तानि अपामार्गपिप्पलीमरिचविडङ्गशिग्रुशिरीषतुम्बुरुपिल्वजाज्यजमोदावार्ताकीपृथ्वीकैलाहरेणुकाफलानि च, सुमुखसुरसकुठेरकगण्डीरकालमालकपर्णासक्षवकफणिज्झकहरिद्राशृङ्गवेरमूलकलशुनतर्कारीसर्षपपत्राणि च, अर्काऽलर्ककुष्ठनागदन्तीवचाऽपामार्गश्वेताज्योतिष्मतीगवाक्षीगण्डीरपुष्प्यवाक्पुष्पीवृश्चिकालीवयस्थातिविषामूलानि च, हरिद्राशृङ्गवेरमूलकलशुनकन्दाश्च, लोध्रमदनसप्तपर्णनिम्बार्कपुष्पाणि च, देवदार्वगुरुसरलशल्लकीजिङ्गिन्यसनहिङ्गुनिर्यासाश्च, तेजोवतीवराङ्गेङ्गुदीशोभाञ्जनबृहतीकण्टकारिकात्वचश्चेति ( चवि. ८.१५१ )

-विरेचनविकल्प-पु., उपक्रम० शिरोविरेचनभेद ( सुचि. ४०.२१ )

-विरेचनोपग-वि., शिरोविरेचनोपयोगी; महाकषायवर्गे एको वर्गः, तत्र शिरोविरेचनोपगानि द्रव्याणि-ज्योतिष्मतीक्षवकमरिचपिप्पलीविडङ्गशिग्रुसर्षपाऽपामार्गतण्डुलश्वेतामहाश्वेता इति दशेमानि शिरोविरेचनोपगानि भवन्ति ( चसू. ४.१३ )

-वृत्त-न., वनस्पति० मरिचम् ( ध. २.८८; पृ.८७)

-हुण्डन-न., लक्षण० केशभूमिस्फुटनं, शङ्खललाटभेदश्च, ( चचि. २८.२२ )

शिरोभिघात-पु., रोग० शिरसि अभिघातः शिरस्याभिहते गण्डस्पन्दनजृम्भणादिलक्षणानि भवन्ति ( चसि. ९.६ )

शिरोऽभिताप-पु., रोग० शिरोरोगः ( चनि. ३.११ ) शिरः प्रतप्यते, शिरोऽभितप्यते येन सः ( सुसू. १४.२०; असंउ, २ )

शिरोभ्यङ्ग-पु., शिरसोऽभ्यङ्गः, स च सर्वशिरोरोगशमनः, केशानां मृदुत्वदीर्घत्वबहुत्वस्निग्धत्वकृष्णत्वादिकरः, मुखप्रसादनः, इन्द्रियतर्पणश्च ( सुचि. २४.२५-२६ )

शिरापत्र-पु., वनस्पति० हिन्तालः ( रा. ९.९८; पृ.१८२ )

शिरालपत्रक-पु., वनस्पति० श्रीतालः ( रा. ९.९५; पृ. १८२ )

शिरिवारिका-स्त्री., वनस्पति० चाङ्गेरीशाकम्, तच्च गुल्मोदावर्तशूलेषु प्रयोज्यम् ( काखिल. १८.२३ )

शिरीष-पु., वनस्पति० गुणाः- तिक्तः, कटुरुष्णो (शीतः) (रा.) लघुर्वर्ण्यस्त्रिदोषघ्नो वातविषकुष्ठकण्डूत्वग्दोषश्वासकासपामाऽसृग्विनाशनः (ध.५.११९;पृ.१९२) शिरीषपुष्पं विषघ्नानां श्रेष्ठम् ( चसू. २५.४०; सुक. ५.१७-१८ ) विशेषतो शिरोविरेचनार्थमस्य फलं ग्राह्यम् ( सुसू. ३९.६; र. २५.११० ) अस्य पञ्चाङ्गानि विषहराणि (असंउ.४०; अहृसू.१०.३१)
हिं.—शिरीष.
म.—शिरसी.
गु.—सरसिडियो.
बं.—शिरीषगाछ.
ता.—चिरिटं.

-तैल-न., योग० योनिरोगेषूत्तरबस्त्यादिषूपयुज्यते ( असंउ. ३९ )

-पत्रा-स्त्री., वनस्पति० श्वेता (रापरि. ९.३८; पृ. ३६७)

-बीज-न., भैषज्य० शीर्षविरेचने उपयुज्यते ( चसू. २.५ )

शिलगर्भजा-स्त्री., वनस्पति० पाषाणभेदः ( रा. ५.२०९; पृ. ३७ )

शिलज-न., खनिज० शैलेयम् (रा. १२.१३०; पृ. ११)

( शिलजा )-स्त्री., खनिज० शिलावल्का ( रा. ५.२१३; पृ. ३७ )

शिला-स्त्री., खनिज० अश्मादिकृतपिण्डिका ( चसू. १४.४७ )
खनिज० मनःशिला ( ध. ३.९६; पृ. ११५ )
निर्यास० कर्पूरः (रा. १२.५६; पृ. १०१. र. ३.१; सुचि. २५.३८; असंसू. २१.४ )

-ज-न., खनिज० शिलाजतु ( सुचि. ७.११; र. २.११४-१५ )

-जतु-न., शिलानिःसृतगिरिजधातु० ( सुचि. १३.४-५ )

तस्योत्पत्तिः- रजतात् हेम्नस्ताम्रात् कृष्णायसादपि चतुर्भ्यो धातुभ्यस्तस्य संभवः ( चचि. १(३).४८ ) शिलाजतुजातिः-हेमाद्याः सूर्यसंतप्ता जत्वाभं मृदु मृत्स्नाऽच्छं यन्मलं स्रवन्ति तच्छिलाजतु। स सुवर्णस्य निस्रवो मधुरः सतिक्तो जपापुष्पनिभश्च विपाके कटुः शीतश्च। रूप्यस्य कटुकः श्वेतः शीतः स्वादुर्विपच्यते। ताम्रस्य बर्हिकण्ठाभस्तिक्तोष्णः कटुः पच्यते। यस्तु गुग्गुलुकाभासो लवणान्वितस्तिक्तकः विपाके कटुः शीतः सर्वश्रेष्ठश्च स चाऽयसः। सर्वे गोमूत्रगन्धयो यौगिकाः सर्वकर्मसु रसायनप्रयोगेषु पश्चिमस्तु विशिष्यते। ( चचि. १(३).५५-६१ ) तस्य प्राधान्यम्-त्रपुसीसताम्ररूप्यसुवर्णलोहजानि षट् ( सुचि. १३.७-८ ) षट्प्रकारेषु यत् कृष्णमलघु स्निग्धं निःशर्करं गोमूत्रगन्धि च तत् प्रधानम् (सुचि.१३.९-१०) रसः-शिलाजतुरसे कषायमनम्लं पाके कटु नात्युष्णशीतं च ( चचि. १(३).४९ ) गुणाः-तद्विधिभिः रसायनं वृष्यं रोगनुत् वातपित्तकफघ्नैर्निर्यूहैः सुभावितं सर्वैरेकैकशोऽपि परं वीर्योत्कर्षं करोति ( चचि. १(३).५० ) तस्य शुद्धिः-वह्नौ क्षिप्तं यत् लिङ्गाऽऽकारमधूमकं सलिले विलीनं शुद्धं च तत् शिलाजतु (र. २.११६) ऊषकादिगणे एकं द्रव्यम् ( सुसू. ३८.३७ )

हिं.—शिलाजीत.

म.—**शिलाजित.**

बं.—शिलाजित.

ता.—कल्मतं.

**–जतुप्रयोग**–पु., त्रिफलारसेन शिलाजतुसेवनम् त्रिदोषजश्वयथुहरम् ( चचि. १२.४९ ) स्थौल्यविनाशकोऽयम् ( अहृसू. १४.२३ )

**–जतुवटक**–पु., पाण्डुरोगे कल्प० ( चचि. १६.८७-९२ )

**–जित्**–न., खनिज० शिलाजतु ( र. १९.३२ )

**–तल**–न., शिलापृष्ठम् ( अहृसू. ३०.११ )

**–तोय**–न., शिलोदकम् ( र. ११.८८ )

**–त्वच्**–स्त्री., खनिज० शिलावल्का ( रा. ५.२१३; पृ. ३७ )

**–दद्रु**–पु., खनिज० शैलेयम् (ध. ३.७३; पृ. ११०)

**–धातु**–पु., खनिज० सुवर्णगैरिकम् ( रा. १३.२३३; पृ. १२९ )

**–निर्घात**–पु., व्यायाम० पाषाणाऽऽस्फालनम् ( ड. सुउ. ६४.३८ )

**–पट्ट**–न., संघर्षकः पाषाणः ( र. २.५० )

**–पुष्प**–न., खनिज० शैलेयम् ( ध. ३.७३; पृ. ११० )

**–पूत**–पु.,पारदयोग० पारदमनःशिलापाठेंद्रवारुण्यादिसाधितोऽयं हिक्काहरः ( र. १३.७२-७५ )

**–प्रसून**–न., खनिज० शैलेयम् ( रा. १२.१३१; पृ. १११ )

**–भेद**–पु., वनस्पति० पाषाणभेदः ( ध. १.१५७; पृ. ३६ )

**–रम्भा**–स्त्री., वनस्पति० काष्ठकदली ( रा. ११.११०; पृ. १४९ )

**–वल्का**–स्त्री., पाषाणभेदविशेषः, तद्गुणाः–स्वादुर्हिमः मेहकृच्छ्रविनाशनी, मूत्रारोधाश्मरीशूलक्षयपित्तापहारिका च ( रा. ५.२१४ )

**शिलात्मक**–न., खनिज० सैन्धवम् (ध. २.२५; पृ. ७३)

**शिलात्मज**–न., खनिज० मुण्डलोहम् ( रा. १३.२९; पृ. २११)

**शिलान्त**–पु., वनस्पति० अश्मन्तकः ( रा. ९.२९०; पृ. ४६ )

**शिलिका**–स्त्री., निशानार्थं नाम शस्त्रादितैक्ष्ण्यार्थं शिलाविशेषः ( असंसू. ३४.३७ )

**शिलीन्ध्र**–न., वृक्ष० वर्षासु भूमिः शिलीन्ध्रोज्ज्वला भवति, छत्रकम् ( असंसू. ४.४२ )

**शिलोञ्छवृत्ति**–वि., भूमिपतितस्योत्सृष्टस्य कणशः शस्यग्रहणं शिलः भूमिष्ठमात्रस्य शस्यस्य ग्रहणमुञ्छः, तद्वृत्तिः तज्जीवनोपायाश्रयः इत्यर्थः (सुचि.११.१२)

**शिलोत्थ**–न., खनिज० शैलेयम् ( रा. १२.१३१; पृ. १११ )

**शिलोद्भव**–न., खनिज० शिलाजतु ( र. २.१२२ ) शैलेयम् ( ध. ३.७३; पृ. ११० )

**शिलोद्भेद**–पु., वनस्पति० पाषाणभेदः ( चचि. ३०.९० )

**शिलिपका**–स्त्री., वनस्पति० गुणाः– मधुरा, शीता वृष्यं बलदं चास्या बीजम् ( रापरि. ८.४९; पृ. ३६१ )

**शिलिपन्**–पु., भैषज्य० नखम् ( ध. ३.५८; पृ. १०७ )

**( शिलिपनी )**–स्त्री., वनस्पति० शिलिपका ( रापरि.८.४९; पृ. ३६१ )

**शिल्हक**–पु., वनस्पति० स्योनाकः (ध. १.११५; पृ. २८)

**शिव**–वि., क्षारस्य गुणेष्वेकः, सौम्यः ( सुसू. ११.१६ ) पु., खनिज० पारदः ( र. १२.१२९-३२; रा. १३.४१; पृ.२१४; अहृसू. ६.२७ ) निर्यास० गुग्गुलुः ( ध. ३.१२७; पृ. १२० )

न., कल्याणम् ( सुचि. ३०.२७ )
खनिज० सैन्धवम् ( ध. २.२५; पृ. ७३ )
श्वेतटङ्कणम् ( रा. ६.३१; पृ. ७३ )
लोहम् ( ध. ६.२६; पृ. २१० )
सामुद्रलवणम् ( रा. ६.४२; पृ. ७५ )
वनस्पति० आमलकम् ( ध. १.२१५; पृ. ५१ )

**(शिवा)**–स्त्री., वनस्पति० आमलकम्
( ध. १.१२५; पृ. ५१. असंसू. १५.४८ )
भैषज्य० गोरोचना ( रा. १२.३३; पृ. ९८ )
वनस्पति० हरीतकी ( ध. १.२०५; पृ. ४९. र. १२.३८-३९ )
नीलदूर्वा ( रा. ८.२२६; पृ. १६३ ) द्र० 'दूर्वा'
हरिद्रा ( रा. ६.७९; पृ. १८ )
पक्षि० ( असंशा. १२.५ )

**–कृतागद**–पु., योग० विषहरौषधगणः, गजपिप्पलिकासीसक्षारयष्टिमधूरकरक्तानतवचादन्त्यश्च ( असंउ. ४० )

**–ज**–पु., खनिज० पारदः ( रा. ११.८२ )

**(–जा)**–स्त्री., वनस्पति० लिङ्गिनी ( रापरि. ३.१७; पृ. ३३० )

**–दारु**–पु., वनस्पति० देवदारुः (रा. १२.१०३; पृ. २१)

**–द्रुम**–पु., वनस्पति० बिल्वः ( रा. ११.१३५; पृ. २७ )

**–द्विष्टा**–स्त्री., वनस्पति० केतकी ( रापरि. १०.१; पृ. २०४ )

**–पिण्ड**–पु., वनस्पति० बुकः ( रा. १०.३३; पृ. १३८ )

**–पुष्पक**–पु., वनस्पति० अर्कः ( रा. १०.२४; पृ. १३७ )

**–प्रिय**–न., वनस्पति० रुद्राक्षः ( रापरि. ११.१५; पृ. ३७४ )

**–बीज**–न., खनिज० पारदः ( रा. १३.४१; पृ. २१४ )

**–मत**–पु., वनस्पति० वसुकः ( रापरि. ५.३७; पृ. ३४३ )

**–मल्लक**–पु., वनस्पति० अर्जुनः ( रा. ९.१९१; पृ. १९३ )

**–( मल्लिका )**–स्त्री., वनस्पति० वसुकः ( रापरि. ५.३७; पृ. ३४३ )
बुकः ( ध. ४.१९; पृ. १३८ )



**–मल्ली**–स्त्री., वनस्पति० वसुकः ( रा. १०.३४; पृ. १३८ )

**–वल्लभा**–स्त्री., वनस्पति० शतपत्री ( ध. ५.१५१; पृ. २०१ )

**–वल्लिका**–स्त्री., वनस्पति० लिङ्गिनी ( रापरि. ३.१६; पृ. ३३० )

**–वल्ली**–स्त्री., वनस्पति० श्रीवल्ली ( रापरि. ८.३३; पृ. ३५९ )
लिङ्गिनी ( रापरि. ३.१७; पृ. ३३० )

**–शेखर**–पु., वनस्पति० धत्तूरः ( रा. १०.११; पृ. १३५ )
वनस्पति० वसुकः ( रापरि. ५.३७; पृ. ३४३ )
बुकः ( ध. ४.१९; पृ. १३८ )

**–संभव**–पु., खनिज० पारदः ( र. १.८७ )

**शिवाक्ष**–पु., वनस्पति० रुद्राक्षः (रापरि. ११.१५; पृ. ३७४)

**शिवाङ्क**–पु., वनस्पति० वसुकः (रा. १०.३३; पृ. १३४)

**शिवाटिका**–स्त्री., निर्यास० नाडीहिङ्गु (ध. २.४०; पृ. ७७)
वनस्पति० काकोदुम्बरिका ( ध. ५.८८; पृ. १८७ )
श्वेतपुनर्नवा ( असंउ. १२ )

**शिवाटी**–स्त्री., वनस्पति० श्वेतपुनर्नवा (ड. सुउ. २३.४)

**शिवात्मज**–न., खनिज० सैन्धवम् (रा. ६.३३; पृ. ७३)

**शिवाह्लाद**–पु., वनस्पति० वसुकः (रा. १०.३४; पृ. ३१८)

**शिवाह्व**–पु., वनस्पति० वसुकः ( ध. ४१९; पृ. १३८ )

**( शिवाह्वा )**–स्त्री., वनस्पति० रुद्रजटा ( रापरि. ३.२४; पृ. ३३१ )

**शिवेशा**–स्त्री., वनस्पति० शमी (रा. ८.१५२; पृ. १८८)

**शिवेष्ट**–पु., वनस्पति० वसुकः ( रा. १०.३३; पृ. १३८)
बिल्वः ( रा. ११.१३४; पृ. २७ )

**( शिवेष्टा )**–स्त्री., वनस्पति० नीलदूर्वा ( रा. ८.२२६; पृ. १६३ ) द्र० 'दूर्वा.'

**शिवा**–स्त्री., ( ध. ५.९५ )

**–फला**–स्त्री., वनस्पति० शमी (ध. ५.९५; पृ. १८८)

**शिशिर**–पु., ऋतु० उत्तरायणे आदानकाले माघफाल्गुनद्वयात्मकऋतुः ( चसू. ६.४ ) अस्मिन् तिक्तरसो बलवान् भवति । सर्वप्राणिनां बलाऽपहरणं च भवति । तत्र हेमन्ताऽपेक्षया शैत्यमधिकमादानकालजं रौक्ष्यं च भवति । (सुसू. ६.६-१० ) तत्र हेमन्ततुवद् विधिः कार्यः, द्र० 'हेमन्त'
वनस्पति० उशीरम् ( रा. १२.२६; पृ. ९७ )
न. भैषज्य० सामुद्रलवणम् ( ध. २.३४; पृ. ७५ )
पु., कुधान्य० ( असंसू. ७.१५ )

**( शिशिरा )**–स्त्री., वनस्पति० नागरमुस्ता ( रा. ६.६२; पृ. १५ )
रेणुका ( रा. ६.१००; पृ. १०५ )
**–चर्या**–स्त्री., शिशिरे आचरणविधिः हेमन्तवत् विधिः ( सुउ. ६४.३१ ) शिशिरतौं वर्तनं० हेमन्ते या चर्या निर्दिष्टा सैव कार्या । शिशिरे हेमन्तापेक्षया शैत्यमधिकमस्ति तथादानकालजं रौक्ष्यमपि विद्यते अतः स्निग्धादिसेवनं विशेषतः कार्यम् ( अहृसू. ३.९७ )
**–ज्वर**–पु., शीतज्वरः ( चचि. ५.१० )
**–द्वय**–न., वनस्पति० एकं सितचन्दनमन्यद्रक्तचंदनञ्च ( अहृसू. १५.११ )
**–प्रीति**–स्त्री., लक्षण० शैत्यप्रीतिः (अहृसू. ११.१७)
**शिशिराभिनन्दा**–स्त्री., लक्षण० शीताभिलाषः ( ड. सुउ. ६.७ )
**शिशिराश्रुता**–स्त्री., लक्षण० नेत्राच्छीताश्रुस्रावः ( सुउ. ६.६ )
**शिशु**–पु., बालः ( कासंखिल. १२.३ )
**–प्रिय**–पु., आहारद्रव्य० गुडः ( रा. १४.१९८; पृ. १६० )
आहारद्रव्य० नवनीत ( ध. ६.२२९;पृ. २४८ )
**–मार**–पु., जलचरप्राणि० ( चचि. २(२).१० ) सपाद-जलजन्तुः, अम्बुकूर्मः (सुचि. २६.१९; र. १०.७६)
**–मारमज्जा**–स्त्री., शारीर० अम्बुकूर्मस्य मज्जाख्यो धातुः निरुद्धमण्याख्ये गुह्यरोगे परिषेकार्थमुपयुज्यते ( असंउ. ३९ )
**–मारवसा**–स्त्री., शारीर० अम्बुकूर्मस्य मांसस्नेहः गुह्यरोगे परिषेकार्थमुपयुज्यते ( असंउ. ३९ )
**शिशुकमदन**–पु., सर्प० मण्डलिजातीय ( सुक. ४.३४)
**शिष्य**–पु., छात्रः ( सुसू. २.३ )
**शिष्योपनयन**–न., शिष्यस्योपनयनम् अध्ययनार्थं शिष्यस्याचार्यसमीपे नयनम् ( असंसू. १.१ )
**शिष्योपनयनीयाध्याय**–पु., (परिव०) अध्यायसंज्ञा० ( सुसू. २.१ )
**शीकर**–न., सतुषारो वायुः ( असंचि. ९ )
**शीघ्र**–वि., गुण० अतिगतिः, झटितकर्मकारी ( वातगुणः ) ( चवि. ८.१०० )
न., वनस्पति० लामज्जकम् ( ध. ३.८६; पृ.११३ )
**(शीघ्रा)**–स्त्री., वनस्पति० दन्ती ( ध. १.२२३; पृ.५३ )
**–पुष्प**–पु., वनस्पति० अगस्त्यः ( रापरि. १०.१३; पृ. ३६९ )

**–प्रभाव**–पु., पारदयोग० पारदगंधकव्योमतीक्ष्णतालादिसाधितोऽयं ग्रहण्यतीसारादिघ्नः ( र. १६.९६ )
**–वलीपलित**–वि., अकाले वलीपलितम् (चशा.८.२१)
**शीत**–वि., अनुष्णः शीतलः ( गुण० ) ( चसू. १.५९; सुसू. ४६.५१५; चशा. ६.१० )
कल्प० आपोथितात् द्रव्यात् प्रतप्ते तोये निशि संस्थितात् यः कषायः निर्याति सः ( चसू. ४.७ )
विंशतिगुणेष्वेकः ( चशा. ६.१० )
श्लेष्मा ( ड. सुशा. ३.१८ )
न., लक्षण० शैत्यम् ( चसू.१४.२३ )
रसाञ्जनम् ( ड. सुउ. १७.१३-१४ )
कर्पूरम् ( ड. सुउ. १७.१३-१४ )
वनस्पति० चन्दनम् ( अहृसू. १५.३७ )
पु., पर्पटः ( रा. ५.६५; पृ. पित्तपापडा. १६ )
निर्यास० कर्पूरः ( रा. १२.५६; पृ. १०१ )
वनस्पति० त्वक् ( रा. ६.७७; पृ. ७९ )
बर्बरिकम् ( रा. १२.१७०; पृ. ९५ )
पु., निम्बः ( रा. ९.४४; पृ. १३ )
श्लेष्मातकः (रा. ११.१४८; पृ. १८८)
पीलुः ( ध. ५.५१; पृ. १७८ )
**( शीता )**–स्त्री., वनस्पति० तेजोवती ( ध. १.२६६; पृ. २६१ )
कुटुम्बिनी ( रापरि. ५.२२; पृ. ३४१ )
शिलिपिका ( रापरि. ८.४९; पृ. ३६१ )
अतसी ( ध. ६.११५; पृ. २३१)
बला ( रा. ४.४३२; पृ. ६६ )
अतिबला ( रा. ४.४३०, पृ. ६५ )
आमलकम् (रा. ११.३२५; पृ. ५१)
आसुत० सुरा ( रा. १४.३०१; पृ. २५४ )
**–कषाय**–पु., कल्प० द्रव्यं संक्षुण्णमुष्णोदके प्रक्षिप्य निशास्थितम् । द्रव्यादापोथितात् तोये प्रतप्ते निशि संस्थितात् । यः कषायोऽभिनिर्याति, स शीतः समुदाहृतः ( चचि. ३.१९७ ) तस्य लक्षणम्–' द्रव्यमापोथितं सम्यगत्युष्णोदकसंस्थितम् ' रात्रिपर्युषितं शीतकषायं फाणितं विदुः। ( सुचि. १६.११ )
**–काम**–वि., लक्षण० शीतं कामयमानः शीताभिलाषी ( चचि. १६.२१ )
**–कुम्भिका**–स्त्री., वनस्पति० काष्ठपाटला ( चचि. ३.२५८ )
**–क्षय**–पु., लक्षण० शैत्यहानिः ( अहृसू. १७.१५ )

–गन्ध–पु., वनस्पति० चन्दनम् ( रा. १२.३; पृ. ९३ )

–गात्र–वि., लक्षण० ( मानिज्वर. १३; असंशा. ४.३१ )

–ज्वर–पु., लक्षण० शीतयुक्तो ज्वरः ( चवि. २.७ )

–तोय–न., शीतोदकम् ( सुसू. ४६.४२० )

–दन्त–पु., वाताद्दन्ता उष्णसहाः शीतस्पर्शेऽधिकव्यथाः भवन्ति । शूलेन दाल्यन्ते इव च वेदना ( असंउ. २५ )

–दन्तिका–स्त्री., वनस्पति० नागदन्ती ( रापरि. ५.२७; पृ. ३४२ )

–द्रव्याञ्जन–न., शुक्तिकायां वैदूर्यादिसूक्ष्मचूर्णेन शर्कराक्षौद्रमिश्रितेनाञ्जनमाशुकर्मकारि ( सुउ. १०.१४ )

–पाकिन्–पु., वनस्पति० गुञ्जाभेदः ( काखिल. ११.१५१-५२ )
पु., वनस्पति० गण्डदूर्वा ( चचि. ३.२५८ )
गुञ्जा ( ध. ४२९; पृ. १४०; अहसू. १.५६ )
शीतला मधुरस्कन्धगतद्रव्येष्वेकम् ( चवि. ८.१३९)

–( पाकिनी )–स्त्री., वनस्पति० बला (रा. ४.४३२; पृ. ६६. )

–पाक्य–न., वनस्पति० बलाफलम्, गुणाः– रसपाकयोर्मधुरं शीतं रूक्षं विष्टम्भि दुर्जरं वातकोपनं रक्तपित्तप्रसादनं च ( सुसू.४६.१९० )

–पादकरानन–वि., लक्षण० शीतचरणहस्तमुखः ( सुचि. २.५१ )

–पादकरोच्छ्वास–वि., लक्षण० पादौ करौ उच्छ्वासः यस्यारिष्टभूतं त्रयमेतद्यदैकदैव शीतं भवति सः ( सुसू. ३१.१४ )

–पिटिका स्त्री., शीता पिडका ( असंशा. ९.२९ )

–पिडका–स्त्री., कफकृता पिडका ( चनि. १.२७ ;

–पित्त–न., रोग० शीतमारुतसंस्पर्शात् दुष्टौ कफवातौ पित्तेन मिलित्वा अन्तर्बहिर्विसर्पतः । तदा पिपासाऽरोचकहृल्लासाङ्गसादाङ्गगौरवाणि रक्तनेत्रत्वं च जायते ( मानि. )

–पुष्प–पु., वनस्पति० शिरीषः ( रा. ९.१८८; पृ. १९२ )

(–पुष्पा )–स्त्री., वनस्पति० अतिबला ( रा. ४.४३०) पृ. ६५ )

–पूतना–स्त्री., बालग्रह० तत्र लक्षणानि–कम्पो रोदनं तिर्यगीक्षणं तृष्णाऽन्त्रकूजोऽतीसारो वसावद्विस्रगन्धिता, एकस्य पार्श्वस्य शीतत्वमपरस्य चोष्णत्वम् ( असंउ. ३ )

–पूतनाप्रतिषेध–पु., अध्यायसंज्ञा० ( सुउ. ३४.१ )

–प्रतीकार–पु., शीतविपर्ययः ( उष्णोपचारादिः ) उष्णः ( सुसू. ३५.२१ )

–प्रभ–पु., निर्यास० कर्पूरः ( रा. १२.५६; पृ. १०१ )

–प्रशमनगण–पु., द्रव्यगण० महाकषायवर्गे एको गणः, तगराऽगुरुधान्यकशृङ्गवेरभूतीकवचाकण्टकार्यग्निमन्थस्योनाकपिप्पल्य इति शीतप्रशमनानि द्रव्याणि भवन्ति ( चसू. ४.१७ )

–प्रिय–पु., वनस्पति० पर्पटः ( रा. ५.६५; पृ. १६ )

–फल–पु., वनस्पति० श्लेष्मातकः ( रा. ११.१४८; पृ. १८८ )
उदुम्बरः (रा. ११.१३७; पृ. १८६)
न., रावणाम्लिका ( सुसू. ४६.१६३ )

–भञ्जिरस–पु., पारदयोग० पारदरसकतालुतुत्थगंधकादिसाधितोऽयं विषमज्वरघ्नः ( र. १२.३०-३३ )

–भीरु–पु., वनस्पति० मल्लिका ( ध. ५.१३४; पृ. १९७ )

–भीरुक–पु., शालिवर्गेषु एकः, द्र० ' शालि ' ( सुसू. ४६.४; अहसू. ६.३ )

–मञ्जरी–स्त्री., वनस्पति० शेफालिकाभेदः ( रा. ४. १२१; पृ. १५० ) द्र० ' शेफालि '

–मर्दक–पु., वनस्पति० रसोनः (रा. ७.९४; पृ.१४७)

–मेह–पु., कफदोषप्रधानः प्रमेहभेदः, तल्लक्षणम्– अतिमधुरं शीतं मूत्रम् अतिमेहति ( चनि. ४.१०; असंनि. १० ) द्र० ' प्रमेह '

–रस–पु., शीतकषायः ( चचि. ७.४४ )

–रसिक–पु., आसुत० शीतेक्षुरसकृतं मद्यम् । स च शीतरसिको ( सीधुः ) जरणीयो विबन्धघ्नः स्वरवर्णविशोधनः शोफोदराऽर्शसां हितो लेखनश्च ( सुसू. ४५.१८५; चसू. २७.१८५ )

–वती–स्त्री., रेवतीग्रहस्य नाम ( का. बालग्रहचि. )

–वरा–स्त्री., वनस्पति० बला (रा. ४.४३२; पृ. ६६)

–वल्कल–पु., वनस्पति० उदुम्बरः ( ध. ५.८६; पृ. १८६ )

–वल्लभा–स्त्री., वनस्पति० जम्बुभेदः ( ध. ५.८४; पृ. १८६ ) द्र० 'जम्बू'

–वल्ली–स्त्री,, वनस्पति० शीतपर्णी ( चचि. ३.२६७ )

**-वात**-पु., रोग० अस्मिन्व्याधौ गात्राणि हिमवच्छीतानि रोमाञ्चो ज्वरोऽक्षिवेदनाऽऽलस्यं चेति लक्षणानि जायन्ते ( र. २१.३; अहृसू. २९.६६ )

**-वीर्य**-पु., वनस्पति० पद्मकः (ध. ३.८८ पृ. ११३) न., वीर्याख्यो गुणः शीतवीर्यं द्रव्यं ल्हादनं जीवनं स्तम्भनं रक्तपित्तयोः प्रसादं च करोति ( अहृसू. ९.१९ )

**-( वीर्या )**-स्त्री., वनस्पति० मेथिका ( ध. ६. १११; पृ. २३१ ) नीलदूर्वा ( ध., ४. १४३; पृ. १६३ ) द्र० 'दूर्वा'

**-वीर्यक**-पु., वनस्पति०० प्लक्षभेदः द्र० 'प्लक्ष' ( रा. ११.१२५; पृ. १८५ )

**-शिव**-पु., शतपुष्पाभेदः ( सुचि. ११.१० ) निर्यास० कर्पूरः ( सुसू. १४.३५ ) न., लवण० सैन्धवम् ( ध. २.२५; पृ. ७३. असंसू. ३६.१० )

**(-शिवा )**-स्त्री., वनस्पति० मिश्रेया ( ध. २.४; पृ. ६९ )

**-शोफता**-स्त्री., लक्षण० शोफस्य शैत्यम् ( अहृसू. २९.९ )

**-संरोध**-पु., लक्षण० शीतस्य निरोधः ( अहृसू. ३.७ )

**-संवासा**-स्त्री., वनस्पति० वासन्ती ( ध. ५.१३९; पृ. १९८ )

**-सह**-पु., वनस्पति० निर्गुण्डी ( ध. ४.८१; पृ. १५० )

**(-सहा)**-स्त्री., वनस्पति० शेफालिका ( रा. ४.११९; पृ. १५० ) वासन्ती ( रा. १०.२३४; पृ. १९८ )

**-सहत्व**-न., लक्षण० शीतं सहते इति शीतसहः, तस्य भावः ( चनि. १.३३ )

**-साध्य**-वि., शीतोपक्रमसाध्यः ( चवि. ३.३९ )

**शीतक**-पु., लक्षण० शीतम् ( चक. चचि. २१.३४ ) वनस्पति० अम्ललोटः, अम्लस्कंधद्रव्येष्वेकम् ( चवि. ८.१४० ) शीतज्वरः ( र. २९.१३८-१४०; हे. अहृसू. ५.३० ) शीतपूर्वो विषमज्वरः ( अरु. अहृसू. ५.३० )

**शीतल**-पु., वनस्पति० चम्पकः ( ध. ५.१४२; पृ. १९९ )

**( शीतला )**-स्त्री., रोग० भूताऽधिष्ठितविषमज्वरवद्देव्या शीतलयाऽऽक्रान्ता मसूर्यः शीतला बहिः ज्वरयेयुः। ताः सप्तविधाः ज्वरपूर्वा शीतला बृहत्स्फोटैः बृहती भवेत्। सा सप्ताहान्निःसरति सप्ताहाच्च पूर्णतां गच्छति। तृतीये सप्ताहे स्वयं शुष्यति स्खलति च। सा वातश्लेष्मसमुद्भूता कोद्रवा कोद्रवाकृतित्वात्। सा पाकं न गच्छति। कश्चित्तां पक्वेति प्राह। सा विशेषतो जलशूकवदङ्गानि विध्यति सप्ताहाद्दशाहाद्वा विनौषधमेव शान्तिं याति। पाणिसहेति ख्याता शीतला ऊष्मणा ऊष्मजारूपा सकण्डूः स्पर्शप्रियान। सा सप्ताहात् स्वयमेव शुष्यति। चतुर्थी शीतला सर्षपाकारा पीतसर्षपवर्णिनी सर्षपिकेति नाम्ना प्रकीर्तिता। अत्राभ्यङ्गं विवर्जयेत्। एषा किञ्चिदूष्मनिमित्तेन राजिकाकृतिर्जायते। सा बालानां सुखं स्वयं शुष्यति। षष्ठी शीतला लोहितोत्तममण्डला कोष्ठवज्जायते। ज्वरपूर्वा सा व्यथायुक्ता। अस्यां ज्वरो दिनत्रयं तिष्ठति। स्फोटानां मेलनादेषा बहुस्फोटा दृश्यते। एकस्फोटे च सा कृष्णा चर्मजाऽभिधा च बोद्धव्या ( मा. परि. भाव. मध्यमत्वं ) वनस्पति० नीलदूर्वा ( ध. ४.१४३; पृ. १६३ ) द्र० 'दूर्वा' कुटुम्बिनी ( रापरि. ५.२२; पृ. ३४१ ) आरामशीतला ( रापरि. १०.५२; पृ. ३७२ ) श्रीवल्ली ( रापरि. ८.३३; पृ. ३५९ )

**-च्छद**-पु., वनस्पति० चम्पकः ( रा. १०.२३८; पृ. १९९ )

**-रजस्**-न., निर्यास० कर्पूरः (ध. ३.३१, पृ. १०१)

**शीतलक**-पु., वनस्पति० जम्बीरः ( रा. १०.८०, पृ. १४४ ) न., वनस्पति० कुमुदम् (रा. १०.२४६; पृ. १६५)

**शीतांशु**-पु., चन्द्रः ( सुसू. ६.८ ) चंद्र. निर्यास० कर्पूरः ( रा. १२.५६; पृ. १०१. अहृसू. ३.५१)

**शीताग्निता**-स्त्री., अग्नेः शीतत्वम्, विंशतिश्लेष्मविकारेष्वेकः, अग्निमान्द्यं पाचनाक्षमत्वम् ( चसू. २०.१७ )

**शीताङ्ग**-पु., रोग० सन्निपातज्वरभेदः ( मा ज्वर. २ ) सान्निपातिक-त्रिदोषात्मक ज्वराचा प्रकार. लक्षणम्- हिमसदृशशरीरो वेपथु श्वास हिक्का शिथिलितसकलाङ्गः क्लमथुदवथुकासच्छर्द्यतीसारयुक्तःखिन्ननादोग्रतापः शीतगात्रः, प्रभावात् त्वरितमरणहेतुः ( अश्विनीसंहिता, मा. २१,१३ )

**(शीताङ्गी)**–स्त्री., वनस्पति० हंसपादी (रा. ५.१६७; पृ. २५६)

**शीताञ्जन**–न., स्रोतोञ्जनम् (चक्र. चसि. ९.११५)

**शीताद**–पु., रोग० दन्तमूलगतरोगः, लक्षणम्–यस्याकस्माद्दन्तवेष्टेभ्यः रक्तं प्रवर्तते, दुर्गन्धीनि कृष्णानि प्रक्लेदीनि मृदूनि च दन्तमांसानि शीर्यन्ते, परस्परं च पचन्ति। स कफशोणितसंभवः शीतादो नाम व्याधिः (सुनि. १६.१४-१५)
भैषज्य० रालः (रा. १२.१७६; पृ. ११९)
न., वनस्पति० चन्दनम् (रा. १२.२; पृ. ९३)
रत्न० मौक्तिकम् (रा. १३.६६; पृ. २१८)
वनस्पति० पद्मकः (रा. १२.१४९; पृ. ११३)

**शीताभिप्रायता**–स्त्री., लक्षण० शीतप्रियत्वम् (चनि. १.२४)

**शीताभिभूत**–वि., शीतजन्यव्याधिग्रस्तः (चचि. १.३५)

**शीताभ्र**–पु., निर्यास० कर्पूरः (ध. ३.३१; पृ. १०१)

**शीताम्बु**–न., शीतजलम् शीताम्बुना विदग्धमन्नं शीघ्रं परिपाकमेति। अस्य शैत्येन पित्तं निहन्ति (अहसू. १३.८)

**शीतारि**–पु., पारदयोग० पारदस्यैकं भागं गन्धकस्य च द्वौ भागौ पुनर्नवाचित्रकयोः क्वाथेनादौ विमर्द्य पश्चादष्टगुणे पक्वार्कपत्ररसेन पाचयेत्। ततस्तत्र पारदादर्धभागं वत्सनाभं प्रक्षिप्य चित्रकस्य क्वाथेन विपाचयेत्। मात्रा–वल्लं तदर्धं वा। अनुपानम्–आर्द्रक–स्वरसः मरीचचूर्णं च सघृतम्। समय-मर्यादा–मासः, अयं योगो वातव्याधिविनाशनः (र. २०.११-१२)

**शीतार्तवा**–वि., शीतमार्तवं यस्याः सा (स्त्री) (का. गुल्म. १५)

**शीतासहत्व**–न., लक्षण० शीतं न सहते, इति शीतासहिष्णुत्वम् (चनि. १.३३)

**शीतिकाज्वर**–पु., शीतपूर्वो ज्वरः, विषमज्वरो वा (र. ५.१८५-१९०)

**शीतीकरण**–न., विशेषतः द्रवद्रव्यस्य अधिकत्वेन शीतलकरणोपायः, स च सप्तविधः–प्रवातस्थापनम्, उदकप्रक्षेपणं, यष्टिकाभ्रामणं, व्यजनं, वस्त्रोद्धरणं, वालुकाप्रक्षेपणं, शिक्यावलम्बनं च (सुसू. ४५.१९)

**शीतोच्छ्वास**–वि., लक्षण० अरिष्टलक्षणभूतः शीतोच्छ्वासो यस्य सः (चइ. ११.२०)

**शीतोदक**–न., शीतजलम् (सुसू. ४६.४२४)
द्र० 'जल'

**शीतोदकमात्रा**–स्त्री., अल्पं शीतोदकम् (सुचि. २९.१२)

**शीतोपचार**–पु., शीतेन चिकित्सा, शीतस्पर्शद्रव्येनोपक्रमः, रक्तपित्ते दाहादिषु च बाह्यतः शीतस्पर्शद्रव्योपयोगः कार्यः (सुउ. ४५.३८; अहसू. २७.४७)

**शीतोष्णव्यत्यास**–पु., शीतोष्णपरिवर्तनम् (चनि. ५.६)

**शीधु**–पु., आसुत० पक्वेक्षुरसकृतः मद्यविशेषः (चसू. ६.१२)

**शीरिन्**–पु., वनस्पति० मृदुदर्भः (ध. ४.१३३; पृ.१६१)

**शीर्ण**–वि., जर्जरीभूतम् (अहसू. २४.१)
**–पक्ष्मन्**–वि., शीर्णानि पक्ष्माणि यस्य सः (अहसू. २४.१)
**–रोमक**–न., सुगन्धिद्रव्य० स्थौणेयम् (ध. ३.६९; पृ. ११०)
**–लोमन्**–वि., लक्षण० विगलितानि लोमानि यस्य सः (चचि. १६.१५)
**–वृत्त**–न., वनस्पति० त्रपुसम् (ध. १.१७९; पृ.४२)
**–वृन्त**–न., वनस्पति० त्रपुसभेदः, बालशीर्णवृन्तगुणाः–सक्षारं मधुरं कफावहं च। मध्यशीर्णवृन्तगुणाः–भेदनं दीपनं हृद्यं च। जीर्णशीर्णवृन्तगुणाः–आनाहाऽष्ठीलनुत् लघु च (सुसू. ४६.२२०; अहसू. ६.६०)

**शीर्ष**–पु., वनस्पति० श्रीवेष्टकः (ध. ३.१३३; पृ.१२१)
न., वनस्पति० कालेयकम् (रा. १२.४०; पृ. ९९)
**–केसरक**–पु., वनस्पति० बकुलः (ध.५.१५४; पृ.२०२)
**–रोग**–पु., शिरोरोग० (चचि. ३०.२४१)
**–विरेचन**–न., शिरोविरेचनम् (नस्यम्) (चसू. १.७९)

**शीर्षाद**–पु., कृमि० शिरःसर्पणशीलः (चवि. ७.२०)

**शील**–न., सहजं वृत्तम् (चइं. १.३) सहजो वस्तुषु रागः, शीलमनुशीलनेन परीक्षेत (चक्र. चवि. ४.८; सुसू. ३०.३)

**शीलन**–न., सततक्रिया, अभ्यासः (अहसू. १६.३, सुचि. ३७.७७)

**शीस**–न., खनिज० कासीसम् (अहसू. १०.२७; रा. १३.१८९; पृ. ११९)

**शुक**–पु., पक्षि० तन्मांसं रसे कषायं विपाके अम्लं, रूक्ष-शीतलं शोषकासक्षयहितं संग्राहि लघु दीपनं च (चसू. २७.७४; अहसू. ३.४०; असंसू. ७.७२; ध. ६.४५०; पृ. २७७)

हिं.—तोता.
**म.—पोपट.**
बं.—टिया, पाखी.
ता.—किळि.
वनस्पति० चर्मकारवटः ( सुउ. ५१.२३ )
**–च्छद्**–न., वनस्पति० स्थौणेयकम् ( ध. ३.६९; पृ. ११० )
**–जिह्वासंस्थान**–वि., आकृत्या शुकजिह्वाग्रसदृशम् ( अर्शः ) ( सुनि. २.११ )
**–तरु**–पु., वनस्पति० शिरीषः ( रा. ९.१८९; असंउ. ८; पृ. १९२ )
**–तुण्ड**–पु., खनिज० किञ्चित्पीतश्चर्मारोऽपरपर्यायो हिङ्गुलप्रकारः ( र. ३.१५५ )
रक्तवर्णो गन्धकप्रकारः (र. ३.१६)
**–नस**–पु., वनस्पति० टिण्डुकः ( काखिल. ११.९४ )
**(–नसा )**–स्त्री., वनस्पति० चर्मकारवटः; इयं एका नाडीव्रणोपयोगिनाम् ( सुचि. १७.३७ )
**–नाशन**–पु., वनस्पति० चक्रमर्दः ( रा. ४.९; पृ. १३५ )
**–नास**–पु., वनस्पति० टिण्टुकः ( ध. १.११४; पृ. २८ )
**–( नासा )**–स्त्री., वनस्पति० शुकनासा, चर्मकारवटः ( असंउ. ३९; सुचि. १.११५ )
**–पिच्छ**–पु., खनिज० अमलसारो गन्धकः ( र. ३.१५ )
**–पिच्छक**–न., खनिज० अमलसारगन्धकः ( र. २२.३०-३६ )
**–पुच्छ**–न., वनस्पति० स्थौणेयकम् ( ध. ३.६९; पृ. ११० )
**–पुच्छक**–न., वनस्पति० स्थौणेयकम् ( रा. १२.१२५; पृ. ११० )
**–प्रिय**–पु., वनस्पति० शिरीषः ( ध. ५.११२; पृ. १९२ )
**(–प्रिया )**–स्त्री., वनस्पति० जम्बूः ( रा. ११.१२८; पृ. १८६ )
महाजम्बूः ( रा. ११.१३०; पृ. १८६ )
द्र० ' जम्बू '
**–फल**–पु., वनस्पति० अर्कः ( रा. १०.२६; पृ. १३७ )
**–बर्ह**–न., वनस्पति० स्थौणेयकम् ( ध. ३.६९; पृ. ११० )
ग्रन्थिपर्णकम् ( चसू. ५.२३ )
**–वक्त्र**–पु., निर्विषसर्प० ( असंउ. ४१ )
**–पूर्णकण्ठत्वम्**–स्त्री., लक्षण० ( र. २८.१५ )
**–वल्लभ**–पु., वनस्पति० दाडिमः (ध. २.६१; पृ. ८१)
**शुकाख्य**–पु., वनस्पति० चर्मकारवटः (ड. सुक. ७.३४)
**( शुकाख्या )**–स्त्री., वनस्पति० चर्मकारवटः, अन्ये शुकशिम्बामाहुः ( ड. सुउ. ४४.१९ )
**शुकाह्वय**–पु., वनस्पति० चर्मकारवटः ( सुचि. १८.४८-४९ )
**शुकेष्ट**–पु., वनस्पति० राजादनः (रा. ११.१४७; पृ.१८७)
शिरीषः ( रा. ९.१८८; पृ. १९२ )
**शुकोदर**–न., वनस्पति० तालिसकम् ( ध. २.५३; पृ. ८०. )
**शुक्त**–न., आसुत० यन्मस्त्वादि शुचौ भाण्डे सगुड-क्षौद्रकाञ्जिकम् तत् ( चसू. २७.२८४ ; असंसू. ७.२४३ ) तद्गुणाः–मधुरं, तिक्तमम्लमुष्णं, तीक्ष्णं, लघु, कटु, रक्तपित्तकरं, पाचनं, भेदनं, मूत्रलं, हृद्यं, रोचनं, कफपित्तघ्नं, पाण्डुकृमिशिरो-रोगनासिकादुर्गन्धनाशनम् ( अहसू. ५.७६; ध. ६.२४६ )
चुक्रम्, तण्डुलाम्बुसौवीरादिभिः कृतसंधानम् ( ड. सुउ. ३९.२७२ )
वि., अम्लीभूतम् ( काखिल. १६.९ )
**( शुक्ता )**–स्त्री., वनस्पति० अम्लिका ( ध. ५.३३; पृ. १७४ )
**–त्व**–न., अम्लता ( च. चचि. १५.४४ )
**–पाक**–पु., लक्षण० शुक्तमिवान्नस्य पाकः ( चचि. १५.६० )
**शुक्तक**–पु., रोग० अम्लपित्तरोगः ( काखिल. १६.४३ )
**शुक्ति**–स्त्री., मान० अर्धपलम् ( चक. १२.९१; सुचि. ६.१८ )
वनस्पति० बदरी ( चसू २५.४९ )
वारिशयप्राणि० मुक्ताप्रभवो जन्तुः ( चसू. २७.४० )
नेत्ररोग० नेत्रस्य शुक्लभागे जलशुक्तिरिव किञ्चि-द्दीर्घाः श्यावाः पिशितनिभा ये बिन्दवः, स शुक्तिसञ्ज्ञो नेत्ररोगः ( सुउ. ४.७ )
व्याघ्रनखभेदः ( सुसू. ३८,२४-२५ )
जलशुक्तिः ( सुचि. २०.३ )
भैषज्य० नखम् ( ध. ३.५८; पृ. १०७ )
प्राणिविशेषास्थि ( अहसू. ३०.१६ )

-चूर्ण-न., बदरिका, तस्याश्चूर्णम् ( चचि. २५.६७ )
-ज-न., रत्न० मौक्तिकम् (ध. ६.६२; पृ. २१८ )
-पर्ण-पु., वनस्पति० सप्तपर्णः
( ध. ३.८०; पृ. ११२ )
-प्रमाण-न., अर्धपलप्रमाणम् ( सुउ. ५०.२५; पृ., १०७ )
-शङ्ख-पु., भैषज्य० नखम्
( रा. १२.१०७; पृ. १०७ )
-संभव-न., रत्न० मौक्तिकम् (ध. ६.६२; पृ. २१८)

( शुक्तिका )-स्त्री., नेत्ररोग० शुक्तिः ( सुउ. ४.३ ) पित्तं सिताऽसितश्यावपीतकान् बिन्दून् कुर्यात् । सर्वं शुक्लं मलाक्तादर्शतुल्यं सदाहरुक् च भवति । रोगेऽस्मिन् शकृद्भेदतृष्णाज्वराश्च भवन्ति ( असंउ. १३ ) तत्र चिकित्सा-त्रैफलादिघृतेन तैल्वकेन वा दोषसंशोधनाऽनन्तरं शीतैर्द्रव्यैरञ्जनं कार्यम् ( सुउ. १०.१४ )
वनस्पति० अम्लिका ( ध. ५.३३; पृ. १७४ )

शुक्र-न., सप्तधातुषु सप्तमो धातुः ( चसू. २८.४; अहसू. १.१३ ) दशप्राणायतनेष्वेकम् (चसू.२९.३) शुक्रवहस्रोतांसि ( चवि. ५.८ ) शुक्रवहे द्वे, तयोर्मूलं स्तनौ वृषणौ च ( सुशा. ९.१२ ) नृणां कृत्स्नदेहाश्रितं शुक्रम् ( सुशा. ४.२३ ) शुक्रवहे द्वे धमन्यौ ( सुशा. ९.७ ) इति शुक्रस्थानानि । मज्ज्ञः शुक्रं प्रजायते ( चचि. १५.१६; सुसू. १४.१० ) यथा पयसि सर्पिः इक्षौ च रसो गूढस्तथा नृणां शरीरेषु शुक्रं विद्यते। प्रसन्नमनसो हर्षात्तत्संप्रवर्तते । बस्तिद्वारस्याऽधो द्व्यङ्गुले दक्षिणे पार्श्वे मूत्रस्रोतःपथात् पुरुषशुक्रं प्रवर्तते (सुशा.४.२१-२३) बालेऽपि शुक्रमस्ति । किन्तु यथा पुष्पमुकुलस्थो गन्ध इहास्तीति नैवास्तीति वा वक्तुं न शक्यते तथैव सौक्ष्म्याच्छुक्रस्याऽभिव्यक्तिर्नास्ति। बालानामपि वयः परिणामात् शुक्रप्रादुर्भावो भवति। (चसू.१४.१८) रसो मासेन शुक्रीभवति ( सुसू.१४.१४) केचिदाचार्या अहोरात्राच्छुक्रोत्पत्तिमाहुः । अपरे षडहादन्नं शुक्रत्वं याति इत्याहुः । सुश्रुतादीनां मते मासेनाऽन्नं शुक्रं भवति (अहशा.३.६५-६६) वृष्याणि क्षीररसमधुकमाषकूष्माण्डहंसादिपक्ष्यण्डप्रायाणि द्रव्याणि प्रभावेण सद्यः शुक्रं कुर्वते ( अहशा. ३.६७ )
बहलं मधुरं स्निग्धमविस्रं गुरु पिच्छिलम् ( चचि. २.४(५०) ) अविदाहि, स्फटिकसंनिभम् ( चचि. ३०.१४५ ) द्रवं, मधुगन्धि, तैलक्षौद्रनिभं च (सुशा. २.११-१२) सौम्यम् (सुशा. ३.३) इति शुक्रस्वरूपम्। शुक्रसारलक्षणानि- सौम्याः सौम्यप्रेक्षिणः क्षीरपूर्णलोचना इव प्रहर्षबहुलाः स्निग्धवृत्तसारसमसंहतशिखरदशनाः प्रसन्नस्निग्धवर्णस्वरा भ्राजिष्णवो महास्फिचश्च शुक्रसाराः । ते स्त्रीप्रियोपभोगा बलवन्तः सुखैश्वर्यौऽऽरोग्यवित्तसंमानाऽपत्यभाजश्च भवन्ति ( चवि. ८.१०९ ) स्निग्धसंहतश्वेताऽस्थिदन्तनखं बहुलकामप्रजं शुक्रेण ( सुसू. ३५.१६ ) शरीरे शुक्रस्याऽर्धाञ्जलिः प्रमाणम् ( चशा. ७.१५ ) शुक्रं धैर्यं च्यवनं प्रीतिं देहबलं हर्षं बीजार्थं च करोति ( सुसू. १५.४(१) ) शुक्रस्य श्रेष्ठं कर्म गर्भोत्पादनम् ( अहसू. ११.४ ) ओजः शुक्रमलः ( अहशा. ३.६४ ) ओजः शुक्रस्योपधातुः ( शार्ङ्ग. पूर्व. ५.१७ ) शुक्रवृद्धिलक्षणानि- वृद्धं शुक्रं अतिस्त्रीकामतां शुक्राश्मरीमपि करोति ( अहसू. ११.१२ ) शुक्रक्षयलक्षणानि- क्षीणे शुक्रे चिरात् प्रसिच्येत शुक्रं शोणितमेव वा । तोदोऽत्यर्थं वृषणयोर्मेढ्रं धूमायतीव च ( अहसू. ११.२० ) शुक्रदोषजविकाराः- शुक्रस्य दोषात् क्लीबमल्पायुः विरूपं वा अपत्यं प्रजायते । तथा गर्भो न जायते पतति प्रस्रवत्यपि । दुष्टं हि शुक्रं नरं सापत्यं सदारं च बाधते.( चसू. २८.१८-१९ ) क्लैब्याप्रहर्षशुक्राश्मरीशुक्रमेहशुक्रदोषाश्च तद्दोषजाः ( सुसू. २४.९ ) वाताऽदिभिरष्टधा शुक्रदुष्टिः- वातादिकुणपग्रन्थिपूयक्षीणमलाऽऽह्वयं बीजासमर्थं शुक्रमिति ( अहशा. १.१० )
नेत्ररोग० शुक्रं द्विविधं सव्रणमव्रणं च, यत् कृष्णे दश्यरूपं भवेद्यद्वै सूच्येव विद्धं प्रतिभाति, उष्णमश्रु स्रवति, अत्यर्थं च पीडां करोति, तत् सव्रणशुक्रम्। इदं रक्तजमसाध्यं च। तत्रापि यत् दृष्टेः समीपे न भवेदवगाढं च न संस्रवेत्, अवेदनावन्न च युग्मशुक्रं, तत् सव्रणशुक्रं कदाचित् साध्यं भवेत् । असितप्रदेशे सितं स्यन्दात्मकं नातिरुक् नात्यश्रुयुक्तमाकाशे इवाच्छघनाऽनुकारि भाति । तदव्रणं शुक्रं साध्यतममिष्यते । गम्भीरजातं बहलं चिरोत्थितं शुक्रं कृच्छ्रम् अस्ति । ( सुउ. ५.४-९ ) सव्रणशुक्रचिकित्सा-सव्रणं शुक्रमुत्तानमवगाढं कर्कशं वाऽपि शिरीषबीजादिभिर्घर्षयेत् । ताम्ररजःशङ्खादिभिरञ्जनं शुक्रनाशनं भवति। विभीतकाऽस्थिमज्जा सक्षौद्रः

शुक्रनाशनो भवति। अव्रणशुक्रचिकित्सा–रक्तविस्रावणं प्रदेहपरिषेचननस्यधूमाश्चोतनाऽभ्यञ्जनतर्पणस्निग्धपुटपाकालेख्याऽञ्जनानि। रक्तविस्रावणादिनोपक्रान्तस्य लेख्याञ्जनेनाऽव्रणं शुक्रमपहर्तव्यम् (सुउ. १२.२७; असंउ. १३) साध्य व्रणशुक्रलक्षणम्–नेत्रस्य कृष्णभागे सितं स्यन्दाऽऽत्मकमल्परुगश्रुयुक्तमभ्रदलानुकार्यव्रणशुक्रम् (सुउ.५.८) पु., मास० आषाढमासः (चचि. १.(२).१३; सुसू. ६.६)

ज्येष्ठमासः (असंउ. ४९)

**(शुक्रा)**–स्त्री., भैषज्य० वंशरोचना (रा. ६.८५; पृ. ८१)

**–कर**–वि., शुक्रोत्पत्तिकरम् (अहसू. ५.४१)

**–क्षय**–पु., शुक्रस्य क्षयः, शुक्रोदुष्टिः (चचि. ११.६५) शुक्रक्षये मेढ्रवृषणवेदनाऽशक्तिर्मैथुने चिराद्वा प्रसेकः, प्रसेके चाल्परक्तशुक्रदर्शनम् व्यवायशोषे शुक्रक्षयलिङ्गं च (सुउ. ४१.१७) शुक्रक्षये क्षीरसर्पिषोरुपयोगो मधुरस्निग्धशीतानामपरेषां च द्रव्याणाम् (असंसू. १९.१४) तथा च शुक्रक्षीणो नरः मयूरकुक्कुटहंससारसानां ग्राम्यानूपौदकानाम् च अण्डानि अभिकांक्षति (सुसू. १५.२९-३१)

**–क्षीण**–वि., लक्षण० शुक्रं क्षीणं यस्य सः (सुसू. १५.२९-३१)

**–ग्रह**–पु., लक्षण० शुक्रस्य ग्रहः रेतोविबन्धः (अहसू. १९.३)

**–घ्न**–वि., शुक्रक्षयकरम् (असंसू. १२.४७)

**–जननगण**–पु., द्रव्यगण० चतुष्के महाकषायवर्गे एको गणः, जीवकर्षभककाकोलीक्षीरकाकोलीमुद्गपर्णीमेदावृद्धरुहाजटिलाकुलिङ्गा इति दशेमानि शुक्रजननानि द्रव्याणि भवन्ति (चसू. ४.१२; असंसू. १५.२४)

**–द**–वि., शुक्रवृद्धिकरः (सुसू. ४६.३५९-३६१)

**–दोष**–पु., शुक्रधातोः विकृतिः क्लैब्याप्रहर्षादयः शुक्रदोषाः (सुस. २४.९)

**–धरा**–स्त्री., शारीर० रेतोधरा कला (सुशा. ४.२०)

**–नाशन**–वि., शुक्रघ्नः, शुक्रं नाशयतीति (चसू. २६.६२)

**–प्रदोष**–पु., शुक्रविकारः (चसू. १.१११)

**–भाण्डी**–स्त्री., वनस्पति० श्यामा त्रिवृत् (ध. १.२४५; पृ. ५७)

**–मांसल**–वि., शुक्रं मांसं च यो जनयति सः (चसि. १०.२९) काकोली क्षीरकाकोली मुद्गपर्णी शतावरी विदारी मधुयष्ट्याऽऽह्वा शृङ्गाटककशेरुके आत्मगुप्ताफलं माषाः गोधूमा यवा जलजानूपजं मांसमित्येते शुक्रमांसलाः (चसि. १०.२८-२९)

**–मेह**–पु., रोग० कफदोषप्रधानः प्रमेहभेदः (चनि. ४.१०; सुनि. ६.१०) तत्र नरः शुक्राऽऽभं शुक्रमिश्रं वा मेहति (असंनि. १०.१५) दूर्वादिकषायः ककुभचन्दनकषायोऽत्रोपयोज्यः (सुचि. ११.९) द्र० 'प्रमेह'

**–ल**–वि., शुक्रकरम् (चसू. २६.६१)

**–वहा सिरा**–स्त्री., शुक्रवाहिनी सिरा (सुशा. २.४५)

**–वहस्रोतस्**–न., शुक्रवहनार्थं स्रोतो० (चवि. ५.८) तस्य स्थानम्—वृषणौ। शुक्रवहस्रोतश्छेदात् मरणं क्लैब्यं वा भवति (सुचि. ७.३६) तद्दुष्टिः अकालयोनिगमनाभिग्रहादतिमैथुनाच्छस्त्रक्षाराऽग्निभिश्च भवति (चवि. ५.१९)

**–वाहिन्**–वि., शुक्रं वहतीति (असंशा. ६.४३)

**–वाहिस्रोतस्**–न., स्रोतो० शुक्रवहस्रोतः (चवि. ५.१९)

**–विधारण**–न., शुक्रवेगनिग्रहः चलितशुक्रस्य बलाद् धारणम्। शुक्रवेगविधारणं वा (सुचि. २४.११९)

**–विष**–वि. शुक्रे विषं यस्य सः, यथा मूषिकाः शुक्रविषाः (सुक. ३.५)

**–वृद्धिकृत्**–वि., शुक्रवृद्धिकरम् (असंसू. ७.३२)

**–वेगधारण**–न., शुक्रवेगावरोधः शुक्रवेगविधारणात्तत्स्रवणं गुह्यवेदनाश्वयथुर्ज्वरा हृद्व्यथामूत्रसङ्गाङ्गभङ्गवृद्ध्यश्मषण्ढताश्च भवन्ति। शुक्ररोधजविकारेषु ताम्रचूडसुराशालीनां सेवनं बस्तिरभ्यङ्गाऽवगाहनं तथा बस्तिशुद्धिकरैः सिद्धं क्षीरं प्रियाः स्त्रियश्च भजेत् (अहसू. ४.१९)

**–वेगनिग्रह**–पु., शुक्रवेगधारणम्, षाण्ढ्यकराणां श्रेष्ठः (चसू. २५.४०; असंसू. १३.३)

**–शुद्धिकरवर्ग**–पु., कुष्ठैलवालुककट्फलकाण्डेक्ष्वेक्षुबिधफेनकोशीरैः वसुकेक्षुरकैः शुक्रं सकदम्बनिर्यासैः शोधयेत् (असंसू. १५.२५)

**–शोणितप्रकृति**–स्त्री., शुक्रशोणितमेलनकाले ऋतुरूपे यो दोष उत्कटो भवति, स प्रकृतिमारभते (च. चवि. ८.९५)

**–शोणितसंसर्ग**–पु., शुक्रशोणितमेलकः (चशा. ३.३)

**-शोधन**-वि., शुक्रदोषहरः (चसू. ४.८)

**-शोधनगण**-पु., द्रव्यगण० चतुष्के महाकषायवर्गे एको गणः। कुष्ठैलवालुककट्फलसमुद्रफेनकदम्ब-निर्यासेक्षुकाण्डेक्षिवक्षुरकवसुकोशीराणीति दशेमानि शोधनानि द्रव्याणि भवन्ति (चसू. ४.१२; असंसू. १५.२५)

**-संपद्**-स्त्री., शुक्रस्याऽदुष्टत्वरूपोत्कर्षः (चशा. २.६)

**-सार**-वि., शुक्रं सारं परोत्कृष्टबलं यस्य सः, तल्लक्षणानि-सौम्याः सौम्यप्रेक्षिणश्च क्षीरपूर्णलोचना इव प्रहर्षबहुलाः, स्निग्धवृत्तसारसमसंहतशिखरदशनाः प्रसन्नस्निग्धवर्णस्वरा भ्राजिष्णवो महास्फिचश्च शुक्रसाराः। ते स्त्रीप्रियोपभोगा बलवन्तः सुखैश्वर्याऽऽरोग्यवित्तसंमानाऽपत्यभाजश्च भवन्ति (चवि. ८.१०९; सुसू. ३५.१६)

**-स्रवण**-न., शुक्रस्य स्रवणम् (अहसू. ४.१९)

**शुक्रक**-पु., नेत्ररोग० (अहसू. २४.२) द्र० 'नेत्ररोग'

**शुक्रल**-वि., शुक्रकरः (चसू. २६.६९)

**शुक्राघात**-पु., शुक्रस्याऽवरोधः (अहसू. १७.२७)

**शुक्राशय**-पु., शारीर० शुक्रस्याऽऽशयः वृषणौ (चचि. २६.७२)

**शुक्राश्मन्**-पु., रोग० शुक्राश्मरी (अहसू. ६.१९)

**शुक्राश्मरी**-स्त्री., रोग० शुक्रदोषजविकारेष्वेकः, शुक्रनिमित्ताऽश्मरी (सुनि. ३.१२; सुसू. २४.९; अहसू. ११.१२; असंनि. ९.१७)

**शुक्रोत्सेक**-पु., शुक्रस्रावः, शुक्राऽऽधिक्यम् (सुचि. ३७.१२६)

**शुक्ल**-वि., वर्ण० धवलः (सुसू. ३२.३)
कार्पासवर्णम् (सुसू. ४६.२१२-२१३)
नेत्रस्थं शुक्लमण्डलम् (र. २३.३१; असंसू. ७.३६)
वनस्पति० जीरकः (ध. २.६८; पृ. ८३)
कुन्दः (ध. ५.१५०; पृ. २०१)
एरण्डः (ध. १.२९५; पृ. ६७)

**(शुक्ला)**-स्त्री., वनस्पति० काकोली (ध. १.१३२; पृ. ३१)
मधुरस्कन्धे द्रव्य० शर्करा (चक्र. चवि. ८.१३९)
विदारी (ध. १.१४७; पृ. ३४)

**-कन्द**-पु., वनस्पति० शुभ्रालुः (रापरि. ७.३३; पृ. ३५०)

**(-कन्दा)**-स्त्री., वनस्पति० अतिविषा (ध. १.१०; पृ.८)

**-कर्कटक**-पु., पादिष्वेकः, श्वेतवर्णकुलीरः (सुसू. ४६.१११)

**-गतरोगविज्ञानीय**-वि., अध्यायसंज्ञा० (सुउ. ४.१)

**-पुष्पा**-स्त्री., वनस्पति० विष्णुक्रान्ता (ध. ४.११५; पृ. १५७)

**-पुष्पी**-स्त्री., वनस्पति० नागदन्ती (रापरि. ५.२७; पृ. ३४२)

**-भागगतरोग**-पु., रोग० नेत्रस्य शुक्लभागे संभूतो रोगः। शुक्लभागस्यैकादशरोगाः प्रदिष्टाः सुश्रुतेन (सुउ. ४.३-४) रोगाः-(१) प्रस्तार्यर्म (२) शुक्लार्म (३) क्षतजार्म (४) अधिमांसार्म (५) स्नाय्वर्म (६) शुक्तिका (७) अर्जुनः (८) पिष्टकः (९) सिराजालम् (१०) सिरापिडकाः (११) बलासकः (सुउ. ४.३-४) द्र० 'नेत्ररोग.'

**-मणि**-पु., रत्न० मौक्तिकम् (रा. १३.६७; पृ. २१८)

**-मण्डल**-न., शारीर० नेत्रमण्डलेष्वेकं, तेष्वपि च नेत्रे श्लेष्मणः प्रसादाच्छुक्लमण्डलं तत्पितृजम् (असंशा. ५.५१)

**-मेह**-पु., श्लेष्मनिमित्तः प्रमेहभेदः, तल्लक्षणम्-नरः कफप्रकोपात् शुक्लपिष्टनिभं मूत्रं प्रमेहत्यभीक्ष्णम् (चसू. १९.४ (९) द्र० 'प्रमेह.'

**-रोहित**-पु., वनस्पति० श्वेतरोहितः (रा. ८.१८; पृ. १९६) द्र० 'रोहितक.'

**-वर्ग**-पु., शुक्लद्रव्याणां वर्गः, खटिनीश्वेतसंयुक्ताः शङ्खशुक्तिवराटिकाः भृष्टाऽश्मशर्करा चेति शुक्लवर्गः (ध. ७.६३; पृ. ३०७)

**-वर्ण**-वि., शुक्लवर्णीयः (पदार्थः) यथा कार्पासास्थितक्रभस्मक्षारादिः (सुसू. २९.२७)

**-वृक्ष**-पु., वनस्पति० धवः (रापरि. ९.५; पृ. २०५)

**-शाल**-पु., वनस्पति० कैडर्यः (रा. ९.४८; पृ.१४)

**-शेफालिका**-स्त्री., शेफाली, निर्गुण्डी (ध. ४.८३; पृ. १५०)

**शुक्लाक्ष**-पु., जलचरपक्षि० मल्लिकाक्षभेदः, हंसभेदः, अन्ये मलिनचञ्चुचरणहंसभेदः (ड. सुसू. ४६.१०५-१०६; असंशा. २.५७)

**शुक्लांगी**-स्त्री., वनस्पति० शेफाली, निर्गुण्डी (रा. ४.१२१; पृ. १५०)

**शुक्लार्क**-पु., वनस्पति० श्वेतार्कः (रा. १०.२९; पृ.१३७)

**शुक्लार्मन्**-न., नेत्ररोग० नेत्रशुक्लभागगतो रोगः (सुउ. ४.३-४) नेत्रस्य शुक्लभागे कोमलं किञ्चिच्छ्वेतमर्म चिरेण वर्धते स शुक्लार्माख्यो नेत्र-

रोगः ( सुउ. ४.५ ) तच्चिकित्सा–विस्तीर्णं तनु वा शुक्लार्मे शुक्रवदेव लेखनाञ्जनैरेवोपचरणीयम् ( सुउ. १५.१७; असंउ. १३ ) द्र० 'नेत्ररोग.'

**शुङ्ग**–पु., नवपल्लवः ( चसू. १.७४ )

**शुङ्गा**–स्त्री., नवपल्लवम्, प्रत्यग्रपल्लवः ( सुचि. ३४.१२ )

**शुचि**–वि., शुचिताकरम् ( चसू. ५.९९ ) बाह्याभ्यन्तरशौचयुक्तः ( सुसू. ३४.१९-२१ ) अनुपहतम् (ड.सुसू. ४५.२०) वैद्यगुणेष्वेको गुणः पु., मास० ज्येष्ठमासः ( चचि. १(२). १३; सुसू. ६.६ ) आषाढमासः ( चसि. ६.५ )

**–द्रुम**–पु., वनस्पति० पिप्पलः ( ध. ५.७९ )

**–वीर**–पु., वनस्पति० दर्भः ( ध. ४.१३३ )

**शुण्ठ**–पु., न-, वनस्पति० गुण्ठः ( ध.१.८३ )

( **शुण्ठी** )–स्त्री., वनस्पति० सुगन्धिकन्दविशेषः, शुष्कार्द्रकम्, महाकषायवर्गे तृप्तिघ्नगणे तृष्णानिग्रहणगणेऽर्शोघ्नगणे चैकं द्रव्यम् ( चसू.४.११-१४ ) गुणाः–कटुरुष्णा स्निग्धा वृष्या कफवातघ्नी शोथकृम्यरुचिश्वासपाण्डुश्लीपदोदरशूलबन्धाध्माननाशिनी ( ध. २.८२ ) रसशेषाजीर्णनाशिनी ( सुसू. ४६.५११ ) कामलाघ्नी ( सुउ. ४४.३० ) हिक्कानाशिनी ( सुउ. ५०·२२ ) शीर्षविरेचने उपयुज्यते ( चसू. २.५ )

हिं.—अदरक, सोंठ.

**म.—सुंठ.**

गु.—अडु.

बं.—अदा, सोंठ.

ता.—चक्कु, शुखु.

फा.—झंजाबिल.

**शुण्ठक**–न., वनस्पति० शुण्ठी ( चचि. १२.४४ )

**शुण्ठिक**–न., वनस्पति० शुण्ठी ( चचि. १२.४४ )

**शुण्डिक**–पु., वनस्पति० व्रीहिः ( रा.१६.११७ )

**शुण्डिन्**–पु., वनस्पति० व्रीहिः ( रा. १६.११७ )

**शुण्डी**–स्त्री., वनस्पति० वस्तिशुण्डी ( रापरि. ५.२० )

**शुद्ध**–वि., योग्य औषधप्रयोगः, या भेषजयोजना दोषमेकं शमयेन्नान्यं दोषमुदीरयेत्, सा शुद्धः प्रयोग इत्युच्यते ( चनि. ८.२३ ) शोधितः, कृतवमनविरेचनादिः ( अहसू. २०.१३; ४.२० ) केवलः, इतरासंबद्धः ( सुनि. १.६३ ) वि., कषायरञ्जितम् ( सुचि. ३५.१५ ) न., लवण० सैन्धवम् ( ध. २.२५ )

(**शुद्धा**)–स्त्री., शर्करा ( ध. २.१०४ ) कुसुम्भम् ( ध. ६.११८ )

**–कण्ठता**–स्त्री., लक्षण० शुद्धकण्ठस्य भावः ( अहसू. १४.१७ )

**–कोष्ठ**–वि., शुद्धं कोष्ठं यस्य सः; शोधितकोष्ठः ( चचि. १.२८ )

**–देह**–वि., वमनविरेचनादिभिर्यस्य शोधितो देहो यस्य सः ( र. १६.१२-२५ )

**–लोह**–न., खनिज० त्रयो लोहप्रकाराः, शुद्धं लोहं पूतिलोहं मिश्रलोहं चेति। तत्र स्वर्णरजतताम्रलोहानि शुद्धलोहानि ( र.५.१ )

**–वातहत**–वि., शुद्धेन कफाद्यसंसृष्टेन वातेन हतः ( सुनि.१.६३ )

**–व्रण**– पु., स्रावरहितो व्रणः, लक्षणानि–त्रिदोषैरनाक्रान्तः श्यावौष्ठः पिडकाऽन्वितः समोऽवेदनो निरास्रावश्च ( असंउ. २९ )

**–शुक्र**– वि., शुद्धं शुक्रं यस्य सः, अदुष्टशुक्र इत्यर्थः ( असंशा. २.२२ )

**–शुक्रक**– न., नेत्ररोग० कफाच्छङ्ख इव नातिरुक् शुक्रं च। तत्साध्यम् ( असंउ. १३.२२६ )

**–सत्त्व**– वि., सात्त्विकप्रकृतिः, लक्षणम्– आरोग्यं प्रशमो रूपं ज्ञानं विज्ञानं आर्यता दीर्घमायुः सुखाऽत्यक्तं च ( कासू. २८ ) शौचमास्तिक्यं- कृतज्ञता दाक्षिण्यं व्यवसायः शौर्यं गाम्भीर्यं बुद्धिर्मेधा स्मृतिः शुक्लधर्मरुचिर्भक्तिरनभिष्वङ्गस्तमोगुणविपर्ययश्चेति शुद्धसत्त्वलक्षणानि ( असंशा. ५.१९ )

**–सत्वज**–वि., शुद्धसत्वयुक्तः ( असंशा. ५.१९ )

**–स्तन्यलक्षण**–न., शीतलममलं तनु शङ्खावभासमप्सु न्यस्तमेकीभावं गच्छत्यफेनिलमतन्तुमन्नोत्लवतेऽवसीदति वा, तच्छुद्धमिति विद्यात् ( सुशा. १०. ३१ )

**–स्नाता**–वि., रजसाऽऽदौ शुद्धा पश्चात्स्नाता अन्तर्बहिःशुद्धेत्यर्थः ( सुशा. २.२५; का. जातिसूत्रीय. शा. ७ )

**–हृदयता**–स्त्री., हृदयस्य निर्मलत्वम्, निर्मलहृदयता ( अहसू. १४.१७ )

**शुद्धातीसार**–पु., रोग० निरामातीसारः ( अहसू. १९.२ ) द्र० 'अतिसार'

**शुद्धानिलार्त**-वि., असंसृष्टेन अनिलेन पीडितः, केवलवातपीडितः ( चचि. २८.११८ )

**शुद्धार्तवा**-वि., शुद्धमदुष्टमार्तवं यस्याः सा ( सुशा. २.२४ )

**शुद्धावर्त**-पु., यदा धातूनां सत्वपातनविधौ वह्निः प्रदीप्तज्वालः श्वेतोच्छ्रायसंयुक्तश्च भवेत्तदा स शुद्धावर्तो ज्ञेयः। अयमेव कालः सत्त्वनिर्गमनार्थं योग्यः। रसार्णवेऽस्यैव नाम 'लोहावर्त' इति प्रसिद्धम् ( र. ८.५८ )

**शुद्धास्र**-न., शुद्धरक्तम् ( अहृसू. २६.४२ )

**शुद्धि**-स्त्री., शोधनं नाम दोषापाकरणम् ( चचि. १२.५; चसि. १.१२; सुशा. २.१; असंसू. २९.२२; अहृसू. २७.४७ )

**-कर**-वि., शुद्धिं शोधनं करोति इति शुद्धिकरः ( अहृसू. १९.६१ )

**-काङ्क्षिन्**-वि., शोधनाभिलाषी, यः शुद्धिं काङ्क्षते सः ( असंसू. ७ )

**-वर्ग**-पु., भैषज्यगण० क्षयं शोधनगुणयुक्तः काचटङ्कणशिग्राणां समूहः ( र. ३.१६५ )

**-शुद्ध**-वि., शोधनादिना शुद्धः ( असंसू. २७.२१ )

**शुद्धोद्गारता**-स्त्री., लक्षण० शुद्धोद्गारस्य भावः ( अहृसू. १४.१७ )

**शुध्द्युपाय**-पु., शुद्धीकरणार्थं कृत उपायः (चशा.५.१३)

**शुनकचञ्चुका**-स्त्री., वनस्पति० क्षुद्रचञ्चुः ( रापरि. ४.२२ )

**शुनकचिल्ली**-स्त्री., वनस्पति० चिल्लीभेदः, गुणाः-कटुस्तीक्ष्णा कण्डूतिव्रणहारिणी च ( रापरि. ७० )

**शुभ**-वि., न., मान० प्रस्थद्वयम्, अष्टाविंशत्यधिकशततोलकं मानम् ( र. ११.८ )

दर्शनस्पर्शनरसनघ्राणनश्रवणादिभिर्यत्सुखदं तच्छुभम् ( सुउ. ४७.२५ )

**( शुभा )**-स्त्री., वनस्पति० श्वेतदूर्वा ( रा. ८.२३० ) द्र० ' दूर्वा '

शमीभेदः ( रा. ८.१५५ ) द्र० ' शमी '

पाठा ( ध. १.७० )

वंशरोचना ( चचि. ८.१४५; र. २७.५२; ध. २.५५ )

गोरोचना ( र. २७.५२; रा. १२.३३ )

प्रियङ्गुः ( रा. १२.२९ )

**-करी**-स्त्री., वनस्पति० शमी ( रा. ८.१५२ )

**-कर्मन्**-न., दोषशमनं कर्म ( अहृसू. ९.२२ )

**-गन्धक**-न., भैषज्य० बोलम् ( रा. ६.११७ )

**-द**-पु., वनस्पति० पिप्पलः ( ध. ५.७९ )

**-पत्रिका**-स्त्री., वनस्पति० शालिपर्णी ( रा. ४.११५)

**शुभ्र**-न., खनिज० रौप्यम् ( ध. ६.५ )

कासीसम् ( र. १३.१७९ )

लवण० साम्भरलवणम् ( रा. ६.४७ )

वनस्पति० उशीरम् ( रा. १२.२७ )

पद्मकम् ( रा. १२.१४९ )

अभ्रकम् ( धपरि. ६.३ )

**(शुभ्रा)**-स्त्री., आहारद्रव्य० शर्करा ( ध. २.१०४ )

वंशरोचना ( ध. २.५५ )

**-कुष्ठ**-न., रोग० श्वेतकुष्ठम् ( र. २६.३३ )

**-गौर**-पु., वनस्पति० सर्षपः ( ध. ४.४२ )

**-पुष्प**-पु., वनस्पति० खसखसः खस्तिलः ( ध. ६.१२० )

**-मरिच**-न., वनस्पति० मरिचम् ( ध.२.९० )

**शुभ्रवी**-स्त्री., वनस्पति० कुडुहुञ्ची ( रा. ७.२८० )

**शुभ्रांशु**-पु., वनस्पति० कर्पूरः ( रा. १२.५६ )

**शुभ्रालु**-पु., वनस्पति० महिषीकन्दः, गुणाः-कटुरुष्णो रुच्यो महासिद्धिकरः सितः कफवातामयघ्नो मुखजाड्यहरश्च ( रापरि. ७.३३ )

**शुल्ब**-न., खनिज० ताम्रम् (र.५.५९; र. १.४१;ध.६.९)

**-नाग**-न., ताम्रनागयोः संस्कारविशेषेण मेलनम्, समभागमाक्षिकेण मारितं ताम्रं पञ्चमित्रसंस्कारेण समुत्थितं कुर्यात्। एवं दशवारं कृत्वा तद्वन्मारितं विशुद्धं नागमित्येतदुभयं मिथः समं चतुष्पलमितं गृहीत्वा पुनः समभागेन नीलाञ्जनेन मारितं पञ्चमित्रसंस्कारेण पुनरुत्थापितं कुर्यात्। एवं सप्तवारं मारणपूर्वकोत्थापनेन संशुद्धमेतद्द्रव्यद्वन्द्वं शुल्बनागमित्यर्थः ( र. ८.१८-१९ )

**शुषा**-स्त्री., वनस्पति० कासमर्दः ( चसू. २७.८८ )

**शुषिरस्नायु**-स्त्री., शारीर० सच्छिद्रस्नायुः, सुषिरा स्नायव आमपक्वाशयान्तेषु बस्तौ च विद्यन्ते ( सुशा. ५.३२ )

**शुष्क**-वि., अनार्द्रम् ( असंशा ११.५ )

**(शुष्का)**-स्त्री., रेवतीग्रह० रेवतीविंशतिनाम्नामेकतमं नाम ( काबालग्रहचिकित्सा० )

योनिव्यापद्० ( चसू. १९.४ ( ९ ) ) व्यवायकाले वेगान् रुन्धन्त्याः प्रकुपितोऽनिलो विण्मूत्रसंगार्तिं योनिमुखस्य च शोषं कुर्यात्सा शुष्का योनिः ( चचि. ३०.३२; असंउ. ३८.)

**–कण्डू**–स्त्री., लक्षण० शुष्ककण्डूा पीडितो रुग्णः शयनेऽङ्गानि घर्षति रोदिति मर्दनमिच्छति च (कासू. २५.३०)

**–कास**–पु., रोग० कफादिनिष्ठीवनरहितः कासः (अहसू. ६.६५;चनि. १.२१) द्र० 'कास' लक्षण० (चनि. १.२१)

**–चूर्णित**– वि., आदौ शुष्कः पश्चाच्चूर्णितः (चचि. १(३).३)

**–च्छर्दि**– स्त्री., लक्षण० शुष्का च असौ छर्दिः, वातज्वरस्यैकं लक्षणम् (चनि.१.२१) द्र० 'छर्दि'

**–द्रव्यमान**–न., पलादिमानम् (सुचि. ३१.७; चक. १२.९८)

**–पाण्डु**–पु., रोग० वातजपाण्डुः (र. १९.७९-८४) द्र० 'पाण्डु'

**–मांस**–न., आर्द्रतारहितं मांसम्, गुणाः–तच्च अरोचकं गुरु प्रतिश्यायकृच्च (सुसू. ४६.१२७)

**–मूलकयूष**–पु., शुष्कमूलकानां यूषः, स च हिक्काश्वासनिवारणः कफग्रहण्यां च शस्तः (चचि. १७.९९; चचि. १५.१४४)

**–रेवती**–स्त्री., रेवतीग्रह० सा जातहारिणी; (का. क. रेवती) तया आविष्टस्य लक्षणानि–पुरीषद्रवता, पुरीषहरीतत्वं, क्रमेण सर्वाङ्गक्षयः, केशशातोऽन्नद्वेषः स्वरदैन्यं वैवर्ण्यं रोदनमुदरे ग्रन्थयः सिराश्च दीर्घकालानुवर्तनं गृध्रगन्धित्वम् (असंउ. ३)

**–शाक**–न., आहारद्रव्यम्, शुष्कं शाकम्; तच्च प्रकृत्या गुरु (चसू. ५.१०) रूक्षदेशजं शाकमित्येके (चचि. १९.३३)
वनस्पति० कासमर्दः (चचि. १९.३३)
शुष्कवार्ताककचरिकादि (हे. अहसू. ६.३४)

**–स्तनी**–वि., शुष्कौ स्तनौ यस्याः सा (कासू. १९)

**शुष्काक्षिपाक**–पु., नेत्ररोग० तल्लक्षणानि–नेत्रं निमीलितं कठिनरूक्षवर्त्म, विलोकने आकुलदर्शनमुन्मेषेऽतिकठिनं भवति, स साध्यः (सुउ. ६.१२६; असंउ. १८)

**शुष्कान्न**–न., पिष्टान्नादि तदग्निमान्द्यकरम् (सुसू. ४६.४९७)

**शुष्कार्शस्**–न., रोग० अर्शोभेदः (चचि. १४.१६९) द्र० 'अर्शस्'
नेत्ररोग० नेत्रवर्त्मनि संभूतोऽन्तरेषु खरः स्तब्धो दीर्घोऽर्शोवदङ्कुरश्च भवति, स साध्यः (सुउ. ३.१४)

**शुष्काशुष्क**–न., भैषज्य० समुद्रफेनम् (धनि. ३.१५४)

**शुष्कास्र**–न., शुष्कं च तद् अस्रं नाम रुधिरम् (अहसू. २९.५२)

**शूक**–पु., शालि० (अहसू. ६.२)
धान्य० धान्यशूकम्, 'कूस' 'कुसळ' इति मराठीभाषायाम् (असंउ. २५; अहसू. ३०.११)
जन्तु० सजन्तुजलमलः (सुनि. १४.१) विषजन्तुः (मा.) ऊषरजलेषु बाहुल्येन दृश्यमानः कश्चिदौषधिविशेषः। स सविषनिर्विषभेदाद्द्विधा। तत्र विषवान् रोगकारकः (असंउ. ३८)
रोग० द्र० 'शूकदोष' (सुनि. १४.३)
योग० मेढ्रवृद्धिकरः कामसूत्रादौ वात्स्यायनाद्युक्तो योगः (चचि. ३०.१६७)

**–क्रिमिशूक**–पु., शूकवतां क्रिमीणां शूकः, आगन्तुशोथकारणम् (चसू. १८.४)

**–ज**–पु., भैषज्य० यवक्षारः (ध. २.१७)
न., धान्य० शूकधान्यम् (अहसू. ६.५)

**–तुण्डविष**–पु., प्राणि० जङ्गमविषविशेषः सूक्ष्मतुण्डोच्चिटिङ्गवरटीशतपदीशूकवलभिकाशृङ्गिभ्रमराः शूकतुण्डविषाः (सुक. ३.५)

**–दूषित**–वि., शूकेन दुष्टिं नीतम् (सुनि. १४.१०)

**–दोष**–पु., शेफसो वृद्धिकराणां योगानामतियोगाद्धुर्योगाद्वा जायमानो रोगः, शूकनिमित्ता व्याधय एव शूकदोषाः कथ्यन्ते (सुनि. १४.१)
रोग० शूकलिङ्गवृद्धिमिच्छतामक्रमप्रवृत्तानां शूकदोषनिमित्ताः दश चाष्टौ च व्याधयो जायन्ते। तद्यथा–सर्षपिकाऽष्ठीलिका ग्रथितं कुम्भीकाऽलजीमृदितं संमूढपिडकाऽवमन्थः पुष्करिकास्पर्शहानिरुत्तमा शतपोनकस्त्वक्पाकः शोणितार्बुदं मांसार्बुदं मांसपाको विद्रधिस्तिलकालकश्चेति (सुनि. १४.३)

**–दोषनिदान**–न., अध्यायसंज्ञा० (सुनि. १४.१)

**–धान्य**–न., शूकयुक्तं धान्यम् (चसू. २७.६; अहसू. ६.१)

**–निपातन**–न., शूको नाम लिङ्गवृद्धिकरं सविषकीटशूककृतं लेपादि, तस्य निपातनं प्रयोगः। शूकनिपातनात्प्रकुपिता दोषा मेढ्रे श्वयथुं कुर्वन्ति (सुनि. १२.७)

**–पत्र**–पु., निर्विषसर्प० (सुक. ४.३४(४))

**–पूर्णगलास्यता**–स्त्री., लक्षण० शूकपूर्णो गल आस्यं च यस्य तस्य भावः; गले आस्ये च शूकैर्वेधनवद् वेदना (चचि. १८.५)

–वृन्त–पु., सविषकीट० विश्वम्भरभेदः (सुक. ८.३३) द्र० ' विश्वम्भर '

–वृन्तविष–न., शूकवृन्तकीटस्य विषम्, तच्चिकित्सा– तगरं कुष्ठमपामार्गस्तथैव भृङ्गस्वरसपिष्टा कृष्ण-वल्मीकमृत्तिका ( सुक. ८.५४ )

–शिम्बी–स्त्री., वनस्पति० कपिकच्छूः (रा. ३.२०१)

**शूकर**–पु., पशु० वराहः, वन्यशूकरः ( अहृसू. ९.२८ ) शूकरबस्तिर्बस्तियन्त्रार्थं प्रशस्तः ( सुचि. ३७.१०७ )

( **शूकरी** )–स्त्री., वनस्पति० वाराहीकन्दः ( चचि. ९.४६ )

–दंष्ट्रक–पु., क्षुद्ररोग० सदाहो रक्तपर्यन्तस्त्वक्पाकी तीव्रवेदनः कण्डूमान् ज्वरकारकश्च अयं 'वराहदाढ' इति लोके प्रसिद्धः ( मा. )

–दंष्ट्रा–स्त्री., वराहस्य दंष्ट्रा; मधुघृतयुक्ता व्यङ्गन्यच्छ-नीलिकासु लेपार्थमुपयुज्यते ( सुचि. २०.३६; असंउ. ३७ )

–वसा–स्त्री., वराहमांसस्नेहः ( चसू. २६.८४ )

–व्रीहि–पु., धान्य० व्रीहिभेदः ( अहृसू. ६.९ ) द्र० 'व्रीहि'

**शूकराक्षिता**–स्त्री., अधोदृष्टित्वम्, व्यधदोषभवो रोगः, असौ अहिताचारादपि भवति (सुउ. १७.८५-८६)

**शूकरास्थिक्षार**–पु., क्षार० हस्तिमेहे पानार्थमुप-युज्यते ( सुचि. ११.९ )

**शूकाजीर्ण**–न., न पुनः पुनर्दुरवचारितशूकविकृतिरूपमे-वाजीर्णम् ( सुनि. १४.११ )

**शूद्र**–पु., सर्प० लक्षणम्–महिषीद्विपिवर्णैः परुषत्वग्भिन्न-वर्णश्च, अत्र सर्पेषु परिकल्पितं शूद्रत्वं केवलं सर्पभेदाभिप्रायकमिति ज्ञेयम् (सुक. ४.२८)

–प्रिय–पु., वनस्पति० पलाण्डुः ( रा. ७. १०० )

**शून**–वि., शोथयुक्तम् ( चसू. २६.४३(२); सुचि. २३.९ )

( **शूना** )–स्त्री., योनिरोग० शोथयुक्ता ( गर्भिणी ) ( काचि. गर्भिणीचि. ) अन्तर्मुखी, सूचीमुखी योनिः ( चचि. ३०.८२ )

–गुह्योदर–वि., शोफयुक्तं गुह्यमुदरं च यस्य ( चइ. ६.१४ )

–ता–स्त्री., लक्षण० उच्छूनता, उत्थितत्वम्, अन्तर्मृते शिशौ लक्षणमेकम् ( सुनि. ८.१२ )

–पाद–वि., शोफयुक्तः पादो यस्य, सः ( चइ. ६.१४ )

–पादकर–वि., शोफयुक्तौ पादौ करौ च यस्य सः ( सुउ. ४०.१७४ )

–पायु–वि., शोफवान्पायुर्यस्य सः ( अहृसू. १९.५ )

–रसन–वि., उच्छूनजिह्वः ( असंउ. ४३ )

–वृषण–वि., शूनौ वृषणौ यस्य सः (असंशा. ११.१७)

–संकाश–वि., शूनवत् प्रतीयमानः, शूनतुल्यः ( चइ. ८.१० )

–हस्त–वि., शूनौ हस्तौ यस्य सः ( चइ. ६.१४ )

**शूनाक्ष**–वि., शूने अक्षिणी यस्य सः ( चचि. १३.५२ )

**शूनाक्षिकूट**–वि., शोफयुक्तोऽक्षिकूटो यस्य ( चचि. १६.१५ )

**शून्य**–वि., अधिवस्तृभिर्मनुष्यै रहितम् ( गृहादि ) ( असंउ. ३.४६ )

( **शून्या** )–स्त्री., वनस्पति० नलिका (ध. ३.४३)

–गृह–न., जनरहितं गृहम् ( असंसू. ३.४६ )

–ता–स्त्री., लक्षण० मस्तकादौ संविदभावः ( चसू. १७.३१ )

रिक्तत्वम् ( अहृसू. ११.१६ )

–त्व–न., रिक्तत्वम् ( अहृसू. ११.१६ )

–देह–वि., रिक्तो देहः शक्तिहीनो देहः यस्य सः (चसि. १२.४)

–मध्य–पु., वनस्पति० नलः ( ध. ४.१४१ )

–शरीर–वि., बलहीनदेहः ( असंशा. ३ )

–शरीरा–वि., प्रजाता स्त्री, गर्भव्यपगम एव शरीर-शून्यत्वे हेतुः। तथा प्रवाहणवेदनाक्लेदरक्त-निःस्रुतिश्च विशेषेण हेतुः ( चक्र.चशा. ८.४९ )

–हृदय–न., लक्षण० विचाररहितं मनः हर्षामर्षादि-विकाररहितमन्तःकरणम् ( चचि. ९.६ )

**शून्यागार**–न., निर्जनगृहम् ( सुशा. १०.४६; सुचि. २४.९१ )

**शून्याटवी**–स्त्री., शून्यारण्यम् (असंशा. १२.१९)

**शूर**–वि., विषादरहितः ( सुसू. ३४.२० )

पु., वनस्पति० सर्जकः (ध. ५.१२३)

लकुचः ( रापरि. ९.४४)

मसूरिका ( रा. १६.१४९ )

चित्रकः ( रा.६.१२५ )

–सेनक–पु., ऋषि० रससिद्धिप्रदायकः रसरत्नसमु-च्चयकारेण प्रकीर्तितेषु सप्तविंशतिरसप्रदायकेष्वेकः ( र.१.१-२ )

**शूर्प**–पु., मान० द्रोणद्वयम् ( चक. १२.९६; असंक, ८,१६९ )

पात्र० वंशनिर्मितं धान्यात्तुषमृत्तिकादिनिरसनोपयोगि दीर्घायतं पात्रम्, 'सूप' 'झलिया' इति लोके ( असंउ. १; र. ७.२२ )

**–पर्णी**– स्त्री., वनस्पति० मुद्गपर्णी ( ध. १.१३८; असंउ. १५ )

**–पर्णीद्वय**– न., वनस्पति० मुद्गपर्णी माषपर्णी च ( चचि. १.४३ )

**शूल**–पु., लक्षण० रुजा ( चसू. १४.१३ ) मज्जास्थिगतस्य कुपितानिलस्यैकं लक्षणम् ( चचि. २८.३३ ) सर्वशूललक्षणेषु वायुरेव प्रधानं कारणम् (मा.) रोग० शङ्कुस्फोटनवद्यस्माच्छूलासक्तस्य तीव्रा वेदना भवति तस्माच्छूलमिहोच्यते ( सुउ. ४२.८१ ) शूलरोगोत्पत्तिकथा–पुरा मदननाशाय कुपितो हरः शूलं मुमोच । तं प्राणहरं शूलमागच्छन्तं दृष्ट्वा भयाक्रान्तोऽनङ्गस्त्राणार्थं विष्णुशरीरं प्रविवेश । ततः स शूलो विष्णुमेव प्रहर्तुं यावद्गच्छति तावद्विष्णुहुङ्कारमहिम्ना तत्रैव भूमौ पपात । ततोऽनन्तरं पञ्चभूतात्मकं शरीरं प्रविश्य तदेव दूषयन् शूलरोगः सञ्जातः । (मा.) हेतुसंप्राप्तिः– वातमूत्रपुरीषनिग्रहातिभोजनाजीर्णाध्यशनायासविरुद्धान्नसेवनानि क्षुत्काले पानीयपानं विरूढसेवनं पिष्टान्नशुष्कमांसानां तथैवंविधानां द्रव्याणां सेवनात् शूलो जायते ( सुउ. ४२.७७-८० ) संख्या–वातजपित्तजकफजसंनिपातजामजपरिणामशूलान्नद्रवाख्यशूलाश्चेत्यादयः शूलप्रकारा भवन्ति । तत्रापि परिणामशूलः कफजवातजपित्तजकफजद्वन्द्वजसंनिपातजभेदात्सप्तधा । तत्र वातशूलः–अतिव्यायामयानमैथुनेभ्यः प्रजागराच्छीतजलातिपानात् कलायमुद्गकोरदूषादिभक्षणादतिरुक्षाशनात् कषायतिक्तातिविरूढजान्नाद्विण्मूत्रशुक्रानिलवेगरोधात् शोकोपवासादतिहास्याद्भाषणाद्वा प्रवृद्धो वायुः पार्श्वपृष्ठहृत्त्रिकबस्तिप्रदेशेषु शूलं जनयति । जीर्णे प्रदोषे घनागमे शीते च स सुतरां गाढं कुप्यति । अयं मुहुर्मुहुरुपशमं प्राप्नोति प्रकुप्यति च । संस्वेदनाभ्यञ्जनमर्दनैः स्निग्धोष्णभोज्यैश्च शमं याति । पित्तजशूलः–अतिक्षारोष्णविदाहि तैलनिष्पावकुलत्थसौवीरयूषसुराविकारसेवनैरतिकट्वम्लपदार्थभोजनेन क्रोधेनायासेन सूर्यातपेन मैथुनातियोगाद्वा प्रकुपितं पित्तं नाभ्यां तृण्मोहदाहार्तिकरं स्वेदमूर्च्छाभ्रमचोषयुक्तं शूलं करोति । विशेषतश्च मध्याह्नेऽर्धरात्रे शरदतौ भक्षितवतो विदाहकाले च पीडां करोति । किं तु शीतस्वादुभोजनैश्च प्रशाम्यति । कफजशूलः–आनूपमांसजलचरमांसकिलाटपयोविकारैर्मांसेक्षुपिष्टकृशरातिलशष्कुलीसेवनेनान्यैश्च बलासजनकैर्हेतुभिश्च प्रकुपितः श्लेष्माऽऽमाशये शूलं करोति । तेन च हृल्लासः कासः सदनमरुचिर्लालास्रावो बद्धकोष्ठता शिरोगुरुत्वमित्यादीनि लक्षणानि भवंति । सूर्योदये शिशिरे वसन्ते भुक्ते सति चायं पीडां करोति । सांनिपातिकशूलः–एतत्सर्वलक्षणसमन्वितो भवन्ति । परिणामशूलः–यदा स्वैर्निदानैः प्रकुपितो वायुः कफपित्ते व्याप्य संनिहितस्तिष्ठेत्तदा स परिणामशूलं जनयति । सामान्यलक्षणानि–आहारे पच्यमाने यच्छूलं तदेव परिणामजं जानीयात् । वातिकपरिणामशूलम्–आध्मानाटोपविण्मूत्रबन्धनारतिवेपनयुक्तं स्निग्धोष्णोपशमप्रायं विजानीयात् । पैत्तिकं तु परिणामशूलं तृष्णादाहारतिस्वेदोपेतं कट्वम्ललवणैर्वृद्धं शीतशमप्रायं च विद्यात् कफजस्तु छर्दिहृल्लाससंमोहोपेतः स्वल्परुग्दीर्घसन्ततिः कटुतिक्तोपशान्तश्च भवति । संसृष्टलक्षणैर्द्वन्द्वजं परिणामशूलं लक्षयेत् । त्रिदोषजं तु क्षीणमांसबलानलमसाध्यं विद्यात् । अन्नद्रवाख्यशूलः–पथ्यापथ्यप्रयोगेण भोजनाभोजनेन चान्ने जीर्यमाणे जीर्णेऽजीर्णे च शूलः सञ्जायते । न च कदाचिच्छमं याति । नच स्वास्थ्यमश्नुते 'वान्तमात्रे जरत्पित्ते शूलमाशु व्यपोहति' । (मा.) चिकित्सा–यस्मादत्राशुकारी पवनस्तस्मात्त्वरया तं जयेत् । तथैव शूलाभिपन्नस्य स्वेद एव सुखावहो भवति ( सुउ. ४२.८८ ) वमनं लङ्घनं स्वेदः पाचनं फलवर्तयः क्षाराश्चूर्णानि गुटिकाः शूलनाशनाः शस्यन्ते ( सुउ. ४२.१४५ )

( **शूली** )–स्त्री., वनस्पति० अस्याः पत्रं शूलवत्, मूलं तु धूसरमस्याः शाखा न विद्यन्ते, सा च जलाश्रया पिच्छिला महिषीप्रिया मृदुलता; गुणाः– पिच्छिलोष्णा गुरुर्गौल्या पित्तदाहहरा बल्या रुच्या दुग्धवृद्धिकरी च ( रापरि. ८.६८ )

**–केसरिन्**–पु., पारदयोग० द्विगुणेन गन्धकेन पारदं संमर्द्य त्रिगुणे ताम्रसंपुटे संरोधयेत् । ऊर्ध्वाधो लवणं दत्त्वा मृद्भाण्डे प्रक्षिप्य गजपुटे पाचयेत् । मात्रा–गुञ्जाद्वयम्; अनुपानं–पर्णखण्डं तदनु च हिङ्गुशुण्ठीवचाजीरकमरीचानामुष्णोदकेन तोलकमात्रं चूर्णं पिबेत् । फलम्– असाध्यशूलनाशः ( र. १८.११८ )

–क्षय–पु., शूलापनोदः, शूलनिवृत्तिः (अहृसू. १७.१५)

–गजकेसरिन्–पु., पारदयोग० पारदगन्धकहरितालान्येकद्वित्रिभागानि गृहीत्वा तेषां कज्जलीं च कृत्वा पलताम्रसम्पुटे स्थापयित्वा पिधाय च गजपुटे पचेत्। सम्पुटं तावदाकण्ठं सैन्धवेन पूरयेत्। वस्त्रगालितममुं रसं कूप्यां स्थापयेत्। कूपीं सैन्धवपूरिते भाण्डे स्थापयेत्। मात्रा–वल्लम्, फलं–शूलनाशः (र. १८.१५४-५६)

–गुल्मादिरक्षोघ्न–पु., वनस्पति० हिङ्गुः(रा. ६.५९)

–घातिदशक–न., द्रव्यगण० शूलघ्नगणः (असंसू.१६.२७) शूलप्रशमनवर्गः (चसू. ४.१७)

–घ्न–वि., शूलनाशनम् (अहृसू. ८.१८)

–घ्नवर्ग–पु., शूलप्रशमनवर्गः (असंसू. १५.४४)

–चिकित्सित–न., अध्यायसंज्ञा० (काश्यखि १८. १)

–पत्री–स्त्री., वनस्पति० शूली (रापरि. ८.६८)

–पाणि–पु., वनस्पति० शम्भुः (असंउ. ३)

–प्रशमन–वि., शूलघ्नः (चसू. ४.८)

–प्रशमनवर्ग–पु., महाकषायवर्गे प्रोक्त एको गणः, तत्र पिप्पली–पिप्पलीमूल–चव्य–चित्रक–शृङ्गवेर–मरिचाजमोदाजगन्धाजाजीगण्डीराणीति द्रव्याणि दश (चसू. ४.१७)

–विश्लेषण–न., नानाप्रकारार्तिशूलाहतगात्रस्येव वेदना (सुसू. २२.११)

–हन्त्री–स्त्री., वनस्पति० यवानी (रा. ६.१४१)

शूलान्तक–पु., पारदयोग० पारदभस्माभ्रकभस्मनी प्रत्येकं पलं ताम्रभस्म द्वे पले गन्धकं पलत्रयं हरितालं विमलं स्वर्णमाक्षिकं च कर्षं, पलार्धसम्मिता लाङ्गलीकन्दनागवङ्गौ पलार्धकौ चतुष्पलं त्रिवृच्चूर्णं सर्वाण्येतानि भूम्यामलकीरसेन दन्तीक्वाथेन च सप्तधा भावयेत्। मात्रा–वल्लम्, अनुपानम्–आर्द्रकस्वरसः, पथ्यं–दधिभक्तम्, फलं–सर्वरोगसर्वशूलहरत्वम् (र. १८.१३४-३८)

शूलारि– पु., वनस्पति० इङ्गुदी (रापरि.८.१७)

शूलाविष्ट–वि., शूलार्दितः (सुउ. ४०.९)

शूलिकाप्रोत–वि., लोहादिशलाकारोपितम्, इदमेव शूले पक्वत्वात् शूल्यम् अभिधीयते (सुसू. ४६.३५५-३५६)

शूलिनी–स्त्री., वनस्पति० शूली (र. २३.२२-२३) चित्रकः (र. २३.२२)

शूलीक–पु., देश० तत्रस्था जनाश्च; अयं मांसादिसात्म्यः (चचि. ३०.३१६)

शूलोद्वेष्टन–न., शूलेन कृत्वाऽङ्गमोटनम् नाम शूलहेतुकं (सुक. ४.३७)

शूल्य–न., शूलपक्वमांसम् (अहृसू. ३.२०; असंचि.७)

–मांस–न., लोहादिशलाकारोपितमग्निना पक्वं मांसम् हिङ्गूदके परिक्षिप्य शूले निष्पीडितं ततः पुनः पुनः सिक्त्वा जलेन विधूमेऽग्नौ प्रतापयेत्। फलाम्लेनापि पक्वं सौरभयुक्तं भवति (सुसू. ४६.३५७)

शृगाल–पु., पशु० जम्बूकः गुहाशयवर्गीयः (सुसू. ४६.७२)

–मांसगुणाः–उष्णमतिस्निग्धं गुरु बल्यं वातघ्नं च (ध. ६.४३८)

(शृगाली)–स्त्री., वनस्पति० कोकिलाक्षः (रापरि. ४.४८)

–घण्टी–स्त्री., वनस्पति० कोकिलाक्षः (रापरि. ४.४८)

–दंश–पु., जम्बूकदंशः, यदा श्वशृगालतरक्षुव्याघ्रर्क्षादीनां संज्ञावहाश्रितः श्लेष्मप्रदुष्टो वायुः संज्ञां मुष्णाति तदा प्रस्रस्तलाङ्गूलहनुस्कन्धा अतिलालावन्तोऽतिबधिरा अन्धाश्चेतस्ततो धावन्ति। तेनोन्मत्तेन सविषेण दंष्ट्रिणा दष्टस्य पुरुषस्य दंशोत्तरं सुप्तता भवति, भूयान् कृष्णरुधिरास्रावो जायते, दिग्धविद्धस्य लक्षणानि च जायन्ते (सुक. ७.४३-४६)

–पित्त–न., जम्बूकपित्तम्; एतद्विषहरम् (असंसू. ८) अनेन कृता वर्तिर्नीवनाञ्जनार्थमुपयुज्यते (चचि. ९.६७)

–मुख–न., स्वस्तिकयन्त्र० अष्टादशांगुलप्रमाणमिदं शृगालमुखसदृशं यन्त्रम् (सुसू., ७.१०)

–विन्ना–स्त्री., वनस्पति० पृश्निपर्णीभेदः (ध. १.९०; सुउ. ४२.११३)

–विष–न., जम्बूकविषम्; तल्लक्षणानि–व्यालविषवत् कण्डूनिस्तोदवैवर्ण्यादीनि भवन्ति (असंउ. ४६)

–शाव–पु., शृगालस्य बालः; अस्य मांसं यक्ष्मिणे हितं भवति (चचि. ८.१५२)

शृगालिका–स्त्री., वनस्पति० विदारी (ध. १.१४७) पृश्निपर्णी (रा, ४.११७)

शृङ्खलाबन्ध–पु., पारदबन्ध० हीरकेण मारितेऽन्यस्य पारदस्य निक्षेपः, वज्रादिमारितोऽवज्रादिमारितश्चेति पारदद्वयमपि एकत्रीकर्तव्यम् (र. ११.८०)

शृङ्खलारणक–पु., वनस्पति० कोकिलाक्षः (रापरि. ४,४८)

**शृङ्खलावात**–पु., रोग० तत्र लक्षणानि–देहः शुष्कपाण्डुः निद्रानाशः, शिरोव्यथा वान्तिर्हिक्का विस्फोटश्चेति ( र. २१.१४७-४८ )

**शृङ्खलिका**–स्त्री., वनस्पति० कोकिलाक्षः ( रापरि. ४.४९ )

**शृङ्ग**–पु., तन्त्रकार० रसरत्नसमुच्चयकर्त्रा सिंहसूनुगुसेनाऽऽलोचितस्तन्त्रकर्ता ( र. १.५-९ )

न., विषाणम् प्राणिजद्रव्येष्वेकम् ( चसू. १.६९ )

न., यन्त्र० ( चचि. ८.८२; सुसू. १३.५ ) शृङ्गं तु ह्रस्वमध्यदीर्घमष्टदशद्वादशाङ्गुलायतं त्र्यङ्गुलप्रवेशमुखमग्रे सर्षपोपमच्छिद्रं तनुचर्मनद्धं चूचुकाकारं च। तद्वातविषरक्ताम्बुदुष्टस्तन्यचूषणार्थम् उपयुज्यते ( असंसू. ३४.१४; अहसू. २५.२६ )

**( शृङ्गी- )**स्त्री., कीट० वायव्योऽयम् ( असंउ. ४; सुक. ८.५-८ )

शृङ्गनिर्मितवाद्यविशेषः ( र., ६.१४ )

वनस्पति० कर्कटशृङ्गी ( ध. १.८५; चसू. ४.१६; अहसू. १५.१२ )

अतिविषा ( ध.१.१० )

**–कन्द**–पु., वनस्पति० शृङ्गाटकः ( रापरि. ७.१८ )

**–वेर**– न., वनस्पति० आर्द्रकम् ( ध., २.८४; असंसू. ७.१५६ )

शुण्ठी ( ध. २.८२ )

**–वेरक**–न., वनस्पति० आर्द्रकम् (असंसू.७.१५६)

**–मेदिन्**–पु., वनस्पति० गुण्ठः ( ध., १.८३ )

**–मूल**–पु., वनस्पति० शृङ्गाटकः ( रापरि. ७.१८ )

**–यंत्र**–न., नाडीयन्त्र० शृङ्गम् ( सुसू. ७.१३ )

**–रुह**–पु., वनस्पति० शृङ्गाटकः ( रापरि. ७.१८ )

**–रोह**–पु., वनस्पति० भूतृणः ( रा. ८.७३; रापरि. ८.४२ )

**–वेर**–न., वनस्पति० आर्द्रकम् ( चसू. ४.९; सुचि. १४.१०; चसू. २५.३८ )

**–वेरपचन**–न., शुण्ठीपाकभाण्डम्, शृङ्गवेरं पच्यतेऽस्मिन्निति अधिकरणार्थे ल्युट्प्रत्ययतोऽत्र द्रष्टव्यः सिद्धां तत्र काकमाचीं नाद्यात्संस्कारविरुद्धत्वात् ( असंसू. ९.१०; सुसू. २०.१४ )

**–वेराम्बु**–न., शुण्ठ्या सहक्वथितं जलम् ( अहसू. ३.२३ )

**–वेरार्द्रकरस**–पु., वनस्पति० आर्द्रकरसः ( चचि. १३. १५३ ) द्र० 'आर्द्रक'

**–वेरिका**–स्त्री., शाक० गोजिह्विका, हरितवर्गे ( चसू. २७.१७१ )

**शृङ्गक**–पु., वनस्पति० जीवकः ( ध. १.१२३ )

**( शृङ्गी )**–विष–न., 'महोरा' इति हस्तिनापुरनिकटे प्रसिद्धं विषम्, 'सिंगिया' इति वा ( र. १२.७६ )

**शृङ्गाट**–न., वनस्पति० शृङ्गाटकः ( र. १३.१३-१९ )

मर्म० शृङ्गाटकमर्म ( चचि. २६.१३९ )

**( शृङ्गाटी )**–स्त्री., वनस्पति० जीवन्ती ( रा. ३.१७८; असंचि. ७ )

त्रिकण्टकफलम्, शृङ्गाटकः ( सुउ. ४२.७० )

**शृङ्गाटक**–पु., न., वनस्पति० त्रिकोणाकृतिः जलजकन्दशाकः; गुणाः–गुरु विष्टम्भि शीतं च ( चसू., २७.११७; सुसू., ४६.३०४ ) जलमध्ये त्रिकण्टकफलम् ( सुचि. ३.६१ ) रक्तपित्ते उपयुक्तः (चचि.४.७१) फलासवार्थमुपयुक्तः (चसू.२५.४९) गर्भस्थापनार्थमुपयुक्तः ( चशा.८.२४ ) वृष्यघृते उपयुक्तः ( चचि. २(२).२२ ) पित्तजविसर्पे सघृतलेपनार्थमुपयुज्यते ( सुचि. १७.६ ) मेहे उपयुक्तं द्रव्यम् ( सुचि. ११.१० ) शीतो, गुरुः, लघुः, सरः ( रापरि. ७.१८ ) विष्टम्भी वृष्यतमः रुच्यः, तापश्रमास्त्रिदोषघ्नः, मेहनदार्ढ्यकृत् ( रापरि. ७.१८ )

हिं.—सिंघाडा.

**म.—शिंगाडे.**

गु.—शिंगोडा.

बं.—पाणिफल, शिंगाडा.

ता.—पौरी मत्ताईसाल, शिंगारकोट्टाइ.

फा.—सुरंजान्.

मर्म० शृङ्गाटकमर्म ( चचि. २६.१११ )

न., त्रिपथम् ( असंउ. ५ )

**–कशेरुकासव**–पु., आसुत० कूलचराणां प्राणिनां मांसभक्षणोत्तरमनुपानत्वेन प्रोक्तः ( सुसू. ४६.४३३ )

**–मर्मन्**–न., घ्राणश्रोत्राक्षिजिह्वासन्तर्पणीनां सिराणां मध्ये सिरासंनिपातः शृङ्गाटकानि, तानि चत्वारि मर्माणि, इमानि सिराममाणि चतुरङ्गुलप्रमाणानि सद्यःप्राणहराणि च ( सुशा. ६.६ )

**शृङ्गार**–न., खनिज० सुवर्णम् ( रा. १३.३ )

अगरुभेदः, कृष्णागरु (रा. १२.४०) द्र० 'अगरु'

**–भूषण**–न., खनिज० सिन्दूरम् ( ध. ३.१०१ )

**शृङ्गारक**–न., खनिज० सिन्दूरम् ( रा. १२. १६१ )

**शृङ्गाह्व**–पु., वनस्पति० जीवकः ( रा., ५.१५४ )

**शृङ्गिक**–न., विष० वर्णेन कृष्णपिङ्गलम् ( र. २९.१७ )

(शृङ्गिका)-स्त्री., वनस्पति० कर्कटशृङ्गी ( रा. ६.११० )
शृङ्गिन्-पु., कीट० अयं शूकतुण्डविषः ( सुक. ३.५ )
कन्दविष० गुणाः-स्निग्धो घनो गुरुः कर्मण्यश्च ( असंउ. ४०.४८ )
वनस्पति० ऋषभकः ( रा. ५.१५७ )
प्लक्षः ( ध. ५.८१ )
वटः ( ध. ५.७६ )
आम्रातकः ( ध. ५.१२ )
(शृङ्गि)-विष-न., कन्दविष० अनेनाङ्गसाददाहोदर-विवृद्धयो जायन्ते ( सुक. २.५ )
शृङ्गीक-न., वनस्पति० कर्कटशृङ्गी ( असंचि. ४ )
विष० कपिलदेशेषु नदीवृक्षेषु जायमानं गोशृङ्गव-द्विधा शृङ्गयुक्तमन्तर्बहिःश्वेतं हस्तिनापुरनिकटे 'महोरा' इति नाम्ना प्रसिद्धं विषम् ( र. १०.८५)
( शृङ्गीका )-स्त्री., वनस्पति० आमलकी ( असंउ. ४८ )
शृङ्ग्यादिचूर्ण-न., योग० द्रव्याणि-कर्कटशृङ्गीवचाकट्-फलरोहिषतृणमुस्तादेवदारुशुण्ठी धान्यहरीतकी-भार्ङ्गीलादीनि। एतद्धिङ्गुयुतमुष्णजलेन पीतं घोर-मपि कासं निहन्ति ( सुउ. ५२.१४ )
शृत-वि., क्वथितम्, उत्क्वथितम् ( चसू. ४.७; सुचि. ९.१८ )
-क्षीरदधि-न., क्वथितक्षीरोद्भवं दधि, गुणाः-वातपित्तहरं धात्वग्निबलवर्धनं रुच्यं च ( सुसू. ४५.७७ )
-शीत-वि., आदौ शृतं पश्चाच्छीतम् ( सुचि. २४.१०५ )
-शीतजल-न., आदौ क्वथितं पश्चाच्छीतलं जलम्, इदं मद्यपानसमुद्भूते रोगे पित्तोत्थिते रोगे संनिपातजे च रोगे प्रशस्तम् ( सुसू. ४५.४२-४३ )
शेखर-न., वनस्पति० लवङ्गम् ( रा. १२.८४ )
( शेखरी )-स्त्री., वनस्पति० वृक्षादनी ( ध. ४.९७ )
शेफस्-न., शारीर० मेहनम्, षट्पञ्चाशत्प्रत्यङ्गेष्वेकम् शुक्रवहस्रोतोमूलम् ( चशा. ७.११; चवि. ५.८; सुनि. ३.५ )
-स्तम्भ-पु., रोग० मेढ्रस्तम्भः, अशीतिवातविकारे-ष्वेकः ( चसू. २०.११ )
शेफालिका-स्त्री., वनस्पति० निर्गुण्डीः ( ध. ४.८३; रा. ४.१२१ )
-पत्र-न., रक्तवृन्ता शारदकुसुमा शेफालिका, अस्याः पत्रमनुशस्त्रत्वेनोपयुज्यते ( सुसू. ८.१५ )
शेलु-पु., वनस्पति० श्लेष्मातकः ( चचि. २३.१८७; ध. ५.९४; सुक. २.४५-४६ )

शेवल-पु., न., वनस्पति० शैवालम् ( असंचि. ८ )
पद्मकम् ( असंचि. ८ )
शेष-वि., अवशिष्टम् ( सुउ. २३.१२ )
-दोष-पु., अवशिष्टो दोषः ( अहसू. १३.१५ )
शैक्य-वि., तीक्ष्णम् ( डल्हणः सुसू. ८.१९ )
शैक्यायस-न., कृत्रिमधातु० सारमयलोहम्, 'पोलाद' इति म. भाषायाम् ( सुसू. ८.१९ )
शैखरिक-पु., वनस्पति० अपामार्गः ( ध. १.२६१; चवि.७.१९ )
विडङ्गम् ( चवि. ७.१९ )
शैघ्रव-वि. शिग्रोः इदमिति शैघ्रवम् ( अहसू. १५.४ )
शैत्य-न., शीतत्वम् ( चनि. १.२७ ) लक्षण० ( चनि. १.२७ ) रिष्टलक्षण० हस्तपादोच्छ्वासादिषु स्वभावोष्णतायुक्तेषु यत्र शैत्यं तद्रिष्टलक्षणं मरणाय कल्पते ( सुसू. ३२.३ )
अग्नेरतिमन्दता ( असंसू. २०.१६ )
शैथिल्य-न., अनिबिडसंयोगता ( चशा. ४.१४ )
शैरीय-न. वनस्पति० सैरेयम्, झिण्टिका (चसू.१४.३२)
शैरीष-वि., शिरीषस्य इदं, इति शैरीषम् (शिरीषपुष्पादि) ( सुउ. ६१.३२; असंसू. १२-८९ )
शिरीषबीजम्, अपस्मारशमने सिद्धार्थकघृते एकं द्रव्यम् ( सुउ. ६१.३२ ) व्रणेषूत्सन्नमांसेषु मांसस्फोटनार्थमुपयुक्तम् ( सुसू. ३७.,३२-३३ )
शैरीषत्वच्-स्त्री., शिरीषवृक्षस्य त्वक् सेयं कुष्ठलेपे उपयुज्यते ( चचि. ७.९६. )
शैर्यक-पु., न., वनस्पति० कुरण्टकः (र.११.५३-५७)
शैल-पु., पर्वतः ( सुचि. ३०.४० )
न., भैषज्य० शिलाजतु (रा. १३.२३९, पृ. १२८)
सोरकम् ( र. २.१५१ )
-गर्भाह्वा-स्त्री., वनस्पति० शिलावल्का (रा.५.२१३)
-ज-न., वनस्पति० शैलेयम् (रा. १२.१३१; पृ. ११०)
-जजतु-न., भैषज्य० शिलाजतु ( सुउ. ४४.३१ )
-जतु-न., भैषज्य० शिलाजतु ( चचि. २८.२४२ )
-जामूल-न., वनस्पति० सैंहलीपिप्पली (रा.६.११९)
-भेद-पु., वनस्पति० पाषाणभेदः ( सुउ. १०.४ )
-वर-पु., पर्वतश्रेष्ठः (हिमालयः) ( चसि. ३.३ )
-वल्कला-स्त्री., वनस्पति० शिलावल्का ( रा. ५.२१३ )
-सुता-स्त्री., वनस्पति० तेजोवती ( रा. ३.३९२ )
शैलक-न., खनिज० शैलेयम् (रा. १२.१३१)

**शैलान्तर**-न., शैलयोर्मध्यभागः, शैलस्था गुहा ( चवि. ६.१७ )

**शैलु**-पु., वनस्पति० श्लेष्मातकः ( ध. ५.९४ )

**शैलूष**-पु., वनस्पति० बिल्वः ( ध. १.१०६ )

**शैलेन्द्रस्थ**-पु., वनस्पति० भूर्जः ( रापरि. ९.२३ )

**शैलेय**-न., भैषज्य० शिलाजतु ( ध. ३.१६५; चचि. २८.१५२; र. २२.१६७ )
वनस्पति० भद्रमुस्तम् ( चसू. ३.२८; चक.१.२३ )
भैषज्य० शिलापुष्पम्, 'दगडफूल' इति लोके ( र. २२.१४८ )
वनस्पति० सुगन्धिद्रव्य० धूमपानप्रयोगे एकं द्रव्यम् ( चसू. ५.२२; चचि. ३.२६७; असंसू. ७.१५६ ) गुणाः-तिक्तं ( ध ) शीतलं लघु, हृद्यं कफपित्तहरं कण्डूकुष्ठाश्मरीदाह-विषहृद्गुदरक्तहरं च ( सुक. ६.१४-२७ )
तिक्तं सुगन्धि रक्तदोषतृष्णावमिश्वासव्रणदोषहरं च ( ध. ३.७३ )
हिं.—पत्थरफूल, भूरिछरिला.
म.—दगडफूल.
गु.—पत्थरफूल.
बं.—शैलज.
फा.—दहाल.

**शैलेयक**-पु., वनस्पति० शैलेयम् ( चक. १.२३; असंशा. ४.५१ )

**शैलोद्भव**-न., लवण० शैलोद्भवलवणम् ( सुसू. ४६.३२१ )

**( शैलोद्भवा )**-स्त्री., वनस्पति० शिलावल्का ( रा. ५.२१६ )

**शैव**-पु., वनस्पति० वसुकः (रा. १०.३३; रापरि.५.३७) धत्तूरः ( १०.१२ )

**( शैवी )**-वि., शिवदेवतायाः नाम शिवार्था यज्ञे दत्ता ( आहुतिः ) ( चचि. ३.१८ )

**-पत्र**-पु., वनस्पति० बिल्वः (रा. ११. १३४)

**शैवल**-न., वनस्पति० दूर्वा ( सुउ. १०.४ )
पद्मकम् ( चचि. ४.१०३ )
शैवालम् ( सुसू. १३.१४; सुचि. ५.८ )

**-श्यावा**-स्त्री., शैवलमिव श्यावा नाम कृष्णा, शुद्धजलोद्भवा जलूका निर्विषा शैवलश्यावा वर्तते ( अहसू. २६.३८ )

**शैवाल**-न., वनस्पति० निर्वापणप्रदेहे उपयुज्यते ( चसू. ३.२६; असंसू. ६.२७ ) गुणाः-तिक्तकटुकं कषायं शीतं कान्तिदं मध्यं वातान्ध्यविसर्पकण्डू-कुष्ठविषापहं च ( ध. १.४३ ) स्निग्धं तापहरं व्रणनाशनं च ( रा. ८.६४ )
हिं.—सिवार.
म.—शेवाळे.
गु.—शेवाल, लील.
बं.—शेयोआला.
फा.—पशमेंदरा, जामेंगुक, जबाल.

**-मूल**-.न., शैवालस्य मूलम् जलप्रसादनकरमिदं द्रव्यम् ( सुसू. ४५.१७ )

**शैशुकसर्पिस्**-न., (परिव०) ससिद्धघृत० वातगुल्म-निवारणार्थमुपयुज्यते ( काचि. २७ )

**शैशुकस्नेह**-पु., (परिव०) बालानां बस्तिकर्मोपयोगी सिद्धस्नेह० ( कासि. ८ )

**शोक**-पु., मनोभाव० दुःखम् (चनि. ७.४;सुचि.३९.१४) शोकं दैन्येन ( रोदनादिना ) परीक्षेत ( चवि. ४.८) असौ शोषणानां श्रेष्ठः ( चसू.२५.४०; असंसू. १३.३ )

**-कर्शित**-वि., शोकेन कर्शितः नाम क्षीणः शोककर्शितं बृंहयेत् ( अहसू. १४.८ )

**-नाश**-पु., वनस्पति० अशोकः ( ध. ५.१५९ )

**-शल्य**-न., शोक एव शल्यम्; हृद्यवस्थितमनेक-कारणोत्पन्नं शोकशल्यं हर्षेण जयेत् (सुसू. २७.५) शोकजनितमानसोन्मादे सान्त्वनादिभिः शोकशल्य-मपनयेत् ( सुउ. ६२.३५ )

**-शोष**-पु., ( परिव० ) रोग० शोकजः शोषः ( सुउ. ४१.१८ )

**शोकातीसार**-पु., रोग० शोकेनोत्पन्नोऽतीसारः द्र० 'अतिसार' ( चचि. १९.११ )

**शोण**-पु., वनस्पति० टिण्टुकः ( रा. ९.१४३ )
वि., रक्तवर्णम् ( र. ५.५० )
इक्षुभेदः, रक्तेक्षुः ( रा. १४.१८९ ) द्र० 'इक्षु'
सिन्दूरम् ( रा. १२.१६० )

**( शोणी )**-स्त्री., वनस्पति० सैरेयकः ( रा. १०.४१९; पृ. ६३ )

**-झिण्टिका**-स्त्री., वनस्पति० सैरेयकः ( रा. १०.४१९; पृ. ६३ )

**-पत्र**-पु., वनस्पति० पुनर्नवा ( रा. ५.४०८ )

**-पद्म**-न., वनस्पति० रक्तपद्मम् ( रा. १०.२४१)

**-पाण्डुरा**-वि., रक्तश्वेतवर्णा, इयं मृत्तिका मूषार्थं शस्यते ( र. १०,६ )

**-पुष्पी**–स्त्री., वनस्पति० सिन्दूरी ( रापरि. १०.१९)
**-शालि**–स्त्री., वनस्पति० रक्तशालिः ( रा. ६.८७ ) द्र० 'शालि'
**-संभव**–न., वनस्पति० पिप्पलीमूलम् (रा.६.११३)

**शोणित**–न., शारीरधातु० रक्तम्; दशप्राणायतनेष्वेकम् ( चशा. ७.९; सुसू. २१.१७; सुसू. १४.२१ ) शरीरे शोणितप्रमाणं अष्टावञ्जलयः (चशा. ७.१५) आर्तवम्, रजः ( सुशा. २.१ ) स्त्रीबीजम् ( चशा. ३.३; सुशा. ५.३; काजातिसूत्रीय. ४) वनस्पति० चन्दनभेदः, रक्तचन्दनम् (रा. १२.१०) द्र० 'चन्दन' कुङ्कुमभेदः,तृणकुङ्कुमम् (रा. १२.२३) द्र० 'कुङ्कुम' कुङ्कुमम् ( रा. १२.२१ )

**-किट्ट**–न., रक्तधातोर्मलः पित्तम् 'शोणितकिट्टप्रभव उण्डुकः' ( सुशा. ४.२५ )
**-क्लेद**–पु., रोग० शोणितस्य प्रमाणतोऽप्यधिकमार्द्रत्वम्, चत्वारिंशत् पित्तविकारेष्वेकः ( चसू. २०.१४ )
**-क्षय**–पु., लक्षण० रक्तनाशः ( सुशा. ६.२४ ) रक्तधातुप्रमाणहीनत्वम्; शोणितक्षये त्वक्पारुष्यमम्लशीतप्रार्थना सिराशैथिल्यं चेति लक्षणानि भवन्ति ( सुसू. १५.९ )
**-गन्ध**–पु., रक्तस्य गन्धः ( सुसू. १३.२१ )
**-गर्ध**–वि., शोणितलौल्यः ( सुसू. १३.२१ )
**-गुल्म**–पु., रोग० रक्तगुल्मः, पञ्चगुल्मप्रकारेष्वेकः ( चनि. ३.३ ) द्र० 'गुल्म' 'रक्तगुल्म'
**-च्छर्दि**–स्त्री., लक्षण० रक्तस्य च्छर्दिः; क्षतक्षीणस्य पूर्वरूपमेकम् ( चचि. ११.१३ )
**-ज**-वि., शोणितात् शोणिते वा जातम् शोणितसंश्रयं वा ( चवि. ७.९ )
**-ज-कृमि**–पु., रोग० कुष्ठैः समानं समुत्थानं, स्थानं—रक्तवाहिन्यो धमन्यः, संस्थानम्—अणवो वृत्ताश्चापादाश्च, सूक्ष्मत्वाच्चैके भवन्त्यदृश्याः, वर्णः—ताम्रः, नामानि-केशादा, लोमादा, लोमद्वीपाः, सौरसा, औडुम्बरा, जन्तुमातरश्चेति; प्रभावः—केशश्मश्रुनखलोमपक्ष्मापध्वंसः, व्रणागतानां च हर्षकण्डूतोदसंसर्पणानि, अतिवृद्धानां च त्वक्सिरास्नायुमांसतरुणास्थिभक्षणमिति, चिकित्सा—कुष्ठसमा ज्ञेया ( चवि. ७.११ )
**-जरोग**-पु. रोग० रक्तजरोगः (चसू. २४.११-१७)

रक्तजा रोगाः—मुखपाकोऽक्षिरागश्च पूतिघ्राणास्यगन्धिता। गुल्मोपकुशवीसर्परक्तपित्तप्रमीलकाः। विद्रधी रक्तमेहश्च प्रदरो वातशोणितम्। वैवर्ण्यमग्निनाशश्च पिपासा गुरुगात्रता। संतापश्चातिदौर्बल्यमरुचिः शिरसश्च रुक्। विदाहश्चान्नपानस्य तिक्ताम्लोद्गिरणं क्लमः। क्रोधप्रचुरता बुद्धेः संमोहो लवणास्यता। स्वेदः शरीरदौर्गन्ध्यं मदः कंपः स्वरक्षयः। तंद्रा निद्रातियोगश्च तमसश्चातिदर्शनम्। कंडु रुक् कोठपिडिका कुष्ठचर्मदलादयश्च, शीतोष्णस्निग्धरूक्षाद्यैः उपक्रान्ताश्च ये गदाः सम्यक्साध्या न सिध्यन्ति रक्तजांस्तान्विभावयेत्। ( चसू. २४.११-१७ )

**-दर्शन**–न., लक्षण० मुखादिमार्गेण शोणितनिर्गमः ( सुउ. ४१.११ )
**-पित्त**–न., रोग० रक्तपित्तम् ( चसू. १.१०८ )
**-पूर्णकोष्ठता**—स्त्री., रक्तेन पूर्णः कोष्ठः यस्य यस्मिन्वा, तस्य भावः; पार्श्वसंधिमर्मविद्धलक्षणम् ( असंशा. ७.१३ )
**-प्रभ**–वि., रक्तच्छायः, रक्तकान्तिः ( सुनि. १६.९ )
**-फेन**–पु., रक्तस्य फेनः, 'फुप्फुसः शोणितफेनप्रभवः' ( सुशा. ४.२५ )
**-भाव**–पु., लक्षण० रक्तस्रावः ( असंशा. ४.२७ )
**-मेह**–पु., रोग० रक्तवर्णमूत्रत्वाद्रक्तमेहः, पित्तजमेहेष्वेकः ( सुनि. ६.९; सुचि. ११.९; असंनि. १०.२५ ) द्र० 'मेह'
**-रोग**–पु., शोणितजा रोगाः ( चसू. २४.१८ )
**-वर्णनीय**-वि., अध्यायसंज्ञा० शोणितवर्णनमधिकृत्य कृतोऽध्यायः ( सुसू. १४.१ )
**-वहस्रोतस्**–न., स्रोतो० शोणितवहनशीलं स्रोतः ( चवि. ५.८ )
**-वाहिनी**–स्त्री., सिरा० शोणितं वहति यस्याम् ( चनि. ६.८ )
**-ष्ठीवन**–न., रक्तस्य थूत्कारः ( चनि. ६.१४; सुचि. ३४.१३ )
**-संमोह**–पु., रक्ताप्रवृत्तिः ( सुशा. ८.१९ )
**-स्थापन**–वि., दुष्टशोणितस्य दुष्टिमपहृत्य शोणितं प्रकृतौ स्थापयतीति रक्तप्रसादनं वा ( चसू. ४.८ )
**-स्थापनगण**–पु., द्रव्यगण० शोणितस्थापनानि द्रव्याणि-मधुमधुकरुधिरमृत्कपाललोध्रगैरिकमोचरसप्रियङ्गुशर्करालाजा इति दशेमानि द्रव्याणि ( चसू. ४.४६; असंसू. १५.४५ )

-स्राव-पु., रक्तस्रावः ( सुनि. ८.३ )

**शोणिताक्त**-वि., रक्तयुक्तम् ( सुचि. २९.१२ )

**शोणितागमन**-न., लक्षण० रक्तस्रुतिः (सुशा. ९.१२)

**शोणितातिप्रवृत्ति**-स्त्री., अतिरक्तस्रावस्य प्रवृत्तिः ( सुशा. ६.२६ )

**शोणितातियोग**-पु., लक्षण० शोणितस्यातिस्रावः अर्शोविकारे शोणितातियोगोपद्रवा आक्षेपादयो भवन्ति ( सुनि. २.१३ )

**शोणितातिषेक**-पु., लक्षण० शोणितस्यातिस्रावः ( चनि. १.१९ )

**शोणितादिधातु**-पु., शारीरधातु० शोणितादयो धातवः ते च यथोत्तरं गुरवो ज्ञेयाः ( चसू. २७.३३७ )

**शोणिताभिष्यन्द**-पु., नेत्ररोग० द्र० 'अभिष्यन्द' ( चसू. २६.८४ )

**शोणितार्बुद**-न., रोग० रक्तार्बुदम्. शुक्रदोषजरोगेष्वेकम् ( सुनि. १४.१३; असंउ. ३४ ) द्र० 'अर्बुद'

**शोणितार्मन्**-न., नेत्ररोग० शुक्लमण्डले समं श्लक्ष्णं पद्माभमधिमांसकं भवति ( असंउ. १३.२२६; सुउ. १.३८ )

**शोणितार्शस्**-न., नेत्ररोग० ( सुउ. १.३६ ) नेत्रवर्त्मगतोऽङ्कुरान्वितः, यस्मिन्वर्त्मस्था मृदवोऽङ्कुरा असकृच्छिन्ना अपि विवर्धन्ते, दाहकण्डूरुजावन्तश्च भवन्ति ( सुउ. ३.२६ )असाध्योऽयम् (सुउ.१३६)

**शोणितावसेक**-पु., उपक्रम० रक्तमोक्षणम् (सुशा.८.४) शोणितावसेकसाध्यरोगाः— त्वग्दोषा ग्रन्थयः शोफा शोणितजा रोगाश्च, तेषु सिरां विध्येत् ( सुसू. १४.३४ ) द्र० 'रक्तमोक्ष'

**शोणितावृत**-वि., रक्तेनावृतम् ( सुउ. २१.३४; चचि. २८.१९४ )

**शोणितास्थापन**-न., शोणितातिप्रवृत्तिस्तम्भनम् ( सुचि. १.४८ ) एतद्धि चतुर्विधम्—संधानं स्कन्दनं पाचनं दहनं च। कषायो व्रणं संधत्ते, हिमं रक्तं स्कन्दयते, क्षौमादिजं भस्म संपाचयति, दाहः सिराः संकोचयति ( सुसू. १४.४० ) व्रणस्य षष्ट्युपक्रमेष्वेकः ( सुचि. १.८ )

**शोथ**-पु., रोग० संप्राप्तिः—दुष्टो वायुर्दुष्टान् रक्तपित्तकफान् बहिः सिरा नीत्वा तैः रुद्धगतिः सन् त्वङ्मांससंश्रयमुत्सेधं कुर्यात्। अतो निचयात्संहतं तं शोथमाहुः। हेतुविशेषैः रूपभेदाच्च शोथं नवात्मकमाहुः। वातजपित्तजकफजसंनिपातजद्वन्द्वजभेदात्सप्त, विषजाभिघातजश्च द्विधा, इति नवप्रकाराः शोथाः। शोथहेतुः क्षुद्व्याधिमयाभुक्तादिभिः कृशानां च क्षाराम्लतीक्ष्णोष्णगुरूपसेवनं निजस्य शोथस्य कारणम्। तथा च आमं दधि मृच्छाकविरोधिदुष्टान्नपानादिगरोपसृष्टान्नसेवनमर्शांसि निष्क्रियत्वं देहाशुद्धिर्मर्मोपघातः आमगर्भपतनादिका विषमा प्रसूतिः वमनादीनामसम्यगुपचारश्चेति निजस्य शोथस्य हेतवः। पूर्वरूपम्—उपतापः सिराप्रसरणवत्पीडाऽङ्गगौरवं च। सामान्यलक्षणानि—गौरवमनवस्थितत्वमुत्सेध ऊष्मा सिरातनुत्वं लोमहर्षौ वैवर्ण्यं च। तत्र वातजशोफलक्षणानि—वातजशोथः स्थानात्स्थानान्तरगतिस्तनुत्वक् स्पर्शाज्ञत्वकारी परुषोऽरुणोऽसितो हर्षार्तियुतः। अनिमित्ततः प्रशाम्यति। प्रपीडितः प्रोन्नमति। दिवा च बलवान् भवति। स्नेहोष्णमर्दनाद्यैश्च प्रशाम्यति। पित्तजः शोथः मृदुस्पर्शो गन्धयुक्तः कृष्णपीतरक्तो भ्रमज्वरस्वेदतृष्णामदान्वितोऽतिशयदाहपाकवानक्षिरागकृत्स्पष्टरुक् च। कफजः शोथः—गुरुः स्थिरः पाण्डुररोचकान्वितः प्रसेकनिद्रावमिवह्निमान्द्यकारी चिरोत्पत्तिविनाशो निपीडितो नोन्नमति। रात्रौ च बलवान्भवति। द्विदोषजः शोथो निदानाकृतिसंसर्गाज्ज्ञेयः। संनिपातजः शोफो व्यामिश्रलक्षणः सर्वाकृतिश्च भवति। अभिघातजशोथः—शस्त्रादिच्छेदभेदक्षतादिभिरभिघातेन भवति। तथा च शीतवातैः समुद्रवातैर्भल्लातककपिकच्छुजैः रसैः शूकैश्च संस्पर्शाद्भवति। स विसर्पवान्भृशोष्मा लोहिताभासः प्रायशः पित्तलक्षणश्च। विषजशोथः-सविषप्राणिपरिसर्पणमूत्रणाद्दंष्ट्रादन्तनखाघाताद्विषप्राणिनामपि विण्मूत्रशुक्रोपहतमलवद्वस्त्रसंसर्गात् विषवृक्षानिलस्पर्शाद्गरयोगावचूर्णनाद्वा असौ भवति। स च मृदुश्चलोऽवलम्बी शीघ्रो दाहरुजाकरश्च भवति। आशयभेदेन शोथस्थानानि आमाशयस्थिता दोषा ऊर्ध्वं शोथं कुर्वन्ति। उरःपक्वाशयमध्ये तु पक्वाशयस्था दोषाः शोथं कुर्वन्ति। पक्वाशयादधः वर्चःस्थानगता दोषाः शोथं कुर्वन्ति। सर्वसरं शोथं कृत्स्नदेहमनुप्राप्ता दोषाः कुर्वन्ति। साध्यासाध्यत्वम्—मध्यदेशस्थितः सर्वगश्च कष्टः। अर्धाङ्गो रिष्टभूतः ऊर्ध्वपरिसर्पणः श्वासपिपासाच्छर्दिदौर्बल्यज्वरारोचकादियुक्तश्चासाध्यः। अकारणसमुत्थितः पादजः शोथः पुरुषं हन्ति। मुखजो गुह्यगश्च नारीं पुरुषं च हन्ति। कुक्ष्युदराश्रितः गले मर्मणि वा स्थितः स्थूलः खरो वाऽसाध्यः। तथैव बालवृद्धकृशानाम-

साध्यः। अनुपद्रवो नवश्च शोथः साध्यः (मा.) उपद्रवाः—श्वासः पिपासा दुर्बलत्वं ज्वरश्छर्दिररोचको हिक्काऽतीसारः कासश्च (सुचि. २३.८) शोथः शोफशब्देनापि केषुचिद्ग्रन्थेषु निर्दिश्यते (सुसू. १७.१८-१९; सुचि. २३.; काखिल. १७; चसू. १८; चचि. १२; अहनि. १३; अहचि. १७)

**-हर**-वि., शोथघ्नम्, पञ्चकषायवर्गे एको गणः (चसू. ४.१६)

**शोथिन्**-वि., शोथयुक्तः (चसू. १३.९१)

**शोधक**-पु., वनस्पति० कङ्कुष्ठम् (रा. १३.२००)

**शोधन**-न., वनस्पति० कङ्कुष्ठम् (ध. ३.१४१)

कासीसम् (१३.१७९)

उपक्रम० दोषाणां शरीराद्बहिर्निर्हरणम्, चिकित्सा-प्रकारः (चसू. १.७६; सुचि. १.५४) शोधनं शमनं चेति समासाद्द्विधौषधं भवति (अहसू. १.२५) तत्रापि शोधनं पञ्चधा-निरूहो वमनं कायरेकः शिरोरेकोऽस्त्रविस्रुतिश्च (असंसू. २४.७)

व्रणोपक्रमेषु शोधनं नाम पूयादिदुष्टद्रव्य-विस्रावणम् (सुसू. १७.१८) व्रणशोधनं तावदष्ट-विधम्-कषायवर्तिकल्कघृततैलरसक्रियाचूर्णधूपन-भेदेन (सुसू. ३७.१२] शोधनार्हाः— स्थौल्यबल-पित्तकफादिकाः, आमदोषज्वरच्छर्द्यतीसारहृदा-मयार्ताः, विबन्धगौरवोद्गारहृल्लासपीडिताश्च (अहसू. १४.१२-१३)

दोषनिर्हरणं भेषजम् (चसू. १.१०९)

पु., वनस्पति० निम्बूकः (रा. ११.२२)

**(शोधनी)**-स्त्री., वनस्पति० नीलिनी (रा. ४.३४९)

ताली (रापरि. ३.३७)

जेपालः (रा. ६.३४४)

**-गण्डूष**-पु., शोधनार्थं गण्डूषः (असंसू. ३१.४) द्र० 'गण्डूष'

**-द्रव्य**-न., शोधनं द्रव्यम् यथा वचाकोशातकी निम्बपिप्पल्यादीनि द्रव्याणि (काखिल. २)

**-द्रव्यसंभृता**-वि., विरेचनद्रव्यनिर्मिता (वर्तिः) (सुचि. ३७.११८)

**-बस्ति**-पु., निरूहबस्तिः (सुचि. ३५.१९)

**-मार्ग**-पु., दोषनिर्हरणार्थमासन्नो मार्गः (अहसू. १३.३०)

**शोधनादिगणसंग्रह**-पु., अध्यायसंज्ञा० (अहसू. १५)

**शोधनालेप**-पु., कल्प० व्रणशोधनार्थमालेपविशेषः (असंउ. ३०)

**शोधनीयगण**-पु., लोहादीनां शोधनकरं द्रव्यत्रयम्, काचः टङ्कणं शुक्तिश्चेति (र. १०.९६; र. ३६.३७)

**शोफ**-पु., रोग० शोथः (सुनि. १०.३)

शरीरैकदेशोत्थितः शोथः, द्र० 'व्रणशोथः व्रण-शोफः' (सुसू. १७.३) अवस्थाभेदेन स त्रिधा— आमः पच्यमानः पक्वश्च (सुसू. १७.५)

**(शोफा)**-स्त्री., वनस्पति० हरिद्रा (रा. ६.८१)

**-क्रिया**-स्त्री., व्रणशोफचिकित्सा (सुचि. १८.३)

**-घ्नी**-वनस्पति० पुनर्नवाभेदः, रक्तपुनर्नवा (रा. ५.४०७) द्र० 'पुनर्नवा'

शालिपर्णी (रा. ४.११४)

**-चिकित्सित**-वि., अध्याय० (काचि. शोफचि.)

**-नाशन**-पु., वनस्पति० नीलः (रापरि. ९.११)

**-हारिन्**-पु., वनस्पति० वनबर्बरिका (रा. १०.८८)

**शोफाभिवृद्धि**-स्त्री., शोफस्य समन्ततः प्रसारः (सुशा. ६.२४)

**शोफित**-वि., शोफयुक्तम् (चइ. १०.१५)

**शोभना**-स्त्री., वनस्पति० वासन्ती (ध. ५.१३९)

हरिद्रा (रा. ६.८१)

**शोभा**-स्त्री., वनस्पति० गोरोचना (रा. १२.३३)

**शोभाञ्जन**-पु., वनस्पति० शिग्रुभेदः, नीलशिग्रुः (रा. ७.६२; सुउ. ४५.१९) द्र० 'शिग्रु'

**शोभाञ्जनक**—पु., वनस्पति० शिग्रुः (सुचि. ७.२४; चसू. ४.१३)

**शोलिका**-स्त्री., वनस्पति० शोली (रापरि. ७.१७)

**शोली**-स्त्री., वनस्पति० वनहरिद्रा, वन्यारिष्टा, शोलिका इत्यस्या अपरनामानि, गुणाः—कटुर्गौल्या तिक्ता रुच्या दीपनी च (रापरि. ७.१७)

हिं.—वनहलदी.

**म.—रानहळद, शोली.**

गु.—वनहलदर.

बं.—बनहलुद.

ता.—कस्तुरिमंजल.

**शोष**-पु., शुष्कता, वायोः कर्मस्वेकम् (चसू. २०.१२; अहसू. १२.५०)

लक्षण० मुखगलयोः शुष्कता, अतिलङ्घनदोष० (सुउ. ३९.१०५) पित्तज्वरलक्षणेष्वेकम् (र. १२.१०)

रोग० गर्भशोषरूपो रोगः (चशा. २.१५) वात-शोषणेन विहतौजस्त्वाद्गर्भस्य शुष्कता, उपशुष्ककगर्भ इति वा (सुशा. १०.५७; चशा. २.१५)

रोग० शोषभेदाः–व्यवायशोषः, शोकशोषः, जराशोषः, व्यायामशोषः, अध्वशोषः, उपवासशोषः, व्रणशोषः, उरःक्षतशोषः च ( सुउ. ४१.१६ ) एते सर्वे शोषाः धातुक्षया एव; तेषां चिकित्सा धातुक्षयोक्तेव कर्तव्या ( सुउ. ४१.२७ )

**–द्वार**–न., शोषस्य नाम राजयक्ष्मणः कारणम् ( असंसू. १३.३ )

**–निदान**–न., अध्यायसंज्ञा० (चनि. ६.१ )

**–प्रतिषेध**–पु., अध्यायसंज्ञा० ( सुउ. ४१.१ )

**शोषण**–वि., व्रणस्यार्द्रभावनाशकः ( क्षारगुणः ) ( सुसू. ११.५ )

न., उपक्रम० द्रवभागविशोषणम् शुष्कत्वापादनम् ( चचि. २७.२५ )

वनस्पति० शुण्ठी ( रा. ६.१३० )

**शोषापहा**–स्त्री., वनस्पति० क्लीतनकम् (रा. ६.१८५)

**शोषित**–वि., अर्पितम् शुष्कीकृतम् ( सुशा. ४.१९ )

**शोषिन्**–वि., शुष्कः ( चशा. ८.२१ )

**शौकर**–वि., शूकरस्य अयम् शूकरसम्बन्धि ( मांसादि ) ( चसू. ४.११ )

**–बस्ति**–पु., शूकरस्य बस्तिः, बस्तियन्त्रार्थमुपयुज्यते ( चसि. ३.१० )

**–मांस**–न., शूकरमांसम्, तच्च गुर्वाहारद्रव्यम् ( चसू. ५.११ )

**–रस**–पु., शूकरमांसस्य रसः ( चसू. १३.९०(१) )

**शौकरीवसा**–स्त्री., वराहमांसस्य स्नेहः (चचि. ३०.८७) महामृगवसानां श्रेष्ठा ( असंसू. ६ )

**शौक्तिक**–न., वनस्पति० बदरीफलम् ( चनि. २.४ )

**शौक्तिज**–न., भैषज्य० मौक्तिकम् ( ध. ६.६२ )

**शौक्तेयक**–न., भैषज्य० शुक्तिप्रभवम् मौक्तिकम् ( रा. १३.६७ )

**शौच**–न., शुचिकर्म ( असंसू. ३.९ ) शुचिता; तच्च द्विविधं बाह्यमाभ्यन्तरं च । तत्र बाह्यं स्नानादिकमाभ्यन्तरं मनःशुद्धिः श्रुतिस्मृतिविहितानुष्ठानं चेति ( सुसू. २.३ )

**–द्विष्**–वि., शौचं द्वेष्टा, अशुचिः, शौचानभिलाषुकः ( सुउ. ६०.१४ )

**–द्वेष**–पु., स्वच्छताया अप्रियत्वम् स्वच्छतानभिरुचिः ( चनि. ७.७(३) )

**–विधि**–पु., स्मृत्युक्तविधिना मलोत्सर्गाद्याचमनपर्यन्तो विधिः ( अहसू. २.१ )

**शौचाचार**–पु., शौचमयो नाम शुद्धो धर्मनिष्ठापूत आचारः धर्मविहितमाचरणम् ( सुशा. ३.३५ )

**शौचाधान**–न., शुद्धीकरणम्, पानीयेन मृदा च पादाद्यवयवानां मलमार्गाणां च शुद्धिः ( चसू. ५.९८ )

**शौण्डि**–स्त्री., वनस्पति० पिप्पलीमूलम् ( असंचि. १० ) जूर्णा ( असंचि. १० )

**शौण्डी**–स्त्री., वनस्पति० पिप्पली ( ध. २.७३; ( र. २३.४० )

कटभी ( रापरि. ९.३७ )

**शौनक**–पु., ऋषि० ( चसि. ११.४ ) यज्ञःपुरुषविषये विवदमानानामेकतमः (चसू. २५.१५) रोगापहरणचिन्तनार्थं हिमवतः पार्श्वे समेतेषु महर्षिष्वेकः ( चसू. १.१३ ) गर्भस्य शिरः पूर्वं संभवतीति मतप्रतिपादकः ( सुशा. ३.३२ )

**शौर्य**–न., शूरत्वम् ( सुसू. २.३ ) निर्भयत्वम्, भीतो हि साध्यमपि व्रणमवगाढमूलं नारभते आरब्धं वाऽत्यवशेषयति । वैद्यस्य शस्त्रकर्मणि एकः प्रशस्तगुणः ( सुसू. ५.१० ) सर्वकर्मस्वविषादिता, असौ सत्त्वसारस्य गुण एकः ( सुसू. ३५.१६ )

**शौषिर**–पु., रोग० दन्तमूलगतरोगः, लक्षणम्–कफरक्तजो दन्तमूलेषु रुजावान् शोफो भवति, स लालास्रावी कण्डूमांश्च भवति ( सुनि. १६.१८ ) तस्य चिकित्सा–रक्तमोक्षणं, कषायौषधैर्लेपः, क्षीरिणश्च वृक्षा गण्डूषार्थम्, सिद्धसर्पिर्नस्यार्थम् ( सुचि. २२.१६-१८ )

**शौषिर्य**–न., छिद्रभावः, यदाकाशीयं द्रव्यं तन्मार्दवसौषिर्यलाघवकरम् ( सुसू. ४१.४(५) )

**श्चोतन**–न., आश्चोतनम् ( काखिल. १३.४० )

**श्मशान**–न., मृतस्य दाहनिखननाद्यन्त्यसंस्कारस्थानम् ( सुशा. १०.३; अहसू. २.३८ )

**श्मश्रु**–स्त्री., पुंमुखे प्रवृद्धा रोमराजिः ( असंशा. २ ) 'दाढी' इति मराठीभाषायाम्

**–कर्मन्**–न., श्मश्रुकल्पनविधिः ( असंशा. १२.१९ )

**–दोष**–पु., श्मश्रुविकारः, अस्थिप्रदोषजरोगेष्वेकः ( चसू. २८.१६ )

**श्माशानिकशकुनि**–पु., पक्षि० गृध्रः ( (चवि. ३.७(३)

**श्याम**–वि., ईषत्कृष्णम् ( सुचि. १.३२ )

पु., वनस्पति० धत्तूरः ( रा. १०. ११ )

असनः ( ध. ५.१२५ )

( श्याम ) श्यामाकः ( रा, १६.१४० )

पीलुः ( ध. ५.११ )

न., मरिचम् ( ध. २.८८ )

वि. वर्ण० ईषत्कृष्णम् ( सुचि. १.३२ )

( **श्यामा** )–स्त्री., वनस्पति० कस्तूरिका ( रा. १२.४७ )
प्रियङ्गुः ( ध. ३.१६; सुचि. ३७.२७ )
हरिद्रा ( रा. ६.८१; र. ५.१९७ )
वटपत्री ( रा. ५.२११ )
वृक्षादनी ( रा. ५.१४२ )
दूर्वाभेदः नीलदूर्वा ( रा. ८.२२६ ) द्र० 'दूर्वा'
गुडूची ( रा. ३.१ )
पद्मबीजम् ( रा. १०.२५६ )
पुनर्नवाभेदः नीलपुनर्नवा ( रा. ५.४१० )
द्र० 'पुनर्नवा'
पिप्पली ( ध. २.७३ )
गोरोचना ( रा. १२.३४ )
नीलिनी ( रा. ४.३४९ )
तुलसी ( रा. १०.७८ )
वृद्धदारुः ( सुसू. ४५.१२४; सुचि. ३७.४० )
त्रिवृद्भेदः, श्वेतत्रिवृत् ( सुसू. ३८.२९ ) द्र० 'त्रिवृत्'.
त्रिवृद्भेदः, श्याममूला त्रिवृत् ( चसू. १.७७; अहृसू. १५.४५; सुचि. २०.५०-५१ )
द्र० 'त्रिवृत्'
त्रिवृद्भेदः, अरुणमूला त्रिवृत् ( सुउ. ४२.९४ )
द्र० 'त्रिवृत्'
त्रिवृत् ( ध. १.२४३; असंसू. ७; चक. ७.४ )
पक्षि० पिङ्गला ( असंशा. १२.९ )
–**कन्दा**–स्त्री., वनस्पति० अतिविषा ( ध. १.१० )
–**काकुलीमृग**–पु., सर्प० 'माल्यासर्प' इति ख्यातस्य भेदः ( चसू. २७.३७ )
–**काण्डा**–स्त्री., वनस्पति० दूर्वाभेदः, गण्डदूर्वा ( रा. ८.२३४ ) द्र० 'दूर्वा'
–**ग्रन्थि**–स्त्री., वनस्पति० दूर्वाभेदः, गण्डदूर्वा ( रा. ८.२३४ ) द्र० 'दूर्वा'
–**त्व**–न., श्यामवर्णत्वम् ( असंशा. १ )
–**वंश**–पु., वनस्पति० इक्षुभेदः, कृष्णेक्षुः ( रा. १४.१८७ ) द्र० 'इक्षु'
–**वर्ण**–पु., वनस्पति० शिरीषः ( ध. ५.११२ )
–**शालि**–पु., स्त्री., वनस्पति० शालिभेदः, कृष्णशालिः ( रा. १६.८६, ) द्र० 'शालि'.
–**सार**–पु., वनस्पति० खदिरसारः, कृष्णवर्णनिर्यासः ( ध. १.२७ ) द्र० 'खदिर'
**श्यामक**–न., वनस्पति० कत्तृणम् ( ध. १.८० )
श्यामाकः ( रा. १६.१४०; अहृसू. ६.११ )

( **श्यामिका** )–स्त्री., खनिज० मनःशिला ( र. ३.९६-९७ )
**श्यामल**–पु., वनस्पति० शिरीषः ( रा. ९.१८९ )
पिप्पलः ( ध. ५.७८ )
भृङ्गराजः ( रा. ४.२२ )
( **श्यामला** )–स्त्री., वनस्पति० अश्वगन्धा ( रा. ४.४०१ )
कटभी ( रापरि. ९.३७ )
जम्बूः ( रा. ११.१२८ )
( **श्यामली** )–स्त्री., भैषज्य० कस्तूरिका ( रा. १२.४८ )
–**च्छद**–पु., वनस्पति० पिप्पलः ( ध. ५.७९ )
–**तृणा**–वि., श्यामलानि तृणानि यस्याः ( असंसू. ४.४२ )
**श्यामलालुक**–पु., वनस्पति० नीलालुः ( रापरि. ७.३२ )
**श्यामलिका**–स्त्री., वनस्पति० नीलिनी ( रा. ४.३५१ )
**श्यामलेक्षु**–पु., वनस्पति० इक्षुभेदः, कृष्णेक्षुः ( रा. १४.१८७ ) द्र० 'इक्षु'
**श्यामा**–स्त्री., ( रा. १२.४७ )
–**त्रिवृत्कल्प**–पु., त्रिवृद्भेदः एव श्यामा। तेन श्यामायास्त्रिवृतश्च कल्पः श्यामात्रिवृत्कल्पः ( चक. ७.१ )
–**द्वय**–न., वनस्पति० पिप्पली, प्रियङ्गुश्च ( असंउ. ४४ )
**श्यामाक**–पु., तृणधान्य० सामान्यतः सर्वप्राणिनां पथ्यः ( सुसू. २०.५; चसू. २.२६ ) इदं कुधान्यम् कषायमधुरो लघुर्वातलः कफपित्तघ्नः शीतः संग्राही शोषणश्च ( चसू. २७.१६ ) श्यामाकस्त्रिविधः– तोयश्यामाक उष्ट्रश्यामाको हस्तिश्यामाकश्चेति ( सुसू. ४६.२१; अहृसू. ६.११ ) गुणाः– मधुरः कषायः शीतः स्निग्धो लघुर्वातकरः संग्राही कफपित्तघ्नो विषघ्नश्च ( ध. ६.८८ )
हिं.—शामा.
**म.—सावे. सावा.**
गु.—सामो.
बं.—श्यामाघास.
ता.—श्यामाख.
**श्यामाङ्गी**–स्त्री., खनिज० मनःशिलाप्रकारः ( र. ४.९६ ) द्र० 'मनःशिला'
**श्यामादिगण**–पु., श्यामामहाश्यामात्रिवृद्दन्तीशङ्खिनीतिल्वककम्पिल्लकरम्यकक्रमुकपुत्रश्रेणीगवाक्षीराजवृक्षकरञ्जद्वयगुडूचीसप्तलाच्छगलान्त्रीसुधाः सुवर्णक्षीरी चेति, गुणाः–असौ गणो गुल्मविषापहः आनाहोदरविड्भेदी उदावर्तनाशनश्च ( सुसू. ३८.२९; चवि. ८.१३६; अहृसू. १५.४५; असंसू. १६ )

**श्यामादिलेप**-पु., योग० सविषआलेप० श्यामेन्द्र-गोपासोमोत्पलानां लेपः सविषान्नस्य हस्तस्पर्शे हस्तदाहे नखशाते च शस्यते ( सुक. १.३७ )

**श्यामादिसिद्धघृत**-न., सिद्धघृत० श्यामा गिरिह्वाञ्जन-कीरसेषु द्राक्षारसे सप्तलिकारसे क्षीतककल्केन सामान्यस्नेहपरिभाषया सिद्धं घृतम्। पित्तार्बुदे पित्तोदरे चोपयुज्यते ( सुचि. १८.३४ )

**श्यामेक्षु**-पु., वनस्पति० इक्षुभेदः, कृष्णेक्षुः ( रा. १४.१८७ ) द्र० 'इक्षु'.

**श्याव**-वि., वर्ण० ईषत्कृष्ण अरुणभस्मकपोतास्थिवर्णो-पलक्षकः ( सुउ. ४०.९-१०; सुशा. २.२५; सुसू. १४.२१ )

पु., रोग० कर्णवेधापयोगेन जायमान उपद्रव-विशेषः ( सुसू. १६.२६(११) )

दन्तरोग० दन्तो रक्तादिभिः श्याववर्णो भवति यस्मिन्स रोगः ( असंउ. २५ )

**-कर्दम**-पु., नेत्ररोग० अयं साध्यः ( सुउ. १.४१ )

**-गन्ध**-पु., दध्यादेस्ताम्रघृष्टसमानं गन्धमाहुः; केचित्तु 'शाव' मिति पठन्ति, शवस्य गन्धः शावः गन्धः ( चचि. चक. २५.२७ )

**-जिह्व**-वि., श्यावजिह्वः, ऋतुमत्या अतिहसना-द्गर्भः श्यावजिह्वो भवति ( सुशा. २.२५ )

**-तालु**-वि., श्यावतालुः, ऋतुमत्या अतिहसनाद्गर्भः श्यावतालुर्भवति ( सुशा. २.२५ )

**-दन्त**-वि., श्यावदन्तवान् ऋतुमत्या अतिहसनाद्गर्भः श्यावदन्तो भवति ( सुशा. २.२५ )

वि., कृष्णरदनः विसूच्यादीनामसाध्यलक्षणम् ( सुउ. ५६.११ )

**-दन्तक**-पु., दन्तरोग० लक्षणम्-यो दन्तोऽसृजा मिश्रेण पित्तेनाशेषतो दग्धः श्यावतामपि गतः स श्यावदन्तको रोगः ( सुनि. १६.३४ )

**-मण्डल**-न., ईषत्कृष्णं मण्डलम् वातरक्तगतमेकं लक्षणम् ( सुचि. ५.४ )

**-मार्जारवसा**-स्त्री., कृष्णमार्जारस्य मांसस्नेहः नेत्ररोगेष्वञ्जनार्थमुपयुज्यते ( असंउ. १६ )

**-वर्त्मन्**-न., नेत्ररोग० यत्र नेत्रवर्त्म बाह्यतोऽन्तश्च श्यावं शोफयुक्तं वेदनायुक्तं दाहकण्डूपरिक्लेदयुक्तं भवति। अयं साध्यो रोगः ( सुउ. ३.२०; असंउ. ११; सुउ. १.४१ )

**श्यावाङ्गता**-स्त्री., लक्षण० शरीरस्य कृष्णारुणवर्णत्वम् यकृद्विद्धस्य विवर्णता० ( सुशा. ९.१२ )

**श्यावारुणवर्णता**-स्त्री., लक्षण० श्यावारुणस्य वर्णस्य सत्त्वम् दर्शने वा वायोः कर्म ( असंसू. २० )

**श्यावारुणावभासता**-स्त्री., रोग० त्वचि कृष्णा-रुणत्वयोरवभासनम्, अशीतिवातविकारेष्वेकः ( चसू. २०.११ )

**श्यावौष्ठ**-वि., श्याव ओष्ठो यस्य सः श्यावदन्तौष्ठनखत्वं विसूच्यादीनामसाध्यलक्षण० ( सुउ. ५६.११ )

**श्येन**-पु., प्रसहपक्षि० ( चशा. ८.२८; चसू. २७.३६ ) स प्रतुदः ( रा. १७.३ ) शशनकः सिञ्चानो गरुडान्वयः ( सुसू. ४६.७४; सुचि. ३५.७ )

हिं.—बाज.

म.—ससाणा.

बं.—बाज.

द्र० 'प्रसह'

**-घण्टा**-स्त्री., वनस्पति० दन्ती ( रा. ६.३३८ )

**-मुख**-न., स्वस्तिकयन्त्र० श्येनमुखसदृशं यन्त्रम् ( सुसू. ७.१० )

**श्येनादियाग**-पु., याग० शत्रोर्वधार्थं क्रियमाणा अभि-चारप्रयोजनका यागाः ( असंसू. ९.११४ )

**श्योनाक**-पु., वनस्पति० टिण्टुकः ( चसू. २.११; चसू. ४.१३,१७ )

**-तैल**-न., तैल० तस्य विधिरुपयोगश्च बलातैलवत् कर्तव्यः ( का.धात्रीचिकित्सा. )

**श्रद्धा**-स्त्री., मनोभाव० इच्छा ( चशा. ४.१६ ) श्रद्धा-मभिप्रायेण परीक्षेत ( चवि. ४.८,१० )

अन्नग्रहणेच्छा, 'अम्लो रसः श्रद्धामुत्पादयति' ( सुसू. ४२.९ )

**-भोज्य**-न., इच्छाभोजनम्, श्रद्धोत्पादकं भोज्यम् ( का.विशेषकल्पाध्याय. )

**श्रपण**-न., क्वथनम् ( चचि. १९.८५ )

**श्रम**-पु., श्रान्तिः, कर्मण्यन्यस्मिन्नक्षमत्वम् ( चनि. १.२१ ) बह्वायासकृतः कष्टः (सुसू.४५.३) रोग० अशीतिवातविकारेष्वेकः ( कासू. २७.१९) लक्षण० अयं स्वल्पायासेन परिलक्ष्यः ( चसू. १६.१४ )

**-घ्नी**-स्त्री., वनस्पति० क्षीरतुम्बी ( रा. ७.२३९ )

**-नाशनवर्ग**-पु., द्रव्यगण० श्रमनाशकराणां द्रव्याणां वर्गः दाडिमफल्गुपरूषकप्रियालयवषष्टिके-क्षुबदरद्राक्षाखर्जूराश्चेति ( असंसू. १५ )

**-निःश्वासधारण**-न., श्रमेण यः श्वासो भवति तस्य निग्रहः तेन गुल्माद्या रोगा भवन्ति ( चसू. ७.२४ )

-भञ्जनी-स्त्री., वनस्पति० ताम्बूली ( धपरि. ३.३ )
-श्वास-पु., लक्षण० द्रुतगमन–बलवद्विग्रह–भारोद्वहनादिभिः श्रमैः समुत्पन्नः श्वासः (सुउ. ५५.३५)
-श्वासरोधजरोग-पु., अध्वव्यायामादिना साहसेन सद्यो जातः श्वासः श्रमश्वासः। तद्वेगविधारणाद्गुल्म-हृद्रोगसंमोहा जायन्ते। तत्र विश्रमणं वातघ्ना चिकित्सा च हिता ( अहसू. ४.१४ )
-श्वासातुर-वि., श्रमजन्यवेगोद्भूतश्वासविधारणजोदावर्तपीडितः ( सुउ. ५५.३५ )
-हरवर्ग-पु., पञ्चके महाकषायवर्गे एको वर्गः, श्रमनाशनवर्गः ( चसू. ४.८,१६ )
**श्रमित**-वि., श्रान्तः ( चचि. २८.३२ )
**श्रवण**-पु., वनस्पति० इङ्गुदी ( सुचि. ३१.५ )
न., कर्णः ( अहसू. २.९ )
( **श्रवणा** )-स्त्री., वनस्पति० मुण्डी ( रा. ५.२१७ )
-शीर्षिका-स्त्री., वनस्पति० मुण्डीका (ध.१.१५९)
-स्रोतस्-न., कर्णरन्ध्रम् कर्णयोर्द्वे रन्ध्रे बहिर्मुखे स्रोतसी ( सुशा. ५.१० )
**श्रवणापाङ्गान्तर**-न., कर्णापाङ्गयोरन्तरम् तत्पञ्चाङ्गुलम् ( सुसू. ३५.१२ )
**श्रवणावरोध**-पु., लक्षण० बाधिर्यम् ( सुउ. ५५.१६ )
**श्रवणाह्वया**-स्त्री., वनस्पति० मुण्डिकाचूर्णं व्रणरोपणार्थमुपयुज्यते ( सुसू. ३७.२७ )
**श्राद्ध**-वि., श्रद्धाहेतुत्वेन विद्यते अस्येति श्राद्धः कफप्रकृतिपुरुषलक्षणेष्वेकं लक्षणम् ( असंशा. ८.१६ )
**श्रान्त**-वि., द्रुतगमनादिना खिन्नः ( सुउ. ५५.१७ )
पु., रोगलक्षण० तद्वान्, क्षस्वेद्योऽयम् ( चसू. १४.१७ )
**श्रावणाह्वा**-स्त्री., वनस्पति० मुण्डी ( ध. १.१५९ )
**श्रावणी**-स्त्री., वनस्पति० मुण्डी ( चचि. २८.१५९; सुचि. ३०.५; ध. १.१५९ )
-युग-न., वनस्पति० श्रावणी महाश्रावणी च ( अहसू. १०.२४ )
**श्री**-स्त्री., वनस्पति० बिल्वः ( र. ११.५२,५७ )
ऋद्धिः ( रा. ५.१८८ )
श्रीवेष्टको नवनीतधूपः ( सुउ. २४.२७ )
लवङ्गम् ( सुचि. २२.६९ )
-कण्ठ-पु., पक्षि० श्येनः ( असंशा. १२ )
-कन्दा-स्त्री., वनस्पति० वन्ध्यकर्कोटकी (रा. ३.२७३)
-कृष्णदेव-पु., ऋषि० रसरत्नसमुच्चयकर्त्रा निर्दिष्टः कश्चित् प्राचीनो रसाचार्यः ( र. ११.१३१ )



-केतन-न., खनिज० सुवर्णम् ( ध. ६.२ )
-खण्ड-न., वनस्पति० चन्दनम्—( रा.१२.१ )
सितचन्दनम् ( र. २२.७२ ) द्र० 'चन्दन'
-ताल-पु., वनस्पति० ताल० ( रा. ९.९५ )
-देवी-स्त्री., वनस्पति० कर्कटीपत्राकारा 'देवी'-नाम्नी लता ( र. ११.५२-५७ )
-धूप-पु., धूप० ( का.धूपकल्पाध्याय. )
-निकेत-न., धूप० नवनीतधूपः सरलनिर्यासः ( सुचि. ९.१२ )
-निवास-पु., निर्यास० ( गन्धाविरोजा इति लोके ) ( चचि. २८.१५३ )
-निवासक-पु., वनस्पति० कुरण्टकः ( असंचि.२३ )
-पद्म-न., वनस्पति० कमलम् ( रा. १०.२४३ )
-पर्णी-स्त्री., वनस्पति० कट्फलम् ( ध. १.७३; चचि. ३.२५८ )
काश्मरी ( सुउ. १२.११,१२; चचि. ८.१२९; ध. १.११७ )
अग्निमन्थः ( ध. १.११० )
-पर्णीतैल-न., तैल० काश्मरीतैलम्, एतत् पित्तश्लेष्मप्रशमनम् ( असंसू. ६ )
-पर्वत-पु., पर्वत० अत्र 'चन्द्रमा' इति सोमविशेष उपलभ्यते ( सुचि. २९.२७ )
-पुष्प-न., वनस्पति० प्रपौण्डरीकम् ( ध. ३.९२ )
लवङ्गम् ( ध. ३.४१ )
-फल-पु., वनस्पति० राजादनः ( रा. ११.१४७ )
न., बिल्वः ( र. १०.७३ )
आमलकम् ( ध. १.२१५ )
-( फला )-स्त्री., वनस्पति० नीलिनी ( रा. ४.३४९)
(-फली )-स्त्री., वनस्पति० तेजोवती ( रा. ३.३९३ )
-फलाह्व-पु., वनस्पति० बिल्वः ( ध. १.१०६ )
-फलिका-स्त्री., वनस्पति० नीलिनी ( ध. १.२३२ )
महानीली ( रा. ४.३५३ )
कुडुहुञ्चौ ( रा. ७.२८२ )
-रस-पु., वनस्पति० श्रीवेष्टकः ( रा. १२.१९२ )
-वल्ली-स्त्री., वनस्पति० वार्षिकी ( रा. १०.२२९; पृ. १९७ )
गुणाः–कटुकाऽम्ला वातकफापहा शोफघ्नी च। तत्फलं तैललेपघ्नमत्यम्लं परं रुचिकृत् ( रापरि. ८.३३.३४ )
-वाटा-स्त्री., वनस्पति० ताम्बूली ( रा. ११.७ )
-वाटी-स्त्री., वनस्पति० ताम्बूली ( रा. ११.७ )

**–वारक**–पु., वनस्पति० शितिवारः ( ध. १.१५५ )
**–वास**–पु., वनस्पति० श्रीवेष्टकः ( ध. ३.१३३ )
**–वासक**–पु., वनस्पति० श्रीवेष्टकः ( असंसू. १६; अहृसू. १५.४३ )
**–वासुदेव**–पु., ऋषि० रसरत्नसमुच्चयकर्त्रा निर्दिष्टः प्राचीनो रसाचार्यः ( र. १६.६७ )
**–विभूषण**–पु., भैषज्य० शङ्खः (ध. ३.१७९)
**–वेष्ट**–पु., वनस्पति० श्रीवेष्टकः ( र. २१.६० )
**–वेष्टक**–पु., वनस्पति० सरलवृक्षनिर्यासः, नवनीतधूपः प्रियङ्ग्वादिगणेष्वेकः ( सुचि. ११.१० ) पुरीषविरजनीयगणे एकं द्रव्यम् ( चसू. ४.१५ ) सरलरसः नवनीतपिण्डप्रायः गुग्गुलीति लोके प्रसिद्धः, व्रणधूपनद्रव्येष्वेकं द्रव्यम् (सुसू.३७.२१) धूमपाने उपयुक्तमेकं द्रव्यम् ( चसू. ५.२३ ) एलादिगणे सुगन्धिद्रव्यमेकम् ( सुसू. ३८.२४ ) गुणाः– स्वादुतिक्तः कषायः व्रणरोपणः कफपित्तघ्नः रक्तजरोगघ्नः ग्रहघ्नः शीर्षरोगनुत् ( ध. ३.१३३ ) कटुतिक्तः योनिदोषजित् रुजानाशनोऽजीर्णघ्न आध्मानजिच्च ( रा. १२.१९४ )
हिं.—सरलका गोंद, सरलका रस, चन्द्रस, गन्धविरोजा.
**म.—सरळडिंक, चन्द्रुस.**
गु.—चन्द्रस, जनार्जन, गन्धवेरीजो.
बं.—टार्पिनतेल, नवनीतखोटी गन्धविरजा.
ता.—पिनैमारू.
फा.—सन्द्रुस. काइरुवा.
बिल्वः ( चक. १.२३; चचि. १२.६६ )
**–वेष्टकादिचूर्ण**–न., वातजौष्ठप्रकोपे प्रतिसारणार्थमुपयोजनीयं श्रीवेष्टकसर्जरससुरदारुगुग्गुलुयष्टिमधुकानां चूर्णम् ( सुचि. २२.५ )
**–सोमदेव**–पु., ऋषि० रसरत्नसमुच्चयकर्त्रा निर्दिष्टः प्राचीनो रसाचार्यः ( र. ९.६६ )
**श्रीमत्**–वि., शोभायुक्तम् ( चवि. ८.१०४ )
ऐश्वर्ययुक्तः ( सुशा. ४.४० )
पु., वनस्पति० तिलकः ( ध. ५.१५८ )
पिप्पलः ( ध. ५.७९ )
सिन्दूरम् ( ध. ३.१०१ )
**(श्रीमती)**–स्त्री., वार्षिकी ( ध. ५. १३६ )
**(श्रीमत्)–दर्शनलोचन**–वि., कान्तियुक्तलोचनः शोभनाकारनेत्रः ( चचि. १८.२७ )

**श्रुघ्नी**–स्त्री., क्षार० स्वर्जिका, अजगल्लिकारोगे आलेपनार्थमुपयुज्यते ( सुचि. २०.३ )
**श्रुत**–न., ज्ञानम्, श्रेयस्करो विवादकगुणो जल्पकगुणो वा ( चवि. ८.१८ ) शास्त्रज्ञानम् ( चसू. २८.३७ )
**–ग्राहिन्**–वि., श्रुतं यथातथं तत्कालं गृह्णाति, तत्र नाधिका बुद्धिः प्रभवति इति तादृशः ( चवि. ८.१०० )
**–निगादिन्**–वि., श्रुतं निगदति तथाश्रुतशब्दपूर्गं वदति इति श्रुतग्रहणशक्तिमान् ( सुचि. २८.३ )
**–शान्ति**–वि., आकर्णितशान्तिमयमङ्गलपाठः ( सुचि. २९.१२ )
**–स्फोटा**–स्त्री., वनस्पति० कर्णस्फोटा (रापरि.३.४१)
**श्रेणिका**–स्त्री., वनस्पति० निश्रेणिका ( रापरि. ८.५० )
**श्रेयसी**–स्त्री., वनस्पति० गुणवती ( चशा. ८.३ )
वनस्पति० रास्ना ( चसि. ९.८; चचि. २६.९३; ध. १.२७० )
पिप्पलीभेदः, हस्तिपिप्पली ( चचि. १०.२०; ध. २.७८; असंउ. २२ ) द्र० 'पिप्पली'
अम्बष्ठा ( रा. ४.१७१ )
प्रियङ्गुः ( रा. १२.२९ )
पाठा ( रा. ६.९८ )
हरीतकी ( रा. ११.३०७ )
कफघ्नशाक० ( चसू. २७.१०७ )
वि., गुणश्रेष्ठः ( चशा. ८.३ )
**श्रेष्ठ**–न., भैषज्य० मौक्तिकम् ( ध. ६.६२ )
खनिज० वङ्गम् ( ध. ६.१३ )
रौप्यम् ( ध. ६.६ )
**( श्रेष्ठा )**–स्त्री., वनस्पति० पद्मा ( ध. ४.९०; असंक.२ )
त्रिफला ( असंक. २; र. १५.५९ )
**श्रेष्ठाम्ल**–न., वनस्पति० वृक्षाम्लम् ( रा. ६.१४४ )
**श्रोणि**–स्त्री., शारीर० कटिः, वातस्य स्थानम् ( सुसू. २१.६; सुचि. ३.५०; सुशा. ३.८ ) ऊरुसंधेरधस्तात् स्मरमन्दिरोपरितनभागः; द्वादशाङ्गुलप्रमाणा स्त्रीश्रोणिः, तत्प्रमाणं पुरुषोरःसमानम् ( सुसू. ३५.१२ ) श्रोण्यां पञ्चास्थीनि सन्ति ( सुशा. ५.१९ ) द्र० 'कटि'
**–काण्ड**–पु., न., शारीर० श्रोणिभागः, कटिकतरुणमर्मस्थानमस्य समीपे वर्तते ( सुशा. ६.२६ )
**–ग्रह**–पु., लक्षण० कटिग्रहः ( चसि. ९.६ )
**–प्रदेशप्रतिव्यूढा**–वि., कटिप्रदेशविशाला ( शय्या ) ( ड ) शोभनोन्नता ( सुचि. ३८.३ )

–फलक–न., अस्थि० द्वे श्रोणिफलके ( चशा. ७.६ )

–भेद–पु., रोग० श्रोण्योस्तुदनम्, श्रोण्योर्भेदवत् पीडा, अशीतिवातविकारेष्वेकः ( चसू. २०.११; असंसू. २०.१३ )

–शूल–पु., लक्षण० कटिशूलः, वातजशूलस्य लक्षणम् ( सुचि. ३४.९ )

**श्रोण्याकुट्टन**–( परिव० ) न., पार्ष्ण्या पादेन वा श्रोण्या आहननम् आघातो वा ( असंशा. ३ )

**श्रोतृ**–वि., शब्दं शृणोति इति श्रोता, क्षेत्रज्ञस्यात्मनो नाम ( सुशा. ३.४ )

**श्रोत्र**–न., ज्ञानेन्द्रिय० शृणोत्यनेनेति श्रोत्रम् ( चसू. ८.८ ) पञ्चबुद्धीन्द्रियेष्वेकम् ( चशा. ७.७ ) श्रवणेन्द्रियम् ( सुशा. १.४ ) इदमान्तरिक्षमिन्द्रियम् ( चशा. ७.१६; अहृसू. १२.१; असंसू. ७.२४१ )

अतीन्द्रियश्रवणमैश्वर्यकृतं योगिनाम् तच्च तेषाम् अष्टविधेष्वैश्वरबलेष्वेकम् ( चशा. १.१४० )

–दौर्बल्य–न., लक्षण० श्रोत्रेन्द्रियस्य दौर्बल्यम् ( चसू. २३.२८ )

–शृङ्गाटक–न., शारीर० श्रोत्रविवरान्तर्गतो भागः, तत्र शङ्खावर्तप्रकारकाः संधयः ( सुशा. ५.२७ ) कर्णपथः ( असंउ. १ )

**श्रोत्रादिपरीक्षा**–स्त्री., श्रोत्रादीनि शब्दाद्यर्थग्रहणेन परीक्षेत। श्रवणादिज्ञानेन्द्रियपरीक्षणं शब्दस्पर्शादिविषयग्रहणेन कार्यम् ( चवि. ४.८ )

**श्रोत्रिय**–पु., वेदविद्ब्राह्मणः ( सुचि. ३४.१० )

**श्रोत्रेन्द्रियविज्ञेय**–वि., श्रोत्रेन्द्रियेण ज्ञातुं शक्यम् ( लक्षणं रोगो वा )। यथा रोगपरीक्षायामाध्मानादिरोगेषूपलभ्यमानो गुडगुडादिशब्दः ( सुसू. १०.५ )

**श्याह्व**–पु., वनस्पति० श्रीवेष्टकः (चसू. ३.३;असंसू. १५) बिल्वः ( असंउ. १० )

**श्लक्ष्ण**–वि., खरविपरीतः ( अहृसू. १९.७२ ) पु., गुण० विंशतिगुणेष्वेकः ( अहृसू. १.१८ ) मसृणम् ( सुचि. २४.१३ ) अपरुषम् ( र. ३०.१-२ ) अकर्कशः ( सुसू. ११.१६ ) तत्कर्म–रोपणे शक्तिः ( अहृसू. १.१८ ) पिच्छिलगुणवत् श्लक्ष्णो जीवनः श्लेष्मलः संधानकृद्बल्यो गुरुश्च ( सुसू. ४६.५२१ )

चिक्कणः, स्नेहं विनाऽपि स्यात्कठिनोऽपि हि चिक्कणम् यथा शरीरधातुगुणेष्वेकः ( चशा. ६.१० )

न., वि., अतिकोमलम् यथोत्तरबस्तियन्त्रस्य प्रवेशाऽग्रम् ( अहृसू. १९.७२ )

वनस्पति० अश्मन्तकः ( ध. १.१९४ )

न., वनस्पति० कतकम् ( ध. ३.१७२ )

**( श्लक्ष्णा )**–स्त्री., वि., स्पर्शसुखा तद्विपरीता कर्कशा यथा पेशी ( सुशा. ५.४० )

–गण्डत्व–न., लक्षण० मसृणकपोलत्वम् ( चचि. १३.२१ )

–ता–(परिव०) स्त्री., मृदुत्वम् ( चनि. ५.७ )

–पेषित–वि., सूक्ष्ममर्दितम् ( सुचि. ३८.३४ )

–मुख–वि., यन्त्रलक्षण० श्लक्ष्णगुणयुक्तमुखोपेतम् ( सुसू. ७.९ )

–शिला–स्त्री., श्लक्ष्णशिलिका, नापितशिलिका, माषयूषोपमेयं, शस्त्रनिशानार्थम् उपयुज्यते (सुसू.८.१३)

**श्लक्ष्णाङ्ग**–वि., लक्षण० श्लक्ष्णमङ्गं यस्य सः ( श्लेष्मलनरः ) (चवि. ८.९६)

**श्लथ**–वि., शिथिलम् ( असंशा. ८.२४ )

–संधिता–स्त्री., लक्षण० संधिशैथिल्यम्, स्रस्तसन्धित्वम् ( अहृसू. ११.१६ )

**श्लथाङ्गत्व**–न., लक्षण० अवयवशैथिल्यम् ( अहृसू. ११.८ )

**श्लाघनीय**–वि., प्रशंसाऽर्हः, प्रियः ( असंसू. ८.५ )

**श्लिष्टवर्त्मन्**–न., नेत्ररोग० लक्षणम् अस्मिन् वर्त्मनी कण्डूश्वयथुरागिणी श्लिष्टे च भवतः (असंउ. ११ )

**श्लीपद**–न., रोग० ( चसू. २७.२१२ ) पादाद्युपरि शोथात्मकोऽयं रोगः ( चचि. १२.९८ ) 'हस्तिपाद' इति लोके। केचिच्छिलावत्पदं श्लीपदमिति वदन्ति ( मधुकोष मानि. ) अयं हस्तिपादसदृशो विशेषतः पादस्य भवति। अस्मिन्रोगे शोथेन पादः स्थूलः, कफसम्बन्धेन कठिनश्च जायते। तस्य स्थानं रोहिणी नाम षष्ठी त्वक् ( सुशा. ४.४ ) हेतुः–पुराणोदकभूयिष्ठे देशे सर्वर्तुषु शीतले च देशे अयं रोगः प्रादुर्भवति ( सुनि. १२.१४ ) यत्र स्थिरप्रवाहा नद्यस्तत्र देशे कृमिश्लीपदकण्ठरोगाः भवन्ति ( अहृसू. ५.१०; असंसू. ६) महेन्द्रप्रभवनदीजन्यः (सुसू.४५.२१) संप्राप्तिः–अनूपदेशे कफोल्बणा दोषा वङ्क्षणोर्वादिमधःकायं प्रस्थिता मांसासृग्गाः सन्तः कालेन पादौ चाश्रित्य शनैर्घनं शोफं कुर्वते (सुनि. १२.१०; असंउ. ३४ ) कफोत्तरा रक्तचलाश्रिता मला घनं शोफं कुर्वन्ति ( र. २५.५६ ) पादवद्धस्तकर्णाक्षि-

नासिकौष्ठेष्वपि श्लीपदं जायते इति केषांचिदाचार्याणां मतम् ( सुनि. १२.१५; असंउ. ३४ ) संख्यासम्प्राप्तिः–तत्त्रिविधं वातजं पित्तजं श्लेष्मजं च ( सुनि. १२.१०; असंउ.३४ ) सामान्यलक्षणम्–अस्मिन्रोगे कफस्य प्राधान्यादवयवस्य गुरुत्वं महत्त्वं चास्ति ( सुनि. १२.१३ ) लक्षणम्–वातजे–खरं कृष्णं परुषमनिमित्तानिलरुजं बहुशः परिस्फुटति च ( सुनि. १२.११; असंउ. ३४ ) पित्तजे–पीतावभासमीषन्मृदु ज्वरदाहप्रायं च भवति ( सुनि. १२.११; असंउ. ३४ ) कफजे–श्वेतं स्निग्धावभासं मन्दवेदनं भारिकं महाग्रन्थिकं कण्टकैरुपचितं च भवति ( सुनि. १२.११ ) गुरु बृहन्मांसाङ्कुरैश्चितमरुक्च भवति ( असंउ. ३४ ) साध्यासाध्यत्वम्–यत्संवत्सरातीतं महद्वल्मीकवज्जातं प्रसृतं तद्वर्जनीयम् ( सुनि. १२.१२ ) सपरिस्रुतं चासाध्यम् ( असंउ. ३४ ) सर्वलिङ्गं कण्डुरं कफप्रकृतिकस्य श्लेष्मयुतं वर्जनीयम् (मानि.) चिकित्सा–वाम्योऽयं रोगः (अहृसू. १८.२; असंसू.२७) अनुवासनानर्हः ( अहृसू. १९.९ ) श्लीपदानां निवृत्तये सर्षपतैलं पिबेत् ( सुचि. १९.६० ) अत्र आर्द्रकमुपयुक्तम् ( अहृसू. ६.१६५ ) द्रवन्त्यादिक्षारा उपयुक्ताः ( सुचि. १९.६८-६९ ) क्षिप्रमर्मण उपरि चतुरङ्गुलेऽङ्गुष्ठे सिरां विध्येत् ( सुचि. १९.५६-६२) कठिणसुस्रमांसेऽग्निकर्म चिकित्सा कार्या ( सुसू. १२.१० ) वातिके गोमूत्रयुक्तमेरण्डतैलपानमग्निदाहं सिराव्यधं च कुर्यात् (सुचि.१९.५२-५४) पैत्तिके पित्तार्बुदविसर्पवत्क्रियां कुर्यात् ( सुचि. १९.५५ )

–**घ्न**–पु., सिद्धयोग० श्लीपदनाशकः ( र. २५.५७-५९ )

–**निदान**–न., श्लीपदरोगस्य निदानम् (सुनि. १२.१)

**श्लेषक**–पु., शारीर० कफभेदः । पर्वास्थिसन्धिषु श्लेषणात् श्लेषाच्छेषकः ( असंसू. २०; अहृसू. १२.१८ )

**श्लेष्मन्**–पु., दोष० कफः अम्भःपृथिवीभ्यां श्लेष्मा उत्पद्यते (चवि. १.५; असंसू. २०; चवि. ८.१२२) 'श्लिषू आलिङ्गने ।' इत्यस्मात्कृद्विहितेन प्रत्ययेन श्लेष्मा इति । एतेन श्लेष्मणः सन्ध्यादियोजनं दर्शितम् (सुसू. २१.५ ) अव्यापन्नः सञ्छरीरधारको व्यापन्नः सन्विनाशकारणः ( सुसू. २१.३ ) द्र० 'कफ'

दोष० दोषाः पुनस्त्रयो वातपित्तश्लेष्माणः ( चवि. १.५ ) तस्य साम्यादरोगता स्वास्थ्यमिति ( अहृसू. १.२० ) दूषणस्वभावाद्दोषा इति ( असंसू. २० ) कफदोषः ( र. ३.७७; चवि. १.५ )

मल० कफमलस्वरूपः मलिनीकरणादाहारमलत्वान्मलः ( असंसू. २० )

**( श्लेष्म )–जक्रिमि**–पु., रोग० कफजक्रिमिः ( चवि. ७.९ ) द्र० 'कृमि'

–**धरा**–स्त्री., कला० श्लेष्मधारिणी (भाप्र.) धातुक्रमसम्भवविशेषाच्चतुर्थी कला, तत्स्थेन हि श्लेष्मणाऽऽश्लेषिताः सर्वसंधयो दृढा भवन्ति, सोपाङ्गा इवाक्षाः ( असंशा. ५.३८; सुशा. ४.१४ ) तस्याः कर्मसंधयः साधु वर्तन्ते श्लेष्मणा संश्लिष्टाः सन्तः ( सुशा. ४.१५ )

–**धातु**–पु., शारीर० शरीरधारकः कफः ( चवि. ८.१२२ )

–**पिच्छा**–स्त्री., श्लेष्मरूपा पिच्छा । श्लेष्मसंयुक्ता पिच्छा । पिच्छा नाम अंत्रस्थं पिच्छिलं द्रव्यम् ( चचि. १४.१३६ ) द्र० 'पिच्छा'

–**पित्त**–न., श्लेष्मसंसृष्टं पित्तम् कफपित्तम् ( चसू. ५.४० )

–**प्रकृति**–वि., दोषप्रकृति० कफप्रकृतिः ( नरः ) ( सुशा. ४.७२ )

–**प्रसेक**–पु., लक्षण० कफप्रसेकः, मुखे लालास्रावादिः ( चसू. ५.३० )

–**भू**–पु., षट्पञ्चाशत्प्रत्यङ्गेष्वेकम् । कण्ठस्य पार्श्वयोर्व्यवस्थितो भागः । द्वौ श्लेष्मभुवौ (चशा.७.११)

–**मूल**–न., कफमूलम् ( चसू. २०.१९ )

–**रुद्धबिल**–वि., कफरुद्धद्वारः (बस्तिः)(चसि.९.४).

–**विकार**–पु., कफरोगः । कफविकारास्तु तृप्तितन्द्रादिकाः विंशतिः, द्र० 'कफ' ( असंसू. २० )

–**विदग्धदृष्टि**–पु., नेत्ररोग० अयं दृष्ट्याश्रयः । तत्र लक्षणम्– यदाल्पकफदोषस्त्रिषु पटलेषु स्थितस्तदा रूपाणि शुक्लानि पश्यति । दिवा सूर्यानुगृहीतचक्षुरीक्षेत । रात्रौ नक्तान्ध्यमापद्यते (सुउ. ७.३७-३८)

–**शमन**–वि., कफशामकम् ( असंसू. १४ )

–**संभवरोग**–पु., कफजरोगः ( सुशा. ७.१३ )

–**संशमनवर्ग**–पु., कफशामनद्रव्यसंग्रहः कालेयकागुरुतिलपर्णीकुष्ठहरिद्राशीतशिवशतपुष्पासरलरास्नाप्रकीर्योदकीर्येङ्गुदीसुमनाकाकादनीलाङ्गलीहस्तिकर्ण-

मुञ्जातकलामज्जकप्रभृतीनि वल्लीककण्टपञ्चमूल्यौ पिप्पल्यादिः बृहत्यादिः मुष्ककादिर्वचादिः सुरसादिरारग्वधादिरिति श्लेष्मसंशमनवर्गाः ( सुसू. ३९.९ )

**-स्थान**–न., कफस्थानम् ( असंसू. २० )

**श्लेष्मल**–वि., कफप्रकृतिकः ( चसू. ७.३९ ) श्लेष्मदोषाधिकः जन्मत एव। "श्लेष्मलस्य श्लेष्मनिमित्ता व्याधयः प्रायेण बलवन्तश्च भवन्ति" ( चवि. ६.१८ ) श्लेष्मभूयिष्ठः ( चवि. ८.९६ ) कफकरम् यथा पयःप्रभृति माषतिलादि वा ( अहसू. ५.२१; अहसू. २७.२ )

**श्लेष्माघात**–पु., रोग० श्लेष्मजं मूत्रकृच्छ्रम्, तल्लक्षणम्–स्निग्धं शुक्लमनुष्णं च मेहति मुष्कमेहनबस्तीनां गुरुत्वं संहृष्टरोमत्वं च भवति ( सुउ. ५९.६ )

**श्लेष्मात**–पु., वनस्पति० श्लेष्मातकः ( र. ११.९४ )

**श्लेष्मातक**–पु., वनस्पति० महाकषायवर्गे विषघ्नगणे प्रोक्तम् एकं द्रव्यम् ( सुचि. ३१.५ )
शेलुः ( अहसू. ६.१२०; असंउ. ४४ )
बहुवारः ( चसू. ४.११ ( १६ )
फलमस्य लेपतः स्तन्यशुध्यर्थमुपयुज्यते ( चचि. ३०.२७५; सुचि. ५.१० असंसू. १५ )
गुणाः–स्वादुः कटुः कषायः शीतः ( गुरुः, फलं गुरु ) (चसू. २७.१५९) क्रिमिशूलामरक्तदोषव्रणविस्फोटहरः ( ध. ५.९४ ) फलगुणाः–गुरुकफकृत् ( सुसू. ४६.१९३ )
हिं.—बरालसोडा.
**म.—भोंकर, भोकरी, शेळवंट, शेळवण, गोंधणी.**
गु.—गुदन, गुन्दो मोटो, गुन्दी नानी.
बं.—बहुयार, बहुवार, चालता गाछ, बोहरी.
ता.—विडी, नरुविळी.
फा.—सिपिस्तान.

**( श्लेष्मातकी )**–स्त्री., वनस्पति० श्लेष्मातकः ( सुक. ५.७५-७६ )
श्लेष्मातक्याद्यगदः अगद० दर्वीकरविषहरः राजिलविषहरश्च ( सुक. ५.७५-७६ )

**-तैल**–न., गुणाः– गुरु शीतलं श्लेष्मलं वातपित्तहरम् ( असंसू. ६ ) केश्यम् ( ध. ६.१४२ )

**-त्वच्**–स्त्री., पानाभ्यञ्जनादिभिर्लूताविषे उपयुज्यते ( सुक. ८.१२० )

**-प्रसव**–न., बहुवारपुष्पम्, श्लेष्मातकपुष्पम् ( सुउ. ४७.३२ )

**श्लेष्माधिक**–वि., कफदोषाधिकः (नरः) (चसू.१३.१९)

**श्लेष्माधिष्ठान**–वि., यत् श्लेष्माणमुपादाय भवति श्लेष्माश्रयम् ( सुनि. ३.३ )

**श्लेष्माभिष्यन्द्**–पु., नेत्ररोग० कफजोऽभिष्यन्दः ( सुउ. ११.१ )

**श्लेष्माभिष्यन्दप्रतिषेध**–पु., अध्यायसंज्ञा० ( सुउ. ११.१ )

**श्लेष्माशय**–पु., कफाशयः । उरःस्थानम् ( सुशा. ५.८)

**श्लेष्मास्राव**–पु., नेत्ररोग० नेत्रसंधिगतः रोग०, अश्रुस्रावाख्यः, तत्र लक्षणम्, श्वेतसान्द्रपिच्छिलनीरुजश्लेष्मस्रावयुक्तः रोगोऽयमसाध्यः ( सुउ. २.६ )

**श्लेष्मोत्क्लेश**–पु., लक्षण० कफोत्क्लेशः ( अहसू. १८.३८)

**श्लेष्मोत्तर**–वि., श्लेष्माधिकः ( नरः ) ( चसि. १.९ )

**श्लेष्मोत्सेक**–पु., लक्षण० कफोत्सेकः । कफवृद्धिः ( सुउ. ३९.१९४ )

**श्लेष्मोद्गिरण**–न., लक्षण० कफस्य स्रावः । विंशतिश्लेष्मविकारेष्वेकः ( चसू. २०.१७; असंसू. २० )

**श्लेष्मोपनाह**–पु., नेत्ररोग० नेत्रसंधिगतः कफजो रोगः साध्योऽयम् ( सुउ. १.३५ ) अयं भेद्यो लेख्यश्च ( सुउ. १४.९-१० ).

**श्लैष्मिक**–वि., कफविकारयुक्तः (नरः) ( चसू. १४.२७ ): कफप्रकृतिकः ( पुरुषः ) ( सुक. ५.३९ )

**श्लैष्मिकौजस्**–न.. ओजो० ओजो यदष्टबिन्दुकं तद्व्यतिरिक्तमोजः श्लैष्मिकौजस्तद्विशुद्धश्लेष्मसमगुणम् । तस्य प्रमाणमर्धाञ्जलिः ( चशा. ७.१५ )

**श्लोकस्थान**–न., सूत्रस्थानम् ( चवि. ८.२९; चसू. ३०.३३ ) 'श्लोकार्थः संग्रहार्थश्च श्लोकस्थानम् ।' ( चसू. ३०.४५-४६ )

**श्वन्**–पु., प्राणि० कुक्कुरः ( सुचि. २४.७६ ) वातप्रकृतिः प्राणी ( सुशा. ४.६७ ) दन्तनखविषः (सुक. ३.५) उन्मत्तः सन्दंशेन विषबाधां करोति । उन्मत्तश्वलक्षणम्–शिरोऽभितापी लालास्रावी अधोवक्त्रश्च ( चचि. २३.१७५ ) प्रस्रस्तलाङ्गूलोऽत्यर्थबधिरान्धः सोऽन्योन्यं अभिधावति ( सुक. ७.४३-४६ ) द्र० 'अलर्कविष'

**(श्व)–ग्रह**–पु., बालग्रहरोग० लक्षणम्–स पुरुषदेहधारिग्रहः। तेन प्रवेशितेन कम्पहृषितरोमत्व–स्वेद–चक्षुर्निमीलन–बहिरायामन–जिह्वादंशान्तःकण्ठकूजन–धावन–विड्गन्धत्व–क्रोशनादीनि लक्षणानि भवन्ति ( असंउ. ३ )

**-दंश**–पु., रोग० अलर्क विषरोग० (सुक. ७.४३-४६)

–**दंष्ट्र**–पु., मृग० जाङ्गलो मृगः ( चसू. २७.४५ ) चतुर्दंष्ट्रो जङ्गालवर्गीयोऽतिदुष्टः कर्कटक इति कार्तिकपुरे प्रसिद्धः ( ड. सुसू. ४६.५४ ) अस्य मांसरसो हिक्कायां प्रशस्तः ( सुउ. ५०.२९ )

–( **दंष्ट्रा** )–स्त्री., वनस्पति० गोक्षुरः (चसू. २३.१२; ध. १.१०३; चसू. ४.१३; सुचि. २.४८ ) वनस्पति० कण्डूकरी ( असंउ. ४६ ) मृग० श्वदंष्ट्रः ( सुसू. २०.५ )

–**दंष्ट्रादिघृत**–न., सिद्धघृत० क्षतक्षीणे उपयुक्तम् ( चचि. ११.४४-४७ )

–**दंष्ट्रावसुकासव**–पु., आसुत० पिप्पल्यादीनामनुपानार्थमुपयुक्तः ( सुसू. ४६.४३३ )

–**दन्त**–पु., कुक्कुरदन्तः, कुष्ठप्रशमनयोगे उपयुक्तः ( चचि. ७.१६० )

–**पच**–पु., चाण्डालः ( असंसू. ३८ )

–**पाक**–पु., चाण्डालः, लुब्धकः ( असंशा. १२ )

–**पित्त**–न., जाङ्गमद्रव्य० शुनः पित्तम्। तदिदं अपस्मारेऽञ्जनार्थं प्रयुक्तम् ( चचि. १०.५०; असंसू. ८ )

–**पुच्छा**–स्त्री., वनस्पति० पृश्निपर्णी (रा. ४.११८)

**श्वभ्र**–न., गर्तम् ( चशा. ८.२१ ) गर्तः ( सुचि. २४.८९; असंशा. २.६० ) गुहा ( चक. १.९ ) बिलम् ( सुसू. ३६.३ )

–**प्रपात**–पु., गर्ते पतनम् ( असंशा. २ )

**श्वयथु**–पु., रोग० उत्सेधलक्षणः शोफः ( चसू. १.११०; काखिल. १७.१४-१६; सुचि. २३.४ ) द्र० 'शोथः'

–**कर**–वि., शोथकरः शोफजनकः ( सुसू. ४०.५ )

–**पूर्वक**–वि., शोथपूर्वकः शोफपुरस्सरः ( अहसू. २९.१; असंसू. ३८ )

–**हरगण**–पु., गण० शोथहरः। दशमूलानि श्वयथु-शोथ–हराणि ( चसू. ४.१६ )

**श्वयथुक**–पु., शोथः ( र. २.११० )

**श्वस्**–अव्यय० परस्मिन्नहनि ( चक. १.१४ ) अपरेद्युः ( सुचि. ३३.५ )

( **श्वो–**)–**वस्य**–वि., अपरेद्युर्वमनार्हः (अहसू. १८.१२)

**श्वसन**–पु., वायुः ( सुउ. ६.२४ ) वनस्पति० मदनम् ( चक. १.२७ ) न., निःश्वसनम् ( सुनि. १६.६१ ) श्वासाधिक्यम् ( चचि. ३.४१ )

( **श्वसना** )–स्त्री., शारीर० श्वासवहा नाडी ( चक. चचि. १२.७६ )

–**कृच्छ्र**–न., लक्षण० दुःखेन श्वासविमोक्षणम् ( सुनि. ११.२८ )

( **श्वा** ) **विद्रोमन्**–न., शल्लकस्य केशाः, शल्लकस्य रोम्णा-मन्तर्धूमदग्धं भस्म हिक्काशमाय क्षौद्रोपेतं लेहयेत् ( सुउ. ५०.२० )

**श्वाविध्**–पु., प्राणि० बिलेशयः शल्लकपर्यायः (चचि. १७.११२; सुसू. ४६.७७; चसू. २७.३८) सूचिसदृशरोमयुक्तः। 'साळई' 'साळू' इति लोके ( सुसू. ४६.७७; चचि. १८.१७०; सुउ. ५१.३३; अहसू. ६.४७; असंसू. ७ ) अस्य मांसं वातानुबन्धजे श्वासे उपयुक्तम् ( चचि. १७.११२ )

**श्वास**–पु., कर्म० श्वसनम्। प्राणवायोर्गतागतम् ( सुउ. ५५.५ )

लक्षण० स्तनमूल–स्तनरोहित–अपस्तम्भमर्मसु विद्धस्यैकं लक्षणम् ( सुशा. ६.२५ ) श्लेष्मज्वर-लक्षणम् ( चनि. १.२७ )

रोग० अशीतिवातरोगेष्वेकः (कासू. २७.१९-२९) श्वसनरोग० ( चसू. १.१०८ ) अन्तर्मार्गजो रोग० ( चसू. ११.४९ ) महाव्याधि० ( सुउ. ५१.५ ) शीघ्रकारी रोगः (असंनि. ४.२९) हेतुः संप्राप्तिश्च– विदाहि–गुरु–विष्टम्भि–रुक्षाभिष्यन्दिभोजनानि, व्यायामकर्म–भाराध्व–वेगाघातापतर्पणानि आम-दोषाभिघात–स्त्री–क्षयरोगप्रपीडनानि, विषमाशना-ध्यशन–समशनानि, शीतपान–शीतासन–शीत-स्थानानि, धूमानलानिल–रजांसि इत्येतानि श्वासस्य कारणानि ( सुउ. ५१.३ ) आमातिसार-वमथुविषपाण्डुज्वरैर्मर्माघातेन च श्वासो भवति ( असंनि. ४ ) उरःस्थो मारुत उदानः प्राणवाहीनि स्रोतांसि प्रविश्य कुपितः सँस्तत्रस्थं कफमुद्धूय श्वासं करोति ( चचि. १७.१७ ) प्रकुपितः प्राणो वायुः श्वासरोगं कुरुते ( सुनि. १.१३-१४ ) प्राणवायुर्विगुणो भूत्वोर्ध्वगश्च भूत्वा कफसंयुतः सञ्श्वासं जनयति ( सुउ. ५१.४ ) कफपूर्वको मारुतः स्रोतांसि संरुध्य श्वासान्करोति ( चचि. १७.४५ ) कफोपरुद्धगमनो विष्वगास्थितः पवनः स्वहेतुदुष्टः सन्प्राणोदकान्नवाहीनि स्रोतांसि दूषयन्नुरःस्थ आमाशयसमुद्भवं श्वासं कुरुते ( असंनि. ४ ) संख्यासंप्राप्तिः– क्षुद्रकस्तमकछिन्नो

महानूर्ध्वश्च (सुउ. ५१.५) पूर्वरूपम्–आनाहः पार्श्वशूलो हृदयपीडा प्राणस्य च पर्याकुलत्वम् (चचि. १७.२०) हृत्पीडा भक्तद्वेषोऽरतिर्वैदन-वैरस्यं च (सुउ. ५१.६) शङ्खभेदः (असंनि. ४) पूर्वरूपे बाल उरसानिष्टनति अस्य च श्वासोऽत्युष्णो भवति (कासू. २५.१७) एतानि श्वासपूर्वरूपाणि। सामान्यलक्षणम्–श्वसनवृद्धिः। क्षुद्रश्वासलक्षणम्–तत्र आयासातिभोजनैः प्रेरितो वायुः क्षुद्रनामानं स्वयं संशमनं श्वासं जनयति (असंनि. ४) यस्य किञ्चित्कर्मारभमाणस्य पुरुषस्य यः श्वासः प्रवर्तते निषण्णस्य शान्तिमेति स क्षुद्रः श्वासः (ड.सुउ.५१.७) तमकलक्षणम्-पवनः प्रतिलोमं सिरा गच्छन् कफमुदीर्य शिरो ग्रीवां च परिगृह्य पार्श्वमुरश्च पीडयन्कासं घुर्घुरकं मोहमरुचिं पीनसं तृषं तीव्रवेगं प्राणोपतापिनं च श्वासं च करोति। तद्वेगेनातुर-स्ताम्यति। निष्ठ्यूत्यनन्तरं सुखमाप्नोति क्षणम्। शयानः कृच्छ्राच्छ्वसिति। निषण्णः स्वास्थ्यमृच्छति। उच्छ्रिताक्षत्वं ललाटे स्वेदोद्गमः शुष्कास्यतोष्ण-कामित्वं कम्पश्च भवति (असंनि. ४) स शाम्यति कफे हीने (सुउ. ५१.९-१०) प्रतमकलक्षणम्–तमकस्यैव भेदः प्रतमकः (चक्र. चचि. १७.६३-६४) यदा तमको ज्वरमूर्च्छायुतः शीतोपशयश्च तदा स प्रतमकसंज्ञः (सुउ. ५१.१०; असंनि. ४) छिन्न-श्वासलक्षणम्–छिन्नश्वासेन सविरामं श्वसिति मर्म-च्छेदरुजार्दितः स्वेदमूर्च्छायुतः सानाहो बस्तिदाह-निरोधवानधोदृष्टिर्विप्लुताक्षो रक्तैकलोचनो मुह्यन्-च्छुष्कास्यः प्रलापवान्दीनो नष्टच्छायो विचेतनश्च भवति (असंनि. ४; असंउ. ५१.११) महाश्वास-लक्षणम्–ऊर्ध्वं नीयमानो वातः सशब्दो मत्तर्षभ इवोच्चैः श्वसिति। महाश्वासी प्रनष्टज्ञानविज्ञानो विभ्रान्तलोचनो विवृताननो बद्धमूत्रवर्चस्कः क्लान्त-मना भवति। तदा प्रश्वसितं च दूराद्विज्ञायते (चचि. १७.४६-४८) शुष्ककण्ठो मोहितः कर्ण-शङ्खशिरोरुजावान्भवति वक्षश्च समाक्षिपति (असंनि. ४) ऊर्ध्वश्वासलक्षणम्–ऊर्ध्वश्वासपीडितो दीर्घकालमूर्ध्वं श्वसिति, श्वासं न अधः करोति। श्लेष्मावृतमुखस्रोतस्त्वेन क्रुद्धो वायुस्तेन पीडित ऊर्ध्वदृष्टिर्विपश्यन्विभ्रान्ताक्ष इतस्ततः प्रमुह्यन्-च्छुष्कास्यो वेदनार्तश्चारतिपीडितो भवति (चचि. १७.४९-५१) हृद्बस्त्यादिमर्मसु श्चाकृष्टत्वमिव हतस्वरत्वं च भवति (सुउ. ५१.१३) छिद्यमाने मर्मणीव वेदनावान्निरुद्धवाक्च भवति (असंनि. ४) साध्याऽसाध्यता–क्षुद्रश्वासः साध्य-स्तमकः कृच्छ्रसाध्यः। महोर्ध्वच्छिन्नत्रयः श्वासाः सर्वसम्पूर्णलक्षणा असाध्याः (सुउ. ५१.१४) बलिनां नवश्चेत्तमकश्वासः साध्यः (असंनि. ४) ऊर्ध्वश्वासारिष्टलक्षणम्–गतोष्मत्वं शूलोपहत-वङ्क्षणत्वम् अप्राप्तसुखत्वं चेति रिष्टलक्षणम् (चइ. ९.१३) ज्वरमूर्च्छाद्युपद्रवयुक्तौ प्रतमक-सन्तमकावसाध्यौ (सुउ. ५१.१४) चिकित्सा–सामे त्वामविधिं चरेत् (अहचि. ४.१६) बल-वतां श्वासरोगिणामादौ स्नेहस्वेदैरुपाचरेत्। पश्चाद्वमनं विरेचनं च हितम्। श्वासे स्नेहबस्तिः कदापि न देयः (सुउ. ५१.१५-३६) कफग्रस्ते वमनमुपयुक्तम्। वातकफानुबन्धे धूमं प्रयोजयेत्। धूमाः सर्वे ससर्पिष्का योज्याः (सुउ. ५१.४७-५२) तृषितः श्वासी दशमूलकाथं पिबेत् (चचि. १७.१०५) कफरुद्धमार्गशुद्ध्यर्थं मुहुर्मुहुर्लेहा देयाः (चचि. १७.१२०) पथ्यम्–श्वासार्दिती दन्तपवनं न भक्षयेत् (अहसू. २.४)

**–कासकरिकेसरिन्**–पु., पारदादियोग० तार-ताम्रपारदादिसाधितोऽयं श्वासकासघ्नः (र. १३.६४-६५)

**–कासहरी वटी**–स्त्री., गुटिकाकल्प० श्वासकासघ्नी (र. १३.६८)

**–घ्नवटक**–पु., सिद्धयोग० श्वासकासज्वरादिहरः (र. १३.५५-५८)

**–प्रतिषेध**–पु., अध्यायसंज्ञा० (सुउ. ५१.१)

**–भक्ष**–पु., वनस्पति० बर्बुरः (रापरि. ८.१३)

**–रोध**–पु., लक्षण० श्वासावरोधः (असंनि. ५)

**–शमनवर्ग**–पु., श्वासहरगणः। चण्डाऽम्ल-वेतस-शठी-तामलकी- सुरसा-हिङ्गु-जीवन्ती- पुष्करमूलैलागरूणि इत्ययं वर्गः श्वासशमनाय भवति (असंसू. १५)

**–हरद्रव्य**–न., द्रव्य० (चसू. ४.८) श्वासशमनवर्गः शटीपुष्करमूलाम्लवेतसैलाहिंग्वगरुसुरसातामलकी-जीवन्तीचण्डाश्चेति श्वासहरद्रव्याणि (चसू. ४.१६)

**श्वासान्तक**–पु., सिद्धयोग० श्वासकासादिहरः (र. १३.५४)

**श्वासारि**–पु., वनस्पति० पुष्करमूलम् (रा. ६.९३) पाठा (ध. १.७१-७२)

**श्वासिकी**–वि., श्वासशमनविषयिणी, श्वासविकारशमनी चिकित्सा (चवि. ५.२६)

**श्वासिन्**–वि., श्वासयुक्तः ( सुसू. २९.१४ )
**( श्वासि– )-शस्त**–वि., श्वासरोगिणां हितकरं द्रव्यम् ( सुउ. ५१.४६ )
**श्वित्र**–न., रोग० ( चचि. ७.१६२ ) कुष्ठभेदः ( सुचि. ९.११; असंनि. १४ ) श्वेतकुष्ठम् ( र. १.३५ ) श्वेतभावाच्छ्वित्रम् ( का.कुष्ठचि. ) रक्तदोषजरोगेष्वेकः ( चसू. २८.१३ ) श्वित्रे दोषतो वर्णभेदः लक्षणं च–वाताद्रूक्षमरुणम् पित्तात्कमलपत्रवत्ताम्रं सदाहं रोमध्वंसि च । कफाच्छ्वेतं घनं गुरु सकण्डु च ( असंनि. १४ ) दूष्यविशेषेण वर्णभेदः–रक्ताश्रिते दोषे रक्तम् । मांससमाश्रिते ताम्रम् । मेद आश्रिते श्वेतम् ( चचि. ७.१७४ ) साध्याऽसाध्यता–यद्वरक्तलोम तनु पाण्डु नातिचिरोत्थितं मध्यावकाशे उच्छूनं तत् साध्यम् ( चचि. ७.१७६ ) यद्रक्तलोमवत् परस्परतोऽभिन्नं सर्वतः प्रसृतं यद्वर्षगणोत्पन्नं तन्नैव सिध्यति ( चचि. ७.१७५ ) एतत्कुष्ठादपि बीभत्सं यतः शीघ्रमसाध्यतां याति तस्मादेतच्छान्त्यै क्षिप्रं प्रयतितव्यम् ( असंचि. २२ ) चिकित्सा–श्वित्रे स्फोटजननं प्रथमं कर्म कर्तव्यम् । स्फोटभेदादनन्तरं तैलप्रयोगेण रोपणादिकर्म कर्तव्यम् ( सुचि. ९.१५-१६ ) श्वित्रकुष्ठे तुत्थादिलेपयोगः उपयुक्तः ( सुचि. ९.२७ ) मयूरतुत्थं श्वित्रापहम् ( र. २.१३२ ) असनादिगणः श्वित्रकुष्ठादिहरः ( अहृसू. १५.२० ) कुक्कुटपुरीषयोगः श्वित्रजित् ( सुचि. ९.१९-२० ) आवल्गुजं बीजमध्यम् श्वित्रकुष्ठहरालेपे ( सुचि. ९.२५-२६ ) गोऽजादिमूत्रं श्वित्रनाशकम् ( अहृसू. ५.८३ )
**–कुष्ठारि**–पु., योग० श्वित्रनाशकः ( र. २०.२०३ )
**–घ्नतैल**–न., तैल० श्वित्रनाशनम् ( र. २०.२२३ )
**–घ्नरसायन**–न., सिद्धयोग० श्वेतकुष्ठादिनाशनः ( र. २६.३३-३४ )
**श्वित्रारि**-पु., पारदादियोग० पारदगंधकासीसरससुरसाचांगेर्यादिसाधितोऽयं श्वित्रकुष्ठघ्नः ( र. २०.१९८-२०२ )
**श्वित्रिन्**–वि., श्वित्ररोगग्रस्तः ( सुचि. ९.२६ )
**श्वेत**–पु., मूषिक० अयं कफजान् विकारान् करोति ( सुक. ७.२५-३० ) द्र० 'मूषिक'
वनस्पति० अर्कभेदः शुक्लार्कः ( रा. १०.२९ )
न., खनिजद्रव्य० श्वेतटङ्कणम् ( रा. ६.३१ )
वनस्पति० चन्दनभेदः ( ध. ३.९ )
आहार द्रव्य० तक्रभेदः मथितम् ( ध. ६.१८९ ) द्र० 'तक्र.'
रोग० श्वित्रम् ( चचि. ७.१७४ )
वि., वर्ण० शुक्लः ( अहृसू. १२.५४ )
**–कन्द**–पु., कन्द० श्वेतपलाण्डुः ( रा. ७.१०१ )
**–( कन्दा )**–स्त्री., वनस्पति० अतिविषा ( रा. ६.७ )
**–काकुलीमृग**–पु., सर्प० अयं भूमिशयः ( चसू. २७.३७ )
**–काच**–न., लवण० लवणम् ( र. ३०.१०४ )
**–काण्डा**–स्त्री., वनस्पति० श्वेतदूर्वा ( रा. ८.२२९ )
**–कापोति**–स्त्री., वनस्पति० सोमसमवीर्या महौषधिः । सा निष्पत्रा कनकाभासा मूले द्व्यङ्गुलसम्मिता लोहितान्ता सर्पाकारा 'श्वेतकापोती' इत्युच्यते, सा समूलफलवृन्ता भक्षयितव्या । तस्याः प्राप्तिस्थानम्–कौशिकीं नदीं पूर्वतः योजनत्रयात्मकः वल्मीकयुक्तः क्षितिप्रदेशः, तत्र वल्मीकमूर्धसु इयं लभ्यते ( सुचि. ३०.११,३५ )
**–काम्बोजि**–स्त्री., वनस्पति० गुञ्जा ( सुचि. १९.४२-४५; असंउ. ३९ )
**–काम्भोजी**–स्त्री., वनस्पति० काकमाचीभेदः, काकमाची ( ध. ४-३१ )
**–कुन्द**–पु., वनस्पति० करवीरः ( ध. ४.१ )
**–कुम्भीका**–स्त्री., वनस्पति० पाटलाभेदः काष्ठपाटला ( ध. १.१२२ )
**–कुष्ठ**–न., रोग० श्वित्रम् ( र. २०.२१०-२१४ )
**–क्रिया**–स्त्री., कर्म० भित्त्यादौ सुधालेपादिना श्वेतत्वोपपादकं कर्म ( र. २.१० )
**–गुञ्जा**–स्त्री., वनस्पति० गुञ्जाभेदः 'द्र० गुञ्जा' ( ध. ४.३१ )
**–घण्टा**–स्त्री., वनस्पति० नागदन्ती ( रापरि. ५.२४ )
**–चन्दन**–न., वनस्पति० चन्दनभेदः, हरिचन्दनम् ( ध. ३.१ )
**–चामरपुष्प**–पु., वनस्पति० काशः ( ध. ४.१३० )
**–चिल्ली**–स्त्री., वनस्पति० चिल्लीभेदः ( धपरि. ७.६८ )
**–जलज**–न., पद्म० कुमुदम् ( ध. ४.१५४ )
**–जीर**–न., खनिजद्रव्य० शङ्खजीरकम् ( र. २४.२२ )
**–जीरक**–पु., वनस्पति० जीरकभेदः ( रा. ६.१०२ )
**–टङ्कण**–न., खनिज० टङ्कणभेदः ( रा. ६.३१ )
**–दण्डा**–स्त्री., वनस्पति० दूर्वाभेदः, श्वेतदूर्वा, द्र० 'दूर्वा' ( ध. ४.१४४ )

–दूर्वा–स्त्री., वनस्पति० दूर्वा ( ध. ४.१४४ )
–द्रुम–पु., वनस्पति० वरुणः ( ध. ५.११९ )
–द्वीप–न., देश० चन्द्रद्वीपम् । गंधकप्राप्तिस्थानेष्वेकम् ( र. ३.२-३ )
–नामा–स्त्री., वनस्पति० गिरिकर्णिका ( ध. ४.८४; चसू. १.७७ ) विष्णुक्रान्ता ( चसू. १.७७ )
–निष्पाव–पु., शिम्बीधान्य० निष्पावभेदः ( रा. १६.१७५ )
–नेत्र–न., रोग० विंशतिश्लेष्मविकारेष्वेकः, नेत्रयोः श्वेतत्वं पाण्डुरत्वं वा ( चसू. २०.१७; असंशा. ४
–पत्र–न., पद्म० श्वेतपद्मम् पुण्डरीकम् ( रा. १०.२३७ )
( –पत्रा )–स्त्री., वनस्पति० श्वेतशिंशपा ( रा. ९.२०० ) द्र० 'शिंशपा.'
–पद्म–न., पद्म० पुण्डरीकम् ( ध. ४.१४८ )
–पयस्–न., तक्र० दध्नो द्विगुणं जलं मिश्रयित्वा कृतं तक्रं श्वेतपयः ( ध. ६.२११ )
–पाक–पु., वनस्पति० श्वेतगुञ्जा, द्र० 'गुञ्जा' ( असंउ. २४ )
–पादता–स्त्री., लक्षण० श्वेतपादत्वम् ( असंशा. ४ )
–पिण्डीतक–पु., वनस्पति० महापिण्डीतरुः ( रापरि. ९.३३ )
–पुष्प–पु., वनस्पति० श्वेतपुष्पनिर्गुण्डी, निर्गुण्डी ( र. २२.१६०; ध. ४.८१ )
करवीरः ( ध. ४.१ )
वरुणः ( ध. ५.११९ )
(–पुष्पी)–स्त्री., वनस्पति० गिरिकर्णिका (ध. ४.८४) इन्द्रवारुणी ( ध. १.२५२ )
–पुष्पक–पु., वनस्पति० करवीरः ( रा. १०.२ )
( –पुष्पिका )–स्त्री., वनस्पति० पुत्रदात्री ( रापरि. ३.४७ )
–पोर–पु., वनस्पति० इक्षुभेदः । अयं वंशेक्षुवद्गुणः किञ्चिदुष्णो वातहरः ( सुसू. ४५.१५२ ) द्र० 'इक्षु'
–फला–स्त्री., वनस्पति० बृहतीभेदः, श्वेतबृहती द्र० 'बृहती' ( रा. ४.१२५ )
–बर्बर–न., वनस्पति० बर्बरभेदः, बर्बरिकम्, द्र० 'बर्बर' ( रा. १२.१७ )
–बीज–पु., शिम्बिधान्य० कुलत्थः ( रा. १६.१६६ )
–बृहती–स्त्री., वनस्पति० बृहतीभेदः ( रा. ४.१२५; असंशा. १ ) द्र० 'बृहती'

–भण्डी–स्त्री., वनस्पति० अपराजिता ( चचि. २३.२१० )
–मण्डल–पु., सर्प० मण्डलिसर्पभेदः ( सुक. ४.३४(२) ) द्र० 'मण्डलिन्'
न., शारीर० नेत्रप्रत्यङ्गम् नेत्रे श्वेतवर्णः मण्डलाकारी विभागः ( सुउ. १.१५ )
–मन्दार–पु., वनस्पति० अर्कभेदः ( रा. १०.३१ )
–मरिच–पु., वनस्पति० शिग्रुः ( ध. ४.४० )
न.,शोभाञ्जनबीजम् ( चचि.२६.२४५ )
–महोटिका–स्त्री., वनस्पति० बृहतीभेदः, द्र० 'बृहती' ( रा. ४.१२५ )
–मुष्कक–पु., वनस्पति० मुष्ककभेदः (ध. ५.१३२) द्र० 'मुष्कक'
–मूत्र–न., लक्षण० श्लेष्मविकार० मूत्रस्य श्वेतत्वम् ( चसू. २०.१७; असंसू. २० )
–मूल–पु., वनस्पति० पुनर्नवाभेदः श्वेतपुनर्नवा द्र० 'पुनर्नवा' ( ध. १.२७६ )
–मोक्षक–पु., वनस्पति० मुष्ककभेदः (सुचि. ४.३२) द्र० 'मुष्कक'
–रोध्र–पु., वनस्पति० लोध्रभेदः, द्र० 'लोध्र' ( रा. ६. २४१ )
–रोहित–पु.,वनस्पति० रोहितकभेदः, द्र० 'रोहितक' ( रा. ८.२१८ )
–वचा–स्त्री., वनस्पति० वचाभेदः ( ध. २.६ ) द्र० 'वचा'
अतिविषा ( रा. ६.८ )
–वर्ग–पु., द्रव्यगण० तगर–कुटज–कुन्द–गुञ्जा–जीवन्तिका–श्वेतकमलकन्दाश्चेति द्रव्याण्यत्र । स रसकर्मोपयोगी ( र. १०.९३ )
–वर्चस्त्व–न., रोग० श्लेष्मविकारेष्वेकः श्वेतपुरीषत्वम्, शकृतः श्वेतत्वम् ( चसू. २०.१७ )
–वर्णता–स्त्री., लक्षण० श्वेतता, धवलत्वम् ( असंसू. २० )
–वारल–पु., पक्षि० प्लववर्गीयः । शुक्लपक्षः प्रसेवकगलः 'ज्येष्ठबलाका' इति लोके ( ड. सुसू. ४६.१०५-१०६ )
–वारिज–न., कमलभेदः पुण्डरीकम् ( ध. ४.१४८ )
–वार्ताकिनी–स्त्री., वनस्पति० बृहतीभेदः, श्वेतबृहती द्र० 'बृहती' ( रा. ४.१२५ )
–वाह–पु., वनस्पति० वृक्ष० अर्जुनः ( असंसू. १६; अहृसू. १५.१९ )

**–शकृत्त्व**–न., लक्षण० श्वेतवर्चस्त्वम् ( असंसू. २० )

**–शालि**–पु., धान्य० अकण्डितशुक्लधान्यम् । शालिभेदः ( चचि. २१.८० ) मागधे पुण्डरीकशालिरिति ख्यातः ( चचि. २१.११३; ध. ६.७१ )

**–शिंशपा**–स्त्री., वनस्पति० शिंशपाभेदः, द्र० 'शिंशपा' ( रा. ९.२०० )

**–शिग्रु**–पु., वनस्पति० शिग्रुभेदः, द्र० 'शिग्रु' ( रा. ७.६४ )

**–शिम्ब**–पु., शिम्बीधान्य० निष्पावः ( ध. ६.११० )

**–शिला**–स्त्री., वनस्पति० पाषाणभेदः (रा. ५.२१३)

**–सार**–पु., वनस्पति० वृक्ष० खदिरभेदः, सोमवल्कः द्र० 'खदिर' ( ध. १.२७ )

**–सिंही**–स्त्री., वनस्पति० बृहतीभेदः द्र० 'बृहती' ( रा. ४.१२५ )

**–सुरसा**–स्त्री., वनस्पति० निर्गुण्डीभेदः शुक्लशेफालिका, द्र० निर्गुण्डी' ( ध. ४.८३ )

**–सूरण**–पु., कन्द० सूरणभेदः, सितसूरणः, द्र० 'सूरण' ( रापरि. ७.८ )

**–स्पन्दा**–स्त्री., वनस्पति० गिरिकर्णिकाभेदः, श्वेतगिरिकर्णिका, अपराजिता, द्र० 'गिरिकर्णिका' ( ध. ४.८४ )

**–हस्तता**–स्त्री., लक्षण० धवलपाणित्वम्, हस्तस्य श्वेतवर्णता ( असंशा. ४ )

**( श्वेता )**–स्त्री., शारीर० त्वग्भेदः । तृतीया त्वक्, लोहितायास्त्वचोऽधो व्रीहिद्वादशभागप्रमाणा यवस्य विंशतिभागेषु द्वादशयवभागाः (=१२/२० यव ) चर्मदल-अजगल्ली-मशकाधिष्ठाना च सा ( सुशा. ४४; असंशा. ५ )

लूता० दंशलक्षणम्–दंशदेशे श्वेता कण्डूमती पिडका भवति । सा दाहमूर्च्छाज्वरकरी विसर्पक्लेदरुक्करी च ( सुक. ८.१०३–१०४ ) द्र० 'लूता'

वनस्पति० सारिवा ( ध. १.१६१ )

अतिविषा ( ध. १.११ )

वचा (चसू. २.४; सुक. १.६३-६५; असंउ. ४२)

काश्मरीभेद० काश्मरी ( रा. ९.१४७ )

कटभीभेदः श्वेतकटभी श्वेते इति कटभीद्वयम् ( ड. सुक. ६.१४-२७; असंउ. ६ )

बृहतीभेदः, श्वेतबृहती, द्र० 'बृहती' (रा. ४.२२५)

लक्ष्मणा ( रा. ४.१२३ )

रास्ना ( चसू. ४.१८ )

कदलीभेदः, काष्ठकदली ( ध. ४.७८ )

वंशरोचना ( रा. ६.८६ )

पाटलाभेदः, काष्ठपाटला, द्र० 'पाटला' ( ध. १.१२२ )

दूर्वाभेदः, श्वेतदूर्वा द्र० 'दूर्वा' ( रा. ८.२२९ )

पाषाणभेदः ( रा. ५.२०९ )

गिरिकर्णिका ( असंसू. ८; ध. ४.८४) श्वेतस्पन्दा, अपराजिता इति पर्यायौ ( चक्र. चचि. १०.४२; असंसू.१४ ) श्वेतस्यन्दा इत्यपि पर्यायः ( सुचि. २२.६३; सुक. ५.७५-७६ )

विषाणिका ( चचि. १०.४२ )

वृक्ष० श्वेतस्यन्दः ( ड. सुक. १.५१-५४; सुउ. २४. ३२ ) जज्जट ( चचि. ३.२६७ )

श्वेतागुणाः–अतिमधुरा, शीता, स्तन्यदा, रुचिकृच्च ( रा. ५.४६; पृ. ३४४ )

इक्षुविकृति० शर्करा ( ध. २.१०४ )

**श्वेतक**–पु., वनस्पति० शिग्रुभेदः ( ध. ४.४० )

न., खनिज० रौप्यम् ( ध. ६.५ )

श्वेतटङ्कणम् ( रा. ६.३१ )

**श्वेता**–स्त्री., वन० श्वेताकटभी ( अहृसू. १५.२८ )

**–युग्म**–न., वनस्पति० एका किणिहीसंज्ञा अन्या महाश्वेता पालिन्दीसंज्ञा कटभी ( असंसू. १६; अहृसू. १५.२८ )

**श्वेताक्ष**–पु., वनस्पति० सोमविशेषः ( सुचि. २९.५ )

**श्वेतातिदिग्धाङ्ग**–वि., लक्षण० श्वेतवर्णयुक्ताङ्गः ( चचि. १६.३२ )

**श्वेतापराजिता**–स्त्री., वनस्पति० श्वेतगिरिकर्णिका ( र. १६.९९-१०१ ) द्र० 'गिरिकर्णिका'

श्वेतपुष्पा विष्णुक्रान्ता ( र. १६.९९-१०१ )

**श्वेताम्बर**–पु., वनस्पति० शितिवारः ( रा. ४.२०७ )

**श्वेताम्ली**–स्त्री., वनस्पति० गुणाः–मधुरा वृष्या बलदायिनी पित्तघ्नी च ( रापरि. ४.३७ )

**श्वेतारियोग**–पु., योग० श्वेतकुष्ठघ्नः पलमात्रे पारदे समानं गन्धकं जारयित्वा तत्पारदे पलत्रयं निम्बूकरसेन संमृदितं गन्धकं प्रक्षिप्य काकोदुम्बरिका–बाकुची–चित्रक-भृङ्गराज–कोरण्टानां क्वाथैः परिमर्दयेत् । ततश्चैकदिनं कटुतुम्बीक्वाथेन संमर्द्य काचकूप्यां सिकतायन्त्रे यामद्वयं पचेत् । तस्य मात्रा वल्लद्वयम् । अनुपानं कृष्णनागवल्लीपर्णम् ( र. २०.२१४-२१८ )

**श्वेतार्क**–पु., वनस्पति० अर्कभेदः श्वेतपुष्पोऽर्कः, द्र० 'अर्क' ( र. ११.५२-५७ )

**श्वेतार्षभ**-वि., ऋषभसम्बद्धं ( चशा. ८.१० )
**श्वेतावभासता**-स्त्री., रोग० श्लेष्मविकारेष्वेकः श्वेतावभासनम् ( चसू. २०.१७; असंसू. २० )
**श्वेतेक्षु**-पु., इक्षु० सितेक्षुः, द्र० ' इक्षु ' ( रा. १४.१८१ )
**श्वेतैरण्ड**-पु., वनस्पति० एरण्डभेदः ( रा. ८.४४५ ) द्र० 'एरण्ड'
**श्वेतोदर**-पु., सर्प० दर्वीकरभेदः ( सुक. ४.३४ (१) ) द्र० ' दर्वीकर '
**श्वैत्य**-न., लक्षण० शुक्लत्वम् ( अहृसू. १.२७; चनि. ११.७; )
**श्वैत्र्य**-न., लक्षण० श्वित्रित्वम्, श्वेतकुष्ठयुक्तत्वम् ( चसू. २३.२४ )

## ष

**षड**-पु., पेय० दाडिमगोरसादिना घनपल्लवफलादिभिः कृतः तृष्णायामुपयुक्तः ( सुउ. ४०.९७) दाडिमतक्रशाकादिसंस्कृतो द्रवः (ड. सुउ. ४०.२७ )
**(षडी)**-स्त्री., वनस्पति० सटी ( शठी ) (असंउ.२४; असंउ. ४९ )
**षडङ्ग**-पु., वनस्पति० गोक्षुरभेदः, क्षुद्रगोक्षुरः ( रा. ३.१३१; ध. १.१०२ )
सर्प० मण्डली सर्पः ( सुक. ४.३४(२) )
न., षण्णामङ्गानां समाहारः ( चसू. ३०.४ ) तत् शिरोऽन्तराधिद्वौं बाहू सक्थिनी च ( असंशा. ५; चशा. ७.४ )
घृत० षट्पलकघृतम् ( ड. सुउ. ४२.२४ ) द्र० ' षट्पलघृत '
वि., षडङ्गयुक्तम् शरीरम् ( सुशा. ५.३ ) प्रियंगु पिप्पली भद्रमुस्तं हरेणुः, क्षौद्रं, बदरचूर्णं च ( का. गर्भिणीचिकित्सा )
**षडङ्गगुग्गुलु**-पु., योग० गुग्गुलुकल्पः। रास्ना-गुडूची-देवदारु-शुण्ठी-एरण्डमूलानि समभागानि गुग्गुलुं च सर्वेषां समभागं मिश्रयेत् । अयं वातरोगे उपयुक्तः ( र. २१.१६० )
**षडङ्गघृत**-न., सिद्धघृत० षट्पलघृतम् ( सुउ. ४२.२४ )
**षडङ्गुलसंमितनेत्र**-वि., षडङ्गुलसम्मितं नेत्रं यस्य सः ( बस्तिः ) ( चसि. ३.८ )
**षडङ्गोदक**-न., जल० वनचन्दनशुण्ठ्यम्बुपर्पटोशीरैः साधितं जलं षडङ्गोदकम् ( असंचि. ३ ) तच्च पाचनं तृड्ज्वरापहम् ( अहृचि. १.१५; चचि. ३.१४५ )
**षडिन्द्रिय**-न., षण्णामिन्द्रियाणां समाहारः, मनसा सह पञ्चेन्द्रियं षडिन्द्रियम् ( चसू. २६.४३(१) )
**षण्**-वि., संख्याब्द० षट्,
**-निष्कतैल**-न., तैलयोग० तैलमिदम् आमवातादिहरम् ( र. १६.४२-४३ )
**-मास**-न., षण्णां मासानां समाहारः (असंशा. ९)
**-मासोषित**-( परिव० ) वि., षण्मासं यावत्स्थितः ( असंसू. २ )
**-मुख**-पु., कार्तिकेयः, उमाशङ्करापत्यं षण्मुखयुक्तम् ( काचि. )
**-( मुखा )**-स्त्री., वनस्पति० षड्भुजा ( रा.७.२५५ )
**-( मुखी )**-स्त्री., ग्रहरोग० बालग्रहः। रेवतीग्रहः। देवताऽपि सा सूतिकाषष्ठ्यां पूज्या। तस्याः तिथिः षष्ठी ( का.बालग्रहचि० )
**-मूल**-वि., षण्मूलानि नाम कारणानि यस्य सः ( सुचि. १.१३४ )
**षण्ड**-पु., नपुंसक० अशुक्रषण्डप्रकारः। स्त्रीचेष्टिताकारः नरषण्डः। तस्योत्पत्तिहेतुः- यो नरो भार्यायामृतौ उत्तानीभूय विपरीतबन्धेन प्रवर्तते ततस्त्रीचेष्टिताकारपुत्रः षण्डसंज्ञको जायते ( सुशा. २.४१-४२ ) योषितामपि एतादृशं षण्डत्वं दृश्यते। स नारीषण्डः ( सुशा. २.४३-४४ )
**( षण्डी )**-स्त्री., योनिरोग० लक्षणम्- सा बीजदोषात्स्त्रीगर्भस्य वातहतगर्भाशया तेन स्त्री नृद्वेषिणी अस्तनी च भवति। सोऽसाध्ययोनिरोगः ( चचि. ३०.३४-३५ ) षण्डी योनिरनार्तवाऽस्तना मैथुने खरस्पर्शा च भवति ( सुउ. ३८.१८ ) गर्भे बीजदोषतो जायमाना स्त्री नृद्वेषिणी यौवनेऽप्यस्तनी स्यात् ( असंउ. ३८ )
**षण्ढ**-पु., नपुंसकः ( सुशा. २.४१-४२ ) द्र० ' षण्ड '
**-ता**-स्त्री., स्त्रीगमनाशक्तित्वम् ( अरु. अहृसू. ४.२० )
**-योनि**-स्त्री., योनिरोग० विंशतियोनिव्यापत्स्वेकः द्र० ' षण्डीयोनिः ' ( चसू. १९.४ ( ९ )
**-संज्ञा**-वि., योनिरोग० द्र० ' षण्डीयोनिः ' ( असंउ. ३८ )
**षष्**-संख्याश० ( सुसू. १४.३ )
**( षट् )-कल्प**-पु., अध्याय० तत्र बालानामक्षिरोगशमनार्थं षट् द्रव्याणां कल्पा उक्ताः। तानि द्रव्याणि- चक्षुष्या पुष्पकं माता रोचना रसाञ्जनं कतकफलं च ( का. षट्कल्प० )

**(षट्)–कोण**–न., रत्न० हीरकः ( ध. ६.५६ )
**–कोल**–न., द्रव्य० षड्षणम् ( र. २१.१३५ )
**–कोश**–वि., षट्कोशात्मकम् ( काशा. १० )
**–पद**–पु., कीट० भ्रमरादिः ( चसू. २६.४३; सुसू. ६.२५-२८ )
**–पदाभिसरण**–न., लक्षण० यथा प्रमेहे षट्पदानां देहे तथा मूत्रे च सञ्चारो भवति ( चनि. ४.४७ )
**–पदमञ्जरी**–स्त्री., वनस्पति० अशोकः ( ध. ५.१५९ )
**–पदातिथि**–पु., वनस्पति० चम्पकः ( ध. ५.१४२ )
**–पदानन्दवर्धन**–पु., वनस्पति० किङ्किरातः ( ध. ५.१५६ )
**–पदानन्दा**–स्त्री., वनस्पति० वार्षिकी ( ध. ५.१३६ )
**–पल**–न., घृत० ( चसू. २४.५५ )
**–पलघृत**–न., घृत० तत्साधनप्रकारः–पिप्पली-पिप्पलीमूलचव्यचित्रकशृङ्गवेरयवक्षारसैन्धवानां पलिकाभागाः घृतप्रस्थं तत्तुल्यं क्षीरं तदैकध्यं विपाचयेत् ( सुचि. १४.१४; चचि.५.१४७-१४८ ) क्षीरषट्पलकं घृतम्, इदं कफात्मकं गुल्मं ग्रहणीं पाण्डुरोगं प्लीहकासविषमज्वराग्निमान्द्यश्वयथूंश्च हरति ( सुचि. १४.१४; चचि. ५.१४७-१४८; चचि. १५.१७० )
**–पलसार्पिस्**–न., घृत० षट्पलघृतम् तदिदं प्लीहाग्निसंगादिनाशकम् ( सुचि. १४.१४ )
**–पलसर्पिस्**–न., घृत० षट्पलघृतम् ( चक. ) ( चचि. ३.२९८ )

**(षड्)–ग्रन्थ**–पु., वृक्ष० करञ्जः ( चचि. ७.११३ ) करञ्जभेदः, पूतिकरञ्जः ( ध. ५.१०९ )
**–(ग्रन्था)**–स्त्री., वनस्पति० वचा ( सुचि. ९.८; असंचि. १; श्वेतवचा ( ध. २.६ ) सटी ( शठी ) ( ध. १.६१ )
**–ग्रन्थादिचूर्ण**–न., चूर्णकल्प० श्लैष्मिकगुल्मे शूले चोपयुक्तम् ( सुउ. ४२.७१-७२ )
**–धरण**–पु., योग० षण्णां चित्रकादीनां धरणा मानविशेषा यत्र योगे, स षड्धरणो योगः। तत्र द्रव्याणि—चित्रक–इन्द्रयव–पाठा–कटुका–अतिविषा–अभया चेति। वातव्याधिप्रशमनोऽयं योगः, आमाशयगतवातस्यैव प्रशामको न त्वाक्षेपकादीनाम् ( सुचि. ४.४ ) दार्वीकलिङ्गकटुकातिविषाग्निपाठाः इत्येतेषां सूक्ष्मचूर्णं मूत्रेण सह पीतं अर्शः उदरं कुष्ठमेहकोष्ठगतवातग्रहण्यादीन् रोगान् हन्ति ( असंचि. २३ )
**–धातुज**–वि., षड्धातुसमुदायात्मकम् पञ्चमहाभूतानि आत्मा च षष्ठ इति षड्धातवः, तेभ्यो जातम् ( चसू. २५.१५ )
**–भुजा**–स्त्री., वल्लीफल० गुणाः– तिक्ता मधुरा किंचित् अम्लविपाका तर्पणी पुष्टिकरी वृष्या मूत्रला कफकरी पित्तघ्नी दाहश्रमोन्मादघ्नी च (रा. ७.२५५)
हिं.—खर्बुज.
**म.—खर्बुज.**
गु.—टर्बुज.
बं.—खेर्मुज.
**–रस**–वि., षड्रसात्मकः ( आहारादिः ) (सुसू. १४.३)
**–रात्र**–न., षण्णां रात्रीणां समाहारः ( असंशा. ९ )
**–रेखा**–स्त्री., वनस्पति० षड्भुजा ( रा. ७.२५५ ) खरबुज. पहा 'षड्भुजा.'
**–विरेचनशताश्रितीय**–वि., अध्यायसंज्ञाविशेषः ( चसू. ४.१ )
**–विरेचनशतीय**–वि., अध्यायसंज्ञा० (चसू. ४.१)

**षष्टि**–पु., धान्य० व्रीहिः ( रा. १६.१०१ )
**–ज**–पु., धान्य० षष्टिकः ( रा. १६.८४ )
**–तण्डुलजोद्भवा**–स्त्री., वनस्पति० वंशरोचनाभेदः ( ध. २.५६ )
**–वासरज**–पु., धान्य० षष्टिकः ( रा. १६.८४ )
**–शालि**–पु., षष्टिकः ( रा. १६.८४ )

**षष्टिक**–पु., शूकधान्य० व्रीहिभेदः ( चसू. ४.१२; सुसू. ४६.१०; अहृसू. ६.७-८ ) ग्रैष्मिकं धान्यम् ( सुउ. ३९.३१८-३१९ ) प्रकृतितो लघुधान्यम् ( चसू. ५.५ ) श्रमनाशनगणे प्रोक्तमेकं द्रव्यम् ( चसू. ४.१६; असंसू. १५ ) यो व्रीहिः षष्टिरात्रेण पच्यते, स षष्टिकः। षष्टिको व्रीहिषु श्रेष्ठः ( सुउ. ३९.३१८-३१९; चसू. २७.१३ ) हितत्वेनाभ्यसनीयमेकं द्रव्यम् ( चसू. ५.१२ ) सर्वप्राणिनामाहारार्थं हितम् ( सुसू. २०.५ ) वमिनिग्रहणगणे प्रोक्तं द्रव्यम् ( असंसू. १५ ) षष्टिको व्रीहिषु श्रेष्ठः। षष्टिकः द्विविधो गौरः कृष्णगौरश्च। तत्र गौरः कृष्णगौरतः श्रेष्ठः ( असंसू. ६.७-८ ) गुणाः– स्वादुः शीतो लघुः स्थिरो ग्राही त्रिदोषघ्नः ( चसू. २७.१३; अहृसू. ६.७ ) बलवर्धनो विपाके मधुरो लोहित-

शालिभिस्तुल्यगुणः ( सुसू. ४६.१०-११ ) बृंहण-कर्मकारी ( अहृसू. ४.२८; ध. ६.७२ )

**-मूल**-न., शूकधान्यविशेषस्य मूलम्। तरस्तन्य-जनकम् ( चसू. ४.१२; असंसू. १५ )

**-वर्ग**-पु., गण० षष्टिक-काङ्कुक-मुकुन्दक-पीतक-प्रमोदक-काकलकासनपुष्पक- महाषष्टिक -चूर्णक-कुरबक-केदारप्रभृतयः षष्टिकाः ( सुसू. ४६.८ )

**षष्टिकादिगुटिका**-स्त्री., योग० गुटिका कल्पः। अयं योगो वृष्योऽपत्यकरश्च ( चचि. २ (२). ३-९ )

**षष्टिकौदन**-पु., योग० शुभ्रं षष्टिकौदनं घृतेन सह पयसि पक्त्वा शर्करामधुसंयुक्तं कुर्यात्, अयं वृष्यः ( चचि. २.(२)२७ )

**षष्ठी**-स्त्री., बालग्रह० रेवतीग्रहस्य नाम। नन्दिकेश्वर-पञ्चमानां भ्रातॄणां षष्ठी भगिनी ( काबालग्रहचि. ) सा षष्ठेऽहन्यपत्यं विनाशयति ( कारेवतीक० ४५ )

**-ग्रह** पु., बालग्रह० स क्षीरदुष्टिहेतुः ( कासू. १९ )

**-निशा**-स्त्री., सूतिकायाः षष्ठी निशा। सूतिकाषष्ठी (का.बालग्रहचि.) अस्यां बालहिताय रक्षाबलिक्रिया कर्तव्या ( असंउ. १ )

**षाडव**-पु., कृतान्न० व्यञ्जन० मधुराम्लद्रव्यकृतो द्रवपदार्थः पानक०
( चसू. २७.२८१; सुसू. ४६.३७८ )
यूष० ( सुउ. ४७.२५-२६; चचि. ११.८८-९० )
व्यञ्जन० राजिकया संस्कृतः जम्बूफलरसैः सिता-रुचकसिन्धूत्थैः सवृक्षाम्लपरूषकैर्युक्तो रागषाडवः। षाडवाः पुनर्मधुराम्ललवणसंयोगजाः नानाविधाः ( सुसू. ४६.३८३ ) मधुराम्लकटूनां तु संस्काराः षाडवा मताः ( ड. सुउ. ५७.१२ )

**षाण**-पु., मान० शाणः धरणद्वयम्, माषचतुष्टयम्, तोलकपादः। इति मानम् ( र. ११.३ )

**षाण्ढ्य**-न., रोग० षण्ढस्य भावः ( सुचि. ९.८ ) अशीतिवातरोगेष्वेकः ( कासू. २७.१९-२९ ) नपुंसकत्वम् ( चसू. २६.१०२ ) विरुद्धाशनजो रोग० क्लीबत्वम् ( चसू. २६.८४ ) लक्षण०
( सुशा. ६.२४ )

**षाण्मासिकरसायन**-न., योग० षण्मासाद्यस्य योगस्य प्रयोगाज्जरा कार्श्यं च विनश्यति ( र. २६.१२-१३ )

**षोडश**-वि., संख्या० ( चसू. १०.३ )

**-कल**-वि., षोडशगुणम्। कलाशब्दो गुणवचनः ( चक. चसू. १०.३ )
वि., षोडशविकारात्मकः ( चिकित्साधिकृतकर्म-पुरुषः ) ( सुउ. ६६.७ )

**-गुण**-वि., षोडशभागम् ( अहृसू. १४.२७ )

**षोडशिका**-स्त्री., मान० पलम् ( चक. १२.९२ ) कर्षः ( असंक. ८ )

**-तैल**-न., कर्षपरिमाणं तिलतैलं तालस्य सत्वपातनार्थ-मुपयोज्यम् ( र. ३.८८ )

**ष्ठीवन**-न., कर्म० मुखस्रावोद्गारः (अरु. अहृसू. १२.५) लक्षण० मुखात्कफादीनां बहिर्निक्षेपणम्
( सुसू. १६.७; अहृसू. ८.९ )
वि., ष्ठीवनार्थं कफोत्क्लेशार्थमुपयुक्तं ( द्रव्यम् ) ( चचि. १५.१९८ )

## स

**संयत**-वि., संयमनशीलः, संयमी ( सुचि. २४.११३ ) बद्धम् पाशादिना ( सुउ. ६२.१८ )

**संयतात्मन्**-वि., जितेन्द्रियः ( सुशा. ३.२४ )

**संयाव**-पु., भक्ष्य० उत्कारिका (चक. चचि. ३०.१०७) यवौदनः ( इन्दु. असंउ. ४ )
मधु ( घृत ) दुग्धेन सुशोभनां समितां मर्दयित्वा घृतोत्तरे खण्डे पचेत्। खण्डैलामरिचार्द्रकचूर्णानि चास्मिन् क्षिपेत्। स च संयावः संपद्यते। स गुरु-र्बृंहणश्च ( सुसू. ४६.३९५-३९६ )
नातिमृदुकठिनः समिताशर्कराकृतभक्ष्यविशेषः ( सुनि. ८.१० )

**संयोग**-पु., संबन्धः, ( धर्माधर्मादिभिः ) (चशा. ५.२१) द्रव्याणामुचितं मेलनम्, संहतीभावः (चसू. ४.९२; सुसू. २०.३ )

**-पुरुष**-पु., चतुर्विंशतिको राशिपुरुषः (चशा. १.८५)

**-विरुद्ध**-वि., मेलनाद्विरुद्धत्वमापन्नम् (चसू. २६.९९)

**-शरमूलीय**-वि., अध्यायसंज्ञा० ( चचि. २ (१)

**संयोजन**-न., संहननं सङ्घातो वा ( चवि. ८.११६ ) संयोगः, विध्युक्तं मिश्रणम् ( असंसू. २८.४१-४२ )

**संरब्ध**-वि., क्षुब्धम् ( सुउ. ६.१६ ) सम्यक्कलितः ( ड. सुउ. २७.९ ) विशालमूलः ( सुचि. १.२९ )

**-नेत्र**-वि., लक्षण० सशोथलोचनः ( ड. सुउ. ५१.१२ )

**संरम्भ**-पु., आरभटी ( चक. ) शौर्यम् ( चचि. ९.१२) कोपः ( इन्दुः असंउ. १ )
लक्षण० चित्तक्षोभः ( चनि. ७.७ ( २ )
श्वयथुरागवेदनाप्रादुर्भावः (सुसू. १६.६; सुउ. १३.१८ )

**संरम्भिन्**-वि., शोथवत् ( व्रणादिः ) ( सुनि. ४.७ )
**संराग**-पु., कामः ( ड. सुउ. ५७.६ )
**संरोष**-पु., संक्षोभः ( सुउ. १५.३ )
**संरोहण**-न., सम्यग्विरोपणम् ( चनि. ५.७ )
**संलीन**-वि., एकस्थानस्थितः निश्चलः (असंशा. ४.२३)
**संलुलन**-न., स्फुरणं हर्षः ( असंशा. २.९ )
**संलोच**-पु., लुञ्चनवद् वेदना ( सुउ. ४१.१२ )
**संवत्सर**-पु., द्वादशमासात्मकः कालः, वर्षम् ( सुसू. ६.४; चसू. ६.४ )
  **-प्रयोग**-पु., वर्षपर्यन्तं भैषज्यस्य सेवनम् ( चचि. १(२).११ )
**संवत्सरात्मन्**-वि., संवत्सरस्वरूपः ( कालः ) ( सुसू. ६.४ )
**संवत्सरोषित**-वि., वर्षस्थितम्, पुराणम् ( सुसू. ४६.५१ )
**संवनन**-न., वशीकरणम् ( इन्दु. असंउ. ५० )
**संवरण**-(परिव०) न., आच्छादनम् ( असंशा. ४.३१; सुउ. ३९.२८६ )
  संकोचः ( सुशा.३.९ )
**(संवरणी)**-स्त्री., पेशी० गुदस्य बाह्ये भागे स्थितानां तिसृणां मध्ये मलस्य संवरणात् संवरणीत्याख्या प्रथमा वली ( सुनि. २.५; असंनि. ७.५ )
**संवर्तक**-पु., वनस्पति० बिभीतकः ( चक. चचि. ३.२५८; ध. १.२१२; पृ. ५० )
**संवर्धनघृत**-न., घृत० खदिरपृश्निपर्णीस्यन्दन-सैन्धवबलाद्वयादिद्रव्याणां कषायैस्तुल्यक्षीरयुतैः सिद्धं मधुयुतं घृतं बालानां शीघ्रसंवर्धनम् ( का.सू.लेहाध्याय. )
**संवासित**-वि., मिश्रीकृतः ( ड. सुउ. २२.७ )
**संवाहक**-वि., संवाहयति नाम शरीरमर्दनादि करोति, सः, ( परिचारकः ) ( चसू. १५.७ )
**( संवाहिका )**-स्त्री., कीट० पिपीलिकाभेदः, एतस्या दंशे श्वयथुरग्निस्पर्शवद्दाहौ भवतः ( सुक. ८.३४ )
**संवाहन**-न., उपक्रम० मृदुमर्दनम् ( सुशा. ४.४३; असंसू. ९.६४ )
  सुखकरः स्पर्शः ( ड. सुक. ५.३८ )
**संवाहिनी**-स्त्री., शारीर० नाडी, वाहिनी (चशा. ४.१५)
**संविधान**-न. चिकित्सा ( सुचि. ३४.५ )
  कर्म ( ड. सुक. २३.८ )
  परिच्छदः, सामग्री ( सुचि. ९.६ )
  **-वत्**-वि., चिकित्सोपयोगिसामग्रीयुक्तः, परिच्छदवान् ( सुचि. ९.६ )

**संविभक्त**-वि., विभज्य कर्मणि नियोजितः ( ड. सुक. १.१४-१६ )
**संविभागरुचिता**-स्त्री., सात्विकगुण० संविभज्य परस्परं भोज्यादिवितरणेन भोक्तुमभिलाषुकता ( ड. सुशा. १.१८ )
**संविभागिन्**-वि., सम्यक् फलविभजनशीलः ( चशा. ४.३७(१)
  समीभूतदृष्टिकः ( असंसू. ३.८४ )
**संवीत**-वि., आच्छादितम् ( सुउ. ३९.२९१ )
**संवीताङ्ग**-वि., आच्छादिताङ्गः ( असंसू. ३.४ )
**संवृत**-वि., आच्छादितः ( सुचि. २४.१२४ )
  पु., वनस्पति० वेतसः ( ध. ५.११७ )
  **-कोष्ठ**-वि., वायुनाऽल्पीकृतकोष्ठः, वायुव्याप्तकोष्ठः ( चसि. २.८; असंसू. २७.७ )
  **-मुख**-वि., आच्छादिताननः ( असंसू. ३.९४ )
  **-योनि**-स्त्री., लक्षण० संकुचिता योनिः ( चचि. ३०.४४; असंसू. ९.७० )
  **-व्रण**-पु-, आच्छादितः संकुचितो वा व्रणः ( चचि. २५.२० )
**संवृतायन**-वि., संवृतानि इन्द्रियरूपाणि छिद्राणि यस्य सः ( आत्मा ) ( चशा. ५.१५ )
**संवृतासंवृत**-वि., अग्रे संवृतं मूलेऽसंवृतम् ( सिरादि ) ( चवि. ५.९; असंशा. ६.५० )
**संवृत्ति**-स्त्री., निष्पत्तिः ( चइ. १२.५६ )
**संवेजन**-न., उद्वेजनम् भयहेत्वादिना त्रासनम् ( चचि. ९.२९ )
  कम्पनम् ( सुचि. ३६.२६ )
**संवेशक**-वि., शयने सहायकः, निद्रापकः ( परिचारकः ) ( चसू. १५.७ )
**संवेशन**-न., विस्रवणम् ( ड. सुसू. १९.११ )
  ( परिव० ) एकत्र संस्थितिः ( सुउ. ६०.६१ )
  ( परिव० ) शयनम् ( सुचि. २९.११ )
**संव्यूढ**-वि., बन्धान्मुक्तम् ( असंउ. ३२ )
  **-पिटिका**-स्त्री., गुह्यरोग० संमूढपिटिका (असंउ. ३८)
**संव्यूहन**-न., यन्त्रकर्म० एकत्रीकरणम् ( अहसू. २५.४१ $\frac{१}{२}$ )
**संव्यूहिम**-वि., संहतत्वेन पक्वतीक्ष्णः ( क्षारः ) ( सुसू. ११.१२ )
**संशमन**-वि., व्याधिनिग्रहहेतुष्वेकः, दोषशमनम् ( सुसू. १.२७ ) शमनकरं स्नेहादि (चसू. १३.६१)

यद्द्रव्यं न वामयति, न विरेचयति, व्याधिना सहैकीभूय तत्स्थमेव व्याधिमुपशमयति तत (सुसू. ३६.६) सम्यक् शमयतीति संशमनम्, सम्यक्त्वं नाम दुष्टदोषस्यानिर्हरणपूर्वकं शमनमदुष्टस्यानुदीरणं च (सुसू. ३९.७; असंसू. २३.६) (परिव०) न., मन्दीकरणम् (ड. सुउ. ४०.६)

**संशमनीय**–वि., संशमयितुं योग्यम् संशमनार्हम् (सुशा. १०.६७)

**संशय**–पु., तन्त्रयुक्ति० विशेषाकाङ्क्षानिर्धारितोभयविषयज्ञानम् (चसि. १२.४३) उभयहेतुदर्शनम् (सुउ. ६५.३२)

**–प्राप्त**–वि., मरणं भवति न वाऽनेनारिष्टेनेति संशयो यस्मिंस्तत् मरणरूपसंकटग्रस्तम् (चइ. ९.१५)

**–सम**–वि., अहेतुभेदः, यः संशयहेतुः स एव संशयच्छेदहेतुः। यथा–अयमायुर्वेदैकदेशमाह किं स्वयं चिकित्सकः स्यान्नवेति संशये परो ब्रूयात्–यस्मादयमायुर्वेदैकदेशमाह तस्माच्चिकित्सकोऽयमिति (चवि. ८.५७)

**संशुद्ध**–वि., शुद्धः, सुविरिक्तः (अहृसू. १९.४)

**संशुद्धि**–स्त्री., संशोधनम् (अहृसू. २.९)

**–विशेषणीय**–वि., अध्याय० (काखिल. ७)

**संशुष्करुधिर**–वि., संशुष्कं नाम क्षीणं रुधिरं यस्य सः (चसू. १३.४७)

**संशुष्करेतस्**–वि., संशुष्कं नाम क्षीणं रेतो यस्य सः (चसू. १३.४७)

**संशोधन**–न., उपक्रम० व्याधिनिग्रहहेतुष्वेकः, दोषशोधनम् (चसू. १३.७; सुसू. १.२७) वमनविरेचनबस्त्यादिपंचप्रकारकम् (सुसू. १५.१२) द्र० 'शोधन'

**–काल**–पु., वमनविरेचनादिप्रदानसमयः (चवि. ७.४)

**–घृत**–न., सिद्धस्नेह० अर्कोत्तमस्नुही जातिमूलहरिद्राद्वयकासीसादिभिः साधितं घृतम्, व्रणस्य पूयादिदोषनिर्हरणार्थमुपयुज्यमानमेतत् (सु. सू. १७.१८)

**–वर्ति**–स्त्री., कल्प० अजगन्धाऽजशृङ्गीगवाक्षीलाङ्गल्यादिभिर्निर्मिता व्रणसंशोधनी भैषज्यवर्तिः (सुसू. ३७. १३-१४)

**–शील**–वि., नित्यं संशोधनाभ्यासी (सुनि. ३.४)

**–संशमनीय**–वि., अध्यायसंज्ञा० (सुसू. ३९.१)

**संशोधनार्ह**–वि., संशोधनयोग्यः (अहृसू. १४.१२)

**संशोध्य**–वि., शोधनार्हः, कर्तव्यशोधनः (अहृसू. १६.५)

**संशोष**–पु., शुष्कत्वम् (अहृसू. ११.२३)

**संशोषण**–न., शुष्कीकरणम्, रूक्षणम् (सुउ. ४१.४)

**संश्लिष्ट**–वि., घट्टितम्, समासक्तम् (सुनि. १५.१३) वि., दृढयोजितम् (बन्धनम्) (र. १०.५)

**संश्लेष**–पु., अपृथक्त्वमेकत्वम् (सुसू. २४.११)

**संसर्ग**–पु., संयोगः–दोषाणां रसानां वा (चवि. १.८) विषयसेवनम् (चशा. ३.३) उपक्रम० अन्नसंसर्गः पेयादिः, तर्पणादिकम् (सुउ. ४९.१७) पेयादिक्रमः (सुउ. ३९.१०२) द्वयोर्दोषयोर्युगपत् प्रकोपः (चसू. १७.४२; सुचि. ३५.६) द्वयोः प्रमाणाधिकयोः क्षीणयोर्वा दोषयोः संयोगो नामैकस्मिन्नधिष्ठाने मेलनम् (सुचि. ५.११; अहृसू. १.१२) दोषाणां षोढा संसर्गः (असंसू. १.३०)

**(संसर्गी)**–स्त्री., उपक्रम० पेयादिक्रमः (असंचि. २.३४)

**–ज**–वि., द्वन्द्वजः (ज्वरादिव्याधिः) (सुउ. ३९.६१) देवादिद्रोहजनसंपर्काज्जायमानः (रोगः) (सुसू. २४.७)

**–पाचन**–न., पेयादिक्रमपाचनम् (सुउ. ४२.१२६)

**–बलयोजन**–न., संसर्गे दोषबलमवेक्ष्य भेषजद्रव्यप्रयोगः यथा वातकफज्वरे वातस्य बलवत्त्वे गुरूष्णस्निग्धादिद्रव्यस्य, कफस्य बलवत्त्वे च लघूष्णरूक्षादिद्रव्याणां योजनम् (चचि. ३.२७१)

**–भक्तक्रम**–पु., पेयादिक्रमः (ड. सुउ. ५६.२३)

**संसर्जन**–न., पेयादिक्रमः (चसू. १६.२६) संमिश्रणम् (चसू. १८.६)

**संसर्पण**–(परिव०) न., बालस्य भूमौ परिसर्पणम् (का. संबाल.)

**संसार**–पु., वनस्पति० खदिरभेदः, विट्खदिरः (रा. ८.३८; पृ.१२) द्र० 'खदिर'

**संसृज्यमान**–वि., संयुज्यमानः (सुशा. ३.४)

**संसृष्ट**–वि., एकीकृतः (सुउ. ३९.२०१) कृतसंसर्जनक्रमः, कृततर्पणादिक्रमः (सुउ. ४७.६८)

**–भक्त**–वि., आदौ कृतसंसर्जनः पश्चाच्च कृतभोजनः (चसि. १.२०)

**–भोजन**–न., कदशनभोजनम् (ड. सुनि. ९.१५)

**संसृष्टाहार**–पु., तर्पणादिक्रमः (सुउ. ४७.६८)

**संस्कार**–पु., गुणान्तराधानम् (चवि. १.२२(२) दोषापनयनम् (चक. १२.४८-४९) संस्कारेण द्रव्याणां

गुरुलघ्वादिगुणविपर्यासो भवति, यथा गुरूणां व्रीहीणां संस्काराल्लाजानां लघुत्वं तथा लघूनां सक्तूनां संस्कारात् सिद्धपिण्डिकानां गुरुत्वम् ( चसू. २७.३३९ )

द्रव्यान्तरसंयोगजनितं गुणान्तरम् (चसू. १३.१३; हे. अहृसू. ५.५६ )

कारणम् ( चक्र. चसू.११.३५ )

रससंस्कारः, स च स्वेदनमर्दनमूर्च्छनोत्थापनादिभेदादष्टादशविधः ( र. ११.११ )

**–वाह**–वि., क्लीब० बस्तिवाजीकरणादिना यस्य शुक्रमदुष्टद्वारं सत् प्रवर्तते सः, अस्मिन्नासेक्यसौगन्धिककुम्भीकादयः क्लीबा अन्तर्भूताः ( चक्र. चशा. २.१९ )

**–वाह्य**–वि., क्लीब० संस्कारवाहः ( असंशा. २.४० )

**–विरुद्ध**–वि., संस्कारतो विरुद्धं यन्द्वोज्यादि तद्विषवत् यथा–एरण्डसीसकासक्तं शिखिमांसम् ( चसू. २६.९२-९३ )

**संस्कृत**–वि., संस्कारयुक्तः संस्कारितः (सुसू. ४६.३६१)

**संस्कृति**–स्त्री., संस्कारः ( र. १.७० )

**संस्तम्भन**–न., उपक्रम० संग्रहणम् (ड.) विबद्धत्वापादनम् ( दोषाणाम् ) ( सुउ. ४०.६८ )

**संस्तर**–पु., दर्भाणां स्थण्डिलम् पिण्डस्थापनार्थं दर्भैः कृतो रचनाविशेषः ( सुउ. ६०.१२ )

**–स्वेद**–पु., उपक्रम० स्वेदभेदः अष्टविधोष्मस्वेदेष्वेकः यथार्हस्वेदद्रव्याणि पिहितमुखायां कुम्भ्यां सम्यगुपस्वेद्य निवातशरणशयनकिलिञ्जे प्रस्तार्याविककौशेयवातहरपत्रान्यतमोत्तरप्रच्छदे कुथकाविकाजिनप्रावारादिष्ववच्छन्नं स्वेदयेदिति ( असंसू. २६.९ ) द्र० 'स्वेद'

**संस्तृत**–वि., संव्याप्तम्, आच्छादितम् ( असंसू. ६.२१ )

**संस्त्यान**–वि., घनीभूतम् ( चचि. २६.१०५ )

**संस्थान**–न., आकृतिराकारो वा ( चक्र. चसू. १८.४२; सुसू. १२.१२; अहृसू. २५.१४ )

लक्षणम् ( चवि. ४.६; अहृसू. १२.६९; असंसू. २२.९ )

रूपम् ( चनि. १.९; असंनि. १.११ )

स्थानम् ( चचि. २६.१२२ )

**संस्थित**–वि., सुस्थितम् ( सुचि. ३०.१५ )

आकृतिमान् ( सुचि. ३०.१५ )

**( संस्थिता )**–स्त्री., आकृतिः ( सुचि.३०.१५ )

**संस्थिति**–स्त्री., निर्गमरोधः ( ड. सुचि. ३७.१२५ )

एकस्मिन्नेव स्थाने आसनं स्थितिर्वा (अहृसू.१६.२७)

**संस्पर्श**–पु., स्पर्शसंबन्धः ( चशा. ६.१८ )

**संस्पर्शन**–वि., संस्पृश्यते इति संस्पर्शनं यथा मुक्तादि ( चनि. २.११ )

**संस्पर्शनेन्द्रिय**–न., वि., संस्पर्शनयुक्तं शरीरम् ( चक्र. चशा. १.७९ )

**संस्वेद**–पु., लक्षण० स्वेदाधिक्यम् ( चसू. ३.२९; र. १२.१०१-१०३ )

**–ज**–पु., प्राणि० भुवः शरीरस्य च संस्वेदाज्जातः ( सुसू. १.२२ )

**संस्वेदन**–न., पारदसंस्कार० स्वेदनम् मलशैथिल्यकारकम् ( र. २. ६७ )

**संस्वेदिन्**–वि., स्विन्नः प्रस्वेदयुक्तः ( ड. सुउ. ६०.९ )

**संहत**–वि., घनम् ( सुसू. ३५.१६ )

पु., रोग० शोथः ( असंनि. १३.२४ )

**संहताङ्ग**–वि., गूढाङ्गः, सच दीर्घायुः ( सुसू. ३५.५ )

**संहनन**–वि., संधानकरो भग्नविश्लिष्टादीनाम् ( सुसू. ४६.३५९-३६१ )

न., संघातो दृढता (चवि. ८.सं.११६;सुनि.११.६)

संयोजनम्, मेलकः ( चसू. २१.१८ )

**संहर्ष**–पु., स्पर्धा (चवि. ८.१५१)

रोमोद्गमः ( सुसू. २६.१० )

मनसः प्रसन्नत्वम् ( सुनि. १०.२०-२१ )

**( संहर्षा )**–स्त्री., मधुरस्कन्धोक्तवनस्पति० वन्दाकः ( चक्र ) वत्सादनी ( चवि.८.१३९ )

वनस्पति० जन्तुकारी ( ध. ४.८८; पृ. १५१ )

**संहर्षित**–वि., स्पर्धावान् ( ड. सुउ. ६२.११ )

**संहित**–वि., साधितम्, कृतसम्यक्संधानम् ( सुचि. ३.७० )

**–पुष्पिका**–स्त्री., वनस्पति० मिश्रेया ( रा. ४.६; पृ.६९ )

**संहिताकल्प**–पु., अध्यायसंज्ञा० ( काकसंहिताक. )

**संहिताविधि**–पु., संहितास्वरूपम् ( का.संहिता क. )

**संहृष्टरोमन्**–वि., लक्षण० उद्धर्षितरोमा, पुलकितः ( ड. सुउ. ५९.६ )

**स**–अव्य., ईषत् ( हे. अहृसू. १.११ )

**सकण्डूक**–पु., रोग० कर्णपालीरोगः, कफवातजोऽयम्, तल्लक्षणम्–कर्णपाल्यां कण्डूर्भवति (सुचि. २५.८; सुसू. १६.२६ ( ७-८ )

**सकल**–न., वनस्पति० पद्मकन्दः ( ध. ४.१६३; पृ. १६७)

कत्तृणम्, रोहिषतृणम् ( ध. १.८०; पृ. २१. र. ३०.४५ )

**सकुरुण्ड**–पु., वनस्पति० साकुरुण्डः ( रापरि. ६.१६; पृ. ३४६ )

**सकृत्**–अव्य. किञ्चित् ( ड. सुनि. १६.८ )
एकवारम् ( ड. सुचि. ३७.६४ )
–**फला**–स्त्री., वनस्पति० कदली ( रा. ११.१०६; पृ. १४८ )

**( सकृद् )–वीर**–पु., वनस्पति० एकवीरः ( रापरि. ८.८; पृ. ३५७ )

**सक्त**–वि., बद्धम् ( चवि. ८.९८ )
लग्नम् ( सुनि. १६.५८ )
–**गति**–वि., अविसारी अप्रसरणशीलम् ( चसू. १८.१३ )
–**मूत्र**–वि., लक्षण० विबद्धमूत्रः ( ड. सुउ. ४०.९ )
–**विष्**–वि., लक्षण० विबद्धपुरीषः (सुउ. ४०.१३०)

**सक्ति**–स्त्री., अप्रवर्तनम् ( सुउ. ५५.२९ )

**सक्तु**–पु., वनस्पति० यवः ( चसू. २३.२४; रा. १६.१२४; पृ. २२३ )
आहारद्रव्य० यवतण्डुललाजादिचूर्णम् ( चसू. २७.२६३ )
भृष्टानां निस्तुषयवानां चूर्णं सक्तवः, तद्गुणाः– वातलो रूक्षो बहुवर्चोऽनुलोमी सद्यस्तर्पणः सद्योबलकरश्च (चसू. २७.२६३; असंसू. ७.२२०)
लघुः कण्ठनेत्रामयक्षुत्तृट्श्रमच्छर्दिव्रणापहः ( असंसू. ७.६० )
सतक्रघृतोऽयं पानेन विषनाशनः (असंउ. ४७)
–**पिण्डि**–स्त्री., स्वेदादिसमये चक्षुषोराच्छादनोपयोगिनी ( असंसू. २६.२१ )
–**पिण्डिका**–स्त्री., सक्तुभिः कृता पिण्डिका व्रणशोफपाकार्थमुपयुक्ता ( चचि. २५.५० )
–**मन्थकल्प**–पु., योग० क्षुण्णान्यवान्निस्तुषान् रात्रौ गोमूत्रपर्युषितानहनि किलिञ्जे शोषयेदेवं सप्ताहं भावयेच्छोषयेच्च। ततस्तान्सक्तून्कृत्वा भल्लातकादिचूर्णे चतुर्भागयुक्तानसनादिकषायेण अयं पीतश्वितकुष्ठहरः ( असंचि. २१ )

**सक्तुक**–न., कन्दविष० साक्तुकम् ( र. १०.८५ )

**सक्थि**–न., शारीर० कटिसंधिमारभ्य पादाङ्गुलिं यावत् ( ड. सुसू. ३५.१२ ) गुल्फादिविटपान्तम् ( सुनि. १.७४ ) वङ्क्षणाद्यङ्गुष्ठान्तम् ( हे. अहृसू. १२.१ ) जङ्घा ( ड. सुचि. १५.९ )



वातस्थानमिदम् ( चसू. २०.८; अहृसू. १२.१ )
सङ्ख्यातः द्वे ( चशा. ७.५ )
–**शोष**–पु., ऊरुशुष्कत्वम् ( सुशा. ६.२४ )
–**सदन**–न., ऊरुग्लानिः ( सुशा. ३.१३ )

**सख्य**–न., मैत्री ( सुसू. २९.६८-७१ )

**सगर**–पु., नृप० ( का. फक्कचि. )
बिलेशय० दिव्यः सर्पः (असंउ. ४१)
न., खनिज० हिङ्गुलम् ( रा. १३.४७; पृ. २१५ )

**सगोत्रा**–वि.,समानं गोत्रं यस्याः सा,इयं व्यवाये प्रतिषिद्धा ( सुचि. २४.११६ )

**संकर**–पु., तृणादिचयः ( चक्र. चचि. ९.२० ) अवकरः ( सुनि. ७.१७ )
सर्ववर्णानां मिश्रीभावः ( सुसू. ३४.९ )
संमिश्रणम् ( असंशा. ८.१८ )
एकत्रावस्थानम् ( हे. अहृसू. १.३२ )
–**कूट**–पु., अवकरनिकरः ( इन्दु. असंउ. ६ )
–**स्वेद**–पु., स्वेद० त्रयोदशस्वेदेष्वेकः ( चसू. १४.३९ ) अष्टविधोष्मस्वेदेष्वेकः पिण्डस्वेदः ( असंसू. २६.७ ) वस्त्रान्तरितैरवस्त्रान्तरितैर्वा यथोक्तैः पिण्डैरुपस्वेदनम् ( चसू. १४.४१ ) तद्विधिः–कपालपाषाणलोष्टलोहपिण्डानग्निवर्णान् संदंशेन गृहीत्वाऽम्भस्यम्ले वा निमज्जयेत्। तैरार्द्रविकवस्त्रेण वेष्टितैः श्लेष्ममेदोभूयिष्ठं सरुजमङ्गं ग्रन्थिमद्वा स्वेदयेत्। पांशुसिकतागवादिपुरीषधान्यबुसपुलाकपललैर्वाऽम्लोत्क्वथितैः पूर्ववद्वेष्टितैर्गवादिशकृताऽऽर्द्रेण पिण्डीकृतेनोपनाहद्रव्योत्कारिकाकृशरापायसपिण्डैर्वा स्वेदः। अयं वातरोगेषु शस्यते ( असंसू. २६.८ )

**संकल्प**–पु., प्रतिपन्नानां भावानामुपकारकं ममेदमपकारकं ममेदमिति गुणतो दोषतो वा कल्पनम् ( चक्र. चसू. ८.५ )
कामः ( चचि. १५.३४; असंसू. ९.६९ ) अयं वृष्याणां श्रेष्ठः ( चसू. २५.४०; असंसू. १३.३ )
–**प्रवण**–वि., कामप्रवणः, विषयचिन्तनपरः ( चचि. ३०.१५५-१५६ )

**संकल्प्य**–वि., मनोविषयाणामेकः गुणवत्तया दोषवत्तया वाऽवधारणविषयभूतम् ( चशा. १.२० )

**संकीर्ण**–वि., विरुद्धवीर्यम् ( चसू. १३.६० )
संकुचितम् ( अहृसू. ७.६९ )
संमिश्रितम् ( सुसू. ४६.४४६ )
–**भोजन**–न., घृणास्पदमलादिमिश्रितव्यञ्जनादिभोजनम् ( चक्र. चवि. ७.१२ )

विरुद्धाहारः ( चक. चसू. १७.२७ )
-**रोमन्**-वि., घनरोमा ( ड. सुनि. १२.७ )
**संकीर्णाशन**-न., संमिश्रभोजनम् ( असंनि. १.१९ )
**संकील**-पु., मूढगर्भ० कीलः ( मानि. मूढगर्भ. )
**संकुचित**-वि., संकुचितगात्रः ( चसि. १.३२ )
**संकुल**-वि., मिश्रीभूतम् ( सुउ. ७.१४ )
**संकोच**-पु., आकुञ्चनम् ( चसू. २८.२१ ) अप्रसार्यत्वम् ( हे. अहृसू. १२.५० )
लक्षण० अवयवाकुञ्चनम् ( चसू. १४.२४; चचि. २८.२० )
गोलकः पिण्डः ( र. २०.११-१३ )
न., भैषज्य० कुङ्कुमम् ( चचि. २.(३).२८; ध. ३.१२; पृ. ९५ )
**संकोचन**-न., संकोचः ( सुचि. ५.६ )
( **संकोचनी** )-स्त्री., वनस्पति० लज्जालुः ( रा. ५.१५९;पृ. १५५ )
**संकोथ**-पु., पूतिभावः ( चसू. १७.१११; असंशा. ११.१९ )
**संक्रामकरोग**-पु., संक्रमको व्याधिः संसर्गसंभवो व्याधिः, कुष्ठज्वरशोषनेत्राभिष्यन्दास्तथा औपसर्गिकाः शीतलिकामसूर्योदयश्च रोगाः ( सुनि. ५.३४ )
**संक्लिन्न**-वि., सम्यगार्द्रीभावमापन्नम् ( सुसू. ४६.४९६-४९७ )
**संक्लिष्ट**-वि., दुष्टम् ( सुचि. १.३१-३२ )
-**कर्मन्**-वि., पतितः, निन्द्यकर्मकृत् (चशा. १.१०६)
**संक्षय**-पु., नाशः ( चसि. ९.३४ )
**संक्षिप्त**-वि., सूक्ष्मम् ( क्षतम् ) ( ड. सुक. ४.१६ )
अल्पम् ( सुसू. ३२.३ )
पु., रोग० शुष्कशष्कुलिरुत्सन्नपालिरितरालपपालिः ( सुसू. १६.१० )
बन्ध० पञ्चदशकर्णबन्धेष्वेकः ( सुसू. १६.१० )
**संक्षेप**-पु., सम्यक्प्रेरणम् ( सुचि. ३.१८ )
आकुञ्चनम् ( सुचि. ३.१८ )
**संक्षोभ**-पु., संचलनम् ( सुनि. १५.१५ ) अत्यर्थचलनम् ( सुउ. ४८.४ )
**संक्षोभण**-न., चलनम् ( सुचि. २३.४ )
**संक्षोभियानयान**-न., विक्षोभकयानेन वाहनेन मार्गाक्रमणम् ( असंशा. २.६० )
**संख्या**-स्त्री., गणितम् यथा एकद्वित्र्यादि ( चसू. २६.२९ )
संप्राप्तिभेदः, यथा-अष्टौ ज्वराः पञ्च गुल्माः इत्यादि (चनि. १.१२(१); असंनि. १.१४ )
क्रमः ( सुउ. ६१.१६ )
ज्ञानम् ( चक. ( चशा. ६.१० )
-**सामर्थ्यकर**-वि., अभ्यासेन, बहुवारं सेवनेन कार्यकरः संख्या ज्ञानं गणना वा, तत्र सामर्थ्यं करोतीति संख्यासामर्थ्यकरः ( चक. चशा. ६.१० )
**संख्याग्रसंभव**-वि., संख्यापरिमाणसंभवम् (चवि.७.८)
**संख्यातधर्म**-वि., सम्यग्ज्ञातो मोक्षरूपो धर्मो येन, स ( तत्त्वज्ञः ) ( चशा. १.१५१ )
**संख्यातसंख्येय**-वि., संख्यातं ज्ञातं ज्ञेयं येन सः ( सांख्यः ) ( चसू. १३.३ )
**संख्यान**-न., परिगणनम् संख्यायते येन शरीरं तत् संख्या ( चशा. ५.५ )
**संख्यानप्रमाण**-न., संख्यानस्येयत्ता, यथा-षट् त्वचः ( चशा. ७.३ )
संख्या च परिमाणं च ( चशा. ७.३ )
**संख्येय**-वि., गणनीयम् (सुशा. ५.५)
**संग**-पु., सक्तिः, प्रसञ्जनम् (चसू. २०.१२; सुउ. ५८.८)
अप्रवृत्तिः ( चसू. २८.२२ ) अवरोधः ( चसि. ६.५९; सुउ. ४२.९ ) बहिरनिःसरणम् ( अहृसू. ११.२५ )
विस्तृतानामेकत्रानयनम् ( असंसू. २०.२० )
अपवर्गेतरफलदमनोवाक्कायकर्म ( चशा. ५.१० )
( **संगा** )-स्त्री., खनिज० सौराष्ट्री ( ध. ३.१०५; पृ. ११६ )
**संगिनी**-स्त्री., वनस्पति० वटभेदः, वटी ( रा. ११.११६; पृ. १८४ ) द्र० 'वट'
**संग्रह**-पु., बह्वर्थैकवाक्यानामेकत्र संकलनम् ( चवि. ८.३ ) " विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययोः । निबन्धो यः समासेन संग्रहं तं विदुर्बुधाः " ( न्या. को. )
ग्रन्थ० अष्टाङ्गसंग्रहाख्यः संहिताग्रन्थः ( चचि. २५.२६ )
रोग० ग्रहणी ( र. १६.६१ )
-**ग्रहणी**-स्त्री., रोग० आमवातजेयम् । तल्लक्षणानि-अन्त्रकूजनमालस्यं शीतो घनः स्निग्ध आमयुक्तो बहुलः पिच्छिलो द्रवरूपश्च मलः सशब्दो मन्दवेदनो भवति । तथा दौर्बल्यं सदनं च भवति । पक्षान्मासाद्दशाहान्नित्यं वाऽप्येवं मलं मुञ्चति रुग्णः । किन्तु रात्रौ स एव शान्तिं गच्छति । दुर्वि-

ज्ञेया दुश्चिकित्स्या चिरकालानुबन्धिनी
( मा. ग्रहणी; र. २७.११०-११२ ) द्र० ' ग्रहणी '

**संग्रहण**-वि., संगृह्यते वर्चोऽनेनेति संग्रहणम् नाम स्तम्भनम् स्तम्भनकृत् ( चचि. १९.२५ )
न., विबद्धत्वम् ( सुउ. ४०.२९-३० )

**संग्राहिन्**-वि., स्तम्भनकृत् ( अहसू. ५.३६ )
पु., वनस्पति० कुटजः ( रा. ९.१९; पृ. ७१ )

**संघट्टन**-न., संघर्षणम् (चशा. ८.४२) परस्पराभिघातः ( इन्दुः, असंउ. १, )

**संघपुष्पा**-स्त्री., वनस्पति० धातकी
( रा. ६.१५९; पृ. ११४ )

**संघर्ष**-पु., लक्षण० करकरिमा ( ड. सुउ. ६.६ )

**(संघर्षा)**-स्त्री., वनस्पति० अलक्तकः
( रापरि. ६.१२; पृ. ३४६ )

**संघाटी**-स्त्री., जीर्णवस्त्रम् भिक्षुप्रभृतेः ( सुउ. ३३.६ ) वस्त्रमिदं ग्रहचिकित्सायां धूपनोपयोगि ( का. बालग्रहचि ).

**संघात**-पु., संहननम्, निबिडसंधानम्
( चक्र. चवि. ८.११६ )
समुदायः ( सुसू. ४६.१०५ )
उच्छ्रायः ( सुसू. १७.३ )
काठिन्यम् ( सुसू. ४१.४ ( १ );
हे. अहसू. १०.१२ )
कलहः, घातनम् ( असंसू. ८.६४ )
रोग० तालुगतोऽयम्, मांससंघातः
( सुचि. २२.५७; सुनि. १६.४० )
अस्थिसंधि० दृढसंयोगः, संख्यया ते चतुर्दश; गुल्फजानुवङ्क्षणेषु त्रयश्चैकस्मिन् सक्थ्नि, एवं शाखासु मिलित्वा द्वादश, त्रिके एकः शिरसि चैकः ( सुशा. ५.१६ ) परमते ते चाष्टादश, श्रोणिकाण्डमुपर्येकः, वक्षउपर्येकः, उदरोरःसंधाने चैकः, अंसकूटमुपर्येकश्च पूर्वोक्ताश्चतुर्दश च
( ड. सुशा. ५.१७ )

-**चारिन्**-वि., मिलित्वा संचरणशीलो हंसादिः, तत्र सङ्घातचारिणः प्लववर्गोक्ता हंससारसक्रौञ्चचक्रवाककुररकादम्बकारण्डवजीवञ्जीवकबकबलाकाश्वेतवारलप्रभृतयः ( सुसू. ४६.१०५ )

-**पत्रिका**-स्त्री., वनस्पति० शतपुष्पा
( रा. ४.२; पृ. ६९ )

-**बलप्रवृत्त**-वि., प्रहारशक्तिजात आधिभौतिको रोगः शस्त्रकृतव्यालकृतभेदेन स द्विविधः (सुसू. २४.६)

-**विधमन**-वि., यः शोणितसंघातं विधमति विनाशयति सः ( चसू. २६.४३(३) )

-**शूलवत्**-वि., लक्षण० अष्ठीलावत्संहतवस्तुशूलयुक्तः, महाशूलयुक्तः ( सुसू. ३३.१६ )

**( सच् )-छाक**-न., वनस्पति० आर्द्रकम्
( ध. २.८५; पृ. ८७ )

**सच्छिद्र**-वि., छिद्रयुक्तम्, सान्तरम् ( चशा. ६.२८ )

**सजीवबन्ध**-पु., पारदबन्ध०आदौ ताम्बूलीदलरसमर्दितः पश्चाद्वन्ध्याकर्कोटकीकन्दमध्ये प्रक्षिप्य संपुटितो बहिर्मृद्वस्त्राभ्यां संपुटितो भूमौ गजपुटेन पुटितोऽयं भस्मीभवति ( र. ११.७६ )

**सजीवभस्मन्**-न., पारदस्य जारणासंस्कारं विना विना केवलं मर्दनादिसंस्कारैः शुद्धमात्रस्य च्छिन्नपक्षस्याग्निसहस्य यद्भस्म क्रियते तत् । किञ्चिद्व्याधिनाशनमेतन्न तु रसायनयोग्यम् ( र. ११.११४ )

**सज्जोपस्करभेषज**-वि., सज्जानि प्रगुणान्युपस्कराणि यन्त्रशस्त्रादीनि भेषजानि च यस्य सः ( वैद्यः )
( सुसू. ३४.१९ )

**संचय**-पु., स्वस्थानवृद्धिः चयः ( सुसू. ६.११ )

**संचरण**-न., संचारः, शरीरे वातादीनामितस्ततो गमनम्
( सुसू. २१.२७ )

**संचारिन्**-वि., औपसर्गिकः, सांसर्गिकः, संसर्गजः
( असंनि. १४.४४ )
नेत्रत्वग्विकारादिः स्पर्शैकाहारादिनिमित्तः
( असंनि. १४.४४ )
अनियतस्थानः ( इन्दु. असंउ. २५ )

**( संचारिणी )**-स्त्री., वनस्पति० हंसपादी
( रा. ५.१६७; पृ. १५६ )

-**फलद**-पु., वनस्पति० बिल्वः
( रा. ११.१३५; पृ. २७ )

**संचितदोष**-पु., अतिशयेन स्वस्थाने वृद्धिं गतो वातपित्तादिः ( अरु. ) वैषम्यं प्राप्तो वातादिः
( अहसू. ४.२५ )

**संचूषण**-न., रोगलक्षण० आकृष्यते इव वेदना
( ड. सुउ. ४७.६७ )

**संजयन्ती**-स्त्री., नगर० अस्याः पूर्वतः क्षितिप्रदेशे वल्मीकमूर्धसु श्वेतकापोती नाम वनस्पतिर्लभ्यते
( सुचि. ३०.३४-३५ )

**संजात**-वि., समुत्पन्नम् ( असंसू. ७.२०९ )

-**रस**-वि., संपक्वमाम्रादि ( असंसू. ७.२०९ )

**–रुधिर**–वि., समुत्पन्नरक्तो व्रणादिः (अहृसू. २९.५६)

**–वेग**–वि., समुद्भूता मलमूत्रादिवेगा यस्य सः (अहृसू. १९.४७)

**–सार**–वि., संजातबलः (चशा. ८.२६)

**–सारत्व**–न., समुत्पन्नस्थिरांशत्वम् (असंशा. ४.७)

**संजीवन**–पु., योग० लाक्षाहरेणुनलदप्रियङ्गुशिग्रुद्वय-यष्टिकपृथ्विकादिभिः साधितोऽयं योगोऽञ्जननस्य-पानैः सर्वविषहरः (सुक. ५.७३-७५)

योग० स्वयम्भूविहितोऽयम्, चन्दनकुङ्कुमकुष्ठकाङ्क्षी-लाक्षाप्रियङ्गुमुस्तस्थौणेयशैलेयरोचनामदनप्लव-श्रीवेष्टकविडङ्गैलादिभिः साधितोऽयमगदः पाननस्या-ञ्जनधूमालेपनधारणैर्विषसुप्तानां जीवनः कृत्याकार्मण-कष्टादिग्रहपीडाहरो यशःप्रदो राजद्वारे जयावहः सर्वविषहरश्च (असंउ. ४०)

योग० पलमात्रं पारदं वरनागेन युक्तं त्रिंशद्वारं पातनायन्त्रे पातयेत्। पारदं मृतं दृष्ट्वा समभागेन राजावर्तभस्मना अष्टमांशेन त्रपुभस्मना च सह त्रिंशद्वारं निम्बदलरसेन मर्दयेत्। संशोष्य च वरकरण्डके स्थापयेत्। अयं सर्वमेहनाशनः क्षुद्बोधकरश्च (र. १७.७८-८२)

**(संजीवनी)**–स्त्री., वनस्पति० रुदन्ती (रा. ५.१५; पृ. ३४१)

**संज्ञा**–स्त्री., शुद्धिः, भ्रान्तिराहित्यम्, संज्ञां नामग्रहणेन परीक्षेत (चवि. ४.८)

स्मृतिः (चसू. १३.७४)

संवेदना, सुखदुःखादिज्ञानम् (चनि. ८.८(३); सुउ. ६१.८)

जागृतिः, मूर्च्छापगमनम् (चनि. ८.८(२)

अभिधानम् (चनि. २.३)

**–दवर्ग**–वि., द्रव्यगण० संज्ञास्थापनो गणः, स च कैडर्यहिङ्गुचोरकादिः (असंसू. १५.४७)

**–नाश**–पु., लक्षण० संज्ञा षष्ठश्चेतनाधातुः, चैतन्य-नाशः (सुशा. ६.२०)

**–प्रकृत**–वि., संज्ञाभिः कृतः, संज्ञितः, अभिहितः (चवि. ६.११)

**–वहस्रोतस्**–न., स्रोतो० संज्ञाहेतुमनोवहस्रोतः (चसू. २४.२५) मनोवहा धमनी (सुशा. ४.३३) ते स्रोतसी द्वे "द्वाभ्यां प्रबुध्यते" (सुउ. ६१.८)

**–वहानाडी**–स्त्री., मनोवहा धमनी, सा च इन्द्रिय-गृहीतां संज्ञां जानाति (सुउ. ४६.६)

**–स्थापन**–वि., संज्ञां ज्ञानं स्थापयति तत् (चसू. ४.८) हिङ्गुकैटर्यारिमेदावचाचोरकवयस्था-गोलोमीजटिलापलंकषाशोकरोहिण्य इति दशेमानि संज्ञास्थापनानि द्रव्याणि (चसू. ४.१८(४८)

**सटिका**–स्त्री., वनस्पति० गन्धपलाशः (रा. ६.८९; पृ. १९)

**सटी**–स्त्री., वनस्पति० सठी (ध. १.६१; पृ. १८)

**सट्टक**–न., दधि० लवङ्गव्योषखण्डैर्निर्मथ्य गालितं दधि, दाडिमजीरकादियुक्तं सस्नेहं दधि, तद्गुणाः– रोचनं दीपनं स्वर्यं वातपित्तघ्नं गुरु मृष्टतरं प्राण-वर्धनं च (सुसू. ४६.३९६-३९७; असंउ. ४९)

**सठी**–स्त्री., वनस्पति० तद्गुणाः–तिक्ताऽम्लोष्णा तीक्ष्णा लघुर्वक्त्रशोधनी कफहृत् सन्निपातज्वरव्रणकासघ्नी च (ध. १.६१; पृ. १८)

हिं.—कचूर.

**म.—कचोरा.**

गु.—कचूरा.

बं.—कर्चूर.

ता.—कच्चूर.

फा.—जरंवाद.

**सठी**–स्त्री., वनस्पति० कर्चूरम् (ध. ३.९४; पृ. ११४)

**सण्डि**–स्त्री., शूकधान्य० तद्गुणाः–कफपित्तहरा रूक्षा कषायमधुरा हिमा, वातला बद्धविण्मूत्रा लघु-र्लेखनात्मिका च (असंसू. ७.१५)

**सत्**–वि., अस्तीति लब्धात्मकम्, सत्ताविशिष्टम् (चशा. १.५९)

न., सत्तायुक्तं द्रव्यं गुणः कर्म वा (चवि. ८.५६)

**–कार**–पु., पूजा (ड. सुउ. ६०.५)

**–तम**–वि., अत्युत्तमः (सुचि. २९.२९)

**सतत**–अ., निरन्तरम्

**–ज्वर**–पु., रोग० विषमज्वरभेदः (चचि. ३.३४) तल्लक्षणम्– रक्तधात्वाश्रयो दोषः सप्रत्यनीको-ऽहोरात्रे द्वौ कालौ व्याधितं ज्वरयति। कालवृद्धि-क्षयाभ्यामसौ अहोरात्रे द्विकालमनुवर्तते (चचि. ३.३४; सुउ. ३९.५२) आमाशयोऽस्य स्थानम् (का. खिल. १.३२)

**सततकज्वर**–पु., रोग० ज्वरभेदः सततज्वरः (चचि. ३.६१-६२; का. खिल. १.३२)

**सतिनामन्**–पु., वनस्पति० गोधूमः (ध. ६.९७; पृ. ९९७)

**सतीन**–पु., शिम्बीधान्य० वर्तुलकलायः ( चसि. ३.८; सुसू. ४६.३३; रा. १६.१६४; पृ. २२६ ) सर्वप्राणिनां सामान्यतः पथ्योऽयम् ( सुसू. २०.५ ) मूर्च्छायां च हितः ( सुउ. ४६.१६ )

**( सतीना )**–स्त्री., वनस्पति० मसूरिका ( ध. ६.९५;पृ. १५७ )
विष्णुक्रान्ता ( ध. ४.११५; पृ. १५७ )

**–ज**–न., शाक० वर्तुलकलायपत्रशाकम्, तद्गुणाः– ईषत्तिक्तं त्रिदोषघ्नं कटु नात्युष्णशीतं लघु, ग्राहि, कुष्ठघ्नं च ( अहसू. ६.७२; सुसू. ४६.२६६ )

**–यूष**–पु., मण्ड० वर्तुलकलाययूषः, अयं कफानुगे रक्तपित्ते भोजनार्थं हितः ( सुउ. ४५.१६ )

**सतीनक**–पु., वनस्पति० कलायः ( ध. ६.१०३; पृ. २२८ )

**सतुष**–वि., तुषसहितम् ( असंसू. ६.१४० )

**सत्तानिवृत्ति**–स्त्री., आस्थानिवृत्तिः ( चशा. ७.१८ )

**सत्य**–वि., यथार्थः ( चवि. ८.३८ )
रागद्वेषशून्यः ( चशा. ६.२८ )
पु., वनस्पति० पिप्पलः ( ध. ५.७९; पृ. १८५ )
न., मिथ्याभाषणनिवृत्तिः ( सुसू. ३४.१९-२० )

**–कर्मन्**–पु., वनस्पति० बिल्वः (ध. १.१०७;पृ. २७)

**–नाम्नी**–स्त्री., वनस्पति० आदित्यभक्ता ( रा. ४.१४५; पृ. १५३ )

**–पर**–वि., सत्यभाषणपरः ( सुसू. ३४.१९-२० ) अवितथवाक् ( असंसू. ५.४६ )

**सत्याभिसन्ध**–वि., सत्यप्रियः (चशा. ४.३७ (१))

**सत्र**–न., यज्ञः ( सुचि. २४.९८; अहसू. २.४३ )

**सत्त्व**–न., मनः ( चसू. ८.४; अहसू. १२.६७ ) आत्मसंयोगाच्छरीरस्य प्रेरकं धारकं च, बलभेदेनैतत्प्रवरमध्यावरं चेति त्रिविधम् । ततः प्रवरमध्यावरसत्त्वाः पुरुषा भवन्ति । तत्र प्रवरसत्त्वाः सत्त्वसाराः, मध्यसत्त्वास्त्वपरानात्मन्युपनिधाय संस्तम्भयन्ति हीनसत्त्वास्तु सत्त्वबलं प्रति नोपस्तम्भयितुं शक्यन्ते ( चवि. ८.११९ )
प्रकृतेस्त्रिगुणेष्वेकः सत्त्वगुणः । अयं प्रीत्यात्मकः प्रकाशको लघुश्च ( चसू. ८.५; सुशा. १.३ )
अयं निद्राप्रबोधनः ( सुशा. ४.३५ )
मनोभेदविशेषः शुद्धराजसतामसभेदात्सत्त्वं त्रिविधम् (चचि. २४.६८; चशा. ४.३६ )
प्राणेष्वेकः "अग्निः सोमो वायुः सत्त्वं रजस्तमः पञ्चेन्द्रियाणि भूतात्मेति प्राणाः" ( सुशा. ४.३ )
मानसं बलम् (हे. अहसू. २९.१०) तच्चाविकारेण परीक्षेत ( चवि. ४.८ )
गवादिः पशुः प्राणी वा ( सुउ. ५०.१९ )
सारः, क्षाराम्लद्रावकैः सहितं कोष्ठीमध्ये ध्मातस्य द्रव्यस्य बहिरागतः सारभागः सत्त्वम् ( र. ८.३४ )
कल्प० गुडूच्यादिसत्त्वम्, तद्विधिः–गुडूच्यास्त्वचं निर्हृत्य लघूनि शकलानि कृत्वा दृषदि पेषयेज्जले च मज्जयेत् । ततश्च तानि मन्थदण्डेन संमथ्य वस्त्रेणावगालयेत् । तत उपरितनं जलं त्यक्त्वाऽऽतपे शोषयेत् । शुष्के सति पुनर्जलप्रक्षेप आविलजलत्यागः शोषणं च कार्यम् । एवं चतुःपञ्चवारं कृते सति श्वेतं सत्त्वं निर्याति । एवमन्यत्रापि सत्त्वस्य निर्हरणम् आचर्यम् ( र. १८.१८६ )

**–करण**–वि., सत्त्वं नाम मनःकरणं यस्य सः, ( जीवः ) ( चशा. ४.८ )

**–ज**–वि., मानसः ( भावादिः ) ते च मानसा भावाः शौचास्तिक्यवेदाभ्यासगुरुपूजनप्रियातिथित्वादयः ( सुशा. ३.३३ )

**–परिप्लव**–पु., सत्त्वस्य चञ्चलत्वम्, मनोविभ्रमः ( चचि. ९.६ )

**–पातनकोष्ठी**–स्त्री., रसादिखनिजानां सारनिष्कासनार्थं निर्मिता ( र. ७.६ )

**–भेद**–पु., मनोभेदः ( चशा. ४.३६ )

**–वत्**–वि., उत्तममनोबलः ( पुरुषः ) सत्त्वसारः, तल्लक्षणम्–असौ बुध्या मनोदृढीकृत्य पीडादिकं सहते ( सुसू. ३५.३८ ) व्यसनेऽप्यनाकुलः क्लेशसहिष्णुश्च भवति (सुसू. ३४.२१; असंशा. ८.३२; अहसू. १.२९ )

**–वर्जित**–वि., सत्त्वगुणरहितः ( सुशा. ४.९७ )

**–विज्ञान**–न., मनोविज्ञानम् ( कासू. २८ )

**–विशेषकर**–वि., सत्त्ववर्धनम् ( असंशा. १.६६ )

**–संज्ञ**–वि., मनः ( चसू. १.५५ )

**–संज्ञक**–वि., प्राणिसंज्ञकः ( समुदयः ) ( चशा. १.४७ )

**–संपद्**–स्त्री., बलवृद्धिकरभावेष्वेकः, उत्कृष्टसत्त्वम् ( चशा. ६.१३ )

**–संप्रयोग**–पु., मनोगमनम्,मनःप्रचारः (चशा. ३.३)

**–सार**–वि., सत्त्वमेव सारो बलं स्थिरांशो वा यस्य स पुरुषः, प्रवरमध्यहीनभेदात्त्रिविधाः सत्त्वसाराः, तत्र सत्त्वसारः प्रवरसत्त्वः, तल्लक्षणम्– स्मृतिमान्भक्तिमान्कृतज्ञः प्राज्ञः शुचिर्महोत्साहो दक्षो

धीरः समरविक्रान्तयोधी त्यक्तविषादः सुव्यवस्थितगतिर्गम्भीरबुद्धिचेष्टः कल्याणाभिनिवेशी च ( चवि. ८.११०: सुसू. ३५.१६ ) स्वल्पशरीरोऽप्यसौ निजागन्तु-निमित्तासु महतीषु पीडास्वपि निर्व्यथो दृश्यते। मध्यसत्त्वलक्षणम्-अपरानात्मन्युपनिधाय संस्तम्भयत्यात्मनाऽऽत्मानं परैश्चापि संस्तभ्यते। हीनसत्त्वलक्षणम्-असौ नात्मना, नापि परैः सत्त्वबलं प्रति शक्यते उपस्तम्भयितुं, महाशरीरोऽप्ययं स्वल्पानामपि वेदनानामसहो दृश्यते, सन्निहितभयशोकलोभमोहमानो रौद्रभैरवद्विष्टबीभत्सविकृतसंकथास्वपि च पशुपुरुषमांसशोणितानि चावेक्ष्य विषादवैवर्ण्यमूर्च्छोन्मादभ्रमप्रपतनानामन्यतममाप्नोति मरणमिति (चवि. ८.११९)

**सत्त्वावजय**-पु., अहितेभ्योऽर्थेभ्यो मनोनिग्रहः ( चसू. ११.५४; असंसू. १२.५ )

**सत्त्वोत्पत्ति**-स्त्री., सत्त्वं कृम्यादिः प्राणी, तस्य जन्म ( सुनि. ५.१८ )

**सत्त्वोपादान**-वि., मनःकरणः पुरुषः आत्मा जीवात्मा ( चशा. ४.८ )

**सदन**-न., लक्षण० सादः, अङ्गसादः ( चनि. १.३३; सुनि. १.३५ ) अङ्गानामनुत्साहः ( ड. सुउ. ६२.१०; अहृसू. १२.५२ )

**सदा**-अव्य., नित्यम्, सततम् ( असंचि. २.३ )

**-गति**-पु., दोष० वातः, वायुः ( सुउ. ५०.३०; असंचि. २.३ )

**-पुष्प**-पु., वनस्पति० अर्कः (रा. १०.२५; पृ. १३७) कुन्दः ( ध. ५.१५०; पृ. २०१ )

**(-पुष्पा )**-स्त्री., वनस्पति० अर्कः ( चसू. ४.१३ )

**( -पुष्पी )**-स्त्री., वनस्पति० अर्कपुष्पिका (चक्र. चक. १.१४; सुसू. ४३.३; असंसू. १४.३) राजार्कः ( ध. ४.१६; पृ. १३७ )

**-प्रसून**-पु., वनस्पति० रोहितकः ( रा. ८.२१७; पृ. १९६ )

**-फल**-पु., वनस्पति० उदुम्बरः ( ध. ५.८६; पृ. १८६ अहृसू. १५.४१; ) बिल्वः ( रा. ११.१३५; पृ. २७ )

**-( फला )**-स्त्री., वनस्पति० त्रिसंधिः ( रापरि. १०.३७; पृ. ३२१ )

**-भद्रा**-स्त्री., वनस्पति० काश्मरी (ड. सुउ.२४.३२ )

**-मांसी**-स्त्री., वनस्पति० मांसरोहिणीभेदः ( रा. १२.१३९; पृ. १५३ ) द्र० 'मांसरोहिणी'

**सदातुर**-वि., नित्यव्याधितः ( चसू. ७.४० ) कालभोजनं न समाचरन्ते, अकालनिर्हारविहारांश्च सेवन्ते ते सदातुराः। यथा वेदाध्ययनव्रताह्निकपरो द्विजः, नृपाद्युपसेवी परिचारकः, नृचित्तपरिवर्तिनी पणाङ्गना सदासनपरा अनुबन्धविक्रयादिलोभिनो वणिजः इत्यादयः ( चसि. ११.२८-३० )

**सदृशकर्मत्व**-न., तुल्यक्रियात्वम्, यथा सह गायतां गायनानां भिन्नगीतक्रियाणामप्यभिन्नगीतक्रियात्वप्रतीतिः ( ड. सुशा. ९.३ )

**सदृशांशक**-वि., तुल्यभागिकम् ( अहृसू. १४.२६ )

**सदृशागमत्व**-न., आप्तानां वचनमागमस्तस्य सदृशत्वम्, समानतन्त्रत्वम् यथा "आकाशीयावकाशानां देहे नामानि देहिनाम्। सिराः स्रोतांसि मार्गाः खं धमन्यः॥" इत्याप्तोपदिष्टेन सिरादिसादृश्येन न निर्धार्यं ज्ञायते सिरादिषु कस्येदं तोयादिवहनं कर्म ( ड. सुशा. ९.३ )

**सद्मन्**-न., गृहम् ( सुचि. २५.२९ )

**सद्यस्**-अव्य., तत्कालम् झटिति ( असंशा. ११.३७ )

**( सद्यः )-क्षतप्ररोह**-वि., तत्कालमेव क्षतस्य प्ररोहणं यत्र ( कासू. २८ )

**-क्षतव्रण**-वि., लक्षण० तत्कालं क्षतयुक्तो व्रणो यस्य ( सुचि. २.८१ )

**-क्षीण**-वि., तत्कालं शीघ्रं वा बलादिविहीनः ( असंसू. २४.५७ )

**-प्रसूता**-वि., प्रजातमात्रा स्त्री. ( का भोजनकल्प )

**-प्राणहर**-वि., आशु मृत्युकारकम् ( चवि. ८.९४ )

**-प्राणहरमर्मन्**-न., तत्क्षणप्राणहरं मर्म, सद्यःशब्दः सप्तरात्राभ्यन्तरवाची ( ड. सुशा. ६.२३ ) तानि संख्ययैकोनविंशतिः-चत्वारि शृङ्गाटकानि, एकोऽधिपतिः, द्वौ शङ्खौ, अष्टौ मातृकाः, गुदं हृदयं बस्तिर्नाभिश्चेति ( सुशा. ६.९; असंशा. ७.३०(१)

**-शुद्धि**-स्त्री., तदहःकृतवमनविरेचनादिः ( असंसू. ६.४५; हे. अहृसू. ५.१७ )

**-स्नेह**-वि., तदहरेव स्निग्धत्वापादकः, यथा प्राज्यमांसरसाः, स्नेहभर्जितपेयाः, सस्नेहफाणितस्तिलचूर्णः, कृशरा, घृताढ्योष्णा क्षीरपेया, सगुडो दध्नः सरः, लवणोल्बणाः स्नेहाश्च ( अहृसू. १६.४०-४३ ) बालवृद्धादिषु स्नेहपरिहारासहिष्णुष्वेते युक्ताः ( असंसू. २५.६८ )

**-स्नेहन**-वि., झटिति स्नेहनकरं द्रव्यम्, यवकोलकुल-

स्थक्काथः पिप्पलीयुक्तः, पयो दधि सुरा घृतं चेति (सुचि., ३१.४३) पिप्पल्यो लवणं घृततैलवसामज्जानो दधिमस्तुकादयश्च राजभ्यो राजसमेभ्यश्चाढयेभ्य एते प्रयुक्ताः (सुचि. ३१.३८-४४; असंसू. २५.७५)

**(सद्यो)गृहीतगर्भा**–स्त्री., सद्योलब्धगर्भा, तल्लक्षणानि–श्रमो ग्लानिः पिपासा सक्थिसदनं शुक्रशोणितयोरवबन्धो योनिस्फुरणं च (सुशा. ३.१३) तथा प्रहर्षे हृल्लासस्तन्द्रा प्रसेको हृदयव्यथा गरिमा तृप्तिश्च (असंशा. २)

–**बलकर**–वि., झटिति बलप्रदम् (सुसू. ४६.४११)

–**भुक्त**–वि., अप्राप्तविदाहावस्थः (उद्गारादिः) (अहृसू. ८.२५)

–**मण्डलपत्रक**–पु., पुनर्नवाभेदः रक्तपुनर्नवा (ध. १.२७६) द्र० 'पुनर्नवा'

–**मरणीय**–वि., अध्यायसंज्ञा० (चइ. १०.१)

–**व्रण**–पु., आगन्तुव्रणः (सुचि. २.१) प्रहर्तृयन्त्रायुधाघातगात्रैर्जायमानो व्रणः (असंउ. ३१; अहृसू. २९.४९)

–**व्रणचिकित्सित**–न., अध्यायसंज्ञा० (सुचि. २.१)

–**व्रणविनिश्चय**–पु., सद्योव्रणानां निदानम् (सुचि. २.९५)

**सद्यस्क**–वि., आशुसमुद्धृतम् (चसि. ६.८२)

**सद्योऽनुगत**–वि., सद्योगृहीतम् (गर्भादि) (चशा. २.२२)

**(सद्)-रत्न**–न., खनिज० हीरकम् (ध. ६.५५; पृ. २१६)

–**वचन**–न., सतां वचनम्, आगमवचनं वा, इदमनुष्ठेयानां श्रेष्ठम् (चसू. २५.४०; असंसू. १३.३)

–**वृत्त**–न., शान्तिशौचाचारादियुक्ताः सन्तः, तेषां वर्तनम् (चसू. ७.५३) सतां देहवाङ्मनःप्रवृत्तिरूपमनुष्ठानम् (चसू. ८.१७; अहृसू. ४.३२) आत्महितं चिकीर्षता सर्वेण सर्वं सर्वदा स्मृतिमास्थाय सद्वृत्तमनुष्ठेयम्, तद्यथा देवगोब्राह्मणगुरुवृद्धसिद्धाचार्यानर्चयेत्, अग्निमुपचरेत्, औषधीः प्रशस्ता धारयेत्, द्वौ कालावुपस्पृशेत्, मलायनेष्वभीक्ष्णं पादयोश्च वैमल्यमादध्यात्, त्रिः पक्षस्य केशश्मश्रुलोमनखान् संहारयेत्, नित्यमनुपहतवासाः, सुमनाः सुगन्धिः स्यात्, साधुवेशः, प्रसिद्धकेशः, मूर्धश्रोत्रघ्राणपादतैलनित्यः, धूमपः, पूर्वाभिभाषी, सुमुखः, दुर्गेष्वभ्युपपत्ता, होता, यष्टा, दाता, चतुष्पथानां नमस्कर्ता, बलीनामुपहर्ता, अतिथीनां पूजकः, पितृभ्यः पिण्डदः, काले हितमितमधुरार्थवादी, वश्यात्मा, धर्मात्मा, हेतावीर्ष्युः, फले नेर्ष्युः, निश्चिन्तः, निर्भीकः, ह्रीमान्, धीमान्, महोत्साहः, दक्षः, क्षमावान्, धार्मिकः, आस्तिकः विनयबुद्धिविद्याभिजनवयोवृद्धसिद्धाचार्याणामुपासिता, छत्री, दण्डी, मौली, सोपानत्को, युगमात्रदृग्विचरेत्, मङ्गलाचारशीलः, कुचैलास्थिकण्टकामेध्यकेशतुषोत्करभस्मकपालस्नानबलिभूमीनां परिहर्ता, प्राक् श्रमाद्व्यायामवर्जी स्यात्, सर्वप्राणिषु बन्धुभूतः स्यात्, क्रुद्धानामनुनेता, भीतानामाश्वासयिता, दीनानामभ्युपपत्ता, सत्यसंधः, सामप्रधानः, परपरुषवचनसहिष्णुः, अमर्षघ्नः, प्रशमगुणदर्शी, रागद्वेषहेतूनां हन्ता च, नानृतं ब्रूयात्, नान्यस्वमाददीत, नान्यस्त्रियमभिलषेन्नान्यश्रियं वा, न वैरं रोचयेत्, न कुर्यात् पापं, न पापेऽपि पापी स्यात्, नान्यदोषान्ब्रूयात्, नान्यरहस्यमागमयेत्, नाधार्मिकैर्न नरेन्द्रद्विष्टैः सहासीत, नोन्मत्तैर्न पतितैर्न भ्रूणहन्तृभिर्न क्षुद्रैर्न दुष्टैः, न दुष्टयानान्यारोहेत्, न जानुसमं कठिनमासनमध्यासीत, नानास्तीर्णमनुपहतमविशालमसमं वा शयनं प्रपद्येत, न गिरिविषममस्तकेष्वनुचरेत्, न द्रुममारोहेत्, न जलोग्रवेगमवगाहेत, न कूलच्छायामुपासीत, नाग्न्युत्पातमभितश्चरेत्, नोच्चैर्हसेत्, न शब्दवन्तं मारुतं मुञ्चेत्, नानावृतमुखो जृम्भां क्षवथुं हास्यं वा प्रवर्तयेत्, न नासिकां कुष्णीयात्, न दन्तान् विघट्टयेत्, न नखान् वादयेत्, नास्थीन्यभिहन्यात्, न भूमिं विलिखेत्, न छिन्द्यात्तृणं, न लोष्टं मृद्नीयात्, न विगुणमङ्गैश्चेष्टेत, ज्योतींष्यनिष्टममेध्यमशस्तं च नाभिवीक्षेत, न हुंकुर्याच्छवं, न चैत्यध्वजगुरुपूज्याशस्तच्छायामाक्रामेत्, न क्षपास्वमरसदनचैत्यचत्वरचतुष्पथोपवनश्मशानाघातनान्यासेवेत, नैकः शून्यगृहं न चाटवीमनुप्रविशेत्, न पापवृत्तान् स्त्रीमित्रभृत्यान् भजेत्, नोत्तमैर्विरुध्येत, नावरानुपासीत, न जिह्मं रोचयेत्, नानार्यमाश्रयेत्, न भयमुत्पादयेत्, न साहसातिस्वप्नप्रजागरस्नानपानाशनान्यासेवेत, नोर्ध्वजानुश्चिरं तिष्ठेत्, न व्यालानुपसर्पेन्न दंष्ट्रिणो न विषाणिनः, पुरोवातातपावश्यायातिप्रवाताञ्जह्यात्, कलिं नारभेत, नासुनिभृतोऽग्निमुपासीत नोच्छिष्टः, नाधः कृत्वा प्रतापयेत्, नाविगतक्लमो नानाप्लुतवदनो न

नग्न उपस्पृशेत्, न स्नानशाट्या स्पृशेदुत्तमाङ्गं, न केशाग्राण्यभिहन्यात्, नोपस्पृश्य ते एव वाससी बिभृयात्, नास्पृष्ट्वा रत्नाज्यपूज्यमङ्गलसुमनसोऽभिनिष्क्रामेत्, न पूज्यमङ्गलान्यपसव्यं गच्छेन्नेतराण्यनुदक्षिणम्, नारत्नपाणिर्नास्नातो नोपहतवासा नाजपित्वा नाहुत्वा देवताभ्यो, नानिरूप्य पितृभ्यो, नादत्त्वा गुरुभ्यो, नातिथिभ्यो, नोपाश्रितेभ्यो; नापुण्यगन्धो नामाली नाप्रक्षालितपाणिपादवदनो नाशुद्धमुखो नोदङ्मुखो न विमना नाभक्ताशिष्टाशुचिक्षुधितपरिचरो न पात्रीष्वमेध्यासु नादेशे नाकाले नाकीर्णे नादत्त्वाऽग्रमग्नये नाप्रोक्षितं प्रोक्षणोदकैर्न मन्त्रैरनभिमन्त्रितं न कुत्सयन्न कुत्सितं न प्रतिकूलोपहितमन्नमाददीत, न पर्युषितमन्यत्र मांसहरितकशुष्कशाकफलभक्ष्येभ्यः, नाशेषभुक् स्यादन्यत्राद्दधिमधुलवणसक्तुसर्पिर्भ्यः, न नक्तं दधिभुञ्जीत, न सक्तूनेकानश्नीयान्न निशि न भुक्त्वा न बहून्न द्विर्नोदकान्तरितात्, न छित्त्वा द्विजैर्भक्षयेत्, नानृजुः क्षुयान्नाद्यान्न शयीत, न वेगितोऽन्यकार्यः स्यात्, न वाय्वग्निसलिलसोमार्कद्विजगुरुप्रतिमुखं निष्ठीविका (वात) वर्चोमूत्राण्युत्सृजेत्, न पन्थानमवमूत्रयेन्न जनवति नान्नकाले, न जपहोमाध्ययनबलिमङ्गलक्रियासु श्लेष्मसिङ्घाणकं मुञ्चेत्, न स्त्रियमवजानीत, नातिविश्रम्भयेत्, न गुह्यमनुश्रावयेत्, नाधिकुर्यात्। न रजस्वलां नातुरां नामेध्यां नाशस्तां नानिष्टरूपाचारोपचारां नादक्षां नादक्षिणां नाकामां नान्यकामां नान्यस्त्रियं नान्ययोनिं नायोनौ न चैत्यचत्वरचतुष्पथोपवनश्मशानाघातनसलिलौषधिद्विजगुरुसुरालयेषु न संध्ययोर्नातिथिषु नाशुचिर्नाजग्धभेषजो नाप्रणीतसंकल्पो नानुपस्थितहर्षो नाभुक्तवान्नात्यशितो न विषमस्थो न मूत्रोच्चारपीडितो न श्रमव्यायामोपवासक्लमाभिहतो नारहसि व्यवायं गच्छेत्, न सतो न गुरून् परिवदेत्, नाशुचिरभिचारकर्मचैत्यपूज्यपूजाध्ययनमभिनिर्वर्तयेत्, न विद्युत्स्वनार्तवीषु, नाभ्युदितासु दिक्षु, नाग्निसंप्लवे, न भूमिकम्पे, न महोत्सवे, नोल्कापाते, न महाग्रहोपगमने, न नष्टचन्द्रायां तिथौ, न संध्ययोर्नामुखाद्गुरोर्नावपतितं नातिमात्रं न तान्तं न विस्वरं नानवस्थितपदं नातिद्रुतं न विलम्बितं नातिक्लीबं नात्युच्चैर्नातिनीचैः स्वरैरध्ययनमभ्यस्येत्, नातिसमयं जह्यात्, न नियमं भिन्द्यात्, न नक्तं नादेशे चरेत्, न संध्यास्वभ्यवहाराध्ययनस्त्रीस्वप्नसेवी स्यात्, न बालवृद्धलुब्धमूर्खक्लिष्टक्लीबैः सह सख्यं कुर्यात्, न मद्यद्यूतवेश्याप्रसङ्गरुचिः स्यात्, न गुह्यं विवृणुयात्, न कञ्चिदवजानीयात्, नाहंमानी स्यान्नादक्षो नादक्षिणो नासूयकः, न ब्राह्मणान् परिवदेत्, न गवां दण्डमुद्यच्छेत्, न वृद्धान्न गुरून्न गणान्न नृपान् वाऽधिक्षिपेत्, न चातिब्रूयात्, न बान्धवानुरक्तकृच्छ्रद्वितीयगुह्यज्ञान् बहिष्कुर्यात्, नाधीरो नात्युच्छ्रितसत्त्वः स्यात्, नाभृतभृत्यः, नाविश्रब्धस्वजनः, नैकः सुखी, न दुःखशीलाचारोपचारः, न सर्वविश्रम्भी, न सर्वाभिशङ्की, न सर्वकालविचारी, न कार्यकालमतिपातयेत्, नापरीक्षितमभिनिविशेत्, नेन्द्रियवशगः स्यात्, न चञ्चलं मनोऽनुभ्रामयेत्, न बुद्धीन्द्रियाणामतिभारमादध्यात्, न चातिदीर्घसूत्री स्यात्, न क्रोधहर्षावनुविदध्यात्, न शोकमनुवसेत्, न सिद्धावुत्सेकं यच्छेन्नासिद्धौ दैन्यं, प्रकृतिमभीक्ष्णं स्मरेत्, हेतुप्रभावनिश्चितः स्याद्धेत्वारम्भनित्यश्च, न कृतमित्याश्वसेत्, न वीर्यं जह्यात्, नापवादमनुस्मरेत्, नाशुचिरुत्तमाज्याक्षततिलकुशसर्षपैरग्निं जुहुयादात्मानमाशीर्भिराशासानः, अग्निर्मे नापगच्छेच्छरीराद्वायुर्मे प्राणानादधातु, विष्णुर्मे बलमादधातु, इन्द्रो मे वीर्यं, शिवा मां प्रविशन्त्वाप आपोहिष्ठेत्यपः स्पृशेत्; द्विः परिमृज्योष्ठौ पादौ चाभ्युक्ष्य मूर्धनि खानि चोपस्पृशेदद्भिरात्मानं हृदयं शिरश्च, ब्रह्मचर्यज्ञानदानमैत्रीकारुण्यहर्षोपेक्षाप्रशमपरश्च स्यादिति (चसू. ८.१७-२९)

**–व्रत**–न., सतां व्रतम्, अवश्यकर्तव्योऽर्थः, त्यागः, आर्द्रसन्तानता, कायवाक्चेतसां दमः, परार्थेषु स्वार्थबुद्धिरित्यादीनि सद्व्रतानि (अहृसू. २.४६)

**–वैद्यद्वेष**–पु., सद्वैद्यविषयेऽप्रीतिः (असंसू. १३.३)

**सनालक**–पु., वनस्पति० जीवन्तः (रापरि. ७.८९; पृ. ३५५)

**सनिग्रह**–वि., सवारङ्गं संदंशयन्त्रादि (सुसू. ७.११)

**संतत**–वि., निरन्तरम् (चचि. ३.५३)

**–ज्वर**–पु., रोग० ज्वरभेदः, संततज्वरः रसवाहिभिः स्रोतोभिर्विसृताः सर्वदेहानुगा वातादयो गुरवः दोषाविच्छिन्नं ज्वरं कुर्वन्ति। संतत्या सप्ताहादीन् व्याप्याऽविसर्गी अतः संतत इत्युक्तः। वातिकः संततः सप्तरात्रेण, पैत्तिको दशरात्रेण, श्लैष्मिको द्वादशाहेन ज्वरः पाकं प्रगच्छति। स शीघ्रं शीघ्रकारित्वात्, प्रशमं याति हन्ति वा। कालदूष्य-

प्रकृतिभिस्तुल्यो दोषो निष्प्रत्यनीकः सन् संततज्वरं कुरुते। अतः स दुस्सहः। संततो द्वादशाश्रयी उक्तः, वातादित्रिदोषाः रसादिसप्तधातवो मूत्रं पुरीषं चेति संततस्य द्वादश आश्रयाः। यदा सर्वे रसादिका आश्रया विशुद्धा भवन्ति, तदा संततः ज्वरः प्रशाम्यति। यदा वा एते रसादयः सर्वे सर्वथा वा अविशुद्धा भवन्ति, तदा स मानवं हन्ति। यदा तु संततस्य एते आश्रयाः नातिशुद्ध्यन्ति सर्वशो वा न शुध्यन्ति, तदा द्वादशेऽहन्यव्यक्तलक्षणं विसर्गं कृत्वा दीर्घमपि कालमनुवर्तते। अस्योपशमोऽपि तदा दुर्लभो भवति (चचि. ३.५३-५९)

**संतति**–स्त्री., सातत्यम् (चशा. २.४२) नैरन्तर्यम् (ड. सुउ. ३९.६९)

**संतमक**–पु., तमकश्वासभेदः, तल्लक्षणम्–उदावर्तरजोऽजीर्णक्लिन्नकायनिरोधसमुद्भवोऽयम्, अन्धकारेण तमोगुणेन वाऽस्य वृद्धिः शीतैश्चास्य शान्तिः, तमसि मज्जन्तमिव स्वात्मानं मन्यते (चचि. १७.६३-६४; मा. श्वासनि.) द्र० 'श्वास'

**संतर्जक**–वि. भयदर्शकः (चचि. ९.२०)

**संतर्पण**–वि., तृप्तिकरम्, प्रीणनम् (सुसू. ४६.३४)

न., उपक्रम० बृंहणम् (चसू. २३.३०; सुचि. २४.२६; अहसू. १४.१)

पेय० द्राक्षादाडिमखर्जूरलाजाचूर्णादिसाधितं समधुघृतं पानकम्, तद्गुणाः–शीतं बल्यं रसायनं हृद्यं वीर्यवृद्धिकरं नेत्ररोगघ्नं च (ध. ७.४९; पृ. ३०५)

**–निमित्त**–वि., बृंहणहेतुकः (स्थौल्यादिव्याधिः) (असंसू. ११.४७)

**संतर्पणीय**–वि., अध्यायसंज्ञा० (चसू. २३,१)

**संतान**–पु., तन्तुः (हे.) संततिः, सूत्ररूपता (अरु. अहसू. २९.५८)

**–दोष**–पु., सृतवत्सत्वादिविकारः (चसू. २६.१०३)

**संतानिका**–स्त्री., क्षीरोपरिस्थः स्त्यानो भागः (चक. १.१७) क्षीरजालिका (सुशा. ४.४) क्षीरसरः (सुसू. ४५.९४) द्र० 'दुग्धसंतानिका' घृतोपरितनः स्त्यानो भागः (सुउ. ४५.१८) व्रणबन्धनद्रव्येष्वेकम्, कुशलसंतानिका कोकिलवृत्तिर्द्वित्रितन्तुरचिता, मर्कटीवासमिति केचित् (ड. सुसू. १८.१६)

लता० इयं वायवी, तद्दंशलक्षणानि–दंशे शूलः, अश्रुभिर्नेत्रपर्याकुलत्वम्, प्रदर आक्षेपको वातजा विकाराश्च (असंउ. ४५)

**संतानी**–स्त्री., लता० संतानिका (असंउ. ४४)

**संताप**–पु., लक्षण० तापः दैहिकमानसभेदात् द्विविधः शरीरस्यौष्ण्याधिक्यम् मनसो वैचित्त्यादिरूपा पीडा च (चचि. ३.३१; सुनि. १.३२)

अग्न्यादिभिर्दाहः यत्र पयोमांसरसो वा अनुपानत्वेन उपयोज्यः (सुसू. ४६.४२६)

तैजसभावः, औष्ण्यम् (सुशा. १.१९)

**–लक्षण**–वि., संतापो लक्षणं यस्य सः (ज्वरः) (चनि. १.३२)

**संतेजन**–न., उत्तेजनम् संदीपनम् (सुचि. ३४.१०)

**संत्रस्तगोचर**–वि., संत्रस्तविषयप्रचारम् (सार्पसत्वम्) (चक्र. चशा. ४.३८)(४)

**संदंश**–पु., यन्त्र० सनिग्रहानिग्रहभेदात् स द्विविधः सनिग्रहः सवारङ्गो नापितस्येव लोहकारसंदंश इव कीलबद्धः, अनिग्रहस्तु सुवर्णकारस्येव, उभावपि षोडशाङ्गुलौ, त्वङ्मांससिरास्नायुगतशल्योद्धरणार्थमुपयुज्येते (सुसू. ७.११; असंसू. ३४.६; अहसू. २५.७)

अपरः संदंशः षडङ्गुलोऽर्धाङ्गुलविस्तृतो वक्रद्विबाहुरङ्गुष्ठाङ्गुलिप्रान्तसमागमाकृतिः सूक्ष्मशल्याक्षिपक्ष्म, व्रणाधिमांसाहरणार्थमुपयुक्तः (सुचि. १.१०४) असंसू. ३४.६; अहसू. २५.८)

**(संदंशी)**–स्त्री., रेवतीग्रह० इयमसाध्या जातहारिणी (का. रेवतीक.)

**संदानिका**–स्त्री., वनस्पति० खदिरभेद० अरिः (रा. ८.४०; पृ. १२) द्र० 'खदिर'

**संदिग्धनौ**–स्त्री., शङ्क्यमानमज्जाना संशयिता नाम संकटस्पृष्टा नौका (हे. अहसू. २.३५)

**संदिग्धवाच्**–वि., अव्यक्ता वाग् यस्य सः (पुत्रः) (अरु. अहसू. १३.७)

**संदेहलक्षण**–वि., संदेहोत्पादकः संदेहात्मकः (चवि. ८.४३)

**संधर्षा**–स्त्री., वनस्पति० अलक्तकः (रापरि. ६.१२; पृ. ३४६)

**संधातृ**–वि., सम्–एकत्र धारयतीति संधातृ (चसू. २७.२४५)

**संधान**–वि., संघट्टकम् (चसू. १.१०८) भग्नसन्धानकरम् (सुसू. ४६.५१७; सुसू. १४.३९)

न., व्रणस्य षष्ट्युपक्रमेष्वेकः, व्रणौष्ठादिसंयोजनम् (ड. सुचि. १.८) रक्तस्तम्भनोपायेष्वेकः (सुसू. १४.३९)

मद्यादेः उत्पादनम् ( हे. अहृसू. २.४० )
संधिस्थानम् ( सुशा. ६.२७ )
आसुत० मद्य ( रा. १४.३०२ पृ. २५४ )
काञ्जिकम् ( र. ४.६४-६५ )
पु., सन्धानीयो गणः, मधुमधुकपृश्निपर्णीकट्फल-लोध्रप्रियङ्गुधातक्यः । अंबष्टकीसमङ्गा मोचरसश्चेति संधानः ( असंसू. १५.१० )

**–कर**–वि., सन्धानं कुर्वाणः ( कषायरसः ) ( चसू. २६.४३(६) )

**–कारिन्**–वि., भग्नानां साधनः नाम सन्धायकः ( अहृसू. ६.१६ )

**–कृत्**–वि., सन्धानं कुर्वाणम् ( चसू. २७.२१ ) श्लेषकरम् ( अहृसू. १०.८ )

**–विधि**–पु., कर्णरोगे उपक्रम० आतुरे ग्रथितकेशान्ते बन्धनमुपधारितवति सति छेद्यभेद्यलेख्यैरुपपन्नैरुपपाद्य कर्णं, शोणितं दुष्टमदुष्टं वेति अवेक्षेत । ततो वातदुष्टे धान्याम्लोष्णोदकाभ्यां, श्लेष्मदुष्टे वारुणीसलिलाभ्यां प्रक्षाल्य पुनश्चावलिख्यानुन्नतमहीनविषमं सन्धिं निवेश्य ततो मधुघृताभ्यामभ्यज्य पिचुप्लोतयोरन्यतरेणावगुण्ठ्य सूत्रेण नातिगाढमशिथिलं च बध्वा सिराव्यधोक्तेन कपालस्य वा चूर्णेनावकीर्याचारिकमुपदिशेत्, संधिमश्लिष्यन्तं क्षौमसूत्रेण सीव्येत् । अतिक्षीणपालिकं वा शोणिताक्तेन पिचुना वेष्टयेत्,। व्रणवच्चैनमुपाचरेत्,। त्र्यहात्त्र्यहाद्वा सलिलेन परिषिच्य पिचुं सूत्रं चापनयेत्, न चाशुद्धरक्तमतिप्रवृत्तरक्तं क्षीणरक्तं वा कर्णं संदध्यात्, तस्य हि स्वयमपि संधिर्विश्लिष्यते, आध्मायते, श्यावतामुपैति, पच्यते, शुष्यति चिराद्रोहति रूढोऽप्याभरणं न क्षमते । किंच स सशोफकण्डूसन्तापो ग्रन्थिमांश्च भवति । तत्र च यथास्वं प्रतिकुर्वीत । दुष्टरक्ते च रक्तमवसेचयेत् । क्षीणरक्तं स्नेहपाननस्यमांसरसाशनाभ्यङ्गैर्बृंहयेत् । शोफरागादियुक्ते कर्णे सन्धानं नाचरेत् । तथाऽकृतवमनादिकस्य घस्मरस्य च सन्धानं नाचरेत् । अत्युष्णे देशे काले च सन्धानं नाचरेत् ( असंउ. २२ )

**संधानीय**–वि., संधानार्थं हितः, षड्के महाकषाय–वर्गे एको गणः ( चसू. ४.८ ) तद्द्रव्याणि–मधुकमधुपर्णीपृश्निपर्ण्यम्बष्ठकीसमङ्गामोचरसधातकीलोध्रप्रियङ्गुकट्फलानीति दश । द्रव्याणीमानि भग्नसन्धानकारकाणि ( चसू. ४.९; असंसू. १५.१० )

**संधायसंभाषा**–स्त्री., तद्विद्यसंभाषाभेदः तद्विधिः–ज्ञानविज्ञानवचनप्रतिवचनशक्तिसंपन्नेन अकोपनेनानुपस्कृतविद्येनानसूयकेनानुनेयेनानुनयकोविदेन क्लेशक्षमेण प्रियसंभाषणेन च सह संधायसंभाषा विधीयते । तथाविधेन सह कथयन्विस्रब्धः कथयेत् पृच्छेदपि च विस्रब्धः पृच्छते चास्मै विस्रब्धाय विशदमर्थं ब्रूयात्, न च निग्रहभयादुद्विजेत निगृह्य, चैनं न हृष्येत्, न च परेषु विकत्थेत, न च मोहादेकान्तग्राही स्यात्, न चाविदितमर्थमनुवर्णयेत्, सम्यक्चानुनयेनानुनयेत् तत्रचावहितः स्यात् । इत्यनुलोमसंभाषाविधिः ( चवि. ८.१७ )

**संधारण**–न.; शकृदादिवेगानां निरोधः ( चनि. ६.३ )

**संधाव**–पु., उपक्रम० अञ्जनवदेवास्य क्रिया । स च संधावो नाम लोहपात्रे गोमूत्रघृष्टं घृतधूपितं ताम्रम् संधावाञ्जितं चक्षुर्दोषरहितं भवति ( असंउ. २० )

**संधि**–पु., ऋतुसंधिः ( अहृसू. १३.३५ )
शारीर० अस्थिसंयोगस्थानम् ( चशा. ७.१४ )
मज्जावहानां स्रोतसां मूलम् ( चवि. ५.८ )
द्विविधाः संधयः–चेष्टावन्तः स्थिराश्च, शाखासु हन्वोः कट्यां च चेष्टावन्तः, शेषाः संधयः स्थिराः, द्विविधा अपि कोरोलूखलसामुद्गप्रतरतुन्नसेवनीवायसतुण्डमण्डलशङ्खावर्तभेदादष्टविधाः, तेषामङ्गुलिमणिबन्धगुल्फजानुकूर्परेषु कोराः, कक्षावङ्क्षणदशनेषूलूखलाः, अंसपीठगुदभगनितम्बेषु सामुद्गाः, ग्रीवापृष्ठवंशयोः प्रतराः, शिरःकटीकपालेषु तुन्नसेवन्यः, हन्वोरुभयतो वायसतुण्डाः, कण्ठहृदयनेत्रक्लोमनाडीषु मण्डलाः, श्रोत्रशृङ्गाटकेषु शङ्खावर्ताश्च ( चशा. ५.२७ ) संधिसंख्या–द्वे संधिशते ( चसशा. ७.१४ ) काश्यपसंहिताया मेकाशीत्यधिकत्रिशतसंधयः उक्ताः ( का. शा. ) सुश्रुते दशोत्तरे द्वे संधिशते ( सुशा. ५.२६; अहृशा. ३.१६ ) तद्विभागः–शाखास्वष्टषष्टिः, कोष्ठे एकोनषष्टिः, ग्रीवां प्रत्यूर्ध्वं च त्र्यशीतिः, एवं मिलित्वा दशोत्तरद्विशतम् । तत्रैकैकस्यां पादाङ्गुल्यां त्रयस्त्रयः, द्वावङ्गुष्ठे, जानुगुल्फवङ्क्षणेष्वेकैकः, एवं प्रतिशाखं सप्तदश, मिलित्वा शाखास्वष्टषष्टिः सन्धयः, त्रयः कटीकपालेषु, चतुर्विंशतिः पृष्ठवंशे, चतुर्विंशतिः पार्श्वयोः, उरसि चाष्टौ मिलित्वा कोष्ठे एकोनषष्टिः, अष्टौ ग्रीवायाम्, त्रयः कण्ठे, हृदयक्लोमनिबद्धासु नाडीष्वष्टादश, दन्तमूलेषु द्वात्रिंशत्, एकः काकलके, एको

नासायाम्, द्वौ वर्त्ममण्डलयोर्नेत्राश्रयौ, गण्ड-कर्णशङ्खेषु षट्, द्वौ हनुसंधी, द्वौ भ्रुवोरुपरिष्टात्, द्वौ शङ्खयोरुपरिष्टात्, पञ्च शिरःकपालेषु, एकश्च मूर्धनि, एवं मिलित्वा ग्रीवां प्रत्यूर्ध्वं त्र्यशीतिः ( सुशा. ५.२४-२७ )

**-च्युति**-स्त्री., वातरोग० संधीनां च्युतिर्विश्लेषः ( चचि. २८.७२)

**-जा**-स्त्री., वनस्पति० त्रिसंधिः ( रापरि. १०.३७; पृ. ३७१ )

**-दग्ध**-न., उपक्रम० अग्निकर्म, संधेर्दाहः । तल्लक्षणम्-रूक्षारुणता, कर्कशस्थिरव्रणता च ( सुसू. १२.८ )

**-नाल**-पु., भैषज्य० नखम् ( रा.१२.१०८. पृ. १०७ )

**-पीडा**-स्त्री., संधेः संधौ वा पीडा ( अहृसू. १७.१६ )

**-बन्ध**-पु., सुश्लिष्टसंधित्वम् ( हे. अहृसू. ११.३ )

**-भग्न**-न., अत्र भग्नपदं 'नपुंसके भावे क्तः' इतिसूत्रेण भावार्थकं ज्ञेयम् । भग्नप्रकारः, संधिभङ्गः, उत्पिष्टविश्लिष्टावक्षिप्तातिक्षिप्ततिर्यक्क्षिप्तविवर्तितभेदात् षड्विधं तत् ( असंउ. ३२ )

**-मर्मन्**-न., मर्म० संधिबाहुल्यात्संधिमर्म, संधिमर्माणि विंशतिसंख्याकानि । द्वे जानुनी, द्वौ कूर्परौ, पञ्च सीमन्ताः, एकोऽधिपतिः, द्वौ गुल्फौ, द्वौ मणिबन्धौ, द्वौ कुकुन्दरौ, द्वावावर्तौ, द्वे कृकाटिके च ( सुशा. ६.७; असंशा. ७.२९; अहृशा. ४.४४-४५ )

**-महारुज्**-वि., लक्षण० संधिषु महती पीडा यस्य सः प्रभूतसन्धिरेकः ( चसू. १३.४८ )

**-मुक्त**-न., रोग० संधिभङ्गः- (इंदु.) द्वयोरस्थ्नोः संधानस्य विश्लेषः ( सुनि. १५.४ )

**-मोक्ष**-पु., संधेश्चलनप्रसारणादिक्रिया ( काखिल. १०.१६४)

**-रुज्**-स्त्री., रोगलक्षण० संधीनां वेदना ( सुउ. ३९.३६ )

**-लेपन**-न., मूषातदाच्छादनयोर्लेपनेन बन्धः (र.९.८)

**-वल्ली**-स्त्री., वनस्पति० त्रिसंधिः ( रापरि. १०.३७; पृ. ३७१ )

**-विक्रिया**-स्त्री., लक्षण० संध्यस्थ्नोर्मध्यनिम्नत्वम् ( सुनि. १५.७ )

संधिस्थाने विषमाङ्गता ( इन्दु. )

**-विद्ध**-वि., संधौ विद्ध आतुरः, तल्लक्षणानि-शोफातिवृद्धिः, तुमुला रुजो बलक्षयः पर्वसु भेदशोफौ संधिकर्मोपरतिश्च ( सुसू. २५.३८ )

**-विमोक्ष**-पु., लक्षण० संधिभग्नम्, संधिमुक्तम् ( सुचि. ३.५० )

**-विश्लेष**-पु., संधिविस्रंसनम् ( सुनि. १५.७ )

**-विश्लेषण**-न., लक्षण० संधिच्युतिः (चचि. २१.३० )

**-वेदना**-स्त्री., संधीनां संधिषु वा व्यथा ( अहृसू. ११.१८ )

**-शब्दगामिन्**-वि., संधिस्फुटनशब्दवान् ( पुरुषः ) ( चवि. ८.९८ )

**-शूल**-पु., रोग० संधिषु शूलवद्वेदना ( चचि. २८.३३ ) मध्यममार्गजोऽयम् ( धसू. ११.४९ )

**-संश्लेष**-पु., संधीनां बन्धः ( अहृसू. १२.१८ )

**-संश्लेषण**-न., संधिबन्धनम् (सुसू. १५.४)

**-स्थैर्य**-न., संधीनां स्थिरता ( सुचि. ३.९ )

**-स्फुटन**-न., संधिगतः स्फुटनात्मकः शब्दः ( चवि. ४.७ )

**संधिक**-पु., रोग० संनिपातज्वरः तल्लक्षणानि- शूलं शोषो वातवेदना श्लेष्महानिर्बलहानिर्जागरणं च। अस्य मर्यादा सप्तवासराः, साध्योऽयम् ( माज्वर. ९ ) द्र० 'ज्वर'

**संधीयमान**-वि., एकीक्रियमाणम् ( चवि. ६.३ )

**संधुक्षण**-न., दीपनम् ( अहृसू. ८.२० )

**संधुक्ष्यमाण**-वि., उद्दीप्यमानः प्रज्वाल्यमानः ( अहृसू. १८.३० )

**संध्यन्त** पु., संधिसमीपगः प्रदेशः ( सुचि. ३.५३ )

**संध्यस्थिशूल**-न., लक्षण० संध्यस्थिषु शूलवत्पीडा ( चचि. ३.३९-४० )

**संध्यापुष्पा**-स्त्री., वनस्पति० जाती ( रा. १०.२३१; पृ. २९८ )

**संध्याभ्र**-न., खनिज० सुवर्णगैरिकम् ( रा. १३.२३३; पृ. १२९ )

**संध्याराग**-न., खनिज० सिन्दूरम् ( रा. ११.१६१; पृ. ११६ )

**सन्न**-वि., अभिघातादिभिरन्तःप्रविष्टम् ( सुचि. ३.४३ ) अधःसृतम्, अधःप्रविष्टम् ( सुचि. ३.३६ )

**-कटि**-वि., लक्षण० शिथिलकटिः कटिस्रंसवान् ( सुउ. ४०.९ )

**संनिकर्ष**–पु., सान्निध्यम्, नैकट्यम् ( सुशा. ९.३ )
**–जा**–वि., आत्ममनइन्द्रियार्थेतिचतुष्टयसंबन्धेन सञ्जाता ( बुद्धिः ) ( चसू. ८.१२ )
**संनिकृष्टवृत्ति**–वि., समीपवर्तिविषयग्रहणशीलम्, घ्राणं रसनं त्वगिति च संनिकृष्टवृत्तीनि ( का. शा. )
**संनिधान**–न., निकटत्वम् (अरु. अहृसू. ७.५१ )
**संनिपतित**–वि., एकत्र संगतम् संनिपातं प्राप्तम् ( चचि. ३.२८५-२८६ )
**संनिपात**–पु., त्रयाणां कुपितानां वातादिदोषाणामेकस्मिन्नधिष्ठाने मेलनम् (चवि. ६.११) त्रिदोषाणां युगपत् प्रकोपः (चसू.१७.४१) प्रकृतिसमसमवेतज्वराद्यारम्भकदोषत्रयप्रकोपः ( ड सुचि. ३५.६ ) दशधाऽसौ ( असंसू. १.३० ) संनिपातो दुश्चिकित्स्यानां श्रेष्ठः ( चसू. २५.४० ) त्रयाणां वृद्धानां क्षीणानां वा दोषाणां संयोगः ( अहृसू. २१.१ )
संयोगः ( सुशा. १.१६ ) अत्यन्तमिश्रीभावः परस्परमिश्रणम् ( सुशा. ६.१५; असंसू. १.३० )
**–कुठार**–पु., पारदयोग० नागं वङ्गं पारदं जेपालं गन्धकं ताम्रं वत्सनाभं चेति समभागमेकत्रार्द्रकनिर्गुण्डीचाङ्गेरीरसैः क्रमेण मर्दयित्वा साधितोऽयं रसः, रसोऽयं संनिपातनाशनः (र.१२.१४०-१४१)
**–कुष्ठघ्न**–पु., पारदयोग० तीक्ष्णलोहाभ्रकयोर्गोलकं गन्धके परिपाच्य तेन साकं हरितालमाक्षिकविशालाचित्रकबोलपाठाजटामांसीवत्सनाभशृङ्गीटङ्कणमधुयष्टीसिन्दुराणां चूर्णं मिश्रयित्वाऽऽर्द्रकरसेन च संमर्द्य बदरप्रमाणा गुटिकाः कुर्यात्। रसोऽसौ संनिपातकुष्ठनाशनः ( र. २०.१६-१८ )
**–गजाङ्कुश**–पु., पारदादियोग० पारदगन्धकताम्राभ्रकभस्मानि तथा लाङ्गलीचित्रकहिङ्गुवन्ध्याकर्कोटीपटोलनिर्गुण्डीसुगन्धारास्ना निम्बपल्लवाः, पाठा, क्षारत्रयं, क्ष्वेडं, बोलो, धत्तूरस्तण्डुलीयकं शृङ्गी मधूकसारं चेति जम्बीराम्लेन मर्दयित्वा सिद्धो रसः। अयं संस्वेददाहाभिन्यासघ्नः (र. १२.१०१-१०३)
**–ज**–वि., त्रिदोषकोपजन्यः ( ज्वरादिव्याधिः ) ( चचि. ३.८९९० )
**–ज्वराकृति**–स्त्री., लक्षण० संनिपातज्वरलक्षणम् (चचि., ३.१०३-१०९ )
**–विसर्प**–पु., रोग० त्रिदोषजविसर्पः तल्लक्षणम्–सर्वायतनसमुत्थः सर्वलिङ्गव्यापी सर्वधात्वनुसार्याशुकारी महात्ययिकश्चाचिकित्स्योऽयम् ( चचि, २१.४२ )
**–हन्**–पु., वनस्पति० किराततिक्तः नेपालनिम्बः, निद्रारिः ( रा. ९.५२ ) गुणाः–तिक्तः, शीतोष्णः, लघुः, योगवाही, अतिकफपित्तास्रशोथतृष्णाज्वरापहः ( रा. ९. ५३ )
वनस्पति० किराततिक्तः ( ध. १.३५; पृ. १४ )
**संनिपाताञ्जनरस**–पु., पारदयोग० निस्त्वग्जेपालजं बीजं दशनिष्कं मरिचं पिप्पलीसूतश्चैते प्रत्येकं निष्कं सर्वमेकत्र जम्बीररसेन सप्ताहपर्यन्तं मर्दनेन सिध्यत्ययम्। रसोऽयमञ्जनेन संनिपातज्वरहरः (र. १२.११७-११८)
**संनियोग**–पु., तन्त्रयुक्ति० सं-नियोगो नामावश्यानुष्ठेयतया विधानम्। यथा–'न त्वया स्वेदमूर्च्छापरीतेनापि पिण्डिकैषा विमोक्तव्या' इत्यादि आज्ञापनं रोगिणे ( चसि. ९२.४४ )
**संनिरुद्ध**–वि., प्रतिरुद्धम्, अवरुद्धम् (सुनि. १३.५६)
**–गुद**–पु., क्षुद्ररोग० तत्संप्राप्तिलक्षणे–वेगसंधारणाद्विहतो वायुर्गुदमाश्रितः सन् निरुणद्धि, ततो महास्रोतः सूक्ष्मद्वारं करोति, तस्य ( नरस्य ) मार्गस्य सौक्ष्म्यात्कृच्छ्रेण पुरीषोत्सर्गो भवति। कालभेदात्सहजजातोत्तरेति द्विविधः, स्थानभेदाच्च गुदविवरे गुदमार्गचर्मसंकोचाद्गुदद्वारे चर्मसंकोचाद्भवति द्विविधः ( सुनि. १३.५५.५६ )
**–गुदजठर**–न., उदररोग० बद्धगुदोदरम् (सुसू. २३.८ ) द्र० 'उदररोग'
**–गुदयन्त्र**–न., यन्त्र० संनिरुद्धगुदाख्यव्याधिहरं नाडीयन्त्रम् ( सुसू. ७.१३ )
**संनिरोध**-पु., सम्यगवरोधः ( सुक. २.३९ )
**संनिवार्य**–वि., निवारणीयम्, चिकित्स्यम् ( सुउ. ४८.१७ )
**संनिवेश**–पु., तत्तत्स्थाने यथावदवस्थितिः ( सुशा. २. ५६ ) संस्थानम् ( सुसू. २२.४ ) संस्थापनम् ( सुचि. ७.३० )
**संनिहित**–वि., सम्यगवस्थितः ( सुउ. ४७.८ )
**संन्यस्त**–वि., संन्यासरोगातुरः ( सुउ. ४६.२०-२१ )
**–संज्ञ**–वि., रोग० संन्यासः ( सुउ. ४६.२०-२१ )
**संन्यास**–पु., रोग० तत्संप्राप्तिः–मलिनाहारस्य रजोमोहावृतस्य नरस्य कुपिता अतिबला मलाः प्राणायतनसंश्रिताः सन्तो रक्तरस-संज्ञावहानि स्रोतांसि प्रतिहत्य वाग्देहमनसां चेष्टामाक्षिप्य दुर्बलं जन्तुं संन्यस्यन्ति ( चसू.२४.२५-२७,४२;असंनि.६.१५) तल्लक्षणम्–तमसोऽतिरेकात्प्रभूतदोषाच्च संमूर्च्छितः

संन्यासातुरो नैव संज्ञां लभते ( सुउ. ४६.२० ) तदसाध्यलक्षणम्–तीक्ष्णाञ्जनादिभिरलब्धसंज्ञ आनाहलालाश्वसनयुक्तश्चाऽऽतुरो वर्ज्यः ( सुउ. ४६.२२-२३ ) अयं मदमूर्च्छायादिवद्वतेषु वेगेषु नोपशाम्यति किन्तु चिकित्सापेक्षा वर्तते ( असंनि. ६.३६ ) तच्चिकित्सासूत्रम्–तीक्ष्णाञ्जनान्यवपीडा धूमाः प्रधमनानि सूचीभिस्तोदनं दाहो नखान्तरे पीडा लोमकेशानां लुञ्चनमात्मगुप्तावघर्षादिश्च एतैः प्रबुद्धसंज्ञे लघ्वन्नैर्विस्मापनैः श्रुतिप्रियगीतवादित्रादिशब्दैः संसनोल्लेखनैः शोणितावसेकाद्युपायैरस्य मनः प्रलयहेतुतो रक्षितव्यम् ( चसू. २४.४२-५३ )

कर्मत्यागः ( चशा. १.१५४ )

संस्कार० औषधयुक्तस्य मृन्नाण्डरुद्धस्य पारदस्य मन्दाग्नि युताया चुल्ल्यामध्ये स्थापनम् (र. ८.९७) शोधनसंस्कारेऽस्यान्तर्भावः (र. ८.९७)

**सपिण्डक**–पु., भक्ष्य० मधुक्रोडः सपिष्टकपिण्डकः ( चक्र. चसू. २७.२६७ )

**सपीतक**–वि., ईषत्पीतवर्णम् ( सुउ. २४.७ )

**सप्त**–वि., सङ्ख्या० ( सुचि. ९.१८ )

**–कृत्वस्**–अव्य., सप्तवारम् (सुचि. ९.१८)

**–च्छद**–पु., वनस्पति० सप्तपर्णः ( चचि. ७.६५ सुसू. ३९.४; ध. ३.८०; पृ. ११२ )

**–च्छदत्वच्**–स्त्री., सप्तपर्णस्य वल्कलम् ( सुक. १.४८ )

**–पत्र**–पु., वनस्पति० मुद्गरः ( रापरि. १०.२१; पृ. ११२ )

**–पर्ण**–पु., वनस्पति० कुष्ठघ्नगणोक्तमेकं द्रव्यम् ( चसू. ४.११; असंसू. १५.१८ ) उदर्दप्रशमनगणोक्तमेकं द्रव्यम् ( चसू. ४.१७ ) मूलमस्य वमनोपयोगि ( असंसू. १४.३ ) त्वगस्य व्रणे लेपार्थमुपयुज्यते ( असंसू. ३८.५४; अहृसू. २९.७६ ) क्षीरमस्य विरेचनोपयोगि ( असंसू. १४.४ ) वृक्षोऽयं क्षारोपयोगी ( सुसू. ११.११ ) अयं शाल्मलिसदृशपर्णो गजमदगन्धपुष्पः शरदि विकसनशील उच्चवृक्षः ( सुसू. ३८. ६-७ ) तद्गुणाः–तिक्त उष्णो हृद्यो दीपनः सरस्त्रिदोषघ्नः शूलगुल्मक्रिमिकुष्ठकण्डूव्रणरक्तामयघ्नश्च (ध. ३.८०; पृ.११२) विषहरो मेहज्वरनाशनश्च ( सुसू. ३८.६-७ ) सातवन इति लोके

**–पर्णी**–स्त्री., वनस्पति० लज्जालुः ( रा. ५.१६०; पृ. १५६ )

**–रात्र**–न., सप्तानां रात्रीणां समुदायः (अहृसू. २.६)

**–शिरा**–स्त्री., वनस्पति० ताम्बूली ( रा. ११.६; पृ. १३१ )

**–सप्त**–संख्या–वि०

**सप्तर्षि**–पु., वामदेवादयः सप्त ऋषयः, कश्यपात्रिभरद्वाजविश्वामित्रगौतमजमदग्निवसिष्ठा वा ( चचि. ३.२२; असंशा. १०.६ )

**सप्तला**–स्त्री., वनस्पति० सातला ( चचि. १५.१७२; सुसू. ४४.८४; ध. १.२३८; अहृसू. ६.७५; पृ. ५६ )

सेहुण्डभेदः ( ड. ) श्रीफलिका च ( सुसू. ३९.५ )

यवतिक्ताभेदः ( ड. ) शङ्खिनीभेदः ( सुक. ५.८४ ). द्र० ' शङ्खिनी '

गुञ्जा ( ड. ) सुसू. ३९.४ )

वनमल्लिका ( रा. १०.२३६; पृ. १९९ )

**–शङ्खिनीकल्प**–पु., अध्यायसंज्ञा० ( चक. १ )

**–स्नेह**–पु., सातलास्नेहः. तद्गुणाः–कटुस्तिक्तः कषायोऽधोभागदोषहरः क्रिमिकफकुष्ठानिलहरो दुष्टव्रणशोधनश्च ( सुसू. ४५.१२४ )

**सप्तलिका**–स्त्री., वनस्पति० यवतिक्ता शङ्खिनी ( सुचि. १८.३४ )

**सप्तामृतवटी**–स्त्री., पारदयोग० पारदगन्धकपिप्पलीहरीतकीबिभीतकाटरुषभार्ङ्गीणामेकोत्तराधिकभागानां बब्बुलक्काथसंमर्दितानां बिभीतकप्रमाणा वटिकाः कार्याः, इयं श्वासकासादिनाशिनी ( र. १३.५९ )

**सप्ताह**–पु., सप्तानां दिनानां समाहारः, दिनसप्तकम् ( अहृसू. २०.१६ )

**सप्ताह्व**–पु., वनस्पति० सप्तपर्णः ( सुचि. ९.५०; असंसू. ४.५० )

**सप्रजा**–स्त्री., अवन्ध्या ( चशा. २.५ )

**सप्रसादक**–पु., वनस्पति० शालिः ( ध. ६.७१; पृ. २१९ )

**सप्राक्पेय्य**–पु., बस्तिप्रकारः, बस्तिसूत्रीयोक्तबलादिबस्त्युक्तकल्कयुतो बस्तिः ( चक्र. चसि. ७.११ )

**सबल**–न., शालिपर्णीभेदः ( ध. १.८८; पृ. २३ ) द्र० ' शालिपर्णी '

**सबीजबन्ध**–पु., पारदबन्ध० पिष्टीकृतैरभ्रकसत्त्वसुवर्णरूप्यताम्रकान्तैः परिजारितस्ततः षड्गुणगन्धकेन मारितः पारदः महाप्रभावोऽसौ ( र. ११.७९ )

**सभक्त**-न., भैषज्यकाल० सह भक्तेन-अन्नेन यदुपयुज्यते, तत्, तद्गुणाः-इदं स्त्रीणां दुर्बलानां शिशूनां तथा वृद्धानां च हितम्, औषधद्वेषिणां क्षतक्षीणानां पथ्यं बलाग्निरक्षकं च
( सुउ. ६४.७४; काखिल. ३.४९ )

**सभा**-स्त्री., जनमेलकस्थानम् ( चक्र. १.९ )

**सभूतिक**-पु., वनस्पति० बिल्वः
( रा. ११.१३५; पृ.२७ )

**सम**-वि., त्वक्समं त्वक्समतलं अविषमपरिघवत्
( सुनि. १३.४१ )
ऋजुः ( ड. सुचि.३७.११० )
समदृष्टिः ( असंसू. ५.४६ )

**-क्रिय**-वि., समा क्रिया यस्य सः ( चशा. ६.२८ )

**-क्रियत्व**-न., समा क्रिया नाम चिकित्सा यस्य, स समक्रियः, तद्भावः ( सुनि. ६.८)

**-गन्धिक**-न., वनस्पति० उशीरम्
( ध. ३.१४; पृ. ९६ )

**-घृतसक्तुप्राशाभ्यास**-पु., उपक्रम० सहसमघृतसक्तुप्राशस्य सततं सेवनम्। स वृष्योदावर्तहराणां श्रेष्ठः ( चसू. २५.४० )

**-ज्वर**-पु., ज्वरभेदः, अल्पहेतुर्बहिर्मार्गो वैकृतो निरुपद्रव एकाश्रयः सुखोपायः लघुपाकश्च ज्वरः समज्वर इत्युच्यते ( काखिल. १.८ ) द्र० 'ज्वर'

**-तल**-न., करतलेन सदृशम्, करतलसादृश्ययुक्तम्, जिह्वातलेन वा ( सुसू. २३.२० )

**-त्वागतवीर्य**-वि., समत्वं परिपूर्णत्वम् आगतं वीर्यं यस्य सः, परिपूर्णसर्वधातुकः ( सुसू. ३५.१३ )

**-देह**-वि., ऋजु उपविष्टः ( सुसू. ४६.४६४-६५ )

**-देहाग्नि**-वि., समकायाग्निः ( सुसू. ३५.४६-४७ )

**-दोष**-वि., समप्रमाणावस्थिता वातपित्तकफसंज्ञकदोषाःयस्य यस्मिन्वा सः ( सुसू. १५.१४ )

**-धातु**-वि., प्रकृति० वातपित्तश्लेष्माणो गर्भात्प्रभृति समाः यस्य सः। अत्र धातुशब्दो दोषपर्यायपरः ( चवि. ८.९५; अरु. अहसू. १०.१)
द्र० 'प्रकृति' समप्रमाणावस्थिता रसादि धातवः
( सुसू. १६.४० )

**-धृत**-वि., समप्रमाणगृहीतम्, समप्रमाणम्
( असंसू. १९'४ )

**-भक्त**-वि., सभक्तम्, अत्र समशब्दः सहार्थे द्रष्टव्यः, तेन समभक्तं सभक्तम् इति
( असंसू. २३.१७ )

**-योग**-पु., सम्यग्योगः ( चशा. १.१२९ )

**-योगवाहिन्**-वि., समानां तुल्यानां वातादीनां योगो मेलकः, तं समयोगं वोढुं शीलमस्येति समयोगवाहि ( शरीरम् ) ( चशा. ६.४ )

**-वर्ज**-( अ; ) समो नाम समाग्निः, तं वर्जयित्वा
( चचि. १५.७१ )

**-वर्णजा**-स्त्री., वनस्पति० व्रीहिः
( रा. १६.१०७;पृ. २९२ )

**-वर्तिन्**-पु., निष्पक्षं सर्वप्राणिहरत्वात् यमः, कालमृत्युः ( चइ. ११.२५ )

**-सर्वधातु**-वि., समधातुप्रकृतिः ( पुरुषः )
( चवि. ६.१४ )

**समङ्गा**-स्त्री., वनस्पति० लज्जालुः
( चचि. ४.७६; अहसू. १५.३७; ध. ४.१०९, पृ. १५५ )
मञ्जिष्ठा
( चचि. ४.८९; सुचि. २.७३; ध. १.१७; पृ. १० )
वराहक्रान्ता ( चसू. ४.९ )
अञ्जलिकारिका ( सुसू. ३७.२४ )
बला ( ध. १.२८०; पृ. ६४ )

**समनस्क**-वि., मनसा सहितम् ( चसू.८.१५ )

**समन्तदुग्ध**-पु., वनस्पति० स्नुही
( ध. १.२३५. पृ. ५५ )

**( समन्तदुग्धा )**-स्त्री., वनस्पति० स्नुही
( ध. १.२३५. पृ. ५५ )

**समम्**-अव्य., एककालम् ( सुउ. १३.१५ )

**समय**-पु., अस्य शब्दस्येदमर्थजातमभिधेयमिति अभिधानाभिधेयनियमनियोगः। समयः सिद्धान्तः 'समयः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः। समयस्त्रिधा भवति -आयुर्वैदिकसमयो याज्ञिकसमयो मोक्षशास्त्रिक समय इति ( चवि. ८.५४ )
कालः, नियतायुर्मर्यादा ( असंसू. ८ )

**समवाय**-पु., वैशेषिकसंमतषट्पदार्थेष्वेकः, सोऽयम् अयुतसिद्धवृत्तिर्नित्यसंबन्धः ( चवि. ८.२९ )
संयोगः, समूहः ( सुशा. १.१६ )

**समवायिन्**-वि., समवायाधेयः ( चसू. १.५१ )
संसर्गी ( सुउ. ३९.२९४ )

**-(समवायि कारण)**-न., यत्समवेतं कार्यमुत्पद्यते तत् कारणम्- यथा तन्तवः पटस्य
( चसू. १.५१; सुसू. ४०.३ )

**समशन**-न., भोजनप्रकारः पथ्यापथ्यान्नस्य एकत्र सेवनम्,

पथ्यापथ्यं किञ्चिदेकत्र मिलितं, यथा रक्तशाल्यन्नं यवकान्नं च मिलितम् ( चक. चचि. १५.२३६; सुउ. ५०.५; अहृसू. ८.३३ )

**समष्ठिल**-पु., वनस्पति० आम्रभेदः, कटुरुष्णः रुच्यो मुखविशोधनो दीपनो दाहकृत् कफवातप्रशमनकरः ( रापरि. ४.१; पृ. ३३४ )

**समस्तगात्र**-वि., सकलप्रशस्तगात्रयुक्तः (सुशा. ५.४९)

**समस्तज**-वि., सन्निपातजः, दोषत्रयसमवायदुष्ट्या सम्भवन् ( ज्वरादिरोगः ) ( र. ३०.२३ )

**समांश**-वि., तुल्यप्रमाणम् ( अरु. अहृसू. ७.३९ )

**समाग्नि**-पु., वह्निर्यथाविधि भुक्तं सम्यगेव पचेत् सः ( असंशा. ६ )

वि., समा अग्नयो यस्य सः ( सुसू. १५.४१ )

**समातृगण**-पु., मातृसमूहयुक्तः ( ईश्वरः ) ( चचि. ३,३१० )

**समाधान**-न., समाधिः समाधीयतेऽस्मिन् चित्तमिति समाधानं समाधिः ( चशा. १.८० )

**समाधि**-पु., विषयेभ्यो निवर्त्यात्मनि मनसो नियमनम् ( चसू. १.५८ )

**समान**-पु., वातभेदः ( चसू. १२.८ ) स्थानानि आमपक्वाशयमध्यः ( सुनि. १.१६ ) अग्निसमीपस्थानं, सर्वं च कोष्ठम् ( अहृसू. १२.८ ) स्वेददोषाम्बुवाहीनि स्रोतांसि, अन्तरग्नेः पार्श्वभागः ( चचि. २८.८ ) समानो वायुः सर्वं कोष्ठं चरत्यन्नं गृह्णाति पचति विवेचयति मुञ्चति च ( अहृसू. १२.८ ) अग्निसंधुक्षणं करोति ( असंसू. २०.४ ) प्रकुपितः समानः गुल्माग्निसादातिसारप्रभृतीन् गदान् कुरुते ( सुनि. १.१७ ) द्र० 'दोष' '-वात'

वि., तुल्यधर्मकम् ( हे. अहृसू. १.१४ )

-**गुण**-वि., समानो गुणो येषां ते ( आहारविकाराः ) ( चशा. ६.९ )

-**गुणभूयिष्ठ**-वि., समानो गुणो भूयिष्ठोऽधिकतमो यस्मिन्, सः ( चशा. ६.९ )

-**प्रकोप**-पु.,विषमाजीर्णशीतसंकीर्णभोजनाकालशयनजागराद्यैः प्रकुपितः समानः शूलगुल्मग्रहण्यादीन् पक्वामाशयजान् गदान् करोति ( असंनि. १६.२७-२८ )

-**वायु**-पु., वातभेदः, समानः ( चचि. १५.२०३ )

**समानाभिहार**-पु., समानेन द्रव्यादिना सह मिश्रणम् ( चसू. ११.८ )

**समावर्तन**-न., पारदसंस्कार० द्रावणम् ( र. २१.१०४-१०६ )

**समाश्वासन**-न., विश्रमणम् ( चचि. २८.७६ )

( अव्य० ) समान्तरम्, समामध्ये, संवत्सरमध्ये, समा नाम वर्षमन्तरवधिर्यस्मिन्कर्मणि यथा स्यात्तथा ( चइ. ११.३ )

**समास**-पु., संक्षेपः ( चसू. ३०.१८; सुशा. ५.६ ) संग्रहः, अन्योन्यमेलकः ( चक्र. चसू. १३.२७ )

**समासन्नवर्तिन्**-वि., समीपस्थितः ( परिचारकः ) ( असंसू. ८.३ )

**समासीन**-वि., सम्यगासीनः, उपविष्टः ( सुसू, ४६.४६५-४६६ )

**समाहित**-वि., न्यूनातिरिक्तमानवर्जितम् ( यन्त्रादि ) ( सुसू. ७.९ )

**समाह्वान**-न., निष्कारणमाहूय स्वेच्छालापकथनम् ( सुचि. २४.१०१ )

**समिति**-स्त्री., संग्रामः ( सुशा. ४. ६८-७० )

**समिध्**-स्त्री., खदिराणां क्षीरवृक्षाणां वा होमार्थं वितस्तिमात्रं काष्ठम् ( सुसू. २.४ )

**( समिद् )-वर**-पु., वनस्पति० पलाशः ( ध. ५.१६२; पृ. २०३ )

**समीक्ष्यकारिन्**-वि., विमृश्यविधायी, विमृश्य विचार्य कार्यसम्पादकः ( अहृसू. ४.३६ )

**समीरण**-पु., दोष० वायुः ( सुनि. १.१९ ) वनस्पति० जम्बीरः ( रा. १०.८०; पृ. १४४ )

**समीरसार**-पु.,वनस्पति० बिल्वः ( रा. ११.१३५. पृ. ९७ )

**समुच्चय**-पु., तन्त्रयुक्ति० यदिदं चेदं चेति कृत्वा विधीयते। यथा 'वर्णश्च स्वरश्च' इत्यादि ( चसि. १२.४४; सुउ. ६५.३८ )

**समुच्छ्राय**-पु., उद्गतिः ( ड. सुसू. १०.५ )

**समुत्क्षिप्ता**-वि., अतित्वरिता ( चक. चचि. २८.४१ )

**समुत्था**-स्त्री., उत्पत्तिः ( सुनि. ६.७ )

**समुत्थान**-न., कारणम् ( चशा. ६.२७ ) निदानम् ( चनि. १.३ )

संप्राप्तिः ( सुनि. १३.४५ )

( परिव० ) मृतस्य लोहस्य पुनः स्वभावगमनम् ( र. ८.१८ )

**समुत्सन्न**-वि., विवृद्धमांसः ( व्रणः ) ( अहृसू. २९.६९ )

**समुदय**-पु., समुदायः ( चवि.१.११ )

**समुदाय**–पु., समवायः, समूहः ( सुसू. ४१.३ )
**–प्रभावतत्त्व**–न., मेलकप्रभावनिर्णयः (चवि. १.१०)
**समुदीरण**–न., उत्पत्तिकरणम् ( सुउ. ५७.५ )
**समुदीर्ण**–वि., प्रकुपितः ( सुचि. ३४.७ )
**समुद्ग**–न., संपुटम् ( सुउ. ४४.२९ )
**समुद्गीर्ण**–वि., पारदेन समुद्गीर्णः गंधकादि धातुः, ग्रस्तधातुः ( र. १५.४४-४६ )
**समुद्भ्रम**–पु., विभ्रमः ( चवि. ९.८ )
**समुद्भ्रान्त**–वि., विक्षिप्तः ( डल्हणः सुउ. ३९.२३ )
**समुद्र**–पु., सागरः, रत्नाकरः ( सुसू. ५.२६-२७ )
**–कफ**–पु., भैषज्य० समुद्रफेनः ( असंउ. १४ )
**–कान्ता**–स्त्री., वनस्पति० स्पृक्का ( रा. १२.११३; पृ. १०८ )
**–ज**–न., लवण० सामुद्रम् ( ध. २.३४; पृ. ७५; र. १८.१३१ )
**–जल**–न., सागरोदकम्, तद्गुणाः–लवणं विस्रमुष्णं रक्तविकारकरं पित्तकरं वैवर्ण्यदाहकरं च ( रा. १४.३२३; पृ. २५८ )
**–फल**–न., वनस्पति० तद्गुणाः–कटूष्णं त्रिदोषघ्नं विशेषतो वातघ्नं भूत–कफामय–भ्रान्तिनाशकं त्रिदोषव्याधिहरं च ( रापरि. ६.१४; र. २०.१३०-१३६; पृ. ३४६ )
**–फेन**–न., पु., भैषज्य० जाङ्गमविशेषः, शुक्रशोधनगणोक्तमेकं द्रव्यम् ( चसू. ४.१२ ) अयं कुष्ठेषु लेखनोपयोगी ( चचि. ७.५७; सुचि. ९.१० ) अनुशस्त्रं च ( असंसू. ३४.३२ ) तद्गुणाः–कषायः शीतो लेखनो रुच्यः कफघ्नो गुल्मप्लीहहरः कर्णपाकनेत्रकण्ठरोगविषहरश्च ( ध. ३.१५४; पृ. १२६ )
**–मण्डूकी**–स्त्री., जलशुक्तिः (ड.) मुक्ताशुक्तिः ( सुचि. १.१०० )
**–लवण**–न., लवण० सामुद्रलवणम् ( रा. ६.४२; पृ. ७५ )
**–वृश्चिक**–पु., कीट० आलविषः. सामुद्रो वृश्चिकः द्र० 'वृश्चिक' ( सुक. ३.५ )
**समुद्रान्ता**–स्त्री., वनस्पति० कार्पासी ( रापरि. ४.४६; पृ. ३३८ )
**समुन्नद्ध**–वि., समन्तादुन्नतम् ( सुनि. ९.१७ )
**समुन्नद्धोदरता**–स्त्री., लक्षण० समन्तादुदरस्योन्नतत्वम्, उदराध्मातत्वम् ( सुचि. ३४.१५ )
**समूहक्षारक**–पु., लवणभेदः, सर्वक्षारः ( रा. ६.५७, पृ. ७६ )
**समूहगन्ध**–न., गंधद्रव्य० जवादि ( रापरि. १२.६; पृ. ३७५ )
**समृद्ध**–वि., उपचितः ( चइ. ९.४ )
**संपत्ति**–स्त्री., समृद्धिः ( सुचि. ३१.१२ )
**संपद्**–स्त्री., प्रशस्तगुणता ( चक्र. चसू. ९.७ ) उत्कृष्टगुणः ( चचि. ३०.२२९ )
**संपदा**–स्त्री., वनस्पति० ऋद्धिः (रा. ४.१८८; पृ. ३४)
**संपन्न**–वि., रसादिसंपत्त्या यद्युक्तं तत्संपन्नम् ( अहृसू. १.२८ )
पाकसंस्कारादिना युक्तम् ( असंसू. २.२३ )
**संपर्क**–पु., संबन्धः ( असंसू. ८.८४ )
**संपाक**–पु., क्राथः ( चशा. ८.४१; असंशा. ३(४).३४ )
**संपाचन**–न., उपक्रम० पाचनम् ( सुउ. ५६.१२ )
**संपूरक**–वि., अतिमात्राशनशीलः ( चचि. १९.७ )
**संपूरण**–न., अत्यशनम् ( चचि. ५.१४ )
**संपूर्णता**–स्त्री., ( धात्वादिविषयकः ) पूर्णत्वम् ( सुसू. ३५.३९ )
**संपृक्त**–वि., संयुक्तः ( अहृसू. १३.२७ )
**संपोथन**–( परिव० )–न., कुट्टनम् ( असंक. १ )
**संप्रच्छन**–( परिव० )–न., उपक्रम० लेपनम् ( सुचि, ९.२४ )
**संप्रच्छित**–वि., लेपितम् ।
**संप्रतिपत्ति**–स्त्री., सम्यग् ज्ञानम् ( चवि. ७.८ ) यथाकर्तव्यतानुष्ठानम्, इयं कालज्ञानप्रयोजनानां श्रेष्ठा ( चसू. २५.४० )
**संप्रबोधन**–न., उपक्रम० संज्ञाजननम् (चवि. १०.१४)
**संप्रयोग**–पु., संयोगः, संबन्धः ( चशा. ३.१३ )
प्रयोगः ( चनि. ७.७(१) )
सङ्गः, विषयसेवा, व्यवायः ( सुचि. २६.१० )
**संप्रवर्तन**–( परिव० ) न., प्रवर्तमानस्योपेक्षया प्रवर्तनम् ( चक्र. चचि. १९.१४ )
**संप्रसक्त**–वि., निरन्तरम् ( सुनि. ७.११-१३ )
**संप्रसादन**–वि., सवर्णत्वकरम् ( चक्र. चचि. २१.९८ )
**संप्रसाधन**–न., मण्डनम् ( चसू. ५.९९ )
**संप्रहार्य**–वि., शक्यवारणम्, शक्यं निवारणं यस्य ( याम्यसत्त्वः ) ( चशा. ४.३७(४)
**संप्राप्ति**–स्त्री., व्याध्युपलब्धिकारणेष्वेकम् ( चनि. १.६ ) तत्स्वरूपम्–यथा दुष्टेन दोषेण यथा च संनिवेशविशेषेण देहमनुधावता सता प्रत्यामयं या निर्वृत्तिः, सा संप्राप्तिः ( अहृनि. १.८ ) "व्याधिजन्ममात्रमन्त्यकारणव्यापारजन्यं संप्राप्तिमाहुः" ( चक्र. चनि. १.११ )

संख्याप्राधान्यविकल्पबलकालविशेषभेदात्सा बहुविधा संभिद्यते ( चनि. १.१२(१) तत्र संख्यासंप्राप्तिर्यथा–अष्टौ ज्वराः, पञ्च कासाः। प्राधान्यसंप्राप्तिर्यथा–स्वातन्त्र्यपारतन्त्र्याभ्यामनुबन्ध्यनुबन्धभेदात्तरतमयोगाद्वा । व्याधीनां प्राधान्याप्राधान्ये, ताभ्यां भिद्यमाना तद्विशेषा वा संप्राप्तिः। विकल्पसंप्राप्तिर्यथा–विकल्पो नाम वातादिदोषाणामेकस्मिन्व्याधौ समवेतानामंशांशकल्पना तद्विशिष्टा विकल्पसंप्राप्तिः। बलविशेषा संप्राप्तिर्यथा हेतुपूर्वरूपादीनां तुलनया व्याधेर्बलाबलत्वविनिश्चयो बलसंप्राप्तिः। कालविशेषा संप्राप्तिर्यथा–दोषाणामृत्वहोरात्राहारसमयनियतः प्रकोपः कालविशेषा संप्राप्तिः ( चनि. १.१२; असंसू. १.१३-१४; अहृनि. १.८-११ )

योगः प्राप्तिः ( चशा. १.९८ )

उपलब्धिः ( सुनि. १.१० ) ग्रहणम् ( सुशा. ६.३६ )

**संप्रीणन**–वि., बृंहणम् ( चशा. ८.३१ )

**संप्लव**–पु., निमज्जनम् ( चनि. ८.५ )

विभ्रमः, स्वरूपान्यथात्वम् ( चक. चचि. १०.३ )

वि., संकीर्णम् ( सुसू. ११.१८; सुसू. १९.५ )

संबद्धम्, संधियुक्तं (वङ्क्षणादि) (असंसू. ३८.४२)

**संबाध**–पु., मत्कुणादिभिः पीडा ( सुशा. १०.३; असंशा. १२.१९ )

–**निःसृति**–स्त्री., संकटनिस्तरणम् ( चइ. १२.८४ )

**संबाधाञ्जन**–न., अञ्जनप्रकार० संधावः ( असंउ. १४ )

**संभरण**–न., संचयः, प्राप्तिः ( चसू. १५.३ )

**संभव**–पु., तन्त्रयुक्ति० संभवो नाम यद्यस्मिन्नुपपद्यते, स तस्य संभवः, यथा मुखे पिडुव्यङ्गनीलिकादयः संभवन्तीत्यादि ( चसि. १२.४५ )

प्रमाण० सम्भवति अस्मात् इति सम्भवः कारणम्, संभवो नाम यो यतः संभवति, स तस्य संभवः। यथा षड्धातवो गर्भस्य संभवः ( चवि. ८.४९ )

–**हेतु**–पु., संभव उत्पत्तिस्तत्र कारणम्, अभिव्यक्तिकारणम् ( ड. ) यथा–अव्यक्तं जगतः संभवहेतुः ( सुशा. १.३ )

**संभार**–पु., उपकरणादिसामग्री ( चसू. १५.३ ) यन्त्रशस्त्रक्षाराग्निशलाकाप्रभृतिः ( सुसू. ११.१८; अहृसू. ५.६६ )

**संभाषाविधि**–पु., संभाषणकर्म, तद्विधिः–भिषग्भिषजा सह संभाषेत। तद्विद्यसंभाषा हि ज्ञानाभियोगसंहर्षकरी भवति। वैशारद्यमपि चाभिनिर्वर्तयति। वचनशक्तिमपि चाधत्ते। यशश्चाभिदीपयति। पूर्वश्रुते च संदेहवतः पुनः श्रवणाच्छ्रुतसंशयमपकर्षति। श्रुते चासंदेहवतो भूयोऽध्यवसायमभिनिर्वर्तयति। अश्रुतमपि च कंचिदर्थं श्रोत्रविषयमापादयति। यच्चाचार्यः शिष्याय शुश्रूषवे प्रसन्नः क्रमेणोपदिशति गुह्याभिमतमर्थजातं तत्परस्परेण सह जल्पन् पिण्डेन विजिगीषुराह संहर्षात्। तस्मात्तद्विद्यसंभाषामभिप्रशंसन्ति कुशलाः ( चवि., ८.१५ )

**संभिन्न**–वि., मर्दितम्, एकीकृतम् ( र. २.१२६-१२७ )

असंबद्धम् ( अहृसू. २.२२ )

**संभिन्नालाप**–पु., असंबद्धप्रलपनमसत्प्रलापः ( अहृसू. २.२२ )

**संभुक्त**–न., भैषज्यकाल० चित्रभोज्यैः सह भैषज्यप्रदानम्, अरुचौ कालोऽयमुक्तः (चक्र. चचि. ३०.३०१)

**संभृत**–वि., सम्यक्कृतः ( सुचि. ४०.६४ )

–**त्व**–न., पुष्टत्वम् ( अहृसू. १४.३५ )

**संभृष्टपरुषच्छवि**–वि., लक्षण० संभृष्टस्य दग्धस्येव परुषा छविर्यस्य सः ( अध्वप्रशोषी ) ( सुउ. ४१.२१ )

**संभोग**–पु., ( स्रक्चन्दनादीनाम् ) उपभोगः ( सुचि. ३९.३५ )

**संभोजन**–न., यथेष्टभोजनम् ( सुचि. १७.४५-४६ )

"पथ्यापथ्यमिहैकत्र भुक्तं संभोजनं मतम्" ( सुचि. १.२७ )

**संभोज्य**–न., भैषज्यकाल० संभुक्तम् (चचि. ३०.३०१)

**संमर्दन**–न., उपक्रम० सम्यक् समन्ततो वाऽङ्गानां मर्दनम्, व्यायामादिभिः श्रान्तानां श्रमहरमेतत् ( र. ३०.९४.९५ )

**संमित**–वि., तुल्यम् ( चशा. ५.३ )

**संमीलितद्रुम**–पु., पुनर्नवाभेदः, रक्ता पुनर्नवा ( रा. ५.४०८; पृ. ६३ ) द्र० 'पुनर्नवा'

**संमूढ**–वि., संयुक्तम् ( चचि. १३.१८७ )

पिच्चितावनतम् ( ड. सुनि. १४.८ )

–**पिडका**–स्त्री., क्षुद्ररोग० शूकदोषजविकारेष्वेकः, तल्लक्षणम्–पाणिभ्यां भृशसंमूढे लिङ्गे पिडकेयं भवति। सा च वातरक्तसंभवा ( सुनि. १४.८ )

**संमूर्च्छित**–वि., संमिश्रितम्, एकीभूतम् ( चचि. १.५२ )

मिलितम् ( ड. सुचि. ३८.३८ )

वृद्धिं गतम्, प्रवृद्धम् ( ड. सुनि. ११.१३-१४ )

**सारस**-पु., पक्षि० प्लववर्गीयः, अस्याऽस्थि कफजमूत्रकृच्छ्रे उपयुक्तम् ( चचि. २६.५५ ) गुरूष्णस्वादिगुणकः पक्षी, रक्तचञ्चुकः (ड. सुउ. ३९.१५४-१५५)
लक्ष्मणो रक्तशिराः प्रसिद्धः एव (सुसू. ४६.१०५)
सरोवरजलम् ( सुसू. ४५.३२ )
वनस्पति० कमलम् ( रा. १०.२४३ )

**सारसाहिक**-पु., निर्विषसर्प० ( असंउ. ४१ )

**सारस्वतघृत**-न., घृत० त्रिफला लक्ष्मणानन्ता ब्राह्मी सारिवादियुक्तम्, तच्च मेधास्मृत्यायुःपुष्टिबुद्धिदं रक्षोघ्नं विषघ्नं च। विषघ्नं, पानाभ्यञ्जनतो योज्यम् ( असंउ. १ )

**सारस्वतबल**-न., परिव. मन्त्रबलम् (चक्र चचि. २४.८)

**सारामुख**-पु., शालि० ( अहसू. ६.१ )

**साराम्बु**-न., श्वेतखदिरजलम् ( र. २९.११५; अहसू. ३.२३ )

**साराम्भस्**-न., सारोदकम् ( सुचि. २५.३३ )

**सारिक**-वि; सारेण संस्कृतं सारिकं सारयुक्तं, संस्कृतम् ( चचि. २(४).१२ )

**सारिकामुख**-न., कीट० गुणाः-वायव्यो वातकोपनोऽयं वातरोगान् करोति ( सुक. ८.५-८ )

**सारिणी**-स्त्री; वनस्पति० कुशिंशपा (रा. ९.२०१)
कार्पासी ( रा परि. ४.४५ )
महाबला ( रा. ४.४२४ )
पुनर्नवा ( रा. ५.४०७ )

**सारित**-न., खनिज० अञ्जनम् ( ध. ३.१५१ )

**सारिव**-पु., धान्य० शालिभेदः ( अहसू. ६.२ )

**(सारिवा)**-स्त्री., महाकषायवर्गे एकं द्रव्यम् ( चसू. ४.१० )
वर्ण्यगणे एकं द्रव्यम् ( चसू. ४.१० )
दाहप्रशमनगणे एकं द्रव्यम् ( चसू. ४.१७ )
स्तन्यशोधनगणे एकं द्रव्यम् ( चसू. ४.१२ )
ज्वरहरगणे एकं द्रव्यम् ( चसू. ४.१६ )
वनस्पति० सा द्विधा; श्वेता कृष्णा चेति। श्वेता सारिवा शीता मधुरा शुक्रला गुरुः स्निग्धा तिक्तः सुगन्धिः कुष्ठकण्डूज्वरापहा देहदौर्गन्ध्याग्निमान्द्यश्वासकासाऽरुचिहरा आमत्रिदोषविषहृद्रक्तरुक्प्रदराऽपहा कफाऽतिसारतृड्दाहरक्तपित्तहरा वातनाशकरी च ( ध. १.१६१ )
हिं.—अनंतमूल.
म.—दुधसालि, अनंतमूळ.
गु.—कपूरी.
बं.—अनंतमूल.
ता.—नन्नारि.

**सारिवाख्य**-पु., शालिधान्य० ( चसू. २७.९ )

**सारिवादिगण**-पु., सारिवामधुकचन्दनकुचन्दनपद्मककाश्मरीफलमधूकपुष्पाण्युशीरं चेति। 'सारिवादिः पिपासाघ्नो रक्तपित्तहरो गणः। पित्तज्वरप्रशमनो विशेषाद्दाहनाशनः' ( सुसू. ३८.३९-४० )

**सारी**-स्त्री., वनस्पति० सातला (ध. १.२३८)

**सारोदक**-न., सारो बाह्यस्त्वग्रहितो भागः, सारैः खदिरादिसारैः षडङ्गविधिना श्रृतमुदकं सारोदकं ज्ञेयम् ( चचि. ६.४६ )
बाह्यत्वग्रहितस्य वृक्षप्रकाण्डस्य भागः सारस्तस्य क्राथः (सुउ. ४४.२९)

**सार्जक**-पु., सर्जकस्यायमिति सार्जकः, सर्जरसः ( असंचि. ८ )

**सार्प**-वि., चित्तप्रकृति० सर्पसदृशस्वभावम्, राजससत्त्वस्यैकः प्रकारः, लक्षणानि- क्रुद्धशूरमक्रुद्धभीरुं तीक्ष्णमायासबहुलं संत्रस्तगोचरमाहारविहारपरं सार्पं विद्यात् ( चशा. ४.३८(४) )

**सार्वगुण**-न., पार्थिवद्रव्य० लवणभेदः, उद्भिदम् ( ध. २.३२ )
लवणभेदः, औषरकम् ( रा. ६.५१ )

**सार्वयौगिक**-वि; सर्वेष्वास्थापनसाध्येषु रोगेषु वातव्याधिज्वरगुल्मादिषु यथोक्तदोषसंबन्धे सति यौगिका इत्यर्थः ( चवि. ८.१४५ )

**सार्वरस**-न., लवण० औषरकम् ( रा. ६.५१ )

**सार्वसह**-न., पार्थिवद्रव्य० सर्वंसहा पृथ्वी, तस्या इदमिति सार्वंसहम्, लवणभेदः, औद्भिदं लवणम् ( रा. ६.४० )

**सार्षप**-न., शाक० तत्रेदं त्रिदोषं बद्धविण्मूत्रं च ( चसू. २७.१२२ ) विदाहि रूक्षं तीक्ष्णमुष्णञ्च शाकानामवरमिदम् ( सुसू. ४६.२६८ )
कन्दविष० ( असंउ.४० )
सर्षपतैलम्, तच्च कुष्ठघ्नम् ( चचि. ७.११५; सुउ. २३.५; चसू. २७.२९० ) गुणाः— कृमिघ्नं कण्डूकुष्ठापहं लघु कफमेदोहरं लेखनं कटु दीपनं च ( सुसू. ४५.११७; अहसू. ५.५९ )
**-पत्र**-न., वनस्पति० गुणाः-कटुकं स्वादु अत्युष्णं विदाहि शुक्रहृद्रुचिदायकं रक्तपित्तप्रकोपनम् ( रा. परि. ७.८५ )

–शाक–न., सर्षपशाकं, शाकानामवरम् ( सुसू. ४६.२६८ ) द्र० ' सार्षप. '

साल–पु., वनस्पति० ( चक. १.८ )
सर्जकः ( सुसू. ३८.१४-१५ )

–कल्याणी–स्त्री., शालिञ्चभेदः ( असंसू. ७.१३९ )

–सार–पु., सालः, शङ्कुस्तस्य सारः (सुसू. ३८.८-९)

–सारादिगण–पु., सालसाराजकर्णखदिरकदरकालस्कन्धक्रमुकभूर्जभेषशृङ्गीतिनिशचन्दनशिंशपाशिरीषासनधवार्जुनतालशाकनक्तमालपूतिकाश्वकर्णागुरुणि कालीयकं चेति, गणोऽयं कुष्ठविनाशनः मेहपाण्ड्वाऽऽमयहरः कफमेदो विशोषणः ( सुसू. ३८.८-९ )

साल्वण–पु., स्वेद० उपनाहस्वेदः ( अहसू. १७.४ )

सावरक–न., वनस्पति० रोध्रः ( ड. सुउ. ४०.३९ )

सावररोध्र–पु., श्वेतस्थूलत्वक् ( सुसू. ३८.१४-१५ )

सावरिका–स्त्री., निर्विषाणां जलूकानामन्यतमा, सा च स्निग्धपद्मपत्रवर्णाऽष्टादशाङ्गुलप्रमाणा च, कपिला, पिङ्गला, शङ्कुमुखी, मूषिका, पुण्डरीकमुखी, सावरिका चेति ( सुसू. १३.१२ )
लोध्रः ( सुसू. ३८.४६-४७ )

सावित्र–वि., सवितुरिदमिति सावित्रम् सौरम् ( असंसू. ८.१७ )

( सावित्री )–स्त्री., मंत्र० गायत्रीमंत्रः ( चचि. १(३).९ )

सास्र–वि., अश्रुपूर्णलोचनः ( ड. सुउ. ३९.४० )

साहचर–न., सहचरपुष्पम्, श्यामापुष्पं वा ( सुचि. २५.२८ )

साहचरतैल–न., सहचरतैलम्, नवे सिराग्रन्थौ पानार्थमुपयुज्यते ( असंउ. ३५ )

साहचर्य–न., एकाऽधिष्ठानवृत्तित्वम् ( अहसू. ९.५ )

साहस–न., सहसा अविचारजन्यबलेन कृतं साहसम्, अविचारेण यत्सहसा क्रियते तद् ( चशा. ६.८ ) अयथाबलमारम्भः ( चनि. ६.३ ) आत्मशक्तिमनालोच्य सहसा क्रियते इति ( चसू. ७.२६ ) तच्च मनुष्यमारणं स्तेयं परदाराऽभिमर्षणं पारुष्यमनृतमिति पञ्चविधं साहसम् ( सुसू. ४५.२०८ )

साहसिक–वि., साहसयुक्तः ( चसि. २.४ )

सिंह–पु., प्राणि० हिनस्तीति सिंहः ( चसू. २७.३५ ) गुहाशयेष्वेकः (सुसू. ४६.७२) श्लेष्मप्रकृतिकोऽसौ ( सुशा. ४.७६ ) अस्य मांसं यक्ष्मिणे प्रशस्तम् ( च. चि. ८.१५३ ) अस्य चर्म धूपनोपयोगि ( असंउ. ४ ) अस्य पित्तं विषहरम् (असंसू. ८.२९) सिंहगुणाः– मधुरो गुरुरुष्णवीर्यः स्निग्धः कटुपाकी बल्यो मारुतनाशनो नेत्रगुह्यविकारिणां हितश्च ( सुसू. ४६.७३; ध. ६.३९४; पृ. २६९; अहसू. ९.२८ )
व्याघ्रः ( चक. चचि. ३.३०६ )
वनस्पति० शिग्रुभेदः, रक्तशोभाञ्जनः ( चचि. ९.२७; रा. ७.६६, पृ. १४२ ) द्र० 'शिग्रु'

( सिंही )–स्त्री., वनस्पति० लक्ष्मणा ( ध. १.९७; पृ. २५)
बृहत्कण्टकारिका ( ड. सुउ. ३९.२१९ )
आटरूषः ( रा. ४.२८; पृ. ११ )

–गुप्त–पु., रसरत्नसमुच्चयकर्तुर्वाग्भट्टस्य पिता ( र. १.८ )

–घोष–वि., सिंहसमानस्वरः, कफप्रकृतिलक्षणेष्वेकम् ( सुशा. ४.७३ )

–पर्णी–स्त्री., वनस्पति० आटरूषः ( ध. १.२३; पृ. ११ )

–पुच्छिका–स्त्री., वनस्पति० पृश्निपर्णी ( रा. ४.११७; पृ. २४ )

–पुच्छी–स्त्री., वनस्पति० गुहा ( इन्दु ) पृश्निपर्णी ( असंउ. ४ )

–मुख–न., स्वस्तिकयन्त्र० सिंहमुखेन सदृशं मुखं यस्य तत् । अस्थिविदष्टशल्योद्धरणार्थम् ( सुसू. ७.१०; अहसू. ४.२५ )

(–मुखी )–स्त्री., वनस्पति० आटरूषः ( ध. १.२३; पृ. १२ )

–वल्ली–स्त्री., वनस्पति० इयं शुष्यतां कुमाराणां परिषेचनोपयोगिनी ( असंउ. २ )

–विन्ना–स्त्री., वनस्पति० माषपर्णी ( ध. १.१३६; पृ. ३२ )

–स्कन्दी–स्त्री., वनस्पति० इयं शुष्यतां कुमाराणां परिषेचनार्था ( असंउ. २ )

सिंहण–पु., प्राचीनो रसाचार्यः ( र. १६.१३५ )

सिंहलक–न., खनिज० पित्तलम् ( रा. १३.१७; पृ. २०९ )

सिंहलस्था–स्त्री., वनस्पति० ( सैंहली ) पिप्पली ( रा. ६.१२०; पृ. ८५ )

सिंहिका–स्त्री., वनस्पति० बृहती ( ध. १.९३; पृ. २४)
आटरूषः ( ध. १.२३; पृ. ११ )

सिकता–स्त्री., भैषज्य० वालुका ( चचि. १२.७०; सुनि. ६.१० )
इक्षुविकार० शर्करा ( ध. २.१०४; पृ. ९१ )

–कुम्भ–पु., यन्त्र० वालुकायन्त्रम् ( र. १६.१६२ )
–मेह–पु.; रोग० प्रमेहभेदः, कफजोऽयम्,। तल्लक्षणम्–अस्मिन् नरो मूत्रगतान् मूर्तानणून् दोषान् मेहति ( चनि. ४.२० ) सरुजं ससिकतं च मेहति ( सुनि. ६.१०; असंनि. १०.१६ ) द्र० 'प्रमेह'
–यन्त्र–न., यन्त्र० वालुकायन्त्रम् ( र. १२.३८ )
–वर्त्मन्–न., नेत्ररोग० तल्लक्षणम् – वर्त्मनोऽन्तर्भागे कर्कशा रूक्षाः सिकतोपमाः पिटका भवन्ति ( असंउ. ११ )
–शर्करान्विता–स्त्री., लक्षण० वालुकासदृशया शर्करया सहिताऽश्मरी ( सुसू. ३३.१२ )
**सिक्थ**–पु., तण्डुलकणः ( काखिल. ४.७३ )
न., भैषज्य० मधूच्छिष्टम्, सिक्थकम् ( सुचि. २०.१८; ध. २.११; पृ. ११८ )
**सिक्थक**–न., भैषज्य० मधूच्छिष्टम् ( सुचि. २५.४० ) तद्गुणाः–मधुरं कटु पिच्छिलं मृदु भग्नसन्धानं व्रणरोपणं भेदनं लेपात् स्फुटिताङ्गविरोपणं च। तथा वातघ्नं भूतविसर्पकण्डूकुष्ठवातास्रनाशनं च। ( ध. ३.११९; पृ. ११८ )
हिं.—मोम.
म.—मेण, मुम.
गु.—मीण.
बं.—मोम, मम.
त.—मेलुकु.
फा.—मोम.
**सिगृडी**–स्त्री., वनस्पति० कटुरुष्णा देहदार्ढ्यकरी वातहृत् पृष्ठशूलघ्नी च ( रापरि. ४.३२; पृ. ३३७ )
**सिङ्घण**–पु., प्राचीनो रसाचार्यः, सिंहणः ( र. १६.१३०-१३६ )
**सिङ्घाणक**–न., नासिकायांश्लेष्मस्वरूपो मलः ( चनि. २.६; असंशा. ८.२४ )
–प्रतिम–वि., रक्तमिश्रसिङ्घाणकसदृशः, स च स्नायुगत आस्रावः ( सुसू. २२.८ )
**सिञ्चतिकाफल**–न., वनस्पति० बदरीभेदः ( असंसू. ७.१८६ ) द्र० 'बदर'
**सिञ्चती**–स्त्री., वनस्पति० बदरभेदः, सिञ्चतिकाफलम् ( असंसू. ७.१८१-१८४ ) द्र० 'बदर'
**सिञ्चितिकाफल**–न., फल० बदरभेदः (चसू. २७.१४२) द्र० 'बदर'
**सिण्डाकी**–स्त्री., आहारद्रव्य० मूलकादिशाकं किञ्चित् स्विन्नं क्षुण्णं सुगन्धिकटुद्रव्यान्वितं वटकीकृतं सिण्डाकी, सा च द्विधा शुष्काऽऽर्द्रा च। तत्र शुष्कसिण्डाकी विष्टम्भिनी वातकोपनी च ( सुसू. ४६.२९५ )
आर्द्रा वातला रुचिष्याऽनलदीपनी च ( सुसू. ४६.२९५ ) गुरुः कफपित्तकरी च ( सुसू. ४६.३८१-३८२ )
शाकसिक्थमण्डासुतिः ( सुसू. ४६.३८१-३८२ )
**सित**–वि., वर्णविशेषः शुभ्रम्, श्वेतम् ( असंउ. ४२ )
**( सिता )**–स्त्री., वनस्पति० सितपाटलिः ( रापरि. १०.१६; पृ. ३६९ )
लक्ष्मणा ( ध. १.९७; पृ. २५ )
मल्लिका ( रा. १०.२२५; पृ. १९७ )
विदारी ( रा. ७.१९३ पृ. ३५ )
बाकुची ( रा. ४.२२६; पृ. ३८ )
निष्पावः ( रा. १६.१७५ )
गवेधुका ( रा. ४.१८१ )
कटभी ( इन्दु. असंउ. ४२ )
श्वेतवचा ( इन्दु. असंउ. ४२ )
दूर्वाभेदः श्वेतदूर्वा ( सुसू. ३७.२५; ध. ४.१४४; पृ. १६३ )
पाटलाभेदः, काष्ठपाटला ( रा. ९.१५२ )
इक्षुविकारः शर्करा ( चसू. ३.२७; सुसू. ३७.२५; अहसू. ३.५१; ध. २.१०४; पृ. ९१ )
लूताभेदः, इयमाग्नेयी स्वेदजा च। तद्दंशलक्षणानि–भृशकण्डूला श्वेता पिटका भवति। सा च पिटका दाहमूर्च्छाज्वरहग्विसर्पक्लेदकारिणी भवति ( असंउ. ४४.४५ )
न., नयनस्य श्वेतं मण्डलम्, तस्योत्पत्तिर्जलाद्भवति ( सुउ. १.११-१२ )
खनिज० रौप्यम् ( ध. ६.५; र. १६.७४; पृ. २०६ )
वनस्पति० मूलकम् ( रा. ७.५०; पृ. ९१ )
मरिचम्, शिग्रुबीजम्, मरिचावान्तरजातिः ( इन्दु; असंउ. ४२. )
–कर–पु., निर्यास० कर्पूरः ( रा. १२.५६; पृ. १०१)
–कण्टा–स्त्री., वनस्पति० लक्ष्मणा ( रा. ४.१२४; पृ. २५ )
–कण्टारिका–स्त्री., वनस्पति० लक्ष्मणा ( पृ. २५; रा. ४.१२३ )
–कर्णिक–पु., वनस्पति० श्वेतकर्णिकारः अस्य पल्लवा रक्तपित्तशमनाः ( सुउ. ४५.२० )

–कुम्भी–स्त्री., वनस्पति० सितपाटलिः
( रापरि. १०.१६; पृ. १६९;
पाटलाभेदः काष्ठपाटला ( रा. ९.१५२; पृ. २९ )
–क्षुद्रा–स्त्री., वनस्पति० लक्ष्मणा ( रा. ४.१२३; पृ. २५ )
–गिरी–स्त्री., वनस्पति० श्वेताऽपराजिता, इयं श्वासज्वरहारिणी ( चचि. २३.९५ )
–च्छदा–स्त्री., वनस्पति० दूर्वाभेदः श्वेतदूर्वा ( रा. ८.२३०; पृ. १६३ ) द्र० 'दूर्वा'
–जा–स्त्री., शर्कराभेदः, मधुशर्करा ( रा. १४.१६१) पृ. ९१ ) द्र० 'शर्करा'
–दर्भ–पु., वनस्पति० कुशः ( रा. २०७; पृ.१६.१८)
–पाटलि–स्त्री.,वनस्पति० तद्गुणाः–तिक्तोष्णा गुरुर्वातकफघ्नी वातदोषवमिहिक्काश्रमहरा च
( रापरि. १०.१६; पृ. ३६९)
–पाटलिका–स्त्री., पाटलाभेदः, काष्ठपाटलिका, ( रा. ९.१५२; पृ. २९ ) द्र० 'पाटला'
–पुष्प–पु., वनस्पति० रोहितकभेदः, श्वेतरोहितः ( रा. ८.२१७; पृ. १९६ ) द्र० 'रोहितक'
–(पुष्पा)–स्त्री., वनस्पति० गिरिकर्णिका
( रा. ३.१२३; पृ. १५१ )
( –पुष्पी )–स्त्री., वनस्पति० नागदन्ती
( रापरि. ५.२७; पृ. ३४२ )
शङ्खपुष्पी ( रा. ३.१७०; पृ. १५८ )
न., वनस्पति० परिपेलम् ( ध. ३.५५; पृ. १०७ )
प्रपौण्डरीकम् ( ध. ३.९२; पृ. ११४ )
–पुष्पक–पु., वनस्पति० काशः
(रा.८.२०० पृ. १६० )
–मरिच–न., वनस्पति० मरिचम्
( रा. ६.१३८; पृ. ८८ )
–लता–स्त्री., वनस्पति० अमृतस्रवा
( रापरि. ३.४५;पृ. ३३३ )
–वर्षाभू–स्त्री., वनस्पति० पुनर्नवा
( रा. ५.४०४; पृ. ६३; र. १७.७-८ )
–वल्लीज–न., वनस्पति० मरिचम्
( रा. ६.१३८; पृ. ८८ )
–वस्त्रपूत–वि., श्वेतवस्त्रेण गालितम् ( चसि. ३.६६ )
–शीत–न., चन्दनभेदः, श्वेतचन्दनम्
( इन्दु. असंउ. २ )
–शूकसंज्ञ–पु., वनस्पति० यवः
(रा. १६.१२४; पृ२२३ )

–सर्षप–पु., वनस्पति० सर्षपः
( रा.१६.६८; पृ. १४३ )
–सिंही–स्त्री., वनस्पति० लक्ष्मणा
( रा. ४.१२३; पृ. २५ )
–सिन्धुवार–पु., निर्गुण्डीभेदः, श्वेतनिर्गुण्डी ( ड. सुक. ५.६५-६८ ) द्र० 'निर्गुण्डी'
–सूरण–पु., वनस्पति० सूरणभेदः
( रा. ७.८; पृ. १६९ )

सिता–स्त्री.,
–खण्ड–पु., शर्कराभेदः, मधुशर्करा ( रा. १४.१६१; पृ. ९१ ) द्र० 'शर्करा'
–जल–न., शर्करोदक (ड. सुउ.२६.१३)
–लता–स्त्री., वनस्पति० श्वेतदूर्वा ( चसू. ४.१० )

सिताख्य–न., वनस्पति० मरिचम्
( रा. ६.१३८; पृ. ८८ )

सिताख्या–स्त्री., वनस्पति० मालादूर्वा
( रा. ८.२३२; पृ. १६३ )

सिताङ्ग–पु., रोहितकभेदः श्वेतरोहितः
( रा. ८.२१८; पृ. १९६ ) द्र० 'रोहितक'

सिताजाजी–स्त्री., जीरकभेदः, शुक्लजीरकः
( रा. ६.१०२; पृ. ८३ ) द्र० 'जीरक'

सितादि–पु., इक्षुविकार० गुडः
( रा. १४.१९८;पृ. १६० )

सितादिपान–न., योग० सिताप्रियालेक्षुरसद्राक्षामधूकखर्जूरकाश्मर्यैत्यादिसिद्धं पानम्। इदं सर्वासु मूर्च्छासु प्रशस्यते ( सुउ. ४६.१५ )

सिताब्ज–न., वनस्पति० पुण्डरीकम्
( ध. ४.१४८; पृ. १६४ )

सिताभा–स्त्री., वनस्पति० तक्राह्वा
( रापरि. ४.२९, पृ. ३३७ )

सितामृतवर–न., श्वेतपुष्पो वत्सनाभः, श्वेतविषम्, श्वेतं पारदभस्म ( र. ४.५० )

सिताम्भोरुह–न., कमलभेदः, श्वेतकमलम्
( र. १०.९३ ) द्र० 'कमल'

सितार्कक–पु., अर्कभेदः, शुक्लार्कः
( रा. १०.२९; पृ. १३७ ) द्र० 'अर्क'

सितार्जक–पु., अर्जकभेदः ( रा. १०.८५; पृ. १४५ )

सितालर्क–पु., अर्कभेदः श्वेतार्कः
( रा. १०.३१; पृ. १३७ ) द्र० 'अर्क'

सितावरी–स्त्री., वनस्पति० बाकुची
( रा. ४.२२६; पृ. ३८ )

**सिताह्वय**–पु., रोहितकभेदः, श्वेतरोहितकः (रा. ८.२१८; पृ. १९६ ) द्र० 'रोहितक'
शिग्रुभेदः, श्वेतशिग्रुः ( रा. ७.६४; पृ. १४२ )
द्र० 'शिग्रु'

**सिताह्वशिंशपा**–स्त्री., शिंशपाभेदः, श्वेतशिंशपा (रा. ९.२००; पृ. १९४ )

**सिताह्वा**–स्त्री., पाटलाभेदः, काष्ठपाटला ( रा. ९.१५२; पृ. २९ ) 'द्र० पाटला'

**सितिवारक**–पु., वनस्पति० शितिवारः, सुनिषण्णकशाकम् ( असंचि. १३ )

**सितेक्षु**–पु., वनस्पति० इक्षुभेदः, श्वेतेक्षुः (रा. १४.१८१; पृ. १५८ ) द्र० 'इक्षु'

**सितेतर**–पु., वनस्पति० व्रीहिः (रा. १६.३९; पृ. २२०)
कुलित्थः ( रा. १६.१६६; पृ. २२९ )

**सितैरण्ड**–पु., वनस्पति० एरण्डः (रा. ८.४४५; पृ.६८)

**सितोच्चटा**–स्त्री., गुञ्जाभेदः, श्वेतगुञ्जा ( ध. ४.३१; पृ. १४० ) द्र० 'गुञ्जा'

**सितोपला**–स्त्री., सितशर्करा, इयं सरक्तपवने प्रदेहार्थमुपयुज्यते ( चसू. ३.२१ ) पार्श्वरुजास्वालेपनार्थमुपयुज्यते ( चसू. ३.२५ )
खण्डशर्करा ( सुउ. ४१.५१; अहृसू. ५.४९ )
स्थूलाःश्वेताः वालुकाकणाः ( र. ७.१५ )
इक्षुविकार० शर्करा ( ध.२.१०४; पृ.९१ )

**सितोपलादिचूर्ण**–न., योग० तद्द्रव्याणि मानं च अस्मिन् त्वच एको भागः, बहुलायाः सूक्ष्मैलाया भागद्वयं, पिप्पल्या भागचतुष्टयं, तुगाक्षीर्या अष्टौ भागाः, सितोपलायाश्च षोडश भागा भवन्ति। इदं श्वासकासकफातुराणां सुप्तजिह्वारोचकिनामल्पाग्नीनां पार्श्वशूलिनां च हितम् (चचि. ८.१०३-१०४)

**सिद्ध**–पु., देवयोनि० योगज्ञानवान् ( चनि. ७.१० )
भूताधिपति० ( असंउ. ७ )
धातुसिद्धिं प्राप्तो रसाचार्यः ( र. ५.१४४ )
वनस्पति० निर्गुण्डी ( र. २२.८१ )
धत्तूरभेदः, कृष्णधत्तूरः ( काखिल. १३.५० ) द्र० 'धत्तूर'

**(सिद्धा )** स्त्री., काचकुपिका ( र. ७.२० )
वनस्पति० ऋद्धिः ( रा. ५.१८७; पृ. ३४ )
वि., चिकित्सायामनुभूतफलम् ( भेषजादि ) ( र. १.८ ) निश्चितफलप्रदम् ( सुचि. ९.११ )
स्वेदितम्, साधितम्, पाचितम् ( र. २.८६; अहृसू. ४.२१ )

–**नाथ**–पु., प्राचीनो रसाचार्यः ( र. १७.१२० )

–**पिण्डिका**–स्त्री., अग्निपाचितः सक्त्वादीनां पिण्डः ( चसू. २७.३३९, असंसू. ७.२२२ )

–**पुष्प**–पु., वनस्पति० करवीरः ( रा. १० ३; पृ. १३४ )

–**प्रयोजन**–पु., वनस्पति० सर्षपः ( रा. १६.६८; पृ. १४३ )

–**वस्ति**–पु., बस्तिप्रकारः बलोपचयवर्णानां व्याधिशतस्य च बस्तिनाऽनेन सिद्धिर्भवतीति सिद्धबस्तिः ( सुचि. ३८.११६ ) तथा चायं सर्वदेहिनां सर्वदा हितो बहुफलो बलपुष्टिकरो निर्व्यापच्च ( असंक. ५ ) अस्य सामान्यद्रव्याणि–यवकोलकुलत्थानां क्वाथो मधु पिप्पली सैन्धवं यष्टिमधु च (सुचि. ३८.१०५)

–**मन्त्र**–पु., निश्चितफलप्रदोऽपराजितादिर्मन्त्रः ( अहृसू. २.३२ )

–**रसामृत**–न., देहस्याभ्रकादिलोहा सिद्धिकरास्तथा स्वेदनादिसंस्कारैः सिद्धः पारदः; स एवामृतमिति सिद्धरसायनम् जराव्याधिमरणादिहरमेतत् (र. १.१)

–**सर्पिस्**–न., सिद्धघृतम्, यथा द्विपञ्चमूल्यादिभिः, सिद्धार्थकवचामांसीपयस्यादिभिः, मधुकवचापिप्पल्यादिभिः सिद्धं घृतम् ( सुशा. १०.४५ )

–**साधन**–पु., वनस्पति० सर्षपः ( रा. १६.६८; पृ. १४३ )

–**साधित**–वि., श्रीयशोज्ञानसिद्धानां व्यपदेशतो लब्धायुर्वेदविद्यः, सिद्धेन प्रसिद्धेन साधितः नाम ग्राहितायुर्वेदविद्यः ( चसू. ११.५० )

**सिद्धक**–पु., वनस्पति० निर्गुण्डी (रा.४.११७; पृ.१५०)

**सिद्धा**–स्त्री., वनस्पति० ऋद्धिः ( रानि. १८७; पृ. ३४ )
–**संज्ञ**–पु., वनस्पति० बकुलः (रा.१०.२६२;पृ.२०२)

**सिद्धागम**–वि., शास्त्रोक्तविधिना सिद्धम् ( भेषजादि ) ( असंसू. ३३.३४-३५ )

**सिद्धान्त**–पु., तन्त्रयुक्तिः परीक्षकैर्बहुविधं परीक्ष्य हेतुभिश्च साधयित्वा यो निर्णयः स्थाप्यते, सः। स च सर्वतन्त्रसिद्धान्तप्रतितन्त्रसिद्धान्ताधिकरणसिद्धान्ताभ्युपगमसिद्धान्तभेदाच्चतुर्विधः ( चवि. ८.३७ )

**सिद्धार्थ**–वि., अर्थसिद्धियुक्तः, प्राप्तमनोरथः ( असंसू.२.३९ )

**सिद्धार्थ**–पु., वनस्पति० सर्षपभेदः, श्वेतसर्षपः ( चइ. १२.७७; सुउ. ६१.३१; अहृसू. १५.३३ )
द्र० 'सर्षप'

सर्षपः ( ध. ४.४२; पृ. १४२ )
वटः ( रा. ११.११६; पृ. १८४ )
मान० सर्षपः, षड्जमितः ( र. १०.१०३ )

**सिद्धार्थक**-पु., वनस्पति० सर्षपभेदः, श्वेतसर्षपः ( सुचि. १६.३६; असंउ. ८ ) द्र० 'सर्षप'
न., घृत० सिद्धार्थकवचाहिङ्गुप्रियङ्गुद्विरजनीमञ्जिष्ठाश्वेरेतकटभ्यादिसाधितं घृतम् । पाननस्याभ्यामिदं सर्वासुरग्रहकृत्याऽलक्ष्मीविषोन्मादज्वरापस्मारनाशनम् । बस्तमूत्रकल्पितमिदं पाननस्याञ्जनालेपस्नानोद्धर्षणादिभिः सर्वासुरग्रहज्वरापस्मारोन्मादादिनाशनं राजद्वारे सिद्धिकृच्च ( असंउ. ८ )
सुरद्रुमवचाकुष्ठसिद्धार्थादिभिः साधितं घृतम् । कृमिकुष्ठगरश्वासबलासविषमज्वरसर्वभूतग्रहोन्मादापस्मारनाशनमिदम् ( सुउ. ६१.३१-३३ )
स्नान० मुस्तमदनत्रिफलाकरञ्जारग्वधकलिङ्गयवदार्वीसप्तपर्णानां कषायः, अयं वमनो विरेचनो वर्णकरस्तथोद्धर्षः, स्नानोपयोगी च । अनेन त्वग्दोषकुष्ठशोफपाण्डवामयाश्च नश्यन्ति ( चचि. ७.९१; असंचि. २१ )

**सिद्धार्थकतैल**-न., तैल० सार्षपं तैलम्, इदं सर्वेषु कुष्ठेषु पानार्थमुपयुज्यते । उत्तरबस्तिविधानेनोपयुक्तं सद् अपराहरणम् ( सुशा. १०.२१; असंचि.२१ )

**सिद्धि**-स्त्री., सुष्ठुफलत्वम्, सम्यक्परिणामः (चसू. १५.४)
साफल्यम् ( चसू. १.१३५ ) व्याधिविनाशे कृतहस्तता, सिद्धिर्वैद्यगुणानां श्रेष्ठा ( असंसू. १३.३ )
व्यापत्साधनं भेषजम् ( चक्र. चसू. १३.७) चवि. ८.३८ ;
चिकित्सितम् ( चसू. २८.३०; ड. सुचि. ३५.३३ )
साधनम् ( ड. सुउ. ४०.१६६ )
तत्त्वज्ञानम् ( चशा. ५.१९ )
वनस्पति० ऋद्धिः ( ध. १.१४५; पृ. ३४ )
-द-पु., वनस्पति० पुत्रजीवः ( रापरि. ९.३१;पृ. ३६.६ )
-स्थान-न.,स्थान० वमनादीनां वमनाद्यसम्यग्योगजन्यानां व्यापदां भेषजस्य साध्यतारूपा सिद्धिरस्मिन्नोक्ता, चरकेऽष्टमं स्थानम्, काश्यपसंहितायां सप्तमं स्थानम् ( चसि. ८, कासि. ७ )

**सिध्म**-न., रोग० सप्तमहाकुष्ठेष्वेकम्, श्लेष्ममारुतदुष्ट्याऽस्योत्पत्तिः, तल्लक्षणम्-परुषारुणं विशीर्णं बहिस्तन्वन्तःस्निग्धं शुक्लरक्तावभासमल्पवेदनमल्पकण्डूदाहपूयलसीकं लघुसमुत्थानमल्पभेदकृम्यलाबुपुष्पसङ्काशं च ( चनि. ५.८ (६) कुष्ठमिदं साध्यम्, साध्यमपीदमपचारतोऽसाध्यतामुपयाति ( चनि. ५.९ ) एकादशक्षुद्रकुष्ठेष्वेकम्, कुष्ठमेतत् प्राय ऊर्ध्वकाये भवति ( सुनि. ५.१२ ) तद्द्विविधम्-पुष्पिकासिध्मं सिध्मं च । पुष्पिकासिध्मं सुखसाध्यम्, सिध्मं दुःखसाध्यम् ( ड. सुनि. ५.१२ )
-लेप-पु., योग० कुष्ठतमालपत्रमरिचमनःशिलाकासीसैः सिद्धं तैलं ताम्रभाजने सप्ताहमुषितं लेपात् सिध्महरम् किलासहरं च ( चचि. ७.११७-११८ )

**सिध्मन्**-न., सिध्मकुष्ठम् ( सुनि. ५.१२ )

**सिन्दुक**-पु., वनस्पति० निर्गुण्डी ( ध. ४. ८१; पृ. १५० )

**सिन्दुकच्छपिका**-स्त्री., वनस्पति० शेफालिनिर्गुण्डी ( रा. ४.११९; पृ. १५० )

**सिन्दुवार**-पु., वनस्पति० निर्गुण्डी ( सुउ. ४५.१६; ध. ४.८१; असंसू. १५.२१; पृ. १५० )

**सिन्दुवारक**-पु., वनस्पति० निर्गुण्डी ( ध. ४.८१; पृ. १५० )

**सिन्दुवारित**-पु., वनस्पति० निर्गुण्डी (अहसू. ७.२५)

**सिन्दूर**-पु., न., खनिज० रक्तवर्णं सीसकसत्त्वम् ( र. २.२५ ) तद्गुणाः-कटु तिक्तमुष्णं व्रणविरोपणं विषदुष्टव्रणत्वग्दोषकुष्ठविसर्पजीर्णज्वररक्तदोषकण्डूघ्नं च ( ध. ३.१०१; पृ. ११५ )
हिं.—सिंदूर, इंगुर.
म.—शेन्दूर.
बं.—सिंदूर.
त.—चेन्तूरं.
फा.—सुरन्ज सन्ग.

**( सिन्दूरी )**स्त्री., वनस्पति० तद्गुणाः-कटुका तिक्ता कषाया श्लेष्मवातजिच्छिरोर्तिशमनी भूतघ्नी च ( रापरि. १०.१९; पृ. ३६९ )
-पुष्पी-स्त्री., वनस्पति० सिन्दूरी ( रापरि. १०.१९; पृ. ३६९ )
-भूषण-पु., योग० एकैकं पलं पारदं सिंदूरं च वासारसेन प्रहरमात्रं संमर्द्य चक्रिकां कुर्यात् । पक्वमूषायां पलचतुष्टयं शुद्धगन्धकं क्षिप्त्वा तां चक्रिकां लेपयेत्, लघुपुटेन च पुटेत् । जीर्णे गन्धके चक्रिकां विचूर्ण्य दशगुणेन लोहभस्मना दशांशेन च लशुनेन सह संमर्द्य च चणकमात्रा गुटिकाः कारयेत् । योगोऽसौ पाण्डुकामलानाशनः ( र. १९.११२-११६ )

**-रस**-पु., योग० समप्रमाणौ पारदगन्धकौ त्रिदिनं श्वेताङ्कोलजटारसैः संमर्द्य गुटिकीकुर्यात्। रक्तचित्रक-वाराहीपत्रनिर्यासेन च पेषयित्वा सद्योहतछाग-मांसस्य पिण्डे न्यस्य, तैले विपाचितं तैले एव यावत्सिन्दूरवर्णं जायेत, तावत् स्थापयेत्। रसोऽसौ विधिना सेवितश्चेदतिवृष्योऽन्यथा लोचनस्फोटकः (र. २७.२०-२३)

**सिन्धु**-पु., नदी० हिमालयप्रभवोऽसौ (चचि. १२.४) अत्र चन्द्रमानामकः सोमविशेष उपलभ्यते (सुचि. २९.२९)

वनस्पति० निर्गुण्डीभेदः, नीलसिन्धुवारः (र. २९.३४) द्र० 'निर्गुण्डी'

न., लवण० सैंधवम् (सुउ. ५२.३०; ध. २.२५; र. २.१६१; पृ. ७३)

खनिज० श्वेतटङ्कणम् (र. ११.५०)

**-ज**-न., लवण० सैन्धवम् (डल्हणः सुचि. ३७.११; ध. २.२५ पृ. ७३)

**-तीरसम्भव**-न., खनिज० टङ्कणभेदः, श्वेतटङ्कणम् (रा. ६.३१; पृ. ७३) द्र० 'टङ्कणम्'

**-पर्णी**-स्त्री., वनस्पति० काश्मरी (रा. ९.१४६; पृ. २९)

**-पादप**-पु., वनस्पति० मातुलुङ्गः (ध.५ २३; पृ.१७३)

**-पुष्प**-पु., वनस्पति० कदम्बः (रा.९.१७०; पृ.१९०)

**-प्रभव**-न., लवण० सैन्धवम् (सुउ.१२.४६)

**-प्रभूत**-न., लवण० सैन्धवम् (सुउ.११.१७)

**-प्रसूत**-न., लवण० सैन्धवम् (सुउ. १९.१७)

**-वार**-पु., वनस्पति० निर्गुण्डी (चसू. ३.२८; सुक. ६.१४-२७)

**-वारक**-पु., वनस्पति० निर्गुण्डी श्वेतपुष्पा (ड. सुक. ५.८४)

**-स्रोतःसमुत्थ**-वि., सिन्धुनद्याः प्रवाहात् प्रभूतं समुत्थं नाम उद्भूतम् (असंउ. ८.९२)

**सिन्धूत्थ**-न., लवण० सैन्धवम् (ध. २.२५; र. १६.२; पृ. ७३)

**सिन्धूत्थादिवर्ति**-स्त्री., वर्ति० सिन्धूत्थहिङ्गुत्रिफला-मधूकादिसिद्धा वर्तिः, इयमञ्जनेन श्लेष्माभिष्यन्दहरा (सुउ. ११.६-७)

**सिन्धूद्भव**-न., लवण० सैन्धवम् (सुसू. ४४.९; र. १२.१७-१८)

**सिन्धूद्भूत**-न., लवण० सैन्धवम् (सुचि. ९.१३)

**सिप्रायमाण**-वि., (परिव०) शिथिलीभवत् शैथिल्य-मापद्यमानम् "सिप्रायन्ते च गात्राणि लिङ्गं सद्यो मरिष्यतः" (चइ. १०.१९)

**सिम्बितिकाफल**-न., फल० बदरभेदः, सिञ्चितिका-फलम् (चसू. २७.१४२)

**सिरा**-स्त्री., शारीर० (चवि. ५.९) नाडी, प्रणाली (चशा. ७.१४) असृज उपधातुः (सुचि. ४.७) तन्निरुक्तिः-सरणात् सिराः (सुसू. ४.५) तदुत्पत्तिः असृजः सिराणामुत्पत्तिः (चचि. १५.१७) वायुर्मेदसः स्नेहमादाय सिरोत्पत्तिं कुर्यात्। तासां पाको मृदुः (सुशा. ४.३०) तासां प्रभवस्थानं नाभिः (सुशा. ७.४) केषाञ्चिन्मते हृदयमिति (काशा) मध्यमो रोगमार्गोऽयम् (अहृसू. १२.४८) गतिभेदात् ताश्चिविधाः-अधोगा ऊर्ध्वगास्तिर्यग्गा-श्चेति (सुशा. ९.९)

चतुर्विधाः सिराः-वातपित्तश्लेष्मरक्तवहभेदात्, सामान्यतः सर्वाः सिराः सर्ववहाः, भूयोव्यप-देशाद् वातवाहिन्यादिसंज्ञा (सुशा. ६.१८) तत्संख्या-मूलसिराश्चत्वारिंशत् वातपित्तकफ-रक्तवाहिभेदात् प्रत्येकं दश।

सप्त सिराशतानि, एताभिरिदं शरीरं जलहारिणीभि-राराम इव, कुल्याभिः केदार इव चाकुञ्चनप्रसारणा-दिभिर्विशेषैरुपस्निह्यतेऽनुगृह्यते च (चशा. ७.१४; सुशा. ७.३) तासु वातपित्तश्लेष्मरक्तवाहिन्यः प्रत्येकं पञ्चसप्तत्यधिकं शतम्, वातपित्तकफवाहि-नीनां स्वस्वस्थानगतानां प्रत्येकं पञ्चसप्ततिशतम्। रक्तवाहिन्यश्च यकृत्प्लीह्नोः पञ्चसप्ततिशतम्। तासां शाखासु चतुःशतं, कोष्ठे षट्त्रिंशत् शतं, मूर्धनि च चतुःषष्ट्यधिकं शतम्। तत्र शाखा-विभागे प्रतिशाखं वातपित्तकफरक्तवाहिन्यः प्रत्येकं पञ्चविंशतिः, एवं प्रतिशाखं सिराशतम्। तथा कोष्ठ-विभागे श्रोण्यां वातादिवहाः प्रत्येकमष्टौ इति मिलित्वा द्वात्रिंशत्, पार्श्वयोः प्रत्येकं चतस्र इति मिलित्वा षोडश, पृष्ठे प्रत्येकं षडिति चतुर्विंशतिः, उदरे प्रत्येकं षडिति चतुर्विंशतिः, प्रत्येकं दश च वक्षसीति चत्वारिंशत् सिराः। शिरोविभागे ग्रीवायां प्रत्येकं चतुर्दशेति षट्पञ्चाशत्, जिह्वायां प्रत्येकं नवेति षट्त्रिंशत्, नासिकायां प्रत्येकं षडिति चतुर्विं-शतिः, कर्णयोर्वातवहाश्चतस्रः पित्तश्लेष्मरक्तवहाश्च प्रत्येकं द्वे इति दश, नेत्रयोर्वातवहा अष्टौ पित्त-श्लेष्मरक्तवहाश्च प्रत्येकं दशेत्यष्टत्रिंशत् सिरा भवन्ति। एवं सप्तशतं सिराणाम्।

वातादिवहानां सिरावर्णाः–वातवहा वातपूरिता अरुणाश्च, पित्तवहा उष्णा नीलाश्च, कफवहाः स्थिरा गौर्यश्च, रक्तवहाश्च रोहिण्यो नात्युष्णशीतलाश्च ( सुशा. ७२०; असंशा. ६ )

वातादिवहानां सिराणां कर्माणि–प्राकृतो वायुः स्ववहाः सिराश्चरन् क्रियाणामप्रतिघातं बुद्धिकर्मणाममोहं च करोति, स एव कुपितः स्वाः सिराः प्रतिपद्य वातजान् रोगान् करोति। प्राकृतं पित्तं स्वाः सिराः संसर्पद् भ्राजिष्णुताऽत्र रुच्यग्निदीप्त्यरोगताश्च करोति। प्रकुपितं तु पित्तसंभवान् रोगान् करोति। प्राकृतः श्लेष्मा स्वाः सिराश्चरन्नङ्गेषु स्नेहं सन्धिस्थैर्यं बलमुदीर्णतां च करोति। स्वाः सिराः संचरद्रक्तं धातुपूरणं वर्णमसंशयस्पर्शज्ञानादि च करोति। कुपितं सच रक्तसंभवान् व्याधीन् करोति ( सुशा. ७; असंशा. ६ ) तत्रावेध्याः सिराः–शाखासु षोडश, कोष्ठे द्वात्रिंशन्मूर्ध्नि च पञ्चाशदिति मिलित्वाऽष्टानवतिरव्यध्याः सिराः

( असंशा. ३.३४; सुशा. ७.२१ )

**–कर्मन्**–न., उपक्रम० सिराव्यधनम्

( चचि. २६.२०४ )

**–कोथ**–पु., रोग० सिरापूतिभावः

( सुसू. २५.३-५ )

**–क्लेद**–पु., लक्षण० सिराणां क्लिन्नत्वम्

( चचि. २५.३१ )

**–गत**–वि., सिराश्रितम्, सिरास्थितम्

( चचि. २८.३६ )

**–ग्रह**–पु., रोग० अशीतिर्वातविकारेष्वेकः, वातो रक्तमाश्रित्य मूर्धधराः सिरा रूक्षाः सवेदनाः कृष्णाः कुर्यात् ( असंनि. १५ )

**–ज**–पु., रोग० ग्रन्थिः सिराजः, तल्लक्षणम्–अबलस्य व्यायामादिभिः क्रुद्धो वायुः सिराप्रतानं आक्षिप्य संपीड्य संकोच्य विशोष्य चोन्नतं वृत्तं ग्रन्थिं करोति। कृच्छ्रसाध्योऽसौ सरुजश्चलोऽरुक्च। अचलो महान् मर्मोत्थितश्च वर्जनीयः (सुनि. ११.८९)

**(–जा)**–स्त्री., नेत्ररोग० सिराजपिडका, नेत्रस्य शुक्लभागे सिरावृताः सिराजपिडका भवन्ति। सन्निपातजेयं साध्या च ( सुउ. ४.९ ) वास्तुस्थितसिरावृतत्वात् सिराजाः ननु साक्षात् सिराजाः।

**–जाताञ्जना**–(परिव०)स्त्री., नेत्ररोग० अञ्जननामिका, दाहतोदवती ताम्रा पिडका वर्त्मसंभवा। मृद्वी मन्दरुजा सूक्ष्मा ज्ञेया साञ्जननामिका (सुउ. ३.१७)

**–जाल**–न., सिराकृतं सिराणां जालम्, तानि चत्वारि, एकैकस्मिन् मणिबन्धे गुल्फे च

( चसू. १७.२१; सुशा. ५.१२ )

नेत्ररोग० तल्लक्षणम्–घनोन्नतं बृहद्रक्तं सिराणां जालं भवति। साध्योऽसौ

( असंउ. १३; सुउ. १.३७ )

**–जालगवाक्षित**–वि., सिराणां जालेन व्याप्तम् ( उदरम् ) चचि. १३.५५ )

**–तनुत्व**–न., लक्षण० सिराणामल्पत्वम्, सिराकार्श्यम्, उत्सेधादिभिः सिराणामदर्शनम्

( चचि. १२.११ )

**–त्व**–न., सिरास्वरूपम् ( सुशा. ४.२९ )

**–दग्ध**–न., उपक्रम० अग्निकर्मणा दग्धा सिरा कृष्णोन्नतव्रणा स्रावसंनिरोधवती च भवति ( सुसू. १२.८ ) स्थिते च रक्ते लसीकास्रावः

( असंसू. ४०.६ )

**–पूरण**–न., लक्षण० सिराणां स्थूलत्वम्, सिराविस्तृतिः

( सुनि. १. २७ )

**–पूर्णत्व**–न., लक्षण० रक्तवहस्रोतसां रक्तेनातीव पूरणम्, अतिवृद्धरक्तस्य लक्षणेष्वेकम्

( सुसू. १५.१४ )

**–प्रहर्ष**–पु., नेत्ररोग० सिराहर्षः ( सुउ. ६.३० ) सिरोत्पात उपेक्षितश्चेत् ता अक्षिराज्यो विशेषरक्तवर्णा भूत्वा ताम्राभमश्रु स्रवन्तोऽमुं सिराहर्षाख्यं नेत्ररोगं कुर्युः। तेन चक्षुः वीक्षणाक्षमं भवति

( सुउ. ६.३० )

**–मर्मन्**–न., मर्मप्रकारः सिराबहुलं मर्म, मर्माण्येतानि संख्ययैकचत्वारिंशत्, चतस्रो धमन्यो नीले द्वे मन्ये द्वे, अष्टौ मातृकाः, चत्वारि शृङ्गाटकानि, द्वेऽपाङ्गे, एका स्थपनी, द्वे फणे, द्वे स्तनमूले, द्वौ अपस्तम्भौ, द्वौ अपलापौ, एकं हृदयम्, एका नाभिः, द्वौ पार्श्वसन्धी, द्वे बृहत्यौ, चत्वारि लोहिताक्षाणि, चतस्र उर्व्यश्च ( सुशा. ६.७; असंशा. ७.२९ )

**–महारुज्**–वि., लक्षण० सिरासु महती पीडा यस्य सः ( चसू. १३.४८ )

**–मुख**–न., सिराद्वारम्, प्रतिरोमकूपमभ्यन्तरतः सूक्ष्मं सिरामुखमस्ति। अनेन सिरा स्वेदं विमुञ्चति ( अहृसू. २७.५०; काशा. )

**–मोक्ष**–पु., उपक्रम० सिराव्यधः ( चचि. ९.७७; सुउ.४२.५२-५३; सुचि.४.११; असंसू.७.२५१

**–लेखा**–स्त्री., सिराराजी ( असंशा. ९.१८ )

**–वर्णविभक्ति**–स्त्री., अध्यायसंज्ञा० ( सुशा. ७ )

**–विकार**–पु., सिराणामाकारान्तरेण परिणामः, यथा धमन्यः स्रोतांसि च ( सुशा. ९.३ )

**–विद्ध**–वि., यस्य सिराव्यधः कृतः सः विद्धसिरः, कृतसिराव्यधः ( सुशा. ८.२४ )

**–विमोक्षण**–न., ( परिव० ) उपक्रम० सिराव्यधः ( सुउ. ६२.३३ )

**–विरेक**–पु., उपक्रम० सिराव्यधः ( चचि. १२.८० )

**–विलग्न**–वि., सिरायां संलग्नम् ( अहसू. २८.२६ )

**–वृत्त**–न., खनिज० सीसकम् ( रा. १३.२१; पृ. २१० )

**–वेध**–पु., ( परिव० ) उपक्रम० सिराव्यधः ( असंसू. ३६.९; सुचि. १९.५५ )

**–व्यध**–पु., उपक्रम० सिराभ्यः शस्त्रकर्मणा रक्तमोक्षणम्,

सिराव्यधयोग्यकालः–वर्षासु व्यभ्रे ग्रीष्मेषु शीतले काले हेमन्तेषु मध्याह्ने च सिराव्यधो विधेयः शरदादिसाधारणः कालः स्वस्थानां कृते विहितः। सिराव्यधानर्हकालः–अतिशीतेऽत्युष्णे प्रवातेऽभ्रिते सिराव्यधो न विधेयः।

सिराव्यधविधिः–स्निग्धस्विन्नमातुरं यथादोषप्रत्यनीकं द्रवप्रायमन्नं भुक्तवन्तं यवागूं पीतवन्तं वा यथाकालमुपस्थाप्यासीनं स्थितं वा वस्त्रपट्टादीन् यन्त्रयित्वा नातिशिथिलं नातिगाढं शरीरप्रदेशमासाद्य समुचितेन शस्त्रेण सिरां विध्येत्। व्यध्यसिरं पुरुषं प्रत्यादित्यमुखमरत्निमात्रोच्छ्रिते आसने चोपवेश्य सक्थ्नोराकुञ्चितयोः कूर्परे निवेश्य सन्धिद्वयस्योपरि हस्तावन्तर्गूढाङ्गुष्ठकृतमुष्टी मन्ययोः स्थापयित्वा ग्रीवामुष्ट्योरुपरि यन्त्रणशाटकं परिक्षिप्य पश्चात्स्थितान्यपुरुषेणोत्तानेन वामहस्तेन शाटकान्तद्वयं ग्राहयित्वा दक्षिणहस्तेन सिरोत्थापनार्थं नात्यायतशिथिलं यन्त्रमावेष्ट्यासृक्स्रावणार्थं यन्त्रं पृष्ठमध्ये पीडयेति च तमादिशेत्। कर्मपुरुषं च वायुपूर्णमुखं स्थापयेत्। एष उत्तमाङ्गगतानां बाह्यसिराणां व्यधने यन्त्रणविधिः पादव्यध्यसिरस्य पादं समे स्थाने सुस्थितं स्थापयित्वाऽन्यं पादमीषत्संकुचितमुच्चैः कृत्वा व्यध्यसिरं पादं जानुसन्धेरधः शाटकेनावेष्ट्य हस्ताभ्यां प्रपीड्य गुल्फं, व्यध्यप्रदेशस्योपरि चतुरङ्गुले प्लोतादिना बद्ध्वा वा पादसिरां विध्येत्। उपरिष्टाद्धस्तौ गूढाङ्गुष्ठकृतमुष्टी सम्यगासने स्थापयित्वा सुखोपविष्टस्य पूर्ववद्यन्त्रं बद्ध्वा हस्तसिरां विध्येत्। गृध्रसीविश्वाच्योः संकुचितजानुकूर्परस्य श्रोणीपृष्ठस्कन्धेषून्नामितपृष्ठस्यावाक्शिरस्कस्योपविष्टस्य विस्फूर्जितपृष्ठस्य सिरां विध्येत्। उदरोरसोः प्रसारितोरस्कस्योन्नामितशिरस्कस्य विस्फूर्जितदेहस्य, पार्श्वयोर्बाहुभ्यामवलम्बमानदेहस्य, मेढ्रेऽनामितमेढ्रस्य, अधोजिह्वायामुन्नमितविदष्टजिह्वाग्रस्य, तालुनि दन्तमूलेषु चातिव्यात्ताननस्य, एवं यन्त्रोपायानन्यांश्च सिरोत्थापनहेतून् बुद्ध्याऽवेक्ष्य शरीरवशेन व्याधिवशेन च विदध्यात् (सुशा. ८.८; असंसू. ३६.११) व्याधिवशात् सिराव्यधस्थानानि–कफोदरे वामे बाहौ सिराव्यधः ( चचि. १३.७७ ) रक्तजदाहेऽप्रशाम्यति सति शाखाश्रितरोहिणीसिराणां व्यधः ( सुउ. ४७.६९ ) यकृद्दाल्युदरे दक्षिणबाहौ सिराव्यधः ( सुचि. १४.१५ ) पाददाहपादहर्षचिप्पविसर्पादिषु क्षिप्रमर्मेण उपरिष्टाद् व्यङ्गुले, श्लीपदे–वातजे गुल्फोपरि चतुरङ्गुले, पित्तजे गुल्फाधः, कफजे चाङ्गुष्ठे ( सुचि. १९.५२-५६ ) क्रोष्टुकशिरःखञ्जपङ्गुलवातवेदनासु जङ्घायां गुल्फस्योपरि चतुरङ्गुले, अपच्यामिन्द्रबस्तेरधस्ताद् व्यङ्गुले, गृध्रस्यां जानुसन्धेरुपर्यधो वा चतुरङ्गुले, गलगण्डे ऊरुमूलसंश्रिताम्, एवमेवेतरसक्थिबाहुषु सिराव्यधः, प्लीहोदरे वामबाह्वभ्यन्तरतो बाहुमध्ये कनिष्ठिकानामिकयोर्मध्ये वा, एवं यकृद्दाल्ये दक्षिणबाहौ, कासश्वासयोरप्येनाम्, शूलिन्यां प्रवाहिकायां श्रोण्योः समन्ताद् व्यङ्गुले, परिवर्तिकोपदंशशूकदोषशुक्रव्यापत्सु मेढ्रमध्ये ( सुशा. ८.१७ ) मूत्रवृद्ध्यां वृषणयोः पार्श्वे, दकोदरे नाभेरधश्चतुरङ्गुले सेवन्या वामपार्श्वे, अन्तर्विद्रधौ पार्श्वशूले च वामपार्श्वे कक्षास्तनयोरन्तरे, बाहुशोषावबाहुकयोरंसयोरन्तरे, तृतीयके त्रिकसन्धिमध्यगताम्, चतुर्थके अधःस्कन्धसन्धिगतामन्यतरपार्श्वसंस्थिताम्, अपस्मारे हनुसन्धिमध्यगताम्, उन्मादे शङ्खकेशान्तसन्धिगतामुरोपाङ्गललाटेषु ( चनि. ७.८ ) दन्तव्याधिषु जिह्वारोगेषु चाधोजिह्वायाम्, तालव्येषु तालुनि कर्णशूले कर्णरोगेषु च कर्णयोरुपरि समन्तात्, गन्धाग्रहणे नासारोगेषु च नासाग्रे, तिमिराक्षिपाकप्रभृतिषु नेत्ररोगेषूपनासिके ललाट्यामपाङ्ग्यां वा, मन्थप्रभृतिषु शिरोरोगेष्वेता एव सिरा वेध्याः।

( सुशा. ८.१७; असंसू. ३६.९ ) सिरामोक्षणे रक्तप्रमाणम्–बलिनो बहुदोषस्य वयःस्थस्य प्रस्थमात्रं नाम सार्धत्रयोदशपलानि रक्तं हरेत्। सिराव्यधसम्यग्योगातियोगादयः–सम्यग्विद्धा सिरा धारां स्रवेत्, यन्त्रे मुक्ते सति तस्याः स्रावरोधश्च भवति ( सुशा. ८.११ ) अतिविद्धा सशब्दं वहति, तत्स्रावश्च दुःखधारणो भवति । दुर्विद्धाऽल्पकालं वहति, तैलयुक्तैश्चूर्णैश्च स्रवेत्

( असंसू. ३६.१४-१५; अहसू. २७.३५ ) सिराविद्धवर्ज्यानि–क्रोधायासमैथुनदिवास्वप्नवाग्व्यायामयानाध्ययनस्थानासनचङ्क्रमणशीतवातातपविरुद्धासात्म्याजीर्णान्याबललाभाद्; मासं यावद्वा ( सुशा. ८.२४ ) सिराविद्धसेव्यानि–नात्युष्णशीतं लघु दीपनीयमन्नपानं हितम्। जठराग्निरक्षणं च हितम् ( अहसू. २७.५२ ) सिराव्यधयोग्याः–त्वग्दोषग्रन्थिशोफादिशोणितावसेकसाध्याविकारास्तथा चान्येऽनुक्ता अपक्का विकारा यथाभ्यासं यथान्यायं च सिराव्यधयोग्याः जायन्ते (सुसू. १४.३४; सुशा. ८.४) विषोपसर्गे चात्ययिके च सिराव्यधोऽप्रतिषिद्धः (सुशा. ८.५) सिराव्यधायोग्याः– बालस्थविररूक्षक्षतक्षीणभीरुपरिश्रान्तमद्यपाध्वस्त्रीकर्शितवमितविरिक्तास्थापितानुवासितजागरितक्लीबकृशगर्भिण्यः कासश्वासशोषप्रवृद्धज्वराक्षेपकपक्षाघातोपवासपिपासामूर्च्छाप्रपीडिताश्च सिराव्यधायोग्याः । तथा चाव्यध्याः, व्यध्या अप्यदृष्टाः, दृष्टा अप्ययन्त्रिताः, यन्त्रिता अप्यनुत्थिताः सिरा व्यधायोग्याः द्रष्टव्याः ( सुशा.८.३ ) अव्यध्याः सिराः– शाखासु षोडश, कोष्ठे द्वात्रिंशद् जत्रुणश्चोर्ध्वं पञ्चाशत् सिरा अव्यध्याः । तत्र प्रतिशाखं सविंश जालधरैका, उर्वीसंज्ञे द्वे, लोहिताक्षा चैका, एवं शाखासु षोडश । कोष्ठे, श्रोण्यामष्टौ, द्वे द्वे विटपयोः कटीकतरुणयोश्च, पार्श्वे द्वे ऊर्ध्वगे पार्श्वसन्धिगते; पृष्ठे चतस्र ऊर्ध्वगामिन्यौ द्वे द्वे बृहतीसिरे; उदरे चतस्रो मेढ्रोपरि रोमराजीमुभयतो द्वे द्वे; वक्षसि चतुर्दश हृदये द्वे, द्वे द्वे स्तनमूले, स्तनरोहितापलापस्तम्भेषूभयतोऽष्टौ; एवं कोष्ठे द्वात्रिंशत् । जत्रुण ऊर्ध्वम्, ग्रीवायां षोडश, द्वादश मर्मसंज्ञा अष्टौ मातृका द्वे नीले द्वे मन्ये द्वे, कृकाटिकयोर्द्वे विधुरयोः; हन्वोरुभयतश्चतस्रः सन्धिधमन्यौ द्वे द्वे; जिह्वायां चतस्रो रसवहे द्वे वाग्वहे च द्वे, नासिकायां चतस्र औपनासिक्यः, तालुन्येका नेत्रयोर्द्वेऽपाङ्ग्योः कर्णयोर्द्वे शब्दवाहिन्यौ; ललाटे सप्त केशान्तानुगतांश्चतस्रः, आवर्तयोर्द्वे, स्थपन्यां चैका; शङ्खयोर्द्वे शङ्खसन्धिगते; मूर्ध्नि चाष्टौ, द्वे उत्क्षेपयोः, पञ्च सीमन्तेषु, एका चाधिपतौ; एवं जत्रुण ऊर्ध्वं पञ्चाशत्। सिराव्यधव्यापदः–दुर्व्यधातिव्यधकुट्टिततिर्यग्व्यधाश्चत्वारो व्यधदोषाः ( असंसू. ३६.२२ ) दुष्टव्यधा विंशतिः–दुर्विद्धाऽतिविद्धा कुञ्चिता पिच्चिता कुट्टिताऽप्रस्रुताऽत्युदीर्णाऽन्ते विद्धा परिशुष्का कूणिता वेपिताऽनुत्थितविद्धा शस्त्रहता तिर्यग्विद्धाऽविद्धाऽव्यध्या विद्रुता धेनुका पुनःपुनर्विद्धा सिरास्नायवस्थिसन्धिमर्मसु विद्धा चेति । तत्र या सूक्ष्मशस्त्रविद्धाऽव्यक्तमसृक् स्रवति रुजाशोफवती च सा दुर्विद्धा, प्रमाणातिरिक्तविद्धायामन्तः प्रविशति शोणितं, शोणितातिप्रवृत्तिर्वा भवति, साऽतिविद्धाकुञ्चितायामप्येवं, कुण्ठशस्त्रप्रमथिता पृथुलीभावमापन्ना पिच्चिता, अनासादिता पुनःपुनरन्तयोश्च बहुशः शस्त्राभिहता कुट्टिता, शीतभयमूर्च्छाभिरप्रवृत्तशोणिताऽप्रसृता, तीक्ष्णमहामुखशस्त्रविद्धा, ऽत्युदीर्णा अल्परक्तस्राविण्यन्ते विद्धा, क्षीणशोणितस्थानिलपूर्णा परिशुष्का, चतुर्भागासादिता किञ्चित्प्रवृत्तशोणिता कूणिता, दुःस्थानबन्धनाद्वेपमानाया शोणितसंमोहो भवति सा वेपिता, अनुत्थित विद्धायामप्येवं, छिन्नाऽतिप्रवृत्तशोणिता क्रियासङ्गकरी शस्त्रहता, तिर्यक्प्रणिहितशस्त्रा किञ्चिच्छेषा तिर्यग्विद्धा बहुशः क्षता हीनशस्त्रप्रणिधानेनाविद्धा, अशस्त्रकृत्याऽव्यध्या, अनवस्थितविद्धा विद्रुता, प्रदेशस्य बहुशोऽवघट्टनादारोहद्व्यधा मुहुर्मुहुः शोणितस्रावा धेनुका, सूक्ष्मशस्त्रव्यधनाद्बहुशो भिन्ना पुनः पुनर्विद्धा, स्नाय्वस्थिसिरासन्धिमर्मसु विद्धा रुजां शोफं वैकल्यं मरणं चापादयति ( सुशा. ८.१८-१९) सिराव्यधप्रशस्तिः– शल्यतन्त्रे सिराव्यधश्चिकित्सार्धं मतः । स्नेहादिक्रियायोगैर्लेपनादिभिश्चाशान्ता व्याधयोऽनेन शाम्यन्ति (सुशा. ८.२२-२३) रक्तमोक्षणशीलानां त्वग्दोषग्रन्थिशोफाः शोणितजव्याधयश्च न भवन्ति ( सुसू. १४.३४ )

**–व्यधविधि**–पु., अध्यायसंज्ञा० ( असंसू. ३६.१, अहसू. २७ )

**–व्यधविधिशारीर**–न., अध्यायसंज्ञा० (सुशा. ८)

**–शुक्र**–न., नेत्ररोग० तल्लक्षणम्–सास्रैर्मलैर्जुष्टं कृष्णमण्डलं सतोददाहताम्राभिः सिराभिरवतन्यते

(सुउ. ५.६) तच्चानिमित्तोष्णशीताच्छघनाश्रुस्रुद-साध्यम् (असंउ. १३) तथा मध्ये छिद्रयुक्तमिव वर्तमानम्, अच्छिन्नमध्यमेवोन्नतमांसेन वेष्टितं चासाध्यम् (सुउ. ५.६)

**–संकोच**–पु., लक्षण० सिराणामाकुञ्चनम् (चसू. ५.९२)

**–संकोचन**–न., लक्षण० नाडीनामाकुञ्चनम् (चवि. २.७)

**–संज्ञपिटिका**–स्त्री., नेत्ररोग० सिराजपिटिका (असंउ. १३)

**–सन्ततगात्र**–वि., लक्षण० धमनीजालसन्ततः (ड. सुनि. २.१५)

**–स्तम्भ**–पु., लक्षण० व्रणोपद्रवभूतं सिराणां स्तब्धत्वम् (चचि. २५.२९)

**–स्फुटत्व**–न., सिराणां विवृतत्वम् (सुशा. २.४५)

**–हर्ष**–पु., नेत्ररोग० सिराप्रहर्षः (असंउ. १३) सिरोत्पात उपेक्षितश्चेत् ता एव राजीर्वर्धयन् साश्रुं सिराहर्षाख्यं नेत्ररोगं कुर्यात्। तेन चक्षुरुद्वीक्षणाक्षमं भवति (सुउ. ६.३०; असंउ. १३)

**सिराकुञ्चन**–न., लक्षण० सिराकुटिलता, सिरायाः कौटिल्यम् (सुनि. १.२७)

**सिरादिदाह**–पु., मधुस्नेहादिभिः सिरादीनां दहनम् (असंसू. ४०.३; अहृसू. ३०.४४)

**सिरानद्ध**–वि., लक्षण० सिराभिः समन्ततो व्याप्तम् (असंशा. ११.२१)

**सिरामय**–पु., सिरारोगः (चचि. २९.३९)

**सिरायाम**–पु., लक्षण० सिरास्वायाम इव पीडा (चचि. २३.१६७) सिराकर्षणम् (इन्दु. असंउ. ४३)

सिराप्रसरणम् (चचि. १२.१०)

सिराकर्षणम् (इन्दु. असंउ. ४३)

**सिरास्र**–न., सिरागतं रक्तम् (असंनि. ३.१७)

**सिरोत्थापन**–न., सिराणामुन्नामनम् (सुशा. ८.८)

**सिरोत्पात**–पु., नेत्ररोग० शोणितजोऽयम् (असंउ. १३) तल्लक्षणम्–अक्षिराज्यः सवेदना अवेदना वापि ताम्रा भवन्ति। मुहुर्विरज्यन्ति च (सुउ. ६.२९) नेत्रशुक्लभागेऽयं भवति; तत्र शोफाश्रूपदेहाश्च न सन्ति (असंउ. १३)

**सिह्लक**–पु., धूप० तुरुष्कः (ध. ३.२२; पृ. ९८)

**सिह्लसार**–पु., धूप० तुरुष्कः (रा. १२.३६; पृ. ९८)

**सीदन्ती**–वि., श्राम्यन्ती; श्रान्ता, अचेष्टमाना (अहृसू. २६.३९)

**सीधु**–पु., आसुत० (चसू. १५.७) द्रवद्रव्योभयप्रधानं मद्यम् (सुसू. ४५.१९७) इक्षुरसेन क्वथितेन धातक्यादिबद्धपाशः कालान्तरेण निष्पन्नः किञ्चिद्गुडघृतावापः सस्नेहः (ड.) सीधुगुणाः– कषायो मधुरः पाचनो दीपनश्च (सुसू. ४५.१८२) वातपित्तकरः स्नेहश्लेष्मविकारनुन्मेदःशोफोदरार्शोघ्नश्च (अहृसू. ५.७४) पक्वरसःसीधुगुणाः–बलवर्णकरः सरः शोफघ्नो दीपनो हृद्यो रुच्यः श्लेष्मार्शसां हितश्च (सुसू. ४५.१८४) अयं नेत्ररोगेषु सेकार्थमुपयुज्यते (असंउ. १९)

**–गन्ध**–पु., वनस्पति० बकुलः (ध. ५.१५४; पृ. २०२)

**–रस**–पु., वनस्पति० आम्रः (रा. ११.२, पृ. १७०)

**सीमन्त**–पु., केशमार्गः (चइ. ८.६; सुसू. ३१.१०) चतुर्दश सीमन्ताः, गुल्फजानुवङ्क्षणेषु त्रयः, एवं सक्थिबाहुषु च मिलित्वा चतुर्भिस्त्रिकैर्द्वादश, त्रिके एकः, एकश्च शिरसीत्येवं चतुर्दश (सुशा. ५.१६-१७) अष्टादशेति केचित्, तत्र पूर्वोक्ताश्चतुर्दश, श्रोणिकाण्डोपर्येकः, वक्षउपर्येकः, उदरोरःसंधाने एकः, अंसकूटोपर्येकश्च (ड. सुशा. ५.१७) वृद्धवाग्भटे गुल्फजानुवङ्क्षणमणिबन्धकूर्परकक्षास्वेकैकः, त्रिके एकः, पञ्च शिरसीत्यष्टादश (इन्दुः असंशा. ५.६७) विच्छेदः (हे. अहृसू. ७.६)

मर्म० शीर्षसन्धिः (सुशा. ६.२७) इदं स्थानतः शिरोमर्म, जातितः सन्धिमर्म; मानतश्चतुरङ्गुलप्रमाणं, संख्यया पञ्च, कालान्तरप्राणहरं च (ड. सुशा. ६.२७; असंशा. ७.२४) तत्रोन्मादभयचित्तनाशैर्मरणम् (सुशा. ६.२७)

**सीमन्तक**–पु., मर्यादारेखा (असंसू. ८.११)

**सीमन्तावर्तक**–पु., रिष्टलक्षण० चक्राकारा केशभूमिः (असंशा. ९.२२)

न., भेषज० सिन्दूरम् (रा. १२.१६०; पृ. ११६)

**सीरी**–स्त्री., वनस्पति० कलिकारी (ध. ४.९; पृ. १३५)

**सीवन**–न., शल्यतन्त्रोपक्रम० (चसू. ११.५५) व्रणस्य षष्ट्युपक्रमेष्वेकः, सूच्या सूत्रेण सह व्यात्तमुखव्रणादीनां संधानम् (सुचि. १.८) व्रणसीवनविषयाः–अपाकोपद्रुता मांसस्था विवृताश्च व्रणाः (सुचि. १.४५) सद्योव्रणा अभिघातजा व्रणाः, शस्त्रलिखिता मेदोजा ग्रन्थयः, कर्णयोर्लिखिता ह्रस्वाः पाल्यः, शिरोक्षिकूटनासौष्ठगण्डकर्णोरुबाहुषु

जाता व्रणा ग्रीवाललाटमुष्कस्फिङ्मेढ्रपायूदरादिषु गम्भीरप्रदेशेषु मांसलप्रदेशेषु च जाता व्रणाः ( अहृसू. २९.४९-५१ )

**( सीवनी )**–स्त्री., शारीर० प्रत्यङ्ग० सन्धिरेषा ( चचि. ३०.१७२) सप्त सीवन्यः–शिरसि विभक्ताः पञ्च, जिह्वा शेफसोश्चैकैका, ताः शस्त्रेण परिहरणीयाः ( सुशा. ५.१५; असंशा. ५.६५ )

**–विकल्प**–पु., सीवनविधिः सीवनविकल्पाश्चत्वारो गोष्फणिका तुन्नसेवन्या वेल्लितकं ग्रन्थिबन्धनमिति भेदात् ( असंसू. ३८.३८ )

**सीव्य**–न., अष्टविधशस्त्रकर्मस्वेकम्, सीवनीयम् ( सुसू. ५.५; असंसू. ३८.४१ )
वि., सीवितुं योग्यः सीवनार्हः, कर्तव्यसीवनः, ते च मेदःसमुत्था भिन्नाः सुलिखिताश्चलसन्धिव्यपाश्रिताद्या व्रणाः ( सुसू. २५.१६ )

**सीस**–न., खनिज० सीसकम् (चचि. ७.८८; र. २.१०४; रा. १३.२०; पृ. २०९)

**–सत्त्व**–न., भैषज्य० बोद्दारशृङ्गकम् ( र. ३.१६३ )

**सीसक**–पु., भटित्रकरणकाष्ठम् ( चसू. २६.८४ )
न., भैषज्य० सौवीराञ्जनम् ( चचि. १७.१२६ )
खनिज० शुद्धाशुद्धभेदेन द्विधा, तत्र शुद्धं सीसकं शीघ्रद्रावणशीलमतिगुरु छेदे कृष्णवर्णमिश्रोज्ज्वलवर्णं पूतिगन्धयुक्तं बहिर्भागे वर्णेन कृष्णं च एतद्विपरीतमशुद्धम् ( र. ५.१७८ )
तस्य शोधनम्–चुल्लीस्थे खर्परेऽग्निना सीसके द्रुते सति क्रमेण सिन्दुवारजटाकौन्त्यादिचूर्णं मुहुर्मुहुरल्पाल्पं क्षिपेत्। दर्व्या च मुहुश्चालयेत्। भस्मीभूतं तच्चूर्णमन्तराऽन्तरा तालवृन्तादिवायुनाऽपसार्य बहिः क्षिपेत्। ततस्तत् तन्निर्गुण्डीरसपूरिते सच्छिद्रमहाभारपिधानेन पिहिते चोलूखलादौ तादृशपात्रान्तरे वा दर्व्याऽन्तःक्षिपेत् तेनोत्प्लवनजबाधाभयं न स्यात्। एवं शुद्धं सीसकं मूर्च्छादिदोषकरं न भवेत् (र.५.१८०)
सीसकगुणाः– तिक्तं स्निग्धं दीपनमत्युष्णं वातकफघ्नं किञ्चित्पित्तलम् ( असंसू. १२.१६ )
प्रमेहतोयदोषघ्नमामवातनुच ( र. ५.१७९)
कटु कषायं लवणं लेखनं बल्यमर्शोघ्नं च ( ध. ६.२१; पृ. २०९ ) गरकृमिहरं पिपासाविषहृद्रोगपाण्डुहृच्च (सुसू. ३८.६२)
हिं.—सीसा, सीषक.
म.—शिसे.
गु.—शीसुं, काळुं सिसुं.
बं—सीसा, सीसे.
त.—करुनाकं.
फा.—अनुक्, सुर्व.

**–कूपिक**–न., नागधातुनिर्मिता कुपी ( र. १२-९९ )

**सीहुण्ड**–पु., वनस्पति० स्नुही ( ध. १.२३५; पृ. ५५ )

**सुकण्टका**–स्त्री., वनस्पति० कुमारी ( रापरि. ५.१२; पृ. ३४० )

**सुकन्द**–पु., वनस्पति० गुण्डकन्दः ( रापरि. ८.६३; पृ. ३६२ )
पलाण्डुः ( ध. ४.७१; पृ. १४८ )

**( सुकन्दा )**–स्त्री., वनस्पति० वन्ध्यकर्कोटकी ( रा. ३.२७३; पृ.४४ )
लक्ष्मणा ( रापरि. ७.५५; पृ. ३५२ )

**सुकन्दक**–पु. वनस्पति० मुखालुः ( रापरि. ७.२२; पृ. ३४९ )
धरणीकन्दः ( रापरि. ७.४२; पृ. ३५० )
वाराहीकन्दः ( रा. ७.१३६; पृ. १५२ )

**सुकन्दन**–पु., वनस्पति० बर्बरः ( रापरि. १०.४८; पृ. ३७२ )

**सुकन्दिन्**–पु., वनस्पति० सूरणः ( रा. ७.५; पृ. १६९)

**सुकन्या**–स्त्री., शर्यातिनृपतेः कन्या, अञ्जननिर्माणविधौ इयं देवतात्वेन पूजनीया ( असंसू. ८.९४ )

**सुकर**–वि., सुखसाध्यम् ( सुचि. ३.१५ )

**सुकर्णक**–पु., वनस्पति० हस्तिकन्दः ( रापरि. ७.३५; पृ. ३५० )

**सुकर्णी**–स्त्री., वनस्पति०आखुकर्णी ( रापरि. ३.२१; पृ. ३३१ )

**सुका**–स्त्री., वनस्पति० अतसी (ध.६.११४; पृ., २३१)

**सुकाण्डक**–पु., वनस्पति० काण्डीरः ( ध. ४.६२; पृ. १४६ )

**सुकान्त**–न., खनिज० कान्तलौहम् ( र. १७.६७ )

**सुकामा**–स्त्री., वनस्पति० त्रायमाणा (रा.५.३७८;पृ.५९)

**सुकार**–न., वनस्पति० व्रीहिः ( रा. १६.१०७; पृ. २२२ )

**सुकाष्ठक**–न., वनस्पति० देवदारु ( रा. १२.१०४; पृ. २१ )

**सुकाष्ठा**–स्त्री., वनस्पति० कट्वी ( रापरि. ३.४३; पृ. ३३३ )
काष्ठकदली ( रा. ११.११०; पृ. १४९ )

**सुकुन्द्र**–पु., वनस्पति० कुन्दुरुः ( ध. ३.१३१; पृ. १२१ )

**सुकुमार**–वि., मृदुदेहः ( सुसू. ४६.४४४ ) देहसौकुमार्यकरम् ( नवनीतम् ) ( ड. सुसू. ४५.९२ ) अल्पबलम् ( भेषजादि ) ( चवि. ८.९४ ) वनस्पति० श्यामाकः ( ध. ६.८८; पृ. २२५ ) चम्पकः ( ध. ५.१४२; रा. १०.२४०; पृ. १९९ ) कङ्गुः ( रा. १६.१४२; पृ. २२५ ) राजमाषः ( रा. १६.१३५; पृ. २२४ )

**सुकुमारक**–पु., इक्षुभेदः, पौण्ड्रकः ( ध. ४.१२०; पृ. १५८ ) द्र० 'इक्षु' वनस्पति० व्रीहिः ( रा. १६.७८; पृ. २२० ) न., वनस्पति० तमालपत्रम् ( रा. ६.७९; पृ. ८० )

–**तैल**–न., स्नेह० मधुकद्राक्षाखर्जूरपरूषकादिसिद्धं तथा जीवनीयादिगणसंसिद्धं तैलम्, एतन्नस्याञ्जनपानेषु बस्तौ च प्रयुज्यते। चरकमहर्षिप्रणीतमिदं सर्ववातव्याधिषु प्रशस्यते। किञ्चेदं मन्यास्तम्भहनुग्रहसर्वाङ्गैकाङ्गवातक्षतक्षीणक्षतज्वरवातास्रनाशनमारोग्यबलपुष्टिदं स्वरवर्णकरं च ( चचि. २९.९६-१०२ )

**( सुकुमारा )**–स्त्री., वनस्पति० त्रिसन्धिः ( रापरि. १०.३७; पृ. ३७१ ) वनमल्लिका ( ध. ५.४०; पृ. १९८ ) जाती ( रा. १०.२३१; पृ. १९८ ) कदली ( ध. ४.७५; पृ. १४८ ) स्पृक्का ( रा. १२. ११४; पृ. १०८ )

**सुकुमारोपचारता**–स्त्री., मृदुभेषजोचितत्वम् ( चवि. ८.१०६ )

**सुकूर्च**–पु. न., सुष्ठुतमः कूर्चः, यस्मिन् यस्य वा तद् ( दन्तधावनम् ) असंसू. ३.१५ )

**सुकोशक**–पु., वनस्पति० कोशाम्रः ( ध. ५.९; पृ. १७० )

**सुकोशा**–स्त्री., वनस्पति० कोशातकी ( रा. ७.२८८; पृ. ४६ )

**सुक्त**–न., काञ्जीभेदः ( चसू. २४.७; अहसू. २८.४२ )

**सुक्षेत्र**–वि., शोभनशरीरः डल्हणोक्तदशक्षेत्रविषयकोत्तरोत्तरशोभनत्ववान् ( सुस. ३५.५; असंशा. ८.३३ )

**सुख**–वि., व्यापद्रहितम् ( अहसू. १९.६९ ) स्वास्थ्योत्पादकम् ( सुसू. ४६.४३७ ) न., अनुकूलवेदनीयम् ( चवि. ८.३९; सुशा. १.१७ ) यदाल्हादं जनयति तत्, आत्यन्तिकतादात्विकभेदेन सुखं द्विविधम्। तत्रात्यन्तिकं सुखं मोक्षः, तादात्विकं कामादिश्च ( अरु. अहसू. १.२ ) आरोग्यम् ( चसू. १.५५ ) वनस्पति० ऋद्धिः ( ध. १.१४५; पृ. ३४ )

–**दा**–स्त्री., वनस्पति० शमी ( रा. ८.१५३; पृ. १८८ )

–**पक्ति**–स्त्री., सुखेन पाकः ( अहसू. १६.२३ )

–**भोजिन्**–पु., वनस्पति० व्रीहिः ( रा. १६.११४; पृ. २२२ )

–**रोपणीय**–वि., यस्य सुखेन रोपणं भवति तत् ( स्फिक्पायुप्रजननादि ) ( सुसू. २३.५ )

–**वर्चस्**–पु., खनिज० सर्जिकाक्षारः ( ध. २.२०; पृ. ७२ )

–**साध्य**–वि., सुखेन साध्यः ( चसू. २९.७ ) अगम्भीरः ( चसू. १०.१३ ) सुखोपायः ( सुसू. ३५.४६-४७ ) भेषजादिना यः शान्तो भवति, ( स व्याधिः ) अयमल्पकालेन साध्यते ( चनि. ८.३३ )

–**स्पर्श**–पु., क्षार० टङ्कणम् ( र. १९.६९-७२ )

**सुखवी**–स्त्री., वनस्पति० कुडुडुञ्चिका, कारवेल्लम् ( असंसू. १४.३ )

**सुखानुबन्धिन्**–वि., स्थिरत्वेन सातत्येन वा सुखोत्पादकः ( सुसू. ४६.५२१; असंसू ५.४८ )

**सुखाम्बु**–न., सुखोदकम् ( चचि. १६.६१ ) ईषदुष्णं जलम् ( ड. सुउ. ४४.२५ )

**सुखाम्भस्**–न., सुखोदकम्, सुखोष्णं जलम् ( र. ३०.९१ )

**सुखार्जिक**–पु., खनिज० सर्जिकाक्षारः ( रा. ६.२६; पृ. ७२ )

**सुखालुका**–स्त्री., वनस्पति० अन्यादोडी ( रापरि. ४.४१, पृ. ३३८ )

**सुखावती**–स्त्री., योग० इयं वर्तिः कतकशङ्खसैन्धवादिनिर्मिता सती तिमिरपटलकाचादिनेत्ररोगनाशिनी ( चचि. २६.२५२-२५३ )

**सुखिन्**–वि., अनातुरः, व्याधिरहितः ( चशा. २.६ )

**सुखोचित**–वि., सुखी, अभ्यस्तसुखः ( सुसू. ४६.४४४-४४५ )

**सुखोदक**–न., ईषदुष्णोदकम् पिष्टमयस्यास्वेदमनुपानम् ( सुसू. ४६. ४२५ ) वसन्ततौ शौचविधाविदं प्रशस्तम् ( चसू. ६.२४; अहसू. ३.१३ ) अनेनाधःकायपरिषेको बलकरः ( अहसू. २.१७ )

**सुखोद्भवा**–स्त्री., वनस्पति० आदित्यभक्ता ( ध. ४.९८; पृ. १५३ )

**सुखोपाय**–वि., सुखो नाम सुकर उपायो यस्य तत् ( चक. १.३ )

**सुखोषित**–वि., सुसुखम् उषितो नाम स्थितः, अर्थात् निशायां सुप्तः ( असंसू. २७.११ )

**( सुखोषिता )**–स्त्री., वनस्पति० मूर्वा (रा. ३.११; पृ. ९)

**सुखोष्ण**–वि., सुखकरमेव औष्ण्यं यस्य ( सुचि. ८.२४ )

**सुखोष्णोदकगण्डूष**–पु., कोष्णजलगण्डूषः, मुखगौरवे सति तल्लाघवापादनोऽयमुपक्रमः (अहृसू. २२.१०)

**सुगतिनिम्न**–वि., सुगत्या गमनशीलः, सदाचारपरः ( असंसू. ३.१२८ )

**सुगन्ध**–पु., वनस्पति० भूस्तृणम् ( रापरि. ८.४२ )
चणकः ( ध. ६.१०१ )
धवलयावनालः ( रा. १६.१६९ )
न., वनस्पति० नीलपद्मम् ( रा. १०.२४८ )
जवादि ( रापरि. १२.७ )
खनिज० गन्धकः ( रा. १३.१६७ )
भैषज्य० अयमगदः छत्रदुन्दुभ्यादिलेपाद्देहविलेपनाच्च दर्शनश्रवणस्पर्शैः सर्वविषहरः ( असंउ. ४७)
कफजकृमिः ( असंनि. १४.५२ )
मनःप्रियो गन्धः ( सुसू. ४६.५२१ )
मूलविषम् ( सुक. २.५ )

**( सुगन्धा )**–स्त्री., वनस्पति० रुद्रजटा ( रापरि. ३.२४ )
माधवी ( रापरि. १०.२९ )
गङ्गापत्री ( रापरि. १०.४५ )
नाकुली ( ध. ४.१०३; पृ. १५४ )
महाशालिः ( रा. १६.१०८; पृ. २२२ )
स्पृक्का ( रा. १२.११३; पृ. १०८ )
सल्लकी ( रा. ११.१५५; पृ. १२२ )
रास्ना ( र.१२.१०१–१०३ )
शतपुष्पा ( रा. ४.३; पृ. ६९ )
शेफालिः ( रा. ४.११९; पृ. १५० )
वन्ध्यककर्कोटकी ( रा. ३.२७४; पृ. ४४ )
सुवर्णयूथा ( रा. १०.२५१; पृ. २०० )
जीरक० कृष्णः ( रा. ६.१०५; पृ. ८३ )
ग्रैष्मी ( ध. ५.१४०; पृ. १९८ )
गन्धनाकुली ( इ. असंउ. ४२ )
सर्पसुगन्धा ( सुक. ५.७६-७८ )

–**केसर**–पु., वनस्पति० रक्तशिग्रुः द्र० ‘ शिग्रु ’ ( रा. ७.६६; पृ. १४२ )

–**पञ्चक**–न., वनस्पति० कङ्कोलकं पूगफलं लवङ्गकुसुमं जातीफलं कर्पूरश्चेति (ध. ७.२४; पृ. ३०४)

–**पत्रा**–स्त्री., वनस्पति० रुद्रजटा ( रापरि. ३.२४; पृ. ३३१ )

–**पिष्ट**–न., योग० चन्दनागुरुकर्पूरकुङ्कुमानां पिष्टेन पारदमूर्च्छनं विधीयते। तेन श्रीशिवो विलिप्यते। ‘ पूर्वजन्मकृतं पापं सद्यो नश्यति देहिनाम्। ’ ( र. १.२७ )

–**प्रसव**–पु., वनस्पति० शालिः ( ध. ६.६९; पृ. २१९ )

–**भूतृण**–न., वनस्पति० गुणाः–तदिदं ईषत्तिक्तं मधुरं शीतं रसायनं कफपित्तघ्नं श्रमापहं सुगन्धि च ( रापरि. ८.४४.; पृ. ३६० )

–**मूला**–स्त्री., वनस्पति० सठी ( ध. १.६१; पृ. १८ )
रास्ना ( ध. १.२७० ) पद्मचारिणी ( रा. ५.१३१; पृ. १५२ )

**सुगन्धक**–पु., शालिभेदः द्र० ‘ शालि ’ (चसू. २७.९)
गन्धशालिः देवशालिः ( सुसू. २०.५ )
तृण० द्रोणपुष्पः ( सुसू. ३८.१८-१९ )
मूलविष० ( असंउ. ४० )
खनिज० गन्धकः ( र. २५.२० )

**सुगन्धाढ्या**–स्त्री., वनस्पति० व्रीहिः ( रा. १६.११८; पृ. २२३ )
मल्लिका ( रापरि. १०.२३ ) वृत्तमल्लिका ( रा. १०.२२७; पृ. १९७ )

**सुगन्धामलक**–न., वनस्पति० सर्वौषधिकयुक्ताः शुष्का आमलकत्वचः ( ध. ७.४१; पृ. ३०४ )

**सुगन्धि**–पु., वनस्पति० गुण्डकन्दः ( रापरि. ८.६३; पृ. ३६२ )
सुमुखः ( रा. १०.८८; पृ. १४६ )
तुम्बुरुः ( रा. ११.६६; पृ. ७८ )
मुस्ता ( रा. ६.५९; पृ. १५ )
चन्दनभेदः बर्बरकः ( रा. १२.१७; पृ. ९५ )
वनस्पति० धान्यकम् ( रा. ६.९८; पृ. ८२ )
भैषज्य० तुरुष्कः ( ध. ३.२३; पृ. ९८ )
शालि० गन्धशालिः ( रा. १६.९३; पृ. २२१ )

–**त्रिफला**–स्त्री., वनस्पति० जातीफलम्, एला लवंगफलं च ( ध. ७.५; पृ. २९९ )

–**मूलक**–न., वनस्पति० उशीरम् ( रा. १२.२७; पृ. ९७ )

**सुगन्धिक**–न., वनस्पति० एलवालुकम् ( रा. ४.१३४; पृ. १११ )
उशीरम् ( रा. १२.२६; पृ. ९७ )

**( सुगन्धिका )**–स्त्री., वनस्पति० सर्पगन्धिका ( इ. असंउ. ४२; सुक. ५.६८-७३

उत्पलसारिवा ( सुचि. १७.८ )
**सुगन्धिनी**–स्त्री., वनस्पति० सुवर्णकेतकी
( धपरि. ५.१; पृ. २०४ )
**सुगृहा**–स्त्री., पक्षि० पीतमस्तका प्रतुदजातीयाऽसौ
( ड. सुसू. ४६.६७ )
**सुगृहीत**–वि., सुष्ठु हस्तेन धृतम् ( सुसू. ८.१४
**सुग्रन्थि**–पु., वनस्पति० चोरकः
( रा. १२.१२८; पृ. ११० )
पिप्पलीमूलम् ( रा. ६.११३; पृ. ८४ )
**सुचञ्चु**–स्त्री., वनस्पति० क्षुद्रचञ्चुः
( रापरि. ४.२२; पृ. ३३६ )
**सुचञ्चुका**–स्त्री., वनस्पति० बृहच्चञ्चुः
( रापरि. ४.२०; पृ. ३३६ )
**सुचर्मन्**–पु., वनस्पति० भूर्जः
( रापरि. ९.२२; पृ. ३६५ )
**सुचित्रबीजा**–स्त्री., वनस्पति० विडङ्गम्
( रा. ६.१६; पृ. ७१ )
**सुचित्रा**–स्त्री., वनस्पति० चिर्भटम्
( रा. ७.२६२; पृ. ४२ )
**सुचौक्ष**–न., सुविशुद्धम् ( चचि. १(४).२१ )
**सुजाता**–स्त्री., खनिज० सौराष्ट्री
( रा. १३.१६५; पृ. ११६ )
**सुजीवन्ती**–स्त्री., वनस्पति० हेमा
( रापरि. ३.१३; पृ. ३३० )
**सुतजीवक**–पु., वनस्पति० पुत्रजीवः
( रापरि. ९.३१; पृ. ३६६ )
**सुतपादुका**–स्त्री., वनस्पति० हंसपादि
( रा. ५.१६७; पृ.१५६ )
**सुतश्रेणी**–स्त्री., वनस्पति० दन्ती ( चक. १२.३ )
गुणाः – कटुश्चक्षुष्याऽऽखुविषव्रणदोषनेत्रामय-
निकृन्तनी ( रापरि. ४.१६; पृ. ३३६ )
**सुतार**–पु., खनिज० पारदः ( सुक. ३.१४–१५ )
**सुतिक्त**–पु., वनस्पति० पर्पटः ( रा. ५.६६; पृ. १६ )
**(सुतिक्ता)**–स्त्री., वनस्पति० कोशातकी ( ध. १.१९२;
पृ. ४६)
**सुतिक्तक**–पु., वनस्पति० निम्बः ( ध. १.२९; पृ. १३ )
**सुतिन्तिडी**–स्त्री., वनस्पति० अम्लिका
( ध. ५.३३; पृ. १७४ )
**सुतीक्ष्ण**–पु., वनस्पति० शिग्रुभेदः द्र० ' शिग्रु '
( रा. ७.६४; पृ. १४२ )
न., वनस्पति० मरिचम् ( र. २५.११९ )

**सुतीक्ष्णक**–पु., वनस्पति० मुष्ककः
( रा. ११.२२१; पृ. १९६ )
**सुतीर्थ**–वि., शोभनं तीर्थं पवित्रजलं यस्य सः
( जलाशयादिः ) ( अहृसू. १३.८ )
**सुतुङ्ग**–पु., वनस्पति० नारिकेलः
( ध. ५.७४; पृ. १८३ )
**सुतृण**–पु., वनस्पति० मज्जरः
( रापरि. ८.५२; पृ. ३६१ )
उखलः ( रापरि. ८.४६; पृ. ३६० )
**सुतेजस्**–पु., वनस्पति० सुवर्चला
( रा. ४.१४४; पृ. १५३ )
**सुतैला**–स्त्री., वनस्पति० तेजोवती
( रा. ३.३९२; पृ. ६१ )
**सुत्वक्त्व**–न., शोभना त्वग्यस्य सः तत्त्वम्
( अहृसू. २.८ )
**सुदग्ध**–वि., सम्यग् दग्धम् ( अहृसू. ३०.४५-४६ )
**सुदग्धिका**–स्त्री., वनस्पति० दग्धा
( रापरि. ९.२८ पृ. ३६६ )
**सुदण्ड**–पु., वनस्पति० वेत्रः
( रापरि. ७.१४; पृ. ३४८ )
**सुदर्भा**–स्त्री., वनस्पति० इक्षुदर्भा
( रापरि. ८.४७; पृ. ३६१ )
**सुदल**–पु., वनस्पति० मुचकुन्दः
( रापरि. १०.२५; पृ. ३७० )
**( सुदला )**–स्त्री., वनस्पति० तरणी
( रा. १०.२४४; पृ. २०० )
शालिपर्णी ( रा. ४.११३; पृ. २३ )
**सुदारु**–न., वनस्पति० देवदारुः ( ध. १.७७; पृ. २१ )
**सुदीन**–पु., सुष्ठु नाम सुतरां म्लानः ( सुउ. ६२.१३ )
**सुदीर्घा**–स्त्री., वनस्पति० चीणाकर्कटी.
( रा. ७.२६०; पृ. ४२ )
**सुदृढत्वचा**–स्त्री., वनस्पति० काश्मरी
( रा. ९.१४८; पृ. २९ )
**सुधा**–स्त्री. वनस्पति० स्नुही ( चक. १०.१३ ) सेहुण्डः
( सुचि. १८. ५२. रा. ८.३५५, पृ. ५६ )
शालिपर्णी ( रा. ४.११४ )
अमृतम् ( चचि. १०७८; र. २.९४–९६ )
क्षारचूर्णम्, गाङ्गेयिका
( चसू. १.७० र. १२.३८–३९ )
भैषज्य० तवराजशर्करा ( रा. १४.१६५; पृ. ९२ )
–**कल्प** ( पु. ) अध्यायसंज्ञा सुधायाः कल्पः
( चक. १०.१ )

**–काण्ड**–न; स्नुह्याः काष्ठम् तद्दग्ध्वा कृतः क्षारः असौ ग्रहण्यां क्षारगुटिकायां प्रयोज्यः ( चचि. १५.१८३-१८४ )

**–क्षीर**–न., स्नुहीक्षीरम्, उदरे उपयुक्तम् ( चचि. १३.१३८ )

**–पयस्**–न., स्नुहीक्षीरम् क्षीरविरेचनानां मध्ये सुधापयः श्रेष्ठम् ( सुसू. ४४.३-४ )

**–शर्करा**–स्त्री., सुधापाषाणः ( सुसू. ११.११ )

**–सार**–पु., योग० पारदगन्धकादियुक्तः कुटजटुण्टुकादि क्वाथभावितः सिद्धयोगः, अयं दीपनपाचनग्राहीहृद्यरुचिकरातिसारविसूचीज्वरांश्च नाशयेत् ( र. १६.११-१९ )

**–स्रवा**–स्त्री., वनस्पति० रुदन्ती ( रापरि. ५.१५ पृ. ३४१ )

**सुधांशुभ**–न.,–भैषज्य० मौक्तिकम् ( रा. १३.६७; पृ. ३१८ )

**सुधांशुरत्न**–न., भैषज्य० मौक्तिकम् ( रा. १३.६७; पृ. २१० )

**सुधान्य**–न., वनस्पति० व्रीहिः ( रा. १६.१०१; पृ. २२२ )

**सुधाश्मन्**–पु.. सुधायाः खण्डः ( अहृसू. ३०.१३ )

**सुधूपक**–पु., निर्यास० श्रीवेष्टकः ( रा. १२.१९३; पृ. १२१ )

**सुधूम्य**–पु., वनस्पति० अगरुः (रा. १२.३९; पृ. ९९ )

**सुनन्दा**–स्त्री., वनस्पति० रास्ना ( असंसू. ८.७३ )

**सुनन्दिनी**–स्त्री., वनस्पति० आरामशीतला ( रापरि. १०.५२ पृ. ३७२ )

**सुनादक**–पु., भैषज्य० शङ्खः ( रा. १३.२४३; पृ. १३० )

**सुनाल**–न., वनस्पति० लामज्जकम् (ध. ३.८६; पृ.११३)

**सुनासिका**–स्त्री., वनस्पति० काकनासा ( रा. ३.४०; पृ. १३९ )

**सुनिद्रुम**–पु., वनस्पति० टिण्टुकः ( रा. ९.१४१; पृ. २८ )

**सुनिरूढ**–वि., सम्यग्दत्तबस्तिः ( असंसू. २८.४४ ) तस्य लक्षणम्–यस्याऽऽस्थापनानन्तरं विट्पित्तकफवायवः क्रमेण गच्छन्ति तथा लाघवं चोपजायते, सः सुनिरूढो विज्ञेयः ( सुचि. ३८.१०-११ )

**–लिङ्ग**–न., सुनिरूढलक्षणम् प्रसृष्टविण्मूत्रसमीरणत्वादि ( चसि. १.४१-४२ )

**सुनिर्घोषा**–स्त्री., वनस्पति० जिङ्गिणी ( ध. परि. ३.२२; पृ. १३२ )

**सुनिर्धूत**–न., सुष्ठु धूतम् ( चशा. ८.४१ )

**सुनिशित**–न., सुतीक्ष्णम् ( सुसू. ८.१४; अहृसू. २९.१७ )

**सुनिषण्ण**–पु., वनस्पति० शिखालिका, चतुष्पर्णी, इत्यपरे (ड. सुउ.४५.१६., अहृसू. ६.७२; असं कास चि. ४)

**–चाङ्गेरीघृत**–न., इदम् अर्शोघ्नघृतम् ( चचि. १४.२३४-४२ )

**–देह**–वि., सुविश्रान्तशरीरः ( ड. सुचि. ३८.३ )

**सुनिषण्णक**–पु., वनस्पति० जलशाकः अयं ग्राही, त्रिदोषघ्नश्च ( चसू. २७.८८; सुसू. ४६.२६२-६५ )
वनस्पति० शिखालिका ( सुसू. २०.५ )
चतुष्पत्री ( सुउ. १७.५० )
शितिवारः ( ध. १.१५५; पृ. ३६. अहृसू. ८.४२; असं.अर्शचि. १०)

**सुनिष्पूत**–वि., सुगालितः ( चवि. ७.२५ )

**सुनील**–पु., वनस्पति० दाडिमः (रा. ११.९४; पृ. ८२)
असनः ( ध. ५.१२५; पृ. १९५ )

**( सुनीला )**–स्त्री., वनस्पति० चणिका ( रापरि. ८.६५; पृ. ३६२ )
गर्मोटिका ( रा परि. ८.५१; पृ. ३६१ )
अतसी ( रा. १६.१८७; पृ. २३१ )

**–पुष्पा**–स्त्री., वनस्पति० अतसी ( ध. ६.११४; पृ. २३१ )

**सुनीलक**–पु., वनस्पति० नीलबीजः ( रा. ९.२०९; पृ. १९५ )

**सुन्दर**–पु., वनस्पति० तिलकः ( रा.१०.२६७पृ.२०२ )
न., भैषज्य० कान्तलोहम् ( र. १६.१२२-२५ )

**( सुन्दरी )**–स्त्री., वनस्पति० काकमाची ( र. ४.३६; पृ. १३८ )

**सुपत्रक**–पु., वनस्पति० शि ुः ( रा. ७.६०; पृ. १४२ )

**( सुपत्रा )**–स्त्री., वनस्पति० पालक्यम् ( रापरि. ७.७२; पृ. ३५३ )
रुद्रजटा ( रा परि. ३.२४ पृ. ३३१ )
शालिपर्णी ( रा. ४.११५; पृ. २३ )
शमी ( रा. ८.१५३; पृ. १८८ )
शतावरी ( रा. ४.४३८; पृ. ६७ )

**( सुपत्रिका )**–स्त्री., वनस्पति० जन्तुका ( रा. ३.१२७; पृ. १५१ )
शालिपर्णी ( ध. १.८८; पृ. २३ )

**सुपरिग्रहण**–न., बलवतो नियन्त्रणम् ( सुचि. ६.४ )
**सुपरिमार्जित**–न., सुष्ठु निर्मार्जितम्
( ड. सुचि. ३५.१५ )
**सुपरिस्रुत**–वि., वस्त्रादिभिः सुष्ठु गालितं (दधि) तद्गुणाः-
वातघ्नं कफकृत् स्निग्धं बृंहणं नातिपित्तकृत्
भक्ताभिलाषकृतं च ( सुसू. ४५.७६-७७ )
**सुपर्ण**–पु., पक्षि० गरुडः ( सुक. ४.२१ )
वनस्पति० लघुजातीयो राजवृक्षः ( र. ३०.४२ )
**( सुपर्णी )**–स्त्री., वनस्पति० पलाशी
( रापरि. ३.४९; पृ. ३३३ )
रेणुका ( रा. ६.१००; पृ. १०६ )
**सुपर्णक**–पु., वनस्पति० सप्तपर्णः (ध. ३.८०; पृ. ११२)
**( सुपर्णिका )**–स्त्री., वनस्पति० शालिपर्णी
( रा. ४.११३; पृ. २३ )
**सुपर्णाक्षी**–स्त्री., वनस्पति० वत्सादनी ( र. ३०.४३ )
**सुपाकिनी**–स्त्री., वनस्पति० गन्धपलाशः
( रा. ६.९०; पृ. १९ )
**सुपाक्य**–न., भैषज्य० लवणविशेषं बिडम्
( ध. २. २८ पृ. ७४ )
**सुपार्श्व**–पु., वनस्पति० प्लक्षः ( ध. ५.८१; पृ. १८५ )
**सुपिङ्गला**–स्त्री., वनस्पति० ज्योतिष्मती
( रा. ३.३९५; पृ. ६१ )
जीवन्ती ( रा. ३.१७८; पृ. ३३ )
**सुपिष्ट**–वि., सुचूर्णितम् ( सुचि. १.३७ )
**सुपीत**–पु., वनस्पति० किङ्किरातः
( रा. १०.४१५; पृ. ६४ )
न. वनस्पति गर्जरम् ( ध. ४६९ पृ. १४७)
**सुपुट**–पु., वनस्पति० कोलकन्दः
( रापरि. ७.३८ पृ. ३५० )
विष्णुकन्दः ( रा परि. ७.४० पृ. ३५० )
**सुपुष्करा**–स्त्री., वनस्पति० पद्मा
( ध. ४. ९०; पृ. १५२. )
**सुपुष्प**–पु., वनस्पति० अर्कभेदः श्वेतार्कः
( रा. १०.२९ पृ. १३७ )
वनस्पति० हरिद्रुः ( रा. परि ९.२६ पृ. ३६६ )
वनस्पति० मुचकुन्दः (रापरि. १०.२५. पृ. ३७०)
वनस्पति० राजतरणी ( रा. १०.२४६, पृ. २०० )
न., वनस्पति० प्रपौण्डरीकम् (ध. ३.९२; पृ. १४४)
आहुल्यम् ( रा. परि. ४.३३; पृ. ३३६ )
तूलम् ( रा. ९८६; पृ. १.८१ )



**( सुपुष्पा )**–वनस्पति स्त्री० द्रोणपुष्पी
( रा. परि. ५.४८; पृ. ३४४ )
मिश्रेया ( रा. ४.६; प. ६९ )
कोशातकी (रा. ७.२८८; पृ. ४६)
**( सुपुष्पी )**–स्त्री., वनस्पति० शङ्खपुष्पी
( रा. ३.१७०; पृ. १५७ )
**सुपुष्पक**–पु., वनस्पति० शिरीषः
( रा. ९.१८८; पृ. १९२ )
**( सुपुष्पिका )**–स्त्री., वनस्पति० शतपुष्पा
( रा. ४.२; पृ. ६९ )
जीर्णदारुः ( रा. ३.१५७; पृ. १५५ )
**सुपूजका**–स्त्री., वनस्पति० व्रीहिः
( रा. १६.१०८; पृ. २२२ )
**सुपूरक**–पु., वनस्पति० मातुलुङ्गः
( ध. ५.२२; पृ. १७२ )
**सुपूरणी**–स्त्री., वनस्पति० शाल्मली
( ध. ५.१२७; पृ. १९५ )
**सुप्त**–वि., लक्षण० मन्दक्रियम् ( चसू. १७.३५ )
अचेतनम् ( सुसू. १२.१० )
मन्दवेदनम् ( चचि. ५.४३ )
**–ता**–स्त्री., अधःकायस्य सुप्तिः ( का सिद्धि. ५.९ )
चरणयोः स्पर्शाज्ञानम् ( चनि. १.२१ )
**–त्व**–न., नखमक्षिकामशकादिदंशवेदनानभिज्ञत्वम्
( सुसू. २२.११ )
**–त्वक्**–वि., सुप्ता नाम बधिरा त्वग्यस्य सः,
बधिरत्वक् ( सुसू. ३३.७ )
**–रूक्षच्छवि**–स्त्री., जराशोषे लक्षणविशेषः। यद्यपि
सुप्तरूक्षत्वं त्वचि भवति तथापि उपचारात्
प्रभायां बोद्धव्यम् " क्षीयति श्लेष्मणा हीनं गौरवा-
रुचिपीडितः, संप्रस्रुतास्यनासाक्षः सुप्तरूक्ष-
मलच्छविः " ( सुउ. ४१.२० )
**–सिरा**–स्त्री., निःस्पन्दा सिरा ( चचि. २८.३६ )
**–सुप्त**–न., सुप्तवत् सुप्तमचेतनम् ( चचि. ७.५६ )
**सुप्ताङ्गता**–स्त्री., लक्षण० गात्राणां स्पर्शाज्ञता, सुप्तानि
च तान्यङ्गानि च, तेषां भावः ( सुउ. ३९.३५ )
**सुप्ति**–स्त्री., लक्षण० स्पर्शाज्ञता ( सुसू. २८.२१;
सुनि. १.२५; अहसू. ७.१९ )
**–वात**–पु., रक्तावरणक्रिया सुप्ततया लक्षितो वातः
( सुचि. ४.१२ ) तस्य चिकित्सा–सुप्तिवाते नाम
स्पर्शाज्ञानलक्षणे भिषजा पुनःपुनरल्पाल्पं
रक्तमोक्षः करणीयः। अल्पाल्पस्रावणेन वातप्रकोपो

न स्यादिति। रक्तमोक्षानन्तरं च स व्रणः आगार-धूमतैललवणैर्लेपनीयः (सुचि. ४.१३)

**सुप्रतिभा**-स्त्री., आसुत० सुरा (रा. १४.३०३; पृ. २५४)

**सुप्रतिष्ठित**-पु., वनस्पति० उदुम्बरः (रा. ११.१३६; पृ. १८६)

**सुप्रभ**-पु., वनस्पति० पद्मकः (ध. ३.८८; पृ. ११३)

**(सुप्रभा)**-स्त्री., वनस्पति० बाकुची (रा. ४.२२६; पृ. ३८)

**सुप्रलून**-वि., निस्तुषीभूतः (चवि. ७.२५)

**सुप्रशस्त**-पु., वनस्पति० बनबर्बरिका (ध. ४.५८; पृ. १४५)

**सुप्रसन्नक**-पु., वनस्पति० वनबर्बरिका (रा. १०.८८; पृ. १४६)

**सुप्रसरा**-स्त्री., वनस्पति० प्रसारणी (ध. १.२८९; पृ. ६६.)

**सुफल**-पु., वनस्पति० बदरम् (रा. ११.१५७; पृ. १८९)
कर्णिकारः (रा. ९.३३६; पृ. ५३)
दाडिमः (रा. ११.९३; पृ. ८२)
आम्रः (ध. ५.३; पृ. १६९)

**(सुफला)**-स्त्री., वनस्पति० इन्द्रवारुणी (रा. ३.३७१; पृ. ५८)
कूष्माण्डः (रा. ७.२६९; पृ. ४२)
कदली (रा. ११.१०६; पृ. १४८)
काश्मरी (रा. ९.१४८; पृ. २९)
उत्तरापथिका (रा. ११.७७; पृ. १८०)

**सुफा**-पु., वनस्पति० इङ्गुदी (रापरि. ८.१७; पृ. ३५८)
पल्लिवाहः (रापरि. ८.५६; पृ. ३६२)

**सुफेन**-न., भैषज्य० समुद्रफेनः (रा. ६.२१७; पृ. १२६)

**सुबाधक**-वि., कृच्छ्रसाध्यम् (कीटदष्टम्) (ड. सुक. ८.४१)

**सुबाहु**-पु., राज० यत्पुत्रा राजतैलोपयोगेन गत्यायुर्बल-सुखभाजो बभूवुः (का. फक्करोग चि.)

**सुबीज**-पु., वनस्पति० खस्तिलः (रा. ४.१९०; पृ. २३२)
बदरम् (रा. ११.१५७; पृ. १८९)

**सुबुद्धि**-पु., प्राचीनो रसाचार्यः (र. ६.४९)

**सुभग**-पु., वनस्पति० अशोकः (रा. १०.२७१; पृ. २०३)
कुरबकः (रा. १०.४१३; पृ. ६४)
चम्पकः (रा. १०.२३८; पृ. १६९)
न., शैलेयम् (रा. १२.१३१; पृ. १११)
पु., टङ्कणक्षारः (रा. ६.२८; पृ. ७३)
वि., मनोरमाकारः (सुशा. ४.७२)

**(सुभगा)**-स्त्री., वनस्पति० सुवर्णकदली (रा. ११.११४; पृ. १४९)
कैवर्तिका (रापरि. ३.३५; पृ. ३३२)
भैषज्य० कस्तूरिका (रा. १२.४६; पृ. १००)
वनस्पति० वार्षिकी (ध. ५.१३६; पृ. १९७)
प्रियङ्गुः (रा. १२.२९; पृ. ९७)
शालिपर्णी (रा. ४.११४; पृ. २३)
नीलदूर्वा (रा. ८.२२७; पृ. १६३)
सुरसा (रा. १०.७७; पृ. १४४)

**सुभगाह्वा**-स्त्री., वनस्पति० हरिद्रा (रा. ६.८१; पृ. १८)

**सुभगेच्छा**-स्त्री., सौभाग्येच्छा वशीकरणवांछा (सुक. १.४-६)

**सुभद्रा**-स्त्री., वनस्पति० सठी (ध. ६.८७; पृ. १९)
शमी (रा. ८.१५२; पृ. १८८)
काश्मरी (रा. ९.१४६; पृ. २९)

**सुभिक्ष**-वि., धनधान्यसंपन्नम् (असंसू. ३.११५)

**(सुभिक्षा)**-स्त्री., वनस्पति० धातकी (ध. ३.९०; पृ. ११३)
सुबुभुक्षा (चशा. ८.२७)

**सुभूतिगौतम**-पु., ऋषि० (सुशा. ३.३२)

**सुभृङ्ग**-पु., वनस्पति० भृङ्गराजः (र. ११. १०८)

**सुभृत**-वि., अतिमेदुरम् (इ. असंचि. १२)

**सुभोजक**-पु., वनस्पति० व्रीहिः (रा. १६.११३; पृ. २२२)

**सुमकरन्द**-पु., वनस्पति० कुन्दः (ध. ५.१५०; पृ. २०१)

**सुमङ्गल्य**-न., वनस्पति० चिडा (ध. १.८२; पृ. २२)

**सुमदन**-पु., वनस्पति० आम्रः (रा ११.३; पृ. १७०)

**सुमन**-पु., वनस्पति० गोधूमः (रा.१६.१५१; पृ. २२७)

**(सुमना)**-स्त्री., वनस्पति० शतपत्री (ध. ५. १५१; पृ. २०१)

**सुमनत्**-स्त्री., वनस्पति० जातीपुष्पम् (ड. सुउ. ३९.२३२)
उदकीर्यः (रा. ९.१८०; पृ. १९१)

**सुमनस्**-न., वनस्पति० जाती (चसू. ३.४; सुसू. ३७.१२)

**(सुमनः)-कोरक**-पु., जातीमुकुलकः (चचि. २६.२४१)

–पत्रिका–स्त्री., वनस्पति० जातिपत्री
(ध. ३.३३; पृ. १०२)
–फल–न., जातीफलम् (सुसू. ४६.४८५;
रा. १२.६७; पृ. १०२)
(सुमनो)–मुकुल–न., वनस्पति० जातिकलिका
(सुसू. ३७.३१)
**सुमनादिकषाय**–पु., कल्प० जातीसौमनस्यायनीहरिद्रादिभिः सिद्धः कषायोऽयं वमनोपयोगी
(चवि. ८.१३५)
**सुमनादिशोधनतैल**–न., व्रणशोधनतैलम्, सुमनारुष्कराङ्कोठसप्तपर्णकल्ककषायसिद्धं तैलम्। कफजवृद्धौ भिन्नायां व्रणशोधनार्थमुपयुज्यते
(सुचि. १९.१२-१४)
**सुमनाह्वय**–न., खनिज० कांस्यम् (रा.१३.२४;पृ. २१०)
**सुमालिन्**–पु., वनस्पति० भूस्तृणम्
(रापरि. ८.४२;पृ. ३६०; रा.८.७२; पृ. १४३)
**सुमुख**–पु., वनस्पति० पर्णासभेदः द्र० 'वनबर्बरिका'
गुणाः– अयं सुगन्धो नातिकटुको दोषोत्क्लेशकरो रोचनश्च (चसू. २७.१७३) कटुरुष्णः सुगन्धिः कफवातघ्नः पार्श्वशूलविषश्वासकासदौर्गन्ध्यवान्तिभूतहरश्च (ध. ४.५८; पृ. १४५)
हिं.—वनबबरी.
म.—सुगन्ध आजवला.
बं.—वनबाबुइ तुलसी.
ता.—एलुमिच्चं तुळच्चि.
पु., वनस्पति० तुलसीभेदः द्र० 'तुलसी'
(सुसू. ४६.२३३-३४; चक. १.२५;
सुसू. ३८.१८-१९)
बर्बरः (रापरि. १०-४८; पृ. ३७२)
सितार्जकः (रा. १०.८५; पृ. १४५)
**सुमुखागत**–वि., मुखपरंपरागतः (र. ५.१४४)
**सुमुष्टि**–पु., वनस्पति० विषमुष्टिः
(रापरि. ४.३९; पृ. ३३८)
**सुमूल**–पु., वनस्पति० श्वेतशिग्रुः द्र० 'शिग्रु'
(रा. ७.६४; पृ. १४२)
(**सुमूला**)–स्त्री., वनस्पति० शालिपर्णी
(रा. ४.११५. पृ. २३)
**सुमूलक**–न., वनस्पति० गर्जरम्
(रा. ७.९८; पृ. १४७)
**सुमेघनाद**–वनस्पति० मेघनादस्तण्डुलीयो वा
(र. ११.१०८)

**सुर**–पु., भूताधिपतिविशेषः (असंउ. ७)
वनस्पति० देवदारुः (र. ११.९०–९२)
(**सुरा**–)स्त्री., आसुत० अनुद्धृतमण्डा, असौ कृशासक्तमूत्रग्रहण्यर्शोविकारिणां हिता, स्तन्यरक्तक्षयेषु प्रशस्ता, वातघ्नी च (चसू. २७.१७९) गुणाः–सुस्वादुस्तिक्ता कटुरम्ला सकषायोष्णा तीक्ष्णा रूक्षा सूक्ष्मा लघुः दीपनरोचनतुष्टिपुष्टिहृद्यसरस्वरवर्णकरी, रक्तपित्तदूषणमूत्रशोधनकरी, वातकफघ्नी, शूलाऽनिद्राऽतिनिद्राकासाऽर्शोग्रहणीश्वासप्रतिश्यायहरा च
(ध. ६.२५५ पृ. २५१;
सुसू. ४५.१७८-१७९; अहृसू. ५.६७)
श्रमहराणां श्रेष्ठा (चसू. २५.४०) कृशानामनुपानार्थमुपयुज्यते (सुसू. ४६.४२९)
परिपक्वान्नसन्धानसमुत्पन्नां सुरां जगुः
(चसू. २७.३२३)
पैष्टी पिष्टभवा सुरा (सुउ. ४२.६४-६५)
काललवणयुक्ता सुरा वातशूले प्रशस्ता
(सुउ. ४२.९२)
शालिपिष्टकृतो मद्यः (सुसू. ४५.१७५-१७६)
–काष्ठ–न., वनस्पति० देवदारुः (सुउ. ११.६)
–कृता–स्त्री., वनस्पति० गुडूची (रा. ३.१; पृ. ८)
सुरसा (र. २७.५२)
–तुङ्ग–पु., वनस्पति० सुरपुन्नागः
(रापरि. १०.१०; पृ. ३६८)
–दारु–पु., वनस्पति० देवदारुः (चसू. ३.८)
महाकषायवर्गे स्तन्यशोधनगणे एकं द्रव्यम्
(चसू. ४.१२)
अनुवासनोपगगणे एकं द्रव्यम्
(चसू. ४.१३; ध. १.७७; पृ. २१)
वृक्ष० सरलदेवदारः, देवाह्वः (सुचि. १७.४४)
–दालिका–स्त्री., वनस्पति० देवदाली
(र. १८.७२-७३)
–दाली–स्त्री., वनस्पति० देवदाली (र. ५.१५१)
–द्रुम–पु., वनस्पति० देवदारुः, अपस्मारशमने सिद्धार्थघृते उपयुक्तम् (सुउ. ६१.३१)
महानलः (ध. ४.१४२; पृ. १६२)
–धूप–पु., निर्यास० रालः (रा. १२.१७७; पृ. ११९)
–ध्वज–पु., शक्रध्वजः, इन्द्रधनुः (चइ. १२.७२)
–नाल–पु., वनस्पति० महानलः
(ध. ४.१४२; पृ.१६२)
–पर्ण–न., वनस्पति० पलाशः
(रापरि. १०.५०; पृ. ३७२)

(-पर्णी )-स्त्री., वनस्पति० पलाशी
( रा परि. ३.४९; पृ. ३३३ )
-पर्णिका-स्त्री., वनस्पति० सुरपुन्नागः
( रा परि. १०.१०; पृ. ३६८ )
-पुन्नाग-पु., वनस्पति० सुरपर्णिका, गुणाः-मधुरः, शीतः, सुगन्धिः, देवताप्रसादनकरः, पित्तनाशनः, भूतविद्रावणश्च ( रा परि. १०.१०; पृ. ३६८ )
-पुष्पी-स्त्री; वनस्पति० अजगन्धा
( रा. ४.१५३; पृ. ९० )
-प्रिय-पु., वनस्पति० अगस्त्यः
( रा. परि. १०.१३ पृ. ३६९ )
-प्रिया-स्त्री., वनस्पति० जाती
( रा. १०.२३१; पृ. १९८ )
सुवर्णकदली ( रा. ११.११५; पृ. १४९. )
-मृत्तिका-स्त्री., खनिज० सौराष्ट्री
(ध. ३.१०६; पृ. ११६)
-मेदा-स्त्री., वनस्पति० महामेदा
( रा. ५.१६३; पृ. ३१ )
-राजबस्ति-पु., इन्द्रबस्तिः (सुचि. १८.२६)
-लता-स्त्री., वनस्पति० ज्योतिष्मती (र. २७.११८)
तेजोवती (रा. ३.३९२; पृ. ६१)
-वल्लभा-स्त्री., वनस्पति० श्वेतदूर्वा
( रा. ८.२३०; पृ. १६३. )
-वारुणी-स्त्री., वनस्पति० इन्द्रवारुणी
( र. २४.१४० )
-श्रेष्ठा-स्त्री., वनस्पति० ब्राह्मी
( रा. ५.१४७; पृ. १५४ )
-संभवा-स्त्री., वनस्पति० सुवर्चला
( रा. ४.१४४; पृ. १५३ )
-सर्षपक-पु., वनस्पति० देवसर्षपकः
( रापरि. ९.४२; पृ. ३६७ )
सुरक्तक-पु., वनस्पति० क्षुद्राम्रः ( ध. ५.९; पृ. १७० )
न., सुवर्णगैरिकम् ( रा. १३.२३३; पृ. १२९ )
सुरङ्ग-पु., वनस्पति० नारङ्गः ( रा. ११.२४; पृ. १७३)
न., खनिज० हिङ्गुलम् ( रा. १३.४७; पृ. २१५ )
( सुरङ्गा )-स्त्री., वनस्पति० कैवर्तिका
( रा परि. ३.३५; पृ. ३.३२ )
( सुरङ्गी )-स्त्री., वनस्पति० काकनासा
( ध.४.२५;पृ. १३९ )
-द-न., वनस्पति० कुचन्दनम्
( रा.१२.१२; पृ. ९४ )

-धातु-पु., खनिज० गैरिकम्
( रा. १३.२३१; पृ. १२८ )
सुरङ्गक-पु., वनस्पति० कुचन्दनम्
( ध. ३.६; पृ. ९४ )
( सुरङ्गिका )-स्त्री., वनस्पति० पोतकी
( ध. परि. ४.५; पृ. १६८ )
सुरटी-स्त्री., खनिज० वङ्गम् ( ध. ६.१३; पृ. २०८ )
सुरत-न., स्त्रीसंभोगः ( र. १.६२ )
सुरभि-पु., वनस्पति० तुलसी ( सुसू. ४६.२३३ )
गन्धतृणम् ( रापरि. ८.४४; पृ. ३६० )
स्त्री., वनस्पति० सुरसा ( रा. १०.७८; पृ. १४४ )
रुद्रजटा ( रापरि. ३.२४, पृ. ३३१ )
पाची ( रापरि. १०.४६; पृ. ३७१ )
सल्लकी ( अहृसू. २०.३७; ध. ३.१३५; पृ. १२२ )
बर्बरिकम् ( रा. १२.१७; पृ. ९५ )
मुरा ( ध. ३.३७; पृ. १०९ )
बकुलः ( रा. १०.२६२; पृ. २०२ )
शमी ( रा. ८.१५२; पृ. १८८ )
चम्पकः ( ध. ५.१४२, पृ. १९९ )
कदम्बः ( रा. ९.१७०; पृ. १९० )
प्राणि० गौः ( सुउ. ५७.९; र. ३०.६८ )
निर्यास० रालः ( र. १८.२१-२८; रा. १२.१७७)
गन्धशालिः ( रा. १६.९३; पृ. २२१ )
ग्रष्मी ( ध. ५.१४०; पृ. १९८ )
वि., सुगन्धिः ( सुसू. ४६.३४६ )
-गन्ध-न., वनस्पति० तमालपत्रम्
( रा. ६.८०; पृ. ८० )
पु., खनिज० गन्धकः ( र. २२.१६७ )
-( गन्धा )-स्त्री., वनस्पति० जाती
( रा. १०.२३१; पृ. १९८ )
-त्रय-न., खनिज० हरितालमनःशिलागन्धकाश्चेति त्रयाणां समूहः ( र. २१.१६१ )
-त्वक्-स्त्री., वनस्पति० भद्रैला (रा. ६.७०; पृ. ७९)
-पत्रा-स्त्री., वनस्पति० जम्बूः (ध. ५.८३; पृ.१८५)
-स्रवा-स्त्री., वनस्पति० सल्लकी
( रा. ११.१९५; पृ. १२२ )
सुरभी-स्त्री., वनस्पति० पर्णासभेदः
( चक. चचि. २३.२४३ )
वनस्पति० शूकशिम्बा ( चसू. ५.६५ ) जम्बूः
( ध. ५.८३; पृ. १८५ )
तुलसी ( ध. ४.५०; पृ. १४४ )

**सुरम्भिका**-स्त्री., वनस्पति० सुवर्णकदली
(रा. ११.११४; पृ. १४९)

**सुरस**-पु., वनस्पति० तुलसीभेदः द्र० 'तुलसी'
गुणाः- पित्तकृत् कफवातघ्नः पूतिगन्धहा हिक्का-कासविषश्वासपार्श्वशूलविनाशनः (चसू. २७.१६९; सुसू. ४६.२३३; र. १२.४०-४१)
गन्धतृणम् (रापरि. ८.४४; पृ. ३६०)
निर्यास० मोचरसः (रा. ८.२१५; पृ. १९६)
कणगुग्गुलुः (रा. १२.१८६; पृ. १२०)
स्त्री., वनस्पति० तुलसी (असंउ. ४२)
न., वनस्पति० त्वक् (रा. ६.७६; पृ. ७९)
निर्यास० बोलम् (रा. ६.११६; पृ. १०८)

(**सुरसा**)-स्त्री., वनस्पति० तुलसी
(ध. ४.५०; पृ.१४४; चवि. ७.१७; सुउ. ६२.३०)
अस्या रसो नेत्ररोगेषूपयुज्यते (असंउ. २०)
मिश्रेया (रा. ४.६; पृ. ६९)
मूर्वा (इन्दु. असंउ. २८)
ब्राह्मी (रा. ५.१४८; पृ. १५४)
रास्ना (रा. ६.३९६; पृ. ६२)

(**सुरसी**)-स्त्री., वनस्पति० श्वेतनिर्गुण्डी
(सुसू. ३८.१८)
**-पत्रक्षार**-पु., सुरसापत्राणि दग्ध्वा कृतः क्षारः
(चचि. १८.१७१)
**-पुष्प**-न., वनस्पति० तुलसीमञ्जरी (र. २७.११९)
**-प्रसव**-न.,वनस्पति० सुरसमंजरी (इन्दु. असंउ.४४)
**-मञ्जरी**-स्त्री., पर्णासभेदः (चक. चचि. २३.१०१)

**सुरसाग्रज**-न., वनस्पति० सुरसपुष्पम्
(इन्दु. असंउ. ४३)
तुलसीपल्लवम् (सुक. ८.६८)

**सुरसादिकषाय**-पु., द्रव्यकषायः आस्थापनार्थमुपयुज्यते
(सुचि. ११.७)

**सुरसादिगण**-पु., द्रव्यगण० सुरसा श्वेतसुरसा फणिज्झकार्जकभूस्तृणसुगन्धकसुमुखकालमालकुठेरककासमर्दक्षवकखरपुष्पविडङ्गकट्फलसुरसीनिर्गुण्डीकुलाहलोन्दुरुकर्णिकाफञ्जीप्राचीबलकाकमाच्यो विषमुष्टिकश्चेति (सुसू. ३८.१८-१९)

**सुरा**-स्त्री., शालिपिष्टकृतं मद्यं (अहृसु. ५.६७)
**-कल्प**-पु., आसुत० माषशालिपिष्टकृतं वैरेचनिकमूलभावितं मद्यम्, लोहितवर्णा पिष्टकिण्वकल्केन किञ्चित्कलुषा (ड. सुसू. ४४.३१-३४)
**-कोष्ठी**-स्त्री., मद्यनिर्माणाय कृता कोष्ठी (र. ७.६)
**-मण्ड**-पु., न., सुरायाः उपरितनोऽच्छो भागः
(ड. सुउ. २८.४)
**-मेह**-पु., रोग० कफजोऽयम्, अस्मिन्नरः सुरातुल्यमुपरि प्रसन्नमधः सान्द्रं मेहति (असंनि. १०.१३)
अस्मिन् निम्बकषाय उपयुज्यते (सुचि. ११.९; सुनि. ६.१०)

**सुराख्य**-न., वनस्पति० देवदारुः (सुउ. ४१.४८)

**सुरानन्द**-पु., रसाचार्येषु सप्तविंशतिसंख्याकेष्वन्यतमो रससिद्धिप्रदायकः (र. १.२-५)

**सुरायस**-न., खनिज० कान्तलोहम् (र. १५.६८)

**सुरार्ह**-न., वनस्पति० हरिचन्दनम्
(रा. १२.१९; पृ. ९५)

**सुरार्हक**-पु., वनस्पति० बर्बरः (रापरि.१०.४८;पृ.३७२)

**सुरालय**-पु., देवगृहम् (अहृसू. २.३८)

**सुराला**-स्त्री.,वनस्पति० अतिविषा
(इन्दु. असंउ. ४४; अहृसू. १५.४)

**सुराष्ट्रक**-पु., धान्य० कुलित्थः (ध. ६.१०५; पृ. २२८)

**सुराष्ट्रज**-पु., धान्य० मुद्गः (रा. १६.१२९; पृ. २२४)

(**सुराष्ट्रजा**)-स्त्री., खनिज० सौराष्ट्री
(ध. ३.१०५; पृ. ११६)
तुवरमृत्तिका (सुचि. १.६०)

**सुराष्ट्रोद्भवा**-स्त्री., खनिज० सौराष्ट्रिका (सुचि. २५.३८)

**सुरासव**-पु., आसुत० तीव्रमदो वदनप्रियो वातघ्नश्च। यस्मिन्नासवे जलस्थाने सुरा एवोपयुज्यते, स सुरासवः (चसू. २७.१८७) सुरया सूयते तोयकार्यं क्रियते यस्मिन् सः (सुसू. ४५.१८७)

**सुराह्व**-पु., वनस्पति० हरिद्रुः (रापरि. ९.२६; पृ.३६६)
देवदारुः (चसू. ३.३; ध. १.७६; पृ. २१)

**सुरूप**-न., वनस्पति० तूलम् (रा. ९.८६; पृ. १८१)

(**सुरूपा**)-स्त्री., वनस्पति० वार्षिकी
(ध. ५.१३६; पृ. १९७)
शालिपर्णी (रा. ४.११५; पृ. २३)
भार्ङ्गी (रा. ६.९६; पृ. २०)

**सुरेचन**-पु., योग० अष्टौ भागा निस्तुषजयपालस्य, शुण्ठ्यास्त्रयो, मरिचगन्धकाभ्यां द्वौ द्वौ, टंकणादेकः पारदाच्चैक इत्येतेषां मर्दनाज्जायते। मात्रा-गुञ्जा। अनुपानम्-शीताम्बु। फलम्-गुल्मजलोदरप्लीहनाशः (र. १९.६)

**सुरेज्या**-स्त्री., वनस्पति० ब्राह्मी
(रा. ५.१४८; पृ. १५४)
सुरसा (रा. १०.७७; पृ. १४४)

**सुरेन्द्र**–न., सुवर्णम् कुटजमित्यन्ये, वाद्यप्रलेपार्थमुपयुज्यते ( ड. सुक. ३.१४-१५ )

**सुरेन्द्रकन्द**–पु., वनस्पति० वज्रकन्दः (सुसू.४६.३०५)

**सुरेशलुप्त**–न., रोग० क्षुद्रकोष्ठरोगः, इन्द्रलुप्तम् ( चसू. ३.७ )

**सुरेश्वर**–पु., इन्द्रः ( चसू. १.२१ )

**सुरेष्ट**–पु., वनस्पति० वसुकः (रापरि. ५.३७; पृ.३४३) सुरपुन्नागः ( रापरि. १०.१०; पृ. ३६८ )

**सुरेष्टक**–पु., निर्यास० सर्जकः (रा. ९.२०५; पृ. १९४)

**सुलघु**–वि., नितरां लघु सुपचत्वेन अगुरु यथा पुराणरक्तशाल्यादि ( ड. सुउ. ३९.१४५ )

**सुलङ्घित**–वि., सम्यग्लङ्घनवान् ( पुरुषः ) ( सुउ. ३९.१०४-१०५ )

सुलङ्घितस्वरूपम्-अधःप्रवृत्तवातपुरीषमूत्रः, बुभुक्षातृडसहः, अङ्गगौरवादिरहितः प्रसन्नान्तःकरणः, प्रसन्नेन्द्रियः सर्वाक्षमः एवं लक्षणको नरः सर्वान् लङ्घनगुणान् सम्यगाप्तवानिति ज्ञेयम् ( सुउ. ३९.१०४-१०५ )

**सुलभा**–स्त्री., वनस्पति० धूम्रपत्रा ( रा. परि. ५.८; पृ. ३४० )

माषपर्णी ( रा. ३.१७२; पृ. ३२ )

वार्षिकी ( रा. १०.२२९; पृ. १९८ )

**सुललितचक्षुस्**–वि., किञ्चिन्मिलितलोचनः ( ड. सुउ. २७.८ )

**सुलोमन्**–स्त्री., वनस्पति० ताली ( रा. परि ३.३७; पृ. ३३२ )

**सुलोमा**–स्त्री., वनस्पति० मांसी ( रा. १२.१३९; पृ. १५३ )

**सुवंश**–पु., वनस्पति० श्वेतेक्षुः ( रा. १४.१८१; पृ. १५८ )

**सुवक्त्र**–पु., वनस्पति० सुमुखः (ध. ४.५८, पृ. १४५)

**सुवदन**–पु., वनस्पति० सुमुखः ( ध. ४.५८; पृ. १४५ )

**सुवर्च**–पु., खनिज० सर्जिकाक्षारः (ध. २.२०; पृ. ७२)

**सुवर्चल**–न., क्षार० संचलम् ( र. १८.१८५ )

**( सुवर्चला )**–स्त्री., वनस्पति० आदित्यभक्ता ( सुसू. ४६.२६२, चचि. १९.३२ ) सूर्यावर्त ( सुसू. ३७.३० )

ब्राह्मी ( रा. ५.१४७; पृ. १५४ )

**सुवर्चिक**–पु., खनिज० सर्जिकाक्षारः (ध. २.२०; पृ. ७२)

**( सुवर्चिका )**–स्त्री., खनिज० सर्जिकाक्षारः (चसू. २.२३; सुचि. ६.१२)

**सुवर्ण**–न., खनिज० पार्थिवद्रव्येष्वेकं, हिरण्यम् (चसू. १.७०) त्रप्वादिगणे एकम् (सुसू.३८.६२) गुणाः–स्वादु हृद्यं बृंहणीयं रसायनं दोषत्रयापहं शीतं चक्षुष्यं विषसूदनं च ( सुसू. ४६.३२६ ) स्निग्धं कषायं च ( असंसू. १२.१२ ) रुच्यचक्षुष्यायुष्यकरं प्रज्ञाकरं वीर्यकरं स्वर्यं कान्तिकरं च ( ध. ६.१; पृ. २०५ ) तस्य शोधनम्–सैन्धवगैरिकेण सह सुवर्णपत्राणि कर्षप्रमाणानि शरावरुद्धं कृत्वा प्रहरार्धपर्यन्तं ध्मापयेत्। एवं सुवर्णं पूर्णवर्णं भवति ( र. ५.१५ ) तस्य मारणम्– प्रथमतः कण्टकवेध्यानि सुवर्णपत्राणि कृत्वाऽनन्तरं तानि पत्राणि बीजपूररसमर्दितेन पारदभस्मना लेपयेत्। ततः दशसंख्याकानि कुक्कुटपुटानि दातव्यानि। एभिर्दशपुटैः सुवर्णं म्रियते ( र. ५.१७ ) गुणाः–आयुष्करं स्मृतिकरमखिलव्याधिविध्वंसि भूतावेशप्रशान्तिकरं गरहरं मेहापहारि स्फुटमतिकरं वीर्यप्रवर्धनं स्निग्धं मेध्यं बृंहणं वृष्यमग्र्यं यक्ष्मोन्मादप्रशमनपरं मेधाबुद्धिकरं रुच्यं दीपनं स्वादुपाकं च ( र. ५.१२-१३ )

सुवर्णभस्म द्विगुञ्जोन्मितं त्रिकटुसर्पिर्भ्यां लिह्यात्, सुवर्णजमेतद्भस्म कटुघृतोपेतं द्विगुञ्जोन्मितं लीढं सन्नृणां क्षयाग्निसदनं श्वासं कासमरुचिं च हन्ति। एतच्चौजोधातुविवर्धनं बलकरं पांड्वामयध्वंसनं पथ्यं सर्वविषापहं गरहरं दुष्टग्रहण्यादिनुच्च ( र. ५.२० ) अशुद्धसुवर्णं नराणां बलं वीर्यं च हरति, काये रोगव्रजं कोपयति। असौख्यकरमपथ्यमेतत्सदोषं मरणं करोति ( र. ५.२३ ) तस्य द्रुतिविधानम्–सुवर्णं बहुकालपर्यन्तं मण्डूकास्थिवसाटङ्कहयलालेन्द्रगोपकानां प्रतीवापेन द्रवरूपं तिष्ठति। देवदालीफलद्रवैर्भावितं सुवर्णसमानमिन्द्रगोपचूर्णं सुवर्णं जलवत् द्रुतं द्रवरूपं वा करोति ( र. ५.२१-२२ ) वेधजं सुवर्णम्–पारदवेधेन संजातं सुवर्णम् ( र. ५.११ ) असम्यक् मारितं शोधितं च सुवर्णं सौख्यं वीर्यं बलं च हन्ति रोगसमूहं च करोति ( र. ५.१४ )

मान० द्रंक्षणद्वयमितो मानविशेषः, कर्ष इति यावत् (चक.१२.९०) कर्षः (ड. सुचि. ३१.७; असंक. ८)

खनिज० सुवर्णगैरिकम् ( सु. उ. ४५.३९ )

वनस्पति० नागकेसरम् ( रा. ६.७४; पृ. ७९ )

वनस्पति० कणगुग्गुलुः (रा. १२.१८६; पृ. १२०)

( सुवर्णा )-स्त्री., वनस्पति० सर्वक्षीरी
( रा. ५.३६५; पृ. ५७ )
इन्द्रवारुणी ( रा. ३.३७१; पृ. ५८ )
हरिद्रा ( रा. ६.७९; पृ. १८ )
-कदली-स्त्री., वनस्पति० कदली
( रा. ११.११४; पृ. १४९ )
-कृष्टी-स्त्री., खनिज० हेमकृष्टी ( र. ८.९ )
-केतकी-स्त्री., वनस्पति० केतकी
( ध परि. ५.१; पृ. २०४ )
-क्षीरा-स्त्री., वनस्पति० सूर्यमण्डलाकारपुष्पा
( चचि. १.(४)-७ )
-क्षीरिका-स्त्री., वनस्पति० सर्वक्षीरी
( ध. १.२४२; पृ. ५७ )
-क्षीरी-स्त्री., वनस्पति० अनन्तासदृशपत्रा सेयं विरेचने उपयुज्यते ( सुसू. ३९.४ )
-गैरिक-न., खनिज० गुणाः-स्वादु कषायं शीतं स्निग्धं नेत्र्यं रक्तपित्तहिध्मावमिविषरक्तविकारहरं च
( ध. ३.१७०; पृ. १२८ )
-चूर्ण-न., गरार्ते शर्कराक्षौद्रयुतं लेहार्थमुपयुज्यते
( असंउ. ४० )
-त्वच्-पु., वनस्पति० आरग्वधः (अहृसू. २१.१७;)
-धातु-पु., खनिज० राजावर्तः (ध. ६.६०; पृ. २१७)
-नकुली-स्त्री., वनस्पति० तेजोवती
( रा. ३.३९२; पृ. ६१ )
-पुष्प-पु., वनस्पति० राजतरणी
( रा. १०.२४६; पृ. २०० )
-प्राश-पु., योग० मधुसर्पिर्युतसुवर्णावलेहनम्
( कासू. लेहाध्यायः )
-माक्षिक-पु., खनिज० माक्षिकम् ( चचि. ७.७१ )
-माषक-पु., मान० मध्यमाः द्वादशधान्यमाषाः
( सुचि. ३१.७ )
-मृत्तिक-वि., सुवर्णवर्णा मृत्तिका यस्मिन् भूमिभागे विद्यते, सः ( देशः ) ( चसू. १४.४६ )
-मोचा-स्त्री., वनस्पति० सुवर्णकदली
( रा. ११.११४; पृ. १४९ )
-यूथा-स्त्री.; वनस्पति० यूथिका
( ध. ५.१४९; पृ. २०० )
-रम्भा-स्त्री., वनस्पति० सुवर्णकदली
( रा. ११.११४ पृ. १४९ )
-लतिका-स्त्री., वनस्पति० ज्योतिष्मती
( ध. १.२६७ पृ. ६१ )
-शैल-पु., मेरुपर्वतः ( र. २.७९ )
-सूची-स्त्री., सुवर्णमयं सीवनशस्त्रम् (सुचि. २९.१ )
सुवर्णक-न., खनिज० पित्तलम् ( ध. ६.१८; पृ. २०९ )
( सुवर्णिका )-स्त्री., वनस्पति० हेमा
( रापरि. ३.१३.; पृ. ३३० )
सुवर्णार-पु.; वनस्पति० कोविदारः
( रा. १०.२९४; पृ. ४७ )
सुवर्षा-स्त्री., वनस्पति० वार्षिकी
( ध. ५.१३६; पृ. १९७ )
सुवर्ष्मन्-वि., सुसारः ( कर्णः ) ( इन्दु. असंउ. २२ )
सुवल्लरी-स्त्री., वनस्पति० पुत्रदात्री
( रापरि. ३.४७; पृ. ३३३ )
सुवल्लिका-स्त्री., वनस्पति० जन्तुका
( रा. ३.१२९; पृ. १५१ )
सुवल्लिज-न., भैषज्य० प्रवालम् (ध. ६.६४; पृ. २१८)
सुवल्ली-स्त्री., वनस्पति० बाकुची (ध. १.१६५; पृ. ३८)
सुवसन्त-पु., वनस्पति० अतिमुक्तकः
( ध. ५.१५३; पृ. २०१ )
( सुवसन्ता )-स्त्री., वनस्पति० वासन्ती
( ध. ५.१३९; पृ. १९८ )
सुवहा-स्त्री., वनस्पति० शेफालिः ( चवि. ७.२१; रा. ४.१२१; पृ. १५० )
त्रिवृत् ( चसू. ४.९ )
रास्ना ( चसू. ४.११ )
गन्धनाकुली ( सुचि. १७.४०-४१ ) गोधापदी
( ड. सुउ. ५१.२३. ध. ४.१०५; पृ. १५५ )
सल्लकी ( रा. ११.१९५; पृ. १२२ )
हंसपादी ( रा. ५.१६६; पृ. १५६ )
मुसलीकन्दः ( रापरि. ७.५८; पृ. ३५२ )
रुद्रजटा ( रापरि. ३.२४; पृ. ३३१ )
उत्तमकारिणी ( इन्दु. असंउ. ४४ )
सुवाचिका-स्त्री., वनस्पति० अजमोदा ( रा. ६.१५१; पृ. ९० )
सुवान्त-वि., सम्यक् वान्तः ( पुरुषः ) (असंसू. ३.८५)
सुवास-पु., वनस्पति० कदम्बः (ध. ५.१०४; पृ. १९०)
सुविभक्त-वि., सुव्यक्तः ( सुसू. ५.८ )
-गात्र-वि., सुष्ठु पृथग्भूत सकलावयवः (सुशा.४.७४)
सुविरेच्य-वि., सुखं विरेच्यो नाम विरेचनार्हः सुखविरेकः ( चसू. १३.६९ )
सुविष्टरा-स्त्री., वनस्पति० गुण्डासिनी
( रापरि. ८.६६; पृ. ३६३ )

**सुवीरक**–पु., वनस्पति० एकवीरः
( रापरि. ८.८; पृ. ३५७ )

**सुवीरज**–न., खनिज० अञ्जनम्
( ध. ३.१५१; पृ. १२५ )

**सुवीराम्ल**–न., आसुत० मद्यम्
( ध. ६.२५१; पृ. २५१ )

**सुवीर्या**–स्त्री., वनस्पति० शतावरी
( रा. ४.४४२; पृ. ६७ )
निर्यास० नाडीहिङ्गु ( रा. ६.६४; पृ. ७८ )

**सुवृत्तक**–पु., वनस्पति० दर्भः (ध. ४.१३३; पृ. १६१)

**सुवृत्ता**–स्त्री., वनस्पति० शतपत्री
( ध. ५.१५१; पृ. २०१ )

**सुवृत्ति**–स्त्री., वनस्पति० सूरणः
( धपरि. ४.६; पृ. १६८ )

**सुवेगा**–स्त्री., वनस्पति० तेजोवती
( रा. ३.३९३; पृ. ६१ )

**सुव्रत**–पु., वनस्पति० वसुकः ( ध. ४.१९; पृ. १३८ )

**सुशल्य**–पु., निर्यास० खदिरः ( रा. ८.३१; पृ. ११ )

**सुशाक**–पु., वनस्पति० तण्डुलीयकः
( रा. ५.१७५; पृ. १५७ )
चञ्चुः ( रापरि. ४.१८; पृ. ३३६ )
न., वनस्पति० आर्द्रकम् ( रा. ६.१३३; पृ. ८७ )

**सुशाकक**–न., वनस्पति० आर्द्रकम्
( ध. २.८५; पृ. ८७ )

**सुशालि**–स्त्री., वनस्पति० व्रीहिः
( रा. १६.९९; पृ. २२१ )

**सुशाल्यक**–पु., वनस्पति० व्रीहिः
( रा. १६.१०४; पृ. २२२ )

**सुशिखा**–स्त्री., वनस्पति० बर्हिचूडा
( रापरि. ५.१३; पृ. ३४१ )

**सुशिम्बिका**–स्त्री., वनस्पति० असिशिम्बी
( रा. परि. ७.९७, पृ. ३५५ )

**सुशीत**–पु., वनस्पति० प्लक्षः (रा. ११.१२५; पृ.१८५)

**सुशीता**–स्त्री., वनस्पति० शतपत्री
( ध. ५.१५१ पृ. २०१ )

**सुश्रीका**–स्त्री., वनस्पति० सल्लकी–
( रा. ११.१९६; पृ. १२२ )

**सुश्रुत**–पु., विश्वामित्रमुनिपुत्रः, प्राचीनः शल्यतन्त्रकर्ता-धन्वन्तरिविश्वामित्रसुताय सुश्रुताय आयुर्वेदमुपदिष्टवानिति गारुडे इति शब्दकल्पद्रुमः, पितुराज्ञया सुश्रुतः काशीं गतस्तत्र दिवोदासो नाम काशिराजः साक्षाद् धन्वन्तरिरायुर्वेदविदांवर आसीत्, तस्माद् आयुर्वेदं गृहीतवान्। अनन्तरं सुश्रुताद्याः काशिराजशिष्याः स्वं स्वं तन्त्रं कृतवन्तस्तत्र सुश्रुततन्त्रं गुणवत् सत् "सुश्रुत" इति नाम्ना जगति विख्यातमभूत् ( सुसू. १.३)

–**संहिता**–स्त्री., सुश्रुतमहर्षिणा कृता शल्यतन्त्रप्रधाना आयुर्वेदीयसंहिताऽस्यां षट्स्थानानि वर्तन्ते– सूत्रस्थानं निदानस्थानं शारीरस्थानं चिकित्सास्थानं कल्पस्थानमुत्तरतन्त्रं चेति । तत्र सूत्रस्थाने षट्चत्वारिंशदध्यायाः, निदाने षोडश, शारीरे दश, चिकित्सिते चत्वारिंशत्, कल्पे अष्टौ, उत्तरतन्त्रे षट्षष्टिरिति ( सुसू. ३.३ ) समाहृत्य शतोत्तरषडशीतिः

**सुश्वेता**–स्त्री., वनस्पति० लक्ष्मणा (ध. १९७. पृ. २५ )

**सुषमा**–वि., सुशोभना ( चइ. ७.८ )

**सुषवन**–न., ( परिव० ) सहनम् ( चसू. १८.७ )

**सुषवी**–स्त्री., वनस्पति० जीरकः ( ध. २.५९; पृ. ८१ )
शाक० कारवेल्लकम् (चक. १.२२; अहृसू. १५.१७)
पानीयवल्ली ( सुचि. ५.१२; र.१२.३८ )

**सुषिर**–पु., दन्तरोग० दन्तमूलेषु जातो रक्तपित्तजो रुजायुक्तो लालास्रावी दन्तमांसप्रशातनश्च यः श्वयथुः, सुषिर इति नाम्ना व्यपदिष्टः (असंउ. २५)

**सु( षिरा )**–स्त्री., वनस्पति० नलिका
( ध. ३.४३. पृ. १०४ )

–**त्व**–न., सौषिर्यम् ( कासू. २.५ )

**सुषिराख्य**–पु., वनस्पति० वंशभेदः रन्ध्रयुक्तवंशः
( रा. ७.२१६; पृ. १६२ )

**सुषूयन**–( परिव० )–न., सहनम् ( चसू. १८.७ )

**सुषेण**–पु., वनस्पति० वेतसः ( ध. ५.११६; पृ. १९३ )
न., वनस्पति० करमर्दः ( ध. ५.१०२; पृ. १९० )

**सुषेणी**–स्त्री., वनस्पति० त्रिवृत् श्यामा
( ध. १.२४२; पृ. ५७ )

**सुसंगुप्त**–वि., अतिशयेनादृश्यम्, पटादिना आच्छादितत्वम् ( सुसू. ४६.४४७ )

**सुसंयत**–वि., सुष्ठु लौल्यादिदोषरहितः, आयत्तपरिधानादिकः ( ड. सुक. १.१४-१६ )

**सुसंस्कृत**–वि., अक्लिष्टवर्णश्रुतिकम् ( सूत्राक्षरम् )
( सुसू. ३.५४ )

–**बन्ध**–पु., पारदबन्धः, विष्णुक्रान्ताद्यौषधेरप्रसूतायाः गोर्मूत्रेण पिष्टो वालुकायन्त्रे पाचितो लोहादिभिर्मर्दितः पुनरपि वालुकायंत्रे पक्वः पारदः
( र. ११.९०-९२ )

**सुसंस्थित**-वि., शोभनाकारम् ( शस्त्रम् ) ( ड. सुसू. ८.१४ )
**सुसंहत**-वि., सम्यक्संहननयुक्तम् 'तत्र समसुविभक्तास्थि सुबद्धसन्धि सुनिविष्टमांसशोणितं सुसंहतं शरीरमित्युच्यते ( चवि. ८.११६ )
**सुसमाहित**-वि., सावधानः, अवहितचित्तः ( सुचि. ३.२६ )
**सुसाध्य**-वि., सुखसाध्यः ( अहृसू. १.२९ )
**सुसार**-पु., वनस्पति० खदिरभेदः रक्तखदिरः ( रा. ८.३६; पृ. १२ ) द्र० 'खदिर'
**सुसिद्धक**-पु., निर्यास० सर्जकः (रा. ९.२०५; पृ. १९४)
**सुसेना**-स्त्री., ग्रहमातृ० ( असंउ. ४ )
**सुस्रवा**-स्त्री., वनस्पति० सल्लकी (ध. ३.१३५; पृ. १२२)
**सुस्वर**-पु., भैषज्य० शङ्खः ( ध. ३.१७९; पृ. १३० )
**सुहृत्परिषद्**-स्त्री., परिषद्० त्रिविधपरिषदां मध्ये एका, सा च मित्रभावनया संमिलिता वैद्यानां सभा ( चवि. ८.२० )
**सूकर**-पु., वनस्पति० कन्दभेदः वाराहीकन्दः (र.१९.८९) पशु० तन्मांसगुणाः—उष्णम्, स्निग्धम्, गुरु, बृंहणं, वृष्यं, बल्यं, रुच्यं, स्वेदघ्नमामघ्नं, वातघ्नं, श्रमघ्नं च; ग्रामसूकरजमांसगुणाः—गुरुतरं मेदोबलवीर्यनिद्रास्थूलत्वदार्ढ्यकृत् (ध. ६.३९५; पृ.२६९) तद्रसा महायोन्याख्यव्यापदि पूरणार्थं, वातासृग्दरे पानार्थं चोपयुज्यते। तद्रसा मज्जा च निरुद्धमण्याख्ये गुह्यरोगे परिषेकार्थमुपयुज्येते (असंउ.३९)
**( सूकरी )**-स्त्री., वनस्पति० कन्दभेदः, वाराहीकन्दः ( रा. ७.१३४; असंशा. १२.९; पृ. १५२ )
**-कन्द**-पु., वनस्पति० कन्दभेदः वाराहीकन्दः ( रा. ७.१३५; पृ. १५२ )
**-पादिका**-स्त्री., वनस्पति० दधिपुष्पी ( ध. १.१५३; पृ. ३६ )
**-बालक**-पु., धान्य० शालिः (ध. ६.७१; पृ. २१९)
**सूकरेष्ट**-पु., वनस्पति० गुडकन्दः ( रापरि. ८.६३., पृ. ३६२ )
**सूक्त**-न., आसुत० तद्गुणाः—मधुरं, तिक्तमम्लमुष्णं, तीक्ष्णं, लघु, कटु, रक्तपित्तकरं, पाचनं, भेदनं, मूत्रलं, हृद्यं, रोचनं, कफपित्तघ्नं पाण्डुकृमिशिरोरोगनासिकादुर्गन्धनाशनम् ( ध. ६.२४६; पृ. २५; अहृसू. ५.७६ )
**सूक्ष्म**-पु., गुण० सौक्ष्म्ययुक्तः गुणविशेषः, स्थूलविपरीतो गुणः, सूक्ष्मस्रोतोगामी गुणः(चसू. १.५९) स्रोतोनुसरणशीलः आग्नेयद्रव्यस्य गुणेष्वेकः (सुसू. ४१.३. (३); सूक्ष्ममार्गानुप्रवेशी (ड. सुक. २.१९-२० ) अवगाहकः ( सुसू. ४६.५२१ ) विवरणे शक्तिः ( हे अहृसू. १.१८ )
**( सूक्ष्मा )**-स्त्री., वनस्पति० करुणी ( रापरि. १०.२७; पृ. ३७० ) आकाशमांसी ( रा. १२.९५ पृ. १०५ )
**-घण्टिका**-स्त्री., वनस्पति० शणपुष्पीभेदः द्र० 'शणपुष्पी' ( रा. ४.३००; पृ. ४८ )
**-तण्डुल**-पु., वनस्पति० खस्तिलः खसखसः ( रा. ४.१९०; पृ. २३२ )
**-तुण्ड**-पु., आग्नेयकीट० अयं शूकतुण्डविषः ( सुक. ३.५ असंउ. ४३ )
**-दन्ता**-वि., सूक्ष्मा दन्ता यस्याः सा ( मुचुण्डी ) संदंशयन्त्रवाच्या ( अहृसू. २५.९ )
**-दर्शन**-न., सूक्ष्मनिरीक्षणम् ( असंसू. ३.२५ )
**-दल**-पु., वनस्पति० देवसर्षपकः ( रापरि. ९.४२; पृ. ३६७ )
**-दला**-स्त्री., वनस्पति० धन्वयासः ( रा. ३.२०; पृ. १० )
**-निरीक्षण**-न., अतितनुविषयस्य प्रेक्षणम् नेत्ररोगहेत्वन्यतममिदम् ( सुउ. १.२७ )
**-पत्र**-पु., वनस्पति० धन्वयासः ( रा. ३.२६; पृ. ११ ) रक्तेक्षुः ( रा. १४.१८९; पृ. १५९ ) सुरपर्णः ( रा परि. १०.५०; पृ. ३७२ ) धान्यकम् ( रा. ६.९८; पृ. ८२ )
**(-पत्रा )**-स्त्री., वनस्पति० क्षुद्रोपोदकी ( रा परि. ७.७६; पृ. ३७३ ) अन्यादोडी ( रा परि. ४.४१; पृ. ३३८ ) वृद्धदारुः ( रा. ३.१५७; पृ. ११५ ) शतावरी ( रा. ४.४३८; पृ. ६७ ) वन्यजीरः ( ध. २.७२; पृ. ८३ )
**(-पत्री )**-स्त्री., वनस्पति० आकाशमांसी ( रा. १२.९५; पृ. १०५ )
**-पत्रक**-पु., वनस्पति० बदरम् ( रा. ११.१६४; पृ. १८९ ) वनबर्बरिका ( रा. १०.८८; पृ. १४६ )
**-पत्रान्तरा**-स्त्री., वनस्पति० विष्णुक्रान्ता ( ध. ४.११५; पृ. १५७)

–पत्रिका–स्त्री., वनस्पति० शतपुष्पा
( रा. ४.३; पृ. ६९ )
–पर्णी–स्त्री., वनस्पति० सूक्ष्मपुष्पा, शणपुष्पीभेदः, द्र० 'शणपुष्पी' ( रा. ४.३०१; पृ. ४८ )
–पिप्पली–स्त्री., वनस्पति० वनपिप्पली
( रा. ६.१२२; पृ. ८६ )
–पुष्पा–स्त्री., वनस्पति० शणपुष्पीभेदः द्र० 'शणपुष्पी' ( रा. ४३००; पृ.४८ )
–पुष्पी–स्त्री., वनस्पति० शङ्खिनी
( रा. ३.३८१; पृ. ५९ )
–फल–पु., वनस्पति० बदरम्
( रा. ११.१४६; पृ. १८९ )
भूकर्बुदारः ( रा. ११.१५०; पृ. १८८)
–बदरी–स्त्री., वनस्पति० भूबदरीभेदः द्र० 'बदर'
( रा. ११.१६२; पृ. १८९ )
–बीज–पु., वनस्पति० खस्तिलः खसखसः
( रा. ४.१९० पृ. २३२ )
–मूला–स्त्री., वनस्पति० बलामोटा
( धपरि. ४.१; पृ. १६८ )
–लोचना–वि., अल्पद्वारजालका (कुटी)
( चवि. १.१९ )
–वल्ली–स्त्री., वनस्पति० ताली
( रापरि. ३.३७; पृ. ३३२ )
जन्तुका ( रा. ३.१२८; पृ. १५१ )
कारवल्ली ( रा. ७.२७८; पृ. ४५ )
–शाख–पु., वनस्पति० जालबर्बुरः
( रापरि. ८.१४; पृ. ३५७ )
–शालि–स्त्री., धान्य० व्रीहिभेदः द्र० 'व्रीहि'
( रा. १६.९२; पृ. २२१ )
–सागरगामिनी–स्त्री., वनस्पति० सूक्ष्मैला द्र० 'एला' ( रा. ६.६९; पृ. ७८ )
–स्रोतस्–न., शारीर० अणुस्रोतः, नाभिश्च रोमकूपाश्च सूक्ष्मस्रोतांसि ( काशाशारीरविचय )

**सूक्ष्मैला**–स्त्री., वनस्पति० एलाभेदः, द्र० 'एला'
( ध. २.४४; पृ. ७८ )

**सूचक**–वि., परानिष्टजनकाभिधायकः, कर्णेजपः, पिशुनः
( चसू. ७.५६ )
पु., धान्य० व्रीहिभेदः द्र० 'व्रीहि'
( रा. १६.९२; पृ. २२१ )

**सूचन**–न., अंशतो लेशतोऽर्थप्रकाशनम् ( सुसू. ३.१२ )

**सूचि**–स्त्री., सीवनशस्त्र० तीक्ष्णकण्टकाकारो लौहादिमयः ( चनि. ३.७ ) तीक्ष्णाग्रा सरला, वक्रा, धनुराकारा इति त्रिप्रकाराः, तदिदं सीवनव्यधनविस्रावणोपयोगि शस्त्रम् ( सुसू. ८.४ )
–दल–पु., वनस्पति० शितिवारः ( रा. ४.२०७; पृ. ३६ )
–पत्र–पु., वनस्पति० शितिवारः ( ध. १.१५५; पृ. ३६ )
–पत्रक–पु., वनस्पति० शितिवारः ( रा. ४.२०६; पृ. ३६ )
–मल्लिका–स्त्री., वनस्पति० वनमल्लिका
((रा. १०.२३६; पृ. १९९ )
–वक्त्र–न., रत्न० हीरकम् ( ध. ६.५५; पृ. २१६ )
–शालि–स्त्री., धान्य० व्रीहिभेदः, सूक्ष्मशालि द्र० 'व्रीहि' ( रा. १६.९२; पृ. २२१ )

**सूचिकापुष्प**–पु., वनस्पति० केतकी ( ध परि. ५.१; पृ. २०४ )

**सूचिकाभरण**–पु., सिद्धयोग० हीरकवैक्रान्तशृङ्गीविषनवसागराग्निजारशार्ङ्गेष्टादियुक्तो योगविशेषः
( र. १२.७६-८१ )

**सूची**–स्त्री., शस्त्र० असौ सीवनोपयोगिनी
( चचि. २९.३६, सुचि. २९.१० ). द्र० 'सूचि'
वनस्पति० दर्भः ( र. १८.४७-५२ )
कुशः ( र. १८.४७-५२ )
–कूर्च–पु., न., शस्त्र० द्र० 'कूर्च'
( अहसू. २६.२२; असंसू. ३४.३१ )
–कूर्चक–न., शस्त्र० द्र० 'कूर्च' ( असंउ. २८ )
–पत्र–पु., वनस्पति० इक्षुभेदः द्र० 'इक्षु'
( सुसू. ४५.१५४ )
(– पत्रा )–स्त्री., वनस्पति० गण्डदूर्वा द्र० 'दूर्वा'
( रा. ८.२३४ पृ. १६४. )
–पाश–पु., सूचिनेत्रम्, सूचिच्छिद्रम् (सुउ. ७.१०)
–पिप्पलक–पु. न., शस्त्र० सूच्याकारः शस्त्रविशेषः
(चशा. ८.३४ )
सूचिः सीवनार्थं सूत्रं च ( चशा ५.१२ )
सूचिस्थापनपात्रम् ( चशा. ५.१२ )
–मुख–वि., मूले स्थूलो मुखे अणुः ( भगन्दरव्रणः )
( सुचि. ८.२७ )
पु., कीट० सविषोऽयं, सौम्यः श्लेष्मप्रकोपणः, कफविकारान् करोति
( सुक. ८.१२-१५; असं. उ. ४३ )
वनस्पति० कुशः ( रा. ८.२०८ पृ. १६१ )
पारदादियोग० पारदगन्धकहरितालमनःशिला-

माक्षिकतुत्थजयपालवत्सनाभादियुक्तः, धनुर्वात-कासश्वासप्रलापहिक्कामूकत्वबधिरत्वोन्मादापस्मारा-दिनाशकः ( र. १२.९९ )

**–मुखाकृति**–वि., सूचीमुखवत्–अग्रवत्–( अर्शः ) सूक्ष्माकृति ( सु नि. २.१० )

**–मुखी**–स्त्री., योनिरोग० वातलाहारसेविन्यां जनन्यां कुपितो वायुः स्त्रियाः–गर्भस्थयोषायाः योनिमणुद्वारां कुर्यात् (च सू. १९.४(९)) (चचि. ३०३१–३२) त्रिदोषजो रोगः, अतिसङ्कुचितमुखी योनिः ( सुउ. ३८.१९ )

**सूचिवक्त्रा**–स्त्री., योनिरोग० सूचीमुखी ( सुउ. ३८.१९ )

**सूच्याह्व**–पु., वनस्पति० शितिवारः ( ध. १.११५; पृ. ३६ )

**सूत**–पु., खनिज० पारदः ( रा. १३.४३; र. १.२७ पृ. २१४ )

**( सूता )**–वि., प्रसूता ( अहसू. ७.७० )

**–राज्**–पु., खनिज० पारदः ( रा. १३.४१; पृ. २१४ )

**सूतक**–पु., खनिज० पारदः ( र. १.२३ )

**सूताञ्जन**–न., अञ्जन० अञ्जनमिदं पारदटङ्कणजम्बीरयुक्तं नेत्रपटलरोगनाशकम् ( र. २३.५२ )

**सूति**–स्त्री., प्रसूतिः ( र. २.१४४.१४५ )

**सूतिका**–स्त्री., प्रसूता स्त्री ( चशा. ८.४७; सुशा. १०.१६ ) सूतिका चिकित्सा–सूतिकाया यत्कर्तव्यम्–वातहरैः सिद्धं पयः पानार्थम्, अनन्तरं दशाहं भोजने हितम्। दशाहादनन्तरं द्वितीयं च दशाहं रसो भोजने हितः, दिनविंशतेरनन्तरं सा स्त्री लघुपथ्याल्पभोजना सती तथा स्वेदाभ्यङ्गपरा स्नेहान्बलादिकान्भजेत् ( अरु. सुचि. १५.२६-२७ )

**–ज्वर**–पु., रोग० प्रसूतानां नारीणां ज्वरः, वेगसन्धारणव्यायामादिहेतुभिः सञ्जातो ज्वरः स षड्विधः–दोषभेदेन चतुर्विधः, स्तन्यागमोत्थो ग्रहोत्थश्च; तल्लक्षणानि–वातज्वरलक्षणानि–विषमोष्माङ्गमर्दो जृम्भा, रोमहर्षणं, कषायविरसास्यता, शीतद्वेषोष्णकामिता, दन्तहर्षः, प्रलापः, प्रजागराध्मानाङ्गसङ्कोचः शुष्कोद्गारश्च; पित्तजज्वरलक्षणानि–तृष्णादाहप्रलापवमथुपीतास्यनखदन्ताक्षिविण्मूत्रताकण्ठशोषकटुकास्यताभ्रमशीताभिलाषाः; कफजज्वरलक्षणानि–प्रतिश्यायकासष्ठीवनशिरोरुग्गात्रगौरवोष्णाभिकामितामन्दोष्मतानिद्रातन्द्राहिमद्वेषमधुरास्यतागात्रसादान्नविद्वेषशुक्लमूत्रपुरीषताः; सन्निपातज्वरलक्षणानि–मुहुर्दाहः, कृच्छ्रविण्मूत्रवातत्वं वातेनाङ्गानामभिसञ्जनं नामघर्षणं दाहस्तृष्णाप्रलापः, पित्ताद्विक्षिप्तचित्तता, कफाद्गुरुत्वं कण्ठसंरोधः; स्तन्यजज्वरलक्षणानि–तृतीयेह्नि चतुर्थे वा नार्याः स्तन्यं प्रवर्तते, संवृतानि पयोवहानि स्रोतांसि स्तन्यमभिघट्टयेत्। तेन स्तनयोः स्तम्भः; हृदयद्रवः, पिपासा, कुक्षिपार्श्वकटीशूलाङ्गमर्दशिरोरुजश्च भवन्ति। ग्रहज्वरलक्षणानि–आक्षेपचक्षुर्विभ्रमश्रमहस्तनेत्रकम्पनहारिद्रमुखनेत्रतानिद्रानाशकेशलुञ्चनाक्रोशवातजज्वरलक्षणानि, क्षणेन श्यावता क्षणमात्रं सवर्णता च ( काखिल. ११.३९.६९ ) तच्चिकित्सासूत्रम्-स्वेदोऽपतर्पणं युक्त्या पाचनौषधसेवनं कषायोऽभ्यञ्जनं सर्पिर्ज्वरघ्नः परमो विधिः ( काखिल. ११.७५ )

**–रोग**–पु., सूतिकाविकारः, काश्यपसंहितायां चतुःषष्टिर्विकारा उक्ताः ( का. खिल. १०.१४ )

**–षष्ठी**–स्त्री., प्रसूतायाः षष्ठं दिनम्, तदा षण्मुखीं षष्ठीं पूजयेत् ( का. बालग्रहचि. )

**सूतिकामृत**–न., भैषज्य० सौभाग्यशुण्ठिः ( र. २२.११७-२२ )

**सूतिकागार**–न., सूतिकागृहम्, प्राक् चैवास्या नवमान्मासात् सूतिकागारं कारयेदपहृतास्थिशर्कराकपाले देशे प्रशस्तरूपरसगन्धायां भूमौ प्राग्द्वारमुदग्द्वारं वा बैल्वानां काष्ठानां तैन्दुकैङ्गुदकानां भल्लातकानां बारणानां खादिराणां वा, यानि चान्यान्यपि ब्राह्मणाः शंसेयुरथर्ववेदविदस्तेषां; वसनालेपनाच्छादनापिधानसंपदुपेतं वास्तुविद्याहृदययोगाग्निसलिलोदूखलवर्चःस्थानस्नान-भूमिमहानसमृतुसुखं च। तत्र सर्पिस्तैलमधुसैन्धवसौवर्चलकालविड्लवणविडङ्गकुष्ठकिलिमनागरपिप्पली-पिप्पलीमूलहस्तिपिप्पलीमण्डूकपर्ण्येलालाङ्गलीवचाचव्यचित्रकचिरबिल्वहिङ्गुसर्षपलशुनकतककणकणिकानीपातसीबल्वजभूर्जकुलत्थमैरेयसुरासवाः सन्निहिताः स्युः, तथाऽश्मानौ द्वौ, द्वे कुण्डमुसले, द्वे उलूखले, खरवृषभश्च, द्वौ च तीक्ष्णौ सूचिपिप्पलकौ सौवर्णराजतौ, शस्त्राणि च तीक्ष्णायसानि, द्वौ च बिल्वमयौ पर्यङ्कौ, तैन्दुकैङ्गुदानि च काष्ठान्यग्निसन्धुक्षणानि ( चशा. ८.३३ ३४ ) नवमे मासि सूतिकागारमेनां प्रवेशयेत् प्रशस्ततिथ्यादौ, तत्रारिष्टं ब्राह्मणक्षत्रियवैश्यशूद्राणां श्वेतरक्तपीतकृष्णेषु भूमिप्रदेशेषु बिल्वन्यग्रोधतिन्दुकभल्लातक-

निर्मितं सर्वागारं यथासंख्यं तन्मयपर्यङ्कमुपलिप्त-भित्तिसुविभक्तपरिच्छदं प्राग्द्वारं दक्षिणद्वारं वाऽष्ट-हस्तायतं चतुर्हस्तविस्तृतं रक्षामङ्गलसंपन्नं विधेयम् ( सुशा. १०.५ )

**सूतिकासन**–न., सूतिकाया आसनम् ( काशा. ५ ) सूतिकागारम् ( काशा. ५ )

**सूती**–स्त्री., प्रसूतिः ( असंशा. ४.३३ )

–**रोग**–पु., सूतिकारोगः ( र. २२.४१ )

**सूतेन्द्र**–पु., पारदयोग० मुक्ताप्रवालसुवर्णरौप्यगन्धक-वैक्रान्तादियुक्तः, मात्रा–पञ्च गुञ्जाः, असौ शुक्र-वर्धकः, ध्वजभङ्गनाशकश्च ( र. २७.४३-५१ ) खनिज० पारदः ( र. १.३२ )

**सूतेन्द्रबन्धिन्**–पु., पारदस्य चाञ्चल्यनाशनेन बन्धकः ( अभ्रकगुणः ) ( र. २.३ )

**सूत्र**–न., सूचनात् सूत्रणाच्च अर्थसंततेः सूत्रम् ( चसू. १.२४ ) स्वल्पाक्षरमसन्दिग्धं सारवद्वि-श्वतोमुखम् ( चसू. ३०.३१ ) तन्तुः ( सुसू. ५.६ ) व्रणसीवनार्थमुपयुज्यते ( अहृसू. २९.५३ )

–**विद्**–वि., शास्त्रवित् ( सुचि. २.४६ )

–**स्थान**–न., चरकसंहितायाः, सुश्रुतसंहितायाः, अष्टाङ्गहृदयसंहितायाः च प्रथमस्थानम्

**सूत्रण**–न., सूत्ररूपेण शास्त्ररचना ( चसू. १.३४ ) अर्थानां यथास्थानं निवेशनम् ( सुसू. ३.१२ )

**सूद**–पु., सूपकारः, अन्नसंस्कारकः ( सुसू. ४६. ४५४ )

**सूना**–स्त्री., वधस्थानम् ( असंसू. ३.४६ )

**सूप**–पु., आहारद्रव्य० यूषः, मुद्गादिनिर्मितं क्वाथ इवान्नं, येन मिश्रितमोदनादि भुज्यते । दालि-व्यञ्जनम् ( च. सू. २७.२६२ )

–**धूपन**–न., वनस्पति० निर्यास० हिङ्गुः ( ध. २.३६; पृ. ७७ )

–**श्रेष्ठा**–स्त्री., धान्य० मुद्गः ( ध. ६.८०; पृ. २२३ )

**सूपविष्ट**–वि., सम्यगुपविष्टः ( चसू. ५.४८ )

**सूपौदन**–न., सूपसहितमोदनं भक्तम् ( ड. सुसू. ४६.४५४ )

**सूप्य**–वि., सूपयोग्यं धान्यम् ( चसू. २७.२३ ) सूपे साधु ( असंसू. ७.२६ ) सूपे हितम्, शिम्बी-धान्यम् ( हे. अहृसू. ६.२६ ) मुद्गराजमाषादि-पत्राणि ( अरु. अहृसू. ६.९४ )

**( सूप्या )**–स्त्री., धान्य० मसूरिका ( ध. ६.९५; पृ. २२६ )

–**धान्य**–न., यूषोपयोगि मुद्गकुलत्थादिधान्यम् ( चचि. ८.१२८ )

–**पर्णी**–स्त्री., वनस्पति० विशेषः ( असंउ. २ )

–**शाक**–न., माषपर्ण्यादिशाकविशेषः ( चसू. २७.९८ )

**सूप्यान्नविकृत**–वि., मुद्गमाषविकारो विकृतिर्वा सूप्यान्नस्य विकारा भक्ष्याः नाम सूप्यान्नसाधिता भक्ष्याः ( चसू. २७.२७४ )

**सूरकन्द**–पु., वनस्पति० सूरणः ( रापरि. ६.७; पृ.१६९ )

**सूरण**–पु., वनस्पति० तद्गुणाः–कटुः, ईषत्कषायो रूक्षो गुरुर्विष्टम्भी ( सुसू. ४६.३०६-३०७ ) लघुः ( र. २०.२१९ ) रुच्यो दीपनः पाचनो कफवातलः पित्तहरश्च, ( सु ) कृमिशूलगुल्मश्वासकासच्छर्दर्शोघ्नः ( धपरि. ४.६; पृ. १६८ ) गुदकीलहरः ( सु ) प्लीहनाशनः ( र. २०.२१९-२१ )
हिं.—जङ्गली सुरण.
म.—सूरण.
बं.—ओल.

**सूरिका**–स्त्री., वनस्पति० सर्षपः ( र. १८.४७-५२ )

**सूरिसत्तम**–पु., पण्डितप्रधानः ( सुसू. ४६.५३२ )

**सूर्प**–न., मान० शूर्पम्, द्रोणद्वयम्, अष्टचत्वारिंश-दधिकद्विसहस्रतोलकाः ( र. २८.४८-५२ )

–**पर्णी**–स्त्री., वनस्पति० मुद्गपर्णी माषपर्णी वा ( चचि. २८.१५१ ) माषपर्णी ( चचि. २८.१५१ )

**सूर्य**–पु., देवता० भास्करः, चक्षुषोऽधिदैवतम्, आकाशस्थो ग्रहविशेषः ( सुशा. १.७ )

**( सूर्या )**–स्त्री., वनस्पति० इन्द्रवारुणी ( रा. ३.३७१; पृ. ५८ )

–**कान्त**–पु., मणि० ( चचि. ९.१८ ) श्वेतमणि० सूर्यकिरणसंपर्केऽस्माद्वह्निर्निष्क्रामति ( र. ४.२-३ ) असौ तिलकालकमषकान्दग्धमुपयुज्यते ( असंउ. ३७ )

–**पक्व**–वि., सूर्यातपे पक्वम् ( सुचि. १.१०८ )

–**पादसंताप**–पु., आतपोष्मा ( चचि. ७.१६३ )

–**प्रभा**–स्त्री., आतपः ( सुउ. १९.९-१० ) पारदयोग० भार्ङ्गीहरबीजभल्लातकभङ्गा त्रिकटु-त्रिफला गन्धककेशरयुक्तः कल्पोऽयं जठराग्निप्रदी-पनः ( र. १९.३९-४१ )

–**भक्ता**–स्त्री., वनस्पति० आदित्यभक्ता ( ध. ४.९८; पृ. १५३ )

–मारुतिक–वि., सूर्यमारुताभ्यां निवृत्तः रसायनप्रकारः वातातपिकः सुखोपचारा भ्रंशेऽपि देहस्याबाधकः ( असंउ. ४९ )

–रस–पु., पारदयोग० पारदो गन्धकस्ताम्रमभ्रकं पिप्पली शुण्ठी मरिचं वत्सनाभमित्यादिना साधितः कल्पोऽयं कासादिघ्नः ( र. १३.६७ )

–लता–स्त्री., वनस्पति० आदित्यभक्ता ( रा. ४.१४४ पृ. १५३ )

–वर्त–पु., शिरोरोग० द्र० ' सूर्यावर्त (र. २४.३-५४)

–वल्ली–स्त्री., वनस्पति० पटोलसदृशपत्रा, यस्याः पत्ररसेनाक्तं मांसं स्विन्नमिव भवति, अन्ये ' सूर्यावर्त'माहुः ( ड. सुक. २.४४-४६. ) अर्कपुष्पी ( सुसू. ४५.१२० )

सूर्यातपप्रतापन–न., सूर्यातपेन तापनम् अथवा उष्णीकरणम् ( सुसू. ४५-१२ )

सूर्यापवृत्ति–स्त्री., सूर्यास्तसमयः ( ड. सुउ. २५.१२

सूर्यावर्त–पु., शिरोरोग० एकादशशिरोव्याधिष्वेकः ( चचि. ९.७९-८१ ) पित्तानुबन्धो वातः शङ्खाक्षिभ्रूललाटेषु सस्पन्दनां रुजां कुर्यात्। सूर्योदयस्य पश्चाद्रुजा भवति। एषा च रुगामध्याह्नं विवर्धिष्णुः क्रमेण वृद्धिशीला भवति। क्षुद्वतस्तद्विशेषेण भवति। मध्याह्नात्परं कदाचिच्छीतेन कदाचिदुष्णेन वा सा रुक्प्रशाम्यति। एवंरूपो रोगो नाम्ना सूर्यावर्तः; तत्र बृंहणं नस्यं हितम् ( अहसू. २०.३ ) तच्चिकित्सा नस्यलेपपरिषेककवलग्रहशिरोबस्त्यादयो विधातव्याः ( सुउ. २६.३० )

पारदयोग० गन्धकताम्रेत्यादियुक्तः कल्पः, असौ श्वासनाशनः ( र. १३.५२-५३ )

वनस्पति० आदित्यभक्ता ( र. २०.२१३-१४ )

( सूर्यावर्ता )–स्त्री., वनस्पति० आदित्यभक्ता ( र. ११.५२-५७ )

सूर्यावर्तादिगण-पु., द्रव्यगण० सूर्यावर्तककदलीवन्ध्याकोशातकीसुरदालीशिग्रुवज्रकन्दनीरकणाकाकमाच्यः; इत्ययं सूर्यावर्तादिगणः ( र. ३.१३२ )

सूर्याह्व–पु., वनस्पति० अर्कः ( ध. ४.१३; पृ. १३६ )

सूर्याह्वय–पु., वनस्पति० अर्कः ( ध. ४.१३; पृ. १३६ )

सूर्योदय–पु., योग० विषहरः ( असंउ. ४० )

सूर्योद्धतप्रमुक्तजल–न., सूर्येण पूर्वमुद्धृतं पश्चात्प्रमुक्तं जलम् ( असंसू. ६.४ )

सूर्योपराग–पु., सूर्यग्रहणम् ( असंसू. ३२.७ )

सूषा–स्त्री., वनस्पति० कासमर्दः ( अरु. अहसू. ६.७२ )

सृक्क–न., शारीर० ओष्ठपार्श्वयोः सन्धिभागः, षट्पञ्चाशत्प्रत्यङ्गेष्वेकम् ( चशा. ७.११ )

सृक्कन्–न., शारीर० ओष्ठप्रान्तः ( सुउ. १६.१० )

सृक्कि–स्त्री., शारीर० सृक्क ( चशा. ७.११ )

सृक्किणी–स्त्री., शारीर० ओष्ठप्रान्तः ( सुउ. ६०.१३ )

सृगालविन्ना–स्त्री., वनस्पति० पृश्निपर्णी ( इन्दु.असंउ. ४ )

सृमर–पु., आनूपमृगः, महाशूकरः ( चक. चसू. २७.३९ ) कूलचरपशुः, अन्ये महाश्वाकारश्चमरानूकः ( ड ) गतिशीलो मृगभेदः, इति हाराणचन्द्रः ( सुशा. ३.२७ ) तन्मांसगुणाः– कषायानुरसं, वातपित्तोपशमनं, गुरु, शुक्रविवर्धनं च ( सुसू. ४६.१०१ )

सृष्ट–वि., निर्मितः ( सुउ. ३९.१४४ )

–दोष–वि., च्युतदोषः (पुरुषः) (ड. सुउ. ३९.१४४)

–पुरीषता–स्त्री., पुरीषोत्सर्गः ( सुउ. ३९.८५ )

–मूत्रता–स्त्री., मूत्रस्योत्पत्तिः प्रवृत्तिश्च, मूत्रोत्सर्जनम् ( सुउ. ३९.८५; अहसू. ५.४७ )

–मूत्रपुरीष–वि., मूत्रस्य पुरीषस्य च विसर्गकरम् ( सुचि. ६.८ )

–शकृत्–वि., मलानुलोमनः, पुरीषोत्सर्जनकरः ( अहसू. ५.४७ )

(सृष्टि)–स्त्री., पारदयोग० गन्धकपारदाभ्रकयुक्तः कल्पः असौ अपस्मारनाशकः, ( र. २४.२५ ) द्रवद्रव्य०, गोऽजाऽविनरनारीणां मूत्रं शोणितं शुक्रं च ( र. ११.४७ )

सृष्टि–स्त्री., जगत्

–प्रदा–स्त्री., वनस्पति० पुत्रदा ( रापरि. ४.२७; पृ. ३३७ )

सेक–पु., सेचनम् ( सुचि. २.२४ ) धारासेकः ( ड. सुउ. २६.५ ) परिषेकः ( अहसू. ३०.३८ )

सेगुरुन्दक–धान्य० जूर्णा० ( रा. १६.१६९; पृ. २२९ )

सेतुबन्ध–पु., धरणबन्धः ( असंशा. १२.४ )

सेतुभङ्ग–पु., धरणभङ्गः ( असंशा. १२.४ )

सेना–स्त्री., ग्रहमातृ० ( असंउ. ४ )

सेन्दिनी–स्त्री., वनस्पति० मृगाक्षी ( रा. ७.२५८; पृ. ४२ )

सेन्द्रिय–वि., चेतनम् ( चशा. १.१३६ )

सेलु–स्त्री., वनस्पति० वनमेथिका ( ध. ६.११३; असंसू. ७.१२४-१२६; पृ. २३१ )

**सेवनी**–शारीर० सीवनी, तत्संख्या सप्त, पञ्च शिरसि, एका जिह्वायामेका शेफसि तत्र द्वे सेवन्यौ शिरसि शङ्खावाश्रित्य प्रवृत्ते, द्वे कृकाटिके, एकोपरिस्था ऋज्वीति पञ्च (इन्दु. असंशा. ५.८७) जिह्वाधोभागे जिह्वाग्रान्मूलपर्यन्तम् (सुशा. ५.१५) मेढ्राद्गुद-द्वारपर्यन्तं गुदद्वाराद्गुदास्थिपर्यन्तं स्त्रीणां तु भग-स्थाने या सा योनिद्वाराद्गुदपर्यन्तं गुदात्पश्चाद्गु-दास्थिपर्यन्तं च (सुशा. ५.१५) मेहनसीवनी-च्छेदः, छेदाद्रुजः प्रादुर्भावो भवति (सुचि. ७.३६)

**सेवाली**–स्त्री., वनस्पति० आकाशमांसी (रा. १२.९५; पृ. १०५)

**सेव्य**–पु., वनस्पति० पिप्पलः (ध. ५.७९; पृ. १८५) न., वनस्पति० उशीरम् (चचि. ६.५०; (सुउ. ४२.११६)

**(सेव्या)**–स्त्री., वनस्पति० वासन्ती (ध. ५.१३९; पृ. १९८)

**सेहुण्ड**–पु., वनस्पति० स्नुक् (रा. ८.३५५ पृ. ५६)

**सैंहलक**–पु., मिश्रधातु० पित्तलः (ध. ६.१९; पृ. २०९)

**सैंहली**–स्त्री., वनस्पति० गजपिप्पली (रा. ६.११९ पृ. ८५)

**सैकतेष्ट**–न., वनस्पति०आर्द्रकम् (ध. २.८४ पृ. ८७)

**सैंदुक**–न., काष्ठमणि० सिंदुको निर्गुंडी, तत्काष्ठकृतं रुचकं; तत्फलकृतमित्यन्ये (सुउ. ३१.७)

**सैन्धव**–न., खनिज० लवणम् लवणानामग्र्यम् (चसू. २५.३७) सिन्धुदेशोत्थ–खनिज० (सुसू. ३७.१९) हितत्वेनाभ्यसनीयमेकं द्रव्यम् (चसू. ५.१२) तद्गुणाः– मधुरं; लवणं (रा) शीतम्; स्निग्धम्, लघु, स्वादुपाकि, हृद्यं, वृष्यं, रोचनं, दीपनं, चक्षुष्यं, त्रिदोषघ्नम् (सुसू. ४६.३१४) हृद्रोगनेत्ररोगव्रणारोचकनाशनम् (ध. २.२५; रा. ६.३३; पृ. ७३) हिक्कानाशनम् (सुउ. ५०.२४) इदं कफविलयनं कफच्छेदनं च करोति (असंसू. ११.२२)

हिं.—सैंधानोन.
म.—शेन्दे लोण.
गु.—सिन्धालूण.
बं.—सैन्धवलवण.
ता.—इन्तुप्पु.
देश० (चचि. १.१८)

**–सिद्धतैल**–न., तैल० (चसि. ४.१३-१७)

**सैन्धवादिचूर्ण**–न., योग० तद्गुणाः–रोचनं, दीपनं, बल्यं पार्श्वार्तिश्वासकासनुच (चचि. ११.८५-८७)

**सैन्धवादिसिद्धपयस्**–न., वाताभिष्यन्दे सेके आश्च्योतने वा हितकरम् (सुउ. ९.१२-१३)

**सैन्धवाद्यञ्जन**–न., अञ्जन० शुष्काक्षिपाके उपयुक्तम् (सुउ. ९.२०)

**सैरीय**–पु., वनस्पति० कुरण्टकः (सुचि. २५.३२)

**सैरीयक**-पु., न., वनस्पति० श्वेतकुरण्टकः द्र० 'कुरण्टक' (सुसू. ३८.७३; असंउ. २८)

**सैरीयादितैल**–न., तैल० खलतिपलितघ्नम् (सुचि. २५.३२-३७)

**सैरेय**–पु., वनस्पति० कुरण्टकः (चसू. १४.३२; ध. १.२७८ पृ. ६३)

**सैरेयक**–पु., न. वनस्पति० कुरण्टकः (र. २८.८९; ध. १.२७८; सुचि. पृ. ६३)
झिण्टी पु., (र. २८.८९)
कीट० तद्गुणाः–असौ सौम्यः श्लेष्मप्रकोपणश्च कफ-विकारान् करोति (सुक. ८.१२-१५)

**–द्वय**–न., वनस्पति० रक्तपुष्पनीलपुष्पकण्टशेलुया-द्वयम् द्र० 'कुरण्टक०' (सु सू. ३८.१०-११)

**सैर्यक**–पु., वनस्पति० कुरण्टकः (अहृसू. १५.१७)

**–युग्म**–न., वनस्पति० सैरेयकद्वयम् द्र० 'कुरण्टक' (असंसू. १६.१५)

**सैहल**–न., वनस्पति० त्वक् (ध. २.५०; पृ. ७९)

**सोच्छ्वास**–वि., अनवगाढः (बन्धः) शिथिलः (सुसू. १८.२३)

**सोत्थान**–न., अनिरुत्थम्, अमृतम् (र. २८.१५)

**–लोहमारण**–न., उत्थितं लोहं मुहुर्मुहुस्त्रिफला-क्वाथेन पुटनम् (र. २८.१८)

**सोपसर्गा**–वि., सोपद्रवा (चसू. १३.७१)

**सोपान**–न., आरोहणम् (असंसू. ४.४०)

**सोम**–पु., वनस्पति० सोमवल्ली, ओषधीनां श्रेष्ठः (चसू. २५.४०) सोमनामिकाया लताया दश पञ्च च पत्राणि भवन्ति। तानि पत्राणि शुक्लपक्षे, प्रत्यहमेकैकं पत्रं जायते। पौर्णमास्यां तिथौ सोमः पञ्चदशच्छदात्मको भवति। कृष्णपक्षे प्रतिदिन-मेकैकं पत्रं शीर्यते। अमावास्यायां तिथौ सोमः पत्रविहीनः केवललतारूपात्मको भवति (सुचि. २९.२०-२२) एक एव खलु भगवान् सोमः स्थाननामाकृतिवीर्यविशेषैश्च चतुर्विंशतिधा भिद्यते। ते चांशुमान् मुञ्जवांश्चन्द्रमा रजतप्रभो

दूर्वासोमः कनीयान् श्वेताक्षः कनकप्रभः प्रतानवांस्तालवृन्तः करवीरोऽशवान्, स्वयंप्रभो महासोमो गरुडाहृतो गायत्रस्त्रैष्टुभः पाङ्क्तो जागतः शाक्करोऽग्निष्टोमो रैवतस्त्रिपदा गायत्र्या युक्त उडुपतिरुच्यते ( सुचि. २९.५-८ ) अतोऽन्यतमं सोममुपयुयुक्षुः सर्वोपकरणपरिचारकोपेतः प्रशस्ते देशे त्रिवृतमागारं कारयित्वा हृतदोषः प्रतिसंसृष्टभक्तः प्रशस्तेषु तिथिकरणमुहूर्तनक्षत्रेषु अंशुमन्तमादायाध्वरकल्पेनाहृतमभिषुतमभिहुतं चान्तरागारे कृतमङ्गलस्वस्तिवाचनः सोमकन्दं सुवर्णसूच्या विदार्य पयो गृह्णीयात् सौवर्णे राजते वा पात्रेऽञ्जलिमात्रं, ततः सकृदेवोपयुञ्जीत नास्वादयन्, तत उपस्पृश्य शेषमप्स्ववसाद्य यमनियमाभ्यामात्मानं संयोज्य वाग्यतोऽभ्यन्तरतः सुहृद्भिरुपास्यमानो विहरेत् । निवाते रसायनं पीतवांस्तु तन्मनाः शुचिः आसीत न कथंचन संविशेत् । सायं वा भुक्तवानुपश्रुतशान्तिः कुशशय्यायां कृष्णाजिनोत्तरायां सुहृद्भिरुपास्यमानः शयीत, तृषितो वा शीतोदकमात्रां पिबेत्; ततः प्रातरुत्थायोपश्रुतशान्तिः कृतमङ्गलो गां स्पृष्ट्वा तथैवासीत, तस्य जीर्णे सोमे छर्दिरुत्पद्यते, ततः शोणिताक्तं कृमिव्यामिश्रं छर्दितवते सायं शृतशीतं क्षीरं वितरेत्, ततस्तृतीयेऽहनि कृमिव्यामिश्रमतिसार्यते, स तेनानिष्टप्रतिग्रहभुक्तप्रभृतिभिर्विशेषैर्विनिर्मुक्तः शुद्धतनुर्भवति, ततः सायं स्नाताय पूर्ववदेव क्षीरं वितरेत्, क्षौमवस्त्रास्तृतायां चैनं शय्यायां शाययेत्; ततश्चतुर्थेऽहनि तस्य श्वयथुरुत्पद्यते, ततः सर्वाङ्गेभ्यः कृमयो निष्क्रामन्ति, तदहश्च शय्यायां पांशुभिरवकीर्यमाणः शयीत, ततः सायं पूर्ववदेव क्षीरं वितरेत् । एवं पञ्चमषष्ठयोर्दिवसयोर्वर्तेत, केवलमुभयकालमस्मै क्षीरं वितरेत्; ततः सप्तमेऽहनि निर्मांसस्त्वगस्थिभूतः केवलं सोमपरिग्रहादेवोच्छ्वसिति तदहश्च क्षीरेण सुखोष्णेन परिषिच्य तिलमधुकचन्दनानुलिप्तदेहं पयः पाययेत्; ततोऽष्टमेऽहनि प्रातरेव क्षीरपरिषिक्तं चन्दनप्रदिग्धगात्रं पयः पाययित्वा पांशुशय्यां समुत्सृज्य क्षौमवस्त्रास्तृतायां शय्यायां शाययेत्, ततोऽस्य मांसमाप्याय्यते, त्वक् चावदलति, दन्तनखरोमाणि चास्य पतन्ति; तस्य नवमदिवसात्प्रभृत्यणुतैलाभ्यङ्गः सोमवल्ककषायपरिषेकः; ततो दशमेऽहन्येतदेव वितरेत्, ततोऽस्य त्वक् स्थिरतामुपैति; एवमेकादशद्वादशयोर्वर्तेत; ततस्त्रयोदशात्प्रभृति सोमवल्ककषायपरिषेकः, एवमाषोडशाद्वर्तेत; ततः सप्तदशाष्टादशयोर्दिवसयोर्दशना जायन्ते शिखरिणः स्निग्धवज्रवैदूर्यस्फटिकप्रकाशाः समाः स्थिराः सहिष्णवः, तदा प्रभृति चानवैः शालितण्डुलैः क्षीरयवागूमुपसेवेत यावत्पञ्चविंशतिरिति; ततोऽस्मै दद्याच्छाल्योदनं मृदूभयकालं पयसा, ततोऽस्य नखा जायन्ते विद्रुमेन्द्रगोपकतरुणादित्यप्रकाशाः, स्थिराः स्निग्धा लक्षणसंपन्नाः केशाश्च सूक्ष्मा जायन्ते, त्वक् च नीलोत्पलातसीपुष्पवैदूर्यप्रकाशा ऊर्ध्वं च मासात्केशान्वापयेत्, वापयित्वा चोशीरचन्दनकृष्णतिलकल्कैः शिरः प्रदिह्यात् पयसा वा स्नापयेत्; ततोऽस्यानन्तरं सप्तरात्रात्केशा जायन्ते भ्रमराञ्जननिभाः कुञ्चिताः स्थिराः स्निग्धाः; ततस्त्रिरात्रात् प्रथमावसथपरिसरान्निष्क्रम्य मुहूर्तं स्थित्वा पुनरेवान्तः प्रविशेत्, ततोऽस्य बलातैलमभ्यङ्गार्थेऽवचार्यं, यवपिष्टमुद्वर्तनार्थे, सुखोष्णं च पयः परिषेकार्थे, अजकर्णकषायमुत्सादनार्थे, सोशीरं कूपोदकं स्नानार्थे, चन्दनमनुलेपार्थे, आमलकरसविमिश्राश्चास्य यूषसूपविकल्पाः, क्षीरमधुकसिद्धं च कृष्णतिलमवचारणार्थे, एवं दशरात्रम्; ततोऽन्यद्दशरात्रं द्वितीये परिसरे वतत; ततस्तृतीये परिसरे स्थिरीकुर्वन्नात्मानमन्यद्दशरात्रमासीत, किञ्चिदातपवनान् वा सेवेत, पुनश्चान्तः प्रविशेत्, न चात्मानमादर्शेऽप्सु वा निरीक्षेत रूपशालित्वात्; ततोऽन्यद्दशरात्रं क्रोधादीन् परिहरेत्, एवं सर्वेषामुपयोगविकल्पः । विशेषतस्तु वल्लीप्रतानक्षुपादयः सोमा ब्राह्मणक्षत्रियवैश्यैर्भक्षयितव्याः । तेषां तु प्रमाणमर्धचतुष्कमुष्टयः ( सुचि. २९.१०-१२ ) सोमगुणाः— विचक्षणः सोममुपयुज्य दशवर्षसहस्राणि नवां तनुं धारयते । अग्नितोयविषशस्त्रास्त्राणि तस्यायुःक्षपणे समर्थानि न भवन्ति । रूपेण कन्दर्प इव, कान्त्याऽपरश्चन्द्र इव महाद्युतिः स भूतानां मनांसि प्रह्लादयति । साङ्गोपाङ्गान् निखिलान् वेदान् तत्वतो विन्दति ( सुचि. २९.१४-१९ )

गुडूची ( ड. सुक. १.३७ )

कङ्कोलः ( ड. सुचि. १८.३३ )

कट्फल ( जेज्जटाचार्यः, सुचि. १७.२०–२१ )

ब्राह्मी ( सुसू. ३७.२४ )

बाकुची ( र. २०.२०३ )

सोमवल्कः ( सुक. ६.३ )

जलम् ( चसू. ५.६ )
याग० ( असंसू. ९.११५ )
देवता० (चचि. ३.८२) चन्द्रमाः, आकाशस्थग्रहः ( चसू. ६.५; सुसू.२१.८ )
दोष० कफ ( सुशा. ४.३ )
वि., सह उमया इति० सोमः उमासहितः ( देवः शिवः ) ( चक्र. जेज्जटः, चचि. ३.३१०–११ )
प्राणेष्वेकः, सोमश्च सौम्यधातोरोजप्रभृतेः पोषणेन प्राणयति ( सुशा. ४.३ )
श्लेष्मरसशुक्रादीनां तोयात्मकानां भावानां रसनेन्द्रियस्य च शक्तिरूपतयाऽवस्थितः ( सुशा. ४.३ ) मनसोऽधिदेवत्वमापन्नः सोम इति

**(सोमा)**–स्त्री., वनस्पति० सोमः ( रापरि. ३.३०; पृ. ३३१ )
ब्राह्मी ( असंसू. ८.२५; ध. ४.१००; पृ. १५४)
चन्द्रतरुः ( असंउ. ४० )

**–क्षीरा**–स्त्री., वनस्पति० सोमः ( रापरि. ३.३०; पृ. ३३१ )

**–क्षीरी**–स्त्री., वनस्पति० सोमः ( धपरि. ४.४; पृ. १६८ )

**–देव**–पु., ऋषि० प्राचीनो रसाचार्यः ( र. ८.२३९ ) रसेन्द्रचूडामणिकर्ता ( र. ८.९९ )

**–नाथ**–पु., ऋषि० प्राचीनो रसाचार्यः ( र. ५.७२ )

**–नालयन्त्र**–न., यन्त्र० सोमानलयन्त्रम् तदिदमभ्रादिजारणार्थमुपयुज्यते ( र. ९.२९ )

**–राजी**–स्त्री., वनस्पति० बाकुची ( ध. १.१६५; चसू. २.२४; सुक. ६.१४-२७, प. ३८ )

**–रोग**–पु.,रोग० स्त्रीरोगविशेषः, तत्संप्राप्तिः–व्यवायाधिक्यशोकगरादिकारणैःसर्वशरीरस्थोऽब्धातुःक्षुब्धो भवति, तेनातिश्वेतस्रावो भवति। वेगधारणमपि अशक्यं जायते। तल्लक्षणानि–शिरःशिथिलता, मुखतालुशोषः, मूर्च्छा, जृम्भा, प्रलापोऽतितृष्णातिबुभुक्षा, रूक्षा त्वक् ( मा परि ) चरके त्रिदोषप्रदरेऽन्तर्भावितोऽयं व्याधिः ( मा परि. )

**–लता**–स्त्री.,वनस्पति० ब्राह्मी (रा. ५.१४८; पृ. १५४)

**–लतिका**–स्त्री., वनस्पति० गुडूची (रा. ३.१ पृ. ८)

**–वल्क**–पु., वनस्पति० कट्फलत्वक् (सुसू. ३७.२४, इंदुः असंउ. ४६; ध. १.७३; पृ. २१ )
खदिरः (चसू. ४.१५; ध. १.२७ पृ. १२ )
रीठाकरञ्जः ( रा. ९.१८७ )
श्वेतखदिरः (चक्र.१.२२;सुचि.२९.१२)
विट्खदिरः, (चक्र. चसि. १०.४३) द्र० 'खदिर'
कट्फलः ( सुक. ३.९-१० )

**–वल्लरी**–स्त्री., वनस्पति० ब्राह्मी ( रा. परि. ५.४१; पृ. ३४३ )

**–वल्ली**–स्त्री., वनस्पति० तद्गुणाः–कटुस्तिक्ता मधुरा, शीता, रसायनी, त्रिदोषघ्नी, दाहतृष्णाविशोषशमनी ( धपरि. ४.४; पृ. १६८ रापरि.३.२९; पृ३३१)
वत्सादनी ( रा परि. ३.३२ पृ. ३३२ )
बाकुची ( ध. १.१६५; पृ. ३८ )
गुडूची (ध. १.२; सुक. १.५१-५४ पृ. ८)
ब्राह्मी ( असंसू. ८.४२ )

**–सार**–पु., सोमवल्कः. खदिरभेदः द्र० 'खदिर' ( रा. ८.३४; पृ. १२ )

**–सृष्टा**–स्त्री., वनस्पति० कूष्माण्डिका, त्रपुसभेदः, द्र० 'त्रपुस' ( ध. १.१८३; पृ. ४३ )

**–सेनानी**–पु., सत्यवाक्प्रभृतीनामेकतमोऽयं प्राचीनो रसाचार्यः ( र. ४.४३ )

**सोमातिपतित**–वि., सोमस्यातिपानेन पतितः ( शक्रः ) ( चचि.२४.४ )

**सोमात्मक**–वि., सौम्यम् सोमाधिष्ठितम्, सोमगुणप्रधानम् ( सुसू. १५.२१-२२ )

**सोमानलयन्त्र**–न., यन्त्र० जलमध्यखर्परे बिडयुक्तपारदसहितां मूषां स्थापयित्वा तदुपरि चाग्निं प्रज्वालयेदित्येतत् अभ्रकादिजारणार्थमुपयुज्यते ( र. ९.२९ )

**सोमाभिपतित**–वि., सोमाभिपतनयोगेन सोमपानातियोगेन पीडितः ( चन्द्रः ) ( चचि. १(४).४३ )

**सोमार्हा**–स्त्री., वनस्पति० सोमवल्ली ( रापरि. ३.२९; पृ. ३३१ )

**सौकरपुट**–न., लेपवेधोपयोगि वराहपुटम् ( र. ८.९० )

**सौकरी**–स्त्री., वनस्पति० वाराहीकन्दः ( ध. ४.९२; पृ. १५२ )

**सौकुमार्य**–न., सुकुमारत्वम्, सुकोमलता ( अहृसू. ५.३७ )

**सौकुमार्यार्थिन्**–वि., सुकुमारत्वकांक्षिणः, सुकुमारस्य भावः सौकुमार्यम्, तस्यार्थी ( चसू. १३.४२ )

**सौक्ष्म्य**–न., सूक्ष्मत्वम्, अणुत्वम् ( सुउ. ३९.६५ )

**सौगन्धिक**–पु., कफजः क्रिमिविशेषः ( चसू. १९.४(९) वनस्पति० शुन्धी, कमलभेदः द्र० 'कमल' ( चसू. ४.१५ )
नीलपद्मम् ( ध. ४.१५०; सुसू. ३८.५२-५३; पृ. १६४ )

रत्न० माणिक्यभेदः ( चचि. १७.१२६ )
खनिज० गन्धकः, गन्धतृणं वा
( चक्र. चसू. ३.१० )
नपुंसकविशेषः, षण्ढः, नासायोनिः, यः पूतियोनौ जायेत, योनिशेफसोर्गन्धमाघ्राय बलं लब्ध्वा मैथुनक्षमो जायते सः ( सुशा. २.३९; असंशा. २.४४ )

**सौत्रामणी**–स्त्री., यज्ञ० तत्र सुरा हूयते (चचि. २४.३)

**सौध**–न., सुधाधवलितगृहम्, धवलगृहम्
( अहृसू. १३.६ )
खनिज० रौप्यम् (ध. ६. ५; पृ.२०६)
**-पयस्**–न., सेहुण्डभवं पयः, तद्गुणः–तीक्ष्णविरेचनम् ( सुसू. ४४.७८ )

**सौप**–पु., उपकरणभूतद्रव्यसाधकः, सूपव्यञ्जनादिकारकः, महानसनियुक्तपरिचारकान्यतमोऽयम्
( सुक. १.१७-१८ )

**सौपर्ण**–वि., सुपर्णस्येदम् ( गारुडचक्षुरिव तिग्मदृष्टिकम् ) ( सुचि. २७.१२; असंउ. १६ )
न., रत्न० गारुत्मतम् ( ध. ६.४९; पृ. २१६ )
वनस्पति० शुण्ठी ( रा. ६.१३०; पृ. ८७ )

**( सौपर्णी )**–स्त्री., वनस्पति० वत्सादनी
( रापरि. ३.३२; पृ. ३३२ )

**सौभाग्य**–न., खनिज० सिन्दूरम् ( रा. १२.१६१; पृ. ११६ )
खनिज० टङ्कणः ( र. २.२५ )
**-लोभ**–पु., सौभाग्यस्य लोभः ( असंसू. ८.३ )
**-शुण्ठी**–स्त्री., अवलेहविशेषः द्वात्रिंशत्तोलकमानेन जलेनाढकमितं दुग्धं तुलार्धमानां च शर्करां मिश्रयित्वा दर्वीप्रलेप्यवलेहं कुर्यात्तत्र चैलाकण्टकारिकाविडङ्गत्रिकटुजीरकदीप्यकभृङ्गलवङ्गबोलान्प्रत्येकं पलमात्रं, मिशिं पञ्चपलं, धान्यं पलत्रयं शुण्ठीमष्टपलं च चूर्णयित्वा प्रक्षेपयेत्। असाववलेहविशेषः सूतिकारोगान्विशेषतो ज्वरप्लीहमलस्तम्भगुल्मकासश्वासाग्निमान्द्यान्नाशयति
( र. २२.११७-२२ )

**सौभाञ्जन**–पु., वनस्पति० शिग्रुः ( ध. ४.४०; पृ. १४२ )

**सौभाञ्जनक**–पु., वनस्पति० शोभाञ्जनः द्र० 'शिग्रु'
( असंसू. १५.२७ )

**सौमनस**–पु., जातीपुष्पकृतः कषायः ( सुउ. ३९.२६९)
न., वनस्पति० जातीफलम् ( ध. ३.३५; पृ. १०२ )

**सौमनसायिनी**–स्त्री., वनस्पति० जातिपत्री
( कच. ४.१६; रा. १२.६५; पृ. १०२)

**सौमनस्य**–न., मनसः प्रसन्नत्वम् ( चसू. २५.४०; (सुशा. १०.३० )

**सौमेख**–न., खनिज० सुवर्णम् ( रा. १३.३; पृ. २०६ )

**सौम्य**–वि., सोमगुणप्रधानः (चसू. ६.५) सोमभूताधिदैवतस्वभावः ( सुसू. १.२२ )
जलभूयिष्ठम् (सुशा. ३.३)
कफजः (चनि. १.४)
ज्वरस्यैको भेदः, विधिभेदः, द्र० 'ज्वर'
( चचि. ३.३२)
पु., वनस्पति० उदुम्बरः ( रा. ११.१३७; पृ. १८६ )
गुण० शीतः ( सुसू. १४.३ )
न., भैषज्य० दुग्धम् ( ध. ६.१६१; पृ. २३९ )

**( सौम्या )**–स्त्री., वनस्पति० तद्गुणाः– मधुरा, कटुः शीता, पाचनी, यज्ञसाधनी, पित्तदाहनुत्, तृष्णाविशोषशमनी च ( रापरि. ३.३१; पृ. ३३२ )
रुद्रजटा ( रापरि. ३.२४; पृ. ३३१ )
सठी ( रा. ६.८७; पृ. १९)
हेमा ( रापरि. ३.१३; पृ. ३३० )
मल्लिका ( रा. १०.२२५; पृ. १९७ )
ब्राह्मी ( रा. ५.१४७; पृ. १५४. )
शालिपर्णी ( ध. १.८७; पृ. २३.)
नागवल्ली ( धपरि. ३.१; पृ. १३१ )
गुडूची ( ध. १.३; पृ. ८१ )
क्लीतनकम् यष्टिमधुभेदः द्र० 'यष्टिमधु'
( रा. ६.१८५; पृ. ३४ )
चूडामणिः, काकमाची–भेदः
( रा. ३.४६; पृ. १४० )
इन्द्रवारुणी ( रा. ३.३७६; पृ. ५८ )
तेजोवती ( रा. ३.३९३; पृ. ६१ )
भैषज्य० मौक्तिकम् ( रा. १३.६६; पृ. २१८ )
**-गन्धा**–स्त्री., वनस्पति० शतपत्री
( ध. ५.१५१; पृ. २०१ )
**-धातु**–शारीर० रसधातुः ( सुचि. २६.१०-११; असंनि. ५.४४ )
शुक्रधातुः ( सुचि. २६.१०-११ )
**-मर्मन्**–न., सौम्येषु मर्मसु सोमोऽधिकः, वैकल्यकराणि सौम्यानि ( सुशा. ६.१६ )

**सौम्यर्तु**–पु., शीतकालः हेमन्तः ( सुचि. ३.८)

**सौम्याख्यागद**-पु., भेषज्य० मनःशिला, शमी-पुष्पत्वक्सर्षपकपित्थगोपित्तादियुक्तः योगोऽयम् औषधिविषहरः ( असंसू. ८.१०९-११ )

**सौम्याग्नेयमर्मन्**-न., यत्र मर्मसु सोमाग्नी भूयसाऽवतिष्ठतः, अग्निगुणेष्वाशु क्षीणेषु क्रमेण च सोमगुणेषु कालान्तरेण क्षपयन्ति । यथा कालान्तरप्राणहराणि मर्माणि ( सुशा. ६.१६ )

**सौर**-पु., वनस्पति० तुम्बुरुः ( ध. २.४२; पृ. ७८ )

**सौरभ**- पु., वनस्पति० तुम्बुरुः ( ध. २.४२ पृ. ७८ )
न., वनस्पति० निर्यास० बोलम् ( रा. ६.११६ पृ. १०८ )
धान्य० व्रीहिः ( रा. १६.११७ पृ. २२२ )

**सौरस**-पु., रक्तजकृमिः (चवि. ७.११) चसू १९.४( ९ )

**सौरस्य**-न., सौगन्ध्यम् ( असंशा. ९.१७ )

**सौराव**-पु., मांसरसस्योपरितनोऽच्छो भागः, तस्य गुणाः—सर्वभूतानां प्रीणनो विशेषान्मुखशोषिणां हितः, क्षुत्तृष्णाऽपहरः, स्वादुः शीतलश्च ( सुसू. ४६.३६२-३६३ )

**सौराष्ट्र**-पु., वनस्पति० कुन्दुरुः ( रा. १२.१९०; पृ. १२१ )
पु., न., देश० काठियावाडनामा ( र. ?.६६ )

**( सौराष्ट्री )**-स्त्री., खनिज० स्फटिका ( चचि. ७.११४; सुउ. ६२.३१ ) तद्गुणाः—कटुः, कषाया, केश्या, व्रणरोपणी, नेत्रहितकरी; कण्ठ्या ( र. ३.७० ) त्रिदोषघ्नी, विषकण्डूविसर्पश्वित्रनाशिनी ( ध. ३.१०५; पृ. ११६ ) उपदंशव्रणे लेपार्थमुपयुज्यते ( असंउ. ३९ ) तस्याः शोधनं सत्त्वपातनं च काञ्जिके क्षिप्ता सा दिनत्रयेण शुद्धा भवति । क्षाराम्लैर्मर्दिता ध्माता तुवरी स्वीयसारं मुञ्चति । सा गोपित्तेन वारशतं भावयेदनन्तरं ध्मापयेत् एवं साऽतिगोपनीयं क्रामणं सत्वं मुञ्चति ( र. ३.७१-७३ )
वनस्पति० कुन्दुरुः ( ध. ३.१३१; पृ. १२१ )

**सौराष्ट्रिक**-वि., सौराष्ट्रदेशविशेषस्थः ( लोक० ) ( चवि. १.१८ )
न., खनिज० कांस्यम् ( रा. १३.२४; पृ. २१० )

**( सौराष्ट्रिका )**-स्त्री., खनिज० सौराष्ट्री, तुवरीमृत्तिका ( चक्र. चचि. ३०.७८-८० )

**सौरि**-पु., वनस्पति० आदित्यभक्ता ( रा. ४.१४४; पृ १५३ )
असनः ( ध. ५.१२५; पृ. १९५ )

**सौरीयक**-न., स्थावरविषभेदः, यस्य त्वक्सारो निर्यासश्च विषमयो भवति ( सुक. २.५ )

**सौर्यमारुतिक**-वि., वातातपिको ( विधिः ) असौ सूर्यमारुतसेवयाऽपि क्रियते इति (चचि. १(४)२८)

**सौवर्चल**-न., खनिज० पञ्चलवणेष्वेकम् (चसू. २७.३०१ ) तद्गुणाः—लवणं; कटु ( सु ) उष्णं, लघु, सूक्ष्मं, रुच्यं, सुगन्धि, हृद्यम्; विशदम् ( सु ) उद्गारशोधि; गुल्मशूलविबन्धघ्नं च ( सुसू. ४६.३१७; चसू. १.८८.८९ ) ऊर्ध्ववातामार्तिनाशनम् ( ध. २.३०; पृ. ७४ )
हिं.—संचरनमक.
**म.—पादेलोण.**
गु.—संचललूण.
बं.—संचरलवण.
वनस्पति० सूर्यावर्तशाकम् ( चक्र. चचि. २९.५२ )

**सौवर्ण**-वि., सुवर्णस्येदम् ( सुउ. १८.६१-६२ ) स्वर्णस्य कृतमतिसूक्ष्मं चूर्णम् ( सुशा. १०.६८-७० )
सुवर्णभस्म ( भाप्र. सुशा. १०.६८-७० )

**( सौवर्णी )**-स्त्री., वनस्पति० दारुहरिद्रा (चचि.७.७७)

**सौवर्णिका**-स्त्री., लूता० तद्दष्टलक्षणानि—ध्यामः सफेनो मत्स्यगन्धकः श्वासः कासो ज्वरस्तृष्णा सुदारुणा मूर्च्छा चात्र भवन्ति । चिकित्साऽसाध्या, कृच्छ्रसाध्या च ( सुक. ८.१२२ )

**सौवीर**-न., वनस्पति० बदरभेदः, सौवीरबदरम् (अहसू. ६.१२०; ध. ५.९६ पृ.) द्र० 'बदर' अञ्जनविशेषः, सुवीरानदीभवमञ्जनम् अक्ष्णोर्नित्यं हितं प्रयोजयेत् ( च. सू. ५.१५ ) पित्तविदग्धदृष्टौ हितम् ( सुउ. १७.१३.१४ ) तच्च हिमं रक्तपित्तहरं विषहिध्मादिरोगघ्नं, व्रणशोधनरोपणं च ( ध. ३.९५१; र. ३१९ पृ. १२५ )
हिं.—सफेद सुरमा.
**म.—पांढरा सुरमा.**
गु.—सुरमो.
बं.—श्वेतसुरमा.
बं.—श्वेतसुरमा.
आसुत० काञ्जिकम् ( ध. ६.२४९; पृ. २५० )
**-बदर**-न., बदरफलम्; तच्च पुरातनं ग्राह्यम्, तद्गुणाः—तृट्शमनं, श्रमघ्नं, दीपनं, लघु, स्निग्धं, मधुरं वातपित्तजिच्च ( सुसू. ४६.१४६ )
**-सार**-न., खनिज० स्रोतोञ्जनम् ( रा. १३.२२६; पृ. १२७ )

**सौवीरक**-न., आसुत० ( सु सू. ४४.३५-४० )
**सौवीरक**-पु., देश० ( चवि. १.१८ )
न., आसुत० काञ्जिकम् ( चसू. १५.७ )
( सुउ. १७.१३-१४; ध. ६. २५१; पृ. २५१ )
**सौवीरकाञ्जन**-न., अञ्जन० सौवीरम्
( असंसू. १२.२५-२६ )
**सौवीराञ्जन**-न., अञ्जन० सौवीरम् ( र. ३.१०८ )
**सौवीरोदक**-न., आसुत० तद्गुणाः- दीपनं, जरणीयं, ग्रहण्यर्शोहितं भेदि हृत्पाण्डुकृमिरोगनुच्च
( चसू. २७.१९१ )
**सौशृताख्य**-पु., नारिकेलपाकः ( र. २६.५६-६२ )
**सौश्रुत**-न., सुश्रुतप्रोक्तं तन्त्रम्, सुश्रुतसंहिता
( सुसू. ४.९ )
**सौषिर्य**-वि., सुषिरत्वम् ( अरु. ) सरन्ध्रत्वम्
( हे. अहृसू. १२.५० )
**सौसुराद**-पु., पुरीषजक्रिमिविशेषः ( चवि. ७.१३ )
**सौहित्य**-न., तृप्तिः ( चसू. ५.६; सुउ. ४२.९ ) वैपुल्यम् ( चनि. ३.१५; चवि. २.८ )
**सौहित्यासहता**-स्त्री., तृप्त्यक्षमत्वम् ( सुउ. ४२.९ )
**स्कन्द**-पु., पुरुषशरीरग्रहविशेषः ( असंउ. ३ ) बालग्रहः कार्तिकेयः स्कन्दग्रहः ( कासू. १९ )
प्राचीनो रसाचार्यः ( र. २२.२९ )
-**ग्रह**-पु., बालग्रह० नवग्रहेष्वेकः ( सुउ. २७ ४.५ )
स्कन्दजुष्ट-लक्षणानि- बालस्याक्षिणी शोफयुक्ते भवतः । स विस्रगन्धी स्तनानभिलाषी वक्रमुखः संभ्रमितचित्तो मिलितलोचनोऽल्परोदनो गाढमुष्टिवर्चा हतचलितपक्ष्मनेत्रः यः, सः स्कन्दग्रहार्तो बालः ( सुउ. २७.८; काइ. ११.१४ ) तत्र वातहरा चिकित्सा कार्या ( सुउ. २८.३ )
-**ग्रहप्रतिषेध**-पु., अध्यायसंज्ञा० ( सुउ. २८.१)
-**पितृ**-पु., बालग्रह० महादेवः ( काइ. १५.१६ )
-**भगिनी**-स्त्री., स्त्रीग्रह० स्कन्दग्रहस्य भगिनी रेवती, षण्मुखी, षष्ठी ( का बालग्रहचि. )
**स्कन्दन**-न., शोणितस्य स्त्यानीकरणम्, रक्तस्तम्भनोपायेष्वेकः ( सुसू. १४.३९ )
**स्कन्दापस्मार**-पु., ग्रह० बालग्रहरोगः
( काइ. १४.१५ ) तज्जुष्टलक्षणानि-ग्रहग्रस्तशिशुः कदाचित् संज्ञां प्राप्नोति। कदाचिदसंज्ञां प्राप्नोति। कम्पितवपुः करचरणौ नर्तयतीव शब्दं कुर्वन् मूत्रवर्चसी त्यजति, सजृम्भः फेनं विसृजति। स्कन्दस्य सखा मित्रं, तेन जुष्टस्तत्सखाभिपन्नः (सुउ. २७.९) तल्लक्षणानि-संज्ञानाशः, केशलुञ्चनं, कन्धरानतिर्विनम्य, जृम्भणं, शकृन्मूत्रप्रवर्तनं, फेनोद्गमनमूर्ध्वेक्षा, हस्तभ्रूपादनर्तनं, स्तनस्वजिह्वासंदंशः, संरंभो ज्वरो जागरः, पूयशोणितगन्धः
( असंउ. ३ )
**स्कन्दापस्मारप्रतिषेध**-पु., अध्यायसंज्ञा०
( सुउ. २९.१ )
**स्कन्दार्त**-वि., स्कन्दग्रहपीडितः ( असंउ. ३ )
**स्कन्दिन्**-वि., घनीभूतम् ( अहृसू. २७.४० )
**स्कन्ध**-पु., शारीर० बाहुशिरः, बाहोरुपरितनो भागः
( चवि. ८.१०७; सुसू. ४६.१३१ )
तरोर्मूलादिशाखापर्यन्तभागः ( असंचि. २४ )
खनिज० पारदः ( रा. १३.४३; पृ. २१४ )
-**घात**-पु.; स्कन्धस्य मुष्ट्यादिना हननम् आघातो वा
( अहृसू. २८.३९ )
-**ज**-पु., वनस्पति० वटः ( ध. ५.७६; पृ. १८४ )
-**तरु**-पु., वनस्पति० नारिकेलः ( रा. ११.१०५;
पृ. १८३ )
-**रुह**-पु., वनस्पति० वटः ( रा. ११.११३;
पृ. १८४ )
-**रोग**-पु., स्कन्धस्य रोगः ( चसि. २.२२ )
**स्कन्धांशक**-पु., खनिज० पारदः
( रा. १३.४३ पृ. २१४ )
**स्कन्धाश्रित**-वि., स्कन्धः कोष्ठः तदाश्रितम्
( अन्तराधिः ) ( चसि. ९.३ )
**स्कन्नत्व**-न., घनीभूतत्वम् ( अहृसू. १२.२८ )
**स्खलित**-न., लुठनम् ( पादादेः ) ( सुसू. २९.४५ )
**स्तन**-पु., शारीर० पयोधरः, षट्पञ्चाशत्प्रत्यङ्गेष्वेकम्, द्वौ स्तनौ (चशा. ७.११) पुंसस्तथा नार्याः स्तनावित्ययमुभयोर्विशेषः, नार्याः स्तनौ यौवनागमने पीवरौ भवतः । तावेव प्रसूताया गर्भवत्याः क्षीरपूरितौ भवतः ( सुशा. ५.४ ) बहिर्मुखस्रोतोविशेषः (सुशा. ५.१० ) इयं स्तनसंपत्—नात्यूर्ध्वौ, नातिलम्बावनतिकृशावनतिपीनौ युक्तपिप्पलकौ सुखप्रपानौ स्तनौ ( चशा. ८.५३ )
-**कीलक**-पु., स्तनरोग० शोथशूल-रुजा-दाहसहितः स्पर्शासहः स्तनः (कासू. १९) तच्चिकित्सा-घर्षणं, मर्दनं शीताः सेकाः प्रलेपाश्च शस्यन्ते (कासू. १९)
-**द्वेष**-पु., लक्षण० स्तनपानस्य द्वेषः ( कासू. २५.[illegible] )

**-पर्यन्त**-न., शरीरप्रत्यङ्ग० स्तनान्तयोर्मध्यम् ( चवि. ८.११७ )

**-मण्डल**-न., शारीर० स्तनः ( चनि. ३.१४ )

**-मूल**-न., मर्म० स्तनमूलमर्म ( असंशा. ७.१२ )

**-मूल-( मर्मन् )** न., स्तनयोरधस्तादङ्गुलद्वयमुभयतः स्तनमूले नाम मर्मणी, तत्र कफपूर्णकोष्ठतया कासश्वासाभ्यां म्रियते ( सुशा ६.२५ ) वक्षोमर्म ( सुशा. ६.१० ) स्तनाधस्तात् द्व्यङ्गुलप्रदेशे-स्तनमूलमर्म ( ड. सुशा ६.२५ ) सिरामर्म ( सुशा. ६.७ ) कालान्तरप्राणहरमर्म ( सुशा. ६.१०.११ ) मर्मसंख्या वामदक्षिणभेदेन द्वे; स्तनमूलमर्मणी ) द्व्यङ्गुलम् ( सुशा. ६.२८ ) स्तनमूलाख्यं मर्मद्वयं सिरामर्मणी द्व्यङ्गुले कालान्तरप्राणहरे च ( सुशा. ६. २५ )

**-रोग**-पु., रोग० स्त्रीणां स्तनाश्रितव्याधिः ( सुनि. १०.१५ ) चतुःषष्टिसूतिकारोगेष्वेकः, स्तनविद्रधिः ( सुनि. १०.२६ )

**-रोगनिदान**-न., अध्यायसंज्ञा० ( सुनि. १०.१ )

**-रोहित**-न., मर्म० स्तनरोहितमर्म० (सुशा. ७.१३) स्तनचूचुकयोरूर्ध्वं द्व्यङ्गुलमुभयतः स्तनरोहितौ नाम, तत्र लोहितपूर्णकोष्ठतया कासश्वासाभ्यां च म्रियते ( सुशा. ६.२५ ) वक्षोमर्म ( सुशा. ६.६-१०,२५ ) स्तनचूचुकयोरूर्ध्वम् ( सुशा. ६.२५ ) मांसमर्म (सुशा. ६.७ ) कालान्तरप्राणहरमर्म ( सुशा. ६.१०-११ ) मर्मसंख्या वामदक्षिणभेदेन द्वे, स्तनरोहितमर्ममानं द्व्यङ्गुलम् ( सुशा. ६.६ )

**-विद्रधि**-पु., स्तनरोग० सूतानां गर्भिणीनां वा योषितां विवृताः स्तनशिराः प्राप्य दोषाः सदुग्धे अदुग्धे वा स्तने बाह्यविद्रधिलक्षणं घनं श्वयथुं कुर्वन्ति । नाडीनां सूक्ष्मत्वात्कन्यानामेष विद्रधिर्न जायते ( असंनि. १२.२०-२१ )

**-संपद्**-स्त्री., सुष्ठु स्तनः, स्तनसौष्ठवम् ( चशा. ८.५३ )

**-स्तम्भ**-पु., लक्षण० स्तनयोः स्तब्धता ( काखिल. ११.६४ )

**स्तनन**-न., ध्वनिः ( चचि. १८.१२ )

**स्तनन्धय**-वि., स्तनौ धयति पिबति इति स्तन्यपाय्यावस्थात्मकः ( बालः ) ( र. १३.८२-९२ )

**स्तनयित्नु**-पु., मेघः ( सुसू. ५.२५ )

**-घोष**-पु., मेघगर्जितम् ( सुसू. २.९ )

**स्तनान्त**-पु., स्तनाग्रम्, चूचुकम् ( चसि. २.१६ )

**स्तनान्तर**-न., शारीर० स्तनयोर्मध्यम् ( चवि. ८.११७; सुसू. ३५.४ )

**स्तनान्तशूल**-पु., लक्षण० स्तनान्तर्भागस्य शूलः ( चसि. २.१६ )

**स्तनान्तशोष**-पु., लक्षण० स्तनान्तर्भागस्य शोषः ( चसि. २.१६ )

**स्तनान्तस्तम्भ**-पु., लक्षण० स्तनाग्रस्य स्तम्भः ( चसि. २.१६ )

**स्तनितफल**-पु., वनस्पति० विकण्टकः (रापरि. ११.२०; पृ. ३७४ )

**स्तनोत्थितरोग**-पु., रोग० स्तनविद्रधिः ( सुचि. १७.४५-४७ )

**स्तन्य**-न., दुग्धम्, स्त्रीदुग्धम्, स्तने भवं स्तन्यम्, रसधातोरुपधातुः, रसात् स्तन्यम् ( चचि. १५.१७ ) कृत्स्नदेहात् स्तनौ प्राप्तः पक्वाहारनिमित्तजो मधुरो रसप्रसादः स्तन्यमित्यभिधीयते ( सुनि. १०.१८ ) तल्लक्षणानि पाण्डुरं मधुरमविवर्णं निर्दोषमुदके क्षिप्तमेकीभवति ( सुनि. १०.२५ ) शीतं स्निग्धम् (चसू. १.१०७) उत्पत्तिः स्त्रीणां प्रसूतितस्तृतीये चतुर्थे वाह्नि हृदयस्थानां सिराणां विवृतत्वात् स्तन्यं प्रवर्तते ( सुशा. १०.१४; असंउ. १ ) प्रस्रवणहेतुः तत्र मौलिको हेतुः स्नेहः, सहायकहेतवः-अपत्यस्य स्पर्शनं, दर्शनं, स्मरणं, स्तनपानार्थं ग्रहणम् ( सुनि. १०.२२-२३ ) कार्यम् स्तनयोरापीनत्वजननम्, बालानां पोषणकृच्च ( सुसू. १५.५ ) स्तन्यदुष्टिः-लवणाम्लकटुक्षारसेवनमनःशरीरसंतापादिहेतुभिर्दोषाः क्षीरवहाः सिराः प्राप्य स्तन्यं दूषयन्ति ( चचि. ३०.२३२-३६ ) सा दोषभेदेन त्रिविधा; तत्र वातदुष्टिः-श्यावारुणवर्णं कषायानुरसं विशदमनालक्ष्यगन्धं रूक्षं द्रवं फेनिलं लध्वतृप्तिकरं कर्शनं वातविकाराणां कारकं वातोपसृष्टं क्षीरमभिज्ञेयम् ( चशा. ८.५५ ) वातसंसृष्टक्षीरलक्षणम्-

वैरस्ययुक्तम्, कार्श्यकरं कृच्छ्रेण देहवृद्धिकरं क्षामस्वरत्वजनकं, बद्धविण्मूत्रमारुतत्ववातिकशीर्षरोगपीनसादिकरं, बलह्रासकरं च ( चचि. ३०.२३९ ) पित्तदुष्टिः-कृष्णनीलपीतताम्रावभासं, तिक्ताम्लकटुकानुरसं कुणपरुधिरगन्धिभृशोष्णं पित्तविकाराणां कर्तृ च पित्तोपसृष्टं क्षीरमभिज्ञेयम् ( चशा. ८.५५ ) पित्तसंसृष्टक्षीरलक्षणम् नीलपीतासितादिकं स्तन्यवैवर्ण्यं च, तादृशस्तन्यसेवनात्, शिशुर्विवर्णगात्रः स्विन्नस्तृष्णालुर्भिन्न

विड्डुष्णशरीरः स्तनपानद्विट् च भवति। प्रकुपितपित्तसंसर्गात् क्षीरं दुर्गन्धि जायते। तत्पानात् पाण्डुामयः कामला च जायते (चचि. ३०.२४३, ४४) कफदुष्टिः- अत्यर्थशुक्लमतिमाधुर्योपपन्नं लवणानुरसं घृततैल-वसामज्जागन्धि पिच्छिलं तन्तुमदुदकपात्रेऽवसीद-च्छ्लेष्मविकाराणां कर्तृ श्लेष्मोपसृष्टं क्षीरमभिज्ञेयम् (चशा. ८.५५) कफसंसृष्टक्षीरलक्षणम्- क्षीरमतिस्निग्धं भवति। तत्सेवनात् शिशुश्छर्दनः कुन्थनो लालालुर्निद्राक्लमसमन्वितः श्वासकासप्रसेक-तमकान्वितः शूनवक्त्राक्षो जडश्च भवति। कुपितात् कफसंसर्गात् क्षीरं गुरुतरं भवति। तत्पानाच्च शिशोर्हृद्रोगपीडा जायते तथा क्षीराश्रिता अन्याश्च रोगा जायन्ते (चचि. ३०.२४६-४९) सामान्य-चिकित्सा-स्तन्यशुध्यर्थमादौ स्नेहोपपादितां धात्रीं संस्वेद्य वमनेनोपपादयेत्। सम्यग्वान्तां कृतसंसर्जनां तां स्नेहयित्वा विरेचयेत्। ततो दोषावशेषघ्नैरन्नपानैरुपाचरेत् (चचि. ३०.२५१--५६) लवणानुरसं स्तन्यं विसर्पकोठकण्डूकरम्, तन्तुमत् स्तन्यं दौर्बल्यश्वासकासकरम् (असंउ २) स्तन्यपानापथ्यम्- क्षुधितशोकार्तश्रान्तप्रदुष्टधातुग-र्भिणीज्वरिताऽतिक्षीणाऽतिस्थूलविदग्धभक्तविरुद्धा हारतर्पितायाः स्तन्यं न पाययेत् (सुशा. १०.३१) स्तन्याभावे पयश्छागं गव्यं वा तद्गुणं पिबेत् (असंउ. १) स्तन्यक्षयलक्षणानि-स्तनयोर्म्लानता, स्तन्यासंभवः स्तन्याल्पता वा (सुसू. १५.१२) स्तन्यक्षयवती सुराशाल्यन्नमांसानि, गोक्षीरं, शर्करां दध्यासवं वाञ्छति (ड. सुसू. १५.२९-३१) क्रोधशोकावात्सल्यादिभिश्च स्तन्यनाशो भवति (सुशा. १०.३०)

वनस्पति० शुक्लजीरकः द्र० 'जीरक' (ध. २.६८)

-कर-वि., स्तन्योत्पादकम् (अहसू. ५.२२)

-क्षय-पु., रोग० स्तन्यहीनता, द्र० 'स्तन' (सुसू. १५.१२)

-जनन-वि., द्रव्यगण० स्तन्योत्पादकः चतुष्के महाकषायेष्वेको गणः, वीरणशालिषष्टिकेक्षुवालि-कादर्भकुशकाशगुन्द्रोत्कटकतृणमूलानीति दशेमानि स्तन्यजननानि भवन्ति (चसू. ४.१२)

-दुष्टि-स्त्री., रोग० द्र० 'स्तन्य' (चचि. ३०.२५१-६२)

-दोष-पु., रोग० द्र० 'स्तन्य' (अहसू. १८.३)

-नाश-पु., रोग० स्त्रीदुग्धप्रवृत्तिनाशः द्र० 'स्तन्य' (सुशा. १०.३०)

-पर्याप्ति-स्त्री., स्तन्यस्य पर्याप्तिः परि समन्ततो भावेन प्राप्तिः। यावत् स्तनपानस्य योग्यता (ड. सुशा. १०.४८)

-प्रवर्तन-न., स्तन्योत्पादनम् (सुशा. १०.१४)

-मातृ-स्त्री., धात्री (इन्दु. असंउ. ५)

-वहसिरा-स्त्री., शारीर० स्तन्यवाही स्रोतोभेदः (कासू. १९)

-विनिवर्तन-न., रोग० स्तन्यनाशः (काचि. ११)

-विशोधन-न., स्तन्यगतदोषाणां निर्हरणम् (चचि. ३०.२२९)

वि., स्तन्यदुष्टिहरः (अहसू. १०.१६)

-शुद्धि-स्त्री., स्तन्यगतदोषाणां शोधनम् (चचि. ३०.२५१-५२)

-शुद्धिकरवर्ग-पु., द्रव्यगण० पाठानागरसुर-तरुघनाऽमृतासारिवेन्द्रयवमूर्वाः कटुकाकिरात-तिक्ताः, अयं वर्गः स्तन्यशुद्धिकरः (असंसू. १५.२३)

-शोधन-वि., स्त्रीक्षीरप्रसादनः (ड. सुसू. ३८.५४-५५)

द्रव्यगण० दुष्टस्तन्यस्य शोधनार्थमुपयुक्तः, चतुष्के महाकषायवर्गे प्रोक्त एको गणः, पाठामहौषधसुर-दारुमुस्तमूर्वागुडूचीवत्सकफलकिराततिक्तककटु-रोहिणीसारिवेति दशेमानि द्रव्याणि स्तन्यशोधनानि (चसू. ४.१२)

-संजनन-वि., स्तन्योत्पादकं तस्य वर्धकं वा (भेषजम्) (चचि. ३०.२२९)

-संपद्-स्त्री., सुष्ठु स्तन्यम्, स्तन्यगुणप्रकर्षः द्र० 'स्तन्य' (चशा. ८.५४)

स्तन्यागमोत्थज्वर-पु., रोग० सूतिकाज्वरभेदस्यैको भेदः (काखिल. ११.६३-६५) द्र० 'सूतिकाज्वर'

स्तन्यावतरण-न., स्तन्यस्य प्रथममुन्मुखीभवनम् (ड. सुउ. ३९.२२)

स्तन्याशय-पु., शारीर० आशयविशेषः, स्तन्यसंचय-स्थानम्, क्षीराशयः (चचि. ३०.२४३)

स्तबकफल-पु., वनस्पति० तेजःफलः (रापरि. ११.१७; पृ. ३६४)

स्तबकाह्वकन्दक-पु., वनस्पति० गुच्छाह्वकन्दः (रापरि. ७.६१; पृ. ३५२)

**स्तब्ध**–वि., क्रियाविरहितः ( चसि. १.३२ ) निश्चलः ( सुचि. २५.५ )
वर्तुलः ( चक्र. चचि. ५.४३ )
**–कोष्ठ**–पु., लक्षण० स्तम्भयुक्तो गतिविरहितः कोष्ठः ( चसि. ७.४८ )
**–गात्रता**–स्त्री., जान्वादेरनमनसामर्थ्यम्, गात्रस्तम्भः ( सुसू. १५.२४-२६ )
**–ता**–स्त्री., क्रियाहीनत्वम्, निश्चलत्वम् ( चसू. ५.९० )
**–नेत्र**–वि., लक्षण० स्तब्धाक्षः, नेत्रस्तम्भवान् ( काखिल. १३.३८ )
**–पादता**–स्त्री., लक्षण० पादस्य स्थैर्यम् ( सुशा. ६.२४ )
**–बाहुता**–स्त्री., लक्षण० बाहुक्रियानाशः ( सुशा. ६.२६ )
**–मेढ्र**–पु., लक्षण० स्तब्धलिङ्गः अरिष्टलक्षणमिदम् ( सुसू. ३२.४ )
**–रोमता**–स्त्री., लक्षण० रोम्णां स्तब्धता ( अहृसू. ११.२२ )
**–सक्थिता**–स्त्री., लक्षण० ऊरुस्तब्धत्वम् ( सुशा. ६.२४ )
**–सिरत्व**–न., लक्षण० अमृदुसिरात्वम् ( ड. सुचि. १.७ )
**–स्नायुत्व**–न., लक्षण० अमृदुस्नायुत्वम् ( सुचि. १.७ )

**स्तम्बिनी**–स्त्री.,वीरुधः प्रकारविशेषः, वर्तुललता-सन्ततिविटपः, ताश्च विदारीकोलवल्लीशालपर्णी-पृश्निपर्णीप्रभृतयः ( ड. सुसू. १.२९ )

**स्तम्भ**–पु., रोग० अशीतिवातविकारेष्वेकः ( चसू., २८.२१ )
लक्षण० निश्चलीकरणम् ( चसू. १३.७५ ) दण्ड-वत् स्तब्धता ( सुचि. ५.६ ) जडिमा ( सुउ. ४३.८ ) बाहूरुजङ्घादीनां सङ्कुचनाद्यभावः ( अरु. ) निष्क्रियत्वम् ( हे. अहृसू. १२.५१ )

**स्तम्भन**–पु., न., उपक्रम० स्तम्भयतीति स्तम्भनः ( चसू. २६.४३(६) स्थिरीकरणम् ( सुनि. १.३१ ) यद्द्रव्यं शीतं, मन्दं, मृदु, श्लक्ष्णं, रूक्षं, सूक्ष्मं, द्रवं, स्थिरं, लघु, तत्स्तम्भनं स्मृतम्; यदौषधं, द्रवं, तन्वसरं, स्वादु, तिक्तं, कषायं, शीतीकरणं तत्सर्वं स्तम्भनम्, स्तम्भनीयरोगाः–पित्तक्षाराग्नि-दाहा वम्यतिसारौ विषस्वेदातियोगाः, युक्तस्तम्भित-लक्षणम्–बलप्राप्तिरामयनाशश्च; अतिस्तम्भित-लक्षणम्–श्यावता; स्तब्धगात्रता, हनुग्रहो हृद्वर्चोनिग्रह उद्वेगः,
( चसू. २२.१७, ३२.३३, ३९.४० ) त्वक्स्नायु-संकोचकम्पवाग्ग्रहाः ( असंसू. २६.२८ )
लक्षण० स्तब्धता ( सुसू. २२.११ )
लेप० अयमस्त्रातिप्रवृत्तौ समुपयोज्यः ( असंउ. ३० )

( **स्तम्भनी** )–स्त्री., रेवतीग्रहविशेषः (कारेवती. क ४०)

**स्तम्भनी**–स्त्री.,
**–क्रिया**–स्त्री., उपक्रम० स्तम्भनकर्म द्र० ' स्तम्भन '. ( अहृसू. २७.४८ )

**स्तम्भित**–वि., स्तम्भनोपक्रान्तः ( अहृसू. १७.२० )

**स्तम्भिन्**–वि., स्तम्भनं कर्तुं शीलमस्येति, स्तम्भन-कारकः द्र० ' स्तम्भन ' ( अहृसू. १५.२७ )

**स्तवक्षीरी**–स्त्री., वनस्पति० गन्धपलाशः ( रा. ६.८९; पृ. १९ )

**स्तिमित**–वि., अप्रचलितरूपः
( ड. सुउ. ३९.१०१-१०२ ) आर्द्रम्, जडम्
( ड. सुसू. ४१.४ (२) ) स्तब्धम् ( असंनि. ३.३० )
**–त्व**–लक्षण० स्तब्धत्वम् ( चनि. १.२७ )
**–रुज्**–स्त्री., लक्षण० मन्दवेदना ( सुनि. १०.१२ )

**स्तुत्या**–स्त्री., वनस्पति० नलिका ( रा. १२.८८; पृ. १०४ )
खनिज० सौराष्ट्री ( रा. १३.१६५; पृ. ११६ )

**स्तेय**–न., चौर्यम् ( अहृसू. २.२१ )

**स्तेयीफल**–पु., वनस्पति० तेजःफलः ( रापरि. ११.१८; पृ. ३७४ )

**स्तैमित्य**–न., लक्षण० स्तेम आर्द्रीभावस्तस्य भावः, आर्द्रपटावगुण्ठितत्वम् ( चवि. ८.९६;
सुउ. ३९.४९ ) जाड्यम् मान्द्यम्, बाधिर्यम् ( अहृसू. १२.५३ )
शैत्येन घृतादिषु यद्घनीभवनम् तत् ( चवि. ८.९८ )
रोग० विंशतिश्लेष्मविकारेष्वेकः (चसू. २०.१७)

**स्तोकक**–न., वनस्पति० वत्सनाभः ( ध. ७.१२८ पृ. ३१६ )

**स्तोमक्षार**–पु., भैषज्य० सर्वक्षारः (रा. ६५७ पृ. ७६)

**स्त्यान**–वि., सान्द्रम्, घनम् ( चसू. १८.७ ).

**स्त्री**–स्त्री., वर्धते स्त्यायत्यस्यां गर्भ इति। (चशा. ४.७)
अपत्यानां मूलम्, ' सा रक्षिता ' (असंशा २.६४)

-घृत-न., भैषज्य० तद्गुणाः—लघु, चक्षुष्यं, देहवर्धनं, दीपनं, तर्पणं, रुच्यं, विषनेत्ररोगदाहनाशनम् ( ध. ६.१५५ पृ. २३८ )
घृतवि० (ध. ६.१५५ )
-दधि-न., भैषज्य० मधुरमुष्णं, स्निग्धं, गुरु, बल्यं, सन्तर्पणं, चक्षुष्यम्, ( ध. ६.१९८ पृ. २४५ )
दधि० ( ध. ६.१९८ )
-दोष-पु., स्त्रीदत्तगरादिदोषः ( चचि. २३.५९ )
-नामन्-न., पक्षि० स्त्रीसंज्ञखगः ( असंशा. १२.९ )
-नित्य-वि., स्त्रीसेवनं नित्यं कर्म यस्य सः, असौ स्नेहयोग्यः ( चसू. १३.५२ )
-पुंसलिङ्गिन्-वि., स्त्रीपुरुषसाधारणो नासाचक्षुरादिलिङ्गयुक्तो द्विरेता भवति। यानि तु स्त्रीपुंसयोरसाधारणान्युपस्थध्वजस्तनश्मश्रुप्रभृतीनि, तानि चास्य न संभवन्तीति ( चशा. २.१८ )
-पुष्प-न., स्त्रीणामार्तवम् ( र. ३.७६ )
-प्रसङ्ग-पु., स्त्रीसंगः, अयं शोषकराणां श्रेष्ठः ( चसू. २५.४० )
-मलापहा-स्त्री., वनस्पति० धूम्रपत्रा ( रापरि. ५.८; पृ. ३४०. )
-मुखमधुदोहल-पु., वनस्पति० बकुलः ( रा. १०.२६२; पृ. २०२ )
-विग्रह-पु., नारीदेहः ( असंउ. ३ )
-व्यापद्-स्त्री., स्त्रीरोगः, स्त्रीनिमित्ता आर्तवदोषकृता व्यापत् ( चशा. ४.३० )
स्त्रैण-वि., स्त्रीलोलुपम्, ( पैशाचसत्वम् ) ( चशा. ४.३८(३) ), स्त्रीस्वभावयुक्तम् ( चशा. ८.२१ )
स्थगिका-स्त्री., सविषमक्षिकाविशेषः। अस्या दंशेन मरणमपि भवति ( चचि. २३.१५८ )
व्रणबन्ध० स्थगिकाबन्धः ( सुसू. १८.१७-१८ )
ताम्बूलकरङ्कः ( सुसू. १८.१७-१८ )
-बन्ध-पु., बन्ध० अङ्गुष्ठाङ्गुलिमेढ्राग्रेषु स्थगिकाबन्धो विधेयः ( सुसू. १८.१७-१८ )
मूत्रवृद्धिरोगे उपयुज्यते ( अंसंचि. १५ )
स्थण्डिल-न., भूमिः, पूजनस्थानम् (चक्र. चशा. ८.१०)
संस्कृता भूः ( सुसू. २.४ )
स्थपनि-स्त्री., वनस्पति० स्थपनी ( असंसू. १६.२७ )
स्थपनी-स्त्री., मर्म० स्थपनीमर्म ( असंशा. ७.२३ )
भ्रुवोर्मध्ये स्थपनी नाम तत्रोत्क्षेपवत् (सुशा. ६.२७) शिरोमर्म (सुशा. ६.६) विशल्यघ्नमर्म ( सुशा. ६.११ ) सिरामर्म ( सुशा. ६.७ )
मर्मसंख्या एका स्थपनी ( सुशा. ६.६ )
स्थपनीमर्म मानमर्धाङ्गुलम् ( ड. सुशा. ६.२७ )
पाठा ( असंसू. १६.२७ )
नासानेत्रगता सिराविशेषः ( असंशा. ६.१९ )
स्थलपिण्डा-स्त्री., वनस्पति० पिण्डखर्जुरिका ( ध. ५.५५; पृ. १७९ )
स्थलशृङ्गाटक-पु., वनस्पति० क्षुद्रगोक्षुरः द्र० 'गोक्षुर' ( रा. ३.१३२; पृ. २६ )
स्थलसंभव-न., भूमिसंभवम् ( धान्यम् ) ( असंसू. ७.३८ )
स्थलेरुहा-स्त्री., वनस्पति० दग्धा (रापरि. ९.२८ पृ. ३३६)
कुमारी. ( रापरि. ५.१०, पृ. ३४० )
स्थविमन्-पु., लक्षण० स्थूलता, स्थौल्यम् ( असंउ. ४९, ४०६ )
स्थविर-वि., वृद्धः ( सुचि. २६.४ )
खनिज० शैलेयम् ( ध. ३.७३; पृ. ११० )
( स्थविरा )-स्त्री., वनस्पति० महाश्रावणिका ( रा. ५.२२०; पृ. ३८ )
-जीवक-पु., वृद्धजीवकः, काश्यपसंहितायाः कर्ता ( काक षट्कल्याध्यायः ३ )
स्थाणु-पु., देवता० शङ्करः ( असंनि. १.५ )
स्थान-न., वास्तव्यम्, वसतिः ( चवि. ७.७ (३) )
अधिष्ठानम् ( सुसू. ४१.१२ ) अधिकरणम् ( चसू. ३०.७० )
ऊर्ध्वीभूतस्य स्थितिः ( ड. सुसू. १९.१२ )
स्वमानावस्थानम् ( चसू. १७.११२ )
कारणम्, तिष्ठति उत्पद्यतेऽस्मादिति स्थानं कारणमिति युक्तम् ( चक्र. चसू. १९.३ )
शरीरधात्ववकाशविशेषः नाम स्रोतः ( चवि. ५.९ )
-कोपप्रसाद-वि., स्थाने उचिते समये प्रसंगे पुरुषे वा कोपः प्रसादश्च यस्य सः ( स्थानकोपप्रसादः ) ( चशा. ४. ३७(५) )
-परित्याग-पु., निवासभूमित्यागः ( सुसू. ६.२० )
-विभाग-पु., स्थानस्य विभागः, यथा वातादिदोषाणाम् ( चसू. २०८ )
-संश्रय-पु., संप्राप्तेरवस्थाविशेषः चतुर्थः क्रियाकालः, दोषाणां स्रोतोवैगुण्यात् शरीरस्थाने सङ्गः ( सुसू. २१.३३ )
-स्थ-वि., आशयस्थः ( चवि. ५.९ ) साम्यावस्थितः' अक्षीणः ( सुनि. ११२ )

**स्थानान्तर**–न., स्थलान्तरम् ( अहृसू. १२.६५ )
**स्थानापवर्तन**–न., स्थानेषु सक्तस्य गर्भस्य गर्भशययात उत्तानस्यावाङ्मुखीकरणम् (ड. सुचि. १५.३ )
**स्थापना**–स्त्री., सिद्धमर्थं परं प्रति स्थापयति, साधयतीति स्थापना। प्रतिज्ञाया हेतुदृष्टान्तोपनयनिगमनैः स्थापनम् ( चवि. ८.३१ )
**स्थापनी**–स्त्री., वनस्पति० पाठा ( ध. १.७०; पृ. २० )
**स्थापनीय**–वि., आस्थापनबस्तिप्रयोगयोग्यः ( सुचि. ३५.२२ )
**स्थालक**–न., अस्थिभेद० पर्शुकाया मूलस्थानम् ( चशा. ७.६ )
**(स्थालिका)**–स्त्री., कीट० मक्षिकाविशेषः, असौ प्राणहरा, तया दष्टस्य कण्डूशोफदाहरुजो भवन्ति, तथा च श्यावपिडकोत्पत्तिरुपद्रवा ज्वरादयश्च भवन्ति। असौ असाध्या ( सुक. ८.३५, असंउ. ४३ )
**स्थालकार्बुद**–न., पर्शुकामूले स्थितमर्बुदाकारमस्थि ( चशा. ७.६ )
**स्थाली**–स्त्री., वनस्पति० पाटला ( ध. १.१२० पृ.२९ )
**–पाक**–पु., स्थालीस्थः पाकः, चरुः ( चशा. ८.११ )
**–यन्त्र**–न., यन्त्र० अन्येन शरावेणाऽऽच्छादितमुखस्ताम्रादियुक्तः शरावः, यस्याधस्तादग्निर्दीयते। तेन च ताम्रादिः पच्यते ( र. ९.६८ )
**स्थावर**–वि., स्थिरः, क्षितिस्थः यथा वृक्षपाषाणादि; ( चसू. २६.३९ )
स्थितिशीलः ( सुसू. १.२२ )
पु., जडो वृक्षपाषाणादिः ( चसू. २६.३९ ) चत्वारः प्रकाराः-- वनस्पतिर्वृक्षो वीरुदौषधिश्च, तत्र स्थावरेभ्यस्त्वक्पत्रपुष्पफलमूलकन्दनिर्यासस्वरसादयः प्रयोजनवन्तः, स्वरादय इत्यादिग्रहणात्स तैलक्षारभस्मकण्टकप्रभृतीनां ग्रहणम् ( ड. सुसू. १.२९–३१ )
**–विष**–न., विषप्रकारेष्वेकः द्र० ' विष ' ( चचि. २३.१६; सुक. २.५ )
**–विषविज्ञानीय**–वि., अध्यायसंज्ञा० ( सुक. २.१ )
**स्थावरोत्पत्ति**–स्त्री., वृक्षोत्पत्तिः, असौ गुल्मेषु कोष्ठकल्पिता अरिष्टभूता ( सुसू. २९.६९-७१ )
**स्थित**–वि., झटित्यूर्ध्वं गच्छन् ( चक्र. चसि. ६.३३ ) ऊर्ध्वीभूतः ( सुशा. ८.६ )
**स्थिति**–स्त्री., स्थायिभावः ( चसू. १८.४४ ) स्थैर्यम् ( सुशा. ३.३३ )
जीवनरूपा अवस्था ( चचि. २८.२२० ) अस्तित्वम् ( सुशा. १.१५ )
ऊर्ध्वस्थितिः, ऊर्ध्वीभावः ( सुचि. २४.१२० )
**स्थिर**–पु., गुण० विंशतिगुणेष्वेकश्चलविपरीतो गुणः ( चसू. १.६१ ) निश्चलः चलप्रतिबन्धकः ( चशा. ६.१० ) सरविपरीतः पार्थिवद्रव्यगुणः ( सुसू. ४१.४ (१) अस्य धारणे शक्तिः ( अहृसू. १.१८ )
वि., कठिनः, दृढः ( सुसू. ३२.३ )
स्थावरम् ( विषम् ) ( चचि. २३.१३ )
**( स्थिरा )**–स्त्री., वनस्पति० शालिपर्णी ( चसू. ५.६४; सुउ. ३९.२१९; ध. १.८७; पृ. २३ )
पृश्निपर्णी (चसू. ५.६४; अहृसू. २०.३७ )
**–कुसुम**–पु., वनस्पति० बकुलः ( रा. १०.२६२; पृ. २०२ )
**–गन्ध**–पु., वनस्पति० चम्पकः ( रा. १०.२३९; पृ. १९९ )
**(गन्धा )**–स्त्री., वनस्पति० पाटला ( रा. ९.१५०; पृ. २९ )
केतकी ( रापरि. १०.२; पृ. २०४ )
**–गात्रता**–स्त्री., लक्षण० गात्राणां स्थिरता, गात्रस्थैर्यम् ( चसू. १३.४५ )
**–त्व**–न., अशैथिल्यम् ( चसू. १८.५१ ) अचलनम् ( सुक. ३.४१-४२ )
**–नयन**–वि., चक्षुषः निमीलनोन्मीलनरहितः, निमेषरहितः ( ड. सुउ. ६०.८ )
**–पत्र**–पु., वनस्पति० हिन्तालः (रा. ९.९८; पृ. १८२)
**–पुष्प**–पु., वनस्पति० तिलकः ( रा. १०.२६६; पृ. २०२ )
चम्पकः ( रा. १०.२३९; पृ. १९९ )
**–फला**–स्त्री., वनस्पति० कूष्माण्डिका ( ध. १.१८३; पृ. ४३ )
**–बन्धन**–न., दृढबन्धनम् ( सुचि. २२.२९ )
**–मद**–वि., चिरकालमत्तताकारी ( सुरासवः ) ( सुसू. ४५.१८७.१८८ )
**–मांस**–न., अमृदुमांसम् ( सुचि. १७३.७४ )
**–मूल**–वि., दृढमूलम् ( असंसू. ३९.१२; अहृसू. ३०.३३ )
**–रङ्गा**–स्त्री., वनस्पति० नीलिनी (रा.४.३५१; पृ.५५)
**–रागा**–स्त्री., वनस्पति० दारुहरिद्रा ( रा. ६.८;३, पृ.१८. )

-व्रणता-स्त्री., लक्षण० कठिनव्रणता ( सुसू. १२.८ )
-शरीर-वि., कठिनशरीरावयवः ( सुनि. ८.१० )
-साधनक-पु., वनस्पति० निर्गुण्डी
( रा. ४.११७; पृ. १५० )
-सुप्तकुष्ठ-न., रोग० महाकुष्ठ काकणाख्यम् द्र० 'काकणकुष्ठ' ( र.२०.२६ )

**स्थिरसा**-स्त्री., वनस्पति० सागः
( रा परि. ९.६ पृ. २०४ )

**स्थिरा**-स्त्री., वनस्पति० शालिपर्णी ( ध. १. पृ. १३ )
-द्वय-न., वनस्पति० शालिपर्णी पृश्निपर्णी च
( अहसू. १५.६ )

**स्थिराङ्गता**-स्त्री., लक्षण० कठिणाङ्गता ( सुउ. ४२.६७)

**स्थिराङ्घ्रिप**-पु., वनस्पति० हिन्तालः
( रा. ९.९८ पृ. १८२ )

**स्थिरात्मता**-स्त्री., स्थिरप्रकृतिकत्वम्
( असंसू. ९.३६ )

**स्थिरादिवर्ग**-पु., द्रव्यगण० लघुपञ्चमूलम्, असौ प्रतिरुद्धवाते उपयुक्तः ( चचि. २६.२३ )

**स्थिरीकरण**-वि., स्थैर्योत्पादकः ( तिक्तरसः )
( चसू. २६.४३ )

**स्थिरेन्द्रिय**-वि., अचलेन्द्रियः ( सुसू. ३५.५ )

**स्थिरोपचितमांस**-वि., कठिणस्थिरमांसः ( स्त्रीसंयतः )
( ड. सुचि. २४.११३ )

**स्थूणा**-स्त्री., स्तम्भः, धारणम् ( सुसू. २१.३ )

**स्थूणिका**-स्त्री., आहारद्रव्य० वटकः, पिष्टकासमर्द-कूष्माण्डमूलकादिकृता मुद्गादिकृताश्च, तद्गुणाः- विष्टम्भिनी, वातकोपनी च
( सुसू. ४६.२९४,२९५ )
-शुष्कशाक-न., आहारद्रव्य० नानाशाकैः कृतो वटकः ( सुसू. ४६.२९४ )

**स्थूल**-वि., स्थौल्यव्याधियुक्तः ( चसू. १४.१७) मेदस्वी, अष्टौ निन्दितपुरुषान्यतमः ( सुसू. १५.३५ )
पु., गुण० विंशतिगुणेष्वेकः, उपचयकरो गुणः, सूक्ष्मविपरीतो गुणः (चशा. ६.१०) पार्थिवद्रव्य-गुणः ( सुसू. ४१.४ ( १ ) अस्य संवरणे शक्तिः
( हे. अहसू. १.१८ )
वनस्पति० पनसः (रापरि. ११.९; पृ. ३७३)
धान्य० व्रीहिः (रा. १६.७९; पृ. २२०)

**( स्थूला )**-स्त्री., वनस्पति० उर्वारुकम्
(ध. १.१७६; पृ. ४९)
कार्पासी (रापरि. ४.४५; पृ. ३३८)



-कङ्गु-पु., वनस्पति० प्रियङ्गुः
(रा. १६.१४४; पृ. २२६)
-कणा-स्त्री., वनस्पति० उपकुञ्ची
(रा. ६.९१ पृ. ९१)
-कण्टक-पु., वनस्पति० जालबर्बुरः
(रापरि. ८.१४ पृ. ३५७)
-कण्टा-स्त्री., वनस्पति० बृहती
(रा. ४.१२०, पृ. २४)
-कण्टाकी-स्त्री., वनस्पति० बृहती
( ध. १.९३ पृ. २४ )
-कन्द-पु., वनस्पति० ग्राम्यकन्दः, सकलकन्दः ( ड. सुसू. ४६.३०७ ) लशुनः
( रा. ७.९६; पृ. १४७ )
वनस्पति० मुखालुः ( रापरि. ७.२२; पृ. ३४९ )
हस्तिकन्दः ( रा. ७.३५; पृ. ३५० )
-कन्दक-पु., वनस्पति० सूरणः
( रापरि. ७.५; पृ. १६९ )
-काच-पु., मणि० स्थूलाकारः काचः (सुउ. ७.२८)
-कुमुद-पु., वनस्पति० करवीरः
( रा. १०.३; पृ.१३४ )
-गुद-न., शारीर० त्रिवलीरूपं स्थूलगुदम् पुरीष-वहानां स्रोतसां मूलम् ( चवि. ५.८ )
-चञ्चु-स्त्री., वनस्पति० बृहच्चञ्चुः
( रापरि. ४.२०; पृ. ३३६ )
-जीरक-पु., वनस्पति० उपकुञ्ची
(ध. २.५९; पृ. ८१)
-तण्डुल-पु., धान्य० स्थूलशालिः द्र० 'शालि'
( रा. १६.९०; पृ. २२१ )
-तण्डुलसंभूत-पु., धान्य० व्रीहिः
( रा. १६,१२०; पृ. २२२ )
-ताल-पु., वनस्पति० हिन्तालः
( रा. ९.९७; पृ. १८२ )
-त्वचा-स्त्री., वनस्पति० काश्मरी
( रा. ९.१४८ पृ. २९ )
-दण्ड-पु., वनस्पति० महानलः
( ध. ४.१४२; पृ. १६२ )
-दर्भ-पु., वनस्पति० मुञ्जः (रा. ४.१३२; पृ. १६०)
-दला-स्त्री., वनस्पति० कुमारी
( रापरि. ५.१२; पृ. ३४० )
-नकुल-पु., प्राणि० नकुलभेदः द्र० 'नकुल'
( चचि. ८.१५२ पृ. ८.१५२ )

**-नाल**-पु., वनस्पति० महानलः (ध. ४. १४२; पृ. १६२)

**-नेत्र**-न., बस्तिनेत्रदोष० अस्मिन् दुर्ग्रहता कर्षणश्च दोषौ भवतः (चसि. ५.४-७)

**-पर्वन्**-वि., लक्षण० स्थूलग्रन्थिः (चसू. २१.१५)

**-पुष्पा**-स्त्री., वनस्पति० झण्डू (रापरि. ५.५२; पृ. ३४४)

**-प्रियङ्गुक**-पु., वनस्पति० प्रियङ्गुः (रा. १६.१४४; पृ. २२६)

**-फल**-पु., वनस्पति० शाल्मली (रा. ८.२१२; पृ. १९५)

**(-फला)**-स्त्री., वनस्पति० शणपुष्पी (रा. ४.२९८; पृ. ४८)

**-फेनिल**-वि., अतीवफेनयुक्तम् (असंसू. ६.२२)

**-मरिच**-न., वनस्पति० कङ्कोलम् (रा. १२.६९; पृ. १०२)

**-मल**-पु., पुरीषमूत्रादयः (असंशा. २.३४)

**-मूल**-वि., मूलप्रदेशे स्थूलम् (हे. अहसू. ११.११) न., वनस्पति० चाणाख्यमूलम् (रा. ७.५३, पृ. १४१)

**-रुहा**-स्त्री., वनस्पति० पद्मिनी (रा. ५.१३१; पृ. १५२)

**-लक्ष्य**-वि., दानशौण्डः (असंशा. ८.१६)

**-वल्कल**-पु., वनस्पति० पट्टिकालोध्रः द्र० लोध्र. (ध. ३.१७७; . १२९)

**-वैदेही**-स्त्री., वनस्पति० श्रेयसी द्र० चविका. (रा. ६.११८; पृ. ८५)

**-शर**-पु., वनस्पति० शरः (ध. ४.१३५, पृ. १६१)

**-शालि**-स्त्री., धान्य० व्रीहिभेदः द्र० व्रीहि (रा. १६.९०; पृ. २२१)

**-शिम्बी**-स्त्री., वनस्पति० असिशिम्बी (रा परि. ७.९७ पृ. ३५५) वनस्पति० निष्पावः (रा. १६.१७५. पृ. २३०)

**-शीर्षा**-स्त्री., कीट० पिपीलिकाभेदः, तद्दष्टलक्षणम् श्वयथुरग्निस्पर्शवद्दाहशोफौ भवतः द्र० पिपीलिका (सुक. ८.३४)

**-सायकमुखाख्य**-पु., वनस्पति० स्थूलशरः- (रा. ८.२१२ पृ. १६१)

**-स्कन्ध**-पु., वनस्पति० लकुचः (रा परि. ९.४४ पृ. ३६७)

**-स्रोतस्**-न., स्थूलमुखम् स्रोतोविशेषः (चक. १.५)

**स्थूलक**-पु., वनस्पति० गन्धपलाशः (ध. १.६४; पृ. १९)

**-हित**-वि., स्थूले स्थूलाय वा हितकरम् (असंसू. ६.११७)

**स्थूलाक्ष**-वि., विस्फारितनेत्रः (सुउ. ६०.१६)

**स्थूलाङ्ग**-पु., धान्य० स्थूलशालिः द्र० 'व्रीहि' (रा. १६.९० पृ. २२१)

**स्थूलादिकन्दवर्ग**-पु., द्रव्यगण० स्थूलसूरणमाणकप्रभृतयः कन्दाः, तेषां सामान्यगुणाः-ईषत्कषायाः, कटुका रुक्षा विष्टम्भिनो गुरवः, कफवातलाः पित्तहराश्च (सुसू. ४६.३०६)

**स्थूलान्त्र**-न., शारीर० बृहदन्त्रम्, पञ्चदशकोष्ठाङ्गेष्वेकम् (चशा. ७.१०; सुनि. १२.६) तदायामः-सार्धत्रिव्यामान्यन्त्राणि पुंसां, स्त्रीणामर्धव्यामहीनानि (सुशा. ५.९) कव्यन्त्रम्, गुदान्त्रम्, (सुनि. २.५) पुरीषवहानां स्रोतसां मूलम्-पक्वाशयः (चवि. ५.८)

**स्थूलान्त्रप्रतिबद्धा**-स्त्री., शारीर० धमनी० (असंशा. ६.३२)

**स्थूलाम्र**-पु., वनस्पति० आम्रः (रा. ११.९, पृ. १७१)

**स्थूलारुष्क**-न., रोग० क्षुद्रकुष्ठ० सन्धिषु स्थूलमूलान्यतिदारुणानि कठिनान्यरूंषि व्रणाः स्युः (सुनि. ५.९)

**स्थूलास्या**-स्त्री., वनस्पति० गन्धपलाशः (रा. ६.८९; पृ. १९)

**स्थूलैरण्ड**-पु., वनस्पति० एरण्डः (रा. ८.४४९; पृ. ६८)

**स्थूलैला**-स्त्री., वनस्पति० एलाभेदः, द्र० 'एला' (धनि. २.४६; पृ. ७८)

**स्थेमन्**-पु., स्थैर्यम् (असंसू. २०.३)

**स्थैर्य**-न., अचलत्वम्, स्थिरता (सुसू. ४१.४(१)) काठिन्यम् (सुसू. १७.५) स्तम्भः (ड. सुसू. १५.१३) वयःस्थापनकारित्वम् (सुसू. ४६.४१-४२)

**-कर**-वि., स्थिरतां दृढतां च कुर्वाणः (मधुररसः) (चसू. २६.४३(१))

**-कृत्**-वि., देहदार्ढ्यकृत् (हे. असंसू. ६.६०)

**स्थैर्यक**-पु., कीट० श्लेष्मप्रकोपणः (असंउ. ४३)

**स्थौणेय**-न., वनस्पति० ग्रन्थिपर्णिकम् (ड. सुक. ६.१४-२७; असंउ. ४०) तद्गुणाः--

कटु, तिक्तमुष्णं ( चचि. ३.२६७ ). सुगन्धि, बलदं, पुष्टिदं, त्रिदोषघ्नम् ( ध.३.७०;पृ. ११० )
हिं.—थुनेर.
म.—**थुणेर.**
गु.—भरुण्ठ.
बं.—गान्थि आला.

**स्थौणेयक**—न., वनस्पति०स्थौणेयम् सुगन्धिद्रव्यविशेषः (चचि. ३.२६७; चक. १.२३; सुसू. ३८.२४-२५ ध. ६९, पृ. १०९)

**स्थौल्य**—न., स्थूलस्य भावः स्थूलता लक्षण० (चसू. १६.१३) उपचितशरीरत्वम् (सुसू. १५.३२)
रोग० **अतिस्थौल्यम्**, द्र० ' मेदोरोग ' ( चसू. २१.३ )

**स्नपन**—न., स्नानम् ( असंसू. ८; असंउ. २ )
उपक्रम० शोधनम् ( र. ३०.५६ )
विनिक्षेपः । निर्वापः ( र. ८.५६ )

**स्नातशिरस्**—वि., स्नातं परिषिक्तं शिरो येन सः ( चसि. २.२१ )

**स्नातानुलिप्त**—वि., पूर्वं स्नातः पश्चादनुलिप्तः ( चइ. १२.५ )

**स्नातुकाम**—वि., स्नातुमिच्छति यः ( चसि. २.२० )

**स्नान**—न., जलेन शरीरस्य मार्जनम् ( चसि. ५.९४ )
स्नानं श्रमहराणां श्रेष्ठम् ( चसू. २५.४०; असंसू. १३ ) स्नानमोजस्करं परम् ( चसू. ५.९४ ) स्नानगुणकर्म—निद्रादाहश्रमस्वेदकण्डूतृषाहरं मलहरं हृद्यं सर्वेन्द्रियविशोधनं तन्द्रापापशमनं तुष्टिदं पुंस्त्ववर्धनं रक्तप्रसादनमग्नेश्च दीपनम् (सुचि. २४.५८) आयुष्यम् (अहृसू.२.१६) स्नानाऽयोग्याः—अतिसार-ज्वर-कर्णशूल-वातरोगपीडितेषु तथा आध्मानाऽरोचकाऽजीर्णभोजनेषु च सत्सु स्नानं गर्हितम् । तरुणज्वरे तथा विगतज्वरेऽपि स्नान—निषेधो यावत्प्रकृतिस्थो न भवति ( सुउ. ३९.१६०-(सुचि. २४.६२, अहृसू. २.१८ ) शीतजलेनोष्णजलेन वा स्नानं क्रियते तत्राऽधःकायस्योष्णजलेन स्नानं बलावहम् । उत्तमाङ्गस्य शीतजलेन स्नानं केश्यं चक्षुष्यं च भवति ( अहृसू. २.१७ ) जातमात्रस्य स्नानार्थं सिद्धजलप्रकारः— क्षीरिवृक्षकषायः, सर्व-गन्धोदकं रूप्यहेमप्रतप्तं वारि कपित्थपत्रकषायो वा इत्येतद्युक्तेन कोष्णेन सिद्धजलेन कालं दोषं विभवं च लक्षयित्वा स्नापयेत् (सुशा. १०.१३) अवगाहनम् ( चसू. २५.४० ) जलपूर्णकटाहादौ निमज्जनम् ( सुउ. ३९.१५६ )
—भू—स्त्री., स्नानभूमिः ( असंसू. ३ )
—**भूमि**—स्त्री., स्नानार्थं भूमिः ( चसू. १५.६ )
वि., स्नानार्थं कृतं गृहम् स्नानस्य भूमिः स्थानं यस्मिन् तद् ( सूतिकागारम् ) ( चशा. ८.३३ )

**स्नापक**—वि., यो रुग्णं स्नापयति, सः । स्नापनोपयुक्तः परिचारकः ( चसू. १५.७ )

**स्नायु**—स्त्री., शारीरभाव०मेदस उपधातुः, पितृजो भाव० (चशा. ३.७) ' मेदसः स्नायुसम्भवः ' (चचि.१५) ' मेदसः स्नेहमादाय वायुः स्नायुत्वमाप्नुयात् ', अस्मिन् कर्मणि स्नायूनां खरपाकोऽस्ति ( सुशा. ४.३०; चशा. ७.१४ ) मांसवहानां स्रोतसां स्नायुर्मूलम् ( चवि. ५.८ )
शारीर० शणाकारोऽवयव० (सुसू. २५.२०-२१ ) स्नायुसंख्या—नवस्नायुशतानि, तासां शाखासु षट्शतानि, द्वे शते त्रिंशच्च कोष्ठे, ग्रीवां प्रत्यूर्ध्वं सप्ततिः। एकैकस्यां तु पादाङ्गुल्यां षट् निचिताः, तास्त्रिंशत्, तावत्य एव तलकूर्चगुल्फेषु तावत्य एव जङ्घायाम्, दश जानुनि, चत्वारिंशत् ऊरौ, दश वङ्क्षणे, शतमध्यर्धमेवमेकस्मिन् सक्थ्नि भवन्ति, एतेनेतरसक्थि बाहू च व्याख्यातौ, षष्टिः कट्यां, पृष्ठेऽशीतिः, पार्श्वयोः षष्टिः, उरसि त्रिंशत्, षट्त्रिंशद् ग्रीवायां, मूर्ध्नि चतुस्त्रिंशत्, एवं नवस्नायुशतानि व्याख्यातानि (सुशा. ५.२९) स्नायुप्रकाराः—प्रतानवत्यः वृत्ताः पृथ्व्यः शुषिराश्चेति चतुर्विधाः स्नायवः, तत्र वृत्ताः स्नायवः कण्डरा इति विज्ञेयाः। आमपक्वाशयान्तेषु बस्तौ च शुषिराः स्नायवः। पार्श्वोरसि, तथा पृष्ठे शिरसि च पृथुलाः स्नायवः। स्नायुकर्म—फलकास्तीर्णा बहुभिः बन्धनैर्युता नृयुक्ता सुसमाहिता नौर्यथा अप्सु भारक्षमा भवेत्; एवं अस्मिन् शरीरे यावन्तः सन्धयः, ते बहुभिः स्नायुभिः बद्धाः। तेन च नराः भारसहाः भवन्ति। व्यापादिता स्नायुः यथा शरीरिणं हन्यात् न तथा अस्थीनि पेश्यः सिराः सन्धयो वा व्यापादिताः शरीरिणं हन्युः इति स्नायूनां महत्त्वं विद्यात् ( सुशा. ५.२९-३५ ) तत्र महत्यः स्नायवः कण्डराः स्मृताः ( भा. प्र. ) ताः षोडश, तासां चतस्रः पादयोः, तावत्यः हस्तग्रीवापृष्ठेषु, तत्र हस्तपादगतानां कण्डराणां नखाः ( अग्र ) प्ररोहाः, ग्रीवाहृदयनिबन्धिनीनाम् अधोभागगतानां मेढ्रम्,

श्रोणिपृष्ठनिबन्धिनीनाम् अधोभागगतानां बिम्बम्, मूर्धोरुवक्षोंऽसपिण्डादीनां च ( सुशा. ५.११ ) प्रसारणाकुञ्चनयोरङ्गानां कण्डरा मताः ( शार्ङ्ग. ) कूर्चाः पुनः मांसास्थिसिरास्नायूनां जालकप्रभवाणां सन्ततिविरचिताः ( ड. सुशा. ५.१३ ) षट् कूर्चाः ते हस्तपादग्रीवामेढ्रेषु, हस्तयोर्द्वौ, पादयोर्द्वौ, ग्रीवामेढ्रयोरेकैकः ( सुशा. ५.१३ ) महत्यो मांस-रज्जवश्चतस्रः, पृष्ठवंशमुभयतः पेशीनिबन्धनार्थं द्वे बाह्ये, आभ्यन्तरे च द्वे ( सुशा. ५.१४ ) मांस-स्नायुजालानि चत्वारि, तानि मणिबन्धगुल्फसंश्रितानि, परस्परनिबद्धानि परस्परसंश्लिष्टानि, परस्परगवाक्षितानि चेति यैर्गवाक्षितमिदं शरीरम् (सुशा. ५.१२) स्नायुविकाराः- वेगवान् अनिलः स्नायुप्रतानम् आक्षिपति, तदा मानवः अभ्यंतरं धनुरिव नमति, एष अन्तरायामः । यदा तु वायुः बाह्यस्नायुप्रतानस्थो भवति, तदा बाह्यायामं करोति, इत्येष बहिरायामः । स्नायुप्राप्तश्च वातः स्तम्भकम्पौ शूलमाक्षेपणं च करोति

( सुनि. १.५५-५६ )

स्नायुविद्धपुरुषलक्षणानि- कौब्ज्यं, शरीरावयव-सादः, क्रियास्वशक्तिः तुमुला रुजा, तथैव व्रणस्य चिराद्रोहणम् ( सुसू. २५ )

**-कोथ**-पु., स्नाय्वः कोथः । व्रणे यदा शटिता स्नायु-र्भवति, तदा तस्यास्तत्र छेदनं कर्तव्यम्

( सुचि. १.३४ )

छेद्यरोग० स्नाय्वाः पूतिभावः ( सुसू. २५.३-५ )

**-क्लेद**-पु., लक्षण० स्नाय्वाः क्लेदः । तेन व्रणस्य कृच्छ्रत्वं जायते ( चचि. २५.३१-३५ )

**-जाल**-न., शारीर० स्नायूनां जालम् । देहे स्नायु-जालानि चत्वारि । एकैकमेकस्मिन्मणिबन्धे गुल्फे च (सुशा. ५.१२) स्नायुजालगतशल्येनाऽऽक्षेपकादीनि लक्षणानि भवन्ति (अहसू. २८.५)

**-जालोत्क्षेपण**-न., लक्षण० स्नायुगतशल्ये स्नायुसमूहस्योर्ध्वं नयनम् (सुसू. २६.१०)

**-त्व**- न., स्नायुभावः । स्नायुस्वरूपम्

(सुशा. ४.२९)

**-दग्ध**-न., दाह० अग्निकर्म० लक्षणम्-- कृष्णोन्नत-व्रणता । स्रावस्य संनिरोधश्च

(सुसू. १२.८; असंसू. ४०)

**-प्रतान**-पु., स्नायुविस्तारः । लतावदनेकप्ररोहं स्नायुजालम् (सुनि. १.५७)

**-मर्मन्**-न., शारीर० स्नायुबहुलं मर्म (सुशा. ६.३) संख्या-सप्तविंशतिः स्नायुमर्माणि ( सुशा. ६.४ ) आण्यश्चतस्रः, द्वौ विटपौ द्वौ कक्षधरौ, चत्वारः कूर्चाः चत्वारि कूर्चशिरांसि, एको बस्तिः चत्वारि क्षिप्राणि, द्वौंसौ द्वे विधुरे, द्वावुत्क्षेपौ एवं सप्तविंशतिः स्नायुमर्माणि ( ड. सुशा. ६.७; असंशा. ७ ) द्र० मर्म

**-महारुज्**-वि., स्नायुषु महती पीडा यस्य सः । स वसास्नेहयोग्यः ( चसू. १३.४८ )

**-विद्ध**-न., रोग० लक्षणम्-कौब्ज्यम् शरीरावयवसादः क्रियास्वशक्तिस्तुमुला रुजश्चिरं व्रणरोहणं च

( सुसू. ३५.२७ )

**-संकोच**-पु., रोगलक्षण० स्नायूनां संकोचनम् ( चसू. ५.९२ ) स्नायूनां स्तम्भनम्

( अहसू. १७.२० )

**स्नायुक**-न., रोग० शाखासु कुपितो दोषो विसर्पवच्छोथं कृत्वा तत्क्षते भिनत्ति । उष्मयुक्तश्च दोषः स्नायुं विशोष्य तन्तुनिभं श्वेतद्युतिकं वृत्तं जीवं कुर्यात् । स च जीवः शनैः शनैःक्षताद् बहिर्याति । छेदाच्च कोपमुपैति । तस्य पातेन शोथशान्तिर्भवति । किन्तु पुनः सोऽन्यस्मिन् स्थाने सम्भवति । संख्यासम्प्राप्तिः-अयमष्टधा वातेन श्यावरूक्षः सरुक् स्यात् । पित्तान्नीलपीतः सदाहः स्यात् । श्लेष्मणा श्वेतः स्यात् । द्विदोषेण असौ द्विदोषलिङ्गी । सन्निपातेन सर्वलिङ्गः । रक्तेनाऽरक्तकान्तिरित्यष्टविधः ।

उपद्रवाः- यदि बाह्वोर्जङ्घयोः स्नायुकस्तन्तुकीटः त्रुट्यते, तदा खञ्जता बाहुसंकोचावुत्पद्येयाताम् ( मानि. परि ) चिकित्सा विसर्परोगवदत्र चिकित्सा ( मानि. ) स्नेहस्वेदप्रलेपादि कर्म यथोचितं कुर्यात् ( भाप्र ) कुम्भीपुष्पाणि भक्षयेत् ( र. २५.५४ )

**स्नाय्वर्मन्**-न., नेत्ररोग० नेत्रशुक्लभागगतो रोगः । लक्षणम्-नेत्रस्य शुक्लभागे खरं प्रपाण्डुपिशितं यद्वृद्धिमुपैति तत्स्नाय्वर्म, प्रस्तारिणोऽर्मणः स्रावं निरुणद्धि यदाऽनिलः । विना स्रावं विशुष्कं तत्स्नाय्वर्मेति प्रकीर्तितम् । निमिवचनम् (मानि-) ( सु उ. ४.६ साध्यरोगोयम् ) सुउ. १.४० ) चिकित्सा-लेखनाञ्जनैरेवोपाचरणीयम्

( सुउ.१५.१७ )

**स्नाय्वामय**-पु., स्नायूनां रोगः ( चचि. २९.३९ )

**स्नाव**-न., शारीर० स्नायुः ( असंशा. ५ )

–बन्धन–न., स्नायुनिबन्धनम् ( असंशा. ५ )
–मर्मन्–न., स्नायुमर्मन् ( असंशा. ७ )
**स्नावार्मन्**–न., नेत्ररोग॰ स्नाय्वर्म ( असंउ. १३ )
**स्निग्ध**–पु., गुण॰ असौ त्वगिन्द्रियग्राह्यः चक्षुरिन्द्रिय-ग्राह्यश्च(चशा. ६.१०) रूक्षविपरीतः (चसू. १.६१) चिक्कणः ( सुसू. ३६.३ ) विंशतिद्रव्यगुणेष्वेकः ( अहसू. १.१८ ) आप्यद्रव्यगुण॰ ( सुसू. ४१.४(२) ) तस्य कर्म–क्लेदने शक्तिः ( अहसू. १.१८ ) वातहरं श्लेष्मकारि वृष्यं च ( चशा. ६.१० ) स्निग्धगुणः स्नेहकृन्मार्दवकृद्बल-वर्णकरश्च ( सुसू. ४६.५१६ )
वि., प्रीतियुक्तः ( सुसू. ३४.२४ ) मित्रभावयुक्तः ( सुक. १.८-११ )
पु., वनस्पति॰ एरण्डभेदः, रक्तैरण्डः ( रा. ८.४४७ पृ. ६८ )
सरलः ( रा. १२.१३६; पृ. १११ )
न., खनिजद्रव्य॰ सुवर्णगैरिकम् ( ध. ३.१७०; पृ. १२८ )
भैषज्य॰ सिक्थकम् ( रा. १३.१७४; पृ. ११८)
वनस्पति॰ जवादि ( रापरि. १२.६; पृ.३७५ )
**( स्निग्धा )**–स्त्री., वनस्पति॰ मेदा ( रा. ५.१६१; पृ. ३१ )
–च्छवि–वि., लक्ष॰ स्निग्धकान्तिः (बलासप्रकृतिर्नरः) ( सुशा. ४.७४ )
–तण्डुल–पु., धान्य॰ षष्टिकः ( रा.१६.८४;पृ. २२० )
–तनु–वि., स्निग्धा तनुर्यस्य सः ( अहसू. २७.१८ )
–दल–पु., वनस्पति॰ गुच्छकरञ्जः ( रा.९.१८४; पृ. १९१ )
–दारु–पु., वनस्पति॰ देवदारुः ( रा. १२.१०३; पृ. ४१)
सरलः ( ध. ३.७८; पृ. १११ )
–पत्र–पु., वनस्पति॰ घृतकरञ्जः ( रा. ९.१७८,पृ. १९१ )
–पत्रक–पु., वनस्पति॰ मज्जरः ( रापरि. ८.५२;पृ. ३६१ )
–पत्रा–स्त्री., वनस्पति॰ शाक॰ पालक्यम् (रापरि. ७.७२; पृ. ३५३ )
–पर्णी–स्त्री., वनस्पति॰ स्वादुपत्रफला, पटोलः ( रा. ७.७७; पृ. १७ )
मूर्वा ( ध. १.१३; पृ. ९ )
–पिशित–न., स्निग्धं पिशितम् । मेदुरं मांसम् ( सुचि. १४.४ )
–फला–स्त्री., वनस्पति॰ वालुकम् ( रा. ७.२५०; पृ. ४१ )
–भोजिन्–वि., स्नेहयुक्तमन्नं भोक्तुं शीलमस्येति ( असंसू. ३ )
–मुख–वि., स्निग्धप्रान्तम् मेदुराग्रम् ( अहसू. १९.९४ )
–मृत्तिका–स्त्री., मृत्तिका॰ स्निग्धगुणयुक्ता मृत्तिका ( चक. १.९ )
–राजि–पु., सर्प॰ वैकरञ्जः । कृष्णसर्पेण राजिमत्यां वैपरीत्येन वा जायमानः (सुक. ४.३४;५)
–लक्षण–न., लक्षण॰ स्निग्धनरस्य लक्षणम् (चसू. १३.६)
–व्यायामबलिन्–वि., स्नेहोपयोगेन व्यायामेन च यस्य बलं सञ्जातम् सः (चसू. २६.१०६)
**स्निग्धोष्णोपशय**–वि., यस्मिन्स्निग्धमुष्णं चान्नपानादि उपशेते (असंनि. ५)
**स्नुक्**–स्त्री., वनस्पति॰ स्नुही (ध. १.२३५)
–क्षीर–न., स्नुहीक्षीरम् (चचि. १३.१४०) (असंसू. ११)
–पयस्–न., स्नुहीक्षीरम् (चसू. २५.४०) (असंसू. १३)
**( स्नुग् )**–गण पु., गण॰ श्वेतपीतदुग्धभेदेन त्रिकोण-काण्डादिभेदेन भिन्ना स्नुही । स्नुही भेदसमूहः ( र. १०.८८ )
**स्नुही**–स्त्री., वनस्पति॰ ( ध. १-२३५. पृ. ५५ ) क्षीरसारवृक्षः ( असंक. २ ) अस्याः क्षीरं तीक्ष्ण-विरेचनानां श्रेष्ठम् ( चसू. २५.४० ) गुणाः– तिक्ता, उष्णा गुर्वी कफवातघ्नी दुष्टव्रणाश्मरीदाह-कुष्ठप्रमेहघ्नी । अस्याः क्षीरं विषम्, तदाध्मान-गुल्मोदरवातघ्नम् ( ध. १.२३५; पृ. ५५ ) ( नाड ५.२४, शालि. २९८)
हिं.—सेहुण्ड, थोहर, थुहर.
म.—**वई निवडुंग, काटेनिवडुंग, फड्या निवडुंग.**
गु.—थोरदाण्डलियो, कटाली, कण्टालो थोर हाथलो तर धारी, नानो परदेशी.
बं.—मन्सासिज, सिजवृक्ष, मनसाशाछ.
ता.—हैकली.
फा.—लादनाम.

—काण्ड—न., वनस्पति० स्नुहीभेदः सेहुण्डयष्टिः "कांड्या निवडुंग", इति लोके, काण्डलवणोत्पादने उपयुक्तम् ( सुचि. ४.३१ )

—क्षीर—न., स्नुहीदुग्धम्। व्रणशोधनद्रव्येषु घृतेषु च उपयुज्यमानेष्वेकम् ( सुसू. ३७.१६-१७ )

**स्नूही**—स्त्री., वनस्पति० स्नुही ( र. २५.११८ )

**स्नेह**—पु., गुण० मार्दवकरः गुणः, स्निग्धः (चशा. ६.१५) विंशतिगुणेष्वेकः ( अहसू. १.१८ ) पृथिव्यम्बुगुणभूयिष्ठो वीर्यसंज्ञको गुणः ( सुसू. ४१.११ )

द्रव्य० घृततैलादिः ( सुचि. ३१.३-४ ) तैलम् ( र. २१.५१ ) तैलादिस्निग्धद्रव्यम् ( चसू. १३.१, अहसू. ५.३९; अहसू. १६.२ )

कर्म० स्नैग्ध्यम्, स्नेहनम्, श्लेष्मकर्मस्वेकम् ( अहसू. १२.५३ ) स्नेहनं च अनिलहननं देहमार्दवकरं मलसङ्गनाशनम् ( चसि. २.७ )

उपक्रम० स्नेहपानम् ( सुचि. १.८; सुचि. १.३१ ) वातोपक्रमेष्वेक उपक्रमः ( सुचि. ४.२३; अहसू. १३.१ )

शारीरभाव० देहस्य स्निग्धत्वम् । मेदोधातोः कर्म ( असंसू. १ ) अक्षिविट्त्वचां यः स्नेहः स मज्ज्ञो मलः ( चचि. १५.१९ सुसू. ४६.५२९ )

प्रीतिः ( सुनि. १०.२३ )

स्नेहविधिः, स्नेहनम्, च । स्नेहनं स्नेहद्रव्येण क्रियते । स स्नेहः द्विविधः स्थावरो जङ्गमात्मकश्च । स्थावरात्मकः स्नेहः तैलमतैलं च, जङ्गमात्मकस्तु वसा मज्जा सर्पिरिति ( चवि. ८.१५० ) ते स्नेहाः पुनश्चतुर्विधाः सर्पिस्तैलवसामज्जानः ( चसू. १.८६ ) 'सर्पिर्मज्जा वसा तैलं स्नेहेषु प्रवरं मतम्' ( असंसू. २५ ) जङ्गमेभ्यः स्नेहेषु गव्यं घृतं प्रधानम्। स्थावरेषु च तिलतैलम् ( सुचि. ३१.३-४ ) गुरुलघुत्वम्—घृतात्तैलं गुरु तैलाद्वसा, वसायाश्च मज्जा ( असंसू. २५ ) स्नेहसंज्ञात्रयम्—यमकस्त्रिवृतो महाँश्चेति स्नेहस्य संज्ञात्रयम्। तेन द्वाभ्यां स्नेहाभ्यां यमकः; त्रिभिः स्नेहैस्त्रिवृतः। चतुर्भिर्महास्नेहः, ( अरु. अहसू. १६.४ ) घृततैलाभ्यां यमकः, घृततैलवसाभिस्त्रिवृतः । घृततैलवसामज्जभिर्महान् ( हे अहसू. १६.४ ) स्नेह्याः— ये स्वेदार्हाः शोधनार्हा मद्यासक्ताः स्त्र्यासक्ता व्यायामसक्ताश्च तथा चिन्तकाः वृद्धाः बालाः अबलाः कृशाः रूक्षाः क्षीणरुधिराः क्षीणशुक्राश्च वातपीडिताश्च नेत्राभिष्यन्दिनस्तिमिरिणः कृच्छ्रोन्मीलिनस्ते सर्वेऽपि स्नेह्याः (अहसू. १६.५-६) रूक्षणानन्तरं प्रयुक्तो यः स्नेहः सोऽसात्म्यतां गतः सन् मलानीरयितुं समर्थो भवति ( असंसू. २५) तेषु अपि घृतपानयोग्याः— धीस्मृत्याद्यभिलाषिणां घृतं पानार्थं शस्यते ( अहसू. १६.८ ) तैलपानयोग्याः—लाघवदार्ढ्यार्थी तैलं पिबेत् क्रूरकोष्ठेषु तथा ग्रन्थिनाडीकृमिश्लेष्म—मेदो—वातरोगेषु च तैलं पानार्थं हितम् ( अहसू. १६.९ ) वसापानयोग्याः—पौरुषोपचये व्यायामे च स्नेहपानार्थं वसा इष्यते (चसू. १३.१६) तथा च क्षीणधातुषु अल्पाग्निरोगे वातावृतमार्गे च तथा सन्ध्यस्थिमर्मकोष्ठरुजासु, दग्धरुजि आहतरुजि भ्रष्टयोनिरोगे दारुणशिरःशूलयोः विशेषेण स्नेहपानार्थं वसा योज्या ( अहसू. १६.१०-११ ) मज्जपानयोग्याः—क्रूराशयाः क्लेशसहा वातार्ताः दीप्तवह्नयश्च मज्जपानयोग्याः ( सुचि. ३१.१८ ) स्नेहोपयोगः— उपयोगः द्विविधः बाह्य आभ्यन्तरश्च। तत्र बाह्यः देहाभ्यङ्गोऽवगाहः— शिरोऽभ्यङ्गादिः (सुचि.४.८)आन्तरः पानबस्त्यादिषु (सुचि.४.८)यथा न्यग्रोधादिगणसिद्धः स्नेहः ज्वरदाहनाशने अभ्यङ्गतयाऽवगाहने चोपयुक्तः ( सुउ. ३९.२८८-२८९ ) आभ्यन्तरोपयोगे प्रभूतमांसनिःक्वाथाजाङ्गलानूपजात्रसान्स्नेहभृष्टेषु वा तेषु अतिसंहतां यवागूं वा तिलचूर्णं फाणितं सस्नेहम्। कृशरां भूरिस्नेहां तिलकाम्बलिकं सुखोष्णं सर्पिष्मतीं पेयां क्षैरेयीं ससितां, लवणयुक्तं सर्पिर्वा पयः सद्यः स्निग्धं प्रयोजयेत् ( असंसू. २५ ) भक्तेन सह स्नेहपानम्— ये सुकुमाराः कृशाः वृद्धा बालाः स्नेहद्विट्तृष्णार्ताः तथोष्णकाले सहभक्तेन स्नेहं पाययेत् (सुचि. ३१.३७) स्नेहो हि पानानुवासनमस्तिष्कशिरोबस्ति—उत्तर—बस्तिनस्यकर्णपूरण-गात्राभ्यङ्गभोजनेषूपयोज्यः। तत्र जङ्गमेभ्यो गव्यं घृतं प्रधानं स्थावरेभ्यस्तिलतैलम् (सुचि. ३१.३-४) 'युक्त्याऽवचारयेत्स्नेहं भक्ष्याद्यन्नेन बस्तिभिः। नस्याभ्यञ्जनगण्डूषमूर्धकर्णाक्षितर्पणैः' ( असंसू. २५; अहसू. १६.१४-१५) स्वस्थस्य स्नेहनार्थं कालभेदेन विविधः स्नेहोपयोगः। प्रावृषि तैलं, शरदि सर्पिः, वसन्ते वसामज्जानौ च युञ्ज्यात् ( असंसू. २५; अहसू. १६.१२ ) सद्यःस्नेहनार्थं लवणोपहिताः स्नेहा उपयुक्ताः (असंसू. २५) स्नेहानां तारतम्यात् दोषघ्नता—तैलाद्वसापित्तघ्नी। सर्पिः पित्तघ्नतमम्।

तथा सर्पिषो मज्जा वातघ्नतरः वसा वातघ्नतरा तैलं वातघ्नतमम्। मज्जा वातश्लेष्मघ्नः वसा वातश्लेष्मघ्नतरा तैलं वातश्लेष्मघ्नतममित्यवगन्तव्यम् (अरु. अहृसू. १६.३; असंसू. २५) केवलस्नेहपानम् स्नेहनकर्मणि श्रेष्ठः प्रयोगः आशुस्नेहकर्मसाधनात् ( असंसू. २५; अहृसू. १६.१७ ) स्नेहपानक्रमः– लघुकोष्ठाय प्रातः काले यथाबलं स्नेहमात्रां पातुं प्रयच्छेत्। पीतमात्रे चोष्णोदकेनोपस्पृश्य सोपानत्को यथासुखं विहरेत् ( सुचि. ३१.१४) कोष्ठभेदात्स्नेहपानाऽवधिः–मृदौ कोष्ठे त्रिदिनमच्छं स्नेहं पिबेत्। क्रूरे सप्तदिनं यावद्वा स्निग्धलक्षणोत्पत्तिः (अहृसू. १६.२९-३०; चसि. १.६) मध्यमकोष्ठापेक्षया पुरुषः स्नेहं चतुःपञ्चषडहानि पिबेत्। सप्तरात्रादनन्तरं स्नेहः सात्म्यीभवति ( सुचि. ३१.३६) अच्छस्नेहमात्रा–सा ह्रस्वमध्योत्तमभेदात्त्रिविधा। या मात्रा प्रयुक्ता जाठराऽबलवशाद्वाभ्यां प्रहराभ्यां जरां नाम जरणं याति, सा ह्रस्वा। चतुर्भिर्यामैर्या जीर्यति, सा मध्यमा। अष्टाभिर्यामैर्या जीर्यति सोत्तमा मात्रा (अरु. अहृसू. १६.१७-१८; असंसू. २५) दोषादीन्वीक्ष्य ताभ्योऽपि ह्रसीयसीं यामपरिणामिनीं मात्रां परिकल्पयेत् (अहृसू.१६.१८) ये नराः प्रभूतस्नेहनित्याः क्षुत्पिपासासहाः, ते प्रभूतस्नेहसात्म्याः ( चसू. १३.३१ ) स्नेहः शमनार्थम्। रोगस्य शमनायोपयुज्यते। स जातबुभुक्षस्य शस्यते। अन्यो बृंहणः, स स्नेहो रसमद्याद्यैः सह शस्यते ( अहृसू. १६.१९-२० ) स्नेहेऽनुपानम्–अच्छपेये सुखपक्तये स्नेहस्य प्रयोगात् पश्चादुष्णं वारि पिबेत्। ( अहृसू. १६.२३ ) स्नेहनप्रयोगे भोजननियमः– स्नेहपानात्पूर्वदिने तथा यावन्ति दिनानि स्नेहं पिबति तावत् तथा समाप्ते स्नेहपाने तावन्त्येव दिनानि द्रवमुष्णमनभिष्यन्दि नातिस्निग्धमसङ्करं स्वल्पमन्नं मात्रया भोजयितव्यम् ( हे. अहृसू. १६.२५ ) स्नेहप्रयोगे विहारनियमाः– उष्णोदकोपचारी ब्रह्मचारी क्षपाशयोऽवेगरोधी स्यात् किंच व्यायामक्रोधशोकहिमातपान् त्यजेत्। प्रवातयानयानाध्वभाष्य–अभ्यास–संस्थितिः नीचात्युच्चोपधानाहःस्वप्नधूमरजांसि च यावंत्यहानि स्नेहं पिबति तानि तत्संख्याकानि तदनन्तरं च स्नेहपानरहितान्यपि त्यजेत् ( अहृसू. १६-२६-२८ ) अस्नेह्याः– अतिमन्दाग्निः तीक्ष्णाग्निः स्थूलो दुर्बलऊरुस्तम्भातिसारामगलरोगगरोदरमूर्च्छाच्छर्दरुचिश्लेष्मतृष्णामद्यैश्च पीडिताः अपप्रसूताश्च स्नेहनीयाः ( असंसू. २५; अहृसू. १६.६-८ ) अजीर्णी मदपीडितः तरुणज्वरी श्रान्तो दत्तबस्तिविरिक्तो वान्तोऽकाले प्रसूता च स्त्री, अकाले दुर्दिने चैव स्नेहपानं विवर्जयेत् ( सुचि. ३१.४६-४८ ) सम्यक्स्निग्धस्य वातानुलोमनमग्नेः प्रदीप्तत्वं वर्चसः स्निग्धत्वं मृदुत्वं च अंगेषु मार्दवं च स्निग्धता च अम्लानिश्च विमलेन्द्रियता, लाघवं स्नेहोद्वेगश्च, इत्येतानि लक्षणानि भवन्ति ( असंसू. २५; चसू. १३.६ ) पच्यमानस्नेहलक्षणम्–तृड्दाहोऽरतिः क्लमः सादो भ्रमः ( सुचि. ३१.३३ ) शिरोरुग्निष्ठीवमूर्च्छादीनी जीर्यन्नेषजे भवन्ति ( असंसू. २५ )

यदा जीर्यमाणस्नेहस्य लक्षणानि शान्ति गच्छन्ति, तदा स्नेहो जीर्ण इति ज्ञायते (ड. सुचि. ३१.५४) जीर्णस्नेहलक्षणम्–अनुलोमाऽनिलस्वास्थ्यक्षुत्तृष्णोद्गारशुद्धिभिः स्नेहो जीर्ण इति विजानीयात् ( असंसू. २५) जीर्णाजीर्णविशङ्कायां पुनरुष्णोदकपानं कुर्यात्, तेनोद्गारविशुद्धिस्तथा भक्तं प्रति रुचिर्देहे लघुता च भवति, तदा जानीयात्स्नेहो जीर्ण इति ( सुचि. ३१.३२-३३; असंसू. १६.२४) जीर्णे स्नेहे परिचर्या– जीर्णस्नेहं नरमुष्णजलेन परिषेचयेत्। किञ्चाल्पतण्डुलामुष्णां यवागूं च कामं पाययेत् अग्निं दोषं च वीक्ष्य विलेपीयूषरसादीन् प्रयुञ्जीत ( ड. सुचि. ३१.३८-३५ ) अस्निग्धलक्षणम्– रूक्षं ग्रथितं पुरीषम् अप्रगुणो वायुर्मृदुरग्निः गात्रस्य खरत्वरौक्ष्ये च (चसू. १३.६) अतिस्निग्धलक्षणम्– पाण्डुता गौरवं जाड्यं पुरीषस्य चाविपक्वता तन्द्राऽरुचिरुत्क्लेशः ( चसू. १३.६) अङ्गसदनं नासास्रावः लालास्रावः प्रवाहिका गुददाहः छर्दिर्मूर्च्छा तृष्णा शुष्कोद्गारः भ्रमश्वासकासादयः स्नेहातिसेवनाद्भवन्ति ( असंसू. २५ ) मिथ्यास्निग्धलक्षणम्– शोफोऽर्शस्तन्द्रा निद्रा विसंज्ञिता कण्डूः कुष्ठं ज्वरोत्क्लेशौ जठर– दौर्बल्यमिन्द्रियदौर्बल्यं जाड्यमामवाग्ग्रहादीनि लक्षणानि भवन्ति ( असंसू. २५ ) भ्रमादिका भवन्ति ( अहृसू. १६.३२-३३ ) मिथ्यास्नेहेन वातरक्तं प्रकुप्यति ( सुनि. १.४१ ) स्नेहव्यापदि उपक्रमः– क्षुत्तृष्णानिग्रहो वमनं स्वेदः पानान्न-

भेषजे रूक्षद्रव्याणि च देयानि (अहृसू. १६.३३-३५) वातावृतस्नेहलक्षणम्–अङ्गमर्द–ज्वर–आध्मान–शीत–स्तम्भ– ऊरुपीडन-पार्श्वरुगादयो भवन्ति (चसि. ४.२६-२८)- पित्तावृते स्नेहे– दाहरागतृष्णामोहतमकश्वास ज्वरादीनि लक्षणानि भवन्ति (चसि. ४.३१) अन्नशनावृतस्नेहे– छर्दिमूर्च्छाऽरुचिग्लानिशूल-निद्रा-ऽङ्गमर्दाः सदाहैरामलिङ्गैश्च संयुतानि लक्षणानि भवन्ति (चसि. ४.३४)

स्नेहफलम्–स्नेहः आशु प्रयोजितः सन् संशुष्कान् धातून् पुष्णाति बलम् अग्निबलं पुष्टिं प्राणाँश्चाभिवर्धयेत् (चचि. २८.७९-८२) देहात्कफादयो दोषाः प्रणुद्यन्ते (चसि. ६.११) यो नर आभीक्ष्ण्येन स्नेहमुपसेवते, स दीप्तान्तराग्निः परिशुद्धकोष्ठः नूतनधातुः बलवर्णयुक्तो दृढेन्द्रियो मन्दजरः शतायुश्च भवति इति प्रदिष्टम् (अहृसू. १६.४६)

**–क्लान्त**–वि., स्नेहपानोद्विग्नः, स्नेहग्लानः (चचि. २८.७६)

**–क्लिन्न**– वि., स्नेहेनाऽऽप्लुतः, स्नेहपानेनाप्लुतः (अहृसू.१७. २९)

**–गण्डूष**–पु., उपक्रम० मधुरादिसाधितैः स्नेहैः कृतो गण्डूषः (सुचि. ४.२२) असञ्चार्यमात्राप्रमितो गण्डूषः (सुचि. ४०.६२)

**–गण्डूषधारण**–न., कर्म० (असंसू. ३) स्नेहगण्डूषधारणं दन्तदार्ढ्यकरं रुचिप्रदं च (सुचि. २४.१४)

**–ग्लान**–वि., स्नेहेन ग्लानः (चसू. १३.५५)

**–तृषा**–स्त्री., लक्षण० स्निग्धान्नजा तृष्णा (चचि. २२.५२) स्नेहपानजा तृष्णा (चचि. २२.५२)

**–दग्ध**–पु., रोग० तप्ततैलघृतादिभिः दग्धत्वम् तच्च दहनं कष्टतरं भवति, स्नेहस्य सूक्ष्ममार्गानुसारित्वाद्दूरमनुप्रवेशाच्च (असंसू. ४०) चिकित्सा– तत्र रूक्षं भेषजम् (असंसू. ४०)

**–दाह**–पु., द्र० 'स्नेहदग्ध' (असंसू. ४०) स्नेहेन दहनम् (असंसू. ४०; अहृसू ३०.४८)

**–द्रोणी**–स्त्री., पात्र० स्नेहपूर्णः कटाहः। शस्त्रकर्मानन्तरमुदरिणां निवासनार्थम् (असंचि. १७)

**–द्विष्**–वि., स्नेहं द्वेष्टि इति (अहृसू. १६.२०)

**–नित्य**–वि., स्निग्धाहारादिशीली (अहृसू. ७.६०)

**–निवृत्ति**–स्त्री., बस्तिव्यापद्० स्नेहस्याऽप्रवृत्तिः (अहृसू. १९.३१)

**–पक्ति**–स्त्री., स्नेहपाकः (अहृसू. १९.३४) (असंसू. २८)

**–परिहार**–पु., स्नेहे पीतेऽपथ्यम् यथा शीतोदकादि (अहृसू. १६.३९)

**–पाक**–पु., भैषज्यद्रव्य० स्नेहस्य पाकः। स त्रिधा मृदुमध्यखरभेदेन (चक. १२.१०२) किट्टे कल्कसमे सति मन्दो मृदुर्वा पाकः किट्टे मदनोपमे मध्यश्चिक्कणो वा पाकः । किट्टे सीदति सति वर्णतः कृष्णे च खरः खरश्चिक्कणो वा पाकः (असंक. ८) स्नेहौषधयोः पृथक्भावमात्रं यस्मिन्भेषजे तत्तादृशं भेषजं यत्र स्नेहे स मृदुः। स्नेहे सिद्धे सति यत्र मधूच्छिष्टमिव विशदं नाम अपिच्छिलमङ्गुल्यादौ अविलेपि (पैच्छिल्यगुणाभावाद्) भेषजं भवति, स मध्यमपाकः। यत्र कृष्णमीषदवसन्नं विशदं चिक्कणं च भेषजं, स खर इति। अत ऊर्ध्वं दग्धस्नेहो भवति, स दग्धस्नेहपाकः। तत्र पानाभ्यवहारयोर्मृदुः। नस्याभ्यङ्गयोर्मध्यमः। बस्तिकर्णपूरणयोस्तु खरपाकः उपयुज्यते (सुचि. ३१.११; चक. १२.१०३-१०४)

**–पाककल्प**–पु., स्नेहपाकविधिः। स्नेहाच्चतुर्गुणो द्रवः स्नेहचतुर्थांशो भेषजकल्कः तदैकध्यं संसृज्य विपचेदित्येष स्नेहपाककल्पः (सुचि. ३१.८) स्नेहकुडवे भेषजपलं पिष्टं कल्कं चतुर्गुणं द्रव्यमावाप्य विपचेत् (सुचि. ३१.८)

**–पान**–न., उपक्रम० स्नेहस्य पानम् (सुचि. ३१.१४) द्र० 'स्नेह'

**–पानक्रम**–पु., स्नेहपानपरिपाटी (सुचि. ३१.१४)

**–पायिन्**–वि., यः स्नेहनार्थं स्नेहं पिबति सः (अहृसू. ६.३०)

**–पिचु**–पु., उपक्रम० स्नेहयुक्तः पिचुः (चचि. ३०.१०८)

**–पीत**–वि., येन स्नेहः पीतः (सुचि. ३९.३; अहृसू. १९.५३)

**–प्रगाढ**–वि., स्नेहबहुलः (सुचि. ३७.४५)

**–प्रयोग**–पु., उपक्रम० स्नेहपानस्य प्रयोगः द्र० 'स्नेह' (अहृसू. १६.२६-२८)

**–प्रियालबीज**–पु., वनस्पति० प्रियालः (ध. ५.७२)

**–फल**–न., स्नेहप्रधानं फलम् तिलैरण्डातसीबिभीतकादिकम् (सुचि. ४०.४) स्नेहपानस्य फलम्, द्र० 'स्नेह' (सुचि. ३१.५६)

**–फलसार**–पु., स्नेहफलानां तिलादीनां सारस्तदन्तर्गतो मज्जा (सुचि. ४०.४)

**-बस्ति**-पु., उपक्रम० स्नेहस्य बस्तिः। स्नेहयुक्तः बस्तिः (चसि. ४.३) अनुवासनबस्तिः (अहृसू. ४.२९) सिद्धस्नेहाः सर्पिरादयो बस्तिविधिना दीयन्ते, स स्नेहबस्तिः (सुचि. ३८.८८)

**-भर्जिता**-वि., स्नेहभृष्टा (पेया) (अहृसू. १६.४०)

**-भावित**-वि., स्नेहपानेन स्निग्धः (अहृसू. १८.५७)

**-मांस**-न., स्नेहप्रधानं मांसम्। आनूपप्राणिमांसम् (सुउ. १८.२३)

**-मात्रा**-स्त्री., स्नेहस्य प्रमाणम् (चसू. १३.२९)

**-मिथ्योपचार**-पु., स्नेहपाने मिथ्या उपचरणम् (चसू. १३.६४)

**-लवण**-न., लवण० काण्डलवणम् (सुचि. ४.३१)

**-लवणयोग**-पु., स्नेहलवणयोः संयोगः; अयम् अग्नौ क्षिप्तः सन्निन्द्रायुधवद्वर्णान् चटचटाशब्दं चोत्पादयति (असंसू. ८)

**-वध्य**-वि., स्नेहेन वध्यो नाम विनाश्यः शमनीयो वा (व्याधिः) (काखि. ११.८९)

**-वमी**-स्त्री., वनस्पति० मेदा (रा. ५.१६१)

**-वर्ग**- पु., स्निग्धद्रव्यसमूहः। येभ्यः स्नेहस्य सम्भवः, तेषां द्रव्याणां समूहः। यथा तिलातस्यौ च। घृतं तैलं वसा च इत्यादीनि स्निग्धद्रव्याणि तथैव कङ्गुणी-करञ्ज- श्रीफल-सिद्धार्थ-सोमराजी- बिभीतक-अतसी- निम्ब- तिल- दन्ती- भल्लातका इत्यादीनि चेति (र. २.१३३)

**-वर्ज**-वि., स्नेहरहितम् (सुचि. ५.३३)

**-वर्ति**-स्त्री., स्नेहयुक्ता पट्टवर्तिः (सुचि. २.७१)

**-विद्ध**-न., वनस्पति० देवदारुः (ध. १.७६)

**-विधि**-पु., उपक्रम० स्नेहकर्म (चसू. १.९०; अहृसू. १६.१२) द्र० 'स्नेह' अध्यायसंज्ञा० (असंसू. २५; अहृसू. १६.१)

**-विभ्रम**-पु., रोग० स्नेहस्य दुरुपयोगाद्विशिष्टो भ्रमः-अव्यवस्था स्नेहमिथ्यायोग इति यावत् (चसू. १३.७६)

**-विरेचन**-न., उपक्रम० स्नेहयुक्तं विरेचनम् (चक. १२.८३; सुचि. ४.२१) एरण्डतैलादिना विरेचनम् (सुउ. ४९.२०) तद्वृक्षस्य योग्यम् (काखि. ७.२९) एरण्डस्नेहः (सुचि.३३.४१)

**-व्यापत्ति**-स्त्री., स्नेहस्य दुरुपयोगान्मिथ्यायोगाजनितो व्याधिः (चसू. १३.७८)



**-व्यापत्तिभेषज**-न., स्नेहव्यापत्तिजव्याधिनाशनार्थमुपयुक्तं द्रव्यम् (चसू. १३.७८)

**-व्यापत्साधन**-न., स्नेहपानजन्यरोगे चिकित्सितम् (अहृसू. १६.३४)

**-व्यापत्सिद्धि**-स्त्री., अध्याय० संज्ञा० (चसि. ४.१)

**-व्यापद्**-स्त्री., स्नेहातियोगादि-समुत्थः विकारः (सुसू. ४५.४४; अहृसू. १६.३५; असंसू. २५)

**-शर्करा**-स्त्री., स्नेहप्रधाना शर्करा, स्निग्धगुणं चूर्णम्। स्नेहस्य संहताऽवस्थितत्वान्मधुशर्करावत्स्नेहशर्करा (चचि. २५.७६)

**-शोधनयुक्ति**-स्त्री., स्निग्धस्य शोधनोपायः (अहृसू. १९.६७)

**-समृद्ध**-वि., स्नेहसमृद्धः (चसू. १३.७२)

**-सात्म्य**-वि., स्नेहः सात्म्यः यस्य सः (सुचि. ३३. ४४)

**-सार**-वि., स्नेह एव सारो बलं यस्य, सः (सुचि. ३१.३)

**-सिक्त**-वि., स्नेहेनावसेचितः (सुचि. २४.३२)

**-सिद्धि**-स्त्री., घृततैलादिस्नेहानां सिद्ध्यर्थं क्रियमाणः पाकः। सम्यक्सिद्धस्य लक्षणम्-शब्दफेनयोरुपशमो गन्धवर्णरसादीनां सम्र्द्धिश्च (सुचि. ३१.१२-१३) भैषज्यमङ्गुलिभ्यां गृह्यमाणमनतिमृद्वनतिदारुणमनङ्गुलिग्राहिताविशिष्टं च स्यात् (असंक. ८)

**स्नेहन**-वि., स्नेहजनकम् (चसू. १.८७) स्नेहयतीति, घृततैलवसादिवत् (सुसू. १४.३)
न., स्नेहविधिः, स्नेहक्रिया (चसू. १३,१२)

**-कर्मन्**-न., उपक्रम० स्नेहविधिः (असंसू. २४.५-६)

**स्नेहयितव्य**-वि., स्नेहनीयः, कर्तव्यस्नेहनकर्मा (चसू. ४३.४९)

**स्नेहाग्नि**-पु., स्नेहेनात्यधिकेनोद्दीप्तोऽग्निः (चसू. १३.७१; असंसू. २५)

**स्नेहाचार**-पु., स्नेहोपचारे पथ्याऽपथ्यम् (अहृसू. १८.२७)

**स्नेहाजीर्ण**-न., स्नेहस्य अपचनम् (सुचि. ३१.३१)

**स्नेहाञ्जन**-न., अञ्जन० ताम्रपात्रस्थितं मांसं सर्पिःसैन्धवसंयुतमिति स्नेहाञ्जनमेके आहुः। इदं वाताभिष्यन्दे उपयुक्तम् (सुउ. ९.१६)

**स्नेहाध्याय**-पु., अध्यायसंज्ञा० (चसू. १३.१; कासू. २२.१)

**स्नेहान्वित**-वि., घृतादियुक्तम् स्नेहगुणैर्युक्तम् (सुचि. ४.२३)

**स्नेहाशय**-पु., स्नेहस्थानम्। तच्च द्विविधं स्थावरं जङ्गमं च (चसू. १३.११) यथा दधिक्षीरं मांसास्थि फल-दारु च (असंसू. २५)

**स्नेहोचित**-वि., स्नेहसात्म्यः (अहृसू. १६.३८)

**स्नेहोत्क्लिष्ट**-वि., स्नेहेनोत्क्लिष्टः (चसि. ६.९)

**स्नेहोत्क्लेश**-पु., स्नेहस्य कोपः (असंसू. २८)

**स्नेहोत्तम**-न., स्नेह० तैलम् (ध. ६.१२५)

**स्नेहोद्वेग**-पु., लक्षण० स्नेहद्वेषः सम्यक्स्निग्धलक्षणान्यतमम् (अहृसू. १६.३१)

**स्नेहोपगगण**-पु., गण० स्नेहस्य सर्पिरादेः स्नेहनक्रियायां सहायत्वेनोपगच्छतीति स्नेहोपगः (चसू. ४.८) तत्र द्रव्याणि-मृद्वीका-मधुक-मधुपर्णी-विदारी-काकोली-क्षीरकाकोली-जीवक-जीवन्ती-शालिपर्णी इति दशद्रव्याणि (चसू. ४.१३(२१); असंसू. १५)

**स्नेहोपयौगिक**-वि., स्नेहस्योपयोगो यस्मिन् कर्मणि तत् स्नेहोपयौगिकम् (सुचि. ३१.१)

**स्नेहोपयौगिक**-न., चिकित्सितअध्यायसंज्ञा० स्नेहस्योपयोगो यस्मिन् कर्मणि तत्स्नेहोपयौगिकम् (सुचि. ३१.१)

**स्नेहोपसेविन्**-वि., आभीक्ष्ण्येन स्नेहं यः सेवते, सः (सुचि. ३१.५६; असंसू. २५; अहृसू. १६.४६) द्र० 'स्नेह'

**स्नेह्य**-वि., स्नेहकर्मयोग्यः द्र० 'स्नेह' (चसू. १३.६; अहृसू. १६.५-६)

**स्नैग्ध्य**-न., स्निग्धता (सुसू. ३२.३)

**स्नैहिक**-वि., स्नेहकृतम् (नावनादिकम्) (चसू. ५.४०)

-**धूम**-पु., धूम० द्र० 'धूम' (चसू. ५.३७)

-**नस्य**-न., स्नेहमयं नस्यम् द्र० 'नस्य' (सुचि. ४.२२)

-**फल**-न., स्नेहयुक्तं फलं तिलैरण्डातसीबिभीतकादिकम् (सुचि. ५.७)

**स्नैहिकवर्ति**-स्त्री., वर्ति० धूमपाने उपयुक्ता स्नेहनकारिका स्नेहयुक्ता वर्तिः (चसू. ५.२६)

**स्पन्द**-पु., रोगलक्षण० कम्पः (असंशा. ८.३२)

**स्पन्दन**-न., रोगलक्षण० चलनम् (ड. सुशा. १.१९) सपीडनगतिः (परि०) (र. २२. १०१) वनस्पति० (असंउ. ६) वि., कम्पनः (चसू. १८.७)

**स्पर्श**-., गुण० वायवीयगुण० (चशा. ७.१६) स्पर्शनेन्द्रियग्राह्यगुणः यथा उष्णादिः (चसू. ८.११) उष्णशीतादिस्वरूपः (सुशा. १.४)

-**तन्मात्र**-न., पञ्चतन्मात्रेष्वेकम्, अनुद्भूतः स्पर्शः (सुशा. १.४)

-**रुज्**-स्त्री., लक्षण० स्पर्शासहत्वम्, स्पर्शनं न सहते इति (चचि. १२.१३)

-**लज्जा**-स्त्री., वनस्पति० लज्जालुः (रा. ५.१६०)

-**वात**-पु., रोग० अस्मिन्नङ्गानां तोदनं प्रायशो दाहः स्पर्शाज्ञत्वं मण्डलानि च त्वगुपरि दृश्यन्ते (र. २१.१३)

-**वातारि**-पु., पारदयोग० असौ स्पर्शवातविनाशनः (र. २१.३९-४०)

-**विकार**-पु., रोग० स्पर्शवातः (र. २१.२२)

-**वैगुण्य**-न., लक्षण० स्पर्शाज्ञत्वम् स्पर्शहानिः (सुसू. १५.११)

-**शीत**-वि., स्पर्शे शीतः (असंसू. ७.१८)

-**संकोचपर्णिका**-स्त्री., वनस्पति० लज्जालुः (ध. ४.१०९)

-**हानि**-स्त्री., गुह्यरोग० शूकदूषितरक्तोत्था, शूकेन दूषितं यन्मेढ्रे रक्तं तदुद्भवेयम्, अचेतनत्वं मेढ्रे जायते (इन्दु. सुनि. १४.१०, असंउ. ३८)

-**हिम**-वि., स्पर्शे शीतम् (असंसू. ७.२४१)

**स्पर्शन**-न., शारीर० स्पृशत्यनेनेति (चक्र. चसू. ८.८) स्पर्शनेन्द्रियम् (चशा. ७.१६) स्पर्शक्रिया (चचि. २९.१२८)

-**घ्न**-वि., स्पर्शनेन्द्रियं हन्तीति (कुष्ठम्) (चचि. ७.३)

**स्पर्शनेन्द्रिय**-न., शारीर० त्वक्, स्पर्शेन्द्रियम् (अहृसू. १२.१)

**स्पर्शाज्ञान**-न., रोगलक्षण० स्पर्शासंवेदनम्, स्पर्शस्यासंवित्तिः (सुशा. ६.२६)

**स्पर्शासहत्व**-न., लक्षण० स्पर्शस्यासहत्वम् (सुनि. १५.६)

**स्पर्शेन्द्रिय**-न., शारीर० त्वगिन्द्रियम्, पञ्चज्ञानेन्द्रियेष्वेकम्, त्वक्, इदं वायवीयमिन्द्रियम् (सुशा. १.१९)

**स्पर्शोद्विग्नत्व**-न., लक्षण० स्पर्शासहत्वम् (सुनि. १.४५)

**स्पृक्का**-स्त्री., वनस्पति० सुगन्धिद्रव्य० (चचि. २३.७७; सुसू. ३८.२४-२५) तद्गुणाः— कटुः, कषाया, तिक्ता, शीता, सुगन्धिः, कफनाशिनी, तृष्णाविषदाहकुष्ठदुर्गन्धस्वेदकासाश्मरीमूत्रकृच्छ्रप्रमेहनाशिनी च (ध. ३.६२; रा. १२.११३-१५; अहृसू. १५.४३)

हिं.— असवरग.
**म.— स्पृक्का, शाक.**
बं.— पिडिङशाक.
सुगन्धशाक० ( भाप्र; र. २८.८६ )
लज्जालुः ( रा. ५.१५९ )

**स्पृक्शरीर**–न., भोगायतनं शरीरम्, ' नित्यमात्मानं स्पृशति इति स्पृक्; शरीरमातिवाहिकं शरीरम् ' तादृक् स्पृक्शरीरम् इति चक्रः ( चशा. ३.१३ )

**स्पृष्टरोदिका**–स्त्री., वनस्पति० लज्जालुः ( असंउ. २ )

**स्प्रष्टृ**–पु., वि., स्पर्शनेन्द्रियस्य स्पर्शबोधहेतुः, स्पर्शज्ञापककर्ता ( सुशा. ३.४ )

**स्फटिक**–पु., खनिजद्रव्य० रत्न० ( चचि. १.४ ) २२ ) तद्गुणाः–चक्षुष्यः, शीतो लेखनो विषसूदनः, पवित्रो धारणीयः, पाप्माऽलक्ष्मीमलापहः ( सुसू. ४६.३२९-३३० )
सौराष्ट्री ( र. २.१४९ )
श्वेतपाषाणः ( र. २.१४९ )
वनस्पति० निर्यास० कर्पूरः ( ध. ३.३१ )

**( स्फटिका )**–स्त्री., खनिजद्रव्य० सौराष्ट्री० ( र. २३.४७-४८ )

**–पात्र**–न., स्फटिकमयभाजन० रागषाडवसट्टकादिधारणार्थमिदमुपयुज्यते ( सुसू. ४६.४५३ )

**स्फटिकाभ**–वि., स्फटिकवर्णयुक्तम्, श्वेतम् ( सुशा. २.११-१२ )

**स्फाटिक**–न., स्फटिकस्येदम् ( चूर्णम् ) ( सुउ. १०.१५ )

**स्फिच्**–स्त्री., शारीर० नितम्बः, कट्याः पश्चिमो मांसलो भागः ( सुशा. ३.८ ) षट्पञ्चाशत्प्रत्यङ्गेष्वेकोऽवयव० संख्यातो द्वौ स्फिचौ ( चशा. ७.११ )

**( स्फिक् ) शूल**–पु., लक्षण० स्फिग्भागस्य शूलः ( चसि. २.१६ )

**–शोष**–पु., लक्षण० स्फिग्भागस्य शोषः ( चसि. २. १६ )

**–स्तम्भ**–पु., लक्षण० स्फिग्भागस्य स्तम्भः ( चसि. २.१६ )

**स्फुट**–वि., अभिव्यक्त, विकसितम् ( सुसू. ४५.१९३-१९४ )

**–फल**–पु., वनस्पति० तुम्बरुः ( रा. ११.६६ )

**–स्रोतस्कर**–न., स्रोतःशुद्धिकरम् ( मद्यं ) स्फुटं निर्मलं शुद्धं वा, तथाविधं स्रोतः करोति इति स्फुट स्रोतस्करम् नाम स्रोतोवैमल्यकरम् ( सुसू. ४५.१९३-१९४ )

**–स्रोतोमुख**–वि., विकसितस्रोतोमुखः ( असंसू. २८.२६ )

**स्फुटन**–न., लक्षण० स्फुटितवद् वेदना ( चसू. १७.५८ ) दरणम् ( चसू. ५.९२ )

**स्फुटिका**–स्त्री., खनिजद्रव्य० सौराष्ट्री ( र. २९.१०२-१०४ )

**स्फुटित**–वि., बहुधाखण्डीभूतम् ( सुसू. ४५.११२ ) विदीर्णम् ( सुनि. १६.३७ ) भिन्नम्, स्तोकम् ( अस्थिभङ्गप्रकारः ) ( सुनि. १५.१० )

**–दन्तता**–स्त्री., दन्तविकृति० अस्मिन् विकारे सस्फोटो दन्तो भवति ( कासू., २०.६ )

**स्फुरण**–न., लक्षण० स्पन्दनम्, कम्पः ( चनि. ३.७ ) पुनः पुनः चलनम् ( सुचि. १.७ )

**स्फूर्ज**–पु., वनस्पति० तिन्दुकः ( सुचि. ५.१८ ) टिण्टुकः ( असंचि. २३ )

**स्फूर्जक**–पु., न., वनस्पति० तिन्दुकः ( चवि. ८.१४४; ध. ५.४० ) लकुचाकारपत्रकाण्डः, स्योनाकः ( सुउ. ३९.१८६ )

**स्फूर्जथु**–पु., वनस्पति० तण्डुलीयकः ( रा. ५.१७५ )

**स्फूर्जन**–पु., वनस्पति० तिन्दुकः ( ध. ५.४० )

**स्फूर्जित**–न., वनस्पति० काकतिक्तः ( इन्दु. असंचि. १.७७ )

**स्फोट**–पु., लक्षण० स्फुटनम् ( यथा त्वचः ) ( सुनि. ५.२४ )
त्वग्रोग० ( चसू. १३.३५; अहृसू. ७.१९ )
विस्फोटः ( ३.७९ )

**–बीजक**–पु., वनस्पति० भल्लातकः ( रा. ११.२०१ )

**–लता**–स्त्री., वनस्पति० कर्णस्फोटा ( रापरि. ३.४१ )

**–शुक्तिज**–न., भैषज्यद्रव्य० मौक्तिकम् ( ध. ६.६२ )

**स्फोटन**–न., रोगलक्षण० शकलीकरणमिव वेदना ( सुउ. ४३.६ )

**स्मय**–पु., ( परिव० ) विस्मयः ( चइ. ११.१८ )

**स्मर**–पु., कामदेवो मदनः ( र. ५.१२ )

**–वृद्धि**–स्त्री., वनस्पति० कामवृद्धिः ( रापरि. ४.५१ )

**स्मराधिवास**–पु., वनस्पति० अशोकः ( रा. १०.२७१ )

**स्मराम्र**–पु., वनस्पति० राजाम्रः ( रा. ११.८ )

**स्मृति**–स्त्री., स्मरणम्, स्मरणशक्तिः ( चसू. १३.४३ ) प्रज्ञाभेदः ( चशा. १.९८ ) भूतार्थविज्ञानम् ( सुउ. ६१.३ ) अनुभवजन्यं ज्ञानं स्मृतिः, पूर्वानुभूतस्यार्थस्य स्मरणम्, ' अनुभूतार्थासंप्रमोषः स्मृतिः '

इति योगसूत्रमपि अत्रानुसन्धेयम् (सुशा. १.१७) स्मृतिशास्त्रजं ज्ञानम् ( चवि. ४.४ )

–कर–वि., स्मरणकारकम् ( अहृसू. १४.२८ )

–भ्रंश–पु., लक्षण० स्मरणशक्तिभ्रष्टत्वम्, कार्याकार्यविचाराभावः ( चशा. १.१०१ ) ( अत्र स्मृतिविभ्रंशपदमस्ति न केवलं स्मृतिभ्रंश इति ( असंनि. ६.११ )

–विभ्रंश–पु., लक्षण० कार्याकार्यविचाराभावः, स्मृतिभ्रंशः ( असंनि. ६.११ )

**स्यन्द**–पु., रोगलक्षण० श्लेष्मस्रवणम् ( सुसू. ४६.४४१-४४२ ) सर्वोर्ध्वजत्रुगस्रोतः स्यन्दनात् स्यन्दः ( असंउ. १९ ) नेत्ररोग० ( सुउ. १.३०-३१ )

**स्यन्दन**–पु., वनस्पति० तिन्दुकः ( चवि. ८.१४४; ध. ५.४० ) तिनिशः ( चसू. २५.४९; रापरि. ९.२४ ) नेमिवृक्षः ( चक. चचि. ३.२५८ ) रथः ( सुसू. ३.५३ )

–तैल–न., सिद्धतैल० दोषाणां स्रावकं तैलम्, भगन्दरे शोधनरोपणसवर्णीकरणार्थमुपयुज्यते ( सुचि. ८.५१-५२ )

**स्यूत**–वि., सीवनकर्मकृतम् ( असंसू. ३८.३९ )

**स्योनाक**–पु., वनस्पति० टिण्टुकः (चचि.१५.१३४-३७; असंउ. ३५; ध. १.११४ ) तद्गुणाः–कटुरुष्णः अम्लः, दीपनपाचनः हृद्यः रुच्यः, आमवातातीसारकासारुचिबस्तिरोगादिनाशनः ( ध. १.११४ )

**स्रंस**–पु., किञ्चित्स्वस्थानचलनम् ( चसू. २०.१२ ) हन्वादेः सन्धेर्भ्रंशः ( अरुः ) शैथिल्यम् ( हे. अहृसू. १२.४९ )

**स्रंसन**–न., च्यवनम्, मलरेचनम् ( चचि. ३.१७१-७२) मृदु रेचनम् ( सुउ. ४२.५६-५७; चसू. १३.७७ ) द्र० 'विरेचन'

**स्रंसिन्**–पु., वनस्पति० पूगफलम् ( ध. ३.३९ )

**स्रज्**–स्त्री., पुष्पमाला ( ड. सुक. १.२६ )

**स्रव**–पु., वनस्पति० लता० मूर्वा ( र. २०.१०१ )

**( स्रवा )**–स्त्री., वनस्पति० लता० मूर्वा ( र. २०.१०१ )

**स्रवण**–न., लक्षण० लालादीनां स्रावः ( चनि. ७.७(३) )

**स्रवत्तोया**–स्त्री., वनस्पति० रुदन्ती ( रापरि. ५.१५ )

**स्रवन्ती**–स्त्री., नदी ( असंशा. १२.८ )

**स्रष्टृ**–पु., वि., कर्ता, चेतनावान् ( सुशा. ३.४ )

**स्रस्त**–वि., भ्रष्टम् ( चचि. ३०.१११-१२ ) अवसन्नम् शिथिलम् ( सुउ. ४१.१८-२१ )

–कुक्षि–वि., स्रस्तः सन्धिबन्धेभ्यः शिथिलीभूतः कुक्षिः यस्याः सा ( सुशा. ३.७-८ )

–गुद–न., लक्षण० शिथिलगुदम् ( चचि. १९.९ )

–पायु–पु., लक्षण० शिथिलगुदम्, स्रस्तगुदम् ( असंशा. ११.१६ )

–पिण्डिका–स्त्री., लक्षण० शिथिलपिण्डिका ( सुसू. ३२.४ )

–मुष्क–वि., लक्षण० स्थानच्युताण्डः ( सुसू. ३२.४)

–मूर्धजा–वि., शिथिलीभूताः केशा यस्याः, सा (सुशा ३.७-८)

**स्रस्ताक्ष**–वि., अतिपतितनयनः (सुचि.५.१८) शिथिलीभूतमक्षि नाम नेत्रं यस्य, सः ( सुशा. ३.७-८ )

**स्रस्ताङ्गता**–स्त्री., लक्षण० निःसहावयवता, शरीरशैथिल्यम् ( चचि. ३.१०३-१०५ ) (सुसू. २५-३४,३५)

**स्रस्तापान**– वि., अधश्च्युतगुदः ( ड. सुउ. ४०.९ )

**स्राव**–पु., नेत्ररोग० नेत्रस्रावः (चसू. २०.१५, सुउ. २.५-७ ) नासागतरोग० नासास्रावः ( असंउ. २३ ) लक्षण० स्रवणम् ( असंउ. २९ )

–गति–स्त्री., स्रावमार्गः ( सुचि. ८ २४. )

–स्रावण–न., रोग० स्राव, नासास्रावः ( सुसू. ४२.९ ) रोगलक्षण० स्रावः ( सुसू. ४२.९ )

**स्राविन्**–वि., स्रावयुक्तः ( चचि. २५.२० )

**स्राविणी ( योनि )**–स्त्री., योनिरोग० प्रदरः ( चचि. ३०.८१.८२ )

**स्राव्य**–वि., स्रवणयोग्यः ( सुसू. २५.१२ )

**स्रुचमुख**–न., यन्त्र० स्रुचसदृशं मुखं यस्य तद्यन्त्रम् ( असंसू. ३४.१६ )

**स्रुत्**–स्त्री., स्रावः ( सुनि. १०.१२ )

**स्रुत**–वि., गलितः, विगतः ( असंसू. ६.७ )

–क्षार–वि., गलितक्षारः ( सुनि. ६.११ )

–दोष–वि.,शोधनादिना निष्कासितः दोषः यस्य, सः ( पुरुषः ) ( सुचि. ९.६६ )

–रक्त–वि., गलितरक्तः ( अहृसू. २०.१२ )

**स्रुतासृक्**–वि., स्रुतरक्तः ( सुचि. ३९.३ )

**स्रुति**–स्त्री., लक्षण० स्रावः ( अहृसू. १२.५२ )

**स्रुव**–पु., पात्र० वटपत्राकारो दारुहस्तकः ( सुसू. २.४) चाल्नीसदृशं पात्रम् ( र. २८.९४-९८ )

–द्रुम–पु., वनस्पति० विकङ्कतः ( रा. ९.५४ )

**–वृक्ष**–पु., वनस्पति० विकङ्कतः ( असंसू. १६.११; ( अहृसू. १५.१७ )

**स्रुवानन**–वि., स्रुवस्येवाननं यस्य तद् ( कर्णशोधनशलाकायन्त्रम् ( अहृसू. २५.३५ )

**स्रोतनदीभव**–न., खनिजद्रव्य० स्रोतोञ्जनम् ( रा. १३.२२६ )

**स्रोतस्**–न., स्थूलो वा सूक्ष्मो वा मार्गः छिद्रं वा ( सुशा. ४.५९ )

शारीर० स्रोतांसि द्विविधानि बहिर्मुखान्यन्तर्मुखानि च। तत्रान्तर्मुखान्येव योगवहानि स्रोतांसि, श्रवणनयनवदनघ्राणगुदमेढ्राणि नव स्रोतांसि बहिर्मुखानि नराणां। स्त्रीणां च एतान्येवापराणि च त्रीणि द्वे स्तनयोरधस्ताद्रक्तवहं च (सुशा. ५.१०) स्रोतसां स्वरूपम्–स्रवणात् स्रोतांसि। स्रवणादिति रसादेः पोष्यस्य स्रवणात् ( चसू. ३०.१२ ) स्रोतांसि खलु परिणाममापद्यमानानां धातूनामभिवाहीनि भवन्ति अयनार्थेन। सर्वे हि भावाः पुरुषे नान्तरेण स्रोतांस्यभिनिर्वर्तन्ते। क्षयं वाऽप्यभिगच्छन्ति ( चवि. ५.३ ) मूलात्खात् यद् देहे प्रसृतमन्तरं यद्वाभिवाहि सिराधमनीवर्जितं च तत्स्रोतः इति विज्ञेयम् ( सुशा. ९.१३ ) स्वधातुसमवर्णानि वृत्तानि स्थूलान्यणूनि आकृत्या च प्रतानसदृशानि दीर्घाणि च स्रोतांसि सन्ति (चवि. ५.२५) स्रोतसां संख्या प्रकाराश्च–यावन्तः पुरुषे मूर्तिमन्तो भावविशेषास्तावन्त एवास्मिन्स्रोतसां प्रकारविशेषाः। अतिबहुत्वात्केचिदपरिसंख्येयानि स्रोतांस्याचक्षते, परिसंख्येयानि पुनरन्ये ( चवि. ५.४ ) तद्यथा–प्राणोदकान्नरसरुधिरमांसमेदोऽस्थिमज्जशुक्रमूत्रपुरीषस्वेदवहानीति। वातपित्तश्लेष्मणां पुनः सर्वशरीरचराणां सर्वाणि स्रोतांस्ययनभूतानि ( चवि. ५.७ ) शल्यतन्त्रे तु स्रोतांस्येकादशैव, तानि पुनः प्राणान्नोदकरसरक्तमांसमेदोमूत्रपुरीषशुक्रार्तववहानि, येष्वधिकारः शल्यतन्त्रे ( सुशा. ९.१२ )

शल्यतन्त्रे तु अस्थिमज्जस्वेदवहानां स्रोतसां नोल्लेखः। अत्र डल्हणः– " अस्थिमज्जस्वेदवाहिषु स्रोतस्सु सत्स्वप्यनधिकारः। कथम्? तत्रास्थिवहानां सकलानामेव मेदो मूलं मज्जवहानां च। तेषां सकलान्येवास्थीनि सकलशरीरगतानि, न च सकलशरीरगतविद्धलक्षणं साध्यादिज्ञाननिश्चायकम्। एवं स्वेदवहानामपि केवलं मेदो मूलमिति। अतः शल्यतन्त्रे तेषां मूलविद्धलक्षणानधिकारः। अमुमेवार्थं चेतसि कृत्वाऽऽह येष्वधिकार इति " (ड. सुशा. ९.१२) स्रोतसां दुष्टिकारणम्–सामान्येन-सर्वेषामेव स्रोतसां वातपित्तश्लेष्माणः प्रदुष्टाः दूषयितारो भवन्ति, दोषस्वभावात् ( चवि. ५.९ ) यः आहारो विहारश्च दोषगुणैः समः धातुभिर्विगुणश्च, सः स्रोतसां प्रदूषकः ( चवि. ५.२३ ) स्रोतसां दुष्टिलक्षणे सामान्येन–अतिप्रवृत्तिः संगो वा सिराणां ग्रन्थयोऽपि वा विमार्गगमनं च ( चवि. ५.२४ ) स्रोतोवेधचिकित्सा-स्रोतोविद्धं तु प्रत्याख्यायोपचरेत्। उद्धृतशल्यं क्षतविधानेनोपचरेत्। ( सुशा. ९.१२ ) कायचिकित्सायां तु स्रोतोरोध एव प्राधान्येन रोगाणां कारणम्। तत्र स्रोतोमुखविशोधनात् दोषाः कोष्ठं यान्ति अनन्तरं यथासन्नं विनिर्हरेत्। एषा शोधनचिकित्सा ( चसू. २८.५ )

**( स्रोतो– ) ज**–न., खनिज० अञ्जन० स्रोतोञ्जनम् ( चक्र. चचि. २०.२९; ध. ३.१५१; पृ. १२५ ) अञ्जनम् ( सुनि. १०.५ )

**–मार्दवकृत्**–वि., स्रोतसां मृदुताकारी ( मण्डः ) ( अहृसू. ६.२८ )

**–मुख**–न., शारीर० स्रोतसो मुखम् (चसू. २८.३३)

**–रोधस्**–न., रोग० स्रोतसां रोधजनितो रोगः, रसप्रदोषजरोगेष्वेकः ( चसू. २८.१०; ( अहृसू. १३.२३ )

**–लीन**–वि., स्रोतोगतम् ( अहृसू. १७.२९ )

**–वर्त्मन्**–न., शारीर० स्रोतोमुखम् ( सुशा. ४.२४ )

**–विद्ध**–वि., यस्य स्रोतोऽवयवविशेषो विद्धः, सः स्रोतसि विद्ध इति वा ( सुशा. ९.१२ )

**–विबन्ध**–पु., लक्षण० स्रोतसां बन्धः, स्रोतोऽवरोधः ( अहृसू. १०.६ )

**–विमान**–न., अध्यायसंज्ञा० ( चवि. ५.१ )

**–विशोधन**–न., स्रोतसां शोधनम् (अहृसू. ५.६४)

**स्रोतोञ्जन**–न., खनिज० ( सुचि. २४.१८ ) अञ्जन० पर्णसानद्यां सिन्धुनदे च भवति ( ड. ) तल्लक्षणम्–वल्मीकशिखराकारम् ( सुउ. ६०.४९ ) भङ्गे कृते सति नीलकमलाभं वर्तते, घृष्टे सति गैरिकच्छायं वर्तते ( र. ३.११६ ) सिन्धुसंभवं स्रोतोञ्जनं विशुद्धं श्रेष्ठं चास्ति। तद्गुणाः– कटु, कषायम्; मधुरम् ( र. ३.१११ ) शीतम्; स्निग्धं, लेखनम् ( र. ) स्तनवृद्धिकरणम्; नेत्र्यम् ( र. ) कृमिनाशनम् ( रा. १३.२२६-२७; पृ. १२७ ) दाहकण्डूमलघ्नं, दृष्टिक्लेदरुजापहम् ( सुचि. २४.१८-१९ ) हिध्माविषच्छर्दिस्वरोगनुच्च ( र. )

सौवीराञ्जनम् ( सुसू. ३८.४६ )

**स्रोतोद्भव**–न., खनिज० स्रोतोञ्जनम् ( रा. १३.२२६ पृ. १२७ )

**स्वगुप्ता**–स्त्री., वनस्पति० कपिकच्छुः ( चचि. ११.४५; असंउ. ३७.३१८ ) लज्जालुः ( रा. ५.१६१ पृ. १५६ )

**स्वच्छ**–पु., वनस्पति० बदरम् (रा. ११.१५७ पृ. १८९ न. खनिज० विमलम् ( धपरि. ६. ६ पृ. २८९ ) भैषज्य० मौक्तिकम् ( रा. १३. ६७ पृ. २१८ )

**(स्वच्छा)**–स्त्री., वनस्पति० श्वेतदूर्वा ( रा. ८२.३० पृ. १६३ )

**–धातुक**–न., खनिज० विमलम् (धपरि. ६.६ पृ. २८९)

**स्वच्छन्दभैरव**–पु., ऋषि० रसाङ्कुशभैरवप्रभृतीनामेकतमः ( र. १-५-९ )

पारदादियोग० पारदलोहभस्समाक्षिकभस्सगन्धकहरितालहरीतकीनिर्गुण्डयग्निमन्थत्रिकटुटङ्कणवत्सनाभान्समभागान्निर्गुण्डीरसेन दिनैकं मुण्डीक्वाथेन च दिनैकं संमर्द्य वटिकाश्चरेत्। असौ सर्ववातान्नाशयेत् ( र. २१.१४९-५० )

**स्वतन्त्र**–न., स्वस्य तन्त्रम् शास्त्रमिति यावत् सुश्रुते स्वतन्त्रं नाम शल्यतन्त्रम् ( सुशा. १.२२ )

**–वृत्ति**–वि., वृत्तिर्जीवनम्, स्वतंत्र, स्वाधीनं जीवनं यस्यसः ( चशा. ६.२४ )

**स्वता**–स्त्री., ममता ( चशा. १.३७,१५२ )

**स्वदेशरचित**–वि., स्वस्मिन्–स्वस्मिन् देशे पाकक्रियासम्पादितम् (भक्ष्यादि) यस्मिन् देशे यद् भक्ष्यादि बाहुल्येनोपयुज्यते, तत् (ड. सुउ. ५७.१२)

**स्वन**–पु., शब्दः, ध्वनिः (चनि.१.२१; सुसू.२९.३०,३१)

**स्वनिताह्वय**–पु., वनस्पती० तण्डुलीयकः ( रा. ५.१७५; पृ. १५७ )

**स्वनुगुप्त**–वि., कृतरक्षाविधानम् ( चक्र. चक. १.१३) सुष्ठु अनुगुप्तम्, सुरक्षितम् ( सुचि. २५.२६ )

**स्वन्त**–वि., शोभनोऽन्तो यस्य तत् ( आपानम् ) ( चचि. २४.७५ )

**स्वपत्**–वि., स्वापयुक्तः संविशमानः, स्वापशीलः ( चसू. १८.९; सुशा. ४.३६ )

**स्वपथग**–वि., स्वमार्गगतः ( अहसू. ८.५५ )

**स्वप्न**–पु., अवस्थाविशेषः, करणेषूपसंहृतेषु जागरितसंस्कारजः प्रत्ययः सविषयः इति वेदान्तिनः निद्रावस्थायामर्धप्रसुप्तस्य पुरुषस्य विपरीतज्ञानम्, नातिप्रसुप्तः पुरुष इन्द्रियेशेन मनसा सफलाँस्तथाऽफलान् स्वप्नाननेकधा पश्यति ( चइ. ५.४२ ) अतिबलैस्त्रिभिर्दोषैर्मनोवहानां स्रोतसां पूर्णत्वाद्दारुणान् स्वप्नान्दारुणे काले पश्यति ( चइ. ५.४१ ) स्वप्नतो भूतात्मा प्रभू रजोयुक्तेन मनसा पूर्वदेहानुभूतान् शुभाशुभार्थान् गृह्णाति ( सुशा. ४.३६ ) करणानां वैकल्ये तमसाऽभिप्रवर्धिते सत्यस्वपन्नपि भूतात्मा प्रसुप्त इवोच्यते ( सुशा. ४.३७ ) सर्वेन्द्रियव्युपरतौ यदा विषयेभ्यो मनोऽनुपरतं तदा नानारूपं स्वप्नं प्रपश्यति ( असंसू. ९.५६ ) तत्प्रकाराः– दृष्टः श्रुतोऽनुभूतः प्रार्थितो कल्पितः भाविको दोषजश्चेति सप्तविधः स्वप्नः ( चइ. ५.४३ ) तत्र दृष्टः– यश्चक्षुषा जाग्रदवस्थायां किञ्चिद्वस्तुजातं दृष्ट्वा तदानीं सुप्तावस्थायां तादृशं वस्तुजातं संवित्तिरूपतयाऽनुभूयते। श्रुतः– यश्च शब्दमात्रेण वस्तुजातं श्रोत्रेन्द्रियेण गृह्यते, तदानीं सुप्तावस्थायां तादृक्संवित्तिरूपतयाऽनुभूयते । अनुभूतः–यस्तु जाग्रदवस्थायां तादृगन्तःसंवित्तिरूपतयाऽनुभूयते। प्रार्थितः– यथायथमिन्द्रियैरनुभूयते सुप्तावस्थायां यस्मिन्दृष्टे श्रुतेऽनुभूते वा यत्पूर्वं जाग्रदवस्थायां वस्तुजातं मनसाऽभ्यर्थ्यते तथैव च सुप्तावस्थायामन्तःसंवित्तिरूपतयाऽनुभूयते। कल्पितः– यस्तु षड्भिः प्रत्यक्षानुमानादिभिर्न दृष्टो नापि श्रुतो नाप्यनुभूतो दृष्टश्रुतानुभूतत्वाभावादत एव न प्रार्थितः, अपि तु केवलं मनसा यथेच्छमुत्प्रेक्ष्य यत्किञ्चनरूपाभिः कल्पनाभिस्ताभिस्ताभिः कल्पितो जाग्रदवस्थायां वस्तुजातोऽन्तःसंवित्तावुपारूढः तदानीं सुप्तावस्थायां तादृगनुभूयते। भाविकः– यश्च दृष्टश्रुतादिभ्यः स्वप्नेभ्योऽन्यो विलक्षणः स्वप्नो यथा दृश्यते सुप्तावस्थायामुत्तरकालं तथैव तत्स्वप्नदर्शिना नरेण तन्मुखावगततदर्थैरन्यैरपि प्रत्यक्षतो दृश्यते। दोषजः–यो वातजः पित्तजकफजो वा यथायथं दोषगुणानुरूपोऽन्तः संवित्तावनुभूयते ( अरु. अहशा. ६.६१ ) तत्सफलाफलःत्वम्–प्रथमपञ्चप्रकारकस्वप्ना अफलाः, प्रथमरात्रे दृष्टः स्वप्नोऽल्पफलो भवति। यं दृष्ट्वा न पुनः सुप्यात् स सद्यो महाफलः स्यात्। अकल्याणं स्वप्नं दृष्ट्वा यः पुनस्तत्रैव शुभाकारं सौम्यं स्वप्नं पश्येत्, तस्य शुभं फलं विद्यात्। दिवा दृष्टं सर्वं स्वप्नं तथा रात्रिदृष्टमप्यतिदीर्घमतिह्रस्वं च स्वप्नमफलं विद्यात्। भाविकं दोषजं च स्वप्नं सफलं विदुः ( अहशा. ६.६२-६४ ) तत्र रिष्टस्वप्नाः–

यः स्वप्ने श्वभिरुष्ट्रैः खरैर्वाऽपि दक्षिणां दिशां याति, स यक्ष्माणमासाद्य जीवितं विमुञ्चति। यः स्वप्ने प्रेतैः सह मद्यं पिबेत्तथा शुना कृष्येत्, स सुघोरं ज्वरमासाद्य जीवितं मुञ्चति। स्वप्ने यो लाक्षारक्ताऽम्बराभमम्बरमन्तिकात्पश्यति स रक्तपित्तमासाद्य तेनैवान्तं नीयते। स्वप्ने यो रक्तस्रग्रक्तसर्वाङ्गो रक्तवासा मुहुर्हसन् नार्या ह्रियते, स रक्तपित्तं प्राप्य सीदति। स्वप्ने यस्य हृदि दारुणा कण्टकिनी लता जायते, तं क्रूरो गुल्मोऽन्ताय विशति। स्वप्ने यस्य नग्नस्याज्यावसिक्तस्यानर्चिषं वह्निं जुह्वत उरसि पद्मानि जायन्ते, स कुष्ठेन नश्यति। यस्तु स्वप्ने चण्डालैः सह बहुविधं स्नेहं पिबेत्, स प्रमेहेण म्रियते। यः स्वप्ने रक्षोगणैः सह नृत्यन्नम्भसि सीदति, स भृशमुन्मादेन पीडितः परं लोकं याति। यं नरं स्वप्ने नृत्यन्तं मत्तं प्रेत आविध्य हरति, तमपस्मारपुरस्सरो मृत्युर्हरति। यो नरः स्वप्ने शष्कुलीरपूपानपि खादति प्रतिबुद्धः सन्तादृगेव छर्दयति, स न जीवति (चइ. ५.८-४०) यस्य स्वप्ने खरोष्ट्रमार्जारकपिशार्दूलसूकरैः शृगालैर्वा गच्छति स मृत्योर्मुखे वर्तते (अहृशा. ६.४६) अशुभस्वप्नाः–स्वप्ने सूर्येन्दुग्रहणेक्षणमक्षिरोगाय भवति। सूर्याचन्द्रमसोः पातदर्शनं दृग्विनाशाय भवति। आतुरेऽन्यान्यप्यशुभानि दृष्टभूतानि स्वप्नलक्षणानि भवंति–मूर्ध्नि वंशलतादीनां संभवः, पक्षिणां मूर्ध्नि निलयः, मुण्डता, काकगृध्राद्यैः परिवृतत्वम्, प्रेतपिशाचस्त्रीद्रविडान्ध्रगवाशनैः परिवृतत्वम्, वेत्रलतावंशतृणकण्टकसङ्कटे सङ्गः, श्वभ्रश्मशानशयनम्, पांसुभस्मनोः पतनम्, जलपङ्कादौ मज्जनम्, स्रोतसा शीघ्रेण हरणम्, नृत्यवादित्रगीतानि, रक्तस्रग्वस्त्रधारणम्, वयोङ्गवृद्धिरभ्यङ्गो, विवाहः श्मश्रुकर्म, पक्वान्नस्नेहमद्याशः, प्रच्छर्दनविरेचने, हिरण्यलोहयोर्लाभोऽनर्थौ बन्धपराजयौ, उपानद्युगस्य नाशः, पादचर्मणोः प्रपतनम्, भृशं हर्षः, प्रकुपितैः पितृभिश्चावभर्त्सनम्, ग्रहनक्षत्रदन्तदैवतचक्षुषां पतनं विनाशो वा, पर्वतस्य भेदनम्, रक्तकुसुमे कानने पापकर्मनिवेशने प्रवेशनम्, चितान्धकारसम्बाधे जनन्यां प्रवेशनम्, प्रासादशैलादेः पातः, मत्स्येन ग्रसनम्, काषायिणामसौम्यानां नग्नानां दण्डधारिणां, रक्ताक्षाणां कृष्णानां च दर्शनमित्यशुभलक्षणानि भवन्ति स्वप्ने। स्वप्ने कृष्णा पापानना, पापाचारा दीर्घकेशनखस्तनी, विरागमाल्यवसना स्त्री दृष्टा चेत् सा कालनिशेव प्रतीयते। (अहृशा. ६.४९-५९) शुभस्वप्नाः–यः स्वप्ने देवान्, द्विजान्, गोवृषभान्, जीवतः सुहृदो, नृपान्, साधून्, यशस्विनः पश्येत्, तथैवेद्धं वह्निं, स्वच्छान् जलाशयान्, कन्याः, गौरान् शुक्लवस्त्रान्सुतेजसः कुमारकान्, समन्तात् रुधिरोक्षितं दीप्ततनुं राक्षसं पश्येत् यो वा छत्रादर्शविषामिषं लभते, शुक्लाः सुमनसो वस्त्रममेध्यालेपनं फलं लभते, यः शैलप्रासादफलवृक्षसिंहनरद्विपगोश्वयानान्यारोहेत्, यश्च नदहृदोदधीन् तरेत्, यस्य वा पूर्वोत्तरेण गमनमगम्यागमनं मृतसम्बाधाश्चिःसृतिर्दैवैः पितृभिश्चाभिनन्दनं, रोदनं पतितोत्थानं, द्विषतां चावमर्दनम् स्यात् स बह्वायुरारोग्यं वित्तमश्नुते (अहृशा. ६. ६२-७१)

–दर्शन–न., स्वप्ने यद्यद् दृष्टंतत् (चवि. ४.८)

–नाश–पु., लक्षण० स्वप्नो निद्रा, तन्नाशः निद्रानाशः (चचि. ५.४१)

–नित्यता–स्त्री., लक्षण० निद्रालुत्वम् (चनि. ७.७(३)

–प्रसङ्ग–पु., निद्राया अधिकं सेवनम् (चसू. २१.३४)

–विपर्यय–पु., रात्रौ जागरणं दिवसे च स्वप्नः (सुसू. ४६.५००) जागरणम्, निद्रानाशः (सुउ. १.२६-२७)

**स्वप्नानुवृत्ति**–स्त्री., निद्रानुवृत्तिः (चसि. १.४४)

**स्वप्नोपघात**–पु., स्वप्ने भयङ्करैरभिभवः (इन्दु. असंउ. ४०)

**स्वफेनलेहिन्**–वि., स्वफेनं विलेढुं शीलमस्येति (सुउ. ६०.१६)

**स्वभद्रा**–स्त्री., वनस्पति० काश्मरी (रा. ९.१४७; पृ.२९)

**स्वभाव**–पु., प्रकृतिभावः (चशा. ७.१७) द्र० 'प्रकृति' (सुसू. ३२.१) सहजो गुणः (चसू. २७.४; सुसू. ४६.४४३) स्वस्य धर्मः, यथा कण्टकस्य तीक्ष्णता, इक्षोर्माधुर्यं च (सुशा. १.११) निसर्गः (सुशा. ४.३३)

–तस्–अव्य. प्रकृतितः (सुसू. २०.३) हेत्वन्तरनिरपेक्षतया (सुशा. ६.१५)

–नष्ट–न., निसर्गनष्टम् (कासू. १९)

–परिगृहीत–वि., स्वभावसंबद्धः (चसू. ६.५)

**-बलप्रवृत्त**-पु., रोग० प्रकृतिशक्तिजातो व्याधिः, यथा क्षुत्पिपासादिः ( सुसू. २४.७ )
**-विप्रतिपत्ति**-स्त्री., अध्याय० ( सुसू. ३२.१ )
**-व्याधि**-पु., स्वभावप्रवृत्तो व्याधिः द्र० 'स्वभावबलप्रवृत्तरोग' ( सुचि. २९.१ )
**-व्याधिप्रतिषेधनीय**-वि., अध्याय संज्ञा० ( सुचि. २९.१ )
**-शीत**-वि., सहजशीतलम् ( चचि. २२.५७ )
**-संसिद्ध**-वि., स्वाभाविकम् ( चसू. ३०.२७ )
**-सिद्ध**-वि., प्रकृतिसिद्धः, यथा ताल्वोष्ठजिह्वानां रक्तत्वम् ( सुसू. ३२.३ )
**स्वभावोपरम**-पु., स्वभावेनोपरमः, कारणाद्विनाऽपि नाशो भवति ( चसू. १६.२७ )
**स्वभुजोपधान**-न., स्वभुजयोरुपधानम्, गण्डुः, उपधानं, कन्दुकः ( चक. चसि. ३.१८ ) अत्र भुजयोरुपधानीकरणमेव इष्यते
**स्वभ्यक्त**-वि., सुष्ठु अभ्यक्तम् ( ड. सुचि. ३.२६ )
**स्वमणि**-पु., रत्न० सूर्यकान्तः ( ड. सुउ. ६०.१९ )
**स्वयम्**-अव्य., आत्मार्थे उपयुज्यते ( सुसू. ३४.१९-२० )
**-कृतिन्**-वि., स्वप्रज्ञया चिकित्सायां प्रवृत्तः ( वैद्यः ) ( सुसू. ३४.१९-२० )
**-गुप्ता**-स्त्री., वनस्पति० कपिकच्छुः ( सुउ. ४९.२९; ध. १.१५१ )
**-गुप्तादिसर्पिस्**-न., सिद्धघृत० सर्वमूत्रदोषघ्नं, रक्तदोषघ्नं च ( सुउ. ५८.५३-५७ )
**-प्रभ**-पु., सोम० ( सुचि. २९.६ )
**-भुवा**-स्त्री., वनस्पति० धूम्रपत्रा ( रापरि. ५.८ )
**-भू**-वि., अनाद्यजातः ( सुनि. १.५ )
पु., ब्रह्मा ( सुसू. १.४१ )
वनस्पति० माषपर्णी ( रा. ३.१७२ )
लिङ्गिनी ( रापरि. ३.१६ )
**स्वयमग्निरस**-पु., योग० त्रिकटुत्रिफलैलाजातीफललवङ्गसमभागानां चूर्णं क्षौद्रे आलोडयेत्। मात्रा निष्कद्वयम् क्षयकासनाशकः ( र. १३.४६-४७ )
**स्वर**-पु., ध्वनिः ( चइ. १४; अहृसू. ५.६३ )
सप्तसंख्यामानम्, सप्तस्वराणां प्रसिद्धत्वात् स्वरपरमपि सप्तसंख्याभिधायकत्वेन प्रयुज्यते ( र. ११ १०३ )
**-क्षय**-पु., रोग० स्वरस्य क्षयः ( चचि. १.७१ ) शोणितविकारः ( चसू. २४.१५ )
लक्षण० मन्दभाषित्वम् ( असंनि ३.७ )
**-ग्रह**-पु., रोग० स्वरस्य ग्रहः, स्वरावरोधः ( चचि. १६.२४ )
**-घ्न**-पु., गलरोग० तल्लक्षणम्-अतिप्रताम्यमानता, निरंतरं निःश्वसनम्, भिन्नस्वरता, शुष्कविमुक्तकण्ठत्वम्, अनिलमार्गेषु कफरुद्धेषु सत्सु वायुगतस्रोतसोः प्रतान्तत्वम् ( सुनि. १६.६१ )
**-दौर्बल्य**-न., लक्षण० स्वरमान्द्यम् ( चसू. ४४.१४ )
**-नाश**-पु., लक्षण० स्वरहानिः ( असंसू. ३६.७ )
**-बोधन**-वि., स्वरं बोधयति इति स्वर्यम् ( चचि. ८.९७ )
**-भङ्ग**-पु., रोग० वैस्वर्यम्, स्वरभेदः ( र. २५.४४ )
**-भेद**-पु., रोग० ( सुउ. ५३.१ ) तत्संप्राप्तिः-अत्युच्चभाषणविषाऽतिगीतशीतादिभिः प्रकुपिता पवनादयः, स्वरवहेषु स्रोतस्सु प्रतिष्ठां गताः स्वरं हन्ति। स्वरभेदप्रकाराः-वातजः, पित्तजः, कफजः, सन्निपातजो मेदोजः, क्षयज इति षड्विधः ( सुउ. ५३.३ ) तल्लक्षणम्, तत्र वातजः-कृष्णनयनाननमूत्रवर्चाः सगद्गदस्वरः; रूक्षः, क्षामश्चलस्वरश्च ( च. ) पित्तजः-पीतवदनाक्षपुरीषमूत्रत्वं, गलदाहः, तालुदाहः वक्तुमसूया च ( च. ) कफजः-कृच्छ्रान्मन्दं शनैर्भाषणम्-दिवा विशेषः, स्वरस्य खुरखुरायमाणत्वम् (च.) सान्निपातिकः-सर्वदोषजः-लक्षणयुक्तोऽस्पष्टवाणीकः मेदोजः-दिग्धगलौष्ठतालुरन्तर्गले चिरेणास्पष्टस्वरोत्पत्तिश्च; क्षयजः-ब्रुवतो मुखाद्धूमवद् उद्गमनम् ( सुउ. ५३.३-६ ) चरकतन्त्रे स्वरभेदस्यान्या एव षड्भेदा उक्ताः-त्रयो दोषजाः, रक्तजः, कासजः पीनसजश्च ( चचि. ८.५३-५६ ) साध्यासाध्यत्वम्, क्षीणवृद्धकृशचिरोत्थितसहजमेदोजसन्निपातजा असाध्याः ( सुउ. ५३.७ ) चिकित्सा-अयं स्वेद्यः ( चसू. १४.२० ) यथाविधि वमनविरेचनबस्तिभिश्च नस्यावपीडमुखधावनधूमलेहैर्विविधैः कवलग्रहैश्चापकृष्टदोषान् संपादयेत् ( सुउ. ५३.८; असंनि. ५ )
लक्षण० राजयक्ष्मप्रभृतिरोगेषु लक्षणम् ( सुउ. ४१.११ )
**-भेदप्रतिषेध**-पु., अध्यायसंज्ञाविशेषः ( सुउ. ५३.१ )
**-भ्रंश**-पु., लक्षण० स्वरभेदः ( असंनि. ५ १७ )
**-वहस्रोतस्**-न., स्रोतो० स्वरमार्गः शब्दवाहिनी धमनी ( डसुउ. ५३.३ )

-विशुद्धि-स्त्री., स्वरशुद्धिः ( असंसू. २७.१९ )
-वैकृत-न., लक्षण० स्वरहानिः ( सुशा. ६.२७ )
-संख्या-स्त्री., सप्त-संख्या ( र. १८.१२२-२३ )
-सदन-न., रोग० स्वरभेदः ( अहृसू. १६.१७ )
-साद-पु., रोग० स्वरभेदः द्र० 'स्वरभेद' ( असंनि. ५.२३ )
-स्कन्द-पु., वनस्पति० प्रियालः (ध. ५.७२ पृ.१८३)
-हटी-स्त्री., वनस्पति० बला ( रा. ४.४३२; पृ.६६ )
-हन्-पु., कण्ठगतरोग० यस्मिन् दुष्टेन श्लेष्मणा अनिलस्य गती रुद्धा भवति, किंच पुरुषः शुष्ककण्ठो हतस्वरश्च स्यात्। येन च तमः प्रविशन् प्रकर्षेण सक्तं श्वासं मुञ्चति, स व्याधिर्वातात् स्वरहनित्युच्यते ( असंउ. २५ )
-हानि-स्त्री., लक्षण० स्वरस्य हानिः (चसि. ९.६)

**स्वरस**-पु., ओषधेः अङ्गरसः, पञ्चविधकषायकल्पनेष्वेकः ( चसू. १.७३; चसू. ४.७ ) आर्द्रद्रव्यपेषणजरसः, तच्चार्द्रद्रव्यं यन्त्रेण पीड्यमानमिष्यते ( सुचि. १०.१२ )
स्वरसालाभे प्रतिनिधिरूपेण चूर्णानामाढकमाढकमुदकस्याहोरात्रस्थितं मृदितपूतं स्वरसवत्प्रयोज्यम् ( चचि. १(२).१२ )
क्वाथः ( ड. सुचि. १० १२ )

**(स्वरसा)**-स्त्री., वनस्पति० नाकुली ( रा. ७.१५२; पृ. १५४ )
-परिपीत-वि., स्वरसः परिपीतो स्वरसभावितः ( आमलकः ) येन सः ( चचि. १(३).३ )
-विधि-स्त्री., स्वरसनिर्माणम् ( चचि. १(२).१२ )

**स्वरातुर**-वि., स्वरभेदेनार्तो जनः ( सुउ. ५३.८ )
**स्वराधिकार**-पु., स्वरवर्णम्, स्वरस्य भेदद्वयम्; प्रकृतिस्वरो विकृतिस्वरश्च ( चइ. १.१४ )
**स्वरामय**-पु., रोग० स्वरभेदः ( सुचि. १८.१५ )
**स्वरार्थिन्**-वि., स्वरमिच्छन्, स्वरसौष्ठवाभिलाषुकः ( असंसू. ६.७४ )
**स्वरावसाद**-पु., लक्षण० स्वरभङ्गः ( ड. ) स्वरभेदः ( सुक. ४.३७ )
**स्वरूढदन्त**-पु., दन्तसंज्ञा० अष्टानां स्वरूढदन्तानां राजदन्ततश्चतुर्थः पञ्चमश्च ( कासू. २४.४ )
**स्वरूप**-न., आकृतिः ( अहृसू. ६.१ )
**स्वरूपोपमर्द**-पु., स्वरूपनाशः ( असंशा. ६.६९ )
**स्वरोपघात**-पु., रोग० स्वरभेदः ( सुचि. ३३.१५ )
लक्षण० स्वरस्योपघातः ( चसि. २.८ )



**स्वर्जिक**-पु., खनिजद्रव्य० क्षार० स्वर्जिकाक्षारः ( रा. ६.२६; पृ. ७२ )
**( स्वर्जिका )**-स्त्री., खनिजद्रव्य० क्षार० सर्जिकाक्षारः ( सुउ. ३९.२५६; असंसू. १२.३७-३९ )
-लवण-न., खनिज० क्षारः सर्जिकाक्षारः ( चवि. ७.१७ )

**स्वर्जिक्षार**-पु., खनिज० क्षार० सर्जिकाक्षारः ( सुउ. ५०.२१; रा. ६.२६; पृ. ७२ )

**स्वर्ण**-न., खनिज० सुवर्णम् ( रा. १३.१, पृ. २०६ )
वनस्पति० धत्तूरः ( र. १२.९७-९८ )
-कण-पु., निर्यास० कणगुग्गुलुः ( रा. १२.१८६; पृ. १२० )
-क्षीररस-पु., भैषज्य० असौ सुश्लिलक्षणकुष्ठविनाशनः ( र. २०.१६०-६२ )
-क्षीरिणी-स्त्री., वनस्पति० काञ्चनक्षीरी ( चसू ४.९ )
-क्षीरी-स्त्री., वनस्पति० स्वर्णक्षीरी, काञ्चनक्षीरी भेदः द्र० 'काञ्चनक्षीरी' ( चचि. २७.३६ ) ( रा. ५.३६५, पृ. ५७. )
-गैरिक-पु., न., खनिज० गैरिकभेदः सुवर्णगैरिकम् ( असंउ. १४; ध. ३.१६७-७०, पृ. २८ )
-जीवन्तिका-स्त्री., वनस्पति० ( रापरि. ३.१४ पृ. ३३० )
-जीवा-स्त्री., वनस्पति० हेमा ( रापरि. ३.१३ पृ. ३३० )
-दुग्धा-स्त्री. वनस्पति० सर्वक्षीरी, काञ्चनक्षीरीभेदः काञ्चनक्षीरी ( ध. १.२४२ पृ. ५७ )
-द्रु-पु., वनस्पति० आरग्वधः ( रा. ९.३३४. पृ. ५२ )
-धत्तूर-पु., वनस्पति० काञ्चनक्षीरी ( र. १६.१५१-५३ )
-धातु-पु., खनिज० सुवर्णगैरिकम् ( रा. १३.२३३; पृ. १२१ )
-पर्णी-स्त्री., वनस्पति० हेमा ( रापरि. ३.१३; पृ. ३३० )
-पारेवत-न., वनस्पति० महापारेवतम्, पारेवतम् ( रा. ११.९०; पृ. १८१ )
-पुष्प-पु., वनस्पति० आरग्वधः ( रा. ९.३३४; पृ. ५२ )
चम्पकः ( रा. १०.२३८; पृ. १९९ )

–( पुष्पा )–स्त्री., वनस्पति० कलिकारी ( रा. ४.१८; पृ.१३६ )
वृश्चिकाली ( रापरि. ९.९; पृ. ३६४ )
–( पुष्पी )–स्त्री., वनस्पति० सातला ( रा. ४.३६०; पृ. ५६ )
केतकी (रापरि. १० ३; पृ. २०४)
–पुष्पध्वजा–स्त्री., वनस्पति० स्वर्णुली ( रापरि. ४.३०; पृ. ३३७ )
–पुष्पिका–स्त्री., वनस्पति० कलिहारी ( ४.७६-७७ )
पीतपुष्पा ( र. ४.७६-७७ )
केतकी ( र. ४.७६-७७ )
काञ्चनक्षीरी ( र. ४.७६-७७ )
–फला–स्त्री., वनस्पति० सुवर्णकदली ( रा. ११.११५; पृ. १४९ )
–भृङ्गार–पु. वनस्पति० पीतभृङ्गराजः ( रा. ४.२१; पृ.१३६ )
–मातृ–स्त्री., वनस्पति० महाजम्बूः ( रा. ११.१३०; पृ. १८६ )
–यूथिका–स्त्री., वनस्पति० यूथिका (चसि. १०.३१); (ध. ५.१४८; पृ. २०० )
–लता–स्त्री., वनस्पति० हेमा ( रापरि. ३.१४; पृ. ३३० )
ज्योतिष्मती ( रा. ३.३९५, पृ. ६१ )
–वर्णी–स्त्री., वनस्पति० हरिद्रा (रा. ६.७९; पृ. १८)
**स्वर्णाह्वा**–स्त्री., वनस्पति० सर्वक्षीरी, काञ्चनक्षीरीभेदः ( रा. ५.३६५ पृ. ५७ )
**स्वर्णुली**–स्त्री., वनस्पति० तद्गुणाः– कटुका, कषाया, शीता, व्रणापहा च ( रापरि. ४.३०; पृ. ३३७ )
**स्वर्य**–वि., स्वराय हितम् ( चसू. २७.३१४ )
**स्वल्पतण्डुला**–वि., अष्टांशतण्डुलकृता (यवागू) ( ड. सुचि. ३९.७ )
**स्वल्पफला**–स्त्री., वनस्पति० हपुषा (रा.४.१२; पृ. ७०)
**स्ववाक्यसिद्धि**–स्त्री., स्ववाक्यस्थापनम्, तच्च निर्णयाख्यया तन्त्रयुक्त्या ( ड. सुउ. ६५.५ )
**स्वसंज्ञा**–स्त्री., तन्त्रयुक्तिविशेषः या तन्त्रकारैर्व्यवहारार्थं संज्ञा क्रियते सा ( चसि. १२.४४ ) अन्यशास्त्रसामान्या स्वसंज्ञा, यथा मिथुनेन मधुसर्पिषोर्ग्रहणम् ( सुउ. ६५.३४ )
**स्वस्तिक**–पु., भक्ष्य० यवादिचूर्णैः कृतोऽधोभागे विस्तीर्ण ऊर्ध्वभागे तीक्ष्णो मध्ये वलित्रयमुद्राङ्कितः, 'मोदकः' (ड. सुउ.६०.३२-३३) स्वस्तिकाकारः, पिष्टविकारः ( इन्दु. असंउ. ४ )
वनस्पति० शितिवारः ( ध. १.१५५; पृ. ३६ )
पु., न., व्रणबन्ध० स्वस्तिकबन्धः ( सुसू.१८.१७-१८) अंससन्धौ पट्टबन्धनार्थम् उपयुक्तोऽयम् ( असंउ. ३२ )
मुक्तादाम ( सुसू. २९.२७-२९ )
मङ्गलविशेषः स्वस्तिकाकारं दूर्वाशकलमण्डितं धवलं दर्पणसक्तं मृण्मयं गोमयकृतं मङ्गल्यमवतारणकार्यं कुर्वते माङ्गलिकक्रस्त्रियः ( ड सुसू. २९.२७-२९ )
–बन्ध–पु., व्रणबन्ध० स्वस्तिकाकारव्रणबन्ध अयं सन्धिकूर्चकभ्रूस्तनान्तरतलकर्णेषु विधेयः ( सुचि. ३.३१ ) अंससन्धौ पट्टबन्धनार्थमुपयुक्तः ( असंउ. ३२ )
–यन्त्र–न., यन्त्र० अष्टादशाङ्गुल प्रमाणम्, व्यालादिमुखसदृशं कीलेनाबद्धं, मूलेऽङ्कुशवदावृत्तवाराङ्गमाकारानुगताभिधानम्, तत्तु चतुर्विंशतिविधम् ( सुसू. ७.१० अहृसू. २५-६ )
**स्वस्तिवाचन**–न., मङ्गलविधिविशेषः ( चसू. १५.९ ) आशीर्वादोच्चारणम् (सुसू. ५.७) वेदमन्त्रोच्चारपूर्वकं पुण्याहवाचनम् ( सुशा. १०.८ )
**स्वस्तिशब्द**–पु., माङ्गल्यबोधकशब्दः (असंशा. १२.८)
**स्वस्त्ययन**–न., अथर्ववेदचिकित्सा० स्वस्तिवाचनम् ( चसू. ३०.२१ ) शान्तिमन्त्र० ( चनि. ७.१६ ) कल्याणम् ( काइ. ३० )
**स्वस्थ**–वि., अरोगी ( चसू., १.२४ ) स्वस्मिन् नाम आत्मनि आनंदरूपेण तिष्ठतीति। यः समदोषः समाग्निश्च समधातुमलक्रियः प्रसन्नात्मेन्द्रियमनाः स एव स्वस्थः ( सुसू. १५.४१ ) समवातपित्तकफः पुरुषः ( ड. सुचि. ३८.२९ )
–ता–स्त्री., स्वास्थ्यम् ( असंसू. २७.१९१ )
–वृत्त–न., अरोगस्याहाराचारादिवृत्तम्, स्वस्थस्याचारः ( सुउ. १.७; अहृसू. २०.१४ )
–वृत्ताध्याय–पु., अध्यायसंज्ञा० ( सुउ. ६४.१ )
–वृत्तानुवृत्ति–स्त्री., स्वस्थवृत्तस्यानुवर्तनम्, स्वस्थवृत्तनरस्य स्वस्थवृत्तानुच्छेदपूर्विका यद्वा तज्ज्ञापिका शरीर-क्रिया ( कासू., २४ )
–वृत्ति–स्त्री., नीरोगत्वेनानुवर्तनम् ( चसू. १.६७ ) स्वस्थवृत्तम् ( चसू. ५.१४ )
–हित–न., दोषादीनां साम्यानुवृत्तिहेतुद्रव्यम् ( अहृसू. १.१६ )

**स्वस्थानस्थ**-वि., स्वे स्थाने स्थितः ( दोषः ) ( चचि. २८.१९८ )

**स्वाङ्गशीत**-वि., अग्निना पक्वं द्रव्यमग्निनिर्वापणानन्तरं तत्रैव स्वतःशीतं जातम् ( र. ५.३९-४१ )

**स्वाङ्गशीतल**-न., स्वाङ्गशीतम् ( र. ८.६० )

**स्वाङ्गुलोन्मित**-वि., स्वस्याङ्गुलिभिः परिगणितम् ( असंशा. ७.३३ )

**स्वाचार**-वि., शोभनाचारः ( ड. सुउ. ६०.१० )

**स्वातन्त्र्य**-न., स्वकर्मविषये स्वाधिकारत्वम् ( सुनि. १.६ )

**स्वादु**-वि., मधुरः ( चसू. २७.१३ )
पु., रस० षड्रसेष्वेको मधुरः द्र० 'रस' ( चसू. १.६५ )
वनस्पति० अगरुः ( रा. १२.३९ )
वनस्पति० जीवकः ( ध. १.१२३ )
न., आहारद्रव्य० दुग्धम् (ध. ६.१६१; पृ. २३९)
वनस्पति० गृञ्जनम् ( ध. ४.३७; पृ. १४१ )

**-कण्ट**-पु., वनस्पति० क्षुद्रगोक्षुरः, गोक्षुरः ( रा. ३.१३२; पृ. २६ )

**-कण्टक**-पु., वनस्पति० गोक्षुरः ( चवि, ८.१३५; ध. १.१०२; पृ. २६ सुचि. २२.३२; )
विकङ्कतः ( चक. चक. १.२२; सुसू. ४२.११; ध. ५.४३; पृ. १७७ )
विकण्टकः (रापरि. ११.१९; पृ. ३७४ )
कण्टकारिवृक्षः ( सुचि. २२.३२ )

**-कदली**-स्त्री., वनस्पति० काष्ठकदली ( ध. ४.७९; पृ. १४९ )

**-कन्द**-पु., वनस्पति० सुखालुः ( रापरि. ७.२२, पृ. ३४९ )

**(-कन्दा)**-स्त्री., वनस्पति० विदारी ( ध. १.१४७.पृ. ३४ )

**-कफ**-पु., वनस्पति० धन्वनः ( रापरि. ९.२०पृ. ३६५ )

**-जल**-न., मधुरजलम् ( असंसू. ६.९ )

**-ता**-स्त्री., माधुर्यम् ( असंसू. ३९.१४ )

**-तुण्डिका**-स्त्री., वनस्पति० मधुरबिम्बी ( रा. ७.३०४; पृ. ४८ )

**-त्रिफला**-स्त्री., फलत्रय० द्राक्षा-खर्जूरकाश्मरीफलानां समूहः, द्राक्षादाडिमखर्जूरं वा ( ध. ७.३; पृ. २९९ )

**-पटोली**-स्त्री., वनस्पति० पटोल० स्वादुपटोली, द्र० 'पटोल' ( रा. ७.७६; पृ. १७ )

**-पत्रफला**-स्त्री., वनस्पति० पटोल० स्वादुपटोली, द्र० 'पटोल' ( ध. १.५२; पृ. १७ )

**-पाका**-स्त्री., वनस्पति० काकमाची ( रा. ४.३६; पृ. १३८ )
द्राक्षा० उत्तरापथिका, द्राक्षा ( ध. ५.५८; पृ. १७९ )

**-पिण्डा**-स्त्री., वनस्पति० पिण्डखर्जूरिका ( ध, ५.५५; पृ. १७९ )

**-पूर्वपर्याया**-स्त्री., वनस्पति० पटोल० स्वादुपटोलम् द्र० 'पटोल' ( रा. ७.७७ पृ.१७ )

**-फला**-स्त्री., वनस्पति० कदली ( ध. ४.७५ पृ. १४८ )
कोशातकी ( रा. ७.२८८; पृ. ४६ )
कर्कोटकी ध. १.८७, पृ. ४४. )

**-भोजन**-न., स्वाद्वन्नसेवनम् ( सुसू. ४६. ४८२ )

**-मज्जा**-स्त्री., वनस्पति० अक्षोटः ( ध. ५.६०; पृ. १८० )

**-मस्तका**-स्त्री., वनस्पति० खर्जूरी ( ध. ५.५३; पृ. १७८ )

**-मांसी**-स्त्री., वनस्पति० काकोली ( ध. १.१३२. पृ. ३१ )

**-मूल**-न., वनस्पति० गर्जरम् ( ध. ४.६९ पृ. १४७; )

**-रस**-पु., मधुरो रसः द्र० 'रस' ( अहसू, १२.५४ )

**-( रसा )**-स्त्री., वनस्पति० मूर्वा (ध. १.१३; पृ. ९)
शतावरी ( रा. ४.४३८; पृ. ६७ )

**-लता**-स्त्री., वनस्पति० विदारी (रा. ७.१९४ पृ. ३५)

**-विपाक**-पु., विपाकेन मधुरः मधुरविपाकः द्र० विपाक ( असंसू. १.३८ )

**-शाक**-न., यच्छाकं मधुरं तत्, गुणाः— विड्भेदि, गुरु, रूक्षं, विष्टम्भि, दुर्जरं, सकषायं च ( सुसू. ४६.२९६ )

**-स्कन्द**-पु., वनस्पतिवर्ग० मधुरद्रव्यगणः ( असंचि. ७ )

**स्वादुका**-स्त्री., वनस्पति० नागदन्ती ( रापरि. ५.२७; पृ. ३४२ )

**स्वाद्वम्ल**-पु., वनस्पति० दाडिमः (ध. २.६१. पृ. ८१)

**स्वाधार**–वि., शोभनाभिधेयम् ( चक. ) अनुभवसिद्धम्, सुप्रतिष्ठितम् ( शास्त्रम् ) ( चवि. ८.३ )

**स्वाप**–पु., लक्षण० सुप्तिः, स्पर्शाज्ञानम् ( ड. ) विचेतनत्वम् ( इन्दु. सुनि. १.३१ )

**–शील**–वि., निद्रालुः ( सुशा. २.२५ )

**स्वाभाविक**–वि., स्वभावसंभूतः ( सुसू. १.२५-(४) ) कालपरिणामेन जातो जरामृत्युनिमित्तजो व्याधिः ( चशा. १.११५ )

**स्वायम्भु**–स्त्री., वनस्पति० ब्राह्मी ( रा. ५.१४८; पृ. १५४ )

**स्वार्थ**–पु., स्वविषयश्चिन्त्यादिः ( चसू. ८.५ )

**स्वास्थ्य**–न., स्वस्थस्य भावः स्वास्थ्यम्, उद्वेजकधातुवैषम्यविरहितधातुसाम्यम् ( चसू. ५.१२ ) स्वस्थता ( अहृसू. ८.४४ ) दोषधात्वग्निमलक्रियाणां समता, आत्मेन्द्रियमनसां प्रसन्नता च यस्मिन् सः स्वस्थः तस्य भावः स्वास्थ्यम् ( सुसू. १५.४१ )

**–कारण**–न., स्वास्थ्यहेतुः ( अहृसू. १२.७८ )

**–रक्षण**–न., स्वास्थ्यस्य रक्षणम् ( चसू. ३०.२६ )

**स्वास्य**–पु., वनस्पति० वनबर्बरिका ( ध. ४.५८, रा. १०.८८, पृ.१४५ )

**स्वाहा**–अव्य., हविर्दानसमये उच्चार्यमाणः शब्द० ( अहृसू. १८.१७ )

स्त्री., अग्निपत्नी ( अहृसू. १८.१७ )

**स्विन्न**–वि., स्वेदितः कृतस्वेदनः ( अहृसू. १७.१५ )

**–देह**–वि., स्वेदितवपुः ( सुउ. ४०.१० )

**स्विन्नोत्सन्न**–न., स्विन्नत्वेनोत्सन्नम् ( कुष्ठम् ) ( चचि. ७.५१ )

**स्वेद**–पु., शारीर० मल० मेदसो मलः, घर्मः, रोमकूपेभ्यस्त्वग्रन्ध्रेभ्यो निष्पतदुदकस्वरूपं मलद्रव्यम् (चचि. १५.१८) तत्कार्यम्– शरीरार्द्रता, त्वक्सौकुमार्यश्च ( सुसू. १५.५(२) ) स्वेदक्षयलक्षणम्– स्तब्धरोमकूपता, त्वक्शोषः, स्पर्शवैगुण्यम्, स्वेदनाशः ( सुसू. १५.११ ) स्वेदक्षीणोऽभ्यङ्गं, मर्दनं, मद्यं निवातशयनासनं, गुरुप्रावरणमभिकाङ्क्षति ( ड. सुसू. १५.२९-३१ ) वृद्धिलक्षणम्– कण्डूः दौर्गन्ध्यम् ( असंसू. १९.८ )

ऊष्मा ( सुसू. १.२२ )

उपक्रम० शरीरेण सहाग्नेः संयोगः, तापनम्, स्वेदनम् ( चसू. १४.३ ) द्र० ‘ स्वेदविधि ’ ( चसू. १.९६ )

**–क्षय**–पु., लक्षण० स्वेदमलस्य हानिः द्र० ‘ स्वेद ’ ( सुसू. १५.११ )

**–क्षीण**–पु., स्वेदक्षयार्तः, द्र० ‘ स्वेद ’ ( सुसू. १५.२९-३१ )

**–ज**–पु., प्राणि० भुवः शरीरस्य च संस्वेदादूष्मणो जातः, यथा कृमिकीटपिपीलिकादयः ( सुसू. १.३० )

**–प्रवाहिन्**–वि., स्वेदं प्रवाहयितुं शीलमस्येति ( सुउ. ३९.१७ )

**–बीभत्सता**–स्त्री., स्वेदेन घृणा, स्वेदजनिता जुगुप्सा ( चसू. ५.९३ )

**–भेद**–पु., स्वेदप्रकाराः द्र० ‘ स्वेद ’ ( अहृसू. १७.१ )

**–मुख**–न., शारीर० लोमकूपम् ( चसू., ७.४२ )

**–वहस्रोतस्**–न., शारीर० स्रोतो० स्वेदवहं स्रोतः द्र० ‘ स्रोतम् ’ ( चनि. १.२० )

**–वाहिस्रोतस्**–न., शारीर० स्रोतो० स्वेदवहस्रोतस् (चवि. ५.२२) समानवायुस्थानम् (चचि. २८.८)

**–विधि**–स्त्री., स्वेदविधानाम (चसू.१.९०) उष्णतीक्ष्णस्निग्धसररूक्षसूक्ष्मद्रवस्थिरगुरूणि द्रव्याणि प्रायः स्वेदनीयानि स्वेदोपगानि वा उच्यन्ते(चसू.२२.१६) ‘ स्तम्भगौरवशीतघ्नं स्वेदनं स्वेदकारकम् ’ ( चसू. २२.११ ) स्वेदभेदाः–अग्निस्वेदोऽनग्निस्वेदश्च स्वेदो द्विविधः; तत्राग्निस्वेद-स्त्रयोदशविधः– सङ्कर-प्रस्तर-नाडी-परिषेका-वगाहन,जेन्ताकोऽश्मघन-कर्षूकुटी भू,कुम्भिक,कूप,होलाकाः— ( चसू. १४.३९-४० ) अनग्निस्वेदः–दशविधः– व्यायामोष्णसदनगुरुप्रावरणक्षुधाबहुपानभयक्रोधोपनाहातपयुद्धानि ( चसू. १४.६२ ) सुश्रुते तु चत्वारः स्वेदभेदा उपदिष्टाः– तापोष्णोपनाहद्रवस्वेदाः; तत्र तापोष्मस्वेदौ विशेषतः श्लेष्मघ्नौ उपनाहस्वेदो वातघ्नः, अन्यतरस्मिन् पित्तसंसृष्टे द्रवस्वेद इति, कफमेदोन्विते वायौ अनग्निस्वेदप्रकारैः स्वेदमुत्पादयेत्। चतुर्विधाः स्वेदाः पुनः सार्वदेहिको देहावयविकश्चेति द्विधा भिद्यते ( सुचि. ३२.३,१४-१६ ) तीव्रमध्यमृदुभेदेन स्वेदस्त्रिविधः–तत्र महास्वेदो महाबले शीतजव्याधिपीडिते च, मध्यमबले मध्यमः, दुर्बले मृदुस्वेदः करणीयः। शीताभिर्मुक्तावलीभिः, शीतलैर्भाजनैः, जलार्द्रैर्जलजैर्हस्तैर्वा स्विद्यतो हृदयं

स्पृशेत् ( चसू. १४.५,८-१० ) रूक्षस्निग्धभेदेन द्विविधः स्वेदः, वातरोगे स्निग्धस्वेदः, कफरोगे रूक्षस्वेदः, कफवातरोगयोरुभयविधस्वेदौ कर्तव्यौ आमाशयगते वाते रूक्षपूर्वः स्वेदः, पक्वाशयगते वाते स्नेहपूर्वः स्वेदो हितकरः ( चसू. १४.६-७ ) स्वेदकालः–निवातेऽन्तर्बहिःस्निग्धो जीर्णान्नकाले स्वेदमाचरेत् ( अहृसू. १७.१२ ) स्वेदकार्यम्–अग्निदीप्तिः, मार्दवं, त्वक्प्रसादः, स्रोतोनिर्मलत्वं, जाड्यतन्द्रापहरणं, सन्धिस्तब्धतापहरणम् ( असंसू. २६.१० ) स्वेदो मार्दवकराणां श्रेष्ठः ( असंसू. १३.३ ) सम्यक्स्वेदलक्षणम्–शीतशूलोपरमः स्तम्भगौरवनिग्रहो मार्दवोद्भवः ( चसू. १४.११ ) मिथ्यास्वेदलक्षणम्–सम्यक्स्विन्नविपरीतलक्षणानि ( सुचि. ३२.२३ ) स्वेदातियोगलक्षणम्–पित्तास्रकोपतृण्मूर्च्छास्वराङ्गसदनसन्धिपीडाज्वरश्यावरक्तमण्डलदर्शनच्छर्दिभ्रमाः ( अहृसू. १७.१६-१७ ) अतिस्विन्नचिकित्सा–ग्रैष्मिकविधिः–मधुरस्निग्धशीतलविधिः ( चसू. १४.१३ ) तूर्णं शीतविधानं करणीयम् ( सुचि. ३२.२४ ) स्वेदविधानम्–येषां नस्यं बस्तिश्च विधातव्यं, ये च शोधनीयास्ते पूर्वं स्वेदनीयाः, हृतशल्योऽनुपद्रवा मूढगर्भा; काले सम्यक्प्रजाता पश्चात् स्वेद्याः, भगन्दरार्शोऽश्मरीपीडिताः शस्त्रकर्मात्पूर्वं पश्चाच्च स्वेद्याः ( सुचि. ३२.१७-१९ ) स्वेदनीयरोगाः —प्रतिश्यायकासश्वासहिक्कास्वरभेदगलग्रहार्दितैकाङ्गसर्वाङ्गपक्षाघातविनामकवातकोष्ठानाहविबन्धविजृम्भकपार्श्वपृष्ठकटीकुक्षिपादजानूरुजङ्घाग्रह गृध्रसीमूत्रकृच्छ्रमूत्राघातमुष्कमहत्त्वशोथखल्लीवेपथुवातकण्टकसंकोचायामस्तम्भगौरवसुप्तिशूलाख्या रोगाः ( चसू. १४.२२-२४ ) अस्वेद्यरोगाः—कषायमद्यसेवनजन्यविकारा रक्तपित्तातिसारमधुमेहपित्तमेहगुददाहगुदभ्रंशविषजविकाराः स्थौल्यकामलोदराढ्यरोगक्षततिमिरादयो रोगाः श्रान्ततृषितक्षुधितक्रुद्धशोचद्दुर्बलविशुष्कक्षीणौजस्कगर्भिणीप्रभृतयो रोगिणः ( चसू. १४.१६-१९ ) तथैव षीतदुग्धदधिस्नेहमधुकाः कृतविरेचनाः पुष्पिता, सूता, स्तम्भनीयरोगाः, पित्तरोगिणश्च अस्वेद्याः ( अहृसू. १७.२१-२४ )

**–विवेचन**–न., स्वेदपृथक्करणम् ( सुशा ९.७ )

**–स्रावण**–न., स्वेदविस्रावणम्, स्वेदवहनम् ( सुनि. १.१८ )

वि., स्वेदं स्रावयति इति स्वेदस्रावणः ( सुनि. १.१८ )

**स्वेदन**–न., घर्मोद्गमरूप उपक्रम० द्र० 'स्वेदविधि' ( चसू. १४.१३ )

वि., स्वेदयति इति स्वेदनमुष्णम्, उष्णस्वेदकरद्रव्यम्, कुक्कुटमदिराकुलत्थादीनि ( चक्र. चचि. ३.२७१ )

संस्कार० मलशिथिलतापादनार्थं दोलायन्त्रे क्षारैरम्लैरितरैर्वा स्वेदनोपयोगिभिर्द्रव्यैर्द्रव्यस्य पाचनम् ( र. ८.६२ )

त्र्यूषणलवणादिभिर्युक्ते दोलायन्त्रस्थिते काञ्जिके दिनत्रयमुत्क्वथनरूपः पारदसंस्कारः ( र. ११.२६ )

**( स्वेदनी )**–वि., स्वेदजननी ( चुचि. ३.१८३-८४ )

**–कर्म**–उपक्रम० स्वेदविधिः ( असंसू. २४.५-६ )

**स्वेदनी**–स्त्री.,

**–यन्त्र**–न., यन्त्र० मुखबद्धवस्त्रोपरिस्थापिता द्रव्यपचनाय जलेन पूरिता स्थाली ( र. ९.५ )

**स्वेदनीय**–वि., स्वेदसाध्यः द्र० 'स्वेद-विधि' ( सुचि. ३२.२६ )

**स्वेदातियोग**–पु., स्वेदस्यातियोगः द्र० 'स्वेद' ( अहृसू. १७.१६-१७ )

**स्वेदाध्याय**–पु., अध्यायसंज्ञा० ( चसू. १४.१ )

**स्वेदाबाध**–पु., रोग० अति स्वेदरूपो व्याधिः ( चसू. २१.४ )

**स्वेदाभिवहन**–न., स्वेदवहनम् ( सुशा. ९.९ )

**स्वेदावचरणीय**–वि., अध्यायसंज्ञा० स्वेदावचारणमधिकृत्य कृतः अध्यायविशेषः ( सुचि. ३२.१ )

**स्वेदावचारण**–न., स्वेदोपक्रम योजनम् ( ड. सुचि. ३२.१ )

**स्वेदावरोध**–पु., लक्षण० स्वेदानिर्गमनम् ( सुउ. ३९.१३-१४ )

**स्वेदिन्**–वि., स्वेदयतीति स्वेदी, घर्मोत्पादकः ( अहृसू. ६.२८ )

**स्वेदोपगगण**–पु., द्रव्यगण० स्वेदनक्रियायां सहायत्वेनोपगच्छतीति स्वेदोपगः, महाकषायवर्गे एको गणः शोभाञ्जनकैरण्डार्कवृश्चीरपुनर्नवायवतिलकुलत्थमाषबदराणीति दशेमानि स्वेदोपगानि द्रव्याणि भवन्ति ( चसू. ४.१३ )

**स्वेद्य**–वि., स्वेदसाध्यः स्वेदनार्हः ( चसू. १३.५२ )

**हंस**–पु., पक्षि॰ तन्मांसं गुरूष्णस्निग्धमधुरं बलप्रदं बृंहणं शुक्रलं मारुतनाशनं च (चसू. २७.६६) हन्ति गच्छतीति हंसः (चसू. २७.४१) असौ मानसालयः (सुशा. ४.७२-७३; अहृसू. ७.१५ ध. ६.४५६; पृ. ४७८)
सूर्यः (र. १.८३)

**–घृत**–न., घृत॰ इदमूर्ध्वजत्रुरोगेषूपयुक्तम्, अतीव ऊर्ध्वगदापहमित्युक्तम् (चचि. २६.१७५)

**–पदी**–स्त्री., वनस्पति॰ हंसपादी (चचि. २६.२२०; ध. ४.१११)

**–पाक**–पु., खनिज॰ द्वयोरेकतरः प्रवालसदृशः श्वेतरेषो हिङ्गुलभेदः (र. ३.१५५)

**–पाकयन्त्र**–न., यन्त्र॰ प्रथमं वालुकापूर्णं खर्परं विधाय तस्योपरि अपरं खर्परं स्थापयेत्। ततः द्वितीये खर्परे ऊर्ध्वमुखे शनैः मृदुवह्निना लवणं बिडं च पचेत्। अत्र अग्नितप्तवालुकया क्षारादीनां पचनमिति मन्दः स्वेदः कृतो भवति। युक्तमस्य यन्त्रस्य हंसपाकमिति नाम। हंसो हि मन्दगतिरेव (र.९.३४-३५)

**–पादिका**–स्त्री., वनस्पति॰ हंसपादी (रा. ५.१६५; पृ. १५६)

**–पादी**–स्त्री., वनस्पति॰
(चसू. ४.१०; सुसू. ३८.४-५) गुणाः–कटुः शीतोष्णा रक्तप्रसादनव्रणरोपणरसायनकरी, दाहविसर्पविषभूतभ्रान्त्यपस्मारहरा च (ध. ४.१११; पृ. १५६)

हिं.—हंसपादी.
म.—लाल लाजाळु.
गु.—हंसराज काळी डांडलीनो.
बं.—गोयालेलता.
फा.—परस्या उशान.

वनस्पति॰ मण्डूकपर्णी (र. १८.१९८)
रक्तलज्जालुः (र. ११.९०)

**–मण्डूरक**–न., योग॰ मण्डूरयोगः मंडूरत्र्यूषणत्रिफलामुस्तादिसाधितोऽयं पाण्डुरोगहलीमककामलोरुस्तम्भार्शांसि नाशयेत् (र. १९.४५-४८)

**–माषा**–स्त्री., द . . ि॰ माषपर्णी (रा. ३.१७१; पृ. ३२)

**–रुत**–न., हंसध्वनिः (सुसू. २९.२७-३१)

**हंसाङ्घ्रि**–स्त्री., वनस्पति॰ हंसपादी (रा. ५.१६७; र. २२.१५९. पृ. १५६)

**हंसाण्ड**–पु., हंस्याः नाम वरटायाः अण्डम्, इदं वाजीकरणार्थमुपयुज्यते (असंउ. ५०)

**हंसिर**–पु., मूषिक॰ तेन दष्टस्य लक्षणम्–अन्नविद्वेषः, जृम्भा रोम्णां हर्षणं च, तत्र सुवान्तः नरः आरग्वधादिकाथं पिबेत् (सुक. ४.१४)

**हंसोदक**–न., हंससेवायोग्यं उदकं हंसोदकम् 'दिव्यं खात्पतितम् तोयं नाम्ना हंसोदकं शिवम्' (काखिल॰) दिवा सूर्यकिरणैस्तप्तं रात्रौ चन्द्रकिरणैः शीतीभूतमहोरात्रं चागस्त्योदयेन निर्विषं स्वच्छं च जातं जलम् (अहृसू. ३.५२)

**हठ**–पु., अभूमिलग्नमूलस्तृणविशेषः (सुसू. ४५.११)
वनस्पति॰ जलकुम्भिका (सुचि. २९.२९)
पारदगन्ध॰ सम्यक् शुद्धिमकृत्वा बद्धः पारदः असौ सेवितश्चेन्मृत्यवे कल्पते (र. ११.६६)
न., वनस्पति॰ शैवालम् (र. ३०.४५)

**हठाग्नि**–पु., वैक्रान्तादिसत्वपातनक्षमतापयुताग्निः, तीव्राग्निः (र. २.७१-७३)

**हण्डिका**–स्त्री., आयतमुखं बृहन्मृत्तिकाभाण्डम् (र.३.१३९)

**–यन्त्र**–न., यन्त्र॰ डमरुयन्त्रम्, द्र॰ 'डमरुयन्त्र' (र. १३.५३)

**हत**–वि., ताडितः (सुचि. २.७७)

**–चूर्णक**–पु., खनिज॰ गौरीपाषाणभेद॰ सोमलप्रकारः (र. ३.१३८; ध. परि. ६.१४ पृ. २९०)

**–नामन्**–न., रोग॰ अर्शांसि (असंचि. १०)

**–प्रभ**– वि., लक्षण॰ हतशरीरदीप्तिः (ड. ) हतेन्द्रियशक्तिकः (सुउ. ३९.९३)

**–मांससिर**–वि., लक्षण॰ नष्टं मांसं शिराश्च यस्मिन् सः, (कर्दमविसर्पः) (सुनि. १०.५)

**–रव**–वि., लक्षण॰ हतस्वनः ऊर्ध्वश्वासातुरः (ड. सुउ. ५१.१३)

**हताधिमन्थ**–पु., नेत्ररोग० वायुः सिराणामन्तःस्थितः दृष्टिं प्रतिक्षिपन् हताधिमन्थं जनयेत्, एषा असाध्यः, उपेक्षिताधिमन्थजनितोऽसौ अनेकविध-वेदना युक्तो दृष्टिहरव्रणोपेतश्च जायते। द्र० 'नेत्ररोग.' ( सु. उ. ६.२४ )

**हतेन्द्रिय**–वि. लक्षण० हत : श्चक्षुरादिरादिशक्तिकः ( गम्भीरज्वरा . ) (ड. सुउ. ३९.९३ ।

**हतौजोज्वर**–पु., सान्निपातिकज्वरलक्षण० अस्मिन् पित्तानिलसमुच्छ्रयेणोजोविस्रंसनं भवति। गात्रस्तम्भेन शीतेन च ज्वरितोऽचेतनः निद्रेच्छुस्तन्द्रालुरनियतजाग्रत्स्वप्नो भवति ) तथा च रोमाञ्चितवपुरङ्गसादयुक्तो मन्दसन्तापो मन्दवेदनश्च भवति ज्वरितः। एतादृशं हतौजसं वा ओजोनिरोधजं जानीयात् (सुउ.३९.४३–४५)

**हनु**–पु., मुखसन्धिः ( सुसू. १८.१८ ) चिबुकम् मुखावयवः ( सुशा.५.१९ )
भैषज्य० नखम् (ध. ३.५८; पृ. १०७)

**–कम्प**–पु., लक्षण० हनुचलनम्, विषदुष्टे लक्षण-मेकम् ( चचि. २३,२२९ )

**–ग्रह**–पु., लक्षण० संवृतविवृतमुखत्वोभयलक्षितो हनुस्तम्भः ( चचि. २८.४९; सुनि. १.५३; चसि. २.२२; अहसू. १७.२० )

**–भेद**–पु., लक्षण० हनोः भेदवद् वेदनाविशेषः ( चसू. २०.११ )

**–मूलबन्धन**–न., अस्थि० द्वे हनुमूलबन्धने। द्र० 'अस्थि' ( चशा. ७.६ )

**–मोक्ष**–पु., हनुसंधिविश्लेषः ( सुनि. १६.३५ ) लक्षणम्–वातेन तैस्तैर्भावैः हनुसंधिः विसंहतो भवेत्। स हनुमोक्षो नाम व्याधिरर्दितलक्षणवान् ज्ञेयः (सुनि.१६.३५) तस्य चिकित्सा–वातार्दितोक्तां मस्तिष्कशिरोबस्तिनस्यधूमोपनाहादिकां द्विविधामपि क्रियां कुर्यात् ( ड. सुचि. २२.४१ )

**–संहनन**–न., लक्षण० हनुसंहतिः सरणाभावः (ड. सुचि. ३४.१२) तस्य चिकित्सा–वमनातियोगे क्वचित् हनुसंहननं भवति। हनुसंहनने वातश्लेष्महरं नस्यं स्वेदांश्च विदध्यात् ( सुचि. ३४.१२ )

**–संग्रह**–पु., लक्षण० हनुग्रहः ( चसू. ५.५९ )

**–स्तम्भ**–पु., लक्षण० हनोः स्तम्भः, तत्र चिकित्सा–प्रधमनैस्तीक्ष्णैश्चूर्णैः शिरो विरेचयेत् ( सुक. ५.४२-४३; अहसू. ७.२१ )

**–स्रंस**–पु., रोगः० वातव्याधि; जिह्वातिलेखनात् शुष्कभक्षणात् अभिघातात् हनुमूलस्थः कुपितो वातः हनू स्रंसयित्वा विवृतास्यतां संवृतास्यतां वा करोति। तेन चर्वणभाषणादि कृच्छ्राद्भवति ( असंनि. १५.३२ )

**हनुकास्थि**–न., अस्थि० हन्वस्थि ( सुचि. २२.२८ )

**हन्वस्थि**–न., हनुभागे स्थितमस्थि, एकं हन्वस्थि ( चशा. ७.६ ) द्र० 'अस्थि'

**हपुषा**–स्त्री., वनस्पति० गुणाः–कटुस्तिक्तोष्णा गुरुर्वातकफघ्नी अर्शोगुल्मशूलजन्तुप्लीहोदरविबन्धप्रदा-विड्बन्धकरी ( सुउ. ५२.३८; ध. २.९; पृ. ७० )
हिं.—हौहवेर.
म.—शेरणी.
गु.—शेरणी.
बं.—हबुषा.

**हपुषाद्यघृत**–न., घृत० वातगुल्मे उपयुक्तः ( चचि. ५.७१-७३ )

**हपुषाद्यचूर्ण**–न., योग० उदरघ्नः ( चचि. १३.१३३-३६ )

**हय**–पु., पशु० अश्वः ( चसू.१.९४ र. ५.२१ )

**(हयी)**–स्त्री., वनस्पति० अश्वगन्धा ( रा. ४.४०० पृ. ६२ )

**–गन्धा**–स्त्री., वनस्पति० अश्वगन्धा ( चचि. २८.१७३ ) ( रा. ४.४०१ पृ. ६२ )

**–घ्न**–पु., वनस्पति० करवीरः (रा. १०.१; पृ. १३८)

**–पुच्छिका**–स्त्री., वनस्पति० माषपर्णी ( रा. ३.१७० पृ. ३२ )

**–प्रिया**–स्त्री., वनस्पति० अश्वगन्धा ( रा. ४.४०२; पृ. ६२)

**–भक्षा**–स्त्री., वनस्पति० पिण्डखर्जूरी ( ध. ५.५५; पृ. १७२ )

**–मार**–पु., वनस्पति० करवीरः (ध. ४.१ पृ. १३४ )

**–मारक**–पु., वनस्पति० करवीरः ( चसू. ३.१४ ) असौ पक्वशोथस्य दारणं करोति ( सुसू. ३७.१० )

**हयारि**–वनस्पति० करवीरः ( रा.१०.२पृ.१३४)

**हयाह्व**–पु., वनस्पति० अश्वगन्धा (असं रक्तपित्त चि. ३)

**हयेष्ट**–पु., वनस्पति० यवः ( रा. १६.१२४; पृ. २२३ )

**हर**–पु., शङ्करः ( मानि मधुकोश )

**–तेजस्**–न., खनिज० पारदः ( रा. १३.४२; पृ. २१४ र. ५.१३८;)

**-प्रिय**-पु., वनस्पति० करवीरः
(रा. १०.३; पृ. १३४)
**-वल्लभ**-पु., वनस्पति० धत्तूरः (ध. ४.७; पृ. १३५)
**-वीर्य**-न., खनिज० पारदः (र. २०.३१-३२)
**-सृष्टि**-पु., खनिज० पारदः (र. १.६०)
**हरण**-न., उपक्रम० शोधनम् (चनि. २.१६)
**हराक्ष**-पु., वनस्पति० रुद्राक्षः
(रापरि. ११.१५; पृ. ३७४)
**हरि**-पु., प्राचीनो रसाचार्यः (र. १७.१३६)
वि., वर्ण० हरितम् (सुउ. ४४.१२)
**-केशता**-स्त्री., लक्षण० कपिलकेशता इदं वारुणकाय-लक्षणान्यतमम् (सुशा. ४.८३)
**-क्रान्ता**-स्त्री., वनस्पति० विष्णुक्रान्ता
(रा. ५.१७३; पृ. १५७; र. ११.११७)
**-गन्ध**-न., वनस्पति० हरिचन्दनम्
(रा. १२.१९; पृ. ९५)
**-(गन्धा)**-स्त्री., वनस्पति० अश्वगन्धा
(सुउ. ३५.४)
**-चन्दन**-न., वनस्पति० चन्दनभेदः गुणाः-तिक्तं शीतं पित्तघ्नमाटोपदवथुश्रमशोषाग्निमान्द्यतापहरम्
(रा. १२.१९; पृ. ९५)
हिं.—सफेत चन्दन.
**म.—सफेत चन्दन.**
श्वेतचन्दनम् (चशा. ८.९; सुउ. ४७.५९)
रक्तचन्दनम् (ध. ३.४; पृ. ९४)
वनस्पति० कालीयकम् (ध. ३.८; पृ. ९५)
**-जात**-पु., वनस्पति० खदिरः (र. ७.१२)
**-दर्भ**-पु., वनस्पति० शरः (रा. ८.२०९; पृ. १६१)
**-दल**-न., खनिज० हरितालम् (र. २०.५३)
**-द्रु**-पु., वनस्पति० गुणाः-तिक्तः शीतलः वान्ति-त्वग्दोषनाशनः मङ्गल्यः पित्तहरः
(रापरि. ९.२६; पृ. ३६६)
**-नेत्र**-न., वनस्पति० पुण्डरीकम्
(ध. ४.१४८; पृ. १६४)
**-पर्ण**-न., वनस्पति० मूलकम् (ध. ४.३३.; पृ. १४०)
**-प्रभत्व**-न., वर्ण० कपिलत्वम् (चचि. २६.१३२)
**-प्रिय**-पु., वनस्पति० कदम्बः (ध. ५.१०५; पृ. १९०)
भैषज्य० शङ्खः (रा. १३.२४४; पृ. १३०)
वनस्पति० भृङ्गराजः (रा. ४.२१; पृ. १३६)
बन्धूकः (रापरि. १०.३५; पृ. ३७०)
विष्णुकन्दः (रापरि. ७.४०; पृ. ३५०)
न., वनस्पति० उशीरम् (रा. १२.२५; पृ. ९६)



**(-प्रिया)**-स्त्री., वनस्पति० खर्जूरी
(रा. ११.६५; पृ. १७८)
तुलसी (रा. १०.७८; पृ. १४४)
**-मन्थज**-न., शाक० चणकपत्रम् (सुसू. ४६.२७७)
**-लता**-स्त्री., वनस्पति० गुडूची (र. १४.७१)
**-वल्लभ**-पु., वनस्पति० मुचकुन्दः
(रापरि. १०.२५, पृ. ३७०)
**(-वल्लभा)**-स्त्री., वनस्पति० जपा
(रापरि. १०.३९; पृ. ३७१)
**-वालुक**-न., वनस्पति० एलवालुकम्
(ध. ३.७६; पृ. १११)
**-वास**-पु., वनस्पति० भृङ्गराजः
(रा. ४.२१; पृ. १३६)
**-वृक्ष**-पु., वृक्ष० इन्द्रवृक्षः (सुचि. ११.१०)
**-शंकर**-पु., पारदयोग० पारदाभ्रकभस्मनी तुल्ये आमलकीकाथेन सप्ताहं भावयेत्। असौ माषमात्रो पसेवितः सन् नीलमेहघ्नः (र. १७.१४४)
**हरिण**-पु., जाङ्गलमृग० असौ ताम्रवर्णः
(चक. चसू. २७.४६; अहसू. ६.४३)
**(हरिणी)**-स्त्री., वनस्पति० मञ्जिष्ठा (रा. ६.१५; पृ. १०)
पीतयूथिका (इन्दु. असंउ. ४३; ध. ५.१४९)
**हरित्**-न., वनस्पति० हरिद्रा (रा. ६.७९)
द्र० 'यूथिका'
**-पर्ण**-न., वनस्पति० मूलकम् (रा. ७.५१)
**हरित**-पु., वनस्पति० पलाण्डुः (ध. ४,७१; पृ. १४८)
मुद्गः (ध. ६८१; पृ. २२४)
मन्थानकः (रापरि. ८.५५; पृ. ३६२)
पु., पक्षि० प्रतुदविशेषः (ध. २.१२; पृ. २८६)
द्र० 'प्रतुद'
न., वनस्पति० स्थौणेयकम् (ध. ३.६९; पृ. ११०)
कुरी (रा. १६.१७९; पृ. २३०)
नीलदूर्वा (ध. ४.१४३; पृ. १६३) द्र० 'दूर्वा'
**-नेत्र**-न., लक्षण० लोचनस्य हरितत्वम्
(चसू. २०.१४)
**-पत्रिका**-स्त्री., वनस्पति० पाची
(रापरि. १०.४६; पृ. ३७१)
**-मूत्र**-न., लक्षण० मूत्रस्य हरितत्वम् (चसू. २०.१४)
**-लता**-स्त्री., वनस्पति० पाची
(रापरि. १०.४६; पृ., ३७१)
**-वर्ग**-पु., आहारोपयोगी वर्ग० आर्द्रकजम्बीर-मूलकसुरसायवानीधान्यकगृञ्जनकपलाण्डुलशुने-

त्यादि द्रव्याणि हरितान्येव प्रायः भोजने भोजनस्य प्राक् पश्चाद्वा उपयुज्यन्ते। अतः इमानि द्रव्याणि हरितानीत्युच्यन्ते ( चसू. २७.१७७ )

-**वर्चस्त्व**-न., लक्षण० विशः (विष्ठायाः) हरितत्वम् ( चसू. २०.१४ )

-**शाक**-पु., वनस्पति० शिग्रुः (ध. ४.३९; पृ.१४२)

-**हारिद्रनेत्रत्व**-न., लक्षण० नेत्रस्य हरितहारिद्र-वर्णयुक्तत्वम् (असंसू. २०.१४ )

-**हारिद्रमूत्रत्व**-न., लक्षण० मूत्रस्य हरितहारिद्र-वर्णत्वम् ( असंसू. २०.१४ )

-**हारिद्रशकृत्त्व**-न., लक्षण० शकृतः हरितहारिद्र-वर्णत्वम् ( असंसू. २०.१४ )

**( हरिता )**-स्त्री., वनस्पति० काश्मरी
( रा. ११.७७; पृ. १८० )
हरिद्रा ( ध. १.५४; पृ. १७ )
बलामोटा ( धपरि. ४.१; पृ. १६८ )
दूर्वा (रा. ८.२२६; पृ. १६३)

-**त्व**-न., वर्ण० हरितवर्णत्वम् ( चनि. १.२४ )

**( हरिन् )-मणि**-पु., रत्न० मरकत ( ध. ६.४९ )

-**मुद्ग**-पु., वनस्पति० मुद्गभेदः द्र० 'मुद्ग' ( रा. १६.१३०; ध. ६.८१ )

**( हरिल् )-लोमन्**-वि., लक्षण० कपिलकेशः ( इ. असंउ. २८ )

**हरितक**-पु., कुठेराद्यः शाकवर्गः ( चक्र. चसू. १८.६; सुचि. २३.४; सुसू. १९.१६ ) द्र० 'हरितवर्ग'

**हरितकाख्यवर्ग**-पु., हरितवर्गः ( असंसू. ७ )

**हरिताल**-न., खनिज० पीतवर्णमिदम् ( ध. ७.११९; पृ. ३१५ ) गुणाः—कटु कषायमुष्णं स्निग्धं पुष्पहृत दीपनकरं वातघ्नं कुष्ठविषकण्डूभूतकेशहृत् वर्णकरं च ( ध. ७.११९; पृ. ३१५ ) भेदाः—पत्रतालं पिण्डतालकं चेति ( र. ३.७४ ) तस्य शोधनम्—कूष्माण्डस्वरसे तथा तिलक्षारजले अथवा सुधासहिते जले स्विन्नं हरितालं शुद्धं भवति। तस्य दोलायन्त्रद्वारा स्वेदनं कार्यम् ( र. ३.७८ ) तस्य मारणविधिः—प्रथमं तालकं क्षौद्रवत् घनत्वमापन्ने पलाशमूलजे कषाये त्रीन् वारान् भाव्यम्। अनन्तरं माहिषे मूत्रे मर्दनं कार्यम्। ततः शरावसंपुटे कृत्वा दशसंख्याकै-र्वनोपलः पुटं देयम्। अथ पुटनानन्तरमपि पेषणं कार्यम्। एवं द्वादशवारं पाच्यं; प्रतिपुटं भावनापि देया। ततः शुद्धं सत् योगेषु प्रयोज्यम्। ( र. ३.८२-८३ ) तस्य सत्त्वपातनम्—तालं टङ्कणं च प्रथमतः समानं ग्राह्यम्। कुलित्थक्वाथमहिष्याज्यमधुभिरनन्तरं भावना देया। ततः एतैर्भावितं तालं स्थाल्यां क्षिप्त्वा सच्छिद्रेण शरावेण सम्यक् निरोधं कृत्वा मृदुमध्या-दिक्रमपरिवर्धितं वह्निं ज्वालयेत् ( र. ३.८४-८६ ) तस्य उपयोगः– गोमूत्रसंयुक्तमातपे त्र्यहं शोष-येत्। एतद् बृंहणं विषं, विषस्यादौ प्रशस्तम्। वातज्वरे मस्तुना, पित्तज्वरे क्षीरेण, कफज्वरे गोमूत्रेण, सन्निपातजे ज्वरे त्रिफलाम्भसा प्रयोज्यम् ( असंउ. ४८ ) एतत्सेवनातिमात्रेण हृदि दाहः, रसाग्रहः, आनाहः, अम्लवमनं पीतहरिद्रविट्स्रुतिः मण्डलिसर्पदष्टोक्तविकाराश्च भवन्ति ( असंउ. ४० ) अशुद्धं तालं आयुर्हानिकरं कफमेहकृत् वातमेहकृत् शरीरमानसंतापकृच्च भवति। तथा तत्स्फोटमङ्ग-संकोचं च कुरुते ( र. ३.७९ ) कुष्ठघ्नमेतत् ( चचि. ७,१४४ ) अर्शांसि प्रलेपार्थमुपयुक्तम् ( चचि. १४.५६ ) तस्य चूर्णमुपदंशविसर्पाणां शान्तिकरम् ( सु. १९.४६ ) तच्च स्निग्धं कषाय-कटुकं विषप्रणुच्च ( असंसू. १५.२४ ) व्रणसंशोधन-वर्तिः तैलघृतेषूपयुज्यते ( सुसू. ३७.१३-१५ ) धातुविषभेदो वर्तते ( सुक. २.५ ) मूर्धविरेचने धूमप्रयोगे एकं द्रव्यम् ( चसू. ५.२६ )
हिं.—हरताल.
**म.—हरताळ.**
गु.—हडताल.
बं.—हरिताल.

**हरिताश्म**-न., खनिज० तुत्थकम् ( रा. १३.२०५; पृ. १२४ )

**हरिद्रक**-पु., कृतान्न० पीतभक्षः ( इ. असंउ. ४ )

**हरिद्रा**-स्त्री., वनस्पति० महाकषायवर्गे एकं द्रव्यम् ( चसू. ४.११ ) विषघ्नगणे कुष्ठघ्नगणे एकं द्रव्यम् ( चसू. ४.११ ) कन्दोऽयं वातसंशमनवर्गोक्तः ( सुसू. ३९.७ ) पीतवर्गीय वनस्पतिः ( र. १०.९२ ) व्यञ्जनोपयोगिनी एषा ( र. ११.३७-३९ ) कुष्ठादिप्रदेहे उपयुक्ता ( चसू. ३.३ ) पार्श्वरुजास्वालेपनार्थमुपयुक्ता (चसू. ३.२५) एषा प्रमेहहराणां श्रेष्ठा ( असंसू. १३) पिष्टमेहे उपयुज्यते ( सुचि. ११.९ ) सा त्रिविधा हरिद्रा, कर्पूरहरिद्रा, वनहरिद्रा चेति (सुसू. १४.३५)

त्रिविधहरिद्रागुणाः–तिक्ता कटुरुष्णा वर्णकरी विशोधनी कफवातघ्नी विषकुष्ठव्रणकण्डूमेह-कृमिपीनसारुचिरक्तघ्नी च ( ध. १.५४ )
हिं.—हलदी.
**म.—हळद.**
गु.—हलदर.
बं—हलद.
ता.—मञ्चळ.
पिण्डहरिद्रा ( सुउ. ४४.१७ )

–कृसर–पु., कृतान्न० हरिद्राभिधानः कृसरः ( चक. १.१९ )

–द्वय–न., हरिद्रा दारुहरिद्रा च ( अहसू. १५.३५ )

–मेह–पु., पित्तनिमित्तः प्रमेहभेदः (चसू. १९.४(९)

**हरिद्रादिगण**–पु., द्रव्यगण० हरिद्रादारुहरिद्राकलशी कुटजबीजानि मधुकं चेति, तद्गुणाः–स्तन्यशोधनः आमातीसारशमनः आमसंसृष्टदोषाणां पाचनं कुर्वाणश्च ( सुसू. ३८.२७-२८; अहसू. १५.३५ )

**हरिद्रादिघृत**–न., घृत० पाण्डुरोगे उपयुक्तम् ( चचि. १६.५३ )

**हरिद्रादियोग**–पु., योग० हरिद्रात्रिफलायोगः, पाण्डुरोगशमनः ( सुउ४४.१७ )

**हरिद्री**–स्त्री., वनस्पति० हरिद्रा ( रा. ६.७९; पृ. १८ )

**हरीतकी**–स्त्री., वनस्पति० ( चसू. ४.१८ ) औषधे उपयोज्यम्, अङ्गं फलमेव, तद्भेदाः–विजया रोहिणी पूतनाऽमृताऽभया जीवन्ती चेतकीति हरीतक्याः सप्तजातयः। विन्ध्याद्रौ विजया, हिमालये चेतकी, सिन्धुदेशे पूतना, प्रतिष्ठाने रोहिणी, चम्पायाममृताऽभया च, सुराष्ट्रदेशे जीवन्ती उत्पद्यते। लक्षणानि–विजयाऽलाबुवृत्ता, रोहिणी वृत्ता, पूतना सूक्ष्मास्थिमती, मांसलाऽमृता, पञ्चरेखाऽभया, जीवन्ती स्वर्णवर्णिनी, त्रिरेखा चेतकीति सप्तानां हरीतकीनामाकृतयः। विजया सर्वरोगेषूपयुज्यते। रोहिणी व्रणरोहिणी, पूतना प्रलेपे योज्या, अमृता शोधनाय हिता, अक्षिरोगेऽभया शस्ता, जीवन्ती सर्वरोगहरा, चूर्णार्थे चेतकी शस्ता। सप्तानामपि जातीनां विजया प्रधाना। सा सर्वरोगेषु सुखप्रयोगा सुलभा च। हरीतक्याः पुराणोक्तोत्पत्तिः–इन्द्रस्यामृतं पिबतः यो बिन्दुः भूमौ पतितस्तस्मात् सप्तजातिर्हरीतकी समुत्पन्ना ( भा.प्र. हरीतक्यादिवर्गः ) तद्गुणाः–कषायाऽम्ला कटुका तिक्ता मधुरोष्णा लघुः स्वादुपाका चक्षुष्या लेखनी मेध्या हृद्येन्द्रिय-प्रसादनी वातपित्तकफघ्नी सन्तर्पणकारिणी प्रमेह-कुष्ठव्रणच्छर्दिशोफवातरक्तमूत्रकृच्छ्रनाशिनी च ( ध. १.२०५; पृ. ४९ ) सा वयःस्थापनी पौष्टिक्यायुष्या दीपनी पाचनी बुद्धीन्द्रियबलप्रदा दोषानुलोमनी त्रिदोषविरेचनी च ( चचि. १.२५-३० ) वयःस्थापनगणे एकं द्रव्यम् ( चसू. ४.१८ ) महाकषायवर्गे कुष्ठघ्नगणे एकं द्रव्यम् ( चसू. ४.११ ) हिक्कानिग्रहणगणे एकं द्रव्यम् ( चसू. ४.१४ ) कासहरगणे एकं द्रव्यम् ( चसू. ४.१६ ) ज्वरहरगणे एकं द्रव्यम् ( चसू. ४.१६ ) पथ्यानां श्रेष्ठा ( चसू. २५.४० ) हरीतकी स्वादुतिक्तकषायत्वात्पित्तहृत्, कटुतिक्तकषायत्वात् कफहृदम्लत्वाद्वातहृच्च ( भा. प्र. मिश्रप्रकरण. ६.२३ ) चर्विता हरीतकी अग्निं वर्धयति। पेषिता मलशोधिनी, स्विन्ना संग्राहिणी, भृष्टा त्रिदोषनुच्च। भुक्तस्योपरि योजिता हरीतक्यन्नपानकृतान्दोषान्वातपित्तकफोद्भवांश्च विकारान् आशु हरति। लवणेन युक्ता सा कफं हन्ति। सशर्करा पित्तं हन्ति। घृतेन युक्ता वातजान् रोगान् हन्ति। गुडान्विता च सर्वरोगान् हरति ( भा. प्र. मिश्रप्रकरण. ६.३३ ) अध्वातिखिन्नो बलवर्जितो रूक्षः कृशो लङ्घनकर्शितः पित्ताधिको विमुक्तरक्तस्तथा गर्भवती नारी अभयां न खादेत् ( भा. प्र. मिश्रप्रकरण. ६.३६ )
हिं.—हरड.
**म.—हिरडा.**
गु.—हरडे.
बं.—हरीतकी.
ता.—करक्काय.

–लेह–पु., अवलेह० श्वासकासयोरुपयुक्तः ( चचि. १८.१६३ )

**हरीतक्यादि**–पु., योग० त्रिफला हरीतक्यामलकी बिभीतकश्चेति योगघटकद्रव्याणि ( सुचि. ७.२६ )

**हरीश्वर**–पु., प्राचीनो रसाचार्यः रसरत्नसमुच्चयकर्ता ( र. १.५-९ )

**हरेणु**–पु., धान्य० वर्तुलकलायः शिम्बीधान्येष्वेकम्, स च मधुरः कषायः शीतो लघुः रूक्षणः, कफपित्तयोः शस्तः ( चसू. २७.२८; असउं. १ )
वनस्पति० सतीनः (इ. असंउ. १)
स्त्री., वनस्पति० कलायः ( ध.६.१०३; पृ. २२८ )
धान्य० मसूरिका ( ध. ६.९५; पृ. २२६ )
वनस्पति० रेणुका ( चसू. ३.५ )

**हरेणुक**–पु., वनस्पति० रेणुका ( असंसू. १६.९२ )
**( हरेणुका )**–स्त्री., वनस्पति० रेणुका ( चसू. ५.२० )
**हरेण्वाद्यञ्जन**–न., अञ्जन० हरेण्वादियकृद्रवेण पिष्टमञ्जनं श्लेष्मोपहतदृष्टये नक्तान्धाय हितमित्यर्थः ( सुउ. १७.२३ )
**हरोद्भव**–पु., खनिज० पारदः ( र. ११.८३ )
**हर्ताल**–न., खनिज० तीक्ष्णलोहप्रकारः ( ध. ६.२८; पृ. २११ )
**हर्म्य**–न., प्रासादः ( अहृसू. ३.४८ )
**हर्यक्ष**–पु., पशु० सिंहः, पुत्रे हर्यक्षता सामुद्रिकैः स्तुता ( चक. चशा. ८.९ )
**हर्ष**–न., मनोविकार० आनन्दः ( च. वि. ४.८)
लक्षण० सिणसिणिका ( चनि. ५.१० ) इयं सिणसिणिका वायोरवस्थितत्वेन प्रभावाद्वा क्रियते ( चसू. २०.१२ )
प्रीति० ( चशा. ४.७ ) पादहर्षः
( अहृसू. २७.१६ ) रोमहर्षः ( सुसू. ४२.९ )
कामः ( सुशा. २.४५ )
तुष्टिः ( सुसू. २७.४ )
नेत्ररोग० ( सुउ. १.३७ ) द्र० ' नेत्ररोग '
वनस्पति० मदनः (रा. ८.२३१ पृ. ३९ )
**–योनि**–स्त्री., हर्षकारणम् ( चचि. ३०.१३३ )
**हर्षण**–वि., हर्षकरम् ( चसू. ३०.१५ )
न., लक्षण० वेदना० रोम्णामूर्ध्वभावः, कण्टकितत्वम् ( हे. अहृसू. १२.५ )
अन्तःशीतकरः वेदनाविशेषः ( ड. सुउ. १८.३२)
**हलदीका**–स्त्री., वनस्पति० हरिद्रा (ध. १.५५; पृ.१७ )
**हलाहल**–न., विष० नीलवर्णः ( र. २९.१६ ) द्र० 'विष'
**हलिनी**–स्त्री., वनस्पति० कालिकारी ( ध. ४.९; पृ. १३५ र. २६.४; )
उद्भिज० लाङ्गली (र.१६.१३८)
**हली**–स्त्री., वनस्पति० कलिकारी (रा. ४.१७; पृ. १३६)
**हलीमक**–पु., रोग० पाण्डुरोगभेदः, यदा कुम्भसाह्वः पाण्डुः हरितः पीतः नीलः स्यात्, तदा तं हलीमकं वदन्ति ( सुउ. ४४.१२ ) लक्षणम्–हरितः श्यावपीतकः पाण्डुरोगस्य वर्णः बलोत्साहक्षयस्तन्द्रा मन्दाग्नित्वं मृदुज्वरः स्त्रीष्वहर्षोऽङ्गमर्दः श्वासतृष्णाऽरुचिर्भ्रमः इत्येतानि लक्षणानि वातपित्तजानि सन्ति ( चचि. १६.१३२-३३ ) तस्य चिकित्सा–वातपित्तहरीं क्रियां कुर्यात् ( का. ह्रीहाहलीमकचि )

**हविस्**–न., वनस्पति० शमी ( रा. ८.१५२; पृ. १८८ )
आहारद्रव्य० घृतम् ( ध. ६.१४४ पृ. २३६ )
**हविष्य**–न., हविर्योग्यं द्रव्यम् ( सुशा. २.२५ )
**हव्य**–न., देवदेयम्, हवनीयद्रव्यम् ( इ. असंउ. ४२ )
**हसन**–न., हास्यम् ( सुशा. २.२५ )
**हसन्तिका**–स्त्री., अङ्गारधानिका ( चसू. १४.५४ )
**हसिर**–पु., मूषिक० एतद्विषतः अन्नविद्वेषो जृम्भणं रोमहर्षणं च भवति ( असंउ. ४६ ) द्र० ' मूषिक '
**हस्त**–पु., शारीर० करः, प्रकोष्ठमारभ्याङ्गुल्यन्तो भागः ( चवि. ८.११७ ) पञ्चकर्मेन्द्रियेष्वेकम् ( चशा. ७.७ ) ग्रहणदानादिकर्मसु नियुक्तम् ( कर्मेन्द्रियम् ) (सुशा. १.४) चतुर्विंशत्यङ्गुलो हस्तः (सुसू.३५.१२) कलापः, पर्णस्य पुष्पपटलस्य वा विस्तृतो भागः ( चवि. ६.१७ )
अनुयन्त्र० ( अहृसू. २५.४० )
नक्षत्र० ( असंनि. १ )
**–स्वेद**–पु., स्वेद० पाणिस्वेदः ( कासू., २३.२७ ) द्र० ' स्वेद '
**हस्ताभरण**–पु., सर्प०मण्डलिभेदः ( सुक. ४.३४(२) द्र० ' सर्प '
**हस्तिन्**–पु., पशु० ( चसु. १.९४ ) गुणाः– उष्णं स्वाद्वम्ललवणं विरूक्षणं लेखनं पित्तप्रकोपणं पुष्टिप्रदं दुर्जरं वह्निमान्द्यकरं कफवातघ्नं च ( ध. ६.३७६ पृ. २०५ ) ( सुसू. ४६.९६ )
वनस्पति० हस्तिकर्णपलाशः ( र. २८.५८ )
**( हस्तिनी )**–स्त्री., करिणी ( सुसू. ४५.५८-५९ )
**(हस्ति)–कक्ष**–पु., सविषकीट० कणभभेदः ( सुक. ८.२६-२७)
**–कन्द**–पु., वनस्पति० गुणाः– कटुरुष्णः कफवातघ्नः त्वग्दोषश्रमकुष्ठविषवीसर्पकफवातामयापहश्च ( रापरि. ७.३५; पृ. ३५० )
**–करञ्जक**–पु., वनस्पति० करञ्जभेदः महाकरञ्जः ( रा. ९.१८२; पृ.१९२ )
**–कर्ण**–पु., वनस्पति० हस्तिकन्दः ( रापरि. ७.३५; पृ. ३५० )
पलाशः ( र. २८.६२ ) महापर्णो भूपलाशः ( सुसू. ४५.११५ )
गजकर्णाकारैकपत्रः ( सुसू. ३९.९ )
वनस्पति० एरण्डः ( रक्तैरण्डः ) ( ध. १.२९६; पृ. ६७ )

( कर्णी ) स्त्री., वनस्पति० एरण्डः ( ध. १.२९६; पृ., ६७ )

–कर्णतैल–न., तैल० ( सुसू. ४५.११५ द्र० 'कटुतैल '

–कारावी–स्त्री., वनस्पति० अजमोदा ( रा. ६.१५० पृ. ९० )

–कोशातकी–स्त्री., वनस्पति० कोशातकीभेदः द्र० 'कोशातकी' ( रा. ७.२८४ पृ. ४६ )

–घोषा–स्त्री., वनस्पति० कोशातकीभेदः द्र० 'कोशातकी' ( ध. १९० पृ. ४५ )

–चारिणी–स्त्री., वनस्पति० करञ्जभेदः पूतिकरञ्जः ( ध. ५.१०९; पृ. १९१ )

–दन्त–न., वनस्पति० मूलकम् ( रा. ७.५०; पृ. १४० )

( –दन्ती )–स्त्री., वनस्पति० मृगाक्षी ( ध. १.२५२; पृ. ५९ )
नागदन्ती ( चसू. १.७७ )

–दन्तक–न., वनस्पति० मूलकम् ( ध. ४.३३; पृ. १४० )

–दन्तफला–स्त्री., वनस्पति० उर्वारुकम् ( ध. १.१७६; पृ. ४१ )

–पत्र–पु., वनस्पति० हस्तिकन्दः ( रापरि. ७.३५; पृ. ३५० )

–पर्णिनी–स्त्री., वनस्पति० त्रपुसम् ( ध. १.१७५; पृ. ४१ )
पर्णी–स्त्री., वनस्पति० कर्कटी (रा. ७.२५२ पृ.४१)
मोरटः ( चसू. १.८२-८४ )

–पिप्पली–स्त्री., वनस्पति० गजपिप्पली (चशा. ८.३४; सुसू. ३८.२२-२३)

–मगधा–स्त्री., वनस्पति० गजपिप्पली ( ध. २.७८; पृ. ८५ )

–मद–पु., भैषज्य० गजमदः, तद्गुणाः–तिक्तः स्निग्धः केश्यः अपस्मारनाशनः विषकुष्ठकंडूव्रणादिनुच्च ( रापरि. ६.२०; पृ. ३४६ )

–मयूरिका–स्त्री., वनस्पति० अजमोदा ( ध. २.९८; पृ. ८९ )

–मशक–पु., कीट० मशकभेदः तेन दष्टस्य कण्डूर्दंशः शोफश्च, नखावकृष्टेऽत्यर्थं पिडका दाहपाका भवन्ति ( सुक. ८.३६-३७ )

–मूत्र–न., गजस्य मूत्रम् ( चसू. १.९४ ) तद्गुणाः–तिक्तं लवणं भेदि वातघ्नं पित्तकोपनं तीक्ष्णं क्षारोपयोगि किलासघ्नं च ( सुसू. ४५.२२६ )

–मेदस्–न., गजमेदः, शाखादमेदसामहिततमम् ( चसू. २५.३९ )

–मेह–पु., रोग० प्रमेहभेदः वातजोऽयम्, सलसीकं मधुरमवेगं लसीकयैव च विबद्धमनुबद्धमजस्रं मत्तहस्तीव च मेहति
( असंनि. १०.२८; चसू. १९.४-(९) ) द्र० 'प्रमेह'

–रोध्रक–पु., वनस्पति० लोध्रः ( रा. ६.२३८; पृ. १२९ )

–रोहणक–पु., वनस्पति० करञ्जभेदः, पूतिकरञ्जः ( ध. ५.१०९; पृ. १९१ )

–विष–न., खनिज० कङ्कुष्ठम् ( र. २९.९०-९२ )

–विषाणिका–स्त्री., वनस्पति० कदली ( ध. ४.७५; पृ. १४८ )

–शुण्डिका–स्त्री., गजशुंडा हस्तिहस्तः (सुचि. ३२.७)

–शुण्डी–स्त्री., वनस्पति० गुणाः– कटूष्णा सन्निपातज्वरापहा च ( रापरि. ५.२०; पृ. ३४१ )

–श्यामाक–पु., तृणधान्य० श्यामाकभेदः कषायमधुरलघुवातलशीतसंग्राह्यादिगुणः ( चसू. २७.१७; ड. सुसू. ४६.२१ )

–हस्त–पु., हस्तिशुण्डिका ( सुचि. ३२.७ )

हस्तिनी–स्त्री., पशु० करिणी ( सुसू. ४६.५८-५९ )

–क्षीर–न., हस्तिन्याः क्षीरम्, गुणाः– रसेन मधुरं, कषायानुरसं शीतं गुरु स्निग्धं स्थैर्यकरं चक्षुष्यं वृष्यं बल्यं च(चसू. २७.२२३; सुसू. ४५.५८-५९)

–घृत–न., घृत० हस्तिन्याः घृतम्, गुणाः–कषायं तिक्तं बद्धविण्मूत्रम् अग्निकरं लघु कफकुष्ठविषक्रिमिहरम् ( सुसू. ४५.१०४ )

–दधि–न., करिणीदधिगुणाः–कषायानुरसम् उष्णं पाके लघु, बलासघ्नं पक्तिनाशनं वर्चोविवर्धनं च ( सुसू. ४५.७४; ध. ६.१९७; पृ. २४५ )

हस्त्यस्थिक्षार–पु., हस्त्यस्थ्नः क्षारः, हस्तिमेहे पानार्थमुपयुज्यते ( सुचि. ११.९ )

हस्त्यालुक–न., कन्द० महाकाष्ठालुकम् (सुसू. ४६.२९८)

हांस–वि., हंसस्येदम् ( चसू. १३.८३ )

हाटक–न., खनिज० सुवर्णम् ( र. २६.५१ )
मान० कर्षमानम् ( र. २०.९० )

हानव्यदन्त–पु., दन्त० हनुमूले स्थितः, राजदन्ततः षष्ठः सप्तमोऽ अष्टमश्च हानव्यः ( कासू. २०.४ )

हायन–पु., शूकधान्य० ( चसू. २७.१२ ) द्र० 'शालि'

**हायनक**-पु., धान्य० शालिभेदः ( चनि. ४.५ )
**हार**-पु., मुक्तावलिः ( चवि. ६.१७; अहसू. १३.५-१७ )
**-यष्टि**-स्त्री., मौक्तिकमाला ( सुउ. ४७.६४ )
**-हूरा**- स्त्री., वनपति० उत्तरापथिकाद्राक्षा ( रा. ११.७७; पृ. १८० )
**हारिद्र**-पु., शाक० सर्पच्छत्रानुकारी पीताभासः ( अरु. अहसू. ७.४१ )
वनस्पति० पलाण्डुः ( रा. ७.१०१; पृ. १४८ )
**-त्व**-न., वर्ण० पीतत्वम् ( चसू. २०.१४ )
**-नेत्र**-न., लक्षण० नेत्रस्य पीतवर्णत्वम् ( चसू. २०.१४ )
**-मूत्र**-न., लक्षण० मूत्रस्य पीतवर्णत्वम् ( चसू. २०.१४ )
**-मेह**-पु., रोग० प्रमेहभेदः। तल्लक्षणम्-पित्तजोऽयम् कटुकं सदाहं हरिद्राभं मेहति। हारिद्रमेही ( असंनि. १०.२३ )
**-वर्चस्त्व**-न., लक्षण० पुरीषस्य पीतत्वम् हारिद्रपुरीषता ( चसू. २०.१४ )
**-वह्नि**-पु., दारुहरिद्राकाष्ठाग्निः ( अहसू. ७.४४ )
**-शूलक**-न., दारुहरिद्राकाष्ठकृतं शूलम् ( मांसभर्जन-पचनसाधनम् ) ( अहसू. ७.४४ )
**-सीसक**-पु., हरिद्राकाष्ठकृतं भटित्रकरणकाष्ठम् ( चसू. २६.८४ )
**हारिद्रक**-पु., पक्षि० हरिताल (चसू. २६.८४)॥ सन्निपातज्वर० तल्लक्षणानि-देहनखनेत्रकरांघ्रिताप-हारिद्रत्वम्। तथा ष्ठीवनं कासश्च; असौ ज्वरः असाध्यः ( मा. ज्वर. २४ )
विष० पीतवर्णमिदं विषम् ( र. २९.१८ )
**-मांस**-न., हरिताल इति ख्यातस्य पक्षिणः मांसम् ( चसू. २६.८४ )
**हारीत**-पु., पुनर्वसोरात्रेयस्य शिष्यः, असौ तन्त्रकर्ता ( चसू. १.३१ )
पक्षि० हरितालः ( सुसू. ४६.६७ )
**हार्य**-वि., वनस्पति० विभीतकः ( ध. १.२१२; पृ. ५० )
**हाला**-स्त्री., आसुत० मद्यम् ( ध. ६.२५६; पृ. २५१ )
**हालाहल**-न., विषम् ( र. २.१२९ ) कन्दविष० अनेन श्यावत्वं चिरेणोच्छ्वासश्च भवति ( असंउ. ४० ) द्र०
**हाव**-पु., स्त्रीणां शृङ्गारचेष्टा ( चक्र. चचि. २.१(९) )
**हास**-पु., वनस्पति० शालिः ( ध. ६.७०; पृ. २१९ )
**हास्तिक**-वि., हस्तिन इदम् ( चसू. १.१०२-१०३ )
**हास्यफल**-पु., वनस्पति० विकण्टकः ( रापरि. ११.२०; पृ. ३७४ )
**हाहा**-(अव्य.) हाहाकारः ( असंशा. १२.१२ )
**हिंसा**-स्त्री., वधः ( सुउ. ६०.५ )
**-विहार**-पु., वधक्रीडनम् ( ड. सुउ. ६०.२६ )
**हिंसार्थिन्**-वि., मारात्मकः जिघांसुः ( चचि. ९.२२ )
**हिंस्रा**-स्त्री., वनस्पति० जटामांसी ( चचि. ३०.६२; सुउ. ५१.१८ )
**हिंस्रादिघृत**-न., घृत० श्वासकासारोचकादिव्याधि-समूहहन्तृ ( सुउ. ५१.१८-२० )
**हिंस्रादितैल**-न., सिद्धतैल० तत् वातव्रणनाडीषु संशोधनपूरणरोपणार्थं चोपयुज्यते ( सुचि. १७.१९-२० )
**हिक्का**-स्त्री., रोग० हिगिति कृत्वा कायति शब्दायते इति हिक्का इति शाब्दिकाः ( ड. सुउ. ५०.६ ) तत्स्वरूपम्—सस्वनो वायुः यकृत्प्लीहांत्राणि आक्षिपन् इव मुखादुदेति स घोषवान् वायुरसून् हिनस्ति, ततः हिक्केति नाम ( सुउ. ५०.६ ) संप्राप्तिः-उरःस्थो मारुतः प्राणवाहीनि स्रोतांस्याविश्य कुप्यति, कफमुध्दूय हिक्कां करोति ( चचि. १७.१७ ) भेदाः—अन्नजा, यमला, क्षुद्रा, गम्भीरा, महतीति पञ्च हिक्काः ( सुउ. ५०.७ ) पञ्चसु हिक्कास्वन्नजा क्षुद्रजेति हिक्काद्वयं साध्यम्, महाहिक्का गम्भीरा चासाध्ये। सर्वलक्षणसमन्विता यमला असाध्या। तथैव चिरकालसंचितामस्य स्थविरस्य व्यवायिनः व्याधिभिः क्षीणदेहस्य भक्तच्छेदक्षतस्य च हिक्काः असाध्या भवन्ति। हिक्का मृत्युकाले कृतालापा शीघ्रकारिणी नाशाय भवति ( अहनि. ४.३०-३१ ) सामान्यपूर्वरूपाणि कण्ठोरसोर्गुरुत्वं वदनस्य कषायता कुक्षेराटोपश्च ( चचि. १७.१९ ) अरतिः ( सुउ. ५०.८ ) सामान्यचिकित्सा-प्राणायामः उद्वेजनं त्रासनं सूचितोदैः संभ्रम इत्युपायाः हिक्कायां शस्ता ( सुउ. ५०.१६ )
**-कर**-वि., हिक्कां करोतीति, हिक्काजनकः ( रोगः ) ( चइ. १०.६ )
**-नाशक**-पु., पारदादियोग० पारदगन्धकधान्याभ्रक-हरितालमाक्षिका एकैकभागवृध्द्या वचाकुष्ठहरि-द्रायवक्षारचित्रकपाठालाङ्गलीत्रिकटुसैन्धवविभीतक-वत्सनाभाश्च एकैकभागा भृङ्गराजरसेन मर्दयितव्याः अयं हिक्कावैस्वर्यकासान्नाशयति ( र. १३.७१ /

-निग्रहण-वि., हिक्कानाशकम्. तानि च द्रव्याणि शटीपुष्करमूलबदरबीजकण्टकारिकाबृहतीवृक्षरुहा-भयापिप्पलीदुरालभाकुलीरशृङ्ग्य इति दशेमानि हिक्कानिग्रहाणि भवन्ति ( चसू. ४.१४ )

-प्रतिषेध-पु., अध्यायसंज्ञा० ( सुउ. ५०.१ )

-श्वासचिकित्सित-न., अध्यायसंज्ञा० ( चचि. १७.१ )

-स्थान-न., कण्ठस्तनान्तरम् ( सुउ. ५०.१९ )

हिक्किका-स्त्री., हिक्का ( र. २.१७५ )

हिङ्गु-न., निर्यास० संज्ञास्थापनगणे, श्वासहरगणे, प्रोक्तमेकं द्रव्यम् ( चसू. ४.१६-१८ ) गुणाः- कटु उष्णं हृद्यं सरं चक्षुष्यं वातकफघ्नं बन्धशूल-कृमिगुल्महृद्रोगोदराध्माननाशकं च ( ध. २.३६; पृ. ७७ ) भेदिनीयवाग्वामुपयुक्तम् ( चसू. २.२९ ) शिरोविरेचनकरम् ( सुसू. ३९.६ )

हिं.—हींग.

म.—हिंग.

गु.—वघारणी.

बं.—हिंगु.

संज्ञास्थापनगणे एकं द्रव्यम् ( चसू. ४.१८ ) श्वासहरगणे एकं द्रव्यम् ( चसू. ४.१६ ) शिरोविरेचनार्थमुपयुज्यते ( सुसू. ३९.६ )

-जटा-स्त्री., वनस्पति० हिङ्गुपत्री ( इन्दु. असंउ. ९ )

-नाडिका-स्त्री., निर्यास० हिङ्गु ( रा. ६.६४; पृ. ७८ )

-निर्यास-पु., भैषज्य० छेदनीयदीपनीयानुलोमिकवातकफप्रशमनानां श्रेष्ठः ( चसू. २५.४० ) वनस्पति० किराततिक्तः ( ध. १.३४; पृ. १४ ) निम्बः ( रा. ९.४४; पृ. १३ )

-पत्र-पु., वनस्पति० इङ्गुदी ( रापरि. ८.१७; पृ. ३५८ )

( -पत्री )-स्त्री., वनस्पति० गुणाः-कटुस्तिक्ता उष्णा तीक्ष्णा हृद्यारुच्यापथ्यादीपनपाचनकरी वातकफघ्नी कृमिप्लीहाविबन्धार्शोगुल्मबस्तिशूलहृद्रोगामहरा च ( ध. २.३८; पृ. ७७ )

-पर्णी-स्त्री., वनस्पति० वंशपत्रिका ( चक्र. ) उन्मादचिकित्सायामुपयुक्तमेकं द्रव्यम् ( चचि. ९.५७ )

-शिवाटिका-स्त्री., वनस्पति० वंशपत्रिका ( च. चचि. १०, ३७ )

हिङ्गुपत्री ( इ. असंउ. १० )

हिङ्गुल-न., खनिज० हिङ्गुलो द्विविधः, एकः शुकतुण्डः अपरो हंसपाकश्च । शुकतुण्डः पीतो, हंसपाकः श्वेतरेखः ( र. ३.१५५ ) हिङ्गुलाहृतसूतो गन्धजारितपारदतुल्यगुणो भवति ( र. ३.१५८ ) शृङ्गवेररसेन लकुचस्य स्वरसेन वा सप्तवारं भावयित्वा शोषितो हिङ्गुलः शुद्धो भवति ( र. ३.१५९ ) मेष्याः क्षीरेणाम्लवर्गैश्च सुभावितो हिङ्गुलः साक्षात् वरकुङ्कुमप्रभः सम्पद्यते ( र. ३.१६० ) हिङ्गुलो जलसहिते पातनायन्त्रे पातितः स्यात्तर्हि तत्सत्त्वं सूतसङ्काशं जायते ( र. ३.१६१ ) गुणाः- मधुरो तिक्तः कटुरुष्णः दीपनरसायनकरः सर्वदोषघ्नः सर्वरोगहरः पुष्टिकरो वृष्यश्च ( र. ३.१५७ )

हिङ्गुलाकृष्ट-वि., हिङ्गुलादार्द्रकस्वरसमर्दनानन्तरं विद्याधराख्ययन्त्रादाकृष्टः ( पारदः ) ( र. ८.३७ )

हिङ्गुलाकृष्टिविद्याधरयन्त्र-न., यन्त्र० अन्तस्तले निहितशुष्कहिङ्गुलाया विशालमुखाया स्थालिकाया उपरि उत्तानामेव लघुस्थालीं स्थापयित्वा संधिलेपादिना रुध्द्वा ऊर्ध्वस्थाल्यां किञ्चिच्छीतजलं पुनः पुनर्देयात् । अधःचुल्यां वह्निं ज्वालयेत् प्रहरत्रयपर्यन्तम् । एतद्यन्त्रं पारदस्य हिङ्गुलाद्वियुज्योर्ध्वपात्रतले आकृष्टिकरं स्यात् ( र. ९.५६-५७ )

हिङ्गुलूक-पु., खनिज० हिङ्गुलः (र. १३.९-१२)

हिङ्गूल--न., खनिज० हिङ्गुलः ( ध. ६.४० )

हिङ्गुलेश्वर-पु., वृद्धज्वराङ्कुशः ( र. १२.४२ )

हिङ्ग्वादिचूर्ण-न., हिङ्गु त्रिकटुकपाठाहपुषाऽभयाशठीतिन्तिडीकाऽम्लवेतसाऽजमोदाऽजगन्धादाडिमपुष्करचित्रकादीनां चूर्णमेतत् । पार्श्वहृद्बस्तिशूलवातकफात्मकगुल्माऽनाहमूत्रकृच्छ्रगुदयोनिजशूलग्रहण्यर्शोविकारपाण्ड्वामयाऽरुचिहिक्काकासश्वासगलग्रहनाशनम् ( चचि. ५.७९-८३ )

हिज्जुल-पु., वनस्पति निचुलः (रापरि. ८.७०; पृ. ३६३)

हित-पु., वनस्पति० यावनालः ( रा. १६.१७१; पृ. २२९ )

न., भेषजम् औषधम् ( चचि. १.३(१); ( चसू. २५.३३ )

-चर्या-स्त्री., हितकरं वर्तनम् ( अहसू. ११.४५ )

-विहार-पु., हितकरो विहारः ( अहसू. २७.५१ )

हितल-वनस्पति० यावनालः ( रा. १६.१७१; पृ. २२९ )

हिताहार-पु., योग्याहारः ( अहसू. २७.५१ ) यदाऽ-

हारजातं समश्चैव शरीरधातून् प्रकृतौ स्थापयति विषमांश्च समीकरोति तत् हितमाहारजातम् ( चसू. २५.२३ )

**हिताहितीय**–वि., अध्यायसंज्ञा० हिताहितद्रव्याण्यधिकृत्य कृतः ( सुसू. २०.१ )

**हिध्मा**–स्त्री., रोग० हिक्का ( असंनि. ४.२९ ) ( अहृनि. ४.२९-३१ )

**हिन्ताल**–पु., वनस्पति० तालः ( रा. ९.९७; चक. १.८; पृ. १८२ )

**हिम**–वि., गुण० शीतः, तस्य स्तम्भने शक्तिः ( अहृसू. १.१८ )

आगन्तुशोथोत्पत्तेरेकं कारणम् ( चसू. १८.४ )

निर्यास० कर्पूरः ( ध. ३.३१; अहृसू. ३.१; पृ. १०१ )

न., वनस्पति० पद्मकम् ( ध. ३.१४९; पृ. ११३ )

रत्न० मौक्तिकम् ( रा. १३.६७; पृ. २१८ )

खनिज० वङ्गम् ( रा. १३.१४; पृ. २०८ )

वनस्पति० चन्दनम् ( रा. १२.१०; सुउ. ४२.७१; पृ. ९४ )

वनस्पति० वालकम् ( र. १७.४३-४५ )

वि., शीतवीर्यम् ( र. ३.१०९ )

**( हिमा )**–स्त्री., वनस्पति० द्राक्षाभेदः द्र० 'द्राक्षा' ( रा. ११.७७; पृ. १८० )

मेदा ( रा. ५.१६०; पृ. ३१ )

रेणुका ( रा. ६.९९; पृ. १०६ )

मुस्ता ( रा. ६.५९; पृ. १५ )

चणिका ( रापरि. ८.६५; पृ. २६२ )

सूक्ष्मैला ( रा. ६.६८; पृ. ७८ )

**–कर**–पु., निर्यास० कर्पूरः (रा. १२.५६; पृ. १०१)

**–जलपान**–न., शीतजलपानं, तच्च तृष्णासु शर्मकरं भवति ( चचि. २२.२२ ) द्र० 'जल'

**–जा**–स्त्री., वनस्पति० काञ्चनक्षीरी ( रा. ५.३६३; पृ. ५७ )

**–त्रय**–न, चन्दनत्रयम् मलयजरक्तचन्दन—दारुहरिद्राभेदेन त्रिविधम् ( अरु. अहृसू. १५.१९ )

**–दुग्धा**–स्त्री., वनस्पति० काञ्चनक्षीरी ( रा. ५.३६२; पृ. ५७ )

**–द्रुम**–पु., वनस्पति० महानिम्बः ( रा. ९.४६; पृ. १३)

**–भूभृत्**–पु., हिमालयपर्वतः ( र. २.११२-१३ )

असौ औषधिभूमीनां श्रेष्ठः ( चसू. २५.४०; सुचि. २९.२७ )

**–वत्**–पु., हिमालयपर्वतः ( सुचि. २९.२७ )

**–वालुक**–पु., निर्यास० कर्पूरः (ध. ३.३१; पृ. १०१)

**–शर्करा**–स्त्री., आहारद्रव्य० शर्कराभेदः मधुरातिक्तोष्णाऽतिपिच्छिलासारिकारुच्यावातघ्नीदाहपित्तास्रदायिनी च (रा. १४.१६३; पृ. ९१)

**–संक्षय**–पु., ऋतु० वसन्तर्तुः ( सुचि. ३०.३१ ) )

**–संज्ञितकषाय**–पु., कषाय० शीतकषायः ( सुउ. ४९.२४ )

**–साह्वय**–पु., ऋतु० हेमन्तः ( सुसू. ६.२३ )

**–स्पर्श**–वि., शीतस्पर्शः ( अहृसू. १०.१० )

**हिमांशु**–पु., पारदयोग० पारदं कर्षमात्रं रक्तागस्त्यपुष्पस्वरसेन सप्तवारं मर्दयेत् । तथा च श्वेतदूर्वारसेन ततश्च टङ्कणं निष्कद्वयं खदिरसारं कर्पूरं च प्रत्येकं कर्षं तत्र प्रक्षिप्य चन्दनक्वाथेन मर्दयेत् । कलायमात्रा वटकाः कुर्यात् । मात्रा–एकैको वटकः । समयः–प्रातर्मध्याह्ने रात्रौ च । असौ मेहमुखशोषसोमरोगपिटिकादाहतृष्णानाशकः ( र. १७.१२२-२७ )

**हिमाद्रिजा**–स्त्री., वनस्पति० काञ्चनक्षीरी ( रा. ५.३६३; पृ. ५७ )

**हिमागम**–पु., ऋतु० हेमन्तर्तुः शीतकालः ( चसि. ६.४; अहृसू. १३.३४ )

**हिमानद्ध**–वि., हिमसंबद्धः, ( डल्हणः ) ( सुसू. ६.२२)

**हिमानी**–स्त्री., आहारद्रव्य० शर्कराभेदः हिमशर्करा ( रा. १४.१६३; पृ. ९१ )

**हिमालया**–स्त्री., वनस्पति० भूधात्री ( रा. ५.१४५; पृ.११३ )

**हिमाश्रया**–स्त्री., वनस्पति० हेमा ( रापरि. ३.१३; पृ. ३३१ )

**हिमोत्पन्ना**–स्त्री., आहारद्रव्य० शर्कराभेदः यावनाली हिमशर्करा ( रा. १४.१६३; पृ. ९१ )

**हिमोद्भवा**–स्त्री., वनस्पति० काञ्चनक्षीरी ( रा. ५.३६३; पृ. ५७ )

सठी ( रा. ६.८७; पृ. १९ )

**हियावली**–स्त्री., वनस्पति० ह्यावली इति दक्षिणे ( हजारी ) ( र. १७.११५ )

**हिरण्य**–न., खनिज० अघटितं सुवर्णम्, घटितमिति चक्रः ( चवि. ८.९ )

खनिज० सुवर्णम् ( ध. ६.१; पृ. २०५ )

–जकिट्ट–न., हिरण्याज्जातं, यथा सुवर्णकिट्टं, इदं इलीमकव्याधावुपयुज्यते ( असंचि. १८ )
–पुष्पी–स्त्री., वनस्पति० कलिकारी, स्वर्णकेतकी ( ड. सुशा. १०.११ )
हिरण्याक्ष–पु., ऋषि० यज्ञःपुरुषविषये विवदमान एकः ( चसू. २५.१४ )
हिलमोचिका–स्त्री., वनस्पति० वास्तुकम् ( रापरि. ७.६२; पृ. ३५२ )
हिलिमिलि–पु., मन्त्रे, ऱ्हां ऱ्हीम् इति उच्चारणम् ( चचि. २३.९४ )
हीन–वि., अल्पम् ( अहृसू. १.१९ )
–कर्ण–पु., पञ्चदशकर्णबन्धेष्वेकः, अनधिष्ठानपालिः पर्यन्तयोश्च क्षीणमांसः ( सुसू. १६.१० )
–दग्ध–वि., हीनं यथा तथा दग्धः अग्निना क्षारेण वा, यानि हीनातिसम्यग्दग्धलक्षणानि तेष्वन्यतमानि तत्र हीनदग्धलक्षणानि तोदः कण्डूः जाड्यं व्याधिवृद्धिश्च ( सुसू. ११.२६ )
–दन्तता–स्त्री., अल्पदन्तत्वम् दन्तानां सङ्ख्याऽल्पत्वम् ( कासू. २०.६ )
–दृष्टिक–वि., अदूरदर्शी ( चइ. ३.६ )
–योग–पु., अल्पयोगः ( अहृसू. १२.३६ )
–योनि–स्त्री., स्वल्पा योनिः यस्याः सा ( बाला ) ( काखि. ९.१९ )
–रूप–वि., दुर्बलः, क्षीणाकृतिः ( सुशा. ६.२६ )
–विशोधित–वि., हीनशुद्धिशोधितः ( सुचि. ३९.१३-१४ )
–वीर्य–वि., अल्पवीर्यम् ( असंसू. ७.२८ )
–वेग–वि., अल्पवेगः ( चक. १.१४ )
–सत्त्व–वि., अल्पं मनोबलं यस्येति। तल्लक्षणानि– हीनसत्त्वास्तु नात्मना, नापि परैः सत्त्वबलं प्रति शक्यन्ते उपस्तम्भयितुम् महाशरीरा अपि ते स्वल्पानामपि वेदनानामसहा दृश्यन्ते ( चवि. ८.११९ )
–स्वरता–स्त्री., लक्षण० शब्दहस्वत्वम् (सुसू. ३२.४)
हीनोत्तरौष्ठ–वि., लक्षण० स्वभावौष्ठात् अल्पतरौष्ठः ( सुउ. ४७.२२ )
हीर–न., खनिज० हीरकम् ( रा. १३.५८; पृ. २१७ )
( हीरा )–स्त्री., वनस्पति० काश्मरी ( ध. १.११७; पृ. २८ )
हीरक–न., रत्न० गुणाः– रसषट्कोपेतम्, रसायनदेहदार्ढ्यायुष्करं सर्वरोगनाशनम् ( ध. ६.५५; आ. को. सं. १२२ पृ. २१६ ) खनिज० वज्रम् ( र. ४.२-३ ) तस्य द्रुतिविधानम्–वज्रवल्लीजटायाः पिण्डमध्ये हीरकं स्थापयित्वा निरोधयेत्। ततः पोटल्यादिकं कृत्वा काञ्जिकादिपूरितपात्रे दोलाविधिना सप्तदिनपर्यन्तं स्वेदनं कार्यम्। एतादृशविधिना सप्ताहानन्तरं हीरकं द्रुतिं गच्छेत्।
हिं.— हिरा.
म.— हिरा.
गु.— हिरो.
बं.— हिरे.
फा.— इल्माशः
हुडम्ब–पु., वनस्पति० गोधूमः ( ध. ६.९७.पृ.२२७ )
हुण्डन–न., शिरःप्रभृतीनामन्तःप्रवेशः यथा शिरोनासाक्षिप्रभृतीनाम् ( चक. चचि. २८.२२ )
हुत–न., हविर्द्रव्यम् ( चचि. ३. ३१२ )
वि., अग्नौ आहुतम् ( चचि. ३.३१२ )
–भक्ष–पु., हुतं भक्षयतीति हुताशनः, अग्निः ( चचि. ३. ३१२ )
–भुज्–पु., वनस्पति० चित्रकः सर्वे अग्निपर्यायाः चित्रकाभिधायका इति संकेतोऽत्रानुसन्धेयः ( ड. सुउ. ५२.३० )
वह्निः ( सुक. १.२९ )
–वह–पु., अग्निः ( सुचि. ८.२४ )
हुताश–पु., वनस्पति० चित्रकः ( सुउ. ४१.४७ )
हुताशन–पु., जठरोऽग्निः ( ड. सुउ. ३९.१७ )
वनस्पति० चित्रकः ( सुउ. ६१.३२ )
हुताशमन्थ–पु., वनस्पति० अग्निमन्थः ( र. १२.७४.)
हुताशवेश–पु., ऋषि० अग्निवेशः ( चचि. ७.१८० )
हृत्–न., शारीर० हृदयम् ( चसू. १७.३; सुसू. ४६.५११ )
–कम्प–पु., लक्षण० हृदयस्य कम्पनवत् पीडा ( सुसू. १५.९ )
–पीडा–स्त्री., लक्षण० हृत्पीडनम् ( सुसू. १५.९ )
–प्रदोष–पु., हृद्रोगः ( चचि. २६.८९ )
–प्राप्ति–स्त्री., हृद्रोगः निरूहबस्तेरसम्यक्योगसंभवा व्यापत् वर्तते ( चसि. ७.५ )
–संशुद्धि–स्त्री., लक्षण० हृदयगतदोषशोधनम् ( चसू. ५.३७ )
( –स्तम्भ ) पु., लक्षण० हृदयस्य स्तब्धत्वमिवानुभूतिः ( चचि. २६.७९ )

(हृच्)-शुद्धी-स्त्री., लक्षण० हृदयगौरवाभावः ( चसू. १६.५ )

-छून्यभाव-पु., लक्षण० हृदि शून्यत्वमिवाभासः ( चचि. २६.७९ )

-छूल-पु., रोग० हृदयशूलः, कफपित्तावरुद्धो वायुः रसमूर्च्छितो, भूत्वा-हृदिस्थः सन् शूलं कुरुते । अयं शूलः परमुच्छ्वासरोधकः । अस्य व्याधेः हृच्छूल इति नाम, स च रसमारुतसंभवः ( सुउ. ४२.१३१-१३२ )

-छोष-पु., लक्षण० हृदयशुष्कता ( चचि. २६.७९ )

(हृद्)-गद-पु., रोग० हृद्रोगः ( असंनि. ५.३७; अहृसू. ४.२ )

-ग्रह-पु., लक्षण० हृदयस्य ग्रहः, हृदयस्य बन्धनवद् वेदनाविशेषः इति हाराणचन्द्रः ( चनि. ७.६ )

-घट्टन-न., लक्षण० हृदयस्य घट्टनमिव वेदना ( चसू. १७.१०१ )

-दाह-पु., लक्षण० हृदि दाहः ( चसू. १७.३३ )

-द्रव-पु., लक्षण० हृन्मार्दवम् द्रवति इति हृदयं धुगधगिति करोति ( चसू. २०.११; १७.६४ ) हृदि कम्पः; अनुकम्पयेव पीडा हृदयस्य ( अहृसू. ११.१६ )

-धात्री-स्त्री., वनस्पति० हिमावली ( रापरि. ६.१८)

-धूमायन-न., ( परिव० ) लक्षण० हृदयस्य धूमापनम् धूमोद्गमनवत्पीडाविशेषः(असंसू.२७.२०)

-भेद-पु., लक्षण० हृदयस्य भेदनवत् पीडा ( चचि. २६.७९ )

-रुज्-स्त्री., लक्षण० हृदयस्य रुजा, हृदयस्य वेदना (अहृसू. १५.४५ )

-रोग-पु., रोग० अस्मिन् कुपिता दोषाः रसं दूषयित्वा हृदयं गत्वा हृद्रोगं कुर्वन्ति ( सुउ. ४३.४ ) चतुर्विधो हृद्रोगः, दोषैस्त्रिभिः, कृमिभिश्च चतुर्थ इति । सुश्रुतमूलवचने हृद्रोगाश्चत्वार एव। डल्हणस्तु कृमिज एव सान्निपातिको हृद्रोग इति वर्णयति । चरके तु पञ्च हृद्रोगाः पृथक्दोषैस्त्रयः संनिपातेन चतुर्थः पञ्चमस्तु कृमिभिरिति । माधवे नाम माधवनिदाने चरकस्यैव मतं स्वीकृतम् (सुउ. ४३.५) वातजो हृद्रोगः-तत्र हृदयस्यायमनं, तोदः, निर्मथनं, दारुणं स्फोट पाटनमित्याद्याकारा वेदना भवन्ति ( सुउ. ४३.६ ) पित्तजो हृद्रोगः-तत्र ऊषा तृषा दाहश्चोषो हृदयक्लमो धूमायनं मूर्च्छा स्वेदः मुखशोष इति पित्तहृद्रोग-लिङ्गानि ( सुउ. ४३.७ ) कफजहृद्रोगे गौरवं कफसंस्रावोऽरुचिरस्तिमितमार्दवमास्यमाधुर्यमिति लक्षणानि ( सुउ. ४३.८ ) कृमिजो हृद्रोगः-तत्र उत्क्लेशः ष्ठीवनं तोदः शूलो हृल्लासस्तमोऽरुचिः श्यावनेत्रता शोष इत्येतानि लिङ्गानि ( सुउ. ४३.९ ) कृमिहीनानां वातादिजानां हृद्रोगस्योपद्रवाः एते-भ्रमः क्लमः सादः शोषश्चेति ( सुउ. ४३.१० ) कफदुष्टक्षीरगौरवात् तादृशं दुष्टं क्षीरं पिबतः शिशोः हृद्रोगो भवति ( चचि. ३०.२४९-५० )

-रोगज-वि., हृद्रोगाज्जातं वैवर्ण्यादि ( चचि. २६.७८ )

-रोगप्रतिषेध-पु., अध्यायसंज्ञा० ( सुउ. ४३.१ )

-वल्लिका-स्त्री., वनस्पतिविशेषः ( र. १२.१०७ )

-विकर्तिका-स्त्री., लक्षण० हृदयपरिकर्तिकाकारा वेदना ( चचि. २६.८४ )

-विरुद्ध-न., अमनोरुचितम्, अहृद्यम्— ( चसू. २६. १०० )

-विशोधन- न., उपक्रम० वमनद्वारा हृदयाश्रितानां विषादिदोषाणां निर्हरणम् ( च.चि २३. २३९ अहृसू. ७.२७ )

-व्यथा-स्त्री., लक्षण० हृदयस्य व्यथा (असंसू.५.२३)

हृतदोष-वि., हृतः दोषाः यस्य, सः (चसि. ६.१९-२०)

हृतौजस्-वि., लक्षण० क्षीणौजाः ( असंसू. ५.३० ) ज्वर० सन्निपातज्वर० अभिन्यासज्वरभेदः ( सुउ. ३९.४१-४२ )

हृदभिघात-परिव० पु. हृदयाभिघातः ( चसि. ९.६ )

हृदय-न., शारीर०उरःस्थोऽवयवः ( चक. १.५ ) स्तनयोर्मध्यमधिष्ठाय उरसि आमाशयद्वारं हृदयं तिष्ठति ( सुशा. ६.२५ ) स्तनोरःकोष्ठमध्यगम् ( अहृशा. ४.१३ ) पुण्डरीकेण सदृशं हृदयमधोमुखं तिष्ठति, जाग्रतः तद्विकसति, निमीलति च स्वपतः ( सुशा. ४.३२ ) हृदयस्याधो वामतः प्लीहा फुप्फुसश्च । दक्षिणतः यकृत् क्लोम च; शोणितकफप्रसादजं, हृदयं, तदाश्रया हि धमन्यप्राणवहाः । तद्विशेषेण चेतनाः स्थानम् । अतस्तस्मिंः स्तमसावृते सर्वे प्राणिनः स्वपन्ति ( सुशा. ४.३१ ) मांसपेशीचयरूपं रक्तपद्माकारमधोमुखम् ( अरुण. अहृसू. १२.१५ ) गर्भावस्थायां चतुर्थे मासि गर्भहृदयस्याभिव्यक्तिः भवति (सुशा. ३.१८) पुण्डरीकाकारहृदयस्य संबन्धिन्यो नाड्यो हृदय-

मांसपिण्डात् सर्वतो विनिःसृताः इति बृहदारण्यकोपनिषदि। हृदयं रसवहानां स्रोतसां मूलम्, प्राणवहानां स्रोतसां मूलम्, व्यानवायोः स्थानम्, रसस्थानम् ( चवि. ५.८ ) ओजःस्थानम् ( अहृशा. ३.१३ ) अन्तरात्मनः श्रेष्ठतममायतनम् ( चनि. ८.४ ) हृदयमेकं चेतनाधिष्ठानं च ( चसू. ३०.३-५-७ ) हृदयतो रसधातुः शरीरे सर्वतः सिराभिर्निःसरति। स एव सिराभिः हृदयं चैति इति भेलसंहितायाम्। रसो यः स्वच्छतां यातः ( फुप्फुसात् ) स तत्रैव पुनः अवतिष्ठते। अनंतरं व्यानेन विक्षिप्तः स रसः कृत्स्नं देहं प्रपद्यते ( अरु. अहृसू. १२.१५ ) हृदिस्थितेन व्यानेन रसस्य सर्वदेहे विक्षेपणं भवति ( अहृसू. १२.६ ) देहिनां देहे हृदयं सुखदुःखप्रकाशकं तच्च स्वतः पुनः पुनः संकोचविकासांश्च करोति। इति नाडीज्ञाने। प्राणवायुः हृदयधारकः ( अहृसू. १२.४ ) उरःस्थोऽवलम्बककफः स्ववीर्यादन्नवीर्यात च हृदयस्यावलम्बनं करोति (अहृसू. १२.१५) दशप्राणायनेष्वेकम् (चसू. २९.३) पञ्चदशकोष्ठाङ्गेष्वेकम् ( चशा. ७.१० ) मनोऽधिष्ठानम् ( हे. अहृसू. १२.४ ) मर्म० सिरामर्मैदम्, तस्य स्थानमुरः, तत्रापि स्तनयोर्मध्ये, एतत्संख्ययैकम्, मानतश्चतुरङ्गुलम्, तत्स्वरूपम्-कमलमुकुलाकारमधोमुखं च, एतत्सद्यःप्राणहरं मर्म ( सुशा. ६.६ )
मनः ( चवि. ८.९४ )

**-कर्षण**-न., लक्षण० हृदये आकर्षणवत्पीडा ( सुसू. ४२.९ )

**-क्लम**-पु., लक्षण० हृदयस्य दौर्बल्यम्, क्लान्तिः ( सुउ. ४३.७ )

**-क्षणन**-न., लक्षण० उरःक्षतम् ( का विशेषकल्पाध्यायः )

**-ग्रह**-पु., लक्षण० हृदयं केनचिदाकर्षणवत् संज्ञा ( चनि. ८.६; सुचि. ३४.१० ).

**-चर**-पु., श्लेष्मजक्रिमि० ( चवि. ७.१२ ) द्र० 'कृमि'

**-द्रव**-पु., लक्षण० परिश्रान्तस्येव हृदयक्षोभः, च ( चचि. २०.२४ )

**-नाडी**-स्त्री., शारीर० मण्डलसन्धिस्थानम् ( सुशा. ५.२७ )

**-प्रलेप**-पु., लक्षण० हृदये भूरिभारवत्पीडा ( चसू. २१.४६ )

**-प्रिय**-वि., मनःप्रियः ( सुसू. ४६.४०७ )

**-रक्षा**-स्त्री., उपक्रम० हृदयरक्षणम् ( चक्र. चचि. २३.३२ )

**-रोधन**-न., लक्षण० मनसः क्रियाप्रतिबन्धः ( अहृसू. ७.२३ )

**-विकर्षण**-न., लक्षण० हृदयस्याकर्षणम् ( असंसू. २७.३ )

**-विबन्ध**-पु., लक्षण० हृदयस्यान्तःस्तम्भवत् वेदना ( अहृसू ४.८ )

**-शूल**-न., लक्षण० हृदये शूलवत् वेदना ( असंसू. २७.१० )

**-स्पन्दन**-न., लक्षण० हृदयस्य गतिः, हृदयस्य स्पन्दनम् ( चचि. १६.१२ )

**हृदशुद्धि**- स्त्री., हृदये दोषसंचितिः ( सुचि. ३३.२४ )

**हृदामय**-पु., रोग० हृद्रोगः ( चचि. २६.९४ )

**हृदुत्क्लेश**-पु. लक्षण० हृल्लासः, अचिरादेव वमनसूचिका अवस्था ( चचि. २०६ सुउ. ४२.१४३ )

**( हृन् )-नाल**-न., खनिज० तीक्ष्णलोहप्रकाराणामन्यतमम् ( र. ५.८० ) द्र० 'लोह'

**-मोह**-पु., लक्षण० हृदो मोहः उन्मादवदल्पा विकृतिः ( चसू. २०.११ ) .

**( हृल् )-लास**-पु., लक्षण० हृदयस्य उत्क्लेशनम् ( सुउ. ५६.२१-२२ )
थूत्करणम् ( ड. सुसू. ३८.५०-५१ )

**-लासिका**-स्त्री., लक्षण० हृल्लासः ( चसि. १.४३ )

**-लेप**-पु., लक्षण० हृदिलेपवत् संवेदनाविशेषः ( चसि. ७.९ )

**हृदयाद**-पु., कफज-क्रिमि० ( चसू. १९.४ (९).६ ) द्र० 'कृमि'

**हृदयापकर्तिन्**-वि., लक्षण० हृदयपरिकर्तनरूपवेदनायुक्तम् ( चवि. १.१७ )

**हृदयापकर्षण**-न., लक्षण० हृदयहिंसनम् हृदयविकर्षणम् ( चक्र. चसि. २.९ )

**हृदयापसरण**-न., रोग० पीतौषधस्य भेषजोद्गारच्छर्दीनां निग्रहात् वातादयः कुपिता हृदयमुपश्रित्य हृद्ग्रहं घोरमावहन्ति। ततः प्रधानमर्मोपतापात् वेदनाभिरत्यर्थमातुरः पीड्यते। मोहहिध्माकासलालापार्श्वशूलयुतो वेपथुमान्नष्टसंज्ञो दन्तान्कटकटायत्युद्धृताक्षो जिह्वां खादति। तं रोगं हृदयापसरणमाहुः। तस्मै रुग्णाय भिषक् शीघ्रमभ्यञ्जनभ्यङ्गपूर्वं धान्यस्वेदेन परिस्वेद्य तीक्ष्णमवपीडं

नस्यं दद्यात् । यष्टीमधुकमिश्रेण तन्दुलाम्बुना वमनम् आचर्यम् । कटुभिर्वा कफोत्तरस्य । ततो दोषशेषं पाचनीयैः पाचयेत् । यथादोषोच्छ्रयं च बस्तीन् वितरेत् ( असंक. ३ )

**हृदयामय**-पु., रोग० हृद्रोगः ( चसू. १७.६ )

**हृदयावरण**-न., उपक्रम० हृदयरक्षणम् ( चचि. २३.४६ )

हृदयप्रच्छादनम् ( ड. सुक. १.७९ )

**हृदयावलम्बन**-न., हृदयस्य स्वकार्यसामर्थ्यम् ( ड. सुसू. २१.१४ )

**हृदयाविशुद्धि**-स्त्री., लक्षण० हृदये दोषशेषत्वम्, हीनदोषापहृतत्वरूपायाः वमनव्यापद्, इदं लक्षणं भवति ( सुचि. ३४-८ )

हृदयस्य दोषेण युक्तत्वम्, तल्लक्षणं गौरवम् ( चसू. १६.७ )

**हृदयोत्क्लेद**-पु., लक्षण० हृल्लासः ( सुसू. १५.१४ )

**हृदयोद्वेष्टन**-न., लक्षण० हृदयस्यावमोटनम् ( ड. सुउ. ३९.११६ )

**हृदयोपरोध**-पु., लक्षण० हृदये रोधवत् पीडा ( चचि. २३.११४ )

हृदयावरणम्, लक्षण० ( सुउ. ५५.७ )

**हृदयोपरोधन**-न., ( परिव० ) लक्षण० हृत्पीडा ( अहसू. ४.३ )

**हृदयोपलेप**-पु., लक्षण० हृदयस्य स्तैमित्यम्, हृदये लेपवत्प्रतिपत्तिः ( चसू. २०.१७ )

**हृदयोपसरण**-न., लक्षण० हृद्द्रवः ( चक. चसू. १५.१३; सुचि. ३४.३ )

**हृद्य**-वि., हृदयाय हितम् (चसू. ४.८ ) यथा आम्राम्रातकलिकुचकरमर्दवृक्षाम्लाम्लवेतसकुवलबदरदाडिममातुलुङ्गानीति दशेमानि हृद्यानि भवन्ति ( चसू. ४.१०; सुचि. २४.२३ )

मनोज्ञम् ( सुउ. ६०.३४ )

वनस्पति० जीरकम् ( ध. २.६६; पृ. ८२ )

**( हृद्या )**-स्त्री., वनस्पति० सल्लकी ( रा. ११.१९६; पृ. १२२ ).

**-गन्ध**-पु., वनस्पति० बिल्वः (ध. १.१०६; पृ. २६)

न., लवणभेदः काचलवणम् (रा. ६.४५; पृ. ७५)

**( -गन्धा )**-स्त्री., वनस्पति० जाती ( ध. ५.१३७ पृ. १९८ )

अजमोदा ( रा.६.१५१; पृ. ९० )

**-गन्धक**-न., वनस्पति० अक्षम् (ध. २.३०; पृ. ७४)

**हृष्ट**-वि., स्तब्धम् ( च. चसि. ९.५४ )

**-रोमन्**-वि., लक्षण० स्तब्धानि रोमाणि यस्य सः ( चइ. ६.१६ )

**हृष्टाङ्ग**-वि., लक्षण० उद्धर्षितशरीरः ( ड. सुक. ४.४२ )

**हृष्टाङ्गज**-वि., लक्षण० हृष्टरोमा अङ्गजा रोमाणि इति यावत् ( चचि. १०.११ )

**हेतु**-पु., निदानम् ( चनि. १.३ ) कारणम् (चसू. १.२४)

उपायः ( सुसू. २७.४ )

कारकहेतुः ( सुसू. ३.१४ )

न्यायावयव० उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः । यथा वह्नौ साध्ये, धूमादिति हेतुवचनम् । यथा च नित्यः पुरुष इति प्रतिज्ञा, तत्र हेतुरकृतत्वादिति ( चवि. ८.३१ )

उपलब्धिकारणम् प्रमाणमिति यावत् तत्प्रत्यक्षमनुमानमैतिह्यमौपम्यमिति ( चवि. ८.३३ )

**-प्रतिद्वन्द्व**-वि., हेतुप्रत्यनीकम् ( चसू. ७.४४ )

**-मत्**-वि., औचित्यादिहेतुनिर्देशोपपन्नम् ( चक. चसू. ६.५१ )

**-विपरीत**-वि., निदानविपरीतम् (असंसू. १२.१७ )

**-विपर्यय**-वि., हेतोरभावत्वेन हेतुविपरीतम् ( अहसू. ८.२३ )

**-व्याधिविपरीत**-वि., रोगस्यहेतोः विपरीतं तथा रोगस्यापि विपरीतम् ( औषधादि ) ( चवि. २.१३ )

**हेत्वन्तर**-न., तन्त्रयुक्ति० न्याये पदार्थ० प्रकृतहेतौ वाच्ये यद् विकृतहेतुमाह ( चवि. ८.६३ )

**हेत्वर्थ**-पु., तन्त्रयुक्ति० हेत्वर्थो नाम यदन्यत्राभिहितमन्यत्रोपपद्यते । यथा-'समानगुणाभ्यासो हि धातूनां वृद्धिकारणम्' इति वातमधिकृत्योक्तम् । तत्र वातस्येति वक्तव्ये यदयं समानशब्दं धातूनामिति करोति । तेन यथा वायोस्तथा रसादीनामपि समानगुणाभ्यासो वृद्धिकारणमिति गम्यते ( चसि. १२.४१ ) यथा-मृत्पिण्डः अद्भिः प्रक्लिद्यते तथा माषदुग्धप्रभृतिभिर्व्रणः प्रक्लिद्यते इति ( सुउ. ६५.११ )

हेतोः प्रयोजनम् ( चनि. ८.२५ )

**हेत्वर्थकारिन्**-वि., रक्तपित्तादिव्याध्युत्पादकः ( रोगः ) ( चनि. ८.२४ )

**हेत्वाभास**-पु., न्याये पदार्थ० हेतुवदाभासते इति. ( चवि. ८.५९ )

**हेम**-पु., मान० अण्डिका ( चक. १२.८८ )
माषकः ( असंक. ८ )
वनस्पति० मञ्जिष्ठा ( अहृसू. २७.१ )
**(हेमा)**-स्त्री., वनस्पति० गुणाः–मधुरा, शिशिरा, वृष्या चक्षुष्या, बलवर्धिनी, वातपित्तजित्, असृग्दाहजिच्च ( रा. परि. ३.१३; पृ. ३३० )
**-काञ्चन**-न., वनस्पति० नागकेसरम् ( ध. २.४८; पृ. ७९ )
**-कान्ता**- स्त्री., वनस्पति० दारुहरिद्रा ( ध. १५९. पृ. १८ )
**-किञ्जल्क**-न., वनस्पति० नागकेसरम् ( रा. ६.७४; पृ.७९ )
**-केतकी**-स्त्री., वनस्पति० केतकीभेदः, सुवर्णकेतकी, द्र० केतकी ( रा परि. १०.३ पृ. २०४ )
**-क्रिया**-स्त्री., ( सुवर्णक्रिया ) ( र. २.९८-१०० )
**-क्षीरी**-स्त्री., भैषज्य० कङ्कुष्ठम् ( चचि. २५.५३; सुचि. ९.१४ )
वनस्पति० काञ्चनक्षीरी ( ध. १.२४२ पृ. ५७ ).
**-गर्भपोटली**-पु., पारदयोग० राजयक्ष्महरः सूत-भस्म द्विनिष्कं, स्वर्णं निष्कैकं, गन्धको निष्कद्वयः इत्येताँश्चित्रककाथेन मर्दयित्वा शोषयित्वा च वराटान्पूरयेत। ततस्तान् मृत्पात्रे गजपुटे पचेत् ( र. १४.२६-२८ )
**-गौर**-पु. वनस्पति० किङ्किरातः ( ध. ५.१५६; पृ. २०२ )
**-चूर्ण**-न., सुवर्णस्य रजः ( चचि. २३.२३९ )
**-दुग्ध**-पु., वनस्पति० उदुम्बरः ( ध. ५.८६; पृ. १८६ )
**(-दुग्धा )**-स्त्री., वनस्पति० काञ्चनक्षीरी ( ध. १.२४०; पृ. ५६; अहृसू. १५.२ )
**(-दुग्धी)** स्त्री., वनस्पति० काञ्चनक्षीरी ( रा. ५.३६५; पृ. ५७ )
**-प**-वि., हेमसेवी नाम हेमचूर्णं सानुपानं पिबन्तीति ( चचि. २३.२४०; अहृसू. ७.२८ )
**-पात्र**-न., सुवर्णभाण्डम् ( असंसू. १०.३६ )
**-पादी**-स्त्री., वनस्पति० हंसपादी ( रा. ५.१६६; पृ. १५६ )
**-पुष्प**-पु., वनस्पति० चम्पकः (ध.५.१४२; पृ.१९९)
अशोकः ( रा. १०.२७२, पृ. २०३ )
आरग्वधः ( रा. ९.३३३; पृ. ५२ )
आहुल्यम् ( रापरि. ४.३४; पृ. ३३७ )
**-पुष्पक**-पु., वनस्पति० लोध्रः ( रा. ६.२३९; पृ.१२९ )
**-पुष्पी**-स्त्री., वनस्पति० हेमा ( रापरि. ३.१४; पृ. ३३० )
स्वर्णुली ( रापरि. ४.३०; पृ. ३३७ )
मुसलीकन्दः ( रापरि. ७.५८; पृ. ३५२ )
इन्द्रवारुणी ( रा. ३.३७२; पृ. ५८ )
**-फला**-स्त्री., वनस्पति० सुवर्णकदली ( रा. ११.११५; पृ. १४९ )
**-माक्षिक**-पु., न., खनिज० सुवर्णमाक्षिकम् (र. २.८२; ध. ३.१४८; पृ. १२४) द्र० 'माक्षिक'
**-यूथिका**-स्त्री., वनस्पति० यूथिकाभेदः द्र० ' यूथिका ' ( रा. १०.१५१; पृ. २०० )
**-रक्ती**-स्त्री., वरलोहेन रक्तीकृतं स्वर्णं हेमरक्ती इति कीर्तितम् ताररक्ती अपि हेमरक्तीवन्निर्मीयते ( र. ८.१२ )
**-लता**-स्त्री., वनस्पति० हेमा ( रापरि. ३.१४; पृ. ३३० )
**-वती**-स्त्री., वनस्पति० हेमा ( रापरि. ३.१३; पृ. ३३० )
**-वर्णवती**-स्त्री., वनस्पति० दारुहरिद्रा ( ध. १.५९; पृ. १८ )
**-वल्ली**-स्त्री., वनस्पति० हेमा ( रापरि. ३.१४; पृ. ३३० )
**-विमल**-पु., खनिज० विमलः ( धपरि. ६.७; पृ. २९० )
**हेमन्**-न., खनिज० सुवर्णम् ( चचि. १.(३)-२३ )
वनस्पति० नागकेशरम् ( चसू. ३.२९ )
पद्मकम् ( असंउसू. ३० )
धत्तूरः ( र. २७.१३ )
**हेमन्त**-पु., ऋतु० शीतलक्षणः ऋतुः ( चसू. ६.४ ) हेमन्ते आचरणविधिः, बलिनो जाठराग्निः हेमन्ते शीतसंरोधात्प्रबलो भवति। स वायुना ईरितः अल्पेन्धनो धातून्पचेत्। अतः हेमन्ते स्वाद्वम्ल-लवणान् रसान् सेवेत। हेमन्ते निशानां दैर्घ्यात् मनुष्यः प्रातरेव बुभुक्षितोऽस्ति। तस्मात् मूत्रो-त्सर्गादिकमवश्यं कार्यं संभाव्य यथोक्तं वातघ्नतैलै-रभ्यङ्गं, मूर्ध्नि तैलविमर्दनं, कुशलैः सार्धं नियुद्धं युक्तितः पादाघातं चानुशीलयेत्। ततः कषाया-पहृतस्नेही यथाविधिस्नातः, सदर्पेण कुङ्कुमेन प्रदि-ग्धोऽगुरुधूपितश्च स्निग्धान् रसान् पलं पुष्टं, गौडं,

मद्यं, मदिरामच्छसुरां च भजेत्। तथैव गोधूमपिष्टमाषेक्षुक्षीरोत्थविकृतीः शुभाः भजेत्। नवमन्नं वसां तैलं च सेवेत। शौचकार्ये सुखोदकं भजेत्। प्रावराजिनकौशेयप्रवेणीकौचवास्तृतं शयनं, लघुभिरुष्णस्वभावैः रोमशिकारल्लीकाप्रायैः प्रावृतः सन् भजेत्। तथैव युक्त्यार्ककिरणान् स्वेदं भजेत् सर्वदा च पादत्राणम्। अङ्गारतापसंतप्तगर्भभूवेश्मचारिणः शीतपारुष्यजनितो दोषो न जातु जायते
( अहृसू. ३.७-१६; सुउ. ६४.२३-२७ )

**हेमाङ्ग**-न., खनिज॰ सुवर्णमाक्षिकम् (र. १७.६७-६८) द्र॰ 'माक्षिक'

**हेमाङ्गत्वच्**-स्त्री., चम्पकत्वक् ( सुचि. २५.३९ )

**हेमाद्रि**-पु., वाग्भटकृताष्टाङ्गहृदयस्य टीकाकारः, अनेनाष्टाङ्गहृदयस्यायुर्वेदरसायननाम्नी टीका विरचिता ( अहृसू. १ )

**हेमाद्रिरसायन**-न., सिद्धौषधि॰ सुवर्णभस्मामलक्याश्चूर्णं खादिररसेन मर्दयेत् भक्षयेच्च। अनुपानं मधु, तदनु च दुग्धम्। रिष्टलक्षणेष्वागतस्वपि मानवो जीवत्यस्य प्रयोगात् ( र. २६.१५ )

**हेमाह्व**-पु., वनस्पति॰ चम्पकः (रा. १०.२४० पृ. १९९)

**( हेमाह्वा )**-स्त्री., वनस्पति॰ काञ्चनक्षीरी ( ध. १.२४२; पृ. ५७ )
वनस्पति॰ पीतदुग्धा स्वर्णक्षीरी ( र. २०.१६०-६२ )

**हैम**-पु., वनस्पति॰ किराततिक्तः ( ध. १.३३; पृ. १४ )
वि., संहतावयवत्वेन स्फटिकशिलाशकलसदृशावयवं हिमं तद्भवम् ( जलम् ) ( सुसू. ४५.७ ) द्र॰ 'जल'

**( हैमी )**-स्त्री., वनस्पति॰ केतकीभेदः, सुवर्णकेतकी द्र॰ 'केतकी' ( रापरि. १०.३; पृ. २०४ )
काञ्चनक्षीरी ( रा. ५.३६३; पृ. ५७ )

**-वती**-स्त्री., वनस्पति॰ वचा ( चक. ४.१६ ) ( सुसू. ३८.५४-५५ )
अतसी ( रा. १६.१८७; पृ. २३१ )
हरीतकी ( ध. १.२०५; पृ. ४९ )
काञ्चनक्षीरी ( ध. १.२४०; पृ. ५६ )
रेणुका ( रा. ६.१००; पृ. १०६ )
द्राक्षा॰ उत्तरापथिका द्र॰ 'द्राक्षा' ( रा. ११.७७; पृ. १८० )

**हैयङ्गवीन**-न., आहारद्रव्य॰ नवनीतम् ( रा. १४.५१ )

**हैयङ्गवीनक**-न., आहारद्रव्य॰ नवनीतम् ( रा. १५.२५७; पृ. २४८ )

**होतृ**-पु., जुहोतीति, यज्ञियहवनकर्ता (चसू. ८.१८) ऋग्वेदवित् ( सुसू. ३४.१७-१८ )

**होम**-पु., अथर्ववेदे चिकित्सा॰ तत्र यज्ञो हवनं च ( चसू. ३०.२१; सुसू. ६.२० )

**-धान्य**-न., वनस्पति॰ तिलः ( ध. ६.१२२ )

**होम्य**-न., आहारद्रव्य॰ घृतम् ( रा.१५.२०२ )

**होरा**-स्त्री.,जन्मराशिः ( सुसू. ३२.४ )

**होलाकस्वेद**-पु., उपक्रम॰ त्रयोदशस्वेदेष्वेकः, तस्य प्रक्रिया, करीषाणां धीतिकां शयनान्तःप्रमाणेन कुर्यात्; धीतिका नाम शुष्कगोमयादिकृतोऽग्न्याश्रयविशेषः, तां धीतिकां प्रदीपयेत्, सुदग्धायां विधूमायां च तस्यामुपरि शय्यामुपकल्पयेदभ्यक्तो नरः तत्र स्वपन् स्ववच्छन्नः सुखं स्विद्यतीत्येष होलाकस्वेदः ( चसू. १४.६१-६३ )

**ह्रद**-पु., जलाशय॰ सरः ( ड. सुचि. ३०.३० )

**ह्रस्व**-वि., अदीर्घम् ( सुशा. ५.४० )
प्रमाणहीनम् ( ड. सुचि. ३६.९ )
पु., वनस्पति॰ प्लक्षः ( रा. ११.१२५ )
न., खनिज॰ कासीसम् ( ध.३.१२५ )

**( ह्रस्वा )**-स्त्री., वनस्पति॰ मुद्गपर्णी ( ध. १.१३८ )
विष्णुक्रान्ता ( ध. ४.११५ )
जम्बूः ( रा. ११.१३४; पृ. १८६)

**-कुम्भ**-पु., वनस्पति॰ कुशः ( रा. ८.२०७; पृ. १६१ )

**-गवेधुका**-स्त्री., वनस्पति॰ नागबला ( ध. १.२८४; पृ. ६५ )

**-ग्रीव**-वि., लक्षण॰ उक्ताङ्गुलिप्रमाणात् किञ्चिदूनग्रीवायुक्तः ( सुसू. ३५.४ )

**-जङ्घा**-स्त्री., लक्षण॰ उक्ताङ्गुलिप्रमाणात् किञ्चिदूना जङ्घा ( सुसू. ३५.४ )

**-जाड्य**-पु., नेत्ररोग॰ दिवसेषु कृच्छ्रात् महदपि ह्रस्वं पश्यति, रात्रौ न पश्यति इति ( सुउ. ७.४० ) अयमसाध्यः ( सुउ. १.३१ )

**-पर्ण**-पु., वनस्पति॰ प्लक्षः (रा. ११.१२६; पृ.१८५)

**-पुष्प**-पु., वनस्पति॰ जलमधूकः ( ध. ५.४८; पृ. १७७ )

**-फल**-पु., वनस्पति॰ नारिकेलः ( रा. ११.११०; पृ. १८४ )

(-फला)-स्त्री., वनस्पति० जम्बूः
(रा. ११.१३४; पृ. १८६)

-मूल-न., स्थिरादिपञ्चकमूलम् (चसि. ३.३८)
इक्षु० रक्तेक्षुः द्र० 'इक्षु'
(रा. १४.१८९; अहसू. ६.१६८; पृ. १५९)

-मेढ्र-वि., लक्षण० उक्ताङ्गुलिप्रमाणात् कश्चिदून-मेढ्रयुक्तः (सुसू. ३५.४)

ह्रस्वाङ्ग-पु., वनस्पति० जीवकः (ध. १.१२३; पृ. ३०)

ह्रस्वैरण्ड-पु., वनस्पति० एरण्डभेदः रक्तैरण्डः द्र० 'एरण्ड' (रा. ८.४४७; पृ. ६८)

ह्री-स्त्री., मनोविकार० लज्जा, ह्रियमपत्रपणेन परीक्षेत
(चवि. ४.८)

-बेर-न., वनस्पति० वालकम् (चसू. ५.२१)
उशीरम् (सुउ. ३९.३००)

ह्रीयमाण-वि., आकृष्यमाणः (ड. सुउ. ३९.७१)

ह्रेषित-न., वाजिध्वनिः (सुसू. २९.२७-३०)

ह्लादन-वि., ह्लादयति सुखयति इति ह्लादनः सुखकारी
(सुसू. ४६.५१५)
आश्वासकः (अहसू. १०.२)

ह्लादा-स्त्री., वनस्पति० सल्लकी
(ध. ३.१३५; पृ. १२२)

ह्लादिन्-वि., आह्लादकम् आह्लादकरम् (र. ४.१४)
सुखजनकम् (हे अहसू. ५.१)

